# VALMIKI RAMAYANA

## ADIKANDAM

## आदिकाण्डं

EDITED BY
Prof. GASPARE GORRESIO

1981
Indian Heritage Trust
Madras, India

# RAMAYANA

POEMA INDIANO

## DI VALMICI

TESTO SANSCRITO SECONDO I CODICI MANOSCRITTI

DELLA SCUOLA GAUDANA

PER

GASPARE GORRESIO

SOCIO DELLA R. ACCADEMIA DELLE SCIENZE DI TORINO

---

VOLUME PRIMO



PARIGI

DALLA STAMPERIA REALE

PER AUTORIZZAZIONE DEL GUARDASIGILLI DI FRANCIA

---

M DCCC XLIII

# PREFACE

कूजन्तं रामरामेति, मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

Prof. Gaspare Gorresio's edition of VALMIKI RAMAYANA is as fascinating in its beautiful typography as it is scholarly in its Introductions and Notes. This the first complete printed edition of the 'Poem of India' was published at Paris during 1843–67.

Prof. Gorresio occupied the first chair for Sanskrit in Italy, at the University of Turin. He was a pioneer in RAMAYANA studies and his edition of RAMAYANA, as in the set lent to us, consists of 10 volumes—6 of the Sanskrit Text of the 7 Kandams and 4 of its Italian Translation. The Sanskrit text was preceded by Introductions to VALMIKI RAMAYANA and to each Kandam, and was followed by Notes.

There are two main recensions of VALMIKI RAMAYANA—the Northern and the Southern. The Northern Recension has two sub-recensions the North-Western and North-Eastern. Prof. Gorresio's edition is the GAUDA or North-Eastern recension, also referred to as the Eastern.

This fine edition has been scarce for a long time. The late Dr. V. Raghavan appreciated the idea of reprinting Prof. Gorresio's edition of VALMIKI RAMAYANA and he took the initiative to obtain a complete set of the volumes of the Sanskrit text for the purpose.

We remember Prof. Raghavan with gratitude on this occasion. Further we wish to thank *Biblioteca Nazionale di Torino* for lending the set to us and Prof. Oscar Botto, the present successor of Prof. Gorresio in the Sanskrit chair at Turin, for his help in this regard.

The Indian Heritage Trust is grateful to Sri P. K. Raman, Chairman of the West Coast Shipping Agencies Private Limited, who has made the reprint of the Adikandam possible by his generous contribution.

This publishing project shaped itself receiving the needed impetus from Sundaram Charities who had so readily financed the reprint of SUNDARAKANDAM last year and who have been taking a continuing interest in the completion of this project. We also wish to thank other donors who have readily come forward to participate in this publication.

The Indian Heritage Trust is happy that its endeavour to publish Prof. Gorresio's edition of VALMIKI RAMAYANA has received wide appreciation in India and abroad. It expects to publish the facsimile reprint in a 7-volume set comprising the 7 kandams, and an additional volume bringing together the English Translations

of Prof. Gorresio's Introductions and Notes, in furtherance of the scholarly value of the reprint.

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति॥

June 21, 1981 V. SADANAND

# अथ

# श्रीरामायणे वाल्मीकीये

# आदिकाण्डं

श्रीं रामाय नमः

नारायणं नमस्कृत्य नरं चैव नरोत्तमं ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥
जयति रघुवंशतिलकः कौशल्यानन्दिवर्धनो रामः ।
दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥ २ ॥
नमस्तस्मै मुनीशाय श्रीयुताय तपस्विने ।
सर्वज्ञानाधिवासाय तस्मै वाल्मीकये नमः ॥ ३ ॥

I.

तपःस्वाध्यायनिरतस्तपस्वी वाग्विदां वरः ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिसत्तमः ॥ १ ॥

# रामायणं

को ह्यस्मिन् प्रथितो लोके सद्गुणैर्गुणवत्तरः ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २॥
उदाराचारसंपन्नः सर्वभूतहिते रतः ।
वीर्यवांश्च वदान्यश्च कश्चापि प्रियदर्शनः ॥ ३॥
जितक्रोधो महान् कश्च धृतिमान् कोऽनसूयकः ।
संजातरोषात् कस्माच्च देवता अपि बिभ्यति ॥ ४॥
क उदारः समर्थश्च त्रैलोक्यस्यापि रक्षणे ।
कः प्रजानुग्रहरतः को निधिर्गुणसंपदां ॥ ५॥
समग्रा रूपिणी लक्ष्मीः कमेकं संश्रिता नरं ।
अनिलानलसूर्येन्दुशक्रोपेन्द्रसमश्च कः ॥ ६॥
एतदिच्छाम्यहं श्रोतुं त्वत्तो नारद तत्वतः ।
देवर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरं ॥ ७॥
कालत्रयज्ञस्तच्छ्रुत्वा वाल्मीकेर्नारदो वचः ।
श्रूयतामित्युपामन्त्र्य तमृषिं प्रत्यभाषत ॥ ८॥
बहवो दुर्लभाश्चैव त्वयैते कीर्तिता गुणाः ।
एकेन हि नृलोकेऽस्मिन् गुणा एते सुदुर्लभाः ॥ ९॥
देवेष्वपि न पश्यामि कश्चिदेभिर्गुणैर्युतं ।
श्रूयतां तु गुणैरेभिर्यो युक्तो नरचन्द्रमाः ॥ १०॥
इक्ष्वाकुवंशप्रभवो रामो नाम गुणाकरः ।
एभिरप्यधिकैश्चैव गुणैर्युक्तो महाद्युतिः ॥ ११॥

# आदिकाण्डं

संयतात्मा महात्मा च धृतिमान् द्युतिमान् वशी ।
बुद्धिमान्नृद्धिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ॥ १२ ॥
विपुलांशो महाबाहुः कम्बुग्रीवो महाहनुः ।
महेष्वासो महातेजा दृढजानुररिंदमः ॥ १३ ॥
आजानुबाहुः सुमुखो बलवान् सत्यविक्रमः ।
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ॥ १४ ॥
विशालाक्षः पीनवक्षा लक्ष्मीवान् शुभलक्षणः ।
धर्मज्ञः सत्यसंधश्च जितक्रोधो जितेन्द्रियः ॥ १५ ॥
मनस्वी ज्ञानसंपन्नः शुचिर्वीर्यसमन्वितः ।
रक्षिता सर्वलोकस्य धर्मस्य परिरक्षिता ॥ १६ ॥
वेदवेदाङ्गविच्चैव सर्वशास्त्रविशारदः ।
सर्वशास्त्रार्थतत्त्वज्ञो नीतिमान् प्रथितो भुवि ॥ १७ ॥
सर्वलोकप्रियः साधुरदीनात्मा बहुश्रुतः ।
सर्वदाभिप्लुतः सद्भिः समुद्र इव सिन्धुभिः ॥ १८ ॥
स सत्यः स समः सौम्यः स चैकः प्रियदर्शनः ।
रामः सर्वगुणोपेतः कौशल्यानन्दिवर्धनः ॥ १९ ॥
समुद्र इव गाम्भीर्ये स्थैर्ये च हिमवानिव ।
विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः ॥ २० ॥
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ।
धनदेन समस्त्यागे सत्येऽप्यनुपमः सदा ॥ २१ ॥

रमयत्येव स गुणैरुदारैस्तैरिमाः प्रजाः ।
यस्मादतो राम इति नामैतत् तस्य विश्रुतं ॥ २२ ॥
तमेवंगुणसंपन्नं रामं सत्यपराक्रमं ।
ज्येष्ठं श्रेष्ठगुणैर्युक्तं पिता दशरथः सुतं ॥ २३ ॥
यौवराज्येन संयोक्तुमियेष स महाद्युतिः ।
तस्याभिषेकसंभारं दृष्ट्वा केकयवंशजा ॥ २४ ॥
पूर्वं दत्तवरा राज्ञा वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनं ॥ २५ ॥
स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं राजा दशरथः प्रियं ॥ २६ ॥
स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ २७ ॥
तं यान्तमनुजो धीमान् भ्रातरं राममग्रजं ।
लक्ष्मणो नाम विनयादनुवव्राज वीर्यवान् ॥ २८ ॥
सर्वलक्षणसंपन्ना नारीणामुत्तमा सती ।
अनुवव्राज वैदेही सीता नाम पतिव्रता ॥ २९ ॥
रूपयौवनमाधुर्यशीलाचारसमन्विता ।
बभौ सानुगता रामं निशाकरमिव प्रभा ॥ ३० ॥
पौरैरनुगतो दूरं पित्रा दशरथेन च ।
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ॥ ३१ ॥

# आदिकाण्डं

सोऽतीत्य वनदुर्गाणि सरितश्च सरांसि च ।
चित्रकूटं ययौ शैलं भरद्वाजस्य शासनात् ॥ ३२ ॥
रम्यमावसथं तत्र कृत्वा रामः सलक्ष्मणः ।
उवास सीतया सार्धं वल्कलाजिनसंवृतः ॥ ३३ ॥
श्रीमद्भिस्तैस्त्रिभिः सार्धं चित्रकूटो रराज सः ।
अधिष्ठितो यथा मेरुः श्रीवैश्रवणशङ्करैः ॥ ३४ ॥
चित्रकूटं गते रामे पुत्रशोकार्दितस्तदा ।
राजा दशरथः स्वर्गमगमद्विलपन् सुतं ॥ ३५ ॥
रामप्रवासनं श्रुत्वा पितुश्च निधनं तथा ।
भरतो विललापार्तो मातृकादागतो गृहं ॥ ३६ ॥
गते तु तस्मिन् भरतो वशिष्ठप्रमुखैर्द्विजैः
प्रचोदितोऽपि राज्याय नैच्छद्राज्यं महायशाः ॥ ३७ ॥
मृते पितरि धर्मात्मा राजत्वे स पुरस्कृतः ।
राज्यलोभं परित्यज्य रामं द्रष्टुमुपागतः ॥ ३८ ॥
अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ।
न चैच्छत् पितुरादेशाद्राज्यं रामो महायशाः ॥ ३९ ॥
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास तदा भरतं भरताग्रजः ॥ ४० ॥
स काममनवाप्यैव गृहीत्वा रामपादुके ।
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ ४१ ॥

आशङ्कमानश्च पुनः पौरजानपदागमं ।
रामोऽपि हित्वा तं शैलं प्रययौ दण्डकं वनं ॥ ४२ ॥
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ ४३ ॥
अगस्त्यवचनाच्चैव जग्राहैन्द्रं धनुस्तदा ।
लब्ध्वा स परमप्रीतस्तूणौ चाक्षयसायकौ ॥ ४४ ॥
देशः पञ्चवटी नाम तत्र वासमकल्पयत् ।
वसतस्तत्र रामस्य वने वनचरैः सह ॥ ४५ ॥
रक्षोभ्यः कामरूपिभ्य ऋषयोऽभ्यागमन् भयात् ।
रामं कमलपत्राक्षं शरण्यं शरणैषिणः ॥ ४६ ॥
महेन्द्रमिव दुर्धर्षं बाणखड्गधनुर्धरं ।
तेन तत्र सह भ्रात्रा जनस्थाननिवासिनी ॥ ४७ ॥
विरूपिता शूर्पनखा राक्षसी कामरूपिणी ।
ततः शूर्पनखावाक्यादागतान् सर्वराक्षसान् ॥ ४८ ॥
खरं च दूषणं चैव रक्षस्त्रिशिर एव च ।
निजघान रणे रामो घोरांस्तान् सर्वराक्षसान् ॥ ४९ ॥
तेषामनुबलं चैव सहस्राणि चतुर्दश ।
ततो ज्ञातिबधं श्रुत्वा रक्षस्त्रैलोक्यविश्रुतं ॥ ५० ॥
नामतो रावणो नामं कामरूपी महाबलः ।
राक्षसाधिपतिः शूरो रावणः क्रोधमूर्छितः ॥ ५१ ॥

सहायं वरयामास मारीचं नाम राक्षसं ।
वार्यमाणोऽपि बहुशो मारीचेन स रावणः ॥५२॥
न विरोधो बलवता क्षमो रावण तेन ते ।
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥५३॥
जगाम सहमारीचो रामाश्रमपदं ततः ।
तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥५४॥
रावणोऽन्तरमासाद्य सीतां सुरसुतोपमां ।
जहार भार्यां रामस्य हत्वा गृध्रं जटायुषं ॥५५॥
गृध्रं तु निहतं दृष्ट्वा हृतां भार्यां च दुर्लभां ।
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ॥५६॥
ततः स तत्र काकुत्स्थो दग्धा गृध्रं जटायुषं ।
कबन्धं ददृशे भूयो दनोः पुत्रं महाबलं ॥५७॥
तं स तेनैव कोपेन कबन्धं घोरदर्शनं ।
निहत्य काष्ठैरदहत् स च दिव्यवपुस्तदा ॥५८॥
कथयामास रामाय श्रमणां शवरीं ततः ।
शवरीं धर्मनिपुणामभिगच्छ रघूद्वह ॥५९॥
तस्यैव वचनाद्रामो लक्ष्मणेन सहानघः ।
अभ्यगच्छन्महातेजाः शवरीं शत्रुसूदनः ॥६०॥
शवर्या पूजितः सम्यग्रामो दशरथात्मजः ।
पम्पातीरे हनुमता संगतो वानरेण ह ॥६१॥

हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
सुग्रीवस्य च तत् सर्वं रामोऽशंसन्महाबलः ॥ ६२ ॥
सुग्रीवस्तस्य रामस्य श्रुत्वा वाक्यं महामनाः ।
चक्रे वानरराजेन वैरानुकथनं महत् ॥ ६३ ॥
रामे निवेदितं सर्वं प्रणयाद्दुःखितेन ह ।
बालिनश्च बलं तत्र कथयामास वानरः ॥६४॥
प्रतिज्ञाते तु रामेण तदा बालिबधं प्रति ।
राघवे बालिवीर्येण सुग्रीवः शङ्कितोऽभवत् ॥ ६५ ॥
रामोऽसंप्रत्ययं दृष्ट्वा सुग्रीवे वानराधिपे ।
पादेन दुन्दुभेः कायं चिक्षेप शतयोजनं ॥ ६६ ॥
बिभेद सप्ततालांश्च शरेणानतपर्वणा ।
गिरिं रसातलं चैव जनयंस्तस्य विस्मयं ॥ ६७॥
ततः प्रीतमनास्तस्य कर्मणा तेन सोऽभवत् ।
सुग्रीवो वानरश्रेष्ठः परं हर्षमवाप च ॥ ६८॥
ततो वानरराजेन कृत्वा सख्यं महाबलः ।
प्रत्ययं जनयामास तदान्योन्यस्य वै मिथः ॥ ६९ ॥
समयं तौ ततः कृत्वा नरवानरपुङ्गवौ ।
किष्किन्ध्यां रामसुग्रीवौ जग्मतुस्तौ गुहां तदा ॥ ७०।
ततोऽगर्जद्धरिवरः सुग्रीवो मेघनिस्वनः ।
तेन शब्देन महता निर्जगाम हरीश्वरः ॥ ७१ ॥

तत्र सुग्रीववचनाद्धत्वा बालिनमाहवे ।
सुग्रीवायैव तद्राज्यं राघवः प्रत्यपादयत् ॥ ७२ ॥
अनुज्ञातश्च रामेण किष्किन्ध्यां प्रविवेश ह ।
चतुरो वार्षिकान् मासानुषित्वा समयेन तु ॥ ७३ ॥
स च सर्वान् समानाय्य वानरान् वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजां ॥ ७४ ॥
ततो गृध्रस्य वचनात् सम्पातेर्हनुमान् कपिः ।
शतयोजनविस्तीर्णं पुप्लुवे वरुणालयं ॥ ७५ ॥
ततो लङ्कां समासाद्य पुरीं रावणपालितां ।
ददर्श सीतां ध्यायन्तीमशोकवनिकागतां ॥ ७६ ॥
निवेद्य चाप्यभिज्ञानं प्रवृत्तिं विनिवेद्य च ।
गृहीत्वा प्रत्यभिज्ञानमर्दयामास नैरृतान् ॥ ७७ ॥
पञ्च मन्त्रिसुतान् हत्वा पञ्च सेनापतीनपि ।
कुमारमक्षं निष्पिष्य ग्रहणं समुपागमत् ॥ ७८ ॥
अस्त्रादुन्मोच्य चात्मानं ज्ञात्वा पैतामहान् वरान् ।
ममर्ष रक्षसां वीरो यन्त्रणां तां यदृच्छया ॥ ७९ ॥
ततो दग्ध्वा पुरीं लङ्कां पुनर्दृष्ट्वा च मैथिलीं ।
समाश्वास्य च वैदेहीं पुनरायान्महाकपिः ॥ ८० ॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणं ।
निवेदयामास तदा दृष्टा सीता मयेति वै ॥ ८१ ॥

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसंनिभैः ॥ ८२ ॥
दर्शयामास चात्मानं समुद्रो राघवस्य तु ।
समुद्रवचनाच्चैव नलः सेतुमकारयत् ॥ ८३ ॥
तेन गत्वा पुरीं लङ्कां हत्वा तं राक्षसेश्वरं ।
अभ्यषिञ्चत् स लङ्कायां राक्षसेन्द्रं विभीषणं ॥ ८४ ॥
कर्मणा तेन महता देवा इन्द्रपुरोगमाः ।
सदेवर्षिगणास्तुष्टा राघवं तेऽभ्यपूजयन् ॥ ८५ ॥
तथा परमसंतुष्टैः पूजितः सर्वदैवतैः ।
तामुवाच ततो रामः परुषं तत्र संसदि ॥ ८६ ॥
अमृष्यमाणा तं सीता विवेश ज्वलनं ततः ।
ततो वायुः प्रादुरासीद्वागुवाचाशरीरिणी ॥ ८७ ॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात च ।
स चाग्निवचनात् सीतां ज्ञात्वा विगतकल्मषां ॥ ८८ ॥
अग्रहीदमलां रामो वचनाच्च गुरोस्तदा ।
कृतकृत्यस्तदा रामो विज्वरः समपद्यत ॥ ८९ ॥
देवेभ्यः स वरान् प्राप्य रामः सीतामवाप्य च ।
पुष्पकं च समारुह्य नन्दिग्राममुपागमत् ॥ ९० ॥
नन्दिग्रामे जटां हित्वा भ्रातृभिः सह राघवः ।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ९१ ॥

ईजे च विविधैर्यज्ञैर्हत्वा तं लोककण्टकं ।
सीतया सहितः श्रीमान् रेमे च मुदितः सुखी ॥ ९२ ॥
पालयामास चैवेमाः पितृवन्मुदिताः प्रजाः ।
अयोध्याधिपतिः श्रीमान् रामो दशरथात्मजः ॥ ९३ ॥
हृष्टः प्रमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।
निरामयो विशोकश्च दुर्भिक्षायासवर्जितः ॥ ९४ ॥
न पुत्रमरणं केचित् पश्यन्ति स्म नराः क्वचित् ।
नार्यश्चाविधवा नित्यं पतिशुश्रूषणे रताः ॥ ९५ ॥
न वातजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न चाग्निजं भयं किञ्चिद्यथा कृतयुगं तथा ॥ ९६ ॥
न तस्य विधवा राष्ट्रे नानाथस्तत्र नाबुधः ।
न दुर्गतो न कृपणो न व्याध्यार्तोऽभवन्नरः ॥ ९७ ॥
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
गवां शतसहस्राणि बहूनि स हि दास्यति ॥ ९८ ॥
बहुवर्षांश्च राज्यं स राघवो वै करिष्यति ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वधर्मे स्थापयिष्यति ॥ ९९ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपास्यासौ ब्रह्मलोकं गमिष्यति ॥ १०० ॥
स सर्वगुणसंपन्नः श्रीमानूर्जितशासनः ।
यन्मां पृच्छसि वाल्मीके राम एभिर्गुणैर्युतः ॥ १०१ ॥

नारदस्य वचः श्रुत्वा वाल्मीकिरिदमब्रवीत् ।
देवर्षे ये त्वया प्रोक्ता गुणाः पुरुषदुर्लभाः ॥ १०२ ॥
तेषामेव समावायः साम्प्रतं राममाश्रितः ।
इदमाख्यानमायुष्यं यशस्यं बलवर्धनं ॥ १०३ ॥
यः पठेद्राम चरितं सर्वपापैः प्रमुच्यते ।
इदं पठन् समाध्यायन् पुण्यश्रवणकीर्तनं ॥ १०४ ॥
सपुत्रपौत्रस्वजनो नरः कृच्छ्राद्विमुच्यते ।
रामायणमशेषेण तेन च श्रावितं भवेत् ॥ १०५ ॥
य इदं विदुषां मध्ये पठेच्छ्रद्धासमन्वितः ।
स सर्वाश्रयमाप्नोति प्रेत्य ब्रह्मणि लीयते ॥ १०६ ॥

पठन् द्विजो वागृषभत्वमीयात्
क्षत्रान्वयो भूमिपतित्वमीयात् ।
बणिग्जनः पण्यफलत्वमीयाच्
शृण्वन् हि शूद्रोऽपि महत्वमीयात् ॥ २०७ ॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम्
आदिकाण्डे नारदवाक्यं नाम
संग्रहः प्रथमः सर्गः ॥

# आदिकाण्डं

## II.

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
वाल्मीकिः शिष्यसहितो विस्मयं परमं ययौ ॥ १ ॥
मनसैव च रामाय पूजां चक्रे महामुनिः ।
तं चापि शिष्यसहितो नारदं प्रत्यपूजयत् ॥ २ ॥
यथावत् पूजितस्तेन देवर्षिरथ नारदः ।
तमापृच्छ्याभ्यनुज्ञातो जगाम त्रिदशालयं ॥ ३ ॥
स मुहूर्तं गते तस्मिन् देवलोकाय नारदे ।
जगाम तमसातीरं वाल्मीकिर्मुनिसत्तमः ॥ ४ ॥
स पूतं तीर्थमासाद्य तमसाया महामुनिः ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमं ॥ ५ ॥
निःशर्करमिदं तीर्थं भारद्वाज निशामय ।
पुण्यं चैव प्रसन्नं च सज्जनानां यथा मनः ॥ ६ ॥
इदं तीर्थं समं सौम्यं सुजलं सूक्ष्मबालुकं ।
अस्मिन्नेवावगाहिष्ये तीर्थेऽहं तमसाजलं ॥ ७ ॥
वल्कलं त्वमिहादाय शीघ्रमेह्याश्रमात् पुनः ।
यथा कालात्ययो न स्यात् तथा साधु विधीयतां ॥ ८ ॥
स गुरोर्वचनाच्छीघ्रमागम्य पुनराश्रमात् ।
आनीय वल्कलं तस्मै गुरवे प्रत्यवेदयत् ॥ ९ ॥

स शिष्यहस्तादादाय परिधाय च वल्कलं ।
अवगाह्य जलं स्नात्वा जप्त्वा जप्यं च वाग्यतः ॥ १० ॥
तर्पयित्वा च विधिवत् तोयेन पितृदेवताः ।
निरीक्षमाणो व्यचरत् सर्वतस्तमसावनं ॥ ११ ॥
ततः स तमसातीरे विचरन्तमभीतवत् ।
ददर्श क्रौञ्चयोस्तत्र मिथुनं चारुदर्शनं ॥ १२ ॥
तस्माच्च मिथुनादेकमागत्यानुपलक्षितः ।
जघान बद्धानुशयो निषादो मुनिसंनिधौ ॥ १३ ॥
तं शोणितपरीताङ्गं चेष्टमानं महीतले ।
दृष्ट्वा क्रौञ्ची रुरोदार्ता करुणं खे परिभ्रमा ॥ १४ ॥
तं तथा निहतं दृष्ट्वा निषादेनाण्डजं वने ।
मुनेः शिष्यसहायस्य कारुण्यं समजायत ॥ १५ ॥
ततः करुणवेदित्वाद्धर्मात्मा स द्विजोत्तमः ।
निशम्य करुणं क्रौञ्चीं रुदन्तीं तां जगाविदं ॥ १६ ॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमबधीः काममोहितं ॥ १७ ॥
तस्येदमुक्त्वा वचनं चिन्ताभूत् तदनन्तरं ।
शकुनं शोचता ह्येवं किमेतद्व्याहृतं मया ॥ १८ ॥
मुहूर्तमिव च ध्यात्वा वाक्यं तत् प्रविमृष्य च ।
शिष्यमाह स्थितं पार्श्वे भारद्वाजमिदं वचः ॥ १९ ॥

पादैश्चतुर्भिः संयुक्तमिदं वाक्यं समाक्षरैः ।
शोचतोक्तं मया यस्मात् तस्माच्छ्लोको भवत्विति ॥ २० ॥
शिष्यो ऽथ तस्य तच्छ्रुत्वा मुनेर्वाक्यमनुत्तमं ।
तथेति प्रतिजग्राह गुरोः प्रीतिं विदर्शयन् ॥ २१ ॥
संभाषमाण एवाथ शिष्येण सहितस्ततः ।
तमेवं चिन्तयन्नर्थमुपायादाश्रमं मुनिः ॥ २२ ॥
तमन्वयाद्विनीतात्मा भारद्वाजो महामुनिं ।
पूर्णं कलशमादाय शिष्यः परमसंमतः ॥ २३ ॥
स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
उपविष्टस्ततस्तस्मिन् बभूव ध्यानमास्थितः ॥ २४ ॥
आजगाम ततो ब्रह्मा लोककर्ता स्वयं प्रभुः ।
स्वयंभूर्भगवान् द्रष्टुं स्वयं तमृषिसत्तमं ॥ २५ ॥
वाल्मीकिरपि तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
प्राञ्जलिः प्रणतो भूत्वा तस्थौ परमविस्मितः ॥ २६ ॥
पूजयामास चैवैनं पाद्यार्घ्यासनवन्दनैः ।
प्रणतो विधिवच्चैनं पृष्ट्वानामयमव्ययं ॥ २७ ॥
अथोपविश्य भगवानासने परमार्चिते ।
वाल्मीकये ऽप्यासनं स दिदेशानन्तरं ततः ॥ २८ ॥
उपविष्टे च तस्मिंस्तु साक्षाल्लोकपितामहे ।
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥ २९ ॥

शोचन्निव मुहुः क्रौञ्चीं ततः श्लोकमिमं पुनः ।
जगादान्तर्गतमना भूत्वा शोकपरायणः ॥ ३० ॥
कृतं पापात्मना कष्टं व्याधेनानार्यबुद्धिना ।
यत् सुचारुरवं क्रौञ्चमवधीत् तमकारणात् ॥ ३१ ॥
तमुवाच ततो ब्रह्मा प्रहसन् मुनिसत्तमं ।
महर्षे यदयं प्रोक्तस्त्वया क्रौञ्चवधाश्रयः ॥ ३२ ॥
श्लोक एवास्त्वयं बद्धस्तव वाक्यस्य शोचतः ।
स्वच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ॥ ३३ ॥
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ।
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ॥ ३४ ॥
वृत्तं प्रथय रामस्य यथा ते नारदाच्छ्रुतं ।
रहश्चैव प्रकाशं च यद्वृत्तं तस्य धीमतः ॥ ३५ ॥
रामस्य ससहायस्य राक्षसानां च सर्वशः ।
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदिवा रहः ॥ ३६ ॥
तच्चाप्यवितथं सर्वं विदितं ते भविष्यति ।
सदारेण सराष्ट्रेण राज्ञा दशरथेन यत् ॥ ३७ ॥
आसितं भाषितं चैव मतं यच्चाप्यनुष्ठितं ।
सर्वं विदितमेतत् ते मत्प्रसादाद्भविष्यति ॥ ३८ ॥
न ते वागनृता काचिदत्र काव्ये भविष्यति ।
कुरु रामकथां दिव्यां श्लोकबद्धां मनोरमां ॥ ३९ ॥

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ४० ॥
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ।
ततः सशिष्यो वाल्मीकिर्विस्मयं परमं ययौ ॥ ४१ ॥
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं तदा ।
मुहुर्मुहुः प्रीयमाणाः प्राहुर्भूयश्च विस्मिताः ॥ ४२ ॥
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महात्मना ।
सो ऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ॥ ४३ ॥
तस्य बुद्धिरभूत् तत्र वाल्मीकेरथ धीमतः ।
कृत्स्नं रामायणं श्लोकैरीदृशैः करवाण्यहं ॥ ४४ ॥
धर्मकामार्थसंबद्धं बहुचित्रार्थविस्तरं ।
समुद्रमिव रत्नाढ्यं लोकश्रुतिपरायणं ॥ ४५ ॥
उदारवृत्तार्थपदैर्मनोहरैस्
ततः स रामस्य चकार कीर्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारधीः परं ॥ ४६ ॥

इत्यार्षे रामायणे आदिकाण्डे ब्रह्मागमनं
नाम द्वितीयः सर्गः ॥

# रामायणं

## III.

श्रुत्वा पूर्वं काव्यवीजं देवर्षेर्नारदादृषिः ।
लोकादन्विष्य भूयश्च चरितं चरितव्रतः ॥ १ ॥
उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः ।
प्राचीनाग्रेषु दर्भेषु काव्यस्यान्वेषते गतिं ॥ २ ॥
तपोबलेन चान्विष्य चरितं भूरितेजसः ।
जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलतां ॥ ३ ॥
लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यवाक्यतां ।
मिथिलागमनं चैव धनुषश्चैव भेदनं ॥ ४ ॥
रामरामविवादं च भयं दशरथस्य च ।
नानाचित्राः कथाश्चान्या विश्वामित्रमहामुनेः ॥ ५ ॥
तथाभिषेकं रामस्य कैकेय्या दुष्टभावतां ।
व्याघातं चाभिषेकस्य रामस्य च विवासनं ॥ ६ ॥
राज्ञः शोकं विलापं च मोहं मरणमेव च ।
प्रकृतीनां विषादं च तथैव च विसर्जनं ॥ ७ ॥
निषादाधिपसंवादं सूतस्य च निवर्तनं ।
गङ्गायाश्चैव संतारं भरद्वाजस्य दर्शनं ॥ ८ ॥
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनं ।
वास्तुकर्म निवेशं च भरतागमनं तथा ॥ ९ ॥

प्रसादनं च रामस्य पितुश्च सलिलक्रियां ।
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनं ॥ १० ॥
दण्डकारण्यगमनं सुतीक्ष्णेन समागमं ।
अनसूयासमस्यां च अङ्गरागस्य चार्पणं ॥ ११ ॥
शरभङ्गाश्रमे वासं वासवस्य च दर्शनं ।
अगस्त्याश्रमवासं च अगस्त्यादस्त्रलम्भनं ॥ १२ ॥
समागमं विराधेन वासं पञ्चवटे तथा ।
हासं शूर्पनखायाश्च विरूपकरणं तथा ॥ १३ ॥
बधं खरत्रिशिरसोः कथनं रावणस्य च ।
मारीचस्य विनाशं च वैदेह्या हरणं तथा ॥ १४ ॥
जटायोर्निधनं चैव विलापं राघवस्य च ।
कबन्धग्रहणं चैव कबन्धस्य बधं तथा ॥ १५ ॥
शबर्या दर्शनं चैव पम्पाया दर्शनं तथा ।
विलापं चैव पम्पायां राघवस्य महात्मनः ॥ १६ ॥
ऋष्यमूकाभिगमनं सुग्रीवेण समागमं ।
प्रत्ययोत्पादनं सख्यं बालिसुग्रीवविग्रहं ॥ १७ ॥
बालिप्रमथनं राज्ये सुग्रीवप्रतिपादनं ।
ताराविलापं समयं वर्षारात्रिनिवासनं ॥ १८ ॥
कोपं राघवसिंहस्य बलानामुपसंग्रहं ।
दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनं ॥ १९ ॥

अङ्गुरीयकदानं च तथैव विलदर्शनं ।
प्रायोपवेशनं चैव सम्पातेश्चैव दर्शनं ॥ २० ॥
पर्वतारोहणं चैव सागरस्य च लङ्घनं ।
सिंहिकादर्शनं चैव लङ्कानिलयदर्शनं ॥ २१ ॥
रात्रिप्रवेशं लङ्कायां चिन्तां हनुमतस्तथा ।
आपानभूमिगमनमवरोधस्य दर्शनं ॥ २२ ॥
अशोकवनिकायानं सीतायाश्चापि दर्शनं ।
राक्षसीदर्शनं चैव रावणस्य च दर्शनं ॥ २३ ॥
संभाषणं च मैथिल्या अभिज्ञानस्य चार्पणं ।
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ॥ २४ ॥
राक्षसीविद्रवं चैव किङ्कराणां निवर्हणं ।
अमात्यपुत्रनिधनं सेनापतिबधं तथा ॥ २५ ॥
अक्षस्य निधनं चापि निर्यायेन्द्रजिता तथा ।
ग्रहणं वानरेन्द्रस्य लङ्कादाहाभिमर्दनं ॥ २६ ॥
प्रतिप्लवनमेवापि मधूनां भक्षणं तथा ।
राघवाश्वासनं चैव मणिनिर्यातनं तथा ॥ २७ ॥
संगमं च समुद्रस्य नलसेतोश्च बन्धनं ।
प्रतारणं समुद्रस्य रौद्रं लङ्कोपरोधनं ॥ २८ ॥
विभीषणेन संसर्गं बधोपायनिवेदनं ।
कुम्भकर्णस्य च बधं मेघनादबधं तथा ॥ २९ ॥

# आदिकाण्डं

रावणस्य विनाशं च सीतावाप्तिं तथैव च ।
विभीषणाभिषेकं च पुष्पकारोहणं तथा ॥ ३० ॥
अयोध्यायाश्च गमनं भरतेन समागमं ।
रामाभिषेकाभ्युदयं हरिरक्षोविसर्जनं ॥ ३१ ॥
अगस्त्यप्रभृतीनां च महर्षीणां समागमं ।
राक्षसानां समुत्पत्तिं रावणस्य जयं तथा ॥ ३२ ॥
सीतायाश्च परित्यागं प्रकृतीनां च रञ्जनं ।
अनागतं च यत् किञ्चिद्रामस्य वसुधातले ॥ ३३ ॥
प्राप्तराज्यस्य रामस्य चरितं यच्च धीमतः ।
अभ्यागममृषीणां च शत्रुघ्नस्य विसर्जनं ॥ ३४ ॥
वने प्रसूतिं सीताया लवणस्य रणे बधं ।
कालदुर्वाससोः प्राप्तिं लक्ष्मणस्य विसर्जनं ॥ ३५ ॥
स्थापयित्वा यथा पुत्रान् राज्ये रामो दिवं गतः ।
त्रैलोक्यदर्शी तत् सर्वं तपोयोगबलेन च ॥ ३६ ॥
ददर्श तत्र प्रत्यक्षं पाणावामलकं यथा ।
दृष्ट्वा चानन्तरं चक्रे रामस्य चरितं महत् ॥ ३७ ॥
धर्मकामार्थसंयुक्तं पुण्यश्रवणकीर्तनं ।
श्रुतिरत्नचयाकीर्णं काव्यसागरमद्भुतं ॥ ३८ ॥
कृत्वा चेदमशेषेण काव्यं रामायणाह्वयं ।
चिन्तयामास क इदं लोके ऽस्मिन् प्रथयेदिति ॥ ३९ ॥

# रामायणं

अथ चिन्तयतस्तस्य महर्षेर्भावितात्मनः ।
तदा जगृहतुः पादौ मुनिवेशधरौ मुनेः ॥४०॥
वाल्मीकिशिष्यौ तरुणौ रूपौदार्यगुणान्वितौ ।
कुशीलवाविति ख्यातौ सीतारामाङ्गसंभवौ ॥४१॥
स तौ मूर्धन्युपाघ्राय वाल्मीकिर्भगवानृषिः ।
उवाचेदं तथा वाक्यं प्रणतावग्रतः स्थितौ ॥४२॥
आर्षं रामायणं काव्यमिदं तावन्मया कृतं ।
गृह्णीतं मन्नियोगेन पुण्यश्रवणकीर्तनं ॥४३॥
पौलस्त्यबधसंयुक्तं धर्मकामार्थसंहितं ।
पाठे गेये च मधुरं प्रमाणैस्त्रिभिरन्वितं ॥४४॥
तन्त्रीगीतैश्च मधुरैरन्वितं सप्तभिः स्वरैः ।
जातिभिः सप्तभिर्युक्तं श्रोतृश्रुतिमनोहरं ॥४५॥
शृङ्गारवीरबीभत्सरौद्रहास्यभयानकैः ।
करुणाद्भुतशान्तैश्च युक्तं काव्यरसैरपि ॥४६॥
एवमुक्त्वा तु तौ बालौ भगवानृषिसत्तमः ।
सम्यगध्यापयामास काव्यं रामकथाश्रयं ॥४७॥
वाग्विधेयं यदा ताभ्यां कृतं तच्च विशेषतः ।
पुण्यं रामायणं काव्यं तदा तौ मुनिरब्रवीत् ॥४८॥
गीयतामिदमाख्यानं भवद्भ्यामृषिसंसदि ।
राजर्षीणां पुण्यकृतां साधूनां च समागमे ॥४९॥

गुरुणैवमनुज्ञातौ ततस्तौ देवरूपिणौ ।
कुशीलवौ राजपुत्रौ प्रकृत्या मधुरस्वरौ ॥५०॥
रूपानुरूपौ रामस्य बिम्बाद्बिम्बमिवोद्धृतौ ।
वेदवेदाङ्गेतिहासपुराणपरिनिष्ठितौ ॥५१॥
जगतुस्तौ तदा काव्यं मधुरं मधुरस्वरौ ।
यथोपदिष्टमृषिणा संनिधौ ब्रह्मवादिनां ॥५२॥
तयोर्ब्रह्माभवत् प्रीतः सेन्द्राश्च सुरसत्तमाः ।
गन्धर्वाः पतगाश्चैव पन्नगाश्च महर्षिभिः ॥५३॥
तौ कदाचित् समेतानामृषीणां देवरूपिणौ ।
काव्यं रामायणं मध्ये सहितावभ्यगायतां ॥५४॥
तच्छृण्वतां तदा काव्यमृषीणां हर्षसंभवः ।
संघशोऽभून्महानादः साधु साध्विति शंसतां ॥५५॥
सुप्रीतमानसाश्चैव मुनयो धर्मवत्सलाः ।
शशंसुर्भ्रातरौ तत्र गायन्तौ तौ कुशीलवौ ॥५६॥
अहो भावानुगं काव्यमहो गीतमहो स्वरं ।
अहो भगवतः सम्यग्रामस्य चरितं महत् ॥५७॥
चिरवृत्तमपि ह्येतत् प्रत्यक्षमिव दृश्यते ।
संस्कृतं मधुरं चैव समाक्षरपदक्रमं ॥५८॥
प्रयोक्ताराविमौ चापि सम्यगस्य कुशीलवौ ।
कुमारौ देवगर्भाभौ तरुणौ मधुरस्वरौ ॥५९॥

अहो श्रव्यमहो वाच्यमहो गीतमविस्वरं ।
पदसंधिसमायुक्तं तालमानसमन्वितं ॥ ६० ॥
संरक्तं चाभिरक्तं च परया स्वरसंपदा ।
एवं प्रशस्यमानौ तौ श्लाघ्यमानौ कुशीलवौ ॥ ६१ ॥
भूयो बहुतरं साधु मधुरं चाप्यगायतां ।
ताभ्यां प्रीतो मुनिः कश्चित् पानीयकलसं ददौ ॥ ६२ ॥
कश्चिद्वन्यफलं स्वादु वल्कलं कश्चिदीप्सितं ।
एवं पूर्वमिदं काव्यं मुनिभिः प्रतिपूजितं ॥ ६३ ॥
बीजभूतं मनुष्याणां कवीनामार्षमद्भुतं ।
प्रशस्यमानौ तावेवं कदाचिद्देवरूपिणौ ॥ ६४ ॥
राजधानीषु राज्ञां च समीपेष्वभ्यगायतां ।
अथाश्वमेधे रामोऽपि तावुपश्रुत्य गायनौ ॥ ६५ ॥
सत्कृत्यानाययामास पुरुषैराप्तकारिभिः ।
ताविदं जगतुस्तत्र काव्यं रामप्रचोदितौ ॥ ६६ ॥
कर्मान्तरेषु विप्राणां रामलक्ष्मणसंनिधौ ।
शत्रुघ्नभरतादीनामन्येषां च महीक्षितां ॥ ६७ ॥
वशिष्ठात्रिपुरोगानां संनिधौ ब्रह्मवादिनां ।
रामस्तत्रासने शुभ्रे स्पर्ध्यास्तरणसंवृते ॥ ६८ ॥
उपविश्य तु शुश्राव तदात्मचरितं महत् ।
आर्षं रामायणं सार्धं भ्रातृभिर्भरतादिभिः ॥ ६९ ॥

पौरजानपदैश्चैव वृतः शतसहस्रशः ।
तान्मगानीयसदृशौ कुमारौ देवरूपिणौ ॥७०॥
दृष्ट्वाथ रूपसंपन्नौ तावुभौ विनीतौ ततः ।
उवाच लक्ष्मणं रामः सर्वांश्चैव सभासदः ॥७१॥
श्रूयतामिदमाख्यानमनयोर्देववर्चसोः ।
विचित्रार्थपदं सम्यग्गायतोर्मधुरस्वरं ॥७२॥

इमौ हि बालौ नृपलक्षणान्वितौ
कुशीलवौ चापि तपोवनाश्रयौ ।
ममेति वृत्तं किल गेयमद्भुतं
महर्षिवाल्मीकिकृतं प्रगास्यतः ॥७३॥
ततस्तु तौ राघवसंप्रचोदिताव्
अगायतां काव्यमिदं यथाक्रमं ।
स चापि रामः सहितः समागतैर्
बभूव तत्रार्पितचेतनस्तदा ॥७४॥

इत्यार्षे रामायणे आदिकाण्डे काव्योपसंक्षेपो नाम
तृतीयः सर्गः ॥

# रामायणं

## IV.

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं चित्रं विचित्रपदमर्थवत् ।। १ ।।
पवित्रं वैष्णवं दिव्यमिदमाख्यानमुत्तमं ।
वेदैश्चतुर्भिः समितमितिहासं पुरातनं ।। २ ।।
श्रावयामास वै विप्रान् सुव्रतान् नियतेन्द्रियान् ।
धौम्यमाण्डव्यकुशिकान् सार्ष्टिसेनान् सकौशलान् ।।
तौ चैवेक्ष्वाकुदायादौ मुनिवेशौ कुशीलवौ ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।। ४ ।।
कृता तु तत्त्वतः कीर्त्ति राघवस्य महात्मनः ।
इहैवार्थश्च धर्मश्च कामश्च परिकीर्त्तितः ।। ५ ।।
दण्डनीतिश्च विपुला त्रयीवार्त्ता च कृत्स्नशः ।
य इदं शृणुयान्नित्यं यश्चैनं परिकीर्त्तयेत् ।। ६ ।।
इह भोगान् वरान् प्राप्य देवैर्गच्छति तुल्यतां ।
इक्ष्वाकूणामिदं चैव जनकस्य च धीमतः ।। ७ ।।
पुलस्त्यस्य च देवर्षेः कीर्त्तनं समुदाहृतं ।
अश्वमेधावसाने च राघवस्य महात्मनः ।। ८ ।।
कथितं तुष्टिजननमिदमाख्यानमादितः ।
यत्र धर्मार्थसंयुक्तं पापानां पावनं शुभं ।। ९ ।।

# आदिकाण्डं

आदिकाण्डमिदं प्रोक्तं विस्तरश्चास्य कथ्यते ।
प्रथमं नारदप्रश्नो नदीगमनमेव च ॥१०॥
ब्रह्मणो दर्शनं चैव वरप्राप्तिश्च पुष्कला ।
श्लोकानां परिमाणं च यत्रैतत् परिकीर्त्यते ॥११॥
अयोध्यावर्णनं चैव राज्ञो दशरथस्य च ।
अमात्यवर्णनं चैव कौशल्यायाश्च वर्णनं ॥१२॥
पुत्रार्थं च नरेन्द्रस्य मन्त्रणं समुदाहृतं ।
अश्वमेधक्रिया चैव वरप्राप्तिश्च पुष्कला ॥१३॥
भागार्थिनां च देवानामागमः समुदाहृतः ।
रावणस्य बधोपाये मन्त्रणं समुदाहृतं ॥१४॥
स्वर्गावतरणं चैव सुराणां समुदाहृतं ।
दिव्या च पायसोत्पत्तिः पुत्रजन्म नृपस्य च ॥१५॥
कौशल्यायां च रामस्य कैकेय्यां भरतस्य च ।
यमयोश्च सुमित्रायां संभवः समुदाहृतः ॥१६॥
वानराणां च सर्वेषामुत्पत्तिः परिकीर्तिता ।
राज्ञो दशरथस्येह विश्वामित्रेण संगमः ॥१७॥
प्रदानं चैव रामस्य रक्षणार्थं महाक्रतोः ।
लक्ष्मणानुगमश्चैव विद्याप्राप्तिश्च पुष्कला ॥१८॥
अनङ्गाश्रमवासश्च ताडकावनदर्शनं ।
ताडकायाश्च निधनमस्त्रलाभश्च कीर्त्यते ॥१९॥

सिद्धाश्रमनिवासश्च क्रतुरक्षणमेव च ।
सुबाहोर्निधनं चात्र मारीचस्य च भर्त्सनं ॥ २० ॥
विश्वामित्रस्य चैवर्षेः स्ववंशपरिकीर्तनं ।
गङ्गायाः प्रभवश्चैव पवित्रः परिकीर्तितः ॥ २१ ॥
दिव्यगर्भावपतनं कार्त्तिकेयस्य संभवः ।
विशालस्य च राजर्षेर्वंशस्य परिकीर्तनं ॥ २२ ॥
अहल्याशापमोक्षश्च मिथिलायाश्च दर्शनं ।
दर्शनं यज्ञवाटस्य मैथिलस्य च दर्शनं ॥ २३ ॥
चरितं चैव कार्त्स्न्येन कौशिकस्य महात्मनः ।
कथितं राघवस्यात्र शतानन्देन धीमता ॥ २४ ॥
धनुषो भेदनं चैव कन्यायाश्च निवेदनं ।
राज्ञो दशरथस्येह जनकस्य च संगमः ॥ २५ ॥
सीतादीनां च कन्यानां विवाहः समुदाहृतः ।
वधूर्गृहीत्वा नृपतेर्यानं दशरथस्य च ॥ २६ ॥
समागमश्च रामस्य जामदग्न्येन धीमता ।
जामदग्न्यस्य लोकानां रोधश्चात्रानुकथ्यते ॥ २७ ॥
अयोध्यासंप्रवेशश्च प्रवासो भरतस्य च ।
अयोध्यावासिनां चैव प्रमोदः परिकीर्त्यते ॥ २८ ॥
इत्येतत् प्रथमं काण्डमादिकाण्डमिहोच्यते ।
सर्गाश्चैव चतुःषष्टिः श्लोकानां चात्र कथ्यते ॥ २९ ॥

# आदिकाण्डं

द्वे सहस्रे शतान्यष्टौ श्लोकाः पञ्चाशदेव तु ।
बालचर्या हि यत्रोक्ता राघवस्य महात्मनः ॥ ३० ॥
अतः परं द्वितीयं तदयोध्याकाण्डसंज्ञितं ।
यत्राभिषेकसंकल्पो व्याघातश्चैव कीर्त्यते ॥ ३१ ॥
कैकेय्यनुनयश्चैव शोको दशरथस्य च ।
वनप्रयाणं रामस्य लक्ष्मणानुगमस्तथा ॥ ३२ ॥
विषादः प्रकृतीनां च तथैव च विसर्जनं ।
निषादाधिपसंवादः सूतस्य च विसर्जनं ॥ ३३ ॥
गङ्गायाश्चापि संतारो भरद्वाजस्य दर्शनं ।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनं ॥ ३४ ॥
वास्तुकर्म निवेशश्च चित्रकूटे महागिरौ ।
उपावृत्ते सुमन्त्रे च राज्ञो मोहागमः परः ॥ ३५ ॥
स्वशापकथनं चैव स्वर्गप्राप्तिर्नृपस्य च ।
भरतागमनं चैव तूर्णं राजगृहादपि ॥ ३६ ॥
रामप्रसादनार्थं च भरतस्य महात्मनः ।
गमनं कीर्त्यते वासो भरद्वाजस्य चाश्रमे ॥ ३७ ॥
दर्शनं चैव रामस्य पितुश्च सलिलक्रिया ।
प्रसादनं च रामस्य बहुशः परिकीर्तितं ॥ ३८ ॥
जाबालेर्यत्र वाक्यानि वामदेवस्य चोभयोः ।
इक्ष्वाकूणां च वंशस्य कीर्तनं समुदाहृतं ॥ ३९ ॥

अप्रतिज्ञा च रामस्य गमने कोशलां प्रति ।
पादुकाहरणं चैव भरतस्य विसर्जनं ॥४०॥
नन्दिग्रामप्रवेशश्च मातृणां च विसर्जनं ।
अयोध्यासंप्रवेशश्च शत्रुघ्नस्य महात्मनः ॥४१॥
काण्डं द्वितीयमित्युक्तमयोध्याकाण्डसंज्ञितं ।
अशीतिः संख्यया सर्गाः श्लोकानां चात्र कीर्त्यते ॥४२॥
त्रीणि श्लोकसहस्राणि नव श्लोकशतानि च ।
श्लोकानां द्वे शते चैव भूयः श्लोकाश्च सप्ततिः ॥४३॥
अतः परं तृतीयं तु आरण्यकमिति स्मृतं ।
यत्र रामो महाबाहुर्दण्डकं प्राविशद्वनं ॥४४॥
अनसूयासमस्या च अङ्गरागस्य चार्पणं ।
विराधदर्शनं चैव बधश्च समुदाहृतः ॥४५॥
ऋषीणां दर्शनं चापि मैथिल्याश्चापि शान्त्वनं ।
शरभङ्गाश्रमप्राप्तिर्महेन्द्रस्य च दर्शनं ॥४६॥
सुतीक्ष्णाश्रमसंप्राप्तिः संवादः सह सीतया ।
मन्दकर्णेश्च कथितं यत्र शक्रविसर्जनं ॥४७॥
इल्वलस्य च संवादः कीर्तनं च दुरात्मनः ।
अगस्त्याश्रमवासश्च तथा संपरिकीर्तितः ॥४८॥
दर्शनं पञ्चवट्याश्च जटायोश्चैव दर्शनं ।
जनस्थाननिवासश्च शिशिरस्य च वर्णनं ॥४९॥

## आदिकाण्डं

स्मरणं भरतस्याथ कैकेय्याश्चैव गर्हणं ।
संवादः शूर्पनखया विरूपकरणं तथा ॥५०॥
खरस्य च बधो घोरो दूषणत्रिशिरोबधः ।
लङ्काप्रवेशो राक्षस्याः शूर्पनख्याः प्रकीर्त्तितः ॥५१॥
सीताया लोभनं चैव रावणस्यानुशब्दितं ।
मारिचाश्रमसंप्राप्ती रावणस्य दुरात्मनः ॥५२॥
मारीचश्च मृगो भूत्वा वैदेहीं समलोभयत् ।
लोभयित्वा च वैदेहीं राघवस्यापकर्षणं ॥५३॥
मारीचस्य बधश्चैव लक्ष्मणस्य च गर्हणं ।
सीताया हरणं चैव सौमित्रेश्चात्र संगमः ॥५४॥
जटायुषो बधश्चैव सीतायाश्च प्रवेशनं ।
लक्ष्मणस्य च संवादो राघवेण महावने ॥५५॥
हृतां च जानकीं मत्वा विलापो राघवस्य च ।
जटायोर्दर्शनं चैव सत्कारश्च महात्मनः ॥५६॥
खगराजस्य रामेण कृता चैव जलक्रिया ।
कबन्धस्य बधः प्रोक्तः स्वर्गप्राप्तिश्च पुष्कला ॥५७॥
कबन्धस्य च वाक्येन सुग्रीवान्वेषणं स्मृतं ।
शवरीदर्शनं चैव पम्पायां परिदेवनं ॥५८॥
इति काण्डं तृतीयं तु आरण्यकमिति स्मृतं ।
सर्गाणां च शतं ज्ञेयं सर्गाश्चैव चतुर्दश ॥५९॥

चत्वारि च सहस्राणि श्लोकानां कीर्तितानि च ।
शतं चैवात्र विज्ञेयं श्लोकाः पञ्चाशदेव तु ॥ ६० ॥
अतः परं चतुर्थं तु काण्डं किष्किन्ध्यासंज्ञितं ।
ऋष्यमूखगिरिप्राप्तौ राघवस्य महात्मनः ॥ ६१ ॥
हनुमद्दर्शनं चैव संवादश्चात्र कथ्यते ।
आरोहणं च शैलस्य ऋष्यमूखस्य कीर्तितं ॥ ६२ ॥
रामसुग्रीवसख्यं च बालिपौरुषकीर्तनं ।
सप्ततालविभेदश्च प्रत्ययोत्पादनं तथा ॥ ६३ ॥
बालिसुग्रीवयुद्धं च बालिनो बध एव च ।
अन्तःपुरविलापश्च ताराकारुण्यमेव च ॥ ६४ ॥
सुग्रीवस्याभिषेकश्च बालिपुत्रसमर्पणं ।
विलापो राघवस्यात्र लक्ष्मणेन च शान्त्वनं ॥ ६५ ॥
प्रावृड्विलापश्चैवात्र शरद्वर्णनमेव च ।
विलापश्चैव शरदि समयस्य च लङ्घनं ॥ ६६ ॥
सुग्रीवं प्रति रामस्य प्रकोपो यत्र कीर्तितः ।
रामस्य कोपं विज्ञाय लक्ष्मणस्य च संभ्रमः ॥ ६७ ॥
प्रेषणं लक्ष्मणस्याथ दौत्येन गमनं तथा ।
सुग्रीवस्य तथा चात्र गमनं राघवाश्रमे ॥ ६८ ॥
प्रसादनं च रामस्य वानराणां च संग्रहः ।
पृथिव्या वर्णनं चैव सुग्रीवेण महात्मना ॥ ६९ ॥

# आदिकाण्डं

प्रस्थापनं वानराणामङ्गुरीयस्य चार्पणं ।
हनुमत्प्रभृतीनां च विन्ध्यपर्वतलङ्घनं ॥ ७० ॥
स्वयंप्रभागुहायाश्च प्रवेश इह कीर्तितः ।
अप्रवृत्तौ च वैदेह्या विषादगमनं महत् ॥ ७१ ॥
प्रयोपवेशनं चैव वानराणां महात्मनां ।
दर्शनं चात्र सम्पातेर्गृध्रराजस्य धीमतः ॥ ७२ ॥
काण्डं चतुर्थमित्युक्तं किष्किन्ध्या नाम संज्ञितं ।
सर्गाश्चैवात्र विज्ञेयाश्चतुःषष्टिस्तु संख्यया ॥ ७३ ॥
श्लोकानां द्वे सहस्रे च अष्टौ श्लोकशतानि च
श्लोकानां च शतं ज्ञेयं पञ्चविंशतिरेव च ॥ ७४ ॥
अतः परं प्रवक्ष्यामि काण्डं सुन्दरसंज्ञितं ।
हनुमत्प्लवनं यत्र सुरसायाश्च दर्शनं ॥ ७५ ॥
मैनाकस्य गिरेश्चैव दर्शनं परिकीर्तितं ।
निधनं सिंहिकायाश्च लङ्कादर्शनमेव च ॥ ७६ ॥
प्रवेशश्चैव लङ्काया वर्णनं विचयस्तथा ।
मार्गणं चैव वैदेह्या रावणान्तःपुरे शुभे ॥ ७७ ॥
दर्शनं राक्षसेन्द्रस्य रावणस्य दुरात्मनः ।
विचयः पुष्पकस्येह ज्ञानकायाश्चैव मार्गणं ॥ ७८ ॥
अदर्शने च वैदेह्याः शोकोपगमनं तथा ।
प्रविश्याशोकवनिकां वैदेह्याश्चैव दर्शनं ॥ ७९ ॥

प्रवेशो रावणस्येह रक्षसः प्रमदावने ।
प्रलोभनं च सीताया रावणस्य च भर्त्सनं ॥ ८० ॥
गर्जितं राक्षसीनां च हनूमद्दर्शनं तथा ।
अभिज्ञानप्रदानं च सीतासंभाषणं तथा ॥ ८१ ॥
चूडामणिप्रदानं च प्रतिसंदेश एव च ।
वनभङ्गश्च क्रूराणां राक्षसानां च भर्त्सनं ॥ ८२ ॥
किङ्कराणां बधश्चात्र मन्त्रिपुत्रबधस्तथा ।
सेनापतिबधश्चात्र अक्षस्य च बधस्तथा ॥ ८३ ॥
कीर्तितं द्वन्द्वयुद्धं च हनूमन्मेघनादयोः ।
ब्रह्मास्त्रेण च बन्धो वै मारुतेः परमाद्भुतः ॥ ८४ ॥
निवेदनं च दूतस्य भर्त्सनं च हनूमतः ।
लाङ्गूलदीपनं चैव लङ्कादाहस्तथैव च ॥ ८५ ॥
सीताया दर्शनं भूयः प्रत्यागमनमेव च ।
जाम्बुवत्प्रमुखैश्चैव हरिभिः सह संगमः ॥ ८६ ॥
तथा मधुवनप्राप्तिर्मधूनां च विलुण्ठनं ।
देवमार्गाभिरोहश्च भङ्गो मधुवनस्य च ॥ ८७ ॥
अङ्गदप्रमुखानां च हरीणां रामदर्शनं ।
हनूमतः परिषङ्गो राघवेण महात्मना ॥ ८८ ॥
प्रवृत्तिश्चैव सीताया मणिदानं तथैव च ।
लङ्काया दर्शनं चैव दर्शनं रावणस्य च ॥ ८९ ॥

# आदिकाण्डं

सीताया दर्शनं चैव प्रतिसंदेश एव च ।
दुर्गकर्मविधानं च राक्षसीनां विचेष्टितं ॥ १० ॥
अशोकवनिकाभङ्गो दुर्गस्य च विनाशनं ।
यत्रैतत् कथयामास हनूमान् राघवाय वै ॥ ११ ॥
यत्र सुग्रीवसहितो राघवः सहलक्ष्मणः ।
महता हरिसैन्येन प्रययौ दक्षिणामुखः ॥ १२ ॥
सर्वे च सहिता यत्र निविष्टाः सागरं प्रति ।
इत्येतत् पञ्चमं काण्डं सुन्दरं नाम कीर्तितं ॥ १३ ॥
सर्गाणां यत्र संख्या च काण्डे सुन्दरसंज्ञिते ।
चत्वारिंशत् त्रयश्चैव सर्गाः सम्यगुदाहृताः ॥ १४ ॥
श्लोकानां द्वे सहस्रे च चत्वारिंशच्च पञ्च च ।
अतः परं हि षष्ठं तु युद्धकाण्डमिति स्मृतं ॥ १५ ॥
यत्र रामो महाबाहुः सागरं समुपस्थितः ।
यत्र लङ्कां जिगमिषुर्मन्त्रयामास राघवः ॥ १६ ॥
प्राप्तं च राघवं श्रुत्वा मन्त्रयामास रावणः ।
समार्थी यत्र रामेण ज्येष्ठमाह विभीषणः ॥ १७ ॥
मुच्यतां मैथिली राजन् स्वस्त्यस्तु नगरस्य नः ।
एतद्धि परमं श्रेयो विपरीतेऽनयो भवेत् ॥ १८ ॥
एवमुक्तो दशग्रीवः कोपसंरक्तलोचनः ।
जघान यत्र पादेन भ्रातरं च विभीषणं ॥ १९ ॥

रावणं तु परित्यज्य चतुर्भिः सचिवैः सह ।
आगच्छद्राघवाभ्यासं गदापाणिर्विभीषणः ॥ १०० ॥
अभिषिक्तश्च रामेण लङ्काराज्ये विभीषणः ।
सागरात् तोयमादाय प्रयत्नेन महात्मना ॥ १०१ ॥
यत्र रामस्य संरम्भः समुद्रस्य च दर्शनं ।
नलसेतुक्रिया चैव सागरानुमते तथा ॥ १०२ ॥
तरणं चैव घोरस्य सागरस्य महात्मनः ।
सुवेलासादनं चैव चारप्रणिधिरेव च ॥ १०३ ॥
शुकसारणवाक्यं च वानरानीकदर्शनं ।
मन्त्रणं राक्षसेन्द्रस्य मायारामशिरःक्रिया ॥ १०४ ॥
वाक्यानि सरमायाश्च सीताश्वासनमेव च ।
यत्र माल्यवतो वाक्यं लङ्काया गुप्तिरेव च ॥ १०५ ॥
मन्त्रणं राघवबले चराणां च प्रवेशनं ।
सुवेलारोहणं चैव तथा लङ्कावरोधनं ॥ १०६ ॥
समारम्भश्च युद्धस्य द्वन्द्वयुद्धप्रवर्तनं ।
सुप्तघ्नयज्ञकोपादिबधो यत्रानुशब्दितः ॥ १०७ ॥
रात्रियुद्धविधानं च शरबन्धस्तथैव च ।
सुपर्णदर्शनं चैव अस्त्रबन्धस्य मोक्षणं ॥ १०८ ॥
धूम्राक्षस्य बधश्चैव तथैव कम्पनस्य च ।
प्रहस्तस्य बधश्चैव प्रभङ्गो रावणस्य च ॥ १०९ ॥

दुर्गकर्मविधानं च कुम्भकर्णप्रबोधनं ।
दर्शनं कुम्भकर्णस्य संप्रश्नो राघवस्य च ॥ ११० ॥
निर्याणं कुम्भकर्णस्य वानराणां च संभ्रमः ।
सुग्रीवग्रहणं चैव प्रमोक्षश्चात्र कथ्यते ॥ १११ ॥
बधश्च कुम्भकर्णस्य राघवात् समुदाहृतः ।
बधस्त्रिशिरसश्चैव देवान्तकबधस्तथा ॥ ११२ ॥
नरान्तकनिपातश्च अतिकायबधस्तथा ।
निकुम्भकुम्भयोश्चैव बधो राक्षसपुत्रयोः ॥ ११३ ॥
मेघनादास्त्रमोक्षश्च ससैन्ये राघवे तथा ।
ओषध्यानयनाच्चापि प्रबोधश्च हनूमता ॥ ११४ ॥
उल्काभिहारयुद्धं च मकराक्षबधस्तथा ।
मायासीताबधश्चैव मेघनादबधस्तथा ॥ ११५ ॥
क्रोधश्च राक्षसेन्द्रस्य तथारिष्टानकं महत् ।
रावणस्य विनिर्याणं विरूपाक्षबधस्तथा ॥ ११६ ॥
मत्तस्यापि बधश्चात्र उन्मत्तबध एव च ।
महोदरबधश्चैव महापार्श्वस्य कीर्तितः ॥ ११७ ॥
राघवस्य च वाक्यानि भर्त्सनं रावणस्य च ।
रामरावणयोश्चैव अस्त्रयुद्धं महात्मनोः ॥ ११८ ॥
लक्ष्मणस्य बधश्चैव विलापो राघवस्य च ।
ओषध्यानयनं चैव लक्ष्मणोत्थानमेव च ॥ ११९ ॥

प्रदानं देवराजेन रथस्य च महात्मना ।
मातलेर्दर्शनं चैव शक्रवाक्यनिवेदनं ॥ १२० ॥
संग्रामे राक्षसेन्द्रस्य प्रभङ्गो रावणस्य च ।
सारथेर्भर्त्सनं चैव रावणेन दुरात्मना ॥ १२१ ॥
देवानां विग्रहश्चैव गगणे दानवैः सह ।
द्वैरथं च महाघोरं सप्ताहं भूमिकम्पनं ॥ १२२ ॥
बधश्च राक्षसेन्द्रस्य त्रिषु लोकेषु विश्रुतः ।
इति षष्ठमिदं काण्डं युद्धकाण्डमिति स्मृतं ॥ १२३ ॥
सर्गाणां च शतं ज्ञेयं पञ्चसर्गास्तथैव च ।
काण्डे ह्यस्मिंस्तथा संख्या श्लोकानामपि कथ्यते ॥ १२४ ॥
चत्वार्येव सहस्राणि पञ्चश्लोकशतानि च ।
अतस्त्वभ्युदयं नाम सोत्तरं संप्रचक्ष्यते ॥ १२५ ॥
यत्र रावणदाराणां विलापः समुदाहृतः ।
विभीषणाभिषेकश्च सत्कारो रावणस्य च ॥ १२६ ॥
हनूमत्संप्रवेशश्च मैथिल्याश्चैव दर्शनं ।
सीताया निर्गमश्चैव रामेण च समागमः ॥ १२७ ॥
भर्त्सनं चैव सीताया राघवेण महात्मना ।
परित्यागश्च वैदेह्यास्तथा चाग्निप्रवेशनं ॥ १२८ ॥
अग्निप्रवेशे च तदा अदाहः परमाद्भुतः ।
ब्रह्मादीनां च सर्वेषां देवानामिह दर्शनं ॥ १२९ ॥

वृषभध्वजदेवस्य दर्शनं चात्र कथ्यते ।
पितामहाद्वरप्राप्तिः पितुर्दर्शनमेव च ॥१३०॥
कैकेय्याः शापमोक्षश्च तुष्टिर्दशरथस्य च ।
शक्राद्वरस्य संप्राप्तिर्हरीणां प्रतिजीवनं ॥१३१॥
रत्नानां संविभागश्च राक्षसेन्द्रेण धीमता ।
पुष्पकारोहणं चैव राघवस्य महात्मनः ॥१३२॥
वानराणां च सर्वेषां राक्षसानां तथैव च ।
प्रतियानं च कथितं विस्तरेण महात्मनां ॥१३३॥
भरद्वाजाश्रमप्राप्तिर्ऋषेर्दर्शनमेव च ।
नन्दिग्रामे प्रवेशश्च गुरूणां चैव दर्शनं ॥१३४॥
अयोध्यासंप्रवेशश्च व्रतस्य च समापनं ।
अभिषेकश्च रामस्य प्रमोदो नगरस्य च ॥१३५॥
यौवराज्यप्रदानं च भरतस्य महात्मनः ।
मुनीनामिह संप्राप्तिरुत्पत्तिश्चैव रक्षसां ॥१३६॥
त्रैलोक्यविजयाख्यानमहल्यापरिकीर्तनं ।
तथा सीताप्रवासश्च लक्ष्मणेन महात्मना ॥१३७॥
वाल्मीकाश्रमसंप्राप्तिर्मैथिल्याश्चात्र कथ्यते ।
कुशीलवसमुत्पत्तिरिक्ष्वाकुकुलवृद्धये ॥१३८॥
लवणस्य बधश्चात्र शत्रुघ्नेन प्रकीर्तितः ।
शम्बूकस्य बधश्चात्र कुम्भयोनिसमागमः ॥१३९॥

अलंकारस्य संप्राप्तिः श्वेतोपाख्यानमेव च ।
अश्वमेधसमारम्भो गीतश्रवणमेव च ॥ १४० ॥
काव्यस्य चान्ते विज्ञाय स्वपुत्रौ तौ कुशीलवौ ।
वाल्मीकेश्चैव वाक्यानि विलापो राघवस्य च ॥ १४१ ॥
रसातलप्रवेशश्च वैदेह्याः परमाद्भुतः ।
राघवस्य च संरम्भो दर्शनं परमेष्ठिनः ॥ १४२ ॥
कालदुर्वासतोः प्राप्तिः संत्यागो लक्ष्मणस्य च ।
सुहृदां चैव पौराणां प्लवगानां महात्मनां ॥ १४३ ॥
महाप्रस्थानगमनं स्वर्गप्राप्तिश्च पुष्कला ।
इत्याभ्युदयिकं काण्डं सभविष्यं सहोत्तरं ॥ १४४ ॥
नवतिः संख्यया सर्गाः श्लोकानां चात्र कथ्यते ।
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ॥ १४५ ॥
षष्टिः श्लोकास्तथा ज्ञेयाः काण्डेऽस्मिन् परिसंख्यया ।
सर्गाणां षट् शतानीह विंशतिश्चैव कीर्तिताः ॥ १४६ ॥
इत्येतद्रामसंबद्धमाख्यानमृषिसंस्तुतं ।
चतुर्विंशतिसाहस्रं सर्वपापभयापहं ॥ १४७ ॥
आख्यानं वैष्णवं दिव्यं कृतं वाल्मीकिना स्वयं ।
धन्यं यशस्यमायुष्यं पुत्रीयं पुष्टिवर्धनं ॥ १४८ ॥
पठेदिमां पर्वणि यः समाहितः
कथां शुचिर्दाशरथेर्महात्मनः ।

विमुच्यतेऽसौ कलुषेण मानवः
सुखेन गच्छेच्च मृतोऽपि सद्गतिं ॥ १४१ ॥

इत्यार्षे रामायणे आदिकाण्डे अनुक्रमणिका
नाम चतुर्थः सर्गः ॥

# रामायणं

## V.

सागरान्ता मही येषामासीद्वीर्यार्जिता किल ।
आमनोः पुण्यकीर्तीनां राज्ञाममिततेजसां ॥ १ ॥
सगरः पूर्वजो येषां सागरो येन खानितः ।
षष्टिपुत्रसहस्राणि यं यान्तं पृष्ठतो ऽन्वयुः ॥ २ ॥
इक्ष्वाकूणामिदं तेषां वंशे कीर्तिविवर्धनं ।
निबद्धं पुण्यमाख्यानं रामायणमिति श्रुतं ॥ ३ ॥
तदिदं श्रूयतामार्षं सर्वपापभयापहं ।
धर्मकामार्थसंयुक्तं श्रुतिस्मृत्युपबृंहितं ॥ ४ ॥

---

कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे पशुधान्यधनर्द्धिमान् ॥ १ ॥
अयोध्या नाम तत्रासीन्नगरी लोकविश्रुता ।
मनुना मानवेन्द्रेण पुरैव परिनिर्मिता ॥ २ ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा नवसंस्थानशोभिता ॥ ३ ॥
सुविभक्तान्तरद्वारा सुविस्तीर्णमहापथा ।
शोभिता राजमार्गेण जलसंशान्तरेणुना ॥ ४ ॥

# आदिकाण्डं

नानाबणिग्जनोपेता नानारत्नविभूषिता ।
महाशालावृता दुर्गा उद्यानवनशोभिता ॥५॥
दुर्गगम्भीरपरिखा नानायुधसमन्विता ।
कवाटतोरणयुता उपेता धन्विभिः सदा ॥६॥
राजा दशरथो नाम महात्मा राष्ट्रवर्धनः ।
तां पुरीं पालयामास स्वपुरीं मघवानिव ॥७॥
दृढद्वारप्रतोलीकां सुविभक्तान्तरापणां ।
नानायन्त्रायुधवतीं नानाशिल्पगुणान्वितां ॥८॥
शतघ्नीपरिघोपेतामुच्छ्रितध्वजतोरणां ।
हस्त्यश्वरथसंपूर्णां नानायानसमाकुलां ॥९॥
नानापथिकवृन्दैश्च बणिग्भिश्चोपशोभितां ।
देवतायतनैश्चैव विमानैरिव शोभितां ॥१०॥
सभोद्यानप्रपाभिश्च रुचिराभिरलंकृतां ।
प्रविभक्तमहाहर्म्यां नरनारीगणान्वितां ॥११॥
विद्वद्भिरार्यपुरुषैराकीर्णाममरोपमैः ।
आरोहमिव रत्नानां प्रतिष्ठानमिव श्रियः ॥१२॥
महाप्रासादशिखरैः शैलाग्रैरिव भूषितां ।
विमानशतसंबाधामिन्द्रस्येवामरावतीं ॥१३॥
अष्टापदपदालेख्यै रम्यामालिखितामिव ।
नानारत्नचयैश्चित्रां धनधान्यसमन्वितां ॥१४॥

अविच्छिन्नान्तरगृहां सममूमिनिवेशनां ।
मृदङ्गवेणुवीणानां रम्यैः शब्दैर्विनादितां ॥ १५ ॥
नित्योत्सवसमाजाढ्यां नित्यं हृष्टजनायुतां ।
ब्रह्मघोषस्वनवतीं धनुःस्वननिनादितां ॥ १६ ॥
वरान्नपानकलिलां शालितण्डुलभोजनां ।
धूपमाल्यहविर्गन्धैर्हृद्यैश्चाप्यधिवासितां ॥ १७ ॥
लोकपालोपमैः शूरैः सर्वशास्त्रार्थपारगैः ।
गुप्तां योधशतैश्चापि नागैर्भोगवतीमिव ॥ १८ ॥
स्वयं चैवेन्द्रकल्पेन पुरी देवपुरोपमा ।
सुगुप्तेक्ष्वाकुनाथेन राज्ञा दशरथेन सा ॥ १९ ॥
वराग्निवद्भिर्गुणवद्भिरन्विता
द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यतपोदयान्वितैर्
महर्षिकल्पैर्यतिभिर्यतात्मभिः ॥ २० ॥

इत्यार्षे रामायणे आदिकाण्डे अयोध्यावर्णना नाम
पञ्चमः सर्गः ॥

# आदिकाण्डं

## VI.

पुर्यां तस्यामयोध्यायां वेदवेदाङ्गवित्तमः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मभृतां वरः ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥
बलवान् विजितामित्रो नीतिमान् नियतेन्द्रियः ।
धनधान्यर्द्धिविभवैः शक्रवैश्रवणोपमः ॥ ३ ॥
आदिराजो मनुरिव प्रजानां परिरक्षिता
राजा दशरथो नाम बभूव त्रिदशोपमः ॥ ४ ॥
तेन सत्याभिसंधेन त्रिवर्गमनुपश्यता ।
पालिताभूत् पुरी सा तु शक्रेणेवामरावती ॥ ५ ॥
हृष्टपुष्टजने तस्मिन् पुरे नैवाबहुश्रुतः ।
कश्चिदासीन्नरो नापि कश्चिदन्यायवृत्तिमान् ॥ ६ ॥
न चाल्पनिचयः कश्चिदासीत् तत्र पुरे नरः ।
न चाप्यासीदसंतुष्टः कुटुम्बी तत्र कश्चन ॥ ७ ॥
न कदर्यः कश्चिदासीन्नानृती न शठो ऽपि वा ।
न मानी न च संरम्भी न नृशंसो न कत्थनः ॥ ८ ॥
नामहात्मा न पिशुनो न परस्वोपजीवकः ।
न चावर्षसहस्रायुर्न दीनो नाबहुप्रजः ॥ ९ ॥

नराः स्वदारनिरता नार्यश्चासन् पतिव्रताः ।
सुव्रता धृतिमन्तश्च नरा आसंस्तथा स्त्रियः ॥१०॥
नाकुण्डली नामुकुटी नास्रग्वी नाविलेपनी ।
तत्रैव प्राकृतो नासीद्दरिद्रो वा पुरोत्तमे ॥११॥
नामृष्टभूषणधरो न चाप्यासीदनिष्कधृक् ।
नाहस्ताभरणोपेतो नानृजुर्न च नास्तिकः ॥१२॥
नानाहिताग्निर्नायज्वा विप्रो नाप्यसहस्रदः ।
कश्चिदासीदयोध्यायां सद्वृत्तरहितो जनः ॥१३॥
स्वकर्मनिरताश्चासन् सर्वे तत्र द्विजातयः ।
यज्ञाध्ययननिष्ठाश्च विरताश्च प्रतिग्रहात् ॥१४॥
न नास्तिको नानृतवान् न कश्चित् क्रोधनो नरः ।
न सूचको न चाशक्तो नाशुचिस्तत्र चाप्यभूत् ॥१५॥
नामृष्टभुङ् न चादाता नासुगन्धो न चानृजुः ।
न दुःखी पुरुषः कश्चिन्न चैवासीदहंकृतः ॥१६॥
रूपचातुर्यमाधुर्यशीलाचारगुणान्विताः ।
नार्यश्चासन्नयोध्यायां मृष्टाभरणवाससः ॥१७॥
नानात्मवान् न च क्रूरो न विरूपो न चालसः ।
कश्चिदासीदयोध्यायां नाश्रीको नामहामनाः ॥१८॥
नामर्षी नापि चोद्विग्नो नातुरो न भयान्वितः ।
द्रष्टुं शक्यो ह्ययोध्यायां नापि राजन्यभक्तिमान् ॥१९॥

वर्णाश्रेष्ठान् पूजयन्तः पितॄन् देवातिथींस्तथा ।
आसन् दीर्घायुषस्तत्र नराः सत्यपरायणाः ॥ २० ॥
आसीत् क्षत्रं ब्रह्ममुख्यं विट्शूद्रं राजभक्तिमत् ।
न योनिसंकरश्चापि तत्र नाचारसंकरः ॥ २१ ॥
एवमिक्ष्वाकुनाथेन पालिता साभवत् पुरी ।
यथा पुरस्तान्मनुना मानवेन्द्रेण भूरियं ॥ २२ ॥
योधानामग्निकल्पानां संयुगेष्वनिवर्तिनां ।
गुप्ता पुरी सहस्रैः सा सिंहैरिव गिरेर्गुहा ॥ २३ ॥
कम्बोजदेशजैश्चापि हयैर्वानायुजैस्तथा ।
नदीजैर्वाह्लिजैश्चापि पूर्णा हरिहयोपमैः ॥ २४ ॥
विन्ध्यपर्वतजैश्चैव नागैर्हैमवतैस्तथा ।
सत्ववीर्यगुणोपेतैः शूरैरव्यालचेष्टितैः ॥ २५ ॥
पद्माञ्जनकुलोद्भूतैर्भद्रमन्दमृगान्वयैः ।
ऐरावतकुलीनैश्च वामनैरपि च द्विपैः ॥ २६ ॥
भद्रमन्दैर्भद्रमृगैर्मृगमन्दैश्च संयुता ।
सा पुरी बहुभिः कीर्णा तदासीद्गन्धहस्तिभिः ॥ २७ ॥
आयोजनाद्वा भूयो वा साभिरामा व्यकाशत ।
सा पुरी यत्र राजाभूत् पुरा दशरथोऽनघः ॥ २८ ॥

तां सत्यनाम्नीं दृढतोरणाकुलां
महर्द्धिभिर्वेश्मशतैरलंकृतां ।

पुरीं सभोद्यानवतीमनुत्तमां
स कोशलेन्द्रो नृपतिर्न्यपालयत् ॥ २१ ॥

इत्यार्षे रामायणे आदिकाण्डे राजवर्णना नाम
षष्ठः सर्गः ॥

# आदिकाण्डं

## VII.

मन्त्रिणावृत्विजौ चैव तस्यास्तामृषिसत्तमौ ।
वशिष्ठो वामदेवश्च षडङ्गवेदपारगौ ॥ १ ॥
अष्टावन्ये बभूवुश्च तस्यामात्या महीपतेः ।
शुचयश्चानुरक्ताश्च नित्यं प्रियहिते रताः ॥ २ ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो ऽप्यर्थसाधकः ।
अशोको धर्मपालश्च सुमन्त्रश्चाष्टमो ऽभवत् ॥ ३ ॥
ह्रीमन्तो विनयोपेता नीतिज्ञा विजितेन्द्रियाः ।
मतिमन्तः सुविहिता राजनिर्देशकारिणः ॥ ४ ॥
तेजःक्षमावयःप्राप्ताः स्मितपूर्वाभिभाषिणः ।
अलुब्धा धृतिमन्तश्च सत्यधर्मपरायणाः ॥ ५ ॥
नैषामविदितं किञ्चित् स्वेषु चैव परेषु च ।
चिकीर्षितं क्वचिद्राज्ञो मित्रोदासीनविद्विषां ॥ ६ ॥
धर्माचारविवेकज्ञाः सर्वत्र समदर्शिनः ।
कोषसंग्रहणे युक्तास्तथा बलपरिग्रहे ॥ ७ ॥
पुत्रे ऽपि च प्राप्तदोषे धर्मतो दण्डपातिनः ।
अद्रोग्धारश्च धर्मेण शत्रोरप्यकृतागसः ॥ ८ ॥
आगतज्ञानविज्ञानाः पितृपैतामहोचिताः ।
रक्षितारश्च वर्णानां नित्यं विषयवासिनां ॥ ९ ॥

कोषसंरक्षणे युक्ता ब्रह्मस्वस्याविहिंसकाः ।
अतीक्ष्णदण्डवेत्तारः परार्थबलपौरुषाः ॥ १० ॥
परस्परेणाविरुद्धाः प्रीतिमन्तः प्रियंवदाः ।
परापवादरहिता गुणाढ्या न च गर्विताः ॥ ११ ॥
आर्यवेशा सुमनसो न च संदिग्धनिश्चयाः ।
नरेन्द्रवचनासक्तचेतसस्तत्परायणाः ॥ १२ ॥
स्वगुणेषु परिख्याता नामरूपगुणान्विताः ।
परराष्ट्रेषु विख्याता नयबुद्धिगुणांशुभिः ॥ १३ ॥
आसंस्तत्र ग्राहितास्तैः सर्वे वर्णाः स्वकर्मभिः ।
नासीत् पुरे वा राष्ट्रे वा तस्करो नाशुचिर्नरः ॥ १४ ॥
न दुष्टः कश्चिदप्यासीत् परदाराभिमर्षकः ।
कृत्स्नमासीदनुद्विग्नं राष्ट्रं तैः परिपालितं ॥ १५ ॥
प्रशस्तं सर्वमेवासीद्राष्ट्रं पुरवराणि च ।
अमात्यैरीदृशैस्तैस्तु राजा दशरथो ऽन्वितः ॥ १६ ॥
धर्मतः पालयामास पृथिवीमनुरञ्जयन् ।
अवेक्षमाणश्चारेण मह्रीं सूर्य इवांशुभिः ।
नाध्यगच्छत् क्वचित् कश्चिदिक्ष्वाकुः शत्रुमात्मनः ॥ १७ ॥

तैर्मल्लिभिर्मल्लहिते निविष्टैर्
विद्वद्भिराप्तैः कुशलैः समस्तैः ।

स पार्थिवो दीप्तिमवाप युक्तस्
तेजोमयैर्गोभिरिवाम्बरे ऽर्कः ॥१८॥

इत्यार्षे रामायणे आदिकाण्डे अमात्यवर्णना नाम
सप्तमः सर्गः ॥

# रामायणं

## VIII.

तस्य धर्मप्रधानस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १ ॥
तस्य चिन्तयतो बुद्धिरुत्पन्नेयं महीपतेः ।
सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहं ॥ २ ॥
सुनिश्चितां मतिं कृत्वा यष्टव्ये वसुधाधिपः ।
मन्त्रिभिः सह संमन्त्र्य तैः स्वामिहितकारिभिः ॥ ३ ॥
तत्राब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमं ।
शीघ्रमानय सर्वांस्त्वं वशिष्ठप्रमुखान् गुरून् ॥ ४ ॥
एवमुक्तो नृपतिना सुमन्त्रो वाक्यमब्रवीत् ।
नरेन्द्र श्रूयतां तावत् पुराणं यन्मया श्रुतं ॥ ५ ॥
सनत्कुमारो भगवान् यथावत् प्रोक्तवान् पुरा ।
भविष्यं विदुषां मध्ये तव पुत्रसमुद्भवं ॥ ६ ॥
अस्तीह काश्यपसुतो विभाण्डक इति श्रुतः ।
ऋष्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥ ७ ॥
स वने जातसंवृद्धो मुनिपुत्रो वने चरः ।
नान्यं प्रज्ञास्यते कश्चिन्मानवं पितृवर्जितं ॥ ८ ॥
तस्याक्षुण्णं ब्रह्मचर्यं भविष्यति महात्मनः ।
लोकेषु प्रथितं चोग्रं तपस्तस्य भविष्यति ॥ ९ ॥

तपोरतस्य तस्यैवं कालः समभिवर्त्स्यति ।
अग्निं शुश्रूषमाणस्य पितरं च यशस्विनं ॥ १० ॥
एतस्मिन्नेव काले तु लोमपादः प्रतापवान् ।
अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥ ११ ॥
तस्य व्यतिक्रमाद्राज्ञो भविष्यत्यतिदारुणा ।
अनावृष्टिर्जनपदे क्षयाय बहुवार्षिकी ॥ १२ ॥
अनावृष्ट्या तया राजा स तदा परिकर्षितः ।
प्रक्ष्यति ज्ञानिनो विप्राननावृष्टिप्रतिक्रियां ॥ १३ ॥
भवन्तः श्रुतवन्तो वै लोकवृत्तान्तवेदिनः ।
ममाज्ञां दातुमर्हन्ति यथा च प्रशमेदियं ॥ १४ ॥
ते तमाज्ञापयिष्यन्ति श्रुतिदृष्टान्तवेदिनः ।
विभाण्डकसुतं राजन् सर्वोपायैस्त्वमानय ॥ १५ ॥
आनाय्य तु महाराज ऋष्यशृङ्गमृषेः सुतं ।
प्रयच्छास्मै सुतां शान्तां विधिना सुसमाहितः ॥ १६ ॥
तेषामेतद्वचः श्रुत्वा स राजा चिन्तयिष्यति ।
केनोपायेन वै शक्य इहानेतुमिति प्रभुः ॥ १७ ॥
स निश्चयं स्वयं राजा यदा नाधिगमिष्यति ।
तदामात्यान् समाहूय प्रतिप्रक्ष्यति निश्चयं ॥ १८ ॥
पुरोहितं जनांश्चान्यान् मन्त्रनिश्चयकोविदान् ।
ते चापि पृष्टा नैवात्र प्रतिपत्स्यन्ति निश्चयं ॥ १९ ॥

यदा तदा स्वयं राजा मन्त्रिणस्तत्र वक्ष्यति ।
आनयध्वं वनात् तस्मादृष्यशृङ्गमृषेः सुतं ॥ २० ॥
ते च राज्ञो वचः श्रुत्वा भूय एव महीपते ।
न गच्छेम ऋषेर्भीता इति वक्ष्यन्ति तं नृपं ॥ २१ ॥
वक्ष्यन्ति चिन्तयित्वा तु तस्योपायान् बहूंस्ततः ।
आनेष्यामो वयं तं च न च दोषो भविष्यति ॥ २२ ॥
इति तेषां वचः श्रुत्वा भूयः स पृथिवीपतिः ।
तृतीये ऽहनि निश्चित्य मन्त्रिभिर्मन्त्रनिश्चयं ॥ २३ ॥
वेश्याभिर्मुनिरूपाभिरानयिष्यत्यृषेः सुतं ।
लोभयित्वाभ्युपायेन स्वां पुरीं पितुराश्रमात् ॥ २४ ॥
वर्षिष्यति ततो देवस्तस्य राष्ट्रे महीपतेः ।
तस्य ह्यागमनादेव ऋषिपुत्रस्य धीमतः ॥ २५ ॥
ततः स राजा विधिवच्छान्तां तस्मै प्रदास्यति ।
स्वकां दुहितरं भार्यां रूपौदार्यसमन्वितां ॥ २६ ॥
एवं तस्य स जामाता भविष्यति महातपाः ।
लोमपादस्य राजर्षेर्ऋष्यशृङ्गः प्रतापवान् ॥ २७ ॥
राज्ञो दशरथस्यापि स पुत्रानभिकाङ्क्षितान् ।
विधास्यति महातेजा हविर्हुत्वाध्वराग्निषु ॥ २८ ॥
सनत्कुमाराद्वचनमिति वै संश्रुतं मया ।
ऋषिमध्ये कथयतस्तथा तदिति मे मतं ॥ २९ ॥

मन्त्रिभिः सहितश्चैव तथा स कृतवांस्तदा ।
अङ्गराजो महाप्रज्ञो लोमपादो महायशाः ॥३०॥
इति श्रुत्वा दशरथ इदं वचनमब्रवीत् ।
तस्य पुण्यात्मनः साधोर्ब्रह्मचर्यव्रतस्य च ॥३१॥
मृगैः सार्धं विवृद्धस्य कौमारब्रह्मचारिणः ।
कथेयमृष्यशृङ्गस्य विस्तरेण त्वयोच्यतां ॥३२॥

इत्यार्षे रामायणे आदिकाण्डे ऋष्यशृङ्गोपाख्याने
सुमन्त्रवाक्यं नाम अष्टमः सर्गः ॥

# रामायणं

## IX.

इति पृष्टः सुमन्त्रस्तदाख्यातुमुपचक्रमे ।
आनीत ऋष्यशृङ्गस्तु येनोपायेन मन्त्रिभिः ॥ १ ॥
लोमपादममात्यास्त इदमूचुर्मही‍पते ।
उपायो निरपायो ऽयमस्माभिः परिचिन्तितः ॥ २ ॥
ऋष्यशृङ्गो वनचरस्तपस्येकरसे रतः ।
अनभिज्ञः स नारीणां विषयाणां सुखस्य च ॥ ३ ॥
इन्द्रियार्थैरभिमतैर्नरचित्तापहारिभिः ।
लोभयित्वाभ्युपायेन शीघ्रमानीयतां वनात् ॥ ४ ॥
मुनिवेशप्रतिच्छन्नास्तत्र गच्छन्तु योषितः ।
उपायज्ञाः कलाज्ञाश्च वैशिके परिनिष्ठिताः ॥ ५ ॥
रहस्युपेत्य ता एनमानयन्तु शुभव्रतं ।
लोभयित्वा यथा योगं येनोपायेन शक्यते ॥ ६ ॥
श्रुत्वा तथेति तान् राजा प्रत्युवाच विचारयन् ।
मन्त्रिभिः सहितश्चैव तदा तत् कृतवांस्तथा ॥ ७ ॥
फ़लवन्तश्च ये वृक्षाः समूलविटपास्तथा ।
रोपयित्वा वृक्षनौषु सुरभीणि स पार्थिवः ॥ ८ ॥

पानानि च सुगन्धीनि फलान्यास्वादवन्ति च ।
सुसमृद्धास्तथा नौभिः प्रयाता यत्र वै मुनिः ॥ ९ ॥
वारमुख्यास्ततो वेश्या गत्वा ता विजनं वनं ।
नातिदूरे तदा तस्थुराश्रमस्य महामुनेः ॥ १० ॥
तस्य संदर्शनार्थिन्य ऋषिपुत्रस्य धीमतः ।
विभाण्डकभयोद्विग्ना वनगुल्मलतावृताः ॥ ११ ॥
चारयित्वा तु तमृषिमाश्रमादभिनिर्गतं ।
ततः संदर्शने तस्थुर्ऋषिपुत्रान्तिके पुनः ॥ १२ ॥
चित्रं संक्रीडमानास्ताः क्रीडनैर्विविधैस्तदा ।
कन्दुकैश्चापि गायन्त्यः क्रीडन्त्यः प्लुतवल्गितैः ॥ १३ ॥
मदविह्वलिताः काश्चित् प्रपतन्त्युत्पतन्ति च ।
नयनभ्रूविकारैश्च हस्तैरम्बुजसंनिभैः ॥ १४ ॥
संज्ञाश्च ताः प्रकुर्वन्त्यः पुंसां हर्षविवर्धनाः ।
नूपुरशिञ्जितरवैः कोकिलाभिरुतेन च ॥ १५ ॥
गन्धर्वनगरप्रख्यं प्रगीतमिव तद्वनं ।
धूयमानैश्च वासोभिः श्लक्ष्णैरङ्गदभूषणैः ॥ १६ ॥
परस्परं विनिघ्नन्त्यः शोभन्ते ललितेन च ।
सौगन्धिकेन माल्येन चूर्णैश्च सुसुगन्धिभिः ॥ १७ ॥
कामसंजननार्थाय ऋषिपुत्रस्य धीमतः ।
सर्वतः प्रकिरन्ति स्म ललमाना वराङ्गनाः ॥ १८ ॥

अभूतपूर्वं तद्दृष्ट्वा विस्मितः साध्वसं गतः ।
दृष्ट्वैव चारुसर्वाङ्गीस्तास्तदा तनुमध्यमाः ॥ १९ ॥
निश्चक्रामाश्रमात् तूर्णमृष्यशृङ्ग ऋषेः सुतः ।
न तेन जन्मप्रभृति दृष्टपूर्वास्तथाविधाः ॥ २० ॥
नार्यो वा पुरुषा वान्ये पुरराष्ट्रनिवासिनः ।
स तं देशमुपागम्य जातकौतूहलस्तदा ॥ २१ ॥
विभाण्डकसुतो राजंस्तस्थौ परमविस्मितः ।
ताश्च तं विस्मितं दृष्ट्वा जगुः कलपदान्तरं ॥ २२ ॥
गीतं मधुरभाषिण्यो जहसुश्चायतेक्षणाः ।
अब्रुवंश्चैनमभ्यासमागत्य मदविह्वलाः ॥ २३ ॥
को ऽसि कस्य सुतश्च त्वं त्वरावान् समुपागतः
एकश्च विजने ऽरण्ये कस्माच्चरसि शंस नः ॥ २४ ॥
ज्ञातुं त्वां वयमिच्छामस्तत्त्वमाचक्ष्व नः प्रभो ।
अदृष्टपूर्वास्ता दृष्ट्वा कामरूपास्ततः स्त्रियः ॥ २५ ॥
ऋषिपुत्रस्तदात्मानमाख्यातुमुपचक्रमे ।
पिता विभाण्डको नाम महर्षिः काश्यपो मम ॥ २६ ॥
तस्याहमौरसः पुत्र ऋष्यशृङ्ग इति श्रुतः ।
यूयं किमर्थमायातास्त्वरावन्तो ममाश्रमं ॥ २७ ॥
किं च वः क्रियतां कार्यं क्षिप्रं शंसितुमर्हथ ।
आश्रमो ऽयमिहास्माकं स्वादुमूलफलान्वितः ॥ २८ ॥

करिष्ये तत्र पूजां वः सर्वेषामभिगम्यतां ।
ऋषिपुत्रवचः श्रुत्वा तासां रतिरजायत ॥ २९ ॥
तदाश्रमपदं द्रष्टुं प्रजग्मुः सहितास्ततः ।
आसां पूजां ततश्चक्रे ऋष्यशृङ्ग ऋषेः सुतः ॥ ३० ॥
पाद्यार्घासनदानेन स्वादुमूलफलेन च ।
प्रतिगृह्य तु तां पूजां सर्वास्ताः परिशङ्किताः ॥ ३१ ॥
ऋषेः शापभयोद्विग्ना गमनाय मनो दधुः ।
ऊचुश्चैनं सुमधुरं ता हसन्त्य इदं वचः ॥ ३२ ॥
अस्माकमप्यृषेः पुत्र स्वादूनीमानि भक्षय ।
फलान्याश्रमजातानि यदि ते रोचते ऽनघ ॥ ३३ ॥
अथास्मै प्रददुः स्वादून् मोदकान् फलसंनिभान् ।
अन्यांश्च विविधान् भक्ष्यान् मधूनि मधुराणि च ॥ ३४ ॥
तीर्थोदकमिदं तावत् पीयतामिति सुव्रत ।
परिषस्वजिरे चैनं हसन्त्यो मदविह्वलाः ॥ ३५ ॥
परिपस्पृशिरे चैनं पीनैरुरसिजैर्मुहुः ।
श्रोत्रमूले चोपजेपुर्वदनैर्मधुगन्धिभिः ॥ ३६ ॥
सो ऽमन्यत फलानीति मोदकांश्च सुवर्तितान् ।
भक्ष्यांश्चास्वाद्य विविधान् फलाकारान् सुयोजितान् ॥३७॥
अनास्वादितपूर्वाणि फलान्यास्वाद्य तानि सः ।
मधूनि च सुगन्धीनि पीत्वा प्रमुदितो ऽभवत् ॥ ३८ ॥

सुकुमारैश्च तैरङ्गैस्ताभिः स्पृष्टो व्यमुह्यत ।
स्पृहयामास तासां च स्पर्शस्य ललितस्य च ॥ ३९ ॥
अथापृच्छ्य मुनेः पुत्रं ताः स्त्रियः प्रययुस्ततः ।
स्वमाश्रमपदं नाम व्यपदिश्याविदूरतः ॥ ४० ॥
तासु प्रतिगतास्वेव ऋष्यशृङ्गः समुत्सुकः ।
तद्गतेनैव मनसा न निद्रामध्यगच्छत ॥ ४१ ॥
अथाजगाम भगवान् काश्यपः स्वं निवेशनं ।
ध्यायमानं च तं दृष्ट्वा ऋष्यशृङ्गं समुत्सुकं ॥ ४२ ॥
पप्रच्छ काश्यपः पुत्रं कस्मान्मां नाभिनन्दसि ।
चिन्तासागरमध्यस्थमद्य त्वां तात लक्षये ॥ ४३ ॥
न ह्यीदृशं तापसानां रूपं भवति कर्हिचित् ।
शीघ्रमाचक्ष्व मे पुत्र किमिदं वैकृतं कृतं ॥ ४४ ॥
एवमुक्तः काश्यपेन प्रोवाच पितरं तदा ।
भगवन्निह मे दृष्टास्तापसाः शुभलोचनाः ॥ ४५ ॥
सुकुमारैरुरसिजैः पीनैरत्यद्भुतोपमैः ।
परिपस्पृशिरे मां च गाढमालिङ्ग्य सर्वशः ॥ ४६ ॥
गायन्ति सुकुमाराणि मनोज्ञानि मुहुर्मुहुः ।
क्रीडन्ति चाद्भुताकारैर्नयनभ्रूविचेष्टितैः ॥ ४७ ॥
अब्रवीद्भगवान् श्रुत्वा ऋष्यशृङ्गवचस्तदा ।
रक्षांसि तेन रूपेण तपसो नाशनाय वै ॥ ४८ ॥

विश्रम्भस्ते न कर्तव्यस्तेषु पुत्र कथञ्चन ।
एवमुक्त्वा ऋष्यशृङ्गं समाश्वास्य च काश्यपः ॥४९॥
उषित्वा रजनीमेकामरण्यं स जगाम ह ।
अथापरेद्युस्तं देशमाजगाम पुनस्त्वरन् ॥५०॥
मनोज्ञरूपास्ता यत्र दृष्टा वै चारुमध्यमाः ।
ताश्च दृष्ट्वैव दूरात् तमायान्तं काश्यपात्मजं ॥५१॥
प्रत्युद्गम्याब्रुवन् वाक्यं प्रहसन्त्य इदं तदा ।
एह्याश्रमपदं रम्यं पश्यास्माकमपि प्रभो ॥५२॥
तत्र पूजामवाप्याग्र्यां पुनरभ्यागमिष्यसि ।
श्रुत्वैतद्वचनं तासां स्त्रीणामतिमनोहरं ॥५३॥
गमनाय मतिं चक्रे ताश्चैनं निन्युरङ्गनाः ।
आनीयमान एवाथ तस्मिन्नृषिसुते ततः ॥५४॥
प्रववर्ष तदा देवस्तस्य राष्ट्रे महीपतेः ।
विभाण्डकश्च विप्रर्षिराजगाम स्वमालयं ॥५५॥
वन्यं मूलफलं प्राप्य भारार्तश्चिन्तयन् तदा ।
शून्यमावसथं दृष्ट्वा पुत्रदर्शनलालसः ॥५६॥
परिश्रान्तस्तथैवासावकृत्वा पादधावनं ।
चुक्रोश ऋष्यशृङ्गेति सर्वतः प्रविलोकयन् ॥५७॥
न चापश्यत् सुतं तत्र काश्यपो भगवानृषिः ।
निष्क्रम्य च वनात् तस्माद्ग्रामं ददर्श काश्यपः ॥५८॥

ग्रामांश्च परिपप्रच्छ गोकुलानि समन्ततः ।
कस्यैष विषयः सौम्यो ग्रामाश्च बहुगोकुलाः ॥५९॥
ऋषेर्वचनमाज्ञाय सर्वे ते गोषु जीविनः ।
कृताञ्जलिपुटा भूत्वा विनयेनाचचक्षिरे ॥६०॥
अङ्गेषु प्रथितो राजा लोमपाद इति श्रुतः ।
तेनाभिसृष्टा ब्रह्मर्षे ग्रामा ह्येते सगोकुलाः ॥६१॥
पूजार्थमृष्यशृङ्गस्य विभाण्डकसुतस्य वै ।
एवमुक्तस्तु स ऋषिर्दृष्ट्वा वै ध्यानचक्षुषा ॥६२॥
भविष्यमेवं तज्ज्ञात्वा प्रीतात्मा स न्यवर्तत ।
ऋषिपुत्रो ऽपि धर्मात्मा नौयानवरमास्थितः ॥६३॥
मेघनादेन महता कृत्वा सतिमिरं नभः ।
महाजलौघवर्षेण राजधानीमुपाययौ ॥६४॥
वर्षेणैवागतं विप्रं स हि मत्वा नराधिपः ।
प्रत्युद्गम्यार्चयां चक्रे शिरसा च महीं ययौ ॥६५॥
अर्घ्यं च प्रददावस्मै पुरस्कृत्य पुरोहितं ।
सान्तःपुरजनश्चैनं प्रपेदे सान्त्वयन्निव ॥६६॥
महार्हैश्चेप्सितैर्भोगैर्युयोजैनं प्रसादयन् ।
स्वयं चोपचचारैनं मन्युर्मास्येह भूदिति ॥६७॥
ददौ चास्मै तदा कन्यां भार्यां कमललोचनां ।
शान्तां शान्तेन मनसा दत्वा हर्षमवाप च ॥६८॥

एवं स न्यवसत् तत्र तेन राज्ञाभिपूजितः ।
ऋष्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥ ६१ ॥

इत्यार्षे रामायणे आदिकाण्डे ऋष्यशृङ्गोपाख्यानं नाम
नवमः सर्गः ॥

# रामायणं

## X.

भूय एव महाराज शृणु मे सुहितं वचः ।
सनत्कुमाराद्वदतः श्रुतं मे वचनं यथा ॥ १ ॥
इक्ष्वाकुवंशजो राजा भविष्यति महायशाः ।
नाम्ना दशरथो नाम धीमान् सत्यपराक्रमः ॥ २ ॥
सख्यं तस्याङ्गराजेन भविष्यति महात्मनः ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥ ३ ॥
अङ्गराजो ऽनपत्यस्तु लोमपादो भविष्यति ।
स राजानं दशरथं प्रार्थयिष्यति भूमिपः ॥ ४ ॥
अनपत्याय मे कन्यां सखे दातुं त्वमर्हसि ।
शान्तां शान्तेन मनसा पुत्रार्थं वरवर्णिनीं ॥ ५ ॥
श्रुत्वा दशरथो वाक्यं प्रकृत्या करुणात्मकः ।
दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः ॥ ६ ॥
प्रतिगृह्य च तां कन्यां स राजा विगतज्वरः ।
स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मना ॥ ७ ॥
तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिवः ।
ऋष्यशृङ्गो ऽपि च प्रीतो लब्धा भार्यां भविष्यति ॥ ८ ॥

तं च राजा दशरथो यष्टुकामः कृताञ्जलिः ।
ऋष्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ९ ॥
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः ।
लप्स्यते च स तं काममृषिपुत्राद्विशांपतिः ॥ १० ॥
पुत्राश्चास्य भविष्यन्ति चत्वारो ऽमिततेजसः ।
कुलकीर्तियशोमानधर्मसंतानवर्धनाः ॥ ११ ॥
एवं स देवर्षिवरो भविष्यमिदमुक्तवान् ।
सनत्कुमारो भगवान् पुरा मुनिसमागमे ॥ १२ ॥
स त्वं नृपतिशार्दूल तमानेतुमिहार्हसि ।
विभाण्डकसुतं गत्वा वरयित्वात्मनो गुरुं ॥ १३ ॥
इति श्रुत्वा दशरथः सुमन्त्रस्य सुमन्त्रितं ।
वशिष्ठमुपगम्यैनमिदं वचनमब्रवीत् ॥ १४ ॥
सुमन्त्रो ऽयं वदत्येवमनुज्ञां दातुमर्हसि ।
वशिष्ठो ऽपि च तच्छ्रुत्वा तथेति प्रत्यपद्यत ॥ १५ ॥
सो ऽनुज्ञातो वशिष्ठेन राजा सुप्रीतमानसः ।
सुमन्त्रवचनात् तूर्णं प्रयातुमुपचक्रमे ॥ १६ ॥
ऋष्यशृङ्गं वरयितुं सामात्यः सपुरोहितः ।
सान्तःपुरजनश्चैव यत्रासौ द्विजसत्तमः ॥ १७ ॥
सो ऽतीत्य विविधान् देशान् राजा नातिचिरे ततः ।
लोमपादपुरीं रम्यां प्रविवेशाभिपूजितः ॥ १८ ॥

तत्राससाद वै राजा लोमपादनिवेशने ।
ऋषिपुत्रं दशरथो दीप्यमानमिवानलं ॥ १९ ॥
ततो राजा दशरथं प्रियातिथिमुपागतं ।
पूजया प्रतिजग्राह प्रीयमाणोऽनुरूपया ॥ २० ॥
स एवं सत्कृतस्तेन वसंस्तत्र जनर्षभः ।
सप्ताष्टदिवसं यावत् ततो वचनमब्रवीत् ॥ २१ ॥
शान्ता तव सुता वीर सह भर्त्रा विशांपते ।
मदीयं नगरं यातु कार्यं हि महदुद्यतं ॥ २२ ॥
तथेति राजा संश्रुत्य गमनं तस्य धीमतः ।
लोमपादोऽवदद्वाक्यमृषिपुत्राय धीमते ॥ २३ ॥
ऋष्यशृङ्गाय चैवैनं न्यवेदयदनन्तरं ।
अयं राजा दशरथः सखा मे दयितो भृशं ॥ २४ ॥
अनेन मेऽनपत्याय दत्तेयं वरवर्णिनी ।
याचते पुत्रकृत्याय शान्ता प्रियतमात्मजा ॥ २५ ॥
सोऽयं ते श्वशुरो ब्रह्मन् यथैवाहं तथा नृपः ।
शरणं त्वामनुप्राप्तः पुत्रार्थी द्विजसत्तम ॥ २६ ॥
पुत्रकाममिमं तावत् त्वं याजयितुमर्हसि ।
तारयैनमितो गत्वा शान्तया भार्यया सह ॥ २७ ॥
ऋषिपुत्रस्तथेत्युक्त्वा तद्वाक्यसमनन्तरं ।
तमनुज्ञाप्य नृपतिं प्रययौ सह भार्यया ॥ २८ ॥

लोमपादस्ततो राजा परिष्वज्याभिपूज्य च ।
अनुजज्ञे पुरं गन्तुं भूयो दशरथं स्वकं ॥ २९ ॥
ततस्तेनाभ्यनुज्ञातः समादाय द्विजर्षभं ।
शान्तया सहितं काले प्रयातुमुपचक्रमे ॥ ३० ॥
अथ राजा दशरथः पुरुषानाप्तकारिणः ।
स्वपुरं प्रेषयामास प्रियाख्यानपुरःसरान् ॥ ३१ ॥
इतः शीघ्रतरं गत्वा युष्माभिर्मम शासनात् ।
क्रियतां मे पुरं सर्वं सर्वतः समलंकृतं ॥ ३२ ॥
ते हृष्टमनसो गत्वा शीघ्रं नृपतिशासनात् ।
तथा चक्रुर्यथाज्ञप्तं पुरं सर्वमशेषतः ॥ ३३ ॥
ततः स्वलंकृतं राजा स्वपुरं प्रविवेश तत् ।
सर्वतूर्यनिनादेन पुरस्कृत्य द्विजर्षभं ॥ ३४ ॥
ततो मुमुदिरे पौरा दृष्ट्वा राजानमागतं ।
सह तेनर्षिपुत्रेण ज्वलितानलवर्चसा ॥ ३५ ॥
तमृष्यशृङ्गं स्वपुरं प्रवेश्य नृपतिस्ततः ।
कृतकृत्यमिवात्मानं मेने पूर्णमनोरथः ॥ ३६ ॥
अन्तःपुरजनश्चापि दृष्ट्वा शान्तामुपागतां ।
मुमुदेऽपूजयच्चैनां सह भर्त्रा विलासिनीं ॥ ३७ ॥
स पूज्यमानः परया मुदान्वितो
महर्षिपुत्रो नरदेवसद्मनि ।

उवास तस्मिन् सह शान्तया सुखी
यथा महेन्द्रस्य पुरे बृहस्पतिः ॥३८॥

इत्यार्षे रामायणे आदिकाण्डे ऋष्यशृङ्गस्यायोध्यागमनं
नाम दशमः सर्गः ॥

# आदिकाण्डं

## XI.

अथ काले व्यतिक्रान्ते शिशिरे तदनन्तरं ।
वसन्तसमये प्राप्ते राजा यष्टुं मनो दधे ॥ १ ॥
स ऋष्यशृङ्गमभ्येत्य प्रणिपत्याभिपूज्य च ।
होतारं वरयामास यज्ञे संतानकारणात् ॥ २ ॥
तथेति च स राजानमुक्त्वा भूयोऽभ्यभाषत ।
संभारयाशु नृपते संभारान् यज्ञसाधकान् ॥ ३ ॥
सह्वायानपरांश्चात्र होतॄन् यज्ञे समानय ।
वशिष्ठप्रभृतीनन्यान् मन्यसे यानपि द्विजान् ॥ ४ ॥
ततो राजाब्रवीदेवं सुमन्त्रमभितः स्थितं ।
शीघ्रमानय मे सूत गुरून् सर्वानशेषतः ॥ ५ ॥
वेदविद्याविदः स्नातान् वेदकर्मसु निष्ठितान् ।
सूत्रभाष्यविदश्चैव वेदवेदाङ्गपारगान् ॥ ६ ॥
गृहमेधिनो दरिद्रान् वृद्धांश्चापि कलत्रिणः ।
श्रोत्रियांश्च विदेशस्थान् सत्कृत्य समुपानय ॥ ७ ॥
स राजवचनं श्रुत्वा सुमन्त्रस्त्वरितस्तदा ।
आनयामस होतॄंस्तान् वेदवेदाङ्गपारगान् ॥ ८ ॥
सुयज्ञं वामदेवं च जावालिमथ काश्यपं ।
पुरोहितं वशिष्ठं च तथा द्विजोत्तमानन्यान् ॥ ९ ॥

तानागतान् पूजयित्वा राजा दशरथस्तदा ।
इदं धर्मार्थसहितं वचनं श्लक्ष्णमब्रवीत् ॥ १० ॥
काङ्क्षतो ह्यनुरूपा मे संततिर्नोपपद्यते ।
तदर्थं वाजिमेधेन यजेयमिति मे मतिः ॥ ११ ॥
तदहं यष्टुमिच्छामि हयमेधेन साम्प्रतं ।
ऋषिपुत्रप्रसादेन भवतां चापि तेजसा ॥ १२ ॥
अनुगृह्णन्तु मामत्र भवन्तः शरणागतं ।
ततः साध्विति तद्वाक्यं ब्राह्मणास्तेऽभ्यपूजयन् ॥ १३ ॥
वशिष्ठप्रमुखाः प्रीताः प्रशशंसुश्च तं नृपं ।
ऋष्यशृङ्गपुरोगास्ते तमूचुर्नृपतिं पुनः ॥ १४ ॥
संभाराः संभ्रियन्तां च तुरगश्च विमुच्यतां ।
प्राप्तासि नियतं पुत्रानीप्सितान् परमद्युतीन् ॥ १५ ॥
पुत्रार्थं धर्मसंयुक्ता यस्य ते मतिरीदृशी ।
ततः प्रीतोऽभवद्राजा श्रुत्वैतदृषिभाषितं ॥ १६ ॥
सुमन्त्रप्रभृतींश्चैवमब्रवीन्मन्त्रिसत्तमान् ।
गुरूणामाज्ञयैषां मे यज्ञसंभारविस्तरः ॥ १७ ॥
आशु संभ्रियतां कृत्स्नो युष्माभिर्मम चाज्ञया ।
यथा न भवति च्छिद्रं केनचित् तद्विधीयतां ॥ १८ ॥
सुमन्त्राधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यतां ।
सरय्वाश्च परे तीरे यज्ञभूमिर्विधीयतां ॥ १९ ॥

शान्तयश्चैव क्रियन्तां विधिना विधिनिर्मिताः ।
शक्योऽवाप्तुमयं यज्ञो नाशक्तेन महीक्षिता ॥ २० ॥
न चैवाश्रद्दधानेन न चाल्पद्रविणेन च ।
छिद्रं हि मृगयन्त्यत्र यज्ञघ्ना ब्रह्मराक्षसाः ॥ २१ ॥
विघ्ने तु तस्य यज्ञस्य संहर्तापि विनश्यति ।
तद्यथायमविघ्नेन मम यज्ञः समाप्यते ॥ २२ ॥
तथा समस्तैर्यज्ञोऽयं भवद्भिः संविधीयतां ।
तथेति च नृपस्याज्ञां मन्त्रिणः प्रतिगृह्य ते ॥ २३ ॥
यथाज्ञप्तमशेषेण चक्रुर्नृपतिशासनं ।
ततो द्विजास्ते राजानमामन्त्र्य प्रतिपूज्य च ॥ २४ ॥
ग्रविघ्नमस्त्वित्युक्त्वा च प्रतिजग्मुर्यथागतं ।
तेष्वथ द्विजमुख्येषु गतेषु स नराधिपः ।
शेषानुष्ठानमाज्ञाप्य विवेशान्तःपुरं ततः ॥ २५ ॥

इत्यार्षे रामायणे ग्रादिकाण्डे ग्रश्वमेधयज्ञसंभारो नाम
एकादशः सर्गः ॥

## XII.

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् ।
अभिवाद्य वशिष्ठं स न्यायतः प्रतिपूज्य च ॥ १ ॥
अब्रवीत् प्रसृतं वाक्यं प्रसवार्थं नराधिपः ।
यज्ञः संक्रियतां शीघ्रं यथाशास्त्रमनुष्ठितः ॥ २ ॥
यथा न विघ्नः क्रियते यज्ञघ्नेनेह केनचित् ।
भवान् स्निग्धः सुहृच्चैव गुरुश्च परमो मम ॥ ३ ॥
वोढव्यो भवता चैष भारो यज्ञार्थमुद्यतः ।
तथेति च स राजानमब्रवीद्द्विजसत्तमः ॥ ४ ॥
करिष्ये सर्वमेवैतद्भवतो यदभीप्सितं ।
ततोऽब्रवीद्द्विजान् सर्वान् यज्ञकर्मसु निष्ठितान् ॥ ५ ॥
स्थापत्ये चेह स्थाप्यन्तां वृद्धाः परमधार्मिकाः ।
कर्मान्तिका लिपिकरा वर्धकाः खनका अपि ॥ ६ ॥
गणकाः शिल्पिनश्चान्ये तथैव नटनर्तकाः ।
ततोऽब्रवीच्छास्त्रविदः पुरुषान् सुबहुश्रुतान् ॥ ७ ॥
यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ।
इष्टिं च बहुसाहस्रीं शीघ्रं चाह्वयत द्विजान् ॥ ८ ॥
उपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः ।
ब्राह्मणावसथाश्चैव क्रियन्तां शतशः शुभाः ॥ ९ ॥

भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ।
तथा पौरजनस्यापि कर्तव्या बहुविस्तराः ॥ १० ॥
आवासा बहुभक्ष्यान्नाः सर्वकामैः प्रपूरिताः ।
तथा जानपदं चैव कर्तव्यं बहुभोजनं ॥ ११ ॥
दातव्यमन्नं विविधं सत्कृत्य न तु पीडया ।
सर्वे वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ॥ १२ ॥
नापमानः प्रयोक्तव्यः कामक्रोधकृतः क्वचित् ।
यज्ञकर्मसु ये चाग्र्याः पुरुषाः शिल्पिनस्तथा ॥ १३ ॥
तेषामपि विशेषेण पूजा कार्या यथाक्रमं ।
यथा सर्वं सुविहितं न किञ्चित् परिहीयते ॥ १४ ॥
तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा ।
ततः सर्वे समागम्य वशिष्ठमिदमब्रुवन् ॥ १५ ॥
यथोक्तं तत् करिष्यामो न किञ्चित् परिहास्यते ।
ततः सुमन्त्रमाहूय वशिष्ठो वाक्यमब्रवीत् ॥ १६ ॥
निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः ॥ १७ ॥
समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ।
मिथिलाधिपतिं शूरं जनकं दृढविक्रमं ॥ १८ ॥
निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितं ।
तमानय महाभागं स्वयमेव सुसत्कृतं ॥ १९ ॥

पूर्वं संबन्धकं ज्ञात्वा ततो वाक्यं ब्रवीम्यहं ।
तथा काशीपतिं स्निग्धं सततं प्रियवादिनं ॥ २० ॥
वयस्यं राजसिंहस्य तमानय यशस्विनं ।
तथा केकयराजानं वृद्धं परमधार्मिकं ॥ २१ ॥
श्वशुरं राजसिंहस्य सपुत्रं तमिहानय ।
अङ्गेश्वरं तथा स्निग्धं लोमपादं सुसत्कृतं ॥ २२ ॥
सुव्रतं देवसंकाशं स्वयमेव समानय ।
प्राच्याश्च सिन्धुसौवीराः सुराष्ट्रे ये च पार्थिवाः ॥ २३ ॥
दाक्षिणात्या नरेन्द्राश्च सर्वानानय मा चिरं ।
अतिस्निग्धाश्च येऽन्येऽपि राजानः पृथिवीश्वराः ॥ २४ ॥
तानप्यानय वै क्षिप्रं सानुगान् सहबान्धवान् ।
वशिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ॥ २५ ॥
व्यादिशत् पुरुषांस्तत्र राज्ञामानयने बहून् ।
स्वयमेव च धर्मात्मा प्रययौ राजशासनात् ॥ २६ ॥
सुमन्त्रः प्रयतो भूत्वा समानेतुं महीक्षितः ।
ततः कर्मान्तिकाः सर्वे वशिष्ठाय महर्षये ॥ २७ ॥
सर्वान् निवेदयन्ति स्म यज्ञियानुपकल्पितान् ।
ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वान् पुनरब्रवीत् ॥ २८ ॥
भवद्भिर्न यथा यज्ञे परिहीयेत किञ्चन ।
नावज्ञया प्रदातव्यं किञ्चिद्वा केनचित् क्वचित् ॥ २९ ॥

अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत् ।
ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ॥ ३० ॥
रत्नान्यादाय बहवो राज्ञो दशरथस्य ह ।
ततो वशिष्ठः सुप्रीतो राजानमिदमब्रवीत् ॥ ३१ ॥
उपायाता नरव्याघ्र राजानस्तव शासनात् ।
मया हि सत्कृताः सर्वे यथार्हं पूजिताश्च ते ॥ ३२ ॥
यथावत् संभृतं सर्वं पुरुषैः स्वैः समाहितैः ।
सुमन्त्रं चाब्रवीद्हृष्टो यज्ञः संभारसंभृतः ॥ ३३ ॥
सर्वकामैरुपहितैरुपपन्नः समन्ततः ।
क्रियतां वचनान्मेऽद्य ऋष्यशृङ्गस्य चैव हि ॥ ३४ ॥
शुभे दिवसनक्षत्रे निर्यातु जगतीपतिः ।
ततो वशिष्ठप्रमुखाः सर्व एव द्विजातयः ।
अश्वमेधं पुरस्कृत्य कर्माण्यारेभिरे तदा ॥ ३५ ॥

इत्यार्षे रामायणे आदिकाण्डे यज्ञारम्भो नाम
द्वादशः सर्गः ॥

# रामायणं

## XIII.

अथ प्रदक्षिणं कृत्वा भूमिं प्राप्ते तुरंगमे ।
सरय्वा उत्तरे कूले यज्ञभूमिरकल्प्यत ॥ १ ॥
ऋष्यशृङ्गपुरोगैस्तैर्याज्ञिकैः परिनिर्मिता ।
अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ॥ २ ॥
वेददृष्टेन विधिना ततस्ते वेदपारगाः ।
प्रवर्ग्यादिक्रमं चक्रुः कल्पसूत्रविधानतः ॥ ३ ॥
प्रायश्चित्तविधानानि चक्रुश्चानवशेषतः ।
सवनानि च सर्वाणि यथा कालं प्रचक्रिरे ॥ ४ ॥
नासीदपकृतं तेषां स्खलितं चापि किञ्चन ।
परेण ह्यवधानेन तं क्रतुं ते प्रचक्रिरे ॥ ५ ॥
न तेष्वहःसु कृपणः क्षुत्क्षामो वापि दृश्यते ।
तिर्यक्ष्वपि कुतोऽन्येषु भूतेष्वपरितर्पितः ॥ ६ ॥
कोटिशो ब्राह्मणास्तत्र तथा शतसहस्रशः ।
तस्मिन् यज्ञ उपावृत्ता नानादेशनिवासिनः ॥ ७ ॥
नाविद्वानागतस्तत्र नाशतानुचरो द्विजः ।
नानाहिताग्निर्नायज्वा नाव्रती पतितो न च ॥ ८ ॥
ब्राह्मणानां सहस्राणि तत्र तानि महामखे ।
पृथग्बुभुजिरेऽन्नानि स्वादूनि विविधानि च ॥ ९ ॥

रुक्मपात्रीष्वनेकासु राजतीषु च सर्वशः ।
द्विजातयोऽन्नपानानि तत्राभुञ्जत चासकृत् ॥ १० ॥
अनाथा भुञ्जते तत्र नाथवन्तश्च भुञ्जते ।
तापसा भुञ्जते चापि भुञ्जते श्रमणा अपि ॥ ११ ॥
अनाथानां तथा स्त्रीणां बालवृद्धस्य चैव हि ।
बुभुक्षितानां दीनानां नातृप्तिरुपलक्ष्यते ॥ १२ ॥
व्यश्रूयत च शब्दोऽत्र दीयतां भुज्यतामिति ।
स्वाध्यायगीतशब्दाश्च व्यश्रूयन्त समन्ततः ॥ १३ ॥
सर्वकामगुणाश्चात्र व्यदृश्यन्तान्नपर्वताः ।
दिवसे दिवसे क्लृप्ता व्यञ्जनानां ह्रदास्तथा ॥ १४ ॥
अहो स्वादु प्रभूतं च विविधं चान्नमीदृशं ।
अहो स्म तृप्ता भद्रं वः शशंसुरिति वै द्विजाः ॥ १५ ॥
राजानोऽभ्यागतास्तत्र स्वयमेव स्वलंकृताः ।
भृत्यवत् प्रणता यज्ञे द्विजान् वै पर्यवेशयन् ॥ १६ ॥
ततः कर्मान्तरे प्राप्ते हेतुवादान् बहूंस्तथा ।
प्राहुः सुवाग्मिनो धीराः परस्परजिगीषवः ॥ १७ ॥
ऋष्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ।
आह्वयां चक्रिरे तत्र शक्रादीन् विबुधोत्तमान् ॥ १८ ॥
व्यापिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः ।
होतारो जुहुवुश्चात्र हविर्भागान् दिवौकसां ॥ १९ ॥

दिवसे दिवसे चक्रुः संस्तरे कुशला द्विजाः ।
सर्वं कर्म यथावत् तद्यथा शास्त्रेण चोदितं ।। २० ।।
नाषडङ्गविदत्रासीत् सदस्यो नाबहुश्रुतः ।
न सूत्रकल्पाकुशलो न वाचाकुशलस्तथा ।। २१ ।।
उच्छ्रिताश्चाभवन् यूपाः षड् बैल्वाः खादिराश्च षट् ।
तावन्त एव पालाशास्तथैवौडुम्बराः पृथक् ।। २२ ।।
श्लेष्मातकमयश्चैको देवदारुमयोऽपरः ।
द्वावास्तां तत्र विहितौ यूपौ वेदाङ्गपारगैः ।। २३ ।।
महोच्छ्रायपरीणाहो यूपोऽन्यः सर्वकाञ्चनः ।
यज्ञे समभवत् तत्र शोभार्थमुपकल्पितः ।। २४ ।।
विन्यस्ता विधिवत् सर्वे शिल्पिभिः सुकृता दृढाः ।
अष्टाश्रयाः सर्व एव श्लक्ष्णरूपसमन्विताः ।। २५ ।।
आच्छादितास्ते वासोभिः कुशलैः शिल्पकर्मसु ।
निचितश्चाभवच्चैत्यो ब्राह्मणैर्यज्ञकर्मभिः ।। २६ ।।
मञ्चयूपोच्छ्रयैस्तैस्तु सर्वतः समलंकृतः ।
रराज सुभृशं यज्ञः कल्पवृक्षैरिवोच्छ्रितैः ।। २७ ।।
विचिताश्चाभवन् मेधा ब्राह्मणैर्यज्ञकर्मभिः ।
अश्वदघ्नः कृतश्चापि गरुडः काञ्चनेष्टकः ।। २८ ।।
प्रोक्षितास्तत्र पशवस्तास्ता उद्दिश्य देवताः ।
जलचराः स्थलचरा अन्तरीक्षचरास्तथा ।। २९ ।।

पतङ्गाः पक्षिणश्चैव तथा वनचराश्च ये ।
नानासत्त्वर्षभाश्चैव हयमेधे महाक्रतौ ॥ ३० ॥
नानासरीसृपाश्चैव नानौषध्यः प्रकल्पिताः ।
पशूनां त्रिशतं तत्र प्रत्यहं प्रोक्षितं द्विजैः ॥ ३१ ॥
अश्वरत्नं चावभृथे प्रोक्षितं वैश्वदेविकं ।
कौशल्या तं हयं तत्र परिगम्य प्रदक्षिणं ॥ ३२ ॥
सम्यगभ्यर्चयां चक्रे गन्धमाल्यविभूषणैः ।
अध्वर्युसहिता चैनं समालभ्य शुचिव्रता ॥ ३३ ॥
रजनीं पर्युपास्तैकां कौशल्या पुत्रकाम्यया ।
तमश्वमुपतिष्ठन्त्याः कौशल्यायास्ततो द्विजाः ॥ ३४ ॥
ऋष्यशृङ्गादयः प्रीताः प्रायुञ्जन्त तदाशिषः ।
विशस्य चोद्धृत्य वपामश्वस्य विधिवत् तदा ॥ ३५ ॥
ऋत्विग्भल्लान्वितामग्नौ जुहावावाहयन् सुरान् ।
तस्याश्च नृपतिर्धूमं जघ्रौ पत्नीसहायवान् ॥ ३६ ॥
वपायां हूयमानायां पावके पुत्रकम्यया ।
हयस्य तस्य चाङ्गानि कल्पितानि विभागशः ॥ ३७ ॥
जुहुवुर्याजकास्तत्र यथाभागं दिवौकसां ।
समाप्य चैनं क्रमशो राजा क्रतुवरं ततः ॥ ३८ ॥
दक्षिणां व्यददात् तेषां कर्मिणां तदनन्तरं ।
प्राचीं होत्रे ददौ स्फीतां दिशं बाहुबलार्जितां ॥ ३९ ॥

अध्वर्यवे प्रतीचीं तु दक्षिणां ब्रह्मणे दिशं ।
उद्गात्रे च तथोदीचीं दक्षिणैषा विनिर्मिता ॥ ४० ॥
अश्वमेधे महायज्ञे पुरा कल्पे स्वयंभुवा ।
समग्रां पृथिवीं दत्वा स चातुर्होत्रे दक्षिणां ॥ ४१ ॥
अन्येषां कर्मिणां राजा सदस्यानां च दक्षिणां ।
शतं शतसहस्राणां हिरण्यस्योत्ससर्ज सः ॥ ४२ ॥
दश कोटीः सुवर्णस्य रजतस्य चतुर्गुणं ।
ऋत्विग्भ्यः प्रददावन्यान् कामांस्तत्र यथेप्सितान् ॥ ४३ ॥
जावालये वशिष्ठाय वामदेवाय च प्रभुः ।
ऋष्यशृङ्गाय च तदा स राजा क्रतुवर्धनः ॥ ४४ ॥
दक्षिणां प्रतिगृह्याथ सुप्रीतमनसो द्विजाः ।
ऊचुर्दशरथं तत्र कामं ध्यायेति वै तदा ॥ ४५ ॥
तानब्रवीद्धृष्टमना राजा दशरथो द्विजान् ।
इच्छामि चतुरः पुत्रानुदारान् ख्यातविक्रमान् ॥ ४६ ॥
तथेति च ते राजानं तमूचुर्ब्रह्मवादिनः ।
यथाभिलषितान् पुत्रानचिरात् त्वमवाप्स्यसि ॥ ४७ ॥

इत्यार्षे रामायणे आदिकाण्डे अश्वमेधयज्ञकर्म नाम
त्रयोदशः सर्गः ॥

# आदिकाण्डं

## XIV.

अथर्ष्यशृङ्गो राजानं पुनरेवाभ्यभाषत ।
इष्टिं तेऽन्यां करिष्यामि पुत्रीयां पुत्रकाम्यया ॥ १ ॥
ततः प्रचक्रमे कर्तुमिष्टिं कामसमृद्धये ।
तस्य राज्ञो हितान्वेषी विभाण्डकसुतो वशी ॥ २ ॥
तत्र देवाः सगन्धर्वाः सिद्धाश्च मुनिभिः सह ।
भागप्रतिग्रहार्थं वै पूर्वमेव समागताः ॥ ३ ॥
ब्रह्मा सुरेश्वरः स्थाणुस्तथा नारायणः प्रभुः ।
चत्वारो लोकपालाश्च देवतानां च मातरः ॥ ४ ॥
यक्षास्तथैव सर्वे तु देवाश्च सहितास्तथा ।
इन्द्रश्च भगवान् साक्षान्मरुद्गणावृतः प्रभुः ॥ ५ ॥
अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ।
तत्र भागार्थिनो देवानागतान् सोऽभ्ययाचत ॥ ६ ॥
अयं राजा दशरथः पुत्रार्थी तप्तवांस्तपः ।
इष्टवानश्वमेधेन भवतः श्रद्धयान्वितः ॥ ७ ॥
इष्टिं च पुत्रकामोऽन्यां पुनः कर्तुं समुद्यतः ।
तदस्य पुत्रकामस्य प्रसादं कर्तुमर्हथ ॥ ८ ॥
अभियाचे स वः सर्वानस्यार्थेऽहं कृताञ्जलिः ।
भवेयुरस्य चत्वारः पुत्रास्त्रैलोक्यविश्रुताः ॥ ९ ॥

ते तथेत्यब्रुवन् देवा ऋषिपुत्रं कृताञ्जलिं ।
माननीयोऽसि नो विप्र राजा चैव विशेषतः ॥१०॥
प्राप्स्यते परमं काममेतयेष्ट्या नराधिपः ।
इत्युक्त्वान्तर्हिता देवास्ततः शक्रपुरोगमाः ॥११॥
तां दृष्ट्वा विधिवद्दीक्षां क्रियमाणां महर्षिणा ।
उपेत्य लोककर्तारं प्रजापतिमिदं वचः ॥१२॥
ऊचुः प्राञ्जलयः सर्वे ब्रह्माणं वरदं तथा ।
त्वत्प्रदिष्टवरो ब्रह्मन् रावणो नाम राक्षसः ॥१३॥
सर्वान् नो बाधते दर्पान्महर्षींश्च तपोरतान् ।
त्वया ह्यस्य वरो दत्तः प्रीतेन भगवन् पुरा ॥१४॥
देवदानवयक्षाणामबध्योऽसीति कामतः ।
मानयन्तश्च ते वाक्यं सर्वमस्य सहामहे ॥१५॥
स बाधयति लोकांस्त्रीन् विहिंसन् राक्षसाधिपः ।
देवर्षियक्षगन्धर्वानसुरान् मानवांश्च सः ॥१६॥
अन्यायतः पीडयति वरदानेन दर्पितः ।
न तत्र सूर्यस्तपति न भयाद्वाति मारुतः ॥१७॥
नाग्निर्ज्वलति वै तत्र यत्र तिष्ठति रावणः ।
महोर्मिमाली तं दृष्ट्वा समुद्रोऽपि प्रकम्पते ॥१८॥
नष्टो वैश्रवणस्त्यक्त्वा लङ्कां तद्वीर्यपीडितः ।
तस्मान्नः पाहि भगवन् रावणाल्लोकरावणात् ॥१९॥

उपायं तद्वधार्थाय स्रष्टुमर्हसि कामद ।
इति विज्ञापितो देवैर्ध्यात्वा ब्रह्मेदमब्रवीत् ॥ २० ॥
हन्तायं विहितस्तस्य बधोपायो दुरात्मनः ।
तेन देवर्षिगन्धर्वयक्षराक्षसपन्नगैः ॥ २१ ॥
अबध्यः स्यामिति प्रोक्तं तथेत्युक्तं च तन्मया ।
अवज्ञाय तु तद्रक्षो मानुषान् नान्वकीर्तयत् ॥ २२ ॥
तस्मात् स मानुषेणैव बध्यः पापो भविष्यति ।
इति श्रुत्वा हितं वाक्यं ब्रह्मणा समुदाहृतं ॥ २३ ॥
देवाः शक्रपुरोगास्ते हर्षिताः सर्वतोऽभवन् ।
एतस्मिन्नन्तरे विष्णुस्तत्रागाद्भगवान् स्वयं ॥ २४ ॥
ब्रह्मणा मनसा ध्यातस्तद्वधायामितद्युतिः ।
अब्रवीत् तं ततो ब्रह्मा विष्णुं देवगणैः सह ॥ २५ ॥
आर्तानामसि लोकानामार्तिहा मधुसूदन ।
याचामहेऽतस्त्वामार्ताः शरणं नो भवाच्युत ॥ २६ ॥
ब्रूत किं करवाणीति विष्णुस्तानब्रवीद्वचः ।
इति तस्य वचः श्रुत्वा पुनरूचुरिदं सुराः ॥ २७ ॥
राजा दशरथो नाम तप्तवान् सुमहत् तपः ।
इष्टवांश्चाश्वमेधेन प्रजाकामः स चाप्रजः ॥ २८ ॥
धर्मशीलो गुणश्लाघी सत्यवादी दृढव्रतः ।
अस्मन्नियोगात् त्वं विष्णो तस्य पुत्रत्वमाप्नुहि ॥ २९ ॥

तस्य भार्यासु तिसृषु श्रीकल्पासु जनार्दन ।
चतुर्धांशं विभज्य त्वं प्रादुर्भवितुमर्हसि ॥ ३० ॥
स नियुक्तस्तथा देवैः साक्षान्नारायणः प्रभुः ।
तानुवाच ततो देवानिदं वचनमर्थवत् ॥ ३१ ॥
किं मया तत्र कर्तव्यं प्रादुर्भूतेन वः सुराः ।
कार्यं कुतो वापि भयं युष्माकमिदमीदृशं ॥ ३२ ॥
इति श्रुत्वा वचस्तस्य विष्णोरूचुरिदं सुराः ।
राक्षसान्नो भयं विष्णो रावणाल्लोकरावणात् ॥ ३३ ॥
मानुषीं तनुमास्थाय समुद्धर्तुं तमर्हसि ।
त्वत्तो हि नान्यस्तं पापं शक्तो हन्तुं दिवौकसां ॥ ३४ ॥
स दीर्घं तप्तवान् कालं तपोऽत्युग्रमरिंदम ।
तेनायं परितुष्टोऽस्य बभूव प्रपितामहः ॥ ३५ ॥
ततोऽस्मै प्रददौ तुष्टो वरदो भगवान् पुरा ।
अभयं सर्वभूतेभ्यो वर्जयित्वा तु मानुषान् ॥ ३६ ॥
ततो दत्तवरस्यैवं तस्य नान्यत्र मानुषात् ।
बधाद्भयमतश्चैनं गत्वा मानुषतां जहि ॥ ३७ ॥
स हि देवर्षिगन्धर्वांस्तपःसिद्धांश्च मानुषान् ।
वरदानबलोन्मत्तो बाधते राक्षसाधमः ॥ ३८ ॥
यज्ञहा ब्रह्महा चैव ब्रह्मद्विट् पुरुषादकः ।
अबध्यो वरदानेन रावणो लोककण्टकः ॥ ३९ ॥

तेनाक्रान्ता नृपतयः सरथाः सहकुञ्जराः ।
हता विप्रद्रुताश्चान्ये प्राद्रवन्त दिशो दश ॥४०॥
भक्षिता ऋषयश्चैव तथैवाप्सरसां गणाः ।
दृप्तः सप्त सदा लोकान् क्रीडन्निव स बाधते ॥४१॥
तस्मादस्य बधो दृष्टो मनुष्येभ्यः परंतप ।
अवज्ञाताः पुरा तेन वरदानेन मानवाः ॥४२॥

तमुद्धतं रावणमुग्रतेजसं
प्रवृद्धदर्पं त्रिदशेश्वर द्विषं ।
विरावणं सर्वतपस्विकण्टकं
मनुष्यतामेत्य निहन्तुमर्हसि ॥४३॥

इत्यार्षे रामायणे आदिकाण्डे रावणबधोपायो नाम
चतुर्दशः सर्गः ॥

# रामायणं

## XV.

इत्युक्तो भगवान् देवैर्विष्णुर्लोकनमस्कृतः ।
पितरं रोचयामास ततो दशरथं नृपं ॥ १ ॥
स चाप्यपुत्रो नृपतिस्तस्मिन् काले महामनाः ।
अयजत् पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ २ ॥
तत्रास्य यजमानस्य पावकादद्भुतप्रभं ।
प्रादुर्भूतं महद्भूतं प्रदीप्तानलसंनिभं ॥ ३ ॥
कृष्णाजिनधरं कृष्णं हरितश्मश्रुजटाधरं ।
पद्मरक्तान्तनयनं मेघदुन्दुभिनिस्वनं ॥ ४ ॥
शुभलक्षणसंपन्नं दिव्याभरणभूषितं ।
शैलशृङ्गसमुत्सेधं सिंहोदरकटीक्षणं ॥ ५ ॥
काञ्चनीं पिहितां दोर्भ्यां परिगृह्याद्भुतोपमां ।
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियां ॥ ६ ॥
तदृष्यशृङ्गं प्रोवाच भूतमुत्पन्नमद्भुतं ।
प्राजापत्यं विद्धि मां त्वं भूतमभ्यागतं द्विज ॥ ७ ॥
इमां पात्रीं मया दत्तां प्राप्य राज्ञे प्रयच्छ वै ।
इदं दशरथार्थाय निर्दिष्टं पायसं मया ॥ ८ ॥
पुत्रीयं धर्मपत्नीनां प्राश्यमेतत् प्रयच्छ तु ।
तमुवाच ततो धीमानृष्यशृङ्गो द्विजर्षभः ॥ ९ ॥

प्रयच्छ राज्ञे पात्रीं त्वं स्वयमेवाद्भुतामिति ।
ऋष्यशृङ्गवचः श्रुत्वा प्राजापत्यो महाद्युतिः ॥ १० ॥
प्रोवाचेक्ष्वाकुदायादं परया स्वरसंपदा ।
प्रीतस्तेऽहं महाराज सर्वामृतरसोद्भवं ॥ ११ ॥
प्रयच्छामि गृहाण त्वमिक्ष्वाकुकुलनन्दन ।
प्रतिगृह्य च तां राजा शिरसा प्रणतोऽब्रवीत् ॥ १२ ॥
भगवन् किमनेनाहं करवाणीति वै तदा ।
तमब्रवीत् ततो भूयः प्राजापत्यस्तदा नृपं ॥ १३ ॥
स्विष्टस्य ते नरपते व्युष्टिरेषा मयोद्यता ।
इदं तु नरशार्दूल पायसं देवनिर्मितं ॥ १४ ॥
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनं ।
प्रयच्छ धर्मपत्नीभ्यः प्राश्नीतेति नराधिप ॥ १५ ॥
ताभ्यस्त्वं प्राप्स्यसे प्रीतिं यदर्थस्तेऽयमुद्यमः ।
बाढमित्येवं नृपतिस्तद्वचः प्रतिपूज्य सः ॥ १६ ॥
अब्रवीत् तन्महद्भूतं श्रेष्ठमात्महितं वचः ।
ततस्तदद्भुतं भूतं दत्त्वा तद्धविरुत्तमं ॥ १७ ॥
राज्ञे दशरथायाथ तत्रैवान्तरधीयत ।
ततो दशरथः प्राप्य तद्धविर्देवनिर्मितं ॥ १८ ॥
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ।
सोऽन्तःपुरं प्रविश्याथ कौशल्यामिदमब्रवीत् ॥ १९ ॥

पुत्रीयं पायसं देवि प्राशेदं हितमात्मनः ।
इत्युक्त्वा प्रददौ तस्यै हविषोऽर्धं नराधिपः ॥ २० ॥
स्वयमेव समं कृत्वा भागं भागचतुष्टयं ।
अर्धादर्धं ददौ चापि कैकेय्यै स नराधिपः ॥ २१ ॥
चतुर्भागं द्विधा कृत्वा सुमित्रायै ददौ तदा ।
प्रददौ चावशिष्टं तत् पायसं देवनिर्मितं ।
अनुचिन्त्य सुमित्रायै पुनरेव नराधिपः ॥ २२ ॥

ततो हविः प्राश्य तदुत्तमं स्त्रियः
स्वयं नृपेण प्रतिपादितं मुदा ।
हुताशनादित्यसमानतेजसः
क्रमेण गर्भानुपलेभिरे शुभान् ॥ २३ ॥
ततः स राजा समुपेत्य ताः स्त्रियः
प्ररूढगर्भाः परितुष्टमानसः ।
बभूव हृष्टः सुकृती यथा दिवं
समीक्ष्य योगप्रसृतेन चेतसा ॥ २४ ॥

इत्यार्षे रामायणे आदिकाण्डे पायसोत्पत्तिर्नाम
पञ्चदशः सर्गः ॥

## आदिकाण्डं

### XVI.

समाप्तेऽथ क्रतौ तस्मिन् वाजिमेधे महाद्भुते ।
हविर्भागानवाप्येष्टान् जग्मुर्देवा यथाक्रमं ॥ १ ॥
ऋषयश्च महात्मानः प्रतिजग्मुः सुपूजिताः ।
राजानश्चैव ये तत्र क्रतावासन् समागताः ॥ २ ॥
तदानींताननुज्ञातुं सर्वानेव प्रचक्रमे ।
प्रीतियुक्तेन मनसा राजा दशरथस्तदा ॥ ३ ॥
स्वं स्वं राष्ट्रं यथाकामं गच्छन्तु मनुजाधिपाः ।
प्रीतोऽहमस्मि भद्रं वः स्वस्ति प्राप्नुत मा चिरं ॥ ४ ॥
सर्वे भवन्तः पश्यन्तु कार्यं विषयरक्षणं ।
भ्रष्टो हि विषयाद्राजा मृतकल्पः प्रदृश्यते ॥ ५ ॥
तस्मात् स्वविषये रक्षा कर्तव्या भूतिमिच्छता ।
यज्ञैर्नावाप्यते स्वर्गो रक्षणात् प्राप्यते यथा ॥ ६ ॥
यथा हि पुरुषः कुर्याच्छरीरे यत्नमुत्तमं ।
वसनाद्यैरुपायैस्तु तथा राज्ये नराधिपः ॥ ७ ॥
अनागतविधानं च कर्तव्यं विषये नृपैः ।
आगमश्चापि कर्तव्यस्तथा दोषो न जायते ॥ ८ ॥
एवं समादिशद्राज्ञो राजा श्रुत्वा च तं नृपाः ।
अन्योन्यं संविदं कृत्वा प्रयाताः सर्वतो दिशः ॥ ९ ॥

समाप्तदीक्षानियमः पत्नीगणसमन्वितः

संप्रहृष्टमना भूत्वा राजा दशरथस्तदा ॥१०॥

गतेषु पार्थिवेन्द्रेषु ससभ्यबलवाहनः।

प्रविवेश पुरीं श्रीमान् पुरस्कृत्य द्विजोत्तमान् ॥११॥

इत्यार्षे रामायणे आदिकाण्डे राजसंप्रेषणं नाम
षोडशः सर्गः ॥

# आदिकाण्डं

## XVII.

ततः कालस्य महत ऋष्यशृङ्गः सुपूजितः ।
प्रययौ शान्तया सार्धं ब्राह्मणैश्च कृतात्मभिः ॥१॥
अन्वीयमानो राज्ञा वै सानुयात्रेण धीमता ।
वशिष्ठेन च धीरेण तथा पौरजनेन च ॥२॥
यानेन महता शान्ता कम्बलावततेन ह ।
गोभिः श्वेतैश्च युक्तेन प्रेष्यवर्गान्वितेन च ॥३॥
संगृह्य धनं सुबहु मणिरत्नमजाविकं ।
विविधैश्चाप्यलंकारैर्भूषिता श्रीरिवापरा ॥४॥
मुदा परमयोपेता प्रययौ वरवर्णिनी ।
भर्तारमनुसंरक्ता पौलोमीव पुरंदरं ॥५॥
उषित्वा सुखवासं सा सर्वकामैः सुपूजिता ।
लालिता ज्ञातिभिश्चापि तथा स्त्रीभिश्च सर्वशः ॥६॥
श्राविता वनवासं च भर्त्रा साथ शुभानना ।
तमेव मन्यते साधु तथापि सुखिता सती ॥७॥
सान्तःपुरो नृपश्चापि सोऽन्वगच्छन्महाव्रतं ।
ऋषिपुत्रं महाभागं शान्तां चैवात्मजां शुभां ॥८॥

ऋषिपुत्रस्य वचनात् ततो वासे प्रकल्पिते ।
सुखवासाः स्म गच्छन्ति सर्वकामैः सुपूजिताः ॥ ९ ॥
ततोऽभिगम्य राजानमृषिपुत्रः प्रतापवान् ।
समनुज्ञापयामास निवर्तस्व नृपेति तं ॥ १० ॥
ऋषिपुत्रवचः श्रुत्वा राजा सान्तःपुरस्तदा ।
उच्चैः प्ररुदितस्तत्र वचनं चेदमब्रवीत् ॥ ११ ॥
कौशल्यां च सुमित्रां च कैकेयीं च यशस्विनीं ।
सर्वाः सुदृष्टां कुरुत शान्तां दुर्लभदर्शनां ॥ १२ ॥
तत आलिङ्ग्य ताः सर्वाः शान्तां बाष्पाविलेक्षणाः ।
ऊचुः स्वस्त्ययनान्यस्य सभार्यस्य द्विजस्य ताः ॥ १३ ॥
वायुश्चाग्निश्च सोमश्च पृथिवी सरितो दिशः ।
वने रक्षन्तु सततं त्वां भर्तृव्रतचारिणीं ॥ १४ ॥
श्वशुरः पूजनीयस्ते स हि मान्यो विशेषतः ।
पूजाभिरनुकूलाभिरग्निशुश्रूषणादिभिः ॥ १५ ॥
भर्ता च पूजनीयस्ते सर्वावस्थास्वनिन्दिते ।
प्रियवादेन रक्षसि भर्ता स्त्रीणां हि दैवतं ॥ १६ ॥
प्रेषयिष्यति राजा तु कुशलार्थं तवालये ।
ब्राह्मणान् नित्यशः पुत्रि मोत्सुका भूः कदाचन ॥ १७ ॥
एवं शान्तां समाश्वास्य मूर्ध्न्युपाघ्राय चासकृत् ।
न्यवर्तन्त ततः सर्वाः स्त्रियो राज्ञा प्रचोदिताः ॥ १८ ॥

प्रदक्षिणं द्विजश्रेष्ठं कृत्वा राजा स वीर्यवान् ।
व्यादिशत् सैनिकान् कांश्चिदृष्यशृङ्गाय धीमते ।। १९ ।।
अभिवाद्य स राजानमुवाच द्विजसत्तमः ।
स्वस्ति तेऽस्तु महाराज धर्मेणाराधय प्रजाः ।। २० ।।
एवमुक्त्वा स राजानं ययावृषिसुतस्तदा ।
अदृश्यस्तु यदा विप्रस्तदा राजा न्यवर्तत ।। २१ ।।
प्रविष्टश्च पुरीं राजा नागरैश्चाभिनन्दितः ।
न्यवसत् तत्र मुदितः पुत्रजन्मप्रतीक्षकः ।। २२ ।।
ऋष्यशृङ्गोऽपि तेजस्वी प्रययौ क्रमशस्तदा ।
लोमपादस्य नगरीं चम्पां चम्पकमालिनीं ।। २३ ।।
श्रुत्वैव लोमपादोऽपि तमायान्तमृषिं तदा ।
सब्राह्मणः सहामात्यः प्रत्युद्गम्य तमब्रवीत् ।। २४ ।।
स्वागतं ते द्विजश्रेष्ठ दिष्ट्यासि कुशली मुने ।
इहागतो महाभाग सभार्यः सपरिच्छदः ।। २५ ।।
पिता ते कुशली ब्रह्मन् प्राह्णिणोन्नित्यशश्च सः ।
कुशलार्थं तव विभो सभार्यस्य विशेषतः ।। २६ ।।
स्वलंकृतं च नगरं कारयामास बुद्धिमान् ।
पूजार्थमृष्यशृङ्गस्य राजा हृष्टेन चेतसा ।। २७ ।।
ऋष्यशृङ्गः प्रहृष्टस्तु सह राज्ञा पुरोत्तमं ।
पुरोहितेन सत्कृत्य पूजितः प्रविवेश ह ।। २८ ।।

एवं स न्यवसत् तत्र द्विजपुत्रः प्रतापवान् ।
राज्ञा सान्तःपुरेणैव पूज्यमानो यथाक्रमं ॥ २१ ॥

इत्यार्षे रामायणे आदिकाण्डे ऋष्यशृङ्गप्रतिगमनं नाम
सप्तदशः सर्गः ॥

# आदिकाण्डं

## XVIII.

ऋष्यशृङ्गे तु संप्राप्ते राजा ब्राह्मणमब्रवीत् ।
ऋषेर्गच्छ समीपं त्वं निवेदय च सुव्रतं ॥ १ ॥
आगतं परमोदारमृष्यशृङ्गं दुरासदं ।
ऋषये सुव्रताय त्वं काश्यपायात्मसंभवं ॥ २ ॥
अभिवाद्यैव शिरसा मत्कृते द्विजसत्तमं ।
प्रसादय सुतार्थं मे सर्वारम्भं यथात्मना ॥ ३ ॥
श्रुत्वैव राज्ञो वचनं तदा स द्विजसत्तमः ।
जगाम तत्र यत्रासौ वर्तते काश्यपात्मजः ॥ ४ ॥
प्रसाद्य च द्विजश्रेष्ठं शिरसाभिप्रणम्य च ।
अब्रवीत् प्रसृतं वाक्यं राज्ञा यदभिचोदितं ॥ ५ ॥
पुत्रस्ते समनुप्राप्तो यज्ञं कृत्वा महायशाः ।
राज्ञो दशरथस्यैष श्वशुरस्य महात्मनः ॥ ६ ॥
पूर्वमेव हि तत् सर्वं श्रुत्वा संबन्धकं कृतं ।
यज्ञकर्म च वीरस्य राज्ञो दशरथस्य तत् ॥ ७ ॥
श्लाघनीयस्तु संबन्धी राजा देवसमो हि सः ।
ततो हर्षितवान् विप्रस्तस्य राज्ञो महात्मनः ॥ ८ ॥
श्रुत्वा तु वचनं तस्य द्विजस्य सुमहायशाः ।
गमने मतिमाधत्त पुत्रस्यानयने तदा ॥ ९ ॥

स हि शिष्यवृतस्तत्र प्रयातो द्विजसत्तमः ।
लोमपादस्य नगरीं रम्यां पुत्रदिदृक्षया ॥ १० ॥
संपूज्यमानो धर्मात्मा ग्रामैर्घोषैश्च सर्वशः ।
भक्ष्यभोज्यमुपादाय नरास्तं समुपागमन् ॥ ११ ॥
किङ्कराः समुपातिष्ठन् रात्रिं दिवमतन्द्रिताः ।
ऊचुः प्रणम्य शिरसा किं मुने करवाम हे ॥ १२ ॥
तानब्रवीत् स विप्रेन्द्रः सर्वानेव समागतान् ।
किमर्थं क्रियते पूजा श्रोतुमिच्छामि तत्त्वतः ॥ १३ ॥
तत ऊचुर्महात्मानं संबन्धी ते नराधिपः ।
तस्याज्ञा क्रियते ब्रह्मन् व्येतु ते मानसो ज्वरः ॥ १४ ॥
श्रुत्वा तु तेषां वचनं मनसो ह्लादनं शुभं ।
प्रसादमगमद्राज्ञः सहामात्यपुरस्य सः ॥ १५ ॥
विभाण्डकवचः श्रुत्वा किङ्करा हृष्टमानसाः ।
त्वरिता जग्मुराख्यातुं राज्ञश्च प्रियदर्शिनः ॥ १६ ॥
तच्छ्रुत्वा वचनं तेषां मनसः प्रीतिवर्धनं ।
मन्त्रिभिः सह धर्मात्मा प्रत्युद्गम्य नराधिपः ॥ १७ ॥
दृष्ट्वा तु मुनिशार्दूलं प्रणम्य च पुनः पुनः ।
अब्रवीद्राजशार्दूलो विभाण्डकमिदं वचः ॥ १८ ॥
अद्य मे सफलं जन्म दर्शनात् तव सुव्रत ।
तथेति च स राजानमुवाच द्विजसत्तमः ॥ १९ ॥

मा ते भयं भूद्राजेन्द्र प्रसन्नोऽस्मि तवानघ ।
ततः प्रहृष्टो नृपतिः पुरस्कृत्य द्विजोत्तमं ॥ २० ॥
प्राविशन्नगरीं श्रीमानर्चितः सर्वमङ्गलैः ।
स्वलंकृतं गृहं चैनं प्रावेशयदरिंदमः ॥ २१ ॥
पुरोहितेन सहितः प्रगृह्यार्घ्यं समाहवत् ।
अभिवाद्य पुनश्चैव न्यायतः प्रतिपूज्य च ॥ २२ ॥
तस्थुः प्राञ्जलयः सर्वे समासाद्य द्विजोत्तमं ।
ततः शान्तां पुरस्कृत्य ताः स्त्रियः समलंकृतां ॥ २३ ॥
न्यवेदयन्त विप्राय स्नुषेयं तव मानद ।
प्रतिगृह्य स तां शान्तां समालिङ्ग्य च धर्मवित् ॥ २४ ॥
अङ्के निवेश्य च तदा विस्मयं परमं गतः ।
द्विजोत्सङ्गात् समुत्थाय साभिवाद्य तदा द्विजं ॥ २५ ॥
आविशत् प्राञ्जलिर्भूत्वा श्वशुरस्य समीपतः ।
सोऽनुज्ञाप्य ततः शान्तां राजानं चैव योषितः ॥ २६ ॥
प्रायश्चित्तं च कृतवान् पुत्रस्य द्विजसत्तमः ।
महर्षिभिः पूज्यमानः ससुतश्च वनं ययौ ॥ २७ ॥

इत्यार्षे रामायणे आदिकाण्डे ऋष्यशृङ्गवनगमनं नाम
अष्टादशः सर्गः ॥

## XIX.

पित्रा चैव यथाकालं स संपृष्टो महात्मना ।
सर्वमावेदयामास पित्रे वृत्तमशेषतः ॥ १ ॥
स चापि सुभृशं प्रीतस्तच्छ्रुत्वा पुत्रभाषितं ।
यज्ञवृत्तमशेषेण ह्यविषस्तस्य चोद्भवं ॥ २ ॥
अनावृष्ट्यां च घोरायां देवस्याभिप्रवर्षणं ।
लोमपादस्य विषये पूजां पुत्रस्य चोत्तमां ॥ ३ ॥
वधाश्च लाभं शान्ताया रूपवत्या धनस्य च ।
लोमपादेन संबन्धं राज्ञा दशरथेन च ॥ ४ ॥
राज्ञो दशरथस्यापि यज्ञमिष्टवतस्तदा ।
सुकृतस्य फलं ज्ञातं प्रत्यक्षं भुवि दुर्लभं ॥ ५ ॥
प्रकृत्या पुण्यशीलस्य भूय एव तदाभवत् ।
धर्मानृशंस्यसत्येषु पुण्ये चाभिरतं मनः ॥ ६ ॥
अवाप्तं चात्मनो मेने लोके जन्मसमुद्भवं ।
तदवाप्य फलं पुण्यं सुकृतस्य स्वकर्मणः ॥ ७ ॥
तिस्रो महिष्यस्तास्तस्य राजर्षेरभवन् पुरा ।
गुणवत्योऽनुरूपाश्च रूपेणाप्सरसां समाः ॥ ८ ॥
कौशल्या सदृशी चैव कैकेयी चाभवच्छुभा ।
सुमित्रा वामदेवस्य बभूव करणीसुता ॥ ९ ॥

तासां प्रजज्ञिरे पुत्राश्चत्वारोऽमिततेजसः ।
रामलक्ष्मणशत्रुघ्नभरता देवरूपिणः ॥ १० ॥
जन्मतेजोगुणज्येष्ठं पुत्रमप्रतिमौजसं ।
कौशल्याजनयद्रामं विष्णुतुल्यपराक्रमं ॥ ११ ॥
कौशल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथाधिपेन देवानामदितिर्वज्रपाणिना ॥ १२ ॥
भवाय स हि लोकानां रावणस्य बधाय च ।
विष्णोर्वीर्यार्धतो जज्ञे रामो राजीवलोचनः ॥ १३ ॥
तेजोवीर्याधिकः शूरः श्रीमान् गुणगणाकरः ।
बभूवानवरश्चैव शक्राद्विष्णोश्च पौरुषे ॥ १४ ॥
तथा लक्ष्मणशत्रुघ्नौ सुमित्राजनयत् सुतौ ।
दृढभक्ती महोत्साहौ रामस्यावरजौ गुणैः ॥ १५ ॥
तावप्यास्तां चतुर्भागौ विष्णोः संपिण्डितावुभौ ।
एक एकचतुर्भागादपरस्मादजायत ॥ १६ ॥
भरतो नाम कैकेय्याः पुत्रः सत्यपराक्रमः ।
धर्मात्मा च महात्मा च प्रख्यातबलविक्रमः ॥ १७ ॥
ते दीप्तमनसः सर्वे महेष्वासा नरर्षभाः ।
अपूरयन्त ते कामान् पितुर्धर्मपरायणाः ॥ १८ ॥
स चतुर्भिर्महाभागैः पुत्रैर्दशरथोः वृतः ।
बभूव परमप्रीतो देवैरिव पितामहः ॥ १९ ॥

तेषां केतुरिव श्रेष्ठो रामो लोकहिते रतः ।
स्वयंभूरिव देवानां सर्वेषां समदर्शनः ॥ २० ॥
बाल्यात् प्रभृति तं भक्तो लक्ष्मणो लक्ष्मिवर्धनः ।
प्रजाभिरामं धर्मात्मा भ्राता भ्रातरमग्रजं ॥ २१ ॥
सोऽपि प्रियतरस्तस्य प्राणेभ्योऽपि परंतपः ।
लक्ष्मीवान् लक्ष्मणो भ्रातुर्ज्येष्ठस्यारिविघातिनः ॥ २२ ॥
मिष्टमन्नं तथा भोगानश्नाति न हि तं विना ।
न विन्दति रतिं चैव मुहूर्तमपि तं विना ॥ २३ ॥
मृगयामथवान्यत्र यान्तं राममनुव्रतः ।
लक्ष्मणोऽपि जगामैनं धनुरादाय पृष्ठतः ॥ २४ ॥
भरतस्यापि शत्रुघ्नो रामस्येव हि लक्ष्मणः ।
प्राणैः प्रियतरो भ्राता तस्यापि स तथाभवत् ॥ २५ ॥
ते ख्यातयशसः सर्वे परस्परहिते रताः ।
तुष्टिमुत्पादयां चक्रुः पितुर्विनयपौरुषैः ॥ २६ ॥
तेषां ध्वज इवालक्ष्यो रामो रतिकरः पितुः ।
प्रजाभिरामश्च भृशं बभूव सद्भिर्गुणैः ॥ २७ ॥
गुणैरेवाभिरामः स रञ्जयामास हि प्रजाः ।
राम इत्यभिविख्यातं नाम तस्य तथा कृतं ॥ २८ ॥
व्रतोपनयनादींश्च यथाकालं नराधिपः ।
कारयामास संस्कारांस्तेषां वेदविधानतः ॥ २९ ॥

ते हि वेदविदः सर्वे सर्वशास्त्रार्थकोविदाः ।
ह्रीमन्तश्च विनीताश्च सर्वैः समुदिता गुणैः ॥३०॥
स्वगुणै रञ्जयामासुः सर्वे तेऽतिमनोहराः ।
पौरजानपदांश्चैव बन्धूंश्चान्यानशेषतः ॥३१॥

इत्यार्षे रामायणे आदिकाण्डे दशरथपुत्रजन्म नाम
एकोनविंशः सर्गः ॥

## XX.

पुत्रत्वं तु गते विष्णौ राज्ञो दशरथस्य च ।
उवाच देवानाहूय स्वयंभूर्भगवानिदं ॥ १ ॥
सत्यसंधस्य देवस्य सर्वेषां वो हितैषिणः ।
विष्णोः सहायान् समरे कुरुध्वं कामरूपिणः ॥ २ ॥
मायाविदश्च वीरांश्च वायुवेगसमान् जवे ।
नयज्ञान् बुद्धिसंपन्नान् विष्णुतुल्यपराक्रमान् ॥ ३ ॥
असंहार्यानुपायज्ञान् दिव्यसंहननान्वितान् ।
सर्वास्त्रगुणसंपन्नानमृतप्राशिभिः समान् ॥ ४ ॥
अप्सरःसु च मुख्यासु गन्धर्वीणां वधूषु च ।
यक्षपन्नगकन्यासु तथा विद्याधरीषु च ॥ ५ ॥
किन्नराणां च योषित्सु वानराणां च सर्वशः ।
जनयध्वमपत्यानि हरीन् हरिपराक्रमान् ॥ ६ ॥
ते तथेति प्रतिज्ञाय ब्रह्मणो वचनं सुराः ।
जनयां चक्रिरे पुत्रानात्मतुल्यपराक्रमान् ॥ ७ ॥
देवर्षियक्षगन्धर्वाः सिद्धाश्च सह किन्नरैः ।
वानरांश्च सुतान् शूरान् ससृजुः कामरूपिणः ॥ ८ ॥
ते सृष्टा बहुसाहस्रा दशग्रीवबधेप्सुभिः ।
महामेघौघकर्माणो मेघस्वननिनादिनः ॥ ९ ॥

अप्रमेयबला देवैर्वानराः कामरूपिणः ।
ते गजाचलवर्ष्माणः सिंहसंहननौजसः ॥ १० ॥
ऋक्षवानरगोपुच्छा जज्ञिरे संघचारिणः ।
यस्य देवस्य यद्वीर्यं यद्बलं यः पराक्रमः ॥ ११ ॥
तस्य तस्यैव सदृशः स स पुत्रो व्यजायत ।
गोलाङ्गुलीषु चोत्पन्नाः केचिदद्भुतविक्रमाः ॥ १२ ॥
वानरीष्वपि यक्षीषु किन्नरीषु च वानराः ।
शैलशृङ्गप्रहरणा महापादपयोधिनः ॥ १३ ॥
नखदंष्ट्रायुधाश्चैव कामरूपा बलान्विताः ।
आचालयेयुरचलानुन्मथेयुर्महाद्रुमान् ॥ १४ ॥
क्षोभयेयुश्च सहसा गम्भीरान् सलिलाशयान् ।
दारयेयुः क्षितिं दोर्भ्यामुत्पतेयुर्नभस्तलं ॥ १५ ॥
पातयेयुर्जलधरानुत्प्लुत्याकाशचारिणः ।
गृह्णीयुरपि मातङ्गान् मत्तान् प्रजवितान् वने ॥ १६ ॥
पतङ्गानपि वेगेन पातयेयुर्नभस्तलात् ।
ईदृशानां तथा जज्ञे हरीणां कामरूपिणां ॥ १७ ॥
अनेकानि सहस्राणि यूथपानां महात्मनां ।
शतसाहस्रसंख्येषु वानराणां तरस्विनां ॥ १८ ॥
बभूवुर्यूथपाः सर्वे ते यूथेषु महाबलाः ।
ऋक्षराजं तु तत्रान्ये उपतस्थुर्वनौकसः ॥ १९ ॥

अन्ये नानाविधान् शैलान् काननानि च भेजिरे ।
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च बालिनं ।। २० ।।
भ्रातरावुपतस्थुश्च सर्व एव हरीश्वराः ।
नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ।। २१ ।।

तैर्मेघवृन्दाचलतुल्यकायैर्
महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमिशरीररूपैः
समावृता रामसहायहेतोः ।। २२ ।।

इत्यार्षे रामायणे आदिकाण्डे ऋक्षवानरोत्पत्तिर्नाम
विंशः सर्गः ।।

# आदिकाण्डं

## XXI.

एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः ।
महर्षिरभ्ययाद्द्रष्टुमयोध्यायां नराधिपं ॥ १ ॥
तस्य यज्ञो हि रक्षोभिस्तदा विलुलुपे किल ।
मायावीर्यबलोन्मत्तैर्धर्मकामस्य धीमतः ॥ २ ॥
रक्षार्थं तस्य यज्ञस्य द्रष्टुमैच्छत् स पार्थिवं ।
न हि शक्नोत्यविघ्नेन समाप्तुं स मुनिः क्रतुं ॥ ३ ॥
स राज्ञो दर्शनाकाङ्क्षी दृष्ट्वा द्वाःस्थानुवाच ह ।
राज्ञ आवेदयध्वं मां संप्राप्तं गाधिनः सुतं ॥ ४ ॥
तस्य ते वचनं श्रुत्वा राजवेश्म प्रदुद्रुवुः ।
संभ्रान्तमनसः शीघ्रं विश्वामित्रानुकीर्तनात् ॥ ५ ॥
गत्वा च राजभवनं विश्वामित्रं महामुनिं ।
प्राप्तमावेदयामासुर्नृपाय प्रणताः स्थिताः ॥ ६ ॥
ततो राजा दशरथः सामात्यः सपुरोहितः ।
प्रत्युद्ययौ मुनिं द्रष्टुं ब्रह्माणमिव वासवः ॥ ७ ॥
तं दृष्ट्वा स तदा राजा तपसा द्योतितप्रभं ।
प्राणमत् प्राञ्जलिः स्थित्वा चक्रे चाभिप्रदक्षिणं ॥ ८ ॥
स राज्ञा पूजितस्तेन प्रत्युद्गम्य स्वयं तदा ।
कुशलानामयं प्रीतः पप्रच्छ वसुधाधिपं ॥ ९ ॥

वशिष्ठं च समागम्य प्रहसन् मुनिपुंगवः ।
यथार्हं चार्चयित्वैनं पप्रच्छानामयं ततः ॥ १० ॥
ततो यथार्हमन्योन्यं पूजयित्वा समेत्य च ।
सर्वे ते हृष्टमनसो राज्ञस्तस्य निवेशनं ॥ ११ ॥
विविशुः सहिता राज्ञा निषेदुश्च यथार्हतः ।
उपविष्टाय तस्मै स विश्वामित्राय धीमते ॥ १२ ॥
वशिष्ठसहितो राजा स्वयमेव महामनाः ।
पाद्यमर्घ्यं च गां चापि विधिना प्रत्यवेदयत् ॥ १३ ॥
अर्चितं च ततो राजा विश्वामित्रमभाषत ।
प्राञ्जलिः प्रणतो वाक्यमिदं प्रीतमना इव ॥ १४ ॥
यथामृतस्य संप्राप्तिर्यथा कालेऽभिवर्षणं ।
यथा सदृशदारेषु पुत्रजन्माभिकाङ्क्षितं ॥ १५ ॥
प्रणष्टस्य यथा लाभ इष्टस्यागमनं यथा ।
परमानन्दकं मन्ये तथाद्य तव दर्शनं ॥ १६ ॥
कस्तेऽभिलषितः कामः किं करोमि प्रशाधि मां ।
पात्रभूतोऽसि मे विप्र चिरस्याभ्यागतोऽतिथिः ॥ १७ ॥
त्वं हि राजर्षिकुलजस्तपोभिर्नियमैस्तथा ।
ब्रह्मर्षित्वमनुप्राप्तस्तस्मात् पूज्यतमोऽसि मे ॥ १८ ॥
साक्षादिव ब्रह्मणो मे तवाभ्यागमनं मतं ।
प्रीतोऽस्म्यनुगृहीतश्च तवाभ्यागमनान्मुने ॥ १९ ॥

अद्य मे सफलं जन्म जीवितं च सुजीवितं ।
त्वामिहाभ्यागतं दृष्ट्वा प्रतिपूज्य प्रणम्य च ।। २० ।।
यत् कार्यं येन चार्थेन प्राप्तोऽसि मुनिपुंगव ।
कृतमित्येव तद्विद्धि मान्योऽसि सुभृशं मम ।। २१ ।।
स्वकार्यं ह्नि विमृष्य त्वं वक्तुमर्हसि कौशिक ।
भगवन् नास्त्यदेयं मे त्वामद्य प्रतिविद्यते ।। २२ ।।

इदमतिमधुरं निशम्य वाक्यं
श्रुतिसुखमात्मवता विनीतमुक्तं ।
प्रथितगुणयशा गुणैर्निविष्टो
मुनिवृषभः परमं जगाम हर्षं ।। २३ ।।

इत्यार्षे रामायणे आदिकाण्डे विश्वामित्रागमनं नाम
एकविंशः सर्गः ।।

# रामायणं

## XXII.

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरं ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥
सदृशं राजशार्दूल त्वयैतद्वाक्यमीरितं ।
सौरे वंशेऽभिजातेन वशिष्ठवशवर्तिना ॥ २ ॥
यस्तु मेऽभिमतः कामस्त्वत्तः प्राप्तुमभीप्सितः ।
यदुद्दिश्यागतश्चास्मि कार्यं तच्छ्रूयतामिति ॥ ३ ॥
यज्ञसिद्धिकरं किञ्चिदास्थितोऽस्मि महद्व्रतं ।
न क्रोद्धव्यं मया तत्र कस्यचिद्भुवि भूपते ॥ ४ ॥
व्रते चाप्यसमाप्ते मे यज्ञघ्नौ राक्षसाधमौ ।
वेदीमभ्येत्य तरसा रुधिरेणाभ्यवर्षतां ॥ ५ ॥
अभिभूतोऽसकृत् ताभ्यामहं नियमयन्त्रितः ।
अपक्रम्याश्रमात् तस्माद्द्रष्टुं त्वामभ्युपागतः ॥ ६ ॥
न हि मे क्रोधमुत्स्रष्टुं क्षमं तत्र कथञ्चन ।
ईदृशी यज्ञदीक्षासौ मम तस्मिन् महाक्रतौ ॥ ७ ॥
त्वत्प्रसादादविघ्नेन प्रापयेयं क्रियाफलं ।
त्रातुमर्हसि मामार्तं शरणार्थिनमागतं ॥ ८ ॥
तयोस्त्वं प्रतिषेद्धारं रामं सत्यपराक्रमं ।
दातुमर्हसि मे तत्र रक्षार्थममितौजसं ॥ ९ ॥

शक्तो ह्येष मया गुप्तः सञ्जेन च तेजसा ।
निहन्तुं समरश्लाघी स्रष्टारमपि रक्षसां ॥१०॥
विद्ये चास्मै प्रयच्छामि तेजोबलसमन्विते ।
त्रयाणामपि लोकानां येनाजय्यो भविष्यति ॥११॥
न च तौ राममासाद्य शक्तौ स्थातुं नराशनौ ।
हन्तुं चेमौ न काकुत्स्थादन्य उत्सहते पुमान् ॥२१॥
तौ तु वीर्यबलोन्मत्तौ कालकल्पौ दुरासदौ ।
रामास्त्रबलनिर्दग्धौ शयिष्येते हतौ युधि ॥१३॥
भीर्न चैव त्वया कार्या रामं प्रति कथञ्चन ।
अहं ते प्रतिजानामि पतितौ विद्धि राक्षसौ ॥१४॥
वेद्म्यमोघबलं राममहं सत्यपराक्रमं ।
वशिष्ठश्चापि वेदैनं योऽयं यद्बल एव च ॥२५॥
यदि धर्मं यशोलाभमभिवाञ्छसि पार्थिव ।
ततो रामं प्रयच्छैकं यदिवा श्रद्दधासि मे ॥१६॥
दशरात्रेण मे यज्ञो भविता यत्र राक्षसौ ।
हन्तव्यौ तव पुत्रेण रामेणाद्भुतकर्मणा ॥१७॥
यदि मेऽप्यनुजानन्ति गुरवस्ते नराधिप ।
वशिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय ॥१८॥
नात्येति कालः कालज्ञ यथा यज्ञस्य मेऽनघ ।
तथा त्वं कुरु भद्रं ते शङ्किष्ठा मा च पार्थिव ॥१९॥

इति हृदयविदारणं तदानीं
मुनिवचनं स तदाशु शुश्रुवान् ।
नरपतिरभवत् ततो महात्मा
व्यथितमनाः प्रचचाल चासनात् ॥ २० ॥

इत्यार्षे रामायणे आदिकाण्डे विश्वामित्रवाक्यं नाम
द्वाविंशः सर्गः ॥

## XXIII.

तच्छ्रुत्वा व्यथितो राजा विश्वामित्रवचस्तदा ।
मुहूर्त्तमिव निश्चेष्टो ध्यात्वेदं वाक्यमब्रवीत् ॥ १ ॥
ऊनषोडशवर्षोऽयमकृतास्त्रश्च मे सुतः
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥
इयं त्वक्षौहिणी पूर्णा बलस्य मम दुर्जया ।
अनयाहं वृतस्तत्र योत्स्यामि पिशिताशनैः ॥ ३ ॥
सन्ति शूराश्च मे योधाः कालान्तकयमोपमाः ।
रक्षसां प्रतियोद्धारस्ते मया सह यान्त्वपि ॥ ४ ॥
यावत् प्राणा धरिष्यन्ति युध्यतो मे निशाचरैः ।
अविघ्नं व्रतचर्यायास्तावत् तव भविष्यति ॥ ५ ॥
अहं स्वयं गमिष्यामि न रामो गन्तुमर्हति ।
बालोऽयमकृतास्त्रश्च न च वेत्ति बलाबलं ॥ ६ ॥
न चास्त्रशास्त्रकुशलो न च युद्धविशारदः ।
न च राक्षसयुद्धेषु योग्योऽयं कूटयोधिषु ॥ ७ ॥
रामेणाहं विहीनश्च मुहूर्त्तमपि नोत्सहे ।
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥ ८ ॥
नववर्षसहस्राणि मम जातस्य साम्प्रतं ।
वृद्धेनोत्पादिताः पुत्रा मया चैते कथञ्चन ॥ ९ ॥

प्राणैः प्रियतरा ब्रह्मन् ममैते देवरूपिणः ।
एभिर्विना न जीवेयमिति मे निश्चिता मतिः ॥१०॥
त्यक्त्वा चान्यान् सुतान् रामे प्राणाः सम्प्रति मे स्थिताः ।
गुणाभिरामे लोकस्य सोमवत् प्रियदर्शने ॥११॥
उदारगुणसंपन्नं मनोहृदयनन्दनं ।
प्राणैः प्रियतरं पुत्रं न मे त्वं नेतुमर्हसि ॥१२॥
प्रणिपत्याभियाचे त्वां कृपणः पुत्रलालसः ।
ज्येष्ठं पुत्रं न मे रामं भगवन् नेतुमर्हसि ॥१३॥
अवश्यं यदि नेतव्यो राम एष त्वया मुने ।
चतुरङ्गबलोपेतस्ततो यातु मया सह ॥१४॥
किंवीर्यौ राक्षसौ तौ च पुत्रौ कस्य कुतश्च तौ ।
किंप्रमाणौ च कावेतौ तद्ब्रूहि मुनिपुंगव ॥१५॥
कथं च प्रतिकर्तव्यं तयो रामेण रक्षसोः ।
मामकैर्वा बलैर्ब्रह्मन् मया वा कूटयोधिनोः ॥१६॥
सर्वं मे शंस भगवन् मया तत्र कथं तयोः ।
यज्ञे ते प्रतिकर्तव्यं नामतः कौ च तौ मुने ॥१७॥
श्रूयते हि महावीर्यो रावणो नाम राक्षसः ।
पुत्रो विश्रवसः क्रूरो भ्राता वैश्रवणस्य च ॥१८॥
स ते कच्चिन्नु यज्ञस्य विघ्नकृल्लोकरावणः ।
न शक्तास्तस्य संग्रामे वयं स्थातुं दुरात्मनः ॥१९॥

स मे त्वं बालपुत्रस्य प्रसादं कर्तुमर्हसि ।
अनतिक्रमणीयो हि भवान् मे परमो गुरुः ॥ २० ॥
देवदानवगन्धर्वयक्षरक्षोगणेष्वपि ।
न विद्यते रावणस्य प्रतियोद्धा दुरात्मनः ॥ २१ ॥
स हि वीर्यवतां वीर्यमादत्त इति नः श्रुतं ।
तेन सार्धं न शक्तोऽसौ योद्धुं वीर्यविघातिना ॥ २२ ॥
अथवा लवणो नाम यक्षहा ते मधोः सुतः ।
तथापि न विमोक्ष्यामि पुत्रं सोऽपि हि दुर्जयः ॥ २३ ॥
अथ कालान्तकप्रख्यौ पुत्रौ सुन्दोपसुन्दयोः ।
मारीचश्च सुबाहुश्च विघ्नं ते कुरुतः सह ॥ २४ ॥
तथापि न विमोक्ष्यामि पुत्रं रामं प्रसीद मे ।
तौ हि राक्षसकन्यायां जातौ मायाविनौ किल ॥ २५ ॥
एषामन्यतमं हित्वा प्रतियोत्स्यामि संयुगे ।
अन्यथा त्वनुनेष्यामि भवन्तं सह बान्धवैः ॥ २६ ॥

इत्यार्षे रामायणे आदिकाण्डे दशरथवाक्यं नाम
त्रयोविंशः सर्गः ॥

# रामायणं

## XXIV.

तच्छ्रुत्वा वचनं तस्य स्नेहव्याकुलिताक्षरं ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिं ॥ १ ॥
पूर्वं करिष्य इत्युक्त्वा प्रतिज्ञां हातुमिच्छसि ।
राघवाणामयुक्तोऽयं सत्यधर्मव्यतिक्रमः ॥ २ ॥
यद्येतत् ते क्षमं राजन् गमिष्यामि यथागतं ।
मिथ्याप्रतिज्ञां कृत्वेमां सुखी भव सुतैः सह ॥ ३ ॥
तस्माद्रोषपरीतात् तु विश्वामित्रान्महौजसः ।
चचाल पृथिवी भीता सुरांश्च भयमाविशत् ॥ ४ ॥
कौशिकं कुपितं दृष्ट्वा जगन्मैत्रो महामुनिः ।
वशिष्ठो भगवान् वाक्यं राजानमिदमब्रवीत् ॥ ५ ॥
इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इव स्वयं ।
सत्यवाक् सततं भूत्वा नानृतं वक्तुमर्हसि ॥ ६ ॥
त्रिषु लोकेषु विख्यातः सत्यवागिति च प्रभो ।
नार्हस्यद्य मृषावादी भवितुं पुत्रहेतुना ॥ ७ ॥
कर्तास्मीति प्रतिज्ञाय न करिष्यसि चेन्नृप ।
विश्वामित्रवचः सत्याद्भ्रष्टः पापमवाप्स्यसि ॥ ८ ॥
अनृतं मा वचः कार्षीर्मा धर्म्यान् नीनशः पथः ।
सत्यप्रतिज्ञतां रक्ष रामं राजन् विसर्जय ॥ ९ ॥

कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण प्रधर्षयितुमाहवे ॥ १० ॥
एष विग्रहवान् धर्म एष वेदविदां वरः ।
एष वीर्यवतां श्रेष्ठो विद्याज्ञानतपोनिधिः ॥ ११ ॥
दिव्यान्यस्त्राण्यशेषेण वेदैष कुशिकात्मजः ।
देवाश्च न विदुर्यानि कुतोऽन्ये भुवि मानवाः ॥ १२ ॥
दत्तान्यस्मै कृशाश्वेन दिव्यान्यस्त्राण्यशेषतः ।
महीं पालयता पूर्वं प्रीतेनामिततेजसा ॥ १३ ॥
ते हि पुत्राः कृशाश्वस्य प्रजापतिसुतोपमाः ।
नैकरूपा महात्मानो दीप्तिमन्तो जयान्विताः ॥ १४ ॥
जया च विजया चैव दाक्षायण्यौ महाव्रते ।
ययोरस्त्राण्यशेषाणि जज्ञिरे विद्युतेजसा ॥ १५ ॥
पञ्चाशतं तत्र सुतान् जनयामास वै जया ।
बधाय रिपुसैन्यानामक्षयान् कामरूपिणः ॥ १६ ॥
विजया जनयामास पुत्रान् पञ्चाशतं वरान् ।
अस्त्राणामप्रधृष्याणामजेयानां महौजसां ॥ १७ ॥
तानि सर्वाण्ययं वेद विश्वामित्रो महायशाः ।
सप्रयोगरहस्यानि ससंहाराणि राघव ॥ १८ ॥
तानि दास्यत्यशेषेण रामायैष महामुनिः ।
यैरस्त्रैस्तानि रक्षांसि रामो जेष्यत्यसंशयं ॥ १९ ॥

अनुग्रहार्थं रामस्य प्रजानामपि चात्मनः ।
न रामगमनं राजन् निवारयितुमर्हसि ॥ २० ॥

इत्यार्षे रामायणे आदिकाण्डे वशिष्ठवाक्यं
चतुर्विंशः सर्गः ॥

# आदिकाण्डं

## XXV.

एवमुक्तो वशिष्ठेन राजा दशरथः सुतं ।
संप्रहृष्टमना राममाजुहाव सलक्ष्मणं ॥ १ ॥
आदौ कृतस्वस्त्ययनं मातृभिः कृतमङ्गलं ।
स्वयं चैव वशिष्ठेन कृतस्वस्त्ययनक्रियं ॥ २ ॥
स्नेहान्मूर्धन्युपाघ्राय राजा दशरथः सुतं ।
ददौ कुशिकपुत्राय लक्ष्मणानुचरं तदा ॥ ३ ॥
ततो वायुरवात् पुण्यो नीरजस्कः शुभः शुचिः ।
विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनं ॥ ४ ॥
पपात पुष्पवृष्टिः खात्गीतनादश्च शुश्रुवे ।
शङ्खदुन्दुभिनिर्घोषः प्रयाते रघुनन्दने ॥ ५ ॥
विश्वामित्रो ययावग्रे तं रामः पृष्ठतोऽन्वगात् ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वयात् ॥ ६ ॥
विश्वामित्रगतं रामं दृष्ट्वा देवाः सवासवाः ।
प्रहर्षमतुलं प्राप्ता दशग्रीववधैषिणः ॥ ७ ॥
विश्वामित्रं महात्मानं तावुभौ रामलक्ष्मणौ ।
तदानुजग्मतुर्वीरौ यथेन्द्रं देवमश्विनौ ॥ ८ ॥
बद्धगोधाङ्गुलित्राणौ खड्गतूणधनुर्धरौ ।
तदानुजग्मतुः स्थाणुं कुमाराविव पावकी ॥ ९ ॥

अध्यर्धं योजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥१०॥
वत्स राम जलं तावद्विधिवत् स्प्रष्टुमर्हसि ।
उपदेक्ष्यामि ते श्रयो मा भूत् कालस्य पर्ययः ॥११॥
गृह्णाण द्वे इमे विद्ये बलामतिबलां तथा ।
न ते श्रमो जरा वाभ्यां भविता नाङ्गवैकृतं ॥१२॥
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ।
न च ते सदृशो राम वीर्येणान्यो भविष्यति ॥१३॥
सदेवनरनागेषु लोकेष्विह पुमांस्त्रिषु ।
न सौभाग्ये न दाक्षिण्ये न बुद्धिश्रुतिपौरुषे ॥१४॥
नोत्तरे प्रतिपत्तव्ये त्वत्तुल्यो वा भविष्यति ।
एतद्विद्याद्वयं प्राप्य यशश्चाव्ययमाप्स्यसि ॥१५॥
बलामतिबलां चैव ज्ञानविज्ञानमातरौ ।
क्षुत्पिपासे च ते राम नात्यर्थं पीडयिष्यतः ॥१६॥
जयश्च दुर्गकान्तारप्रदेशेष्वटवीषु च ।
सारतां त्रिषु लोकेषु गमिष्यसि च राघव ॥१७॥
पितामहसुते ह्येते विद्ये चायुर्बलावहे ।
पात्रं त्वमसि काकुत्स्थ विद्ययोर्ग्रहणेऽनयोः ॥१८॥
स्वभावजैर्गुणैर्दिव्यैः कामजैर्बहुलैर्वृतः ।
भूयस्तव गुणोत्कर्षमेते विद्ये करिष्यतः ॥१९॥

ततो रामो जलं स्पृष्ट्वा प्राञ्जलिः प्रणतः स्थितः ।
प्रतिजग्राह ते विद्ये विश्वामित्रात् तपोधनात् ॥ २० ॥
गृहीतविद्योऽनुज्ञातस्ततो रामो महायशाः ।
तत्रोवास निशामेतां सरय्वां सहलक्ष्मणः ॥ २१ ॥

इत्यार्षे रामायणे आदिकाण्डे विद्याप्रदानं नाम
पञ्चविंशः सर्गः ॥

## XXVI.

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।
अभ्यभाषत काकुत्स्थं शयानं पर्णसंस्तरे ॥ १ ॥
कौशल्यामातरुत्तिष्ठ पूर्वा संध्या उपास्यतां ।
पौर्वाह्णिकं विधिं कर्तुं तात कालोऽयमागतः ॥ २ ॥
तस्यर्षेः परमोदारं वचः श्रुत्वा तु राघवौ ।
स्नात्वा कृतोदकौ वीरौ जेपतुर्जाप्यमाह्णिकं ॥ ३ ॥
कृताह्णिकक्रियौ चापि विश्वामित्रं तपोनिधिं ।
अभिवादयितुं तत्र सहितावुपतस्थतुः ॥ ४ ॥
ततः प्रययतुश्चापि दिव्यां त्रिपथगां नदीं ।
गङ्गां देवनदीं द्रष्टुं सरय्वा अविदूरतः ॥ ५ ॥
तस्यास्तीराश्रमपदमृषीणां पुण्यकर्मणां ।
रम्यं ददृशतुः पुण्यं तप्यतामुत्तमं तपः ॥ ६ ॥
दृष्ट्वा तदाश्रमपदं जातकौतूहलौ मुनिं ।
पप्रच्छतुस्तदा तत्र तावुभौ रामलक्ष्मणौ ॥ ७ ॥
कस्यायमाश्रमो ब्रह्मन् कश्चास्मिन् कुशलो मुनिः ।
भगवन् श्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८ ॥
तयोस्तद्वचनं श्रुत्वा प्रहसन् मुनिरब्रवीत् ।
उभाभ्यां श्रूयतां राम यस्यायं पूर्वमाश्रमः ॥ ९ ॥

कन्दर्पो मूर्तिमानासीत् काम इत्यभिविश्रुतः ।
स्थाणुं स इह तप्यन्तं पुरा किल महत् तपः ॥१०॥
आवेष्टुमभ्ययात् तूर्णं कृतोद्वाहमुमापतिं ।
बुद्ध्वा स तत्र रुद्रेण शप्तः किल महात्मना ॥११॥
अथ शप्तस्य रुद्रेण तस्यैव रघुनन्दन ।
रोषशापाग्निनिर्दग्धं तच्छरीरं व्यशीर्यत ॥१२॥
तस्याङ्गान्यपतन् राम सद्यः सर्वाण्यशेषतः ।
अशरीरः कृतः काम एवं कोपान्महात्मना ॥१३॥
अनङ्ग इति विख्यातस्ततःप्रभृति राघव ।
अनङ्ग इति देशोऽयं ख्यातः कामाङ्गनाशनात् ॥१४॥
तस्यायमाश्रमः पुण्यः कामस्य रघुनन्दन ।
तस्यायतनमत्रेदं तस्येमे परमर्षयः ॥१५॥
तपोदमरताः सर्वे पुराणा ब्रह्मवादिनः ।
निवसन्त्यत्र निरतास्तपोनिर्धूतकल्मषाः ॥१६॥
इहाद्य रजनीमेकां वसामः शुभदर्शन ।
पुण्ययोः सरितोर्मध्ये तरिष्यामः परेऽहनि ॥१७॥
अभिगच्छाम च स्नात्वा शुचयः पुण्यमाश्रमं ।
इह कामाश्रमे राम सुखं वत्स्यामहे निशां ॥१८॥
तेषां संवदतामेवं तपोदीर्घेण चक्षुषा ।
विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥१९॥

तेऽर्घ्यं पाद्यं च विधिवत् प्रयुज्य कुशिकात्मजे ।
रामलक्ष्मणयोरेवमकुर्वन्नतिथिक्रियां ॥ २० ॥
सत्कारं परमं प्राप्य कथाभिरभिरम्य च ।
न्यवसंस्ते महात्मानः कामाश्रमपदे सुखं ॥ २१ ॥

इत्यार्षे रामायणे आदिकाण्डे कामाश्रमनिवासो नाम
षड्विंशः सर्गः ॥

## XXVII.

ततः प्रभाते विमले कृत्वाह्निकमरिंदमौ ।
विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपेयतुः ॥ १ ॥
ते तु सर्वे महात्मानो मुनयः सूर्यवर्चसः ।
उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥
आरोहतु भवान् नावं राजपुत्रपुरस्कृतः ।
अरिष्टं गच्छ पन्थानं मा ते कालात्ययो ह्यभूत् ॥ ३ ॥
विश्वामित्रस्तथेत्युक्त्वा तानृषीन् प्रतिपूज्य च ।
ततार सरितं पुण्यां सरयूं विमलोदकां ॥ ४ ॥
तत्र रामः सरिन्मध्ये पप्रच्छ मुनिपुंगवं ।
वारिणो भिद्यत इव किंन्वयं बलवान् स्वनः ॥ ५ ॥
इति रामवचः श्रुत्वा कौतूहलसमन्वितं ।
कथयामास भगवांस्तस्य शब्दस्य विस्तरं ॥ ६ ॥
कैलासशिखरे राम मनसा निर्मितं सरः ।
ब्रह्मणा प्रागिदं यस्मात् तदभून्मानसं सरः ॥ ७ ॥
सरसो मानसात् तस्मादयोध्यामनुशोभना ।
नदी प्रसूता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ८ ॥
जाह्नवीमभिवर्तिन्यास्तस्याः शब्दोऽयमीदृशः ।
वारिसंघर्षजो राम प्रणामं प्रयतः कुरु ॥ ९ ॥

चक्रतुस्तौ नमस्ताभ्यां नदीभ्यामथ राघवौ ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ १० ॥
अथानुपदमेवान्यद्वनं घोरमरिंदमौ ।
दृष्ट्वा पप्रच्छतुर्भूयो मुनिं दशरथात्मजौ ॥ ११ ॥
कस्येदं मेघसंकाशं वनं घोरं प्रकाशते ।
दुर्गं पक्षिगणाकीर्णं किल्लिकागणनादितं ॥ १२ ॥
नानामृगगणैर्घोरैर्वाश्यमानैर्विनादितं ।
सिंहव्याघ्रवराहर्क्षखड्गिकुञ्जरसेवितं ॥ १३ ॥
धवाश्वकर्णकुटजपाटलाविल्वतिन्दुकैः ।
द्रुमैः कण्टकिभिश्चैव कीर्णं किमिदमुच्यते ॥ १४ ॥
तावुवाच तयोर्वाक्यं श्रुत्वेदं भगवानृषिः ।
श्रूयतामित्युपामन्त्र्य भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥
अयं जनपदः श्रीमान् पूर्वमासीन्महर्द्धिमान् ।
मलजाश्च करूषाश्च देवनिर्माणनिर्मिताः ॥ १६ ॥
सखायं नमुचिं हत्वा मलेन समभिप्लुतः ।
क्रोधाच्चैव सहस्राक्षो मित्रध्रुग्भगवान किल ॥ १७ ॥
तमिह स्नापयामासुर्देवाः सर्षिगणाः पुरा ।
कलसैः पुण्यसलिलैः पूर्णैर्मलविशोधनैः ॥ १८ ॥
सोऽस्मिन् देशे मलं त्यक्त्वा देवः कालुष्यमेव च ।
मित्राभिद्रोहसंयुक्तं परं हर्षमवाप्तवान् ॥ १९ ॥

निर्मलो निष्कलूषश्च शुचिरिन्द्रो यदा बभूत् ।
तदा देशस्य सुप्रीतो ददौ वरमरिंदमः ॥ २० ॥
इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
मलदाश्च करूषाश्चेत्यङ्गजेन ममाङ्कितौ ॥ २१ ॥
एवमस्त्विति तं देवाः पाकशासनमब्रुवन् ।
देशस्य नामनिर्वृत्तिं श्रुत्वा तां वासवेरितां ॥ २२ ॥
एवमेतौ जनपदौ पूर्वमेव विशब्दितौ ।
मलदाश्च करूषाश्च मुदिता ऋद्धिसंपदा ॥ २३ ॥
अथ कालस्य महतो यक्षिणी कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती महाबला ॥ २४ ॥
ताडका नाम सुन्दस्य भार्या दैत्यपतेरभूत् ।
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २५ ॥
सेयं जनपदं राम समुत्साद्य सुदारुणा ।
अद्यापि साधिवसति ताडका दुष्टयक्षिणी ॥ २६ ॥
एतं पन्थानमाक्रम्य सार्धयोजनादितः ।
अत एव च गन्तव्यं ताडकाभवनं प्रति ॥ २७ ॥
स्वबाहुबलमाश्रित्य जहि तां दुष्टचारिणीं ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ २८ ॥
न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशं ।
यक्षिण्या घोररूपिण्या उत्सादितमनार्यया ॥ २९ ॥

इति ते सत्यमाख्यातं यथेदं दारुणं वनं ।
यक्षिण्योत्सादितं पूर्वमद्याप्युत्साद्यते तया ॥३०॥

इत्यार्षे रामायणे आदिकाण्डे ताडकावनप्रवेशो नाम
सप्तविंशः सर्गः ॥

## XXVIII.

इति तस्याप्रमेयस्य मुनेर्वचनमद्भुतं ।
श्रुत्वा रामस्ततो भूयः परिपप्रच्छ संशयं ॥ १ ॥
अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुंगव ।
कथं नागसहस्रस्य धारयत्यबला बलं ॥ २ ॥
विश्वामित्रस्ततो रामं श्रुत्वेति पुनरब्रवीत् ।
शृणु राम यथा चैषा धारयत्यबला बलं ॥ ३ ॥
पूर्वमासीन्महायक्षः सुकेतुरिति विश्रुतः ।
अनपत्यः प्रजाकामः स तेपे सुमहत् तपः ॥ ४ ॥
तस्मै साक्षात् स्वयं ब्रह्मा तपसा परितोषितः ।
कन्यारत्नं ददौ राम ताडकां नाम नामतः ॥ ५ ॥
बलं नागसहस्रस्य ददौ चास्याः पितामहः ।
काङ्क्षतोऽप्यस्य पुत्रं हि न यक्षाय ददौ प्रभुः ॥ ६ ॥
वर्धमानां च तां दृष्ट्वा रूपयौवनशालिनीं ।
धुन्धुपुत्राय सुन्दाय ददौ भार्यामनिन्दितां ॥ ७ ॥
कस्यचित् त्वथ कालस्य यक्षी पुत्रं व्यजायत ।
मारीचं नाम विख्यातं शापाद्राक्षसतां गतं ॥ ८ ॥
सुन्दे तु निहते तस्मिन्नगस्त्यमृषिसत्तमं ।
ताडका सह पुत्रेण प्रधर्षयितुमुद्यता ॥ ९ ॥

राक्षसस्त्वं भवेत्येवं मारीचं व्याजहार सः ।
अगस्त्यः परमक्रुद्धस्ताडकां चेदमब्रवीत् ॥१०॥
पुरुषादी घोररूपा यक्षि त्वं विकृतानना ।
इदं रूपं परित्यज्य विकृता त्वं भविष्यसि ॥११॥
सैषा शापसमाविष्टा ताडका दुष्टयक्षिणी ।
देशमुत्सादयत्येनमगस्त्याध्युषितं पुरा ॥१२॥
एवं तां राम दुर्वृत्तां यक्षीं परमदारुणां ।
गोब्राह्मणहितार्थाय जहि घोरपराक्रमां ॥१३॥
न हि वीर्यमदोन्मत्तामेतां परमदारुणां ।
निहन्ति त्रिषु लोकेषु त्वामृते रघुनन्दन ॥१४॥
न च ते स्त्रीबधकृते घृणा कार्या कथञ्चन ।
प्रजानां हि हितं नित्यं कर्तव्यं राजसूनुभिः ॥१५॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
पावनं वा सदोषं वा कार्तव्यं नात्र संशयः ॥१६॥
राजवंशेऽभिजातानामेष धर्मः सनातनः ।
अधर्मं जहि काकुत्स्थ कुरु धर्मं प्रजाहितं ॥१७॥
श्रूयते हि पुराप्येवं विरोचनसुता किल ।
राक्षसी दीर्घजिह्वेति विख्याता कामरूपिणी ॥१८॥
विकृतं सुमहद्वक्त्रं कृत्वा कालानलोपमं ।
ग्रसन्ती पृथिवीं कृत्स्नां शक्रेण विनिपातिता ॥१९॥

विष्णुना च पुरा राम शक्रतुल्यपराक्रमा ।
अपीन्द्रलोकमिच्छन्ती काव्यमाता निषूदिता ॥ २० ॥
एवमन्यैरपि पुरा राजभिर्धर्मचारिभिः ।
अधर्मनिरता नार्यो हताः पुरुषसत्तम ॥ २१ ॥

इत्यार्षे रामायणे आदिकाण्डे ताडकोत्पत्तिर्नाम
अष्टाविंशः सर्गः ॥

# रामायणं

## XXIX.

मुनेर्वचनमक्लीवं श्रुत्वा नृपवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच शुभव्रतं ॥ १ ॥
अहं पित्रा समादिष्टो मात्रा चैव महामुने ।
विश्वामित्रस्य वचनं त्वया कार्यमिति प्रभो ॥ २ ॥
सोऽहं पितृनियोगेन तव चानुपमद्युते ।
करिष्ये दुष्टचारिण्यास्ताडकाया बधं मुने ॥ ३ ॥
गोब्राह्मणहितार्थाय देशस्य च सुखावहं ।
तदेतदप्रतीपेन कर्तव्यं वचनं मुने ॥ ४ ॥
एवमुक्त्वा धनुः सज्यं कृत्वोद्यम्य च राघवः ।
ज्याशब्दमकरोत् तीव्रं दिशः शब्देन पूरयन् ॥ ५ ॥
तेन शब्देन वित्रस्ता मृगास्तद्वनचारिणः
ताडका चापि संभ्रान्ता ज्यास्वनप्रतिबोधिता ॥ ६ ॥
नर्दमाना भृशं क्रुद्धा विकृता विकृतानना ।
श्रुत्वा चाभ्यद्रवद्वेगाद्यतः शब्दोऽभिनिःसृतः ॥ ७ ॥
तां दृष्ट्वा घोरवपुषं विरूपां विकृताननां ।
अतिप्रमाणामायान्तीं रामो लक्ष्मणमब्रवीत् ॥ ८ ॥
पश्य लक्ष्मण राक्षस्या विकृतं दारुणं मुखं ।
अतिप्रमाणं क्रुद्धाया रूपं चातिभयावहं ॥ ९ ॥

एतां पश्य महाबाहो मद्बाणेन हृदि क्षतां ।
निहतां पतितां भूमौ रुधिरेण परिप्लुतां ॥१०॥
इयं हि राक्षसी घोरा महादुष्कृतकारिणी ।
मच्छराग्निविनिर्दग्धा धुतपापा भविष्यति ॥११॥
एवं तस्य ब्रुवाणस्य ताडका क्रोधमूर्छिता
उद्यम्य बाहू गर्जन्ती वेगेनाभ्यासमाययौ ॥१२॥
तामापतन्तीं वेगेन विमुक्तामशनीमिव ।
ताडकां विकृताकारां जिघांसन्तीं सुदारुणां ॥१३॥
महाभ्रचयसंकाशां समुच्छ्रितभुजद्वयां ।
विव्याधोरसि बाणेन चन्द्रार्धाकारवर्चसा ॥१४॥
सा तेन वज्ररूपेण बाणेन भृशविक्षता ।
ववाम रुधिरं भूरि पपात च ममार च ॥१५॥
तां हतां पतितां भूमौ दृष्ट्वा सुरपतिस्तदा ।
साधु साध्विति काकुत्स्थं सुराश्च समपूजयन् ॥१६॥
उवाच च भृशं प्रीतः सहस्राक्षोऽम्बरे स्थितः ।
सह सर्वामरगणैर्विश्वामित्रमिदं वचः ॥१७॥
मुने कौशिक पश्यास्मान् देवान् सेन्द्रानुपस्थितान् ।
तोषितान् कर्मणानेन रामस्यामिततेजसः ॥१८॥
अस्मन्नियोगादद्यं ते स्नेहं दर्शय राघवे ।
तपोयोगबलेनैनमाप्याययितुमर्हसि ॥१९॥

प्रजापतिसुताश्चैव कृशाश्वाद्राजसत्तमात् ।
यान्यवाप्तानि तेऽस्त्राणि तान्यस्मै प्रतिपादय ॥ २० ॥
पात्रभूतो हि ते शिष्यो रामो दशरथात्मजः ।
कर्तव्यं च महत् कार्यमस्माकं राजसूनुना ॥ २१ ॥
एवमुक्त्वा सुरगणा विश्वामित्रं पुनर्ययुः ।
यथागतेनैव पथा ततः संध्याभ्यवर्तत ॥ २२ ॥
विश्वामित्रोऽपि भगवांस्ताडकाबधतोषितः ।
मूर्ध्नि राममुपाघ्राय वचनं चेदमब्रवीत् ॥ २३ ॥
इहाद्य रजनीं राम वसामः शुभदर्शन ।
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ २४ ॥

इत्यार्षे रामायणे आदिकाण्डे ताडकाबधो नाम
एकोनत्रिंशः सर्गः ॥

# आदिकाण्डं

## XXX.

अथ तां रजनीं व्युष्टां विश्वामित्रो महामुनिः ।
प्रहसन् राममाभाष्य मधुरं वाक्यमब्रवीत् ॥ १ ॥
तुष्टोऽस्मि राम भद्रं ते कर्मणा त्वत्कृतेन वै ।
प्रीतिदायं च दास्यामि सर्वाण्यस्त्राण्यशेषतः ॥ २ ॥
यान्यहं वेद्मि काकुत्स्थ पात्रं ह्येषां मतोऽसि मे ।
ब्रह्मास्त्रं प्रथमं राम दिव्यमेतद्ददामि ते ॥ ३ ॥
त्रयाणामपि लोकानां पिण्डितानां भयावहं ।
तथैव दण्डमस्त्रं ते प्रजासंहारकारकं ॥ ४ ॥
ददामि राम शत्रूणां येनाधृष्यो भविष्यसि ।
धर्मास्त्रं च महाबाहो कालकल्पं ददामि ते ॥ ५ ॥
कालास्त्रमपि चासह्यं ददामि दयितं विभो ।
विष्णुचक्रं च ते दिव्यमिन्द्रचक्रं च दारुणं ॥ ६ ॥
वज्रमस्त्रं च दुर्धर्षं शैवं शूलवरं तथा ।
अस्त्रं ब्रह्मशिरश्चोग्रमैशिकं च ददामि ते ॥ ७ ॥
शङ्करास्त्रं च दीप्तास्यं गृहाणेदं मयोद्यतं ।
गदाह्वयं चाप्रतिमं गृहाणारिभयावहं ॥ ८ ॥
कौमोदकीं चाप्रतिमां तथेमां लोहितामुखीं ।
धर्मपाशं तथैवास्त्रं कालपाशं च दुर्जयं ॥ ९ ॥

वारुणं चापि ते पाशं ददामि परमाद्भुतं ।
शुष्कार्द्रे चाशनी राम गृह्णाणेमे मयोद्यते ॥ १० ॥
पैनाकमपि चैवास्त्रमस्त्रं नारायणं तथा ।
आग्नेयमपि चासक्तं वायव्यं च ददामि ते ॥ ११ ॥
प्रमर्दनं प्रमथनं तथैवारिविदारणं ।
अस्त्रं हयशिरश्चैव कूटास्त्रं चापराजितं ॥ १२ ॥
शक्ती च द्वे गृह्णाणेमे अमोघां विजयां तथा ।
तथैव कालमुषलं कङ्कालमथ किङ्किणीं ॥ १३ ॥
प्रस्वापनं प्रशमनं स्तम्भनं च ददामि ते ।
वर्षणं शोषणं चैव तथैवारिनिकृन्तनं ॥ १४ ॥
मदनोन्मादने चैव कन्दर्पदयिते विभो ।
गान्धर्वास्त्रं तथैवेदं मोहनं च ददामि ते ॥ १५ ॥
तेजोद्युतिहरं सौरं शत्रुपक्षप्रतापनं ।
रक्तामिषादं पैशाचं कौवेरं च ददामि ते ॥ १६ ॥
राक्षसं चापि शत्रूणां श्रीधृतिप्राणनाशनं ।
मूर्छनं ताडनं चास्त्रं कम्पनं चारिकर्षणं ॥ १७ ॥
संवर्तमपि चावर्तं मौषलं च ददामि ते ।
सत्यं चैवानृतं चास्त्रं महामायास्त्रमेव च ॥ १८ ॥
अमोघं तैजसं चैव परतेजोऽपकर्षणं ।
सोमास्त्रं शिशिरं नाम त्वाष्ट्रं चारिव्यथाकरं ॥ १९ ॥

मानवं चास्त्रमजितं दैत्यं दानवमेव च ।
एवमादीनि चास्त्राणि ददामि दयितोऽसि मे ॥ २० ॥
गृह्णाणैतानि मत्तस्त्वमस्त्राणि च नृपात्मज ।
अथासौ प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ॥ २१ ॥
ददौ रामाय सुप्रीतो ह्यस्त्रग्राममनुत्तमं ।
जपतोऽथ मुनेस्तस्य मन्त्रग्राममशेषतः ॥ २२ ॥
उपतस्थुर्महास्त्राणि मूर्तिमन्ति नृपात्मजं ।
ऊचुश्चैनं ततोऽभ्येत्य तान्यस्त्राणि समन्ततः ॥ २३ ॥
प्राञ्जलीनि महाबाहो शाध्यस्मानिति राघवं ।
तान्यवेद्य ततो रामः समालभ्य च पाणिना ॥ २४ ॥
मां भजध्वं स्मृतानीति सर्वाण्येवाभ्यभाषत ।
तान्यवाप्य ततो रामो विश्वामित्रं महामुनिं ।
प्रणिपत्य यथान्यायं गमनाय मनो दधे ॥ २५ ॥

इत्यार्षे रामायणे आदिकाण्डे अस्त्रग्रामप्रदानं नाम
त्रिंशः सर्गः ॥

# रामायणं

## XXXI.

प्रतिगृह्य ततोऽस्त्राणि दिव्यानि प्रीतमानसः ।
गच्छन्नेव ततो रामो विश्वामित्रमुवाच ह ॥ १ ॥
गृहीतास्त्रोऽस्मि भगवन्नजेयस्त्रिदशैरपि ।
अस्त्राणां तु ममैतेषां संहारं वक्तुमर्हसि ॥ २ ॥
इत्युक्तवति रामेऽथ विश्वामित्रो महामुनिः ।
आचख्यौ परमास्त्राणां सरहस्यनिवर्तनं ॥ ३ ॥
उक्ता संहारमस्त्राणां रामायामिततेजसे ।
ददौ मन्त्रं जृम्भकानां वशीकरणमुत्तमं ॥ ४ ॥
सत्यवाक् सत्यकीर्तिश्च धृष्टो रभस एव च ।
प्रणिपातरसो नाम अवाङ्मुखपराङ्मुखौ ॥ ५ ॥
वृषाख्यो वृषकर्मा च रेणुकः पुरुषादकः ।
दशाक्षो दशवक्त्रश्च शतशीर्षः शतोदरः ॥ ६ ॥
पद्मनाभो महानाभः सुनाभो दुन्दुभिस्वनः ।
ज्योतिर्भानुः क्रथः कुम्भो मकरः क्रकरोऽङ्गदी ॥ ७
युगंधरस्तथानिद्रो भेत्ता प्रमथनः स्थिरः ।
धरो धन्यः कुम्भधरो रतिर्भूरतिरेव च ॥ ८ ॥
कामरूपी कामगमः कामहा काममर्दनः ।
जृम्भकः स्वर्णलाभश्च स्यन्दनो धावनस्तथा ॥ ९

कृशाश्वतनया ह्येते जृम्भकाः कामरूपिणः ।
भास्वरा रिपुसैन्यानां तेजोद्युतिहरास्तथा ॥ १० ॥
विनायका विघ्नकराः प्रयोक्तुर्विजयावहाः ।
एतानपि गृहाण त्वं सप्रयोगनिवर्तनान् ॥ ११ ॥
इत्युक्तो बाढमित्युक्त्वा विश्वामित्रात् तपोधनात् ।
जग्राह तानपि तथा स्तम्भकान् रिपुजृम्भकान् ॥ १२ ॥
दिव्यमूर्तिधरास्ते हि दिव्याभरणभूषिताः ।
ऊचुः प्राञ्जलयो रामं तदा मधुरभाषिणः ॥ १३ ॥
इमे स्म वशगा राम शाधि नस्त्वमिह स्थितान् ।
गम्यतां स्वागतं वोऽस्तु कृत्यकाल उपैष्यथ ॥ १४ ॥
स्मृता मामुपतिष्ठध्वमिति रामोऽभ्युवाच तान् ।
इत्युक्त्वा राममामन्त्र्य कृत्वा चापि प्रदक्षिणं ॥ १५ ॥
एवमस्त्विति चैवोक्त्वा प्रतिजग्मुर्यथागतं ।
तान् विसृज्य ततो रामो विश्वामित्रं महामुनिं ॥ १६ ॥
गच्छन्नेव पुनर्वाक्यं मधुराक्षरमब्रवीत् ।
किमेतन्मेघसंकाशं पर्वतस्याविदूरतः ॥ १७ ॥
वनमाभाति सुमहत् कस्यैतदमरद्युते ।
आभाति रमणीयं हि वनमेतन्मनोहरं ॥ १८ ॥
विनादितं वल्गुवाग्भिर्नानामृगगणान्वितं ।
निःसृताः स्म मुनिश्रेष्ठ कान्ताराल्लोमहर्षणात् ॥ १९ ॥

अनेनैवावगच्छामि देशोऽयं सुसुखोदयः ।
सुव्यक्तं चापि भवतः सिद्धाश्रमपदं वयं ।
संप्राप्ता यत्र तौ पापौ यज्ञविघ्नकरौ तव ॥ २० ॥

इत्यार्षे रामायणे आदिकाण्डे जृम्भकप्रदानं नाम
एकत्रिंशः सर्गः ॥

# आदिकाण्डं

## XXXII.

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः ।
विश्वामित्रो महातेजा आख्यातुमुपचक्रमे ॥ १ ॥
एष पूर्वाश्रमो राम वामनस्य महात्मनः ।
सिद्धाश्रम इति ख्यातः सिद्धो यत्र महायशाः ॥ २ ॥
विष्णुर्वामनरूपेण तप्यमानो महत् तपः ।
त्रैलोक्यराज्ये ऽपहृते बलिनेन्द्रस्य राघव ॥ ३ ॥
अभिभूय हि देवेन्द्रं पुरा वैरोचनिर्बलिः ।
त्रैलोक्यराज्यं बुभुजे बलोत्सेकमदान्वितः ॥ ४ ॥
ततो बलौ तदा यज्ञं यजमाने भयार्दिताः ।
इन्द्रादयः सुरगणा विष्णुमूचुरिहाश्रमे ॥ ५ ॥
बलिर्वैरोचनिर्विष्णो यजते ऽसौ महाबलः ।
कामदः सर्वभूतानां महर्द्धिरसुराधिपः ॥ ६ ॥
तं त्वं वामनरूपेण गत्वा भिक्षितुमर्हसि ।
विक्रमांस्त्रीन् महाबाहो दाता हि नियतं स ते ॥ ७ ॥
भिक्षितो विक्रमानेतांस्त्रीन् वीर्यबलदर्पितः ।
परिभूय जगन्नाथं तुभ्यं वामनरूपिणे ॥ ८ ॥
ये ह्येनमभियाचन्ते लिप्समानाः स्वमीप्सितं ।
तान् कामैरीप्सितैः सर्वान् योजयत्यसुरेश्वरः ॥ ९ ॥

स त्वं त्रैलोक्यराज्यं नो हृतं भूयो जगत्पते ।
दातुमर्हसि निर्जित्य विक्रमैर्भूरिभिस्त्रिभिः ॥ १० ॥
अयं सिद्धाश्रमो नाम सिद्धकर्मा भविष्यति ।
तस्मिन् कर्मणि संसिद्धे तव सत्यपराक्रम ॥ ११ ॥
एवमुक्तः सुरैर्विष्णुर्वामनं रूपमास्थितः ।
वैरोचनिमुपागम्य त्रीनयाचत विक्रमान् ॥ १२ ॥
लब्ध्वा च त्रीन् क्रमान् विष्णुः कृत्वा रूपमथाद्भुतं ।
त्रिभिः क्रमैस्तदा लोकानाजहार त्रिविक्रमः ॥ १३ ॥
एकेन हि पदा कृत्स्नां पृथिवीं सोऽभ्यतिष्ठत ।
द्वितीयेनाव्ययं व्योम द्यां तृतीयेन राघव ॥ १४ ॥
तं चासुरं बलिं कृत्वा पातालतलवासिनं ।
त्रैलोक्यराज्यमिन्द्राय ददावुद्धृत्य कण्टकं ॥ १५ ॥
तेनैव पूर्वाध्युषित आश्रमः पुण्यकर्मणा ।
मयापि भक्त्या तस्यैव वामनस्य निषेव्यते ॥ १६ ॥
अत्र तौ राक्षसौ वीर यज्ञविघ्नकरौ मम ।
हन्तव्यौ स्वेन वीर्येण त्वया नरवरात्मज ॥ १७ ॥
एतदेवाभिगच्छामः सिद्धाश्रमपदं वयं ।
स्वमाश्रमपदं राम तवाप्येतद्यथा मम ॥ १८ ॥
तान् दृष्ट्वाभ्यागतान् दूरात् सिद्धाश्रमनिवासिनः ।
प्रत्युद्गम्य महात्मानं विश्वामित्रमपूजयन् ॥ १९ ॥

प्रविष्टाय ददुश्चास्मै पाद्यार्घ्यासनसत्क्रियां ।
रामलक्ष्मणयोश्चापि सत्क्रियां प्रददुर्द्विजाः ॥ २० ॥
मुहूर्तमिव विश्रान्तौ ततस्तौ रामलक्ष्मणौ ।
तमूचतुर्मुनिवरं विश्वामित्रं कृताञ्जली ॥ २१ ॥
अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुंगव ।
सिद्धाश्रमोऽयं सिद्धोऽस्तु संसिद्धे तव कर्मणि ॥ २२ ॥
तयोरितद्वचः श्रुत्वा विश्वामित्रो महामुनिः ।
आदिदेश तथेत्युक्त्वा दीक्षां तदहरेव तु ॥ २३ ॥
रामोऽपि तां तत्र निशामुषित्वा सहलक्ष्मणः ।
प्रभातकाले चोत्थाय विश्वामित्रमवन्दत ॥ २४ ॥

इत्यार्षे रामायणे आदिकाण्डे सिद्धाश्रमनिवासो नाम
द्वात्रिंशः सर्गः ॥

# रामायणं

## XXXIII.

अथार्थकालदेशज्ञो रामः सत्यपराक्रमः ।
कालयुक्तमिदं वाक्यं विश्वामित्रमुवाच ह ॥ १ ॥
भगवन् श्रोतुमिच्छामि कस्मिन् काले निशाचरौ ।
मया तौ प्रतिषेद्धव्यौ यज्ञविघ्नकरौ तव ॥ २ ॥
रामस्य तद्वचः श्रुत्वा विश्वामित्रादयस्तथा ।
सर्वे ते मुनयः प्रीताः प्रशशंसुरथाब्रुवन् ॥ ३ ॥
अद्यप्रभृति राम त्वं षड्रात्रं रक्ष तत्परः ।
दीक्षां गतो ह्येष मुनिर्मौनं संकल्पयिष्यति ॥ ४ ॥
तेषामेतद्वचः श्रुत्वा मुनीनां भावितात्मनां ।
उद्यम्य कार्मुकं तस्थौ रामस्तत्र सलक्ष्मणः ॥ ५ ॥
अनिद्र एव षड्रात्रं स संरक्षन् मुनेः क्रतुं ।
राक्षसागमनाकाङ्क्षी निश्चलः स्थाणुवत् स्थितः ॥ ६
कालेऽथाभ्यागते तस्मिन् षष्ठेऽहनि महात्मनः ।
स्थापयां चक्रिरे वेदीं मुनयः संशितव्रताः ॥ ७ ॥
मन्त्राज्यवांश्च विधिवत् स यज्ञः समवर्तत ।
प्रजज्वाल च सा वेदी सोपाध्यायसमाहिता ॥ ८ ॥
अथाकाशे समभवत् सहसैव महास्वनः ।
नीलाम्बुदस्य गगणे प्रावृषीवाभिगर्जतः ॥ ९ ॥

तथा मायां प्रकुर्वाणौ राक्षसावभ्यधावतां ।
मारीचश्च सुबाहुश्च तयोश्चानुचरास्तथा ॥ १० ॥
स तानापततो दृष्ट्वा रुधिरौघप्रवर्षिणः ।
उवाच लक्ष्मणं वाक्यं रामो राजीवलोचनः ॥ ११ ॥
पश्य लक्ष्मण मारीचं महाशनिसमस्वनं ।
सपदानुगमायान्तं सुबाहुं च निशाचरं ॥ १२ ॥
एतावद्य मया पश्य नीलाञ्जनचयोपमौ ।
अस्मिन् क्षणे समाधूतावनिलेनाम्बुदाविव ॥ १३ ॥
मानवास्त्रं ततो रामः प्रगृह्यास्त्रविशारदः ।
मारीचोरसि चिक्षेप नातिकोपसमन्वितः ॥ १४ ॥
स तेन शरवेगेन नीतः सागरमूर्धनि ।
पपाताचलसंकाशो भीवेपथुसमन्वितः ॥ १५ ॥
विचेतनं घूर्णमानं मानवास्त्रबलेरितं ।
मारिचं पतितं दृष्ट्वा रामो लक्ष्मणमब्रवीत् ॥ १६ ॥
पश्य लक्ष्मण मारीचं मानवेन समाहृतं ।
मोहयित्वानयद्दूरं न च प्राणैर्व्ययोजयत् ॥ १७ ॥
इमांस्त्वन्यान् हनिष्यामि सुबाहुप्रभृतीन् रुषा ।
यज्ञघ्नान् राक्षसान् घोरान् रुधिरामिषभोजनान् ॥ १८ ॥
प्रगृह्यास्त्रमथो दिव्यमाग्नेयं रघुनन्दनः ।
सुबाहूरसि चिक्षेप स विद्धो न्यपतद्भुवि ॥ १९ ॥

अन्यान्यपि च वायव्यमस्त्रमादाय राघवः ।
निजघान स रक्षांसि मुनीनां वर्धयन् मुदं ॥ २० ॥
एवं हत्वा स रक्षांसि तत्र रामो महायशाः ।
समेत्य मुनिभिः सर्वैर्विश्वामित्रादिभिस्तदा ॥ २१ ॥
पूजितोऽभिष्टुतश्चैव जयेन च स भाजितः ।
विस्मिताश्चाभवन् सर्वे मुनयो रामकर्मणा ॥ २२ ॥
तस्मिन् यज्ञे समाप्तेऽथ विश्वामित्रो महायशाः ।
दृष्ट्वाश्रमं कृतक्षेमं काकुत्स्थमिदमब्रवीत् ॥ २३ ॥
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ।
सिद्धाश्रमपदं चेदं भूयः सिद्धतरं कृतं ॥ २४ ॥

इत्यार्षे रामायणे आदिकाण्डे विश्वामित्रयज्ञो नाम
त्रयस्त्रिंशः सर्गः ॥

# आदिकाण्डं

## XXXIV.

अथ तौ रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।
ऊषतुर्मुदितौ वीरौ मुनिभिः प्रतिपूजितौ ॥ १ ॥
प्रभातायां च शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।
विश्वामित्रमृषींश्चान्यान् राघवावभ्यवन्दतां ॥ २ ॥
अभिवाद्य मुनीन् सर्वांस्तांश्च तावमरद्युती ।
ऊचतुर्मधुरोदारभाषिणौ रघुनन्दनौ ॥ ३ ॥
इमौ द्वौ मुनिशार्दूल किङ्करौ समुपस्थितौ ।
आज्ञापय यथेष्टं नौ पुनः किं करवाव हे ॥ ४ ॥
एवमुक्तास्ततस्ताभ्यामृषयस्ते तपोधनाः ।
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥
मैथिलस्य रघुश्रेष्ठ जनकस्य भविष्यति ।
यज्ञः परमधर्मिष्ठो यास्यामस्तत्र वै वयं ॥ ६ ॥
त्वं चापि नरशार्दूल सहास्माभिर्गमिष्यसि ।
रत्नं महाद्भुतं तत्र धनुस्तद्द्रष्टुमर्हसि ॥ ७ ॥
प्राग्दत्तं किल तत् तस्य न्यासभूतं महद्धनुः ।
देवासुरे तदा युद्धे वृत्ते देवैः सवासवैः ॥ ८ ॥
तन्न देवा न गन्धर्वा न यक्षोरगराक्षसाः ।
समापूरयितुं शक्ताः कुत एवेतरे जनाः ॥ ९ ॥

धनुषः सारतां तस्य जिज्ञासन्तो नराधिपाः ।
न शेकुरारोपयितुमपि पूरयितुं कुतः ॥१०॥
तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः ।
यज्ञे द्रक्ष्यसि काकुत्स्थ सहास्माभिरितो गतः ॥११॥
तथेत्युक्त्वा ततो रामः प्रयातुमुपचक्रमे ।
विश्वामित्रपुरोगैस्तैर्महर्षिभिरुदारधीः ॥१२॥
विश्वामित्रोऽथ भगवानामन्त्र्य वनदेवताः ।
उवाचेदं ततो वाक्यं यियासुर्मिथिलां प्रति ॥१३॥
स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादितः ।
उत्तरं जाह्नवीतीरं हिमवन्तं शिलोच्चयं ॥१४॥
प्रदक्षिणमुपावृत्य ततः सिद्धाश्रमं मुनिः ।
उत्तरां दिशमास्थाय पन्थानमुपचक्रमे ॥१५॥
युक्तं ब्रह्मरथानां तु शतमात्रं ततः क्षणात् ।
ययुर्मुनीनां भाण्डानि समारोप्यानुयायिनां ॥१६॥
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
प्रयान्तमनुजग्मुस्तं विश्वामित्रं महामुनिं ॥१७॥
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
वासं चक्रुर्मुनिगणाः शोणतीरमुपाश्रिताः ॥१८॥
गते त्वस्तं दिनकरे स्नाता हुतहुताशनाः ।
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥१९॥

रामोऽपि सहसौमित्रिरभिवाद्य तपोधनं ।
निषसादाभितस्तस्य विश्वामित्रस्य धीमतः ॥ २० ॥
अथ रामोऽञ्जलिं कृत्वा विश्वामित्रमृषिं तदा ।
पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ॥ २१ ॥
भगवन् को न्वयं देशः समृद्धजनसेवितः ।
श्रोतुमिच्छामि तत्त्वेन त्वत्त एव महामुने ॥ २२ ॥
चोदितो रामवाक्येन तस्य देशस्य विस्तरं ।
विश्वामित्रो महातेजा व्याहर्तुमुपचक्रमे ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे शोणतीरनिवासो नाम
चतुस्त्रिंशः सर्गः ॥

## XXXV.

ब्रह्मयोनिर्महानासीत् कुशो नाम नराधिपः ।
स सुतान् जनयामास चतुरः ख्यातविक्रमान् ॥ १ ॥
कुशाश्वं कुशनाभं च अमूर्तरजसं वसुं ।
महात्मनो दीप्तिमतः क्षत्रधर्मपरायणान् ॥ २ ॥
तानुवाच कुशः पुत्रान् विनीतान् श्रुतपारगान् ।
प्रजानां पालनं पुत्राः क्रियतामिति राघव ॥ ३ ॥
पितुस्ते वचनं श्रुत्वा लोकपालोपमाः सुताः ।
पुराण्यावासयामासुः पृथक् चत्वारि राघव ॥ ४ ॥
तेषां कुशाश्वः कौशाम्बीं पुरीमावासयच्छुभां ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयं ॥ ५ ॥
तथामूर्तरजा वीरश्चक्रे प्राग्ज्योतिषं पुरं ।
धर्मारण्यसमीपस्थं वसुश्चक्रे गिरिव्रजं ॥ ६ ॥
देशोऽयं वसु नामासीद्वसोरमिततेजसः ।
एते शैलवराः पञ्च प्रकाशन्ते महोच्छ्रयाः ॥ ७ ॥
सुमागधी नदी चात्र मगधा विश्रुता यया ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ८ ॥
एषा सा मागधी नाम वसो राम महात्मनः ।
पूर्वमध्यासिता तेन सुक्षेत्रा सस्यमालिनी ॥ ९ ॥

कुशनाभोऽथ राजर्षिः कन्याशतमनुत्तमं ।
जनयामास दुर्धर्षो घृताच्यां रघुनन्दन ॥ १० ॥
रूपयौवनशालिन्यस्ताः कदाचित् स्वलंकृताः ।
उद्यानभूमिमागम्य चिक्रीडुर्विद्युतो यथा ॥ ११ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च राघव ।
आमोदं परमं जग्मुर्गन्धमाल्यैरलंकृताः ॥ १२ ॥
अथ ताश्चारुसर्वाङ्गी रूपेणाप्रतिमा भुवि ।
दृष्ट्वा तु सर्वगो वायुरिदं वचनमब्रवीत् ॥ १३ ॥
अहं वः कामये सर्वा भार्या भवत मेऽबलाः ।
त्यक्त्वा मानुष्यकं भावममरत्वमवाप्स्यथ ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा वायोः परममङ्गनाः ।
मुक्त्वा हासं ततः सर्वा वायुं वचनमब्रुवन् ॥ १५ ॥
अन्तश्चरसि भूतानां सर्वेषां किल मारुत ।
प्रभावज्ञाः स्म ते सर्वाः किमस्मानवमन्यसे ॥ १६ ॥
कुशनाभसुताः सर्वाः क्षमं ते न हि मारुत ।
स्थानाद्भ्रंशयितुं देव रक्षामः स्वकुलं वयं ॥ १७ ॥
मा भूत् स कालो यद्वायो पितरं सत्यवादिनं ।
कामतः समतिक्रम्य वरयेम स्वयंवरं ॥ १८ ॥
पिताऽस्माकं प्रभवति दैवतं नः परं पिता ।
अस्मान् दास्यत्यसौ यस्मै स नो भर्ता भविष्यति ॥ १९ ॥

तासां तद्वचनं श्रुत्वा वायुः कोपसमन्वितः ।
बभञ्ज कन्या मध्ये ताः स प्रविश्यात्मतेजसा ॥ २० ॥
ताः कन्या वायुना भग्ना विविशुर्भवनं पितुः ।
प्रापतन् भुवि संभ्रान्ताः सलज्जाः साश्रुलोचनाः ॥ २१ ॥
स च ता दयिता दीनाः कन्याः परमशोभनाः ।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २२ ॥
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ।
कुब्जाः केन कृता यूयं समाविश्य दुरात्मना ॥ २३ ॥
तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभिश्चरणौ गत्वा कन्याशतमभाषत ॥ २४ ॥
वायुरस्मानुपागम्य बलवान् काममोहितः ।
उत्क्रम्य धर्ममर्यादां प्रधर्षयितुमुद्यतः ॥ २५ ॥
सोऽस्माभिरुक्तः सर्वाभिर्वायुः कामवशं गतः ।
पितृमत्यः स्म भगवन् न स्वच्छन्दचरा वयं ॥ २६ ॥
पितरं नोऽभियाच त्वं न्यायतो यदि मन्यसे ।
न वयं स्वैरचारिण्यः प्रसीद भगवन्निति ॥ २७ ॥
इत्युक्तः कुपितो वायुः प्रविश्याङ्गानि नः प्रभो ।
बभञ्ज बलवांस्तेन सर्वाः कुब्जीकृता वयं ॥ २८ ॥
इति तासां वचः श्रुत्वा कुशनाभो नराधिपः ।
प्रत्युवाच ततो राम कन्याशतमिदं वचः ॥ २९ ॥

यत् क्षान्तोऽतिक्रमो वायोः कृतं तन्मे महत् प्रियं ।
पुत्र्यो मे यच्च युष्माभिः कुलच्छायाभिरक्षिता ॥ ३० ॥
अलंकारो हि नारीणां क्षमा पुत्र्यो विशेषतः ।
देवानां च विशेषेण क्षन्तव्यमिति मे मतिः ॥ ३१ ॥
सुकृतं च कृतं मन्ये यद्वायोः क्षान्तमीदृशं ।
व्यभिचारकृतं यस्मात् प्रीतोऽहं तेन सुव्रताः ॥ ३२ ॥
प्रदानसमयं चैव मन्येऽहं वोऽद्य सर्वशः ।
गम्यतामिष्टतः पुत्र्यश्चिन्तयिष्यामि वो हितं ॥ ३३ ॥
विसृज्य चैव ताः कन्यास्ततः स नृपसत्तमः ।
तासां प्रदानं धर्मज्ञो मन्त्रयामास मन्त्रिभिः ॥ ३४ ॥
यद्वायुना च ताः कन्यास्तत्र कुब्जीकृताः पुरा ।
कन्यकुब्जमिति ख्यातं ततःप्रभृति तत् पुरं ॥ ३५ ॥
एतस्मिन्नेव काले तु चूली नाम महानृषिः ।
ऊर्ध्वरेता ब्रह्मचर्यं चचार किल दुश्चरं ॥ ३६ ॥
तं ब्रह्मचारिणं राम तप्यमानं महत् तपः ।
सोमदा नाम गन्धर्वी ऊर्णायुदुहिता तदा ॥ ३७ ॥
नियमं परमास्थाय सम्यक् परिचचार ह ।
पुत्रार्थिनी ततो राम महर्षेर्भावितात्मनः ॥ ३८ ॥
साभवत् प्रयता भूत्वा शुश्रूषणपरायणा ।
स तां कालस्य महतः प्रोवाच परितोषितः ॥ ३९ ॥

परितुष्टोऽस्म्यहं भद्रे ब्रूहि किं करवाणि ते ।
परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुराक्षरं ॥ ४० ॥
उवाच प्राञ्जलिर्भूत्वा वाक्यमत्मह्नितं तदा ।
दीप्यसे परया लक्ष्म्या ब्राह्म्या त्वमनया यथा ॥ ४१ ॥
तथाहं पुत्रमिच्छामि त्वत्तो ब्राह्म्या श्रियावृतं ।
स्वयं च वरये त्वाहं भर्तारमपरिग्रहा ॥ ४२ ॥
अनन्यपूर्वां भज मां याचमानां दृढव्रत ।
तस्यै प्रसन्नो विप्रर्षिर्ददौ पुत्रं यथेप्सितं ॥ ४३ ॥
ब्रह्मदत्त इति ख्यातः सोऽभवद्बलिनः सुतः ।
ब्रह्मदत्तः स राजर्षिः पुरीमध्यावसत् तदा ॥ ४४ ॥
काम्पिल्यां नाम काकुत्स्थ देवराजसमद्युतिः ।
तं श्रुत्वा परया लक्ष्म्या कुशनाभोऽन्वितं नृपं ॥ ४५ ॥
ब्रह्मदत्ताय ताः कन्याः प्रदातुमुपचक्रमे ।
स तमाहूय धर्मज्ञो ब्रह्मदत्तं महीपतिं ॥ ४६ ॥
ददौ कन्याशतं तस्मै सुप्रीतेनान्तरात्मना ।
यथाक्रमं स सर्वासां तासामनुपमद्युतिः ॥ ४७ ॥
जग्राह विधिवत् पाणीन् ब्रह्मदत्तो नराधिपः ।
तेन च स्पृष्टमात्रेषु ताः पाणिषु गतव्यथाः ॥ ४८ ॥
बभूवुः सर्वशः कन्या रूपौदार्यगुणान्विताः ।
ता दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ॥ ४९ ॥

विस्मयं परमं चक्रे मुमुदेऽभिननन्द च ।
कृतोद्वाहं तु राजानं ब्रह्मदत्तं रघूत्तम ॥५०॥
सदारं प्रेषयामास स्वपुरं परमार्चितं ।
तं तदा सदृशैर्दारैरन्वितं पुत्रमागतं ।
मुमुदे सोमदा प्रीता दृष्ट्वा साभिननन्द च ॥५१॥

इत्यार्षे रामायणे आदिकाण्डे ब्रह्मदत्तविवाहो नाम
पञ्चत्रिंशः सर्गः ॥

## XXXVI.

कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते नराधिपे ।
अपुत्रः कुशनाभोऽथ पुत्रीयामिष्टिमाहरत् ॥ १ ॥
तस्यां च वर्तमानायां कुशनाभमुपागतः ।
कुशो ब्रह्मसुतः पुत्रमुवाच स तदा नृपं ॥ २ ॥
पुत्रस्ते सदृशः पुत्र भविता न चिरादिव ।
गाधिः प्राप्स्यसि तेन त्वं कीर्तिं लोकेषु शाश्वतीं ॥ ३ ॥
एवमुक्त्वा कुशो राम कुशनाभं महीपतिं ।
जगामाकाशमाविश्य पुनरेव यथागतं ॥ ४ ॥
कस्यचित् त्वथ कालस्य कुशनाभस्य धीमतः ।
अजायत सुतो राम गाधिर्नाम महायशाः ॥ ५ ॥
स पिता मम धर्मात्मा गाधिः सत्यपराक्रमः ।
कुशवंशेऽभवद्राजा गाधिजोऽहं रघूत्तम ॥ ६ ॥
अनुजा भगिनी चापि मम जज्ञे शुभव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥
भर्तृव्रतत्वाद्भर्त्रैव सह गत्वा सुरालयं ।
कौशिकी परमोदारा सा प्रवृत्ता महानदी ॥ ८ ॥

स्वर्ग्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ।
इयं पावयितुं लोकान् प्रवृत्ता भगिनी मम ॥ ९ ॥
अतोऽहं हिमवत्पार्श्वे वसामि निरतः सुखी ।
भगिन्याः स्नेहतो राम कौशिक्या नियतव्रतः ॥ १० ॥
सैषा सत्यवती पुण्या सत्यधर्मपरायणा ।
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥
अहं च नियमं कश्चिदास्थातुं रघुनन्दन ।
सिद्धाश्रममनुप्राप्तः सिद्धोऽस्मि तव तेजसा ॥ १२ ॥
एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ।
देशस्य चास्य निर्वृत्तिर्यन्मां त्वं परिपृच्छसि ॥ १३ ॥
स्थितोऽर्धरात्रः काकुत्स्थ कथां कथयतो मम ।
निद्रां भजस्व भद्रं ते विघ्ननाशोऽध्वनोऽस्तु नः ॥ १४ ॥
निष्पन्दास्तरवः सर्वे संलीना मृगपक्षिणः ।
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥
सूक्ष्मेणाञ्जनचूर्णेन नभः कृत्स्नमिवाञ्जितं ।
ग्रहनक्षत्रताराभिः काञ्चनीभिरिवावृतं ॥ १६ ॥
उदेति चासौ शीतांशुर्लोककान्तो निशाकरः ।
अंशुभिः स्वैर्जगत् स्वच्छैर्घर्मार्तं ह्लादयन्निव ॥ १७ ॥
निशाचराणि सत्त्वानि धृष्टं परिचरन्ति च ।
यक्षरक्षोगणाश्चैव ये चान्ये पिशिताशनाः ॥ १८ ॥

एवमुक्त्वा तु कौशिको विरराम महामुनिः ।
साधु साधिति तं सर्वे मुनयः प्रशशंसिरे ।।११।।

इत्यार्षे रामायणे आदिकाण्डे विश्वामित्रवंशवर्णनं नाम
षट्त्रिंशः सर्गः ।।

# आदिकाण्डं

## XXXVII.

ते रात्रिशेषं सुषुपुः शोणतीरे महर्षयः ।
प्रभातायां च शर्वर्यां विश्वामित्रोऽभ्यभाषत ॥ १ ॥
कौशल्यामातरुत्तिष्ठ सुप्रभाता हि ते निशा ।
पूर्वां संध्यामुपास्यैनां गमनायाभिरोचय ॥ २ ॥
तच्छ्रुत्वोत्थाय रामोऽपि कृत्वा पौर्वाह्णिकीं क्रियां ।
गमनं रोचयामास वचनं चेदमब्रवीत् ॥ ३ ॥
अयं शोणः शुचिजलोऽगाधः पुलिनमण्डितः ।
कतमेन पथा ब्रह्मंस्तरिष्याम इमं वयं ॥ ४ ॥
इत्युक्तः प्रत्युवाचाथ विश्वामित्र इदं वचः ।
रामं कमलपत्राक्षं तदा संहर्षयन्निव ॥ ५ ॥
गाध एष महाबाहो तरिष्यामो यथा सुखं ।
एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ६ ॥
ते गत्वा दूरमध्वानं गते च दिवसे तदा ।
जाह्नवीं सरितां श्रेष्ठां ददृशुः परमर्षयः ॥ ७ ॥
तां ते शुचिजलां दृष्ट्वा हंससारससेवितां ।
बभूवुर्मुदिताः सर्वे मुनयः सहराघवाः ॥ ८ ॥
तस्यास्तीरे तदा चक्रुस्तत्रावासपरिग्रहं ।
ततः स्नात्वा यथाकालं संतर्प्य पितृदेवताः ॥ ९ ॥

हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः ।
विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ॥ १० ॥
विश्वामित्रं महात्मानं परिवार्य समन्ततः ।
अथ तत्र तदा रामो विश्वामित्रमभाषत ॥ ११ ॥
भगवन् श्रोतुमिच्छामि यथेयं सरितां वरा ।
त्रैलोक्यपावनी गङ्गा गता नदनदीपतिं ॥ १२ ॥
चोदितो रामवाक्येन विश्वामित्रो महामुनिः ।
जन्मप्रभृति गङ्गायाः प्रोवाच प्रभवागमं ॥ १३ ॥
शैलेन्द्रो हिमवान् राम रत्नाकरसमन्वितः ।
तस्य कन्याद्वयं जज्ञे रूपेणाप्रतिमं भुवि ॥ १४ ॥
मेरोस्तु दुहिता राम तयोर्माता सुमध्यमा ।
मेना मनोरमा देवी पत्नी हिमवतोऽभवत् ॥ १५ ॥
तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता ।
उमा नाम द्वितीयाभूत् कन्या तस्यैव राघव ॥ १६ ॥
अथ ज्येष्ठां हिमवतः सुतां गङ्गामनिन्दितां ।
वरयां चक्रिरे देवा आत्मकार्यचिकीर्षवः ॥ १७ ॥
ददौ चापि स धर्मेण तेभ्यस्त्रैलोक्यपावनीं ।
स्वच्छन्दपथगां देवीं सुतां गङ्गां महानदीं ॥ १८ ॥
प्रतिगृह्य च गङ्गां ते त्रैलोक्यपथचारिणीं ।
यथागतं ययुर्देवास्ततः पूर्णमनोरथाः ॥ १९ ॥

या तु शैलेन्द्रदुहिता द्वितीया रघुनन्दन ।
सोग्रं व्रतमुपाश्रित्य तपस्तेपे तपोधना ।। २० ।।
तामप्युग्रतपःसिद्धां ददौ शैलवरः सुतां ।
रुद्राय याचमानाय उमां लोकनमस्कृतां ।। २१ ।।
इत्येते शैलराजस्य सुते राम बभूवतुः ।
गङ्गा च सरितां ज्येष्ठा देवीनां चाप्युमा वरा ।। २२ ।।
तत्र पावयितुं लोकानिमांस्त्रीन् स्वेन तेजसा ।
गङ्गा प्रवर्तते राम सर्वभूतहिते रता ।। २३ ।।

इत्यार्षे रामायणे आदिकाण्डे गङ्गोत्पत्तिर्नाम
सप्तत्रिंशः सर्गः ।।

# रामायणं

## XXXVIII.

उक्तवाक्ये मुनौ तस्मिन् रामः पप्रच्छ तं पुनः ।
विश्वामित्रं सुखासीनं महात्मानं कृताञ्जलिः ॥ १ ॥
कथेयं कथिता ब्रह्मन् पुण्यश्रवणकीर्तना ।
या त्वया तां पुनः श्रोतुमिच्छामि बहुविस्तरां ॥ २ ॥
उमा केनाभवद्देवी कौमारव्रतचारिणी ।
अवाप देवप्रवरं पतिं भूतमहेश्वरं ॥ ३ ॥
हेतुना केन चैवेयं गङ्गा त्रिपथगाभवत् ।
कथं देवनदी चेयं मानुषान् समुपागता ॥ ४ ॥
त्रिषु लोकेषु धर्मज्ञ कैश्च धर्मैरधिष्ठिता ।
एवं ब्रुवति काकुत्स्थे विश्वामित्रो महातपाः ॥ ५ ॥
विस्तरेण कथामेतां व्याख्यातुमुपचक्रमे ।
पुरा राम कृतोद्वाहः शितिकण्ठो महातपाः ॥ ६ ॥
उमा च स्पर्धया देवी मैथुनायोपजग्मतुः ।
शितिकण्ठस्य देव्याश्च दिव्यं वर्षशतं गतं ॥ ७ ॥
न चैवैकतरस्यासीत् ततो राम पराजयः ।
ततो देवा ययुश्चिन्तां पितामहपुरोगमाः ॥ ८ ॥
यदत्रोत्पत्स्यते भूतं सोढा कोऽस्य भविष्यति ।
तेऽभिगम्य सुराः सर्वे प्रणिपत्य वृषध्वजं ॥ ९ ॥

शितिकण्ठं महात्मानमिदं वचनमब्रुवन् ।
देवदेव महाभाग सर्वभूतहिते रत ॥१०॥
सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ।
न तेऽपत्यं धारयितुं शक्तेयं पृथिवी विभो ॥११॥
न लोकाः सर्वशश्चेमे सोढुं ते वीर्यसंभवं ।
आत्मनैवात्मनस्तेजस्त्वं धारयितुमर्हसि ॥१२॥
सहानयैव देव्या त्वं ब्रह्मचारी भवेश्वर ।
अस्माकं च धरायाश्च लोकानां चानुकम्पया ॥१३॥
धारयात्मभवं तेजः स्वयमेवोमया सह ।
मिश्रतां हि गतं तेजस्तवोमायाश्च शङ्कर ॥१४॥
सादयेदपि लोकांस्त्रीन् सदेवर्षिनरोरगान् ।
तस्मात् त्वं धारयात्मानं त्रैलोक्यहितकाम्यया ॥१५॥
रक्ष लोकानिमान् देव न लोकान् हन्तुमर्हसि ।
इति तेषां वचः श्रुत्वा देवानां भगवान् शिवः ॥१६॥
शिवेन मनसा युक्तो देवान् वचनमब्रवीत् ।
धारयिष्याम्यहं तेजः समुद्भूतं सहोमया ॥१७॥
निर्वृता भवतेत्येवं पुनश्चेदमुवाच ह ।
यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमं ॥१८॥
धारयिष्यति कस्तन्मे प्रोच्यतां सुरसत्तमाः ।
एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजं ॥१९॥

यत् तव क्षुभितं तेजस्तद्धरा धारयिष्यति ।
एवमुक्तः सुरश्रेष्ठः प्रमुमोच महीतले ॥ २० ॥
तेजस्तत् पृथिवी येन व्याप्ता सगिरिकानना ।
ततो देवाः पुनरिदमूचुः सर्वे हुताशनं ॥ २१ ॥
प्रविश त्वं महातेजो रौद्रं वायुसमन्वितः ।
तदग्निना पुनर्व्याप्तं तज्जातः श्वेतपर्वतः ॥ २२ ॥
दिव्यं शरवणं चैव पावकादित्यसंनिभं ।
यत्र जातो महातेजाः कार्त्तिकेयोऽग्निसंभवः ॥ २३ ॥
ततो देवीं शिवं चैव देवाः सर्वेऽभ्यपूजयन् ।
प्रहृष्टा नतशिरःकायाः साधु साध्विति चाब्रुवन् ॥ २४ ॥
अथ शैलसुता राम त्रिदशानभिवीक्ष्य तान् ।
समन्युरशपत् सर्वान् क्रोधसंरक्तलोचना ॥ २५ ॥
यस्मादपत्यं सदृशममरा मम नेच्छथ ।
अपत्यं स्वेषु दारेषु यूयं नोत्पादयिष्यथ ॥ २६ ॥
उक्त्वा चैवं सुरान् सर्वान् शशाप पृथिवीमपि ।
त्वमप्यूषरसंकीर्णा भविष्यसि वसुंधरे ॥ २७ ॥
न चापत्यकृतां प्रीतिं मत्क्रोधकलुषीकृता ।
प्राप्स्यसि त्वमपीच्छन्ती न चापत्यमभीप्सितं ॥ २८ ॥
तां दृष्ट्वा व्यथितां देवीमुमां देवो महेश्वरः ।
गन्तुं समुपचक्राम दिशं वरुणपालितां ॥ २९ ॥

स गत्वा तप आतिष्ठदुत्तमं संशितव्रतः ।
हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥३०॥
एष ते विस्तरो राम शैलपुत्र्या निवेदितः ।
गङ्गायाः शृणु कार्त्स्न्येन प्रभावं सहलक्ष्मणः ॥३१॥

इत्यार्षे रामायणे आदिकाण्डे उमामाहात्म्यं नाम
अष्टात्रिंशः सर्गः ॥

## XXXIX.

तपस्तप्यति देवेशे त्र्यम्बके विबुधास्ततः ।
सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥
अब्रुवंश्च सुराः सर्वे भगवन्तं पितामहं ।
प्रणिपत्याञ्जलिं बद्धा सेन्द्रा वह्निपुरोगमाः ॥ २ ॥
यो नः सेनापतिर्देव दत्तो भगवता पुरा ।
स ब्रह्मचर्यमास्थाय तपस्तेपे सहोमया ॥ ३ ॥
यदत्रानन्तरं कार्यं सर्वलोकपितामह ।
तत् कुरुष्व भृशार्तानां त्वं हि नः परमा गतिः ॥ ४ ॥
देवानां वचनं श्रुत्वा सर्वलोकनमस्कृतः ।
ब्रह्मा मधुरया वाचा त्रिदशानिदमब्रवीत् ॥ ५ ॥
यथा हि यूयमुमया शप्ताः सासूयया पुरा ।
तथा तद्वचनं देवा न शक्यं कर्तुमन्यथा ॥ ६ ॥
इयं त्वाकाशगा गङ्गा शैलराजसुता परा ।
उमाया भगिनी ज्येष्ठा ततोऽपत्यं हुताशनः ॥ ७ ॥
जनयित्वात्मवीर्येण तेजसानुपमद्युतिः ।
भविष्यति स वः श्रीमान् सेनापतिरभीप्सितः ॥ ८ ॥
एतच्छ्रुत्वा वचो देवाः प्रणिपत्य पितामहं ।
प्रहृष्टमनसः सर्वे कृतार्थाः पुनराययुः ॥ ९ ॥

ततः कैलासशिखरमागत्य सहिताः सुराः ।
अग्निं विज्ञापयामासुर्गङ्गां च रघुनन्दन ॥ १० ॥
हितार्थमग्ने लोकानामपत्योत्पदनं कुरु ।
आकाशपथचारिण्या सम्भूय सह गङ्गया ॥ ११ ॥
तथेति च प्रतिज्ञाय वचस्तेषां हुताशनः ।
उवाच गङ्गां मत्तेजो धार्यतामिति राघव ॥ १२ ॥
तमुवाच ततो गङ्गा हुताशनमिदं वचः ।
अशक्ताहं धारयितुं त्वत्तेजो भगवन्निति ॥ १३ ॥
तामुवाच ततो गङ्गां हुतभुग्भगवान् पुनः ।
प्रगृह्य गङ्गे मत्तेजः शैलेऽस्मिंस्त्वं विसर्जय ॥ १४ ॥
तथेत्युक्त्वा ततो गङ्गा तत्तेजः प्रत्यपद्यत ।
प्रतिगृह्य च सद्योऽभूद्विह्वला मूर्छिता च सा ॥ १५ ॥
असहन्ती ततो गर्भं तं धारयितुमोजसा ।
कैलासशिखरे राम साग्निरेतः सुषाव तत् ॥ १६ ॥
अज्ञातसारं प्रस्कन्नं सहसा भूरितेजसं ।
रम्ये शरवणोद्देशे समुत्सृज्य ततो ययौ ॥ १७ ॥
तदिदं निर्गतं तस्यास्तप्तजाम्बूनदप्रभं ।
काञ्चनं धरणीं प्राप्तं हिरण्यं चाभवत् तदा ॥ १८ ॥
ताम्रं कृष्णायसं चापि तैक्ष्ण्यादेवाभ्यजायत ।
मलं चाप्यभवत् तस्य त्रपु सीसकमेव च ॥ १९ ॥

निःक्षिप्तमात्रे गर्भे तु तेजसास्यानुरञ्जितं ।
सर्वं पर्वतसंबन्धं सौवर्णमभवत् तदा ॥ २० ॥
जातरूपमिति ख्यातं ततःप्रभृति राघव ।
सुवर्णं प्रादुरभवद्वह्नितेजोभवं शुचि ॥ २१ ॥
कुमारश्चाभवत् तत्र तरुणार्कसमद्युतिः ।
वह्नितेजोभवः श्रीमान् गङ्गाकुक्षिपरिच्युतः ॥ २२ ॥
तं कुमारं ततो जातं दृष्ट्वा सेन्द्रा मरुद्गणाः ।
तदा क्षीरप्रदानार्थं कृत्तिकाः संन्ययोजयन् ॥ २३ ॥
ताः क्षीरं तस्य देवस्य समयेन ददुस्तदा ।
स्यादस्माकमयं पुत्रः ख्यातो नाम्नेति राघव ॥ २४ ॥
ततस्ता देवता ऊचुः कार्त्तिकेय इति प्रभुः ।
पुत्रोऽयं जगति ख्यातो भविष्यति न संशयः ॥ २५ ॥
देवानां तद्वचः श्रुत्वा पूर्वं गर्भपरिस्रवे ।
कृत्तिकाः स्कन्दयामासुस्तमादित्यसमद्युतिं ॥ २६ ॥
स्कन्द इत्येव तं दृष्ट्वा प्रोचुरप्रतिमौजसं ।
कार्त्तिकेयं महाद्युतिं काकुत्स्थ ज्वलनोपमं ॥ २७ ॥
प्रस्नुतानां ततः क्षीरं षण्णां तासां षडाननः ।
भूत्वा स बालो ह्यपिवत् कृत्तिकानां परिस्रुतं ॥ २८ ॥
तत् पीत्वा क्षीरमेकाह्ना स कुमारोऽभ्यवर्धत ।
अजयत् स्वेन वीर्येण दैत्यसैन्यगणान् बहून् ॥ २९ ॥

सुरसेनागणपतिं ततस्तममरद्युतिं ।
अभ्यषिञ्चन् सुरगणाः समेत्याग्निपुरोगमाः ॥३०॥
इति ते कथितो राम गङ्गोमासंभवो मया ।
देवस्य च कुमारस्य संभवः पुण्यकीर्तनः ॥३१॥

इत्यार्षे रामायणे आदिकाण्डे कुमारोत्पत्तिर्नाम
एकोनचत्वारिंशः सर्गः ॥

## XL.

तां तथा कौशिको रामे निवेद्य मधुरां कथां ।
पुनरेव कथामेतां कथयामास कौशिकः ॥ १ ॥
अयोध्याधिपतिः श्रीमान् पूर्वमासीन्नराधिपः ।
सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजः ॥ २ ॥
विदर्भराजदुहिता केशिनी नाम नामतः ।
ज्येष्ठा सगरपत्न्यासीद्धर्मिष्ठा सत्यवादिनी ॥ ३ ॥
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ।
द्वितीया सगरस्यासीत् पत्नी परमधार्मिकी ॥ ४ ॥
ताभ्यां सह महेष्वासः पत्नीभ्यां तप्तवांस्तपः ।
अपत्यकामः काकुत्स्थ भृगुप्रस्रवणे गिरौ ॥ ५ ॥
तस्मै वर्षसहस्रान्ते तपसाराधितो मुनिः ।
सगराय वरं प्रादाद्भृगुः सत्यवतां वरः ॥ ६ ॥
अपत्यलाभः सुमहांस्तव राजन् भविष्यति ।
कीर्तिं चाप्रतिमां लोके संतानोत्थामवाप्स्यसि ॥ ७ ॥
एका जनयिता पुत्रं तव वंशविवर्धनं ।
षष्टिं पुत्रसहस्राणि द्वितीया जनयिष्यति ॥ ८ ॥
मुनिमेवं भाषमाणं सत्यधर्मतपोनिधिं ।
ते पत्न्यौ सगरस्येदं कृत्वाञ्जलिमभाषतां ॥ ९ ॥

एकं का तनयं ब्रह्मन् का बहून् जनयिष्यति ।
भगवन् श्रोतुमिच्छावः सत्यः सोऽस्तु वरो हि नौ ॥१०॥
तयोरेतद्वचः श्रुत्वा स मुनिप्रवरस्तदा ।
उवाच मधुरं वाक्यं स्वच्छन्देन ददामि वां ॥११॥
एका वंशधरं पुत्रमेका चावंशकान् बहून् ।
यथेष्टं मां वरयतां यस्या यदभिकाङ्क्षितं ॥१२॥
मुनेरेतद्वचः श्रुत्वा केशिनी रघुनन्दन ।
पुत्रं वंशधरं राम जग्राहैकमनिन्दिता ॥१३॥
षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तथा ।
जग्राह कीर्तियुक्तानि सुमतिर्वरमीप्सितं ॥१४॥
प्रदक्षिणं ततः कृत्वा भृगुं धर्मभृतां वरं ।
जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥१५॥
अथ कालेन महता पुत्रं ज्येष्ठा व्यजायत ।
असमञ्जा इति ख्यातं काकुत्स्थ सगरात्मजं ॥१६॥
सुमत्यपि रघुश्रेष्ठ गर्भं तुम्बं व्यसूयत ।
षष्टिः पुत्रसहस्राणि भिन्ने तुम्बे विनिर्ययुः ॥१७॥
घृतपूर्णेषु कुम्भेषु धात्र्यस्तानभ्यवर्धयन् ।
ते च कालेन महता यौवनं प्रतिपेदिरे ॥१८॥
समानवयसः सर्वे तुल्यवीर्यपराक्रमाः ।
षष्टिः पुत्रसहस्राणां सगरस्य बभूव ह ॥१९॥

स च ज्येष्ठोऽभवत् तेषामसमञ्जाः परंतपः ।
पौराणामहिते रक्तः पित्रा निर्वासितः पुरात् ॥ २० ॥
तस्य पुत्रोऽंशुमान् नाम बभूव ह्यसमञ्जसः ।
संमतः सर्वलोकस्य सर्वलोकप्रियंवदः ॥ २१ ॥
अथ कालेन महता मतिरेवमजायत ।
सगरस्याश्वमेधेन यजेयमिति राघव ॥ २२ ॥
स कृत्वा निश्चितां बुद्धिं सोपाध्यायगणो नृपः ।
सगरो यज्ञमारेभे कृत्वा द्रव्यपरिग्रहं ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे सगरपुत्रजन्म नाम
चत्वारिंशः सर्गः ॥

## XLI.

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः ।
उवाच परमप्रीतो मुनिं दीप्तमिवानलं ॥ १ ॥
श्रोतुमिच्छामि भगवन् विस्तरेण कथामिमां ।
पूर्वको मे यथा यज्ञं सगरः समवाप्तवान् ॥ २ ॥
विश्वामित्रस्ततो राममुवाच प्रहसन्निव ।
श्रूयतां विस्तरो राम सगरस्य कथां प्रति ॥ ३ ॥
शङ्करश्वशुरः श्रीमान् हिमवानचलोत्तमः ।
विन्ध्यश्च स्पर्धयान्योन्यं यत्र देशे निरीक्षतः ॥ ४ ॥
तस्मिन् देशे स यज्ञोऽभूत् सगरस्य महात्मनः ।
स हि देशो महान् पुण्यः ख्यातः पुण्यजनाश्रितः ॥ ५ ॥
तस्य चानुचरो राम दृढधन्वा महारथः ।
अंशुमानभवद्वीरः सगरस्य तदाज्ञया ॥ ६ ॥
यजतस्तस्य तं यज्ञमुत्थाय धरणीतलात् ।
तमश्वं यज्ञियं नागो जहारानन्तरूपवान् ॥ ७ ॥
हृतेऽश्वे यज्ञिये तस्मिन् सर्वे ते रघुनन्दन ।
याजकाः समुपागम्य यजमानं तदाब्रुवन् ॥ ८ ॥

केनापि नागरूपेण हृतस्तेऽश्वः स यज्ञियः ।
हृत्वा तमश्वहर्तारं तमेवाश्वं त्वमानय ॥ ९ ॥
यज्ञच्छिद्रं महद्ध्येतत् सर्वेषामशिवाय नः ।
तत् तथा क्रियतां राजन् यथाच्छिद्रः क्रतुर्भवेत् ॥ १० ॥
उपाध्यायवचः श्रुत्वा तस्मिन् सदसि पार्थिवः ।
षष्टिं पुत्रसहस्राणि समाहूयेदमब्रवीत् ॥ ११ ॥
अनागतिं राक्षसानां पश्यामीह महाक्रतौ ।
नागानां चापि यज्ञोऽयं रक्ष्यते हि महर्षिभिः ॥ १२ ॥
केनापि तु स देवेन हृतोऽश्वो नागरूपिणा ।
अमर्षताच्छिद्रमेतद्दृष्ट्वा दीक्षामुपागतं ॥ १३ ॥
योऽसौ रसातलगतो यदिवान्तर्जले स्थितः ।
तं हत्वा नयताश्वं मे पुत्रका भद्रमस्तु वः ॥ १४ ॥
समुद्रमालिनीं कृत्स्नां पृथिवीमनुमार्गत ।
प्रोत्खनन्तः प्रयत्नेन यावत् तुरगदर्शनं ॥ १५ ॥
एकैकं योजनं भूमेर्निर्भिन्दन्तोऽनुगच्छत ।
अस्माकमश्वहर्तारं मार्गमाणा ममाज्ञया ॥ १६ ॥
दीक्षितः पौत्रसहितः सोपाध्यायगणस्त्वहं ।
इह स्थास्यामि भद्रं वो यावत् तुरगदर्शनं ॥ १७ ॥
असमाप्तक्रतुस्तावद्भविष्यामीह पुत्रकाः ।
युष्माभिर्यावदश्वो मे न प्रत्याह्रियते पुनः ॥ १८ ॥

इत्युक्ता हृष्टमनसः पित्राथ सगरेण ते ।
बिभिदुर्वसुधां राम पितुर्वचनकारिणः ॥ १९ ॥
योजनायामविस्तारमेकैको धरणीतलं ।
बिभिदुः पुरुषव्याघ्रा वज्रसारभुजैर्बलात् ॥ २० ॥
कुद्दालैः परिघैः शूलैर्मुषलैः शक्तिभिस्तथा ।
भिद्यमाना वसुमती तैरार्तेव ननाद सा ॥ २१ ॥
नागानां बध्यमानानां सर्पाणां च महौजसां ।
रक्षसामसुराणां च बभूवार्तस्वनो महान् ॥ २२ ॥
षष्टिं हि योजनानां ते सहस्राणि महौजसः ।
धरणीं बिभिदुः क्रुद्धाः सर्वे यावद्रसातलं ॥ २३ ॥
एवं पर्वतसंबाधं जम्बुद्वीपं नृपात्मज ।
खनन्तस्ते नृपसुताः सर्वतः परिबभ्रमुः ॥ २४ ॥
ततो देवाः सगन्धर्वा महोरगगणास्तथा ।
संभ्रान्तमनसः सर्वे पितामहमुपाद्रवन् ॥ २५ ॥
तेऽभिवाद्य महात्मानं संभ्रान्तमनसः सुराः ।
अब्रुवन् परमत्रस्ताः पितामहमिदं वचः ॥ २६ ॥
भगवन् पृथिवी सर्वा खन्यते सगरात्मजैः ।
खनद्भिश्चैव तैर्ब्रह्मन् महासत्त्वबधः कृतः ॥ २७ ॥
अयं स यज्ञहास्माकमनेनाश्वोऽपहारितः ।
इति ते सर्वभूतानि निघ्नन्ति सगरात्मजाः ॥ २८ ॥

एतच्छ्रुत्वा महावीर्य समाधिं कर्तुमर्हसि ।
यावत् त्वत्प्राणिनः सर्वानहिंसन्त्यश्वसारिणः ॥ ४१ ॥

इत्यार्ष रामायणे आदिकाण्डे पृथिवीविदारणं नाम
एकचत्वारिंशः सर्गः ॥

# आदिकाण्डं

## XLII.

इति तेषां वचः श्रुत्वा देवानां प्रपितामहः ।
प्रत्युवाच भयोद्विग्नान् सर्वदेवानिदं वचः ॥ १ ॥
बिभर्ति यो जगत् कृत्स्नं यस्योत्पत्तिर्न विद्यते ।
तेनाश्वो वासुदेवेन कपिलेनापवाहितः ॥ २ ॥
पृथिव्याश्चैव भेदोऽयं दृष्टस्तेनेति मे मतिः ।
सगरस्य च पुत्राणां विनाशोऽमिततेजसां ॥ ३ ॥
पितामहवचः श्रुत्वा ततस्ते त्रिदिवालयाः ।
देवर्षिपितृगन्धर्वाः प्रतिजग्मुर्यथागतं ॥ ४ ॥
सगरस्य च पुत्राणां प्रादुरासीन्महौजसां ।
खनतां पृथिवीं शब्दो वज्राशनिसमस्वनः ॥ ५ ॥
ते भित्त्वा पृथिवीं सर्वां कृत्वा चापि प्रदक्षिणां ।
उपेत्य सागराः सर्वे पितरं वाक्यमब्रुवन् ॥ ६ ॥
परिक्रान्ता मही सर्वा महद्विशसनं कृतं ।
यादोगणमहाग्राहदैत्यदानवरक्षसां ॥ ७ ॥
न चापश्याम तं राजन् यज्ञविघ्नकरं तव ।
किं कुर्महे पुनस्तात विनिश्चित्य प्रशाधि नः ॥ ८ ॥
तेषामेतद्वचः श्रुत्वा पुत्राणां सगरस्तदा ।
निश्चित्योवाच सर्वांस्तान् पुनः पुत्रानिदं वचः ॥ ९ ॥

भूयो मृगयताश्वं मे विभिद्येदं रसातलं ।
अश्वहर्तारमासाद्य कृतार्थाः संनिवर्तत ॥ १० ॥
पितुरेतद्वचः श्रुत्वा सगरस्यात्मसंभवाः ।
सर्वतः षष्टिसाहस्रा रसातलमुपाद्रवन् ॥ ११ ॥
पुनः खनन्तस्ते तत्र ददृशुः पर्वतोपमं ।
दिशो गजं विरूपाक्षं धारयन्तमिमां महीं ॥ १२ ॥
शिरसा नरशार्दूल सशैलवनकाननां ।
नानाजनपदाकीर्णां नानापत्तनशोभितां ॥ १३ ॥
यदा च पर्वणि गजः खेदाच्चालयते शिरः ।
सपर्वतवना राम तदेयं चलति क्षमा ॥ १४ ॥
तं ते प्रदक्षिणं कृत्वा दिशो गजमरिंदम ।
मन्यमाना दिशां पालं दक्षिणां बिभिदुर्दिशं ॥ १५ ॥
दक्षिणस्यामपि पुनर्ददृशुस्ते गजोत्तमं ।
महापद्मं महात्मानं तिष्ठन्तं मन्दरोपमं ॥ १६ ॥
तं दृष्ट्वा तु महाकायं विस्मयं परमं ययुः ।
कृत्वा तमपि नागेन्द्रं प्रदक्षिणमरिंदम ॥ १७ ॥
सगरस्यात्मजा राम पश्चिमां बिभिदुर्दिशं ।
पश्चिमायामपि दिशि कैलासशिखरोपमं ॥ १८ ॥
आशागजं सौमनसं ददृशुस्ते महाबलं ।
तं ते प्रदक्षिणं कृत्वा पृष्ट्वा चानामयं ततः ॥ १९ ॥

प्रोत्खनन्तो ययुर्वीरा दिशं हैमवतीमपि ।
उत्तरस्यामपि तु ते ददृशुर्हिमपाण्डुरं ॥ २० ॥
भद्रं भद्रेण वपुषा धारयन्तमिमां महीं ।
तमप्यालभ्य ते सर्वे कृत्वा चाभिप्रदक्षिणं ॥ २१ ॥
सहिताः पुनरेवेदं बिभिदुर्धरणीतलं ।
प्रागुत्तरां दिशं गत्वा ततस्ते सगरात्मजाः ॥ २२ ॥
अमर्षवशमापन्नाश्चख्नुरेव धरामिमां ।
तत्राथ प्रोत्खनन्तस्ते क्षोणीमपि समन्ततः ॥ २३ ॥
ददृशुः कपिलं नाम देवं नारायणं प्रभुं ।
हयं च तस्य देवस्य विचरन्तमदूरतः ॥ २४ ॥
तं ते हयहरं मत्वा क्रोधपर्याकुलेक्षणाः ।
अभ्यधावन् सुसंक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् ॥ २५ ॥
ततस्तेनाप्रमेयेन तेऽपध्माता महात्मना ।
भस्मराशीकृताः सर्वे समेताः सगरात्मजाः ॥ २६ ॥

इत्यार्षे रामायणे आदिकाण्डे कपिलदर्शनं नाम
द्विचत्वारिंशः सर्गः ॥

## XLIII.

पुत्रांश्चिरगतान् मत्वा सगरो रघुनन्दन ।
नप्तारमब्रवीद्वाक्यं दीप्यमानं स्वतेजसा ॥ १ ॥
पितॄन् गच्छ त्वमन्वेष्टुं येन चाश्वोऽपवाहितः ।
अन्तर्भूमिनिवासीनि सन्ति सत्वान्यनेकशः ॥ २ ॥
तेषां प्रतिविधानार्थं गृहीत्वा व्रज कार्मुकं ।
तानासाद्य पितॄंस्तात हत्वा विघ्नकरं च मे ॥ ३ ॥
कृतार्थः संनिवर्तेथा यज्ञादुत्तारयस्व मां ।
शूरोऽसि कृतविद्यश्च पूर्वैस्तुल्यपराक्रमः ॥ ४ ॥
एवमुक्तोऽंशुमान् राम सगरेण महात्मना ।
धनुरादाय खड्गं च ययौ त्वरितविक्रमः ॥ ५ ॥
तमेव पितृभिर्यातं पन्थानमनुसंचरन् ।
ययौ वेगेन महता पितॄनन्वेष्टुमञ्जसा ॥ ६ ॥
वीक्षमाणो विशसनं तैः कृतं यक्षरक्षसां ।
सोऽवैक्षत विरूपाक्षमाशागजमवस्थितं ॥ ७ ॥
स तं प्रदक्षिणं कृत्वा पृष्ट्वा चानामयं ततः ।
पितॄंस्तान् परिपप्रच्छ हयहर्तारमेव च ॥ ८ ॥
आशागजोऽपि तच्छ्रुत्वा पृच्छतोऽंशुमतो वचः ।
तमुवाच कृतार्थस्त्वमेष्यसीत्यभितः स्थितं ॥ ९ ॥

इति तस्य वचः श्रुत्वा सर्वानेव हि दिग्गजान् ।
यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥
एतदेव च तैरुक्तो गजैराशुपराक्रमः ।
पूजितः सहयश्चैव गन्तासीत्यंशुमानपि ॥ ११ ॥
तेषां तु तद्वचः श्रुत्वा जगाम लघुविक्रमः ।
भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२ ॥
स दुःखवशमापन्नः सुतोऽथ ह्यसमञ्जसः ।
चुक्रोशार्तस्वरं दृष्ट्वा भस्मराशीकृतान् पितॄन् ॥ १३ ॥
अपश्यत् तुरगं तं च चरन्तमविदूरतः ।
तदा पर्वणि नागेन हृतं वेलावने स्थितं ॥ १४ ॥
स तेषां राजपुत्राणां कर्तुकामो जलक्रियां ।
सलिलार्थी महातेजा नापश्यत् सलिलं क्वचित् ॥ १५ ॥
पातयंश्चाभितो दृष्टिं ततस्तत्र ददर्श ह ।
पितॄणां मातुलं राम सुपर्णं पतगोत्तमं ॥ १६ ॥
स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः ।
मा शुचः पुरुषव्याघ्र बधोऽयं लोकसंमतः ॥ १७ ॥
कपिलेनाप्रमेयेन दग्धा ह्येते महाबलाः ।
नार्हसे सलिलं वीर दातुमेभ्यस्त्वमन्यतः ॥ १८ ॥
गङ्गा हिमवतो ज्येष्ठा दुहिता सरितां वरा ।
भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी ॥ १९ ॥

यावत् क्लिन्नमिदं भस्म गङ्गया लोककान्तया ।
यदैषां भविता तात स्वर्गमेष्यन्ति वै तदा ॥ २० ॥
गङ्गामानय भद्रं ते देवलोकान्महीतलं ।
क्रियतां यदि शक्नोषि गङ्गाया अवतारणं ॥ २१ ॥
गच्छाश्वमेतमादाय पुनरेव यथागतं ।
यज्ञं पैतामहं वीर निवर्तयितुमर्हसि ॥ २२ ॥
सुपर्णवचनं श्रुत्वा वीर्यवानंशुमानथ ।
त्वरितो हयमादाय यज्ञमायान्महायशाः ॥ २३ ॥
स राजानं समासाद्य दीक्षितं रघुनन्दन ।
तस्मै निवेदयामास सुपर्णवचनं तदा ॥ २४ ॥
तच्छ्रुत्वा व्यथितो राजा घोरमंशुमतो वचः ।
यज्ञं समापयामास नातिहृष्टमना इव ॥ २५ ॥
स्वपुरं च ययौ धीमानिष्टयज्ञो महीपतिः ।
गङ्गायाश्चागमे राजा नाध्यगच्छत् स निश्चयं ॥ २६ ॥
अगत्वा निश्चयं चापि युयुजे कालधर्मणा ।
त्रिंशद्वर्षसहस्राणि पालयित्वा महीमिमां ॥ २७ ॥

इत्यार्षे रामायणे आदिकाण्डे सगरयज्ञसमाप्तिर्नाम
त्रिचत्वारिंश सर्गः ॥

# आदिकाण्डं

## XLIV.

ततः प्रकृतयो राम सगरे स्वर्गते नृपे ।
धार्मिकं रोचयामासुरंशुमन्तं नराधिपं ॥ १ ॥
स राजा सुमहानासीदंशुमान् रघुनन्दन ।
तस्य पुत्रः समभवद्दिलीप इति विश्रुतः ॥ २ ॥
तस्मिन् राज्यं समावेश्य दिलीपेऽथांशुमानपि ।
हिमवच्छिखरे राम तपस्तेपे महायशाः ॥ ३ ॥
गङ्गावतारणं पुण्यं चिकीर्षुरमरद्युतिः ।
अनवाप्यैव तं कामं स वै नृपतिसत्तमः ॥ ४ ॥
द्वात्रिंशतं सहस्राणि वर्षाणाममितद्युतिः ।
तपस्तप्त्वा महाघोरं स्वर्गं लेभे महामनाः ॥ ५ ॥
दिलीपोऽपि महातेजा यज्ञैर्बहुभिरीजिवान् ।
विंशतिं वै सहस्राणि वर्षाणां गामपालयत् ॥ ६ ॥
निश्चयं चाप्यगत्वैव गङ्गावतरणे ततः ।
व्याधिना नरशार्दूल कालस्य वशमीयिवान् ॥ ७ ॥
इन्द्रलोकं गतो राजा सोऽर्जितं पुण्यकर्मणा ।
राज्यं भगीरथे पुत्रे निक्षिप्य पुरुषर्षभः ॥ ८ ॥
भगीरथोऽथ राजाभूद्धार्मिको रघुनन्दन ।
अनपत्यः सदा काङ्क्षन् सदृशीमात्मनः प्रजां ॥ ९ ॥

स तपो मह्दातस्थे गोकर्णेऽनुपमद्युतिः ।
ऊर्ध्वबाहुः पञ्चतपा ग्रीष्मे भूत्वा यतव्रतः ॥ १० ॥
जलशायी च हेमन्ते वर्षास्वभ्रावकाशिकः ।
शीर्णपर्णकृताहारो यतात्मा यतमैथुनः ॥ ११ ॥
तस्य वर्षसहस्रान्ते तपसोग्रेण तोषितः ।
आजगामाश्रमं ब्रह्मा प्रजानां प्रभुरीश्वरः ॥ १२ ॥
वृतः सुरगणैः श्रीमान् विमानवरमास्थितः ।
स एनमाभाष्य तदा तप्यमानं तपोऽब्रवीत् ॥ १३ ॥
भगीरथ महाभाग प्रीतस्तेऽहं नरेश्वर ।
गृहाण त्वं वरं मत्तः काङ्क्षितं पृथिवीपते ॥ १४ ॥
तमुवाच ततो दृष्ट्वा ब्रह्माणं स्वयमागतं ।
भगीरथो महातेजाः कृताञ्जलिरिदं वचः ॥ २५ ॥
यदि मे भगवान् प्रीतो यद्यस्ति तपसो बलं ।
ततः सगरपुत्रास्ते मत्तः सलिलमाप्नुयुः ॥ १६ ॥
गङ्गाजलप्लुते तस्मिन् देहभस्मनि पाविताः ।
गच्छेयुरमलाः स्वर्गं सर्वे नः प्रपितामहाः ॥ १७ ॥
इयं च संततिर्देव नावसादं कथञ्चन ।
इक्ष्वाकूणां कुले गच्छेदेष मे प्रवरो वरः ॥ १८ ॥
इत्युक्तवाक्यं राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुराक्षरभूषितां ॥ १९ ॥

तपोधन महाभाग भगीरथ महारथ ।
एवं भवत्वविच्छिन्नमिक्ष्वाकुकुलमव्ययं ॥ २० ॥
इयं तु गङ्गा सरितां प्रवरा स्वर्गतश्च्युता ।
दारयेत् पृथिवीं कृत्स्नां निपतन्ती महौघिनी ॥ २१ ॥
तदस्या धारणे राजन् शिवो देवः प्रसाद्यतां ।
गङ्गायाः पतनं व्यक्तं भूमिः सोढुं न शक्ष्यति ॥ २२ ॥
तस्या धारयितारं च नान्यं पश्यामि शङ्करात् ।
वेगं सुदुःसहं लोके तस्मात् तं त्वं प्रसादय ॥ २३ ॥
तमेवमुक्त्वा राजानं भगवान् प्रपितामहः ।
आभाष्य च महीं नेतुं गङ्गां स त्रिदिवं ययौ ॥ २४ ॥

इत्यार्षे रामायणे आदिकाण्डे भगीरथवरप्रदानं नाम
चतुश्चत्वारिंशः सर्गः ॥

## XLV.

प्रजापतौ गते तस्मिनंगुष्ठाग्रनिपीडितं ।
कृत्वा महीतलं राजा संवत्सरमुपावसत् ॥ १ ॥
ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः ।
अचलः स्थाणुवत् स्थित्वा रात्रिं दिवमतन्द्रितः ॥ २ ॥
अथ संवत्सरे पूर्णे सर्वदेवनमस्कृतः ।
उमापतिः पशुपतिर्भगीरथमभाषत ॥ ३ ॥
प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि प्रियं महत् ।
पतन्तीं धारयिष्यामि दिवस्त्रिपथगां नदीं ॥ ४ ॥
ततो हिमवतः शृङ्गमधिरुह्य महेश्वरः ।
निपतेत्यब्रवीद्गङ्गामाभाष्याकाशगां नदीं ॥ ५ ॥
जटाकलापं विपुलं विनिकीर्य समन्ततः ।
बहुयोजनविस्तीर्णं शैलकन्दरसंनिभं ॥ ६ ॥
तस्मिन् पपात गगणाद्गङ्गा देवनदी च्युता ।
वेगेन महता राम शिरस्यमिततेजसः ॥ ७ ॥
तत्र संवत्सरं पूर्णं बभ्राम परिमोहिता ।
गङ्गा शिरसि देवस्य विसृता वेगवाहिनी ॥ ८ ॥
ततः प्रसादयामास पुनरेव भगीरथः ।
गङ्गायाः परिमोक्षार्थं महादेवमुपापतिं ॥ ९ ॥

तस्याथ वचनाद्गङ्गामुत्ससर्ज तदा हरः ।
जटामेकां समाक्षिप्य श्रोतः संजनयन् स्वयं ॥ १० ॥
श्रोतसा तेन सुस्राव गङ्गा त्रिपथगामिनी ।
पावयन्ती जगद्धाम पुण्या देवनदी शुभा ॥ ११ ॥
ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तथा ।
विमानैर्विविधै राम हयैर्गजवरैस्तथा ॥ १२ ॥
परिप्लवगताश्चापि देवतास्तत्र विष्ठिताः ।
स्वयं चानुजगामैनां ब्रह्मा लोकपितामहः ॥ १३ ॥
तदद्भुततमं लोके गङ्गापतनमुत्तमं ।
दिदृक्षवो देवगणाः समीयुरमितौजसः ॥ १४ ॥
संपतद्भिः सुरगणैस्तेषां चाभरणोज्वलं ।
शतादित्यमिवासीत् तु गगणं गततोयदं ॥ १५ ॥
क्वचिद्द्रुततरं प्रायात् कुटिलं क्वचिदायतं ।
विततं क्वचिदुद्धूतं शनैरपि पुनः क्वचित् ॥ १६ ॥
सलिलेनैव सलिलं क्वचिदभ्याबधीत्पुनः ।
शिशुमारोरगगणैर्मीनैरपि च चञ्चलैः ॥ १७ ॥
विद्युद्भिरिव विक्षिप्तैराकाशमभवद्वृतं ।
पाण्डुरैः सलिलोत्पीडैः कीर्यमाणं सहस्रधा ॥ १८ ॥
शरच्छुभ्रमिवाभाति गगणं हंससंप्लवैः ।
मुहुरूर्ध्वमधो गत्वा पपात धरणीतले ॥ १९ ॥

तच्छङ्करशिरोभ्रष्टं गतं भूमितलं पयः ।
ग्रहाः सगणगन्धर्वा वसुधातलवासिनः ॥ २० ॥
नागाश्च शोधयामासुर्मार्गमस्य महौजसः ।
भवाङ्गसंगते तोये पवित्रे तत्र पूजिते ॥ २१ ॥
कृत्वाभिषेकं ते सर्वे बभूवुर्गतकल्मषाः ।
शापात् प्रपतिता ये च गगणाद्वसुधातलं ॥ २२ ॥
पूतात्मानः पुनस्तेन सलिलेन दिवं गताः ।
जेपुर्देवर्षयो जप्यं सिद्धाश्च परमर्षयः ॥ २३ ॥
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
मुनिसंघा मुमुदिरे प्रह्लादं जगदाप्तवान् ॥ २४ ॥
त्रयोऽपि लोका मुदिता गङ्गावतरणे तदा ।
भगीरथो हि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥ २५ ॥
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वयात् ।
महातरङ्गौघवती प्रनृत्यन्तीव राघव ॥ २६ ॥
स्ववेगोद्धामितजला फेनमालावतंसिका ।
महाजलावर्तवती महावेगप्रवाहिनी ॥ २७ ॥
प्रययौ विलसन्तीव भगीरथपथानुगा ।
देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ॥ २८ ॥
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ।
सर्वाश्चाप्सरसो राम भगीरथरथानुगाः ॥ २९ ॥

गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ।
यतो भगीरथो गच्छेत् ततो गङ्गा यशस्विनी ॥ ३० ॥
जगाम नरशार्दूल सर्वलोकनमस्कृता ।
स गत्वा सागरं राजा गङ्गयानुगतस्तदा ॥ ३१ ॥
प्रविवेश तलं भूमेः खातं यत् सगरात्मजैः ।
उपानीय ततो गङ्गां रसातलतलं प्रभुः ॥ ३२ ॥
तर्पयामास तान् सर्वान् भस्मभूतान् पितामहान् ।
अथ गङ्गाम्भसा तेन प्लाविताः सगरात्मजाः ॥ ३३ ॥
दिव्यमूर्तिधरा भूत्वा जग्मुः स्वर्गं मुदान्विताः ।
तान् दृष्ट्वा प्लावितान् सर्वान् पितॄंस्तेन महात्मना ॥ ३४ ॥
भगीरथमुवाचेदं ब्रह्मा सुरगणैः सह ।
तारिता नरशार्दूल त्वया पूर्वपितामहाः ॥ ३५ ॥
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ।
अन्वयः सगरस्यायं नाम्ना ख्यातो महोदधिः ॥ ३६ ॥
व्यक्तं सागर इत्येव ख्यातिं लोके गमिष्यति ।
यावच्च सागरो लोके स्थितोऽयमिह शाश्वतः ॥ ३७ ॥
सगरः सहितः पुत्रैस्तावत् स्वर्गे निवत्स्यति ।
इयं च दुहिता राजंस्तत्र गङ्गा भविष्यति ॥ ३८ ॥
भागीरथीति विख्याता त्रिषु लोकेषु विश्रुता ।
गङ्गेति गमनाद्भूमेः ख्याता भागीरथीति च ॥ ३९ ॥

भविष्यति सरिच्छ्रेष्ठा लोके त्रिपथगेति च ।
त्रिपथेति च नामास्यास्त्रिमार्गगमनादिदं ॥ ४० ॥
त्रीँल्लोँकान् प्लावयन्त्या वै सुरर्षिभिरुदाहृतं ।
द्वितीयं चापि गङ्गेति गां गताया विशां पते ॥ ४१ ॥
भागीरथीति चाप्येतत् तृतीयं नाम सुव्रत ।
त्वत्प्रीत्या च भविष्यति सुतेयं ते विचक्षण ॥ ४२ ॥
यावच्च भुवि गङ्गेयं भविष्यति महानदी ।
तावत् तवाक्षया कीर्तिर्लोकेषु विचरिष्यति ॥ ४३ ॥
पितामहानां सर्वेषां त्वमत्र मनुजाधिप ।
कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय ॥ ४४ ॥
पूर्वजेनापि ते राजंस्तेनातियशसा सता ।
धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ४५ ॥
तथैवांशुमता तात लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयमानेन न प्राप्तः काम एष हि ॥ ४६ ॥
राजर्षीणां पुराणानां महर्षिसमतेजसां ।
अतुल्यतपसा चापि क्षत्रधर्मस्थितेन च ॥ ४७ ॥
दिलीपेन महाभाग तव पित्रातितेजसा ।
पुनर्न शकितं तेन गङ्गां प्रार्थयतानघ ॥ ४८ ॥
सा त्वया समनुप्राप्ता प्रतिज्ञा पुरुषर्षभ ।
प्राप्तोऽसि परमं लोके यशस्त्रिदशसंमतं ॥ ४९ ॥

यच्च गङ्गावतरणं त्वया कृतमरिंदम ।
अनेन सुमहत्तू प्राप्तं धर्मस्थानं त्वयानघ ।। ५० ।।
पावयस्व त्वमात्मानं नरोत्तम सदोचिते ।
सलिले पुरुषश्रेष्ठ शुचिः पुण्यफलो भव ।। ५१ ।।
पितामहानां सलिलं कुरुष्व च यथासुखं ।
स्वस्ति तेऽस्तु गमिष्यामि स्वर्लोकं नरपुंगव ।। ५२ ।।
इत्युक्त्वा भगवान् ब्रह्मा भगीरथमरिंदमं ।
जगाम सहितो देवैर्ब्रह्मलोकमनामयं ।। ५३ ।।
भगीरथोऽपि राजर्षिः कृत्वा तेषां जलक्रियां ।
पितामहानां सर्वेषामयोध्यां पुनरागमत् ।। ५४ ।।
समृद्धार्थो नरश्रेष्ठो राज्यं चानुशशास ह ।
प्रमुमोद च लोकस्तं नृपमासाद्य राघव ।। ५५ ।।
इति ते राम गङ्गाया विस्तरोऽभिहितो मया ।
स्वस्ति प्राप्नुहि भद्रं ते संध्याकाल उपस्थितः ।। ५६ ।।
धन्यं यशस्यमायुष्यं स्वर्ग्यं पावनमेव च ।
इदमाख्यानमाख्यातं गङ्गावतरणं मया ।। ५७ ।।

इत्यार्षे रामायणे आदिकाण्डे गङ्गावतरणं नाम
पञ्चचत्वारिंशः सर्गः ।।

## XLVI.

विश्वामित्रवचः श्रुत्वा रामो दशरथात्मजः ।
विस्मयं परमं गत्वा प्रोवाचेदं वचस्तदा ॥ १ ॥
अत्यद्भुतमुपाख्यानं त्वयाख्यातं महामुने ।
गङ्गावतरणं पुण्यं सागरस्य च पूरणं ॥ २ ॥
इयं नो रजनी पुण्या क्षणभूता भविष्यति ।
इमां चिन्तयतामेव कथां पापभयापहां ॥ ३ ॥
ततः सा रजनी पुण्या सह सौमित्रिणा तदा ।
गता चिन्तयतस्तस्य विश्वामित्रस्य तां कथां ॥ ४ ॥
ततः प्रभाते विमले विश्वामित्रं महामुनिं ।
उवाच रामः सत्कृत्य कृताञ्जलिकमिदं वचः ॥ ५ ॥
गता भगवती रात्रिः श्रोतव्यं परमं श्रुतं ।
संतरामः सरिच्छ्रेष्ठां पुण्यां त्रिपथगां नदीं ॥ ६ ॥
दृढेयं नौः सुविस्तीर्णा संतारयितुमापगां ।
भवन्तमिह संप्राप्तं दृष्ट्वैवेति मतिर्मम ॥ ७ ॥
इत्येतद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः ।
संतारं कारयामास विश्वामित्रो महामुनिः ॥ ८ ॥
उत्तरं तीरमासाद्य ततः स मुनिपुंगवः ।
अपश्यत् तत्र निरतांस्तापसान् नियतव्रतान् ॥ ९ ॥

स तान् संपूज्य विधिवज्जगाम सहराघवः ।
विशालस्य पुरीं रम्यां दिव्यां स्वर्गपुरीमिव ॥ १० ॥
तत्र रामो महाबुद्धिर्विश्वामित्रमिदं तदा ।
पप्रच्छ प्राञ्जलिर्भूत्वा वैशालीं प्राप्य तां पुरीं ॥ ११ ॥
कतमो राजवंशोऽयं विशालस्य महात्मनः ।
श्रोतुमिच्छामि भगवन् कौतूहलसमन्वितः ॥ १२ ॥
तस्येदं वचनं श्रुत्वा रामस्य विदितात्मनः ।
आख्यातुमुपचक्राम विश्वामित्रो महातपाः ॥ १३ ॥
श्रुता मयेयं शक्रस्य पुरा कथयतः कथा ।
यथा दिविषदां मध्ये शृणु तां मम राघव ॥ १४ ॥
आसन् कृतयुगे राम दितेः पुत्रा महाबलाः ।
अदितेश्च महावीर्याः स्ववीर्यबलदर्पिताः ॥ १५ ॥
भ्रातरः स्पर्धिनः पुत्राः कश्यपस्य महात्मनः ।
मातृष्वसेयाः सापत्न्याः परस्परजिगीषवः ॥ १६ ॥
तेषां किल समेतानां बुद्धिरासीन्महौजसां ।
अजराश्चामराश्चैव कथं स्यामेति राघव ॥ १७ ॥
तेषां चिन्तयतामेव बुद्धिरासीद्विनिश्चिता ।
क्षीरोदं सागरं सर्वे मथ्नीमः सहिता वयं ॥ १८ ॥
नानौषधीः समाहृत्य प्रक्षिप्य च ततस्ततः ।
यत् तत्रोत्पत्स्यते सारं तत् पास्यामस्ततो वयं ॥ १९ ॥

तेनाजरामरा लोके भविष्यामो गतज्वराः ।
तेजोवीर्यबलोपेताः कान्तिद्युतिसमन्विताः ॥ २० ॥
इति ते निश्चयं कृत्वा ममन्थुर्वरुणालयं ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिं ॥ २१ ॥
अप्सु निर्मथ्यमानासु रसात् तस्माद्वरस्त्रियः ।
उत्पेतुरम्भसो यस्मात् तस्मादप्सरसोऽभवन् ॥ २२ ॥
षष्टिः कोट्योऽभवन् राम तासामप्सरसां तदा ।
दिव्यानां दिव्यरूपाणां दिव्याभरणवाससां ॥ २३ ॥
रूपयौवनमाधुर्यगुणाढ्यानां सुवर्चसां ।
असंख्येया बभूवुश्च यास्तासां परिचारिकाः ॥ २४ ॥
न ता वै जगृहुर्देवास्तत्र दैत्याश्च राघव ।
अप्रतिग्रहणात् ताश्च सर्वाः साधारणीकृताः ॥ २५ ॥
वरुणस्य ततः कन्या वारुणी रघुनन्दन ।
उत्पपात रसात् तस्मान्मार्गमाणा परिग्रहं ॥ २६ ॥
दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजां ।
अदितेस्तु सुताः प्रीतास्तामगृह्णन्त वै तदा ॥ २७ ॥
सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुताः ।
अप्रतिग्रहणात् तस्या दैतेयाश्चासुराः स्मृताः ॥ २८ ॥
उच्चैःश्रवाश्च तत्राश्वो मणिरत्नं च कौस्तुभं ।
तस्मादेव समुद्भूतममृतं चाप्यनन्तरं ॥ २९ ॥

अमृतानन्तरं चापि धन्वन्तरिरजायत ।
वैद्यराजोऽमृतस्यैव बिभ्रत् पूर्णं कमण्डलुं ॥ ३० ॥
धन्वन्तरेरनूद्भूतं विषं लोकविषादकृत् ।
तन्नागा जगृहुः सर्वे ज्वलनादित्यसंनिभं ॥ ३१ ॥
तदामृतार्थे देवानामसुराणां च विग्रहः ।
आसीद्बलवतां राम लोकक्षयकरो महान् ॥ ३२ ॥
तस्मिन् विमर्दे महति तेषाममिततेजसां ।
अदितेरात्मजा राम निजघ्नुस्तान् दितेः सुतान् ॥ ३३ ॥
निहत्य च दितेः पुत्रान् राज्यं प्राप्य पुरंदरः ।
मुमोदर्द्धिं परां प्राप्य सर्वदेवाभिपूजितः ॥ ३४ ॥
विज्वरो निहतामित्रो मुमुदे विबुधैः सह ।
तदा च मुदिता लोकाः सर्षिसंघाः सचारणाः ॥ ३५ ॥

इत्यार्षे रामायणे आदिकाण्डे अमृतोत्पत्तिर्नाम
षट्चत्वारिंशः सर्गः ॥

# रामायणं

## XLVII.

हतपुत्रा ततो देवैर्दितिः परमदुःखिता ।
मारीचं कश्यपं देवी भर्तारमिदमब्रवीत् ॥ १ ॥
हतपुत्रास्मि भगवन् पुत्रैः शक्रादिभिस्तव ।
शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोऽर्जितं ॥ २ ॥
साहं तपश्चरिष्यामि गर्भमाधातुमर्हसि ।
तत्र मे शक्रहन्तारं पुत्रं त्वं जनयिष्यसि ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तदा ।
प्रत्युवाच महातेजा दितिं परमदुःखितां ॥ ४ ॥
एवं भवतु भद्रं ते शुचिर्भव तपोधने ।
जनयिष्यसि पुत्रं त्वं शक्रहन्तारमीप्सितं ॥ ५ ॥
पूर्णे वर्षसहस्रे त्वं शुचिर्यदि भविष्यसि ।
एवमुक्त्वा महातेजाः पाणिना स ममार्ज तां ॥ ६ ॥
संस्पृश्य चोक्त्वा स्वस्तीति जगाम तपसे मुनिः ।
गते तस्मिन् रघुश्रेष्ठ दितिः परमहर्षिता ॥ ७ ॥
उदकप्रवणे देशे तप आतिष्ठदुत्तमं ।
चरन्त्यास्तु तपस्तस्याः परां संनतिमास्थितः ॥ ८ ॥
परिचर्यां स्वयं शक्रश्चकारोत्पत्य तत्परः ।
समित्कुशं मूलफलं पुष्पमग्निं तथा जलं ॥ ९ ॥

प्रयत्नवानाञ्चकार तस्याः काले पुरंदरः ।
गात्रसंवाहनं कुर्वन् श्रमापनयनं तथा ॥ १० ॥
शक्रः सर्वेषु कार्येषु दितिं परिचचार ह ।
गते वर्षसहस्रे तु दशोने रघुनन्दन ॥ ११ ॥
दितिः प्रीता सहस्राक्षमिदं वचनमब्रवीत् ।
प्रीता तेऽहं महावीर्य दश वर्षाणि पुत्रक ॥ १२ ॥
अवशेषाणि भद्रं ते द्रष्टासि भ्रातरं ततः ।
तमहं त्वत्कृते पुत्र समाधास्ये जयोत्सुकं ॥ १३ ॥
सौभ्रात्रेणैव सहितस्त्वं हि राज्यमवाप्स्यसि ।
एवमुक्त्वा ततः शक्रं विश्वस्ता शक्रसंनिधौ ॥ १४ ॥
निद्रयापहृता देवी मध्यं प्राप्ते दिवाकरे ।
कृतपादा शिरःस्थाने दितिः सुष्वाप राघव ॥ १५ ॥
दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्धजां ।
कृतपादां शिरःस्थाने मुमोद च जहास च ॥ १६ ॥
तस्याः शरीरं विवृतं प्रविश्य बलसूदनः ।
बिभेद सप्तधा गर्भं वज्रेण शतपर्वणा ॥ १७ ॥
एकैकं चैव गर्भांशं पुनश्चिच्छेद सप्तधा ।
विस्फुरन्तं बलाद्राम रुदन्तं चार्तया गिरा ॥ १८ ॥
भिद्यमानस्तदा गर्भः कुक्षौ वज्रेण वज्रिणा ।
रुरोद सुस्वरं राम ततो दितिरबुध्यत ॥ १९ ॥

मा रोधीरिति तं शक्रः प्ररुदन्तमभाषत ।
बिभेद चैनं वज्रेण रुदन्तमपि वासवः ॥ २० ॥
न हन्तव्यो न हन्तव्य इति तं दितिरब्रवीत् ।
निर्ययौ च ततः शक्रो मातुर्वचनगौरवात् ॥ २१ ॥
प्राञ्जलिश्चाब्रवीदेनां विनिःसृत्याग्रतः स्थितः ।
अशुचिर्देवि सुप्तासि पादयोः कृतमूर्धजा ॥ ॥२२ ॥
लब्धा तदन्तरं चाहं मद्विनाशार्थमाहितं ।
गर्भं ते हतवान् देवि तन्मे त्वं हन्तुमर्हसि ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे गर्भभेदो नाम
सप्तचत्वारिंशः सर्गः ॥

## XLVIII.

एकोनपञ्चाशद्धा तु भिन्ने गर्भे ततो दितिः ।
सहस्राक्षं दुराधर्षमुवाच भृशदुःखिता ॥ १ ॥
ममापराधाद्गर्भोऽयं बहुधा विदलीकृतः ।
नापराधोऽस्ति देवेश तवात्रात्महितैषिणः ॥ २ ॥
एवं गतेऽपि शक्र त्वं प्रियं मे कर्तुमर्हसि ।
इमे ते सप्तकाः सप्त मरुतो नाम विश्रुताः ॥ ३ ॥
चरन्त्वाज्ञाकराः सप्तवातस्कन्धेषु सप्तसु ।
सहैभिर्मम पुत्रैस्त्वं मरुद्भिर्जहि शात्रवान् ॥ ४ ॥
ब्रह्मलोके चरन्त्वेक इन्द्रलोके तथापरे ।
दिक्षु चैतासु सर्वासु विचरन्तु तवाज्ञया ॥ ५ ॥
दिव्यमूर्तिधरा भूत्वा मरुतोऽमृतभोजनाः ।
तवैवाज्ञाकराः शक्र कुरुष्वैतद्वचो मम ॥ ६ ॥
तस्यास्तद्वचनं श्रुत्वा शक्रः शक्तिमतां वरः ।
उवाच प्राञ्जलिर्वाक्यमेवमस्त्विति राघव ॥ ७ ॥
त्वत्कृतेनैव नाम्ना हि भविष्यन्ति तवात्मजाः ।
ख्याता मरुत इत्येते दिव्यरूपा ममाज्ञया ॥ ८ ॥
सर्वमेतद्यथाकामं करिष्येऽहमशेषतः ।
अमृतप्राशिनः पुत्रा इमे ते सहिता मया ॥ ९ ॥

विचरिष्यन्ति लोकांस्त्रीन् निर्भया विगतज्वराः ।
निर्वृता भव भद्रं ते करिष्ये वचनं तव ॥१०॥
सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ।
एवं तौ निश्चयं कृत्वा मातापुत्रौ परस्परं ॥११॥
जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतं ।
एष देशः स काकुत्स्थ महेन्द्राध्युषितः पुरा ॥१२॥
दितिं यत्र तपःसिद्धामेवं परिचचार सः ।
इक्ष्वाकोरत्र राजर्षेः पुत्रः परमधार्मिकः ॥१३॥
अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः ।
तेनेयं निर्मिता राम वैशाली नगरी शुभा ॥१४॥
विशालस्य सुतो राम हेमचन्द्रोऽभवन्नृपः ।
सुचन्द्र इति विख्यातो हैमचन्द्रिर्महायशाः ॥१५॥
सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः ।
धूम्राश्वतनयश्चापि सृञ्जयः समजायत ॥१६॥
सृञ्जयस्य सुतस्त्वासीत् स्वर्णष्ठीवीति विश्रुतः ।
स्वर्णष्ठीविसुतश्चापि कुशाश्व इति विश्रुतः ॥१७॥
कुशाश्वस्य महातेजाः सोमदत्तः सुतोऽभवत् ।
सोमदत्तस्य काकुत्स्थ सुतोऽभूज्जननेजयः ॥१८॥
तस्य पुत्रोऽद्य काकुत्स्थ पात्येतां साम्प्रतं पुरीं ।
धर्मात्मा नरशार्दूल प्रमतिर्नाम वीर्यवान् ॥१९॥

इक्ष्वाकवः सर्व एव ख्याता वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तो महाबलाः ॥ २० ॥
इहाद्य रजनीं राम सुखं वत्स्यामहे वयं ।
श्वः प्रभाते तु जनकं ध्रुवं द्रक्ष्याम राघव ॥ २१ ॥
प्रमतिस्तं ततः श्रुत्वा विश्वामित्रमुपागतं ।
प्रत्युद्गम्य महात्मानं पूजयामास पार्थिवः ॥ २२ ॥
पाद्यार्घासनदानेन सोपाध्यायगणस्तदा ।
प्राञ्जलिः कुशलं चैनं पृष्ट्वेदं वाक्यमब्रवीत् ॥ २३ ॥
प्रीतोऽस्म्यनुगृहीतश्च यस्य मे विषयं मुने ।
संप्राप्तो दर्शनं चैव नास्ति धन्यतरो मम ॥ २४ ॥
अद्य मे सफलं जन्म संवृत्तश्च मनोरथः ।
यत् त्वां कुशलिनं ब्रह्मन् पश्यामि समुपागतं ॥ २५ ॥

इत्यार्षे रामायणे आदिकाण्डे प्रमतिसमागमो नाम
अष्टचत्वारिंशः सर्गः ॥

## XLIX.

पृष्ट्वा तु कुशलं प्रश्नं परस्परमशेषतः ।
कथान्ते प्रमतिस्तत्र विश्वामित्रमभाषत ॥ १ ॥
इमौ कुमारौ भगवन् कुतः कस्य च शंस मे ।
किमर्थं च त्वया सार्धं भ्रमेते देवरूपिणौ ॥ २ ॥
सिंहर्षभगती वीरौ शार्दूलवृषभाविव ।
पद्मपत्रविशालाक्षौ वरायुधधरावुभौ ॥ ३ ॥
अश्विनाविव रूपेण समुपस्थितयौवनौ ।
यदृच्छया क्षितिं प्राप्तौ देवलोकादिवामरौ ॥ ४ ॥
कथं पद्मामिह प्राप्तौ किमर्थं कस्य वा मुने ।
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरं ॥ ५ ॥
परस्परस्य सदृशौ प्रमाणस्थितिचेष्टितैः ।
वराम्बरधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ६ ॥
तस्यैतद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत् ।
सिद्धाश्रमकथां चैव राक्षसानां बधं च सः ॥ ७ ॥
विश्वामित्रवचः श्रुत्वा प्रमतिर्भृशविस्मितः ।
अतिथी पूजयामास पुत्रौ दशरथस्य तौ ॥ ८ ॥
ततः परमसत्कारं प्रमतेः प्राप्य राघवौ ।
उषित्वा च निशां तत्र जग्मतुर्मिथिलां प्रति ॥ ९ ॥

तां दृष्ट्वा दूरतः सर्वे जनकस्य पुरीं शुभां ।
मुनयो हृष्टमनसः शशंसुः साधु साध्विति ॥ १० ॥
मिथिलोपवने तस्मिन्नाश्रमं प्रेक्ष्य राघवः ।
पप्रच्छ मुनिशार्दूलं किमिदं निर्जनं वनं ॥ ११ ॥
श्रीमानविरलच्छायो मुनिसंघविवर्जितः ।
श्रोतुमिच्छामि भगवन् कस्यासीदयमाश्रमः ॥ १२ ॥
इति तस्य वचः श्रुत्वा विश्वामित्रोऽभ्यभाषत ।
रामं कमलपत्राक्षमाभाष्य मधुरं वचः ॥ १३ ॥
हन्त ते कथयिष्यामि शृणु यस्यायमाश्रमः ।
यथा शून्योऽभवच्चायं शप्तः कोपान्महात्मना ॥ १४ ॥
गौतमस्याश्रमः पुण्यो ह्ययमासीन्महात्मनः ।
नित्यं पुष्पफलोपेतैः पादपैरुपशोभितः ॥ १५ ॥
स चेह तप आतिष्ठदहल्यासहितो मुनिः ।
संवत्सरसहस्राणि बहूनि रघुनन्दन ॥ १६ ॥
तस्यान्तरं विदित्वाथ कामार्तस्त्रिदिवेश्वरः ।
मुनिवेशधरो भूत्वा सोऽहल्यामिदमब्रवीत् ॥ १७ ॥
ऋतुकालः प्रतीक्ष्योऽपि न प्रतीक्षे सुमध्यमे ।
संगमं शीघ्रमिच्छामि पृथुश्रोणि सह त्वया ॥ १८ ॥
मुनिवेशधरं शक्रं सा ज्ञात्वापि परंतप ।
मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ १९ ॥

अब्रवीच्च सुरश्रेष्ठं कृतार्था सा वचस्तदा ।
कृतार्थाऽस्मि सुरश्रेष्ठ गच्छ शीघ्रमलक्षितः ॥ २० ॥
आत्मानं मां च देवेश सर्वथा रक्ष मानद ।
तामिन्द्रः प्रहसन् वाक्यमहल्यामिदमब्रवीत् ॥ २१ ॥
सुश्रोणि परितुष्टोऽस्मि गमिष्यामि क्षमस्व मे ।
एवमुक्त्वा ततोऽहल्यां निष्क्रामन्नुटजान्मुनेः ॥ २२ ॥
संभ्रमात् त्वरितो राम शङ्कितो गौतमं प्रति ।
ददर्श सहसायान्तं गौतमं दीप्ततेजसं ॥ २३ ॥
देवैरपि सुदुर्धर्षं तपोवीर्यबलाश्रयात् ।
पुण्यतीर्थोदकक्लिन्नमाज्यक्लिन्नमिवानलं ॥ २४ ॥
दृष्ट्वा च तं तदा शक्रो विषादमगमत् परं ।
सोऽपि दृष्ट्वैव देवेन्द्रं मुनिवेशधरं मुनिः ॥ २५ ॥
दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ।
मम रूपं समास्थाय कृतवानसि दुर्मते ॥ २६ ॥
अकर्तव्यमिदं यस्मात् तस्मात् त्वं विफलो भव ।
गौतमेनैवमुक्तस्य सरोषेण महात्मना ॥ २७ ॥
पेततुर्वृषणौ भूमौ सहस्राक्षस्य राघव ।
व्यथितः स तदा चासीद्गतौजा विफलीकृतः ॥ २८ ॥
धर्षितस्तपसोग्रेण कश्मलं चापि सोऽविशत् ।
तं शप्त्वैव मुनिवरो भार्यां तामपि शप्तवान् ॥ २९ ॥

वर्षपूगानसंख्येयांस्त्वं पापे दुष्टचारिणि ।
तप्यमाना निरालम्बा सततं भस्मशायिनी ॥३०॥
अदृश्या सर्वभूतानां वनेऽस्मिंस्त्वं निवत्स्यसि ।
यदा त्विदं वनं घोरं रामो दशरथात्मजः ॥३१॥
आगमिष्यति तं दृष्ट्वा धूतपापा भविष्यसि ।
तस्यातिथ्यं सुदुर्मेधे कृत्वा लोभविवर्जिता ॥३२॥
मत्समीपं मुदोपेता समुपैष्यस्यसंशयं ।
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीं ॥३३॥
पुण्यदेशं समासाद्य सिद्धचारणसेवितं ।
हिमवच्छिखरं गत्वा तपस्तेपे सुदुश्चरं ॥३४॥

इत्यार्षे रामायणे आदिकाण्डे शक्राहल्याशापो नाम
एकोनपञ्चाशः सर्गः ॥

# रामायणं

## L.

विफलस्तु कृतः शक्रो देवानग्निपुरोगमान् ।
अब्रवीत् त्रस्तमानसः सहसिद्धर्षिचारणान् ॥ १ ॥
कुर्वता तपसो विघ्नं प्राप्तेयं विक्रिया मया ।
गौतमात् क्रोधमुत्पाद्य सुरकार्यचिकीर्षुणा ॥ २ ॥
अफलोऽहं कृतस्तेन क्रोधात् सा च निराकृता ।
शापमोक्षेण तेनास्य तपोविघ्नः कृतो मया ॥ ३ ॥
तन्मां सुरगणाः सर्वे सर्षिसंघाः सचारणाः ।
सुरकार्यार्थमफलं सफलं कर्तुमर्हथ ॥ ४ ॥
शतक्रतोर्वचः श्रुत्वा देवा अग्निपुरोगमाः ।
ऊचुः पितृगणान् वाक्यमिदं तत्र समागतान् ॥ ५ ॥
एष मेषः सवृषणः शक्रश्चावृषणीकृतः ।
अस्येमौ वृषणौ छित्त्वा महेन्द्राय प्रयच्छत ॥ ६ ॥
अफलस्तु कृतो मेषः परां तुष्टिमुपैष्यति ।
भवतामुपयोगेन तच्चास्य सुमहत् फलं ॥ ७ ॥
तस्मान्मेषस्य वृषणौ छित्त्वेमौ दातुमर्हथ ।
इन्द्राय सुरकार्यार्थं विफलाय पितामहाः ॥ ८ ॥
श्रुत्वाथाग्निपुरोगानां देवानां पितरो वचः ।
उत्कृत्य मेषवृषणाविन्द्रायोपददुस्तदा ॥ ९ ॥

ततःप्रभृति काकुत्स्थ पितरः कव्यभोजिनः ।
अफलं भुञ्जते मेषं सफलं तु न भुञ्जते ॥ १० ॥
इन्द्रश्च मेषवृषणस्ततःप्रभृति राघव ।
गौतमस्य प्रभावेन बभूवामिततेजसः ॥ ११ ॥
तस्मात् प्रविश रामाशु गौतमस्याश्रमं विभो ।
तारयेमां महाभागामहल्यां शापविह्वतां ॥ १२ ॥
विश्वामित्रवचः श्रुत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य प्रविवेशाश्रमं ततः ॥ १३ ॥
स ददर्श महाभागां तपसा द्योतितप्रभां ।
सेन्द्रैरपि सुरैः साक्षादनालक्ष्यां समागतैः ॥ १४ ॥
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ।
धूमेनाभिपरीताङ्गीं दीप्तामग्निशिखामिव ॥ १५ ॥
तुषारेणावृतां साभ्रां पूर्णचन्द्रप्रभामिव ।
मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १६ ॥
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।
त्रयाणामपि लोकानां यावद्रामस्य दर्शनं ॥ १७ ॥
दृष्ट्वैव राघवौ तस्याः पादौ जगृहतुस्तदा ।
सा च तौ पूजयामास स्मृत्वा गौतमभाषितं ॥ १८ ॥
पाद्यार्घ्यासनसत्कारैर्यथावत् प्रीतमानसा ।
प्रतिजग्राह रामश्च पूजां तां विधिवत् तदा ॥ १९ ॥

सस्वनुर्देववाद्यानि पुष्पवृष्टिः पपात खात् ।
गन्धर्वाप्सरसां चैव महानासीत् समागमः ।। २० ।।
साधु साधिति देवाश्च तदाहल्यामपूजयन् ।
विशुद्धां तपसोग्रेण तदा रामसमागमे ।। २१ ।।
गौतमोऽथ महातेजा दृष्ट्वा दिव्येन चक्षुषा ।
स्वमाश्रमपदं राममागतं प्रत्यपूजयत् ।। २२ ।।
समेत्य भार्यया चैव पूतयाहल्यया तदा ।
तथैव सहितो भूयस्तपस्तेपे महायशाः ।। २३ ।।
रामोऽपि परमां पूजां गौतमादृषिसत्तमात् ।
अवाप्य विधिवत् तस्माज्जगाम मिथिलां प्रति ।। २४ ।।

इत्यार्षे रामायणे आदिकाण्डे अहल्यादर्शनं नाम
पञ्चाशः सर्गः ।।

# आदिकाण्डं

## LI.

ततः प्रागुत्तरां गत्वा दिशं रामः सलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटं ददर्श ह ॥ १ ॥
तं रामो मुनिशार्दूलं दृष्ट्वा यज्ञमभाषत ।
अहो समृद्धिर्यज्ञस्य जनकस्य महात्मनः ॥ २ ॥
बहूनीह सहस्राणि नानादेशनिवासिनां ।
समागतानां विप्राणां देशभाषाधिकारिणां ॥ ३ ॥
दृश्यन्ते ब्राह्मणानां च वासा ब्रह्मरथाः कृताः ।
देशः परीक्ष्यतां ह्यो वत्स्यामो यत्र वै वयं ॥ ४ ॥
इति रामवचः श्रुत्वा विश्वामित्रो महामनाः ।
निवेशमकरोद्देशे विविक्ते सलिलप्लुते ॥ ५ ॥
विश्वामित्रमृषिं प्राप्तं श्रुत्वाथ मिथिलेश्वरः ।
शतानन्दं पुरस्कृत्य पुरोहितमकल्मषं ॥ ६ ॥
ऋत्विग्भिः सहितश्चान्यैरादायार्घ्यं त्वरान्वितः ।
विश्वामित्राय सत्कृत्य ददौ मन्त्रपुरस्कृतं ॥ ७ ॥
प्रतिगृह्य स तां पूजां जनकान्मुनिसत्तमः ।
पप्रच्छानामयं चैव यज्ञसामृद्ध्यमेव च ॥ ८ ॥
तांश्चैवान्यान् मुनीन् सर्वानागतान् सपुरोहितान् ।
यथान्यायं यथायोगं पर्यपृच्छदनामयं ॥ ९ ॥

# रामायणं

अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ।
आसने भगवन् क्लृप्ते उपवेष्टुमिहार्हसि ॥१०॥
जनकेनैवमुक्तोऽथ विश्वामित्रो महामुनिः ।
निषसाद ततश्चैनं स राजा मन्त्रिभिः सह ॥११॥
उपविष्टमुपेत्येदं कृताञ्जलिरभाषत ।
अमृतस्येव संप्राप्तिरद्य मे भगवन् मुने ॥१२॥
अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ।
अद्य यज्ञफलावाप्तिर्ममाभ्यागमनात् तव ॥१३॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महामुने ।
यज्ञस्यावभृथं पुण्यं द्रष्टासि सपदानुगः ॥१४॥
द्वादशाहं च शेषं मे यज्ञस्याहुर्द्विजातयः ।
ततो भागार्थिनो देवानिह द्रक्ष्यस्युपागतान् ॥१५॥
उष्यतामिह मत्प्रीत्या सहैभिर्ब्रह्मवादिभिः ।
एतान्यहानि सुसुखं ततो यास्यथ सत्कृताः ॥१६॥
एतौ च मुनिशार्दूल कुमाराविव पावकी ।
काकपक्षधरौ कस्य किमर्थं चाभ्युपागतौ ॥१७॥
व्यूढोरस्कौ दीर्घभुजौ खड्गतूणधनुर्धरौ ।
अश्विनोः सदृशौ रूपे कस्यातिप्रियदर्शनौ ॥१८॥
किमर्थं सुकुमाराङ्गावधानं संश्रितावुभौ ।
देवाविवानवद्याङ्गौ श्रोतुं कौतूहलं मम ॥१९॥

तस्यैतद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयन्महात्मानौ सुतौ दशरथस्य तौ ॥ २० ॥
तच्चागमनमव्यग्रं राक्षसानां च तं बधं ।
सिद्धाश्रमनिवासं च विशालस्य च दर्शनं ॥ २१ ॥
गौतमस्य च शापान्तमहल्यायाश्च दर्शनं ।
रामस्य धनुषश्चैव जिज्ञासार्थमुपागमं ॥ २२ ॥
इति सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे जनकसमागमो नाम
एकपञ्चाशः सर्गः ॥

## LII.

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा भृशं भूत्वा शतानन्दो महातपाः ॥ १ ॥
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसंदर्शनं प्राप्य विस्मयं परमं ययौ ॥ २ ॥
संनिषण्णावुभौ दृष्ट्वा सदृशौ रामलक्ष्मणौ ।
शतानन्दो मुनिश्रेष्ठं विश्वामित्रमभाषत ॥ ३ ॥
अपि त्वया मुनिश्रेष्ठ मम माता यशस्विनी ।
दर्शिता राजपुत्रस्य रामस्यास्य महात्मनः ॥ ४ ॥
अपि रामाय मे माता पूजार्हाय महात्मने ।
पूजां कृतवती सम्यगहल्या भृशदुःखिता ॥ ५ ॥
अपि रामाय कथितं यथावृत्तं पुरातनं ।
मम मातुर्महाबुद्धे दैवेन यदनुष्ठितं ॥ ६ ॥
अपि कौशिक माता मे संगता गुरुणा पुनः ।
शापाग्निदग्धा पित्रा मे रामदर्शननिर्मला ॥ ७ ॥
अपि प्रीतेन मनसा गुरुर्मे कुशिकात्मज ।
पूतां दीर्घेण तपसा मातरं मेऽभ्यनन्दत ॥ ८ ॥
अपि मे गुरुणा ब्रह्मन् पूजितोऽसि यथार्हतः ।
इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ९ ॥

तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महायशाः।
प्रत्युवाच शतानन्दं वाक्यं वाक्यविशारदः ॥१०॥
नातिक्रान्तमिदं ब्रह्मन् यत्कार्यं तत्कृतं मया।
संगता गुरुणा पत्नी भार्गवेणेव रेणुका ॥११॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः।
शतानन्दस्ततो राममिदं वचनमब्रवीत् ॥१२॥
स्वागतं ते रघुश्रेष्ठ दिष्ट्या प्राप्तोऽसि मे प्रभो।
विश्वामित्रेण सहित इमं यज्ञं महात्मनः ॥१३॥
अचिन्त्यो ह्येष धर्मात्मा राजर्षिरमितद्युतिः।
विश्वामित्रो महातेजा यश्च ते परमो गुरुः ॥१४॥
नास्ति धन्यतरो राम त्वदन्यो भुवि कश्चन।
यस्य ते हितकामोऽयं विश्वामित्रस्तपोनिधिः ॥१५॥
श्रूयतां च पुरावृत्तं कौशिकस्य महात्मनः।
यद्वीर्यो यत्प्रभावोऽयं यद्योगश्च महायशाः ॥१६॥
राजाभूदेष धर्मात्मा दीर्घकालमरिंदमः।
धर्मज्ञश्च क्रियावांश्च प्रजानां पालने रतः ॥१७॥
पितामहसुतस्त्वासीत् कुशो नाम महीपतिः।
कुशस्य पुत्रो बलवान् कुशनाभः सुधार्मिकः ॥१८॥
कुशनाभसुतस्त्वासीद्गाधिर्नाम महामतिः।
तस्य पुत्रो महातेजा विश्वामित्रो महामुनिः ॥१९॥

विश्वामित्रस्तु धर्मात्मा पालयन् मेदिनीमिमां ।
वर्षायुतान्यनेकानि राजा राज्यमकारयत् ।। २० ।।
कदाचित् स महातेजा योजयित्वा षडङ्गिनीं ।
अक्षौहिणीपरिवृतः परिचक्राम मेदिनीं ।। २१ ।।
सरितः पर्वतांश्चैव वनानि नगराणि च ।
विचरन् क्रमशो राजा आजगाम महायशाः ।। २२ ।।
वशिष्ठस्याश्रमपदं नानापुष्पफलद्रुमं ।
नानामृगगणाकीर्णं सिद्धचारणसेवितं ।। २३ ।।
तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ।
सततं संकुलं श्रीमद्ब्रह्मकल्पैर्महाव्रतैः ।। २४ ।।
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ।
फलमूलाशिभिर्दान्तैर्जितक्रोधैर्जितेन्द्रियैः ।। २५ ।।
प्रक्षालनैरश्मकुट्टैर्दन्तोलूखलिभिस्तथा ।
ऋषिभिर्बालखिल्यैश्च जपहोमपरायणैः ।। २६ ।।
वशिष्ठस्याश्रमपदं ब्रह्मस्थानमनुत्तमं ।
अपश्यज्जयतां श्रेष्ठो विश्वामित्रो महामनाः ।। २७ ।।

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्यं नाम
द्विपञ्चाशः सर्गः ।।

## LIII.

स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ।
प्रणतो विनयाद्वीरो वशिष्ठं जपतां वरं ॥१॥
स्वागतं च तवेत्युक्त्वा वशिष्ठेन महात्मना ।
आसनं तस्य विधिवत् प्रदिष्टं जगतीपतेः ॥२॥
उपविष्टाय च तदा विश्वामित्राय धीमते ।
वृष्यामग्र्यां मुनिवरः फलमूलमुपाहरत् ॥३॥
प्रतिगृह्य तु तां पूजां वशिष्ठाद्राजसत्तमः ।
तमग्निहोत्रे शिष्येषु पप्रच्छ कुशलं ततः ॥४॥
विश्वामित्रो महातेजा वनस्पतिगणैस्तथा ।
सर्वत्र कुशलं चोक्त्वा वशिष्ठो मुनिसत्तमः ॥५॥
सुखोपविष्टं राजानं विश्वामित्रं महातपाः ।
अपृच्छज्जयतां श्रेष्ठं गाधिजं ब्रह्मणः सुतः ॥६॥
कच्चित् ते कुशलं राजन् कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे नित्यं राजवृत्तेन धार्मिकः ॥७॥
कच्चित् ते सुभृता भृत्याः कच्चित् तिष्ठन्ति शासने ।
कच्चित् ते विजिताः सर्वे रिपवो रिपुसूदन ॥८॥
कच्चिद्बलेषु कोषेषु मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रेषु चानघ ॥९॥

सर्वत्र कुशलं राजा वशिष्ठं प्रत्युवाच ह ।
विश्वामित्रो महातेजास्तमथो विनयान्वितः ॥ १० ॥
कृत्वा तु सुचिरं कालं धर्मिष्ठां तां कथां तदा ।
मुदा परमया युक्तावभिनन्द्य परस्परं ॥ ११ ॥
ततो वशिष्ठो भगवान् कथान्ते मुनिसत्तमः ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२ ॥
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं प्रतिगृह्यतां ॥ १३ ॥
सत्क्रियां प्रतिगृह्णातु भवानिह मयोद्यतां ।
राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४ ॥
एवमुक्तो वशिष्ठेन विश्वामित्रो महीपतिः ।
कृतमित्यब्रवीद्राजा पूजा चानेन मे कृता ॥ १५ ॥
फलमूलेन भगवंस्तव यद्विद्यते प्रभो ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥
सर्वथैव महातेजः पूजार्हेणास्मि पूजितः ।
गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥ १७ ॥
एवं ब्रुवन्तं राजानं वशिष्ठः पुनरेव तु ।
न्यमन्त्रयदमेयात्मा पुनः पुनरुदारधीः ॥ १८ ॥
बाढमित्येव गाधेयो वशिष्ठं प्रत्युवाच ह ।
यथा प्रियं भगवतस्तथास्तु मुनिपुंगव ॥ १९ ॥

एवमुक्तो महातेजा वशिष्ठो जपतां वरः ।
आजुहाव ततः प्रीतः कामदां धूतकल्मषां ॥ २० ॥
एह्येहि शबले क्षिप्रं शृणु चैव वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितो ह्यहं ॥ २१ ॥
भोजनेन महार्हेण सत्कारं तद्विधत्स्व मे ।
यस्य यस्य यथा कामः षड्रसेष्वभिवाञ्छितः ॥ २२ ॥
तत् सर्वं कामधुग्दिव्ये अभिवर्षेह मत्कृते ।
रसैरन्नेन पानेन चोष्यलेह्येन सवरं ।
कुरु राज्ञोऽस्य शबले परमातिथ्यसत्क्रियां ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
विश्वामित्रनिमन्त्रणं नाम
त्रिपञ्चाशः सर्गः ॥

## LIV.

एवमुक्ता वशिष्ठेन शबला शत्रुसूदन ।
विदधे कामधुक् कामान् यस्य यस्य यथेप्सितान् ॥ १ ॥
इक्षून् मधूनि लाजांश्च मैरेयं च वरासवं ।
पानानि च महार्हाणि भक्ष्यांश्च विविधांस्तथा ॥ २ ॥
चोष्याश्चमोदनस्यापि राशीन् पर्वतसंनिभान् ।
मिष्टान्नानि तथा पूपान् दधिकुल्यास्तथैव च ॥ ३ ॥
नानास्वादुरसानां च षड्रसानामितस्ततः ।
भाजनानि सुपूर्णानि गौडानि च सहस्रशः ॥ ४ ॥
सर्वमासीत् सुसंतुष्टं हृष्टपुष्टजनाकुलं ।
विश्वामित्रबलं राम वशिष्ठेनाभितर्पितं ॥ ५ ॥
यस्य यस्य यथा कामस्तस्य तस्य तथा तथा ।
अभिवर्षति कामौघैः शबला शत्रुसूदन ॥ ६ ॥
एवमस्य बलं सर्वं सर्वकामाभिपूजितं ।
विश्वामित्रस्य राजर्षेर्हृष्टपुष्टं तदाभवत् ॥ ७ ॥
सान्तःपुरजनो राजा सब्राह्मणपुरोगमः ।
सामात्यमन्त्रिसहितः सभृत्यबलवाहनः ॥ ८ ॥
युक्तः परेण हर्षेण वशिष्ठमिदमब्रवीत् ।
पूजितोऽहं त्वया ब्रह्मन् पूजनार्हेण कामद ॥ ९ ॥

श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ।
गवां शतसहस्रेण दीयतां शबला मम ॥१०॥
रत्नं हि भगवन्नेतद्रत्नभागी च पार्थिवः ।
तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज ॥११॥
एवमुक्तस्तु भगवान् वशिष्ठो मुनिसत्तमः ।
विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिं ॥१२॥
नाहं शतसहस्रेण नापि कोटिशतैर्गवां ।
राजन् दास्यामि शबलां राशिभी रजतस्य वा ॥१३॥
न परित्यागमर्हेयं मत्सकाशादरिंदम ।
शाश्वती शबलेयं मे कीर्तिरात्मवतो यथा ॥१४॥
अत्र हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ॥१५॥
स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ।
आयत्ता ह्यत्र राजर्षे सर्व एते न संशयः ॥१६॥
सर्वमेतद्धि सत्यं ते मम पुष्टिकरं सदा ।
कारणैर्बहुभी राजन् न दास्ये नन्दिनीं तव ॥१७॥
वशिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीद्वचः ।
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥१८॥
सुवर्णकक्षान् ग्रैवेयान् सुवर्णाङ्कुशभूषणान् ।
ददामि कुञ्जरांस्तेऽहं सहस्राणि चतुर्दश ॥१९॥

हैरण्यानां रथानां च श्वेतानां वै चतुर्युजां ।
ददामि ते शतान्यष्टौ किङ्किणीशतघोषिणां ॥ २० ॥
हयानां देशजातानां कुलजानां महौजसां ।
सहस्रमेकं दश च ददामि तव सुव्रत ॥ २१ ॥
नानावर्णविभक्तानां वयःस्थानां तथैव च ।
ददाम्येकां गवां कोटिं दीयतां शबला मम ॥ २२ ॥
एवमुक्तः स भगवान् विश्वामित्रेण धीमता ।
नैव दास्यामि शबलामिति राजानमब्रवीत् ॥ २३ ॥
एतदेव हि मे रत्नमेतदेव हि मे धनं ।
एतदेव हि सर्वस्वमेतदेव हि जीवितं ॥ २४ ॥
दर्शश्च पौर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ।
एतदेव हि मे राजन् क्रियाश्च विविधास्तथा ॥ २५ ॥
एतन्मूलाः क्रियाः सर्वा मम राजन् न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीं ॥ २६ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दोपाख्याने
वशिष्ठविश्वामित्रसंवादो नाम
चतुःपञ्चाशः सर्गः ॥

## LV.

कामधेनुं वशिष्ठोऽसौ न तत्याज यदा मुनिः ।
ततोऽस्य शबलां राजा विश्वामित्रस्तदाहरत् ॥ १ ॥
नीयमाना तु शबला राम राज्ञा महात्मना ।
ध्यायन्ती चिन्तयामास रुदती शोकविह्वला ॥ २ ॥
परित्यक्ता वशिष्ठेन किमहं सुमहात्मना ।
याहं राजभटैर्दीना ह्रिये परमदुःखिता ॥ ३ ॥
किं मयापकृतं तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं स्विष्टां भक्तां त्यजति धार्मिकः ॥ ४ ॥
इति संचिन्तयित्वा तु निःश्वस्य च पुनः पुनः ।
प्रययौ साथ वेगेन वशिष्ठं प्रति राघव ॥ ५ ॥
निर्धूय तान् राजभृत्यान् शतशोऽथ सहस्रशः ।
जगामानिलवेगा सा पादमूलं महामुनेः ॥ ६ ॥
गत्वा च रुदती शोकादिदं वचनमब्रवीत् ।
वशिष्ठस्याग्रतः स्थित्वा हम्भारवविराविणी ॥ ७ ॥
भगवन् किं परित्यक्ता त्वयाहं ब्रह्मणः सुत ।
यन्मां राजभृता एते नयन्ति त्वत्सकाशतः ॥ ८ ॥
ब्रह्मर्षिरेवमुक्तस्तु तामिदं वाक्यमब्रवीत् ।
शोकसंतप्तहृदयां स्वसारमिव दुःखितां ॥ ९ ॥

न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया ।
एष त्वां नयते राजा बलान्मम महाबलः ॥ १० ॥
न हि तुल्यं बलं मन्ये राज्ञो विप्रैर्विशेषतः ।
बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ ११ ॥
इयमक्षौहिणी पूर्णा गजवाजिरथाकुला ।
पत्तिध्वजनरौघैश्च ययैष बलवत्तरः ॥ १२ ॥
एवमुक्ता वशिष्ठेन प्रत्युवाच विनीतवत् ।
वचनं वचनज्ञा सा ब्रह्मर्षिममितप्रभं ॥ १३ ॥
न बलं क्षत्रियस्याहुर्ब्राह्मणस्य बलाधिकं ।
ब्रह्मन् ब्रह्मबलं दिव्यं क्षात्राच्च बलवत्तरं ॥ १४ ॥
अप्रमेयं बलं तेऽस्ति नायं त्वद्बलवत्तरः ।
विश्वामित्रो महावीर्यस्तेजस्तव दुरासदं ॥ १५ ॥
नियुङ्क्ष्व मां महातेजस्त्वं ब्रह्मन् बलसंभृतां ।
बलं दर्पं च यावद्धि नाशयामि दुरात्मनः ॥ १६ ॥
इत्युक्तस्तु तया राम वशिष्ठः सुमहातपाः ।
सृज त्वमिति होवाच बलं परबलार्दनं ॥ १७ ॥
तस्या हुम्भारवोत्सृष्टाः पह्लवाः शतशो नृप ।
अनाशयन् बलं सर्वं विश्वामित्रस्य पश्यतः ॥ १८ ॥
स राजा परमायस्तः क्रोधविस्फुरितेक्षणः ।
पह्लवान् नाशयामास शस्त्रैरुच्चावचैस्तदा ॥ १९ ॥

विश्वामित्रार्दितान् दृष्ट्वा पह्लवान् शतशस्तथा ।
भूय एवासृजद्घोरान् शकान् यवनमिश्रितान् ॥ २० ॥
तैरासीत् संवृता भूमिः शकैर्यवनमिश्रितैः ।
प्रधावद्भिर्महावीर्यैः पद्मकिञ्जल्कसंनिभैः ॥ २१ ॥
दीर्घासिपट्टिशधरैर्हेमवर्णाम्बरावृतैः ।
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥ २२ ॥
दह्यमानं बलं दृष्ट्वा संभ्रान्तश्चलितेन्द्रियः ।
ततोऽस्त्राणि महातेजा विश्वामित्रोऽभ्यवासृजत् ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे धेनुद्धरणे वशिष्ठवाक्यं नाम
पञ्चपञ्चाशः सर्गः ॥

## LVI.

ततस्तान् व्याकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वशिष्ठश्चोदयामास स्वां धेनुं सृज योधिनः ॥ १ ॥
तस्या हुम्भारवाज्जाताः काम्बोजा रविसंनिभाः ।
ऊधसस्त्वभिसंजाताः पह्लवाः शस्त्रपाणयः ॥ २ ॥
योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा ।
रोमकूपेषु म्लेच्छास्तु तुषाराः सकिरातकाः ॥ ३ ॥
यैस्तन्निषूदितं सैन्यं विश्वामित्रस्य तत्क्षणात् ।
सपदातिरथं साश्वं सगजं रघुनन्दन ॥ ४ ॥
दृष्ट्वा निषूदितं सैन्यं वशिष्ठेन महात्मना ।
विश्वामित्रसुतानां तु शतं नानाविधायुधं ॥ ५ ॥
अभ्यधावत् सुसंक्रुद्धं वशिष्ठं जपतां वरं ।
हुङ्कारेणैव तान् सर्वान् निर्ददाह महामुनिः ॥ ६ ॥
ते साश्वरथपदाता वशिष्ठेन महात्मना ।
भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तदा ॥ ७ ॥
दृष्ट्वा विनाशितान् पुत्रान् बलं च सुमहाबलः ।
सव्रीडश्चिन्तयामास विश्वामित्रस्तदानघ ॥ ८ ॥
समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥

हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ।
हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥१०॥
स पुत्रमेकं राज्याय नियुज्य परिपालने ।
पृथिव्या क्षत्रधर्मेण वनमेवाभ्यपद्यत ॥११॥
स गत्वा हिमवत्पार्श्वं किन्नरैरुपशोभितं ।
महादेवप्रसादार्थं तपस्तेपे सुदुश्चरं ॥१२॥
केनचित् त्वथ कालेन महादेवो वृषध्वजः ।
आगत्य वरदो वीरं विश्वामित्रमभाषत ॥१३॥
किमर्थं तप्यसे राजंस्तपो ब्रूहि विवक्षितं ।
वरदोऽस्मि वरो यस्ते काङ्क्षितः सोऽभिधीयतां ॥१४॥
एवमुक्तस्तु देवेन विश्वामित्रो महातपाः ।
प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥१५॥
यदि तुष्टोऽसि मे देव धनुर्वेदो महेश्वर ।
साङ्गोपाङ्गः सोपनिषत् सरहस्यः प्रदीयतां ॥१६॥
यानि देवेषु चास्त्राणि दानवेषु तथर्षिषु ।
गन्धर्वयक्षरक्षःसु प्रतिभान्तु च तानि मे ॥१७॥
तव प्रसादाद्भगवन् देवदेव ममेप्सितं ।
एवमस्त्विति देवेशो वाक्यमुक्त्वा दिवं ययौ ॥१८॥
प्राप्य चास्त्राणि राजर्षिर्विश्वामित्रो महायशाः ।
हर्षेण महता युक्तो दर्पपूर्णस्तदाभवत् ॥१९॥

विवर्धमानो वीर्येण समुद्र इव पर्वणि ।
जितमेव तदा मेने वशिष्ठं मुनिसत्तमं ॥ २० ॥
आगत्य चाश्रमपदं मुमोचास्त्राणि तस्य सः ।
यैस्तु तपोवनं सर्वं निर्दग्धमभवत् तदा ॥ २१ ॥
उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः ।
दृष्ट्वा विप्रद्रुता भीता ऋषयोऽथ सहस्रशः ॥ २२ ॥
वशिष्ठस्य च ये शिष्यास्तथैव मृगपक्षिणः ।
व्यद्रवन्त भयाद्भीता दिशः सर्वाः सहस्रशः ॥ २३ ॥
वशिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः ।
मुहूर्तादिव निःशब्दमासीदीरिणसंनिभं ॥ २४ ॥
अवदच्च वशिष्ठस्तान् मा भैष्टेति मुहुर्मुहुः ।
नाशयाम्येष गाधेयं नीहारमिव भास्करः ॥ २५ ॥
एवमुक्त्वा महातेजा वशिष्ठो वदतां वरः ।
विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥
आश्रमं चिरसंवृद्धं यद्विनाशितवानसि ।
दुराचारोऽसि संमूढ तस्मात् त्वं प्रविनङ्क्ष्यसे ॥ २७ ॥
इत्युक्त्वा परमक्रुद्धो दण्डं जग्राह सत्वरः ।
सधूममिव कालाग्निं यमदण्डमिवापरं ॥ २८ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
वशिष्ठाश्रमदाहो नाम षट्पञ्चाशः सर्गः ॥

## LVII.

एवमुक्तो वशिष्ठेन विश्वामित्रो महाबलः ।
आग्नेयास्त्रं समुत्क्षिप्य तिष्ठ तिष्ठेत्यथाब्रवीत् ॥ १ ॥
तस्य तद्वचनं श्रुत्वा वशिष्ठः प्रत्यभाषत ।
स्थितोऽस्म्येष क्षत्रबन्धो यद्बलं तद्विदर्शय ॥ २ ॥
नाशयाम्येष ते दर्पं शस्त्रस्याप्यद्य गाधिज ।
क्व च क्षात्रं बलं मूढ क्व च ब्राह्मं महद्बलं ॥ ३ ॥
पश्य ब्राह्मं बलं दिव्यं मम क्षत्रियपांसन ।
तच्चास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुत्तमं ॥ ४ ॥
ब्रह्मदण्डाहतं शान्तमग्निवेग इवाम्भसा ।
रौद्रं च वारुणं चैव ऐन्द्रं पाशुपतं तथा ॥ ५ ॥
ऐशिकं चापि चिक्षेप रुषितो गाधिनन्दनः ।
मानसं मानवं चैव गान्धर्वं स्वापनं तथा ॥ ६ ॥
भ्रंशनं मोहनं चैव संतापनविलापने ।
शोषणं दारुणं चैव वज्रमस्त्रं सुदुर्जयं ॥ ७ ॥
दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ।
शक्तिद्वयं च चिक्षेप कङ्कालं मुषलं तथा ॥ ८ ॥
वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणं ।
धर्मचक्रं विष्णुचक्रं कालचक्रं तथैव च ॥ ९ ॥

ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ।
पैनाकमस्त्रं शुष्कार्द्रे दयिते चाशनी तथा ॥१०॥
वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ।
त्रिशूलमस्त्रं घोरं च कापालमथ किङ्किणीं ॥११॥
एतान्यस्त्राणि सर्वाणि चिक्षेप कुशिकात्मजः ।
वशिष्ठे सुमहाभागे तदद्भुतमिवाभवत् ॥१२॥
तानि दण्डेन सर्वाणि न्यबधीद्ब्रह्मणः सुतः ।
तेषु शान्तेषु ब्रह्मास्त्रं प्राक्षिपद्गाधिनन्दनः ॥१३॥
तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ।
देवर्षयश्च संत्रस्ता गन्धर्वाश्च महोरगाः ॥१४॥
त्रैलोक्यमासीत् संत्रस्तं ब्रह्मास्त्रे समुदीरिते ।
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ॥१५॥
वशिष्ठोऽग्रसदव्यग्रो ब्रह्मदण्डेन राघव ।
ब्रह्मास्त्रं ग्रसतस्तस्य वशिष्ठस्य महात्मनः ॥१६॥
त्रैलोक्यमोहनं रौद्रं रूपमासीत् सुदुःसहं ।
सर्वेभ्यो रोमकूपेभ्यो वशिष्ठस्य महात्मनः ॥१७॥
मरीच्य इव निष्पेतुः सधूमा ज्वलनार्चिषः ।
प्राज्वलद्ब्रह्मदण्डश्च वशिष्ठस्य करोद्यतः ॥१८॥
सधूम इव कालाग्निर्यमदण्ड इवापरः ।
ततोऽस्तुवंस्तु मुनयो वशिष्ठं जपतां वरं ॥१९॥

अमोघं ते बलं ब्रह्मंस्तेजो धारय तेजसा ।
निगृहीतस्त्वया ब्रह्मन् विश्वामित्रो महाबलः ॥ २० ॥
प्रसीद द्विपदां श्रेष्ठ लोकाः सन्तु गतव्यथाः ।
एवमुक्तो महातेजाः शममाप महायशाः ॥ २१ ॥
विश्वामित्रोऽपि निकृतो विनिश्वस्येदमब्रवीत् ।
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलं ॥ २२ ॥
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ।
तदेतद्बलमालोक्य सर्वेन्द्रियसमाहितः ॥ २३ ॥
तपोबलं समास्थास्ये यद्वै ब्रह्मत्वकारणं ।
एवमुक्त्वा महातेजाः शस्त्रमुत्सृज्य दूरतः ॥ २४ ॥
ततः स निश्चयं कृत्वा ब्राह्मण्ये धृतमानसः ।
स जगाम तदा राम तपश्चरणनिश्चितः ॥ २५ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
विश्वामित्रप्रतिज्ञा नाम सप्तपञ्चाशः सर्गः ॥

## LVIII.

सोऽतप्यत ततो घोरं विश्वामित्रस्तपोनिधिः ।
विनिश्वस्य विनिश्वस्य कृतवैरो महात्मना ॥ १ ॥
दक्षिणां दिशमास्थाय महिष्या सह कौशिकः ।
फलमूलाशनस्तत्र चचार सुमहत् तपः ॥ २ ॥
ब्रह्मर्षित्वमभिप्रेप्सुर्वशिष्ठस्पर्धया विभुः ।
दृष्ट्वा ब्रह्मतपोयोगं वशिष्ठस्यात्मनोऽधिकं ॥ ३ ॥
तताप परमं राम तपोवनमुपाश्रितः ।
ब्राह्मणः स्यामिति मतिं समाधाय महामनाः ॥ ४ ॥
तत्रास्य जज्ञिरे पुत्राश्चत्वारो लोकविश्रुताः ।
हविस्यन्दमधुस्यन्ददृढनेत्रमहोदराः ॥ ५ ॥
तदानुशासतो राज्यमष्टौ पुत्रा महाबलाः ।
जज्ञिरे राजशार्दूलाद्वीर्यवन्तो महौजसः ॥ ६ ॥
वर्षाणां तत्र पूर्णेऽथ सहस्रे तपतां वरः ।
जज्वाल तपसा धीमान् कौशिकोऽग्निसमप्रभः ॥ ७ ॥

इत्यार्षे रामायणे आदिकाण्डे विश्वामित्रप्रशंसायां
अष्टपञ्चाशः सर्गः ॥

# आदिकाण्डं

## LIX.

पूर्णे वर्षसहस्रेऽथ ब्रह्मा लोकपितामहः ।
आगम्य गाधिजं राम सोऽब्रवीन्मधुरं वचः ॥ १ ॥
जितो राजर्षिलोकस्ते सुमहान् कुशिकात्मज ।
अनेन तपसा युक्तं राजर्षिं त्वां समर्थये ॥ २ ॥
एवमुक्त्वा महातेजा जगाम सह दैवतैः ।
त्रिपिष्टपाद्ब्रह्मलोकं लोकानां प्रभुरीश्वरः ॥ ३ ॥
विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किञ्चिदवाङ्मुखः ।
दुःखेन महता युक्तः समन्युरिदमब्रवीत् ॥ ४ ॥
तपश्च सुमहत् तप्तं राजर्षिरिति चैव मां ।
अद्यापि भगवानाह नास्ति शङ्के तपःफलं ॥ ५ ॥
एवमुक्त्वा महातेजा भूय एव महामुनिः ।
तपश्चचार काकुत्स्थ परमं परमात्मवान् ॥ ६ ॥
एतस्मिन्नेव काले तु सत्यधर्मपरायणः ।
त्रिशङ्कुर्नाम राजाभूदिक्ष्वाकुकुलनन्दनः ॥ ७ ॥
तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ।
गच्छेयं स्वशरीरेण देवतानां परां गतिं ॥ ८ ॥

वशिष्ठं च समाहूय मतिमेतां न्यवेदयत् ।
अशक्यमेतदित्युक्तो वशिष्ठेन च धीमता ॥ ९ ॥
प्रत्याख्यातो वशिष्ठेन स ययौ दक्षिणां दिशं ।
वशिष्ठशतपुत्रैस्तु यत्र तैस्तप्यते तपः ॥ १० ॥
त्रिशङ्कुरथ पुत्राणां वशिष्ठस्य शतं तु तत् ।
ददर्श दीर्घतपसां तप्यतां तप उत्तमं ॥ ११ ॥
सोऽभिवाद्याञ्जलिं कृत्वा तानुवाच तपोधनान् ।
कुशलं चाव्ययं चैव पृष्ट्वा चैताननामयं ॥ १२ ॥
अब्रवीत् सुमहातेजा गुरुपुत्रान् नराधिपः ।
प्रत्याख्यातो वशिष्ठेन ह्रिया किञ्चिदवाङ्मुखः ॥ १३ ॥
शरणं वः प्रपन्नोऽहं शरण्यः शरणप्रदान् ।
त्रातुमर्हथ मां सर्वे प्रपन्नं शरणागतं ॥ १४ ॥
प्रत्याख्यातोऽस्मि गुरुणा वशिष्ठेन महात्मना ।
यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ ॥ १५ ॥
गुरुपुत्रानहं सर्वान् पुरस्कृत्य पुरोधसः ।
शिरसा प्रणतो भूत्वा याचे वस्तपसि स्थितान् ॥ १६ ॥
ते मां भवन्तः सिद्धार्थं याजयन्तु समाहिताः ।
सशरीरो यथा स्वर्गं यज्ञेन समवाप्नुयां ॥ १७ ॥
प्रत्याख्यातो वशिष्ठेन गतिमन्यां तपोधनाः ।
गुरुपुत्रानृते सर्वान् नाहं पश्यामि तत्त्वतः ॥ १८ ॥

इक्ष्वाकूणां हि सर्वेषां वशिष्ठः प्रवरो गुरुः ।
तस्मादनन्तरं सर्वे भवन्तो गुरवो मम ॥ ११ ॥

इत्यार्षे रामायणे आदिकाण्डे
शतानन्दवाक्ये त्रिशङ्कुप्रत्याख्यानं नाम
एकोनषष्टितमः सर्गः ॥

# रामायणं

## LX.

त्रिशङ्कुवचनं श्रुत्वा ततः क्रोधसमन्वितं ।
ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥
प्रत्याख्यातोऽसि दुर्बुद्धे गुरुणा सत्यवादिना ।
तदतिक्रम्य वचनं कस्मादस्मानुपागतः ॥ २ ॥
मूलमुत्सृज्य कस्मात् त्वं शाखास्विच्छसि लम्बितुं ।
नैतत् ते साधु यद्राजन्नस्मानिच्छसि सेवितुं ॥ ३ ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ।
अतः क्षमं न ते तस्य वचोऽतिक्रम्य वर्तितुं ॥ ४ ॥
अशक्यमिति यत् प्राह वशिष्ठो भगवानृषिः ।
तदस्माभिः कथं शक्यं कर्तुमद्य बलादिव ॥ ५ ॥
बालिशोऽसि सुमन्दात्मन् गम्यतां स्वपुरं पुनः ।
याजने भगवानेव शक्तोऽसौ न वयं हि ते ॥ ६ ॥
तेषां तद्वचनं श्रुत्वा क्रोधव्याकुलिताक्षरं ।
राजा मन्युसमाविष्टो मुनिपुत्रानुवाच तान् ॥ ७ ॥
प्रत्याख्यातो वशिष्ठेन भवद्भिस्तदनन्तरं ।
अन्यां गतिं गमिष्यामि यष्टुं विदितमस्तु वः ॥ ८ ॥
ऋषिपुत्रास्तु तच्छ्रुत्वा घोराक्षरमिदं वचः ।
शेपुस्तं नृपतिं क्रुद्धाश्चाण्डालस्त्वं भविष्यसि ॥ ९ ॥

इति शप्त्वा तु राजानं विविशुस्ते स्वमाश्रमं ।
अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव सः ॥ १० ॥
चाण्डालदर्शनो राम सद्य एव दुराकृतिः ।
अधो नीलाम्बरधरो रक्ताम्बरकृतोत्तरः ॥ ११ ॥
संरक्तताम्रघोराक्षः करालो हरिपिङ्गलः ।
ऋक्षचर्मनिवासी च लौहाभरणभूषितः ॥ १२ ॥
तं दृष्ट्वा सचिवास्तस्य सद्यश्चाण्डालतां गतं ।
दुद्रुवुः स्वपुरं राम पौरा ये चानुयायिनः ॥ १३ ॥
एक एव ततो राजा जगामाकुलचेतनः ।
शापजेन सुदुःखेन दह्यमानो दिवानिशं ॥ १४ ॥
विश्वामित्रं महात्मानं ततः शरणमाययौ ।
स्पर्धमानं वशिष्ठेन शरणार्थी तपोधनं ॥ १५ ॥
विश्वामित्रोऽपि दृष्ट्वैव राजानं तं तथागतं ।
चाण्डालरूपिणं राम कारुण्यं समुपागमत् ॥ १६ ॥
कारुण्याच्च महातेजा वाक्यं वाक्यविशारदः ।
अब्रवीद्गतलक्ष्मीकं राजानं घोरदर्शनं ॥ १७ ॥
किमागमनकृत्यं ते इक्ष्वाकुकुलनन्दन ।
अयोध्याधिपते वीर शापाच्चाण्डालतां गतः ॥ १८ ॥
अथ तद्वाक्यमाज्ञाय राजा चाण्डालदर्शनः ।
अब्रवीत् प्राञ्जलिर्वाक्यं विश्वामित्रं तपोधनं ॥ १९ ॥

प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ।
इमं विपर्ययं प्राप्तः काममप्राप्य काङ्क्षितं ॥ २० ॥
सशरीरो दिवं यायामिति मे सौम्य दर्शनं ।
मह्वायज्ञफलेनेति तच्च नावाप्यते मया ॥ २१ ॥
अनृतं नोक्तपूर्वं हि विश्वामित्र मया क्वचित् ।
कृच्छ्रेऽपि वर्तमानेन क्षत्रधर्मेण ते शपे ॥ २२ ॥
यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता मही ।
गुरवश्च मया सर्वे शीलवृत्तेन तोषिताः ॥ २३ ॥
धर्मे प्रयतमानस्य शुद्धवाग्बुद्धिकर्मणः ।
परितोषं न गच्छन्ति गुरवो मुनिपुंगव ॥ २४ ॥
दैवमत्र परं मन्ये पौरुषं तु निरर्थकं ।
शुभाशुभफलप्राप्तौ नराणामिति मे मतिः ॥ २५ ॥
तस्य मे परमार्तस्य दैवोपहतकर्मणः ।
शरणागतस्य भवान् प्रसादं कर्तुमर्हति ॥ २६ ॥
नान्यां गतिं प्रपश्यामि नान्यः शरणदोऽस्ति मे ।
दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २७ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये त्रिशङ्कुशापो नाम षष्टितमः सर्गः ॥

# आदिकाण्डं

## LXI.

उक्तवाक्यं तु राजानं विश्वामित्रो महामुनिः ।
अब्रवीन्मधुरं वाक्यं त्रिशङ्कोर्हर्षवर्धनं ॥ १ ॥
इक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकं ।
शरणं ते भविष्यामि वसेह त्वं ममाश्रमे ॥ २ ॥
सर्वानामन्त्रयिष्येऽहं त्वत्कृतेऽत्र तपोधनान् ।
काङ्क्षितस्यास्य ते राजन् सिद्धये यज्ञकर्मणि ॥ ३ ॥
गुरुशापकृतं रूपं यदेतद्धार्यते त्वया ।
संसिद्धस्त्वमनेनैव रूपेण स्वर्गमेष्यसि ॥ ४ ॥
हस्तप्राप्तमहं मन्ये स्वर्गं ते नृपसत्तम ।
यस्त्वं मामभ्युपागम्य त्रिदिवं गन्तुमिच्छसि ॥ ५ ॥
एवमुक्त्वा महातेजाः पुत्रानाहूय सर्वशः ।
शिष्यांश्च सुहृदश्चान्यानुवाचेदं वचोऽर्थवत् ॥ ६ ॥
आनयध्वमिह क्षिप्रं यज्ञद्रव्याण्यशेषतः ।
मदीयेनैव यज्ञोऽयं द्रव्येणास्य भविष्यति ॥ ७ ॥
शिष्यानुवाच चाहूय सर्वानेव तु तद्वचः ।
सर्वानृषीनानयध्वं समुपेत्याज्ञया मम ॥ ८ ॥
यश्च यद्वचनं ब्रूयान्ममवाक्यप्रचोदितः ।
तन्मे भवद्भिरावेद्यं यथा प्रोक्तमशेषतः ॥ ९ ॥

शिष्यास्ततोऽस्य ते जग्मुर्दिशः सर्वे तदाज्ञया ।
आमन्त्र्य चाभ्युपावृत्ता न चिरेण तपोधनान् ॥ १० ॥
ऊचुः प्राञ्जलयोऽभ्येत्य विश्वामित्रमिदं वचः ।
तवोपामन्त्रिताः सर्वे मुनयोऽस्माभिराज्ञया ॥ ११ ॥
आज्ञा प्रतिगृहीता ते सर्वैरेव तपोधनैः ।
अस्माभिरुक्तैरभ्येत्य वर्जयित्वा महोदयं ॥ १२ ॥
वशिष्ठस्य च पुत्राणां शतं क्रोधसमाकुलं ।
यदुवाच वचो घोरं शृणु तन्मुनिपुंगव ॥ १३ ॥
क्षत्रियो याजको यत्र चाण्डालस्य यियक्षतः ।
कथं सदसि भोक्ष्यन्ते हविस्तत्र सुरोत्तमाः ॥ १४ ॥
ब्राह्मणा वा महात्मानो भुक्त्वा चाण्डालभोजनं ।
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पातिताः ॥ १५ ॥
निष्ठुरं वचनं प्राहुरेतत् संरक्तलोचनाः ।
वाशिष्ठा मुनिशार्दूल सर्वे ते समहोदयाः ॥ १६ ॥
इति तेषां वचः श्रुत्वा शिष्याणां मुनिपुंगवः ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ १७ ॥
यद्दूषयन्त्यदुष्टं मां वाशिष्ठा मन्दचेतसः ।
भस्मीभूता दुरात्मानः कालस्य वशमागताः ॥ १८ ॥
अद्य ते कालपाशेन नीता वैवस्वतक्षयं ।
सप्त जातिशतान्येव मृतपाः सन्तु सर्वशः ॥ १९ ॥

स्वमांसनियताहाराः पुष्टिकामाः सनिर्घृणाः ।
विकृताश्च विरूपाश्च लोकाननुचरन्त्विति ॥ २० ॥
महोदयश्च दुर्बुद्धिरदुष्टं मां प्रदूषयन् ।
दूषितः सर्वलोकेषु निषादत्वमवाप्स्यति ॥ २१ ॥
प्राणातिपातनिरतो निरनुक्रोशतां गतः ।
दीर्घकालं मम क्रोधाद्दुर्वृत्त्या वर्तयिष्यति ॥ २२ ॥
एतावदुक्त्वा वचनं विश्वामित्रो महामुनिः ।
विरराम महातेजास्तस्मिन् मुनिसमागमे ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
वाशिष्ठशापो नाम एकषष्टितमः सर्गः ॥

# रामायणं

## LXII.

स क्रोधविषमुत्सृज्य गाधिजो रघुनन्दन ।
तपोबलहतान् कृत्वा वाशिष्ठान् समहोदयान् ॥ १ ॥
ऋषिमध्येऽपरं वाक्यं विश्वामित्रोऽभ्यभाषत ।
अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः ॥ २ ॥
धार्मिकः सत्यसंधश्च मां चैव शरणं गतः ।
स्वेनानेन शरीरेण स्वर्गं गन्तुमभीप्सति ॥ ३ ॥
तदिदं मुनयः सर्वे समनुज्ञातुमर्हथ ।
विश्वामित्रवचः श्रुत्वा ततस्ते मुनिपुंगवाः ॥ ४ ॥
मिथः संमन्त्रयामासुर्विश्वामित्रभयार्दिताः ।
अयं कुशिकदायादस्तपस्वी क्रोधनो भृशं ॥ ५ ॥
न विग्रहः सहानेन क्षमोऽस्माकं शरीरिणां ।
अग्निकोपो हि भगवान् शापं दास्यति रोषितः ॥ ६ ॥
तस्मात् प्रवर्त्यतां यज्ञो यथैवोक्तं महर्षिणा ।
क्रियतां च तथा यत्नः सशरीरो यथा दिवं ॥ ७ ॥
गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ।
ततः प्रववृते यज्ञः सर्वसंभारसंभृतः ॥ ८ ॥
अध्वर्युरभवत् तत्र विश्वामित्रो महातपाः ।
ऋत्विजश्चाभवंस्तत्र मुनयः संशितव्रताः ॥ ९ ॥

तस्य यज्ञे तदा तस्मिंस्त्रिशङ्कोर्भूरितेजसः ।
विश्वामित्रोऽथ भगवान् मन्त्रविन्मन्त्रपारगः ॥ १० ॥
चकारावाहनं यज्ञे भागार्थं त्रिदिवौकसां ।
नाभ्यगच्छन् यदा हूता भागार्थं तत्र देवताः ॥ ११ ॥
ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ।
स्रुवमुद्यम्य भगवांस्त्रिशङ्कुमिदमब्रवीत् ॥ १२ ॥
पश्य मे तपसो वीर्यमूर्जितस्य नरेश्वर ।
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ॥ १३ ॥
त्रिशङ्को स्वशरीरेण दिवं गच्छ नराधिप ।
बाल्यात् प्रभृति यत् किञ्चिन्मया सम्यक् तपश्चितं ॥ १४ ॥
तेजसा तस्य तपसः सशरीरो दिवं व्रज ।
उक्तवाक्ये मुनावेवं सशरीरो नृपस्तदा ॥ १५ ॥
ययौ स्वर्गं खमाविश्य मुनीनां पश्यतां तदा ।
त्रिदिवं तं गतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ १६ ॥
सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ।
त्रिशङ्को पत भूमौ त्वं नासि स्वर्गकृतालयः ॥ १७ ॥
गुरुशापादुपहतो मूढ शीघ्रमवाक्शिराः ।
एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतद्दिवः ॥ १८ ॥
उपाक्रोशत् स पाहीति विश्वामित्रमवाक्शिराः ।
तच्छ्रुत्वा वचनं तस्य पाहीति पततो दिवः ॥ १९ ॥

विश्वामित्रो भृशं क्रुद्धस्तिष्ठ तिष्ठेत्युवाच तं ।
ततो ब्रह्मतपोयोगात् प्रजापतिरिवापरः ॥ २० ॥
असृजद्दक्षिणे मार्गे सप्तर्षीनपरांस्ततः ।
सृष्ट्वा दक्षिणमार्गस्थान् सप्तर्षीनपरान् प्रभुः ॥ २१ ॥
नक्षत्रवंशमपरं स्रष्टुं समुपचक्रमे ।
स्वर्गस्य दक्षिणे मार्गे तपोब्रह्मबलाश्रयात् ॥ २२ ॥
सृष्ट्वा च नक्षत्रगणं क्रोधसंरक्तलोचनः ।
इन्द्रादीनपरान् देवान् स्रष्टुं समुपचक्रमे ॥ २३ ॥
ततः परमसंभ्रान्ताः सदेवर्षिगणाः सुराः ।
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २४ ॥
अयं राजा द्विजश्रेष्ठ गुरुशापपरिक्षतः ।
सशरीरो दिवं गन्तुं नार्हत्यकृतपावनः ॥ २५ ॥
प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः ।
प्रमाणैः स्थापितां संस्थां नातिक्रमितुमर्हसि ॥ २६ ॥
इति तेषां वचः श्रुत्वा देवानां मुनिपुंगवः ।
अब्रवीत् स्नेहवद्वाक्यमिदमाभाष्य देवताः ॥ २७ ॥
सशरीरस्य विबुधास्त्रिशङ्कोरस्य धीमतः ।
आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ २८ ॥
गमनं सशरीरस्य त्रिशङ्कोर्मत्प्रतिग्रहात् ।
नक्षत्राणि च सर्वाणि ध्रुवाणीमानि सन्तु च ॥ २९ ॥

यावल्लोका धरिष्यन्ति तावत् स्थास्यन्त्यमूनि तु ।
एतां प्रतिज्ञां सर्वे मे समनुज्ञातुमर्हथ ॥३०॥
तमूचुर्विबुधा भीता एवमस्त्विति राघव ।
तिष्ठन्त्वेतान्ययोगानि वैश्वानरपथाद्बहिः ॥३१॥
अवाक्शिरा एव चायं त्रिशङ्कुरिह तिष्ठतु ।
दक्षिणस्यामभिरतो दिशि स्वप्रभया ज्वलन् ॥३२॥
विश्वामित्रस्तु तच्छ्रुत्वा देवानां वचनं तदा ।
बाढमित्यब्रवीत् तत्र सर्वदेवैरभिष्टुतः ॥३३॥
ततो देवा ययुः सर्वे यथागतमरिंदम ।
ऋषयश्च महात्मानो यज्ञस्यान्ते तपोधनाः ॥३४॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
त्रिशङ्कुस्वर्गारोहणं नाम
द्विषष्टितमः सर्गः ॥

# रामायणं

## LXIII.

मुनीन् प्रतिगतान् दृष्ट्वा विश्वामित्रस्तपोधनः ।
अब्रवीन्मुनिशार्दूलः सर्वांस्तान् वनवासिनः ॥ १ ॥
महान् विमर्दः प्रवृत्तो दक्षिणामभितो दिशं ।
दिशमन्यामतो यामस्तपस्यामो यत्र वै तपः ॥ २ ॥
पश्चिमस्यां दिशि सुखं पुष्करारण्यमाश्रिताः ।
तपस्तत्र चरिष्यामः परं तद्धि तपोवनं ॥ ३ ॥
एवमुक्त्वा महातेजाः पुष्करारण्यमाश्रितः ।
तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥
अथ तत्रापि वसतो विश्वामित्रस्य राघव ।
अम्बरीषस्य राजर्षेर्यष्टुं मतिरजायत ॥ ५ ॥
तस्य वै यजमानस्य नरमेधेन भूपतेः ।
प्रोक्षितं महवद्यूपात् पशुमिन्द्रो जहार तं ॥ ६ ॥
नरं लक्षणसंपूर्णं पशुत्वे विनियोजितं ।
तस्मिन् हृते पशौ विप्रो राजानमिदमब्रवीत् ॥ ७ ॥
पशुर्यः प्रोक्षितो राजन् केनापि स हृतो बलात् ।
अरक्षितारं च नृपं घ्नन्ति देवा नरेश्वर ॥ ८ ॥
प्रायश्चित्तं महद्ध्येतत् तं त्वं पशुमुपानय ।
अन्यं वाप्यानय क्रीत्वा यावत् कर्म प्रवर्तते ॥ ९ ॥

उपाध्यायवचः श्रुत्वा स राजा बहुशस्तदा ।
अन्वेष्टुं पशुमारेभे पुरुषं लक्षणान्वितं ॥ १० ॥
देशान् जनपदांश्चैव नगराणि वनानि च ।
आश्रमांश्च तथा पुण्यान् प्राविशद्धि महामनाः ॥ ११ ॥
अन्वेषमाणः सोऽपश्यदृचीकं नाम राघव ।
बहुपुत्रं दरिद्रं च द्विजं गृहनिवासिनं ॥ १२ ॥
अभिगम्याम्बरीषस्तं विप्रं वचनमब्रवीत् ।
तपःस्वाध्यायनिरतं पृष्ट्वा कुशलमादितः ॥ १३ ॥
गवां शतसहस्रेण सुतमेकं प्रयच्छ मे ।
नरमेधे महायज्ञे पश्वर्थे च द्विजोत्तम ॥ १४ ॥
बहुपुत्रो दरिद्रश्च वृद्धश्चासि द्विजोत्तम ।
यदि ते रोचते ब्रह्मन् सुतमेकं परित्यज ॥ १५ ॥
बहवोऽनुसृता देशा न लेभे यज्ञियं पशुं ।
दातुमर्हसि मूल्येन सुतमेकं द्विजोत्तम ॥ १६ ॥
पशोरर्थे कृतार्थः स्यामहं काश्यप सुव्रत ।
इत्युक्तोऽथाम्बरीषेण ऋचीको रघुनन्दन ॥ १७ ॥
न विक्रेष्याम्यहं पुत्रं ज्येष्ठमित्यब्रवीद्वचः ।
ऋचीकवचनं श्रुत्वा माता तेषां यशस्विनी ॥ १८ ॥
उवाचर्चीकिपुत्राणां तं राजानमिदं वचः ।
अविक्रेयं सुतं ज्येष्ठं भगवानाह काश्यपः ॥ १९ ॥

ममाप्येवं कनीयांसं सुतं विद्धि परं प्रियं ।
पितॄणां वल्लभा ज्येष्ठाः प्रायेण हि सुता नृप ॥२०॥
मातॄणां च कनीयांसस्तस्माद्रक्ष्यौ हि तौ नृप ।
उक्तवाक्ये मुनौ तस्मिन् मुनिपत्न्यां तथैव च ॥२१॥
शुनःशेफ इदं तत्र मध्यमो वाक्यमब्रवीत् ।
ज्येष्ठः पितुरविक्रेयः कनीयान् मातुरेव च ॥२२॥
विक्रीतं मध्यमं मन्ये राजन्नाशु नयस्व मां ।
गवां शतसहस्रेण शुनःशेफं ततो नृपः ॥२३॥
गृहीत्वा परमप्रीतो जगाम रघुनन्दन ।
रथमारोप्य तं राम शुनःशेफं त्वरान्वितः ।
आजगाम ततो यज्ञं समापयितुमात्मनः ॥२४॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
शुनःशेफविक्रयो नाम त्रिषष्टितमः सर्गः ॥

# आदिकाण्डं

## LXIV.

शुनःशेफं तमादाय स राजा आत्तवाहनः ।
व्यश्रमत् पुष्करे तीर्थे मध्याह्ने रघुनन्दन ॥ १ ॥
तस्य विश्रमतस्तत्र शुनःशेफो महामतिः ।
पुष्करं श्रेष्ठमागम्य विश्वामित्रं ददर्श ह ॥ २ ॥
स दीर्णहृदयो दीनो विक्रयेण श्रमेण च ।
जगाम शिरसा पादौ मुनेर्वाक्यमुवाच ह ॥ ३ ॥
न मेऽस्ति माता न पिता न सुहृन्न च बान्धवाः ।
त्रातुमर्हसि मां त्यक्तं बन्धुभिः शरणागतं ॥ ४ ॥
राजा च कृतकार्यः स्याज्जीवेयं चाप्यहं यथा ।
भवतो वीर्यमाश्रित्य तथा त्वं कर्तुमर्हसि ॥ ५ ॥
नाथो मे त्वमनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं कृपणं त्रातुमर्हसि मां मुने ॥ ६ ॥
तस्यैतद्वचनं श्रुत्वा विश्वामित्रस्तपोधनः ।
शान्त्वयित्वा शुनःशेफं स्वान् पुत्रानिदमब्रवीत् ॥ ७ ॥
यत्कृते पितरः पुत्रानिच्छन्ति गुणवत्तरान् ।
दुर्गसंतरणार्थाय तस्य कालोऽयमागतः ॥ ८ ॥
अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।
तस्य जीवितदानेन प्रियं मे कर्तुमर्हथ ॥ ९ ॥

सर्वे सुकृतकल्याणाः सर्वे सुचरितव्रताः ।
ते यूयं मन्नियोगेन मोक्षयध्वं मुनेः सुतं ॥१०॥
अध्वराग्नेः समिद्धस्य गत्वा तृप्तिं प्रयच्छत ।
मोक्षयध्वमिमं चैव पशुत्वान्मम शासनात् ॥११॥
शरणं मामनुप्राप्तमृचीकस्य मुनेः सुतं ।
स्यादविघ्नं यथा तस्य राजर्षेः क्रियतां तथा ॥१२॥
इति पित्रानुशिष्टास्ते मधुस्यन्दादयस्ततः
साभिमानमिदं वाक्यमूचुः पितरमप्रियं ॥१३॥
कथमात्मसुतान् हित्वा त्राता परसुतानसि ।
भगवन् कार्यमेतत् ते स्वमांसस्येव भक्षणं ॥१४॥
इति तेषां वचः श्रुत्वा पुत्राणां मुनिरप्रियं ।
क्रोधसंरक्तनयनः पुत्रांस्तानशपत् तदा ॥१५॥
निःसाध्वसमिदं वाक्यं धर्मादभिहितं वहिः ।
यस्मात् स्वमांसमुद्दिष्टं युष्माभिरवमन्य मां ॥१६॥
स्वमांसवृत्तयस्तस्माद्वाशिष्ठा इव ज्ञातिषु ।
पतिता वर्षसहस्रं कुत्सिता विचरिष्यथ ॥१७॥
इति शापाग्निना दग्ध्वा पुत्रान् स्वान् कुशिकात्मजः ।
शुनःशेफमुवाचेदं वचनं परिशान्त्वयन् ॥१८॥
यदा पशुत्वे पुत्र त्वं प्रोक्षितः स्यास्तदा जपेः ।
इमं मन्त्रं मया प्रोक्तमिन्द्राभिष्टवसंयुतं ॥१९॥

जपत्तमेनं मन्त्रं त्वां मोक्षयिष्यति वासवः ।
पशुत्वादस्य चाविघ्नं भविष्यति महीपतेः ॥ २० ॥
शुनःशेफोऽथ तं मन्त्रमधीत्य त्वरितस्तदा ।
उपेत्य हृष्टो राजानमम्बरीषमभाषत ॥ २१ ॥
एहि राजन्नितः शीघ्रं नय मां यज्ञमात्मनः ।
पशुं मां मन्त्रतः प्रोक्ष्य दीक्षामेतां समापय ॥ २२ ॥
तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमन्वितः ।
जगाम नृपतिः श्रीमान् स्वमेव यजनं तदा ॥ २३ ॥
सदस्यानुमतं सोऽथ पवित्रं कृतलक्षणं ।
शुनःशेफं पशुं यूपे निबबन्धानुमन्त्रितं ॥ २४ ॥
स बद्ध ऋग्भिस्तुष्टाव देवेन्द्रं हरिवाहनं ।
भागार्थिनमनुप्राप्तं स्वरेणोच्चैर्विनादयन् ॥ २५ ॥
तस्मै प्रीतः सहस्राक्षस्तदा प्रादादभीप्सितं ।
आयुरिष्टं यशश्चाग्र्यं शुनःशेफाय राघव ॥ २६ ॥
स च राजा क्रतुफलं तदवाप यथेप्सितं ।
धर्मं यशः श्रियं चाग्र्यां सहस्राक्षप्रसादतः ॥ २७ ॥
विश्वामित्रोऽथ धर्मात्मा चचारोग्रं महत् तपः ।
पुष्करेष्वेव वर्षाणां सहस्रं नियतव्रतः ॥ २८ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
अम्बरीषयज्ञो नाम चतुःषष्टितमः सर्गः ॥

## LXV.

पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिं ।
अभ्यागच्छन् सुरा राम तपोबलसमाहिताः ॥ १ ॥
तत्रैनमब्रवीद्ब्रह्मा पुनः सुरुचिरं वचः ।
ऋषिस्त्वमसि भद्रं ते निवर्त तपसोऽधुना ॥ २ ॥
इत्युक्त्वानन्तरं ब्रह्मा जगामाशु यथागतं ।
विश्वामित्रोऽपि तच्छ्रुत्वा चचारैव पुनस्तपः ॥ ३ ॥
तत्र चैनं तपस्यन्तं कालस्य महतस्तपः ।
आजगामाप्सरा राम तं प्रलोभयितुं रहः ॥ ४ ॥
मेनका नाम सुश्रोणी विश्वामित्राश्रमं प्रति ।
पुष्करे सा सुचार्वङ्गी स्नातुं समुपचक्रमे ॥ ५ ॥
तां ददर्शाद्भुताकारां मेनकां कुशिकात्मजः ।
रूपेणाप्रतिमां राम श्रियं मूर्तिमतीमिव ॥ ६ ॥
तां दृष्ट्वा चारुसर्वाङ्गीं मेनकां निर्जने वने ।
जलप्रक्लिन्नवसनां मनोहरतराकृतिं ॥ ७ ॥
कन्दर्पवशगोऽभ्येत्य मुनिर्वचनमब्रवीत् ।
का त्वं कस्य कुतो वेदं वनं भद्रेऽभ्युपागता ॥ ८ ॥
एहि विश्राम्यतां भीरु ममाश्रमपदे शुभे ।
मेनका तद्वचः श्रुत्वा विश्वामित्रमभाषत ॥ ९ ॥

# आदिकाण्डं

अप्सरा मेनका नाम त्वत्प्रीत्याहमुपागता ।
रोचते यदि ते ब्रह्मन् भजमानां भजस्व मां ॥ १० ॥
इति तां रुचिरं वाक्यं भाषमाणामनिन्दितां ।
पाणौ गृहीत्वा भगवानाश्रमं प्रविवेश ह ॥ ११ ॥
तया च सह वर्षाणि पञ्च पञ्च च राघव ।
विश्वामित्रस्य रमतः क्षणवद्व्यतिचक्रमुः ॥ १२ ॥
हृतविज्ञानबुद्धिर्हि तया मुनिरसौ तदा ।
तानि वर्षाण्यतीतानि बुबोधैकमहर्यथा ॥ १३ ॥
अथ काले गते तस्मिन् बुद्ध्या बुद्ध्वात्मविक्रियां ।
जगादेतत् तदा वाक्यं विश्वामित्रस्तपोधनः ॥ १४ ॥
सामर्षस्तच्च मे ज्ञानं तत् तपः स च निश्चयः ।
नष्टान्येकपदेनेह सर्वथा किमपि स्त्रियः ॥ १५ ॥
अनया लोभयित्वा मां तपोऽपहरणं कृतं ।
इन्द्रप्रियं चिकीर्षन्त्या तस्मादेनां त्यजाम्यहं ॥ १६ ॥
ततस्तां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ।
पुष्कराणि परित्यज्य जगामोत्तरपर्वतं ॥ १७ ॥
नैष्ठिकीं बुद्धिमास्थाय जेतुं कामममर्षितः ।
कौशिकीतीरमासाद्य तपस्तेपे सुदारुणं ॥ १८ ॥
सहस्रमपरं राम वर्षाणाममितद्युतिः ।
चचार दुश्चरं तेन देवा भयसमन्विताः ॥ १९ ॥

समेत्य मन्त्रयामासुः सर्षिसंघाः सवासवाः ।
महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥ २० ॥
मा च नस्तपसोग्रेण तापयत्येवमुच्यतः ।
निवर्ततामयं ब्रह्मंस्तपसोऽस्यादिति प्रभो ॥ २१ ॥
देवानां निश्चयं श्रुत्वा ब्रह्मा लोकपितामहः ।
अब्रवीदभिगम्यैवं विश्वामित्रं तपोनिधिं ॥ २२ ॥
महर्षे विनिवर्तस्व तपसः कुशिकात्मज ।
महत्त्वमृषिमुख्यानां ददामि तव सुव्रत ॥ २३ ॥
ब्रह्मणस्तु वचः श्रुत्वा विश्वामित्रस्तपोधनः ।
प्राञ्जलिः प्रणतो वाक्यं प्रत्युवाच पितामहं ॥ २४ ॥
ब्रह्मर्षिशब्दं भगवन् दुर्लभं तपसार्जितं ।
लभेयं त्वत्प्रसादेन यदि मेऽस्ति तपश्चितं ॥ २५ ॥
तमुवाच ततो ब्रह्मा न तावत् त्वं जितेन्द्रियः ।
कामक्रोधावनिर्जित्य कथं ब्रह्मत्वमिच्छसि ॥ २६ ॥
जयेन्द्रियाणि तावत् त्वं कामक्रोधौ च कौशिक ।
ततः परं त्वं ब्रह्मत्वं समवाप्स्यसि दुर्लभं ॥ २७ ॥
इत्युक्त्वा प्रययौ ब्रह्मा पुनरेव यथागतं ।
विश्वामित्रोऽपि तत्रैव तेपे घोरतरं तपः ॥ २८ ॥
ऊर्ध्वबाहुर्निरालम्ब एकपादाग्रविष्ठितः ।
वायुभक्ष्यः स्थितः स्थान एकस्मिन् स्थाणुवत् स्थिरः ॥ २९ ॥

घर्मे पञ्चतपा भूत्वा वर्षास्वभ्रावकाशिकः ।
शिशिरे जलशायी च भूत्वा तेपे महत् तपः ॥ ३० ॥
एवं वर्षशतं घोरं साग्रं तप उपासतः ।
समस्ता दिवि काकुत्स्थ देवा भयमुपाविशन् ॥ ३१ ॥
संभ्रमं परमास्थाय ततः शक्रः सुराधिपः ।
चिन्तयित्वा तपोविघ्नमुपायं रघुनन्दन ॥ ३२ ॥
आहूयाप्सरसं रम्भां मरुद्गणावृतः प्रभुः ।
उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ ३३ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
मेनकानिर्वासो नाम पञ्चषष्टितमः सर्गः ॥

LXVI.

सुरकार्यमिदं रम्भे कर्तुमर्हसि भाविनि ।
लोभयस्व तपस्यन्तं कौशिकं रूपसंपदा ॥ १ ॥
एवमुक्ता ततो रम्भा सहस्राक्षेण धीमता ।
प्राञ्जलिः परमोद्विग्ना प्रत्युवाच सुराधिपं ॥ २ ॥
कोपनश्च तपस्वी च विश्वामित्रः शचीपते ।
स कोपं नियतं देव मय्युत्स्रक्ष्यति कोपितः ॥ ३ ॥
तस्मात् त्वं मे सुरपते प्रसादं कर्तुमर्हसि ।
नास्य सादयितव्यानि तेजांसि च तपांसि च ॥ ४ ॥
तामुवाच ततः शक्रो वेपमानां कृताञ्जलिं ।
त्वं रम्भे कुरु मा भैषीः प्रियं मे प्रियभाषिणि ॥ ५ ॥
कोकिलो हृदयग्राही काले कुसुमितद्रुमे ।
अहं कन्दर्पसहितः स्थास्ये तव समीपतः ॥ ६ ॥
मनोहरं तु रम्भोरु कृत्वा रूपमथाद्भुतं ।
तमृषिं रुचिरापाङ्गि गच्छ लोभयितुं वने ॥ ७ ॥
इत्युक्ता देवराजेन रम्भा सुरुचिरानना ।
कृत्वा रूपं मनोहरं विश्वामित्रमलोभयत् ॥ ८ ॥
इन्द्रोऽपि कोकिलो भूत्वा कन्दर्पसहितस्तदा ।
वल्गुवागभितस्तस्यास्तस्थौ राम विलोभयन् ॥ ९ ॥

कोकिलस्य वचः श्रुत्वा वल्गु व्याहरतो वने ।
रम्भागीतस्वरं चैव मधुरं सुमनोहरं ॥१०॥
मारुतं च सुखस्पर्शं दिव्यगन्धाधिवासितं ।
आयान्तं समभिप्रेक्ष्य कामिनां मदवर्धनं ॥११॥
सहसा हृतचित्तात्मा मदनेन महामुनिः ।
गीतस्वनेनानुसृत्य रम्भां दृष्ट्वा मनोहरां ॥१२॥
शब्देनापहृतस्तेन रम्भासंदर्शनेन च ।
स्मृत्वा चात्र तपोभ्रंशं मुनिः शङ्कामुपागमत् ॥१३॥
सहस्राक्षस्य तत् कर्म दृष्ट्वाथ ध्यानचक्षुषा ।
रम्भां कोपसमाविष्ट इदं वचनमब्रवीत् ॥१४॥
यस्माल्लोभयसे रम्भे मामात्मगुणसंपदा ।
तस्माच्छिलामयी भूत्वा स्थास्यसीह तपोवने ॥१५॥
वर्षाणामयुतं पूर्णं मच्छापकलुषीकृता ।
ब्राह्मणस्तु तपःसिद्ध उद्धर्ता ते भविष्यति ॥१६॥
रम्भां शैलमयीं कृत्वा विश्वामित्रो महामुनिः ।
संतापमगमत् तीव्रं क्रोधस्य वशमागतः ॥१७॥
दृष्ट्वा तथा कृतां रम्भां सद्यः शैलमयीं रुषा ।
कन्दर्पसहितं चैव दृष्ट्वा तत्र पुरंदरं ॥१८॥
तपसोऽपहारं पुनः कृतं दृष्ट्वा तथात्मनः ।
अजितेन्द्रियोऽस्मीति भृशं जगर्हात्मानमात्मना ॥१९॥

अथ हैमवतीं पुण्यां दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमुपागम्य तपस्तप्तुं प्रचक्रमे ॥ २० ॥
मौनं वर्षसहस्रं तु कृत्वा स कृतनिश्चयः ।
वज्रस्थानमुपाश्रित्य तस्थौ गिरिरिवाचलः ॥ २१ ॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
रम्भाशापो नाम षट्षष्टितमः सर्गः ॥

# आदिकाण्डं

## LXVII.

स्थाणुभूते स्थिते तस्मिन् मुनौ मौनव्रतान्विते ।
आवेष्टुं नान्तरं कामो न क्रोधो ददृशे मुनेः ॥ १ ॥
अक्रोधनमकामं च तं दृष्ट्वा शान्तचेतसं ।
तपसोग्रेण संसिद्धिं परां गतमरिंदम ॥ २ ॥
संभ्रान्तमनसो भीता ब्रह्माणं तपसां निधिं ।
ऊचुरभ्येत्य विबुधाः सर्वे शक्रपुरोगमाः ॥ ३ ॥
उपायैर्बहुभिर्विप्रो विश्वामित्रस्तपोनिधिः ।
क्रोधितो लोभितश्चैव तपसा च विवर्धितः ॥ ४ ॥
न चास्य वृजिनं किञ्चिद्दृश्यते स्वल्पमप्यथ ।
न दीयते यदि तस्मै मनसो यदभीप्सितं ॥ ५ ॥
विनाशयति लोकांस्त्रींस्तेजसा सचराचरान् ।
व्याकुलाश्च दिशः सर्वा न च सूर्यः प्रकाशते ॥ ६ ॥
सागराः क्षुभिताः सर्वे विदीर्यन्ति च पर्वताः ।
कम्पते पृथिवी चैव वायुर्वाति भृशाकुलः ॥ ७ ॥
बुद्धिं न कुरुते यावदेष प्रतपतां वरः ।
देवराज्यपरिप्राप्तौ लभतां तावदीप्सितं ॥ ८ ॥
ततः सर्वे सुरगणाः पितामहपुरःसराः ।
विश्वामित्रमुपागम्य वाक्यमूचुरिदं तदा ॥ ९ ॥

ब्रह्मर्षे विनिवर्तस्व तपसोऽस्मादतः परं ।
ब्रह्मर्षित्वमनुप्राप्तस्तपसा ह्यसि दुर्लभं ॥ १० ॥
प्रीतः स्वच्छन्दमरणं ददामि तव चेप्सितं ।
स्वस्त्याप्नुहि त्वं भद्रं ते तपसोऽस्माडुपारम ॥ ११ ॥
पितामहवचः श्रुत्वा तत् तदा मधुराक्षरं ।
कृताञ्जलिरिदं वाक्यमुवाच मुनिपुंगवः ॥ १२ ॥
यदि प्राप्तं मया ब्रह्मन् ब्राह्मण्यं तपसो बलात् ।
ततो ब्रह्म च वेदाश्च सत्यं च वरयन्तु मां ॥ १३ ॥
सिद्धिर्धृतिः स्मृतिश्चैव विद्या मेधा शमः क्षमा ।
तपो दमो दया क्षान्तिः सर्वज्ञत्वं कृतज्ञता ॥ १४ ॥
असंमोह इति प्राहुर्ब्रह्म ब्रह्मविदो जनाः ।
अद्रोहः सर्वभूतानामसंकल्यमसङ्गता ॥ १५ ॥
तन्मां भजन्तु विश्वेश ब्रह्माव्ययमनुत्तमं ।
तपसा च यदि प्राप्तं ब्राह्मणत्वं यथेप्सितं ॥ १६ ॥
तमेवं वादिनं ब्रह्मा प्रत्युवाच तपोनिधिं ।
प्रतिभास्यन्ति ते वेदा ब्रह्म चाव्ययमुत्तमं ॥ १७ ॥
अधिकस्त्वं मतो मेऽद्य सर्ववेदविदां मुने ।
इत्युक्त्वैनं ततो ब्रह्मा ययौ सुरगणैर्वृतः ॥ १८ ॥
विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमं ।
कृतकृत्यश्चचारेमां पृथिवीं सिद्धमानसः ॥ १९ ॥

एष ब्रह्मविदां श्रेष्ठ एष तेजस्विनां वरः ।
एष विग्रहवान् धर्म एष सिद्धिमतां वरः ॥ २० ॥
एष सत्ये दमे चैव धर्मेषु च समास्थितः ।
शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ ॥ २१ ॥
जनकः प्राञ्जलिर्भूत्वा विश्वामित्रं ततोऽब्रवीत् ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महामुने ॥ २२ ॥
यज्ञं काकुत्स्थसहितो द्रष्टुमभ्यागतः स्वयं ।
गुणाः सुबहवः प्राप्तास्त्वत्संदर्शनजा मया ॥ २३ ॥
सदश्च पावितमिदं त्वद्गुणौघैस्तपोनिधे ।
विप्रभावश्च ते ब्रह्मन् कीर्त्यमानो महातपः ॥ २४ ॥
श्रुतो मया महातेजो रामेण च महात्मना ।
सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ॥ २५ ॥
अप्रमेयं तव तपो ह्यप्रमेयं च ते बलं ।
अप्रमेया गुणाश्चापि नित्यं ते पुरुषर्षभ ॥ २६ ॥
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो ।
कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलं ॥ २७ ॥
श्वः प्रभाते भवन्तं च द्रष्टुमेष्यामि वै पुनः ।
स्वागतं जयतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ २८ ॥
एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ।
प्रदक्षिणमुपावृत्य विश्वामित्रं ततो ययौ ॥ २९ ॥

विश्वामित्रोऽपि धर्मात्मा सहरामः सलक्ष्मणः ।
स्ववासमुपचक्राम पूज्यमानो महर्षिभिः ॥३०॥

इत्यार्षे रामायणे आदिकाण्डे शतानन्दवाक्ये
विश्वामित्रब्रह्मत्वप्राप्तिर्नाम
सप्तषष्टितमः सर्गः ॥

# आदिकाण्डं

## LXVIII.

ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मानमुपायात् सहराघवं ॥ १ ॥
तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ ततो वाक्यमुवाच ह ॥ २ ॥
भगवन् स्वागतं तेऽस्तु किं करोमि महातपः ।
भवानाज्ञापयतु मामाज्ञाप्यो भवतो ह्यहं ॥ ३ ॥
एवमुक्तस्तु धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच पुनर्धीरो वाक्यं वाक्यविदां वरः ॥ ४ ॥
पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुर्दिव्यं यदेतत् त्वयि तिष्ठति ॥ ५ ॥
एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं तु करिष्यतः ॥ ६ ॥
इत्युक्तो जनको राजा प्रत्युवाच कृताञ्जलिः ।
श्रूयतां धनुषस्तत्त्वं यदर्थं मयि तिष्ठति ॥ ७ ॥
देवरात इति ख्यातो निमेः षष्ठो महीपतिः ।
न्यासभूतमिदं तस्य धनुर्दत्तं महात्मनः ॥ ८ ॥
दक्षयज्ञवधे पूर्वं धनुषानेन शङ्करः ।
विध्वंस्य त्रिदशान् सर्वानिदं किल तदोक्तवान् ॥ ९ ॥

यस्माद्भागार्थिनो भागं नाकल्पयत मे सुराः ।
तस्मादङ्गानि सर्वाणि धनुषा शातयामि वः ॥१०॥
तस्मै देवा भयोद्विग्ना रुद्राय प्राणमंस्तदा ।
प्रसादयां चक्रुरेनं तेषां तुष्टोऽभवद्भवः ॥११॥
प्रीतश्चापि ददौ तेषां तान्यङ्गानि महौजसां ।
धनुषा यानि यान्यासन् शातितानि महात्मना ॥१२
तदेतद्देवदेवस्य धनुर्दिव्यं महात्मनः ।
तिष्ठत्यद्यापि भगवन् कुलेऽस्माकं सुपूजितं ॥१३॥
वीर्यशुल्का च मे कन्या दिव्यरूपा गुणान्विता ।
भूतलादुत्थिता पूर्वं नाम्ना सीतेत्ययोनिजा ॥१४॥
तां नृपा वरयामासुरागत्यागत्य वै पुरा ।
वीर्यशुल्का प्रदेयेति तानहं चाब्रुवं नृपान् ॥१५॥
ततो नृपतयः सर्वे प्रार्थयन्तः सुतां मम ।
वीर्यं जिज्ञासयिषवः पुरमभ्याययुर्मम ॥१६॥
वीर्यजिज्ञासया तेषां मया संदर्शितं धनुः ।
न शेकुश्चापि ते ब्रह्मन्नुद्यन्तुमपि तद्धनुः ॥१७॥
तेषामल्पमहं ज्ञात्वा वीर्यं तत्र महामुने ।
कृतवान् सर्वतस्तेषां प्रत्याख्यानं सुतां प्रति ॥१८॥
ततस्ते तेन कोपेन राजानः सहिता मुने ।
रुरुधुर्मिथिलामेतां पुरीमभ्येत्य सर्वशः ॥१९॥

ते मन्यमाना ह्यात्मानमवधूतं पृथङ्नृपाः ।
रोषेण महताविष्टा मिथिलामभ्यपीडयन् ॥ २० ॥
संवत्सरं समापूर्णं रुरुधुः कृतनिश्चयाः ।
अवरोधेन तेनास्मि यदा क्षीणो हि सर्वशः ॥ २१ ॥
तदा प्रसादयां चक्रे देवदेवमुमापतिं ।
प्रसादाद्भगवान् प्रीतश्चतुरङ्गबलं ददौ ॥ २२ ॥
ततो भग्ना नृपतयो मया तेन ययुर्मुने ।
अल्पवीर्यमदोत्साहा अल्पवीर्याभिमानिनः ॥ २३ ॥
तदेतन्मुनिशार्दूल दिव्यं परमभास्वरं ।
दर्शयाम्यद्य रामाय लक्ष्मणाय च तद्धनुः ॥ २४ ॥
कुर्यादारोपणं रामो धनुषश्चास्य चेदयं ।
दद्यामयोनिजामस्मै सीतां दशरथस्नुषां ॥ २५ ॥

इत्यार्षे रामायणे आदिकाण्डे जनकवाक्यं नाम
अष्टषष्टितमः सर्गः ॥

LXIX.

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः ।
धनुर्दर्शय रामाय तदिति प्राब्रवीन्नृपं ॥ १ ॥
सुरोपमस्तु जनकः सोऽमात्यान् व्यादिदेश ह ।
रामसंदर्शनार्थं तद्धनुरानीयतामिति ॥ २ ॥
जनकेन समादिष्टाः प्रविश्य सचिवाः पुरीं ।
धनुरानाययामासुः पुरुषैराप्तकारिभिः ॥ ३ ॥
पुरुषाणां शतान्यष्टौ व्यायतानां महौजसां ।
मञ्जूषामष्टचक्रस्थां गुर्वीमूहुः कथञ्चन ॥ ४ ॥
तामानीय च मञ्जूषामायसीं यत्र तद्धनुः ।
सुरोपमं तु जनकं तमूचुरिति मन्त्रिणः ॥ ५ ॥
इदं तद्धनुरानीतमाज्ञया ते नराधिप ।
दर्शयैतदृषेरस्य राघवस्य च भास्वरं ॥ ६ ॥
तेषामेतद्वचः श्रुत्वा जनकः प्रसृतं वचः ।
विश्वामित्रमुवाचेदं तौ चोभौ रामलक्ष्मणौ ॥ ७ ॥
ब्रह्मन् धनुरुपानीतं यत् तु तिष्ठति नो गृहे ।
राजभिर्यन्न शकितमुच्चलुमपि तद्धनुः ॥ ८ ॥
नैतत् पूरयितुं शक्ताः सेन्द्राः सुरगणा अपि ।
न यक्षोरगरक्षांसि देवदेवादृते शिवात् ॥ ९ ॥

अशक्तिर्मानुषाणां तु धनुषोऽस्य प्रपूरणे ।
कुत एव हि संधाने शक्तिर्वास्यानुकर्षणे ॥ १० ॥
इदं मया धनुर्दिव्यं तवानायितमाज्ञया ।
दर्शयैतन्मुने क्षिप्रमनयो राजपुत्रयोः ॥ ११ ॥
विश्वामित्रस्तु तच्छ्रुत्वा जनकस्य वचस्तदा ।
अभ्यभाषत धर्मात्मा प्रहृष्टेनान्तरात्मना ॥ १२ ॥
गृहाणेदं महाबाहो दिव्यं धनुरनुत्तमं ।
धारणे कर्षणे चास्य यत्नमातिष्ठ राघव ॥ १३ ॥
मुनेस्तु वचनाद्रामो यत्र तिष्ठति तद्धनुः ।
मञ्जूषां तामपावृत्य विश्वामित्रमभाषत ॥ १४ ॥
इदं धनुरहं दिव्यं तोलयिष्यामि पाणिना ।
यत्नवांश्च भविष्यामि सज्यस्यास्य विकर्षणे ॥ १५ ॥
बाढमित्येव तं राजा मुनिश्च समभाषत ।
सलीलमिव तद्रामस्तोलयित्वैकपाणिना ॥ १६ ॥
पश्यतामभितस्तत्र सदस्यानां समन्ततः ।
आनम्य नातियत्नेन सज्यं चक्रे हसन्निव ॥ १७ ॥
सज्यं कृत्वा ततश्चैव पूरयामास वीर्यवान् ।
बभञ्ज पूरयंश्चैव मध्ये रामो बलादिव ॥ १८ ॥
तस्य शब्दो महानासीद्गिरेरिव विशीर्यतः ।
वज्रस्येव विमुक्तस्य शक्रेण नगमूर्धनि ॥ १९ ॥

निपेतुस्तेन शब्देन सर्वशो मोहिता जनाः ।
विश्वामित्रं वर्जयित्वा राजानं तौ च राघवौ ॥ २० ॥
प्रत्याश्वस्ते जने तस्मिन् राजा विस्मयमागतः ।
उवाच प्राञ्जलिर्वाक्यं विश्वामित्रमिदं तदा ॥ २१ ॥
भगवन् श्रुतपूर्वो मे रामो दशरथात्मजः ।
अत्यद्भुतमिदं त्वद्य कर्म चादर्शितं मया ॥ २२ ॥
जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजं ॥ २३ ॥
वीर्यशुल्कप्रदानेन प्रतिज्ञा सफलीकृता ।
सीतां दास्यामि रामाय प्राणेभ्योऽपि प्रियामहं ॥ २४ ॥
भवतोऽनुमते तस्मादितो यान्तु महामुने ।
दूता ममाज्ञया शीघ्रमयोध्यां जवनैर्हयैः ॥ २५ ॥
विज्ञाप्य चैव राजानमानयन्तु पुरीं मम ।
प्रदानं वीर्यशुल्कायाः सीतायाः कथयन्तु च ॥ २६ ॥
त्वया गुप्तौ च काकुत्स्थौ वेदयन्तु नृपाय ते ।
एभिः प्रह्लादितं वाक्यैरानयन्त्विह तं नृपं ॥ २७ ॥
कौशिकेन तथेत्युक्तो नृपः प्रेष्यानुपस्थितान् ।
अयोध्यां प्रेषयामास स हि राजा त्वरान्वितः ॥ २८ ॥

इत्यार्षे रामायणे आदिकाण्डे धनुर्भङ्गो नाम
एकोनसप्ततितमः सर्गः ॥

# आदिकाण्डं

## LXX.

जनकेन समादिष्टा दूतास्ते द्रुतवाहनाः ।
मार्गे त्रिरात्रमुषिता अयोध्यां प्राविशन् पुरीं ॥ १ ॥
ते राज्ञो विदिता दूता राजवेश्म प्रवेशिताः ।
ददृशुस्तं महात्मानं तत्राथ नृपसत्तमं ॥ २ ॥
शश्वत् प्रजाः प्रशासन्तं धर्मज्ञं सचिवैर्वृतं ।
ऋत्विग्भिर्देवसंकाशैर्वशिष्ठाद्यैश्च मन्त्रिभिः ॥ ३ ॥
आशास्यमानं सुप्रीतैः शक्रमाङ्गिरसैरिव ।
तं लोकपालप्रतिमं लोकपाले सुनिश्चितं ॥ ४ ॥
दृष्ट्वैव चाभिप्रणता बद्धाञ्जलिपुटास्ततः ।
ऊचुर्दशरथं वाक्यमिदं प्रियनिवेदिनः ॥ ५ ॥
वैदेहो जनको राजा पृच्छति त्वां नराधिप ।
कुशलानामयं स्निग्धं सामात्यं सपुरोहितं ॥ ६ ॥
पृष्ट्वा चानामयं पूर्वमव्ययं स नराधिपः ।
विश्वामित्रसहायस्त्वां विज्ञापयति पार्थिवः ॥ ७ ॥
सुता मे वीर्यशुल्केति प्रख्याता विदिता च ते ।
राजभिर्हीनवीर्यैश्च पुरापि प्रार्थिता यथा ॥ ८ ॥
सेयं मम सुता राजन् विश्वामित्रस्य शासनात् ।
पुरीमिमां समागत्य तव पुत्रेण निर्जिता ॥ ९ ॥

आनम्य तद्धनुर्दिव्यं मध्ये भग्नं महात्मना ।
रामेण बलमाश्रित्य महत्यां जनसंसदि ॥ १० ॥
तस्मै सीता मया देया वीर्यशुल्का सुताय ते ।
प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ ११ ॥
सोपाध्यायः सस्वजनः सबलः सपदानुगः ।
शीघ्रमर्हसि राजर्षे त्वमागन्तुमिह प्रभो ॥ १२ ॥
प्रीतिं पूर्वप्रवृत्तां मे संवर्धयितुमर्हसि ।
पुत्रयोरुभयोरेव वधौ ते दित्सिते मया ॥ १३ ॥
इति त्वां जनको राजा विज्ञापयति पार्थिव ।
विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥ १४ ॥
इति दूतवचः श्रुत्वा राजा परमहर्षितः ।
उवाचेदं वशिष्ठादिन् सर्वानेव पुरोधसः ॥ १५ ॥
गुप्तः कुशिकपुत्रेण कौशल्यानन्दिवर्धनः ।
लक्ष्मणेन सह भ्रात्रा विदेहानगमत् किल ॥ १६ ॥
दृष्टवीर्यश्च काकुत्स्थे जनकः सुमहायशाः ।
प्रतिप्रदानं सीताया रामे कर्तुं किलेच्छति ॥ १७ ॥
यदि ते रोचते ब्रह्मन् जनकः स महीपतिः ।
संबन्धी तत्र गच्छामस्ततः शीघ्रमितो वयं ॥ १८ ॥
बाढमित्येव तच्छ्रुत्वा वशिष्ठप्रमुखा द्विजाः ।
ऊचुः परमसंहृष्टाः स्वस्तु यास्याम इत्यपि ॥ १९ ॥

ते चापि रजनीं तत्र दूताः परमसत्कृताः ।
ऊषुर्विदेहराजस्य सर्वकामैः सुपूजिताः ॥२०॥

इत्यार्षे रामायणे आदिकाण्डे जनकदूतवाक्यं नाम
सप्ततितमः सर्गः ॥

## LXXI.

तस्यां रात्र्यां व्यतीतायां सोपाध्यायो नराधिपः ।
राजा दशरथः श्रीमान् सुमन्त्रमिदमब्रवीत् ॥ १ ॥
अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलं ।
निर्यान्त्वग्रे समारोप्य नानारत्नचयान् मम ॥ २ ॥
चतुरङ्गं च मे शीघ्रं बलं निर्यातु सर्वशः ।
ममाज्ञासमकालं च युज्यतां युग्यमुत्तमं ॥ ३ ॥
वशिष्ठो वामदेवश्च जाबालिः काश्यपो भृगुः ।
मार्कण्डेयश्च दीर्घायुर्मुनिः कात्यायनस्तथा ॥ ४ ॥
एते द्विजाः प्रयान्त्वग्रे स्यन्दनैः सहिता मया ।
यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति मां ॥ ५ ॥
इत्याज्ञया नरेन्द्रस्य सेना सा चतुरङ्गिनी ।
राजानमृषिभिः सार्धं प्रयान्तं पृष्ठतोऽन्वगात् ॥ ६ ॥
चतुर्भिस्तानहोरात्रैर्विदेहानभ्युपेयिवान् ।
ददर्श मिथिलां रम्यां जनकेनोपशोभितां ॥ ७ ॥
प्रत्युद्गम्य च तं राजा प्रियातिथिमुपागतं ।
उवाच जनकः प्रीतः शतानन्दसमन्वितः ॥ ८ ॥
स्वागतं ते महाराज दिष्ट्या प्राप्तोऽसि मे गृहं ।
पुत्रयोरुभयोः प्रीतिं दिष्ट्या प्राप्स्यसि राघव ॥ ९ ॥

दिष्ट्या प्राप्तो महातेजा वशिष्ठो भगवानयं ।
मार्कण्डेयादयश्चैव दिष्ट्या प्राप्ता महर्षयः ॥ १० ॥
दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलं ।
राघवैः सह संबन्धं कृत्वा प्रथितसद्गुणैः ॥ ११ ॥
अद्य मे सफलं जन्म प्राप्तं चाद्य क्रियाफलं ।
अद्य पूतोऽस्मि राजर्षे त्वत्संबन्धात् सबान्धवः ॥ १२ ॥
एषां चापि महर्षीणामद्याभ्यागमनादहं ।
सविशेषतरं पूतो राजन्नाप्यायितस्तथा ॥ १३ ॥
श्वः प्रभाते महाराज निर्वर्तयितुमर्हसि ।
यज्ञस्यावभृथे पुण्यमुद्वाहमृषिभिः सह ॥ १४ ॥
तस्यैतद्वचनं श्रुत्वा राजा दशरथस्तदा ।
ऋषिमध्य उवाचेदं जनकं मिथिलेश्वरं ॥ १५ ॥
राजन् प्रतिगृहीतारः स्मृता दातृवशाः किल ।
यद्वक्ष्यसि यदा चैव तत्कर्तारस्तदा वयं ॥ १६ ॥
श्लक्ष्णां चैवानुरूपं च वचनं प्रियवादिनः ।
तद्राज्ञो जनकः श्रुत्वा परं विस्मयमागतः ॥ १७ ॥
ततः सर्वे मुनिगणाः परस्परसमागमे ।
हर्षमेत्य परं तत्र निशां तामवसंस्तदा ॥ १८ ॥
कथयन्तः कथा हृद्याः पुण्यश्रवणकीर्तनाः ।
परस्परप्रभावज्ञाः पूजयन्तः परस्परं ॥ १९ ॥

विश्वामित्रं च दृष्ट्वैव राजा दशरथस्तदा ।
मुनिश्रेष्ठं समागम्य ववन्दे हृष्टमानसः ।। २० ।।
भवन्तं नाथमासाद्य पावितोऽस्मीति चाब्रवीत् ।
विश्वामित्रोऽपि चैवैनं प्रीतिमानिदमब्रवीत् ।। २१ ।।
पूत एवासि राजेन्द्र स्वकृतैः कर्मभिः शुभैः ।
अनेन चापि पुत्रेण रामेणाक्लिष्टकर्मणा ।। २२ ।।
पूतोऽसि श्लाघनीयश्च देवानामपि संमतः ।
एष ते नृपते पुत्रो रामो निर्यातितो मया ।। २३ ।।
लक्ष्मणेन सह भ्रात्रा कुशली रघुनन्दन ।
इत्युक्तो मुमुदे राजा विश्वामित्रेण धीमता ।। २४ ।।
तौ चापि पुत्रावाघ्राय परिष्वज्य च पीडितं ।
उवास स निशां तत्र सुसुखी हृष्टमानसः ।। २५ ।।
जनकोऽपि तदा राजा क्रिया धर्मेण धर्मवित् ।
कृत्वा यज्ञोचिताः सर्वास्तां रात्रिमवसत् सुखं ।। २६ ।।

इत्यार्षे रामायणे आदिकाण्डे दशरथजनकसमागमो नाम
एकसप्ततितमः सर्गः ।।

## LXXII.

ततः प्रभाते जनकः कृतपौर्वाह्णिकक्रियः ।
उवाच मधुरं वाक्यं शतानन्दं पुरोधसं ॥ १ ॥
भ्राता ममानुजः श्रीमान् वीर्यवानाज्ञया मम ।
कुशध्वज इति ख्यातो यो ऽध्यास्ते नगरं शुभं ॥ २ ॥
वयाट्टालकपर्यन्तं पिबन्निक्षुमतीं नदीं ।
सांकाश्यं स्वर्गसंकाशं विमानमिव पुष्पकं ॥ ३ ॥
तमहं द्रष्टुमिच्छामि मानार्हो हि स मे मतः ।
प्रीयते हि महासत्त्वः स मया राजसत्तमः ॥ ४ ॥
तस्याथ शासनाद्दूतास्तं यात्वा शीघ्रगामिणः ।
आनयामासुरव्यग्रा विष्णुमिन्द्राज्ञया यथा ॥ ५ ॥
स तस्य शासनाद्भ्रातुराजगाम कुशध्वजः ।
ददर्श चोपसृत्याशु जनकं भ्रातृवत्सलं ॥ ६ ॥
सो ऽभिवाद्य शतानन्दं जनकं च महीपतिं ।
अध्यतिष्ठदनुज्ञातो राजार्हं वरमासनं ॥ ७ ॥
सहोपविष्टौ तौ तत्र प्रेषयामासतुस्तदा ।
मन्त्रिश्रेष्ठं समाहूय सुदामानं समाहितौ ॥ ८ ॥
गच्छ मन्त्रिवराभ्येत्य शीघ्रं दशरथं नृपं ।
आनयेह सहामात्यं सपुत्रं सपुरोधसं ॥ ९ ॥

उपकार्यां स गत्वा तमिक्ष्वाकुकुलनन्दनं ।
ददर्श शिरसा चैनं प्रणिपत्येदमब्रवीत् ॥ १० ॥
अयोध्याधिपते राजन् वैदेहो मिथिलाधिपः ।
त्वां द्रष्टुमिच्छति क्षिप्रं सोपाध्यायं सबान्धवं ॥ ११ ॥
मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा ।
सबन्धुरागमत् तत्र यत्र राजा स मैथिलः ॥ १२ ॥
तमासाद्य च संगृह्य राजा दशरथस्ततः ।
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥ १३ ॥
विदितं ते यथास्माकमिक्ष्वाकुकुलदैवतं ।
प्रवक्ता धर्मकार्येषु वशिष्ठो भगवानृषिः ॥ १४ ॥
विश्वामित्राभ्यनुज्ञातः सर्वैश्च परमर्षिभिः ।
एष वक्ष्यति नः पूर्वं यथाधर्मं यथाक्रमं ॥ १५ ॥
तूष्णींभूते दशरथे वशिष्ठो भगवानृषिः ।
उवाचेदं वचो धर्म्यं जनकं सपुरोहितं ॥ १६ ॥
आकाशप्रभवो ब्रह्मा शाश्वतो नित्यमव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ १७ ॥
मारीचादङ्गिरास्तस्य प्रचेतास्तनयोऽभवत् ।
मनुः प्रचेतसः पुत्र इक्ष्वाकुस्तु मनोः सुतः ॥ १८ ॥
स इक्ष्वाकुरयोध्यायां राजाभूत् प्रथमः पुरे ।
इक्ष्वाकोस्तु सुतः श्रीमान् विकुक्षिरुपपद्यत ॥ १९ ॥

विकुक्षेस्तु महातेजा बाणः पुत्रो व्यजायत ।
बाणस्य तु महाराज अनरण्यः प्रतापवान् ॥ २० ॥
अनरण्यात् पृथुर्जज्ञे त्रिशङ्कुश्च पृथोरपि ।
त्रिशङ्कोरभवत् पुत्रो धुन्धुमारो महायशाः ॥ २१ ॥
धुन्धुमारसुतो राजा युवनाश्वो महाबलः ।
युवनाश्वसुतश्चासीन्मान्धाता पृथिवीपतिः ॥ २२ ॥
मान्धातुस्तु महातेजाः सुषन्धिः समपद्यत ।
सुषन्धेर्ध्रुवसन्धिस्तु द्वितीयस्तु प्रसेनजित् ॥ २३ ॥
यशस्वी ध्रुवसन्धेस्तु भरतो नाम विश्रुतः ।
भरतात् तु महातेजा असितः समजायत ॥ २४ ॥
पतिशोकातुरा तत्र पुत्रं देवी व्यजायत ।
सह तेन गरेणैव ततः स सगरोऽभवत् ॥ २५ ॥
सगरादसमञ्जास्तु अंशुमांश्चासमञ्जसः ।
दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथः ॥ २६ ॥
भगीरथात् ककुत्स्थश्च ककुत्स्थाच्च रघुस्तथा ।
रघोस्तु वंशे तेजस्वी प्रवृद्धः पुरुषादकः ॥ २७ ॥
कल्माषपादो ह्यभवच्छङ्खणस्तस्य चात्मजः ।
सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ॥ २८ ॥
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगादभवन्मरुः ।
मरोः प्रशुश्रुको ह्यासीदम्बरीषः प्रशुश्रुकात् ॥ २९ ॥

अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ।
नहुषस्य ययातिस्तु नाभागश्च ययातितः ॥ ३० ॥
अजो नाभागपुत्रस्तु तस्माद्दशरथोऽभवत् ।
राज्ञो दशरथस्येमौ तनयौ रामलक्ष्मणौ ॥ ३१ ॥
आमनोरिति शुद्धानां राज्ञाममिततेजसां ।
ककुत्स्थेक्ष्वाकुसगररघुप्रवरजन्मनां ॥ ३२ ॥
उदाराचारसत्त्वानां क्षत्रधर्मानुपालिनां ।
कुले जलनिधिप्रख्ये जातयोर्वृत्तशालिनोः ॥ ३३ ॥
रामलक्ष्मणयोरर्थे वरये तनये तव ।
सदृशाभ्यां स्वसदृशे सुते त्वं दातुमर्हसि ॥ ३४ ॥
इत्युक्तो जनको राजा कृताञ्जलिरभाषत ।
अस्माकमपि राजर्षे कुलं त्वं श्रोतुमर्हसि ॥ ३५ ॥
कन्यादाने हि वक्तव्यं कुलं निरवशेषतः ।
नामतो वृत्ततश्चैव कर्मतः शीलतस्तथा ॥ ३६ ॥

इत्यार्षे रामायणे आदिकाण्डे कन्यावरणं नाम
द्विसप्ततितमः सर्गः ॥

# आदिकाण्डं

## LXXIII.

ततस्त्वाभाष्य जनको वशिष्ठं वदतां वरं ।
नृपं दशरथं चेदं प्रोवाच वचनं तदा ॥ १ ॥
राजाभूत् त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ।
निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥ २ ॥
तस्य पुत्रो मिथिर्नाम बभूवानुपमद्युतिः ।
तस्यापि जनको नाम जनकस्याप्युदावसुः ॥ ३ ॥
उदावसोरभूत् सूनुः प्रथितो नन्दिवर्धनः ।
नन्दिवर्धनजश्चासीत् सुकेतुर्नाम पार्थिवः ॥ ४ ॥
सुकेतोरभवत् पुत्रो देवरातो महाबलः ।
देवरातस्य तनयो वृहद्रथ इति श्रुतः ॥ ५ ॥
वृहद्रथस्य च सुतो महावीर्यः प्रतापवान् ।
महावीर्यस्य धृतिमान् सुधृतिस्तनयोऽभवत् ॥ ६ ॥
सुधृतेरपि धर्मात्मा धृष्टकेतुरभूत् सुतः ।
धृष्टकेतोरभूच्चापि हर्यश्वस्तनयो महान् ॥ ७ ॥
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रसिद्धकः ।
प्रसिद्धकस्य धर्मात्मा राजा कृत्तिरथः सुतः ॥ ८ ॥
पुत्रः कृत्तिरथस्यापि देवमीढ इति स्मृतः ।
देवमीढस्य विबुधो विबुधस्यापि चान्धकः ॥ ९ ॥

अन्धकस्य सुतश्चासीत् कृतिरात इति श्रुतः।
कृतिरातस्य च सुतः कृतिरोमा व्यजायत ॥१०॥
कृतिरोमसुतश्चापि स्वर्णरोमेति विश्रुतः।
स्वर्णरोम्णोऽभवच्चापि ह्रस्वरोमा सुतो बली ॥११॥
तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः।
ज्येष्ठोऽहमनुजश्चायं भ्राता मम कुशध्वजः ॥१२॥
मां तु ज्येष्ठं ततो राज्येष्वभिषिच्य पिता मम।
कुशध्वजं यौवराज्ये त्यक्त्वा राज्यं वनं गतः ॥१३॥
वृद्धे पितरि स्वर्याते ततोऽहं रघुनन्दन।
भ्रातरं देवसंकाशमपश्यं स्वशरीरवत् ॥१४॥
कस्यचित् त्वथ कालस्य सांकाश्यादागतो नृपः।
सुधन्वा बलवीर्याढ्यो मिथिलामवरोधकः ॥१५॥
स च मे प्रेषयद्दूतं यदेतत् ते धनुर्गृहे।
तिष्ठत्यभ्यर्चितं दिव्यमेतद्देहीति राघव ॥१६॥
तस्याप्रदाने धनुषः सोऽयुध्यत मया सह।
हतश्च स मया राजा सुधन्वा बलगर्वितः ॥१७॥
निहत्य समरे चाहं सुधन्वानं महीपतिं।
सांकाश्ये भ्रातरं शूरमभ्यषिञ्चं कुशध्वजं ॥१८॥
कनीयानेष मे भ्राता सत्यसंधः कुशध्वजः।
ददामि सहितोऽनेन वधौ तेऽहं सुते नृप ॥१९॥

आदिकाण्डं

सीतां रामाय तनयामुर्मिलां लक्ष्मणाय च ।
वीर्यशुल्का मम सुता सीता सुरसुतोपमा ॥ २० ॥
अयोनिजा समुत्पन्ना वेदीमध्यात् सुमध्यमा ।
तां रामाय प्रयच्छामि पत्नीं वीर्यबलार्जितां ॥ २१ ॥
रामलक्ष्मणयो राजन् कुरु गोदानमङ्गलं ।
पितृश्राद्धं च भद्रं ते ततो वैवाहिकं कुरु ॥ २२ ॥
वर्तन्तेऽद्य मघा राजन् दिवसे तूत्तरे पुनः ।
फाल्गुण्यः प्रतिपत्स्यन्ते विवाहस्तत्र नोऽस्त्वयं ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे जनककुलाख्यानं नाम
त्रिसप्ततितमः सर्गः ॥

## LXXIV.

उक्तवाक्ये तु जनके विश्वामित्रो महामुनिः ।
उवाच वचनं धीमान् वशिष्ठसहितस्तदा ॥ १ ॥
उभे महोदधिप्रख्ये उभयोरपि वां कुले ।
ख्यात इक्ष्वाकुवंशो हि जनकानां तथैव च ॥ २ ॥
सदृशोऽपत्यसंबन्धो युवयोरिति मे मतिः ।
सीताया उर्मिलायाश्च रामलक्ष्मणयोस्तथा ॥ ३ ॥
वक्तव्यमस्ति नः किञ्चिद्भूयोऽपि शृणु तन्नृप ।
भ्राता ते सदृशो योऽयं शूरो राजा कुशध्वजः ॥ ४ ॥
अस्यास्ति किल धर्मात्मन् रूपेणाप्रतिमं भुवि ।
कन्याद्वयं राघवार्थे तद्वयं वरयामहे ॥ ५ ॥
धर्मतो भरतस्यार्थे शत्रुघ्नस्य च धीमतः ।
तदिमे संप्रयच्छ त्वं यदि ते रुचिता वयं ॥ ६ ॥
पुत्रा दशरथस्यास्य चत्वारोऽमिततेजसः ।
लोकपालोपमा वीराः सर्वे सत्यपराक्रमाः ॥ ७ ॥
एषामर्थे वयं राजन् भवन्तं वरयामहे ।
सदृशोऽसि प्रभावेन राघवाणां महीपते ॥ ८ ॥
संबन्ध उभयोर्भ्रात्रोर्युवयोः सदृशस्त्वयं ।
इक्ष्वाकुभिर्धर्मशीलैर्विख्यातैराप्रजापतेः ॥ ९ ॥

इत्युदारवचः श्रुत्वा विश्वामित्रवशिष्ठयोः ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ॥ १० ॥
सदृशः कुलसंबन्धो भवद्भ्यामुपवर्णितः ।
एवं भवत्विमे कन्ये कुशध्वजसुते उभे ॥ ११ ॥
ददामि भरतायैकां शत्रुघ्नाय तथापरां ।
इच्छाम्यहमपि प्रीतिं संबन्धं च पुनः पुनः ॥ १२ ॥
एकाह्ने राजपुत्रीणां चत्वारो रघुनन्दनाः ।
गृह्णन्त्वासां चतसृणां पाणीन् मन्त्रवदीप्सितान् ॥ १३ ॥
उत्तरे दिवसे ब्रह्मन् फाल्गुण्यो भगदेवताः ।
विवाहेषु प्रशंसन्ति नक्षत्रं वै विपश्चितः ॥ १४ ॥
एवमस्त्विति तं तत्र वशिष्ठः प्रत्यभाषत ।
तं चापि जनको राजा कृताञ्जलिरभाषत ॥ १५ ॥
वरधर्मकृतो ब्रह्मन् शिष्योऽस्मि भवतां सदा ।
सामात्यः सबलश्चैव परवानस्मि चिन्त्यतां ॥ १६ ॥
प्रभुर्दशरथो राजा ममास्य विषयस्य च ।
भवन्तश्चापि सर्वे मे सर्वस्वे प्रभविष्णवः ॥ १७ ॥
विषयस्य च सर्वस्य राज्यस्य च ममेश्वराः ।
भवन्तः क्रियतां तस्माद्भवद्भिः प्रणयो मम ॥ १८ ॥
तथा वदति वैदेहे जनके प्रसृतं वचः ।
राजा दशरथो हृष्टः प्रत्युवाच हसन्निव ॥ १९ ॥

प्रियं संबन्धिनं स्निग्धं प्रीतियुक्तमिदं वचः ।
सर्वस्वस्यास्य ते राजन् प्रभुरस्मि यथात्थ मां ॥ २० ॥
अहं तव ममापि त्वं यत् तवास्ति ममैव तत् ।
विश्वामित्रादयश्चापि तवेमे मम चेश्वराः ॥ २१ ॥
सर्वतः प्रणयोऽस्माभिः कृतस्त्वयि महीपते ।
करिष्यामश्च भूयोऽपि नास्ति नः स्वे विचारणा ॥ २२ ॥
युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
प्रियसंबन्धिनौ लब्धौ लोकेऽस्मिन् पूजितौ मया ॥ २३ ॥
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयं ।
गोदानादीनि कर्माणि कर्तुं कार्याण्यनन्तरं ॥ २४ ॥
धर्मार्थवृद्धिकामानां मा नः कालोऽत्यगादयं ।
सर्वेषामेव चास्माकमाज्ञां त्वं दातुमर्हसि ॥ २५ ॥
आपृच्छ्यैवं दशरथो राजानं मिथिलेश्वरं ।
पुरस्कृत्य वशिष्ठादीन् निर्जगाम मुनींस्ततः ॥ २६ ॥
स गत्वा निलयं राजा कृत्वा श्राद्धं महत् तदा ।
पुत्राणां प्रियपुत्रः स चक्रे गोदानमुत्तमं ॥ २७ ॥
गवां शतसहस्रं हि ब्राह्मणेभ्यो नरेश्वरः ।
एकैकशो ददौ पुत्रानुद्दिश्य तान् पृथक् पृथक् ॥ २८ ॥
पयस्विनीनां हि गवां सवत्सानां सुवर्चसां ।
ददौ शतसहस्राणि चत्वारि रघुनन्दनः ॥ २९ ॥

ततस्तैः कृतगोदानैर्वृतः पुत्रैर्महीपतिः ।
लोकपालैरिव बभौ वृतः साक्षात् प्रजापतिः ।।३०।।

इत्यार्षे रामायणे आदिकाण्डे गोदानं नाम
चतुःसप्ततितमः सर्गः ।।

LXXV.

यमेव दिवसं राजा चक्रे गोदानं मङ्गलं ।
तमेवं दिवसं तत्र युधाजित् प्रत्यदृश्यत ॥ १ ॥
पुत्रः केकयराजस्य शूरो भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजा तं परिषस्वजे ॥ २ ॥
युधाजिच्चापि संपूज्य पर्यपृच्छदनामयं ।
पृष्ट्वा चानामयं पश्चादिदं वचनमब्रवीत् ॥ ३ ॥
केकयाधिपती राजन् स्नेहात् कुशलमब्रवीत् ।
येषां कुशलकामोऽसि तेषां कुशलमुत्तमं ॥ ४ ॥
स्वस्रीयं द्रष्टुकामोऽहं त्वां च राजन् सबान्धवं ।
स्वपुरादागतः शीघ्रमयोध्यां रघुनन्दन ॥ ५ ॥
श्रुत्वा चाहमयोध्यायामिहस्थं त्वां सबान्धवं ।
त्वरावानुपयातोऽहं द्रष्टुं ते वृद्धिमीप्सितां ॥ ६ ॥
तं स राजा दशरथः प्रियातिथिमुपागतं ।
दृष्ट्वा परमसत्कारैः पूजार्हं प्रत्यपूजयत् ॥ ७ ॥
ततस्तामुषितो रात्रिं सह पुत्रैर्महीपतिः ।
पुरस्कृत्य वशिष्ठादिन् मुनीन् यज्ञमुपाययौ ॥ ८ ॥
युक्ते मुहूर्ते वैवाहे महार्हाम्बरभूषणैः ।
कृतकौतुकमङ्गलैः पुत्रैर्दशरथो वृतः ॥ ९ ॥

वशिष्ठं पुरतः कृत्वा तांश्चैवान्यान् महामुनीन् ।
यथान्यायमुपागम्य राजा वैदेहमब्रवीत् ॥ १० ॥
प्राप्ताः स्म राजन् भद्रं ते विवाहार्थं सदस्तव ।
तत् साधु चिन्तयित्वास्मान् प्रवेशयितुमर्हसि ॥ ११ ॥
स्थिता हि ते वशे सर्वे वयमद्य सबान्धवाः ।
स्ववंशधर्माभ्युचितं कुरु वैवाहिकं क्रमं ॥ १२ ॥
इत्युक्तः परमोदारं वाक्यं वाक्यविशारदः ।
प्रत्युवाच ततो राजा मैथिलस्तं नराधिपं ॥ १३ ॥
कः स्थितः प्रतिहारो मे कस्याज्ञा प्रतिपाल्यते ।
स्वगृहे को विचारस्ते विश्रम्भेण प्रविश्यतां ॥ १४ ॥
यज्ञभूमिमिमां प्राप्ताः कृतकौतुकमङ्गलाः ।
मम कन्याश्चतस्रो हि वह्नेर्दीप्ता इवार्चिषः ॥ १५ ॥
सन्नोऽहं त्वत्प्रतीक्षश्च वेद्यामस्यां स्थितो नृप ।
अविघ्नं कुरु राजेन्द्र किमर्थं त्वं विलम्बसे ॥ १६ ॥
श्रुत्वैतज्जनकेनोक्तं वाक्यं दशरथो नृपः ।
प्रवेशयामास तदा वशिष्ठादीन् द्विजर्षभान् ॥ १७ ॥
ततो राजा विदेहानामुवाच रघुनन्दनं ।
रामं कमलपत्राक्षं पूर्वं वेदीमुपानय ॥ १८ ॥
इयं सीता मम सुता सहधर्मचरी तव ।
गृहाण पाणिना पाणिं त्वमस्या रघुनन्दन ॥ १९ ॥

लक्ष्मणागच्छ पुत्रेममुर्मिलाया मयोद्यतं ।
गृह्णाणोपेत्य धर्मेण पाणिं राघव पाणिना ॥ २० ॥
तमेवमुक्त्वा जनको भरतं केकयीसुतं ।
चोदयामास धर्मात्मा माण्डव्याः पाणिसंग्रहे ॥ २१ ॥
शत्रुघ्नमपि चासीनं जनको वाक्यमब्रवीत् ।
श्रुतकीर्त्या गृह्णाण त्वं पाणिना पाणिमुद्यतं । ॥ २२ ॥
सर्वे भवन्तः सदृशैर्दारैर्युक्ता यतव्रताः ।
कुलोचितं शुभं धर्मं कुरुध्वं शिवमस्तु वः ॥ २३ ॥
जनकस्य वचः श्रुत्वा पाणींस्तान् जगृहुस्तदा ।
चत्वारस्ते चतसृणां शतानन्दानुमन्त्रिताः ॥ २४ ॥
अग्निं प्रदक्षिणं चक्रुस्ततः सर्वे यथाक्रमं ।
राज्ञा कृतस्वस्त्ययनास्तैश्च सर्वैर्महर्षिभिः ॥ २५ ॥
पपात पुष्पवृष्टिश्च लाजोन्मिश्रा नभश्च्युता ।
तेषामुपरि सर्वेषां विवाहे पुण्यकर्मणां ॥ २६ ॥
देवदुन्दुभयो नेदुरम्बरे मधुरस्वनाः ।
शुश्रुवे मधुरश्चैव वीणावेणुस्वनो महान् ॥ २७ ॥
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
विवाहे रघुमुख्यानां तदद्भुतमिवाभवत् ॥ २८ ॥
ईदृशे वर्तमाने तु काले रतिकरे शुभे ।
त्रिरग्निं ते परिक्रम्य तत ऊहुर्वधूः पृथक् ॥ २९ ॥

स्वानि यानानि चारोप्य दारांस्ते प्रययुस्ततः ।
राजाप्यनुययौ पश्चात् सर्षिसंघः सबान्धवः ॥३०॥

इत्यार्षे रामायणे आदिकाण्डे दशरथपुत्राणां
विवाहो नाम पञ्चसप्ततितमः सर्गः ॥

# रामायणं

## LXXVI.

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।
आमन्त्र्य तौ नरव्याघ्रौ जगामोत्तरपर्वतं ॥ १ ॥
विश्वामित्रे गते तस्मिन् जनकं मिथिलाधिपं ।
आपृच्छ्य प्रययौ चापि राजा दशरथः पुरं ॥ २ ॥
अथ राजा विदेहानां तत्र कन्याधनं ददौ ।
कम्बलाजिनरत्नानि दुकूलानि मृदूनि च ॥ ३ ॥
नानारागाणि वासांसि शुभान्याभरणानि च ।
रत्नानि च महार्हाणि यानानि विविधानि च ॥ ४ ॥
गवां शतसहस्राणि चत्वारि पृथगेव च ।
ददौ राजा महार्हाणि कन्याधनमभीप्सितं ॥ ५ ॥
चतुरङ्गबलं चान्यदनुयात्रं महद्ददौ ।
दासीनां निष्ककण्ठीनां सहस्रमपि चाददात् ॥ ६ ॥
सुवर्णस्यायुतं पूर्णं हिरण्यस्य च मैथिलः ।
ददौ प्रीतेन मनसा कन्याधनमनुत्तमं ॥ ७ ॥
एवं दत्वा बहुविधं तमनुज्ञाप्य पार्थिवं ।
प्रविवेश पुरीं रम्यां मिथिलां मिथिलेश्वरः ॥ ८ ॥
राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ।
पुरस्कृत्य वशिष्ठादीन् गुरूंस्तान् प्रययौ ततः ॥ ९ ॥

तं गच्छन्तं कृतोद्वाहं स्वपुरं सपदानुगं ।
अपसव्यं ततो जग्मुः पक्षिणो भयवेदिनः ॥१०॥
मृगाश्च शमयन्तस्तान् प्रतिजग्मुः प्रदक्षिणं ।
तान् दृष्ट्वा व्यथितो राजा वशिष्ठं पर्यपृच्छत ॥११॥
असौम्याः पक्षिणः कस्मान्मृगाश्चेमे प्रदक्षिणाः ।
अकस्माच्चैव सोत्कम्पं हृदयं केन मे मुने ॥१२॥
राज्ञो दशरथस्येदं श्रुत्वा वाक्यं तदा मुनिः ।
वशिष्ठस्तमुवाचेदं श्रूयतामस्य यत् फलं ॥१३॥
उपस्थितं भयं घोरं पक्षिणो वेदयन्ति ते ।
प्रदक्षिणा मृगाः सौम्यास्तदेते शमयन्ति ते ॥१४॥
तयोः संवदतोरेवं वायुः प्रादुरभून्महान् ।
प्रचण्डः शर्कराकर्षी कम्पयन्निव मेदिनीं ॥१५॥
दिशः सतिमिराश्चासन् न तताप दिवाकरः ।
रजसा च जगत् कृत्स्नं भस्मनेवावकीर्यते ॥१६॥
सर्वे चाप्यभवंस्तत्र सैनिका मूढचेतसः ।
वर्जयित्वा वशिष्ठादीनृषींस्तांश्चैव राघवान् ॥१७॥
ततो रजसि संशान्ते सैनिका लब्धचेतसः ।
आयान्तं ददृशुस्तत्र जटामण्डलधारिणं ॥१८॥
महेन्द्रमिव दुर्धर्षं कालान्तकयमोपमं ।
दुर्निरीक्ष्यं नरैरन्यैर्ज्वलितानलवर्चसं ॥१९॥

स्कन्धे परशुमादाय धनुश्चेन्द्रायुधप्रभं ।
प्रगृह्यैकं शरं घोरं रुद्रं साक्षादिवागतं ।। २० ।।
रोषामर्षसमाविष्टं सधूममिव पावकं ।
जमदग्निसुतं रामं दृष्ट्वाभ्यासं समागतं ।। २१ ।।
वशिष्ठप्रमुखा विप्रा जेपुः शान्तिपरायणाः ।
संगताश्चर्षयः सर्वे संजजल्पुरथो मिथः ।। २२ ।।
कच्चित् पितृबधामर्षात् पुनर्नोत्सादयिष्यति ।
क्षत्रं रामोऽयमागत्य शान्तमन्युरपि प्रभुः ।। २३ ।।
सर्वक्षत्रबधं घोरमसकृत् कृतवान् पुरा ।
कच्चिदद्यापि सक्रोधः क्षत्रं नोत्सादयिष्यति ।। २४ ।।
इति मत्वार्घ्यमुद्यम्य भार्गवं ते ततोऽब्रुवन् ।
वशिष्ठप्रमुखा विप्राः सामपूर्वमिदं वचः ।। २५ ।।
राम सुस्वागतं तेऽस्तु गृह्णाणार्घ्यमिदं प्रभो ।
मुने भार्गव संशाम्य न क्रोद्धुं पुनरर्हसि ।। २६ ।।
प्रतिगृह्य स तां पूजामप्रत्युक्त्वा च तानृषीन् ।
रामो दाशरथिं राममुवाचेदमनन्तरं ।। २७ ।।

इत्यार्षे रामायणे आदिकाण्डे जामदग्न्यसमागमो
नाम षट्सप्ततितमः सर्गः ।।

## LXXVII.

राम दाशरथे वीर वीर्यं ते श्रूयतेऽद्भुतं ।
धनुः किल त्वया भग्नं दिव्यं यत् तच्छ्रुतं मया ॥ १ ॥
अद्भुतं तत् कृतं राम धनुषो भेदनं त्वया ।
श्रुत्वैवाहमनुप्राप्त आदायेदं महद्धनुः ॥ २ ॥
अनेन धनुषा राम मया कृत्स्ना मही जिता ।
पूरयेदमपि क्षिप्रं बलं दर्शय राघव ॥ ३ ॥
विकर्ष चापि संधाय बाणेनानेन राघव ।
गृहाणेदं धनुर्दिव्यं शरं चैनं मयोद्यतं ॥ ४ ॥
यदि संधास्यसीदं त्वं बाणेनानेन कार्मुकं ।
ततो दास्यामि युद्धं ते वीर्यश्लाघ्यमनुत्तमं ॥ ५ ॥
तस्येदं वचनं श्रुत्वा राजा दशरथस्तदा ।
विषण्णवदनो भूत्वा प्राञ्जलिः प्रणतोऽब्रवीत् ॥ ६ ॥
राम रोषः प्रशान्तस्ते ब्राह्मणस्त्वं शमात्मकः ।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ७ ॥
भृगूणां हि कुले जातः प्रशान्तानां महात्मनां ।
तपःस्वाध्यायशीलानां न क्रोद्धुं पुनरर्हसि ॥ ८ ॥
ऋचीकच्यवनादीनां पितॄणां संनिधौ पुरा ।
न योत्स्य इति संन्यस्य शस्त्रं न स्प्रष्टुमर्हसि ॥ ९ ॥

तपोदमरतो भूत्वा कश्यपाय वसुंधरां ।
दत्वा वनमुपागम्य संन्यासं कृतवान् कथं ॥ १० ॥
मम सर्वविनाशाय भूयो योद्धुमिहेच्छसि ।
न ह्येतस्मिन् हते रामे जीवामः सर्व एव हि ॥ ११ ॥
प्रसीद भृगुशार्दूल त्रायस्व शरणागतं ।
रामं पुत्रं न मे बालं राम संदग्धुमर्हसि ॥ १२ ॥
वदत्येवं दशरथे जामदग्न्यः प्रतापवान् ।
अनादृत्यैव तद्वाक्यं भूयो राममभाषत ॥ १३ ॥
इमे द्वे धनुषी राम दिव्ये लोकत्रये श्रुते ।
विश्वकर्मकृते सारे अल्पवीर्यदुरानमे ॥ १४ ॥
तयोरेकं त्र्यम्बकाय दत्तं राम युयुत्सवे ।
त्रिपुरं जघ्नुषे देवैर्भग्नं काकुत्स्थ यत् त्वया ॥ १५ ॥
इदं द्वितीयमपरं विष्णवे यद्ददुः सुराः ।
द्रव्यसारबलप्राणप्रमाणाकृतिभिः समं ॥ १६ ॥
ब्रह्माणं यत्र पप्रच्छुः सुराः कौतूहलान्विताः ।
शितिकण्ठस्य विष्णोश्च धनुषश्च बलाबलं ॥ १७ ॥
अभिप्रायं विदित्वा तु देवतानां पितामहः ।
विरोधयामास मिथो विष्णुं शङ्करमेव च ॥ १८ ॥
विरोधे च महायुद्धमभवत् तत्र देवयोः ।
शितिकण्ठस्य विष्णोश्च परस्परजिगीषया ॥ १९ ॥

तत्र तज्जृम्भितं शैवं धनुर्भीमपराक्रमं ।
हुंकारेण महादेवः स्तम्भितोऽथ त्रिलोचनः ॥ २० ॥
देवतैस्तु समागम्य सर्षिसंघैः सचारणैः ।
याचितो न प्रहृतवान् विष्णुर्बलवतां वरः ॥ २१ ॥
विजृम्भितं तत्र दृष्ट्वा सर्वे विष्णुबलात् तदा ।
अधिकं मेनिरे विष्णुं विबुधा धनुषा सह ॥ २२ ॥
धनुस्तज्जृम्भितं रुद्रो विदेहेषु महायशाः ।
देवरातस्य राजर्षेर्ददौ न्यासमनुत्तमं ॥ २३ ॥
इद च वैष्णवं राम धनुरभ्यधिकं ततः ।
ऋचीके भार्गवे न्यासं न्यदधाद्विष्णुरूर्जितं ॥ २४ ॥
ऋचीकोऽपि महातेजाः पुत्रायामिततेजसे ।
पित्रे मम ददौ दिव्यं कार्मुकं जमदग्नये ॥ २५ ॥
न्यस्तशस्त्रे तु पितरि मदीये शममास्थिते ।
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २६ ॥
तं रामासदृशं श्रुत्वा पितुस्तत्र बधं मया ।
असकृत् सूदितं क्षत्रं जातं जातमनेन हि ॥ २७ ॥
पृथिवी चापि विजिता मयास्य धनुषो बलात् ।
दत्ता चेयं विनिर्जित्य कश्यपाय महात्मने ॥ २८ ॥
कश्यपाय च दत्त्वामामखिलां सागराम्बरां ।
न्यस्तशस्त्रस्तपस्तप्तुं गतोऽहं मेरुपर्वतं ॥ २९ ॥

तत्र संन्यस्तशस्त्रोऽपि तपस्यभिरतोऽप्यहं ।
श्रुत्वैव धनुषो भङ्गं द्रष्टुं त्वां समुपागतः ॥ ३० ॥
तदिदं वैष्णवं राम पितृपैतामहं मम ।
क्षत्रधर्ममुपाश्रित्य गृहाण धनुरुत्तमं ॥ ३१ ॥
योजयस्व गृहीत्वा च शरेण रघुनन्दन ।
यदि शक्तोऽसि संधातुं युद्धं दास्यामि ते ततः ॥ ३२ ॥
तच्छ्रुत्वा जामदग्न्यस्य रामो रामस्य भाषितं ।
गौरवाद्यन्त्रितकथः पितुर्वचनमब्रवीत् ॥ ३३ ॥
श्रुतवानस्मि ते कर्म घोरं यत् तु त्वया कृतं ।
न तेऽभ्यसूये तत् कर्म पितुरानृण्यकारिणः ॥ ३४ ॥
वीर्यशक्तिपरिक्षीणं क्षत्रमुत्सादितं त्वया ।
नातिक्रूरेण तेन त्वं कर्मणा गर्वितो भव ॥ ३५ ॥
आनयेदं धनुर्दिव्यं पश्य मे बलपौरुषं ।
क्षत्रस्यापि महत् तेजः पश्याद्य भृगुनन्दन ॥ ३६ ॥
इत्युक्त्वा तद्धनुर्दिव्यं रामो जग्राह वीर्यवान् ।
रामस्य जामदग्न्यस्य हस्तादीषत् कृतस्मितः ॥ ३७ ॥
शरं च हस्तादादाय ततो लघुपराक्रमः ।
संधाय स शरं चापं विचकर्ष महायशाः ॥ ३८ ॥
विकृष्य बलवच्चापि तद्धनुः सशरं तदा ।
रामो दाशरथिर्वाक्यमुवाच प्रथितं पुनः ॥ ३९ ॥

ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
शक्तोऽपि न ते मोक्ष्येऽहमिमं प्राणहरं शरं ॥ ४० ॥
इमां तु ते गतिं दिव्यां निहन्मि तपसार्जितां ।
लोकान् वाप्रतिमान् पुण्यान् हन्मि ते शरतेजसा ॥ ४१ ॥
न ह्ययं वैष्णवो राम शक्यो दिव्यो महाशरः ।
मया मोघं समुत्स्रष्टुं बलदर्पविनाशनः ॥ ४२ ॥
ततो वरायुधधरं रामं दशरथात्मजं ।
द्रष्टुं ब्रह्मादयो देवाः समाजग्मुर्मनोजवाः ॥ ४३ ॥
देवानुपस्थितान् तत्र दृष्ट्वा दिव्येन चक्षुषा ।
बुद्ध्वा च ध्यानयोगेन रामं नारायणाङ्गजं ॥ ४४ ॥
रामाभिभूतवीर्योऽसौ जामदग्न्यस्ततोऽब्रवीत् ।
कृताञ्जलिरिदं वाक्यं रामं दशरथात्मजं ॥ ४५ ॥
कश्यपाय यदा राम मया दत्ता वसुंधरा ।
विषये मे न वस्तव्यमिति मे कस्यपोऽब्रवीत् ॥ ४६ ॥
सोऽहं ततःप्रभृत्यस्यां न वसामि क्षितौ क्वचित् ।
मिथ्याप्रतिज्ञः काकुत्स्थ मा भूवमिति निश्चितं ॥ ४७ ॥
ततो नार्हसि मे हन्तुं गतिं दिव्यां मनोजवां ।
लोकांस्तु जहि मे पुण्यान् शरेणानेन राघव ॥ ४८ ॥
अक्षयं मधुहन्तारं जानामि त्वां सनातनं ।
धनुषोऽस्य परामर्षादस्तु स्वस्ति प्रसीद मे ॥ ४९ ॥

एते सुरगणा राम पश्यन्ति त्वां समागताः ।
वरायुधधरं वीरं साक्षाद्विष्णुमिवापरं ॥५०॥
न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥५१॥
इत्युक्तः स शरं रामो मुमोच रघुनन्दनः ।
लोकेषु जामदग्न्यस्य रामस्यामिततेजसः ॥५२॥
ततःप्रभृति रामोऽभूदलोकः शरतेजसा ।
मुक्ते तस्मिन् शरे देवाः प्राशंसन् राघवं तदा ॥५३॥
आकाशगा विमानेषु स्वेषु दिव्येष्ववस्थिताः ।
आसन् वितिमिराः सर्वाः दिशश्च विदिशस्तथा ॥५४॥
रामोऽपि जामदग्न्यस्तं रामं दशरथात्मजं ।
प्रदक्षिणमुपावृत्य जगामाथ स्वमाश्रमं ॥५५॥

इत्यार्षे रामायणे आदिकाण्डे जामदग्न्यलोकाभावो
नाम सप्तसप्ततितमः सर्गः ॥

## LXXVIII.

जामदग्न्ये गते रामे रामो दाशरथिर्धनु ।
लब्ध्वा संदर्शयामास पितुः स्वबलनिर्ज्जितं ॥ १ ॥
तांश्चाभिवादयां चक्रे वशिष्ठप्रभृतीनृषीन् ।
प्रोवाच पितरं चेदं रामागमनविह्वलं ॥ २ ॥
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिनी ।
अयोध्याभिमुखी सेना त्वया नाथेन नाथिनी ॥ ३ ॥
रामस्यैतद्वचः श्रुत्वा हृष्टः प्रमुदितो नृपः ।
बाहुभ्यां संपरिष्वज्य मूर्ध्नि चाघ्राय राघवं ॥ ४ ॥
गतो राम इति श्रुत्वा प्राप्य हर्षमनुत्तमं ।
योजयित्वा पुनः सैन्यं जगाम स्वपुरीं प्रति ॥ ५ ॥
समुच्छ्रितध्वजवतीं तूर्यस्वननिनादितां ।
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्करां ॥ ६ ॥
राजप्रवेशाभिमुखैः पौरैर्मङ्गलवादिभिः ।
संकीर्णां प्राविशद्राजा पुरीं स्वं च निवेशनं ॥ ७ ॥
कौशल्या च सुमित्रा च कैकेयी च सुमध्यमा ।
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ॥ ८ ॥
ततः सीतां श्रीप्रतिमामुर्मिलां च यशस्विनीं ।
कुशध्वजसुते चैव परिगृह्यानुगृह्य च ॥ ९ ॥

ततः प्रवेशयामासुर्नृपवेश्म स्वलंकृताः ।
मङ्गलालभनीयैश्च शोभिताः क्षौमवाससः ॥१०॥
उपनिन्युश्च ता एता देवतायतनान्यपि ।
अभिवाद्याभिवाद्यांस्तांस्तत्र पूज्यान् गुरूंस्तथा ॥११॥
रेमिरे मुदितास्तत्र भर्तृप्रियहिते रताः ।
तासां भूयो विशेषेण मैथिली जनकात्मजा ॥१२॥
रमयामास भर्तारं विष्णुं श्रीरिव रूपिणी ।
प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ॥१३॥
प्रियभावः स तु तया स्वगुणैरभिवर्धितः ।
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ॥१४॥
हृदयं ह्येव जानाति प्रीतियोगं परस्परं ।
सीतया तु तया रामः प्रियया सह संगतः ।
प्रियोऽधिकतरं तस्या विजहारामरोपमः ॥१५॥

तया स राजर्षिसुतोऽनुरूपया
समेयिवानुत्तमरूपकन्यया ।
अतीव रामः शुशुभे स कान्तया
युतः श्रिया विष्णुरिवापराजितः ॥१६॥

इत्यार्षे रामायणे आदिकाण्डे अयोध्यासंप्रवेशो
नाम अष्टासप्ततितमः सर्गः ॥

# आदिकाण्डं

## LXXIX.

कस्यचित् त्वथ कालस्य राजा दशरथः सुतं ।
भरतं केकयीपुत्रं समाहूयेदमब्रवीत् ॥ १ ॥
अयं केकयराजस्य सुतो वसति पुत्रक ।
नेतुं त्वामागतो वीर युधाजिन्मातुलस्तव ॥ २ ॥
तस्मान्मातामहं द्रष्टुमितोऽनेन सह त्वया ।
गन्तव्यं पुत्र पश्य त्वं पुरं मातामहस्य तत् ॥ ३ ॥
श्रुत्वा दशरथस्यैतद्वचनं कैकयीसुतः ।
गमनायोपचक्राम शत्रुघ्नसहितस्तदा ॥ ४ ॥
दृष्ट्वैव भ्रातरं तं वै केकयेभ्योऽभ्युपागतं ।
भरतं चाभ्यनुज्ञातं श्रुत्वा राजीवलोचनं ॥ ५ ॥
अभवत् केकयी तत्र मुदा परमया युता ।
चिन्तयामास च तदा गमनं भरतस्य सा ॥ ६ ॥
ततोऽभ्यनुज्ञाप्य नृपं सुतं सुरसुतोपमं ।
प्रेषयामास कैकेयी गृहात् पितृगृहं स्वकं ॥ ७ ॥
अमात्यैर्बलमुख्यैश्च रथैश्च बहुभिर्युतं ।
पदात्यश्वप्रयुक्तेन बलेन महता वृतं ॥ ८ ॥
सोऽभिवाद्य महात्मानं पितरं देववर्चसं ।
कृताञ्जलिरुवाचेदमनुज्ञा दीयतामिति ॥ ९ ॥

तं पिता मूर्ध्न्युपाघ्राय परिष्वज्य च पीडितं ।
सिंहखेलगतिं वाक्यमुवाच जनसंसदि ॥१०॥
गच्छ सौम्य शिवेन त्वं मातामहगृहं प्रति ।
संदेशं शृणु मे वत्स तं च कुर्याः समाहितः ॥११॥
इतो मातामहकुलं शत्रुघ्नसहितो व्रज ।
शत्रुघ्नो ह्यनुरक्तस्त्वां भक्तिमांश्चाप्यनुव्रतः ॥१२॥
तवापि च प्रियतरः प्राणेभ्योऽपि परंतप ।
आत्मवत् स त्वया भ्राता द्रष्टव्यो रक्ष्य एव च ॥१३॥
गुणपाशशतैर्बद्धस्त्वया हृदि परंतप ।
न जहाति यथा पुत्र शत्रुघ्नस्त्वां तथा कुरु ॥१४॥
मातुलश्चाप्ययं पुत्र शुश्रूष्योऽहमिव त्वया ।
आर्यकं चापि मन्येथाः पूज्यं दैवतवत् सदा ॥१५॥
विनीतः शीलवांश्चैव भवेः पुत्रानहंकृतः ।
ब्राह्मणान् श्रुतवृत्ताढ्यान् सेवेथाश्च प्रयत्नवान् ॥१६॥
प्रसाद्य चैतान् यत्नेन पृच्छेस्त्वं हितमात्मनः ।
तच्चाप्यमृतवद्ग्राह्यं त्वया तेषां हितं वचः ॥१७॥
ब्राह्मणा हि महात्मानः श्रियो मूलं भवस्य च ।
स्युश्च सर्वकार्येषु ब्राह्मणा ब्रह्मवादिनः ॥१८॥
देवाः पुत्र भवार्थं हि प्रजानां विबुधोत्तमैः
प्रेषिता मानुषं लोकं भूमिदेवा द्विजातयः ॥१९॥

तेषां सकाशाद्वेदांश्च धर्मशास्त्रं तथाव्ययं ।
नीतिशास्त्रं च विपुलं धनुर्वेदं च धारय ॥ २० ॥
अश्वपृष्ठे रथे नागे व्यायामं कुरु नित्यशः ।
गन्धर्वविद्यासु तथा पारगो भव पुत्रक ॥ २१ ॥
नानाशिल्पकलाज्ञश्च भवेरपि परंतप ।
क्षणमप्यासितं तात वृथैव न हितं तव ॥ २२ ॥
कुशलावेदिनो दूता नित्यं प्रेष्याश्च ते मम ।
ह्लादितं हि मनो मे स्यात् कुशलश्रवणात् तव ॥ २३ ॥
एवमुक्त्वा स नृपतिर्भरतं साश्रुलोचनः ।
वाष्पगद्गदया वाचा गच्छ पुत्रेत्यभाषत ॥ २४ ॥
आपृच्छ्यैवं स पितरं रामं चामिततेजसं ।
मातॄश्चाभिप्रणम्यादौ शत्रुघ्नसहितो ययौ ॥ २५ ॥
बलेन महता वीरश्चतुरङ्गेन संवृतः ।
तथानुगम्यमानश्च सर्वैः पुरनिवासिभिः ॥ २६ ॥
भ्रातृस्नेहाच्च रामेण लक्ष्मणेन च वीर्यवान् ।
गत्वा पुरस्कृतो धीमांस्ततो गव्यूतिमात्रकं ॥ २७ ॥
अवरुह्य स्वकाद्यानाद्भरतः केकयीसुतः ।
शत्रुघ्नसहितः पादौ रामस्य शिरसा ययौ ॥ २८ ॥
तौ पादयोर्निपतितौ शत्रुघ्नभरतावुभौ ।
दोर्भ्यामुत्थाप्य रामोऽपि परिष्वज्येदमब्रवीत् ॥ २९ ॥

कैकेयीमातरिह्न मां स्मरेस्त्वं सह्नलद्मणं ।
शत्रुघ्नसह्नितं च त्वां स्मरिष्यामि सलद्मणः ॥ ३० ॥
इत्युक्तो भरतो रामं प्रणिपत्याभिवाद्य च ।
लद्मणं च परिषज्य शत्रुघ्नसह्नितो ययौ ॥ ३१ ॥
ग्रनुगम्यमानो बङ्गभिः सुह्नद्भिः प्रियवादिभिः ।
ग्रनुरक्तैस्तथा चान्यैरपरित्यागिभिः प्रियैः ॥ ३२ ॥
निवर्त्य तु जनान् मान्यांस्ततः शीघ्रतरं ययौ ।
श्रीमान् मातामह्नपुरं द्रष्टुं त्वरितमानसः ॥ ३३ ॥
सुह्नद्भिः सह्न मार्गेषु व्याह्नरन् प्रियवादिभिः ।
ग्रह्नोभिर्गणितैः कैश्चिदश्रान्तबलवाह्ननः ॥ ३४ ॥
वनानि सरितः शैलानतीत्य सुमनोह्नरान् ।
ग्राससाद पुरं राज्ञो रम्यं राजगृह्नं विभुः ॥ ३५ ॥
ग्रभ्यासस्थस्ततो राज्ञे दूतं मातामह्नाय सः ।
प्रेषयामास भरतः प्राप्तोऽस्मीत्याप्तकारिणं ॥ ३६ ॥
श्रुत्वा च दूतवचनं स राजा भृशह्नर्षितः ।
प्रवेशयामास पुरं भरतं परमार्चितं ॥ ३७ ॥
ग्राह्नार्यसिकताकीर्णं पुष्पोत्करविभूषितं ।
राजमार्गं कारयित्वा जलेन सुसमुह्नितं ॥ ३८ ॥
विन्यस्तपूर्णकलसं वनमालाविभूषितं ।
समुच्छ्रितपताकं च धूपगन्धाधिवासितं ॥ ३९ ॥

ततः प्रवेशयामासुर्भरतं पुरवासिनः ।
सर्वतूर्यस्वनैश्चाराद्वाद्यमानैश्च नन्दितं ॥ ४० ॥
वेश्याभिर्वारमुख्याभिर्वाद्यानुगतमुल्वणं ।
नृत्यन्तीभिः पुरस्तात् तु पुरं तत् प्रविवेश सः ॥ ४१ ॥
वृद्धं मातामहं तत्र ददर्शाभिननन्द च ।
राज्ञा तेन परिष्वक्तः पृष्टश्चानामयं ततः ॥ ४२ ॥
प्रविश्यान्तःपुरं तत्र प्राणमद्राजयोपितः ।
श्रीमद्राजगृहं प्राप्य तद्वृद्धजनसंकुलं ॥ ४३ ॥
स वै मातामहगृहे सर्वकामैः सुपूजितः ।
उवास सुसुखं तत्र भरतः श्रीमतां वरः ॥ ४४ ॥
गते तु भरते रामो लक्ष्मणेन सहायवान् ।
पितरं पूजयामास भक्त्या दैवतवत् सदा ॥ ४५ ॥
श्रुत्वा हि पितुराज्ञां स कृत्वा चैव सदोद्यतः ।
पौराणामपि कार्याणि चकार तदनन्तरं ॥ ४६ ॥
मातॄणां मातृकार्याणि चकार च महायशाः ।
गुरूणां चैव सर्वेषां गुरुकार्याणि यत्नवान् ॥ ४७ ॥
तस्य चाप्यभवत् प्रीतः स राजा गुरवस्तथा ।
शीलवृत्तेन रामस्य सर्वे च पुरवासिनः ॥ ४८ ॥

इत्यार्षे रामायणे आदिकाण्डे भरतस्य
मातामहगृहप्रवेशो नाम नवसप्ततितमः सर्गः ॥

## LXXX.

कदाचिद्भरतः श्रीमान् वृद्धं मातामहं नृपं ।
अभिवाद्य महात्मानमिदं वचनमब्रवीत् ॥ १ ॥
आचार्यानुपसेवेयं प्रदिष्टान् भवता हितान् ।
धर्मार्थज्ञानकुशलान् लेख्यसंख्याविदस्तथा ॥ २ ॥
इष्वस्त्रकुशलांश्चैव नीतिशास्त्रविशारदान् ।
हस्त्यश्वरथयानेषु तथैव परिनिष्ठितान् ॥ ३ ॥
गन्धर्वविद्याकुशलान् नानाशिल्पविदस्तथा ।
तथान्यान् वेदवेदाङ्गन्यायशास्त्रार्थपारगान् ॥ ४ ॥
उपसेवितुमिच्छामि श्रेयोऽर्थी दृढमात्मनः ।
भवतानुमतो राजन् प्रदेष्टुं तान् ममार्हसि ॥ ५ ॥
श्रुत्वैव नृपतिर्वाक्यं केकयो भरतस्य सः ।
व्यादिदेश प्रहृष्टात्मा तस्याचार्यान् विपश्चितः ॥ ६ ॥
तानुपास्य च यत्नेन भरतः कैकेयीसुतः ।
वेदवेदाङ्गशास्त्राणां ग्रहणे तत्परोऽभवत् ॥ ७ ॥
निवेद्य शिष्यमात्मानं गुरूणां विनयान्वितः ।
जग्राह वेदवेदाङ्गशास्त्राणि गुणवृद्धये ॥ ८ ॥
आनुपूर्व्या हि शास्त्राणामागमे भृशमुद्यतः ।
विद्यानां च सशिल्पानां शत्रुघ्नसहितस्तदा ॥ ९ ॥

जगाम स महातेजा नानाचार्यपरस्परां ।
शिक्षमाणः प्रयत्नेन विनयाचारयन्त्रितः ॥ १० ॥
दानमानपुरस्कारैराचार्यान् प्रत्यपूजयत् ।
शुश्रूषापरमो भूत्वा विनयं परमाप सः ॥ ११ ॥
ज्ञानाभ्यासरतस्यैवं भरतस्य महात्मनः ।
जगाम सुमहान् कालो वसतस्तत्र धीमतः ॥ १२ ॥
विविधेषु यदा निष्ठां ज्ञानेषूपजगाम सः ।
तदास्य बुद्धिः संजज्ञे तत्त्वार्थाधिगमे पुनः ॥ १३ ॥
विद्याशीलवयोज्ञानवृद्धेभ्यो विदितात्मनः ।
अन्येभ्यश्चापि तत्त्वार्थवेदिभ्यः संनिकर्षतः ॥ १४ ॥
यो यो वेत्ति हि तत्त्वार्थं छिन्नधर्मार्थसंशयः ।
धर्मार्थकाममोक्षाणां सिषेवे तं तमेव हि ॥ १५ ॥
नानाज्ञानकथाभिर्हि रेमे स विजहार च ।
भरतो ज्ञानतत्त्वार्थवेदने स तथोद्यतः ॥ १६ ॥
स यदा ज्ञानविज्ञानविनयेषु कृतागमं ।
आत्मानं भरतो मेने छिन्नधर्मार्थसंशयः ॥ १७ ॥
तदास्य बुद्धिः संजज्ञे दूतं प्रेषयितुं पितुः ।
अथाहूयाब्रवीद्वृद्धं सुहृदं ब्रह्मवादिनं ॥ १८ ॥
अयोध्यां गच्छ भद्रं ते त्वरितो जवनैर्हयैः ।
पितरं तत्र कौशल्यां ब्रूयास्त्वं मातरं च मे ॥ १९ ॥

मातामहकुले चापि यथा वर्तामहे वयं ।
तथा पूर्वं भवान् शंसेत् पितुर्मातुश्च मेऽग्रतः ॥ २० ॥
रामश्चोपेत्य विज्ञाप्यो मामुद्दिश्य सगौरवं ।
भृत्यस्ते भरतः पादौ मूर्ध्नाभ्यर्च्य प्रसाद्य च ॥ २१ ॥
कुशलानामयं स्निग्धं पृच्छतीति समागमे ।
लक्ष्मणश्च परिष्वज्य प्रष्टव्यः कुशलं त्वया ॥ २२ ॥
ब्रूयाश्च मातरं मे त्वं कौशल्यामभिवादनं ।
सुमित्रामपि च ब्रूया वैदेहीं चाभिवादनं ॥ २३ ॥
स तेनैवं समादिष्टो भरतेन महात्मना ।
दूतः शीघ्रहयो भूत्वा प्रययौ यत्र सा पुरी ॥ २४ ॥
अयोध्या सुभृशं रम्या मनुराजर्षिनिर्मिता ।
यां स राजीवताम्राक्षो राजा दशरथोऽन्वशात् ॥ २५ ॥
प्राप्तवानचिरेणैव स तां भरतशासनात् ।
न्यवेदयत तद्राज्ञे मातृभ्योऽथ द्विजस्तथा ॥ २६ ॥
कृतकृत्योऽथ राजेन्द्र भरतः सत्यविक्रमः ।
धनुर्वेदे च वेदे च नीतिशास्त्रेषु पारगः ॥ २७ ॥
अर्थशास्त्रेषु कुशलो व्यायामेषु तथैव च ।
हस्तिशिक्षासु निष्णातो रथशिक्षासु निष्ठितः ॥ २८ ॥
आलेख्ये चैव लेख्ये च लङ्घने प्लवने तथा ।
ज्योतिर्गतिषु निष्णातस्तव वाक्येन चोदितः ॥ २९ ॥

एवंविधानि कर्माणि कृतवान् सुबहून्यपि ।
ततो हि भरतो राजंस्त्वत्सकाशादुपागतः ॥ ३० ॥
श्रुत्वा राजा प्रहृष्टोऽभूद्दूतस्य वचनं प्रियं ।
कौशल्याद्याश्च देव्यस्तास्तथोभौ रामलक्ष्मणौ ॥ ३१ ॥
प्रतिसंदिश्य तं राजा दूतं सत्कृत्य चार्हतः ।
प्रेषयामास नृपतिर्भरतस्य पुनस्तदा ॥ ३२ ॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम् आदिकाण्डे
भरतदूतागमनं नाम अशीतितमः सर्गः ॥

आदिकाण्डं समाप्तं ॥

# सर्गसंग्रहपत्रं

## आदिकाण्डं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

# सर्गसंग्रहपत्रं

# VALMIKI RAMAYANA

## AYODHYĀKĀṆḌAṀ

अयोध्याकाण्डं

EDITED BY
Prof. GASPARE GORRESIO

1981
Indian Heritage Trust
Madras, India

# RAMAYANA

POEMA INDIANO

# DI VALMICI

TESTO SANSCRITO SECONDO I CODICI MANOSCRITTI

DELLA SCUOLA GAUDANA

PER

GASPARE GORRESIO

SOCIO DELLA REALE ACCADEMIA DELLE SCIENZE DI TORINO

ECC.

---

VOLUME SECONDO



PARIGI

DALLA STAMPERIA REALE

PER AUTORIZZAZIONE DEL GUARDASIGILLI DI FRANCIA

M DCCC XLIV

# PREFACE

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।।

The Indian Heritage Trust is happy to offer Prof. Gaspare Gorresio's magnificent edition of Valmiki Ramayana Volume II, Ayodhyakandam. It may be recalled that Volume V, Sundarakandam was published in March 1980 to begin with and Volume I, Adikandam, was brought out in June of this year.

The facsimile reprint of this edition of Valmiki Ramayana has been welcomed by scholars and laymen who have been charmed not only by the elegance of the edition but the different readings as well. The learned reviewer observed in The Hindu that this was based on an ancient text. It seems that of all the recensions this one offered by the Trust is the closest to the original.

Valmiki Ramayanam, the Poem of Mankind, has been indeed the epic of epics. Sri Aurobindo observed that on the face of it the Ramayana was the work of a single mighty and embracing mind . . . not all perhaps can enter at once into the spirit of this masterpiece; but those who have once done so will never admit any

poem in the world as its superior. And in the words of the Sister Nivedita of Ramakrishna-Vivekananda the wonderful creation of Valmiki will retain to the end of time its domination over the hearts and consciences of men.

We remember Prof. Raghavan with gratitude on this occasion. Further we wish to thank Biblioteca Nazionale di Torino for lending the set to us and Prof. Oscar Botto, the present successor of Prof. Gorresio in the Sanskrit chair at Turin, for his help in this regard.

The Indian Heritage Trust thanks all the donors from all over India whose assistance has made the publication of this volume possible. It is hoped to complete the publication in 1982 with the sustained support of our patrons.

December 9, 1981 V. SADANAND



SRI RĀMA, SĪTĀ, LAKSHMANA AND HANUMĀN

Early Chola *c.* 1000 A.D. Government Museum, Madras.

अथ

# श्रीरामायणे वाल्मीकीये

# अयोध्याकाण्डं

## I.

राजापि तौ सुतस्नेहात् सस्मार दयितौ सुतौ ।
तदा भरतशत्रुघ्नौ महेन्द्रसमदर्शनौ ॥ १ ॥
सर्व एव हि चत्वारस्तस्येष्टा ह्यभवन् सुताः ।
जाताः शरीर एकस्मिन् ते विष्णोर्बाहवो यथा ॥ २ ॥
समे पितुः सुतस्नेहे तस्य राज्ञो महात्मनः ।
गुणरत्नाकरे रामे बहुमानोऽधिकोऽभवत् ॥ ३ ॥
स प्रशस्तैर्गुणौघैर्हि रामो रतिकरोऽभवत् ।
पितृमातृसुहृद्भ्रातृप्रजानां नरचन्द्रमाः ॥ ४ ॥
स हि सर्वं जनं नित्यं मधुरं प्रियमब्रवीत् ।
उच्यमानोऽपि परुषं नोवाचाप्रियमन्वपि ॥ ५ ॥
ज्ञानशीलवयोवृद्धैर्गुणवद्भिः सदा नरैः ।
स कथां योजयामास मैत्रीं संगतमेव च ॥ ६ ॥

# रामायणं

विद्वानुदारो मेधावी पूर्वभाषी प्रियंवदः ।
वीर्यवान् न च वीर्येण महता स्वेन गर्वितः ॥ ७ ॥
अनावृतकथो धीमान् वृद्धानां प्रतिपूजकः ।
भक्तानुरक्तप्रकृतिः प्रजानामनुरञ्जकः ॥ ८ ॥
सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पको धीमान् प्रियवागनसूयकः ॥ ९ ॥
कुलक्रमागतायाश्च राज्यप्राप्तेर्गतस्पृहः ।
राज्यलाभादपि परं मेने विद्यागमं परं ॥ १० ॥
दयावान् सर्वभूतेषु शरण्यः शरणैषिणां ।
दाताभिगोप्ता साधूनां शरणागतवत्सलः ॥ ११ ॥
कृतप्रत्युपकारी च कृतज्ञः सत्यसंगरः ।
गुणज्ञो गुणवांश्चैव वश्यात्मा दृढनिश्चयः ॥ १२ ॥
अदीर्घसूत्रो दक्षश्च क्रियासु प्रतिपत्तिमान् ।
सुखाय सर्वसुहृदामर्थग्राही प्रियंवदः ॥ १३ ॥
प्राणान् जह्याच्छ्रियं चैव स्फीतामपि महायशाः ।
अपिवा दयितान् भोगान् न तु सत्यं कदाचन ॥ १४ ॥
ऋजुर्वदान्यः प्रियकृद्विनीतः शीलवान् मृदुः ।
महासत्वो महोत्साहो महात्मा गुणवत्तमः ॥ १५ ॥
तेजस्वी च क्षमावांश्च सोमवत् प्रियदर्शनः ।
दुर्धर्षः समरेऽरीणां शरद्भानुरिवामलः ॥ १६ ॥

एभिर्गुणगणैर्यत्तमन्यैश्चानुपमद्युतिं ।
दृष्ट्वा दशरथो रामं गुणाकरमरिंदमं ॥ १७॥
चिन्तयामास सततं तद्गतेनान्तरात्मना ।
यौवराज्ये सुतं राममभिषिञ्चेयमित्युत ॥ १८॥
एवं हृदि सदा तस्य बुद्धिर्विपरिवर्तते ।
अभिषिक्तं कदा रामं पश्येयमिति धीमतः ॥ १९ ॥
पात्रभूतोऽस्य राज्यस्य सर्वभूतानुरञ्जकः ।
मत्तः प्रियतरो रामः प्रजानां स्वगुणैर्विभुः ॥ २० ॥
पराक्रमे शक्रसमो बृहस्पतिसमो मतौ ।
महीधरसमः स्थैर्ये मत्तश्च गुणवत्तरः ॥ २१ ॥
महीमहमिमां कृत्स्नामधितिष्ठन् तमात्मजं ।
अनेन वयसा दृष्ट्वा सुखं स्वर्गमवाप्नुयां ॥ २२ ॥
तं तस्य भावं भावज्ञा विज्ञाय सुधियो जनाः ।
गुरवो मन्त्रिणश्चैव पौरजानपदास्तथा ॥ २३ ॥
समेत्य मन्त्रयामासुर्मन्त्रयित्वा च निश्चयं ।
ऊचेः समन्ततः सर्वे वृद्धं दशरथं नृपं ॥ २४॥
अनेकवर्षशतिको वृद्धोऽस्यद्य नरेश्वर ।
स रामं यौवराज्ये त्वमभिषेक्तुमिहार्हसि ॥ २५॥
इति तद्वचनं श्रुत्वा तेषां स्वहृदयेप्सितं ।
अनिच्छन्निव जिज्ञासुर्जनांस्तान् प्रत्युवाच सः ॥ २६॥

कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तः कर्तुमिच्छन्ति युवराजं ममात्मजं ॥ २७ ॥
ते तमूचुर्महात्मानं पौरजानपदाः पुनः ।
बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २८ ॥
मृदुश्च देवसत्त्वश्च साध्वाचारोऽनसूयकः ।
प्रियकृत् प्रियवादी च प्रजानां पितृमातृवत् ॥ २९ ॥
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ।
नियन्ता दुर्विनीतानां विनीतप्रतिपूजकः ॥ ३० ॥
न ज्ञातिषु न पौरेषु न च जानपदेष्वपि ।
जनोऽस्त्यगुणवादी यो रामस्य भुवि भूपते ॥ ३१ ॥
सवृद्धबालाः पौरास्ते तथा जानपदा जनाः ।
गुणानुरक्ता रामस्य राममिच्छन्ति भूमिपं ॥ ३२ ॥
गुणकीर्त्या नरपते प्रजा रामेण रञ्जिताः ।
धर्मज्ञेन वदान्येन विनीतेन महात्मना ॥ ३३ ॥
कृती रामो धनुर्वेदे दिव्यास्त्रज्ञश्च संयुगे ।
अमोघास्त्रो दूरपाती चित्रयोधी दृढायुधः ॥ ३४ ॥
यं यं व्रजति संग्रामं राजन् रामस्तवाज्ञया ।
ततस्ततो विजित्यारीन् विजयी विनिवर्तते ॥ ३५ ॥
जित्वापि चारिसैन्यानि यदायं विनिवर्तते ।
तदापि प्रश्रिततरो भूत्वा नः पूजयत्युत ॥ ३६ ॥

प्रवासात् पुनरागत्य कुञ्जरेण रथेन वा ।
राजमार्गेऽपि दृष्ट्वा नः स्थित्वा पृच्छत्यनामयं ॥३७॥
अग्निहोत्रेषु दारेषु शिष्यप्रेष्यजनेषु च ।
सानुकम्पः सदा रामः पृच्छत्यस्माननामयं ॥३८॥
अभ्यन्तरे च बाह्ये च पौरजानपदे तथा ।
स्त्रियो वृद्धास्तरुण्यश्च देवान् राजन् गृहे गृहे ॥३९॥
रामस्यैवाभियाचन्ते यौवराज्येऽभिषेचनं ।
तासामायाचितं राजंस्त्वत्प्रसादात् प्रसिध्यतां ॥४०॥
राममिन्दीवरश्यामं प्रजानामनुकम्पकं ।
पश्येम युवराजं तमभिषिक्तं त्वदाज्ञया ॥४१॥

स राजवर्यात्मजमात्मवन्तं
गुणाभिरामं नरलोककान्तं ।
रामं नृदेवार्हसि लोकनाथम्
इहाभिषेक्तुं युवराजमुर्व्यां ॥४२॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामाभिषेकव्यवसायो
नाम प्रथमः सर्गः ॥

# रामायणं

## II.

तेषामञ्जलिमालास्ताः प्रतिगृह्य समन्ततः ।
हृष्टो दशरथो राजा प्रोवाचेदं वचस्तदा ॥ १ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः प्रियवादिभिः ।
यन्मे ज्येष्ठं प्रियं पुत्रं युवराजमिहेच्छथ ॥ २ ॥
इति राजानुभाष्यैतानेवं भूयोऽब्रवीद्वचः ।
वशिष्ठं वामदेवं च तेषामेवोपशृण्वतां ॥ ३ ॥
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ।
रामाय यौवराज्यं मे दातुमत्रैव रोचते ॥ ४ ॥
आभिषेचनिकं द्रव्यं भवन्तो ज्ञापयन्तु मां ।
यन्मया चोपकर्तव्यं रामराज्याभिपत्तये ॥ ५ ॥
तौ तथेति प्रतिज्ञाय नृपतेर्वचनात् तदा ।
लेखयां चक्रतुर्द्रव्यं भूयश्चैव ननन्दतुः ॥ ६ ॥
कृतमित्येव चाब्रूतामभिगम्य नराधिपं ।
सुप्रीतमनसौ प्रीतं हर्षयन्तौ पुनर्नृपं ॥ ७ ॥
ततः सुमन्त्रमाहूय राजा दशरथोऽब्रवीत् ।
रामः कृतात्मा भवता शीघ्रमानीयतामिति ॥ ८ ॥
स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ।
रामं तत्रानिनायाथ रथेन रथिनां वरः ॥ ९ ॥

# अयोध्याकाण्डं

अथ तत्र समासीनास्तदा दशरथं नृपं ।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः ॥ १० ॥
म्लेच्छाश्च यवनाश्चैव शकाः शैलान्तवासिनः ।
उपासां चक्रिरे सर्वे ते देवा इव वासवं ॥ ११ ॥
तेषां मध्ये स राजर्षिर्मरुतामिव वासवः ।
प्रासादस्थो रथस्थं तं ददर्शायान्तमात्मजं ॥ १२ ॥
गन्धर्वराजप्रतिमं लोके विश्रुतपौरुषं ।
दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनं ॥ १३ ॥
चन्द्रकान्ताननं राममतीव प्रियदर्शनं ।
रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणं ॥ १४ ॥
घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः ।
नातृप्यत तमायान्तमीक्षमाणो नराधिपः ॥ १५ ॥
अवतार्य सुमन्त्रस्तु राघवं स्यन्दनोत्तमात् ।
पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ॥ १६ ॥
स तु कैलासशृङ्गाभं प्रासादं नरपुंगवः ।
आरुरोह नृपं द्रष्टुं सह सूतेन राघवः ॥ १७ ॥
स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिकं ।
नाम संश्रावयन् रामो ववन्दे चरणौ पितुः ॥ १८ ॥
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ।
गृहीत्वाञ्जलिमाकृष्य सस्वजे प्रियमात्मजं ॥ १९ ॥

तस्मै चात्युचितं श्रीमन्मणिकाञ्चनभूषितं ।
दिदेश राजा रुचिरं रामायानुपमासनं ।। २० ।।
तदासनवरं प्राप्य व्यदीपयत राघवः ।
स्वयेव प्रभया मेरुमुदये विमलो रविः ।। २१ ।।
तेन विभ्राजता तत्र सा साभातिव्यराजत ।
विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना ।। २२ ।।
तं स पश्यन् नरपतिस्तुतोष प्रियमात्मजं ।
अलंकृतमिवात्मानमादर्शतलमास्थितं ।। २३ ।।
स तं सस्मितमाभाष्य पुत्रं पुत्रवतां वरः ।
उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः ।। २४ ।।
ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः ।
उत्पन्नस्त्वं गुणश्रेष्ठो मम रामात्मजः प्रियः ।। २५ ।।
तवायत्ताः प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ।
तस्मात् त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ।। २६ ।।
कामं च त्वं प्रकृत्यैव विनीतो गुणवानपि ।
गुणवत् त्वयि च स्नेहात् पुत्र वक्ष्यामि ते हितं ।। २७ ।।
भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ।
कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च ।। २८ ।।
परोक्षयानिशं बुद्ध्या राम प्रत्यक्षया तथा ।
परां च प्रकृतिं दृष्ट्वा परिपाल्याः प्रजास्त्वया ।। २९ ।।

सत्परो निरहंकारो भूत्वा राम गुणान्वितः ।
ततः पालय पुत्रेमाः प्रजाः पुत्रानिवौरसान् ॥ ३० ॥
योधानमात्यान् हस्त्यश्वं कोषं चावेक्ष्य यत्नवान् ।
मित्राण्यमित्रान् मध्यस्थानुदासीनांश्च राघव ॥ ३१ ॥
तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीं ।
तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः ॥ ३२ ॥
तस्मात् पुत्र त्वमात्मानं नियम्यैवं समाचर ।
इति राज्ञो वचः श्रुत्वा नराः प्रियनिवेदिनः ॥ ३३ ॥
त्वरिताः शीघ्रमभ्येत्य कौशल्यायै न्यवेदयन् ।
सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ॥ ३४ ॥
व्यादिदेश प्रियाख्येभ्यः कौशल्या प्रमदोत्तमा ।
अथाभिवाद्य राजानं रथमारुह्य राघवः ।
ययौ स्वं द्युतिमान् वेश्म जनौघैः परिवारितः ॥ ३५ ॥

ते चापि पौरा नृपतेर्वचस्तच्
श्रुत्वा ततो लाभमिवेष्टमाप्य ।
नरेन्द्रमामन्त्र्य गृहाणि गत्वा
देवान् समानर्चुरतीवहृष्टाः ॥ ३६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथानुशासनं
नाम द्वितीयः सर्गः ॥

# रामायणं

## III.

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयं ॥ १ ॥
श्व एव पुष्यो भविता सुतो मे श्वोऽभिषिच्यतां ।
रामो राजीवताम्राक्षो यौवराज्य इति प्रभुः ॥ २ ॥
अथान्तर्गृहमाविश्य राजा दशरथस्तदा ।
सूतमाज्ञापयामास रामं पुनरिहानय ॥ ३ ॥
प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ ।
रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४ ॥
द्वास्थेनावेदितं तस्य रामायागमनं पुनः ।
श्रुत्वैव चापि भूयस्तं रामः शङ्कान्वितोऽभवत् ॥ ५ ॥
प्रवेश्य चैनं त्वरितो रामो वचनमब्रवीत् ।
यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६ ॥
तेन चावेदितं तस्य रामस्यागमनं पुनः ।
द्रष्टुमिच्छति राजा त्वां शीघ्रमागन्तुमर्हसि ॥ ७ ॥
इति सूतवचः श्रुत्वा रामोऽपि त्वरयान्वितः ।
प्रययौ राजभवनं पुनर्द्रष्टुं नरर्षभं ॥ ८ ॥
स श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
तूर्णं प्रावेशयामास विवक्षुः प्रियमुत्तमं ॥ ९ ॥

प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥ १० ॥
प्रणमानं तमुत्थाप्य तं परिष्वज्य भूमिपः ।
आदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ ११ ॥
राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा यथेप्सिताः ।
अन्नवद्भिः क्रतुशतैस्तथेष्टं भूरिदक्षिणैः ॥ १२ ॥
जातमिष्टमपत्यं मे त्वमप्यनुपमं भुवि ।
दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥ १३ ॥
अनुभूतानि सर्वाणि चिरं राज्यसुखानि च ।
देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः ॥ १४ ॥
न किञ्चिन्मम कर्तव्यं तवान्यत्राभिषेचनात् ।
अतस्त्वां यदहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ॥ १५ ॥
अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपं ।
अतस्त्वां यौवराज्येऽहमभिषेक्ष्यामि पुत्रक ॥ १६ ॥
रात्र्यन्ते च तथा राम स्वप्नान् पश्यामि दारुणान् ।
सनिर्घाता महोल्काश्च पतिता हि महास्वनाः ॥ १७ ॥
उपसृष्टं च मे राम नक्षत्रं दारुणैर्ग्रहैः ।
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८ ॥
प्रायशो हि निमित्तानामीदृशानां समुद्भवे ।
राजा वा मृत्युमाप्नोति राष्ट्रं वा नाशमृच्छति ॥ १९ ॥

तद्यावदेव मे चेतो न विमुह्यति राघव ।
तावदेवाभिषिञ्चस्व मां चला हि प्राणिनां गतिः ॥ २० ॥
अद्य चन्द्रोऽभ्युपगतः पुष्यात् पूर्वं पुनर्वसुं ।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१ ॥
तत्र त्वमभिषेच्यश्च मनस्त्वरयतीव मां ।
श्वस्त्वाहमभिषेक्तास्मि यौवराज्ये परंतप ॥ २२ ॥
तस्मात् त्वयाद्य व्रतिना निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भसंस्तरशायिना ॥ २३ ॥
सुहृदस्त्वप्रमत्तास्त्वां रक्षन्त्वद्य प्रयत्नतः ।
भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि ॥ २४ ॥
निर्वासितश्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५ ॥
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः ।
ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६ ॥
किंतु चित्तं मनुष्याणां अनित्यमेव यथा चलं ।
सतां च धर्मकृत्यानि कृतशोभानि राघव ॥ २७ ॥
इत्युक्ता सोऽभ्यनुज्ञातः श्वो भाविन्यभिषेचने ।
व्रजेति रामः पितरमभिवाद्याभ्ययाद्गृहं ॥ २८ ॥
प्रविश्य चात्मनो वेश्म राज्ञादिष्टेऽभिषेचने ।
तस्मिन् क्षणे विनिर्गत्य मातुरन्तःपुरं ययौ ॥ २९ ॥

तत्र तां प्रणतामेव मातरं क्षौमवाससं ।
ददर्श याचमानां तु देवतावेश्मनि श्रियं ॥ ३० ॥
प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा ।
सीता च नन्दिता श्रुत्वा प्रियं रामाभिषेचनं ॥ ३१ ॥
तस्मिन् काले तु कौशल्या तस्थावामीलितेक्षणा ।
सुमित्रयोपास्यमाना सीतया लक्ष्मणेन च ॥ ३२ ॥
श्रुत्वा पुष्येण पुत्रस्य यौवराज्याभिषेचनं ।
प्राणायामेन पुरुषं ध्यायन्ती सा जनार्दनं ॥ ३३ ॥
तथा संयमितामेव सोऽभिगम्याभिवाद्य च ।
उवाच मातरं रामो हर्षयिष्यन्निदं वचः ॥ ३४ ॥
अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि ।
भविता श्वोऽभिषेको मे यथा वै शासनं पितुः ॥ ३५ ॥
सीतया चोपवस्तव्या रजनीयं मया सह ।
एवमृत्विगुपाध्यायैः सह मामुक्तवान् नृपः ॥ ३६ ॥
यानि चात्यन्तयोग्यानि श्वो भाविन्यभिषेचने ।
तानि मे मङ्गलान्यद्य वैदेह्याश्चापि कारय ॥ ३७ ॥
एतच्छ्रुत्वा तु कौशल्या चिरकालाभिकाङ्क्षितं ।
हर्षबाष्पाकुलं वाक्यमिदं राममभाषत ॥ ३८ ॥
वत्स राम चिरं जीव हतास्ते परिपन्थिनः ।
ज्ञातीन् मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९ ॥

कल्याणे वरनक्षत्रे मयि जातोऽसि पुत्रक ।
येन त्वया दशरथो गुणैराराधितः पिता ॥ ४० ॥
अमोघा वत मे भक्तिः पुरुषे पुष्करेक्षणे ।
सेयमिक्ष्वाकुराजर्षेः श्रीस्त्वामद्य श्रयिष्यति ॥ ४१ ॥
इत्येवमुक्तो मात्रेदं रामो लक्ष्मणमब्रवीत् ।
प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मितान्वितः ॥ ४२ ॥
लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुंधरां ।
द्वितीयो मेऽन्तरात्मा त्वं त्वामियं श्रीरुपस्थिता ॥ ४३ ॥
सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च ।
जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥ ४४ ॥
इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां च जगाम स्वं निवेशनं ॥ ४५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामराज्योपनिमन्त्रणं
नाम तृतीयः सर्गः ॥

# अयोध्याकाण्डं

## IV.

स चिन्तयानो नृपतिः श्वो भाविन्यभिषेचने ।
पुरोहितं समाहूय वशिष्ठमिदमब्रवीत् ॥ १ ॥
गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन ।
श्रीयशोराज्यलाभाय वध्वा सह यतव्रतं ॥ २ ॥
तथेति च स राजानमुक्त्वा वेदविदां वरः ।
स्वयं वशिष्ठो भगवान् ययौ रामनिवेशनं ॥ ३ ॥
उपवासयितुं रामं मन्त्रविन्मन्त्रपारगः ।
ब्राह्मं रथवरं युक्तमास्थाय सुधृतव्रतः ॥ ४ ॥
स रामभवनं प्राप्य पाण्डुराभ्रचयोपमं ।
तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥ ५ ॥
तमागतमृषिं रामस्त्वरमाणः ससंभ्रमः ।
मानयिष्यन् स मानार्हं निश्चक्राम निवेशनात् ॥ ६ ॥
अभ्येत्य त्वरमाणश्च रथाभ्यासं मनीषिणः ।
ततोऽवतारयामास परिगृह्य रथात् स्वयं ॥ ७ ॥
स चैनं प्रसृतं दृष्ट्वा प्रसंभाष्य प्रशस्य च ।
प्रियार्हं हर्षयन् राममित्युवाच पुरोहितः ॥ ८ ॥
प्रसन्नस्ते पिता राम यौवराज्यमवाप्स्यसि ।
उपवासं भवानद्य करोतु सह सीतया ॥ ९ ॥

# रामायणं

प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः ।
पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १० ॥
इत्युक्त्वा स तदा राममुपवासं यतव्रतं ।
मन्त्रवित् कारयामास वैदेह्या सहितं मुनिः ॥ ११ ॥
ततो यथावत्क्रमेण स राजगुरुरर्चितः ।
अभ्यनुज्ञाप्य काकुत्स्थं ययौ राजनिवेशनं ॥ १२ ॥
सुहृद्भिस्तत्र रामोऽपि सहासीनैः प्रियंवदैः ।
सभाजितो विवेशान्तस्ताननुज्ञाप्य सर्वशः ॥ १३ ॥
हृष्टनारीनरयुतं राजवेश्म तदा बभौ ।
यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४ ॥
स रामभवनान्निर्यान्मुनिः कैलाससंनिभात् ।
सर्वतो ददृशे मार्गं वशिष्ठो जनसंकुलं ॥ १५ ॥
वृन्दवृन्दैरयोध्यायां राजमार्गः समन्ततः ।
बभूव चातिसंबाधो जनैर्जातकुतूहलैः ॥ १६ ॥
तदा हि नृत्यमानस्य हर्षोद्भूतोर्मिभिर्जलैः ।
बभूव राजमार्गस्य सागरस्येव निस्वनः ॥ १७ ॥
सिक्तसंमृष्टरथ्या हि सा राजपथमालिनी ।
आसीदयोध्या नगरी समुच्छ्रितवृकध्वजा ॥ १८ ॥
तदा ह्ययोध्यानिलयः सस्त्रीबालजनो जनः ।
रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षदुदयं रवेः ॥ १९ ॥

प्रजालंकारभूतं हि जनस्यानन्दवर्धनं ।
उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवं ॥ २० ॥
एवं तु जनसंबाधं राजमार्गं पुरोहितः ।
गाहन्निव जनौघं तं तदा राजकुलं ययौ ॥ २१ ॥
सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः ।
समियाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२ ॥
तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः ।
पप्रच्छ स च तस्मै तत् कृतमित्यभ्यवेदयत् ॥ २३ ॥
तेन चैव तदा तुल्याः सहासीनाः सभासदः ।
आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितं ॥ २४ ॥
गुरुणा सोऽभ्यनुज्ञातो मनुजौघं विसृज्य तं ।
विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५ ॥

तदत्युदग्रं प्रमदाजनाकुलं
महेन्द्रवेश्मप्रतिमं निवेशनं ।
स शोभयंश्चारु विवेश पार्थिवः
शशीव तारागणसंकुलं नभः ॥ २६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे
रामाभिषेकोपवासविधानं नाम चतुर्थः सर्गः ॥

# रामायणं

V.

गते पुरोहिते रामः स्नातः प्रयतमानसः ।
सह पत्न्या विवेशाथ लक्ष्म्या नारायणो यथा ॥ १ ॥
प्रगृह्य शिरसा पात्रीं हविषो विधिवत् तदा ।
महते दैवतायाज्यं जुहाव ज्वलितेऽनले ॥ २ ॥
शेषं च हविषस्तस्य प्राश्याशास्यात्मनो हितं ।
ध्यायन् नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३ ॥
वाग्यतः सह वैदेह्या भूत्वा नियतमैथुनः ।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४ ॥
एकयामावशिष्टायां रात्र्यां तु प्रतिबुध्य सः ।
अलंकारविधिं कृत्स्नं कारयामास वेश्मनः ॥ ५ ॥
ततः शृण्वन् शुभा वाचः सूतमागधवन्दिनां ।
पूर्वां संध्यामुपासीनो जजाप यतमानसः ॥ ६ ॥
तुष्टाव प्रयतश्चैव प्रणाम्य मधुसूदनं ।
विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥ ७ ॥
तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा ।
अयोध्यां पूरयामास तूर्यघोषविमिश्रितः ॥ ८ ॥

# अयोध्याकाण्डं

कृतोपवासं तु तदा वैदेह्या सह राघवं ।
अयोध्यानिलयः श्रुत्वा सर्वः प्रमुमुदे जनः ॥ ९ ॥
ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनं ।
प्रभातां रजनीं वीक्ष्य चक्रे शोभां परां पुनः ॥ १० ॥
सिताभ्रशिखराभेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११ ॥
नानापण्यसमृद्धेषु बणिजामापणेषु च ।
कुटुम्बिनां समृद्धानां श्रीमत्सु भवनेषु च ॥ १२ ॥
सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ।
ध्वजाः समुच्छ्रिताश्चित्राः पताकाश्चाभवंस्तथा ॥ १३ ॥
नटनर्तकसंघानां गायनानां च गायतां ।
मनःकर्णसुखा वाचः शूयन्तेऽथ समन्ततः ॥ १४ ॥
रामाभिषवसंयुक्ताः कथाश्चक्रुर्मिथो जनाः ।
रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥ १५ ॥
बालाश्चापि क्रीडमाना गृहद्वारेषु सर्वशः ।
रामाभिषवसंयुक्ताश्चक्रिरे ते मिथः कथाः ॥ १६ ॥
कृतपुष्पोपहारश्च धूपगन्धाधिवासितः ।
राजमार्गः कृतः श्रीमान् पौरै रामाभिषेचने ॥ १७ ॥
प्रकाशीकरणार्थं च निशागमनशङ्कया ।
दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ॥ १८ ॥

अलंकारं पुरस्यैवं कृत्वा च पुरवासिनः ।
आकाङ्क्षन्तो हि रामस्य यौवराज्याभिषेचनं ॥ १९ ॥
समेत्य संघशः सर्वे चत्वरेषु सभासु च ।
कथयन्तो मिथस्तत्र प्रशशंसुर्नराधिपं ॥ २० ॥
अहो महानयं राजा इक्ष्वाकुकुलनन्दनः ।
ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥ २१ ॥
सर्वे ह्यनुगृहीताः स्म यन्नो रामो महीपतिः ।
चिराय भविता गोप्ता दृष्टतत्त्वपरावरः ॥ २२ ॥
अनुद्धतमना विद्वान् धर्मात्मा भ्रातृवत्सलः ।
यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः ॥ २३ ॥
चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः ।
यत्प्रसादादभिषिक्तं द्रक्ष्यामो राघवं वयं ॥ २४ ॥
मिथः कथयतामेवं पौराणां शुश्रुवे तदा ।
दिग्भ्योऽपि श्रुतवृत्तान्तः प्राप्तो जानपदो जनः ॥ २५ ॥
स तु दिग्भ्यः पुरीं प्राप्तो द्रष्टुकामोऽभिषेचनं ।
रामस्य पूरयामास पुरीं जानपदो जनः ॥ २६ ॥
जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निस्वनः ।
पर्वसूदीर्णवेगस्य सागरस्येव भिद्यतः ॥ २७ ॥
ततस्तदिन्द्रक्षयसंनिभं पुरं
दिदृक्षुभिर्जानपदैरुपागतैः ।

समन्ततः सस्वनमाकुलं बभाव्
अनेकयादोभिरिवार्णवे पयः ।। २८ ।।

इत्यार्षे रामायणे अयोध्याकाण्डे पुरशोभाभिवर्णनं
नाम पञ्चमः सर्गः ।।

# रामायणं

## VI.

ज्ञातिदास्यथ कैकेय्याः सहोढा परिचारिका ।
प्रासादाग्रमुपारूढा तस्मिन् काले यदृच्छया ॥ १ ॥
ददर्श साथ तत्रस्था श्रीमद्राजपथां पुरीं ।
समुच्छ्रितध्वजवतीं हृष्टपुष्टजनाकुलां ॥ २ ॥
तां च दृष्ट्वा पुरीं रम्यामलंकृतजनाकुलां ।
अदूरस्थां समासाद्य धात्रीं काञ्चिदपृच्छत ॥ ३ ॥
कस्मात् पौरजनस्यायमतिहर्षोऽद्य शंस मे ।
चिकीर्षितं किं नृपतेः कार्यं पौरजनप्रियं ॥ ४ ॥
उत्तमेन च हर्षेण हर्षिताद्य विशेषतः ।
राममाता धनोत्सर्गं कुरुते केन हेतुना ॥ ५ ॥
इति पृष्टा तया धात्री कुब्जया भृशहर्षिता ।
आचचक्षे यथावृत्तं यौवराज्याभिषेचनं ॥ ६ ॥
श्वः पुष्ययोगेन किल यौवराज्ये स्वमात्मजं ।
अभिषेचयिता रामं राजा गुणगणाकरं ॥ ७ ॥
तेनायं हर्षितः सर्वो जनो रामाभिषेचने ।
पुरी चालंकृता पौरै राममाता च हर्षिता ॥ ८ ॥
इति श्रुत्वाप्रियं वाक्यं कुब्जा क्षिप्रममर्षिता ।
तस्मात् प्रासादशिखरादवतीर्य त्वरान्विता ॥ ९ ॥

संरक्तनयना कोपान्मन्थरा पापनिश्चया ।
शयानामेव कैकेयीमिदं वचनमब्रवीत् ॥ १० ॥
उत्तिष्ठ मूढे किं शेषे भयं ते घोरमागतं ।
समुपप्लुतमात्मानं दुर्भगे नावबुध्यसे ॥ ११ ॥
वृथा सौभाग्यमानेन दुर्भगे त्वं विदह्यसे ।
गिरिनद्या इव स्रोतस्तव सौभाग्यमस्थिरं ॥ १२ ॥
तयैवमुक्ता कैकेयी संरम्भात् परुषं वचः ।
कुब्जया पापदर्शिन्या प्रष्टुं समुपचक्रमे ॥ १३ ॥
मन्थरे किमसि क्रुद्धा किं तेऽक्षेमं निवेदय ।
विषण्णवदनां हि त्वां लक्षयामि सुदुःखितां ॥ १४ ॥
मन्थरा तद्वचः श्रुत्वा कैकेय्याः पुनरब्रवीत् ।
संरम्भामर्षताम्राक्षी वाक्यं वाक्यविशारदा ॥ १५ ॥
भूयो विषादयिष्यन्ती कैकेयीं पापनिश्चया ।
रामाद्विभेदयिष्यन्ती किल तस्याहितैषिणी ॥ १६ ॥
अक्षेमं सुमहद्देवि तवेदं समुपस्थितं ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ १७ ॥
सास्म्यपारे भृशं मग्ना दुःखशोकमहार्णवे ।
प्रतप्तास्म्यनलेनेव त्वद्धितार्थमुपागता ॥ १८ ॥
तव दुःखेन कैकेयि मम दुःखतरं भवेत् ।
तव वृद्धौ हि मे वृद्धिरिति मे निश्चिता मतिः ॥ १९ ॥

शत्रुः प्रतिप्रवादेन मात्रेव हितकाम्यया ।
आशीविषस्तवाङ्केन बाले परिहृतस्त्वया ॥ २० ॥
यथा तु कुर्यात् सर्पो वा शत्रुर्वाप्रत्युपेक्षितः ।
राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २१ ॥
पापेनानृतवाक्येन बालप्रज्ञे सुखप्रिया ।
रामं स्थापयिता राज्ये सानुबन्धा हता ह्यसि ॥ २२ ॥
नराधिपकुले जाता महिषी पृथिवीपतेः ।
गतिं त्वं राजधर्माणां कथं देवि न बुध्यसे ॥ २३ ॥
धर्मवादि शठो भर्ता श्लक्ष्णवादी च दारुणः ।
शुद्धभावे न जानीषे तेनैवमतिसंधिता ॥ २४ ॥
उपस्थितः प्रयुञ्जानस्त्वयि सान्त्वमनर्थकं ।
अर्थेनैवाद्य ते भर्ता कौशल्यां योजयिष्यति ॥ २५ ॥
अपवाह्य हि दुष्टात्मा भरतं तव बन्धुषु ।
काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६ ॥
तत् प्राप्तकालं कैकेयि कर्तुमर्हसि मे वचः ।
रक्ष पुत्रं तथात्मानं मां चैवामित्रकर्षिणि ॥ २७ ॥
तथा कुरु यथा रामं नाभिषिञ्चति ते पतिः ।
सकामां कुरु कौशल्यां मा सपत्नीमनिन्दिते ॥ २८ ॥
मन्थराया वचः श्रुत्वा कैकेयी हर्षिता ततः ।
एकमाभरणं मुक्त्वा कुब्जायै प्रददौ शुभं ॥ २९ ॥

दत्वा चाभरणं श्रीमत् प्रीतिदायं प्रहर्षिता ।
कैकेयी मन्थरां वाक्यमिदं तत्राब्रवीत् पुनः ॥३०॥
मन्थरे यत् त्वया मेऽद्य प्रियमाख्यातमीप्सितं ।
तदिदं प्रीतिदायं ते प्रीत्या भूयो ददामि ते ॥३१॥
रामे वा भरते वापि विशेषो नास्ति कश्चन ।
तस्मात् प्रियं मे यद्रामं राजा राज्येऽभिषेक्ष्यति ॥३२॥

न मे प्रियं किञ्चिदतः परं भवेद्
यदद्य राजा सुतमिष्टमात्मजं ।
गुणाकरं राममुदारविक्रमं
स यौवराज्ये प्रतिपादयिष्यति ॥३३॥

इत्यार्षे रामायणे अयोध्याकाण्डे मन्थरापरिदेवनं
नाम षष्ठः सर्गः ॥

# रामायणं

## VII.

इत्युक्ता तत्र कैकेय्या तत् परिक्षिप्य भूषणं ।
सासूयं मन्थरा वाक्यमिदं भूयोऽभ्यभाषत ॥ १ ॥
भयस्थाने किमबले हर्षिता त्वमपण्डिते ।
शोकसागरसंमग्नमात्मानं नावबुध्यसे ॥ २ ॥
आशीविषस्त्वां दशतु मूढे मन्दितमानिनि ।
दुर्भगे चाकृतप्रज्ञे विपरीतार्थदर्शिनि ॥ ३ ॥
कौशल्यां सुभगां मन्ये यस्याः पुत्रोऽभिषिच्यते ।
यौवराज्ये पैतृकेऽस्मिन् पुष्येण कृतलक्षणः ॥ ४ ॥
प्राप्तां सुमहदैश्वर्यमृद्धामृद्धिविवर्जिता ।
उपस्थास्यसि कौशल्यां दासीव त्वमपण्डिते ॥ ५ ॥
ऋद्धियुक्ता श्रिया जुष्टा रामपत्नी भविष्यति ।
अश्रीमती त्वसमृद्धा स्नुषा ते च भविष्यति ॥ ६ ॥
तां तथा भृशमप्रीतां ब्रुवतीं प्रेक्ष्य मन्थरां ।
प्रीता रामगुणानेव कैकेयी प्रशशंस वै ॥ ७ ॥
धर्मात्मा गुरुवर्ती च कृतज्ञः सत्यवाक् शुचिः ।
रामो राज्ञः सुतो ज्येष्ठो युवराजत्वमर्हति ॥ ८ ॥
भ्रातॄन् सर्वान् स दीर्घायुः पितृवत् पालयिष्यति ।
मातॄणां च स सर्वासां प्रियाण्युपचरिष्यति ॥ ९ ॥

विशेषतः पूजयति कौशल्यामप्यतीत्य मां ।
रामो राजीवपत्राक्षः सर्वत्र समदर्शनः ॥ १० ॥
अकल्याणं नास्ति रामे न द्वेषश्च महात्मनि ।
संतापं मा कृथास्तस्माच्छ्रुत्वा रामाभिषेचनं ॥ ११ ॥
भरतश्चापि रामस्य ध्रुवं वर्षशतात् परं ।
पितृपैतामहं राज्यं क्रमप्राप्तमवाप्स्यति ॥ १२ ॥
सा त्वमभ्युदये प्राप्ते ममानन्दे च मन्थरे ।
भविष्यति च कल्याणे कथं नु परितप्यसे ॥ १३ ॥
इत्येतद्वचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घमुष्णं च निःश्वस्य कैकेयीं पुनरब्रवीत् ॥ १४ ॥
अनर्थदर्शिन्यिप्रज्ञे नात्मानमवबुध्यसे ।
अगाधे दुःखपाताले मज्जन्ती त्वमनन्तके ॥ १५ ॥
रामश्चेद्भविता राजा रामस्य च सुतस्ततः ।
तस्यान्यस्तस्य चाप्यन्यो वंशे राजा भविष्यति ॥ १६ ॥
राजवंशात् तु कैकेयि भरतः परिहास्यते ।
न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भाविनि ॥ १७ ॥
बहूनामपि पुत्राणामेको राज्येऽभिषिच्यते ।
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ १८ ॥
तस्माज्ज्येष्ठेषु पुत्रेषु राज्यतन्त्राणि पार्थिवाः ।
आसजन्त्यनवद्याङ्गि गुणवत्स्वितरेषु वा ॥ १९ ॥

तेऽपि ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः ।
आसज्जन्त्यखिलं राज्यं न भ्रातृषु कथञ्चन ॥ २० ॥
अतोऽत्यन्तमपूजार्हस्तव पुत्रो भविष्यति ।
अनाथवत् सुखाद्धीनो राजवंशाच्च शाश्वतात् ॥ २१ ॥
साहं त्वदर्थे संप्राप्ता त्वं च मां नावबुध्यसे ।
सपत्नवृद्धौ यन्मे त्वं प्रदेयं दातुमिच्छसि ॥ २२ ॥
ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकं ।
देशान्तरं च नयिता देहान्तरमथापि वा ॥ २३ ॥
बाल एव हि मातुल्यं भरतो नायितस्त्वया ।
संनिकर्षाच्चानुरागो देवि सर्वस्य जायते ॥ २४ ॥
भक्तो हि रामः सौमित्रिं लक्ष्मणश्चापि राघवं ।
अश्विनोरिव सौभ्रात्रमनयोर्लोकविश्रुतं ॥ २५ ॥
तस्मान्न लक्ष्मणे किञ्चित् पापं रामः करिष्यति ।
रामस्तु भरते पापं कुर्यादिति न संशयः ॥ २६ ॥
मातामहगृहादेव तस्माद्गच्छतु ते सुतः ।
वनमाश्रयितुं शीघ्रमेतद्ध्यस्य क्षमं भवेत् ॥ २७ ॥
एवं ते ज्ञातिपक्षस्य श्रेयः स्यादिति मे मतिः ।
यदिवा भरतो राज्यं पित्र्यं धर्म्यमवाप्स्यति ॥ २८ ॥
स तु सुखोचितो बालो रामस्य सहजो रिपुः ।
समृद्धार्थस्य हीनार्थः कथं जीवेत् तवात्मजः ॥ २९ ॥

अभिद्रुतमिवारण्ये सिंहेन गजयूथपं ।
उच्छिद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३० ॥
दर्पाद्धि नित्यं निकृता त्वया सौभाग्यमत्तया ।
राममाता सपत्नी ते कथं वैरं न पातयेत् ॥ ३१ ॥
कृते हि रामेऽस्य महीपतौ क्षितौ
गमिष्यसि त्वं ससुता पराभवं ।
अतोऽनुसंचिन्तय राज्यमात्मजे
परस्य चैवाद्य विवासकारणं ॥ ३२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे मन्थरावाक्यं नाम
सप्तमः सर्गः ॥

## VIII.

एवमुक्ता तु कैकेयी विनिःश्वस्याब्रवीद्वचः ।
सत्यं वदसि मे कुब्जे ज्ञाने ते भक्तिमुत्तमां ॥ १ ॥
न तु पश्याम्युपायं तं येन शक्येत मे सुतः ।
इदं प्रापयितुं राज्यं पितृपैतामहं बलात् ॥ २ ॥
अनुरक्तो नृपश्चायं रामं गुणगणान्वितं ।
स कथं राममुत्सृज्य प्राणेभ्योऽपि प्रियं सुतं ॥ ३ ॥
भरतं नाम मे पुत्रमभिषिञ्चेदकारणं ।
प्रव्राजयेद्वापि नृपः कथं राममकारणे ॥ ४ ॥
इत्येतद्वचनं श्रुत्वा कैकेय्या मन्थरा ततः ।
उवाचेदं विनिश्चित्य बुद्ध्या पापविनिश्चया ॥ ५ ॥
इमं राममहं क्षिप्रं वनं प्रस्थापयामि ते ।
भरतस्याभिषेकं च कारयामि यदीच्छसि ॥ ६ ॥
श्रुत्वैतन्मन्थरावाक्यं कैकेयी हृष्टमानसा ।
किञ्चिदुत्थाय शयनात् स्वास्तीर्णादिदमब्रवीत् ॥ ७ ॥
कथय त्वं महाप्रज्ञे केनोपायेन मन्थरे ।
भरतः प्राप्नुयाद्राज्यं रामश्चैव वनं व्रजेत् ॥ ८ ॥
एवमुक्ता तया देव्या मन्थरा पापनिश्चया ।
वाक्यं दुःखाय रामस्य कैकेयीमिदमब्रवीत् ॥ ९ ॥

# अयोध्याकाण्डं

श्रूयतामभिधास्यामि श्रुत्वा चैव विमृश्यतां ।
यथा ते भरतः पुत्रो राज्यं प्राप्स्यत्यसंशयं ॥ १० ॥
पुरा देवासुरे युद्धे युद्धसख्यः पतिस्तव ।
याचितो देवराजेन युद्धं कर्तुमितो गतः ॥ ११ ॥
दिशमास्थाय कैकेयि दक्षिणां दण्डकां प्रति ।
वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२ ॥
स शम्बर इति ख्यातो बहुमायो महासुरः ।
ददौ शक्राय संग्रामं देवसंघैरनिर्जितः ॥ १३ ॥
तस्मिन् महति संग्रामे राजा शस्त्रपरिक्षतः ।
विजित्याभ्यागतो देवि त्वयोपचरितः स्वयं ॥ १४ ॥
व्रणसंरोहणं चास्य तत्र देवि त्वया कृतं ।
परितुष्टेन ते दत्तौ वरौ द्वौ तत्र भाविनि ॥ १५ ॥
स त्वयोक्तः पतिस्तत्र यदेच्छेयं तदा वरौ ।
गृह्णीयामिति तच्चैव तथेत्युक्तं महात्मना ॥ १६ ॥
अनभिज्ञा ह्यहं देवि त्वयैतत् कथितं पुरा ।
तौ वरौ याच भर्तारं भरतस्याभिषेचनं ॥ १७ ॥
प्रव्राजनं च रामस्य वर्षाणि हि चतुर्दश ।
क्रोधागारं प्रविश्याद्य क्रुद्धा भूत्वा नृपात्मजे ॥ १८ ॥
शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ।
राजानं मा निरीक्षिष्ठा मा भाषिष्ठाश्च किञ्चन ॥ १९ ॥

सुप्ता भूमावनाथेव दुःखिता नाम भाविनी ।
तत्र त्वां शयितां राजा स्वयं दुःखसमन्वितः ॥ २० ॥
प्रसादयिष्यति क्षिप्रं प्रदास्यत्यपि च निर्णयं ।
दयिता त्वं भृशं भर्तुरत्र मे नास्ति संशयः ॥ २१ ॥
त्वदर्थं हि महाराजः श्रियं दीप्तामपि त्यजेत् ।
मणिमुक्तासुवर्णानि रत्नानि विविधानि च ॥ २२ ॥
यदि दद्याच्च ते भर्ता मा स्म तेषु मनः कृथाः ।
यदा तु तौ वरौ दित्सन् स्वयमुत्थापयेत् पतिः ॥ २३ ॥
सत्येन परिगृह्यैनं याचेथास्त्वं तदा वरौ ।
रामप्रव्राजनायैकं नव वर्षाणि पञ्च च ॥ २४ ॥
द्वितीयं यौवराज्याय भरतस्य वरं शुभे ।
यौ तु देवासुरे युद्धे वरौ दशरथो ददौ ॥ २५ ॥
तौ स्मारयित्वा याचेथाः पश्चादेतद्वरद्वयं ।
रामप्रव्राजनं देवि राज्यप्राप्तिं सुतस्य च ॥ २६ ॥
याचेथा भुवि कल्याणं ध्रुवं प्राप्स्यति ते सुतः ।
ध्रुवं प्रव्राजितश्चैव रामो भद्रे भविष्यति ॥ २७ ॥
भोक्ष्यते चापि पुत्रस्ते ध्रुवं राज्यमकण्टकं ।
येन कालेन काकुत्स्थो वनात् प्रत्यागमिष्यति ॥ २८ ॥
भरतोऽनेन कालेन बद्धमूलो भविष्यति ।
संगृहीतमनुष्यश्च कोषवांश्च श्रिया युतः ॥ २९ ॥

अनुस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ।
न त्वां क्रोधयितुं शक्तो न च क्रुद्धामुपेक्षितुं ॥ ३० ॥
तव प्रियार्थे राजा हि प्राणानपि परित्यजेत् ।
न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः ॥ ३१ ॥
प्राप्तकालं तु ते मन्ये राजानं जितसाधसा ।
रामाभिषेकसंकल्पान्निगृह्य विनिवर्तय ॥ ३२ ॥
अनर्थमर्थरूपेण सा ददर्श तयोदिता ।
न हि तद्बुबुधे पापं शापदोषेण मोहिता ॥ ३३ ॥
केकयेषु हि सा बाल्ये ब्राह्मणं मूर्खरूपिणं ।
असूयितवती बाला तेन शप्ता महात्मना ॥ ३४ ॥
यस्मादसूयसे विप्रं त्वं रूपमददर्पिता ।
तस्मादसूयां त्वमपि लोके प्राप्स्यसि कुत्सितां ॥ ३५ ॥
इति शापसमाच्छन्ना मन्थरावशमागता ।
अतीव हृष्टा कैकेयी मन्थरां परिषस्वजे ॥ ३६ ॥
परिष्वज्य ततो गाढं कैकेयी हर्षविह्वला ।
उवाच वचनं धीरा तां कुब्जां पापदर्शिनीं ॥ ३७ ॥
प्रज्ञां ते नावजानामि श्रेष्ठां श्रेष्ठाभिधायिनि ।
अस्यां पृथिव्यां कुब्जेऽन्या बुद्धा नास्ति समा त्वया ॥ ३८ ॥
त्वमेव चापि भक्ता मे नित्ययुक्ता हितैषिणी ।
नाहं जानामि कुटिलं कुब्जे रामचिकीर्षितं ॥ ३९ ॥

सन्ति दुःसंस्थिताः कुब्जा विरूपा विकृताननाः ।
त्वं पद्म इव वातेन संनतः प्रियदर्शना ॥ ४० ॥
उरस्ते नातिनिर्भग्नमाकण्ठान्मुखमुत्तमं ।
अधस्ताच्चोदरं शातं विलग्नं च स्तनद्वयं ॥ ४१ ॥
जघनं ते सुनिर्मांसं रसनादामशोभितं ।
जङ्घे दीर्घे तनू चैव पदौ चाप्यायतौ कृशौ ॥ ४२ ॥
त्वमायताभ्यां शक्थिभ्यां मन्थरे लीनवासिनी ।
अग्रतो मम गच्छन्ती टिट्टिभीव विराजसे ॥ ४३ ॥
यच्चेदं ककुदाकारं कुब्जं चारु शुभानने ।
मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते ॥ ४४ ॥
अत्र ते प्रतिमोक्ष्यामि कुब्जे मालां हिरण्मयीं ।
अभिषिक्ते तु भरते रामे चैव वनं गते ॥ ४५ ॥
जात्येन ते सुवर्णेन सुनिष्टप्तेन सुन्दरि ।
समृद्धार्था प्रतीताहं भूषयिष्यामि ते तनुं ॥ ४६ ॥
मुखे च तिलकं चित्रं काञ्चनं कनकप्रभे ।
कारयिष्यामि ते कुब्जे शुभान्याभरणानि च ॥ ४७ ॥
यावदग्रनखं लिप्ता चन्दनेन सुगन्धिना ।
परिधाय सुभे वस्त्रे देवीव विचरिष्यसि ॥ ४८ ॥
चन्द्रं विस्पर्धमानेन मुखेन च शुभानने ।
गमिष्यस्यनवद्याङ्गि गर्वयन्ती सुहृज्जनं ॥ ४९ ॥

तवापि कुब्जे दास्योऽन्याः सर्वाभरणभूषिताः ।
पादौ परिचरिष्यन्ति यथैव मम भाविनि ॥५०॥
एवं प्रशस्ता कैकेय्या कुब्जा भूयोऽब्रवीदिदं ।
शयानां शयने देवीं कैकेयीं त्वरयत्युत ॥५१॥
गतोदके सेतुबन्धो न कल्याणि प्रशस्यते ।
उत्तिष्ठ कुरु कल्याणं राजानं परिमोक्षय ॥५२॥
तथेत्यथ प्रतिज्ञाय मन्थरावचनात् तदा ।
भरतस्याभिषेकाय कैकेयी कृतनिश्चया ॥५३॥
महार्हमणिरत्नाढ्यं मुक्ताहारं वराङ्गना ।
अवमुच्य तथान्यानि सर्वाण्याभरणानि सा ॥५४॥
भृशं विभेदिता देवी तया मन्थरया तदा ।
क्रोधागारं प्रविश्यैका सौभाग्यबलदर्पिता ॥५५॥
तप्तहेमोपमतनुः कुब्जावाक्यवशानुगा ।
संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥५६॥
इह वा मां मृतां कुब्जे भर्तुरावेदयिष्यसि ।
वनं वा राघवे याते भरतः प्राप्स्यति श्रियं ॥५७॥
न धनानि न वस्त्राणि नालंकारान् न भोजनं ।
आसेविष्ये ह्यहं तावद्यावद्रामो वनं व्रजेत् ॥५८॥

इतीदमुक्त्वा वचनं सुदारुणं
निधाय सर्वाभरणानि भाविनी ।

असंवृतां संस्तरणेन मेदिनीम्
  अथाधिशिश्ये पतितेव किन्नरी ॥५९॥
उदीर्णसंरम्भतमोवृताननना
  तदा विमुक्तोत्तमदामभूषणा ।
नरेन्द्रपत्नी विमला बभूव सा
  तमोवृता द्यौरिव नष्टभास्करा ॥६०॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामप्रवासनोपायचिन्ता
नाम अष्टमः सर्गः ॥

# अयोध्याकाण्डं

## IX.

आज्ञाप्य तु महाराजो राघवस्याभिषेचनं ।
कैकेय्याः प्रियमाख्यातुं विवेशान्तःपुरं नृपः ॥ १ ॥
तां तत्र पतितां भूमौ शयानामतथोचितां ।
प्रतप्त इव दुःखेन शुश्राव जगतीपतिः ॥ २ ॥
स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीं ।
अपापः पापसंकल्पामुपचक्रमे दुःखितः ॥ ३ ॥
सर्वलोकाप्रियं मूढामनर्थं लोकगर्हितं ।
आकाङ्क्षमाणां संप्राप्तो ददर्श पतितां भुवि ॥ ४ ॥
करेणुमिव दिग्धेन विद्धां बाणेन दुःखितां ।
महागज इवासाद्य स्नेहात् परिममर्श तां ॥ ५ ॥
स तां विमृज्य पाणिभ्यामभिसंत्रस्तचेतनः ।
उवाच राजा कैकेयीं श्वसन्तीमुरगीमिव ॥ ६ ॥
न तेऽहमभिजानामि क्रोधमात्मनि संयुतं ।
देवि केनाभिशस्तासि केन वासि विमानिता ॥ ७ ॥
यदिदं मम दुःखाय शेषे कल्याणि दुःखिता ।
भूमौ पांशुघनायेव मयि कल्याणचेतसि ॥ ८ ॥

भूतोपहतचित्तेव मम चित्तप्रमाथिनी ।
सन्ति मे कुशला वैद्याः संविभक्ताश्च वृत्तिभिः ॥ ९ ॥
अगदं ते करिष्यन्ति व्यक्तमाख्याहि भाविनि ।
कस्य वा तेऽप्रियं कार्यं केन वा तेऽप्रियं कृतं ॥ १० ॥
कः प्रियं लभतामद्य को वा सुमहदप्रियं ।
अबध्यो बध्यतां कोऽद्य बध्यः को वा विमुच्यतां ॥ ११ ॥
दरिद्रः को भवेदाढ्यो धनवान् कोऽस्त्वकिञ्चनः ।
यदस्ति मे धनं किञ्चित् तस्य देवि त्वमीश्वरी ॥ १२ ॥
यावत् प्रवर्तते चक्रं तावदेषा वसुंधरा ।
पृथिव्यां राजराजोऽस्मि सम्राट् सर्वमहीक्षितां ॥ १३ ॥
पृथिव्यां वररत्नानां प्रभुरस्मि शुचिस्मिते ।
ददामि यत् तेऽभिमतं कोपं मा च कृथाः प्रिये ॥ १४ ॥
न ते किञ्चिदभिप्रेतं न कर्तुमहमुत्सहे ।
आत्मनो जीवितेनापि करिष्ये ते प्रियं प्रिये ॥ १५ ॥
एवमुक्त्वा समुत्थाय विवक्तुर्भृशमप्रियं ।
परिपीडयितुं भूयो भर्तारं साभ्यभाषत ॥ १६ ॥
नास्मि विप्रकृता देव केनचिन्न विमानिता ।
अभीप्सितं तु मे किञ्चित् प्रियं कर्तुमिहार्हसि ॥ १७ ॥
प्रतिजानीहि तावत् त्वं यदि तत् कर्तुमिच्छसि ।
प्रतिज्ञाते ततोऽहं त्वां वरयिष्यामि काङ्क्षितं ॥ १८ ॥

एवमुक्तस्तया राजा प्रियया स्त्रीवशं गतः ।
प्रविवेश विनाशाय मृगः पाशमिवाबुधः ॥ १९ ॥
प्रियां प्रियहिते युक्तां भार्यां नित्यमनुव्रतां ।
स तां विज्ञाय संतप्तां कैकेयीं पार्थिवोऽब्रवीत् ॥ २० ॥
अवलिप्ते न जानासि त्वत्तः प्रियतरो मम ।
राममेकं वर्जयित्वा लोकेऽधन्यो न विद्यते ॥ २१ ॥
दद्यां ते परिहृत्येदं प्रिये हृदयमप्यहं ।
ततः समीक्ष्य कैकेयि ब्रूहि यत् साधु मन्यसे ॥ २२ ॥
बलमात्मनि पश्यन्ती न विकाङ्क्षितुमर्हसि ।
करिष्यामि तव प्रीतिं सुकृतेनात्मनः शपे ॥ २३ ॥
तुष्टा तेनाथ वाक्येन हृष्टाभिप्रायमात्मनः ।
व्याजहार महाघोरं कैकेयी भृशमप्रियं ॥ २४ ॥
यथा धर्मेण शपसे वरं मह्यं ददासि च ।
तच्छृण्वन्तु समागम्य देवाः शक्रपुरोगमाः ॥ २५ ॥
चन्द्रादित्यौ ग्रहाश्चैव नभो रात्र्यहनी दिशः ।
जगच्च पृथिवी चैव सह गन्धर्वराक्षसैः ॥ २६ ॥
निशाचराणि भूतानि गृहेषु गृहदेवताः ।
यानि चान्यानि सत्त्वानि जानीयुर्भाषितं वचः ॥ २७ ॥
सत्यसंधो महाराजा धर्मज्ञः सुसमाहितः ।
वरं मह्यं ददात्येष तन्मे शृणुत देवताः ॥ २८ ॥

इति देवी महेष्वासं परिगृह्याभिशाप्य च ।
ततो वच उवाचेदं वरदं काममोहितं ॥२९॥
पुरा देवासुरे युद्धे वरौ दत्तौ त्वया नृप ।
परितुष्टेन चेदानीं तौ वरौ त्वं प्रयच्छ मे ॥३०॥
यस्त्वयायं समारम्भो रामं प्रति समाहितः ।
अनेनाप्नोतु भरतो यौवराज्येऽभिषेचनं ॥३१॥
वनं गच्छतु रामश्च चीराजिनजटाधरः ।
नव पञ्च च वर्षाणि वरावेतौ वृणोम्यहं ॥३२॥
यदि सत्यप्रतिज्ञोऽसि वनं रामं विसर्जय ।
भरतं चापि मे पुत्रं यौवराज्येऽभिषेचय ॥३३॥
एभिर्वचोभिः कैकेय्या हृदि विद्धो नराधिपः ।
भयेन हृष्टरोमाभूद्व्याघ्रीं दृष्ट्वा यथा मृगः ॥३४॥
सीदन् दुःखेन महता स तेनाभिहतो नृपः ।
असंवृतायां विमना भूमावुपविवेश ह ॥३५॥
अहो धिगिति चाप्युक्त्वा शोकार्तः पतितः क्षितौ ।
मोहमभ्यगमत् सद्यो वाक्शल्याभिहतो हृदि ॥३६॥
चिरेण तु पुनः संज्ञां प्रतिलभ्यार्तमानसः ।
कैकेयीमब्रवीत् क्रुद्धो दुःखशोकसमन्वितः ॥३७॥
नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ।
किं कृतं तव रामेण मया वा पापदर्शने ॥३८॥

यदतीत्यापि कौशल्यां रामस्त्वामनुवर्तते ।
तस्यैव त्वमनर्थाय किमर्थं चैवमुद्यता ॥ ३९ ॥
त्वं मयात्मविनाशाय भवनं स्वं प्रवेशिता ।
राजपुत्रीति विज्ञाय व्याली तीक्ष्णमहाविषा ॥ ४० ॥
जीवलोको यदा सर्वो रक्तो रामगुणैरयं ।
अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतं ॥ ४१ ॥
कौशल्यां वा सुमित्रां वा त्यजेयमपि वा श्रियं ।
जीवितं चात्मनो रामं न त्वेनं पितृवत्सलं ॥ ४२ ॥
नन्दामि हि प्रियं पुत्रं दृष्ट्वा राममहं सदा ।
अपश्यतः क्षणं तं मे न भवेदिह चेतना ॥ ४३ ॥
तिष्ठेल्लोको विना भूमिं शस्यं वा सलिलं विना ।
न तु रामं विना देहे तिष्ठेयुरसवो मम ॥ ४४ ॥
तदलं त्यज्यतामेष निश्चयः पापनिश्चये ।
अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे ॥ ४५ ॥

स तेन वाक्येन महाप्रियेण
घोरेण राजा हृदयेऽतिविद्धः ।
आकृष्टरूपो विमना बभूव
व्याघ्राभिपन्नो बलवानिवोक्षा ॥ ४६ ॥
लोकस्य नाथोऽपि विपन्ननाथो
भृशं गृहीतो हृदये तयैवं ।

पपात भूमौ चरणौ परिस्पृशन्
प्रसीद देवीति वचोऽभ्युदीरयन् ॥४७॥

इत्यार्षे रामायणे अयोध्याकाण्डे वरयाचनं
नाम नवमः सर्गः ॥

# अयोध्याकाण्डं

X.

अतदर्हं महाराजं पतितं पादयोरपि ।
ययातिमिव पुण्यान्ते देवलोकात् परिच्युतं ॥ १ ॥
कैकेयी पुनरप्येवं घोरं वचनमब्रवीत् ।
अनर्थदुःखसंविग्नमभीता भयदर्शनं ॥ २ ॥
कीर्त्यसे त्वं सदा सद्भिः सत्यवादी दृढव्रतः ।
मम चेमौ वरौ दत्वा किं विचारयसि प्रभो ॥ ३ ॥
एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा ।
प्रत्युवाच पुनः क्रुद्धो निश्वसन्नतिविह्वलः ॥ ४ ॥
हन्तानार्ये ममामित्रे सकामा भव कैकयि ।
मृते मयि गते रामे वनं मनुजकुञ्जरे ॥ ५ ॥
यदा मां गुरवो वृद्धा गुणवन्तो बहुश्रुताः ।
परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा ॥ ६ ॥
कैकेय्याः प्रियकामेन रामः प्रव्राजितो मया ।
यदि सत्यं वदिष्यामि हास्यं तेषां भविष्यति ॥ ७ ॥

बालिशो वत कामात्मा राज्यं दशरथो ऽन्वशात् ।
स्त्रीजितो यस्त्यजेत् पुत्रं प्रियं ज्येष्ठमकारणे ॥ ८॥
इति मां गर्हयिष्यन्ति स्त्रीजितं सर्वसाधवः ।
गर्हितस्य च मे श्रेयो नेह नामुत्र विद्यते ॥ ९ ॥
स्त्रीजितेन नृशंसेन रामः सर्वगुणान्वितः ।
मया च पितृमान् पुत्रः सुमहात्मा दुरात्मना ॥ १० ॥
व्रतैश्च ब्रह्मचर्यैश्च गुरुभिश्चातिकर्षितः ।
सुखकाले ऽद्य मे पुत्रो वने कृच्छ्रमवाप्स्यति ॥ ११ ॥
अनियोज्यैव तं कृच्छ्रे यदि मे मरणं भवेत् ।
अनुग्रहः परो मे स्यादिति चाप्यभिकाङ्क्षितं ॥ १२ ॥
प्रियार्हं च सुखार्हं च प्रियं पुत्रं गुणान्वितं ।
कथं वक्ष्याम्यहं पापे वनं गच्छेति राघवं ॥ १३ ॥
नृशंसमकृतात्मानं क्लीवसत्त्वं स्त्रिया जितं ।
निरामर्षं निरुत्साहमल्पवीर्यं धिगस्तु मां ॥ १४ ॥
अकीर्तिरतुला लोके ध्रुवः परिभवश्च मे ।
सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ १५ ॥
इति राज्ञो विलपतः शोकसंविग्नचेतसः ।
अस्तमभ्यगमत् सूर्यो रजनी चाभ्यवर्तत ॥ १६ ॥
त्रियामापि भृशार्तस्य सा रात्रिरभवत् तदा ।
तथा विलपतस्तस्य राज्ञो वर्षशतोपमा ॥ १७ ॥

स दीर्घमुष्णं निःश्वस्य वृद्धो दशरथो नृपः ।
करुणं विललापार्तो गगणासक्तलोचनः ॥ १८ ॥
कैकेयि हा नृशंसासि यन्मां बाधितुमिच्छसि ।
राज्यलोभात् त्वया त्यक्तः प्राणांस्त्यक्ष्याम्यसंशयं ॥ १९ ॥
हा पुत्र राम धर्मात्मन् मद्भक्त गुरुवत्सल ।
कथं त्वामल्पपुण्योऽहं परित्यक्ष्याम्यसंशयं ॥ २० ॥
हा रात्रि सर्वभूतानां जीवितादापहारिणि ।
नेच्छाम्यद्य प्रभातां त्वामभियाचे कृताञ्जलिः ॥ २१ ॥
अथवा गम्यतां शीघ्रं नेमामिच्छामि निर्घृणां ।
अकृतज्ञां चिरं द्रष्टुं कैकयीं भर्तृघातिनीं ॥ २२ ॥
विलप्यैवं ततो राजा कैकयीमुद्यताञ्जलिः ।
प्रसादयामास पुनर्वाक्यं चेदमथाब्रवीत् ॥ २३ ॥
साधि वृद्धस्य दीनस्य त्वद्वशस्याल्पचेतसः ।
शरणागतस्य शुभे कुरु त्राणं प्रसीद मे ॥ २४ ॥
कृता ते यदि जिज्ञासा मयीयं चारुहासिनि ।
सत्यमेव स्वभावो मे त्वदधीनोऽस्मि सर्वथा ॥ २५ ॥
यद्यदिच्छसि संप्राप्तुं रामप्रव्राजनादृते ।
सर्वस्वमपि वा प्राणांस्ते ददामि प्रसीद मे ॥ २६ ॥
शून्येन खलु कैकेयि मयैतद्वाक्यमीरितं ।
कुरु साधि प्रसादं मे भीतस्य शरणार्थिनः ॥ २७ ॥

विशुद्धभावस्य सुदुष्टभावा
भृशार्तरूपस्य हि तस्य राज्ञः ।
कृताश्रुपातस्य तथाभियाचिता
भर्तुर्नृशंसा न चकार सान्त्वं ॥ २८ ॥

ततः स राजा पुनरेव मूर्छितः
प्रियां सुदुष्टां प्रतिकूलभाषिणीं ।
समीक्ष्य पुत्रस्य विवासकारणं
क्षितौ विषण्णो विललाप दुःखितः ॥ २९ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथविलापो
नाम दशमः सर्गः ॥

# अयोध्याकाण्डं

## XI.

पुत्रशोकातुरं दीनं विसंज्ञं पतितं भुवि ।
विचेष्टमानं भर्तारं कैकेयी वाक्यमब्रवीत् ॥ १ ॥
पापं कृत्वेव किमिदं मम दत्वा वरौ स्वयं ।
शेषे क्षितितले सन्नः स्थातुं सत्ये त्वमर्हसि ॥ २ ॥
आहुः सत्यं परं धर्मं धर्मज्ञाः सत्यवादिनः ।
सत्यवागिति च ज्ञात्वा मया त्वमभियाचितः ॥ ३ ॥
कपोतायाभयं दत्वा शिविः किल महीपतिः ।
उत्कृत्य च स्वमांसानि दत्वा स्वर्गमितो गतः ॥ ४ ॥
सरितां च पतिः सत्यां मर्यादां स्थापितः पुरा ।
समयं पालयन् वेलां न लङ्घयति वेगवान् ॥ ५ ॥
अलर्कश्चापि राजर्षिर्ब्राह्मणेनाभियाचितः ।
प्रदायोत्कृत्य नेत्रे स्वे नाकपृष्ठमितो गतः ॥ ६ ॥
सत्यप्रतिज्ञस्तस्मात् त्वं प्राक् प्रतिज्ञाय मे वरौ ।
न ददासि च कस्मात् त्वं लुब्धः कापुरुषो यथा ॥ ७ ॥
परित्यज सुतं रामं वनवासाय राघवं ।
न करिष्यसि चेदद्य वचनं मम काङ्क्षितं ॥ ८ ॥
अग्रतस्ते ततो राजन् परित्यक्ष्यामि जीवितं ।
छलपाशेन कैकेय्या बद्ध एवं नराधिपः ॥ ९ ॥

न शशाक तदा हेत्तुं बलिः प्रागिव विष्णुना ।
विवर्णवदनश्चापि विभ्रान्तनयनोऽभवत् ॥ १० ॥
महाधुर्यः श्रमायुक्तो युगाश्चक्रान्तरे यथा ।
विभ्रान्तचित्तनयनो भ्रष्टसंज्ञोऽतिदुःखितः ॥ ११ ॥
कृच्छ्रादेव स धैर्येण संस्तभ्यात्मानमब्रवीत् ।
शोकसंरम्भताम्राक्षः कैकेयीमभिवीक्ष्य तां ॥ १२ ॥
धिगस्तु पापशीले त्वां नृशंसे पतिघातिनि ।
त्यजामि त्वामहं पापां निर्घृणां निरपत्रपां ॥ १३ ॥
न मे त्वया कृत्यमस्ति क्षुद्रया राज्यलुब्धया ।
मन्त्रवच्च मया पाणिर्गृहीतो यस्त्यजाम्यहं ॥ १४ ॥
त्वत्कृते चापि भरतं त्यजाम्यनपकारिणं ।
एवं विलपतस्तस्य राज्ञो दशरथस्य तु ॥ १५ ॥
जगाम सा निशा कृत्स्ना दुःखार्तस्य महात्मनः ।
अथोषसि प्रभातायां शर्वर्यां द्वारमागतः ॥ १६ ॥
सुमन्त्रः प्राञ्जलिर्भूत्वा बोधयामास पार्थिवं ।
सुप्रभाता निशा राजंस्तवेयं भद्रमस्तु ते ॥ १७ ॥
बुध्यस्व नरशार्दूल श्रियं भद्राणि चाप्नुहि ।
पूर्णचन्द्रोदये पूर्णो वर्धते सागरो यथा ॥ १८ ॥
सर्वर्द्धिविभवैः पूर्णस्तथा वर्धस्व भूपते ।
यथा रविर्यथा सोमो यथेन्द्रो वरुणो यथा ॥ १९ ॥

नन्दस्यृद्ध्या श्रिया चैव तथा त्वं नन्द भूपते ।
ततः स राजा सूतस्य प्रतिबोधनमङ्गलं ॥ २० ॥
श्रुत्वातिदुःखसंतप्तस्तमाभाष्येदमब्रवीत् ।
सूत किं दुःखितं मां त्वमस्तुत्यं स्तोतुमिच्छसि ॥ २१ ॥
वचोभिरेभिरर्तं मां भूयस्त्वमनुकृन्तसि ।
सुमन्त्रस्तद्वचः श्रुत्वा भर्तुर्दैन्यस्य भाषितं ॥ २२ ॥
सहसा व्रीडितः किञ्चित् तस्माद्देशादपागमत् ।
अत्रान्तरे पापशीला कैकयी पुनरब्रवीत् ॥ २३ ॥
भर्तारं वाक्प्रतोदेन सीदन्तं तुदतीव सा ।
किमेवं भाषसे दीनं काव्यं सुप्राकृतो यथा ॥ २४ ॥
राममाहूय विश्रब्धं वनायाद्य विसर्जय ।
यदि सत्यप्रतिज्ञो ऽसि कुरु मे वचनं प्रियं ॥ २५ ॥
नायं कालो विषादस्य न मोहस्योपपद्यते ।
प्रव्राज्य रामं भरतं यौवराज्ये ऽभिषिच्य च ॥ २६ ॥
निःसपत्नां च मां कृत्वा भवाद्य विगतज्वरः ।
स तुन्नो वाक्प्रतोदेन प्रतोदेनेव कुञ्जरः ॥ २७ ॥
राजा शोकाग्निसंतप्तः सुमन्त्रमिदमब्रवीत् ।
सत्यपाशनिबद्धो ऽस्मि सूत विभ्रान्तमानसः ॥ २८ ॥
रामं द्रष्टुमिहेच्छामि तं च शीघ्रमिहानय ।
इति राज्ञो वचः श्रुत्वा कैकयी तदनन्तरं ॥ २९ ॥

स्वयमेवाब्रवीत् सूतं गच्छ त्वं राममानय ।
यथा च शीघ्रमायाति तथैनं त्वरय स्वयं ॥३०॥

ततः सुमन्त्रस्त्वरितो विनिर्ययौ
महीपतीन् द्वारगतो ऽवलोकयन् ।
विनिर्गतश्चापि ददर्श विष्ठितान्
उपागतान् मन्त्रिपुरोहितांस्तदा ॥३१॥

इत्यार्षे रामायणे अयोध्याकाण्डे कैकेय्युपालम्भो
नाम एकादशः सर्गः ॥

# अयोध्याकाण्डं

## XII.

अथ तां रात्रिमुषिताः प्रधाना नृपमन्त्रिणः ।
पौरजानपदाश्चैव पुरोहितपुरोगमाः ॥ १ ॥
राजोपस्थानमागम्य राजसंदर्शनार्थिनः ।
आभिषेचनिकं सर्वं कृत्वा तस्थुर्नृपाज्ञया ॥ २ ॥
तस्मिन्नहनि पुष्येण सोमे योगमुपागते ।
आभिषेचनिकं द्रव्यं रामार्थमुपकल्पितं ॥ ३ ॥
शातकुम्भं च रुचिरं भद्रासनमलंकृतं ।
उपकल्पितमास्तीर्य मृगराजस्य चर्मणा ॥ ४ ॥
गङ्गायमुनयोश्चैव संगमादाहृतं जलं ।
याश्चान्याः सरितः पुण्यास्ताभ्यश्च जलमाहृतं ॥ ५ ॥
पूर्वपश्चान्मुखीभ्यश्च तिर्यग्गाभ्यश्च सर्वशः ।
समुद्रेभ्यश्च सर्वेभ्यः सलिलं समुपाहृतं ॥ ६ ॥
क्षीरवृक्षप्रबालैश्च पद्मोत्पलविमिश्रितैः ।
पूर्णकुम्भास्त्वलंकृत्य काञ्चना उपकल्पिताः ॥ ७ ॥
रुचका रोचनाश्चैव घृतं मधु पयो दधि ।
तथैव पुण्यतीर्थेभ्यो मृदापो मङ्गलानि च ॥ ८ ॥
चन्द्रांशुविमलं चापि मणिदण्डमलंकृतं ।
चामरं व्यजनं श्रीमद्रामार्थमुपकल्पितं ॥ ९ ॥

पूर्णेन्दुमण्डलाभं च श्रीमन्माल्यविभूषितं ।
रामस्य यौवराज्यार्थमातपत्रं प्रकल्पितं ॥ १० ॥
तथा च गोवृषः श्वेतः श्वेतश्चाश्वः प्रकल्पितः ।
मत्तो गजवरश्चैव श्रीमांस्तत्रोपकल्पितः ॥ ११ ॥
अष्टौ कन्याश्च मङ्गल्या वराभरणभूषिताः ।
वादित्राणि च सर्वाणि वन्दिनश्च स्वलंकृताः ॥ १२ ॥
इक्ष्वाकुराजाभ्युचितं यच्चान्यदपि किञ्चन ।
आभिषेचनिकं द्रव्यं सर्वं तत्रोपकल्पितं ॥ १३ ॥
अथ ते मन्त्रिणः सूतं सुमन्त्रं सपुरोहिताः ।
ऊचुरभ्यागतानस्मान् राज्ञे त्वावेदयेति वै ॥ १४ ॥
पश्यामो न हि राजानमुदितश्च दिवाकरः ।
यौवराज्याभिषेकश्च क्लृप्तो रामस्य धीमतः ॥ १५ ॥
इति तैरेवमाज्ञप्तः प्रतीहारो महीपतेः ।
अब्रवीत् तानिदं वाक्यं सुमन्त्रो मन्त्रिसत्तमान् ॥ १६ ॥
अयं पृच्छामि वचनात् सुखमायुष्मतां नृपं ।
राजसंदर्शनार्थिवमहमावेदयामि वः ॥ १७ ॥
इत्युक्त्वान्तःपुरद्वारमासाद्य स त्वरान्वितः ।
सुमन्त्रो नृपतिं सुप्तं मत्वा भूयो व्यबोधयत् ॥ १८ ॥
ब्रह्मेन्द्राग्निपुरोगास्त्वां विबुधा विबुधोपम ।
शिवाय बोधयन्त्वद्य कल्याणाय च मानद ॥ १९ ॥

गता भगवती रात्रिरहः शिवमुपस्थितं ।
प्रतिबुध्यस्व राजर्षे धर्मकृत्यानि कारय ॥ २० ॥
पुरोधसो मन्त्रिणश्च पौरजानपदा जनाः ।
दर्शनं तेऽभिकाङ्क्षन्ति प्रतिबोद्धुं नृपार्हसि ॥ २१ ॥
तं तथा पुनरभ्येत्य बोधयन्तं नराधिपः ।
सुमन्त्रं दुःखसंतप्तस्त्वरयन्निदमब्रवीत् ॥ २२ ॥
सुमन्त्र नावसुप्तोऽस्मि रामं तु क्षिप्रमानय ।
इति राजा दशरथः सुमन्त्रं पुनरन्वशात् ॥ २३ ॥
इति राज्ञो वचः श्रुत्वा सुमन्त्रस्त्वरितस्तदा ।
निर्जगामाथ संभ्रान्तस्तस्माद्राजनिवेशनात् ॥ २४ ॥
निष्क्रम्य चैव त्वरितो राममानयितुं तदा ।
रथेन जवनाश्वेन ययौ रामगृहं प्रति ॥ २५ ॥
जनौघं राजमार्गस्थं प्रतिव्यूहन्नुपागतः ।
शृण्वन् वाचः कथयतां रामाभिषवसंहिताः ॥ २६ ॥
अद्य रामो यौवराज्यं लप्स्यते पितुराज्ञया ।
अहो महोत्सवोऽस्माकमद्यायं भविता पुरे ॥ २७ ॥
मृदुर्दान्तः पौरहितः सर्वभूतहिते रतः ।
युवराजः किलास्माकमद्य रामो भविष्यति ॥ २८ ॥
अहोऽद्यानुगृहीताः स्मो यत् साधुजनवत्सलः ।
पालयिष्यति नो रामः पिता पुत्रानिवौरसान् ॥ २९ ॥

इति तत्र जनौघस्य शृण्वन् वाचः समन्ततः ।
ययौ सुमन्त्रस्त्वरितो राममानयितुं गृहात् ॥ ३० ॥
अथाससाद रामस्य स वेश्माभ्रचयोपमं ।
दामभिर्वरमाल्यानां प्रालम्बैः समलंकृतं ॥ ३१ ॥
महाकवाटपिहितं वितर्दिशतशोभितं ।
काञ्चनप्रतिमैकाग्र मणिविद्रुमतोरणं ॥ ३२ ॥
रामोपवाह्यं च गजं मुक्ताहारविभूषितं ।
कृताङ्गदं चन्दनेन ददर्शैरावतोपमं ॥ ३३ ॥
स वाजियुक्तेन रथेन सारथिस्
तदागतः पौरजनं प्रहर्षयन् ।
विवेश रामस्य गृहं महर्द्धिमन्
महेन्द्रवेश्मप्रतिमं नृपाज्ञया ॥ ३४ ॥
स तत् समासाद्य महर्द्धिमत् तदा
जहर्ष सूतो मुमुदेऽभिवीक्ष्य च ।
अनेकरत्नाचितमत्यलंकृतं
गृहं वरार्हस्य शचीपतेरिव ॥ ३५ ॥
उपस्थितैर्मागधसूतवन्दिभिस्
तथैव वैतालिकसौखशायिकैः ।
अभिष्टुवद्भिर्गुणतो नृपात्मजं
समावृतं द्वारपथं ददर्श सः ॥ ३६ ॥

स सप्तकक्ष्यां पुरुषैरलंकृतैर्
विनीतवेषैर्बहुभिः सुरक्षितं ।
विवेश रामस्य महात्मनो गृहं
महीयमानं नृपमन्त्रिसत्तमः ॥३७॥

सितोच्चशैलोत्तमशृङ्गवर्चसं
महाविमानप्रतिमं जनौघवत् ।
अवार्यमाणः प्रविवेश तद्गृहं
स राजपुत्रस्य नरेन्द्रसारथिः ॥३८॥

इत्यार्षे रामायणे अयोध्याकाण्डे आभिषेचनिकद्रव्योपक्षेपो
नाम द्वादशः सर्गः ॥

# रामायणं

## XIII.

जनौघकीर्णाः सोऽतीत्य षट् कक्षास्तस्य वेश्मनः ।
सुविभक्तां ततः कक्षां सप्तमीमाससाद ह ॥ १ ॥
युवभिः पुरुषैर्गुप्तां प्रासकार्मुकपाणिभिः ।
अप्रमादिभिरेकाग्रैर्भक्तिमद्भिरलंकृतैः ॥ २ ॥
तथा कञ्चुकिभिर्वृद्धैः काषायाम्बरधारिभिः ।
रक्षितामनहङ्कारैः स्व्यध्यक्षैर्वेत्रपाणिभिः ॥ ३ ॥
ते दृष्ट्वैवागतं सूतं रामप्रियचिकीर्षवः ।
सहभार्याय रामाय प्रणिपत्य न्यवेदयन् ॥ ४ ॥
श्रुत्वैवाभ्यागतं तं तु दूतमभ्यर्चितं पितुः ।
रामः प्रवेशयामास सत्कृत्यालयमात्मनः ॥ ५ ॥
स तं धनदसंकाशं सूपविष्टं स्वलंकृतं ।
ददर्श सूतः सौवर्णे पर्यङ्के राङ्कवास्तृते ॥ ६ ॥
वराहरुधिराभेन सुश्लक्ष्णेन महाभुजं ।
अनुलिप्तं महार्हेण चन्दनेन सुगन्धिना ॥ ७ ॥
बालव्यजनधारिण्या सीतया पार्श्वे संस्थया ।
सपत्नया सेव्यमानं श्रियेव मधुसूदनं ॥ ८ ॥
तरुणादित्यसदृशं प्रज्वलन्तमिव श्रिया ।
ववन्दे राममभ्येत्य सुमन्त्रो विनयान्वितः ॥ ९ ॥

पृष्ट्वा चैनं सुखं प्रह्वो विहारशयनासने ।
उवाचानन्तरमिदं सुमन्त्रो राजशासनं ॥ १० ॥
कौशल्या सुप्रजा देवी देवस्त्वां द्रष्टुमिच्छति ।
कैकेयीसहितो राम गम्यतां यदि रोचते ॥ ११ ॥
एवमुक्तः सुमन्त्रेण रामो राजीवलोचनः ।
शिरसा प्रतिगृह्याज्ञां पितुः सीतामथाब्रवीत् ॥ १२ ॥
सीते देवश्च देवी च समागम्य परस्परं ।
मम मन्त्रयतो नूनं यौवराज्याभिषेचनं ॥ १३ ॥
ध्रुवं मे यतते माता कैकेयी मत्प्रियेच्छया ।
अद्यैव मे यौवराज्यं प्रतिपादयितुं स्वयं ॥ १४ ॥
नूनं रहसि राजानं मत्कृते त्वरयत्यसौ ।
अथवा सहिता राज्ञा मां प्रियं वक्तुमिच्छति ॥ १५ ॥
यादृशी परिषत् सीते वृत्तश्चायं तथाविधः ।
ध्रुवमद्यैव राजा मां यौवराज्ये ऽभिषेक्ष्यति ॥ १६ ॥
तस्माच्छीघ्रमहं गत्वा पश्यामि जगतीपतिं ।
एकं रहसि कैकेय्या सहासीनं गतज्वरं ॥ १७ ॥
इति भर्तृवचः श्रुत्वा सीता वचनमब्रवीत् ।
गच्छार्यपुत्र पितरं द्रष्टुं मातरमेव च ॥ १८ ॥
इत्युक्त्वा साञ्जलिं कृत्वा रामं संप्रस्थितं तदा ।
आद्वारमनुवव्राज सीता भर्तृवशानुगा ॥ १९ ॥

तां निवर्त्य ततो रामो निर्जगाम त्वरान्वितः ।
पितरं द्रष्टुमाहूतः कैकेय्या सहितं रहः ॥ २० ॥
विनिर्गत्य च तस्मात् स गृहादनुपमद्युतिः ।
ददर्शार्थिजनं द्वारि स्थितं दर्शनलालसं ॥ २१ ॥
स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च ।
युक्तमेव रथं रौप्यमारुरोह त्वरान्वितः ॥ २२ ॥
मुष्णन्तमिव चक्षूंषि प्रभया मेघनादिनं ।
करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः ॥ २३ ॥
हर्यश्वयुक्तं भगवान् स्वरथं मघवानिव ।
तमारुह्य ययौ रामः श्रिया परमया ज्वलन् ॥ २४ ॥
स तेन रथमुख्येन पर्जन्यसमनादिना ।
विनिर्ययौ स्वभवनात् सिताभ्रादिव चन्द्रमाः ॥ २५ ॥
छत्रचामरपाणिस्तं प्रयान्तं लक्ष्मणस्तदा ।
अन्वारुरोह देवेन्द्रमुपेन्द्र इव हर्षयन् ॥ २६ ॥
ततो हलाहलाशब्दस्तु मनः समपद्यत ।
दृष्ट्वैव राममायान्तं रथेन रथिनां वरं ॥ २७ ॥
हर्षात् तेन जनौघेन सहसा समुदीरितः ।
स शब्दः पूरयामास दिशोऽथ विदिशस्तथा ॥ २८ ॥
प्रहर्षवद्भिः पुरवासिभिर्जनैः
सभाज्यमानः प्रियशब्दवादिभिः ।

कराग्रदृष्टिस्मितभाषितेङ्गितैर्
ययौ जनौघं प्रतिपूजयन् शनैः ॥ २१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामाह्वानं नाम
त्रयोदशः सर्गः ॥

# रामायणं

## XIV.

अथ रामो रथगतः पूज्यमानः समन्ततः ।
पौरैरञ्जलिमालाभिरनुगैः पथि संस्थितैः ॥ १ ॥
शुश्राव रामः शतशो वाचः पौरजनेरिताः ।
आत्माभिष्टवसंयुक्ताः पुण्यश्रवणकीर्तनाः ॥ २ ॥
अद्य राज्ञा स्वयं दत्तां रामो राजीवलोचनः ।
स्वगुणोपार्जितां धर्म्यामतुलां प्राप्स्यति श्रियं ॥ ३ ॥
अर्हत्येष श्रियं प्राप्तुं पृथिव्यां वासवोपमः ।
राज्ञः सकाशाद्गुणवान् मानमर्हति राघवः ॥ ४ ॥
यदि नाम भवेद्रामो राजा नः परिरक्षिता ।
भुवि मोदामहे तदा यथा स्वर्गनिवासिनः ॥ ५ ॥
यदि नः सुकृतं किञ्चिद्यदि दत्तं कृतं यदि ।
फलेन तेन राजायं रामो भवतु रक्षिता ॥ ६ ॥
न कृच्छ्रजीवी भविता न दुःखी भुवि कश्चन ।
यदि राजा यौवराज्ये राममद्याभिषेक्ष्यति ॥ ७ ॥
इति रामः शुभा वाचः शृण्वन् पौरजनेरिताः ।
राजमार्गे सुसंहृष्टो जगाम भवनं पितुः ॥ ८ ॥
वातायनगताश्चैनं यान्तं पौरजनस्त्रियः ।
ददृशुः प्रशशंसुश्च स्वगुणैरनुरञ्जिताः ॥ ९ ॥

पितामहैराचरितं तथैव प्रपितामहैः ।
अनुवर्तिष्यते वृत्तं रामो गुणगणान्वितः ॥१०॥
यथा पितामहेनास्य वयं पित्रा च पालिताः ।
तथाधिकतरं रामः पालयिष्यति नो ध्रुवं ॥११॥
अलं च नोऽद्य भुक्तेन प्रियैरर्थैरलं च नः ।
तावद्यावद्यौवराज्यं रामोऽयं प्राप्तवानिति ॥१२॥
अहो हि नः प्रियतरं कार्यमन्यन्न विद्यते ।
रामाभिषेकादन्यत्र जीवितादपि च प्रियात् ॥१३॥
त्वया पुत्रेण कौशल्या देवी नन्दतु राघव ।
श्रियमृद्धामवाप्नोतु सीता राम सह त्वया ॥१४॥
यौवराज्यमवाप्य त्वं पितृदायाद्यमीप्सितं ।
जितामित्रः सुखी राम दीर्घमायुरवाप्नुहि ॥१५॥
इति रामं तदा दृष्ट्वा यान्तं पितृनिवेशनं ।
जालवातायनगता ऊचुः पौरजनस्त्रियः ॥१६॥
एताश्चान्याश्च विविधा उदासीनकथाः शुभाः ।
शृण्वन् रामो ययौ श्रीमांस्तदा राजनिवेशनं ॥१७॥
न तस्मात् पुरुषः कश्चिन्न नारी नरकुञ्जरात् ।
दृष्टिं शक्नोत्यपाक्रष्टुं न मनस्तद्गुणैर्हृतं ॥१८॥
स सर्वेषां हि वर्णानां चतुर्णामपि राघवः ।
प्राणेभ्योऽपि प्रियतरो बभूव गुणसागरः ॥१९॥

स राजकुलमासाद्य महेन्द्रभवनोपमं ।
अवतीर्य रथात् तस्मात् प्रविवेश श्रिया ज्वलन् ॥ २० ॥
स सर्वाः समतिक्रम्य कक्षा दशरथात्मजः ।
संनिवार्य जनं सर्वं रामोऽन्तःपुरमाविशत् ॥ २१ ॥

ततः प्रविष्टे पितुरन्तिकं तदा
जनः स सर्वोऽनुगतो नृपात्मजे ।
चकाङ्क्ष तस्यैव विनिर्गमं पुनर्
यथोदयं चन्द्रमसो महोदधिः ॥ २२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामोपयानं नाम
चतुर्दशः सर्गः ॥

# अयोध्याकाण्डं

## XV.

स ददर्शासने राम आसीनं पितरं तदा ।
कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ १ ॥
स तस्य चरणौ पूर्वं प्रणिपत्य कृताञ्जलिः ।
ततो ववन्दे प्रणतः कैकेय्यास्तदनन्तरं ॥ २ ॥
सौमित्रिरपि चाभ्येत्य पितुः पादावनन्तरं ।
ववन्दे परमप्रीतः कैकेय्या विनयान्वितः ॥ ३ ॥
स्थितं संप्रश्रितं दृष्ट्वा रामं दशरथो नृपः ।
नाशक्नोदप्रियं वक्तुं प्रियं पुत्रमनागसं ॥ ४ ॥
रामेत्युक्त्वा तु वचनं बाष्पवेगजडीकृतः ।
नाशक्नोत् परतो वक्तुं नेक्षितुं दयितं सुतं ॥ ५ ॥
तमपूर्वं पितुर्दृष्ट्वा विकारं परिशङ्कितः ।
रामोऽप्युद्वेगमापेदे पदा स्पृष्ट्वेव पन्नगं ॥ ६ ॥
अप्रसन्नेन्द्रियं दृष्ट्वा शोकसंतापविह्वलं ।
निःश्वसन्तं यथा नागं दीर्घमुष्णं च निःश्वसन् ॥ ७ ॥
ऊर्मिमालिनमक्षोभ्यं क्षोभितं सागरं यथा ।
उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥ ८ ॥
अनिमित्तं विकारं तं दृष्ट्वा रामः पितुस्तदा ।
बभूव संक्षुब्धतरः समुद्र इव पर्वणि ॥ ९ ॥

चिन्तयामास च तदा रामः पितृहिते रतः ।
किंनिमित्तमयं राजा मां न शक्नोति वीक्षितुं ॥ १० ॥
उक्का रामेति कस्माच्च नोत्तरं प्रतिपद्यते ।
कच्चिन्मया नापकृतमज्ञानाल्लाघवेन वा ॥ ११ ॥
अन्यदा ह्येष मां दृष्ट्वा कुपितोऽपि प्रसीदति ।
अस्याद्यैव तु मां दृष्ट्वा केनायासोऽयमीदृशः ॥ १२ ॥
स तदा पितुरायासमपूर्वं पितृवत्सलः ।
दृष्ट्वा संचिन्तयामास तत् तदुद्विग्नमानसः ॥ १३ ॥
स दीन इव शोकार्तो विषण्णवदनस्ततः ।
कैकेयीमभिवीक्ष्यैवं रामो वचनमब्रवीत् ॥ १४ ॥
देवि किन्नु मयाज्ञानादपराद्धं महीपतेः ।
विवर्णवदनो दीनो येन मां नाभिभाषते ॥ १५ ॥
शारीरो मानसो वापि कच्चिदेनं न बाधते ।
संतापो वाभिघातो वा दुर्लभं हि सदासुखं ॥ १६ ॥
कच्चिन्न भरते किञ्चित् कुमारे पितृनन्दने ।
शत्रुघ्ने वाप्यकुशलं देवि मातृषु वा पुनः ॥ १७ ॥
कच्चिन्मया नापकृतमज्ञानाद्येन वा पिता ।
कुपितस्तन्ममाचक्ष्व त्वं चैनं वै प्रसादय ॥ १८ ॥
पितर्यपरितुष्टे हि कृत्वा वा किञ्चिदप्रियं ।
नोत्सहे जीवितुं देवि सत्यमेतद्ब्रवीमि ते ॥ १९ ॥

यतः शरीरस्योत्पत्तिरस्य मे जीवितस्य च ।
कथं नामाप्रियं तस्य कृत्वा जीवितुमुत्सहे ॥ २० ॥
प्रभुः शरीरप्रभवः प्रियकृद्वृत्तिदो वरः ।
हितानामुपदेष्टा च प्रत्यक्षं दैवतं पिता ॥ २१ ॥
आयुर्यशो बलं वित्तमाकाङ्क्षद्भिः प्रियाणि च ।
पितैवाराधनीयोऽग्रे दैवतं हि पिता महत् ॥ २२ ॥
निन्द्यश्च स्यात् कृतघ्नश्च पापो निरयलोकभाक् ।
मनसाप्यप्रियं कृत्वा पितुरस्य महात्मनः ॥ २३ ॥
न किञ्चित् परुषं कच्चिदभिमानात् पिता मम ।
क्रुद्धयोक्तो भवत्यार्य येनास्याकुलितं मनः ॥ २४ ॥
एतदाचक्ष्व मे देवि याथातथ्येन पृच्छतः ।
यन्निमित्तो विकारोऽयमपूर्वोऽद्य महीपतेः ॥ २५ ॥
अहं ह्यस्य कृते राज्ञो विशेयमपि पावकं ।
भक्षयेयं विषं तीक्ष्णं मज्जेयमपि सागरे ॥ २६ ॥
धर्मात्मना नियुक्तोऽद्य पित्रानेन त्वयापिवा ।
तवैव वचनाद्देवि नाकार्यं विद्यते मम ॥ २७ ॥
यथैव मे पिता पूज्यस्त्वमप्यम्ब तथैव मे ।
तस्मात् त्वमेव मां ब्रूहि यद्राज्ञोऽस्य चिकीर्षितं ॥ २८ ॥
कर्तव्यं प्रतिजानीहि न हि वक्ष्याम्यहं मृषा ।
पतेद्द्यौः पृथिवी शीर्येच्छोषं जलनिधिर्व्रजेत् ॥ २९ ॥

स्वैरेष्वपि न तु ब्रूयामनृतं क्वचिदप्यहं ।
तमार्जवमनार्या सा विदित्वा सत्यवादिनं ॥ ३० ॥
उवाच वाक्यं कैकेयी मन्थरावाक्यदूषिता ।
पुरा देवासुरे युद्धे पित्रा ते रघुनन्दन ॥ ३१ ॥
शुश्रूषितेन प्रीतेन मह्यं दत्तं वरद्वयं ।
मयायं याचितस्तत्र भरतस्याभिषेचनं ॥ ३२ ॥
तव निर्वासनं चैव वर्षाणि द्वि चतुर्दश ।
अद्यैव च त्वया राम गन्तव्यं वचनात् पितुः ॥ ३३ ॥
वनवासं समुद्दिश्य नव वर्षाणि पञ्च च ।
यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि ॥ ३४ ॥
आत्मानमपि वा कर्तुं यदि सत्यं व्यवस्यसि ।
सप्त सप्त च वर्षाणि ततो वनचरो भव ।
त्यक्त्वा राज्यं दिशं च्वेतां चीराजिनजटाधरः ॥ ३५ ॥

अनुकरमपि तद्वचस्तदानीं
धृतिमति सत्वबलव्यपाश्रयात् ।
पितृवचननियोगयन्त्रितोऽसौ
वनगमनं स तदाध्यवास्यत ॥ ३६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामवनगमनादेशो नाम
पञ्चदशः सर्गः ॥

# अयोध्याकाण्डं

## XVI.

अथैतद्वचनं श्रुत्वा कैकेय्या समुदाहृतं ।
स्मितं कृत्वा ततो राम इदं वचनमब्रवीत् ॥ १ ॥
एवमस्तु निवत्स्यामि वने चीरजटाधरः ।
चतुर्दशैव वर्षाणि प्रतिज्ञां पालयन् पितुः ॥ २ ॥
इदं तु ज्ञातुमिच्छामि किमर्थं मां स्वयं गुरुः ।
नाज्ञापयति विश्रब्धं प्रेष्यमात्मवशानुगं ॥ ३ ॥
महाननुग्रहो मे स्यादाज्ञातस्य महात्मना ।
मयि भृत्ये च पुत्रे च किं राज्ञो देवि गौरवं ॥ ४ ॥
दैवतं हि प्रभुश्चैव पिता राजा गुरुश्च मे ।
अस्याज्ञां शिरसा गृह्य करिष्यामि यथात्थ मां ॥ ५ ॥
न च मन्युस्त्वया कार्यस्तथ्यं मे वदतो वचः ।
यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ६ ॥
गुरोरिष्टस्य विदुषो धर्मज्ञस्य महात्मनः ।
पितुः पुत्रः कथं नाम न कुर्यान्मद्विधो वचः ॥ ७ ॥
व्यलीकं तु ममास्त्येकं हृदयं दहतीव यत् ।
भरताभिषेकं राजा यन्नाज्ञापयति स्वयं ॥ ८ ॥
अहं हि राज्यं दारांश्च प्राणानिष्टान् धनानि च ।
स्वयमेव प्रयच्छेयं भरतायाभियाचितः ॥ ९ ॥

भ्रात्रे गुणवते तस्मै भरताय महात्मने ।
न मेऽस्त्यदेयं कैकेयि पादौ सत्येन ते शपे ॥ १० ॥
किं पुनर्मनुजेन्द्रेण स्वयं पित्रा नियोजितः ।
प्रदद्यां भरतायाहमपि जीवितमात्मनः ॥ ११ ॥
तदाश्वासय राजानमात्मानमपि च स्वयं ।
गमिष्याम्यहमद्यैव सुखी भवतु मे पिता ॥ १२ ॥
गच्छन्त्वद्य पुरादस्मात् शीघ्रं प्रजवितैर्हयैः ।
भरतं मातुलकुलादुपावर्तयितुं नराः ॥ १३ ॥
एषोऽहमद्य गच्छामि वनवासं कृतक्षणः ।
पितुर्नियोगात् कैकेयि तव वा हृष्टमानसः ॥ १४ ॥
इति रामवचः श्रुत्वा कैकेयी हृष्टमानसा ।
अश्रद्दधाना प्रस्थाने त्वरयामास राघवं ॥ १५ ॥
एवं भवतु यास्यन्ति शीघ्रं प्रजवितैर्हयैः ।
भरतं मातुलकुलादुपावर्तयितुं नराः ॥ १६ ॥
तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनं ।
राम तस्मादितोऽद्यैव वनं त्वं गन्तुमर्हसि ॥ १७ ॥
न त्वामुत्सहते वक्तुं स्वयं व्रीडान्वितो नृपः ।
मा तेऽत्र संशयोऽस्त्वन्यो मा मन्युं कुरु राघव ॥ १८ ॥
यावत् त्वं न वनं यातः पुरादस्माद्भविष्यसि ।
तावन्न ते पिता राम स्वास्थ्यं प्राप्स्यति दुःखितः ॥ १९ ॥

# अयोध्याकाण्डं

निमीलितेक्षणो राजा श्रुत्वैतद्दारुणं वचः ।
कैकेय्याः शङ्कमानाया लुब्धाया रामनिश्चयं ॥ २० ॥
सुदीर्घं हा हतोऽस्मीति वाक्यमुक्त्वा सुदुःखितः ।
मूर्छामुपागमद्भूयः शोकबाष्पपरिप्लुतः ॥ २१ ॥
रामोऽप्येवं वाक्कशया कैकेय्या परिपीडितः ।
कशयेव हयः साधुस्त्वरावान् वनमुद्यतः ॥ २२ ॥
तदप्रियमतिक्रूरं वाक्यं हृदयदारुणं ।
श्रुत्वा न विव्यथे रामो वचनं चेदमब्रवीत् ॥ २३ ॥
नाहमर्थपरो देवि नं राज्येप्सुर्न चानृती ।
सत्यवाक् शुद्धभावोऽस्मि कस्मान्मां परिशङ्कसे ॥ २४ ॥
यत् तत्रापि भवेत् किञ्चिच्छक्यं कर्तुं हितं मया ।
कृतं तदिति विद्धि त्वं त्यक्त्वा प्राणानपि प्रियान् ॥ २५ ॥
न ह्यतो धर्मचरणादन्यदस्त्यधिकं भुवि ।
पितुर्नियोगकरणात् तस्माद्देवि व्रजाम्यहं ॥ २६ ॥
अनुक्तोऽप्यत्र गुरुणा भवत्या वचनादहं ।
वने वत्स्यामि विजने नव वर्षाणि पञ्च च ॥ २७ ॥
नूनं मयि न कल्याणं संभावयसि किञ्चन ।
यत् त्वया भरतस्यार्थे राजा विज्ञापितः स्वयं ॥ २८ ॥
इष्टान् भोगान् प्रियान् दारानपिवा जीवितं प्रियं ।
तवैव वचनाद्दद्यां भरताय महात्मने ॥ २९ ॥

राजानं दुःखितं कृत्वा पुत्रार्थं राज्यलुब्धया ।
अम्ब किं नाम संप्राप्तं त्वया फलमभीप्सितं ॥ ३० ॥
स्वयं मातरमापृच्छ्य वैदेहीं परिहाय च ।
अद्यैव वनवासाय गच्छामि सुखिनी भव ॥ ३१ ॥
भरतः पालयेद्राज्यं शुश्रूषेच्च यथा नृपं ।
तथा भवत्या कर्तव्यमेष धर्मः सनातनः ॥ ३२ ॥
इति रामवचः श्रुत्वा शोकवाष्पपरिप्लुतः ।
ईषत् सन्नोऽपि नृपतिर्भूयो मोहमुपागमत् ॥ ३३ ॥
श्रुत्वा चैवाप्रियाख्यानं राममातुस्तदप्रियं ।
अन्तःपुरचरा नार्यः प्रद्वेषभयशङ्किताः ॥ ३४ ॥
अतो नाभ्यागमंस्तत्र कौशल्याया निवेदितुं ।
कैकेयीवचनाद्रामं प्रतिषिद्धं यतव्रतं ॥ ३५ ॥
निःसंज्ञस्य पितुः पादौ शिरसा सोऽभिवाद्य हि ।
अनार्यायाश्च कैकेय्याः कृत्वा पादाभिवन्दनं ॥ ३६ ॥
कृताञ्जलिर्दशरथं कैकेयीं च प्रदक्षिणं ।
कृत्वा रामस्ततस्तस्मान्निर्जगाम गृहात् पितुः ॥ ३७ ॥
तं वाष्पपरिरुद्धाक्षो लक्ष्मणः शुभलक्षणः ।
निर्गच्छन्तं सुदुर्धर्षमनुवव्राज पृष्ठतः ॥ ३८ ॥
संनिवर्तयितुं रामं वनवासकृतोद्यमं ।
निश्चयेनानुगच्छन तं लक्ष्मणः पृष्ठतोऽन्वगात् ॥ ३९ ॥

आभिषेचनिकं द्रव्यं कृत्वा रामः प्रदक्षिणं ।
शनैर्जगाम सापेक्षो दृष्टिं तत्रापि वारयन् ॥ ४० ॥
तत् तद्विगणयन् दुःखं पितुरात्मवियोगजं ।
निष्क्रम्यान्तःपुरात् तस्मात् तं ददर्श पुनर्जनं ॥ ४१ ॥
दृष्ट्वा च स स्मितमुखः प्रतिपूज्य यथार्हतः ।
जगाम त्वरितो द्रष्टुं मातरं स्वनिवेशने ॥ ४२ ॥
दुःखमन्तर्गतं तस्य न कश्चिदुबुधे जनः ।
लक्ष्मणं वर्जयित्वैकं धृतिसंयतचेतसः ॥ ४३ ॥
न ह्यस्य राजलक्ष्मीं तां राज्यनाशोऽपकर्षति ।
लोककान्तस्य सौम्यत्वाच्छीतरश्मेरिव क्षपा ॥ ४४ ॥
न चापि धनसंपूर्णां त्यजतोऽस्य वसुंधरां ।
यतेरिव विमुक्तस्य लक्ष्यते चित्तविक्रिया ॥ ४५ ॥
मनसैव महद्दुःखमुद्वहन् धृतिमाश्रितः ।
जगाम मातुस्तद्दुःखं स्वयं वेदयितुं गृहं ॥ ४६ ॥
तथैव रामः स्वजनान् समागमे
प्रहर्षयंस्तुष्टमना रघूद्वहः ।
जगाम तामर्थविपत्तिमात्मनो
विचिन्तयन् मातुरथो निवेशनं ॥ ४७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामवनवासप्रतिज्ञा
नाम षोडशः सर्गः ॥

# रामायणं

## XVII.

रामोऽथ दुःखसंतप्तः श्वसन्निव भुजङ्गमः ।
जगाम सहितो भ्रात्रा कौशल्याया निवेशनं ॥ १ ॥
सोऽपश्यत् पुरुषांस्तत्र वृद्धान् वर्षवरांस्तथा ।
द्वाःस्थान् विनयसंपन्नान् विष्ठितान् मातुराज्ञया ॥ २ ॥
तैः कृताञ्जलिभिस्तत्र विवेशाप्रतिवारितः ।
प्रथमां राघवः कक्षां मातरं द्रष्टुमातुरः ॥ ३ ॥
प्रविश्य प्रथमां कक्षां द्वितीयायां ददर्श सः ।
ब्राह्मणान् वेदविदुषो वृद्धान् राजपुरस्कृतान् ॥ ४ ॥
अभिवाद्य स तान् सर्वान् दीनेनैव तु चेतसा ।
विवेश मातुर्भवनं रामस्त्वरितमानसः ॥ ५ ॥
कौशल्यापि तदा देवी परं नियममास्थिता ।
अकरोत् प्रयता पूजां देवानां नियतव्रता ॥ ६ ॥
आशंसन्ती च पुत्रस्य यौवराज्याभिषेचनं ।
सा शुक्लाम्बरसंवीता तत्परा नान्यमानसा ॥ ७ ॥
प्रविश्य चैव त्वरितो रामो मातुर्निवेशनं ।
ददर्श मातरं तत्र देवागारे यतव्रतां ॥ ८ ॥
कृताञ्जलिं देवपरां स्थितां मङ्गलवादिनीं ।
अर्चयन्तीं पितॄंश्चैव देवांश्चानन्यमानसां ॥ ९ ॥
तामवेक्ष्य ततो रामो ववन्दे विनयान्वितः ।

उवाच चैनामभ्येत्य रामोऽहमिति नन्दयन् ॥ १० ॥
साथ दृष्ट्वैव तनयं मातृनन्दनमागतं ।
अभ्यनन्दच्च वात्सल्याद्वत्सं गौरिव वत्सला ॥ ११ ॥
स मात्रा समभिप्रेत्य परिष्वक्तोऽभिनन्दितः ।
पूजयामास तां देवीमदितिं मघवानिव ॥ १२ ॥
तमुवाच ततो हृष्टा कौशल्या प्रियमात्मजं ।
प्रयोजयन्ती पुत्रस्य शिववृद्ध्यर्थमाशिषः ॥ १३ ॥
वृद्धानां पुत्र सर्वेषां राजर्षीणां महात्मनां ।
प्राप्नुह्यायुश्च कीर्तिं च धर्मं च स्वकुलोचितं ॥ १४ ॥
पित्राभिसृष्टामचलामव्ययां श्रियमाप्नुहि ।
हतामित्रः श्रिया युक्तः पितॄन् नन्दय पुत्रक ॥ १५ ॥
सत्यप्रतिज्ञं पितरं पश्य राघव माचिरं ।
अद्य हि त्वां पिता राम यौवराज्येऽभिषेक्ष्यति ॥ १६ ॥
एवं ब्रुवाणां कौशल्यां रामो वचनमब्रवीत् ।
कैकेयीवाक्यसंतप्त ईषदाकुलचेतनः ॥ १७ ॥
अम्ब न त्वं प्रजानासि महद्व्यसनमागतं ।
तव दुःखाय महते वैदेह्या लक्ष्मणस्य च ॥ १८ ॥
कैकेय्या भरतस्यार्थे राज्यं राजाभियाचितः ।
सत्येन परिगृह्यादौ तेन चास्यै प्रतिश्रुतं ॥ १९ ॥
भरताय महाराजो यौवराज्यं प्रदास्यति ।

मां पुनर्वनवासाय नियोजयति साम्प्रतं ॥ २० ॥
सोऽहं वत्स्यामि वर्षाणि वने देवि चतुर्दश ।
स्वादूनि हित्वा भोज्यानि फलमूलकृताशनः ॥ २१ ॥
इति रामवचः श्रुत्वा सा पपात तपस्विनी ।
कौशल्या दुःखसंतप्ता निकृत्ता कदली यथा ॥ २२ ॥
स तां निपतितां दृष्ट्वा भूमौ मातरमातुरां ।
राम उत्थापयामास दुःखितां गतचेतनां ॥ २३ ॥
उपावृत्योत्थितां दीनां बडवामिव विह्वलां ।
ममार्ज पाणिना रामः पांशुना परिगुण्ठितां ॥ २४ ॥
अथ किञ्चित् समाश्वस्य कौशल्या दुःखमोहिता ।
उदीक्ष्य रामं प्रोवाच वाष्पगद्गदया गिरा ॥ २५ ॥
नैव राम यदि त्वं मे जायेथाः शोकवर्धनः ।
नैव चाहमिदं दुःखं प्राप्नुयां त्वद्वियोगजं ॥ २६ ॥
एकमेव हि बन्ध्याया दुःखं भवति पुत्रक ।
अप्रजास्मीति न त्वीदृगिष्टापत्यवियोगजं ॥ २७ ॥
न प्राप्तपूर्वं कल्याणं मया पतिपरिग्रहात् ।
आशंसितं मे सुचिरं त्वत्तोऽपि प्राप्नुयामिति ॥ २८ ॥
तदद्य विफलीभूतं मया राम विचिन्तितं ।
दुःखानामेव पुत्राहं विहितात्यन्तभागिनी ॥ २९ ॥
सा बह्वन्यमनोज्ञानि वाचश्च हृदयच्छिदः ।

सन्निध्येऽहं सपत्नीनामवराणां वरा सती ॥३०॥
इतोऽपि च दुःखतरं मम राम भविष्यति ।
त्वयि संनिहिते तावदियं मे राम विक्रिया ॥३१॥
प्रोषिते तु त्वयि व्यक्तं नैव शक्ष्यामि जीवितुं ।
या हि मां प्रीयते काचित् सम्यक् च परिवर्तते ॥३२॥
सर्वा एव तु ता द्वेष्टि कैकेयी वीक्ष्य मत्कृते ।
साहं बहून्यनिष्टानि वाचश्च हृदयच्छिदः ॥३३॥
सन्निध्ये खलु कैकेय्यास्त्वयि राम वनं गते ।
तदसह्यमिदं दुःखं सोढुं पुत्रक नोत्सहे ॥३४॥
अद्यैव मरणं मेऽस्तु को वार्थो जीवितेन मे ।
अद्य जातस्य वर्षाणि दश चाष्टौ च तेऽनघ ॥३५॥
जपितानीह काङ्क्षन्त्या त्वत्तो दुःखपरिक्षयं ।
नियमैरुपवासैश्च कर्षयन्त्या कलेवरं ॥३६॥
दुःखसंवर्धितो राम मया दुःखितया ह्यसि ।
नियमाश्चोपवासाश्च ये मया त्वत्कृते कृताः ॥३७॥
ते मेऽद्य विफलीभूता वनं संप्रस्थिते त्वयि ।
दुःखौघेन परिक्लिन्नं हृदयं सीदतीव मे ।
दुर्बलं वै परिक्लिन्नं नदीकूलमिवाम्भसा ॥३८॥

ममैव नूनं मरणं न विद्यते
न चावकाशोऽस्ति यमक्षये क्वचित् ।

प्रसह्य शोकाशनिकृत्तजीविताम्
यदल्पकोऽद्यैव न मां प्रकर्षति ॥ ३९ ॥
यदि ह्यकाले मरणं स्वयेच्छया
लभेत कश्चिद्बहुदुःखकर्षितः ।
भवेयमद्यैव विजीविता ध्रुवं
सुदुःखिता राम विनाकृता त्वया ॥ ४० ॥
दृढं च नूनं हृदयं सुसंहितं
ममायसं यच्छतधा न दीर्यते ।
त्वयैवमुक्ता च न यन्मृता ह्यहं
ध्रुवं हि मृत्युर्मम नैव विद्यते ॥ ४१ ॥
इदं हि दुःखं तदतीव यन्मया
सुदुश्चरं तप्तमनर्थकं तपः ।
प्रसादिता यच्च कृताशया मया
निरर्थकं पुत्र सुरद्विजर्षभाः ॥ ४२ ॥
भृशमसुखमवाप्य तत् तु सा
नृपमहिषी विललाप दुःखिता ।
व्यसनिनमभिवीक्ष्य राघवं
सुतमिव बद्धमवेक्ष्य किन्नरी ॥ ४३ ॥
इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्याविलापो
नाम सप्तदशः सर्गः ॥

# अयोध्याकाण्डं

## XVIII.

पुनरेव तु दुःखार्ता कौशल्या राममब्रवीत् ।
न श्रोतव्यं त्वया राम पितुः कामवतो वचः ॥ १ ॥
इहैव वस किं तेऽसौ राजा वृद्धः करिष्यति ।
न गन्तव्यं त्वया राम जीवन्तीं मां यदीच्छसि ॥ २ ॥
तथा तामातुरां दृष्ट्वा कौशल्यां राममातरं ।
उवाच लक्ष्मणः श्रीमांस्तत् कालसदृशं वचः ॥ ३ ॥
न रोचते ममाप्येतदार्ये यद्राघवो वनं ।
त्यक्त्वा राज्यमितो गच्छेत् स्त्रीवाक्येन प्रचोदितः ॥ ४ ॥
विपरीतमतिवृद्धः स्त्रीजितः कामलालसः ।
राजा किमिति न ब्रूयात् कैकेय्या वशमागतः ॥ ५ ॥
नापराधं हि पश्यामि न दोषमणुमप्यहं ।
रामस्य येन राजायं राष्ट्रान्निर्वास्यते वनं ॥ ६ ॥
न च पश्यामि तं लोके योऽस्य दोषमुदाहरेत् ।
अमित्रोऽप्यनभिस्निग्धो निरमित्रस्य धीमतः ॥ ७ ॥
देवसत्त्वं मृदुं दान्तं रिपूणामपि वत्सलं ।
अवेक्षमाणः को धर्मं त्यजेत् पुत्रमकारणं ॥ ८ ॥
पुनर्बालस्य वृद्धस्य स्त्रीजितस्य विशेषतः ।
कः कुर्याद्वचनं तस्य राजधर्मार्थविद्बुधः ॥ ९ ॥

यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्धमात्मस्थं कुरु शासनं ॥ १० ॥
भृत्ये ते मयि पार्श्वस्थे राज्यप्राप्त्यर्थमुद्यते ।
यौवराज्याभिषेकस्य विघातं कः करिष्यति ॥ ११ ॥
निर्मनुष्यामयोध्यां हि कुर्यां राम शितैः शरैः ।
यौवराज्यविघातं ते यः कुर्वीत नृपाज्ञया ॥ १२ ॥
भरतस्यापिवा पक्षं यो गृह्णीयादचेतनः ।
तं पापमद्यैव प्रेषयामि यमक्षयं ॥ १३ ॥
नायमद्य क्षमाकालस्तेजो दर्शय राघव ।
क्षमी ह्येकरसो राम लोकेन परिभूयते ॥ १४ ॥
कैकेय्या नियतं राजा भेदितोऽद्य भविष्यति ।
त्वया तस्य विभिन्नस्य श्रोतव्यं न कथञ्चन ॥ १५ ॥
कं हि धर्मं समाश्रित्य त्वामसौ त्यक्तुमिच्छति ।
विग्रहोऽयं कृतोऽनेन त्वया सह मयापि च ॥ १६ ॥
कास्य शक्तिः श्रियं दातुं भरताय बलादिव ।
प्रविविक्षति रामोऽयं यदि दीप्तं हुताशनं ॥ १७ ॥
पूर्वमेव ततो देवि प्रविष्टं विद्धि मामपि ।
सर्वभावानुरक्तोऽस्मि रामं भ्रातरमग्रजं ॥ १८ ॥
आयुधं तेन सत्येन पादौ चैवालभे तव ।
अद्य पश्यन्तु मे वीर्यं सर्वशो युधि मानवाः ॥ १९ ॥

रामाज्ञया दुःखशल्यमिममभ्योद्धरामि ते ।
इत्येतद्वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ॥ २० ॥
उवाच रामं कौशल्या दुःखशोकपरिप्लुता ।
भ्रातुस्ते वचनं राम श्रुतं भक्तिमतो हितं ॥ २१ ॥
एतदेव विमृश्याशु क्रियतां यदि रोचते ।
न मे सपत्न्या वचनाद्वनं गन्तुमिहार्हसि ॥ २२ ॥
शोकपावकसंतप्तां मामुत्सृज्यारिकर्षण ।
धर्मं च यदि धर्मज्ञ पौराणमनुवर्तसे ॥ २३ ॥
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमं ।
पुरा मातुर्नियोगाद्धि शक्रः परपुरंजयः ॥ २४ ॥
भ्रातॄन् जघान सापत्न्यान् राज्यं चाप दिवौकसां ।
शुश्रूषन् जननीं पुत्र स्वगृहे नियतो वसन् ॥ २५ ॥
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ।
यथैव राजा पूज्यस्ते तथाहमपि पुत्रक ॥ २६ ॥
ममाप्यतस्ते वचनान्न गन्तव्यमितो वनं ।
न चैव त्वद्विहीनाहं जीवेयमिति मे मतिः ॥ २७ ॥
ममाप्यपेक्षया राम न वनं गन्तुमर्हसि ।
गन्तव्यं यदि चावश्यं मयैव सहितो व्रज ॥ २८ ॥
त्वया हि सह मे श्रेयस्तृणानामपि भक्षणं ।
यदिवा मां परित्यज्य वनं यास्यसि पुत्रक ॥ २९ ॥

ततोऽहं प्रायमाशिष्ये न हि शक्ष्यामि जीवितुं ।
मातृहा निरयं घोरं तेनावाप्स्यसि कल्मषं ॥ ३० ॥
ब्रह्मशापमिवाकस्मात् समुद्रः सरितां पतिः ।
विलपन्तीं तथा दीनां कौशल्यां दुःखमूर्छितां ॥ ३१ ॥
उवाच रामो धर्मात्मा वचनं धर्मसंहितं ।
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ॥ ३२ ॥
प्रसादये त्वां शिरसा करिष्ये वचनं पितुः ।
न खल्वेतन्मयैकेन क्रियते पितृशासनं ॥ ३३ ॥
अरण्यवासः साधूनां विशेषेण प्रशस्यते ।
इदं च मे कथयतां ब्राह्मणानां परिश्रुतं ॥ ३४ ॥
पुरा कृतं पितृवचो यथान्यैरपि साधुभिः ।
जामदग्न्येन रामेण जनन्याः किल धीमता ॥ ३५ ॥
शिरश्छिन्नं परशुना क्रुद्धस्य पितुराज्ञया ।
कण्डुनापि च सिद्धेन वनाश्रमनिवासिना ॥ ३६ ॥
महर्षिणा गौर्विशस्ता तथैव पितुराज्ञया ।
अस्माकं पूर्वकैश्चापि खनद्भिः पितुराज्ञया ॥ ३७ ॥
भूतलं सगरापत्यैर्महान् सत्त्वबधः कृतः ।
तदेतन्न मयैकेन क्रियते पितृशासनं ॥ ३८ ॥
प्रायशो हि नृभिः सद्भिर्गतो मार्गोऽनुगम्यते ।
करिष्ये वचनं तस्मात् पितुरम्ब प्रसीद मे ॥ ३९ ॥

पितुर्हि वचनं कुर्वन् न कश्चिन्न प्रशस्यते ।
इत्येवमुक्त्वा कौशल्यां रामो लक्ष्मणमब्रवीत् ।। ४० ।।
जानामि लक्ष्मणाहं ते भक्तिभावमनुत्तमं ।
मदर्थमपि ते प्राणा अपि जानामि लक्ष्मण ।। ४१ ।।
दुःखशल्यं त्वविज्ञानात् संघट्टयसि मे पुनः ।
तदेव तावद्दुःखं मे यदसौ मत्कृते नृपः ।। ४२ ।।
दुःखेन महताविष्टः शेते मोहमुपागतः ।
कैकेय्या स्त्रीस्वभावेन पातितो धर्मसंकटे ।। ४३ ।।
अहो कृच्छ्रमहो दुःखं यत् पापं कर्तुमिच्छसि ।
धार्मिकस्य पितुः कोऽन्यो मादृशो राज्यलिप्सया ।। ४४ ।।
उत्क्रम्य शासनं जीवेत् सर्वलोकविगर्हितः ।
माभूत् स कालः सौमित्रे यदहं शासनं पितुः ।। ४५ ।।
इच्छेयं समतिक्रम्य मुहूर्तमपि जीवितुं ।
नाभिप्रायमभिज्ञाय ममैवं वक्तुमर्हसि ।। ४६ ।।
साधु लक्ष्मण संशाम्य मम चेदिच्छसि प्रियं ।
धर्मे स्थितिः परो लाभो धर्मो धारयते धृतः ।। ४७ ।।
न च धर्मो धृतो मेऽद्य पितुराराधनादृते ।
करिष्यामीति संश्रुत्य तदहं पितृशासनं ।। ४८ ।।
न कुर्यां यदि सौमित्रे सर्वथैव धिगस्तु मां ।
सोऽहं न शक्नोमि पितुर्नियोगं नानुवर्तितुं ।। ४९ ।।

पितुर्ह्यनुमतं तन्मे कैकेय्या समुदीरितं ।
तदेतामुत्सृजानार्यां क्षत्रविद्याकुलां मतिं ॥५०॥
धर्ममाश्रित्य सद्बुद्धिमनुवर्तितुमर्हसि ।
इत्युक्त्वा वचनं रामो लक्ष्मणं लक्ष्मिवर्धनं ॥५१॥
उवाच भूयः कौशल्यां प्राञ्जलिः शिरसा नतः ।
अनुजानीहि मां देवि करिष्ये शासनं पितुः ॥५२॥
शापितासि मम प्राणैः पुनरागमनेन च ।
तीर्णप्रतिज्ञः कुशली पादौ द्रक्ष्यामि ते पुनः ।
गच्छेयं त्वदनुज्ञातो निर्व्यलीकेन चेतसा ॥५३॥

यशो ह्यहं देवि न राज्यकारणात्
परित्यजेयं सुकृतेन ते शपे ।
अदीर्घकाले नरलोकजीविते
वृणोमि धर्मं न महीमधर्मतः ॥५४॥
प्रसादये त्वां शिरसा यतव्रते
प्रसीद मे कर्तुमविघ्नमर्हसि ।
वनं गमिष्यामि नृपाज्ञया ह्यहं
प्रदेह्यनुज्ञां शिरसा नतस्य मे ॥५५॥
प्रसादयन् नरवृषभः स मातरं
बह्वुक्तवान् जिगमिषुरेव दण्डकं ।
अथात्मजं भृशमिति वादिनं तदा

चकार सा हृदि जननी पुनः पुनः ॥५६॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्यानुनयो
नाम अष्टादशः सर्गः ॥

## रामायणं

### XIX.

इत्युक्त्वा मातरं रामो भूयो लक्ष्मणमब्रवीत् ।
दृष्ट्वा तथैव सामर्षं निःश्वसन्तमिवोरगं ॥ १ ॥
योऽयं मदभिषेकार्थं तव लक्ष्मण संभ्रमः ।
तमेवार्हसि कर्तुं त्वं मत्प्रस्थानाय संभ्रमं ॥ २ ॥
यस्या ममाभिषेकार्थं मनो विपरितप्यते ।
माता मे सा यथा भूयः शङ्केत न तथा कुरु ॥ ३ ॥
न बुद्धिपूर्वं नाज्ञानान्मातॄणां मातृनन्दन ।
कृतपूर्वमहं वीर स्मरामि क्वचिदप्रियं ॥ ४ ॥
तस्माच्छङ्काकृतं दुःखं मुहूर्तमपि लक्ष्मण ।
उपेक्षितुमशक्तोऽस्मि जीवितेन हि ते शपे ॥ ५ ॥
मिथ्यावचनभीरुश्च सत्यधर्मपरायणः ।
पिता मे निर्भयस्त्वस्तु मयि लक्ष्मण निर्गते ॥ ६ ॥
तस्यापि च भवेच्छङ्का कदाचिन्मयि लक्ष्मण ।
गच्छेन्न वेति सा चापि शङ्का माभून्महीपतेः ॥ ७ ॥
अभिषेकाभिलाषं च मुञ्चेमं मम लक्ष्मण ।
संप्रत्येवाहमिच्छामि वनं गन्तुमितः पुरात् ॥ ८ ॥
मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यं च कैकेय्या भविष्यति मनः सुखं ॥ ९ ॥

मयि प्रव्रजिते देवी कृतकृत्यं सुनिर्वृतं ।
आत्मानमभिजानातु पितुश्चानृण्यमस्तु मे ॥ १० ॥
एवं मे निश्चिता बुद्धिर्मनश्चापि समाहितं ।
न विलम्बितुमिच्छामि मुहूर्तमपि कर्हिचित् ॥ ११ ॥
कारणं तु कृतान्तोऽत्र द्रष्टव्यो मद्विवासने ।
यौवराज्याभिषेकस्य तथैवास्य विनिग्रहे ॥ १२ ॥
कैकेयी तु प्रकृत्यैव सदा मां प्रति वत्सला ।
सत्यं मत्परिपीडार्थं बलाद्दैवेन मोहिता ॥ १३ ॥
तदुक्तं परुषं यच्च तत् कृतान्तकृतं स्मर ।
नित्यं मातृषु मे प्रीतिरविशेषेण लक्ष्मण ॥ १४ ॥
सर्वासामविशेषेण तासामपि तथा मयि ।
अनुक्तपूर्वं कैकेय्या यदुक्तं परुषं रुषा ॥ १५ ॥
कथं प्रकृतिकल्याणी राजर्षिकुलजा सती ।
ब्रूयाद्धि प्राकृतस्त्रीव मां तथा पितृसंनिधौ ॥ १६ ॥
दैवं स्वभावसंसिद्धमचिन्त्यमिति मे मतिः ।
तन्नूनं पतितं मूर्ध्नि मम भाग्यपरिक्षयात् ॥ १७ ॥
कश्च दैवेन सौमित्रे योद्धुमुत्सहते सह ।
यस्येह निग्रहोपायो न कथञ्चन विद्यते ॥ १८ ॥
सुखदुःखभयोद्वेगलाभालाभभवाभवाः ।
नृणां भवन्ति दैवेन न भवन्ति च लक्ष्मण ॥ १९ ॥

अवश्यं भावि व्यसनं ममैतदिति पश्यतः ।
व्याहृतेऽप्यभिषेके मे परितापो न विद्यते ॥२०॥
तस्मात् त्वमपि मे बुद्धिमनुवर्तितुमर्हसि ।
प्रतिसंस्तम्भयात्मानं मा च शोके मनः कृथाः ॥२१॥

न लक्ष्मणास्मिन् मम राज्यविघ्ने
माता यवीयस्यभिशङ्कनीया ।
न चैव राजात्र विशङ्कनीयो
दैवं हि कोऽतिक्रमितुं समर्थः ॥२२॥

इत्यार्षे रामायणे अयोध्याकाण्डे लक्ष्मणानुनयो
नाम एकोनविंशः सर्गः ॥

# अयोध्याकाण्डं

## XX.

इति ब्रुवति रामे तु लक्ष्मणोऽधोमुखः स्थितः ।
दुःखामर्षपरीतात्मा दध्यौ विप्लुतलोचनः ॥ १ ॥
स बद्ध्वा भ्रूकुटीं रोषाद्भुवोर्मध्ये नरर्षभः ।
निःशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २ ॥
रुषितस्य च तस्यासीद्भ्रूकुटीकुटिलं मुखं ।
क्रुद्धस्येव मृगेन्द्रस्य दुर्धरं भूरितेजसः ॥ ३ ॥
विनिर्धूयाग्रहस्तं च प्रभिन्न इव कुञ्जरः ।
तिर्यगूर्ध्वं च संप्रेक्ष्य शिरः संकल्प्य चासकृत् ॥ ४ ॥
खड्गं परिस्पृशन् रोषाच्छत्रुमर्मविदारणं ।
संरम्भामर्षताम्राक्षस्ततो भ्रातरमब्रवीत् ॥ ५ ॥
अस्थाने संभ्रमो यस्य जातोऽयं गमनं प्रति ।
धर्मलोपभयादेव लोकवादभयेन च ॥ ६ ॥
कथं ह्यीदृशसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ।
क्लीबं वाक्यमशौटीरं शौटीरः क्षत्रियान्वयः ॥ ७ ॥
तेजः क्षात्रं समालम्ब्य संभ्रमं त्यक्तुमर्हसि ।
क्लीबा हि दैवमेवैकं प्रशंसन्ति न पौरुषं ॥ ८ ॥
प्रतीपमपि शक्नोमि व्यसनायाभ्युपागतं ।
दैवं पुरुषकारेण प्रतिरोद्धुमरिंदम ॥ ९ ॥

कैकेयीं च नरेन्द्रं च कस्माच्छङ्कौ न शङ्कसे ।
तयोर्न प्रतिकर्तव्यं कस्मात् पापानुबन्धयोः ॥ १० ॥
धर्माभ्युपायाः सन्त्यन्ये कुशलैः परिचिन्तिताः ।
तैरुपायैरर्थसिद्धौ धर्मे यतितुमर्हसि ॥ ११ ॥
यदिवार्य स्वयं कर्तुं त्वमेवं न व्यवस्यसि ।
मां नियुङ्क्ष्व करिष्येऽहं वचनं यदनन्तरं ॥ १२ ॥
लोकविद्विष्टमुत्सृज्य तस्माल्लोकप्रियं कुरु ।
यदर्थं बुद्धिमोहोऽयमीदृशस्त्वामुपागतः ॥ १३ ॥
सोऽपि धर्मो मम द्वेष्यो यत्प्रसङ्गाद्विमुह्यसे ।
लोकस्याप्रियमारब्धं कैकेय्याः केवलं प्रियं ॥ १४ ॥
एतत् कार्यं नरेन्द्रेण कामतो न तु धर्मतः ।
अभिसृज्याभिषेकं ते पुनः प्रत्यवगृह्णता ॥ १५ ॥
तत्प्रतीपे कृते ह्यत्र किल्विषं नोपपद्यते ।
क्षुद्रायाः पापभावायाः प्रद्विषन्त्या विशेषतः ॥ १६ ॥
कैकेय्या वचनं क्षुद्रं नैव त्वं कर्तुमर्हसि ।
यौवराज्याभिषेके च त्वामुपामन्त्र्य धर्मतः ॥ १७ ॥
कथं नाम स्थितो धर्मे कुर्यात् तदनृतं नृपः ।
पापा बुद्धिरियं राज्ञो दैवेनापि कृता यदि ॥ १८ ॥
तथापि मोक्षणीयोऽर्थो नैव बुद्धिमतां भवेत् ।
विक्लवो हीनवीर्यो यः स दैवमनुवर्तते ॥ १९ ॥

अविक्लवस्तु तेजस्वी न दैवमनुवर्तते ।
दैवं पुरुषकारेण यतते योऽतिवर्तितुं ॥ २० ॥
न स दैवविपन्नात्मा कदाचिदपि सीदति ।
लोकः पश्यतु कृत्स्नोऽद्य दैवपौरुषयोरिदं ॥ २१ ॥
अन्तरं कार्यसंसिद्धौ यद्युत्थातुं त्वमिच्छसि ।
अद्य मत्पौरुषहृतं दैवं पश्यन्तु मानवाः ॥ २२ ॥
तव राज्यविघाताय प्रतीपं समुपागतं ।
निरङ्कुशमिवोद्दामं गजं मदबलोत्कटं ॥ २३ ॥
प्रतीपमागतं दैवं पौरुषेण निवर्तये ।
लोकपालाः सहेन्द्रेण यौवराज्याभिषेचनं ॥ २४ ॥
प्रतिहन्तुं न शक्तास्ते किमुतैको नराधिपः ।
अहं हनिष्यामि पापाशां कैकेय्याश्च नृपस्य च ॥ २५ ॥
अभिषेकविघातेन पुत्रराज्यापवर्तने ।
यैर्विवासस्तवारण्ये मिथो राम समर्थितः ॥ २६ ॥
अहं विवासयिष्यामि तानेवाद्य बलादितः ।
प्रतीपमपि दुःखाय नेदं दैवमुपागतं ॥ २७ ॥
प्रभविष्यति राम त्वां मत्पौरुषपराहृतं ।
बहुवर्षसहस्रान्ते प्रजापालमनुत्तमं ॥ २८ ॥
आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ।
पूर्वराजर्षिवृत्तेन वनवासो विधीयते ॥ २९ ॥

पुत्रेषन्ते विनिक्षिप्य राज्यं वयसि निर्गते ।
स त्वं किमर्थं धर्मज्ञ धर्मलोपविशङ्कया ॥ ३० ॥
कैकेय्या वचनाद्धर्म्यं स्वराज्यं त्यक्तुमिच्छसि ।
प्रतिजानामि ते सत्यं मा भूवं वीरलोकभाक् ॥ ३१ ॥
यदि प्रतीपं दैवं ते न विहन्यामुपागतं ।
फलमेवास्य दैवस्य प्रतीपस्य निवर्तते ॥ ३२ ॥
तवैव तेजसेच्छामि दैवं लोकान्निवर्तितुं ।
अविषह्यतमं लोके विद्यते मे न किञ्चन ॥ ३३ ॥
त्वदर्थमुत्सहे ह्येकः परिवर्तयितुं जगत् ।
मङ्गलैरभिषिच्यस्व ततस्त्वं निर्वृतो भव ॥ ३४ ॥
अलमेको महीपाल महीं धारयितुं बलात् ।
न शोभार्थमिमौ बाहू न धनुर्भूषणाय मे ॥ ३५ ॥
नासिर्वा बन्धनार्थं मे न शराः स्तम्भहेतवः ।
अमित्रदमनार्थं मे सर्वमेतच्चतुष्टयं ॥ ३६ ॥
न चार्थमभिकाङ्क्षे यशः शत्रुबधे मम ।
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ॥ ३७ ॥
प्रगृहीतेन कः शक्तो वज्रेणापि सहाहवे ।
खड्गधाराहता मेऽद्य पतन्तु नरराशयः ॥ ३८ ॥
प्रावृट्काले समागम्य विद्युतेव समाहताः ।
खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरावहा ॥ ३९ ॥

पत्त्यश्वरथमातङ्गैर्मही भवतु सर्वशः ।
बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने ॥ ४० ॥
स्थिते मयि धनुष्पाणौ कोऽप्रियं ते करिष्यति ।
अभ्यस्तान् विविधान् काले निशितान् रुधिराशनान् ॥४१॥
विप्रमोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु ।
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति ॥ ४२ ॥
राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं च तव प्रभो ।
अद्य चन्दनसाराणां केयूरामोचनस्य च ॥ ४३ ॥
वसूनां च विमोक्षस्य सुहृदां पूजनस्य च ।
अभिरूपाविमौ बाहू राजन् कर्म करिष्यतः ॥ ४४ ॥

तद्ब्रूहि कोऽद्यैव वियुज्यतां मया
तवासुहृत् प्राणयशःसुहृज्जनैः ।
यथा तवेयं वसुधा वशे भवेत् ।
तथाद्य मां शाधि तवास्मि किंकरः ॥ ४५ ॥

इति स्म मन्युं परिगृह्य पौरुषं
स लक्ष्मणो राममभिप्रसादयन् ।
उवाच भूयोऽपि पितुर्विनिग्रहे
यतस्व रामैष ममाद्य निश्चयः ॥ ४६ ॥

इति वचनमुदारमर्थयुक्तं
तदभिसमीक्ष्य तु लक्ष्मणस्य रामः ।

मधुरतरमुवाच शान्तियुक्तं
परिकुपितं पितरं प्रति प्रतीतः ॥४७॥

इत्यार्षे रामायणे अयोध्याकाण्डे लक्ष्मणसंरम्भो
नाम विंशः सर्गः ॥

# अयोध्याकाण्डं

## XXI.

भक्त्या रामस्य संरब्धं लक्ष्मणं पितरं प्रति ।
श्लक्ष्णैः सानुनयैर्वाक्यैः शमयामास राघवः ॥ १ ॥
सौमित्रे नैतदाश्चर्यं मद्भक्त्या यत् त्वमिच्छसि ।
व्यसनार्णवसंमग्नमुद्धर्तुं मां बलादिव ॥ २ ॥
पुण्यशीलस्तु धर्मात्मा सत्यव्रतपरायणः ।
पार्थिवो नानृतीकर्तुं न्याय्यो लोकगुरुर्मया ॥ ३ ॥
सत्यप्रतिज्ञं कृत्वा तु पितरं धर्मवत्सलं ।
पुण्यां कीर्तिमवाप्स्यामि प्रेत्य चेह च शाश्वतीं ॥ ४ ॥
यदि त्वस्ति मयि स्नेहो भक्तिर्वा तव लक्ष्मण ।
ततो निवर्तयैतां त्वं पापबुद्धिं समुत्थितां ॥ ५ ॥
धर्मात्मनः श्रुतवतः कृतज्ञस्य महात्मनः ।
पितुरस्याप्रियं कर्तुं नेच्छामि मनसाप्यहं ॥ ६ ॥
यदीच्छसि प्रियं कर्तुं मम नित्यमभीप्सितं ।
ततो मयि गते भक्त्या शुश्रूष्यो नृपतिस्त्वया ॥ ७ ॥
निर्व्यलीकेन मनसा प्रत्यक्षं दैवतं यथा ।
एवमेव परं कामं शक्तितः कर्तुमर्हसि ॥ ८ ॥
यथा मां प्रति नोत्कण्ठां करोति वसुधाधिपः ।
तथा शुश्रूषितव्योऽसौ त्वया मयि विनिर्गते ॥ ९ ॥

यथा तथा न तप्येयुर्वनवासं गते मयि ।
मातरश्चाविशेषेण शुश्रूष्याः सर्वशस्त्वया ॥ १० ॥
भरतश्चापि धर्मात्मा द्रष्टव्योऽहमिव त्वया ।
परिपाल्यश्च यत्नेन मम प्रियचिकीर्षुणा ॥ ११ ॥
इमां धर्मधुरं गुर्वीमहं वक्ष्यामि लक्ष्मण ।
भरतेन सहेमां त्वं गुर्वीं राज्यधुरं वह ॥ १२ ॥
इत्युक्तवचनं रामं बभाषे लक्ष्मणस्तदा ।
अप्रकम्प्यं स्थितं धर्मे पुरंदरमिवानुजः ॥ १३ ॥
लोकनाथ गतिर्या ते सा ममापि भविष्यति ।
वने वत्स्याम्यहमपि शुश्रूषानिरतस्तव ॥ १४ ॥
त्वया त्यक्तामहमपि परित्यक्ष्ये पुरीमिमां ।
त्वदृते न हि वस्तुं मे स्वर्गेऽपि रमते मनः ॥ १५ ॥
यद्यस्ति मयि ते स्नेहो भक्तोऽयं वीर मामिति ।
ततो मामनुगच्छन्तं न निषेद्धुमिहार्हसि ॥ १६ ॥
वने निवसतस्तेऽहं नानावनविचारिणः ।
आहरिष्यामि पुष्पाणि स्वादून्यपि फलान्यहं ॥ १७ ॥
सहायस्ते भविष्यामि दुर्गेषु विषमेषु च ।
आज्ञाकरस्ते भृत्योऽहं भविष्यामि महावने ॥ १८ ॥
सर्वभावानुरक्तं मां न परित्यक्तुमर्हसि ।
पश्य मामार्यपुत्र त्वं पूज्यश्चासि गुरुश्च मे ॥ १९ ॥

पानीयमाहरिष्यामि पुष्पमूलफलानि च ।
साधयिष्यामि चाहारं वनेषु वसतः प्रभो ॥ २० ॥
अनुज्ञानीहि मामार्य निश्चितं धर्मवत्सल ।
अनुगन्तुं कृतमतिं कृतज्ञं शरणागतं ॥ २१ ॥
न निवर्तयितव्योऽहं सर्वथा रघुनन्दन ।
न हि राम त्वया त्यक्तो जीवेयमिति मे मतिः ॥ २२ ॥
न निवर्तयितुं शक्या बुद्धिरेषा मम स्थिरा ।
स भवाननुज्ञानातु ममानुगमनं वने ॥ २३ ॥
सोऽनुनीतो बहुविधं लक्ष्मणेन यशस्विना ।
बाढमित्यब्रवीद्रामो लक्ष्मणं भ्रातृवत्सलं ॥ २४ ॥
सह यास्यामि सौमित्रे त्वयाहं गहनं वनं ।
भवान् हि परमो बन्धुः सखा भक्तः प्रियश्च मे ॥ २५ ॥

तथा तु रामं गमने धृतव्रतं
समीक्ष्य देवी रुदती भृशातुरा ।
उवाच भूयो हृदयेन तप्यता
सुखोचिता दुःखपरिप्लुता भृशं ॥ २६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे लक्ष्मणानुनयो
नाम एकविंशः सर्गः ॥

# रामायणं

## XXII.

यदि धर्मं पुरस्कृत्य पुत्र वर्तितुमिच्छसि ।
ततो मे वचनं धर्म्यं शृणु धर्मभृतां वर ॥ १ ॥
त्वं हि लब्धो मया कृच्छ्रैस्तपोभिर्नियमैस्तथा ।
वचनं मे त्वया कार्यमतः पुत्र विशेषतः ॥ २ ॥
आशया परया राम शिशुस्त्वं परिपालितः ।
तत् समर्थोऽद्य मां दीनां परिरक्षितुमर्हसि ॥ ३ ॥
पश्य मामद्य पुत्र त्वं जीवितेन वियोजितां ।
न सकामां सपत्नीं मे कैकेयीं कर्तुमर्हसि ॥ ४ ॥
न चापि राम शक्ताहं विप्रकारान् पृथग्विधान् ।
सोढुं सकाशात् कैकेय्याः परिभूता विशेषतः ॥ ५ ॥
नित्यकालं सपत्नीभिर्भृशं विप्रकृता सती ।
पुत्रच्छायां समाश्रित्य भवामि सुस्थमानसा ॥ ६ ॥
साहमद्य न शक्नोमि जीवितुं शर्वरीमिमां ।
फलिना पादपेनेव फलकाले वियोजिता ॥ ७ ॥
मा पुत्रक वचः कार्षीः स्त्रीविधेयस्य भूपतेः ।
कामकारप्रवृत्तस्य दुष्कृतेरशुचेरिव ॥ ८ ॥
योऽतीत्य धर्मं पौराणमिक्ष्वाकूणां कुलोचितं ।
त्वामतिक्रम्य भरतमभिषेक्तुमिहेच्छति ॥ ९ ॥

अपि चेयं पुरा गीता गाथा सर्वत्र विश्रुता ।
मनुना मानवेन्द्रेण तां श्रुत्वा मे वचः कुरु ॥ १० ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
कामकारप्रवृत्तस्य न कार्यं ब्रुवतो वचः ॥ ११ ॥
दश विप्रानुपाध्यायो गौरवेणातिरिच्यते ।
उपाध्यायान् दश पिता तथैव व्यतिरिच्यते ॥ १२ ॥
पितॄन् दश च मातैका सर्वां वा पृथिवीं विभो ।
गुरुत्वेनाभिभवति कोऽस्ति मातृसमो गुरुः ॥ १३ ॥
पतिता गुरवस्त्याज्या माता तु न कथञ्चन ।
गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥ १४ ॥
सार्द्धं ते पितृतो राम धर्मतो गौरवाधिका ।
माननीया विशेषेण यथा धर्मविदो विदुः ॥ १५ ॥
अतो ममापि ते कार्यं शासनं गुरुवत्सल ।
अभिषिच्यस्व धर्मेण राज्ये राजीवलोचन ॥ १६ ॥

यदि त्वमेतन्मम भाषितं हितं
कुलोचितं सत्पुरुषैरनुष्ठितं ।
यथावदुक्तं न करिष्यसे ततस्
चिराय यास्यामि यमक्षयं मृता ॥ १७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्यावाक्यं
नाम द्वाविंशः सर्गः ॥

# रामायणं

## XXIII.

अथानुनेतुं चक्रेऽसौ मातरं यत्नमास्थितः ।
प्रश्रितैर्मधुरैर्वाक्यैर्हेतुमद्भिश्च राघवः ॥ १ ॥
मम चैव भवत्याश्च राजा प्रभवति प्रभुः ।
न प्रभुत्वमतस्तेऽस्ति मम देवि निवर्तने ॥ २ ॥
दातुमर्हसि मेऽनुज्ञां देवि धर्मभृतां वरे ।
वनवासाय वर्षाणि नव पञ्च च सुव्रते ॥ ३ ॥
भर्ता हि दैवतं स्त्रीणां भर्ता चेश्वर उच्यते ।
अतस्ते शासनं भर्तुर्न व्याहन्तव्यमेव हि ॥ ४ ॥
पुनरागमनं मे त्वमभ्याशंसितुमर्हसि ।
यतव्रता नित्यमेव भर्तुराराधने स्थिता ॥ ५ ॥
तीर्णप्रतिज्ञ एष्यामि त्वत्प्रसादादहं पुनः ।
अरिष्टः कुशली चेह तस्मात् संशाम्य मा शुचः ॥ ६ ॥
कुले जातासि विस्तीर्णे राज्ञाममिततेजसां ।
सद्गुणाख्यातयशसां कोशलानां महात्मनां ॥ ७ ॥
कुलशीलगुणाचारधर्मज्ञासि यतव्रते ।
सा कथं शासनं भर्तुरतिवर्तितुमर्हसि ॥ ८ ॥
दैवतं ते गुरुश्चैव भर्ता देवि प्रसीद मे ।
मत्स्नेहान्नार्हसे तस्य मतमुत्क्रम्य वर्तितुं ॥ ९ ॥

निर्विचारं गुरोराज्ञा मया कार्या महात्मनः ।
श्रेयो ह्येवं भवत्याश्च मम चैव विशेषतः ॥१०॥
कार्कश्याद्बालभावाद्वा न कुर्यां चेत् पितुर्वचः ।
ततोऽहं प्रतिषिद्धः स्यां भवत्या विनयेप्सया ॥११॥
किं पुनर्यस्य मे देवि स्वभावनियता मतिः ।
भूयोऽपि वर्धनीयैव भवत्या विनयज्ञया ॥१२॥
न ते राज्ञा किञ्चिदपि वक्तव्यो मदपेक्षया ।
प्रतीपमप्रियं वापि न च कार्यं प्रसीद मे ॥१३॥
कैकेयी वा महाभागा भरतो वा महायशाः ।
अल्पमप्यप्रियं वाक्यं न वक्तव्यौ प्रसीद मे ॥१४॥
यथाहमेव द्रष्टव्यो भरतः सर्वथा त्वया ।
कैकेयी भगिनीवच्च द्रष्टव्या स्नेहतस्त्वया ॥१५॥
विरुध्यन्ते न बलिभिर्बुद्धिमन्तः कथञ्चन ।
बलहीनैरपि तथा विरुध्यन्ते न संहतैः ॥१६॥
तत्कथं सह पित्राहं विरुध्येयं महात्मना ।
भ्रात्रा वा भरतेनापि भक्तेनानपकारिणा ॥१७॥
धर्मात्मना विनीतेन प्राणेभ्योऽपि प्रियेण च ।
कथं नाम विरुध्येयं सह तेन महात्मना ॥१८॥
पित्रा दत्तं यौवराज्यं भरतो यच्चवाप्स्यति ।
तत्र दोषोऽस्ति कस्तस्य भरतस्य महात्मनः ॥१९॥

अभिसृष्टं पुरा राज्ञो कैकेयी भर्तृतो वरं ।
यदि गृह्णाति कस्तस्या दोषस्तत्र ब्रवीहि मे ॥२०॥
राज्ञा च प्राक् प्रतिश्रुत्य ददात्यस्यै यदा वरं ।
भीतोऽनृतात् तत्र दोषः को राज्ञः सत्यवादिनः ॥२१॥
व्यक्तमेतत् परं धर्मं भर्ता ते देवि मन्यते ।
चलेद्धि धर्माद्राजेति न स कालो भविष्यति ॥२२॥
श्रुतधर्मार्थतत्त्वो हि साधुः सद्वृत्तमाश्रितः ।
सत्यज्ञः सत्यवाग्राजा न हि धर्माच्चलिष्यति ॥२३॥
सा त्वं सद्वृत्तकुशला छिन्नधर्मार्थसंशया ।
न धर्मज्ञं नरपतिं दोषतो गन्तुमर्हसि ॥२४॥
प्रसीदानुनयामि त्वां नानुशास्मि कथञ्चन ।
अनुजानीहि मां मातर्वनवासाय दीक्षितं ॥२५॥

एवं स रामो गतबुद्धिभावो
वनं प्रवेष्टुं सह लक्ष्मणेन ।
भूयो वचः सानुनयं बभाषे
तां मातरं धर्मभृतां वरिष्ठः ॥२६॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्यानुनयो नाम
त्रयोविंशः सर्गः ॥

## XXIV.

इत्युक्त्वा जननीं रामो धर्मात्मानुनयं वचः ।
स्थितां ध्यानपरां दीनां पुनर्वचनमब्रवीत् ॥ १ ॥
त्वया देवि मया चैव स्थेयं नृपतिशासने ।
राजा भर्ता गुरुश्चैव सर्वेषामीश्वरश्च नः ॥ २ ॥
इमानि तु विहृत्याहं वर्षाणि नव पञ्च च ।
वने पुनरुपावृत्तः स्थास्यामि तव शासने ॥ ३ ॥
इत्युक्ता सा प्रियं पुत्रं बाष्पपर्याकुलं वचः ।
उवाचेदं सपत्नीनां वस्तुं मध्ये न मे क्षमं ॥ ४ ॥
नय मामपि पुत्र त्वं वनं वन्यमृगाकुलं ।
यदि ते गमने बुद्धिः कृता पितुरपेक्षया ॥ ५ ॥
तां तथा ब्रुवतीं रामः पुनर्वचनमब्रवीत् ।
जीवत्पत्याः स्त्रिया भर्ता दैवतं न पुनः सुतः ॥ ६ ॥
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ।
अतो नार्हाम्यहं नेतुं त्वामितो नगराद्वनं ॥ ७ ॥
न चानुगन्तुं न्याय्योऽहं जीवत्पत्या त्वयापि च ।
महात्मा वा दुरात्मा वा पतिरेव गतिः स्त्रियाः ॥ ८ ॥
किं पुनर्नृपतिर्देवि महात्मा दयितश्च ते ।
भरतश्चापि धर्मात्मा विनीतो गुरुवत्सलः ॥ ९ ॥

असंशयं यथैवाहं पुत्रस्ते धर्मतस्तथा ।
मत्तोऽधिकतरां पूजां भरतादप्यवाप्स्यसि ॥ १० ॥
न हि किञ्चिदकल्याणं तस्मादामर्षयाम्यहं ।
यथा तु मयि निष्क्रान्ते पुत्रशोकेन मे पिता ॥ ११ ॥
अतिमात्रं न संतप्येत् तथा त्वं कर्तुमर्हसि ।
कार्यः प्रत्यग्रवयसि न तथा मय्यपह्नवः ॥ १२ ॥
पत्यौ वृद्धे तथा कार्यस्त्वया मच्छोककर्षिते ।
या धर्मचारिणी नारी पतिं पतिपरायणा ॥ १३ ॥
नानुवर्तेत यत्नेन न सा सद्भिः प्रशस्यते ।
भर्तृव्रता भर्तृपरा नारी भर्तृवशा सती ॥ १४ ॥
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गे महीयते ।
तस्मात् सदैव भर्तुस्त्वं शुश्रूषानिरता गृहे ॥ १५ ॥
स्थातुमर्हसि धर्मो हि सत्स्त्रीणामेष शाश्वतः ।
गार्हस्थ्यधर्मरतया देवाराधनशीलया ॥ १६ ॥
भर्तृचित्तानुवर्तिन्या भर्ता सेव्य इह त्वया ।
ब्राह्मणान् वेदविदुषः पूजयन्ती यतव्रते ॥ १७ ॥
वसेह भर्तृसहिता ममागमनकाङ्क्षिणी ।
द्रक्ष्यसे भर्तृसहिता ममाभ्यागमनं पुनः ॥ १८ ॥
यदि राजा मद्विहीनो धारयिष्यति जीवितं ।
इति सानुनयं वाक्यं श्रुत्वा धर्मार्थसंहितं ॥ १९ ॥

रामेणोक्तं बभाषेऽथ कौशल्या साश्रुलोचना ।
पुत्र गच्छ शिवं तेऽस्तु कुरु त्वं पितृशासनं ॥ २० ॥
स्वस्तिमन्तमरिष्टं त्वां द्रक्ष्यामि पुनरागतं ।
शुश्रूषानिरता भर्तुर्भविष्यामि यथात्थ मां ।
यच्चान्यदपि कर्तव्यं करिष्ये तत् सुखी व्रज ॥ २१ ॥
तथा तु रामं वनवासनिश्चितं
समीक्ष्य देवी गतसत्त्वचेतना ।
बभूव भूयः सहसैव दुःखिता
सगद्गदा वाष्पकलं प्रलापिनी ॥ २२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामवनगमनाभ्यनुज्ञा
नाम चतुर्विंशः सर्गः ॥

## XXV.

समाश्वस्य ततो भूयः कौशल्या राममब्रवीत् ।
व्यक्ताक्षरमिदं वाक्यं दीना साम्राविलेक्षणा ॥ १ ॥
अदृष्टदुःख धर्मात्मन् लोकप्रिय हिते रत ।
मयि दशरथाज्जातः कथं दुःखमवाप्स्यसि ॥ २ ॥
यस्य प्रेष्याश्च दास्यश्च स्वादून्यन्नानि भुञ्जते ।
तस्य पुत्रः प्रियो वन्यं भोक्ष्यते मुनिभोजनं ॥ ३ ॥
कः श्रद्दध्यादिदं श्रुत्वा कस्य वा न भयं भवेत् ।
राज्ञा निर्वासितः पुत्रः प्रियोऽतिगुणवानिति ॥ ४ ॥
अयं धक्ष्यति मां पुत्र लोकवादहुताशनः ।
वियोगार्तिसमुद्भूतस्त्वद्वियोगानिलेरितः ॥ ५ ॥
चिन्तावाष्पमहाधूमस्त्वद्गुणौघमहेन्धनः ।
मां प्रधक्ष्यत्ययं नूनं निःश्वासायासपावकः ॥ ६ ॥
त्वया विहीनामवशां शोकाग्निरनिशं ज्वलन् ।
शुष्कं कक्षमिवासाद्य चित्रभानुर्हिमात्यये ॥ ७ ॥
वत्सलत्वाद्यथा धेनुः स्वपुत्रमनुधावति ।
तथा त्वामनुयास्यामि वात्सल्यादिति मे मतिः ॥ ८ ॥
इति मातुर्निगदितं वाक्यं सकरुणाक्षरं ।
श्रुत्वा रामोऽब्रवीद्वाक्यं कौशल्यां शोकविह्वलां ॥ ९ ॥

कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते ।
भवत्या च परित्यक्तो न मन्ये वर्तयिष्यति ॥ १० ॥
भर्तुश्चैव परित्यागः शस्यते न कथञ्चन ।
स भवत्या न कर्तव्यो मनसापि विगर्हितः ॥ ११ ॥
यावज्जीवति ते भर्ता लोकेऽस्मिन् प्रभुरीश्वरः ।
त्वयापि देववत् तावच्छुश्रूष्योऽनन्यभक्तया ॥ १२ ॥
नाहं त्वयानुगन्तव्यो भर्ता हि तव दैवतं ।
तमिहैव वसन्ती त्वमाराधयितुमर्हसि ॥ १३ ॥
राजा हि ते प्रभवति प्राणानां जीवितस्य च ।
अनुगन्तुमतो देवि न मामर्हसि सर्वथा ॥ १४ ॥
इत्येवमुक्ता रामेण कौशल्या धर्मदर्शिनी ।
तथेत्युवाच दुःखार्ता रामं संप्रस्थितं वनं ॥ १५ ॥
निश्चितं च तथा रामं विज्ञाय गमनोत्सुकं ।
प्रास्थानिकं स्वस्त्ययनं कर्तुं समुपचक्रमे ॥ १६ ॥
सा निगृह्य ततो वाष्पमुपस्पृश्य जलं शुचि ।
चकार देवी रामस्य ततः स्वस्त्ययनक्रियां ॥ १७ ॥
सुमनोभिश्च गन्धैश्च मनोज्ञैर्बलिभिस्तथा ।
देवानभ्यर्च्य विधिवत् प्रणम्य च शुभव्रता ॥ १८ ॥
गन्धमाल्यहविःशेषं रामाय प्रतिपाद्य च ।
मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च पीडितं ॥ १९ ॥

रक्षोघ्नीमोषधीं पाणौ दक्षिणेऽस्य बबन्ध सा ।
रामस्वस्त्ययनार्थं हि मन्त्रमेतं जजाप च ॥ २० ॥
स्वस्ति कुर्वन्तु ते साध्या मरुतश्च महर्षिभिः ।
स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥ २१ ॥
वरुणः स्वस्ति राजा च करोतु वसुभिः सह ।
स्वस्ति मित्रः सहादित्यैः स्वस्ति रुद्रा दिशन्तु ते ॥ २२ ॥
दिशश्च विदिशश्चैव मासाः संवत्सराः क्षपाः ।
दिनानि च मुहूर्ताश्च स्वस्ति पुत्र दिशन्तु ते ॥ २३ ॥
यन्मङ्गलं महेन्द्रस्य सर्वदेवैः पुरा कृतं ।
वृत्रं हन्तु प्रयातस्य वत्स तत् तेऽस्तु मङ्गलं ॥ २४ ॥
यन्मङ्गलं सुपर्णस्य विनताकल्पयत् पुरा ।
अमृतार्थे प्रयातस्य तत् ते भवतु मङ्गलं ॥ २५ ॥
वेदाः साङ्गास्तथा विद्या मन्त्राश्चाथर्वणाश्च ये ।
धृतिः स्मृतिश्च मेधा च पान्तु त्वां पुत्र सर्वशः ॥ २६ ॥
सिद्धा देवर्षयः सर्वे तथा ब्रह्मर्षयोऽमलाः ।
नागाः सुपर्णाः पितरो रक्षन्तु त्वां समन्ततः ॥ २७ ॥
स्कन्दश्च सुरसेनानीस्तथैव च महेश्वरः ।
सप्तर्षयो नारदश्च सोमः शुक्रो वृहस्पतिः ॥ २८ ॥
नक्षत्राणि ग्रहाश्चान्ये तथा नक्षत्रदेवताः ।
ज्योतींषि चैव दिव्यानि पान्तु त्वां पुत्र सर्वशः ॥ २९ ॥

महावने विचरतो मुनिवेशधरस्य ते ।
उग्ररूपविषा नागाः सौम्यरूपा भवन्तु ते ॥ ३० ॥
राक्षसाश्च पिशाचाश्च यक्षाश्च पिशिताशनाः ।
शिवा भवन्तु ते पुत्र व्याडाश्चारण्यवासिनः ॥ ३१ ॥
पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैः सह ।
सरीसृपाश्चोग्रविषाः शिवाय विचरन्तु ते ॥ ३२ ॥
महागजा वराहाश्च खड्गिसिंहास्तथैव च ।
ऋक्षाश्च महिषाश्चैव शिवास्ते सन्तु पुत्रक ॥ ३३ ॥
ये चामिषाशिनो रौद्रा नानारूपा मृगद्विजाः ।
मयाभियाचितास्त्वे ते शिवाः सन्तु वने चराः ॥ ३४ ॥
स्वस्ति तेऽस्त्वान्तरीक्षेभ्यः पार्थिवेभ्यश्च सर्वशः ।
दिव्येभ्यश्चैव सत्वेभ्यो जलचारिभ्य एव च ॥ ३५ ॥
सर्वलोकप्रभुर्ब्रह्मा वृषभाङ्कस्तथैव च ।
त्रैलोक्यनाथश्च वने रक्षतु त्वां जनार्दनः ॥ ३६ ॥
आगमास्ते शिवाः सन्तु सिध्यन्तु च मनोरथाः ।
सुखेन यातु कालस्ते स्वस्ति प्राप्नुहि राघव ॥ ३७ ॥
संसिद्धार्थमरोगं त्वामयोध्यां पुनरागतं ।
द्रक्ष्यामि च कदा पुत्र तुष्टं राजश्रिया पुनः ॥ ३८ ॥
इत्युक्त्वा मूर्ध्न्युपाघ्राय परिष्वज्याभिनन्द्य च ।
पुनरागमनायेह गच्छ पुत्रेत्युवाच तं ॥ ३९ ॥

शीघ्रं त्वां पुनरायातं पश्येयं सहलक्ष्मणं ।
वनवाससमुत्तीर्णं पूर्णचन्द्रमिवोदितं ॥ ४० ॥

मयार्चिता देवगणाः शिवादयो
महर्षयश्चैव पितामहैः सह ।
इतः प्रयातस्य वनं चिराय ते
हितैषिणः सन्तु मयाभियाचिताः ॥ ४१ ॥

अथैवमश्रुपरिपूर्णलोचना
समाप्य सा स्वस्त्ययनं कृताञ्जलिः ।
प्रदक्षिणं चैव चकार राघवं
पुनः पुनश्चैव निपीड्य सस्वजे ॥ ४२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे स्वस्त्ययनक्रिया
नाम पञ्चविंशः सर्गः ॥

# अयोध्याकाण्डं

## XXVI.

कौशल्यामभिवाद्यैवमनुमान्य च राघवः ।
कृतस्वस्त्ययनो मात्रा प्रतस्थे सहलक्ष्मणः ॥ १ ॥
विराजयन् राजसुतो राजमार्गं जनैर्वृतं ।
हरन्निव जनौघस्य हृदयानि जगाम सः ॥ २ ॥
वैदेह्यपि च तत्काले तत्परानन्यमानसा ।
आशंसन्त्येव सा भर्तुर्यौवराज्याभिषेचनं ॥ ३ ॥
देवान् पितॄंश्च शरणं गत्वा नियतमानसा ।
अभिज्ञा राजधर्माणां राजपुत्री यतव्रता ॥ ४ ॥
पुर्द्वारासक्तनयना भर्तृदर्शनलालसा ।
तस्थौ स्ववेश्ममध्ये सा रामागमनकाङ्क्षिणी ॥ ५ ॥
प्रविवेशाथ सहसा रामो वेश्मात्मनस्तदा ।
भक्तिमद्भिर्जनैः कीर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ६ ॥
ईषद्दीनमुखः क्षामो मनोदुःखसमन्वितः ।
नातिहृष्टमनाः सीतां ददर्शाथ प्रविश्य सः ॥ ७ ॥
तत्परां वेश्ममध्यस्थां विनयावनतां स्थितां ।
विनयाचारसंपन्नां प्राणेभ्योऽपि प्रियां प्रियां ॥ ८ ॥
सा तु दृष्ट्वैव भर्तारं प्रत्युद्गम्य प्रणम्य च ।
रामपार्श्वे स्थिता देवी रामं दीनमुखं तदा ॥ ९ ॥

अभिवीक्ष्य वरारोहा वेपमानेदमब्रवीत् ।
दृष्टान्तर्गतदुःखार्तं किमेतदिति विह्वला ॥ १० ॥
किन्नु बार्हस्पतो योगो युक्तः पुष्येण राघव ।
प्रोच्यते ब्राह्मणैस्तज्ज्ञैर्येन त्वमसि दुर्मनाः ॥ ११ ॥
कस्माच्छतशलाकेन पूर्णेन्दुप्रतिमेन ते ।
आवृतं वदनं चारु छत्रेण न विराजते ॥ १२ ॥
चामरव्यजनाभ्यां च चारुपद्मदलेक्षण ।
न वीज्यते तेऽद्य मुखं कस्मात् पूर्णेन्दुसप्रभं ॥ १३ ॥
यौवराज्याभिषिक्तं च सूतमागधवन्दिनः ।
वाग्मिनो न स्तुवन्ति त्वामद्य राघव शंस मे ॥ १४ ॥
न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः ।
मूर्ध्नि मूर्ध्न्यभिषेकार्थं ददते विधिवच्च किं ॥ १५ ॥
कस्मात् प्रकृतिमुख्यास्ते श्रेणिमुख्याश्च राघव ।
किङ्करा नाद्य तिष्ठन्ति यौवराज्याभिषेचने ॥ १६ ॥
अष्टाश्ववरयुक्तस्ते मणिकाञ्चनभूषणः ।
नाद्य पुष्यरथः क्लृप्तः कस्माद्रिपुनिसूदन ॥ १७ ॥
त्रिप्रश्रुतो गजवृषः शुभलक्षणलक्षितः ।
पृष्ठतो नानुयाति त्वां कस्मादद्याभिषेचने ॥ १८ ॥
शुभलक्षणसंपन्नः श्वेतश्च तुरगोत्तमः ।
न तेऽद्य याति पुरतः कस्माच्छ्रीविजयावहः ॥ १९ ॥

एवं ब्रुवाणां तां रामो ज्ञातशङ्कां स मैथिलीं ।
उवाचेदं वचो धीरं सत्त्वगाम्भीर्यमाश्रितः ॥ २० ॥
राजर्षिकुलसंभूते धर्मज्ञे सत्यवादिनि ।
शृणु मैथिलि धीरा त्वं भूत्वा वाक्यमिदं मम ॥ २१ ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै ।
कैकेय्यै प्रीतमनसा दत्तौ किल पुरा वरौ ॥ २२ ॥
ममोपकल्पिते चाद्य यौवराज्येऽभिषेचने ।
प्रचोदितेन सहसा धर्मज्ञेनापवर्जितौ ॥ २३ ॥
मया वर्षाणि वस्तव्यं चतुर्दश वने प्रिये ।
भरतेनाप्ययोध्यायां राज्ञा भाव्यमनिन्दिते ॥ २४ ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनं ।
आपृच्छे धैर्यमालम्ब्य मामनुज्ञातुमर्हसि ॥ २५ ॥
श्वश्रूं च श्वशुरं चैव वस त्वं समुपाश्रिता ।
शुश्रूषापरमा भूत्वा यावदागमनं मम ॥ २६ ॥
मद्व्यपाश्रयजं मानमाश्रित्य वरवर्णिनि ।
भरतस्य समीपेऽहं न ते स्तुत्यः कदाचन ॥ २७ ॥
ऐश्वर्यमदमत्ता हि न सहन्ते परस्तवं ।
तस्मात् त्वया गुणाः स्तुत्या भरतस्याग्रतो न मे ॥ २८ ॥
अहं हि पितरं सत्यं चिकीर्षुस्तन्नियोगतः ।
वनमद्यैव यास्यामि कुरु त्वं हृदयं स्थिरं ॥ २९ ॥

मयि याते तु कल्याणि वनं मुनिजनप्रियं ।
व्रतोपवासरतया भवितव्यं त्वया प्रिये ॥ ३० ॥
कल्यमुत्थाय देवानां कृत्वा पूजाभिवादनं ।
वन्दितव्यो दशरथः पिता मे दैवतं यथा ॥ ३१ ॥
मातरश्चैव मे सर्वा यथाक्रममशेषतः ।
त्वयार्चनीयाः सततं समा हि मम मातरः ॥ ३२ ॥
भ्रातरौ चापि मे सीते प्राणेभ्योऽपि प्रियावुभौ ।
त्वया भरतशत्रुघ्नौ द्रष्टव्यौ भ्रातृपुत्रवत् ॥ ३३ ॥
न वक्तव्योऽप्रियं सीते मत्प्रीत्या भरतस्त्वया ।
स हि राजा गुरुश्चैव देशस्यास्य प्रियश्च मे ॥ ३४ ॥
आराधिता हि राजानो देववच्चोपसेविताः ।
अनुग्रहैर्योजयन्ति भक्तान् घ्नन्ति विपर्यये ॥ ३५ ॥
औरसानपि पुत्रांश्च विहिंसन्त्यपकारिणः ।
अनुगृह्णन्ति च प्रीताः परानप्युपकारिणः ॥ ३६ ॥
त्वं च तेनेह भर्तव्या वनं विप्रोषिते मयि ।
तस्मात् साम्नैव लिप्सेथाश्चेलपिण्डभृतिं ततः ॥ ३७ ॥
मम माता च कौशल्या वृद्धा मच्छोककर्षिता ।
मत्प्रियार्थं प्रिये सीते शुश्रूष्यानन्यचित्तया ॥ ३८ ॥
अहं गमिष्यामि महावनं प्रिये
त्वयापि वस्तव्यमिहाज्ञया मम ।

यथा व्यलीकं न करोषि कस्यचित्
तथा त्वया कार्यमितो गते मयि ॥ ३१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सीतोपमन्त्रणं नाम
षड्विंशः सर्गः ॥

## XXVII.

इत्यप्रियमिदं वाक्यं श्रुत्वा सा प्रियभाषिणी ।
सासूयमिव भर्तारं सीता वचनमब्रवीत् ॥ १ ॥
आर्यपुत्र पिता माता भ्रातरो बान्धवाः सुताः ।
प्रेत्य चैवेह चाश्नन्ति स्वं स्वं कर्मफलं पृथक् ॥ २ ॥
न पितुः कर्मणा पुत्रः पिता वा पुत्रकर्मणा ।
सुखमाप्नोति दुःखं वा स्वं तु कर्माभिजायते ॥ ३ ॥
भार्यैका पतिभाग्यानि भुङ्क्ते पतिपरायणा ।
साहं त्वामनुयास्यामि यत्र यत्र गमिष्यसि ॥ ४ ॥
शपेऽहं ते प्रसादेन जीवितेन च राघव ।
यथा नेच्छाम्यहं वस्तुं स्वर्गेऽपि रहिता त्वया ॥ ५ ॥
त्वं मे नाथो गुरुश्चैव गतिर्दैवतमेव च ।
गमिष्यामि त्वया सार्धमेष मे निश्चयः परः ॥ ६ ॥
यदि त्वमुद्यतो गन्तुं दुर्गं कण्टकितं वनं ।
अहं तवाग्रे यास्यामि मृद्गन्ती कुशकण्टकं ॥ ७ ॥
न पिता नात्मजो नात्मा न माता न सुहृज्जनः ।
गतिर्भवति सत्स्त्रीणां पतिस्त्वेकः परा गतिः ॥ ८ ॥

ईर्षादोषं समुत्सृज्य पीतशेषमिवोदकं ।
नय मां वीर विश्रब्धं पापं न मयि विद्यते ॥ ९ ॥
हर्म्यप्रासादभवनविमानेभ्योऽपि मे प्रभो ।
तव पादाश्रयः श्रेयान् स्वर्गादपि सुदुर्लभः ॥ १० ॥
कुरु प्रसादं गच्छेयं त्वयाहं सहिता वनं ।
सिंहकुञ्जरशार्दूलवराहर्क्षनिषेवितं ॥ ११ ॥
सुखं वनेऽपि वत्स्यामि तव पादव्यपाश्रयात् ।
विहरन्ती त्वया सार्धं यथेन्द्रभवने तथा ॥ १२ ॥
शुश्रूषमाणा वत्स्यामि पादौ ते नियतव्रता ।
रममाणा त्वया सार्धं काननेषु सुगन्धिषु ॥ १३ ॥
शतक्रतुसमः शौर्ये विष्णोस्तुल्यपराक्रमः ।
त्वं हि लोकत्रयस्यास्य समर्थः प्रतिपालने ॥ १४ ॥
न ममाभिभवे शक्तो महेन्द्रोऽपि त्वदाश्रयात् ।
अतो नार्हसि मां भक्तां निवर्तयितुमातुरां ॥ १५ ॥
त्वया सह भविष्यामि फलमूलकृताशना ।
दुर्भरा न भविष्यामि वने तेऽहं कथञ्चन ॥ १६ ॥
इच्छामि सरितः शैलान् सरांसि च वनानि च ।
द्रष्टुं वल्कलसंवीता त्वया नाथेन रक्षिता ॥ १७ ॥
हंसकारण्डवाकीर्णाः पद्मिनीर्विमलोदकाः ।
अवगाह्याभिरंस्येऽहं त्वयैव सह राघव ॥ १८ ॥

वनोद्देशेषु रम्येषु नानाकुसुमगन्धिषु ।
वस्तुमिच्छामि मुदिता त्वयाहं सह कानने ॥ १९ ॥
सहस्राण्यपि वर्षाणां बहूनि सहिता त्वया ।
समतीतानि मन्येऽहं यथैकं दिवसं तथा ॥ २० ॥
स्वर्गेऽपि वासं रहिता त्वया वीर न कामये ।
नरकं वापि मे स्वर्गो विशिष्टः स्यात् त्वया सह ॥ २१ ॥
पित्रा चाप्यनुशिष्टास्मि मात्रा बन्धुजनेन च ।
विना भर्त्रा न वस्तव्यं त्वयेति रघुनन्दन ॥ २२ ॥
अतः प्रणम्य याचे त्वां गमने कृतनिश्चया ।
न मामर्हसि संदेष्टुमिति कर्तव्यतां प्रति ॥ २३ ॥

वनं गमिष्यामि सह त्वया सार्हं
न मां नृवीर प्रतिषेद्धुमर्हसि ।
वने निवत्स्यामि यथा पितुर्गृहे
तथैव पद्मामभिरक्षिता तव ॥ २४ ॥
अनन्यभावामनुरक्तचेतसं
त्वया विमुक्तां मरणाय निश्चितां ।
नयस्व मां साधु कुरु प्रियं च मे
मया न भारो गुरुतामुपैष्यति ॥ २५ ॥
इति ब्रुवाणामपि धर्मवादिनीं
नेतुं न रामो दयितां व्यवस्यति ।

निवर्तयिष्यन् हि स तां तदा प्रियाम्
उवाच दोषान् वनवासिनामथ ॥ २६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सीतावाक्यं नाम
सप्तविंशः सर्गः ॥

## XXVIII.

तां तथा ब्रुवतीं रामः प्रियां भार्यामनुव्रतां ।
उवाचेदं बहूनू दोषानू वनवास उदाहरनू ॥ १ ॥
सीते महाकुलीनासि धर्मज्ञासि यशस्विनी ।
सत्यं मे वचनं कार्यं श्रोतुमर्हस्यनिन्दिते ॥ २ ॥
मनो हि त्वयि निक्षिप्य शरीरेणैव केवलं ।
गमिष्याम्यवशः सीते काननं पितुराज्ञया ॥ ३ ॥
तस्माद्यथा वदामि त्वां तथा त्वं कर्तुमर्हसि ।
वनवासे हि बहव इमे दोषा महात्ययाः ॥ ४ ॥
तानू श्रुत्वा त्यज्यतां भीरु वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥
तवानुकम्पयैवाहं वनदोषानू सुदारुणानू ।
ज्ञानानस्त्वामहं नेतुं वनं नैव समुत्सहे ॥ ६ ॥
वने वसन्ति शार्दूला आसन्नजनघातिनः ।
भेतव्यं च सदा तेभ्यस्तेन दुःखं प्रिये वनं ॥ ७ ॥
प्रभिन्नकरटा नागा बहवः सन्ति कानने ।
आसाद्य ये विनिघ्नन्ति तेन दुःखं वनं प्रिये ॥ ८ ॥
अत्युष्णमतिशीतं च तृड्बुभुक्षे तथैव च ।
भयानि च बहून्यत्र तेन दुःखं प्रिये वनं ॥ ९ ॥

# अयोध्याकाण्डं

सर्पाः सरीसृपाश्चान्ये वृश्चिकाश्च महाविषाः ।
चरन्ति गहनेऽरण्ये तेन दुःखं प्रिये वनं ॥ १० ॥
गिरिकन्दरजातानां महारण्यनिवासिनां ।
उद्वेजनीयाः सिंहानां श्रूयन्ते निनदा वने ॥ ११ ॥
प्रत्यासन्नाश्च सहसा दृश्यन्ते बहवो वने ।
सिंहर्क्षमृगशार्दूलवराहोरगवारणाः ॥ १२ ॥
प्राणाभिघातिनो घोरास्तथान्या मृगजातयः ।
सन्ति दुर्गे वने तस्मान्न गन्तव्यं त्वया प्रिये ॥ १३ ॥
नदीकुटिलगा नागा महीविवरशायिनः ।
दृश्यन्ते वनमार्गेषु दृष्टिश्वासमहाविषाः ॥ १४ ॥
अगाधाः पङ्कवत्यश्च महानक्रसमाकुलाः ।
सरितस्तरणीयाश्च दूरपारा दुरासदाः ॥ १५ ॥
कुशकण्टकवन्तश्च लतागुल्मतृणावृताः ।
दुर्गमाः सन्ति पन्थानः सीते दुःखमतो वनं ॥ १६ ॥
निर्मनुष्याण्यरण्यानि तथा दुःसत्त्ववन्ति च ।
कक्षवृक्षक्षुपलतागहनानि शुचिस्मिते ॥ १७ ॥
सन्त्यटव्यश्च वैदेहि दुर्गमा बहुयोजनाः ।
पुष्पोदकफलैर्हीना घोरसत्त्वसमाकुलाः ॥ १८ ॥
गिरिकन्दरदुर्गाणि पल्वलोदकवन्ति च ।
तथानूपानि वैदेहि सन्त्यगम्यानि कानने ॥ १९ ॥

सुप्यते पर्णशय्यासु तृणशय्यासु चाबले ।
स्वयंकृतासु दुःखासु भूतले निर्जने वने ॥ २० ॥
आहारश्चैव कर्तव्यो बदरामलकेङ्गुदैः ।
तथा श्यामाकनीवारकषायकटुतिक्तकैः ॥ २१ ॥
वनेष्वलभ्यमाने च वन्ये मूलफले पुनः ।
बहून्यहानि वस्तव्यं निराहारैर्वनाश्रयैः ॥ २२ ॥
वल्कलाजिनवस्त्राणि वसितव्यानि कानने ।
वनेषु भवितव्यं च दीर्घश्मश्रुजटाधरैः ॥ २३ ॥
दीर्घरोमधरैश्चैव मलपङ्कसमाचितैः ।
वातातपविशुष्काङ्गैः प्रिये दुःखमतो वनं ॥ २४ ॥
स्थानं वीरासनं सेव्यमुपवासश्च मैथिलि ।
कर्तव्या दुश्चराश्चैव नियमा वनवासिभिः ॥ २५ ॥
ग्रीष्मे पञ्चतपोभिश्च वर्षास्वभ्रावकाशिकैः ।
जलवासैश्च शिशिरे भाव्यं वनचरैः प्रिये ॥ २६ ॥
त्वगस्थिमात्रशेषेण तपसा कर्षितेन च ।
मया ते तत्र का प्रीतिः का रतिर्वा भविष्यति ॥ २७ ॥
मां वा समनुगच्छन्त्या नियमव्रतशीलया ।
त्वयापि हि वने तत्र का रतिर्मे भविष्यति ॥ २८ ॥
वातातपविवर्णाङ्गीं तपोनियमकर्षितां ।
दुःखितां त्वां वने दृष्ट्वा भविष्याम्यतिदुःखितः ॥ २९ ॥

न त्वामिच्छामि वैदेहि मत्कृते शोककर्षितां ।
द्रष्टुं प्रतिभयेऽरण्ये भृशं हि दयितासि मे ॥३०॥
तदलं ते वने गत्वा वनचर्या न ते क्षमा ।
विमृशन् बहुदोषं हि पश्यामि दयिते वनं ॥३१॥
तत्र स्थस्यापि मे नित्यं हृदये त्वं निवत्स्यसि ।
इहस्थापि न दूरे त्वं प्रिया हि भवती मम ॥३२॥
एवं वनं नेतुमनिश्चितोऽसाव्
उक्त्वा प्रियां तां विरराम रामः ।
अथोत्तरं सा रुदती सुदीना
सीता पुनर्वाक्यमिदं जगाद ॥३३॥

इत्यार्षे रामायणे अयोध्याकाण्डे सीतावनदोषदर्शनं नाम
अष्टाविंशः सर्गः ॥

# रामायणं

## XXIX.

अथ तद्वचनं श्रुत्वा सीता रामस्य दुःखिता ।
प्रसक्ताश्रुमुखी वाक्यमिदं भर्तारमब्रवीत् ॥ १ ॥
वनवासे त्वया दोषा य एते परिकीर्तिताः ।
तानार्यपुत्र मन्येऽहं त्वद्भक्त्या सर्वशो गुणान् ॥ २ ॥
त्वद्बाहुगुप्तां न च मामपि देवः शतक्रतुः ।
शक्तोऽभिभवितुं लोके कुतोऽन्ये वनचारिणः ॥ ३ ॥
सिंहव्याघ्रवराहादीनुक्तवानसि यान् वने ।
दुरासदान् न मे तेभ्यो भयं किञ्चन विद्यते ॥ ४ ॥
त्वद्बाहुबलगुप्तायाः कुतो मे विद्यते भयं ।
विपत्तिरपिवा तत्र श्रेयो मे नेह जीवितं ॥ ५ ॥
त्वया वा सह गन्तव्यं त्वदनुज्ञातया वनं ।
त्वत्परित्यक्तया वापि त्यक्तव्यं जीवितं मया ॥ ६ ॥
नारी भर्तृपरित्यक्ता जीवन्त्यपि सुदुःखिता ।
मृता भवत्यार्यपुत्र तस्माच्छ्रेयोऽद्य मे मृतं ॥ ७ ॥
अपि चैवाहमादिष्टा लक्षणज्ञैर्द्विजातिभिः ।
वने ते विजने सीते वस्तव्यमिति राघव ॥ ८ ॥
तेषां लक्षणिनां श्रुत्वा वचस्तत् सत्यवादिनां ।
वनवासस्पृहा नित्यं हृदि मे परिवर्तते ॥ ९ ॥

स चेदवश्यं प्राप्तव्यः सिद्धादेशस्तथा मया ।
सह त्वया भवतु मे न हीच्छामि तमन्यथा ॥१०॥
प्राप्तादेशा भविष्यामि गत्वाहं सहिता त्वया ।
कालश्चायं समुत्पन्नः सत्यास्ते सन्तु वै द्विजाः ॥११॥
वनवासे च जानामि दुःखानि विविधान्यहं ।
प्राप्यन्ते यानि मुनिभिर्वनवासे कृतात्मभिः ॥१२॥
कन्ययैव मया सर्वे वनदोषाः श्रुताः पुरा ।
भिक्षुक्याः साधुवृत्तायाः कथयन्त्याः पितुर्गृहे ॥१३॥
प्रसादये त्वां शिरसा नय मामपि राघव ।
वनवासो हि सुभृशं काङ्क्षितो मे त्वया सह ॥१४॥
कृतक्षणास्मि भद्रं ते गमनं प्रति राघव ।
पुण्या हि वनचर्येयं त्वया मे सह काङ्क्षिता ॥१५॥
पूतानया भविष्यामि पुण्यया वनचर्यया ।
विहरन्ती त्वया सार्धं हृदयोत्सवभूतया ॥१६॥
स्पृहणीया भविष्यामि लोकेऽमुष्मिन्निहैव च ।
भर्तारमनुगच्छन्ती भर्ता स्त्रीणां हि दैवतं ॥१७॥
त्वया हि सह संयोगः प्रेतभावेऽपि मे भवेत् ।
इत्यतोऽनुगमिष्यामि त्वामहं कृतनिश्चया ॥१८॥
मया कथयतां पूर्वं श्रुतं प्रत्यक्षदर्शिनां ।
ब्राह्मणानां निसर्गेण धर्मनिर्णयवादिनां ॥१९॥

भर्तारं किल या नारी छायेवानुगता सदा ।
अनुगच्छति गच्छन्तं तिष्ठन्तं चानुतिष्ठति ॥ २० ॥
तद्भावभावनिरता तत्संयोगपरायणा ।
तमेवं भूयो भर्तारं सा प्रेत्याप्यनुगच्छति ॥ २१ ॥
अनुरक्तां प्रियां भार्यां सुव्रतां पतिदेवतां ।
न त्वं रोचयसे नेतुं मामितः केन हेतुना ॥ २२ ॥
तुल्यशीलव्रताचारां छायामनुगतामिव ।
नेतुमर्हसि मां वीर वनं मुनिजनप्रियं ॥ २३ ॥
यदि मां निश्चितां गन्तुं न नेतुं त्वमिहेच्छसि ।
सत्येनालभ्य पादौ ते न भविष्याम्यसंशयं ॥ २४ ॥
इत्युक्त्वा प्ररुरोदार्ता मैथिली शोककर्षिता ।
शोकोष्णैरभिवर्षन्ती दुःखजैरश्रुबिन्दुभिः ॥ २५ ॥
पीनोन्नतावपतितौ स्नपयन्ती पयोधरौ ।
दुःखामर्षपरीताङ्गी सुस्वरं कलभाषिणी ॥ २६ ॥
एवमार्तामपि तु तां विलपन्तीं सुदुःखितां ।
रामः प्रियामनुगतां नेतुं नैवाध्यवस्यति ॥ २७ ॥
दध्यौ चाधोमुखः किञ्चिद्रुदन्तीमभिवीक्ष्य तां ।
वनवासकृतान् दोषान् बहुधाभिविचारयन् ॥ २८ ॥

विमनसमभिवीक्ष्य चिन्तयन्तं
जनकसुता पतिमप्रतिमन्नरूपं ।

भृशतरमतिरोषताम्रनेत्रा
वचनमुवाच पुनर्निगृह्य बाष्पं ॥ २१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामानुनयो नाम
एकोनत्रिंशः सर्गः ॥

# रामायणं

## XXX.

रामस्य तां मतिं बुद्ध्वा मैथिली कृतनिश्चया ।
रोषात् प्रस्फुरमाणौष्ठी पुनर्वचनमब्रवीत् ॥ १ ॥
उन्मत्तेवाभिपश्यन्ती भर्तारं विपुलेक्षणा ।
रोषवेगात् क्षिपन्तीव प्रणयादभिमानिनी ॥ २ ॥
कृतार्थं मन्यते मूढः स ग्रात्मानं पिता मम ।
रामं जामातरं लब्ध्वा क्लीवं पुरुषमानिनं ॥ ३ ॥
ग्रनृतं वत लोकोऽयमज्ञानादनुपश्यति ।
तेजस्वी राम एवैकः सूर्यवद्युतिमानिति ॥ ४ ॥
किं वा पश्यन् विषण्णस्त्वं कुतो वा भयमस्ति ते ।
त्यक्तुमिच्छसि मां येन प्रियां नान्यपरायणां ॥ ५ ॥
द्युमत्सेनसुतं वीर सत्यवन्तमनुव्रतां ।
सावित्रीमिव मां विद्धि भर्तुर्गतिपरायणां ॥ ६ ॥
ग्रन्यां गतिमहं गन्तुं मनसापि न कामये ।
त्वया नाथ परित्यक्ता नेच्छामि भरताकृतिं ॥ ७ ॥
कौमारीं दयितां भार्यां स्वयमाहृत्य मां कथं ।
शैलूष इव योषां त्वमन्यस्मै दातुमर्हसि ॥ ८ ॥
न तेऽहमपराध्यामि कर्मणा मनसापि वा ।
वाचा वा तत् कथं मां त्वं त्यक्तुमिच्छस्यकारणं ॥ ९ ॥

यदिवाप्यपराधस्ते मया कश्चित् पुरा कृतः ।
अज्ञानाद्यदिवा ज्ञानात् क्षमये त्वां प्रसीद मे ॥१०॥
आर्यपुत्र परित्यज्य न मां त्वं गन्तुमर्हसि ।
वासः स मे स्वङ्गभूतस्त्वया सह भविष्यति ॥११॥
पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ।
न भविष्यति मे राम मार्गे चाध्वपरिश्रमः ॥१२॥
कुशकाशशरेषीकास्तथैव वनकण्टकाः ।
मार्गे मम भविष्यन्ति स्पर्शे कौशेयसंनिभाः ॥१३॥
शय्याश्च वनवासे मे नवपर्णतृणास्तृताः ।
राङ्कवाजिनसंस्पर्शा भविष्यन्ति सह त्वया ॥१४॥
महावातसमुद्भूतं यन्मामवकरिष्यति ।
रजो रमण तन्मेऽङ्गे परार्ध्यमिव चन्दनं ॥१५॥
शाद्वलेषु यदासिष्ये विविक्तेषु च राघव ।
कुशास्तरणतल्पेषु किं मे सुखतरं ततः ॥१६॥
यन्मे मूलफलं वन्यं वने दास्यसि राघव ।
स्वादु वा यदिवास्वादु भविष्यत्यमृतोपमं ॥१७॥
न बन्धूनां स्मरिष्यामि न मातुर्न पितुर्वने ।
वसन्ती भवता सार्धं स्वादुमूलफलाशिनी ॥१८॥
न मत्कृते व्यलीकं ते तत्र किञ्चिद्भविष्यति ।
भविष्यामि न चैवाहं तत्र भारस्तवानघ ॥१९॥

यस्त्वया सह स स्वर्गो नरको यस्त्वया विना ।
कुरु मे दयितं कामं गच्छेयं सहिता त्वया ॥ २० ॥
त्वया त्यक्ता न शक्तास्मि जीवितुं रघुनन्दन ।
त्वद्वियोगभयोद्विग्नां त्रायस्व शरणागतां ॥ २१ ॥
अथ नेच्छसि चेन्नेतुं मामेवं त्वदनुव्रतां ।
विषमद्यैव पास्यामि पश्यतस्ते नृपात्मज ॥ २२ ॥
इदं हि दुःखं संसोढुं मुहूर्तमपि नोत्सहे ।
किं पुनर्दशवर्षाणि त्रीणि चैकं च राघव ॥ २३ ॥
इति शोकाग्निसंतप्ता विलप्य जनकात्मजा ।
पादयोर्निपपातार्ता भर्तुर्गमनलालसा ॥ २४ ॥
उक्त्वा वाक्यं सकरुणं त्रायस्वं नय मामिति ।
रुरोद पतिता तत्र सुस्वरं मृदुभाषिणी ॥ २५ ॥
स तस्याः करुणैर्वाक्यैर्हृदि क्षत इवातुरः ।
मुमोच वाष्पं शोकोष्णं धैर्यसंरुद्धमानसः ॥ २६ ॥
तस्य शोकाश्रुपूर्णाभ्यां प्रियाकारुण्यजं तदा ।
शुश्राव वारि नेत्राभ्यां पुष्कराभ्यामिवोदकं ॥ २७ ॥
स तामुत्थाप्य शनकैः पादयोः पतितां प्रियां ।
उवाच वचनं रामो मधुरं परिशान्त्वयन् ॥ २८ ॥
न कामये स्वर्गमपि त्वदृतेऽहं वरानने ।
न च मेऽस्ति भयं किञ्चिदपि साक्षात् स्वयंभुवः ॥ २९ ॥

धर्मं तु गगनासोरु सद्भिराचरितं जनैः ।
नातिवर्तितुमिच्छामि वेलामिव महोदधिः ॥ ३० ॥
तथा गुरुनियोगं च परं धर्मं विदुर्बुधाः ।
तं चातिक्रमितुं नालमहं शक्तः कथञ्चन ॥ ३१ ॥
स यथैवानुशिष्टोऽस्मि पित्राह्लय महात्मना ।
तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥ ३२ ॥
तथा च तव जिज्ञासुर्निश्चयं शुभलक्षणे ।
उक्तवान् न नयिष्येऽहमिति शक्तोऽपि रक्षितुं ॥ ३३ ॥
यदर्थं चैव ते सीते नेच्छामि शुभदर्शने ।
वनवासभवैर्दुःखैर्योक्तुं त्वां सुखभागिनीं ॥ ३४ ॥
या निसृष्टानपेक्षा च वनाय मदपेक्षया ।
न हि हातुं मया शक्या कीर्तिरात्मवता यथा ॥ ३५ ॥
एहि गच्छ मया सार्धं यथा ते रुचितं प्रिये ।
इच्छामि हि प्रियं कर्तुं नित्यं तेऽहमनिन्दिते ॥ ३६ ॥
ब्राह्मणेभ्यस्तु साधुभ्यो वासांस्याभरणानि च ।
संश्रितेभ्यस्तथान्येभ्यो देहि दानानि जानकि ॥ ३७ ॥
गुरूंश्चामन्त्र्य सुभगे ततो व्रज मया सह ।
इति भर्त्राभ्यनुज्ञाता मत्वा गमनमात्मनः ॥ ३८ ॥

ततः प्रहृष्टा परिपूर्णमानसा
यशस्विनी भर्तुरवेक्ष्य शासनं ।

प्रचक्रमे दातुमथो मनीषिणां
धनानि वासांसि च भूषणानि सा ॥३१॥

इत्यार्षे रामायणे अयोध्याकाण्डे सीताभिप्रायजिज्ञासा
नाम त्रिंशः सर्गः ॥

## अयोध्याकाण्डं

### XXXI.

इत्युक्त्वा राघवः सीतां समाहूयाथ लक्ष्मणं
उवाचेदं वचः श्रीमानवेक्ष्य प्रश्रयानतं ॥ १ ॥
प्रियः प्राणसमो भ्राता सहायश्च सखा च मे ।
तस्मात् प्रणयतोऽहं त्वां यद्ब्रवीमि कुरुष्व तत् ॥ २ ॥
वनं त्वया न गन्तव्यं मया सह कथञ्चन ।
इहैव हि महान् भारो वोढव्यो भवतानघ ॥ ३ ॥
इति रामवचः श्रुत्वा लक्ष्मणो दीनमानसः ।
वाष्पपर्याकुलमुखः सोढुं शोकमशक्नुवन् ॥ ४ ॥
प्रणम्य चरणौ भ्रातुः परिष्वज्य च पीडितं ।
सीतायाश्च महाप्राज्ञस्ततो राघवमब्रवीत् ॥ ५ ॥
अनुज्ञातोऽस्मि भवता पूर्वमेव वनं प्रति ।
सह गन्तुमितः कस्मान्निवर्तयसि मां पुनः ॥ ६ ॥
न निवर्तयितव्योऽहं जीवन्तं मां यदीच्छसि ।
शरणं त्वां प्रपन्नोऽस्मि प्रसीदार्य नयस्व मां ॥ ७ ॥
तमब्रवीत् ततो रामः स्थितं लक्ष्मणमग्रतः ।
प्रह्वं नतेन शिरसा वेपमानं कृताञ्जलिं ॥ ८ ॥
गते त्वयि मया सार्धमितो लक्ष्मण काननं ।
को भरिष्यति कौशल्यां सुमित्रां च यशस्विनीं ॥ ९ ॥

अभिवर्षति कामैर्यो मातरौ नौ नराधिपः ।
स कामवशगो व्यक्तं न ह्रत्यति यथा पुरा ॥ १० ॥
स कामवशमापन्नो महाराजः पितावयोः ।
भरते राज्यमासाद्य कैकेय्या वशमागतः ॥ ११ ॥
राज्यैश्वर्यमदान्धा हि कदाचिदपि कैकयी ।
असाधु प्रतिपद्येत सपत्नीनामचेतना ॥ १२ ॥
ते मातराविह स्थेन समाश्वास्ये विशेषतः ।
परिपाल्ये च सौमित्रे यावदागमनं मम ॥ १३ ॥
यथैवाहं तथैव त्वं तयोरिह भविष्यसि ।
बन्धुराप्यायनं चैव दुःखेभ्यश्चैव रक्षिता ॥ १४ ॥
इति रामवचः श्रुत्वा लक्ष्मणः श्रीमतां वरः ।
कृताञ्जलिरिदं भूयो रामं वचनमब्रवीत् ॥ १५ ॥
मद्विधानां सहस्राणि कौशल्या बिभृयाद्विभो ।
यस्याः सहस्रं ग्रामाणां निसृष्टमुपजीवनं ॥ १६ ॥
त्वदपेक्षश्च भरतः पूजयिष्यत्यसंशयं ।
कौशल्यां च सुमित्रां च परमं यत्नमास्थितः ॥ १७ ॥
नय मामनपेक्षस्त्वं वनवासकृतोद्यमं ।
शिष्यः प्रेष्यः सहायश्च भविष्यामि वने तव ॥ १८ ॥
खनित्रपिटके बिभ्रन् खड्गवाणधनुर्धरः ।
अग्रतस्ते गमिष्यामि पन्थानं परिशोधयन् ॥ १९ ॥

वन्यानि चाहरिष्यामि पुष्पमूलफलानि च ।
शय्योपकरणार्थं च द्रुमपर्णतृणानि ते ॥ २० ॥
त्वमार्य सह वैदेह्या वनवासेऽपि रंस्यसे ।
रक्षतस्त्वां गमिष्यन्ति रात्रयो मम जाग्रतः ॥ २१ ॥
आर्य शिष्योऽस्मि दासोऽस्मि भक्तोऽस्म्यनुगतस्तथा ।
तवाहं सर्वथा साधो प्रसीद नय मामपि ॥ २२ ॥
वाक्येनानेन तु प्रीतो रामो लक्ष्मणमब्रवीत् ।
आगच्छ व्रज सौमित्रे आपृच्छस्व सुहृज्जनं ॥ २३ ॥
ये च राज्ञे ददौ दिव्ये महात्मा वरुणः स्वयं ।
धनुषी ते गृहाण त्वमक्षयानिषुधींश्च तान् ॥ २४ ॥
अभेद्ये च तनुत्राणे गृहाण लघुनी शुभे ।
खड्गौ च विमलाकाशवर्चसौ विमलत्सरू ॥ २५ ॥
यच्चाचार्यगृहे दिव्यं धनुस्तिष्ठति मेऽर्चितं ।
तदानयस्व गत्वा त्वं त्वरावानिह लक्ष्मण ॥ २६ ॥
इत्युक्तो लक्ष्मणः शीघ्रं समापृच्छ्य सुहृज्जनं ।
आचार्यकुलमागम्य ते जग्राहायुधोत्तमे ॥ २७ ॥
ते समादाय धनुषी साखड्गेषुनिबन्धने ।
दर्शयामास रामाय निबबन्ध च यत्नवान् ॥ २८ ॥
तमुवाचागतं रामो लक्ष्मणं प्रियदर्शनं ।
काले त्वमागतः शीघ्रं काङ्क्षिते मम लक्ष्मण ॥ २९ ॥

दातुमिच्छामि विप्रेभ्यो धनरत्नार्थसंचयं ।
बहुभृत्यानल्पधनांस्तस्मादानय तान् द्विजान् ॥३०॥
ये चास्मत्सुहृदो भक्ता निवसन्तीह लक्ष्मण ।
तेषां चापि प्रदास्यामि सर्वेषामुपजीवनं ॥३१॥

वशिष्ठपुत्रं तु सुयज्ञमार्यं
तमानयाशु प्रवरं द्विजानां ।
प्रियं सखायं मम वीर्यवन्तं
तं तर्पयिष्ये प्रथमं प्रदानैः ॥३२॥

इत्यार्षे रामायणे अयोध्याकाण्डे लक्ष्मणाभ्यनुज्ञा
नाम एकत्रिंशः सर्गः ॥

# अयोध्याकाण्डं

## XXXII.

भ्रातुः शासनमाज्ञाय लक्ष्मणस्त्वरितः स्वयं ।
सुयज्ञगृहमागत्य प्रविश्य च विनीतवत् ॥ १ ॥
अग्न्यागारस्थमभ्येत्य सुयज्ञं लक्ष्मणोऽब्रवीत् ।
हे सुयज्ञ द्विजश्रेष्ठ सखा ते द्रष्टुमिच्छति ॥ २ ॥
श्रुत्वैतल्लक्ष्मणवचः सुयज्ञोऽथ त्वरान्वितः ।
प्रविवेशाभ्युपागम्य रामवेश्म सलक्ष्मणः ॥ ३ ॥
तमागतं वेदविदं सीतया सह राघवः ।
अभ्युत्थायार्चयामास प्रदानैरभिकाङ्क्षितैः ॥ ४ ॥
कुण्डलाङ्गदकेयूरमुक्ताहारविभूषणैः ।
महार्हैश्चैव वासोभिर्धनधान्यैश्च पुष्कलैः ॥ ५ ॥
तमुवाच ततो रामः सीतयाभिप्रदेशितः ।
सखायं दर्शितं काले सुयज्ञं वेदपारगं ॥ ६ ॥
हारं च हेमसूत्रं च शुभान्याभरणानि च ।
वासांसि चैव दिव्यानि ब्राह्मण्यै ते प्रयच्छति ॥ ७ ॥
राङ्कवास्तरणं चैव पर्यङ्कं सर्वकाञ्चनं ।
सपादपीठं भार्यायै सखे सीता ददाति ते ॥ ८ ॥
नागं शत्रुञ्जयं नाम मह्यं यं मातुलो ददौ ।
तं ते ददाम्यलंकृत्य सहस्रेण गवां सह ॥ ९ ॥

प्रतिगृह्य च तत् सर्वं सुयज्ञो मल्लवद्धनं ।
रामाय सह वैदेह्या स प्रायुङ्क्ताशिषः शुभाः ॥ १० ॥
सुयज्ञं संविभज्यैवमन्यांश्चैवार्हतो द्विजान् ।
अन्येभ्योऽपि ददौ रामः सुहृद्भ्यः कामतो धनं ॥ ११ ॥
भृत्यप्रेष्यजनेभ्यश्च विभवस्यानुरूपतः ।
शिल्पिभ्यश्चोपकारिभ्यो ददौ रामो महायशाः ॥ १२ ॥
ततो भ्रातरमाभाष्य लक्ष्मणं राघवोऽब्रवीत् ।
ददस्व त्वमपि क्षिप्रं द्विजाग्रेभ्योऽर्हतो धनं ॥ १३ ॥
सुहृद्भ्यश्चात्मनः कामानीप्सितानपवर्जय ।
गोभिर्धनैश्च धान्यैश्च भोजनाच्छादनेन च ॥ १४ ॥
इष्टांस्तर्पय सौमित्रे ब्राह्मणान् वेदपारगान् ।
सुहृदश्चार्हतः सर्वान् कामैः संविभजेप्सितैः ॥ १५ ॥
अगस्त्यं कौशिकं चैव गार्ग्यं शाण्डिल्यमेव च ।
समाहूयाभिवर्ष त्वं धनरत्नौघवृष्टिभिः ॥ १६ ॥
सुहृन्मां परया भक्त्या य उपास्ते तु देवलः ।
आचार्यस्तैत्तिरीयाणां तमानय यतव्रतं ॥ १७ ॥
तस्मै दानानि दास्यामि रत्नानि विविधानि च ।
रुचिराणि च वासांसि यावन्मत्तोऽभिकाङ्क्षति ॥ १८ ॥
सूतं चित्ररथं नाम सखायं मे समानय ।
तस्मै दास्यामि विभवान् महार्हानपि काङ्क्षितान् ॥ १९ ॥

ये च मे वन्दिनः सन्ति ये चापि परिचारकाः ।
सर्वांस्तर्पय कामैस्तान् समाहूयाशु लक्ष्मण ॥ २० ॥
चेलप्रक्षालका ये नो ये च नः श्मश्रुवर्धकाः ।
सेवका ह्रासकाश्चैव स्नापकाश्चानुलेपकाः ॥ २१ ॥
संवाहकाः सलिलदाः पुरतो धावकाश्च ये ।
तेषां निष्कसहस्रं त्वं वृत्त्यर्थमुपकल्पय ॥ २२ ॥
भोजनार्थं दश शतं शालीनां पृथगुत्सृज ।
व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु ॥ २३ ॥
मल्लानां योधकानां च तथोद्वर्तनशीलिनां ।
क्रीडकानां च निष्काणां सहस्रमपवर्जय ॥ २४ ॥
कौशल्यां प्रेष्यवर्गश्च यः शुश्रूषति लक्ष्मण ।
सुमित्रां चैव तस्मै त्वं सहस्रे द्वे समुत्सृज ॥ २५ ॥
भिक्षाभुजो द्विजा ये च कौशल्यां मम मातरं ।
पर्युपासत एतेभ्यो द्वे सहस्रे समुत्सृज ॥ २६ ॥
तथैव च सुमित्रां ये भिक्षवः समुपासते ।
तेभ्योऽपि च द्विजातिभ्यः सहस्रमपवर्जय ॥ २७ ॥
न सीदति यथा कश्चिन्मयि विप्रोषिते वनं ।
अनुजीविजनः सौम्य तथा त्वं कर्तुमर्हसि ॥ २८ ॥
न मेऽस्त्यदेयं साधुभ्यो मत्त्वविद्यो हि लक्ष्मण ।
यो मेऽस्ति विभवः कश्चित् तं विश्राणाय सर्वशः ॥ २९ ॥

इत्युक्तो लक्ष्मणो भ्रात्रा धनं रामस्य सर्वशः ।
यथोद्दिष्टं ददौ तेभ्यः सर्वेभ्य उपजीवनं ॥ ३० ॥
संविभज्य ततो रामः सर्वानाहूय सोऽब्रवीत् ।
कार्या भवद्भिर्नोत्कण्ठा रक्ष्यं चेदं गृहं मम ॥ ३१ ॥
लक्ष्मणस्य च यत्नेन यावदागमनं मम ।
अनुजीविजनं राम इत्युक्त्वा शोककर्षितं ॥ ३२ ॥
धनाध्यक्षानुवाचेदं समाहूय पुनर्वचः
यदस्ति वित्तशेषं मे तदिहानवशेषतः ॥ ३३ ॥
आनयध्वं प्रदास्यामि तदप्यहमतन्द्रितः ।
इत्युक्ताः समुपाजह्रुर्धनशेषमशेषतः ॥ ३४ ॥
रामाज्ञया धनाध्यक्षाः समुपादाय सर्वशः ।
तद्धनं कृपणानाथविकलेभ्यश्च राघवः ॥ ३५ ॥
दरिद्रेभ्यश्च साधुभ्यो ददौ सर्वमशेषतः ।
अथ वृद्धो दरिद्रश्च बहुभृत्यजनो द्विजः ॥ ३६ ॥
उपायाद्भिक्षितुं रामं त्रिजटो नाम विश्रुतः ।
स रामभवनं प्राप्य प्रविश्याप्रतिवारितः ॥ ३७ ॥
उवाच राममासाद्य वेपमान इदं वचः ।
दरिद्रोऽस्म्यसमर्थश्च बालपुत्रश्च राघव ॥ ३८ ॥
त्वं मामर्हसि वित्तेन संविभक्तुं यथार्हतः ।
तमुवाच ततो रामो वृद्धं परिहसन्निव ॥ ३९ ॥

विप्रमाङ्गिरसं दीनं वित्तार्थिनमुपागतं ।
गवां सहस्रमस्त्येकं यदविश्राणितं मया ॥ ४० ॥
तता गृहाण यावत् त्वं स्वयं शक्तोऽसि रक्षितुं ।
इति रामवचः श्रुत्वा त्रिजटो रामसंनिधौ ॥ ४१ ॥
स आत्मनो दृढां कक्षां बद्ध्वा संभ्रान्तमानसः ।
दण्डमुद्यम्य सहसा प्रतस्थे गोधनं प्रति ॥ ४२ ॥
वृद्धभावाक्षिपमानो गाः संकालयितुं स्वयं ।
तमुवाच ततो रामस्त्रिजटं द्विजसत्तमं ॥ ४३ ॥
परिहासः कृतो ब्रह्मन् निवर्तस्व किमिच्छसि ।
एतच्चैव सहस्रं ते गवां गोपैरहं सह ॥ ४४ ॥
धनं ददामि भूयश्च यावदिच्छसि शाधि मां ।
इत्युक्तस्त्रिजटो वव्रे यज्ञेयमिति राघवं ।
तस्मै रामो ददौ द्रव्यं प्रभूतं यज्ञसिद्धये ॥ ४५ ॥
स तं सभार्यस्त्रिजटो यथेप्सितं
प्रतिग्रहं प्राप्य समृद्धमानसः ।
प्रशस्य रामं मुदितो जगाम च
प्रजासु रामस्य यशः प्रकाशयन् ॥ ४६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे वित्तविश्राणनं नाम
द्वात्रिंशः सर्गः ॥

## रामायणं

### XXXIII.

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनानि सः ।
जगाम पितरं द्रष्टुं सीतया सह राघवः ॥ १ ॥
आयुधानि गृहीत्वासौ सर्वोपकरणानि च ।
लक्ष्मणेन सह भ्रात्रा तस्मान्निःसृत्य वेश्मनः ॥ २ ॥
तौ गृहीतायुधौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
राजमार्गं समेयातां सीतयानुगतौ तदा ॥ ३ ॥
ततश्च वेश्मशृङ्गाणि हर्म्याणि च समन्ततः ।
ददृशुस्तांस्तदारुह्य पौरजानपदस्त्रियः ॥ ४ ॥
अन्तरं राजमार्गे च नासीज्जनपदावृते ।
तदानुरागात् प्रस्थाने रामस्यामिततेजसः ॥ ५ ॥
पदातिं तं समायान्तं सभार्यं सहलक्ष्मणं ।
ऊचुर्दृष्ट्वा बहुविधा वाचो दुःखसमन्विताः ॥ ६ ॥
अनुप्रयाति यं यान्तं चतुरङ्गं महद्बलं ।
तमिमं सीतया सार्धमनुगच्छति लक्ष्मणः ॥ ७ ॥
सुखैश्वर्यरसज्ञो हि भक्तिमानपि वीर्यवान् ।
अनृतं पितरं कर्तुं धर्मात्मा नायमिच्छति ॥ ८ ॥
या न शक्या पुरा द्रष्टुं देवैराकाशगैरपि ।
सीतां तामपि पश्यन्ति राजमार्गे पृथग्जनाः ॥ ९ ॥

सहजेनाङ्गरागेण भूषितां वरवर्णिनीं ।
विवर्णतां नयिष्यन्ति सीतां शीतोष्णवायवः ॥१०॥
नूनं दशरथोऽन्येन सत्त्वेनाविष्टचेतनः ।
यथा विवासयत्यद्य प्रियं पुत्रमकारणे ॥११॥
यदि हि स्यादनाविष्टः सत्त्वेनान्येन केनचित् ।
कथं विवासयेदेनमकस्माद्गुणसागरं ॥१२॥
को ह्यार्यो निर्गुणमपि त्यजेत् पुत्रं सचेतनः ।
किमु यस्य गुणैः कृत्स्नो लोकोऽयमनुरञ्जितः ॥१३॥
आनृशंस्यं क्षमा शीलं श्रुतं सत्यं पराक्रमः ।
शोभयन्ति गुणा राममेते षट् प्रथिता भुवि ॥१४॥
विवासेनास्य तेनायं दुःखितोऽद्य महाजनः ।
औदकानीव सत्त्वानि सलिलस्य परिक्षयात् ॥१५॥
लोकनाथस्य रामस्य पीडया पीडितं जगत् ।
अपर्वणीव सोमस्य राहुग्रहणपीडया ॥१६॥
अयं स दाता भोगानां परित्राणसुखस्य च ।
तथाभयप्रदानस्य दाता गच्छति नो वनं ॥१७॥
साधुलक्ष्मणवत् सर्वे त्यक्तभोगपरिग्रहाः ।
राममेवानुगच्छामः किं नो दारैर्धनेन वा ॥१८॥
सपुत्रधनदारा वा सपशुद्रव्यसंचयाः ।
गच्छामस्तत्र यत्रायं साधुर्गच्छति राघवः ॥१९॥

विहारोद्यानशयनशरणासनसाधनं ।
परित्यज्यानुगच्छामस्तुल्यदुःखा नृपात्मजं ॥ २० ॥
समुद्धृतनिधानानि शीर्णध्वस्तोच्छ्रयाणि च ।
प्रक्षीणधान्यकोषाणि क्षीनसंमार्जनानि च ॥ २१ ॥
पिशाचप्रेतरक्षोभिर्जुष्टान्युच्छिष्टभोजनैः ।
अलक्ष्मीण्यमनोज्ञानि परित्यक्तानि दैवतैः ॥ २२ ॥
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यतां ।
वनं नगरमेवास्तु यत्र गच्छति राघवः ॥ २३ ॥
अरण्यतां परित्यक्तमस्माभिर्यात्विदं पुरं ।
यत्र वत्स्यति रामोऽयं पुरं तत्र भविष्यति ॥ २४ ॥
विलानि दंष्ट्रिणः सर्पा वनानि मृगपक्षिणः ।
अस्मत्त्यक्तं प्रपद्यन्तां सेव्यमानं त्यजन्तु च ॥ २५ ॥
एताश्चान्याश्च विविधा वाचः पौरजनेरिताः ।
शृण्वन् रामो ययौ मार्गे वनवासकृतोद्यमः ॥ २६ ॥

अवेक्षमाणोऽपि जनं तदार्तम्
अनार्तरूपः प्रहसन्निवार्तः ।
जगाम रामः पितरं दिदृक्षुः
सत्यप्रतिज्ञं नृपतिं चिकीर्षुः ॥ २७ ॥
आसाद्य चेक्ष्वाकुकुलप्रदीपो
रामः पितुर्वेश्म तदार्यवृत्तः ।

व्यतिष्ठत प्रेक्ष्य ततो नियोगे
स्थितं सुमन्त्रं प्रतिहारमिष्टं ।। २८ ।।

इत्यार्षे रामायणे अयोध्याकाण्डे उदासीनवाक्यं नाम
त्रयस्त्रिंशः सर्गः ।।

## XXXIV.

प्रागथानागते रामे सभार्ये सहलक्ष्मणे ।
तदन्तरमतीवार्तो विललापाकुलो नृपः ॥ १ ॥
कृतानार्ये ममामित्रे सकामा भव कैकयि ।
मृते मयि गते रामे वनं मनुजकुञ्जरे ॥ २ ॥
त्यजामि भरतं त्वां च जीवितं चेदमात्मनः ।
प्रशाधि विधवा राज्यं निर्घृणे निरपत्रपे ॥ ३ ॥
अहं हि हीनो रामेण त्यक्त्वा जीवितमात्मनः ।
न भविष्यामि ते पापे भूयोऽप्येव वशानुगः ॥ ४ ॥
केन मन्त्रयसे मूढे कं समन्वयसेऽशुभं ।
मम जीवितनाशाय कस्येदं मतमीदृशं ॥ ५ ॥
अरण्यं भजतां रामो भरतश्चाभिषिच्यतां ।
इति कस्य मतं पापं मोघाशस्य दुरात्मनः ॥ ६ ॥
बालो ह्यसौ कथं राज्यं भरतः कारयिष्यति ।
ज्येष्ठे तिष्ठति राज्यार्हे रामे राजीवलोचने ॥ ७ ॥
अज्ञाता कालरात्रीव भार्यारूपेण कैकयि ।
कथं त्वं क्षीणपुण्येन मयोढा मन्दबुद्धिना ॥ ८ ॥
व्याली घोरविषेव त्वं मयाबुद्ध्या निषेविता ।
यया दष्टो विमोक्ष्येऽहं प्राणैरिष्टैः सुतेन च ॥ ९ ॥

स्त्रीणां धिगस्त्वनार्याणां कृतघ्नीनां विशेषतः ।
त्यजन्ति वशगान् भर्तॄन् या लुब्धा धनकाङ्क्षया ॥ १० ॥
निर्घृणे निरनुक्रोशे कीदृशं हृदयं तव ।
शरणागतं याचमानं यन्मां त्वं त्यक्तुमिच्छसि ॥ ११ ॥
माभून्नृशंसे ते लोकः परोऽप्येष सुखावहः ।
यन्मां प्रियेण पुत्रेण वियोजयसि दुःखितं ॥ १२ ॥
उचितः शिविकायानं रथयानं च मे सुतः ।
कान्तारवनदुर्गानि कथं पद्भ्यां गमिष्यति ॥ १३ ॥
स्वादूनामन्नपानानामुचितोऽयं ममात्मजः ।
सुकुमारो विलासी च मृष्टाभरणभूषितः ॥ १४ ॥
कटुतिक्तकषायाणि मूलानि च फलानि च ।
वल्कलाजिनसंवीतः स कथं भक्षयिष्यति ॥ १५ ॥
अपि रामः स धर्मात्मा ममातिक्रम्य शासनं ।
नेच्छेद्वनमितो गन्तुं न तु वत्सः करिष्यति ॥ १६ ॥
हा शुद्धभव धर्मात्मन् विनीत गुरुवत्सल ।
मयासि पितृमान् पुत्र स्त्रीवश्येनाकृतात्मना ॥ १७ ॥
शीलवृत्तगुणज्येष्ठं प्राणेभ्योऽपि प्रियं सुतं ।
कथं त्यक्तुं गुणारामं रामं मे धीयते मतिः ॥ १८ ॥
नृशंसोऽहमनार्योऽहं सर्वथैव धिगस्तु मां ।
शुश्रूषुं दयितं पुत्रं स्त्रीजितो यस्त्यजाम्यहं ॥ १९ ॥

किं मां वक्ष्यति लोकोऽयं नृशंसं पापकारिणं ।
यः पुत्रं स्त्रीकृते मूढस्त्यजाम्यनपकारिणं ॥ २० ॥
वशिष्ठो वामदेवश्च जाबालिः काश्यपस्तथा ।
किं मां वक्ष्यन्ति श्रुत्वेदं तथान्ये ब्रह्मवादिनः ॥ २१ ॥
विश्वामित्रादयः सिद्धास्तपोवननिवासिनः ।
पृथिव्यां पृथिवीपालाः किं च वक्ष्यन्ति साधवः ॥ २२ ॥
युक्तोऽस्म्ययशसा लोके पतितश्चास्मि सर्वथा ।
कैकेय्यै राज्यलुब्धायायभिसृज्य वरद्वयं ॥ २३ ॥
हा हतोऽस्मि विनष्टोऽस्मि दग्धोऽस्मि चपलेन्द्रियः ।
कैकेय्या वशमापन्नः पापायाः पापमोहितः ॥ २४ ॥
गुरुभिर्ब्रह्मचर्यैश्च कृच्छ्रैर्बाल्येऽतिकर्षितः ।
सुखकालेऽद्य मे पुत्रो दुःखमेवोपभोक्ष्यते ॥ २५ ॥
अनियोज्यैव दुःखेषु रामं राजीवलोचनं ।
तदैव मरणं मे स्याद्यदि पापं न चाप्नुयां ॥ २६ ॥
इति राजा दशरथः पुत्रशोकाकुलेन्द्रियः ।
अनिन्ददात्मनात्मानं सुरां पीत्वेव वेदवित् ॥ २७ ॥
एवं विलपतस्तस्य दुःखार्तस्य महीपतेः ।
उपेत्यावेदयामास सुमन्त्रो राममागतं ॥ २८ ॥

ततः स राजा समुपागतं सुतं
सुमन्त्रतो वेद्य भृशार्तमानसः ।

प्रवेश्यतामाश्विति गद्गदं वचः
सुमन्त्रमुद्वीक्ष्य तदाभ्यधात् प्रभुः ॥ २१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथविलापो नाम
चतुस्त्रिंशः सर्गः ॥

## XXXV.

प्रवेश्यतां राम इति वाक्यमुक्त्वा नराधिपः ।
तीव्रशोकसमाविष्टो भूयो मोहमुपागमत् ॥ १ ॥
मुहूर्तमिव निश्चेष्टो भूत्वा मोहपरायणः ।
प्रतिलेभे ततः संज्ञां सिंहासनगतो नृपः ॥ २ ॥
लब्धसंज्ञं च तं भूयः सुमन्त्रः पृथिवीपतिं ।
उपेत्य प्राञ्जलिर्वाक्यमुवाचेदं सुदुःखितः ॥ ३ ॥
दत्त्वा द्विजेभ्यः स्वधनं भृत्येभ्यश्चोपजीवनं ।
स्वरश्मिभिरिवादित्यः ख्यातो लोके गुणांशुभिः ॥ ४ ॥
आज्ञां ते शिरसादाय वनं गन्तुं कृतक्षणः ।
लक्ष्मणेन सह भ्रात्रा सीतया च नराधिप ॥ ५ ॥
द्रष्टुं तेऽभ्यागतः पादौ तं पश्य यदि मन्यसे ।
इति राजा सुमन्त्रस्य श्रुत्वा वचनमब्रवीत् ॥ ६ ॥
आकाश इव शुद्धात्मा निःश्वस्योष्णं सुदुःखितः ।
सुमन्त्रानय मे क्षिप्रं यावन्त इह मामकाः ॥ ७ ॥
दाराः परिवृतस्तैर्हि द्रष्टुमिच्छामि राघवं ।
इत्युक्तोऽन्तः पुरं गत्वा सुमन्त्रो वाक्यमब्रवीत् ॥ ८ ॥
आर्याः क्रन्दति वो राजा मा चिरं तत्र गम्यतां ।
एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण त्वरान्विताः ॥ ९ ॥

## अयोध्याकाण्डं

तत्राजग्मुर्नृपं द्रष्टुं भर्तुराज्ञाय शासनं ।
अर्धसप्तशता नार्यो रूपवत्यः स्वलंकृताः ॥ १० ॥
उपेयुस्ताः पतिं द्रष्टुं कैकेय्या सहितं तदा ।
समवेक्ष्यागतान् दारानशेषेण ततो नृपः ॥ ११ ॥
सुमन्त्रानय मे क्षिप्रं पुत्रमित्यभ्यभाषत ।
ततः सुमन्त्रस्त्वरितो रामं लक्ष्मणमेव च ॥ १२ ॥
प्रवेशयामास गृहं राज्ञस्तां चापि मैथिलीं ।
दृष्ट्वैव च तमायान्तं दूराद्रामं कृताञ्जलिं ॥ १३ ॥
उत्पपातासनादार्तो राजा स्त्रीजनसंवृतः ।
आगच्छ पुत्र रामेति परिष्वक्तुमुपागतः ॥ १४ ॥
अप्राप्यैव च संभ्रान्तः पपात नृपतिः सुतं ।
सीदन्तं तं समभ्येत्य रामः संभ्रान्तमानसः ॥ १५ ॥
अप्राप्तमेव धरणीं परिगृह्यार्तमानसः ।
शनैरुत्थाप्य संमूढं तस्मिन्नेवासने पुनः ॥ १६ ॥
लक्ष्मणेन सह भ्रात्रा सीतया चान्ववेशयत् ।
व्यजनेनोपवेश्यैनं वीजयामास मूर्छितं ॥ १७ ॥
ततः स्त्रीणां महानादः संजज्ञे राजवेश्मनि ।
मुहूर्तादिव तं रामो लब्धसंज्ञं महीपतिं ॥ १८ ॥
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतं ।
आपृच्छे त्वां महाराज ईश्वरोऽसि हि नः प्रभो ॥ १९ ॥

प्रस्थितं वनवासाय संपश्य कुशलेन मां ।
लक्ष्मणं चानुजानीहि वैदेहीं च महीपते ॥ २० ॥
निवर्त्यमानावपि हि न निवृत्ताविमौ मया ।
अतो नो वनवासाय गमने कृतनिश्चयान् ॥ २१ ॥
लक्ष्मणं मां च सीतां च समनुज्ञातुमर्हसि ।
अनुज्ञाकाङ्क्षिणं राममिति ज्ञात्वा महीपतिः ॥ २२ ॥
उवाच प्रेक्ष्य दीनात्मा वाष्पपर्याकुलेक्षणः ।
वरप्रदानात् कैकेय्याः पुराहं राम वञ्चितः ॥ २३ ॥
तस्मान्निगृह्य मां मूढं राजा भवितुमर्हसि ।
एवमुक्तो नृपतिना रामो धर्मभृतां वरः ॥ २४ ॥
पितरं प्रणिपत्येदं प्रत्युवाच कृताञ्जलिः ।
भवान् पिता गुरुश्चैव राजा भर्ता प्रभुश्च मे ॥ २५ ॥
दैवतं पूजनीयश्च गरीयान् धर्म एव च ।
भवन्नियोगे स्थातव्यं मया राजन् प्रसीद मे ॥ २६ ॥
न निवर्तयितव्योऽहं भव सत्यप्रतिश्रवः ।
राजा वर्षसहस्रायुर्भवानेवास्तु नः प्रभुः ॥ २७ ॥
यथा त्वया प्रतिज्ञातं कैकेय्यास्तत् तथा कुरु ।
त्वां च कृत्वाहमनृतं राज्यमिच्छेयमित्युत ॥ २८ ॥
त्रैलोक्यस्यापि कृत्स्नस्य न स कालो भविष्यति ।
श्रुत्वा तु वचनं रामात् सत्यपाशसितो नृपः ॥ २९ ॥

उवाच करुणं वाक्यं बाष्पगद्गदया गिरा ।
निश्चितं यदि ते राम मत्प्रियार्थमितो वनं ॥ ३० ॥
गन्तुं पुरादितः पुत्र ततो गच्छ मया सह ।
न हि त्वया विरहितो राम जीवितुमुत्सहे ॥ ३१ ॥
त्वया मया विरहिते राज्ञास्तु भरतः पुरे ।
इति ब्रुवाणं नृपतिं रामो वचनमब्रवीत् ॥ ३२ ॥
नार्हसि त्वमितो गन्तुं मया सह वनं प्रभो ।
नानुवृत्तिस्त्वया कार्या मम राजन् कथञ्चन ॥ ३३ ॥
प्रसीद तात धर्मेण योक्तुमर्हति नो भवान् ।
सत्यप्रतिज्ञमात्मानं कर्तुमर्हसि मानद ॥ ३४ ॥
स्वधर्मं स्मारयामि त्वां राजन् नोपदिशामि ते ।
स्वधर्मतोऽद्य मत्स्नेहान्न त्वं चलितुमर्हसि ॥ ३५ ॥
एवमुक्तो दशरथो रामं वचनमब्रवीत् ।
कीर्तिमायुर्बलं शौर्यं धर्मं चाप्नुहि शाश्वतं ॥ ३६ ॥
यशसो वृद्धये भूयः पुनरागमनाय च ।
अरिष्टं गच्छ पन्थानं मत्सत्यं परिपालयन् ॥ ३७ ॥
इमां तु रजनीमेकामिह त्वं वस्तुमर्हसि ।
अद्य भुक्त्वा मया सार्धं भोगानिष्टान् धनानि च ॥ ३८ ॥
समाश्वास्य सुदुःखार्तां मातरं च गमिष्यसि ।
इति रामो वचः श्रुत्वा पितुरार्तस्य धीमतः ॥ ३९ ॥

उवाच प्राञ्जलिर्भूत्वा राजानं शोकविह्वलं ।
समुत्सृज्य सुखं भूयो नानुवर्तितुमुत्सहे ॥ ४० ॥
यानद्य भोगान् प्राप्स्यामि को मे श्वस्तान् प्रदास्यति ।
तस्माद्गमनमेवाहं वृणोमि न निवर्तनं ॥ ४१ ॥
धनरत्नाचिता भूमिरियं सद्रव्यसंचया ।
सहस्त्यश्वरथग्रामा भरताय प्रदीयतां ॥ ४२ ॥
त्यजेयं दयितान् प्राणानिष्टान् भोगान् धनानि च ।
भवन्तमनृतं कर्तुं न विच्छेयं कथञ्चन ॥ ४३ ॥
अपगच्छतु ते दुःखं नृपते मद्वियोगजं ।
क्षुभ्यन्ति त्वद्विधा नैव साधवः सागरोपमाः ॥ ४४ ॥
न राज्यप्राप्तिमिच्छामि न सुखानि महीपते ।
त्वत्प्रतिज्ञातमिच्छामि कर्तुं सत्यं प्रशाधि मां ॥ ४५ ॥
अनुजानीहि मां शीघ्रं वनवासकृतोद्यमं ।
अनुग्रहं परं मन्ये त्वत्सत्यपरिपालनं ॥ ४६ ॥

इयं सराष्ट्रा सपुरा च मेदिनी
मया निसृष्टा भरताय दीयतां ।
अहं च सत्यं भवतोऽनुपालयन्
वनं गमिष्यामि तपो निषेवितुं ॥ ४७ ॥
मयाभिसृष्टां भरतो महीमिमां
सगण्डशैलां सपुरीं सकाननां ।

शिवां सुसीमामनुशास्तु वीर्यवांम्
त्वया यदुक्तं नृपते तथास्तु तत् ॥४८॥
तथा न मे पार्थिव धीयते मनो
महत्स्वपि प्रीतिसुखेषु वर्तितुं ।
यथा निदेशे तव शिष्टसंमते
व्यपैतु दुःखं तव मद्वियोगजं ॥४९॥
इदं हि नैवानघ राज्यमव्ययं
न चापि भोगान् न सुखानि कामये ।
न जीवितं त्वामनृतेन योजयन्
वृणोमि राजन् सुकृतेन ते शपे ॥५०॥
फलानि मूलानि च भक्षयन् वने
गिरींश्च पश्यन् सरितः सरांसि च ।
वने निवत्स्यामि सुखी गतज्वरो
व्यपैतु दुःखं तव मद्वियोगजं ॥५१॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथाश्वासनं नाम
पञ्चत्रिंशः सर्गः ॥

## XXXVI.

ततः सुमन्त्रं नृपतिः पीडितः स्वप्रतिज्ञया ।
दीर्घमुष्णं च निःश्वस्य शशासाहूय मन्त्रिणं ॥ १ ॥
चतुरङ्गबलं भूरि शस्त्रावरणसंवृतं ।
राघवस्यानुयात्रार्थं क्षिप्रमेवोपकल्प्यतां ॥ २ ॥
रूपयौवनशालिन्यो विलासिन्यो महाधनाः ।
अनुयान्तु कुमारस्य रत्यर्थं रुचिराननाः ॥ ३ ॥
सुहृदो येऽनुरक्ताश्च रामं राजीवलोचनं ।
ते चैनमनुगच्छन्तु संविभक्ता महाधनैः ॥ ४ ॥
कोषाध्यक्षाश्च मे सर्वे कोषमादाय सर्वशः ।
गच्छन्तमनुगच्छन्तु रामं राजीवलोचनं ॥ ५ ॥
मृगयां विहरन् भोगान् भुञ्जानश्चाप्यभीप्सितान् ।
वनेष्वपि वसन् रामो भोक्ता राज्यसुखानि वै ॥ ६ ॥
यावन्मे विभवः कश्चिद्यावदस्त्युपजीवनं ।
अशेषेणैव तत् सर्वं राममेवानुगच्छतु ॥ ७ ॥
ददन् दानानि तीर्थेषु विसृजंश्च धनानि वै ।
रामोऽयं वनवासेऽपि राज्यधर्मं समश्नुतां ॥ ८ ॥
भरतोऽप्युद्धृतधनामयोध्यां पालयत्विमां ।
सर्वकामैः पुनः श्रीमान् रामः संसिध्यतां वने ॥ ९ ॥

ब्रुवत्येवं दशरथे कैकेयीं भयमस्पृशत् ।
आस्यं शुशोष चैवास्याः स्वरश्चैव व्यमिद्यत ॥ १० ॥
सा विवर्णमुखी दीना ततो राजानमब्रवीत् ।
संरम्भामर्षताम्राक्षी क्रोधसंरक्तलोचना ॥ ११ ॥
हृतसारमिदं राज्यं पीतमण्डां यथा सुरां ।
दत्वाप्यश्रद्धया मे त्वं भविष्यस्यनृती नृप ॥ १२ ॥
एवं नृशंसया भूयो वाक्शरैरभिताडितः ।
कैकेय्या दुःखितो राजा तामिदं वाक्यमब्रवीत् ॥ १३ ॥
वहन्तं मां धुरं गुर्वीमसह्यां साधुगर्हिते ।
नृशंसे किन्नु तुदसि वाक्प्रतोदैः पुनः पुनः ॥ १४ ॥
एवं ब्रुवन्तं राजानं कैकेयी पुनरब्रवीत् ।
पापस्वभाववचनं परुषं घोरनिश्चया ॥ १५ ॥
तवैव पूर्वः सगरो ज्येष्ठं पुत्रं किलात्यजत् ।
असमञ्जसमव्यग्रस्तथा त्वं राघवं त्यज ॥ १६ ॥
एवमुक्तो धिगित्युक्त्वा राजा दशरथस्तदा ।
दध्यौ व्रीडान्वितः किञ्चित् शिरः संकम्पयन्निव ॥ १७ ॥
ततो वृद्धो महामात्यः सिद्धार्थो नाम विश्रुतः ।
भृशं बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥
पुरासमञ्जसं देवि सगरः पृथिवीपतिः ।
हेतुना त्यक्तवान् येन ब्रुवतस्तन्निबोध मे ॥ १९ ॥

असमञ्जाः किलादाय पौराणां दारकान् गले ।
शरय्वा अप्सु चिक्षेप दौःशील्यादिति नः श्रुतं ॥ २० ॥
तेन विप्रकृताः क्रुद्धाः पौरा राजानमब्रुवन् ।
असमञ्जसमेकं वा त्यजास्मान् वा महीपते ॥ २१ ॥
तानुवाच ततो राजा किं कारणमिति प्रभुः ।
तं तदा रुषिताः पौरास्तत्र राजानमब्रुवन् ॥ २२ ॥
पुत्रस्तवैष दौःशील्यादस्माकं किल दारकान् ।
गले क्रोशत आदाय शरय्वां क्षिपति स्वयं ॥ २३ ॥
इति तेषां वचः श्रुत्वा पौराणां सगरो नृपः ।
तत्याज पतितं पुत्रं तेषां वै प्रियकाम्यया ॥ २४ ॥
अनीतमेवं नृपतिः सगरस्त्यक्तवान् सुतं ।
गुणवन्तं सुतं राजा रामं त्यक्ष्यत्ययं कथं ॥ २५ ॥
इति सिद्धार्थवचनं श्रुत्वा दशरथो नृपः ।
शोकव्याकुलया वाचा कैकेयीमिदमब्रवीत् ॥ २६ ॥

अनुव्रजामि स्वयमेव रामं
राज्यं परित्यज्य सुखानि चैव ।
त्वमप्यनार्ये भरतेन सार्धम्
एतत् सुखं भुङ्क्ष्व चिराय राष्ट्रं ॥ २७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सिद्धार्थवाक्यं नाम
षट्त्रिंशः सर्गः ॥

# अयोध्याकाण्डं

## XXXVII.

कैकेय्या वचनं श्रुत्वा पितुर्दशरथस्य च ।
अन्वभाषत धर्मात्मा रामस्तत्र महायशाः ॥ १ ॥
त्यक्तसर्वस्वभोगस्य वन्याहारनिषेविणः ।
अनुयात्रेण मे राजन् किं कार्यं विजने वने ॥ २ ॥
यो हि हित्वा द्विपश्रेष्ठं गजकक्षां वहेन्नृप ।
किं कार्यं कक्षया तस्य त्यजतः कुञ्जरोत्तमं ॥ ३ ॥
तथा मम विमुक्तस्य ध्वजिन्या किं प्रयोजनं ।
सर्वमेवानुजानामि चीराण्येव तु केवलं ॥ ४ ॥
खनित्रपिटके चोभे सशिक्ये वरये नृप ।
चतुर्दश च वर्षाणि वने वत्स्यामि निर्जने ॥ ५ ॥
अथ चीराणि कैकेयी स्वयमाहृत्य राघवं ।
उवाच परिधत्स्वेति निर्लज्जा जनसंसदि ॥ ६ ॥
प्रतिगृह्य च ते चीरे कैकेय्या हस्ततस्ततः ।
विहाय वाससी सूक्ष्मे रामः परिदधे स्वयं ॥ ७ ॥
अन्वेवं लक्ष्मणश्चापि विहाय वसने शुभे ।
चीरे परिदधे वीरस्तथैव पितुरग्रतः ॥ ८ ॥
अथात्मपरिधानाय पीतकौशेयवासिनी ।
दृष्ट्वा समुद्यते चीरे कैकेय्या जनकात्मजा ॥ ९ ॥

लज्जमाना स्थिता पार्श्वे रामस्य शुभदर्शना ।
जग्राह भृशमुद्विग्ना मृगी दृष्ट्वेव वागुरां ॥ १० ॥
परिगृह्य च ते चीरे सीता सास्राविलेक्षणा ।
गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् ॥ ११ ॥
आर्यपुत्र कथं चीरमहं बध्नामि शंस मे ।
इत्युक्ता चीरमेकं सा स्वस्मिन् स्कन्धे समासृजत् ॥ १२ ॥
द्वितीयं च परीदध्यौ चीरमादाय मैथिली ।
चीरस्याकुशला देवी सम्यग्निवसने शुभा ॥ १३ ॥
तां चीरवसनां दृष्ट्वा भर्तृनाथामनाथवत् ।
प्रचुक्रुशुः स्त्रियः सर्वा धिग्धिगित्येव चाब्रुवन् ॥ १४ ॥
तं धिकशब्दं नृपः श्रुत्वा स्वस्त्रीभिः समुदाहृतं ।
चिच्छेद जीवितश्रद्धां सुखश्रद्धां च दुःखितः ॥ १५ ॥
निःश्वस्योष्णं स इक्ष्वाकुर्भार्यां तामिदमब्रवीत् ।
रामस्यैकस्य गमने वरं याचितवत्यसि ॥ १६ ॥
न सौमित्रेर्न जानक्या नृशंसे दुष्टचारिणि ।
किमर्थमनयोश्चीरे ददास्यशुभदर्शने ॥ १७ ॥
पापे पापसमाचारे नृशंसे कुलपांसने ।
कैकेयि कुशचीरे नो सीता वसितुमर्हति ॥ १८ ॥
न नु पर्याप्तमेतावत् पापे रामविवासनं ।
किं ते भूय इदं कर्तुं मतिर्निरयगामिनि ॥ १९ ॥

इति ब्रुवाणं पितरं रामः संप्रस्थितो वनं ।
अवाक्शिराः समासीनमिदं वचनमब्रवीत् ॥ २० ॥
इयं धर्मज्ञ कौशल्या मम माता तपस्विनी ।
वृद्धा चाक्षुद्रशीला च सुभृशं त्वामनुव्रता ॥ २१ ॥
मद्वियोगाद्भृशं राजन् निमग्ना शोकसागरे ।
अनुग्रहार्थं कृपणा त्वत्तोऽवेक्षणमर्हति ॥ २२ ॥
यथा न दुःखितेयं स्यात् त्वया नाथेन नाथिनी ।
मदपेक्षया तथा राजन् सदेमां द्रष्टुमर्हसि ॥ २३ ॥
इमां महेन्द्रोपम जातदुःखिताम्
अवेक्षितुं त्वं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्षिता
न जीवहीना यमसादनं व्रजेत् ॥ २४ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे चीरपरिग्रहो नाम
सप्तत्रिंश सर्गः ॥

## XXXVIII.

मुनिवेशधरं रामं दृष्ट्वैवं वादिनं नृपः ।
भार्याभिः सह सर्वाभिः शुशोच प्ररुरोद च ॥ १ ॥
न चैनं शोकदुःखार्तः शशाकाभिनिरीक्षितुं ।
न चाभिभाषितुं राजा शशाकैनं त्रपान्वितः ॥ २ ॥
स मुहूर्तमिव ध्यात्वा दुःखामीलितलोचनः ।
विललापातुरो राजा कृतान्तबलमोहितः ॥ ३ ॥
नूनं मया कृताः पूर्वं विपुत्राः पुत्रवत्सलाः ।
यथा पुत्र वियुज्येऽहं त्वयातिकृपणोऽवशः ॥ ४ ॥
अकाले देहिनां मृत्युस्तात नूनं न विद्यते ।
वियुज्यमानो यन्मृत्युं नाधिगच्छाम्यहं त्वया ॥ ५ ॥
लोककान्तं प्रियं पुत्रं कुशचीराम्बरं वनं ।
प्रस्थितं पश्यतो मेऽद्य हृदयं किं न दीर्यते ॥ ६ ॥
यत्र पुत्र मया काले लालनीयोऽसि सर्वथा ।
दुःखे महति तत्र त्वां योजयामि धिगस्तु मां ॥ ७ ॥
एकस्याः खलु कैकेय्याः कृतोऽयं दुःखितो जनः ।
इत्युक्त्वा निपपातोर्व्यां राजा मूर्छां जगाम च ॥ ८ ॥
संज्ञां च प्रतिलभ्याथ मुहूर्तात् स महीपतिः ।
अश्रुपूर्णेक्षणो वाक्यं सुमन्त्रमिदमब्रवीत् ॥ ९ ॥

युक्त्वा रथं मदीयं त्वं शीघ्रमानय वाजिभिः ।
तेन प्रापय मे पुत्रं वनं मुनिजनप्रियं ॥ १० ॥
इति राज्ञा समाज्ञप्तः सुमन्त्रस्त्वरयान्वितः ।
आजगाम रथं राज्ञो युक्त्वा परमवाजिभिः ॥ ११ ॥
उपनीय च तं युक्तं रथं रत्नविभूषितं ।
राज्ञे निवेदयामास रथोऽयं युक्त इत्युत ॥ १२ ॥
कोषाध्यक्षमथाहूय स्वममात्यं नराधिपः ।
उवाचेदं वचो धर्म्यं शोकव्याकुलिताक्षरं ॥ १३ ॥
वासांसि त्वं महार्हाणि भूषणानि वराणि च ।
वर्षाण्येतानि संख्याय वैदेह्यै प्रतिपादय ॥ १४ ॥
इति राज्ञा समादिष्टो गत्वा कोषगृहं तु सः ।
प्रायच्छच्छीघ्रमादाय वैदेह्यै सर्वमेव तत् ॥ १५ ॥
ततो निवासयामास तानि वासांसि मैथिली ।
भूषयामास चात्मानं भूषणैस्तैर्वरानना ॥ १६ ॥
ततो विराजयामास सा तद्वेश्म विभूषिता ।
विमलेव प्रभा सौरी विभ्रष्टतिमिरं नभः ॥ १७ ॥
तां भूषितां परिष्वज्य श्वश्रूर्वचनमब्रवीत् ।
स्नेहान्मूर्धन्युपाघ्राय सीतां दुहितरं यथा ॥ १८ ॥
सत्कृता लालिताश्चैव वैदेहि प्राकृताः स्त्रियः ।
दरिद्रमवमन्यन्ते भर्तारं न तु सत्स्त्रियः ॥ १९ ॥

तत्त्वया नावमन्तव्यो भर्ता पुत्रि धनच्युतः ।
दैवतं हि पतिः स्त्रीणां सधनो निर्धनोऽपि वा ॥ २० ॥
इति श्वश्र्वा समादिष्टा सीता भर्तृपरायणा ।
कृताञ्जलिः स्थिता प्रह्वा कौशल्यामिदमब्रवीत् ॥ २१ ॥
आर्ये करिष्येऽभ्यधिकं शासनं ते यथात्थ मां ।
अभिज्ञा ह्यस्मि सत्स्त्रीणां धर्माचारस्य सर्वशः ॥ २२ ॥
पृथग्जनसमामार्ये न मां त्वं कर्तुमर्हसि ।
धर्माद्विचलितुं नालमहं सूर्यादिव प्रभा ॥ २३ ॥
नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ।
नापतिः सुखमाप्नोति नारी यद्यपि सुप्रजा ॥ २४ ॥
मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य हि दातैकः सुखस्यार्ये पतिः स्त्रियाः ॥ २५ ॥
साहं सुखानां सर्वेषां दातारं दैवतं पतिं ।
कथमार्येऽवमन्येऽहं यथान्याः प्राकृताः स्त्रियः ॥ २६ ॥
भर्तुः प्रियनिमित्तं हि त्यजेयमपि जीवितं ।
पाणिप्रदानसमयात् प्रभृत्येवं व्रतं मम ॥ २७ ॥
देवतानामहं नूनमनुग्राह्यास्मि साम्प्रतं ।
यन्मे प्रकृतिकल्याणीं बुद्धिं वर्धयसे पुनः ॥ २८ ॥
इति सीतावचः श्रुत्वा धर्म्यं हृदयनन्दनं ।
शुद्धसत्त्वा मुमोचाश्रु कौशल्या दुःखहर्षजं ॥ २९ ॥

परिष्वज्य च कौशल्या तां वधूं जनकात्मजां ।
उवाच परमप्रीता गद्गद्ग्रथिताक्षरं ॥३०॥
अनाश्चर्यमिदं पुत्रि वचनं तव मैथिलि ।
या त्वं विदार्य वसुधां शुभं सस्यमिवोत्थिता ॥३१॥
जनकस्य नरेन्द्रस्य मैथिलस्य महात्मनः ।
यशसश्च गुणानां च सदृशी त्वं विभूषणं ॥३२॥
अहं यशस्या धन्या च यस्यास्त्वं समुपस्थिता ।
गुणज्ञा च कृतज्ञा च धर्मज्ञा च यशस्विनी ॥३३॥
निर्वृताहं भविष्यामि त्वया सह वनं गते ।
रामे राजीवताम्राक्षे साकेतं पुनरागते ॥३४॥
वनेषु खलु ते पुत्रि भाव्यमस्याप्रमत्तया ।
लक्ष्मणस्य च वीरस्य त्वद्भक्तस्य विशेषतः ॥३५॥
एवं संदिश्य सीतां तु प्रशस्य च यशस्विनीं ।
मूर्ध्न्युपाघ्राय सस्नेहं कौशल्या राममब्रवीत् ॥३६॥
नित्यं राघव सीताया भवितव्यं समीपतः ।
लक्ष्मणस्य च वीरस्य त्वयि भक्तस्य मानद ॥३७॥
कर्तव्यश्चाप्रमादस्ते वने प्रचुरपादपे ।
तां तु प्राञ्जलिरभ्येत्य मातृमध्ये व्यवस्थितः ॥३८॥
रामः स धर्म्यं धर्मज्ञो मातरं वाक्यमब्रवीत् ।
अम्ब सीतां समाश्रित्य त्वं हि मामनुशास्सि किं ॥३९॥

लक्ष्मणो दक्षिणो बाहुश्छायेव मम मैथिली ।
न हि हातुं मया शक्या कीर्तिरात्मवता यथा ॥ ४० ॥
गृहीतशरचापस्य कुतोऽस्ति हि भयं मम ।
अपि त्रयाणां लोकानामीश्वराद्वा शतक्रतोः ॥ ४१ ॥
अम्ब मा दुःखिता भूस्त्वं शुश्रूष पितरं मम ।
क्षयोऽस्य वनवासस्य भविष्यति शिवेन मे ॥ ४२ ॥
अस्य राज्ञः प्रसादेन वर्षाण्येतानि मे शुभे ।
सुखेनैव गमिष्यन्ति यथैकदिवसं तथा ॥ ४३ ॥
स्वस्तिमन्तमरोगं मां पुनरभ्यागतं वनात् ।
स्वैरेव सुकृतैर्देवि ध्रुवं द्रक्ष्यसि मा शुचः ॥ ४४ ॥
एतावदभिनीतार्थमुक्त्वा स जननीं वचः ।
ददर्शोत्पत्य मातॄणामर्धसप्तशतानि सः ॥ ४५ ॥
समुपेत्य च मातॄस्ताः कृताञ्जलिरिदं वचः ।
उवाच रामो धर्मात्मा प्रश्रयावनतस्तदा ॥ ४६ ॥
संवासात् पुरुषः कश्चिद्विश्वासाद्वापराध्यति ।
ततोऽपराधः क्षन्तव्यः सर्वा आमन्त्रयामि वः ॥ ४७ ॥
अज्ञानाद्वा प्रमादाद्वा मया वो यदि किञ्चन ।
अपराद्धं तदद्याहं सर्वशः क्षमयामि वः ॥ ४८ ॥
अथ जज्ञे महांस्तत्र तासां नृपतियोषितां ।
क्रौञ्चीनामिव संक्रन्द एवं ब्रुवति राघवे ॥ ४९ ॥

मुरजपणववेणुनादितं
दशरथवेश्म बभूव यत् पुरा ।
विलपितपरिवेदितस्वनैर्
व्यसनभवैस्तदभूद्विनादितं ॥५०॥

इत्यार्षे रामायणे अयोध्याकाण्डे सीतासमादेशो नाम
अष्टात्रिंशः सर्गः ॥

## XXXIX.

कृताञ्जलिस्ततो रामो लक्ष्मणश्च महायशाः ।
वैदेही चैव राजानं परिजग्मुः प्रदक्षिणं ॥ १ ॥
कृत्वा प्रदक्षिणं चैव प्रणिपत्यानुमान्य च ।
रामः शोकपरिग्लानां जननीमभ्यवादयत् ॥ २ ॥
ततो मातुः सुमित्रायाः पादौ जग्राह लक्ष्मणः ।
तं वन्दमानं चरणौ सुमित्रा पुत्रमब्रवीत् ॥ ३ ॥
स्नेहान्मूर्धन्युपाघ्राय परिरभ्य च पीडितं ।
अरिष्टं गच्छ पन्थानं सह रामेण लक्ष्मण ॥ ४ ॥
शुश्रूष भ्रातरं ज्येष्ठं रामं लोकहिते रतं ।
सत्पुत्रेण त्वया वत्स तारिताहं सबान्धवा ॥ ५ ॥
यस्त्वं त्यक्त्वा प्रियान् दारान् मां च राममनुव्रतः ।
समस्थो विषमस्थो वा रामस्ते परमा गतिः ॥ ६ ॥
प्राणेभ्योऽपि प्रियतरो ज्येष्ठो भ्राता गुरुश्च ते ।
तस्मादस्य प्रयत्नैस्त्वं शरीरं प्रतिपालय ॥ ७ ॥
विजने वसतोऽरण्ये सीतया सहितस्य च ।
एष पुत्र सतां धर्मो यत्त्वमिच्छसि सेवितुं ॥ ८ ॥
तस्मात्त्वया तत्परेण शुश्रूष्योऽयं गुणाकरः ।
भ्राता ज्येष्ठोऽप्रमत्तेन रामो राजीवलोचनः ॥ ९ ॥

त्वया पुत्र वने सेव्यः परिपाल्यश्च सर्वथा ।
उचितं वः कुले वत्स ज्येष्ठभ्रात्रनुपालनं ॥ १० ॥
दानं दीक्षा तपश्चैव तनुत्यागो मृधेषु च ।
रामं दशरथं विद्धि मां विद्धि जनकात्मजां ॥ ११ ॥
अयोध्यामटवीं विद्धि गच्छ वत्स यथासुखं ।
इत्युक्त्वा लक्ष्मणं पुत्रं सुमित्रा राममब्रवीत् ॥ १२ ॥
त्वयापि राम रक्ष्योऽयं लक्ष्मणः शत्रुकर्षणः ।
भक्तोऽनुरक्तोऽनुगतो भ्राता भृत्यः सुहृच्च ते ॥ १३ ॥
त्वयायं सर्वथा रक्ष्यस्त्वं चैवानेन राघव ।
एवमस्त्विति रामस्तां सुमित्रामभ्यभाषत ॥ १४ ॥
चक्रे कृताञ्जलिश्चैनामभिवाद्य प्रदक्षिणं ।
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १५ ॥
विनीतवदुपागम्य मातलिर्वासवं यथा ।
राजपुत्र नमस्तेऽस्तु युक्तोऽयं ते महारथः ॥ १६ ॥
अनेन त्वां नयिष्यामि यत्र ते गन्तुमीहितं ।
चतुर्दश च वर्षाणि वस्तव्यानि त्वया वने ॥ १७ ॥
राज्यार्थिन्या पिता तेऽयं कैकेय्या यानि याचितः ।
सुमन्त्रवचनं श्रुत्वा ततो रामः सलक्ष्मणः ॥ १८ ॥
सीतया चापि सहित आरुरोह रथोत्तमं ।
तथैवायुधजातानि तूणांश्च कवचानि च ॥ १९ ॥

रथोपस्थे प्रतिन्यस्य खनित्रं पिठकं च तत् ।
ततः कठिनमारोप्य सुमन्त्रो रामशासनात् ॥ २० ॥
तानारोप्य ततः पश्चादात्मनाप्यारुरोह सः
तान् स्त्रीतृतीयानारूढान् दृष्ट्वा क्लिष्टेन चेतसा ॥ २१ ॥
चोदयामास तानश्वान् सुमन्त्रो राघवाज्ञया ।
तस्मिन् प्रयाते सहसा वनवासाय राघवे ॥ २२ ॥
हा राम इति विक्रुष्टं जनौघेन समन्ततः ।
आर्तनारीनरगणं तत् संभ्रान्तजनाकुलं ॥ २३ ॥
पुरमासीदतोवार्तं रामप्रव्राजने तदा ।
सवृद्धबाला हि पुरी शोकसंतापविह्वला ॥ २४ ॥
राममेवाभिदुद्राव घर्मार्ताः सलिलं यथा ।
तदोचुरनुगच्छन्तो बाह्वनुद्धृत्य दुःखिताः ॥ २५ ॥
संयच्छ वाजिनः सूत शनैर्याहीति वादिनः ।
रामस्य द्रष्टुमिच्छामो मुखचन्द्रं महात्मनः ॥ २६ ॥
मनांसि नो हरत्येष सर्वेषां नरचन्द्रमाः ।
पश्यामस्तावदेवैनं द्रक्ष्यामो हि कदा पुनः ॥ २७ ॥
प्रस्थितो दूरमध्वानं नाथो नो धर्मवत्सलः ।
कदैनं वनकान्ताराद्द्रक्ष्यामः पुनरागतं ॥ २८ ॥
आयसं हृदयं नूनं राममातुः सुसंहतं ।
यन्न दीर्णं प्रिये पुत्रे वनवासाय निर्गते ॥ २९ ॥

एकैव कृतपुण्येयं वैदेही तनुमध्यमा ।
यानुगच्छति गच्छन्तं छायेवानुगता पतिं ॥ ३० ॥
त्वं च लक्ष्मण सिद्धार्थः कृतपुण्यश्च यः प्रियं ।
भक्त्यानुगच्छसि ज्येष्ठं भ्रातरं धर्मवत्सलं ॥ ३१ ॥
एषा ते महती सिद्धिरेष चाभ्युदयो महान् ।
एष स्वर्गस्य पन्थास्ते यद्राममनुगच्छसि ॥ ३२ ॥
एवं ब्रुवन्तस्ते पौरा बाष्पवेगमुपागतं ।
यदा न शेकुः संसोढुं दुःखार्ता रुरुदुस्तदा ॥ ३३ ॥
क्व नु गच्छसि दुःखार्तानस्मानुत्सृज्य राघव ।
नयास्मानपि यत्र त्वं गन्तुं राम समुद्यतः ॥ ३४ ॥
अथ राजा वृतः स्त्रीभिर्विह्वलो दीनमानसः ।
निर्जगाम प्रियं पुत्रं द्रष्टुमिच्छुः स्वयं गृहात् ॥ ३५ ॥
क्रन्दन्तीनां नृपस्त्रीणां शुश्रुवे तत्र निस्वनः ।
करेणूनामिवाक्रन्दो बद्धे यूथपतौ वने ॥ ३६ ॥
स च राजा दशरथो गतश्रीर्न बभौ तदा ।
विरश्मिः पर्वणीवेन्दुर्ग्रहेणोपहतद्युतिः ॥ ३७ ॥
ततो हा हेति करुणः शब्दः समभवन्महान् ।
दुःखितं प्रेक्ष्य राजानं सदारं निर्गतं गृहात् ॥ ३८ ॥
हा रामेति नराः केचिद्धा राजन्निति चापरे ।
क्रोशन्तो नृपतिं तत्र परिवव्रुः समन्ततः ॥ ३९ ॥

समवेन्त्य ततो रामः पितरं शोककर्षितं ।
पदातिमनुगच्छन्तं दारैः परिवृतं तदा ॥ ४० ॥
देव्या कौशल्यया सार्धं विलपन्तं पदे पदे ।
धर्मपाशसितो दीनो नाशक्नोदभिवीक्षितुं ॥ ४१ ॥
पदातौ तावदुःखार्हौ दृष्ट्वा दुःखसमन्वितौ ।
पितरौ चोदयामास रामो याहीति सारथिं ॥ ४२ ॥
न हि तद्दर्शनं रामस्तयोर्दुःखपरीतयोः ।
शशाक पित्रोः संसोढुं तोत्त्रार्दित इव द्विपः ॥ ४३ ॥
हा पुत्र राम हा सीते हा हा लक्ष्मण पश्य मां ।
इति राजा च देवी च क्रोशन्तावभ्यधावतां ॥ ४४ ॥
उत्क्षिप्य बाहू करुणं क्रोशन्तीं कुररीमिव ।
अपश्यत् स तदा रामो नृत्यन्तीमिव मातरं ॥ ४५ ॥
तिष्ठ तिष्ठेति चुक्रोश राजा याहीति राघवः ।
सुमन्त्रस्याभवत् तत्र गां च खं चान्तरा स्थितिः ॥ ४६ ॥
नाश्रौषमिति राजानं सूत वक्ष्यसि संगमे ।
चिरं दुःखस्य पापीय इति रामस्तमब्रवीत् ॥ ४७ ॥
स रामस्य मतं बुद्ध्वा सुमन्त्रो दीनमानसः ।
अञ्जलिं नृपतेः कृत्वा चोदयामास तान् हयान् ॥ ४८ ॥
शीघ्रं प्रजविनैरश्वैः प्रयान्तमथ राघवं ।
यदा न शेकुरन्वेतुं पौराणां तास्ततः स्त्रियः ॥ ४९ ॥

न्यवर्तन्त सुदुःखार्ता निराशा रामदर्शनात् ।
मनोभिस्त्वश्रुवेगैश्च न न्यवर्तन्त सर्वशः ॥५०॥
यमिच्छेच्च पुनर्द्रष्टुं न तं दूरमनुव्रजेत् ।
वशिष्ठप्रमुखा विप्रा इत्यूचुस्तं नृपं तदा ॥५१॥
तेषां तदा तद्वचनं निशम्य
राजा गुरूणां विनिगृह्य वाष्पं ।
तस्थौ प्रयान्तं सुतमीक्षमाणो
विषादशोकव्यथितान्तरात्मा ॥५२॥

इत्यार्षे रामायणे अयोध्याकाण्ड रामनिर्याणं नाम
एकोनचत्वारिंशः सर्गः ॥

## XL.

तस्मिन् प्रयाते त्वरितं वनं रामे कृताञ्जलौ ।
आर्तशब्दो हि संजज्ञे स्त्रीणामन्तःपुरे तदा ॥ १ ॥
अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ।
यो गतिः शरणं चासीत् स नाथः कुत्र गच्छति ॥ २ ॥
न यः क्रुध्यति शप्तोऽपि क्रोधनीयानि वर्जयन् ।
क्रुद्धान् प्रसादयन् सर्वान् स रामः क्व नु गच्छति ॥ ३ ॥
कौशल्यायां महातेजा यथा मातरि वर्तते ।
तथा यो वर्ततेऽस्मासु स महात्मा क्व गच्छति ॥ ४ ॥
कैकेय्या क्लिश्यमानानां राज्ञा च कुपितेन यः ।
परित्राता च गोप्ता च रक्षिता च क्व गच्छति ॥ ५ ॥
अबुद्धिर्बत किं राजा विपरीतमतिर्नु किं ।
यो नाथं सर्वभूतानां परित्यजति राघवं ॥ ६ ॥
इति राजमहिष्यस्ता विवत्सा इव धेनवः ।
चुक्रुशुश्चैव दुःखार्ताः स्तुवत्यो रुरुदुश्च तं ॥ ७ ॥
स तमन्तःपुरे नादं श्रुत्वा तासां महीपतिः ।
पुत्रशोकाग्निसंतप्तः ससाद गतचेतनः ॥ ८ ॥
नाग्निहोत्राणि हूयन्ते तमः सूर्यं समावृणोत् ।
तत्यजुः कवलं नागा जहुर्वत्सांश्च धेनवः ॥ ९ ॥

वृहस्पतिबुधार्केन्दुशन्यङ्गारकभार्गवाः ।
दारुणाः समवर्तन्त ग्रहाः सर्वे प्रदक्षिणाः ॥१०॥
नक्षत्राणि हतार्चींषि ग्रहाश्चोपहतत्विषः ।
विशिखाश्च सधूमाश्च नाग्नयः प्रचकाशिरे ॥११॥
अकालानिलवेगेन महोदधिरिवोत्थितः ।
रामे वनं प्रव्रजिते नगरं प्रचचाल च ॥१२॥
दिशः पर्याकुलीभूतास्तिमिरेण समावृताः ।
नागरश्च जनः सर्वो दुःखशोकपरायणः ॥१३॥
आहारे वा विहारे वा न कश्चिदकरोन्मनः ।
वाष्पपर्याकुलमुखो राजमार्गगतो जनः ॥१४॥
न हृष्टो लक्ष्यते कश्चित् सर्वः शोकपरायणः ।
न ववौ पवनः शीतो न तताप दिवाकरः ॥१५॥
न रराज शशी चापि सर्वमासीत् समाकुलं ।
नाचिन्तयत् सुतान् कश्चिन्न च भर्तृंस्तथा स्त्रियः ॥१६॥
न कान्तं कामिनी काचिन्न च कामी वराङ्गनां ।
नाससाद रतिं कश्चिच्छोकसंविग्नमानसः ॥१७॥
सर्वं सर्वः परित्यज्य राममेवान्वचिन्तयत् ।
ये च रामस्य सुहृदस्ते सर्वे मूढचेतसः ॥१८॥
शोकभारसमाक्रान्ता न जहुः शयनं तदा ।
गर्हयन्तश्च कैकेयीं निन्दन्तश्चापि भूमिपं ।

आत्मभाग्यान्यसूयन्तः परं दैन्यमुपागताः ॥ १९ ॥

तथा त्वयोध्या रहिता महात्मना
पुरंदरेणेव तदामरावती ।
चचाल सर्वा भयभारपीडिता
सनागयोधाश्वनरा समाकुला ॥ २० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे पुरजनविलापो नाम
चत्वारिंशः सर्गः ॥

## XLI.

यावत् तु गच्छतस्तस्य राजा रूपमपश्यत ।
नैवेक्ष्वाकुवरस्तावत् संजहारात्मचक्षुषी ॥ १ ॥
यावद्राजा प्रियं पुत्रं पश्यति स्म स चक्षुषा ।
उत्ससर्ज महीतावत् तदा दूरमिवान्तरं ॥ २ ॥
यावद्राजा प्रियं पुत्रमपश्यत् तं तु धार्मिकं ।
तावत् प्रावर्तता तस्य चक्षुषी पश्यतः सुतं ॥ ३ ॥
नापश्यच्च रज्ञोऽप्यस्य यदा रामस्य भूमिपः ।
तदार्तः स विवर्णश्च धरण्यां निपपात ह ॥ ४ ॥
तस्य दक्षिणमन्वङ्गं कौशल्याभवदाकुला ।
वामं च सान्वगादङ्गं कैकयी भरतप्रिया ॥ ५ ॥
तां नयेन च संपन्नो धर्मेण विनयेन च ।
उवाच राजा कैकेयीं समीक्ष्य पापनिश्चयां ॥ ६ ॥
कैकेयि मा ममाङ्गानि स्प्राक्षीस्त्वं दुष्टचारिणि ।
न हि त्वां द्रष्टुमिच्छामि न भार्या मम संमता ॥ ७ ॥
ये च त्वामनुजीवन्ति नाहं तेषां न ते मम ।
केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहं ॥ ८ ॥
अगृह्णां यच्च ते पाणिमग्निपर्युक्षणं च यत् ।
अनुजानामि तत् सर्वमिह लोके परत्र च ॥ ९ ॥

भरतश्चेत् प्रतीतः स्याद्राज्यं प्राप्येदमीदृशं ।
प्रेतार्थं यत् स मे दद्यान्मा मां तत् समुपागमत् ॥ १० ॥
अथ रेणुपरिध्वस्तं तमुत्थाप्य महीपतिं ।
न्यवर्तयत् तदा देवी कौशल्या शोककर्षिता ॥ ११ ॥
हत्वेव ब्राह्मणं राजा पदा स्पृष्ट्वेव वापि गां ।
अन्वतप्यत धर्मात्मा पुत्रं संस्मृत्य तापसं ॥ १२ ॥
तन्निवर्त्य निवर्त्यास्य सीदतो रथवर्त्मनि ।
राज्ञस्तत्र बभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १३ ॥
विललाप च दुःखार्तः प्रियं पुत्रमनुस्मरन् ।
नगरीं तामनुप्राप्य जगन्नाथोऽप्यनाथवत् ॥ १४ ॥
इमानि हयमुख्यानां वहतां तं ममात्मजं ।
पदानि भुवि दृश्यन्ते स महात्मा न दृश्यते ॥ १५ ॥
स नूनं किञ्चिदेवाद्य वृक्षमूलमुपाश्रितः ।
काष्ठं वा यदिवाश्मानमुपधाय शयिष्यते ॥ १६ ॥
उत्थास्यति च मेदिन्याः कृपणः पांशुगुण्ठितः ।
विनिःश्वसन् प्रस्रवणात् करेणूनामिवर्षभः ॥ १७ ॥
द्रक्ष्यन्ति चैव पुरुषा दीर्घबाहुं वने चराः ।
राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥
सकामा भव कैकेयि विधवा राज्यमाविश ।
न ह्यहं पुरुषव्याघ्रादृते जीवितुमुत्सहे ॥ १९ ॥

इत्यसौ विलपन् राजा जनौघेनाभिसंवृतः ।
अपस्नात इवाक्रन्दन् प्रविवेश पुरीं तदा ॥ २० ॥
शून्यचत्वरवेश्मान्तां संवृतापणवीथिकां ।
जनैरत्यन्तदुःखार्तैर्व्रात्याकीर्णमहापथां ॥ २१ ॥
तं संपश्यन् जनं सर्वं रामं सर्वात्मना गतं ।
विलपन् प्राविशद्राजा गृहं सूर्य इवाम्बुदं ॥ २२ ॥
तद्भ्रदं गरुडेनेव समालोक्य हृतोरगं ।
रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २३ ॥
इदं प्रोवाच वचनं राजा शोकसमन्वितः ।
कौशल्याया गृहं शीघ्रं राममातुर्नयन्तु मां ॥ २४ ॥
इति ब्रुवन्तं राजानमनयन् द्वारदर्शिनः ।
तस्य तत्र प्रविष्टस्य कौशल्याया निवेशनं ॥ २५ ॥
अधिरुह्याथ शयनं बभूवाकुलितं मनः ।
तत्र स्म राजा शोकार्तो भुजावुद्यम्य दुःखितः ॥ २६ ॥
उच्चैश्चुक्रोश करुणं हा राघव जहासि मां ।
सुखिनः खलु तं कालं जीविष्यन्ति नरोत्तमाः ॥ २७ ॥
प्रतिश्रवान्ते ये रामं द्रक्ष्यन्ति पुनरागतं ।
न त्वां पश्यामि कौशल्ये पाणिना साधि मां स्पृश ।
रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते ॥ २८ ॥
तं राममेवानुविचिन्तयन्तं

समीक्ष्य देवी शयने नरेन्द्रं ।
अथोपविश्याधिकमार्तरूपा
विनिःश्वसन्ती विललाप कृच्छ्रं ॥ २९ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथविलापो नाम
एकचत्वारिंशः सर्गः ॥

# अयोध्याकाण्डं

## XLII.

ततः समीक्ष्य शयने सन्नं शोकेन कर्षितं ।
कौशल्या पुत्रशोकार्ता तमुवाच महीपतिं ॥ १ ॥
राघवे नृपशार्दूल विषं मुक्त्वा द्विजिह्ववत् ।
विहरिष्यति कैकेयी सुखं प्राप्तमनोरथा ॥ २ ॥
विवास्य रामं सुभगा लब्धकामा मनस्विनी ।
त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥
अथास्मिन् नगरे रामश्चरन् भैक्ष्यं गृहे वसेत् ।
कामकारादलं दातुमपि वासं ममात्मजं ॥ ४ ॥
पातितः स तु कैकेय्या स्थानादिष्टाग्र्यथेष्टतः ।
प्रदिष्टो रक्षसां भागः पर्वणीवाहिताग्निना ॥ ५ ॥
गजराजगतिर्वीरो महाबाहुर्महाधनुः ।
विशत्यरण्यं नूनं स सभार्यः सहलक्ष्मणः ॥ ६ ॥
वनेषु दृष्टदुःखानां कैकेय्या वचनात् त्वया ।
त्यक्तानां वनवासाय का न्ववस्था भविष्यति ॥ ७ ॥
ते भोगहीनास्तरुणाः फलकाले विवासिताः ।
वने वत्स्यन्ति कृपणा मम वत्साः सुखोचिताः ॥ ८ ॥
गजैर्यथा विभग्नस्य या शाखा संस्थिता तरोः ।
अकृत्वा फलनिष्पत्तिं सापि दग्धा दवाग्निना ॥ ९ ॥

अपीदानीं स कालः स्यान्मम शोकक्षये शिवः ।
सभार्यं सहितं भ्रात्रा पश्येयं यत्र तं सुतं ॥१०॥
कदायोध्यां महाबाहुः पुरीं रामः प्रवेक्ष्यति ।
पुरस्कृत्य रथे सीतां वृषभो गोकुलमिव ॥११॥
अवेक्षोपस्थितं रामं कदायोध्या भविष्यति ।
तरस्विनी हृष्टजना पताकाध्वजमालिनी ॥१२॥
कदा प्रेक्ष्य नरव्याघ्रमरण्यात् पुनरागतं ।
नन्दिष्यति पुरी रम्या समुद्र इव पर्वणि ॥१३॥
कदा प्राणिसहस्राणि राघवौ पुनरागतौ ।
लाजैरवाकरिष्यन्ति प्रविशन्तावरिंदमौ ॥१४॥
कदा परिणतो बुद्ध्या वयसा चामरप्रभः ।
अभ्युपैष्यति धर्मज्ञः स वत्स इव मां ललन् ॥१५॥
कदा सुमनसः कन्या द्विजांश्चैव फलानि च ।
प्रविशन्तौ पुरीं हृष्टौ करिष्येते प्रदक्षिणं ॥१६॥
निःसंशयं मया मन्ये पूर्वजन्मनि मूढया ।
पातुकामेषु वत्सेषु मातॄणां पातिताः स्तनाः ॥१७॥
साहं गौरिव वत्सेन विवत्सा वत्सला सती ।
कैकेय्या पुरुषव्याघ्र बालवत्सा बलात् कृता ॥१८॥
तमहं सद्गुणैर्युक्तं सर्वशास्त्रविशारदं ।
एकपुत्रा विना पुत्रं जीवितुं नोत्सहे चिरं ॥१९॥

न हि मे जीविते किञ्चित् सामर्थ्यमिह कल्प्यते ।
अपश्यन्त्याः प्रियं पुत्रं लोककान्तं महाभुजं ॥ २० ॥

अयं हि मां तापयते सुदारुणम्
तनूजशोकप्रभवो हुताशनः ।
महीरुहं रश्मिभिरुत्तमं प्रभो
यथा निदाघे भगवान् दिवाकरः ॥ २१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्याविलापो
नाम द्वाचत्वारिंशः सर्गः ॥

## XLIII.

अनुरक्ता महात्मानं रामं सत्यपराक्रमं ।
अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः ॥ १ ॥
निवर्तितेऽप्यतिबले सुहृद्वर्गेण राजनि ।
न ते स्म संनिवर्तन्ते रामस्यानुगताः पथि ॥ २ ॥
अयोध्यानिलयानां हि जनानां स महायशाः ।
बभूव गुणसंपन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥
याच्यमानोऽपि काकुत्स्थः स्वाभिः प्रकृतिभिर्वशी ।
कुर्वाणः पितरं सत्यं वनमेवाभ्यवर्तत ॥ ४ ॥
अवेक्षमाणः स स्नेहं चक्षुषा स पिबन्निव ।
उवाच रामो धर्मात्मा ताः प्रजाः स्वा इव प्रजाः ॥ ५ ॥
या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनां ।
मत्प्रियार्थमशेषेण भरते सा निवेश्यतां ॥ ६ ॥
स हि कल्याणचारित्रः कैकेय्या नन्दिवर्धनः ।
करिष्यति यथाहं वः प्रियाणि च हितानि च ॥ ७ ॥
ज्ञानविज्ञानविनयैर्वृद्धः शीलगुणान्वितः ।
अनुरूपः स वो भर्ता भविष्यति सुखावहः ॥ ८ ॥
स हि राजगुणैर्युक्तो युवराजः परीक्षितः ।
अविचार्य सदा तथ्यं कार्यं वो भर्तृशासनं ॥ ९ ॥

ज्ञानवृद्धो वयोबालो मृदुर्वीर्यसमन्वितः ।
प्रगल्भः प्रियवादी च नित्यं बन्धुजनप्रियः ॥ १० ॥
संतप्येत यथा नासौ वनवासं गते मयि ।
महाराजस्तथा कार्यं मम प्रियचिकीर्षुभिः ॥ ११ ॥
यथा यथा दाशरथिर्धर्ममेवमकीर्तयत् ।
तथा तथा प्रकृतयो राममेवानुवव्रिरे ॥ १२ ॥
बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह ।
संचकर्ष गुणैर्बद्ध्वा पौरजानपदं जनं ॥ १३ ॥
तथा द्विजातयः शीलवयोरूपगुणान्विताः ।
तपसा दीपितात्मानो वयसा यशसौजसा ॥ १४ ॥
वयःप्रकम्पशिरसो दूराद्दूचुरिदं वचः ।
वहन्तो जवना रामं भो भो जात्यास्तुरंगमाः ॥ १५ ॥
न गन्तव्यं न गन्तव्यं हिता भवत भर्तरि ।
कर्णवन्ति हि भूतानि विशेषेण तुरंगमाः ॥ १६ ॥
उपवाह्यो हि नो भर्ता नापवाह्यः पुराद्वनं ।
निवर्तध्वं न गन्तव्यं भर्तुरेतद्धि वो हितं ॥ १७ ॥
एवमार्तप्रलापांस्तान् ब्राह्मणानां निशम्य च ।
अवेक्ष्य सहसा रामो रथादवततार सः ॥ १८ ॥
पद्भ्यामेव जगामाथ ससीतः सहलक्ष्मणः ।
संनिकृष्टपदन्यासो रामो वनपरायणः ॥ १९ ॥

द्विजातीन् हि पदातींस्तान् रामश्चारित्रवत्सलः ।
न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ २० ॥
गच्छन्तमेवं तं दृष्ट्वा वनं संभ्रान्तमानसाः ।
ऊचुः परमसंत्रस्ता रामं वाक्यमिदं द्विजाः ॥ २१ ॥
अयं ब्राह्मणसंघस्तु गच्छन्तमनुगच्छति ।
द्विजस्कन्धाधिरूढास्त्वामग्नयोऽप्यनुयान्ति हि ॥ २२ ॥
वाजपेयसमुत्थानि छत्राण्येतानि पश्य नः ।
पृष्ठतोऽनुप्रयातानि हंसानामिव पङ्क्तयः ॥ २३ ॥
अनवाप्तातपत्रस्य रश्मिसंतापितस्य ते ।
एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयिकैः ॥ २४ ॥
या हि नः सततं बुद्धिर्वेदतत्त्वानुसारिणी ।
त्वत्कृते सा कृता बुद्धिर्वनवासानुसारिणी ॥ २५ ॥
हृदयेषु हि तिष्ठन्ति वेदा ये नः परं धनं ।
ते यास्यन्ति वनान्येव त्वद्वाक्यबलरक्षिताः ॥ २६ ॥
न पुनर्निश्चयः कार्यस्त्वत्कृते निश्चिता वयं ।
निवत्स्यन्ति गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ २७ ॥
त्वयि धर्मव्यपेक्षे तु न्याय्यं धर्मं व्यपेक्षितुं ।
यदि धर्मं विजानासि प्रजानां रक्षणोद्भवं ॥ २८ ॥
ब्राह्मणा माननीयास्ते प्रजानां हितकाम्यया ।
याचितोऽसि निवर्तस्व हंसशुक्लशिरोरुहैः ॥ २९ ॥

शिरोभिर्विनयाचारमहीपतनपांशुलैः ।
बहूनां वितता यज्ञा द्विजानां य इहागताः ॥ ३० ॥
तेषां समाप्तिरापन्ना तव राम निवर्तने ।
भक्तिमन्ति हि भूतानि जङ्गमाजङ्गमानि च ॥ ३१ ॥
यावन्ति त्वां भृशार्तानि तेषां कुरु दयां विभो ।
याचमानेषु तेषु त्वं भक्तिं भक्तेषु दर्शय ॥ ३२ ॥
अनुगन्तुमशक्तास्त्वां मूलैरुर्वीनिबन्धनैः ।
ऊर्ध्वशाखाः सकरुणा विक्रोशन्तीव पादपाः ॥ ३३ ॥
निवृत्ताहारसंचारा वृक्षस्कन्धेषु विष्ठिताः ।
त्वामप्रगल्भैर्विरुतैर्याचन्त इव पक्षिणः ॥ ३४ ॥
विक्रोशतामेवमपि द्विजानां न न्यवर्तत ।
तूष्णीमिव ययौ वाग्मी रामः सौमित्रिणा सह ॥ ३५ ॥
गच्छन्नेवाथ सहसा राघवो धर्मवत्सलः ।
ददर्श तमसां तत्र वारयन्तीमिवाग्रतः ॥ ३६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे ब्राह्मणविलापो
नाम त्रिचत्वारिंशः सर्गः ॥

## XLIV.

ततः स तमसातीरे वासमुद्दिश्य राघवः ।
नदीमुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥
प्रथमेयं निशा सौम्य सौमित्रे पर्युपस्थिता ।
वनवासस्य भद्रं ते त्वं नोत्कण्ठितुमर्हसि ॥ २ ॥
पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः ।
यथा निलयसंलीनैर्हीनानि मृगपक्षिभिः ॥ ३ ॥
अयोध्या सौम्य नगरी राजधानी पितुर्मम ।
सबालवृद्धा नियतमस्मान् शोचति लक्ष्मण ॥ ४ ॥
अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः ।
त्वां च मां च महाबाहो शत्रुघ्नभरतौ तथा ॥ ५ ॥
पितरं त्वनुशोचामि मातरं च तपस्विनीं ।
अपि नान्धौ भवेतां तौ रुदन्तावतिमात्रतः ॥ ६ ॥
भरतः खलु धर्मात्मा पितरं मातरं च मे ।
धर्मकामार्थसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥
भरतस्यानृशंस्यं हि संचिन्त्याहं पुनः पुनः ।
नानुशोचामि पितरं मातरं चापि लक्ष्मण ॥ ८ ॥
त्वयार्यत्वं नरव्याघ्र मामनुव्रजता कृतं ।
ईप्सितव्या हि वैदेह्या रक्षणार्थे सहायता ॥ ९ ॥

अद्भिरेव तु सौमित्रे वसामोऽत्र निशामिमां ।
एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥ १० ॥
एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः ।
अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥
सोऽश्वान् सुमन्त्रः संयम्य सूर्येऽस्तं समुपागते ।
प्रभूतं यवसं दत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥
उपास्य तु शिवां संध्यां दृष्ट्वा रात्रिमुपास्थितां ।
रामस्य शय्यां चक्रे वै सूतः सौमित्रिणा सह ॥ १३ ॥
तां शय्यां तमसातीरे वृक्षपर्णैः कृतां तदा ।
रामः सौमित्रिमामन्त्र्य सभार्यः संविवेश ह ॥ १४ ॥
सभार्यं संप्रसुप्तं तु भ्रातरं वीक्ष्य लक्ष्मणः ।
कथयामास सूताय रामस्य विदितान् गुणान् ॥ १५ ॥
गोकुलाकुलतीर्थं तु तमसातीरमाश्रितः ।
अवसत् तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १६ ॥
जाग्रतोरेव सा रात्रिः सारथेर्लक्ष्मणस्य च ।
जगाम तमसातीरे रामस्य ब्रुवतोर्गुणान् ॥ १७ ॥
उत्थायाथार्धरात्रे तु प्रजाः सुप्ता निशम्य च ।
अब्रवीद्भ्रातरं रामो लक्ष्मणं शुभलक्षणं ॥ १८ ॥
अस्मद्व्यपेक्षया भ्रातर्निरपेक्षान् गृहेष्विमान् ।
वृक्षमूलेषु संसुप्तान् पश्य पौरान् गृहेष्विव ॥ १९ ॥

यथैते निश्चिताः सर्वे यतन्तेऽस्मन्निवर्तने ।
त्यक्ष्यन्ति हि तथा देहान् मत्कृते नात्र संशयः ॥ २० ॥
यावदेव तु संसुप्तास्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पथानेन तपोवनं ॥ २१ ॥
इति भूयोऽपि नेदानीमिक्ष्वाकुपुरवासिनः ।
अपेयुरनुरक्ता मे वृक्षमूलान्युपाश्रिताः ॥ २२ ॥
पौरा ह्यनुगता दुःखाद्धिप्रमोच्या नराधिपैः ।
न तु खल्वात्मना योज्या दुःखेन पुरवासिनः ॥ २३ ॥
अथाह लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितं ।
रोचते मे महाप्राज्ञ क्षिप्रमारुह्यतामिति ॥ २४ ॥
सूतमाह ततो रामस्त्वरितस्तुरगोत्तमैः ।
उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥ २५ ॥
मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः ।
यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ २६ ॥
रामस्य वचनं श्रुत्वा तथा चक्रे स सारथिः ।
प्रत्यागम्य च रामाय स्यन्दनं प्रत्यवेदयत् ॥ २७ ॥
तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः ।
शीघ्रं तामाकुलावर्तामतरत् तमसानदीं ॥ २८ ॥
संतीर्य च महाबाहुः श्रीमच्छिवमकण्टकं ।
प्रपेदे तमसामार्गमभयं क्षेमदर्शनं ॥ २९ ॥

प्रबुध्य पौरास्तु ततो निशात्यये
रथस्य वै संददृशुर्निवर्तनं ।
नृपात्मजः सोऽनुगतः पुरीमिति
व्यपेक्षया ते नगरीं पुनर्ययुः ॥ ३० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे तमसातीरनिवासो
नाम चतुश्चत्वारिंशः सर्गः ॥

## XLV.

अनुगम्य निवृत्तानां रामं नगरवासिनां ।
उद्भ्रान्तानीव सत्वानि बभूवुर्गतचेतसां ॥ १ ॥
स्वं स्वं शरणमागम्य पुत्रदारैः समावृताः ।
अश्रूणि मुमुचुः सर्वे सुस्वरं शोकविह्वलाः ॥ २ ॥
न स्म सद्यो मृतान् कश्चित् सुप्रियानपि बान्धवान् ।
तथा शोचत्ययोध्यायां यथा रामविवासने ॥ ३ ॥
न पौराश्चाविशन् केचिन्न जुहुवुर्द्विजातयः ।
ब्रह्म न प्रावदत् कश्चिन्न च धर्मोऽभ्यवर्तत ॥ ४ ॥
व्यनदन् वाष्पमुत्सृज्य केचित् तत्र सुदुःखिताः ।
शयनेष्वपतंश्चान्ये निकृत्ता इव पादपाः ॥ ५ ॥
न प्राहृष्यन् न चामज्जन् बणिजो नाप्रसारयन् ।
न चाशोभन्त पण्यानि नायजन् गृहमेधिनः ॥ ६ ॥
लब्धं दृष्ट्वा न चाहृष्यन् विपुलं वा धनागमं ।
न चाभ्यनन्दज्जननी दृष्ट्वा प्रथमजं सुतं ॥ ७ ॥
कुले कुले रुदत्यश्च भर्तारं गृहमागतं ।
व्यगर्हयन्त दुःखार्ता वाग्भिस्तोत्त्रैरिव द्विपान् ॥ ८ ॥
किन्नु तेषां गृहैः कार्यं दारैरपि धनेन वा ।
प्राणैर्वापि सुखैर्वापि ये न पश्यन्ति राघवं ॥ ९ ॥

एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया ।
योऽनुगच्छति काकुत्स्थं रामं परिचरन् वने ॥१०॥
आपगाः कृतपुण्यास्ताः पद्मिन्यश्च वने शुभाः ।
यासु पास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥११॥
विचित्रकुसुमापीडा मञ्जरीमधुधारिणः ।
पादपाः पर्वताग्रस्था रमयिष्यन्ति राघवं ॥१२॥
अकाले ह्यपि मुख्यानि मूलानि च फलानि च ।
दर्शयिष्यन्ति सानूनि गिरीणां राममागतं ॥१३॥
काननं वापि शैलं वा यं रामोऽभिगमिष्यति ।
प्रियातिथिमिव प्राप्तं नैनं शक्ष्यति नार्चितुं ॥१४॥
लोभयिष्यन्ति काकुत्स्थमटव्यश्चित्रकाननाः ।
आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥१५॥
स हि भर्ता सशैलाया वसुमत्या महायशाः ।
धर्मपालश्च लोकस्य वीरो दशरथात्मजः ॥१६॥
यत्र रामोऽभयं तत्र नास्ति तत्र पराभवः ।
स हि नाथोऽस्य जगतः स गतिः स परायणं ॥१७॥
पुराद्व्रजति नो दूरादनुगच्छाम राघवं ।
पादच्छायां गतास्तस्य निवत्स्यामोऽकुतोभयाः ॥१८॥
वयं परिचरिष्यामः सीतां यूयं च राघवं ।
इति पौरस्त्रियो भर्तॄन् दुःखार्तास्तास्तदाब्रुवन् ॥१९॥

युष्माकं राघवो नाथो योगक्षेमं करिष्यति ।
सीता नारीजनस्यास्य योगक्षेमं करिष्यति ॥ २० ॥
यत्र रामो न तत्रास्ति भयं न च पराभवः ।
स हि शूरो महाबाहुः पुत्रो दशरथस्य वै ॥ २१ ॥
को ह्यनेनाप्रतीतेन वासेनोद्विग्नचेतसा ।
संप्रीयेतामनोज्ञेन सूत्कण्ठितजनेन च ॥ २२ ॥
कैकेय्याश्चेदिदं राज्यं स्यादधर्ममनाथवत् ।
नात्र नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥ २३ ॥
या पुत्रं पार्थिवेन्द्रस्य प्रव्राजयति निर्घृणा ।
इच्छेद्यदि महाराजस्तं राज्ये चाभिषेचितुं ॥ २४ ॥
न हि जातु चिरं जीवेद्राजा परमदुःखितः ।
गते दशरथे स्वर्गमधर्मः प्रतिपत्स्यते ॥ २५ ॥
यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात् ।
कथं सा रक्षितुं शक्ता कैकेयी कुलपांसनी ॥ २६ ॥
कैकेय्या न वयं राज्ये भृता अपि वसेम वै ।
जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥ २७ ॥
न हि प्रव्रजिते रामे जीविष्यति महीपतिः ।
मृते दशरथे व्यक्तं विलोपस्तदनन्तरं ॥ २८ ॥
मिथ्या प्रव्रजितो रामः सीता लक्ष्मण एव च ।
भरतायाभिसृष्टाः स्म योत्राय पशवो यथा ॥ २९ ॥

राघवं चानुगच्छध्वं प्रणाशं वापि गच्छत ।
विषं वापि वतालोड्य क्षीणपुण्याश्च दुर्गताः ॥ ३० ॥
अनुगच्छत वा रामं प्रणाशं वापि गच्छत ।
विलेपुरेवमार्तास्ता नगरे नागरस्त्रियः ॥ ३१ ॥

तथा स्त्रियो रामनिमित्तमातुरा
यथा सुते भ्रातरि वा निपातिते ।
विलप्य दीना रुरुदुर्विचेतनास्
तासां सुतेभ्योऽप्यधिको हि राघवः ॥ ३२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे नागरस्त्रीविलापो
नाम पञ्चचत्वारिंशः सर्गः ॥

## XLVI.

रामोऽपि रात्रिशेषेण तेनैव महदन्तरं ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥
तथैव गच्छतस्तस्य प्रभाता रजनी शुभा ।
उपास्याथ शिवां संध्यां प्रययौ राघवः पुनः ॥ २ ॥
तं स्यन्दनमधिष्ठाय सभार्यः सपरिच्छदः ।
श्रीमतीमाकुलावर्तामतरत् तां महानदीं ॥ ३ ॥
तामुत्तीर्य महाबाहुः श्रीमच्छिवमकण्टकं ।
प्रपेदे स महामार्गमनुरूपं शिवं शुभं ॥ ४ ॥
ग्रामान् सुकृष्टसीमांश्च पुष्पितानि वनानि च ।
पश्यन्नपि ययौ शीघ्रं श्येनैरिव हयोत्तमैः ॥ ५ ॥
शृण्वन् वाचो मनुष्याणां ग्रामसंवासिनां तदा ।
राजानं धिग्दशरथं कामस्य वशवर्तिनं ॥ ६ ॥
धिङ्नृशंसां च कैकेयीं पापां पापानुवर्तिनीं ।
तीक्ष्णां संभिन्नमर्यादां क्रूरकर्मानुसारिणीं ॥ ७ ॥
या पुत्रमीदृशं राज्ञो विवासयति धार्मिकं ।
अरण्याय महात्मानं सानुक्रोशमतन्द्रितं ॥ ८ ॥
एता वाचो मनुष्याणां शृण्वन्नधनि राघवः ।
अचिरेणाभ्यगाद्धीरः कोशलान् कोशलेश्वरः ॥ ९ ॥

ततो वेदश्रुतिं नाम शिवावर्तां महानदीं ।
उत्तीर्याभिमुखः प्रायादगस्त्याध्युषितां दिशं ॥१०॥
गत्वा च सुचिरं कालं ततः शीतजलां नदीं ।
गोमतीं गोकुलाकीर्णामतरत् स त्वरन्निव ॥११॥
गोमतीं समतिक्रम्य ततः प्रजवितैर्हयैः ।
मयूरहंसाभिरुतां ततार सर्पिकां नदीं ॥१२॥
स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा ।
स्फीतराष्ट्रां च तां रामो वैदेह्यै समदर्शयत् ॥१३॥
सूत इत्येव चाभाष्य सारथिं तमभीक्ष्णशः ।
मत्तहंसस्वनः श्रीमानुवाच पुरुषर्षभः ॥१४॥
कदाहं पुनरागम्य शरय्वाः पुष्पिते वने ।
मृगयां पर्यटिष्यामि पित्रा मात्रा च संगतः ॥१५॥
राजर्षीणां च लोकेऽस्मिन्नभ्यस्या मृगया वने ।
काले वृतानां मनुजैर्धन्विनामभिकाङ्क्षिणां ॥१६॥
अत्यर्थमभिकाङ्क्षामि मृगयां शरयूवने ।
रतिर्ह्येषा सदा लोके राजर्षिगणसेविता ॥१७॥
स तमध्वानमिक्ष्वाकुः सर्वं मधुरजल्पकः ।
तं तमर्थमभिप्रेक्ष्य ययौ वाक्यमुदीरयन् ॥१८॥
यात्वा चामरसंकाशः शीघ्रं शीघ्रपराक्रमः ।
आससाद स सायाह्ने शृङ्गवेरपुरं महत् ॥१९॥

तं बद्धनिस्त्रिंशमुदारसत्त्वं
चीरोत्तरासङ्गधरं युवानं ।
प्रत्युद्ययौ तत्र निषादराजो
गुहः सनीलाम्बुदतुल्यवर्णः ॥ २० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे शृङ्गवेरपुराभिगमनं
नाम षट्चत्वारिंशः सर्गः ॥

# अयोध्याकाण्डं

## XLVII.

ततस्त्रिपथगां तत्र शीततोयामशैवलां ।
ददर्श राघवो दिव्यां सुपुण्यामृषिसेवितां ॥ १ ॥
पवित्रसलिलस्पर्शां हिमवच्छैलसंभवां ।
स्वर्गतोरणनिःश्रेणीं गङ्गां भागीरथीं नदीं ॥ २ ॥
शिशुमारैश्च नक्रैश्च मकरैश्च निषेवितां ।
हंससारससंघैश्च वारणैश्च निषेवितां ॥ ३ ॥
तामूर्मिसलिलावर्तामन्ववेक्ष्य महारथः ।
सुमन्त्रमब्रवीद्रामो निवसाम इहाद्य वै ॥ ४ ॥
अविदूरे ह्ययं नद्या बहुपुष्पप्रबालवान् ।
सुमहानिङ्गुदीवृक्षो वसामोऽत्रैव सारथे ॥ ५ ॥
लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवं ।
उक्त्वा तमिङ्गुदीवृक्षं सुमन्त्रोऽभिययौ हयैः ॥ ६ ॥
रामोऽथ गत्वा तं रम्यं वृक्षमिक्ष्वाकुनन्दनः ।
रथादवातरत् तस्मात् ससीतः सहलक्ष्मणः ॥ ७ ॥
सुमन्त्रोऽथावतीर्यैव मोचयित्वा हयोत्तमान् ।
वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः ॥ ८ ॥

तत्र राजा निषादानां रामस्य दयितः सखा ।
धार्मिकः सत्यवादी च गुहो नाम महाबलः ॥ ९ ॥
स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतं ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाभ्युपागमत् ॥ १० ॥
ततो निषादाधिपतिं दृष्ट्वा दूराडुपस्थितं ।
सह सौमित्रिणा रामः समागच्छद्गुहेन सः ॥ ११ ॥
तमार्तं संपरिष्वज्य गुहो राघवमब्रवीत् ।
यथायोध्या तथेदं ते पुरं किं करवाणि ते ॥ १२ ॥
स शुचीन्यन्नपानानि गुणवन्ति च राघवे ।
अर्घं चोपानयत् क्षिप्रं वाक्यं चेदमुवाच ह ॥ १३ ॥
भक्ष्यं भोज्यं च पेयं च लेह्यं चेदमुपस्थितं ।
शयनानि च मुख्यानि वाजिनां यवसं तथा ॥ १४ ॥
स्वागतं ते महाबाहो तवेयमखिला मही ।
वयं प्रेष्या भवान् भर्ता साधु राम प्रशाधि नः ॥ १५ ॥
आज्ञापय महाबाहो यथेष्टं रघुनन्दन ।
यथा स्वकं तथेदं ते पुरं किं करवाणि ते ॥ १६ ॥
गुहमेवं ब्रुवाणं तु राघवः प्रत्युवाच ह ।
अर्चिता मानिताश्चैव सर्वथा भवता वयं ॥ १७ ॥
पद्भ्यामभिगतं चैनं स्नेहादाघ्राय मूर्धनि ।
भुजाभ्यां साधुवृत्ताभ्यां पीडयन् वाक्यमब्रवीत् ॥ १८ ॥

दिष्ट्येह गुह पश्यामि त्वामरोगं सबान्धवं ।
अपि ते कुशलं राष्ट्रे मित्रेषु च धनेषु च ॥ १९ ॥
यदिदं भवता किञ्चित् प्रीत्यर्थमुपकल्पितं ।
सर्वं तदनुजानामि न हि वर्ते प्रतिग्रहे ॥ २० ॥
कुशचीराम्बरधरं फलमूलाशनं च मां ।
विद्धि प्रणिहितं धर्मे तापसं वनगोचरं ॥ २१ ॥
अश्वानां यवसेनाहमर्थी नान्येन केनचित् ।
एतावताहं भवता भविष्यामि सुपूजितः ॥ २२ ॥
एते हि दयिता राज्ञः पितुर्दशरथस्य मे ।
एतैश्च पूजितैरश्वैर्भविष्याम्यहमर्चितः ॥ २३ ॥
अश्वानां प्रतिपानं च यवसं चैव सोऽन्वशात् ।
गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ॥ २४ ॥
ततश्चीरोत्तरासङ्गः संध्यामन्वास्य पश्चिमां ।
जलमेवाददे रामो लक्ष्मणेनाहृतं स्वयं ॥ २५ ॥
तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः ः
सभार्यस्य ततः पश्चात् तस्थौ वृक्षमुपाश्रितः ॥ २६ ॥
गुहोऽपि सह सूतेन सौमित्रिमनुभाष्य च ।
अन्वजाग्रत् ततो राममप्रमत्तो धनुर्धरः ॥ २७ ॥
तथा शयानस्य तु तस्य धीमतो
यशस्विनो दाशरथेर्महात्मनः ।

अदृष्टदुःखस्य सुखोचितस्य सा
तदा व्यतीयाय सुखेन शर्वरी ॥२८॥

इत्यार्षे रामायणे अयोध्याकाण्डे इङ्गुदीमूलनिवासो
नाम सप्तचत्वारिंशः सर्गः ॥

## XLVIII.

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणं ।
गुहः शोकाभिसंतप्तो वाक्यमेतदुवाच ह ॥ १ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि साध्वस्यां राजपुत्र निशामिमां ॥ २ ॥
उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः ।
गुप्त्यर्थं जागरिष्यामि काकुत्स्थस्य निशामिमां ॥ ३ ॥
न हि रामात् प्रियतरो ममास्ति भुवि मानवः ।
प्रतीहि तदिदं सत्यं वीर सत्येन ते शपे ॥ ४ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिं च महतीमर्थसिद्धिं च पुष्कलां ॥ ५ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः सर्वतो ज्ञातिभिः सह ॥ ६ ॥
न हि नोऽविदितं किञ्चिद्वनेऽस्मिंश्चरतां सदा ।
चतुरङ्गं ह्यपि बलं सुमहत् प्रसहेमहि ॥ ७ ॥
लक्ष्मणस्तमुवाचेदं रक्ष्यमाणास्त्वयानघ ।
नात्र भीता वयं सर्वे जागृमः किन्तु चिन्तया ॥ ८ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ९ ॥

यो न देवासुरैः शक्यः प्रसोढुं सहितैर्युधि ।
तं पश्य गुह संविष्टं तृणेषु सह भार्यया ॥१०॥
यो मात्रा तपसा लब्धो विविधैश्च महाव्रतैः ।
एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥११॥
अस्मिन् प्रव्रजिते राजा न चिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥१२॥
विनद्य सुमहानादं श्रमेणावनताः स्त्रियः ।
मूका इव स्थिता नूनं महाराजनिवेशने ॥१३॥
कौशल्या चापि राजा च तथैव जननी मम ।
नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमां ॥१४॥
जीवेद्धापि हि माता मे शत्रुघ्नस्यान्ववेक्षया ।
एतद्दुःखं हि कौशल्या विवत्सा न सहिष्यति ॥१५॥
अनुरक्तजनाकीर्णा सुखा लोकभयावहा ।
रामव्यसनसंतप्ता पुरी सापि विनङ्क्ष्यति ॥१६॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथं ।
राज्ये राममनिक्षिप्य पिता मे न भविष्यति ॥१७॥
सिद्धार्थः पितरं वृद्धं तस्मिन् काले ह्युपस्थिते ।
प्रेतकार्येषु सर्वेषु सत्करिष्यति राघवः ॥१८॥
रम्यचत्वरसंस्थानां सुविभक्तमहापथां ।
हर्म्यप्रासादसंबाधां गणिकावरशोभितां ॥१९॥

रथाश्वगजसंबाधां तूर्यघोषनिनादितां ।
सर्वकल्याणसंपन्नां हृष्टपुष्टजनाकुलां ॥ २० ॥
आरामोद्यानसंपूर्णां समाजोत्सवशालिनीं ।
सुखिनो विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिनो वयं ।
निवृत्ते वनवासे ऽस्मिन्नयोध्यां प्रविशेमहि ॥ २२ ॥
परिदेवयतश्चैवं दुःखार्तस्य महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ॥ २३ ॥
तथा तु तथ्यं ब्रुवति प्रजाहितं
नरेन्द्रपुत्रे ऽधिकसौहृदाद्गुरुः ।
मुमोच बाष्पं व्यथयाभिपीडितो
जरातुरो नाग इवाभिपीडितः ॥ २४ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सौमित्रिविलापो
नाम अष्टाचत्वारिंशः सर्गः ॥

## XLIX.

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं भ्रातरं शुभं ॥ १ ॥
भास्करोदयकालोऽयं गता भगवती निशा ।
असौ सुकृष्टो विहगः कोकिलस्तात कूजति ॥ २ ॥
बर्हिणां चैव निर्घोषः श्रूयते नदतां वने ।
तरामो जाह्नवीं सौम्य शीघ्रं सागरगामिनीं ॥ ३ ॥
विज्ञाय रामस्य मतं सौमित्रिर्मित्रनन्दनः ।
गुहमामन्त्र्य सूतं च सोऽतिष्ठद्भ्रातुरग्रतः ॥ ४ ॥
ततः कलापौ संनह्य खड्गौ बद्ध्वा च धन्विनौ ।
जग्मतुर्येन गङ्गां वै सीतया सह राघवौ ॥ ५ ॥
राममेव तु धर्मज्ञमभिवीक्ष्य विनीतवत् ।
किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ ६ ॥
निवर्तस्वेत्युवाचैनमेतावद्धि कृतं मम ।
यानेन पद्भ्यामेवाहं गमिष्यामि महावनं ॥ ७ ॥
आत्मानं त्वभ्यनुज्ञातं विज्ञायार्तः स सारथिः ।
सुमन्त्रः पुरुषव्याघ्रमिदं वचनमब्रवीत् ॥ ८ ॥
अतर्कितोऽयं लोकेषु पुरुषेणेह केनचित् ।
तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ ९ ॥

न मन्ये ब्रह्मचर्येऽस्ति प्राधीते वा फलोदयः ।
मार्दवार्जवयोर्वापि त्वां चेद्व्यसनमागमत् ॥१०॥
सह राघव वैदेह्या भ्रात्रा च त्वं वने वसन् ।
गतिं प्राप्स्यस्यरण्येषु त्रीँल्लोकान् विजयन्निव ॥११॥
वयं खलु हता वीर ये त्वया परिवर्जिताः ।
कैकेय्या वशमेष्यामः पापाया दुःखभागिनः ॥१२॥
इति ब्रुवन्नात्मसमः सुमन्त्रः सारथिस्तदा ।
दृष्ट्वा वनगतं रामं रुरोद भृशदुःखितः ॥१३॥
ततो विगतबाष्पं तं दृष्ट्वा स्पृष्टोदकं शुचि ।
रामः सुमधुरं वाक्यं पुनः पुनरुवाच ह ॥१४॥
इक्ष्वाकूणां सुहृदन्यस्त्वया तुल्यो न विद्यते ।
यथा राजा दशरथो मां न शोचेत् तथा कुरु ॥१५॥
दुःखोपहतचेता हि वृद्धश्च जगतीपतिः ।
मद्वियोगाच्च संतप्तस्तस्मादेवं ब्रवीम्यहं ॥१६॥
यद्यदाज्ञापयेत् किञ्चित् स महात्मा महाद्युतिः ।
कैकेय्याः प्रियकामार्थं तत् तत् कार्यमशङ्कया ॥१७॥
एतदर्थं हि राज्यानि प्रशंसन्ति नरेश्वराः ।
यदेषां सर्वकामेषु मनो न प्रतिहन्यते ॥१८॥
तद्यथा स महाराजो नालीकमधिगच्छति ।
न चानुचिन्तयति मां सुमन्त्र कुरु तत् तथा ॥१९॥

सूत मद्वचनाद्गत्वा वशिष्ठं सुतपस्विनं ।
उपाध्यायांश्च संप्राप्य ब्रूयास्त्वमभिवादनं ॥ २० ॥
कैकेयीं च सुमित्रां च याश्चान्या मम मातरः ।
तां चाल्पभाग्यां कौशल्यां यदि जीवति मां विना ॥ २१ ॥
अदृष्टदुःखं राजानं मद्वियोगेन कर्षितं ।
ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २२ ॥
न विषादो न संतापः कर्तव्यो मम कारणात् ।
लक्ष्मणं प्रति वा राजन् वैदेहीं वा नराधिप ॥ २३ ॥
अपि वर्षसहस्राणि तातस्य वचनाद्वयं ।
निवसेम वने रम्ये स्वर्गलोक इवामराः ॥ २४ ॥
व्यसनं हि पितुः पुत्रादन्यः को व्यपनेष्यति ।
अणु वा यदिवा स्थूलं धन्वन्तरिरिव व्रणं ॥ २५ ॥
यस्तु पुत्रो न पुत्रार्थं पितुः कुर्यादतन्द्रितः ।
आत्मानं पावयेन्नासौ द्रव्यवानिव निष्क्रियः ॥ २६ ॥
नरकं वा पतेद्रामो ज्वलितं वा हुताशनं ।
न तु तत् कर्म कुर्वीत येन वाच्यं पितुर्भवेत् ॥ २७ ॥
नैवाहं शोचितव्यस्ते न सीता न च लक्ष्मणः ।
नैवायोध्याच्युताश्चेति वने वत्स्यन्ति चेति च ॥ २८ ॥
चतुर्दशसु वर्षेषु व्यतीतेषु पुनस्ततः ।
लक्ष्मणं मां च सीतां च द्रक्ष्यसि क्षिप्रमागतं ॥ २९ ॥

एवमुक्त्वा महाराजं कौशल्यां मातरं च मे ।
अन्याश्च सहिता देवीः कैकेयीं च पुनः पुनः ॥ ३० ॥
ब्रूयाः सर्वास्त्वमारोग्यमथ पादाभिवादनं ।
सूत मद्वचनादेव सीताया लक्ष्मणस्य च ॥ ३१ ॥
विज्ञाप्यश्च महाराजो भरतं क्षिप्रमानय ।
आगतश्चाभिषेक्तव्यः क्षिप्रमेव नरर्षभ ॥ ३२ ॥
अभिषिक्ते च भरते यौवराज्याय धार्मिके ।
अस्मत्संतापजं दुःखं न त्वामभिभविष्यति ॥ ३३ ॥
भरतश्चापि वक्तव्यो यथा राजनि वर्तसे ।
तथा मातृषु वर्तेथाः सर्वास्वेवाविशेषतः ॥ ३४ ॥
यथैव तव कैकेयी सुमित्रापि तथैव ते ।
तथैव देवी कौशल्या मम माता विशेषतः ॥ ३५ ॥
तातस्य प्रियकामेन यौवराज्यव्यपेक्षया ।
लोकयोरुभयोः शक्यं भवता सुखमेधितुं ॥ ३६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामसंदेशो नाम
नवचत्वारिंशः सर्गः ॥

# रामायणं

## L.

एवं संदिशतस्तस्य राघवस्य महात्मनः ।
लक्ष्मणोऽन्तरमासाद्य सूतं वचनमब्रवीत् ॥ १ ॥
कैकेयीं प्रति संक्रुद्धो निःश्वसन् भ्रुकुटीमुखः ।
अमर्षाश्रयया दृष्ट्या वसुधामवलोकयन् ॥ २ ॥
ममापि वचनात् सूत वक्तव्यो भवता नृपः ।
प्रणामं शिरसा कृत्वा बहुमानात् पुनः पुनः ॥ ३ ॥
केनायमपराधेन राघवो धर्मवत्सलः ।
गुणश्रेष्ठो मम ज्येष्ठस्त्वया भ्राता विवासितः ॥ ४ ॥
सर्वथा भवताकार्यं कैकेयीं परिरक्षता ।
नृशंसं च यशोघ्नं च सुमहद्दुष्कृतं कृतं ॥ ५ ॥
कैकेय्या वचनं श्रुत्वा नृशंसायाः सुदारुणं ।
पत्नीव यद्यं त्यक्तः पुत्रः किं नाम तत् कृतं ॥ ६ ॥
प्रशान्तश्चार्यशीलश्च सर्वभूतप्रियंवदः ।
रामः किमकरोत् पापं त्यक्तोऽयं सह यन्मया ॥ ७ ॥
पितृपैतामहं राज्यं प्रतिज्ञां परिरक्षता ।
भीतेन चानृताद्दत्तमत्र स्वार्थे भवान् प्रभुः ॥ ८ ॥
न त्वेव सदृशं त्यक्तुमपराधं विना सुतं ।
स्त्रीविधेयेन भवता गुणवन्तं विशेषतः ॥ ९ ॥

यदपत्येन कर्तव्यं यशो धर्मं च रक्षता ।
तदकर्तव्यमप्येतद्राघवेणोपपादितं ॥ १० ॥
पित्रा यदपि कर्तव्यं यशो धर्मं च रक्षता ।
अनुष्ठेयं च युक्तं च न त्वया तदनुष्ठितं ॥ ११ ॥
तदस्मान् स्वयमुत्सृज्य स्नेहेन सह पार्थिव ।
शोचितुं नार्हसि पुनः साधुः पीत्वेव वारुणीं ॥ १२ ॥
त्वद्विधा हि महात्मानो महाभागा नरर्षभाः ।
परितापैर्न मुह्यन्ते प्रेक्ष्य कार्यं स्वयंकृतं ॥ १३ ॥
लक्ष्मणं त्वतिसंक्रुद्धं ब्रुवाणं परुषं वचः ।
विनिवार्याब्रवीद्रामः सूतं दीनमधोमुखं ॥ १४ ॥
लक्ष्मणोऽयमतिक्रुद्धः सुमन्त्र यदभाषत ।
परुषं तन्न संश्राव्यो भवता वसुधाधिपः ॥ १५ ॥
वृद्धः करुणवेदी च मत्प्रवासाच्च दुःखितः ।
सहसा परुषं श्रुत्वा त्यजेदपि हि जीवितं ॥ १६ ॥
सुमन्त्र परुषं तस्मान्न वाच्यस्ते महीपतिः ।
विप्रियाण्यनुजीव्ये हि न वदन्त्यनुजीविनः ॥ १७ ॥
न चास्मान् स गतस्नेहस्त्यक्तवान् जगतीपतिः ।
सत्यपाशेन संरुद्धः स्नेहस्तस्य न लुप्यते ॥ १८ ॥
कैकेय्या वरदानेन पिता मे स तु मोहितः ।
मां वने त्यक्तवान् पुत्रमवशः सत्ययन्त्रितः ॥ १९ ॥

विप्रवासाद्धतस्नेहो लक्ष्मणोऽयममर्षितः ।
वाक्यं किमिव न ब्रूयात् परिहार्यं त्वया तु तत् ॥२०॥
सर्वथैव प्रियं वाच्यः प्रियार्हो नृपतिस्त्वया ।
अभिवादनपूर्वं च कुशलं कुशलो ह्यसि ॥२१॥

इत्यार्षे रामायणे अयोध्याकाण्डे लक्ष्मणसंदेशो
नाम पञ्चाशः सर्गः ॥

# अयोध्याकाण्डं

## LI.

निवर्त्यमानो रामेण सुमन्त्रः शोककर्षितः ।
तत् सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ॥ १ ॥
हीनो यद्भवता राम ब्रूयां त्वां स्नेहविक्लवः ।
भक्तिमानिति तत् तावद्वाक्यं मे क्षन्तुमर्हसि ॥ २ ॥
कथं नु त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीं ।
तव तात वियोगेन पुत्रशोकाकुलामिव ॥ ३ ॥
सराममपि तावद्धि रथं दृष्ट्वा समाश्वसीत् ।
त्वया विहीनं दृष्ट्वा तु विदीर्येतैव सा पुरी ॥ ४ ॥
दैन्यं हि नगरं गच्छेद्दृष्ट्वा शून्यमिमं रथं ।
सूतावशेषा पृतना हतवीरेव संगरे ॥ ५ ॥
दूरेऽपि निवसन्तं त्वां मनस्येव ध्रुवं स्थितं ।
चिन्तयन्त्येव तावत् तु निराहाराः प्रजाः कृशाः ॥ ६ ॥
आर्तनादो हि यः पौरैर्मुक्तस्तव विवासने ।
रथस्थं मां निशम्यैकं कुर्युः शतगुणं तु तं ॥ ७ ॥
अहं किं चाभिवक्ष्यामि देवीं यस्याः सुतो मया ।
नीतोऽसौ मातुलकुलं संतापं मा कृथा इति ॥ ८ ॥
सत्यं चैव प्रियं चैव ब्रूयाद्धि वचनं गुरुं ।
कथमप्रियमेवाहं ब्रूयां गुरुमिदं वचः ॥ ९ ॥

मम शिष्यत्वमापन्ना इक्ष्वाकुकुलवाहिनः ।
कथं चापि त्वया हीनं रथं वक्ष्यन्ति वाजिनः ॥ १० ॥
यदि मे याचमानस्य त्यागमेव करिष्यसि ।
सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ११ ॥
भविष्यन्ति वने यानि तपोविघ्नकराणि वः ।
रथेन प्रतिबाधिष्ये तानि सर्वाणि राघव ॥ १२ ॥
त्वत्कृते हि मया प्राप्तं रथचर्यागतं सुखं ।
धर्मार्थसहितं राम राज्ञः परमसंमतं ॥ १३ ॥
प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः ।
इहापि यदि ते वीर निवसन् वनवासिनः ॥ १४ ॥
परिचर्यामहं कृत्वा प्राप्स्यामि परमां गतिं ।
तव शुश्रूषणां मूर्ध्ना करिष्यामि वने वसन् ॥ १५ ॥
अयोध्यां शक्रलोकं वा सर्वमेव त्यजाम्यहं ।
न हि शक्या प्रवेष्टुं सा मयायोध्या त्वया विना ॥ १६ ॥
राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ।
इमेऽपि च हया वीर वसन्तो वनवासिनः ॥ १७ ॥
परिचर्यां करिष्यन्ति प्राप्स्यन्ति च परां गतिं ।
वनवासक्षये प्राप्ते ममैव हि मनोरथः ॥ १८ ॥
यदनेन रथेनैव त्वां वहेयं पुरीमितः ।
चतुर्दश हि वर्षाणि सहितस्य त्वया वने ॥ १९ ॥

तृणभूतानि यास्यन्ति शतशश्च विपर्यये ।
भक्तवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि ॥ २० ॥
भृत्यं भक्तं स्थितं स्थित्यां न त्वं मां त्यक्तुमर्हसि ।
एवं बहुविधं दीनं विलपन्तं पुनः पुनः ॥ २१ ॥
भृत्यानुकम्पी काकुत्स्थ इदं वचनमब्रवीत् ।
जानामि परमां भक्तिं मयि ते भर्तृवत्सल ॥ २२ ॥
शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ।
गतं त्वां नगरीं दृष्ट्वा जननी मे यवीयसी ॥ २३ ॥
कैकेयी प्रत्ययं गच्छेद्यत्तं रामो वनं गतः ।
परितुष्टा हि सा देवी वनवासं गते मयि ॥ २४ ॥
राजानं नाभिशङ्केत मिथ्यावादीति धार्मिकं ।
एष मे परमः कामो यदम्बा मे यवीयसी ॥ २५ ॥
भरताद्रक्षितं स्फीतं पुत्रराज्यमुपाश्नुते ।
मम प्रियार्थं राज्ञश्च निवर्तस्व पुरीं व्रज ।
संदिष्टश्चासि यानर्थांस्तान् ब्रूयास्त्वं यथा तथा ॥ २६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सुमन्त्रविसर्जनं
नाम एकपञ्चाशः सर्गः ॥

## LII.

इत्युक्त्वा वचनं सूतं शान्त्वयित्वा पुनः पुनः ।
गुहं वचनमक्लीबं रामो हेतुमदब्रवीत् ॥ १ ॥
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ।
तत् क्षिप्रं राजपुत्राय गुहः क्षीरमुपाहरत् ॥ २ ॥
लक्ष्मणश्चात्मनश्चैव रामश्चक्रे ततो जटाः ।
दीर्घवृत्तभुजौ वीरौ जटामण्डलधारिणौ ॥ ३ ॥
अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ।
ततो गङ्गामभिमुखः पुण्यां सरितमुत्तमां ॥ ४ ॥
राघवः प्रययौ मार्गमास्थितः सहलक्ष्मणः ।
तापसं व्रतमाश्रित्य ततो गुहमुवाच ह ॥ ५ ॥
अप्रमादो बले कोषे दुर्गे जनपदे तथा ।
कार्यस्ते गुह राज्यं हि सदा रक्ष्यतमं मतं ॥ ६ ॥
ततः स तमनुज्ञाय गुहमिक्ष्वाकुनन्दनः ।
जगाम गङ्गामव्यग्रः सभार्यः सहलक्ष्मणः ॥ ७ ॥
स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः ।
तितीर्षुस्त्वरितं गङ्गां लक्ष्मणं वाक्यमब्रवीत् ॥ ८ ॥
आरोह त्वं नरव्याघ्र स्थितां नावमिमां शुभां ।
सीतां चारोपय शनैः परिरभ्य तपस्विनीं ॥ ९ ॥

स भ्रातुः शासनं कुर्वन् भृशमप्रतिकूलकृत् ।
आरोप्य मैथिलीं पूर्वमारुरोहात्मना ततः ॥ १० ॥
अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ।
ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ॥ ११ ॥
आमन्त्र्य स सुमन्त्रं च सामात्यं च ततो गुहं ।
आस्थाय नावं काकुत्स्थस्तमभाषत नाविकं ॥ १२ ॥
मुञ्चेमां भद्र नावं त्वं परं पारं नयस्व नः ।
ततस्तौ भ्रातरौ वीरौ तारयामास नाविकः ॥ १३ ॥
प्रेरितायां तदा नावि भ्रातरौ रामलक्ष्मणौ ।
तीरस्थौ गुहसूतौ तावीक्षेतां बाष्पविक्लवौ ॥ १४ ॥
नाविकैश्चोदिता साथ कर्णधारसमन्विता ।
बहूर्मिवेगाभिहता गङ्गासलिलमध्यगा ॥ १५ ॥
मध्यं च समनुप्राप्ता भागीरथ्या यदा च नौः ।
वैदेही प्राञ्जलिर्भूत्वा तदा गङ्गामथाब्रवीत् ॥ १६ ॥
पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पालयेद्राज्ञस्त्वया गङ्गेऽभिरक्षितः ॥ १७ ॥
चतुर्दश हि वर्षाणि पर्युष्य विजने वने ।
भ्रात्रा सह मया चैव प्रत्यागच्छेत् पुनः पुरीं ॥ १८ ॥
ततस्त्वां देवि शुभगे क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धये ॥ १९ ॥

त्वं हि त्रिपथगा देवि ब्रह्मलोकात् प्रवर्तसे ।
भार्या चोदकराजस्य लोकेऽस्मिन् संप्रदृश्यसे ॥ २० ॥
सा त्वां देवि नमस्यामि प्रशंसामि च शोभने ।
प्राप्तराज्ये नरव्याघ्रे शिवेनैत्य पुनस्त्वहं ॥ २१ ॥
गवां शतसहस्राणि वस्त्राण्याभरणानि च ।
ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ २२ ॥
तथा संभाषमाणा तु सीता गङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं शीघ्रमेवाभ्युपागमत् ॥ २३ ॥
वायुवेगहृता सा नौर्बाहुवीर्यप्रचोदिता ।
गृहीत्वा राजपुत्रौ तौ परं पारमुपागता ॥ २४ ॥
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभौ ।
प्रणामं चक्रतुर्वीरौ गङ्गायाः सुसमाहितौ ॥ २५ ॥
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ।
वानप्रस्थवपुर्वीरो बाष्पपर्याकुलेक्षणः ॥ २६ ॥
स च राजसुतो धीमान् वनवासाय दीक्षितः ।
तमब्रवीन्महाबाहुं सुमित्रानन्दिवर्धनं ॥ २७ ॥
अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु ।
पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन् ॥ २८ ॥
अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ।
सिंहव्याघ्रवराहाणां निनादं प्रसहिष्यति ॥ २९ ॥

अवलोकयमानौ तु सुमन्त्रो यत्र तां दिशं ।
जग्मतुस्तौ धनुष्पाणी सीतया सह तद्वनं ॥ ३० ॥
अदर्शनमितो गत्वा भ्रातरौ पार्थिवात्मजौ ।
गुहः सूतश्च सस्नेहौ न्यवर्तेतां ततः पुनः ॥ ३१ ॥
नानाविहगसंघुष्टमगाहेतां ततो वनं ।
सुपुष्पिताग्रैस्तरुभिर्नानाविटपसंकुलं ॥ ३२ ॥
सुदूरमथ गत्वा तौ भ्रातरौ रामलक्ष्मणौ ।
अवरोहसमाकीर्णं वटमासाद्य तस्थतुः ॥ ३३ ॥
तौ च तत्र समासीनौ नातिदूरेऽभ्यपश्यतां ।
सुदर्शिनीमिति ख्यातां पद्मिनीं पद्मसंकुलां ॥ ३४ ॥
हंसकारण्डवाकीर्णां चक्रवाकोपशोभितां ।
दर्शयामास काकुत्स्थो वैदेह्या लक्ष्मणस्य च ॥ ३५ ॥
दूराददर्शयच्चापि चित्रकूटं नगोत्तमं ।
दिव्यतोयाभिवाहिन्या मन्दाकिन्योपशोभितं ॥ ३६ ॥
तत्र तौ पीतपानीयौ हत्वैकं पृषतं मृगं ।
ज्वालयित्वा हुतवहं पेचतुस्तौ नरर्षभौ ॥ ३७ ॥
भक्षयित्वा च तन्मांसं सीतया सह राघवौ ।
वासाय मेध्यं न्यग्रोधं कल्पयामासतुस्तदा ॥ ३८ ॥
गुहेन सार्धं तु ततः सुमन्त्रो
रामं व्रजन्तं स वनं निरीक्ष्य ।

अधप्रकर्षाद्विनिवृत्तदृष्टिर्
मुमोच वाष्पं व्यथितान्तरात्मा ॥ ३१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे गङ्गासंतरणं नाम
द्विपञ्चाशः सर्गः ॥

## LIII.

तं न्यग्रोधमुपागम्य संध्यामुपास्य पश्चिमां ।
रामो रमयतां श्रेष्ठ इदं लक्ष्मणमब्रवीत् ॥ १ ॥
अद्य नः प्रथमा रात्रिर्निवृत्तानामियं सुखात् ।
यतीनामिव मुक्तानां स्वजनेन भविष्यति ॥ २ ॥
मा ते भीरस्तु शोको वा मा व्यथा स्वजनं विना ।
सुमन्त्रेणापि रक्षितो नैवोत्कण्ठितुमर्हसि ॥ ३ ॥
अद्यप्रभृति किन्त्वस्याः सीताया रक्षणं मया ।
त्वया च सततं कार्यमप्रमत्तेन लक्ष्मण ॥ ४ ॥
तृणान्याहृत्य सौमित्रे मम त्वं शयनं कुरु ।
मत्त एवाविदूरे च शयनं रचयात्मनः ॥ ५ ॥
इत्युक्तो लक्ष्मणश्चक्रे भ्रातुः शय्यां तथात्मनः ।
वृक्षपर्णैस्तृणैश्चैव तस्याधस्ताद्वनस्पतेः ॥ ६ ॥
तत्र संविश्य काकुत्स्थो महार्हशयनोचितः ।
चक्रे सह कथां रात्रौ सीतया लक्ष्मणेन च ॥ ७ ॥
नूनमद्य महाराजः सुखं स्वपिति लक्ष्मण ।
सकामया सेव्यमानः कैकेय्या परितुष्टया ॥ ८ ॥
राज्यलुब्धा नृशंसा च कैकेयी तं नराधिपं ।
आगते भरते प्राणैर्ध्रुवं व्यापादयेदपि ॥ ९ ॥

वृद्धोऽनाथश्च नृपतिर्मया चैव विनाकृतः ।
नैवावेक्षेत कामात्मा प्राणांस्तस्या वशे स्थितः ॥ १० ॥
पितुः कामपरत्वेन दृष्ट्वेमं व्यसनागमं ।
काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥ ११ ॥
को हि विद्वान् स्थितो धर्मे प्रमदावशमागतः ।
त्यजेदकारणं पुत्रं प्रियं वृत्तानुवर्तिनं ॥ १२ ॥
सुखी वत सभाग्यश्च भरतः केकयीसुतः ।
मुदितः कोशलानेको भोक्ष्यते योऽधिराजवत् ॥ १३ ॥
स हि सर्वस्य राज्यस्य सुखमद्य गमिष्यति ।
ताते च वयसातीते मयि चारण्यमाश्रिते ॥ १४ ॥
यः परित्यज्य धर्मार्थौ काममेवानुवर्तते ।
स कृच्छ्रं महदाप्नोति राजा दशरथो यथा ॥ १५ ॥
मन्ये दशरथान्ताय मम प्रव्राजनाय च ।
ऊढा नृपेण कैकेयी राज्याय भरतस्य च ॥ १६ ॥
अपि नामाद्य कैकेयी सौभाग्यमदगर्विता ।
न प्रबाधेत मद्द्वेषात् कौशल्यां मद्विनाकृतां ॥ १७ ॥
मत्पक्षग्राहिणीं नित्यं सुमित्रां वा तपस्विनीं ।
इदानीमपि तस्मात् त्वमयोध्यां गच्छ लक्ष्मण ॥ १८ ॥
अहमेको गमिष्यामि सीतया सहितो वनं ।
अनाथयोस्तु मे मात्रोर्गत्वा नाथो भवानघ ॥ १९ ॥

क्षुद्रा चातिनृशंसा च कैकेयी पापनिश्चया ।
असंशयं हि मद्द्वेषात् कौशल्यां पीडयिष्यति ॥ २० ॥
ज्ञातिषु ध्रुवमन्यासु स्त्रियः पुत्रैर्वियोजिताः ।
जनन्या मम सौमित्रे तदस्याः समुपस्थितं ॥ २१ ॥
मया हि चिरपुष्टेन दुःखसंवर्धितेन च ।
विप्रायुज्यत कौशल्या फलकाले धिगस्तु मां ॥ २२ ॥
नान्या सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशं ।
सौमित्रे योऽहमम्बाया जातः शोकाय दुःखदः ॥ २३ ॥
मन्ये प्रतिविशिष्टा सा मत्तो लक्ष्मण सारिका ।
यस्यास्तच्छ्रूयते वाक्यं शुक पादमरेर्दश ॥ २४ ॥
यावदेकश्च खस्थश्च यावदस्य मुखं मयि ।
तावदात्मविमोक्षार्थं शुक पादमरेर्दश ॥ २५ ॥
शोचन्त्या मन्दभाग्याया न किञ्चिदुपकुर्वता ।
पुत्रेण किमपुत्राया मया कार्यमरिंदम ॥ २६ ॥
अल्पभाग्या हि मे माता दुःखानामेव केवलं ।
भागिनी न तु सौमित्रे सुखानामिति मे मतिः ॥ २७ ॥
अवशामपि शक्तोऽहं वशे कर्तुं वसुंधरां ।
यत्र क्लेशमिमं प्राप्तो ननु वीर्यमकारणं ॥ २८ ॥
अधर्मप्राप्तिभीतोऽहं लोकवादभयेन च ।
शक्तोऽपि प्रसहे दुःखमिदं सुप्राकृतो यथा ॥ २९ ॥

एतदन्यच्च करुणं विलप्य बहु राघवः ।
रुरोद धैर्यमुत्सृज्य सस्वनं वाष्पविक्लवः ॥३०॥
विलापे विरतं चैनं शान्तार्चिषमिवानलं ।
समुद्गमिव निर्वेगमिति होवाच लक्ष्मणः ॥३१॥
महासत्त्व न शोकस्य वशमागन्तुमर्हसि ।
त्वद्विधा हि न शोचन्ति कृच्छ्रेऽपि व्यसनागमे ॥३२॥
इदं तु नैव व्यसनमवगच्छाम्यहं प्रभो ।
अनुरागाद्धि पौराणां मन्ये तेऽभ्युदयागमं ॥३३॥
ननु दुष्कृतिनं पापं न कश्चिदनुकम्पते ।
स्तूयतेऽभ्युदये सर्वः पापो न व्यसने जनः ॥३४॥
यत्त्वार्य श्रूयते लोको व्यसनेऽपि गुणानतः ।
अतोऽभ्युदयमेवाहं मन्ये न व्यसनागमं ॥३५॥
अयोध्या सा पुरी कृत्स्ना नूनमद्य सुदुःखिता ।
न राजति त्वया हीना हीनचन्द्रेव शर्वरी ॥३६॥
नैतदौपयिकं मन्ये त्वदुद्भवत् परिदेवितुं ।
सीतां विषादयस्येव विलपन् मां च राघव ॥३७॥
तस्मात् संस्तम्भयात्मानमात्मनैवार्य मा शुचः ।
शोकपङ्कनिमग्ना हि सीदन्त्यकृतबुद्धयः ॥३८॥
भवन्तमेव सीदन्तं दृष्ट्वाहं मैथिली तथा ।
न चिरं जीवितुं शक्तौ जलान्मत्स्याविवोद्धृतौ ॥३९॥

न तातं न च शत्रुघ्नं सुमित्रां वा परंतप ।
अद्याहं द्रष्टुमिच्छामि स्वर्गं वापि त्वया विना ॥४०॥

स लक्ष्मणस्यार्थवदूर्जितं वचो
निशम्य रामो वनवासमास्थितः ।
प्रणुद्य शोकं परिरभ्य लक्ष्मणं
च्युतोऽस्मि शोकादिति राघवोऽब्रवीत् ॥४१॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामविलापो
नाम त्रिपञ्चाशः सर्गः ॥

## LIV.

तां तु रात्रिमुषित्वा ते तस्मिन् न्यग्रोधपादपे ।
उपास्य संध्यामुदिते सूर्ये भूयः प्रतस्थिरे ॥ १ ॥
यत्र भागीरथीं पुण्यां यमुनाभिप्रवर्तते ।
जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनं ॥ २ ॥
ते भूमिभागान् विविधान् देशांश्चापि मनोरमान् ।
अदृष्टपूर्वान् पश्यन्तस्तत्र तत्र तपस्विनः ॥ ३ ॥
शिवेनाथ पथा गच्छन् पश्यंश्च विविधान् द्रुमान् ।
निवृत्ते किञ्चिदादित्ये रामो लक्ष्मणमब्रवीत् ॥ ४ ॥
प्रयागमभितः पश्य सौमित्रे धूममुत्थितं ।
अग्नेर्भगवतः केतुं मन्ये संनिहितो मुनिः ॥ ५ ॥
प्राप्ताः स्म संगमं नूनं गङ्गायमुनयोः शिवं ।
श्रूयते हि महानद्योर्वारिसंघट्टजः स्वनः ॥ ६ ॥
दारूण्येतानि वन्यर्थं भग्नानि वनजैर्वने ।
भरद्वाजाश्रमे चैते दृश्यन्ते विविधा द्रुमाः ॥ ७ ॥
धन्विनस्ते सुखं गत्वा लम्बमाने दिवाकरे ।
भरद्वाजाश्रमं पुण्यमासेदुः श्रमकर्षिताः ॥ ८ ॥
तदाश्रमपदं प्राप्य रामः सौमित्रिणा सह ।
त्रासयन् सायुधः सुप्तान् विवेश मृगपक्षिणः ॥ ९ ॥

आगम्य चाश्रमद्वारं मुनेर्दर्शनकाङ्क्षया ।
तस्थौ रामः सह श्रीमान् सीतया लक्ष्मणेन च ॥ १० ॥
तौ विदित्वा गतौ चापि भ्रातरौ रामलक्ष्मणौ ।
प्रवेशयामास मुनिः स्वमाश्रमपदं तदा ॥ ११ ॥
कृताग्निहोत्रमासीनं महाभागं कृताञ्जलिः ।
रामः सौमित्रिणा सार्धं सीतया चाभ्यवादयत् ॥ १२ ॥
मृगपक्षिभिरासीनैर्वृतो मुनिभिरेव च ।
राममागतमभ्यर्च्य सोऽभ्यनन्दच्च तं मुनिः ॥ १३ ॥
न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः ।
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ॥ १४ ॥
भार्या ममेयं वैदेही कल्याणी जनकात्मजा ।
अनुव्रजन्ती मामेव तपोवनमुपागता ॥ १५ ॥
पित्रा प्रव्राज्यमानं मां सौमित्रिश्चानुजः प्रियः ।
स्वयमन्वगमद्भ्राता वनमेव दृढव्रतः ॥ १६ ॥
पित्रा नियुक्तो भगवन् प्रवेक्ष्यामि महावनं ।
धर्ममेव चरिष्यामि तत्र मूलफलाशनः ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
उपानयत धर्मात्मा गामर्घ्यमुदकं तथा ॥ १८ ॥
प्रतिगृह्य च काकुत्स्थमासनेनोदकेन च ।
न्यमन्त्रयत मूलैश्च फलैश्च फलभोजनः ॥ १९ ॥

प्रतिगृह्य तु तां पूजामुपविष्टं स राघवं ।
भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ २० ॥
दिष्ट्यासि कुशली राम ममाश्रममुपागतः ।
श्रुतं हि ते मया पित्रा विवासनमकारणं ॥ २१ ॥
अवकाशो विविक्तोऽयं रमणीयश्च राघव ।
गङ्गायमुनयोः पुण्यः संगमो लोकविश्रुतः ॥ २२ ॥
इह राम मया सार्धं वस त्वं यदि रोचते ।
सर्वसाधारणं ह्येदं तपोवननिवासिनां ॥ २३ ॥
तमेवं वादिनं रामः कृताञ्जलिरभाषत ।
वसतोऽनुग्रहो मे स्यादिह ब्रह्मंस्त्वया सह ॥ २४ ॥
इतस्तु विषयोऽस्माकमभ्यासे तपतां वर ।
आगमिष्यन्ति सुव्यक्तं द्रष्टुं मामिह बान्धवाः ॥ २५ ॥
अनेन कारणेनाहमिह वासं न रोचये ।
अन्यमाश्रममेकान्ते विविक्तं वक्तुमर्हसि ॥ २६ ॥
वसेयं यत्र वैदेह्या सहितो लक्ष्मणेन च ।
स्वजनेनापरिज्ञातो निरुद्विग्नः सुखी वने ॥ २७ ॥
इति रामवचः श्रुत्वा भरद्वाजो महामुनिः ।
ध्यात्वा मुहूर्तमेकाग्रो रामं वचनमब्रवीत् ॥ २८ ॥
इतस्त्रियोजनाद्राम गिरिर्यत्र निवत्स्यसि ।
महर्षिसेवितः पुण्यः सर्वस्य सुखदः शिवः ॥ २९ ॥

गोलाङ्गुलाभिनदितो वानरर्क्षनिषेवितः ।
चित्रकूट इति ख्यातो गन्धमादनसंनिभः ॥ ३० ॥
यावद्धि चित्रकूटस्य नरः शृङ्गाणि पश्यति ।
तावत् कल्याणमाप्नोति धर्मे च कुरुते मतिं ॥ ३१ ॥
मुनयस्तत्र बहवो विहृत्य शरदां शतं ।
तपसा दिवमारूढाः कलापशिरसा सह ॥ ३२ ॥
तं विविक्तमहं मन्ये वासं ते रघुनन्दन ।
इह वा पुरुषव्याघ्र वस राम मया सह ॥ ३३ ॥
सर्वथा रंस्यसे राम तस्मिन्नाश्रममण्डले ।
लक्ष्मणेन सह भ्रात्रा सीतया चानयानघ ॥ ३४ ॥
इत्युक्त्वा प्रियकामैस्तं भरद्वाजः प्रियातिथिं ।
सभार्यं सानुजं चैव प्रतिजग्राह धर्मवित् ॥ ३५ ॥
तस्य भुक्तवतस्तत्र तदानीं मुनिना सह ।
जगाम रजनी पुण्या चित्राः कथयतः कथाः ॥ ३६ ॥
तस्यां रात्र्यां व्यतीतायां संध्यामन्वास्य राघवः ।
उपतस्थे महर्षिं तं तमुवाच ततो मुनिः ॥ ३७ ॥
चित्रकूटमितो राम गच्छाशु सह सीतया ।
लक्ष्मणेन च विश्रब्धं तत्र त्वं विहरिष्यसि ॥ ३८ ॥
रम्ये शीताम्बुवाहिन्या मन्दाकिन्योपशोभिते ।
मन्येऽहं तत्र ते वासं रम्ये स्वादुफलोदके ॥ ३९ ॥

तत्र कुञ्जरयूथाश्च मृगयूथाश्च सर्वतः ।
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव ॥ ४० ॥
सरित्प्रस्रवणप्रस्थान् गुहाकन्दरनिर्झरान् ।
चरतः सीतया सार्धं नन्दिष्यति मनस्तव ॥ ४१ ॥

दात्यूहकोयष्टिककोकिलस्वनैर्
विनादितं तं वसुधाधरं शिवं ।
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः
सुरम्यमासाद्य तमावसाश्रमं ॥ ४२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरद्वाजाश्रमाभिगमनं
नाम चतुःपञ्चाशः सर्गः ॥

## LV.

तामुषित्वा निशां तत्र सुखमिक्ष्वाकुनन्दनौ ।
अभिवाद्य महर्षिं तं दधतुर्गमने मतिं ॥ १ ॥
तौ प्रयातावभिप्रेक्ष्य भरद्वाजो महामुनिः ।
चित्रकूटस्य पन्थानमुपदेष्टुं प्रचक्रमे ॥ २ ॥
राघव त्वमितो देशात् पश्यन्नावसथान् बहून् ।
नातिदूरे समासाद्य तरेस्त्वं यमुनां नदीं ॥ ३ ॥
कृत्वोडुपं ग्राहवती सा हि नित्यं महानदी ।
तस्या नद्याः परे पारे नातिदूरे महाद्रुमः ॥ ४ ॥
सत्याभियाचनः श्रीमान् न्यग्रोधो हरितच्छदः ।
नानासत्त्वकृतावासः श्याम इत्यभिविश्रुतः ॥ ५ ॥
सीतेयं तं नमस्कृत्य समभ्यर्च्य च पादपं ।
अभियाचेत कल्याणी वरं यदभिकाङ्क्षितं ॥ ६ ॥
क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननं ।
पलाशबदरीवंशमधूकाम्रवनाकुलं ॥ ७ ॥
स पन्थाश्चित्रकूटस्य गतः सुबहुशो मया ।
रम्यश्चाश्रमयुक्तश्च वनदोषैर्विवर्जितः ॥ ८ ॥
पन्थानमुपदिश्यैवं भरद्वाजो न्यवर्तत ।
रामेण लक्ष्मणेनापि सीतया चाभिवादितः ॥ ९ ॥

उपावृत्ते मुनौ तस्मिन् रामो लक्ष्मणमब्रवीत् ।
कृतपुण्योऽस्मि सौमित्रे मुनिर्यन्मानुकम्पते ॥ १० ॥
इति तौ पुरुषव्याघ्रौ कथयन्तौ तपस्विनौ ।
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीं ॥ ११ ॥
तत्र बद्धोडुपं काष्ठैर्वेणुभिश्चापि तीरजैः ।
सीतामारोपयां चक्रे रामस्तत्र स्वयं तदा ॥ १२ ॥
परिगृह्य प्रियां बालां वेपमानां लतामिव ।
सीतामारोप्य रामोऽपि लक्ष्मणश्चाप्यरोहतां ॥ १३ ॥
तेन प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीं ।
तीरजैर्गहनां वृक्षैस्तेरुस्ते यमुनां नदीं ॥ १४ ॥
संतीर्णाः प्लवमुत्सृज्य प्रणम्य यमुनां नदीं ।
शीतच्छायं समासेदुः श्यामं न्यग्रोधपादपं ॥ १५ ॥
अर्चयित्वाथ तं सीतायाचतेदं कृताञ्जलिः ।
चिरं जीवतु मे वृद्धः श्वशुरः कोशलेश्वरः ॥ १६ ॥
भर्ता मे देवराश्चैव जीवन्तु भरतादयः ।
कौशल्यां चैव जीवन्तीं पश्येयमिति मैथिली ॥ १७ ॥
ययाचे तं ततोऽभ्येत्य श्यामं सत्योपयाचनं ।
प्रदक्षिणमुपावृत्य ततस्ते प्रययुः पुनः ॥ १८ ॥
क्रोशमात्रं ततो गत्वा नीलमासाद्य तद्वनं ।
हत्वा तत्र मृगं मेध्यं पक्त्वा तमुपभुज्य च ॥ १९ ॥

विहृत्य तस्मिन् बहुपक्षिनादिते
वने यथेष्टं मृगयूथसेविते ।
ततो निवासार्थमुपाययुः शिवं
शुभं नदीतीरतरुं समुच्छ्रितं ॥ २० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे यमुनातीरवासो
नाम पञ्चपञ्चाशः सर्गः ॥

## LVI.

अथ रात्र्यां व्यतीतायां सुखसुप्तं श्रमालसं ।
राम उत्थापयामास लक्ष्मणं शनैकैस्तदा ॥ १ ॥
खगानां शृणु सौमित्रे वल्गुव्याहरतां वने ।
संप्रतिष्ठामहे भूयो यदि लक्ष्मण मन्यसे ॥ २ ॥
स सुप्तः सुसुखं भ्रात्रा लक्ष्मणः प्रतिबोधितः ।
जहौ निद्रां क्लमं चैव तं चैवाध्वपरिश्रमं ॥ ३ ॥
अथ उत्थाय सहिताः स्पृष्ट्वा च सलिलं शुचि ।
उपास्य च शुभां संध्यां तत्रैवाभिप्रतस्थिरे ॥ ४ ॥
चित्रकूटस्य पन्थानमासाद्य कृतनिश्चयाः ।
तत्र वासं समुद्दिश्य ययुः शीघ्रपराक्रमाः ॥ ५ ॥
अचिरेण समासाद्य ततस्तच्चित्रपादपं ।
चित्रकूटवनं रामः सीतां वचनमब्रवीत् ॥ ६ ॥
पश्यामून् पुष्पितान् सीते मालिनीं सरितं प्रति ।
शिशिरात्यये दीर्घाग्नि प्रदीप्तानिव किंशुकान् ॥ ७ ॥
कर्णिकारवनं चापि पश्य मन्दाकिनीमनु ।
दीपितं रुचिरैः पुष्पैः प्रदीप्तैः काञ्चनैरिव ॥ ८ ॥
पश्य भल्लातकान् विल्वान् पनसांस्तिन्दुकांस्तथा ।
फलभारानतांश्चैव तथान्यान् फलपादपान् ॥ ९ ॥

शक्यमत्र फलैरेव जीवितुं तनुमध्यमे ।
अहो स्वर्गोपमं प्राप्ताश्चित्रकूटमिमं वयं ॥ १० ॥
पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण ।
चितानि चित्रकूटेऽस्मिन् मधूनि मधुपैः खगैः ॥ ११ ॥
असौ कूजति दात्यूहस्तं शिखी प्रतिकूजति ।
तं चोपहसतीवायं कूजन्तं जलकुक्कुभः ॥ १२ ॥
परपुष्टरुतं श्रुत्वा गायन्त इव कानने ।
भ्रमरा विचरन्त्येते पुष्पवानकलस्वनाः ॥ १३ ॥
पश्य मन्दाकिनीतीरे कुसुमप्रकरैः प्रिये ।
रचितानीव सुश्रोणि शयनानि द्रुमे द्रुमे ॥ १४ ॥
शिलातलानि चेमानि विमलानि शुचिस्मिते ।
लतावितानच्छन्नानि पश्य रम्याणि भाविनि ॥ १५ ॥
मातङ्गयूथनिचिते नानाविहगनादिते ।
नानामृगगणाकीर्णे शैलेऽस्मिन् रम्यकानने ॥ १६ ॥
वैदेहि विचरिष्यामः सुखमत्र वयं प्रिये ।
इह प्राप्स्यसि वैदेहि मया सह रतिं शुभां ॥ १७ ॥
अवेक्षमाणा एवं ते रम्यां मन्दाकिनीं नदीं ।
चित्रकूटं समाजग्मुर्नानाकुसुमितद्रुमं ॥ १८ ॥
तस्य शैलस्य पादे तु विविक्ते सलिलावृते ।
आश्रमं चक्रतुर्वीरौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥

गजभग्नान्युपाहृत्य दारूण्युपवनान्तरात् ।
लतावितानननद्धे द्वे चक्रतुः शरणे पृथक् ॥ २० ॥
वृक्षपर्णैश्च बहुभिश्छादयामासतुस्ततः ।
ते पर्णशाले कृत्वा तु शोधयामास लक्ष्मणः ॥ २१ ॥
मृदोपलेपनं चक्रे वैदेही तनुमध्यमा ।
कृत्वाश्रमपदं रामस्ततो लक्ष्मणमब्रवीत् ॥ २२ ॥
मृगमाहृत्य सौमित्रे चरुं श्रपय माचिरं ।
तेन यष्टुमिहेच्छामि चरुणाश्रमदेवताः ॥ २३ ॥
इत्युक्तो लक्ष्मणो भ्रात्रा हत्वा कृष्णमृगं वनात् ।
आहृत्य ज्वालयित्वाग्निं श्रपयामास संस्कृतं ॥ २४ ॥
तं मृगं सुशृतं कृत्वा सुनिष्टप्तं च लक्ष्मणः ।
उवाच राममभ्येत्य कृताञ्जलिरिदं वचः ॥ २५ ॥
आज्ञया ते मयाहृत्य शृतः कृष्णो मृगो वनात् ।
यष्टुमर्हसि तेन त्वं देवता अभिकाङ्क्षिताः ॥ २६ ॥
इत्युक्तो राघवः स्नात्वा जप्त्वा च विधिवत् तदा ।
हुत्वाग्निं मन्त्रवत् तत्र ततस्तज्जुहुवे हविः ॥ २७ ॥
हविर्हुत्वा च देवेभ्यः पितृभ्यस्तदनन्तरं ।
निर्ववाप पवित्रेषु निवापं सजलाञ्जलिं ॥ २८ ॥
न्युप्य चैव निवापं तं भूतेभ्योऽपि विधानतः ।
चकार बलिनिर्वापं राघवस्तदनन्तरं ॥ २९ ॥

लक्ष्मणेन सह भ्रात्रा कृतशेषं ततः स्वयं ।
उपविश्योपयुयुजे कृते पर्णपुटे शुचौ ॥ ३० ॥
परिविश्य च सीतापि तावुभौ भर्तृदेवरौ ।
एकान्तं समुपागम्य ततः शेषमुपाददे ॥ ३१ ॥

अनेकनानाविधपक्षिनादिते
विचित्रपुष्पस्तवकोपशोभिते ।
नगोत्तमे तत्र निवासमीयिवांस्
तुतोष रामः सहलक्ष्मणस्तदा ॥ ३२ ॥

तं रम्यमासाद्य हि चित्रकूटं
तां चैव पुण्यां सरितं सुतीर्थां ।
मन्दाकिनीं पुष्पफलाढ्यतीरां
दुःखं जहुस्तेऽथ विवासमूलं ॥ ३३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे चित्रकूटनिवासो
नाम षट्पञ्चाशः सर्गः ॥

## LVII.

स शोचित्वा तु सुचिरं सुमन्त्रेण गुहः सह ।
गङ्गापारं गतं रामं जगाम स्वपुरं ततः ॥ १ ॥
अनुज्ञाप्य सुमन्त्रोऽपि योजयित्वा हयान् रथे ।
अयोध्यामेव नगरीं प्रययौ भृशदुर्मनाः ॥ २ ॥
सोऽतीत्य सुबहून् देशान् सरितश्च सरांसि च ।
कालेन नातिमहता ग्रामांश्च नगराणि च ॥ ३ ॥
अयोध्यामाजगामार्तो निवृत्तेऽहनि सारथिः ।
आर्तनारीनरगणां दीनस्वनवतीं तदा ॥ ४ ॥
शून्यामिव च निःशब्दां निरानन्दजनायुतां ।
प्रम्लानपङ्कजवनां विपुलां पद्मिनीमिव ॥ ५ ॥
तां दृष्ट्वा चिन्तयामास सुमन्त्रो मन्त्रिसत्तमः ।
प्रविशंस्तां पुरीं दीनो निर्जनां विगतत्विषं ॥ ६ ॥
कच्चित् सरत्ननिचया सगजाश्वनराधिपा ।
रामशोकाग्निनिर्दग्धा न कृत्स्नेयं पुरी भवेत् ॥ ७ ॥
इति संचिन्तयन्नार्तः प्रविवेश स तां पुरीं ।
सुमन्त्रो व्यथयोपेतः स्यन्दनेन हतत्विषा ॥ ८ ॥
सुमन्त्रमभियान्तं तु दृष्ट्वा शतसहस्रशः ।
क्व राम इति पृच्छन्तो रथमभ्यद्रवन् नराः ॥ ९ ॥

तेभ्यः शशंस स तदा गङ्गातीरे महात्मना ।
तेनाहं समनुज्ञात उत्तीर्णो चागतः पुरीं ॥ १० ॥
ते तीर्ण इति च श्रुत्वा बाष्पपर्याकुलेक्षणाः ।
अहो धिगित्युदाहृत्य हताः स्म इति चुक्रुशुः ॥ ११ ॥
वृन्दशो जल्पतां तेषां शुश्राव स तदा गिरः ।
निर्लज्जोऽयं वने त्यक्त्वा रामं पुनरुपागतः ॥ १२ ॥
महोत्सवसमाजेषु कथं नाम सुनिर्घृणाः ।
विहरेम पुनर्हृष्टा विना तं नरकुञ्जरं ॥ १३ ॥
किं स्यात् प्रियं जनस्यास्य काङ्क्षितं किं सुखावहं ।
इति चिन्तयतानेन जनोऽयं परिपालितः ॥ १४ ॥
वातायनगतानां च स्त्रीणां शुश्राव भाषितं ।
निराशोऽयं कथं राममुत्सृज्य पुनरागतः ॥ १५ ॥
एताश्चान्याश्च दुःखार्तः शृण्वन् वाचः स सारथिः ।
यत्र राजा दशरथस्तदेवोपययौ गृहं ॥ १६ ॥
अवतीर्य रथादाशु राजवेश्म विवेश तत् ।
शोकदीनजनाकीर्णं सप्तकक्षं हृतद्युति ॥ १७ ॥
ततो दशरथस्त्रीणां शुश्राव परिदेवितं ।
प्रासादशिखरस्थानां दुःखार्तानामितस्ततः ॥ १८ ॥
सह रामेण निर्याय विना राममुपागतः ।
सूतः किं नाम कौशल्यां पृष्टः संप्रति वक्ष्यति ॥ १९ ॥

यथा च मन्ये दुर्जीवं तथा न सुमरं ध्रुवं ।
प्रिये निर्वासिते पुत्रे कौशल्या यत्र जीवति ॥ २० ॥
राजस्त्रीणां स तद्वाक्यं तथ्यमित्यवजग्मिवान् ।
शोकाग्निना दह्यमानो राजवेश्म विवेश तत् ॥ २१ ॥
प्रविश्य च तथा दीनो राजानं दीनचेतसं ।
अपश्यत् पुत्रशोकार्त्तं हृतसत्त्वौजसं तदा ॥ २२ ॥
अभिगम्य स राजानं प्रणिपत्य च सारथिः
यथोक्तं रामवचनं कृताञ्जलिरवेदयत् ॥ २३ ॥
तच्छ्रुत्वा च वचो राजा विसंज्ञो भ्रान्तचेतनः ।
निपपातासनाद्भूमौ दुःखशोकविमूर्छितः ॥ २४ ॥
दृष्ट्वा तमासनाद्भूमौ पतितं जगतीपतिं ।
अन्तःपुरस्त्रियोऽभ्येत्य बाहूनुच्छ्रित्य चुक्रुशुः ॥ २५ ॥
सुमित्रया तु तं सार्धं कौशल्या पतितं पतिं ।
दीनमुत्थापयामास वचनं चेदमब्रवीत् ॥ २६ ॥
इमं तस्य महाराज दूतं दुष्करकारिणः ।
वनवासादुपावृत्तं कस्मात् त्वं नानुपृच्छसि ॥ २७ ॥
यदि त्वं निर्घृणं कृत्वा लज्जयैवं विमुह्यसि ।
उत्तिष्ठ नाद्य कालस्ते लज्जितुं मा व्यपत्रप ॥ २८ ॥
कस्माद्य महीपाल न तं पृच्छसि मे सुतं ।
नास्तीह काचित् कैकेयी विस्रब्धं प्रष्टुमर्हसि ॥ २९ ॥

एवमुक्त्वा महाराजं कौशल्या शोकमूर्छिता ।
धरण्यां निपपातार्ता बाष्पविप्लवभाषिणी ॥ ३० ॥

विलप्य पतितां भूमौ कौशल्यां शोकविह्वलां ।
पतितं च पतिं दृष्ट्वा रुरुदुः सुस्वनं स्त्रियः ॥ ३१ ॥

ततस्तमन्तःपुरयोषितां स्वनं
निशम्य वृद्धास्तरुणाश्च मानवाः ।
स्त्रियश्च सर्वा रुरुदुर्गृहे गृहे
निरीक्ष्य रामस्य रथं महात्मनः ॥ ३२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सुमन्त्रोपावर्तनं
नाम सप्तपञ्चाशः सर्गः ॥

## LVIII.

अथ राजा पुनः संज्ञां प्रतिलभ्य समुत्थितः ।
उपविश्यासने सूतं प्रष्टुं समुपचक्रमे ॥ १ ॥
अश्रुपूर्णेक्षणो दीनो वनबद्ध इव द्विपः ।
दीर्घमुष्णं च निःश्वासं स विमुच्य मुहुर्मुहुः ॥ २ ॥
रथरेणुपरिध्वस्तं कृताञ्जलिमुपस्थितं ।
पप्रच्छैनमभिप्रेक्ष्य सुमन्त्रं बाष्पविह्वलः ॥ ३ ॥
क्व सुमन्त्र गतो रामः क्व च वत्स्यति शंस मे ।
क्वस्थेन तेन चैव त्वं राघवेण विसर्जितः ॥ ४ ॥
सोऽत्यन्तं सुखसंवृद्धः कथमासिष्यते सुतः ।
भूमिपालात्मजो भूमौ कथं स्वप्स्यति वा वने ॥ ५ ॥
कथं च विजनेऽरण्ये याति पद्भ्यामनाथवत् ।
सिंहव्याघ्रसमाकीर्णे सरीसृपसमाकुले ॥ ६ ॥
यं यान्तमनुयान्ति स्म नराश्वरथकुञ्जराः ।
स कथं सुकुमाराङ्गो वने चरति मे सुतः ॥ ७ ॥
सुकुमार्या तपस्विन्या वैदेह्यानुगतः कथं ।
वनं कण्टकिनं दुर्गं रामः पद्भ्यां विगाहते ॥ ८ ॥
स चाप्रतिमतेजस्वी सुकुमारो ममात्मजः ।
अनुगच्छति तं भक्त्या लक्ष्मणो भ्रातरं कथं ॥ ९ ॥

# अयोध्याकाण्डं

सिद्धार्थस्त्वं कृतार्थश्च येन मे तौ सुतावुभौ ।
तपोदीक्षान्वितौ दृष्टौ नरनारायणाविव ॥१०॥
किमाह रामस्तेजस्वी किं च मां लक्ष्मणोऽब्रवीत् ।
किमुवाच च मां साध्वी सीता भर्तृपरायणा ॥११॥
आसितं भाषितं भुक्तमितः प्रभृति शंस मे ।
अशेषतो यथा वृत्तं वनं रामस्य गच्छतः ॥१२॥
इति सूतो नरेन्द्रेण चोदितः सज्जमानया ।
उवाच वाचा राजानं बाष्पगद्गदया ततः ॥१३॥
पुरात् प्रभृति वृत्तान्तमशेषेणानिवर्तनं ।
उक्त्वा ततः परमिमं रामसंदेशमब्रवीत् ॥१४॥
कृत्वा तेऽनुदिशं रामः प्रणामं साञ्जलिः स्थितः ।
इदं मां संपरिष्वज्य संदिदेश महाबलः ॥१५॥
सूत मद्वचनाद्गत्वा समासाद्य नराधिपं ।
शिरसा प्रणिपत्याग्रे प्रष्टव्यः कुशलं ततः ॥१६॥
पृष्ट्वा च कुशलं सूत विज्ञाप्यो मे पिता त्वया ।
अनुग्रहार्थमस्माकं न शोच्योऽहं त्वयेत्युत ॥१७॥
ज्ञातः सर्वो हि राजेन्द्र भवितव्यमुपाश्नुते ।
अतो न शोच्योऽस्मि विभो मम चेदिच्छसि प्रियं ॥१८॥
मातरश्चापि मे सर्वाः प्रष्टव्याः कुशलं त्वया ।
अशेषतः समासाद्य प्रणिपत्याभिवाद्य च ॥१९॥

कौशल्या चापि मे माता विज्ञाप्या सततं त्वया ।
मच्छोककर्षितो राजा न वाच्यः परुषं त्वया ॥ २० ॥
शापितासि मम प्राणैः पुनरागमनेन च ।
देववत् पूजनीयस्ते पिता न इति चाब्रवीत् ॥ २१ ॥
परिष्वज्य च वक्तव्यो भरतो वचनान्मम ।
यौवराज्यमवाप्य त्वं पूजयेथा नराधिपं ॥ २२ ॥
त्वया शुश्रूष्यमाणो मां न शोचति यथा नृपः ।
मत्स्नेहादर्हसि तथा कर्तुमित्यपि निश्चयं ॥ २३ ॥
समं मातृषु सर्वासु वर्तेथा इति चाब्रवीत् ।
भरतं पृथिवीपाल पुत्रं ते कैकयीसुतं ॥ २४ ॥
एवमादि वचो धर्म्यं ब्रुवन्नेव स मां नृप ।
वाष्पवेगोपरुद्धात्मा मुमोचाश्रूणि ते सुतः ॥ २५ ॥
ईषद्रोषपरीतस्तु सौमित्रिरिदमब्रवीत् ।
केनायमपराधेन राज्ञा पुत्रो विवासितः ॥ २६ ॥
मया तावद्भवेत् किञ्चित् कार्कश्यादप्रियं कृतं ।
आर्यस्य तु परित्यागे कारणं नोपलक्षये ॥ २७ ॥
यतः प्रव्राजितो रामः कैकेय्याः प्रियकारणात् ।
वरदाननिमित्तं वा कृतं तत् साधु सर्वथा ॥ २८ ॥
विरुद्धं धर्मकीर्तिभ्यां राज्ञेदं बुद्धिलाघवात् ।
अयशस्यं कृतं मन्ये सत्पुत्रस्य विवासनं ॥ २९ ॥

मम तावन्न तातेऽद्य पितृस्नेहोऽस्ति कश्चन ।
पिता माता सुहृच्चाद्य रामो बन्धुर्गुरुश्च मे ॥ ३० ॥
लोकप्रियमिमं त्यक्त्वा लोकनाथं च राघवं ।
राजा किमिव कल्याणं भरतादभिकाङ्क्षति ॥ ३१ ॥
आमन्त्र्य भरतश्चैवं वाच्यस्ते राजसंनिधौ ।
आमर्षयसि चेत् काञ्चिदद्य रामे प्रतिक्रियां ॥ ३२ ॥
ततो मातृषु सर्वासु समतामभ्युपागतः ।
राज्याभिमानमुत्सृज्य वर्तस्वेत्यादिदेश मां ॥ ३३ ॥
जानकी तु विनिश्वस्य वाष्पच्छन्नस्वरा नृप ।
भूतोपसृष्टचित्तेव वीक्षमाणा समन्ततः ॥ ३४ ॥
अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ।
पर्यश्रुवदना दीना नैव मां किञ्चिदब्रवीत् ॥ ३५ ॥
उदीक्षमाणा भर्तारं मुखेन परिशुष्यता ।
मुमोच केवलं वाष्पं मां निवृत्तमवेक्ष्य सा ॥ ३६ ॥

स चापि रामोऽश्रुमुखः कृताञ्जलिर्
ननाम पादौ तव शोकविह्वलः ।
तथैव सीता रुदती वरानना
नृदेवपादौ शिरसा नमस्यति ॥ ३७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामसंदेशाख्यानं
नाम अष्टापञ्चाशः सर्गः ॥

## LIX.

इति ब्रुवाणं संदेशं सुमन्त्रं मन्त्रिसत्तमं ।
ब्रूहि शेषं पुनरिति राजा वचनमब्रवीत् ॥ १ ॥
तस्य तद्वचनं श्रुत्वा सुमन्त्रो बाष्पविह्वलः ।
कथयामास भूयोऽपि रामवृत्तान्तविस्तरं ॥ २ ॥
जटाः कृत्वा ततो राजंश्चीरवल्कलधारिणौ ।
गङ्गामुत्तीर्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥ ३ ॥
ततो मम निवृत्तस्य तुरगा बाष्पविक्लवाः ।
राममेवानुपश्यन्तो ह्रेषमाणा विचुक्रुशुः ॥ ४ ॥
उभाभ्यां राजपुत्राभ्यां ततः कृत्वाहमञ्जलिं ।
त्वद्गौरवभयाद्राजन्नकामः पुनरागतः ॥ ५ ॥
गुहेन सह कृत्स्नं तु तत्रैव दिवसं स्थितः ।
आशया यदि रामो मां पुनरेवाह्वयेदिति ॥ ६ ॥
विषयेषु नरव्याघ्र रामव्यसनकर्षिताः ।
अपि वृक्षाः परिम्लानाः सपत्रस्तवकाङ्कुराः ॥ ७ ॥
सबाष्पाः सरितश्चासन् संतप्तकलुषोदकाः ।
प्रम्लानकुसुमाश्चासन् पद्मिन्यो विगतत्विषः ॥ ८ ॥
ध्यानैकतानस्तिमिता न विचेरुर्मृगद्विजाः ।
आसीच्च रामशोकार्तं निष्कूजमिव काननं ॥ ९ ॥

जलजान्यपि सत्त्वानि स्थलजान्यपि सर्वशः ।
स्थानेभ्यः स्तम्भितानीव स्वेभ्यश्चेलुर्न भूपते ॥ १० ॥
पुरे राष्ट्रे च ते राजन् पौरजानपदे जने ।
तं न पश्याम्यहं कश्चिद्यो न शोचति ते सुतं ॥ ११ ॥
अयोध्यां प्रविशन्तं मां गर्हयन्ति समन्ततः ।
पौरा दुःखाभिसंतप्ता विना राममुपागतं ॥ १२ ॥
विमानरथ्याप्रासादगवाक्षस्थाश्च योषितः ।
राममुत्सृज्य चायान्तं दृष्ट्वा चुक्रुशुरार्तवत् ॥ १३ ॥
अश्रुपूर्णेक्षणा दीनाः पश्यन्त्यो मामुपागतं ।
हा नृशंस क्व रामस्ते नीत इत्यपि चाब्रुवन् ॥ १४ ॥
नामित्राणां न मित्राणां नोदासीनजनस्य च ।
अहमार्ततया कश्चिद्विशेषं नोपलक्षये ॥ १५ ॥
दीनातुरार्तपुरुषा प्रम्लानोपवनद्रुमा ।
परिदेवितार्तस्वरा रुदितस्वननादिता ॥ १६ ॥
निरानन्दा निरुत्साहा निर्वषट्कारमङ्गला ।
रामप्रवासनार्तेयं पुरी ते न विराजते ॥ १७ ॥
इत्येवमादि करुणं सुमन्त्रवचनं नृपः ।
श्रुत्वोवाच ततो दीनो वाष्पविक्लववागिदं ॥ १८ ॥
मिथ्योपचारात् कैकेय्या वञ्चितेन कथं मया ।
न मन्त्रितं विमूढेन धर्मज्ञैर्गुरुभिः सह ॥ १९ ॥

केनाहं मोहितः पापो यन्मया सह मन्त्रिभिः ।
असंमन्त्र्य विमूढेन सहसा साहसं कृतं ॥ २० ॥
भवितव्यं तथा तेन रामेणामिततेजसा ।
मया तु तावदशिवं प्राप्तं तद्विप्रवासनात् ॥ २१ ॥
इदानीमपि सूताशु गत्वा रामं निवर्तय ।
न हि शक्याम्यृते तस्माज्जीवितुं दैवमोहितः ॥ २२ ॥
गतागतेन वा कालो दीर्घ एवं भविष्यति ।
मामेव रथमारोप्य क्षिप्रं रामं प्रदर्शय ॥ २३ ॥
सिंहस्कन्धो महाबाहुः क्वासौ लक्ष्मणपूर्वजः ।
यदि जीवति साध्वेनं पश्येयं सह सीतया ॥ २४ ॥
पूर्णेन्दुकान्तवदनं चारुपद्मदलेक्षणं ।
यदि रामं न पश्यामि यास्यामि यमसादनं ॥ २५ ॥
सुमन्त्र यदि ते किञ्चिन्मया पूर्वं कृतं प्रियं ।
ततः प्रापय मां रामं प्राणा हि त्वरयन्ति मां ॥ २६ ॥
रामप्रवाससलिले वाष्पशोकोर्मिमालिनि ।
अगाधव्यसने मग्नो घोरेऽहं शोकसागरे ॥ २७ ॥
इष्टपुत्रवियोगार्तिदुःखितेन गतायुषा ।
मयायं जीवता सूत दुस्तरः शोकसागरः ॥ २८ ॥
हा राम रामानुज हा हा वैदेहि पतिव्रते ।
न मां जानीत दुःखार्तं म्रियमाणमनाथवत् ॥ २९ ॥

को न्वस्ति दुःखिततरो मया दुष्कृतकर्मणा ।
योऽहमन्तर्गतप्राणो नैव द्रक्ष्यामि राघवं ॥ ३० ॥

इति स्म राजा करुणं महायशा
विलप्य दुःखोपहतेन चेतसा ।
गतासुकल्पः सहसैव मूर्छितः
पपात भूयोऽपि नृपासनात ततः ॥ ३१ ॥

इति विलपति पार्थिवे विमूढे
भृशकरुणं पतिते पुनर्धरण्यां ।
भृशतरमतिदुःखशोकसन्ना
करुणतरं विललाप राममाता ॥ ३२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथप्रलापो नाम
नवपञ्चाशः सर्गः ॥

LX.

सा तु भूतोपसृष्टेव गतसत्त्वेव च स्वयं ।
विललापातुरा देवी कौशल्या पतिता क्षितौ ॥ १ ॥
नय मामपि तत्राशु यत्र रामः सलक्ष्मणः ।
सुमन्त्र न हि रामेण विना जीवितुमुत्सहे ॥ २ ॥
तद्योजय रथं साधु नय मामपि काननं ।
अथ मां न नयस्याशु गमिष्यामि यमक्षयं ॥ ३ ॥
वाष्पोपरुद्धया वाचा ततस्तां सज्जमानया ।
वाक्यमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥
त्यक्तुमर्हसि कल्याणि शोकं पुत्रवियोगजं ।
तत्रापि हि सुखी रामो रंस्यते देवि निर्वृतः ॥ ५ ॥
लक्ष्मणो ह्यस्य तेजस्वी पादौ परिचरन् वने ।
वसतीतः परं लोकमर्जयन् धर्मनिर्जितं ॥ ६ ॥
विजनेऽपि वने सीता भर्तृबाहुव्यपाश्रया ।
देवि स्वर्गोपमं वासं सह रामेण वत्स्यति ॥ ७ ॥
नास्या दैन्यं विषादं वा सुसूक्ष्ममपि लक्षये ।
गृहे यथोचितो वासो वैदेह्याः प्रतिभाति मे ॥ ८ ॥
नगरोपवने रम्ये यथारमत सा पुरा ।
विजनेऽपि तथारण्ये रंस्यते देवि मा शुचः ॥ ९ ॥

वैदेही सह रामेण पूर्णचन्द्रनिभानना ।
अतुलां विन्दति प्रीतिं न तां शोचितुमर्हसि ॥ १० ॥
तद्गतं हृदयं यस्यास्तदधीनं च जीवितं ।
अयोध्यापि भवेत् तस्या रामेण रहिताटवी ॥ ११ ॥
पथि पृच्छति वैदेही ग्रामांश्च नगराणि च ।
रामं कमलपत्राक्षं सरांसि सरितस्तथा ॥ १२ ॥
रामलक्ष्मणयोर्मध्ये सीता राजति ते स्नुषा ।
विष्णुवासवयोर्मध्ये पद्मा श्रीरिव रूपिणी ॥ १३ ॥
न चाध्वश्रमसंतापदुःखैरप्यातपेन च ।
ग्लानिं गच्छति वैदेह्याः स्वभावप्रभवं वपुः ॥ १४ ॥
सदृशं शतपत्रस्य पूर्णचन्द्रसमद्युति ।
वदनं कान्तमार्ताया वैदेह्या न विलुप्यते ॥ १५ ॥
प्रकृत्या लक्तकरसप्रख्यौ तद्रसवर्जितौ ।
तथैव रेजतुस्तस्याश्चरणौ पद्मवर्चसौ ॥ १६ ॥
नूपुराशिञ्जिचरणा खेलं गच्छति मैथिली ।
भर्तारमनुगच्छन्ती विष्णुं श्रीरिव रूपिणी ॥ १७ ॥
सिंहं वने गजं प्रेक्ष्य व्याघ्रं चापि तु मैथिली ।
सा नैवोद्विजते यान्ती भर्तृवीर्यबलाश्रयात् ॥ १८ ॥
अथैव रामः पुत्रस्ते लक्ष्मणश्चैव वीर्यवान् ।
तथैवोदारवपुषौ न ग्लानिमधिगच्छतः ॥ १९ ॥

परस्परप्रियहितं कुर्वाणौ प्रियवादिनौ ।
न पितुर्नैव मातुश्च नान्यस्य स्मरतो वने ॥ २० ॥
न ते शोच्यास्त्वया देवि परस्परहिते रताः ।
इदं हि चरितं तेषां ख्यातिं लोकेषु यास्यति ॥ २१ ॥

विहाय शोकं परिगृह्य मानसं
महर्षिकल्पस्तपसि व्यवस्थितः ।
वने रतो मेध्यफलाशनः स ते
सुतो महात्मा कुरुते महत् तपः ॥ २२ ॥
तथा सुमन्त्रेण हितार्थवादिना
निवार्यमाणापि सती सुतप्रिया ।
न विप्रलापाद्विरराम दुःखिता
नरेन्द्रपत्नी प्रियपुत्रलालसा ॥ २३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्यासमाश्वासनं
नाम षष्टितमः सर्गः ॥

# अयोध्याकाण्डं

## LXI.

प्रत्याश्वस्ता तु राजानमुत्थाप्य भृशदुःखितं ।
कौशल्याश्वासयामास शयने शोकलालसं ॥ १ ॥
तत एनं प्रमार्जन्ती वीजयन्ती च मूर्छितं ।
भूयः प्रत्यागतप्राणमिदं वचनमब्रवीत् ॥ २ ॥
यदिदं त्रिषु लोकेषु प्रथितं ते महद्यशः ।
पुत्रप्रव्राजनात् तत् ते प्रनष्टमिव लक्षये ॥ ३ ॥
को हि नाम प्रियं पुत्रं त्यजेदनपकारिणं ।
प्रतिश्रुत्य सतां मध्ये यौवराज्याभिषेचनं ॥ ४ ॥
दातव्यो यदि वावश्यं प्रियायै ते वरः प्रभो ।
किमर्थं ते प्रतिज्ञातं रामस्याप्यभिषेचनं ॥ ५ ॥
अनृताद्यदि वा भीतः प्रव्राजयसि मे सुतं ।
प्रतिज्ञायाभिषेक्तास्मि श्वस्त्वामित्युपमन्त्रितं ॥ ६ ॥
स्त्रीहेतोः कामवशत्वाद्वृद्धः सन्नजितेन्द्रियः ।
पश्योभयं विचार्यैतत् तथाप्यनृतवागसि ॥ ७ ॥
इक्ष्वाकूणामयं वंशः सत्यवाक् प्रथितः क्षितौ ।
तत्र त्वया यौवराज्यं प्रतिज्ञायानृतं कृतं ॥ ८ ॥
श्लोकश्चायं महाराज पौराणः प्रथितः क्षितौ ।
सत्यं पुरा तुलयता स्वयं गीतः स्वयंभुवा ॥ ९ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतं ।
तुलयित्वा तु पश्यामि सत्यमेवातिरिच्यते ॥ १० ॥
जीवितेनाप्यतः सत्यं भुवि रक्षन्ति साधवः ।
न हि सत्यात् परो धर्मस्त्रिषु लोकेषु विद्यते ॥ ११ ॥
सत्यात् सोमः समभवत् सोमाद्ब्रह्म ततोऽमृतं ।
अद्भ्योऽग्निरग्नेः पृथिवी भूमेर्भूतानि जज्ञिरे ॥ १२ ॥
सत्येनार्कः प्रतपति सत्येनाप्यायते शशी ।
सत्येनामृतमुद्भूतं सत्ये लोकः प्रतिष्ठितः ॥ १३ ॥
वृषश्चतुष्पाद्भगवान् धर्मः सत्ये प्रतिष्ठितः ।
द्यौरन्तरीक्षं पृथिवी सत्येनैव धृतान्युत ॥ १४ ॥
सत्येनैकेन याँल्लोकान् यान्ति सत्यव्रता नराः ।
न यान्तिताननृतिका इष्ट्वा क्रतुशतैरपि ॥ १५ ॥
सत्यप्रतिज्ञा नृपते राजानः सत्यवादिनः ।
पथिभिस्तेन गन्तव्यं तैर्गता यैः पितामहाः ॥ १६ ॥
द्वावेव कथितौ सद्भिः पन्थानौ वदतां वर ।
अहिंसा चैव सत्यं च यत्र धर्मः प्रतिष्ठितः ॥ १७ ॥
तदिदं रक्षितं सद्भिः सत्यमुत्सादितं त्वया ।
धर्मं चैतं समास्थाय स्वं चैवोन्मथितं यशः ॥ १८ ॥
वातिगन्धः सुमनसां प्रतिवातं कथञ्चन ।
धर्मजस्तु मनुष्याणां वातिगन्धः समन्ततः ॥ १९ ॥

चन्दनानां महार्हाणामगुरूणां तथा प्रभो ।
न च स्थायी चिरं गन्धो यथा कीर्तिमयो नृणां ॥ २० ॥
स तवायं गुणहरो गन्धो लोके चरिष्यति ।
अशुभस्यास्य महतः कर्मणः शाश्वतीः समाः ॥ २१ ॥
इत्थं मन्ये सुमहती भ्रूणहत्या त्वया कृता ।
प्रियायै वसुधा दत्ता रामः प्रव्राजितो वनं ॥ २२ ॥
दिष्ट्या न याचितस्त्वेवं राघवो बध्यतामिति ।
न ह्येतदपि कैकेय्या दुर्लभं त्वयि धार्मिके ॥ २३ ॥
अनद्भुतमिदं लोके यद्दृष्टा बलवत्तरैः ।
ईश्वरैर्दुर्बलः कृष्यः क्रतौ पशुरिवाबलः ॥ २४ ॥
दृश्यन्ते हि नरा लोकेऽबलवन्तो बलाधिकैः ।
आक्रम्यमाणा विजने सिंहैरिव महाद्विपाः ॥ २५ ॥
स मे सुतश्च शक्तोऽपि धर्मं प्रति सुदुर्बलः ।
अतः स्वकामानुत्सृज्य मां च त्यक्त्वा वनं गतः ॥ २६ ॥
किं वा मे त्वामुपालभ्य राजन् परुषया गिरा ।
परस्य कृत्वा किं मन्युमात्मभाग्येष्वसाधुषु ॥ २७ ॥
अनुनीतास्मि रामेण गच्छता बहुविस्तरं ।
न मे वाच्यः पिता किंचिद्भवत्येति पुनः पुनः ॥ २८ ॥
न मदर्थं त्वया मातर्वाच्यो वृद्धं पिता मम ।
वाग्भिरुद्वेजनीयाभिरिति मां राघवोऽन्वशात् ॥ २९ ॥

साहं तेनानुशिष्टापि पुत्रस्नेहबलात् कृता ।
अवशा त्वां ब्रवीम्येवं मग्ना शोकमहार्णवे ॥ ३० ॥
का हि नामाप्रियं ब्रूयाद्भर्तारमिह मद्विधा ।
स्मरन्ती सत्कुले जन्म विनयं चापि जानती ॥ ३१ ॥
लोके हि पुरुषः स्त्री वा तथा तत् कुरुते स्वयं ।
यथा मधुरमुग्रं वा शृणोति लभतेऽपि वा ॥ ३२ ॥
नूनं हि मम भाग्यानां वैदेह्या राघवस्य च ।
अचिन्त्यत्वात् तु दैवस्य त्वमेतत् कृतवान् नृप ॥ ३३ ॥
न खल्वहं त्वां नृप दोषतो ब्रवीम्य्
अनीश्वरं हीश्वरदेशितं जगत् ।
दशा कृतान्तोपहतेयमाविला
किमत्र शक्यं पुरुषेण चेष्टितुं ॥ ३४ ॥
स तन्नियोगात् तव सत्यवादो
सत्यां प्रतिज्ञां नृप पालयंस्ते ।
इतो महात्मा वनमेव रामो
गतः सुखान्यप्रतिमानि हित्वा ॥ ३५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्योपालम्भो
नाम एकषष्टितमः सर्गः ॥

## LXII.

तथा तु बहु कौशल्या विलप्य क्रोधमूर्च्छिता ।
अनवाप्यैव रोषस्य पारं पुनरभाषत ॥ १ ॥
त्वया यस्त्वनियुक्तोऽपि भक्त्या राममनुव्रतः ।
लक्ष्मणोऽनुगतः प्रेम्ना तं शोचामि विशेषतः ॥ २ ॥
योऽभिषेके प्रतिहृते मम पुत्रस्य धीमतः ।
निःसृतो धनुरादाय तूर्णमश्रुतविस्तरः ॥ ३ ॥
क्रोधेन महताविष्टो रामराज्यापहारिणं ।
न स जानाति धर्मात्मा स्वगृहादग्निमुत्थितं ॥ ४ ॥
यो गच्छति स्वयं रामे क्रोधसंरक्तलोचनः ।
रोषाच्च कृतवान् वाक्यं तच्च तस्य स्मराम्यहं ॥ ५ ॥
योऽनुयातः स्वयं त्यक्त्वा मातरं भ्रातृवत्सलः ।
लक्ष्मणं तमहं रामाच्छोचाम्यद्य विशेषतः ॥ ६ ॥
राज्ञो महेन्द्रकल्पस्य जनकस्य महात्मनः ।
सुतां तामनवद्याङ्गीं वैदेहीं चिन्तयाम्यहं ॥ ७ ॥
अत्यन्तसुखसंवृद्धा लालिता पितृवेश्मनि ।
अत्यन्तसुकुमाराङ्गी श्यामा पद्मदलेक्षणा ॥ ८ ॥
या सुखानि परित्यज्य सर्वांश्च ज्ञातिबान्धवान् ।
पतिमनुसृता यान्तं कामवस्थामुपैष्यति ॥ ९ ॥

कथं नु सुतनुस्तन्वी सुकुमारी सुखोचिता ।
शीतमुष्णं च वर्षं च वैदेही प्रसहिष्यति ॥ १० ॥
या श्राम्यति गृहेऽप्यस्मिंश्चरन्ती वसुधातले ।
कथं सा विजनेऽरण्ये वैदेही विचरिष्यति ॥ ११ ॥
भुक्त्वा स्वादूनि भोज्यानि तथान्यानि च मैथिली ।
कथं वन्यान्यहृद्यानि कटुतिक्तानि भोक्ष्यते ॥ १२ ॥
शयनानि महार्हाणि पुरा संसेव्य जानकी ।
कथं पर्णवृतां भूमिमधिवत्स्यति मे स्नुषा ॥ १३ ॥
वीणावेणुस्वनैः सुप्ता लालिता या विबुध्यते ।
तन्वङ्गी सा कथं घोरैर्बहुपक्षिमृगारुतैः ॥ १४ ॥
पुरा वस्त्राणि मुख्यानि परिधाय यशस्विनी ।
कथं सा कुशचीराणि गात्रैः संधारयिष्यति ॥ १५ ॥
सुललाटं सुकेशान्तं पद्मपर्णाभमव्रणं ।
सुदन्तं सुहनु स्वक्षं पूर्णचन्द्रसमप्रभं ॥ १६ ॥
धूयमानं वने वातैर्निष्पीडं चार्करश्मिभिः ।
कथं तच्चारुवदनं तस्या वैवर्ण्यमेष्यति ॥ १७ ॥
महेन्द्रध्वजसंकाशो यशस्वी मनुजध्वजः ।
ध्वजो नृप कुलस्यास्य किमवस्थः स संप्रति ॥ १८ ॥
नूनं शेते स मेदिन्यां राङ्कवास्तरणोचितः ।
भुजं परिघसंकाशमुपधाय महाभुजः ॥ १९ ॥

पद्मगन्धि सुकेशान्तं पूर्णचन्द्रसमद्युति ।
कदा द्रक्ष्यामि रामस्य मुखं पद्मदलेक्षणं ॥ २० ॥
धात्रा मे हृदयं नूनमश्मसारमयं कृतं ।
हीनं यद्रामचन्द्रेण न विदीर्णं सहस्रधा ॥ २१ ॥
एतत् ते कृपणं कर्म कृतं लोकविगर्हितं ।
निरस्ताः पथि धावन्ति त्रयस्ते यन्महावने ॥ २२ ॥
यदि पञ्चदशे वर्षे पुनरेष्यति मे सुतः ।
स नैतां श्रियमन्विच्छेद्दीयमानामपि स्वयं ॥ २३ ॥
कथं हि भरतोच्छिष्टां श्रियं स बहुमंस्यते ।
ज्येष्ठः श्रेष्ठो वरिष्ठश्च परिभुक्तामिव स्रजं ॥ २४ ॥
न हि सिंहः परालीढमामिषं भोक्तुमिच्छति ।
नृसिंहो भरतालीढं रामो राज्यं न भोक्ष्यते ॥ २५ ॥
आज्यं चरुः पुरोडाशाः कुशा यूपः स्रुवो यथा ।
नैतानि यातयामानि कल्पन्ते पुनरध्वरे ॥ २६ ॥
आत्तं राज्यमिदं पश्चात् तथा भ्रात्रा यवीयसा ।
नाभिपत्तुमलं रामः पीतसोममिवाध्वरं ॥ २७ ॥
न चेमां धर्षणां रामो व्यसहिष्यदमर्षणः ।
नाधारयिष्यद्यदि ते गौरवं मन्दरोपमं ॥ २८ ॥
शितैः शरैः स हि क्रुद्धो दारयेदपि मन्दरं ।
त्वां तु नोत्सहते हन्तुं धर्मात्मा पितृगौरवात् ॥ २९ ॥

स सोमार्कग्रहगणं नभस्ताराविचित्रितं ।
पातयेच्चो विभुः क्रुद्धः सत्यान्न व्यतिवर्तते ॥ ३० ॥
आचालयेद्दारयेद्वा महीं शैलशताचितां ।
यस्तेजस्वी स ते पुत्रो गौरवान्नातिवर्तते ॥ ३१ ॥
एवंवीर्यो महासत्त्वस्त्वया ख्यातपराक्रमः ।
जनयित्वा सुतस्त्यक्तो जलजेनात्मजो यथा ॥ ३२ ॥
अनेन तेऽतिक्रमेण मन्ये ऽहं पृथिवीपते ।
त्वत्तः श्रियमतिक्रान्तां कीर्तिं पापान्नरादिव ॥ ३३ ॥
द्विजातिभिरयं धर्मः शास्त्रदृष्टः सनातनः ।
गुरोर्दुष्टान्महाराज गौरवं विनिवर्तते ॥ ३४ ॥
गुरुर्दुष्टः परित्याज्यस्तथा माता तथा पिता ।
यो ह्यनर्थाय कल्पेत स शत्रुर्न च बान्धवः ॥ ३५ ॥
न त्वेवं भविताचारस्त्वयि रामस्य भूपते ।
त्वया यदि कृतं पापं न स धर्मात् स्खलिष्यति ॥ ३६ ॥
एवमुक्त्वा तु कौशल्या विलपन्ती यशस्विनी ।
ततो हेत्वर्थसंयुक्तं पुनरेवाब्रवीद्वचः ॥ ३७ ॥
प्रथमा गतिरात्मैव द्वितीया गतिरात्मजः ।
सन्तो गतिस्तृतीयोक्ता चतुर्थी धर्मसंचयः ॥ ३८ ॥
चतसृभ्यः परिभ्रष्टो गतिभ्यस्त्वं नराधिप ।
वने परित्यजन् रामं साधुं सुतमकारणे ॥ ३९ ॥

न हि रामं परित्यज्य चिरं शक्यसि जीवितुं ।
सत्कर्मोपार्जिताल्लोकात् कैकेय्यर्थे परिच्युतः ॥ ४० ॥
स त्वं कीर्तिं च मां चैव त्यक्त्वा रामं सुतं च मे ।
प्राणांस्त्यक्ष्यसि दुःखार्तः सर्वथास्मि हता त्वया ॥ ४१ ॥

हता त्वयेयं नगरी सराष्ट्रा
कीर्तिः स्वधर्मश्च तथैव चात्मा ।
अहं सपुत्रा सहनागराश्च
सर्वे हताः कैकयिराज्यदानात् ॥ ४२ ॥
एवं गिरो दारुणनिष्ठुराक्षराः
श्रुत्वा स राजाश्रु मुमोह दुःखितः ।
विनिश्वसंश्चापि निमीलितेक्षणः
शुशोच रामं हतसत्त्वचेतनः ॥ ४३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कौशल्याविलापो
नाम द्विषष्टितमः सर्गः

## LXIII.

कौशल्ययेति नृपतिर्वाक्शल्यैरभिताडितः ।
मुमोह शयने भूयो दुःखेनामीलितेक्षणः ॥ १ ॥
प्रतिलभ्य पुनः संज्ञां समुन्मील्य च लोचने ।
अथ पार्श्वस्थितां दृष्ट्वा कौशल्यामिदमब्रवीत् ॥ २ ॥
प्रसादये त्वां कौशल्ये शोकार्तोऽहं कृताञ्जलिः ।
नार्हस्युरसि मे क्षारं निषेक्तुं सुतवत्सले ॥ ३ ॥
पुत्रशोकार्तमनसो हृदयं मे विदीर्यते ।
असह्यान्यकृतप्रज्ञे वाग्वज्राणि विमुञ्चसि ॥ ४ ॥
न नु भर्तैव साध्वीनां गुणवान् निर्गुणोऽपि वा ।
दैवतं च गतिश्चेति मत्वा पूज्यतमो मतः ॥ ५ ॥
क्षमस्वातिक्रमं देवि भृशार्तस्त्वां प्रसादये ।
हन्तुमर्हसि वै भूयो दैवेनोपहतं न मां ॥ ६ ॥
जाने त्वां देवि धर्मज्ञां दृष्टलोकपरावरां ।
अतो नार्हसि मां भूयो वक्तुमेतादृशं वचः ॥ ७ ॥
इति राज्ञोऽतिकरुणं श्रुत्वा दीनस्य भाषितं ।
पुत्रशोकं परित्यज्य कौशल्या पतिवत्सला ॥ ८ ॥
शिरस्यञ्जलिमाधाय भृशं संतप्तमानसा ।
शिरसा नृपतेः पादौ प्रणिपत्येदमब्रवीत् ॥ ९ ॥

अतिक्रमं मे नृपते त्वमिमं क्षन्तुमर्हसि ।
अवाच्यं हि मयोक्तोऽसि पुत्रशोकविमूढया ॥ १० ॥
देवभूतेन भर्त्रा या याचिता न प्रसीदति ।
कृताञ्जलिभृशार्तेन हता सेह परत्र च ॥ ११ ॥
क्षमस्व राजन्नार्ताया अतिक्रममिमं विभो ।
प्रभुश्चैवेश्वरश्चासि मम रामस्य चोभयोः ॥ १२ ॥
जानामि धर्मं धर्मज्ञ जाने त्वां सत्यवादिनं ।
पुत्रशोकार्तयेदं तु मया किमपि भाषितं ॥ १३ ॥
शोको नाशयति प्रज्ञां शोको नाशयति श्रुतं ।
शोको धृतिं नाशयति नास्ति शोकसमं तमः ॥ १४ ॥
सोढुं शक्योऽग्निसंस्पर्शः शस्त्रस्पर्शश्च दारुणः ।
न तु शोकभवं दुःखं संसोढुं नृप शक्यते ॥ १५ ॥
सर्वज्ञा धृतिमन्तोऽपि च्छिन्नधर्मार्थसंशयाः ।
यतयो ह्यत्र मुह्यन्ति शोकोपहतचेतसः ॥ १६ ॥
पञ्च यानि गतान्यद्य दिनानि तनयस्य मे ।
तानि वर्षशतानीव शोकार्ताया गतानि मे ॥ १७ ॥
तद्गतासक्तचित्तायाः शोकौघो मे विवर्धते ।
जलौघवेगो गङ्गाया महानिव तपात्यये ॥ १८ ॥
एवं संभाषमाणायां तदातिकरुणं वचः ।
कौशल्यायां जगामास्तं सविता दिवसक्षये ॥ १९ ॥

एवं प्रह्लादितो वाक्यैर्देव्या कौशल्यया नृपः ।
शोकश्रमपरिग्लानः शनैर्निद्रावशं गतः ॥ २० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथप्रसादनं
नाम त्रिषष्टितमः सर्गः ॥

## LXIV.

एवं तु विलपन्तीं तां कौशल्यां प्रमदोत्तमां ।
इदं धैर्यान्वितं वाक्यं सुमित्रा धर्म्यमब्रवीत् ॥ १ ॥
दिव्यैर्गुणगणैर्युक्तः पुत्रस्ते देवि राघवः ।
पितुर्नियोगे तिष्ठन्तं तं न शोचितुमर्हसि ॥ २ ॥
नादेवसत्त्वा नाप्राज्ञाः पुरुषा नाल्पदर्शिनः ।
पितुर्नियोगे तिष्ठन्ति न चाकल्याणभागिनः ॥ ३ ॥
यत् तवार्ये गतः पुत्रो हित्वा राज्यं सुखानि च ।
प्राप्तव्यं सुमहत् तेन कल्याणमिति मे मतिः ॥ ४ ॥
सद्भिराचरिते धर्म्ये यशस्ये वर्त्मनि स्थितं ।
पुत्रं धर्मभृतां श्रेष्ठं न तं शोचितुमर्हसि ॥ ५ ॥
तस्यानुवर्तते वृत्तं लक्ष्मणोऽपि ममात्मजः ।
तमप्यर्हसि नैवार्ये शोचितुं भ्रातृवत्सलं ॥ ६ ॥
अरण्यवासदुःखानि जानानापि च जानकी ।
सुखसंवर्धिता त्यक्त्वा गृहवासं सुखानि च ॥ ७ ॥
अनुगच्छति भर्तारं यासौ धर्मपरायणा ।
तां यशोभाजनां धन्यां नैव शोचितुमर्हसि ॥ ८ ॥
यशःपताकां विपुलां त्रिषु लोकेषु विश्रुतां ।
उच्छ्रित्य ते गतः पुत्रस्तां न शोचितुमर्हसि ॥ ९ ॥

रामस्य विपुलं सत्त्वं विज्ञायोदारचेतसः ।
न गात्राण्यंशुभिः सूर्यः संतापयितुमर्हति ॥ १० ॥
आदाय सुरभीन् गन्धान् काननेभ्यः सुखोऽनिलः ।
पुत्रं ते नातिशीतोष्णः संसेविष्यति कानने ॥ ११ ॥
भूमावपि शयानं तं वैदेह्या सह राघवं ।
पितेवांशुकरैः स्पृष्ट्वा ह्लादयिष्यति चन्द्रमाः ॥ १२ ॥
अस्त्राणि यस्मै दिव्यानि विश्वामित्रो ददौ स्वयं ।
तं त्वं सर्वास्त्रविद्वांसं कथं शोचितुमर्हसि ॥ १३ ॥
कीर्त्या श्रिया भार्यया च यो नित्यं तिसृभिर्वृतः ।
द्युतिमांश्च महासत्त्वः स रामो राज्यमर्हति ॥ १४ ॥
यान्यद्य पुत्रशोकार्ता कौशल्येऽश्रूणि मुञ्चसि ।
आनन्दजानि तानि त्वं रामे मोक्ष्यस्युपस्थिते ॥ १५ ॥
पुत्रस्ते यशसा लोकान् व्याप्य धर्मभृतां वरः ।
चतुर्दशानां वर्षाणामन्ते भोक्ष्यति मेदिनीं ॥ १६ ॥
कुशचीराम्बरमपि यं यान्तं नरकुञ्जरं ।
श्रीरिवानुगता सीता तस्य किं नाम दुर्लभं ॥ १७ ॥
तव पुत्रो वरः पुंसां वनवासादुपागतः ।
वृत्तायतभुजः पादौ संस्पृशन् ह्लादयिष्यति ॥ १८ ॥
तं पादौ वन्दमानं त्वं दृष्ट्वा राजीवलोचनं ।
मेघराजीव शैलेन्द्रं सेक्ष्यस्यानन्दजाश्रुभिः ॥ १९ ॥

निशम्य तल्लक्ष्मणमातृवाक्यं
रामस्य मातुर्नरदेवपत्न्याः ।
शनैः स शोकः प्रशमं जगाम
वृष्ट्या यथाग्निः परिषिच्यमानः ।। ३० ।।

इत्यार्षे रामायणे अयोध्याकाण्डे सुमित्रावाक्यं
नाम चतुः षष्टितमः सर्गः ।।

## LXV.

राम मनुजशार्दूले सानुजे वनमाश्रिते ।
राजा दशरथः श्रीमानापदं समपद्यत ॥ १ ॥
रामलक्ष्मणयोरेव विवासाद्वासवोपमं ।
ग्रहाक्रोपप्लवगतं सूर्यं तम इवाम्बरे ॥ २ ॥
स षष्ठे दिवसे रामं शोचन्नेव महायशाः ।
अर्धरात्रे प्रबुद्धः सन् सस्मारात्मसुदुष्कृतं ॥ ३ ॥
स्मृत्वा च देवीं कौशल्यामभिभाष्येदमब्रवीत् ।
यदि जागर्षि कौशल्ये शृणु मेऽवहिता वचः ॥ ४ ॥
यदाचरति कल्याणि नरः कर्म शुभाशुभं ।
सोऽवश्यं फलमाप्नोति तस्य कालक्रमागतं ॥ ५ ॥
गुरुलाघवमर्थानामारम्भेष्ववितर्कयन् ।
गुणतो दोषतश्चैव बाल इत्युच्यते बुधैः ॥ ६ ॥
तद्यथाम्रवणं छित्वा पलाशवनमाश्रयेत् ।
पुष्पं दृष्ट्वा फलप्रेप्सुर्निराशः स्यात् फलागमे ॥ ७ ॥
सोऽहमाम्रवणं छित्वा पलाशवनमाश्रितः ।
बुद्धिमोहात् परित्यज्य रामं शोचामि दुर्मतिः ॥ ८ ॥
कौशल्ये लब्धलक्ष्येण तरुणेन मया पुरा ।
कौमारे शब्दवेधित्वश्लाघिना दुष्कृतं कृतं ॥ ९ ॥

अयोध्याकाण्डं

तदिदं मामनुप्राप्तं फलं पापस्य कर्मणः ।
भक्षितस्य विषस्येव विपाको जीवितान्तकः ॥ १० ॥
अविज्ञानाद्यथा कश्चित् पुरुषो भक्षयेद्विषं ।
तथा मयाप्यविज्ञानात् पापं कर्म पुरा कृतं ॥ ११ ॥
देव्यनूढा तदाभूस्त्वं युवराजो भवाम्यहं ।
अथ प्रावृडनुप्राप्ता मनः संहर्षिणी मम ॥ १२ ॥
आदाय हि रसं भौमं तप्त्वा च जगतीं रवौ ।
उदग्गत्वाभ्युपावृत्ते परेताचरितां दिशं ॥ १३ ॥
आवृण्वाना दिशः सर्वाः स्निग्धा ददृशिरे घनाः ।
मुदा विजह्रिरे चापि बकसारसवर्हिणः ॥ १४ ॥
आकुलाविलतोयानि स्रोतांसि विपुलान्यपि ।
उन्मार्गजलवाहीनि बभूवुर्जलदागमे ॥ १५ ॥
मेघजेनाम्बुना भूमिर्भूरिणा परितर्पिता ।
उन्मत्तशिखिसारङ्गा बभौ हरितशाद्वला ॥ १६ ॥
एतस्मिन्नीदृशे काले वर्तमानेऽहमङ्गने ।
बद्ध्वा तूणौ धनुष्पाणिः शरयूमगमं नदीं ॥ १७ ॥
धनुर्व्यायामशीलत्वाच्छब्दवेधचिकीर्षया ।
तस्या नद्यास्तथा तीरं विविक्तमुपसृत्य च ॥ १८ ॥
निपाने निशि वन्यानां मृगाणां सलिलार्थिनां ।
स्थितस्तत्राहमेकान्ते रात्रौ विततकार्मुकः ॥ १९ ॥

तत्रापि महिषं वन्यं गजं वा तीरमागतं ।
अन्यं वापि मृगं हन्मि शब्दं श्रुत्वाभ्युपागतः ॥ २० ॥
अथाहं पूर्यमाणस्य जलकुम्भस्य निःस्वनं ।
अचक्षुर्विषयेऽश्रौषं वारणस्येव बृंहितं ॥ २१ ॥
ततः सुपुङ्खं निशितं शरं संधाय कार्मुके ।
तस्मिन् शब्दे शरं क्षिप्रमसृजं दैवमोहितः ॥ २२ ॥
शरे चाशृणवं तस्मिन् मुक्ते निपतिते तदा ।
हा हतोऽस्मीति करुणं मानुषेणेरितां गिरं ॥ २३ ॥
कथमस्मद्विधे शस्त्रं निपात्येत तपस्विनि ।
केनायं सुनृशंसेन मयि वाणो निपातितः ॥ २४ ॥
प्रविविक्तां नदीं रात्रावुदहारोऽहमागतः ।
इषुणाभिहतः केन कस्येहापकृतं मया ॥ २५ ॥
वृद्धस्यान्धस्य दीनस्य वने वन्येन जीवतः ।
मुनेः पुत्रबधादेव हृदि वाणो निपातितः ॥ २६ ॥
इमं निष्फलमारम्भं केवलानर्थसंहितं ।
विद्वान् कः साधुमन्येत शिष्येणेव गुरोर्बधं ॥ २७ ॥
नेमं तथानुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरं चान्धौ वृद्धौ शोचामि तौ यथा ॥ २८ ॥
तदन्धमिथुनं वृद्धं दीर्घकालं भृतं मया ।
कथं मयि मृतेऽनाथं कृपणं वर्तयिष्यति ॥ २९ ॥

तौ चाहं चैव कृपणाः केनागम्य दुरात्मना ।
बाणेनैकेन निहताः शाकमूलफलाशनाः ॥ ३० ॥
इति तां करुणां वाचं श्रुत्वा मे भ्रान्तचेतसः ।
अधर्मभयभीतस्य करादच्यवतायुधं ॥ ३१ ॥
सहसाभ्युपसृत्यैनमपश्यं हृदि ताडितं ।
जटाजिनधरं बालं दीनं पतितमम्भसि ॥ ३२ ॥
स मां कृपणमुद्वीक्ष्य मर्मण्यभिहतो दृढं ।
इत्युवाच वचो देवि दिधक्षुरिव तेजसा ॥ ३३ ॥
किं तवापकृतं ह्यत्र वने निवसता मया ।
जिघृक्षुरापो गुर्वर्थे यदहं ताडितस्त्वया ॥ ३४ ॥
अमू हि कृपणावन्धावनाथौ विजने वने ।
मदीयौ पितरौ वृद्धौ प्रतीक्षेते ममाशया ॥ ३५ ॥
एकेनानेन बाणेन त्वया पाप हतास्त्रयः ।
अहमम्बा च तातश्च कस्मादनपकारिणः ॥ ३६ ॥
नूनं न तपसः किञ्चित् फलं मन्ये श्रुतस्य वा ।
यथा मां नाभिजानाति पिता मूढ त्वया हतं ॥ ३७ ॥
जानन्नपि च किं कुर्यादन्धत्वादपराक्रमः ।
छिद्यमानमिवाशक्तस्त्रातुमन्यं नगो नगं ॥ ३८ ॥
पितुरेव च मे शीघ्रं गत्वा चाचक्ष्व राघव ।
मा त्वां धक्ष्यति शापेन शुष्कं काष्ठमिवानलः ॥ ३९ ॥

इयमेकपदी याति मम तं पितुराश्रमं ।
तं प्रसादय गत्वाशु न स त्वां कुपितः शपेत् ॥ ४० ॥
विशल्यं मां कुरु क्षिप्रं त्वयायं योऽर्पितः शरः ।
हृदि वज्राग्निसंस्पर्शः प्राणानुपरुणद्धि मे ॥ ४१ ॥
सशल्यो मरणं नाहमाप्नुयां शल्यमुद्धर ।
न द्विजातिरहं शङ्कां ब्रह्महत्याकृतां त्यज ॥ ४२ ॥
ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने ।
इति मामब्रवीद्वाक्यं बालः शरहतो मया ॥ ४३ ॥

जलार्द्रगात्रं विलपन्तमेवं
शराभिघातार्तमभिश्वसन्तं ।
तथा शरघ्वां तमहं शयानं
दृष्ट्वैव बालं सुभृशं विषण्णः ॥ ४४ ॥

तस्याथोत्ताम्यतो बाणमुज्जहार बलादहं ।
यत्नवान् जीविताकाङ्क्षी मुनेस्तस्य विचेतनः ॥ ४५ ॥

शरे तु तस्मिन् व्यपनीतमात्रे
हिक्कोद्गतश्वासमुहूर्तखिन्नः ।
विचेष्टमानः परिवृत्तनेत्रः
प्राणानमुञ्चत् स मुनेस्तनूजः ॥ ४६ ॥

निधनमुपगते महर्षिपुत्रे
सह यशसा सहसैव मां निपात्य ।

भृशमकृमभवं विमूढचेता
व्यसनमपारमसंशयं प्रपन्नः ।।४७।।

इत्यार्षे रामायणे अयोध्याकाण्डे ऋषिकुमारबधो
नाम पञ्चषष्टितमः सर्गः ।।

# रामायणं

## LXVI.

ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमं ।
आगच्छं कुम्भमादाय पितुरस्याश्रमं प्रति ॥ १ ॥
तत्राहं कृपणावन्धौ वृद्धावपरिचारकौ ।
अपश्यं जनकौ तस्य लूनपक्षाविवाण्डजौ ॥ २ ॥
तत्कथाभिरुदासीनौ व्यथितौ पुत्रलालसौ ।
पुत्रदर्शनजामाशामाकाङ्क्षन्तौ मया हतौ ॥ ३ ॥
तदज्ञानान्महत् पापं कृत्वाहं दीनमानसः ।
आश्रमस्थावभिप्रेत्य तावपश्यं तपस्विनौ ॥ ४ ॥
श्रुत्वैव पदशब्दं तु ततो मां सोऽभ्यभाषत ।
किं ते चिरायितं पुत्र पानीयं क्षिप्रमानय ॥ ५ ॥
यन्निमित्तं चिरं तात सलिले क्रीडितं त्वया ।
उत्कण्ठितेयं माता ते तथाहमपि पुत्रक ॥ ६ ॥
यदि किञ्चिद्व्यलीकं ते मया मात्रापिवा कृतं ।
क्षमयेस्त्वं च मा भूयश्चिरयेथाः क्वचिद्गतः ॥ ७ ॥
अगतेस्त्वं गतिर्मेऽद्य त्वं मे चक्षुरचक्षुषः ।
ममासक्तास्त्वयि प्राणाः कस्मात् त्वं नाभिभाषसे ॥ ८ ॥
तत्रेति करुणां वाचं ब्रुवन्तं पुत्रलालसं ।
अहमभ्येत्य शनकैरब्रुवं भयविह्वलः ॥ ९ ॥

वाष्पपूर्णेन कण्ठेन धृत्वा संस्तभ्य वाग्बलं ।
कृताञ्जलिर्वेपमानो भयगद्गदवागिदं ॥ १० ॥
क्षत्रियोऽहं दशरथो नाहं पुत्रो मुने तव ।
सज्जनावमतं घोरं कृत्वा पापमुपागतः ॥ ११ ॥
भगवंश्चापहस्तोऽहं शरय्वास्तीरमागतः ।
काङ्क्षन् जिघांसुरज्ञातं मृगं तत्राभ्युपागतं ॥ १२ ॥
पूर्यमाणस्य कुम्भस्य अथ शब्दो मया श्रुतः
तत्र पुत्रो मयासौ ते निहतो गजशङ्कया ॥ १३ ॥
तस्याहं रुदितं श्रुत्वा हृदि भिन्नस्य पत्रिणा ।
भीत आगम्य तं देशमपश्यं तं तपस्विनं ॥ १४ ॥
भगवन् शब्दवेधित्वान्मयायं गजशङ्कया ।
विसृष्टो ऽम्भसि नाराचो येन ते निहतः सुतः ॥ १५ ॥
समुद्धृते मया बाणे प्राणांस्त्यक्त्वा दिवं गतः ।
भवन्तौ सुचिरं कालं परिशोच्य तपस्विनौ ॥ १६ ॥
अज्ञानतो मया पुत्रो हतस्ते दयितो मुने ।
शेषमेवं गते तेजो मय्युत्स्रष्टुं त्वमर्हसि ॥ १७ ॥
स एतदभिसंश्रुत्य मुहूर्तमिव मूर्छितः ।
प्रत्याश्वस्यागतप्राणो मामुवाच कृताञ्जलिं ॥ १८ ॥
यदि त्वमशुभं कृत्वा नाचक्षीथाः स्वयं मम ।
लोका अपि ततो दग्धा मया ते शापवह्निना ॥ १९ ॥

क्षत्रिय ज्ञानपूर्वं चेद्वानप्रस्थबधः कृतः ।
स्थानात् प्रच्यावयेदाशु ब्रह्माणमपि सुस्थितं ॥ २० ॥
सप्तावराः सप्तपूर्वे तव वंश्या नराधम ।
पतेयुर्ज्ञानपूर्वं ते बधं कृतवतो मुनेः ॥ २१ ॥
कृतस्त्वसौ यदज्ञानात् त्वया तेनाद्य जीवसि ।
न स्याद्धि कुलमप्यद्य राघवाणां भवान् किमु ॥ २२ ॥
नय मां साधु तं देशं यत्रासौ बालकस्त्वया ।
कृतो नृशंस बाणेन ममान्धस्यान्धयष्टिका ॥ २३ ॥
तमहं पातितं भूमौ स्प्रष्टुमिच्छामि पुत्रकं ।
संप्राप्य यदि जीवेयं पुत्रस्पर्शमपश्चिमं ॥ २४ ॥
रुधिरेणावसिक्ताङ्गं प्रकीर्णाचितमूर्धजं ।
सभार्यस्तं स्पृशाम्यद्य धर्मराजवशं गतं ॥ २५ ॥
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ ।
तमहं स्पर्शयामास सभार्यं पतितं सुतं ॥ २६ ॥
पुत्रशोकातुरौ स्पृष्ट्वा तौ पुत्रं पतितं क्षितौ ।
आर्तस्वरं विसृज्योभौ तस्यैवोपरि पेततुः ॥ २७ ॥
माता चास्य मृतस्यापि जिह्वया लिहती मुखं ।
विललापातिकरुणं गौर्विवत्सेव वत्सला ॥ २८ ॥
ननु ते यज्ञदत्ताहं प्राणेभ्यो ऽपि प्रिया विभो ।
स कथं दीर्घमध्वानं प्रस्थितो मां न भाषसे ॥ २९ ॥

संपरिष्वज्ञ तावन्मां पश्चात् पुत्र गमिष्यसि ।
किं वत्स कुपितो मे ऽसि येन मां नाभिभाषसे ॥ ३० ॥
अनन्तरं पिता चास्य गात्राण्यार्तः परिस्पृशन् ।
इदमाह मृतं पुत्रं जीवन्तमिव चातुरः ॥ ३१ ॥
ननु ते ऽहं पिता पुत्र सह मात्राभ्युपागतः ।
उत्तिष्ठ तावदेह्यावां कण्ठे वत्स परिष्वज्ञ ॥ ३२ ॥
कस्य चापररात्रे ऽहं स्वाध्यायं कुर्वतो वने ।
श्रोष्यामि मधुरं शब्दं पुत्र शास्त्रं जिघृक्षतः ॥ ३३ ॥
ननु मूलफलं वन्यमाहरिष्यति को वनात् ।
आवयोरन्धयोः पुत्र काङ्क्षतोः क्षुत्परीतयोः ॥ ३४ ॥
इमामन्धां च वृद्धां च मातरं ते तपस्विनीं ।
कथं पुत्र भरिष्ये ऽहमन्धो गतपराक्रमः ॥ ३५ ॥
एकाहमपि तावत् त्वं नेतो गन्तुमिहार्हसि ।
श्वो मया चैव मात्रा च गन्तासि सह पुत्रक ॥ ३६ ॥
उभावपि भवच्छोकादनाथौ न चिरादिव ।
प्राणैः पुत्र वियोक्ष्यावो मरणे कृतनिश्चयौ ॥ ३७ ॥
इतो वैवस्वतं गत्वा भिक्षिष्ये कृपणः स्वयं ।
पुत्रभिक्षां प्रदेहीति त्वयैव सहितो गतः ॥ ३८ ॥
पर्युपास्य च कः संध्यां स्नात्वा हुत्वा च पावकं ।
ह्लादयिष्यति मे पादौ कराभ्यां परिसंस्पृशन् ॥ ३९ ॥

अपापो ऽसि यथा पुत्र निहतः पापकर्मणा ।
त्वमाप्नुहि तथा लोकान् शूराणामनिवर्तिनां ॥ ४० ॥
अपरावर्तिनां लोकाः शूराणां ये तपस्विनां ।
यज्वनां गुरुवृत्तीनां तांस्त्वमाप्नुहि शाश्वतान् ॥ ४१ ॥
यान् लोकान् वेदवेदाङ्गपारगा मुनयो गताः ।
यांश्च राजर्षयो याता ययातिनहुषादयः ॥ ४२ ॥
गृहमेधिनश्च यान् लोकान् स्वदारब्रह्मचारिणः ।
गोहिरण्यान्नदातारो भूमिदाश्चैव यान् गताः ॥ ४३ ॥
यांश्चाभयप्रदातारस्तथा यान् सत्यवादिनः ।
तान् लोकान् मदनुध्यातो याहि पुत्रक शाश्वतान् ॥ ४४ ॥
न हीदृशे कुले जन्म प्राप्य यात्यधमां गतिं ।
तस्मादितश्च्युतः स्थानाद्याहि लोकान् मधुश्च्युतः ॥ ४५ ॥
एवमादि विलप्यार्तः स मुनिः सह भार्यया ।
ततोऽस्य कर्तुमुदकं प्रतस्थे दीनमानसः ॥ ४६ ॥
अथ दिव्यवपुर्भूत्वा विमानवरमास्थितः ।
मुनिपुत्रः स तौ वाक्यमुवाच पितराविदं ॥ ४७ ॥
भवन्तौ परिचर्याहं प्राप्तः पुण्यां परां गतिं ।
भवन्तावपि हि क्षिप्रं स्थानमिष्टमवाप्स्यतः ॥ ४८ ॥
न भवद्भ्यामहं शोच्यो नायं राजापराध्यति ।
भवितव्यमनेनैवं येनाहं निधनं गतः ॥ ४९ ॥

एतावदुक्त्वा वचनमृषिपुत्रो दिवं ययौ ।
दिवि दिव्यवपू राजन् विमानवरमास्थितः ॥५०॥
सोऽपि कृत्वोदकं तस्य पुत्रस्य सह भार्यया ।
तपस्वी मामुवाचेदं कृताञ्जलिमुपस्थितं ॥५१॥
कथं त्वं ख्यातयशसां राजर्षीणां महात्मनां ।
अविनीत कुले जात इक्ष्वाकूणां नराधम ॥५२॥
स्त्रीनिमित्तं न वैरं ते क्षेत्रजं न मया सह ।
तथ्यथैकेषुणा कस्मात् सभार्योऽहं हतस्त्वया ॥५३॥
अविज्ञानात् तु मे पुत्रो हतो यदनयेन च ।
त्वया तस्मादहमपि शपामि त्वां निबोध मे ॥५४॥
पुत्रशोकातुरः प्राणान् संत्यक्ष्याम्यवशो यथा ।
त्वमप्यन्ते तथा प्राणांस्त्यक्ष्यसे पुत्रलालसः ॥५५॥
एवं शापमहं लब्ध्वा स्वपुरं पुनरागतः ।
सोऽप्यृषिः पुत्रशोकेन न चिरादिव संस्थितः ॥५६॥
स ब्रह्मशापो नियतमद्य मां समुपस्थितः ।
तथा हि पुत्रशोकार्तं प्राणाः संत्वरयन्ति मां ॥५७॥
चक्षुर्भ्यां न प्रपश्यामि स्मृतिर्मे देवि लुप्यते ।
दूता वैवस्वतस्यैते त्वरयन्ति च मां शुभे ॥५८॥
यदि मां संस्पृशेद्रामः संभाषेतापि चागतः ।
जीवेयमिति मे बुद्धिः प्राप्यामृतमिवातुरः ॥५९॥

दृष्ट्वापि यद्यहं प्राणांस्त्यजेयं दयितं सुतं ।
प्रेत्यापि न विमुच्येऽहं पुत्रशोकेन दुःखितः ॥ ६० ॥
अतो नु किं दुःखतरं भवेन्मम च भाविनि ।
यददृष्ट्वैव रामस्य मुखं त्यक्ष्यामि जीवितं ॥ ६१ ॥
रामादर्शनजः शोकः प्राणानारुजतीव मे ।
नदीतीररुहान् वृक्षान् वारिवेगो महानिव ॥ ६२ ॥
निस्तीर्णवनवासं तमयोध्यां पुनरागतं ।
द्रक्ष्यन्ति सुखिनो रामं शक्रं स्वर्गादिवागतं ॥ ६३ ॥
न ते मनुष्या देवास्ते ये तत् पूर्णेन्दुसंनिभं ।
मुखं द्रक्ष्यन्ति रामस्य पुरीं प्रविशतो वनात् ॥ ६४ ॥
सुदंष्ट्रं विमलं कान्तं चारु पद्मदलेक्षणं ।
धन्या द्रक्ष्यन्ति रामस्य तारापतिनिभं मुखं ॥ ६५ ॥
शरत्फुल्लस्य पद्मस्य तुल्यनिश्वासमारुतं ।
द्रक्ष्यन्ति सुखिनस्तस्य मुखं पुत्रस्य ये नराः ॥ ६६ ॥
इति रामं स्मरन्नेव शयनीयतले नृपः ।
शनैरुपजगामास्तं शशीव रजनीक्षये ॥ ६७ ॥
हा पुत्र राम इति च ब्रुवन्नेव शनैर्नृपः ।
तत्याज सुप्रियान् प्राणान् पुत्रशोकेन दुस्त्यजान् ॥ ६८ ॥
तथा स दीनः कथयन् नराधिपः
प्रियस्य पुत्रस्य विवाससंकथां ।

गतेऽर्धरात्रे शयनीयसंस्थितो
जहौ प्रियं जीवितमात्मनस्तदा ॥ ६१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे ब्रह्मशापाख्यानं
नाम षट्षष्टितमः सर्गः ॥

## LXVII.

विलप्याथ तमेवं तु तूष्णींभूतं नराधिपं ।
सुप्त इत्यवगम्यार्ता कौशल्या न व्यबोधयत् ॥ १ ॥
अनुक्त्वैव च भर्तारं किंचिच्छोकश्रमालसा ।
सुष्वाप शयने भूयः पुत्रशोकार्तमानसा ॥ २ ॥
अथ रात्र्यां व्यतीतायां संध्याकाल उपस्थिते ।
वन्दिनः पर्युपातिष्ठन् पार्थिवं प्रतिबोधकाः ॥ ३ ॥
तेषां तु समुपश्रुत्य सूतमागधवन्दिनां ।
सर्वा बुबुधिरे तूर्णं नृपान्तःपुरयोषितः ॥ ४ ॥
स्वकर्मभिश्चाभ्युचिते राज्ञोपस्थानकारिणः ।
स्त्रीवर्षवरभूयिष्ठा उपतस्थुर्नराधिपं ॥ ५ ॥
गन्धाम्बुपरिपुर्णांश्च कुम्भान् काञ्चनराजतान् ।
उपतस्थुरुपादाय स्नापकाः पुरुषा नृपं ॥ ६ ॥
मङ्गलालम्भनीयानि तथैवान्यमुपस्करं ।
यथायोगमुपाजह्रुरुपचारविचक्षणाः ॥ ७ ॥
अभ्येत्य चोपचारज्ञाः शयनीये नराधिपं ।
स्त्रियः प्रबोधयां चक्रुरादित्योदयशङ्कया ॥ ८ ॥
प्रबोध्यमानो ऽपि यदा नाबुध्यत स पार्थिवः ।
आसूर्योदयनात् सुप्तस्ततस्ताः शङ्किताः स्त्रियः ॥ ९ ॥

ता वेपथुसमाविष्टा राज्ञः प्राणेषु शङ्किताः ।
प्रतिस्रोतस्तृणाग्राणां सदृशं प्रचकम्पिरे ॥ १० ॥
अथ तासां परित्रासं दृष्ट्वा स्पृष्ट्वा च पार्थिवं ।
यत् तदा शङ्कितं पापं तस्य जज्ञे विनिश्चयः ॥ ११ ॥
ता वेपमानाः संभ्रान्ता मृतं दृष्ट्वा नराधिपं ।
हा नाथ हा मृतो ऽसीति पतिता वै विचुक्रुशुः ॥ १२ ॥
तासां तेनार्तिनादेन महता शयिते तदा ।
कौशल्या च सुमित्रा च बुबुधाते सुदुःखिते ॥ १३ ॥
हा हा किमेतदित्युक्त्वा सहसोद्वेगमागते ।
उत्थाय शयनात् क्षिप्रं राजानमुपतस्थतुः ॥ १४ ॥
दृष्ट्वा स्पृष्ट्वा च भर्तारं ते देव्यावतिदुःखिते ।
सुप्तमेवोद्गतप्राणं भृशं चुक्रुशतुस्तदा ॥ १५ ॥
तेन शब्देन संभ्रान्ताः सर्वशो ऽन्तःपुरस्त्रियः ।
संघशश्चुक्रुशुस्तत्र कुरर्यस्त्रासिता इव ॥ १६ ॥
ईरितो ऽन्तःपुरस्त्रीभिरार्ताभिः स स्वनो महान् ।
पुरीं तां पूरयामास बोधयन्निव सर्वशः ॥ १७ ॥
ततः संभ्रान्तमनसस्तेन शब्देन बोधिताः ।
अनाहूताः प्रविविशुर्नृपवेश्मापराः स्त्रियः ॥ १८ ॥
ताश्च ताश्चैव संहत्य ततस्ताः सर्वशो ऽङ्गनाः ।
रुरुदुश्चुक्रुशुश्चैव नृपे पञ्चत्वमागते ॥ १९ ॥

तथायोध्या पुरी कृत्स्ना तेन शब्देन मोहिता ।
सवृद्धबाला चुक्रोश राजव्यसनकर्षिता ॥ २० ॥
तत् समुद्विग्नसंभ्रान्तं पर्युत्सुकजनाकुलं ।
परिदेवितार्तस्तनितं रुदितोत्क्रुष्टसंकुलं ॥ २१ ॥
सद्यो निपातितानर्थं विध्वस्तशयनासनं ।
बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥ २२ ॥
ततो भृशार्ता कौशल्या सुमित्रा च सुदुःखिता ।
निपत्य पृथिवीपृष्ठे बडवेव व्यचेष्टत ॥ २३ ॥
सपत्न्या सह दुःखार्ता चेष्टमाना धरातले ।
पांशुदूषितसर्वाङ्गी कौशल्या न व्यरोचत ॥ २४ ॥
व्यतीतमाज्ञाय तु पार्थिवर्षभं
यशस्विनं संपरिवार्य ताः स्त्रियः ।
भृशं रुदत्यः करुणाक्षरा गिरः
प्रगृह्य बाहून् व्यलपंस्तु सर्वशः ॥ २५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथमरणे
अन्तःपुराक्रन्दो नाम सप्तषष्टितमः सर्गः ॥

# अयोध्याकाण्डं

## LXVIII.

तमग्निमिव संशान्तं संशोषितमिवार्णवं ।
अस्तं गतमिवादित्यं स्वर्गतं प्रेक्ष्य भूमिपं ॥ १ ॥
द्विविधेनापि दुःखेन कौशल्या भृशपीडिता ।
भर्तुः पादौ प्रगृह्यार्ता विललाप सुदुःखिता ॥ २ ॥
कृतपुण्यो ऽसि नृपते शुद्धसत्त्वश्च मानद ।
यस्त्वं प्राणान् परित्यज्य नाद्य शोचसि राघवं ॥ ३ ॥
पुत्रशोकसमुद्भूतो हृन्मनोदेहतापनः ।
त्वत्प्राणहरणो व्याधिर्मामनार्यां न बाधते ॥ ४ ॥
सत्यसंधे महाभागे प्रधानाभिजनात्मनि ।
एष त्वय्यनुरूपो वै भावः करुणवेदिनि ॥ ५ ॥
अहमेवाशुद्धसत्त्वा नीचा चादृढसौहृदा ।
अजीवनार्हा जीवामि या त्वयाहं विनाकृता ॥ ६ ॥
मृत्युरस्यामवस्थायां प्रशस्तस्ते नराधिप ।
जीवितं मम चाप्यस्यामवस्थायां विगर्हितं ॥ ७ ॥
अवस्थायामवस्थायां तत् तद्भवति पूजितं ।
पूजितं मरणं तस्य यस्य जीवितमीदृशं ॥ ८ ॥

यच्च शुद्धस्वभावस्त्वं पुत्रशोकार्तया मया ।
उक्तो ऽस्यसकृत् परुषं तन्मां दहति कल्मषं ॥ ९ ॥
देवोपम नमस्ते ऽस्तु शुद्धभाव महीपते ।
समन्युरेवासि मृतः क्षमये त्वां प्रसीद मे ॥ १० ॥
पुत्रशोकार्तया ह्युक्तो यन्मयास्यकृतज्ञया ।
तद्देवसत्त्व नामुत्र स्मर्तुमर्हसि मे प्रभो ॥ ११ ॥
अतिक्रमः कस्य नास्ति विदुषो ऽपि महीपते ।
अतिक्रममतो मे त्वं मूढायाः क्षन्तुमर्हसि ॥ १२ ॥
कृत्वानर्थं मूलहरं राज्यलोभाद्विगर्हितं ।
प्राप्तासि निरयं क्षुद्रे कैकेयि दृढनिश्चये ॥ १३ ॥
सकामा भव कैकेयि भुङ्क्ष्व राज्यमकण्टकं ।
पतिं प्राणैर्वियोज्य त्वं धिक्कृते निर्वृता भव ॥ १४ ॥
सुखभोगार्थदातारं दैवतं परमं पतिं ।
का त्वन्या त्वदृते नारी लुब्धा प्राणैर्वियोजयेत् ॥ १५ ॥
लुब्धः कार्यमकार्यं वा न कीर्तिं निरयं न च ।
न धर्मं चापिवाधर्मं वेत्ति नैव हिताहितं ॥ १६ ॥
अनियोगे नियुक्तेन त्वया राज्ञा महात्मना ।
प्राणेभ्यो ऽपि प्रियः पुत्रो रामः प्रव्राजितो वनं ॥ १७ ॥
यथा प्राणैः प्रियो रामस्त्यक्तो राज्ञा महात्मना ।
तद्वियोगात् तथा तेन त्यक्ताः प्राणाः सुदुस्त्यजाः ॥ १८ ॥

वैधव्यमयशश्चेदं लोके चैव विगर्हणां ।
लोभात् त्वया त्रयो ऽनर्था यत् प्राप्तास्तन्न मे प्रियं ॥ १९ ॥
श्रीमानिन्दीवरश्यामश्चारुपद्मदलेक्षणः ।
पितुर्जीवितनाशाय रामो वनमितो गतः ॥ २० ॥
विदेहराजतनया सुकुमारी तपस्विनी ।
त्वत्कृते पापसंकल्पे दुःखान्यनुभवत्यसौ ॥ २१ ॥
उग्रं प्रतिभयं नादं घोराणां मृगपक्षिणां ।
श्रुत्वा नूनं भयोद्विग्ना रामं श्रयति मैथिली ॥ २२ ॥
ययाबुद्ध्या त्वया रामः पतिमुक्त्वा विवासितः ।
धर्मात्मा भरतस्त्वां तु गर्हयिष्यत्युपागतः ॥ २३ ॥
अनृशंसा पुरा भूत्वा धर्मिष्ठा च पुरा ह्यसि ।
केनेदानीं नृशंसा त्वमधर्मिष्ठा च कैकयि ॥ २४ ॥
कथं चासौ महासत्त्वो दृढं राममनुव्रतः ।
अपापः पापसंकल्पे भरतो दूषितस्त्वया ॥ २५ ॥
रामवृत्तानुवर्ती हि भरतः पापनिश्चये ।
नानुवर्त्स्यति ते वृत्तं गर्हयिष्यति चागतः ॥ २६ ॥
नृशंसमयशस्यं च लोके कर्म विगर्हितं ।
यत् कृत्वा मन्यसे साधु तन्न साधु कृतं त्वया ॥ २७ ॥
किंनु शोचामि भर्तारं रामं लक्ष्मणमेव च ।
उताहो त्वद्य वैदेहीमात्मानं चापि दुःखितं ॥ २८ ॥

शोचितव्येषु युगपद्बहुष्वेतेषु वै पृथक् ।
ममातिदुःखभागिन्या मृतं श्रेयो न जीवितं ॥ २९ ॥
विहाय मां वनं रामो भर्ता च त्रिदिवं गतः ।
सार्थादिव परिभ्रष्टा कापथे विचराम्यहं ॥ ३० ॥
हा महाराज धर्मज्ञ कृपणानाथवत्सल ।
महत्यगाधे पतितां पाहि मां शोकसागरे ॥ ३१ ॥
सुखैधिता त्वया त्यक्ता त्वन्नाथा त्वत्परायणा ।
यत् त्वां नानुम्रिये चाद्य सर्वथैव धिगस्तु मां ॥ ३२ ॥
न्याय्यं धर्म्यं यशस्यं च मार्गं सत्स्त्रीनिषेवितं ।
अनुगन्तुं न शक्यामि रामसंदर्शनाशया ॥ ३३ ॥
किं मया न कृतं साधु भवेदद्य जनाधिप ।
यदि तेऽहं शरीरेण सह दाहमवाप्नुयां ॥ ३४ ॥
गच्छन्तं परलोकाय यदि त्वामनुयाम्यहं ।
सुकृतानां मया तेऽद्य राजन् प्रतिकृतं भवेत् ॥ ३५ ॥
नूनं नैवाहमर्हामि पापा पत्युः सलोकतां ।
या त्वां चितां समारूढं न त्वारोक्ष्यामि धिक्कृता ॥ ३६ ॥
कालस्य वशगो जन्तुर्न मर्तुं स्वयमीश्वरः ।
जीवितुं वाप्यतो न त्वां राजन्नहमनुम्रिये ॥ ३७ ॥
क्वासि राम महाबाहो क्वासि लक्ष्मण सुव्रत ।
हा क्वासि साध्वि वैदेहि न मां जानीत दुःखितां ॥ ३८ ॥

## अयोध्याकाण्डं

कैकेय्या वचनाद्राज्ञा श्रुत्वा रामं विवासितं ।
सभार्यो जनको राजा परितप्स्यत्यसंशयं ॥ ३९ ॥
अल्पापत्योऽतिवृद्धश्च वैदेहीमनुचिन्तयन् ।
सोऽपि शोकाग्निसंतप्तः परित्यक्ष्यति जीवितं ॥ ४० ॥
साधि भर्तृव्रते देवि धन्या खल्वसि मैथिलि ।
समदुःखसुखा या त्वं भर्तारमनुगच्छसि ॥ ४१ ॥
भर्ता बन्धुर्गतिश्चैव गुरुर्दैवतमेव च ।
भर्तैव परमः स्त्रीणामाश्रमस्तीर्थमेव च ॥ ४२ ॥
इति तां पतिशोकस्य पुत्रशोकस्य विह्वलां ।
पतितामातुरां दीनां क्रोशन्तीं कुररीमिव ॥ ४३ ॥
सर्वत्रानावृतद्वारो वशिष्ठो भगवानृषिः ।
व्यादिश्य नाययामास राजस्त्रीभिर्बलादितः ॥ ४४ ॥
परिगृह्याथ तामार्तां विलपन्तीमनाथवत् ।
अपनिन्युः प्रकर्षन्त्यः कौशल्यां राजयोषितः ॥ ४५ ॥
ततस्तद्विजनीकृत्य मन्त्रिभिः सह निश्चयं ।
कृत्वा वशिष्ठो भगवान् प्राप्तकालमकारयत् ॥ ४६ ॥
शरीरं कोशलेन्द्रस्य तैलद्रोण्यां निवेश्य तत् ।
मन्त्रयामास सहितो मन्त्रिभिस्तदनन्तरं ॥ ४७ ॥
उभौ मातामहकुलं चिरकालं गतावितः ।
कथं भरतशत्रुघ्नावानीयेतामिहेति वै ॥ ४८ ॥

न हि सत्करणं राज्ञो राजपुत्रैर्विना तदा ।
मन्त्रिणः कर्तुमर्हन्ति ततो रक्षन्ति भूमिपं ॥ ४९ ॥
तैलद्रोण्यां वशिष्ठेन शायितं तं नराधिपं ।
दृष्ट्वा नृपोऽयमित्युक्त्वा स्त्रियः सर्वा विचुक्रुशुः ॥ ५० ॥
उच्छ्रित्य बाहून् शोकार्ता वाष्पव्याकुललोचनाः ।
उरः शिरश्च जानूनि जघ्नुः करतलैर्मुहुः ॥ ५१ ॥
शशिनेव निशा हीना भर्तृहीनेव चाङ्गना ।
न व्यराजत् तदायोध्या तेन हीना महात्मना ॥ ५२ ॥
शोकदुःखार्तपुरुषा हाहाभूतजनाकुला ।
प्रध्वस्तचत्वरपथा विशून्यविपणापणा ॥ ५३ ॥

हतप्रभा द्यौरिव भास्करं विना
व्यपेतचन्द्रेव च निष्प्रभा निशा ।
रराज सा नैव भृशं महापुरी
विनाकृता तेन महात्मना तदा ॥ ५४ ॥
नराश्च नार्यश्च भृशार्तमानसा
विगर्हयन्तो भरतस्य मातरं ।
तस्यां नगर्यां नरनाथसंक्षये
विलेपुरार्ता न च शर्म लेभिरे ॥ ५५ ॥
तथा गते मनुजपतावदुःखितो
न कश्चनाभवदपि सुप्रभस्त्विह ।

तदापणा व्यपगतभिक्षुकक्रिया
बभूव सा त्र्यहमनधिश्रया पुरी ॥५६॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथसंक्रमणं
नाम अष्टषष्टितमः सर्गः ॥

## LXIX.

व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः ।
समेत्य राजगुरवः सभामीयुर्द्विजातयः ॥ १ ॥
वशिष्ठो वामदेवश्च जावालिरथ काश्यपः ।
मार्कण्डेयो गौतमश्च मौद्गल्यश्च महायशाः ॥ २ ॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदैरयन् ।
वशिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितं ॥ ३ ॥
शर्वरी नो व्यतीतेयमेका वर्षशतं यथा ।
शोचतां पुत्रशोकेन मृतं दशरथं नृपं ॥ ४ ॥
स्वर्गतश्च महाराजो रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेण सहितो गतः ॥ ५ ॥
उभौ भरतशत्रुघ्नौ केकयस्य पुरं गतौ ।
इक्ष्वाकुवंशप्रभवः को नु राजा भविष्यति ॥ ६ ॥
अराजकमिदं राष्ट्रं विनाशमुपयास्यति ।
इक्ष्वाकुः कश्चिदेवेह राजास्माकं विधीयतां ॥ ७ ॥
नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ८ ॥
नाराजके जनपदे वीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्राः सम्यक् तिष्ठन्ति शासने ॥ ९ ॥

नाराजके पतिं भार्या यथावदनुतिष्ठति ।
नाराजके गुरोः शिष्यः शृणोति नियतं हितं ॥ १० ॥
स्वं नास्त्यराजके राष्ट्रे पुंसां न च परिग्रहः ।
अराजके ह्यात्मनोऽपि प्रभुत्वं न हि कस्यचित् ॥ ११ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
विविधांस्तन्वते यज्ञान् दस्युसंघैः प्रपीडिताः ॥ १२ ॥
नाराजके जनपदे कारयन्ति जनाः सभां ।
उद्यानानि च रम्याणि प्रपाः पुण्यगृहाणि च ॥ १३ ॥
नाराजके जनपदे प्रभूतनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्तन्ते जनहर्षणाः ॥ १४ ॥
नाराजके जनपदे कश्चिदर्थः प्रसिध्यति ।
व्यवहारा न वर्तन्ते धर्माः सज्जनसेविताः ॥ १५ ॥
वेदान् नाधीयते विप्रा न च विन्दते निर्वृतिं ।
कथाशीलाश्च रज्यन्ते न कथाभिरराजके ॥ १६ ॥
न विवाहाश्च वर्तन्ते कन्यानां जनहर्षकाः ।
नित्योद्विग्नाः प्रजाः सर्वा दुःखिताश्च भवन्त्यपि ॥ १७ ॥
नाराजके जनपदे विश्वस्ताः कुलकन्यकाः ।
अलंकृता राजमार्गे क्रीडन्ति विहरन्ति च ॥ १८ ॥
नाराजके जनपदे विचरन्त्यकुतोभयाः ।
कामिनः सह कान्ताभिर्विहारोद्यानभूमिषु ॥ १९ ॥

नाराजके जनपदे धनवन्तः कुटुम्बिनः ।
शेरते विवृतद्वारा विश्वस्तमकुतोभयाः ॥ २० ॥
नाराजके जनपदे नानापण्योपजीविनः ।
पण्यान्यादाय गच्छन्ति देशाद्देशं भयार्दिताः ॥ २१ ॥
नाराजके कृषिकराः कर्षन्ति भयपीडिताः ।
पशवोऽपि न वर्तन्ते नित्यं राष्ट्रे ह्यराजके ॥ २२ ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयंस्तपसात्मानं यत्रसायंगृहो मुनिः ॥ २३ ॥
नाराजके जनपदे योगक्षेमः प्रकल्पते ।
न चाप्यराजकं सैन्यं शत्रुं विजयते युधि ॥ २४ ॥
नदी यथा शुष्कजला यथा चातृणकं वनं ।
अगोपाश्च यथा गावस्तथा राष्ट्रमराजकं ॥ २५ ॥
विसारथिः समुद्भ्रान्तैर्वाजिभिः स्यन्दनो यथा ।
गच्छन् विनाशमाप्नोति तथा राष्ट्रमराजकं ॥ २६ ॥
नाराजके जनपदे स्वं वै भवति कर्हिचित् ।
हरन्ति दुर्बलानां हि स्वमाक्रम्य बलान्विताः ॥ २७ ॥
अराजके जनपदे दुर्बलान् बलवत्तराः ।
भक्षयन्ति निरुद्वेगा मत्स्यान् मत्स्या इवाल्पकान् ॥ २८ ॥
व्युत्क्रान्तधर्ममर्यादा नास्तिका निरपत्रपाः ।
भवन्त्यराजके राष्ट्रे मानवाः क्रूरनिश्चयाः ॥ २९ ॥

अन्धं तम इवेदं स्यान्न प्राज्ञायत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥३०॥
दस्यवोऽपि न च क्षेमं राष्ट्रे विन्दन्त्यराजके ।
द्वावाददाते ह्येकस्य द्वयोश्च बहवो धनं ॥३१॥
तस्माद्राजैव कर्तव्य इच्छद्भिश्चात्मनः शुभं ।
द्विजानां वचनं श्रुत्वा वशिष्ठं मन्त्रिणोऽब्रुवन् ॥३२॥
जीवत्यपि महाराजे सह राज्ञा वयं प्रभो ।
शासने तव तिष्ठामः स नः शाधि तपोधन ॥३३॥

वशिष्ठ धर्मज्ञ महानुभाव
स नः समीक्ष्यार्हसि विप्रवर्य ।
कुमारमिक्ष्वाकुकुलप्रसूतं
तमाशु राजानमिहाभिषेक्तुं ॥३४॥

इत्यार्षे रामायणे अयोध्याकाण्डे राजप्रशंसा नाम
एकोनसप्ततितमः सर्गः ॥

## LXX.

तेषां तद्वचनं श्रुत्वा वशिष्ठः प्रत्युवाच तान् ।
सुमन्त्रप्रभृतीन् सर्वान् ब्राह्मणांस्तानिदं वचः ॥ १ ॥
योऽसौ मातामहकुले कुमारः श्रीमतां वरः ।
भरतो वसति भ्रात्रा शत्रुघ्नेन गतः सह ॥ २ ॥
तमितः शीघ्रगैर्गत्वा नराः प्रजविताैर्हयैः ।
इहानयन्तु वचनान्नृपस्य प्रियवादिनः ॥ ३ ॥
इति श्रुत्वा वचस्तस्माद्वशिष्ठाद्राजमन्त्रिणः ।
गच्छन्त्वाश्विति सर्वेऽथ प्रत्यूचुर्हृष्टमानसाः ॥ ४ ॥
ततो जयन्तं सिद्धार्थमशोकं चाब्रवीदिदं ।
वशिष्ठो जपतां श्रेष्ठो दूतानाहूय सत्वरं ॥ ५ ॥
पुरं राजगृहं गत्वा शीघ्रं प्रजविताैर्हयैः ।
त्यक्तशोकैरिदं वाच्यो भरतः शासनात् पितुः ॥ ६ ॥
आह त्वां कुशलं पृष्ट्वा पिता सर्वे च मन्त्रिणः ।
त्वरावान् शीघ्रमागच्छ कार्यमात्ययिकं त्वया ॥ ७ ॥
न चास्मै प्रेषितो रामो न राजा स्वर्गतस्तथा ।
गत्वा भवद्भिरावेद्यः पृष्टैरपि कथञ्चन ॥ ८ ॥
राजार्हाणि विचित्राणि भूषणानि वराणि च ।
शीघ्रमादाय राज्ञश्च भरतस्य च गच्छत ॥ ९ ॥

इति ते दत्तसंदेशा दूतास्त्वरितमानसाः ।
वशिष्ठेनाभ्यनुज्ञाता ययुः शीघ्रपराक्रमाः ॥ १० ॥
गत्वाथ हास्तिनपुरं गङ्गामुत्तीर्य वेगिताः ।
पाञ्चालं देशमाजग्मुस्ततस्ते कुरुजाङ्गलं ॥ ११ ॥
पूर्वेण वारुणीं तीर्त्वा कुरुक्षेत्रे सरस्वतीं ।
सरांसि च प्रफुल्लानि नदीश्च विमलोदकाः ॥ १२ ॥
निरीक्षमाणास्ते दूता जग्मुः कार्यवशाद्द्रुतं ।
ते पुण्यां शीतसलिलां नानाविहगसेवितां ॥ १३ ॥
सरदण्डां समुत्तीर्य नदीं जलचराकुलां ।
समूलं चैत्यमासाद्य वृक्षं सत्योपयाचनं ॥ १४ ॥
अभिगम्य प्रणम्यैनं भूलिङ्गां विविशुः पुरीं ।
अजकूलां ततः प्राप्य बोधीनां नगरं ययुः ॥ १५ ॥
ततो देवर्षिचरितां ययुरिन्दुमतीं नदीं ।
तत्राभिगम्य संसिद्धान् वेदवेदाङ्गपारगान् ॥ १६ ॥
ब्राह्मणान् प्रययुः शीघ्रमनुज्ञाताः शुभाशिषः ।
कथयन्तः कथाश्चित्रा रामलक्ष्मणसंहिताः ॥ १७ ॥
ययुर्मध्येन वाह्लीकान् सुदासांश्चोत्तरेण तु ।
विष्णोः पदं प्रेक्षमाणा विपाशेन च शाल्मलीं ॥ १८ ॥
गिरिव्रजं पुरवरं विविशुर्न चिरादिव ।
सप्तरात्रेण गत्वा वै दूतास्ते श्रान्तवाहनाः ॥ १९ ॥

प्रजाहितार्थं कुलरक्षणार्थं
भर्तुश्च वंशस्य परिग्रहार्थं ।
अतित्वरन्तो विविशुः पुरं ते
ततोऽभ्ययुः पार्थिववेश्म तूर्णं ॥ २० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दूतप्रस्थापना
नाम सप्ततितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXI.

यमेव दिवसं दूताः प्रविष्टास्ते गिरिव्रजं ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टो भयावहः ॥ १ ॥
अनिष्टवेदिनं स्वप्नं दृष्ट्वा च भरतस्तदा ।
संस्मरन् पितरं वृद्धमासीदुत्सुकमानसः ॥ २ ॥
आलक्ष्य चास्योत्सुकतां वयस्याः प्रियवादिनः ।
आयासमपनेष्यन्तः कथाश्चक्रुरनुत्तमाः ॥ ३ ॥
अवादयन् जगुश्चान्ये ननृतुर्जहसुस्तदा ।
नाटकान्यपरे चक्रुर्हास्यानि विविधानि च ॥ ४ ॥
प्रियैर्वयस्यैर्भरतस्तथापि प्रियवादिभिः ।
हास्यानि चैव कुर्वद्भिर्नैवातुष्यत् सुदुर्मनाः ॥ ५ ॥
तमब्रवीत् प्रियसखः कश्चिद्व्यथितमानसः ।
उपास्यमानः सखिभिः किं सखे न प्रहृष्यसि ॥ ६ ॥
समानसुखदुःखानामस्माकमपि राघव ।
दुःखमार्तिकरं यत् ते तत् ख्यापयितुमर्हसि ॥ ७ ॥
इत्युक्तो भरतस्तेन प्रत्युवाच महायशाः ।
शृणुध्वं यो मया दृष्टः स्वप्नो येनास्मि दुर्मनाः ॥ ८ ॥
दृष्टो मयाद्य स्वप्नेन चन्द्रमाः पतितः क्षितौ ।
संशुष्कः सागरश्चैव सूर्यो ग्रस्तश्च राहुणा ॥ ९ ॥

अद्राक्षमपि च स्वप्ने पितरं रक्तवाससं ।
कृष्यमाणं नरैर्बद्ध्वा दक्षिणामभितो दिशं ॥ १० ॥
पुनश्चाप्येनमद्राक्षं स्नेहाक्तं मुक्तमूर्धजं ।
पतन्तमद्रिशिखरादगाधे गोमये ह्रदे ॥ ११ ॥
तस्मिन् निमग्नश्चोन्मज्जन् दृष्टो मे गोमयाद्ध्रदात् ।
पिबन्नञ्जलिना तैलं हसमानः पुनः पुनः ॥ १२ ॥
ततस्तैलोदकं पीत्वा पुनः पुनरधःशिराः ।
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेव व्यगाहत ॥ १३ ॥
पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससं ।
प्रहरन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १४ ॥
दृष्टो रासभयुक्तेन रथेन च पिता मया ।
रक्तमाल्याम्बरधरः प्रयातो दक्षिणामुखः ॥ १५ ॥
प्रदीप्तमम्भसा शान्तं दृष्टवानस्मि पावकं ।
सीदन्तं च तदाद्राक्षं पङ्के मग्नं महागजं ॥ १६ ॥
विशीर्यमाणः शैलेन्द्रो भग्नाश्चैत्यमहाद्रुमाः ।
स्वप्ने चाद्य मया दृष्टो निपतंश्च महाध्वजः ॥ १७ ॥
एवमेष मया स्वप्नो दृष्टः पापभयावहः ।
व्यक्तं रामोऽथवा राजा प्राणांस्त्यक्त्वा दिवं गतः ॥ १८ ॥
यो हि रासभयुक्तेन रथेन परिकृष्यते ।
मर्त्यः स न चिरादेव ध्रुवं याति यमक्षयं ॥ १९ ॥

एतन्निमित्तं दीनोऽहं नाभिनन्दामि वो वचः ।
हृष्टांश्च नानुहृष्यामि चिन्तयन् स्वप्नदर्शनं ॥ २० ॥
अस्थाने चापि सोत्कण्ठं मनो विह्वलतीव मे ।
अस्थाने व्यथितश्चायं देहे देहेश्वरो मम ॥ २१ ॥
हृतविषमिवात्मानमपि चाद्योपलक्षये ।
जुगुप्सामि हि चात्मानमकस्मात् पतितं यथा ॥ २२ ॥

इमं हि दुःस्वप्नमहं विचिन्तयन्
समुत्सुकत्वाद्व्यथितोऽतिविह्वलः ।
न शर्म विन्दामि यथाध्रुवं तथा
किमप्यनिष्टं न चिरादुपैष्यति ॥ २३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतदुःस्वप्नदर्शनं
नाम एकसप्ततितमः सर्गः ॥

## LXXII.

भरते ब्रुवति स्वप्नं दूतास्ते श्रान्तवाहनाः ।
प्रविश्यागम्य परिघं रम्यं राजनिवेशनं ॥ १ ॥
समागच्छन्त राज्ञा च भरतेनार्थिनस्तदा ।
राज्ञः पादौ गृहीत्वैव तमूचुर्भरतं वचः ॥ २ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कार्यमात्ययिकं त्वया ॥ ३ ॥
चेलकस्य तु कोटीयं देया मातामहाय ते ।
तिस्रः कोट्यस्तु संपूर्णास्तवेमा नृवरात्मज ॥ ४ ॥
प्रतिगृह्य च तत् सर्वमनुरक्तसुहृज्जनः ।
दूतानुवाच भरतः कामैः संप्रतिपूज्य तान् ॥ ५ ॥
कच्चित् पिता मे कुशली वृद्धो दशरथो नृपः ।
कच्चिद्भ्राता मम ज्येष्ठो रामो धर्मभृतां वरः ॥ ६ ॥
कुशली लक्ष्मणश्चापि भ्राता मे भ्रातृवत्सलः ।
कच्चित् स्मरति मामार्यो रामोऽसौ भ्रातृवत्सलः ॥ ७ ॥
कच्चिदम्बा कुशलिनी कौशल्या धर्मचारिणी ।
माता रामस्य धर्मज्ञा भर्तृव्रतपरायणा ॥ ८ ॥
कच्चित् सुमित्रा धर्मज्ञा लक्ष्मणं या व्यजायत ।
शत्रुघ्नं च महात्मानमरोगा चापि मध्यमा ॥ ९ ॥

# अयोध्याकाण्डं

आत्मकार्यपरा चण्डा क्रोधना नित्यगर्विता ।
कैकयी चापि मे माता कच्चित् कुशलिनी दृढं ॥ १० ॥
इति ते कुशलं प्रश्नं पृष्टा दूताः ससंभ्रमं ।
मन्त्रसंवरणं कृत्वा प्रत्यूचुर्हृष्टमानसाः ॥ ११ ॥
सर्वे ह्येते कुशलिनो येषां कुशलमिच्छसि ।
आह त्वां च पिता शीघ्रमेहीति रघुनन्दन ॥ १२ ॥
यदि पश्यसि गन्तव्यं गम्यतामचिरात् ततः ।
भृशं हि दर्शनाकाङ्क्षी पिता ते सह मन्त्रिभिः ॥ १३ ॥
इत्युक्तो भरतो दूतैः प्रत्युवाच वचस्तदा ।
एवं भवतु गच्छामि मुहूर्तं परिपाल्यतां ॥ १४ ॥
दूतानेतावदुक्त्वा च भरतः केकयीसुतः ।
दूतसंचोदितोऽभ्येत्य मातामहमभाषत ॥ १५ ॥
अयोध्यां गन्तुमिच्छामि नृपते पितुराज्ञया ।
दूता हि त्वरयन्तीमे मामनुज्ञातुमर्हसि ॥ १६ ॥
इति मातामहस्तेन भरतेनाभियाचितः ।
शिरस्याघ्राय स स्नेहादिदं वचनमब्रवीत् ॥ १७ ॥
गच्छ तातानुजाने त्वां कैकेयी सुप्रजा त्वया ।
मातरं कुशलं ब्रूयाः पितरं च समागमे ॥ १८ ॥
पुरोहितं तथा रामं लक्ष्मणं मन्त्रिणस्तथा ।
कौशल्यां च सुमित्रां च सर्वं चान्यं सुहृज्जनं ॥ १९ ॥

तस्मै चित्राः कुथाः शुभ्राः कम्बलान्यजिनानि च ।
महार्हाणि च वस्त्राणि ददौ राजार्हणं ततः ॥ २० ॥
रुक्मनिष्कसहस्राणि दश द्वादश चैव हि ।
मातामहः प्रीतिदायं भरताय ददौ धनं ॥ २१ ॥
तस्यामात्यान् बहुविधान् शूरान् भक्तिमतः शुचीन् ।
ददौ मातामहः प्रीत्या भरतस्यानुयायिनः ॥ २२ ॥
सहस्रमपि चाश्वानां देश्यानां वातरंहसां ।
ददौ दश सहस्राणि गजानां हेममालिनां ॥ २३ ॥
अन्तर्गृहचरान् पुष्टान् व्याघ्रसंहननद्युतीन् ।
तीक्ष्णदंष्ट्रायुधान् शूरान् शुनश्चोपानयद्बहून् ॥ २४ ॥
रथान् रत्नविचित्रांश्च योजयित्वा परःशतान् ।
गोऽश्वोष्ट्ररासभैः शूरा भरतं यान्तमन्वयुः ॥ २५ ॥
स मातामहमामन्त्र्य मातुलं च युधाजितं ।
रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २६ ॥

बलेन गुप्तो महता महात्मा
सहार्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रुं
ययौ पुरं स्वं स्वमिवामरेशः ॥ २७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दूतसंदर्शनं नाम
द्विसप्ततितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXIII.

स ततः प्राङ्मुखो राष्ट्रान्निर्याय भरतस्तदा ।
जगाम शीघ्रं द्युतिमान् पितुरादाय शासनं ॥ १ ॥
ह्लादिनीं दूरपात्रां च तिर्यक्स्रोतसमापगां ।
शतद्रुमतरच्छ्रीमान् क्रमेणेक्ष्वाकुनन्दनः ॥ २ ॥
वीजधानीं नदीं तीर्त्वा प्राप्य चामरकण्ठकं ।
सशिलां कर्वटीं तीर्त्वा चाग्नेयं शल्यकीर्तनं ॥ ३ ॥
सत्यसंधः पथि गतान् प्रेक्षमाणः शिलावहान् ।
प्रत्ययात् सोमवेशस्य वनं चैत्ररथं प्रति ॥ ४ ॥
वेदिनीं कारवीं चार्वीं ह्रदिनीं पर्वतावृतां ।
यमुनां प्राप्य संतीर्य बलमाश्वासयत् तदा ॥ ५ ॥
शीतीकृत्य तु युग्यानि क्लान्तांश्चाश्वास्य वाजिनः ।
तत्र स्नात्वा च पीत्वा च ययावादाय चोदकं ॥ ६ ॥
राजपुत्रो महाबाहुरतितीक्ष्णोपशोभितं ।
भद्रं भद्रेण यानेन मारुतः खमिवाभ्ययात् ॥ ७ ॥
हिरण्वतीमपि नदीमुत्तीर्याहिस्थले पुरे ।
तोरणं दक्षिणेनैव वारणस्थलमभ्ययात् ॥ ८ ॥
ततो वरूथं प्रययौ ग्रामं दशरथात्मजः ।
तस्मिन्नुषित्वा तां रात्रिं प्राङ्मुखः प्रययौ ततः ॥ ९ ॥

उद्यानमुर्ज्जिहानायाः प्रियका यत्र पादपाः ।
भद्रं शालवनं दुर्गं समतीत्य त्वरान्वितः ॥ १० ॥
अथानुज्ञाप्य भरतो वाहिनीं चतुरङ्गिणीं ।
ततः शीघ्रतरं प्रायाद्उत्तीर्योत्तरिकां नदीं ॥ ११ ॥
सरितोऽन्याश्च विविधाः संततार त्वरान्वितः ।
सप्तस्पर्द्धां समासाद्य कुटिलामभ्यवर्तत ॥ १२ ॥
तस्मादभ्येत्य लोहित्ये ततारार्थ कपीवतीं ।
एकशाले स्थाणुमतीं विमते गोमतीं नदीं ॥ १३ ॥
कलिङ्गनगरेऽतीत्य घनं शालवनं ततः ।
क्षिप्रमभ्याययौ दूरादपरिश्रान्तवाहनः ॥ १४ ॥
गोमतीमभितः सायं नानाद्विजसमाकुलां ।
तत्र तां रजनीं नीत्वा प्रभातेऽभ्युदिते रवौ ॥ १५ ॥
अयोध्यां मनुना राज्ञा स ददर्श निवेशितां ।
संतीर्य गोमतीं तूर्णं भरतो दीनमानसः ॥ १६ ॥
तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि ।
दृष्ट्वायोध्यामुवाचेदं सारथिं रथिनां वरः ॥ १७ ॥
नातिप्रहृष्टचेष्टासावयोध्या दृश्यते पुरी ।
प्रम्लानोपवनोद्याना हृतत्विडिव सारथे ॥ १८ ॥
यज्वभिर्गुणसंपन्नैर्वेदवेदाङ्गपारगैः ।
द्विजैर्बहुभिराकीर्णा राजर्षिवरपालिता ॥ १९ ॥

## अयोध्याकाण्डं

अयोध्यायाः पुरा घोषो दूरादेव जनोद्भवः ।
श्रूयते सागरस्येव मथ्यमानस्य वायुना ॥ २० ॥
सोऽद्य न श्रूयते कस्मादयोध्यायां जनस्वनः ।
गतश्रीरिव मे भाति केनायोध्या महापुरी ॥ २१ ॥
उद्यानानि विचित्राणि मुदा प्रक्रीडितैर्जनैः ।
आकीर्णान्युपलक्ष्यन्ते तानि नाद्य यथा पुरा ॥ २२ ॥
अरण्यभूतं पश्यामि नगरोपवनं पितुः ।
शून्योद्यानवनोद्देशं नरनारीविवर्जितं ॥ २३ ॥
न यानैरद्य दृश्यन्ते न गजैर्न च वाजिभिः ।
निर्यान्तः प्रविशन्तो वा जनाः पुरनिवासिनः ॥ २४ ॥
अनिष्टान्येव पश्यामि निमित्तान्यद्य सर्वशः ।
केनापि च शरीरं मे व्यथते चाद्य सारथे ॥ २५ ॥
इति ब्रुवन्नेव वचो भरतः श्रान्तवाहनः ।
विवेश तां पुरीं रम्यां द्वाःस्थैः संप्रतिपूजितः ॥ २६ ॥
स त्वनेकाग्रहृदयो द्वाःस्थं संपूज्य तं जनं ।
सूतमश्वपतिं ज्ञात्वमब्रवीत् तत्र राघवः ॥ २७ ॥
श्रुता नो यादृशाः पूर्वं विनाशे पृथिवीक्षितां ।
आकारास्तानहं सर्वानिह पश्यामि सारथे ॥ २८ ॥
मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशं ।
सस्त्रीपुंसं प्रपश्यामि जनमुत्कण्ठितं पुरे ॥ २९ ॥

इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः ।
अनिष्टांस्तानयोध्यायां दृष्ट्वाकारान् नृपात्यये ।। ३० ।।

तां शून्यशृङ्गाटकवेश्मरथ्यां
रजोऽरुणद्वारकवाटयुक्तां ।
दृष्ट्वा पुरीं दीनजनानुकीर्णां
शोकेन संपूर्णतरो बभूव ।। ३१ ।।

बहूनि पश्यन् मनसोऽप्रियाणि
यान्यन्यदा नास्य पुरे बभूवुः ।
अवाक्शिरा दीनतरो मनस्वी
पितुर्महात्मा स विवेश वेश्म ।। ३२ ।।

इत्यार्षे रामायणे अयोध्याकाण्डे भरतपुरप्रवेशो नाम
त्रिसप्ततितमः सर्गः ।।

# अयोध्याकाण्डं

## LXXIV.

महेन्द्रभवनप्रख्यं श्रीमदद्भुतदर्शनं ।
प्रविश्य भवनं सोऽथ पितरं नाभ्यपश्यत ॥ १ ॥
अनीक्षमाणः पितरं स तत्र पितुरालये ।
जगाम निःसृत्य ततो भरतो मातुरालयं ॥ २ ॥
तमभ्यागतमालोक्य कैकेयी भरतं तदा ।
उत्पपातासनात् तूर्णं हर्षेणोत्फुल्ललोचना ॥ ३ ॥
स प्रविश्य तु तद्वेश्म मातुरुत्सुकमानसः ।
जग्राह पादौ भरतः शिरसावनतो वशी ॥ ४ ॥
तं सा मूर्धन्युपाघ्राय परिष्वज्य च पीडितं ।
भरतं चोपवेश्याङ्के संप्रष्टुमुपचक्रमे ॥ ५ ॥
प्राप्तोऽसि कतिथेनाह्ना मातामहपुरात् सुत ।
सुखेनास्यागतः कच्चित् कच्चिदप्यपरिश्रमः ॥ ६ ॥
कच्चित् कुशल्यार्यकस्ते युधाजिन्मातुलस्तथा ।
सुखमस्युषितः कच्चित् पुत्र मातामहे कुले ॥ ७ ॥
इति पृष्टोऽथ कैकेय्या भरतो दीनमानसः ।
शशंस मातुः स क्षिप्रं गमनागमनक्रमं ॥ ८ ॥
अद्य मे दिवसाः सप्त निःसृतस्य गिरिव्रजात् ।
अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥ ९ ॥

यन्मे प्रीतिधनं दत्तं भूरि मातामहेन वै ।
पथि तच्छ्रान्तमुत्सृज्य ततोऽहं शीघ्रमागतः ॥१०॥
राज्ञानुप्रेषितैर्दूतैस्त्वर्यमाणस्त्वरान्वितः ।
यत् तु त्वां प्रष्टुमिच्छामि तन्ममाख्यातुमर्हसि ॥११॥
न यथावत् पुरमिदं हृष्टपौरजनावृतं ।
कस्माद्दीनजनाकीर्णं लक्ष्यते विगतद्युति ॥१२॥
निरुत्साहं निरानन्दं विरताध्ययनस्वनं ।
कस्माच्च मां राजमार्गे जनो नाद्याभिभाषते ॥१३॥
पितरं च न पश्यामि केनाद्य भवने स्वके ।
किं वा भवेद्गतोऽम्बायाः कौशल्याया निवेशनं ॥१४॥
वर्जितं शयनीयं ते भर्त्रा केनाद्य हेतुना ।
अप्रहृष्टो जनश्चायं केन वा ब्रूहि तन्मम ॥१५॥
अम्ब राजा स यत्रास्ते तत्राहं गन्तुमुत्सहे ।
न हि शर्माधिगच्छामि तमदृष्ट्वा नराधिपं ॥१६॥
इति ब्रुवाणं भरतं कैकेयी प्रत्यभाषत ।
निर्लज्जा दारुणं वाक्यमप्रियं प्रियसंहितं ॥१७॥
स्वर्गं गतो महाराजः पिता ते सुकृतैः शुभैः ।
त्वयि राज्यं विसृज्य स्वं पुत्रशोकपरिक्षितः ॥१८॥
इति श्रुत्वा वचो मातुर्भरतो दारुणान्तरं ।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥१९॥

स भूमौ विनिपत्येदं विललापाकुलेन्द्रियः ।
हा कष्टं स्वर्गतो राजा कथं केन च हेतुना ॥ २० ॥
यत् पुरा तेन मे पित्रा शयनं भात्यलंकृतं ।
तदद्य रहितं तेन श्रिया हीनं न राजते ॥ २१ ॥
मज्जिज्ञासार्थमपि वा यदि तेऽभिहितं मृषा ।
प्रसीदाम्ब भृशार्तोऽहं शंस मे क्वगतो नृपः ॥ २२ ॥
इत्यार्तरूपं भरतं पितुर्दर्शनलालसं ।
कैकेयी पतितं भूमावुत्थाप्यैवं वचोऽब्रवीत् ॥ २३ ॥
उत्तिष्ठ भरत क्षिप्रं न त्वं शोचितुमर्हसि ।
त्वद्विधा न हि शोचन्ति दृष्टशोकपरावराः ॥ २४ ॥
पालयित्वा महीं सम्यगिष्ट्वा दत्वा च ते पिता ।
दिष्टान्तं समनुप्राप्तस्तं न शोचितुमर्हसि ॥ २५ ॥
इत इष्टतरं स्थानं राजा दशरथो गतः ।
न स शोच्यस्त्वया पुत्र सत्यधर्मपरायणः ॥ २६ ॥
इत्येतद्भरतः श्रुत्वा कैकेय्या दारुणं वचः ।
जननीं पुनरेवेदमुवाच भृशदुःखितः ॥ २७ ॥
अभिषेक्ष्यति रामं नु राजा यज्ञं नु यक्ष्यति ।
इत्याशाकृतसंकल्पस्त्वरमाणोऽहमागतः ॥ २८ ॥
तदद्याशंसितं सर्वं मम मोघमचेतसः ।
योऽहं तातं न पश्यामि परमं प्रियवादिनं ॥ २९ ॥

अम्ब केन मृतो राजा व्याधिना मय्यनागते ।
धन्यो रामो लक्ष्मणश्च पिता याभ्यां सुसत्कृतः ॥ ३० ॥
नूनं मां न पिता वृद्धः प्राप्तं जानाति वत्सलः ।
उपाजिघ्रद्य मां स्नेहात् संपरिष्वज्य मूर्धनि ॥ ३१ ॥
क्व स पाणिः सुखस्पर्शस्तातस्य शुभलक्षणः ।
येन मां रजसा ध्वस्तमभीक्ष्णं पर्यमार्जयत् ॥ ३२ ॥
यो मेऽद्य स्यात् पिता बन्धुर्यस्य दासोऽस्मि धीमतः ।
तं नाथं मे त्वमाचक्ष्व रामं भ्रातरमग्रजं ॥ ३३ ॥
यं दृष्ट्वा पितृशोकार्तो लभेयं निवृतिं परां ।
यस्य पादाब्जमाश्रित्य जीवेयं तं प्रचक्ष्व मे ॥ ३४ ॥
क्व मे पितृसमो भ्राता ज्येष्ठो धर्मभृतां वरः ।
पादौ तस्य प्रपत्स्येयं स ह्यीदानीं गतिर्मम ॥ ३५ ॥
किमब्रवीच्च ते मातः पिता दशरथो मम ।
अपश्चिमं हितार्थं मे संदेशं धीमतां वरः ॥ ३६ ॥
सर्वमेतद्यथावृत्तमम्बाख्यातुं त्वमर्हसि ।
इति पृष्टाथ कैकेयी भरतं वाक्यमब्रवीत् ॥ ३७ ॥
राजपुत्र महासत्त्व शृणु तत्त्वमशेषतः ।
श्रुत्वा च न विषादं त्वं गन्तुमर्हसि मानद ॥ ३८ ॥
यथा पिता ते धर्मात्मा प्राणांस्त्यक्त्वा दिवं गतः ।
शृणु तत् तेऽभिधास्यामि यच्चोवाच पिता स ते ॥ ३९ ॥

हा पुत्र रामेत्युक्त्वासौ हा पुत्र लक्ष्मणेति च ।
विलप्यैवं स बहुशः प्राणांस्तत्याज ते पिता ॥ ४० ॥
इदं चापश्चिमं वाक्यमुक्त्वा राजा दिवं गतः ।
सिद्धार्थास्ते नरा रामं ये द्रक्ष्यन्त्यागतं वनात् ॥ ४१ ॥
निस्तीर्य समयं सार्धं सीतया लक्ष्मणेन च ।
श्रुत्वैतद्द्विषसादार्तो द्वितीयाप्रियशङ्कया ॥ ४२ ॥
विषण्णवदनश्चैव भूयः पप्रच्छ मातरं ।
क्वेदानीं वर्तते रामः किमर्थं वा गतो वनं ॥ ४३ ॥
वैदेह्या सह कस्माच्च गतोऽसौ लक्ष्मणेन च ।
इति पृष्टा पुनस्तेन कैकेयी वाक्यमब्रवीत् ॥ ४४ ॥
पुनर्घोरतरं क्षुद्रमप्रियं प्रियशङ्कया ।
चीरवल्कलसंवीतो गतो राम इतो वनं ॥ ४५ ॥
पितुर्नियोगात् सहितो वैदेह्या लक्ष्मणेन च ।
मया च तत् कृतं येन रामः प्रव्राजितो वनं ॥ ४६ ॥
स्वर्गतः पुत्रशोकार्तस्तं च प्रव्राज्य ते पिता ।
तच्छ्रुत्वा भरतस्तस्या मातुः पापविशङ्कितः ॥ ४७ ॥
स्ववंशशुद्धिमन्विच्छन् प्रष्टुमारब्धवानिदं ।
कच्चिन्न ब्राह्मणधनं हृतं रामेण धीमता ॥ ४८ ॥
कच्चिदाढ्यो दरिद्रो वा भ्रात्रानेन विहिंसितः ।
येन निर्वासितः श्रीमान् प्राणेभ्योऽपि प्रियः सुतः ॥ ४९ ॥

कच्चिन्न परदाराणां धर्षणं कृतवानतः ।
येनासौ दण्डकारण्यं भ्रूणघ्नेव विवासितः ॥५०॥
स्त्रीचापलात् ततः श्रुत्वा कैकेयी पुनरब्रवीत् ।
भरतं श्लाघमानेव स्वकर्मख्यापयन्त्युत ॥५१॥
अशुभा शुभभावाय भरताय महात्मने ।
शशंस तद्यथावृत्तं मूढा पण्डितमानिनी ॥५२॥
न ब्रह्मस्वं हृतं तेन न च कश्चिद्विहिंसितः ।
न चैव परदारान् स मनसापि प्रधर्षयेत् ॥५३॥
शीलवान् धार्मिको रामो विपाप्मा विजितेन्द्रियः ।
न स किञ्चिन्महासत्त्वः कृतवान् पापमण्वपि ॥५४॥
तेन धर्मात्मना लोकः कृत्स्नोऽयमनुरञ्जितः ।
अभिषेक्तुकामस्तं राजा यौवराज्ये यदा स्वके ॥५५॥
ततः श्रुत्वा मया पुत्र तथाकृतमतिर्नृपः ।
त्वदर्थं याचितो राजा यौवराज्येऽभिषेचनं ॥५६॥
रामस्य च वने वासं नववर्षाणि पञ्च च ।
तेन निर्वासितो रामः पित्रा ते नगराद्बहिः ॥५७॥
स चापि वचनाद्रामः पितुर्धर्मपरायणः ।
वनं गत इतः सार्धं सीतया लक्ष्मणेन च ॥५८॥
तमपश्यन् प्रियं पुत्रं पिता ते धर्मवत्सलः ।
पुत्रशोकपरिखिन्नः प्राणांस्त्यक्त्वा दिवं गतः ॥५९॥

त्वत्प्रियार्थं मया कर्म कृतमेतज्जुगुप्सितं ।
यत् सर्वगुणसंपन्नो रामः प्रव्राजितो वनं ॥ ६० ॥
तद्वियोगाच्च राजायं पुत्रशोकाकुलेन्द्रियः ।
इष्टान् प्राणान् परित्यज्य प्रेतराजवशं गतः ॥ ६१ ॥
गृह्णाण तदिदं राज्यं सफलं कुरु मे श्रमं ।
मनो नन्दय मित्राणां मम चामित्रकर्षण ॥ ६२ ॥

स पुत्र शीघ्रं विधिवत् स्वराज्ये
विप्रैर्वशिष्ठप्रमुखैः समेत्य ।
सत्कृत्य राजानमनन्तरं त्वम्
आत्मानमस्मिन्नभिषेचयस्व ॥ ६३ ॥

इत्यार्षे रामायण अयोध्याकाण्डे भरतप्रश्नो नाम
चतुःसप्ततितमः सर्गः ॥

## LXXV.

श्रुत्वाथ पितरं प्रेतं भ्रातरौ च प्रवासितौ ।
भरतो दुःखसंतप्तो मातरं पुनरब्रवीत् ॥ १ ॥
रामं राज्याद्भ्रंशयित्वा कैकेय्यनपकारिणं ।
परित्यक्तासि धर्मेण गर्हिते पापनिश्चये ॥ २ ॥
राज्यलोभात् पतिं प्राणैर्विप्रयोज्य यशस्विनं ।
गतासि निरयं घोरं सर्वथैव धिगस्तु ते ॥ ३ ॥
यदि त्वं राज्यलोभेन निरयं गन्तुमिच्छसि ।
पतन्त्या निरये कस्मादहमप्यनुपातितः ॥ ४ ॥
हा दग्धोऽस्मि हतश्चैव त्वया मातर्नृशंसया ।
त्यक्ष्याम्यहमपि प्राणान् मदृते सुखिनी भव ॥ ५ ॥
किन्नु तेऽपकृतं भर्त्रा किं रामेण महात्मना ।
ययोर्मृत्युर्विवासश्च त्वया तुल्यमुपाहृतौ ॥ ६ ॥
भ्रूणहत्या त्वया प्राप्ता ब्रह्महत्या च कुत्सिता ।
रामं राज्याद्भ्रंशयित्वा पतिं प्राणैर्वियोज्य च ॥ ७ ॥
मा तेऽस्त्वयं शुभो लोको मा परो भर्तृघातिनि ।
कैकेयि नरकं गच्छ भर्तृशापपरिक्षता ॥ ८ ॥
हा दग्धोऽस्मि नाशितश्च त्वयाहं राज्यलुब्धया ।
किं मे राज्येन भोगैर्वा दग्धस्यायशसा त्वया ॥ ९ ॥

विप्रयुक्तस्य मे पित्रा भ्रात्रा पितृसमेन च ।
जीवितेनापि नार्थोऽस्ति कश्चिद्राज्येन वै कुतः ॥१०॥
देवकल्पेन पित्राद्य विहीनो राघवेण च ।
केनेच्छेयं हेतुनाहं राज्यं प्राप्तुमशक्तिमान् ॥११॥
भवेद्यद्यपि मे शक्तिः शासितुं राज्यमूर्जितं ।
तथापि न सकामां त्वां करिष्ये मातृगन्धिनि ॥१२॥
मन्निमित्तं पिता प्राणैस्त्वया मे विप्रयोजितः ।
प्रव्राजितो वनं चैव रामो धर्मभृतां वरः ॥१३॥
अहो पापं महन्मूर्ध्नि त्वया मे विनिपातितं ।
अपापः पापसंकल्पे सर्वथाहं हतस्त्वया ॥१४॥
व्रणे क्षारं विनिक्षिप्तं दुःखे दुःखं निपातितं ।
घातयित्वा पतिं शुद्धं रामं कृत्वा च तापसं ॥१५॥
कुलस्यास्य विनाशाय पित्रा मे त्वमिहाहृता ।
त्वां कालरात्रिप्रतिमां पिता मे नावबुद्धवान् ॥१६॥
आहृता घोरसंकल्पा राज्ञा त्वं मृत्युरात्मनः ।
व्याली घोरविषेव त्वं भर्त्रासि प्रतिपालिता ॥१७॥
अपापः पापसंकल्पे सत्यसंधः पिता मम ।
छलयित्वा प्रियैः प्राणैः सत्पुत्रेण वियोजितः ॥१८॥
तथैव स महाभागो लक्ष्मणो भ्रातृवत्सलः ।
प्रव्राजितो वनं राष्ट्रात् पितृगौरवयन्त्रितः ॥१९॥

कौशल्या च सुमित्रा च पुत्रशोकपरिप्लुते ।
दुष्करं यदि जीवेतां त्वया पापे निराकृते ॥ २० ॥
न त्वं केकयराजेन जाता जातिमता ध्रुवं ।
पापवृत्तां तु जाने त्वां जातां घोरेण रक्षसा ॥ २१ ॥
रामे त्वं किमकल्याणमकल्याण्यनुपश्यसि ।
येन त्वया साधुवृत्तो रामः प्रव्राजितो वनं ॥ २२ ॥
मातरीवात्मनो वृत्तिं रामस्त्वय्यनुवर्तते ।
तस्य प्रव्राजनं पापे किं पश्यन्त्या त्वया कृतं ॥ २३ ॥
पितर्यसाधु किं मे त्वं रामे वा दृष्टवत्यसि ।
येनाकार्यं कृतवती मम त्वमयशस्करं ॥ २४ ॥
यदा माता च मे ज्येष्ठा कौशल्या धर्मदर्शिनी ।
त्वयि वृत्तिं परां प्रीत्या भगिन्यामिव वर्तते ॥ २५ ॥
अथ कस्मात् त्वयानार्ये तस्याः पुत्रः प्रवासितः ।
त्वयात्मानं दूषयित्वा दूषितोऽहं नृशंसया ॥ २६ ॥
तस्याः पुत्रं कृतात्मानं चीरवल्कलवाससं ।
प्रस्थाप्य वनवासाय कथं नु त्वं न शोचसि ॥ २७ ॥
निवर्तयिष्ये तं गत्वा वनवासादहं स्वयं ।
विज्ञाप्य रघुशार्दूलं रामं भ्रातरमग्रजं ॥ २८ ॥
वने वत्स्याम्यहं घोरे नववर्षाणि पञ्च च ।
पितुर्नियोगाद्भ्राता मे रामो राजा भविष्यति ॥ २९ ॥

इत्येवमुक्त्वा भरतोऽतिरोषात्
स गर्हयित्वा जननीं सुखार्हः ।
शोकातुरः सस्वनमुन्ननाद
सिंहो यथा पर्वतकन्दरस्थः ॥ ३० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कैकेयीविगर्हणं
नाम पञ्चसप्ततितमः सर्गः ॥

## LXXVI.

तथा स गर्हयित्वा तां मातरं भरतस्तदा ।
दुःखेन महताविष्टः पुनरेवेदमब्रवीत् ॥ १ ॥
पापस्वभावे कैकेयि नृशंसे निरपत्रपे ।
किं तेऽपराद्धं रामेण भर्त्रा वा पापनिश्चये ॥ २ ॥
एवं क्रूरस्वभावायः सर्वथैव धिगस्तु ते ।
मा तेऽस्त्वयं शुभो लोको मा परः कुलपांसने ॥ ३ ॥
सर्वलोकाप्रियं कृत्वा कथं नाम न लज्जसे ।
कथं धारयते भूमिस्त्वामियं भर्तृघातिनि ॥ ४ ॥
कथं तु ऋषिकल्पेन मम पित्रा महात्मना ।
तवापराधः क्षान्तोऽयं सर्वलोकविगर्हितः ॥ ५ ॥
कथं शापाग्निना तेन न दग्धासि महात्मना ।
त्वद्दोषदूषितो वाहं न दग्धः केन हेतुना ॥ ६ ॥
प्राणैर्वियोजितो भर्ता रामः प्रव्राजितो वनं ।
मम चाप्ययशो मूर्ध्नि पातितं लुब्धया त्वया ॥ ७ ॥
तस्मात् पापसमुत्तारं न ते पश्यामि गर्हिते ।
लोकानां परिवर्त्तेऽपि निरयान् नोत्तरिष्यसि ॥ ८ ॥
मातृरूपेण मेऽमित्रे नृशंसे राज्यकामुके ।
न तेऽहमभिधातव्यो निर्घृणे पतिघातिनि ॥ ९ ॥

कौशल्या च सुमित्रा च तथान्या मम मातरः ।
त्वयैकया पापशीले पीडिता निरपत्रपे ॥ १० ॥
न त्वं केकयराजस्य दुहिता विजितात्मनः ।
राक्षसी कापि तस्य त्वं दुहितृत्वमुपागता ॥ ११ ॥
सर्वलोकप्रियो रामो यत् त्वया पापनिश्चये ।
प्रव्राजितः पापतरा त्वदन्या का भविष्यति ॥ १२ ॥
पितुर्वियोगजं दुःखं सहसा पातितं त्वया ।
भ्रातृत्यागकृतं चैव सर्वलोकविगर्हितं ॥ १३ ॥
शुद्धस्वभावां सद्वृत्तां कौशल्यां पुत्रलालसां ।
विवत्सां वत्सलां कृत्वा कान्नु लोकान् गमिष्यसि ॥ १४ ॥
नाभिजानासि वा दुःखमिष्टपुत्रवियोगजं ।
पुत्रेणेष्टेन कौशल्या यया ते विप्रयोजिता ॥ १५ ॥
अङ्गप्रत्यङ्गजो मातुः पुत्रो हृदयसंभवः ।
यस्मादतः प्रियतरः पुत्रान्मातुर्न विद्यते ॥ १६ ॥
पुरा किल गवां माता सुरभिः सुरसंमता ।
कृशौ प्रतोदतुन्नाङ्गौ वहमानौ महीतले ॥ १७ ॥
दृष्ट्वा पुत्रौ रुरोदार्ता सीदन्तौ च मुहुर्मुहुः ।
तामिन्द्रो रुदतीं दृष्ट्वा धर्मात्मा वै कृपां गतः ॥ १८ ॥
आकाशे गच्छतो ह्यस्य सुरभ्या अश्रुबिन्दवः ।
शोकोत्थाः पतिता गात्रे भृशं सुरभिगन्धयः ॥ १९ ॥

तैरश्रुविन्दुभिः स्पृष्टः समुद्वीक्ष्याथ वासवः ।
सुरभिं प्राञ्जलिर्वाक्यमभिगम्येदमब्रवीत् ॥ २० ॥
कच्चिन्नु भयमस्माकं कुतश्चिदनुपश्यसि ।
यन्निमित्तं सुदुःखार्ता रोदिषि ब्रूहि तन्मम ॥ २१ ॥
इत्युक्ता सुरभिस्तेन शक्रेणामिततेजसा ।
प्रत्युवाच सुदुःखार्ता पुरंदरमिदं वचः ॥ २२ ॥
नाहं भयं प्रपश्यामि कुतश्चित् तेऽमराधिप ।
अहं विमौ कृशौ पुत्रौ शक्र शोचामि दुःखितौ ॥ २३ ॥
प्रतोदप्रविभिन्नाङ्गौ सीदन्तौ सुबुभुक्षितौ ।
पीड्यमानौ लाङ्गलेन कर्षकेण दुरात्मना ॥ २४ ॥
अङ्गप्रत्यङ्गसंभूतावेतौ मे हृदयोद्भवौ ।
दृष्ट्वा विवर्धते दुःखं नास्ति पुत्रात् परं प्रियं ॥ २५ ॥
इत्येवं शोचितवती गवां माता सुतप्रिया ।
तस्याः पुत्रसहस्राणि बहून्यासन् महौजसः ॥ २६ ॥
एक एव सुतो यस्याः किमु रामो विवासितः ।
प्राणेभ्योऽपि प्रियः साद्य कथं शोचेन्न दुःखिता ॥ २७ ॥
यस्मादेव तु कैकेयि कौशल्यायास्त्वया कृतं ।
हृच्छरीरमनःशोषि दुःखं पुत्रवियोगजं ॥ २८ ॥
तस्मात् त्वमपि कैकेयि दुःखं प्रेत्येह चाव्ययं ।
महत् प्राप्स्यसि दुर्मेधे निरयं पापमास्थिता ॥ २९ ॥

अहं त्वपचितिं भ्रातुः करिष्ये पितुरेव च ।
अस्य चायशसो लोके करिष्याम्यपमार्जनं ॥३०॥

इति नाग इवारण्ये सहसा बन्धनं गतः ।
निःश्वस्योष्णं मुहुःखार्तो रुरोद भरतस्तदा ॥३१॥

संरब्धनेत्रः शिथिलः क्रियासु
प्रमुक्तशुभ्रास्तरणाम्बरस्रक् ।
बभूव भूमौ पतितो नृपात्मजः
शचीपतेः केतुरिवोत्सवक्षये ॥३२॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतविलापो नाम
षट्सप्ततितमः सर्गः ॥

## LXXVII.

अथ तत्रायययावार्तस्तच्छ्रुत्वा लक्ष्मणानुजः ।
स तमुत्थापयामास शत्रुघ्नो भरतं तदा ॥ १ ॥
श्रुत्वा प्रव्राजितं रामं कुब्जाभेदितया तथा ।
कैकेय्या दुःखशोकार्तः शत्रुघ्नोऽथाब्रवीदिदं ॥ २ ॥
विद्वानार्योऽनृशंसश्च सर्वभूतहिते रतः ।
स्त्रिया नाम कथं रामो वनं प्रव्राजितोऽवशः ॥ ३ ॥
बलवीर्यास्त्रसंपन्नो लक्ष्मणो लक्ष्मिवर्धनः ।
किं नाभिषिक्तवान् रामं कृत्वापि पितृनिग्रहं ॥ ४ ॥
पूर्वमेव स निग्राह्यो राजा धर्मार्थदर्शिना ।
लक्ष्मणेन पिता मूढः कामरागवशं गतः ॥ ५ ॥
इत्येवं भाषमाणेऽथ शत्रुघ्ने लक्ष्मणानुजे ।
प्रादुरभूत् तदा कुब्जा शुभ्राभरणभूषिता ॥ ६ ॥
चन्दनागुरुदिग्धाङ्गी महार्हाम्बरसंवृता ।
मेखलादामभिश्चित्रैः पिनद्धा कुञ्जरी यथा ॥ ७ ॥
समीक्ष्य तां तदा द्वाःस्थां भरतः पापकारिणीं ।
अन्तःपुरचरीं कुब्जां शत्रुघ्नाय न्यवेदयत् ॥ ८ ॥
यस्याः कृते गतो रामो न्यस्तदेहश्च मे गुरुः ।
सेयं पापा नृशंसा च कुरुष्वास्या यथाविधि ॥ ९ ॥

तामभ्यासगतां दृष्ट्वा शत्रुघ्नो मन्थरां तदा ।
चकर्षाभिनिपात्यार्तां गले गृह्य रुषान्वितः ॥ १० ॥
कौशल्या वदनं चास्याः पूरयामास पांसुना ।
अन्तःपुरचरांस्तांस्तु प्रत्युवाच रुषान्वितः ॥ ११ ॥
यया कृतं महद्दुःखं भ्रातॄणां मे पितुस्तथा ।
तामिमां मन्थरामद्य नयामि यमसादनं ॥ १२ ॥
शत्रुघ्नेन तथा कुब्जां कृष्यमाणां महीतले ।
सहसा विननादार्तां दृष्ट्वा कुब्जासुहृज्जनः ॥ १३ ॥
क्रुद्धमाज्ञाय शत्रुघ्नं भयसंविग्नमानसः ।
अमन्त्रयत चैवार्तः कुब्जापरिजनस्तदा ॥ १४ ॥
यथायमतिसंक्रुद्धो निःशेषान् नः करिष्यति ।
कौशल्यां शरणं यामः सा हि नोऽद्य परायणं ॥ १५ ॥
स चापि रोषताम्राक्षः शत्रुघ्नः शत्रुतापनः ।
विचकर्ष भृशं कुब्जां क्रोशन्तीं पृथिवीतले ॥ १६ ॥
तस्या विकृष्यमाणाया मन्थराया इतस्ततः ।
भूषणान्यवकीर्णानि चित्राणि रुचिराणि च ॥ १७ ॥
तस्यास्तैर्भूषणैश्चित्रैर्विनिकीर्णं महीतलं ।
रराजामलताराढ्यं शारदं गगणं यथा । ॥ १८ ॥
तामाकृष्य च शत्रुघ्नः कैकेयीसंनिधौ तदा ।
कोपसंरक्तनयनः प्रोवाच परुषं वचः ॥ १९ ॥

यथेदमशुभं कर्म कुलक्षयकरं कृतं ।
असत्स्त्री साद्य कैकेयी कथं त्वां मोचयिष्यति ॥ २० ॥
यया नापेक्षितः पुत्रो न राज्ञा नात्मनो यशः ।
सा प्राप्स्यत्यशुभस्यास्य प्रेत्य पापफलोदयं ॥ २१ ॥
मूलं नस्त्वमनर्थस्य कुलक्षयकरस्य हि ।
तस्मात् कुब्जेऽहमद्य त्वां नेष्यामि यमसादनं ॥ २२ ॥
हृच्छोषणं महद्दुःखमद्य रामवियोगजं ।
कुब्जे त्वयि विमोक्ष्यामि पापे पापानुबन्धिनि ॥ २३ ॥
इत्युक्त्वा भृशसंक्रुध्य शत्रुघ्नो लक्ष्मणानुजः ।
विचकर्ष बलात् कुब्जां क्रोशन्तीं पृथिवीतले ॥ २४ ॥
तैर्वाक्यैः परुषैस्तेन कैकेयी भृशमर्दिता ।
शत्रुघ्नभयसंविग्ना पुत्रं शरणमभ्यगात् ॥ २५ ॥
तं प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नं वाक्यमब्रवीत् ।
अबध्याः सर्वभूतानां प्रमदाः क्षम्यतां त्वया ॥ २६ ॥
हन्यामहमिमां पापां कैकेयीं स्वयमेव हि ।
यदि रामो न धर्मात्मा त्यजेन्मां मातृघातिनं ॥ २७ ॥
रोषं संयच्छ धर्मज्ञ हतैवेयं स्वकर्मणा ।
मत्वा चेयं परप्रेष्या कुब्जा स्त्री च विशेषतः ॥ २८ ॥
इमामपि च विज्ञाय हतां कुब्जामसत्स्त्रियं ।
त्यजेद्रामः स धर्मात्मा त्वां च मां चाप्यसंशयं ॥ २९ ॥

इत्येतद्वचनं श्रुत्वा शत्रुघ्नो भरतेरितं ।
संयच्छन्नात्मनो रोषं विचिक्षेप स मन्थरां ॥ ३० ॥
सा क्षिप्ता सहसोत्थाय मन्थरा भयविह्वला ।
कैकेयीमभिगम्यार्ता ययाचे शरणं तदा ॥ ३१ ॥

शत्रुघ्नविक्षेपविमूढसंज्ञां
समीक्ष्य कुब्जां भरतस्य माता ।
शनैः समाश्वासयदार्तरूपां
क्रौञ्चीं भयार्तामिव रारटन्तीं ॥ ३२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कुब्जाकर्षणं
नाम सप्तसप्ततितमः सर्गः ॥

## LXXVIII.

गर्हयन्नेव जननीं दुःखशोकाकुलेन्द्रियः ।
भरतोऽवेक्ष्य शत्रुघ्नमिदं वचनमब्रवीत् ॥ १ ॥
अनीश्वरोऽयं पुरुषः सुखदुःखाप्तये मतः ।
कर्षत्यवशमेवैनं कृतान्तः सुखदुःखयोः ॥ २ ॥
अहो कृतान्तो बलवान् येन सर्वगुणान्वितः ।
सुखार्हो ह्यवशो रामो बलाद्दुःखे नियोजितः ॥ ३ ॥
पुत्रशोकपरिम्लूनां भर्तृव्यसनकर्षितां ।
कौशल्यामेहि सहितो मया पश्याद्य दुःखितां ॥ ४ ॥
गर्हितं चायशस्यं च कर्म मात्रा कृतं मम ।
यदिदं तद्धि पश्यामि कृतान्तकृतमेव हि ॥ ५ ॥
शत्रुघ्न स्त्री पुमान् वापि कृतान्तबलमोहितः ।
विपश्चिदपि संप्राप्तं न वेत्त्यात्महिताहितं ॥ ६ ॥
कृतान्तमोहिता माता मम शत्रुघ्न केकयी ।
इदं कृतवती पापं सर्वलोकविगर्हितं ॥ ७ ॥
इदं तु मे महद्दुःखं शत्रुघ्न हृदि वर्तते ।
किन्नु वक्ष्यामि कौशल्यामिति मातृविदूषितः ॥ ८ ॥
इत्युक्त्वा भरतो वाक्यं शत्रुघ्नसहितस्तदा ।
रुरोदार्तस्वनेनोच्चैः पूरयन्निव तद्गृहं ॥ ९ ॥

श्रुत्वा तस्यार्तनादं च भरतस्य महात्मनः ।
रुदतस्तत्र कौशल्या सुमित्रामिदमब्रवीत् ॥१०॥
आगतः क्रूरकर्मिण्याः कैकेय्या भरतः सुतः ।
तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनं ॥११॥
इत्युक्त्वा दुःखसंतप्ता कौशल्या करुणं वचः ।
प्रतस्थे भरतं द्रष्टुं सुमित्रासहिता तदा ॥१२॥
स चापि भरतः श्रीमान् शत्रुघ्नसहितस्तदा ।
प्रतस्थे दुःखितां द्रष्टुं कौशल्यां स्वनिवेशने ॥१३॥
ततो भरतशत्रुघ्नौ कौशल्यां प्रेक्ष्य दुःखितां ।
दूरादपि प्रणम्योभौ दुःखार्तावभिपेततुः ॥१४॥
तौ परिष्वज्य कौशल्या शत्रुघ्नभरतावुभौ ।
परीता तेन दुःखेन रुरोद भृशदुःखिता ॥१५॥
उवाच चैनं प्रणतमुत्थाप्य भयविह्वलं ।
रुदती वाक्यमेतत् सा कौशल्या परुषाक्षरं ॥१६॥
दिष्ट्या ते राज्यकामेन प्राप्तं राज्यमकण्टकं ।
कैकेय्या ते स्वयं मात्रा कैतवेनाभियाचितं ॥१७॥
प्रव्राज्य चीरवसनं पुत्रं मेऽनपकारिणं ।
केन युक्तार्थयोगेन कैकेयी जननी तव ॥१८॥
सीतां वाप्यथ केनेयं प्रव्राजयितुमर्हति ।
यथा मे दयितः पुत्रो गतो रामः सलक्ष्मणः ॥१९॥

तथाद्य स्वयमेवाहं सुमित्रानुचरा वनं ।
यास्यामि यत्र रामोऽसौ गतः सीतासहायवान् ॥ २० ॥
कामं वा स्वयमेव त्वं तत्र मां नय पुत्रक ।
तपस्तप्यति यत्रासौ पुत्रो मे पितुराज्ञया ॥ २१ ॥
इदं त्वं धनरत्नाढ्यं चतुरङ्गबलान्वितः ।
पित्राभिसृष्टं कल्याणं राज्यं प्राप्नुह्नि वाञ्छितं ॥ २२ ॥
इति लालप्यमानां तां कौशल्यां भरतस्तदा ।
प्राञ्जलिः प्रणतो वाक्यमिदं प्रसृतमब्रवीत् ॥ २३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतोपालम्भो
नाम अष्टसप्ततितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXIX.

तामेवं ब्रुवतीं दीनां कौशल्यां राममातरं ।
कृताञ्जलिरुवाचेदं भरतो बाष्पगद्गदं ॥ १ ॥
आर्ये कस्मादजानन्तं गर्हसे मामकल्मषं ।
विपुलां हि मम प्रीतिं स्थिरां जानासि राघवे ॥ २ ॥
कृतशास्त्रानुगा बुद्धिर्माभूत् तस्य कदाचन ।
सत्यसंधः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ ३ ॥
प्रैष्यां पापीयसीं यातु सूर्यं च प्रति मेहतु ।
पादेन हन्यादुगां सुप्तां यस्यार्योऽनुमते गतः ॥ ४ ॥
उच्छिष्टः संस्पृशतु गामग्निं ब्राह्मणमेव च ।
स निन्दतु गुरुं चैव यस्यार्योऽनुमते गतः ॥ ५ ॥
सखिभार्यां गुरोर्भार्यां मनसा सोऽभिपद्यतां ।
गन्तुं पापमतिः पापो यस्यार्योऽनुमते गतः ॥ ६ ॥
हस्त्यश्वरथसंबाधे युद्धे शस्त्रसमाकुले ।
मा स्म कार्षीत् सतां कर्म यस्यार्योऽनुमते गतः ॥ ७ ॥
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं तत्त्वेन धीमता ।
स नाशयतु दुर्मेधा यस्यार्योऽनुमते गतः ॥ ८ ॥
कृत्ये विवदमाने तु पक्षमाश्रित्य जल्पतां ।
पापं स समवाप्नोतु यस्यार्योऽनुमते गतः ॥ ९ ॥

देवतातिथिभृत्यानां मातापित्रोस्तथैव च ।
स्वयमश्नावदत्त्वैव यस्यार्योऽनुमते गतः ॥ १० ॥
मा च शास्त्रानुगां वाचं प्रयुञ्जीत कदाचन ।
सत्सु मा च प्रतितिष्ठेद्यस्यार्योऽनुमते गतः ॥ ११ ॥
आषाढीकार्त्तिकीमाघीतिथयः पुण्यसंमिताः ।
अप्रदानवतो यान्तु यस्यार्योऽनुमते गतः ॥ १२ ॥
पायसं कृसरं मांसं वृथा प्राश्नातु निर्घृणः ।
गुणं चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ १३ ॥
मातरं पितरं वृद्धमाचार्यं ब्राह्मणं गुरुं ।
अवमन्यतां दुष्टात्मा यस्यार्योऽनुमते गतः ॥ १४ ॥
सतां लोकात् सतां कीर्तेः सद्भिर्जुष्टाच्च कर्मणः ।
भ्रश्यतां क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ १५ ॥
यत् पापं ब्रह्महत्यायां यत् पापं कपिलाबधे ।
तत् पापं समवाप्नोतु यस्यार्योऽनुमते गतः ॥ १६ ॥
विश्वासघातिनां पापं यच्चैव गुरुघातिनां ।
गुरोश्चालीकनिर्बन्धे तत् पापं प्रतिपद्यतां ॥ १७ ॥
यत् पदा पावकं स्पृष्ट्वा कृतघ्ने तस्करे च यत् ।
तत् पापं समवाप्नोतु यस्यार्योऽनुमते गतः ॥ १८ ॥
यदग्निदायके पापं यत् पापं ग्रामघातिनि ।
मित्रद्रुह्वि च यत् पापं तत् पापं प्रतिपद्यतां ॥ १९ ॥

उभे संधे शयानस्य यत् पापं परिकल्पितं ।
तत् पापं समवाप्नोतु यस्यार्योऽनुमते गतः ॥ २० ॥
प्रमादिनि नरे पापं यच्चाप्यनृतवादिनि ।
तत् प्राप्नोत्वकृतप्रज्ञो यस्यार्योऽनुमते गतः ॥ २१ ॥
ऐश्वर्यमकृतप्रज्ञो लभतामनुशास्तु च ।
कर्तव्यमतिभिः सार्धं यस्यार्योऽनुमते गतः ॥ २२ ॥
ग्रामे वसतु षण्मासान् स्वसुतामुपजीवतु ।
एकाकी मिष्टमश्नातु यस्यार्योऽनुमते गतः ॥ २३ ॥
एवमाश्वासयामास भरतो दुःखकर्षितां ।
कौशल्यां शोकसंतप्तां पतिपुत्रविनाकृतां ॥ २४ ॥
एवं तं शपथान् कृच्छ्रान् शपमानमकल्मषं ।
भरतं दुःखसंततं कौशल्या पुनरब्रवीत् ॥ २५ ॥
शुद्धस्वभाव धर्मात्मन्नवैमि त्वामकल्मषं ।
शपथानीदृशान् कुर्वन् प्राणानुपरुणत्सि मे ॥ २६ ॥
दिष्ट्यासि रामसहितः पुत्र धर्मान्न चालितः ।
सह रामेण धर्मात्मन् दीर्घमायुरवाप्नुहि ॥ २७ ॥
अपि त्वां सह रामेण पश्येयं लक्ष्मणेन च ।
तीर्णप्रतिज्ञेनानृण्यं गतेन पितुरत्र च ॥ २८ ॥
पूर्वेषां पुण्यकीर्तीनां राजर्षीणां महात्मनां ।
प्राप्नुह्यायुश्च कीर्तिं च धर्मं चैवोचितं कुले ॥ २९ ॥

चतुर्दशसु वर्षेषु गतेष्वरिनिसूदन ।
रामं सीतां लक्ष्मणं च द्रष्टासि पुनरागतान् ॥ ३० ॥
तैलद्रोण्यां शरीरं ते पितुस्तिष्ठति पुत्रक ।
त्वत्प्रतीक्षं महार्हस्य तत् संस्कर्तुं त्वमर्हसि ॥ ३१ ॥
धर्मेणेमाः प्रजाः पुत्र यथा रक्षसि तत् कुरु ।
स्वर्गतोऽपि यथा राजा संतुष्यति तथा कुरु ॥ ३२ ॥
पितुर्वियोगजं दुःखं रामत्यागकृतं तथा ।
उत्सृज्य धुर्यवत् पुत्र गुर्वीं कुलधुरं वह ॥ ३३ ॥
एवमाश्वास्यमानस्य भरतस्य महात्मनः ।
शोकभारसमाक्रान्तं बभूव लुलितं मनः ॥ ३४ ॥
कौशल्याया विलपितं श्रुत्वा च करुणाक्षरं ।
मोहमभ्यागमद्भूयो भरतो दुःखमोहितः ॥ ३५ ॥
शोचन्नथ स पतितो धरण्यां शोकलालसः ।
तत् तदार्तोऽतिकरुणं विललापाकुलेन्द्रियः ॥ ३६ ॥
पितरं भ्रातरं चैव स्मृत्वा तद्गतचेतनः ।
तस्य लालप्यमानस्य जगामास्तं दिवाकरः ॥ ३७ ॥
श्वसतो दीर्घमुष्णं च दुःखार्तस्य मुहुर्मुहुः ।
तस्य सा वर्षशतवद्व्यत्यवर्तत शर्वरी ॥ ३८ ॥

रात्रिक्षयं वीक्ष्य बलप्रधाना
द्विजातयो मन्त्रिगणाश्च सर्वे ।

नृपालयं तं विविशुः समेता
हीनं महेन्द्रप्रतिमेन राज्ञा ॥३९॥
तमार्तमश्रुपरिपूर्णनेत्रं
शोके निमग्नं पतितं धरण्यां ।
उपाविशत् सा परिषत् समन्ताद्
विसंज्ञकल्पं भरतं समीक्ष्य ॥४०॥

इत्यार्ष रामायणे अयोध्याकाण्डे भरतशपथो नाम
नवसप्ततितमः सर्गः ॥

## LXXX.

संप्राप्तो व्यसनं कृच्छ्रं हीनवर्णस्वरोदयः ।
भरतो न रराजार्तः शशीव समभिप्लुतः ॥ १ ॥
पितुश्च मरणाद्दीनो रामप्रव्राजनेन च ।
कैकेय्या राज्यलुब्धाया धर्मत्यागेन पीडितः ॥ २ ॥
अपश्यंस्तस्य दुःखस्य सागरस्येव संक्षयं ।
अक्षीणदुःखवेगश्च शर्म नैवाध्यगच्छत ॥ ३ ॥
पितृपैतामहं वृत्तं शाश्वतं स विचिन्तयन् ।
आसीत् परमसंमूढः प्राश्य विप्रः सुरामिव ॥ ४ ॥
उत्क्रामन्त्या जनन्याहं धर्ममार्यनिषेवितं ।
अगाधपारे महति पातितः शोकसागरे ॥ ५ ॥
मन्निमित्तं मृतो राजा रामश्चापि विवासितः ।
अपापः पापतां नीतो मात्राहं राज्यलुब्धया ॥ ६ ॥
विहीनश्चन्द्रसूर्याभ्यां यथा मेरुर्न राजते ।
तथा पित्रा च भ्रात्रा च शून्यं पुरमिदं मम ॥ ७ ॥
अत्यन्तसुखसंवृद्धः पित्रा भ्रात्रा च लालितः ।
कथमेवंविधं दुःखं प्राप्य जीवामि दुःसहं ॥ ८ ॥
सोऽहं पित्रा सहैवाग्निं वनं रामेण वा सह ।
प्रविशामि विना ताभ्यां नाहं जीवितुमुत्सहे ॥ ९ ॥

श्रान्तस्य यदि रामस्य पादौ तौ शुभलक्षणौ ।
संवाहये वनस्थस्य तन्मे राज्याद्वरं भवेत् ॥ १० ॥
शुश्रूषमाणश्चरणौ वने वन्येन जीवतः ।
अहमार्यस्य वत्स्यामि तस्यार्चापुण्यमावहन् ॥ ११ ॥
रामेण हि विना नाहमिच्छामि त्रिदशेष्वपि ।
राज्यं किन्नु मनुष्येषु मातृदूषितमध्रुवं ॥ १२ ॥
आर्यरामस्य पूर्णेन्दुसदृशं चारुलोचनं ।
मम शोको मुखं वीक्ष्य न स्यात् पितृवियोगजः ॥ १३ ॥
इति श्रुत्वा वचो धर्म्यं भरतस्य महात्मनः ।
अमात्या वन्धुवर्गाश्च दुःखादश्रूण्यवर्तयन् ॥ १४ ॥
तमवाक्शिरसं भूमिं चरणाग्रेण राघवं ।
विलिखन्तमुवाचार्तं वशिष्ठो भगवानृषिः ॥ १५ ॥
आपत्स्वमूढो धृतिमान् यः सम्यक् प्रतिपद्यते ।
कर्माण्यवश्यकार्याणि तमाहुः पण्डितं बुधाः ॥ १६ ॥
स त्वं धैर्यमुपाश्रित्य विधूय हृदयज्वरं ।
कर्तुमर्हस्यसंमूढः क्रियाः पितुरनन्तरं ॥ १७ ॥
पिता ते पुत्रशोकार्तो रामे प्रव्रजिते वनं ।
त्वय्यनागच्छति प्राणानिष्टांस्त्यक्त्वा दिवं गतः ॥ १८ ॥
अनाथ इव धर्मात्मा लोकनाथः पिता तव ।
निर्ह्रियेत कथं नाम मृतस्तातस्त्वया विना ॥ १९ ॥

इत्यस्माभिर्विचार्यैव तैलद्रोण्यां स शायितः ।
तस्य निर्हरणं तात पितुस्त्वं कर्तुमर्हसि ॥ २० ॥
परिसान्त्वय मातॄश्च मा च शोके मनः कृथाः ।
अवश्यं भाविनो येऽर्था न ते शोच्या भवद्विधैः ॥ २१ ॥
संबुद्धैरागतज्ञानैस्तत्त्वविद्भिर्महात्मभिः ।
तस्मात् संस्तम्भयात्मानं माभूर्भरत बालिशः ॥ २२ ॥
काकुत्स्थ बलवान् कालः शक्यते नातिवर्तितुं ।
सर्वैर्न भाव्यमस्माभिस्तन्न शोचितुमर्हसि ॥ २३ ॥

भृशं हि दुःखाभिहता विचेतसः
क्षुधा च तन्द्र्या विपन्नतां गताः ।
इमाः पितुस्त्वं महिषीरुपेक्षितुं
न राजपुत्रार्हसि नाथतां गतः ॥ २४ ॥
अपश्चिमस्ते पितुरद्य यो विधिः
प्रदर्शितस्तत्र च यः क्रमो द्विजैः ।
तमाशु संपादय धैर्यमास्थितो
विषादमस्मिन् न नृपात्मजार्हसि ॥ २५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे वशिष्ठवाक्यं
नाम अशीतितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXXI.

एवमुक्तो वशिष्ठेन भरतो धीमतां वरः ।
वशिष्ठमभिवीक्ष्येदमुवाचार्ततरो वचः ॥ १ ॥
भवत्येवं ब्रुवति मे दीर्यतीव मनो मुने ।
लोकनाथे स्थिते रामे नाथत्वं मयि कीदृशं ॥ २ ॥
किन्तु तत्र नयध्वं मां यत्र राजा पिता मम ।
करिष्ये तत्र संस्कारं भवद्भिः सहितो वशः ॥ ३ ॥
नेदानीं हृदयं चेन्मे स्फुटिष्यति सहस्रधा ।
दर्शयन्तु भवन्तस्तं पितरं क्षीणजीवितं ॥ ४ ॥
ततो वशिष्ठप्रमुखाः सर्वे ते नृपमन्त्रिणः ।
आनयन् भरतं तत्र यत्र राज्ञः कलेवरं ॥ ५ ॥
अर्धसप्तशतास्तास्तु स्त्रियो राजपरिग्रहाः ।
भरतं पुरतः कृत्वा ययुर्द्रष्टुं मृतं नृपं ॥ ६ ॥
तत्र प्रविश्य भरतः सह राजपरिग्रहैः ।
ददर्श पितरं प्रेतं राममातुर्निवेशने ॥ ७ ॥
स तं गतासुं पितरं दृष्ट्वैवोपहतत्विषं ।
हा राजन्निति विक्रुश्य पपात पृथिवीतले ॥ ८ ॥
विसंज्ञकल्पः संज्ञां तु पुनर्लब्ध्वा सुदुर्मनाः ।
जीवन्तमिव संप्रेक्ष्य पितरं सोऽभ्यभाषत ॥ ९ ॥

राजन्नुत्तिष्ठ किं शेषे भरतोऽहमुपागतः ।
त्वदाज्ञया महासत्त्व शत्रुघ्नसहितस्त्वरन् ॥ १० ॥
मम मातामहस्तात कुशलं त्वानुपृच्छति ।
प्रणम्य शिरसा तद्वद्युधाजिन्मातुलो मम ॥ ११ ॥
यतः कुतश्चित् संप्राप्तमङ्कमारोप्य मां नृप ।
ननं मूर्धन्युपाघ्राय प्रीत्या पूर्वमनन्दयः ॥ १२ ॥
स इदानीमनुप्राप्तं किमर्थं नाभिभाषसे ।
न तेऽपकृतवान् किञ्चिदहं तावत् प्रसीद मे ॥ १३ ॥
धन्यः स रामो येनाज्ञा कृता ते वसुधाधिप ।
लक्ष्मणश्चापि धन्योऽसौ यो राममनुनिर्गतः ॥ १४ ॥
अधन्योऽहमपुण्यश्च यन्मां प्रति स मन्युमान् ।
दुःखेन महताविष्टः प्राणान् संत्यक्तवानसि ॥ १५ ॥
नूनं च तौ न जानीतो मृत्युं ते रामलक्ष्मणौ ।
यथा हि वनमुत्सृज्य नागताविह दुःखितौ ॥ १६ ॥
मातृदोषादप्रियस्ते यदि तावदहं नृप ।
शत्रुघ्नमपि तावत् त्वमभिभाषितुमर्हसि ॥ १७ ॥
निर्वास्य चीरवसनं रामं लक्ष्मणमेव च ।
स्त्रीहेतोः किमपि प्राणांस्त्यक्त्वा राजन् दिवं गतः ॥ १८ ॥
एवं विलपतस्तस्य भरतस्य महात्मनः ।
श्रुत्वा नृपतिपत्न्यस्ता रुरुदुर्भृशदुःखिताः ॥ १९ ॥

विलपन्तं तथा तं तु भरतं शोककर्षितं ।
वशिष्ठो जपतां श्रेष्ठो जावालिश्चेदमूचतुः ॥ २० ॥
मा शुचो भरत प्राज्ञ नैव शोच्यो महीपतिः ।
आनन्तर्यमसंमूढः कर्तुमस्य त्वमर्हसि ॥ २१ ॥
शोचन्तो ननु सस्नेहा बान्धवाः सुहृदस्तथा ।
पातयन्ति गतं स्वर्गमश्रुपातेन राघव ॥ २२ ॥
श्रूयते हि नरव्याघ्र पुरा परमधार्मिकः ।
भूरिद्युम्नो गतः स्वर्गं राजा पुण्येन कर्मणा ॥ २३ ॥
स पुनर्बन्धुवर्गस्य शोकवाष्पेण राघव ।
कृत्स्ने वै क्षयिते पुण्ये ततः स्वर्गान्निपातितः ॥ २४ ॥
तस्माच्छोकं राजपुत्र पितृस्नेहसमुत्थितं ।
त्यज त्वं नार्हसि स्वर्गात् पुनश्च्यावयितुं नृपं ॥ २५ ॥
अतिशोकाग्निना दग्धः पिता ते स्वर्गतश्च्युतः ।
शपेत् त्वां मन्युनाविष्टस्तस्मादुत्तिष्ठ मा शुचः ॥ २६ ॥
नायं शोच्यस्तव पिता सत्कर्मार्जितलोकभाक् ।
मृतो नायं सुता यस्य यूयं रामपुरोगमाः ॥ २७ ॥
धर्मात्मानो महात्मानो लोके प्रथितपौरुषाः ।
देवौजसः सत्ववन्तो महेन्द्रवरुणोपमाः ॥ २८ ॥
एवमुक्तो वशिष्ठेन भरतो धर्मकोविदः ।
त्यक्त्वा शोकमिदं वाक्यमुवाच वदतां वरः ॥ २९ ॥

ब्रुवन्ति यद्भवन्तो मां तथा तदिति मे मतिः ।
बलवांस्तु पितृस्नेहो भृशं मोहयतीव मां ॥ ३० ॥
संस्तम्भितो भवद्भिस्तु गुरुभिर्हितवादिभिः ।
त्यक्त्वा शोकं करिष्यामि पितुरस्यौर्ध्वदेहिकं ॥ ३१ ॥
आनयन्तु यथोद्दिष्टं भवद्भिर्नृपमन्त्रिणः ।
संस्काराय पितुर्मेऽद्य सर्वसंभारविस्तरं ॥ ३२ ॥

इति नृपतिसुतस्य जल्पतः
सह नृपमन्त्रिपुरोहितैस्तैः ।
अधिकतरवृद्धिगामिनी सा
शतयामेव बभूव शर्वरी ॥ ३३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतविलापो
नाम एकाशीतितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXXII.

तस्यां रात्र्यां व्यतीतायां भरतं सूतमागधाः ।
प्रसुप्तं बोधयिष्यन्तस्तुष्टुवुर्मधुरस्वराः ॥ १ ॥
सहसा चाभ्यहन्यन्त दुन्दुभयो महास्वनाः ।
प्राध्माप्यन्त सुघोषाश्च शङ्खवेणुगणाः पृथक् ॥ २ ॥
स तूर्यघोषः सुमहान् पूरयन्निव तां पुरीं ।
बोधयामास भरतं शोकव्याकुलचेतसं ॥ ३ ॥
प्रतिषिध्याथ भरतस्तं च प्राबोधकस्वनं ।
नाहं राजेति तानुक्का ततः शत्रुघ्नमब्रवीत् ॥ ४ ॥
पश्य शत्रुघ्न कैकेय्या कुर्वन्त्या लोकगर्हितं ।
अयशः पातितं मूर्ध्नि ममासह्यमनागसः ॥ ५ ॥
कुलधर्मागता राज्ञः पितुर्मे तद्विनाकृता ।
परिभ्रमति राजश्रीरकर्णा नौरिवाम्भसि ॥ ६ ॥
इत्येवं भरतं तत्र विलपन्तं पुनः पुनः ।
दृष्ट्वा प्ररुरुदुः सर्वा आर्तास्ता नृपयोषितः ॥ ७ ॥
भरतेन ततः सार्धं वशिष्ठो वेदवित्तमः ।
प्रविवेश सभां राज्ञस्तदा मन्त्रयितुं हितं ॥ ८ ॥
शातकुम्भैः कुम्भशतैर्मणिचित्रैर्विभूषितां ।
बृहस्पतिरिवेन्द्रेण सुधर्मां सहितः सभां ॥ ९ ॥

भद्रासने रत्नचित्रे स्पर्ध्यास्तरणसंवृते ।
उपविश्य ततः सर्वानानाययत मन्त्रिणः ॥ १० ॥
सुमन्त्रं जैमिनिं चैव सुवर्णं विजयं तथा ।
मन्त्रिणो नैगमांश्चान्यान् प्रधानांश्च तथा द्विजान् ॥ ११ ॥
जनौघः सुमहांस्तत्र समुपायात् समन्ततः ।
सभायां भरतं दृष्टुं शत्रुघ्नसहितं तदा ॥ १२ ॥
ततो हलहलाशब्दः सुमहान् समजायत ।
कौतूहलाज्जनौघस्य सभां प्रत्यभिधावतः ॥ १३ ॥
तत्राथ भरतं दृष्ट्वा सभायां सपुरोहितं ।
प्रत्यनन्दन् प्रकृतयो यथा दशरथं तथा ॥ १४ ॥

सनृपजनगुरुमन्त्रिभिस्तथा
मणिरुचिरासनरत्नभूषिता ।
दशरथसुतशोभिता च सती
सदशरथेव रराज सा सभा ॥ १५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सभाप्रवेशो
नाम द्व्यशीतितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXXIII.

समावृते जने तस्मिन्नुदिते च दिवाकरे ।
वशिष्ठस्तमुवाचेदं भरतं तांश्च मन्त्रिणः ॥ १ ॥
एताः प्रकृतयः सर्वा नागराश्च प्रधानतः ।
राजसांस्कारिकं द्रव्यमादाय समुपस्थिताः ॥ २ ॥
उत्तिष्ठ भरत क्षिप्रं माभूत् कालात्ययः प्रभो ।
पितुः कुरु यथान्यायं संस्कारं भूरिदक्षिणं ॥ ३ ॥
होतारस्ते पितुरिमे वेदवेदाङ्गपारगाः ।
अग्निहोत्रमुपादाय जावालिप्रमुखाः स्थिताः ॥ ४ ॥
गन्धकाष्ठानि चेमानि संस्कारार्थं पितुस्तव ।
उपादायागताः प्रेष्याः सप्रतीक्षमुपासते ॥ ५ ॥
सर्पिस्तैलवसाः कुम्भाः सज्जिताश्चापि ते पितुः ।
अग्नेः समेधनार्थाय गन्धमाल्यं च पुष्कलं ॥ ६ ॥
गन्धतैलानि गन्धाश्च धूपाश्चागुरुसंभवाः ।
सज्जिता शिविका चेयं पितुस्ते रत्नभूषिता ॥ ७ ॥
अत्रैव शिविकायां त्वं संवेशय नराधिपं ।
शिविकागतमुत्क्षिप्य नयैनं वह्निराशु च ॥ ८ ॥
एवमुक्तो वशिष्ठेन भरतः प्रत्युवाच तं ।
वशिष्ठं वदतां श्रेष्ठं पितुर्वह्निमतं गुरुं ॥ ९ ॥

यथाज्ञापयसि प्राज्ञ करवाणि तथादृतः ।
दैवतं ह्यसि मान्यश्च गुरुश्चासि गुरोर्मम ॥ १० ॥
वाक्येनानेन तस्याथ भरतस्य महात्मनः ।
आजगाम परं हर्षं वशिष्ठो द्विजसत्तमः ॥ ११ ॥
शोकवेगमसह्यं तु धारयन् भरतस्ततः ।
कलेवरं भूमिपतेः समन्तात् तदुदैक्षत ॥ १२ ॥
न चाशक्नोत् स शोकस्य वेगं धारयितुं तदा ।
महार्णवस्यापततस्तोयवेगमिवोत्थितं ॥ १३ ॥
तमार्तिमान् वेपमानस्ततत् तत् स विलपन् मुहुः ।
शत्रुघ्नसहितः शीघ्रं शिविकामानयन्नृपं ॥ १४ ॥
शिविकास्थं महाराजमलंकृत्य विधानतः ।
वाससा च महार्हेण समाच्छाद्य सुसंवृतं ॥ १५ ॥
अवकीर्य च माल्येन दिव्यधूपावधूपितं ।
गन्धपुष्पैः सुरभिभिः परिकीर्य समन्ततः ॥ १६ ॥
उवाहोत्क्षिप्य शिविकां शत्रुघ्नसहितस्तदा ।
हा राजन् क्वासि गन्तेति रुदन्नार्तः पुनः पुनः ॥ १७ ॥
तस्मिंस्तदा प्ररुदिते वशिष्ठाकारचोदिताः ।
ऊहुः शीघ्रतरं प्रैष्याः शिविकां प्रतिगृह्य तां ॥ १८ ॥
पुरतः पाण्डुरं छत्त्रं बालव्यजनमेव च ।
आनयन् नृपतिप्रैष्या रुदन्तः शोकविह्वलाः ॥ १९ ॥

दीप्यमानं हुतं पूर्वं जावालिप्रमुखैर्द्विजैः ।
अग्निहोत्रं नरपतेः प्रतस्थे तस्य चाग्रतः ॥ २० ॥
शकटानि च पूर्णानि रत्नानां कनकस्य च ।
ययुर्धनविसर्गार्थं दीनानाथजनस्य च ॥ २१ ॥
सर्वः प्रैष्यजनस्तत्र रत्नानि विविधानि च ।
और्ध्वदेहिकदानार्थं निनाय धरणीपतेः ॥ २२ ॥
अग्रतः प्रययुश्चैनं सत्कर्मस्तुतिभिर्नृपं ।
अभिष्टुवन्तो मधुरं सूतमागधवन्दिनः ॥ २३ ॥
तस्मिन् निर्हरणे राज्ञः प्रवृत्ते सुमहांस्तदा ।
आर्तनादोऽभवत् स्त्रीणां यथास्य मरणे तथा ॥ २४ ॥
ततः पौरजनः सर्वः सस्त्रीवृद्धकुमारकः ।
अनु राजशरीरं तन्निर्ययौ नगराद्बहिः ॥ २५ ॥
तथा भरतशत्रुघ्नौ शिबिकां परिगृह्य तां ।
दुःखशोकसमाविष्टौ रुदन्तावनुजग्मतुः ॥ २६ ॥
कौशल्या च सुमित्रा च कैकेयी च तथापराः ।
अर्धसप्तशता नार्यः प्रकीर्णासितमूर्धजाः ॥ २७ ॥
क्रोशन्त्यश्च रुदन्त्यश्च कुरर्य इव सर्वशः ॥
अनुजग्मुः शरीरं तद्राज्ञो राजीवलोचनाः ॥ २८ ॥
अथास्य शरयूतीरे विविक्ते मृदुशाद्वले ।
चन्दनागुरुकाष्ठैस्ते राज्ञश्चक्रुश्चितां तदा ॥ २९ ॥

कालीयकमृणालैश्च बालकोशीरपद्मकैः ।
चितां तां विधिवच्चक्रुर्विपुलामथ ते जनाः ॥ ३० ॥
तस्यां चितायां नृपतेः शरीरं तत् सुहृज्जनः ।
आशीशयत् समुत्क्षिप्य शोकव्याकुललोचनः ॥ ३१ ॥
तां चितां पृथिवीपालमारोप्य क्षौमवाससं ।
यज्ञपात्रचयं चक्रुस्ततस्तस्योपरि द्विजाः ॥ ३२ ॥
यथा स्थानेषु विन्यस्य त्रीनग्नीन् विधिवद्धुतान् ।
मन्त्रानन्तं मनोभिस्तु जपन्तोऽभ्युद्यतस्रुवाः ॥ ३३ ॥
होतारो यज्ञपात्राणि पवित्रैर्ममृजुस्तदा ।
प्रमृज्यानन्तरं तस्यां चितायां परिचिक्षिपुः ॥ ३४ ॥
स्रुक्पात्राणि चषालानि मुषलोदूखलं तथा ।
अरणीसहितं चैव पवित्राणि च सर्वशः ॥ ३५ ॥
विशस्य च पशुं मेध्यं मन्त्रसंस्कारसंस्कृतं ।
अन्नास्तरणिकं राज्ञः समन्तात् परिचिक्षिपुः ॥ ३६ ॥
प्राग्लाङ्गलविकृष्टां च चिताभूमिं समन्ततः ।
कृत्वा विधानतो धेनुं सवत्सामत्यवासृजन् ॥ ३७ ॥
सर्पिस्तैलवसाभिश्च समन्तात् परिषिच्य तां ।
चितां प्रज्वालयामास भरतः सह बन्धुभिः ॥ ३८ ॥
प्रजज्वाल ततो वह्निः सहसैव समेधितः ।
सोऽर्चिष्मानदहद्राज्ञश्चितारूढं कलेवरं ॥ ३९ ॥

# अयोध्याकाण्डं

विधिवत् संस्कृतो राजा गुरुभिर्वेदपारगैः ।
जगाम परमं स्थानं यज्वनां पुण्यकर्मणां ॥ ४० ॥

ततः प्रजज्वाल महासमिद्धो
हिरण्यरेताः प्रदहन् सधूमः ।
दृष्ट्वा च तं प्रज्वलितं चिताग्निम्
आर्तस्वनं चक्रुरतीव नार्यः ॥ ४१ ॥

पौराश्च सर्वे सहसा विलेपुस्
तथैव राज्ञः सुहृदः सुतौ च ।
हा नाथ हा भूमिपते किमर्थं
यासि त्वमस्मान् विवशान् विहाय ॥ ४२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथसंस्कारो
नाम त्र्यशीतितमः सर्गः ॥

## LXXXIV.

अवकीर्य तु माल्येन चितां तामपसव्यतः ।
सगणो भरतश्चक्रे विषपीत इव स्खलन् ॥ १ ॥
विह्वलन्निव दुःखेन विभ्रमन्निव चातुरः ।
प्रणेमे स पितुः पादौ निपत्य धरणीतले ॥ २ ॥
तमार्तरूपं त्वरितं विह्वलन्तमचेतसं ।
उत्थापयामास बलात् परिगृह्य सुहृज्जनः ॥ ३ ॥
अवेक्ष्य स पितुर्दीप्तं सर्वगात्रेषु पावकं ।
प्रगृह्य बाहू चुक्रोश दुःखेनावससाद च ॥ ४ ॥
शब्दापिहितकण्ठश्च सबाष्पमतिनिःश्वसन् ।
शोकदुःखपरीतात्मा मदक्षीब इव स्खलन् ॥ ५ ॥
विललापातिकरुणं भरतः परिविह्वलः ।
यस्मिन् मां परिदद्यास्त्वं सोऽपि रामो वनं गतः ॥ ६ ॥
यस्या गतिरनाथायाः पुत्रः प्रव्राजितस्त्वया ।
तामिमां तात कौशल्यां किमर्थं नाभिभाषसे ॥ ७ ॥
एवमाद्यतिदुःखार्तो विलपन्नथ राघवः ।
भूमौ पपात शक्रस्य यन्त्रच्युत इव ध्वजः ॥ ८ ॥
परिपेतुः पतन्तं तं पुरुषाः परिचारकाः ।
पुण्यक्षयाच्च्युतं स्वर्गाद्ययातिमृषयो यथा ॥ ९ ॥

# अयोध्याकाण्डं

शत्रुघ्नश्चापि भरतं पतितं समवेक्ष्य तं ।
विसंज्ञकल्पो नृपतिं शोचन् पितरमातुरः ॥ १० ॥
उन्मत्त इव विप्रेक्ष्य विललाप निपत्य सः ।
गुणसंकीर्तनं कुर्वन् पितुर्वै पितृवत्सलः ॥ ११ ॥
सुकुमारं च बालं च सततं लालितं त्वया ।
क्व तात भरतं त्यक्त्वा विलपन्तं गमिष्यसि ॥ १२ ॥
भोज्याभरणदानैश्च वासोभिश्च पृथग्विधैः ।
संवर्धयसि नः सर्वांस्तन्नः कोऽद्य करिष्यति ॥ १३ ॥
किं तु दुःखातितप्तानां हृदयं नो न दीर्यते ।
पित्रा गुणवतानेन वियुक्तानां सहस्रधा ॥ १४ ॥
त्वयि राजन् गते स्वर्गं रामे चारण्यमास्थिते ।
न जीवितुं व्यवस्यामि प्रविशामि हुताशनं ॥ १५ ॥
हीनां पित्रा तथा भ्रात्रा शून्यामिव पुरीमिमां ।
अयोध्यां न प्रवेक्ष्यामि प्रविशामि हुताशनं ॥ १६ ॥
एवमादि ततः श्रुत्वा भ्रात्रोर्विलपितं तदा ।
सर्वः परिजनो भूयो भृशं दुःखतरोऽभवत् ॥ १७ ॥
ततः शोकपरिश्रान्तौ शत्रुघ्नभरतौ तदा ।
उभौ विलप्य करुणं ध्यानमेवान्वगच्छतां ॥ १८ ॥
तौ ध्यानमाश्रितौ दृष्ट्वा पितुरिष्टः पुरोहितः ।
वशिष्ठो भरतं वाक्यमुत्थाप्येदमुवाच ह ॥ १९ ॥

द्वन्द्वैरेव जगत् सर्वमभितप्तमिदं सदा ।
अवश्यं भाविनं भावं न त्वं शोचितुमर्हसि ॥ २० ॥
जातस्य मृत्युर्नियतो ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २१ ॥
सुमन्त्रश्चापि शत्रुघ्नं पतितं धरणीतले ।
उत्थापयन्नुवाचार्तः सर्वभूतभवाभवं ॥ २२ ॥
उत्थितौ तौ नरव्याघ्रावश्रुक्लिन्नौ न रेजतुः ।
वर्षतोयपरिक्लिन्नौ पृथू इन्द्रध्वजाविव ॥ २३ ॥
अश्रूणि परिमार्जन्तौ वाष्परक्तेक्षणौ तु तौ ।
अमात्यास्त्वरयामासुः पितुः प्रति जलक्रियां ॥ २४ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे दशरथसंकालनं
नाम चतुरशीतितमः सर्गः ॥

## LXXXV.

एवं संकालनं कृत्वा भरतः पृथिवीपतेः ।
जलक्रियां पितुर्धर्मीमान् कर्तुं समुपचक्रमे ॥ १ ॥
पुण्यां पुण्यजलां पूर्णां महर्षिगणसेवितां ।
उदकं स पितुर्दातुं सरितं शरयूं ययौ ॥ २ ॥
अवगाह्य ततः पुण्यां शरयूं ससुहृज्जनः ।
ददौ पितरमुद्दिश्य भरतः सलिलाञ्जलिं ॥ ३ ॥
ददतः सलिलं तस्य भरतस्य महात्मनः ।
सान्निध्यं सरितः पुण्याः शरय्वाः प्रययुस्तदा ॥ ४ ॥
विपाशा च शतद्रुश्च गङ्गा च यमुना तथा ।
सरस्वती चन्द्रभागा तथान्याः सरितो वराः ॥ ५ ॥
तासां नदीनां पुण्यानां सलिलेन दिवं गतं ।
पितरं तर्पयामास भरतः ससुहृज्जनः ॥ ६ ॥
स च पौरजनः सर्वः सामात्यः सपुरोहितः ।
तर्पयामास राजानं सलिलेन विधानतः ॥ ७ ॥
ततः कृत्वोदकं सर्वे पौरजानपदा जनाः ।
पृथगाश्वासयामासुर्भरतं शोकलालसं ॥ ८ ॥
आश्वास्यमानस्तैश्चापि भरतः प्रययौ ततः ।
तैरेव सहितोऽयोध्यां सीदमानो मुहुर्मुहुः ॥ ९ ॥

दूरादेव च तां दृष्ट्वा दीनातुरजनावृतां ।
पुरीमयोध्यां भरतः पौरान् वचनमब्रवीत् ॥१०॥
गते स्वर्गं नरपतौ रामे च वनमाश्रिते ।
भातीयं मे निरानन्दा श्मशानसदृशी पुरी ॥११॥
प्रमदा कृतवीरेव विना चन्द्रेण शर्वरी ।
विहीना नरदेवेन पुरीयं न विराजते ॥१२॥
नेच्छाम्येनामहं द्रष्टुं प्रवेष्टुं वा कृतविषं ।
इहैव प्रायमाशिष्ये पितुर्दर्शनकाङ्क्ष्या ॥१३॥
किं मे पित्रा विहीनस्य जीवितेन सुखेन वा ।
इच्छामि जीवितुं नाहमनुयास्यामि भूमिपं ॥१४॥
अथ राज्ञो महामात्यो धर्मपाल इति श्रुतः ।
परिदेवयमानं स भरतं वाक्यमब्रवीत् ॥१५॥
शोचतो मुह्यतश्चैव मोघं ते भरत श्रुतं ।
अश्रुतस्येव ते नेदमनुरूपं नृपात्मज ॥१६॥
शोकं भरत नात्यर्थं निर्बन्धात् कर्तुमर्हसि ।
सर्वस्वजननाशेऽपि न हि शोचन्ति पण्डिताः ॥१७॥
शोचतो रुदतश्चैव यदि नाम मृतः पुनः ।
संजीवेत् स्वजनः कश्चिदनुशोचेम सर्वशः ॥१८॥
यदा त्ववश्यं यातव्यं सर्वैर्देहिभिरागतैः ।
मृत्युकाले तदा शोके नास्ति सामर्थ्यमण्वपि ॥१९॥

एह्याशु त्वं सहास्माभिरयोध्यां प्रविश प्रभो ।
स्वजनं शोकसंतप्तं तमाश्वासय मा शुचः ॥ २० ॥
ततोऽनन्तरमेव त्वं स्वर्गतस्य महीपतेः ।
श्राद्धकर्मविधानानि विधिवत् कर्तुमर्हसि ॥ २१ ॥
त्वं ह्यद्य नाथः सर्वेषामस्माकं स्वजनस्य च ।
शोचितुं नार्हस्यतस्त्वं प्रजानां नाथतां गतः ॥ २२ ॥
एवमुक्तः स विप्रेण धर्मपालेन धार्मिकः ।
प्रविवेश निरानन्दामयोध्यां सपदानुगः ॥ २३ ॥
विशून्यचत्वरपथां विध्वस्तविपणापणां ।
शोकातुरजनाकीर्णां दीनस्वनविनादितां ॥ २४ ॥
ततो विवेश स्वजनेन संवृतः
पितुर्निवेशं भरतोऽतिदुःखितः ।
विहीनमिन्द्रप्रतिमेन राज्ञा
गतोत्सवाकारमिवातिनिष्प्रभं ॥ २५ ॥
प्रविश्य तस्मिंश्च पितुर्निवेशने
तृणानि संस्तीर्य दशाहमातुरः ।
ततः स सुष्वाप तमेव चिन्तयन्
पितुर्विनाशं भरतः प्रतापवान् ॥ २६ ॥
इत्यार्षे रामायणे ग्रयोध्याकाण्डे उदकदानं नाम
पञ्चाशीतितमः सर्गः ॥

## LXXXVI.

समतीते दशाहे तु कृतशौचो नृपात्मजः ।
चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च ॥ १ ॥
ददौ चोद्दिश्य पितरं ब्राह्मणेभ्यो धनं तदा ।
महार्हाणि च वस्त्राणि गाश्च वाहनमेव च ॥ २ ॥
यानानि दासीदासांश्च वेश्मानि वसुमन्ति च ।
भूषणानि च मुख्यानि राज्ञस्तस्यौर्ध्वदेहिके ॥ ३ ॥
त्रयोदशाहेऽतीते तु कृते चानन्तरे विधौ ।
समेता मन्त्रिणः सर्वे भरतं वाक्यमब्रुवन् ॥ ४ ॥
गतः स नृपतिः स्वर्गं भर्तासीद्यो गुरुश्च नः ।
प्रव्राज्य दयितं पुत्रं रामं लक्ष्मणमेव च ॥ ५ ॥
त्वमद्य भव नो राजा धर्मतो नृवरात्मज ।
प्राप्नोति नापदं यावदिदं राष्ट्रमराजकं ॥ ६ ॥
आभिषेचनिकं द्रव्यमिदमादाय सर्वशः ।
राजानमभिषेक्तुं त्वामिच्छन्ति नृपमन्त्रिणः ॥ ७ ॥
इदं राज्यं गृहाण त्वमन्ववायक्रमागतं ।
अभिषेचय चात्मानं पाहि चास्मान् नराधिप ॥ ८ ॥
इत्युक्तो भरतो द्रव्यमाभिषेचनिकं तदा ।
मङ्गलार्थं समालभ्य राज्ञस्तान् मन्त्रिणोऽब्रवीत् ॥ ९ ॥

ज्येष्ठभ्रातुः सदा राज्यमाम्नोरुचितं कुले ।
भवन्तो वक्तुमर्हन्ति नैवं मामाकुला इव ॥ १० ॥
भ्राता मे गुणवान् ज्येष्ठो राजा भवितुमर्हति ।
राजधर्मविदां श्रेष्ठो रामो राजीवलोचनः ॥ ११ ॥
नान्यो नियोज्यो युष्माभिः स नो राजा भविष्यति ।
वने त्वहं निवत्स्यामि नव वर्षाणि पञ्च च ॥ १२ ॥
युज्यतामाशु महती सेनाद्य चतुरङ्गिणी ।
आनयिष्याम्यहं श्रेष्ठं भ्रातरं राघवं वनात् ॥ १३ ॥
आभिषेचनिकं द्रव्यं सर्वमेतदशेषतः ।
पुरस्कृत्य गमिष्यामि भवद्भिः सहितो वनं ॥ १४ ॥
तत्रैव च नरव्याघ्रमभिषिच्य पुरस्कृतं ।
आनयिष्याम्यहं रामं हव्यवाहमिवाध्वरे ॥ १५ ॥
न सकामां करिष्यामि जननीं राज्यगर्धिनीं ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १६ ॥
क्रियतां शिल्पिभिः पन्थाः समो मे विषमाध्वनि ।
देशकालपथिज्ञाश्च कुशला यान्तु मेऽग्रतः ॥ १७ ॥
इत्येवं भरतं धर्म्यं भाषमाणं वचस्तदा ।
प्रत्यूचुर्हृष्टरोमाणः सर्वे ते नृपमन्त्रिणः ॥ १८ ॥
एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठतु ।
यस्त्वं भ्रात्रे श्रियं दातुं ज्येष्ठायेच्छसि राघव ॥ १९ ॥

अनुत्तमं ते वचनं नृपात्मज
प्रजल्पतः संश्रवणे निशम्य तु ।
प्रहर्षजाः संप्रति वाष्पविन्दवः
पतन्ति राजात्मज नेत्रसंभवाः ॥ २० ॥
युक्तार्थं वचनमिदं निशम्य हृष्टास्
तेऽमात्याः सपरिषदोऽब्रुवंस्तदा तं ।
पन्थानं नरवर भक्तिमज्जनस्य
व्यादिष्टस्तव वचनाच्च शिल्पिवर्गः ॥ २१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतभक्तिर्नाम
षडशीतितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXXVII.

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः ।
स्वकर्मनिरताः पौराः खनका यन्त्रकास्तथा ॥ १ ॥
कर्मान्तिकाः स्थपतयः पुरुषा मार्गकोविदाः ।
तथा वर्धकिनश्चैव मार्गिणो वृक्षरोपकाः ॥ २ ॥
कूपकाराः सभाकारा वंशकर्मकृतस्तथा ।
समर्था ये विशिष्यन्ते सर्वतः संप्रतस्थिरे ॥ ३ ॥
विषमाणि समीकुर्वन् छेदयंश्च पथि द्रुमान् ।
सेनापतिर्ययावग्रे भरतस्य प्रयास्यतः ॥ ४ ॥
स तु हर्षात् समुत्क्रोशन् जनौघो विपुलो महान् ।
अशोभत महावेगः पर्वणीव जलाशयः ॥ ५ ॥
ते ते स्वं स्वमधिष्ठाय कर्म कर्मविशारदाः ।
करणैर्बहुभिर्युक्ताः परितश्चक्रमुर्जनाः ॥ ६ ॥
सेनानिवेशान् विविधाननुमार्गं विधानतः ।
कुर्वन्तः शोधयन्तश्च पन्थानं गहने वने ॥ ७ ॥
चिच्छिदुः शैलसंकाशान् क्वचिद्वृक्षान् परश्वधैः ।
अवृक्षेषु च देशेषु केचिद्वृक्षानरोपयन् ॥ ८ ॥
लतावितानगुल्मांश्च शलाकाकाशपर्वतान् ।
केचित् कुठारैष्टङ्कैश्च दात्रैश्चैव प्रचिच्छिदुः ॥ ९ ॥

अपरे वीरणस्तम्बान् बलिनो बलवत्तरान् ।
विदलन्ति स्म कुद्दालैः स्थलानि च समन्ततः ॥ १० ॥
तथा कण्टकदुर्गांश्च पथश्चक्रुरकण्टकान् ।
श्वभ्राणि पूरयामासुः कूपांश्चैव तथापरे ॥ ११ ॥
निम्नदेशांस्तथा चान्ये समांश्चक्रुः समन्ततः ।
संक्रमांश्चाप्यकुर्वंस्ते तीर्थानि च सहस्रशः ॥ १२ ॥
नदीतीरतटोच्छ्रायान् प्रकुर्वन्तः समांस्तथा ।
अनुमार्गं ययुः पूर्वं खनका भरताज्ञया ॥ १३ ॥
बबन्धुर्बन्धनीयांश्च क्षोभ्यान् संचुक्षुभुस्तथा ।
जलाशयांस्तथा चक्रुर्न चिरेण बहूदकान् ॥ १४ ॥
सागरप्रतिमान् मार्गे सुतीर्थान् विमलोदकान् ।
चक्रुर्देशेषु देशेषु पदशः पञ्चतोरणान् ॥ १५ ॥
उदपानान् बहुविधान् वेदिकापरिवारितान् ।
स सुधाकुट्टिमतलः प्रपुष्पितमहीरुहः ॥ १६ ॥
मत्तहृष्टद्विजगणः पताकाभिरलंकृतः ।
चन्दनेन च संसिक्तो नानाकुसुमभूषितः ॥ १७ ॥
बह्वशोभत सेनायाः पन्थाः स्वर्गपथोपमः ।
आज्ञाय च यथाज्ञप्तं स्थापिताधिकृताः पथि ॥ १८ ॥
रमणीयप्रदेशेषु बहुस्वादुफलेषु च ।
निवेशो यो ह्यभिप्रेतो भरतस्य महात्मनः ॥ १९ ॥

भूयस्तं शोधयामासुर्भूषाभिश्चाप्यभूषयन् ।
नक्षत्रेषु प्रशस्तेषु मुहूर्ते चैव तद्विदः ॥ २० ॥
निवेशं स्थापयामासुर्भरतस्य महात्मनः ।
स देशो नीरजाश्चासीत् पुरुषैः परिवारितः ॥ २१ ॥
यन्त्रेन्द्रकीलपरिखाप्रतोलीपरिशोभितः ।
प्रासादयानसंयुक्तः सौधप्राकारसंवृतः ॥ २२ ॥
पताकाशोभितः श्रीमान् सुनिर्मितमहापथः ।
गृहैस्तन्वद्भिरिव खं सविटङ्कवितानकैः ॥ २३ ॥
समुच्छ्रितपताकैश्च शक्रसद्मोपमैर्वृतः ।
जाह्नवीं तु समासाद्य विविधद्रुमकाननां ॥ २४ ॥
सचन्द्रतारागणमण्डितो यथा
क्षपागमे वीतमलो विराजते ।
नक्षत्रमार्गः स तथा व्यराजत
क्रमेण पन्थाः शतशिल्पिनिर्मितः ॥ २५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे मार्गसंस्कारो नाम
सप्ताशीतितमः सर्गः ॥

## LXXXVIII.

तामार्यजनसंपूर्णां भरतप्रग्रहां सभां ।
ददर्श बुद्धिसंपन्नो वशिष्ठः श्रेष्ठभागृषिः ॥ १ ॥
आसनानि यथान्यायमार्याणां जुषतां ततः ।
बभौ रूपं घनापाये द्योततां ज्योतिषामिव ॥ २ ॥
ततश्च राजप्रकृतीः समग्राः प्रेक्ष्य धर्मवित् ।
इदं पुरोहितो वाक्यं भरतं प्रत्यभाषत ॥ ३ ॥
तात राजा दशरथः स्वर्गतो धर्ममाचरन् ।
धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ४ ॥
रामस्तथा सत्यधृतिः सतां धर्ममनुस्मरन् ।
नाजहात् पितुरादेशं लक्ष्मीं शीतांशुमानिव ॥ ५ ॥
पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकं ।
तद्भुङ्क्ष्व मुदितामात्यमभिषेकमवाप्नुहि ॥ ६ ॥
उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केरलाः ।
दण्डधाराश्च सामुद्रा रत्नान्युपहरन्तु ते ॥ ७ ॥
तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ।
जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ॥ ८ ॥
स वाष्पकलया वाचा कलहंसस्वरो युवा ।
निजगाद सभामध्ये जगर्हे च पुरोहितं ॥ ९ ॥

चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः ।
धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ १० ॥
कथं दशरथाज्जातो भवेद्राज्यापहारकः ।
राज्यं चाहं च रामस्य धर्म्यं वक्तुमिहार्हसि ॥ ११ ॥
ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १२ ॥
अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि ।
इक्ष्वाकूणां कुले जातो भवेयं कुलपांसनः ॥ १३ ॥
यन्मे मात्रा कृतं पापं नाहं तदभिरोचये ।
इहस्थोऽहं वनस्थं तं नमस्यामि कृताञ्जलिः ॥ १४ ॥
राममेवानुगच्छामि स राजा द्विपदां वरः ।
त्रयाणामपि लोकानां राघवो राज्यमर्हति ॥ १५ ॥
यदि त्वार्यं न शक्नोमि विनिवर्तयितुं वनात् ।
अहं तत्रैव वत्स्यामि यथासौ लक्ष्मणस्तथा ॥ १६ ॥
अयोध्यायामहं वस्तुं नोत्सहे भ्रातरं विना ।
सर्वश्रेष्ठगुणं रामं ज्येष्ठं कमललोचनं ॥ १७ ॥
पित्रा भुक्ता नृपश्रीर्हि दायाद्यं तस्य धीमतः ।
नाभिपत्तुं मया शक्या सावित्री वृषलैरिव ॥ १८ ॥
पितर्युपरते तस्मिँल्लोकनाथे महात्मनि ।
शरणं च गतिश्चैव ज्येष्ठो भ्राता पितेव मे ॥ १९ ॥

तं निवर्तयितुं बुद्धिर्वनवासात् कृता मया ।
न केनचिदियं शक्या प्रत्यक्षं वो ब्रवीम्यहं ॥ २० ॥
तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः ।
हर्षान्मुमुचुरश्रूणि रामे निहितचेतसः ॥ २१ ॥
ततः सभायां सचिवाः सोपाध्याया विचुक्रुशुः ।
साधु साध्विति संहृष्टाः शंसन्तो भरतं गुणैः ॥ २२ ॥
वशिष्ठस्त्वब्रवीद्धृष्टो भरतं बाष्पगद्गदः ।
इदं परिषदो मध्ये परया स्वरसंपदा ॥ २३ ॥
शशाङ्कसदृशं वृत्तमनाश्चर्यमिदं त्वयि ।
पित्रा दशरथेनेह धर्मज्ञेन महात्मना ॥ २४ ॥
अभिज्ञातोऽसि शूरेण राज्ञा दानवयोधिना ।
यस्त्वं वनगतं रामं निवर्तयितुमिच्छसि ॥ २५ ॥
अभिज्ञानामि रामस्य दृढं गुणवतो गुणान् ।
धन्याः स्म स च धर्मात्मा धन्यो यस्यासि बान्धवः ॥ २६ ॥
ईदृशा हि महात्मानो यत्र स्युः प्रियबान्धवाः ।
देशे किमिव तत्र स्याद्दुर्लभं वीतकल्मषे ॥ २७ ॥
त्वया ह्यपत्येन गुणैः कृतात्मना गतो दिवं भूमिपतिः प्रतिष्ठितः ।
सभा समग्रा परितुष्यते त्वियं यदुद्यतो रामनिवर्तने ह्यसि ॥ २८ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतप्रशंसा नाम
अष्टाशीतितमः सर्गः ॥

# अयोध्याकाण्डं

## LXXXIX.

सर्वोपायान् प्रयोक्ष्ये ऽहं विनिवर्तयितुं गुरुं ।
समक्षमार्यमिश्राणामेष प्रतिशृणोमि वः ॥ १ ॥
एवमुक्त्वा स धर्मात्मा भरतो भ्रातृवत्सलः ।
समीपस्थं तदा सूतं भूय एवाब्रवीद्वचः ॥ २ ॥
तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात् ।
यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥ ३ ॥
एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना ।
प्रहृष्टः संदिदेशाथ यथा संदिष्टमेव तत् ॥ ४ ॥
ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षप्रचोदिताः ।
श्रुत्वा यात्रां समाज्ञप्तां काकुत्स्थविनिवर्तने ॥ ५ ॥
ततो योधाङ्गनाः सर्वा भर्तॄन् स्वान् स्वान् गृहे गृहे ।
यात्रागममनुज्ञायात्वरयन् गमनं प्रति ॥ ६ ॥
ते हयैर्गोरथैः शीघ्रं स्यन्दनैश्च मनोहरैः ।
सह योधैर्बलाध्यक्षा बलं सज्जमवेदयन् ॥ ७ ॥
सज्जं तु तद्बलं ज्ञात्वा भरतो गुरुसंनिधौ ।
रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ ८ ॥
ततः सुमन्त्रस्तामाज्ञां श्रुत्वा शीघ्रपराक्रमः ।
रथं गृहीत्वा प्रययौ युक्तं परमवाजिभिः ॥ ९ ॥

स राघवः सत्यधृतिः प्रतापवान्
बलस्य मुख्यं च सुहृज्जनं च ।
गुरुं महारण्यगतं यशस्विनं
प्रसादयिष्यन् भरतोऽब्रवीत् तदा ॥ १० ॥
तूर्णं समुत्थाय सुमन्त्र गच्छ
योगं समास्थापय मे बलानां ।
आनेतुमिच्छामि गुरुं वनस्थं
प्रसाद्य रामं जगतो हिताय ॥ ११ ॥
स सूतपुत्रो भरतेन सम्यग्
आज्ञापितः संपरिपूर्णकामः ।
शशास सर्वान् प्रकृतिप्रधानान्
बलस्य मुख्यांश्च सुहृज्जनांश्च ॥ १२ ॥
काले समुत्थाय ततः कुलीना
राजन्यवैश्या नगरप्रधानाः ।
अयोजयन्नुष्ट्रखरान् समन्तान्
मत्तांश्च नागान् बहुलान् हयांश्च ॥ १३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सेनाप्रस्थापनं
नाम एकोननवतितमः सर्गः ॥

# अयोध्याकाण्डं

## XC.

ततः श्वेतैर्हयैर्युक्तमास्थाय स्यन्दनोत्तमं ।
प्रययौ भरतः श्रीमान् रामदर्शनकाङ्क्षया ॥ १ ॥
अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोगमाः ।
अधिरुह्य हयैर्युक्तान् रथान् सूर्यरथोपमान् ॥ २ ॥
दश नागसहस्राणि कल्पितानि यथाविधि ।
अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनं ॥ ३ ॥
षष्टी रथसहस्राणि धन्विनां सायुधानि वै ।
अन्वयुर्भरतं यान्तं राजपुत्रं महाबलं ॥ ४ ॥
शतं चाश्वसहस्राणि समारूढास्तु राघवं ।
अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनं ॥ ५ ॥
कैकेयी च सुमित्रा च कौशल्या च यशस्विनी ।
रामानयनसंहृष्टा ययुर्यानैः प्रभास्वरैः ॥ ६ ॥
प्रययौ चार्यसंघातो रामं द्रष्टुं सलक्ष्मणं ।
तस्यैवेष्टाः कथाः सर्वे कुर्वन्तो हृष्टमानसाः ॥ ७ ॥
मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतं ।
द्रक्ष्यामस्तं कदा रामं जगतः शोकनाशनं । ॥ ८ ॥
दृष्ट एव स नः शोकं नाशयिष्यति राघवः ।
तमः कृत्स्नस्य लोकस्य समुद्यन्निव भास्करः ॥ ९ ॥

इत्येवं कथयन्तस्ते रामं द्रष्टुं सलक्ष्मणं ।
परिधन्वन्तश्चान्योन्यं ययुर्नरगणास्तदा ॥ १० ॥
पुराच्च निर्ययुः सर्वे समवायेन नैगमाः ।
रामदर्शनसंहृष्टाः सर्वाः प्रकृतयस्तथा ॥ ११ ॥
मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः ।
यन्त्रकर्मकृतश्चैव तथैवास्त्रोपजीविनः ॥ १२ ॥
मायूरिकास्तैत्तिरिकाश्छेदका भेदकाश्च ये ।
दन्तकाराः सुधाकारास्तथा गन्धोपजीविनः ॥ १३ ॥
स्वर्णकाराश्च प्रख्यातास्तथा कनकधारकाः ।
स्नापकाच्छादका वैद्याः शौण्डिका धूपिकास्तथा ॥ १४ ॥
रजकास्तन्तुवायाश्च ये च रङ्गोपजीविनः ।
ये चाभिष्टवकाः केचित् सूतमागधवन्दिनः ॥ १५ ॥
वरुटा वेत्रकाराश्च गान्धिकाः पानिकास्तथा ।
प्रावारिकाः सूत्रकारास्तथा शिल्पोपजीविनः ॥ १६ ॥
हिरण्यकाराः प्रख्यातास्तथा वृक्षुपजीविनः ।
प्राबालिकाः शौकरिकास्तथा मत्स्योपजीविनः ॥ १७ ॥
मूलवापाः कांस्यकाराश्चित्रकाराश्च शोभनाः ।
धान्यविक्रायकाश्चैव पण्यविक्रयिणस्तथा ॥ १८ ॥
फलोपजीविनः सर्वे सर्वे पुष्पोपजीविनः ।
लेपकाराः स्थपतयस्तक्षाणः कारयन्त्रिकाः ॥ १९ ॥

निवापकास्तथा सर्वे इष्टकाकारकास्तथा ।
दधिमोदककाराश्च मालाकाराश्च शोभनाः ॥ २० ॥
चाङ्गेरिकाविक्रयिणास्तथा मांसोपजीविनः ।
पट्टिकावापकाश्चैव तथा चूर्णोपजीविनः ॥ २१ ॥
कार्पासिका धनुष्काराः सूत्रविक्रयिणास्तथा ।
शस्त्रकर्मकृतश्चैव काण्डकारास्तथैव च ॥ २२ ॥
ताम्बूलिकास्तथा श्रेष्ठा ये च चित्रं भजन्ति वै ।
प्रख्याताश्चर्मकाराश्च लोहकारास्तथैव च ॥ २३ ॥
शलाकाशल्यकर्तारो विषघाताश्च शोभनाः ।
भूतग्रहविधिज्ञाश्च बालानां च चिकित्सकाः ॥ २४ ॥
आरकूटकृतश्चैव ताम्रकुटास्तथैव च ।
स्वस्तिकाराः केशकारास्तथा भक्तोपसाधकाः ॥ २५ ॥
भृष्टकाराः शक्तुकारास्तथा पाडविकाश्च ये ।
खण्डकारास्तथा मुख्यास्तथा बाणिजकाश्च ये ॥ २६ ॥
काचकाराश्छत्त्रकारास्तथा वेधकशोधकाः ।
खण्डसंस्थापकाश्चैव तथा ताम्रोपजीविनः ॥ २७ ॥
श्रेणीमहत्तराश्चैव ग्रामघोषमहत्तराः ।
शैलूषाश्च सह स्त्रीभिर्धूर्तवैतंसिकास्तथा ॥ २८ ॥
सश्रेणीनिगमं सर्वं नगरं संकुलीकृतं ।
आतुरं वृद्धबालं च वर्जयित्वा पुरे जनं ॥ २९ ॥

समाहिता वेदविदो ब्राह्मणाः श्रुतसंमताः ।
गोरथैर्भरतं यान्तमनुजग्मुः सहस्रशः ॥ ३० ॥
सुवेशाः शुद्धवसनाः सन्तो मृष्टानुलेपनाः ।
सर्वे ते विविधैर्यानैर्यान्तं भरतमन्वयुः ॥ ३१ ॥
हृष्टा प्रमुदिता सेना सान्वयात् केकयीसुतं ।
शास्त्रदृष्टेन मार्गेण वृहस्पतिनयेन च ॥ ३२ ॥
कुशलैः संमतैर्योधैः शतशः परिवारिता ।
अमात्यैर्भृत्यमुख्यैश्च नैगमैश्च समाकुला ॥ ३३ ॥
वशिष्ठेन पुरोगेन तथान्यैर्द्विजसत्तमैः ।
अतिष्ठत् सा तदा सेना गङ्गामासाद्य वै नदीं ॥ ३४ ॥
निरीक्ष्य तु स्थितां सेनां गङ्गां चैव बहूदकां ।
भरतः सचिवान् सर्वानब्रवीद्वाक्यकोविदः ॥ ३५ ॥
निवेशयत मे सेनामभिप्रायेण सर्वशः ।
विश्रान्ताः संतरिष्यामो गङ्गामेतां महानदीं ॥ ३६ ॥
अस्यां तु तावदिच्छामि स्वर्गतस्य महीपतेः ।
ऊर्ध्वदेहनिमित्तार्थमहं दातुं जलाञ्जलिं ॥ ३७ ॥
तस्यैवं ब्रुवतोऽमात्यास्तथेत्युक्त्वा समाहिताः ।
न्यवेशयन्त छन्देन स्वेन स्वेन पृथक् पृथक् ॥ ३८ ॥
निवेश्य गङ्गामनु तां महाचमूं
यथाविधानं परिवर्हशोभितां ।

उवास वासं भरतो महामनाः
प्रचिन्तयंस्तस्य निवर्तने तदा ॥ ३१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतानुयानं नाम
नवतितमः सर्गः ॥

XCI.

ततो निविष्टां ध्वजिनीं गङ्गामासाद्य तां नदीं ।
निषादराजो दृष्ट्वैव ज्ञातीन् स्वानिदमब्रवीत् ॥ १ ॥
इयं सेना सुमहती समन्तात् परिदृश्यते ।
अन्तमस्या न पश्यामि विस्तृतायाः समन्ततः ॥ २ ॥
इक्ष्वाकूणामियं सेना संशयो नात्र कश्चन ।
एष संदृश्यते दूरात् कोविदारध्वजो रथे ॥ ३ ॥
अहीष्यति हस्तिनः किं मृगयां नु चरिष्यति ।
हनिष्यति न खल्वस्मान् सैन्यं ह्येतदमानुषं ॥ ४ ॥
अहो दाशरथिं रामं पित्रा प्रव्राजितं वने ।
सामात्यो राज्यलोभेन भरतो हन्तुमुद्यतः ॥ ५ ॥
समर्था राज्यलक्ष्मीर्हि सुश्लिष्टभ्रातृसौहृदं ।
क्षणेन विद्रावयितुं सर्वथास्मि विशङ्कितः ॥ ६ ॥
मम दाशरथी रामो भर्ता बन्धुः सखा गुरुः ।
अहं तस्य हितार्थाय गङ्गामन्वाश्रितो नदीं ॥ ७ ॥
मन्त्रयामास स ततो मन्त्रज्ञैः सह मन्त्रिभिः ।
मन्त्रयित्वाब्रवीत् पश्चात् सर्वाननुचरांस्तदा ॥ ८ ॥
सुसंनद्धाः सधनुषः सर्व एव समाहिताः ।
व्यूह्य सैन्यं नदीं व्याप्य मम तिष्ठत शासनात् ॥ ९ ॥

नौशतानां च पञ्चानामेकैकस्यां शतं शतं ।
संनद्धानां सदाशूनां तिष्ठन्त्यूद्यतधन्वनां ॥१०॥
यदि यास्यति संदुष्टा रामस्याद्भुतकर्मणः ।
नेयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥११॥
रामावमाननकृतं क्रोधमद्य हृदि स्थितं ।
सेनाघाते विमोक्ष्यामि निर्मोकं पन्नगो यथा ॥१२॥
रामं वने वासयता कैकेयीवशगेन यत् ।
कृतं पापं नरेन्द्रेण तत् प्रमोक्ष्यामि संयुगे ॥१३॥
अद्य मे शरसंघाता मत्कार्मुकपरिच्युताः ।
निपतिष्यन्ति गात्रेषु नराश्वरथदन्तिनां ॥१४॥
वाजिनां वर्मिताङ्गानां क्रुद्धस्य मम सायकाः ।
अद्य भित्त्वा प्रवेक्ष्यन्ति शरीराणि मयेरिताः ॥१५॥
हतयोधां भग्नरथां विध्वस्तध्वजनायकां ।
सेनामद्य करिष्यामि क्रव्यादखगभोजनां ॥१६॥
निविष्टा यत्र सैनैषा सवाजिरथकुञ्जरा ।
तत्र भूमिं करिष्यामि शरैः शोणितकर्दमां ॥१७॥
अद्याहं तोषयिष्यामि गृध्रगोमायुवायसान् ।
सैनिकानां निरस्तानां रुधिरैः क्षतजाशिनः ॥१८॥
अद्य कार्यं करिष्यामि रामस्यार्थे सुदुष्करं ।
स्वपस्ये वाहं विनिहतः स पांशुकलिलः क्षितौ ॥१९॥

निवारयिष्याम्यथ वाहिनीमिमाम्
  अहं व्रजन्तीं बहुवाजिकुञ्जरां ।
गुणैर्गृहीतो बहुभिर्महात्मनः
  प्रियस्य रामस्य हितं चिकीर्षयन् ॥२०॥

इत्यार्षे रामायणे अयोध्याकाण्डे गुहकोपो नाम
एकनवतितमः सर्गः ॥

# अयोध्याकाण्डं

## XCII.

अथोपायनमादाय मत्स्यान् मांसं मधूनि च ।
अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १ ॥
तमायान्तमभिप्रेक्ष्य सूतपुत्रः प्रतापवान् ।
भरतायाचचक्षेऽथ विनयज्ञो विनीतवत् ॥ २ ॥
वृतो ज्ञातिसहस्रेण गुहस्त्वां प्रत्युपस्थितः ।
कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ॥ ३ ॥
तस्मादसौ पश्यतु त्वां संप्रीत्यर्थमुपागतः ।
असंशयमयं वेत्ति यत्र तौ रामलक्ष्मणौ ॥ ४ ॥
एतत् तु वचनं श्रुत्वा सुमन्त्राद्भरतस्तदा ।
उवाच सारथिं धीमान् गुहः पश्यतु मामिति ॥ ५ ॥
लब्धानुज्ञः संप्रहृष्टो ज्ञातिभिः परिवारितः ।
आगत्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥ ६ ॥
निष्कूट इव देशोऽयमसंकीर्णश्च राघव ।
इदं च ते दासगृहं स्वके दासगृहे वस ॥ ७ ॥
अस्ति मूलफलं चैव निषादैः समुपार्जितं ।
आर्द्रं च मांसं शुष्कं च भक्ष्यं चोच्चावचं बहु ॥ ८ ॥
आशंसे त्वां जितामित्रं सौहार्दादहमीदृशं ।
अर्चितो विविधैः कामैः श्वः प्रभाते गमिष्यसि ॥ ९ ॥

एवमुक्तस्तु भरतो निषादाधिपतिं गुहं ।
प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितं ॥ १० ॥
सर्वे तु खलु मे कामाः कृता मम गुरोः सखे ।
यो मे त्वमीदृशीं सेनां समभ्यर्चितुमर्हसि ॥ ११ ॥
इत्युक्त्वा स महातेजा गुहं वचनमीदृशं ।
अब्रवीद्भरतः श्रीमान् निषादाधिपतिं पुनः ॥ १२ ॥
कतरेण गमिष्यामो भरद्वाजाश्रमं गुह ।
गहनोऽयं भृशं देशो महानूपो दुरन्वयः ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
अब्रवीत् प्राञ्जलिर्वाक्यं गुहो गहनगोचरः ॥ १४ ॥
दासास्त्वानुगमिष्यन्ति धन्विनः सुसमाहिताः ।
अहं चानुगमिष्यामि राजपुत्र महाबल ॥ १५ ॥
कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ।
अतिभीमा हि सेनेयं शङ्कां जनयतीव मे ॥ १६ ॥
तमेवमभिजल्पन्तमाकाशमिव निर्मलः ।
भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥ १७ ॥
मा भूत् स कालो धिङ्कष्टं न मां शङ्कितुमर्हसि ।
राघवार्थ स हि भ्राता ज्येष्ठः पितृसमो मम ॥ १८ ॥
उपावर्तयितुं यामि काकुत्स्थं वनवासिनं ।
बुद्धिरन्या न ते कार्या सत्यमेतद्ब्रवीम्यहं ॥ १९ ॥

स तु प्रहृष्टवदनः श्रुत्वा भरतभाषितं ।
पुनरेवाब्रवीद्वाक्यं भरतं प्रतिहर्षणं ॥ २० ॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥ २१ ॥
शाश्वती खलु ते कीर्तिर्लोकाननुगमिष्यति ।
यस्त्वं कृच्छ्रागतं रामं प्रत्यानयितुमिच्छसि ॥ २२ ॥
एवं संभाषमाणस्य गुहस्य भरतेन तु ।
बभौ नष्टप्रभः सूर्यो रजनी चाभ्यवर्तत ॥ २३ ॥
संनिवेश्य ततः सेनां गुहेन परितोषितः ।
शत्रुघ्नेन सह श्रीमान् शयनं विवशोऽगमत् ॥ २४ ॥
तत्र चिन्तापरीतः सन् न निद्रामभ्यपद्यत ।
रामप्रसादमाकाङ्क्षंस्तात् तद्वत् विचिन्तयन् ॥ २५ ॥
अन्तर्दाहेन घोरेण दह्यमानो दिवां निशं ।
दावाग्निपरिसंतप्तो महानाग इव श्वसन् ॥ २६ ॥
सुस्राव सर्वगात्रेभ्यः स्वेदं शोकाग्निसंभवं ।
हिमवानिव शैलेन्द्रो बहुधातुपरिस्रवः ॥ २७ ॥
गुहेन सार्धं तु समागतस्तदा महानुभावो भरतः प्रतापवान् ।
सुखोपितं तं पुनरब्रवीत् तदा गुहः समभ्यागतवत्सलः शुचिः ॥ २८ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे गुहसमागमो नाम
द्विनवतितमः सर्गः ॥

## XCIII.

स तु वाष्पसमाविष्टो गुहो ज्ञातिगणावृतः ।
भरतं वाक्यकुशलो बद्धाञ्जलिरभाषत ॥ १ ॥
इक्ष्वाकुवंशसदृशं व्याहृतं भरत त्वया ।
अनुरूपं गुणानां च श्रुतेश्च यशसश्च ते ॥ २ ॥
यस्य त्वं वृत्तशौटीरो गुणज्ञो बन्धुरीदृशः ।
धन्यश्चासौ मम सखा राघवः प्रियबान्धवः ॥ ३ ॥
यस्त्वं लब्धां श्रियं त्यक्त्वा निर्गुणामिव योषितं ।
वनादुपावर्तयितुं यासि भ्रातरमग्रजं ॥ ४ ॥
ईदृशं दुर्लभं लोके यादृशं त्वयि सौहृदं ।
राघवं प्रति धर्मज्ञ यत्र सत्यं प्रतिष्ठितं ॥ ५ ॥
यः पितुर्वचनं कुर्वन् जनन्याश्च तव प्रभो ।
सभार्यः सह भ्रात्रा च प्रविष्टो विजनं वनं ॥ ६ ॥
तस्य विक्रमयुक्तस्य शौर्ययुक्तस्य धीमतः ।
अनुरूपो गुणानां त्वं भ्राता राजीवलोचनः ॥ ७ ॥
एवमुक्तस्तु भरतो राजपुत्रो महायशाः ।
प्रत्युवाच गुहं धीमान् सान्त्वपूर्वमिदं वचः ॥ ८ ॥
अनेनैवाभिधानेन स्निग्धेन च हितेन च ।
पूजितश्चार्चितश्चास्मि परितुष्टश्च ते गुह ॥ ९ ॥

किन्त्वहं श्रोतुमिच्छामि वक्तव्यं खलु नानृतं ।
कस्मिन् देशे वनं गच्छन्नुषितो मम बान्धवः ॥१०॥
सुखानामुचितो नित्यमसुखानामकोविदः ।
रामो राजीवताम्राक्षो मैथिल्या सह सीतया ॥११॥
भ्रातृस्नेहादनुगतः पृष्ठतो यः स राघवं ।
सौमित्रिर्लक्ष्मणो नाम कच्चित् संपरिवृत्तवान् ॥१२॥
क्व रामः शयितो रात्रौ क्व स्थितः क्व विलम्बितः ।
सीतया सह धर्मात्मा क्व वा चासीन्नरर्षभः ॥१३॥
काः कथाः कृतवान् वीरः किमासीत् तस्य भोजनं ।
मत्पूर्वः शयितः कस्मिन् देशे क्षितिधरोपमः ॥१४॥
अस्मिन् किलेङ्गुदीवृक्षे भ्राता मे सह सीतया ।
सुप्तवान् रजनीमेकां शरीरेण न चक्षुषा ॥१५॥
त्वं किलास्याविदूरस्थो धनुष्पाणिः सलक्ष्मणः ।
तां निशां जागरितवान् सूतश्च रथसारथिः ॥१६॥
एतदाचक्ष्व मे सर्वं यथावत् परिपृच्छतः ।
तस्य देवप्रभावस्य राघवस्य विचेष्टितं ॥१७॥
एतत् तु वचनं श्रुत्वा भरतस्य महात्मनः ।
अब्रवीत् प्राञ्जलिर्वाक्यं गुहो गहनगोचरः ॥१८॥

इत्यार्षे रामायणे अयोध्याकाण्डे गुहानुप्रश्नो नाम
त्रिनवतितमः सर्गः ॥

## XCIV.

आचचक्षेऽथ सद्भावं ततस्तस्य महात्मनः ।
भरतस्याप्रमेयस्य गुहः स वनगोचरः ॥ १ ॥
शक्रचापनिभं चापं प्रगृह्य सुमहाभुजः ।
जजागार स तां रात्रिं लक्ष्मणो भ्रातृवत्सलः ॥ २ ॥
तं जाग्रतमदम्भेन वरचापेषुधारिणं ।
भ्रातुर्गुप्त्यर्थमत्यर्थमहं लक्ष्मणमब्रुवं ॥ ३ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ।
पर्याश्वसिहि सौम्यास्यां सुखं राघवनन्दन ॥ ४ ॥
उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः ।
गुप्त्यर्थं जागरिष्यामि रामस्याहमिमां निशां ॥ ५ ॥
न हि रामात् प्रियतरो ममास्ति भुवि कश्चन ।
मोत्सुको भूर्ब्रवीम्येतदहं सत्यं तवाग्रतः ॥ ६ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिं च विपुलामर्थकामौ न केवलौ ॥ ७ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिर्वृतः ॥ ८ ॥
न हि मेऽविदितं किञ्चिद्वनेऽस्मिंश्चरतः सदा ।
चतुरङ्गं ह्यपि बलं सुमहत् प्रसहाम्यहं ॥ ९ ॥

एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना ।
अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ १० ॥
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ११ ॥
यो न देवासुरैः शक्यः सोढुं युधि समागतैः ।
तं पश्य गुह संविष्टं तृणेषु सह सीतया ॥ १२ ॥
महता तपसा लब्धो विविधैश्च पराक्रमैः ।
एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ १३ ॥
अस्मिन् प्रव्राजिते राजा न चिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेषा भविष्यति ॥ १४ ॥
विनद्य सुमहानादं श्रमेण विरताः स्त्रियः ।
निर्घोषनिनदं मन्ये नूनं राजनिवेशने ॥ १५ ॥
कौशल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि ते सर्वे जीवेयुः शर्वरीमिमां ॥ १६ ॥
जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ।
एतद्दुःखात् तु कौशल्या वीरसूर्न भविष्यति ॥ १७ ॥
सिद्धार्थः पितरं वृद्धं तस्मिन् काले विशेषतः ।
प्रेतकार्येषु सर्वेषु सत्करिष्यति राघवः ॥ १८ ॥
रम्यचत्वरसंस्थानां सुविभक्तमहापथां ।
हर्म्यप्रासादसंबाधां तूर्यनादविनादितां ॥ १९ ॥

रथाश्वगजसंकीर्णां सर्वरत्नोपशोभितां ।
सर्वकल्याणसंपन्नां हृष्टपुष्टजनाकुलां ॥ २० ॥
आरामोद्यानसंपूर्णां समाजोत्सवशालिनीं ।
सुखिनो विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिनो वयं ।
निवृत्ते समये तस्मिन्नयोध्यां प्रविशेमहि ॥ २२ ॥
परिदेवयमानस्य तस्यैवं सुमहात्मनः ।
तिष्ठतो राजपुत्रस्य सा व्यतीयाय शर्वरी ॥ २३ ॥
प्रभातेऽभ्युदिते सूर्ये कारयित्वा जटा उभौ ।
अस्मिन् भागीरथीतीरे सुखं संतारितौ मया ॥ २४ ॥

जटाधरौ तौ कुशचीरवाससौ
महाबलौ कुञ्जरयूथपोपमौ ।
वरेषुचापासिधरौ परंतपौ
व्यपेक्षमाणौ सह सीतया गतौ ॥ २५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे गुहवाक्यं नाम
चतुर्नवतितमः सर्गः ॥

# अयोध्याकाण्डं

## XCV.

गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियं ।
जगाम मोहं तत्रैव यत्र तच्छ्रुतवान् वचः ॥ १ ॥
स विह्वलितसर्वाङ्गो विवृत्तविपुलेक्षणः ।
पपात सहसा भूमौ मूलभ्रष्ट इव द्रुमः ॥ २ ॥
सुकुमारो महासत्त्वः सिंहस्कन्धो महाभुजः ।
पुण्डरीकपलाशाक्षस्तरुणः प्रियदर्शनः ॥ ३ ॥
भरतं मोहितं दृष्ट्वा विषण्णवदनो गुहः ।
बभूव व्यथितस्तत्र भूमिकम्प इव द्रुमः ॥ ४ ॥
तदवस्थं तु भरतं शत्रुघ्नो नष्टचेतसं ।
परिष्वज्य रुरोदोच्चैर्विसंज्ञः शोककर्षितः ॥ ५ ॥
ततः सर्वाः समापेतुर्मातरो भरतस्य ताः ।
उपवासकृशा दीना भर्तृव्यसनकर्षिताः ॥ ६ ॥
तास्तं निपतितं दृष्ट्वा भूमौ सुप्तं प्रियं सुतं ।
संभ्रान्तहृदयास्तत्र रुदत्यः पर्यवारयन् ॥ ७ ॥
कौशल्या त्वभिसृत्यैनं व्यथितं स्नेहविह्वला ।
संस्पृश्याश्वासयामास सुखस्पर्शेन पाणिना ॥ ८ ॥
यथावद्वत्सला सा तमुपागृह्य तपस्विनी ।
परिपप्रच्छ रुदती भरतं शोककर्षिता ॥ ९ ॥

कच्चिद्व्याधिर्न ते पुत्र शरीरे संप्रबाधते ।
अस्य राजकुलस्याद्य त्वदधीनं हि जीवितं ॥ १० ॥
त्वां दृष्ट्वा पुत्र जीवामि रामे सभ्रातृके गते ।
त्वमिदानीं कुले नाथो वृत्ते दशरथे नृपे ॥ ११ ॥
कच्चिन्न लक्ष्मणात् पुत्र श्रुतं ते किञ्चिदप्रियं ।
पुत्राद्वाप्येकपुत्रायाः सहभार्याद्वनाश्रयात् ॥ १२ ॥
एवमुक्त्वा जलक्लिन्नैर्वस्त्रैराश्वासयत् तदा ।
कौशल्या भरतं दीनमिष्टपुत्रमिवात्मजं ॥ १३ ॥
स मुहूर्तात् समाश्वस्तो रुदन्नेव महायशाः ।
कौशल्यां प्रतिगृह्याथ गुहं वचनमब्रवीत् ॥ १४ ॥
गुह पृच्छामि भूयस्त्वां वक्तव्यं खलु नानृतं ।
राघवः सह वैदेह्या तदा किमुपयुक्तवान् ॥ १५ ॥
लक्ष्मणो वा महातेजाः कुललक्ष्मीविवर्धनः ।
अनियुक्तोऽनुयातो यो वनवासाय राघवं ॥ १६ ॥
सोऽब्रवीद्भरतं पृष्टो निषादाधिपतिर्गुहः ।
श्रूयतामिति वाक्यज्ञो गृहीत्वा वाष्पमागतं ॥ १७ ॥
अन्नमुच्चावचं भक्ष्यं लेह्यं मूलफलानि च ।
रामायाभ्यवहारार्थं बहून्युपहृतानि मे ॥ १८ ॥
तत् प्रीत्या च मयानीतं प्रणयेन च राघवः ।
सर्वं न प्रतिजग्राह क्षात्रं वृत्तमनुस्मरन् ॥ १९ ॥

आह च स्म स धर्मात्मा व्रीडितं मामधोमुखं ।
अस्माभिर्न प्रतिग्राह्यं देयमेव तु सर्वशः ॥ २० ॥
चापं चोद्यम्य योद्धव्यमेतत् क्षत्रभृतां वरं ।
लक्ष्मणेनाहृतं वारि स्वयमेव महात्मना ॥ २१ ॥
तेनोपवासं काकुत्स्थश्चकार सह सीतया ।
ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत् तदा ॥ २२ ॥
उपवासस्थितस्यैवमथ संध्याभ्यवर्तत ।
ततस्त्वसौ यथान्यायं रामो धर्मभृतां वरः ॥ २३ ॥
उपास्य संध्यां तत्रैव वाग्यतः सुसमाहितः ।
सौमित्रिस्तु ततः पश्चाद्रामस्य संस्तरं शुभं ॥ २४ ॥
चकार दर्भानानीय पर्णानि च समाहितः ।
तस्मिन्नुपाविशद्रामः संस्तरे सह सीतया ॥ २५ ॥
प्रक्षाल्य च ततः पादावपचक्राम लक्ष्मणः ।
तदेतदिङ्गुदीमूलमेतदेव च तत् तृणं ।
यस्मिन् रामश्च सीता च तां रात्रिं शयितावुभौ ॥ २६ ॥
नियम्य पृष्ठे तु तदाङ्गुलित्रवान् महेषुपूर्णाविषुधी परंतपः ।
धनुश्च सज्यं परिगृह्य लक्ष्मणो निशामतिष्ठत् परिपालयंस्तदा ।२७।
ततोऽहमप्युत्तमचापवाणधृक् सहाभवं तत्र च यत्र लक्ष्मणः ।
अतन्द्रितो ज्ञातिभिरात्तकार्मुकैर्महेन्द्रकल्पं परिवारयंस्तदा ॥ २८ ॥
गुहवाक्यं नाम पञ्चनवतितमः सर्गः ॥

## XCVI.

श्रुत्वा तु भरतो वाक्यं निपुणं सह मन्त्रिभिः ।
इङ्गुदीमूलमागत्य भ्रातुः शय्यामवैक्षत ॥ १ ॥
वीक्षमाणस्तु तां शय्यां क्रमेण तृणसंस्तृतां ।
बभूव भरतो दुःखाद्बाष्पविप्लुतलोचनः ॥ २ ॥
जननीश्चाब्रवीत् सर्वास्तेनेह सुमहात्मना ।
शर्वरी गमिता भूमाविदं च परिवर्तितं ॥ ३ ॥
महाभागः कुलीनेन राजराजेन धीमता ।
कथं दशरथेनात्मा जातो भूमौ स सुप्तवान् ॥ ४ ॥
अजिनोत्तरसंस्तीर्णे वरास्तरणभूषिते ।
शयित्वा पुरुषव्याघ्रः कथं शेते स्म भूतले ॥ ५ ॥
पुष्पसंचयचित्रेषु चन्दनागुरुगन्धिषु ।
पाण्डुराभ्रप्रकाशेषु कोकिलाभिरुतेषु च ॥ ६ ॥
प्रासादाग्रविमानेषु उषित्वा तेषु सर्वशः ।
हेमराजतभौमेषु सुप्त्वा भूमौ स सुप्तवान् ॥ ७ ॥
गीतवादित्रनिर्घोषैर्वेणुवादननिस्वनैः ।
मृदङ्गशङ्खशब्दैश्च सततं प्रतिबोधितः ॥ ८ ॥
वन्दिभिर्वन्दितः काले बहुभिः सूतमागधैः ।
गाथाभिरनुरूपाभिः स्तुतिभिश्च परंतपः ॥ ९ ॥

सर्वश्रेष्ठकुले जातः सर्वलोकसुखावहः ।
सर्वलोकप्रियस्त्यक्त्वा राजश्रियमनुत्तमां ॥ १० ॥
कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः ।
व्यूढोरस्को महाबाहुः सुप्तवान् भुवि तादृशः ॥ ११ ॥
अश्रद्धेयमिदं लोके न सम्यक् प्रतिभाति मे ।
मुह्यते खलु मे भावः स्वप्नोऽयमिति मे मतिः ॥ १२ ॥
नूनं न दैवतं किञ्चित् कालतो बलवत्तरं ।
यत्र दाशरथी रामो भूमावेवमशेत सः ॥ १३ ॥
इयं शय्या मम भ्रातुरिदं विपरिवर्तनं ।
स्थण्डिले कथयत्येतद्गात्रैर्विमृदितं तृणं ॥ १४ ॥
विदेहराजस्य सुता इहैव प्रियदर्शना ।
दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ १५ ॥
मन्ये साभरणा सुप्ता यथा स्वभवने पुरा ।
तत्र तत्र हि दृश्यन्ते शीर्णाः कनकबिन्दवः ॥ १६ ॥
मन्ये भर्तृसुखेच्छैका येन सीता तपस्विनी ।
सुकुमारी सती दुःखं वनमभ्येति मैथिली ॥ १७ ॥
उत्तरीयमिहासक्तं व्यक्तं वस्त्रवरं तया ।
तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः ॥ १८ ॥
सिद्धार्था खलु वैदेही पतिं यानुगता वने ।
वयं संशयिताः सर्वे विना तेन महात्मना ॥ १९ ॥

अकर्णधारा पृथिवी शून्येव प्रतिभाति मे ।
गते दशरथे स्वर्गं रामे चारण्यमाश्रिते ॥ २० ॥
न च प्रार्थयते कश्चिन्मनसापि वसुंधरां ।
वनेऽपि वसतस्तस्य बाहुवीर्येण पालितां ॥ २१ ॥
शून्यसंवरणारक्षामविचिन्त्यहयद्विपां ।
अपावृतपुरद्वारां राजधानीं पितुर्मम ॥ २२ ॥
अप्रहृष्टां परिक्षूनां विषमस्थामपावृतां ।
शत्रवो नाभिमन्यन्ते भक्ष्यान् विषकृतानिव ॥ २३ ॥
अद्यप्रभृति भूमौ हि स्वप्स्यामि कुशसंस्तरे ।
फलमूलाशनो नित्यं जटाचीराजिनाम्बरः ॥ २४ ॥
इदं कालान्तरं तस्य कृते वत्स्याम्यहं वने ।
तत् प्रतिश्रुतमार्यस्य नैव मिथ्या भविष्यति ॥ २५ ॥
अभिषेक्ष्यामि काकुत्स्थमयोध्यायां यशस्विनं ।
अपि मे देवताः कुर्युरिमं सत्यं मनोरथं ॥ २६ ॥
प्रसाद्यमानः शिरसा मया स्वयं बहुप्रकारं यदि न प्रपत्स्यते ।
ततोऽनुवत्स्यामि चिराय राघवं वने चरन् नार्हति मामुपेक्षितुं।२
ततः प्रवृत्ता रजनी दिनक्षये श्रयन्ति नीडानि खगाः कृतालयाः।
विसर्जितश्चापि गुहः स्वमालयं जगाम दुःखेन सहानुयायिभिः।२

इत्यार्षे रामायणे अयोध्याकाण्डे इङ्गुदीवृत्तं नाम
षण्णवतितमः सर्गः ॥

# अयोध्याकाण्डं

## XCVII.

उषित्वा रजनीमेकां गङ्गातीरे महामनाः ।
भरतः कल्यमुत्थाय शत्रुघ्नमिदमब्रवीत् ॥ १ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे शत्रुघ्न रजनी गता ।
पद्मबोधनमुद्यन्तं पश्य सूर्यं तमोनुदं ॥ २ ॥
शीघ्रमानायय गुहं शृङ्गवेरपुरेश्वरं ।
स हि गङ्गामिमां वीर तारयिष्यति वाहिनीं ॥ ३ ॥
शत्रुघ्नस्त्वब्रवीच्छूरं भ्रातरं प्रियबान्धवं ।
भरतं सोपचाराणामभिज्ञो वचसां प्रभुं ॥ ४ ॥
शोकशून्येन मनसा त्वयि स्वपति राघव ।
जागर्मि नास्ति मे निद्रा तस्यैवार्यस्य चिन्तया ॥ ५ ॥
अपि नाम प्रसादं नः स कुर्यात् पुरुषर्षभः ।
प्रसाद्यमानो भवता मया च सह मन्त्रिभिः ॥ ६ ॥
एवमुक्त्वा तु शत्रुघ्नो भरतस्याज्ञया ततः ।
अब्रवीत् पुरुषं तत्र गुहमानाययेति सः ॥ ७ ॥
इति संभाषमाणस्य शत्रुघ्नस्य महात्मनः ।
अभिगम्याञ्जलिं कृत्वा गुहो वचनमब्रवीत् ॥ ८ ॥
कच्चित् सुखं नदीतीरेऽवात्सीः काकुत्स्थ शर्वरीं ।
कच्चिच्च सहसैन्यस्य सर्वतोऽनामयं तव ॥ ९ ॥

अथवा समुदाचारः प्रयुक्तोऽयं मया तव ।
कुतो हि सुखशय्या ते स्नेहेन परितप्यतः ॥१०॥
भ्रातरं चिन्तयानस्य वृत्तं च जगतीपतिं ।
शारीरमानसैर्दुःखैः स्नेहोऽपि न निवर्तते ॥११॥
तथोक्तो भरतो दीनः प्रत्युवाच गुहं ततः ।
मानयन् समुदाचारं हृदयेन सुदुःखितः ॥१२॥
सुखा नः शर्वरी राजन् पूजिताश्चापि ते वयं ।
गङ्गां तु नौभिर्बह्वीभिर्दासाः संतारयन्तु नः ॥१३॥
ततो गुहः सत्वरितं श्रुत्वैवेश्वरशासनं ।
प्रतिप्रविश्य नगरं स्वज्ञातीनिदमब्रवीत् ॥१४॥
उत्तिष्ठत प्रबुध्यध्वं ज्ञातयो भद्रमस्तु वः ।
नौकाः समुपकर्षध्वं तारयिष्यामि वाहिनीं ॥१५॥
ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् ।
नावां शतानि पञ्चैव समन्तात् समुपानयन् ॥१६॥
काश्चित् स्वस्तिकचिह्नाङ्का महादण्डधरा वराः ।
शोभमानाः पताकिन्यो युक्ता नावः सुसंयुताः ॥१७॥
ततः स्वस्तिकचिह्नाङ्कां पाण्डुकम्बलसंवृतां ।
आनन्दघोषां कल्याणीं गुहो नावमनाययत् ॥१८॥
तामारुरोह भरतः शत्रुघ्नश्च महाबलः ।
कौशल्या च सुमित्रा च याश्चान्या राजयोषितः ॥१९॥

पुरोहितोऽभवत् पूर्वं ये चान्ये ब्राह्मणाः पृथक् ।
अन्तःपुरचरा भृत्यास्तथैव शकटापणाः ॥ २० ॥
आवासमादीपयतां तीर्थानि च विधावतां ।
भाण्डानि चाददानानां घोषस्त्रिदिवमस्पृशत् ॥ २१ ॥
तास्तु संप्रस्थिता नावः शीघ्रं दासैरधिष्ठिताः ।
वहन्त्यस्तं जनं सर्वं पारं जग्मुः समाहिताः ॥ २२ ॥
नारीणां तारिकाः काश्चित् काश्चित् परमवाजिनां ।
काश्चिन्नावो वहन्ति स्म यानं युग्यं महाधनं ॥ २३ ॥
तास्तु गत्वा परं पारमवतार्य च तं जनं ।
निवृत्ताः काण्डचित्राङ्गास्तार्यन्ते दासबन्धुभिः ॥ २४ ॥
सवैजयन्तास्त्र गजा गजारोहप्रचोदिताः ।
तरन्तः संप्रकाशन्ते सध्वजा इव पर्वताः ॥ २५ ॥
नावमारुरुहुः केचित् केचिदारुरुहुः प्लवान् ।
केचित् कुम्भैर्घटैस्तेरुः केचित् तेरुः स्वबाहुभिः ॥ २६ ॥
सा सर्वा ध्वजिनी गङ्गां दासैः संतारिता तदा ।
मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमं ॥ २७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे गङ्गातरणं नाम
सप्तनवतितमः सर्गः ॥

## XCVIII.

संतीर्य भरतो गङ्गां ससेनः सह पत्तिभिः ।
पुरोहितस्यानुमते गुहं वचनमब्रवीत् ॥ १ ॥
कतमेन तु देशेन गन्तव्यं यत्र राघवः ।
गुह मार्गं समाचक्ष्व त्वं सदा वनगोचरः ॥ २ ॥
सोऽब्रवीद्भरतस्यैतद्वचः श्रुत्वा गुहस्तदा ।
अभिज्ञस्तस्य देशस्य यस्मिन् वसति राघवः ॥ ३ ॥
इतः प्रभृति काकुत्स्थ गम्यतां वनमुत्तमं ।
नानापक्षिगणाकीर्णमुपेतं सलिलाशयैः ॥ ४ ॥
कमलप्रतिमाभिश्च सुतीर्थैरल्पकर्दमैः ।
खगपादक्षतैः पर्णैर्निरुद्धं नीलकोमलैः ॥ ५ ॥
वनात् प्राक् क्रोशमात्रं तु प्रयागस्य नरर्षभ ।
तत्रोषित्वा च गन्तव्यं भरद्वाजाश्रमं प्रति ॥ ६ ॥
तत्र गत्वा राजपुत्र मुनिं तमभिवादयेः ।
धर्मज्ञं तपसा सिद्धं त्रिषु लोकेषु विश्रुतं ॥ ७ ॥
तस्मात् त्वमाशीर्वचनं गिरश्च हृदयंगमाः ।
श्रुत्वा यास्यसि संहृष्टो द्रष्टुं भ्रातरमग्रजं ॥ ८ ॥
उषित्वा रजनीं तत्र विभवैस्तेन पूजितः ।
दृष्ट्वा हि मोक्ष्यते न त्वामेकामनुषितं निशां ॥ ९ ॥

ब्रुवाणमेवं तु गुहं भरतः प्रश्रयान्वितः ।
एवमस्त्विति तद्वाक्यं परिषद्येदमब्रवीत् ॥१०॥
गच्छ सौम्य निवर्तस्व समस्तैर्ज्ञातिभिः सह ।
सत्कृतश्चानुयातश्च प्रीतिमानस्मि ते गुणैः ॥११॥
भ्रातुर्मे पूजितं सख्यं त्वया रामस्य धीमतः ।
अनुरागश्च भक्तिश्च सौहृदं च विदर्शितं ॥१२॥
भरतेनाभ्यनुज्ञातो गुहस्तु ज्ञातिभिः सह ।
ययौ संपूज्य भरतं सोपाध्यायपुरोहितं ॥१३॥
ततः प्रतिगते नौभिर्गुहे ज्ञातिगणैः सह ।
जगाम सेनया सार्धं प्रयागं भरतो वनं ॥१४॥
सुमन्त्रं दैशिकं कृत्वा मन्त्रिणं राघवप्रियं ।
मन्त्रकर्मणि च प्राज्ञं देशे काले च कोविदं ॥१५॥
फलाढ्यान् पादपान् पश्यन् पुष्पाढ्यांश्च समन्ततः ।
वल्गुद्विजानां च रुतं शृण्वन् श्रोत्रमनोहरं ॥१६॥
गुणान् रामस्य कथयन् मैथिल्या लक्ष्मणस्य च ।
अगुणांश्चात्मनो मातुः कैकेय्याः समुदाहरन् ॥१७॥
अध्यर्धयोजनं गत्वा ददर्श सुमहद्वनं ।
प्रयागमिति विख्यातं यथा चैत्ररथं वनं ॥१८॥
तत् प्रविश्य वनं चैव सर्वकामफलद्रुमं ।
शोभितं पङ्कजवनैः सुतीर्थबहुपुष्करैः ॥१९॥

अभिगम्य प्रयागं तं देवस्थानमनुत्तमं ।
प्रदक्षिणं प्रणामं च चकार भरतस्तदा ॥ २० ॥
ताः सर्वा मातरस्तस्य शत्रुघ्नश्च महाद्युतिः ।
प्रयताश्चाप्रमत्ताश्च चक्रुर्देवं प्रदक्षिणं ॥ २१ ॥
तेऽभिवाद्य विनिष्क्रम्य वनात् तस्मादनन्तरं ।
आश्रमं क्रोशमात्रे तु ददृशुः पिण्डितद्रुमं ॥ २२ ॥
भरद्वाजसगोत्रस्य महर्षेर्भावितात्मनः ।
आश्रमं भरतो दृष्ट्वा प्रहर्षमतुलं ययौ ॥ २३ ॥

आश्वासितां तां च चमूं महात्मा
निवेश्य सम्यक् स यथोपजोषं ।
द्रष्टुं भरद्वाजमृषिप्रवर्हं
गन्तुं मतिं राजसुतश्चकार ॥ २४ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे प्रयागप्रवेशो
नाम अष्टनवतितमः सर्गः ॥

## XCIX.

भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः ।
बलं सर्वं समास्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥
पद्भ्यामेव तु धर्मज्ञो न्यस्तशस्त्रपरिच्छदः ।
निवस्य वाससी क्षौमे पुरस्कृत्य पुरोहितं ॥ २ ॥
सूपद्वारं सुसंमृष्टं कदलीवनशोभितं ।
शान्तव्यालमृगाकीर्णं वेदीमण्डलमण्डितं ॥ ३ ॥
स्वर्गस्य विवृतद्वारं भ्राजमानं वनश्रिया ।
नातिदूरं ततो गत्वा स ददर्श तदाश्रमं ॥ ४ ॥
तत् प्रविश्याश्रमपदं भरतः सपुरोहितः ।
ददर्श परमोदारमृषिं ज्वलिततेजसं ॥ ५ ॥
ततः संदर्शने तस्य भरद्वाजस्य राघवः ।
मन्त्रिणस्तानवस्थाप्य जगाम सपुरोहितः ॥ ६ ॥
वशिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः ।
संचचालासनात् तूर्णं शिष्यानर्घमिति ब्रुवन् ॥ ७ ॥
समागम्य वशिष्ठेन भरतेनाभिवादितः ।
अबुध्यत महातेजाः पुत्रं दशरथस्य तं ॥ ८ ॥
ताभ्यामर्घं च पाद्यं च दत्वा चापि फलोदकं ।
अनुपूज्य स धर्मात्मा सर्वांश्चैवानुयायिनः ॥ ९ ॥

पप्रच्छ कुशलं चास्य राज्ये कोषे बले पुरे ।
ज्ञात्वा दशरथं वृत्तं न राजानं स पृष्टवान् ॥ १० ॥
वशिष्ठभरतौ चैनं पप्रच्छतुरनामयं ।
शरीरे चाग्निहोत्रे च शिष्येषु मृगपक्षिषु ॥ ११ ॥
तथेति च प्रतिज्ञाय भरद्वाजो महातपाः ।
भरतं प्रत्युवाचेदं राघवापेक्षया मुनिः ॥ १२ ॥
किमागमनकृत्यं ते परित्यज्य नृपश्रियं ।
एतदाचक्ष्व मे सर्वं न हि शुध्यति मे मनः ॥ १३ ॥
सुषुवे यममित्रघ्नं कौशल्या नन्दिवर्धनं ।
यो वनं चीरवसनः प्रयातः सह सीतया ॥ १४ ॥
नियुक्तः स्त्रीनिमित्तेन पित्रा यः सत्यवादिना ।
भव त्वं वनवासीति समाः किल चतुर्दश ॥ १५ ॥
कच्चिन्नु तस्य रामस्य धार्मिकस्य क्षमावतः ।
निःस्नेहो राज्यलोभेन विकर्तुं त्वमिहागतः ॥ १६ ॥
तस्यापापस्य पापं त्वं न कच्चित् कर्तुमर्हसि ।
अकण्ठकं भोक्तुमना राज्यं राजवरात्मज ॥ १७ ॥
न खल्वपापे पापं ते कार्यं तस्मिन् महात्मनि ।
यदासौ त्वत्कृते पित्रा वनमेव विवासितः ॥ १८ ॥
एवमुक्तस्तु भरतो भरद्वाजेन धीमता ।
विवर्णवदनो भूत्वा प्रत्युवाच कृताञ्जलिः ॥ १९ ॥

कृतोऽस्मि यदि मामेवं भगवानवगच्छति ।
मयि ते मा विशङ्कीयं न चाहं कर्तुमुत्सहे ॥ २० ॥
न मे तदिष्टं माता मे यदवोचन्मदन्तरे ।
नाहमेतदुपेक्षेयं न चैतद्वाक्यमाश्रये ॥ २१ ॥
पातितं ह्ययशो मूर्ध्नि मात्रा मे राज्यलुब्धया ।
तन्नाहमनुमन्ये च न चैतद्विदितं मम ॥ २२ ॥
को जातो भूमिपालानां शशाङ्कविमले कुले ।
ज्येष्ठस्य भ्रातुरिष्टस्य द्रुह्येदनघ निर्घृणः ॥ २३ ॥
राज्यश्रिया न मे कार्यं न सुखेन न चात्मना ।
तं विना राघवं ज्येष्ठं भ्रातरं वनवासिनं ॥ २४ ॥
अहं तु तं नरव्याघ्रं प्रसादयितुमागतः ।
प्रतिनेतुमयोध्यां च पादौ चाप्युपसेवितुं ॥ २५ ॥
तन्मामेवंगुणं मत्वा प्रसादं कर्तुमर्हसि ।
शंस मे भगवन् रामः क्व संप्रति महीपतिः ॥ २६ ॥
एवं तु वदतस्तस्य भरतस्य महात्मनः ।
रामस्नेहाभिभूतस्य सहसा वाष्पमागमत् ॥ २७ ॥
वाष्पक्लिन्नमुखं चैनं भरद्वाजोऽब्रवीदिदं ।
उपपन्नमिदं पुत्र तवाद्य वचनं मम ॥ २८ ॥
परितुष्टं च विज्ञाय तमाकारैर्महामुनिं ।
प्रमृज्याश्रूणि भरतः पुनर्वाक्यमुवाच ह ॥ २९ ॥

यद्यस्ति मयि विश्वासो यद्यवेक्ष्योऽहमस्मि ते ।
शंस मे भ्रातरं रामं क्व नु संप्रति वर्तते ॥ ३० ॥
तस्यैवं भाषमाणस्य राघवं परिपृच्छतः ।
मनश्चक्रे भरद्वाजो भरतस्य महामुनिः ॥ ३१ ॥
पूजयित्वा यथान्यायं भरद्वाजस्तपोधनः ।
उवाचेदं महातेजाः प्रहसन् भरतं वचः ॥ ३२ ॥
एवं त्वयि नरव्याघ्र युक्तं राघववंशज ।
उपावर्तयितुं यस्त्वं वनादिच्छसि राघवं ॥ ३३ ॥
गुरुवृत्तिर्दमश्चैव सानुक्रोशगुणक्षमाः ।
एतान्येव सुवर्णानि शरीरे भूषणानि ते ॥ ३४ ॥
विदितास्तत्त्वतश्चैव तव सौम्य गुणा मम ।
तत्त्वतः श्रोतुकामेन प्रियमेतदुदाहृतं ॥ ३५ ॥
श्रूयतां तु महाबाहो धर्मज्ञ गुरुवत्सल ।
यत्र राजीवताम्राक्षो बन्धुस्तव स राघवः ॥ ३६ ॥
हृदयेऽप्यन्तरस्थं ते भावं चन्द्रांशुशीतलं ।
पृच्छामि जानन्नत्यर्थं कीर्तिं समभिवर्धयन् ॥ ३७ ॥
समीपे चित्रकूटस्य राघवः सह सीतया ।
निवसत्याश्रमे रम्ये लक्ष्मणेनानुपालितः ॥ ३८ ॥
श्वो गन्तासि सहामात्यो वस त्वं ससुहृज्जनः ।
त्वामभ्यर्चितुमिच्छामि काममेतं कुरुष्व मे ॥ ३९ ॥

ततस्तथेत्येवमुदारदर्शनः
प्रतीतरूपो भरतोऽब्रवीद्वचः ।
चकार बुद्धिं च महाश्रमे तदा
निशानिवासाय नराधिपात्मजः ॥ ४० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरद्वाजाश्रमे निवासो
नाम एकोनशततमः सर्गः ॥

# रामायणं

C.

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा ।
भरतं केकयीपुत्रमातिथ्येनाभ्यमन्त्रयत् ॥ १ ॥
अब्रवीद्भरतस्त्वेनं नन्विदं भवता कृतं ।
पाद्यमर्घ्यमथातिथ्यं वने यदुपपद्यते ॥ २ ॥
अथोवाच भरद्वाजो भरतं प्रीतिमद्वचः ।
जाने त्वां मत्प्रिये युक्तं तुष्येस्त्वं येन केनचित् ॥ ३ ॥
सेनायास्तु तवैतस्याः कर्तुमिच्छामि भोजनं ।
प्रीतिः कृत्वा ममाप्येवं भविष्यति नरर्षभ ॥ ४ ॥
किमर्थं चासि निक्षिप्य दूरे बलमिहागतः ।
कस्मान्नेहोपयातोऽसि सबलः सहवाहनः ॥ ५ ॥
भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनं ।
न बलेनोपयातोऽस्मि भगवन् भगवद्भयात् ॥ ६ ॥
मनुष्या वाजिमुख्याश्च मत्ताश्चिप्रसुता गजाः ।
प्रच्छाद्य महतीं भूमिं भगवन्ननुयान्ति मां ॥ ७ ॥
ते वृक्षानुदकं भूमिमाश्रमेषु उटजास्तथा ।
मा हिंस्युरिति तेनाहमायातो गुरुभिः सह ॥ ८ ॥
आनीयतामितः सैन्यमित्यादिष्टो महर्षिणा ।
तथा स चक्रे भरतस्ततः प्रीतोऽभवन्मुनिः ॥ ९ ॥

अग्निशालां प्रविश्याथ पीत्वापः परिमृज्य च ।
आतिथ्यार्थो भरद्वाजो विश्वकर्माणमाह्वयत् ॥ १० ॥
आह्वय विश्वकर्माणं स्वयं त्वष्टारमब्रवीत् ।
आतिथ्यं कर्तुमिच्छामि तत् तु मे संविधीयतां ॥ ११ ॥
प्राक्स्रोतसस्तु या नद्यः प्रत्यक्स्रोतस एव च ।
पृथिव्यामन्तरीक्षे च ता इहायान्तु सर्वशः ॥ १२ ॥
अन्याः स्रवन्तु मैरेयं सुरामन्याः सुनिष्ठिताः ।
मधुरं चोदकं शीतमिक्षुकाण्डरसोपमं ॥ १३ ॥
आह्वये देवगन्धर्वान् विश्वावसुहाहाहूहून् ।
तथैवाप्सरसो दिव्या गन्धर्वीश्चैव सर्वशः ॥ १४ ॥
घृताचीं मेनकां रम्भां मिश्रकेशीमलम्बुषां ।
इन्द्रं याश्चोपतिष्ठन्ति ब्रह्माणं च महाद्युतिं ॥ १५ ॥
सर्वास्तुम्बुरुणा सार्धमाह्वये सुपरिच्छदाः ।
वनं नानाफलं भास्वत् तत् कुरु त्वमिहैव तु ॥ १६ ॥
इह मे भगवान् सोमो विधत्तामन्नमुत्तमं ।
भक्ष्यं भोज्यं च पेयं च लेह्यं च विविधं बहु ॥ १७ ॥
विचित्राणि च माल्यानि पादपांश्च मधुच्युतः ।
सुरादीनि च पेयानि मांसानि विविधानि च ॥ १८ ॥
एतत समाधिना युक्तं तेजसा नियमेन च ।
शिक्षाक्षरसमायुक्तं तपसा चाब्रवीन्मुनिः ॥ १९ ॥

मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ।
आजग्मुस्तानि सर्वाणि दैवतानि पृथक् पृथक् ॥ २० ॥
मलयं दर्दुरं चैव सेवित्वा चन्दनानिलः ।
सुगन्धः प्रववौ युक्त्या सप्रायामः सुखः शिवः ॥ २१ ॥
ततोऽभ्यवर्तन्त घना दिव्याः कुसुमवृष्टयः ।
देवगन्धर्वनिर्घोषो दिक्षु सर्वासु शुश्रुवे ॥ २२ ॥
प्रववुश्चोत्तमा गन्धा ननृतुश्चाप्सरोगणाः ।
प्रजगुर्देवा गन्धर्वा वीणाश्चैवाप्यवादयन् ॥ २३ ॥
स शब्दो द्यां च भूमिं च प्राणिनां श्रवणांस्तथा ।
विवेशोच्चारितः सम्यक् समसंघातयुक्तिमान् ॥ २४ ॥
तस्मिन्नुपरते शब्दे दिव्ये श्रोत्रपदानुगे ।
ददर्श भारतं सैन्यं विहितं विश्वकर्मणा ॥ २५ ॥
बभूव हि समा भूमिः समन्तात् पञ्चयोजनं ।
शाद्वलैर्बहुभिश्छन्ना नीलवैदूर्यसंनिभैः ॥ २६ ॥
तत्र विल्वाः कपित्थाश्च पनसा वीजपूरकाः ।
आमलक्याश्च जम्बूश्च चूताश्च फलभूषणाः ॥ २७ ॥
उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् ।
आजगाम नदी सौम्या तत्रापि च सरस्वती ॥ २८ ॥
अन्याश्च नद्यो बह्व्योऽथ नानारसावहास्तथा ।
आजग्मुर्वचनात् तस्य महर्षेर्भावितात्मनः ॥ २९ ॥

चतुःशालानि शुभ्राणि शालाश्च गजवाजिनां ।
हर्म्यप्रासादसंघाश्च तोरणानि बहूनि च ॥ ३० ॥
सितमेघप्रभं चापि राजवेश्म सुतोरणं ।
शुक्लमाल्यकृतास्तारं गन्धतोयसमुक्षितं ॥ ३१ ॥
चतुराश्रमसंबाधं शयनाशनपानवत् ।
दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत् ॥ ३२ ॥
उपकल्पितसर्वार्थं धौतनिर्मलभाजनं ।
कृतदिव्यासनं श्रीमत् स्वास्तीर्णशयनासनं ॥ ३३ ॥
प्रविवेश महाबाहुरनुज्ञातो महर्षिणा ।
वेश्म तद्रत्नसंपूर्णं भरतः कैकयीसुतः ॥ ३४ ॥
अनुजग्मुश्च तं सर्वे मन्त्रिणः सपुरोहिताः ।
बभूवुश्च मुदायुक्ता दृष्ट्वा वेश्मसुसंविधां ॥ ३५ ॥
तत्र राजासनं दिव्यं व्यजनं छत्रमेव च ।
भरतो मन्त्रिभिः सार्धमभ्यवर्तत राघवः ॥ ३६ ॥
आसनं पूजयामास रामायाभिप्रणम्य सः ।
बालव्यजनमादाय न्यसीदत् परमात्मवान् ॥ ३७ ॥
आनुपूर्व्या निषेदुश्च सर्वे मन्त्रिपुरोहिताः ।
ततः सेनापती पश्चात् प्रशस्तावन्वसीदतां ॥ ३८ ॥
ततः परममातिथ्यं गन्धद्रूपरसान्वितं ।
वशिष्ठपूर्वं काकुत्स्थः प्रतिजग्राह धर्मवित् ॥ ३९ ॥

ताश्च सर्वा मुहूर्तेन नद्यः पायसकर्दमाः ।
उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् ॥ ४० ॥
तासामुभयतः कूलं पाण्डुमृत् सानुलेपनं ।
आसीन्नानाविधं दिव्यं ब्राह्मणस्य प्रसादजं ॥ ४१ ॥
तेन चैव मुहूर्तेन दिव्याभरणभूषिताः ।
आजग्मुर्बहुसाहस्रास्तस्मिन्नप्सरसां गणाः ॥ ४२ ॥
सुवर्णवीतिप्रतिमाः पद्मकिञ्जल्कसप्रभाः ।
दिव्या विंशतिसाहस्राः कुवेरप्रहिताः स्त्रियः ॥ ४३ ॥
याभिर्गृहीतः पुरुषो भवेदुन्मत्तचेतनः ।
आयातास्त्रिंशत्साहस्राः स्त्रियोऽन्या नन्दनाद्वनात् ॥ ४४ ॥
नारदस्तुम्बुरुर्गोपः प्रदत्तः सूर्यमण्डलः ।
एते गन्धर्वराजानो भरतस्याग्रतो जगुः ॥ ४५ ॥
अलम्बुषा मिश्रकेशी पुण्डरीकाथ वामना ।
उपानृत्यंश्च भरतं भरद्वाजस्य शासनात् ॥ ४६ ॥
यानि माल्यानि देवानां यानि चैत्ररथे वने ।
प्रयागे तान्यदृश्यन्त भरद्वाजस्य शासनात् ॥ ४७ ॥
शिंशपामलकी जम्ब्वो याश्चान्याः कानने लताः ।
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमेऽभवन् ॥ ४८ ॥
सुरां सुरापः पिवतु पायसं च बुभुक्षितः ।
मांसानि च महार्हाणि भक्ष्यन्तां यावदीप्सितं ॥ ४९ ॥

आच्छादयन् स्नापयंश्च नदीतीरेषु वल्गुषु ।
अप्येकं पुरुषं प्राप्य प्रमदाः पञ्च षट् तथा ॥५०॥
संवाहयन्त्युपासीना नार्यो रुचिरलोचनाः ।
परिगृह्य तथान्योन्यं प्रापयन्ति वराङ्गनाः ॥५१॥
हयान् खरान् गजानुष्ट्रांस्तथैव सुरभीसुतान् ।
इक्षूंश्च मधुलाजांश्च भोजयामासुरेव हि ॥५२॥
इक्ष्वाकुवरयोधास्ते चोदयन्तो महाबलाः ।
नाश्वबन्धोऽश्वमज्ञासीन्न गजं कुञ्जरग्रहः ॥५३॥
मत्तोन्मत्तसमाकीर्णा एवमासीत् तदा चमूः ।
तर्पिताः सर्वकामैस्ते रक्तचन्दनरूषिताः ॥५४॥
अप्सरोगणसंहृष्टाः सैन्या वाच उदीरयन् ।
नैवायोध्यां गमिष्यामो गमिष्यामो न दण्डकं ॥५५॥
कुशलं भरतस्यास्तु रामस्यास्तु यथासुखं ।
इति पादातयोधास्ते हस्त्यश्वारोहबन्धकाः ॥५६॥
अथ हृष्टा विनेदुस्ते नरास्तत्र सहस्रशः ।
भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥५७॥
ततो भुक्तवतां तेषां तदन्नममृतोपमं ।
दिव्यभक्ष्योपभोगानां नाभवद्भक्षणे मतिः ॥५८॥
प्रेष्याश्चैवाश्वबन्धाश्च बलस्थाश्चैव सर्वशः ।
बभूवुः सुभृशं तृप्ताः सर्वे चाहतवाससः ॥५९॥

कुञ्जराश्च खरोष्ट्राश्च गोऽश्वाविमृगपक्षिणः ।
बभूवुः सुभृशं तृप्ता नानाविधगतिस्वनाः ॥ ६० ॥
नाशुक्लवासास्तत्रासीत् क्षुधितो मलिनोऽपि वा ।
रजसा ध्वस्तकेशो वा नरः कश्चिदभूत् तदा ॥ ६१ ॥
बभूवुर्बलपार्श्वेषु ह्रदाः पायसकर्दमाः ।
ताश्च कामदुघा नद्यो द्रुमाश्चासन् मधुच्युतः ॥ ६२ ॥
वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः ।
प्रतप्तैः पैठरैश्चैव मार्गमायूरतैत्तिरैः ॥ ६३ ॥
अन्नैरपि च वाराहैर्मिष्टान्नवरसंचयैः ।
फलनिर्यूहसंसिद्धैः पूपैरपि रसान्वितैः ॥ ६४ ॥
पुष्पध्वजावकीर्णानि शुक्लान्यन्नस्य तिष्ठति ।
पात्रीणां च सहस्राणि शातकौम्भान्यनेकशः ॥ ६५ ॥
स्थाल्यः कुम्भाः कलस्यश्च मधुपूर्णाः सुसंस्कृताः ।
यौवनस्थस्य तक्रस्य दधिस्थसमगन्धिनः ॥ ६६ ॥
ह्रदाः पूर्णा रसालाया दध्नः श्वेतस्य चापरे ।
बभूवुः पयसश्चापि शर्करायाश्च संचयाः ॥ ६७ ॥
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च ।
ददृशुर्भाजनस्थानि तीर्थेषु सरितां नराः ॥ ६८ ॥
शुक्लानंशुमतश्चापि दन्तधावनसंचयान् ।
श्लक्ष्णाचन्दनकल्कांश्च समुद्गेषु च तिष्ठतः ॥ ६९ ॥

दर्पणान् परिमृष्टांश्च माल्यानि विविधानि च ।
पादुकोपानहश्चैव युग्मान्यत्र सहस्रशः ॥ ७० ॥
अञ्जनं कङ्कतीः कूर्चांश्छत्राणि विविधानि च ।
तनुत्राणि विचित्राणि शयनान्यासनानि च ॥ ७१ ॥
प्रतिपानह्रदान् पूर्णान् खरोष्ट्रगजवाजिनां ।
अवगाह्यान् सुतीर्थांश्च ह्रदान् सोत्पलपुष्करान् ॥ ७२ ॥
नीलवैदूर्यवर्णांश्च मृदून् यवससंचयान् ।
चारयन्तः पशूनां ते नात्तं ददृशिरे तदा ॥ ७३ ॥
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतं ।
दृष्ट्वातिथ्यं कृतं तादृग्भरतस्य महर्षिणा ॥ ७४ ॥
इत्येवं रममाणानां देवानामिव नन्दने ।
भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्तत ॥ ७५ ॥
प्रतिजग्मुश्च ता नद्यो गन्धर्वाश्च यथागतं ।
भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ७६ ॥

तथैव मत्ता मदिरोत्कटा नरास्
तथैव दिव्यागुरुचन्दनोक्षिताः ।
तथैव दिव्या विविधोत्तमस्रजः
पृथक् प्रकीर्णा मनुजैः प्रमर्दिताः ॥ ७७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरद्वाजातिथ्यं
नाम शततमः सर्गः ॥

## CI.

रजनीं तामुषित्वाथ भरतः सपरिच्छदः ।
कृतातिथ्यं भरद्वाजं कालेऽभ्येत्याभ्यवादयत् ॥ १ ॥
तमृषिः पुरुषव्याघ्रं संप्रेक्ष्य प्राञ्जलिस्थितं ।
हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥
कच्चित् पुत्र सुखेनेयं तवाद्य रजनी गता ।
समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ॥ ३ ॥
तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च ।
आश्रमादभिनिष्क्रान्तमृषिमुत्तमतेजसं ॥ ४ ॥
सुखोषितोऽस्मि भगवन् समग्रबलवाहनः ।
तर्पितः सर्वकामैश्च भगवन् बहुशस्त्वया ॥ ५ ॥
अपेतक्लमसंतापाः सुभिक्षाः सुप्रतिष्ठिताः ।
अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः ॥ ६ ॥
आमन्त्रये त्वां भगवन् मामनुज्ञातुमर्हसि ।
भ्रातुः समीपं यास्यामि शुभेनेक्षस्व चक्षुषा ॥ ७ ॥
आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः ।
आचक्ष्व केन मार्गेण गच्छेयं भगवन्नहं ॥ ८ ॥
योजनानि कतीतश्च कस्मिन् देशे स आश्रमः ।
ससीतालक्ष्मणसखो धर्मात्मा यत्र वर्तते ॥ ९ ॥

इति पृष्टस्तदा तेन भरतेन महात्मना ।
ततः स भरतं धीमान् महर्षिरिदमब्रवीत् ॥ १० ॥
भरतार्धतृतीयेषु योजनेष्वजने वने ।
चित्रकूटो गिरिस्तात रम्यनिर्झरकन्दरः ॥ ११ ॥
उत्तरं पार्श्वमाश्रित्य तस्य मन्दाकिनी नदी ।
पुष्पितद्रुमसंछन्ना नानापक्षिनिषेविता ॥ १२ ॥
तामन्तरा च सरितं चित्रकूटं च पर्वतं ।
तयोः पर्णकुटीं तत्र द्रक्ष्यसि त्वं सुसंवृतां ॥ १३ ॥
कृत्वाश्रमपदं रम्यमेकान्ते सहलक्ष्मणः ।
सीतया भार्यया सार्धं वसतीति मया श्रुतं ॥ १४ ॥
दक्षिणेनैव मार्गेण दक्षिणाशां प्रदक्षिणं ।
गजवाजिसमाकीर्णा वाहिनी यातु राघव ॥ १५ ॥
प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हं ब्राह्मणं पर्यवारयन् ॥ १६ ॥
वेपमाना कृशा दीना सह देव्या सुमित्रया ।
कौशल्या तस्य जग्राह कराभ्यां चरणावुभौ ॥ १७ ॥
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ।
कैकेयी चापि जग्राह चरणौ लज्जयान्विता ॥ १८ ॥
तं प्रदक्षिणमागत्य भगवन्तं महामुनिं ।
सुमित्रा भरताभ्यासे तस्थौ दीना समाकुला ॥ १९ ॥

ततः पप्रच्छ भरतं भरद्वाजो दृढव्रतः ।
विशेषं ज्ञातुमिच्छामि मातॄणां तिसृणां तव ॥ २० ॥
एवमुक्तस्तु भरतो भरद्वाजेन धीमता ।
उवाच प्राञ्जलिर्वाक्यमिदं वचनकोविदः ॥ २१ ॥
यामिमां भगवन् दीनां शोकोपहतचेतसं ।
स्थितामश्रुमुखीं साध्वीं देवतामिव पश्यसि ॥ २२ ॥
एषा तं पुरुषव्याघ्रं सिंहविक्रान्तगामिनं ।
कौशल्या सुषुवे रामं धातारमदितिर्यथा ॥ २३ ॥
अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः ।
कर्णिकारस्य शाखेव शीर्णपर्णा वनान्तरे ॥ २४ ॥
एतस्यास्तौ सुतौ ब्रह्मन् कुमारौ देवरूपिणौ ।
उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २५ ॥
पश्यस्युद्विग्नहृदयामहृष्टवदनां स्थितां ।
सुमित्रां जननीमेतां लक्ष्मणस्यावधारय ॥ २६ ॥
यस्याः कृते नरव्याघ्रौ वनवासमितो गतौ ।
राजपुत्रौ नरेन्द्रश्च स्वर्गं दशरथो गतः ॥ २७ ॥
ऐश्वर्यकामां कैकेयीमनार्यां पतिघातिनीं ।
ममैतां मातरं विद्धि नृशंसां कुलपांसनां ॥ २८ ॥
सैषा तिष्ठति कैकेयी नृशंसा पापनिश्चया ।
अतोमूलं हि पश्यामि व्यसनं महदात्मनः ॥ २९ ॥

इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा ।
निशश्वास स ताम्राक्षः क्रुद्धो वनगजो यथा ॥ ३० ॥
भरद्वाजो महर्षिस्तु ब्रुवन्तं भरतं तदा ।
प्रत्युवाच महाबुद्धिरिदं वचनमर्थवत् ॥ ३१ ॥
न दोषेणावगन्तव्या कैकेयी भरत त्वया ।
रामप्रव्राजनं ह्येतत् सुखोदर्कं भविष्यति ॥ ३२ ॥
अभिवाद्य तु तं सिद्धं कृत्वा चाभिप्रदक्षिणं ।
आमन्त्र्य भरतः सैन्यं युज्यतामित्यचोदयत् ॥ ३३ ॥
ततो वाजिरथान् युक्त्वा दिव्यहेमपरिच्छदान् ।
अध्यारोहत् प्रयाणार्थी बहून् बहुविधो जनः ॥ ३४ ॥
गजयोधा गजाश्चैव हेमकक्षाः पताकिनः ।
जीमूता इव घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३५ ॥
विविधान्यथ यानानि बृहन्ति च लघूनि च ।
प्रययुः सुमहार्हाणि पदस्थाश्च पदातयः ॥ ३६ ॥
अथ यानप्रवेकस्थाः कौशल्याप्रमुखाः स्त्रियः ।
रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्ततः ॥ ३७ ॥
स चापि तरुणार्काभां सुयुक्तां शिविकां शुभां ।
आस्थाय प्रययौ धीमान् भरतः सपरिच्छदः ॥ ३८ ॥
सुमन्त्रस्त्वनुयात्रेण सहितः सपताकिना ।
सन्नाभरणयन्त्रेण वीरो भरतमन्वगात् ॥ ३९ ॥

संप्रयाता बभौ सेना गजवाजिसमाकुला ।
दक्षिणां दिशमास्थाय महामेघ इवोत्थितः ॥ ४० ॥
वनानि च व्यतिक्रम्य जुष्टानि मृगपक्षिभिः ।
अगाधां मीनकलिलां यमुनामतरन्नदीं ॥ ४१ ॥
सा संप्रहृष्टद्विपवाजियोधा
वित्रासयन्ती मृगपक्षिसंघान् ।
महावनं तत् प्रविगाहमाना ।
नरेन्द्रपुत्रस्य रराज सेना ॥ ४२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतानुज्ञा नाम
एकशततमः सर्गः ॥

# अयोध्याकाण्डं

## CII.

तया महत्या यायिन्या ध्वजिन्या वनवासिनः ।
अर्दिता यूथपास्तत्र सयूथा विप्रदुद्रुवुः ॥ १ ॥
ऋक्षाः पृषतसंघाश्च रुरवश्च समन्ततः ।
दृश्यन्ते वनराजीषु पर्वतेषु नदीषु च ॥ २ ॥
स संप्रतस्थे धर्मात्मा धीमान् दशरथात्मजः ।
वृतो योधैर्महावीर्यैः शब्दवाणाग्रवेधिभिः ॥ ३ ॥
भरतस्तु महाप्राज्ञो भ्रातृदर्शनकाङ्क्षया ।
मृगव्यालानुचरितं प्रविवेश महावनं ॥ ४ ॥
सागरौघनिभा सेना सा तु तस्यानुयायिनी ।
महीं संछादयामास प्रावृषि द्यामिवाम्बुदः ॥ ५ ॥
तुरगौघैर्विसर्पद्भिर्वारणैश्चाचलोपमैः ।
अनालक्ष्या चिरं कालं तस्मिन् देशे बभूव सा ॥ ६ ॥
स गत्वा दूरमध्वानमपरिश्रान्तवाहनः ।
उवाच भरतो धीमान् शत्रुघ्नं शिष्टसंमतं ॥ ७ ॥
यादृशं लक्ष्यते रूपं यादृशं च श्रुतं मया ।
व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ८ ॥
अयं गिरिश्चित्रकूट इयं मन्दाकिनी नदी ।
एतत् प्रकाशते दूरान्नीलमेघनिभं वनं ॥ ९ ॥

गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति ।
वारणैरवमृच्यन्ते मामकैः पर्वतोपमैः ॥ १० ॥
मुञ्चन्ति कुसुमं चित्रं नगाः पर्वतसानुषु ।
नीला इवातपापाये तोयं धूमोज्ज्वयोनयः ॥ ११ ॥
एते मृगगणा भान्ति शीघ्रवेगाः प्रधाविताः ।
वायुप्रविद्धाः शरदि मेघराज्य इवाम्बरे ॥ १२ ॥
किन्नराचरितोद्देशं पश्य शत्रुघ्न पर्वतं ।
हयैर्मदीयैराकीर्णं सागरं मकरैरिव ॥ १३ ॥
कुर्वन्ति कुसुमापीडान् शिरःसु सुरभीनिव ।
मेघप्रकाशैः फलकैर्दाक्षिणात्याः सुयोधिनः ॥ १४ ॥
निष्कूजमभवच्चैव तद्वनं घोरदर्शनं ।
अयोध्येव जनाकीर्णा संप्रति प्रतिभाति मे ॥ १५ ॥
खुरोद्भूतो रेणुरसौ दिवमावृत्य तिष्ठति ।
तं वहत्यनिलः शीघ्रः कुर्वन्निव मम प्रियं ॥ १६ ॥
स्यन्दनांस्तुरगोपेतान् सूतमुख्यैरधिष्ठितान् ।
एतान् संपततः पश्य शीघ्रं शत्रुघ्न कानने ॥ १७ ॥
एतैर्वित्रासितान् पश्य बर्हिणः प्रियदर्शनान् ।
मनोज्ञरूपा ये भान्ति कुसुमैश्चित्रिता इव ॥ १८ ॥
मृगीभिः सहिता एते बहवः पृषता वने ।
एतमध्यासते शैलमधिवासं पतत्रिणां ॥ १९ ॥

अतिमात्रमयं देशो मनोज्ञः प्रतिभाति मे ।
तापसानां निवासोऽयं व्यक्तं स्वर्गपथोपमः ॥ २० ॥
साधु सैन्याः प्रतिष्ठन्तां विचिन्वन्तु च काननं ।
यथा तौ पुरुषव्याघ्रौ पश्येयं तद्विधीयतां ॥ २१ ॥
भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः ।
विविशुस्तद्वनं वीरा धूमं च ददृशुस्ततः ॥ २२ ॥
ते तदालोक्य धूमाग्रमूचुर्भरतमीश्वरं ।
नामानुषो भवत्यग्निर्ध्रुवमत्रैव राघवौ ॥ २३ ॥
अथ नात्र नरव्याघ्रौ राजपुत्रौ महाबलौ ।
अन्येऽप्यत्र भविष्यन्ति तापसा वनगोचराः ॥ २४ ॥
तच्छ्रुत्वा वचनं तेषां भरतः साधुसंमतः ।
सैन्यानुवाच तान् सर्वानमित्रबलमर्दनः ॥ २५ ॥
यत्ता भवन्तस्तिष्ठन्तु नेतो गन्तव्यमन्यतः ।
अहमेको गमिष्यामि सुमन्त्रो धृष्टिरेव च ॥ २६ ॥
एवमुक्त्वा ततः सेनां संप्रतस्थे परंतपः ।
भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधत् ॥ २७ ॥
व्यवस्थिता सा महती तदा चमूर्निरीक्षमाणा वनधूममग्रतः ।
बभूव हृष्टा पुनरेव वाहिनी प्रियस्य रामस्य समागमेप्सया ॥ २८ ॥
इत्यार्षे रामायणे अयोध्याकाण्डे रामाश्रमदर्शनं
नाम द्विशततमः सर्गः ॥

# रामायणं

## CIII.

दीर्घकालोषितस्तत्र गिरौ गिरिवरप्रियः ।
वैदेह्याश्च प्रियं शंसन् स्वं च चित्तं विलोभयन् ॥ १ ॥
अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् ।
भार्याममरसंकाशः शचीमिव पुरंदरः ॥ २ ॥
न राज्याद्भ्रंशनं सीते न सुहृद्भिर्विवासनं ।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिं ॥ ३ ॥
पश्येममचलं सीते नानाद्विजसमाकुलं ।
शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विभूषितं ॥ ४ ॥
केचिद्रजतसंकाशाः केचित् क्षतजसंनिभाः ।
पीतमाञ्जिष्ठवर्णाश्च केचिन्मरकतप्रभाः ॥ ५ ॥
शस्पकेतनकाभाश्च केचिज्ज्योतीरसप्रभाः ।
विराजन्त्यचलेन्द्रस्य सानवो धातुभूषिताः ॥ ६ ॥
शाखामृगगणद्वीपितरक्षुगणसेवितैः ।
सानुभिर्भात्ययं शैलो नानावृक्षोपशोभितः ॥ ७ ॥
आम्रजम्ब्वसनैर्लोध्रैः पियालैः ककुभैर्धवैः ।
अङ्कोठैर्भव्यपनसैर्विल्वतिन्दुकवेणुभिः ॥ ८ ॥
काश्मर्यरिष्टवरुणैर्मधुकैस्तिलकैस्तथा ।
बदर्यामलकैर्नीपैर्वेत्रचन्दनवीजकैः ॥ ९ ॥

पुष्पवद्भिः फलोपेतैश्छादयद्भिर्मनोहरैः ।
एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥ १० ॥
शैलप्रस्थेषु रम्येषु पश्यैतान् देवरूपिणः ।
किन्नरान् द्वन्द्वशो भद्रे रममाणान् मनस्विनः ॥ ११ ॥
शाखावसक्तान् खड्गांश्च प्रवराण्यम्बराणि च ।
पश्य विद्याधरस्त्रीणां क्रीडोद्देशान् मनोरमान् ॥ १२ ॥
जलप्रपातैरुद्भेदैर्विस्यन्दैश्च क्वचित् क्वचित् ।
स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥ १३ ॥
गुहाभ्यः सुरभिर्गन्धो नानापुष्पगुणान्वितः ।
घ्राणतर्पण उद्भूतः कं नरं न प्रहर्षयेत् ॥ १४ ॥
यदीह शरदोऽनेकास्त्वया सार्धमनिन्दिते ।
लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति ॥ १५ ॥
नानापुष्पफले रम्ये नानाद्विजगणावृते ।
विचित्रशिखरे ह्यस्मिन् कृतकामोऽस्मि भाविनि ॥ १६ ॥
अनेन वनवासेन मया प्राप्तं महत् फलं ।
अनृणत्वं पितुर्धर्माद्भरतस्य प्रियं तथा ॥ १७ ॥
वैदेहि रमसे कच्चिच्चित्रकूटे मया सह ।
पश्यन्ती विविधान् भावान् मनोवाक्कायसंगतान् ॥ १८ ॥
इहैव ह्यमृतं प्राप्ताः सीते राजर्षयोऽपरे ।
वनवासस्थिता अपि प्रेत्य मे प्रपितामहाः ॥ १९ ॥

शिलाः शैलस्य राजन्ति विशालाः शतशस्त्विमाः ।
बहुधा बहुभिर्वर्णैर्नीलपीतसितारुणैः ॥ २० ॥
चित्रा भान्त्यचलेन्द्रस्य हुताशनशिखा इव ।
ओषध्यः स्वप्रभालक्ष्म्या भ्राजमानाः सहस्रशः ॥ २१ ॥
केचिद्वेश्मप्रभा देशाः केचिदुद्यानसंस्थिताः ।
केचिदेकशिला भान्ति पर्वतस्यास्य भाविनि ॥ २२ ॥
भित्त्वेव गगणं भाति चित्रकूटः समुत्थितः ।
चित्रकूटः सुकूटोऽयं गुह्यकैः सेवितः शिवः ॥ २३ ॥
कुष्ठपुन्नागवकुलभूर्जपत्रपरिच्छदान् ।
कामिनां संस्तरान् पश्य कौशेयजलजायुतान् ॥ २४ ॥
मृदिताश्चापविद्धाश्च भान्त्येताः कमलस्रजः
कामिभिर्वनिते पश्य फलानि विविधानि च ॥ २५ ॥
वस्वौकसारां नलिनीमतीत्यैवोत्तरान् कुरून् ।
पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः ॥ २६ ॥

इमं हि कालं विहरन् वरानने
त्वया सहानेन च लक्ष्मणेन ह ।
रतिं प्रपत्स्ये कुलधर्मवर्धिनीं
सतां पथि स्थो नियमे परिस्थितः ॥ २७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे चित्रकूटवर्णना
नाम त्रिशततमः सर्गः ॥

# अयोध्याकाण्डं

## CIV.

अथ शैलाद्विनिष्क्रम्य मैथिलीं कोशलेश्वर : ।
अदर्शयच्छुचिजलां रम्यां मन्दाकिनीं नदीं ॥ १ ॥
अब्रवीच्च वरारोहां चारुचन्द्रनिभाननां ।
विदेहराजतनयां रामो राजीवलोचनः ॥ २ ॥
विचित्रपुलिनां रम्यां हंससारससेवितां ।
कुमुदोत्पलसंछन्नां पश्य मन्दाकिनीं नदीं ॥ ३ ॥
नानाविधैस्तीररुहैः संवृतां फलपुष्पदैः ।
राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥
मृगयूथानुपीतानि कलुषाम्भांसि संप्रति ।
तीर्थानि रमणीयानि प्रीतिं संजनयन्ति मे ॥ ५ ॥
जटाचीरधराः सिद्धा वल्कलाजिनवाससः ।
ऋषयोऽमी विगाहन्ते काले मन्दाकिनीं नदीं ॥ ६ ॥
एते हि वल्गुवचसो नियमादूर्ध्वबाहवः
आदित्यमुपतिष्ठन्ते मुनयः संशितव्रताः ॥ ७ ॥
मारुतोद्धूतशिखराः प्रसृता इव पर्वते ।
पादपाः पुष्पवर्षेण किरन्त्येते च मेदिनीं ॥ ८ ॥
आधूतान् वायुना पश्य संततान् पुष्पसंचयान् ।
पोप्लूयमानानपरानम्भस्यमललोचने ॥ ९ ॥

क्वचिन्मणिनिकाशोदां क्वचित् पुलिनशालिनीं ।
क्वचित्सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीं ॥ १० ॥
एते हि वल्गुवचसो रथाङ्गाह्वयना द्विजाः ।
अध्यारोहन्ति कल्याणि विकूजन्तः शुभा गिरः ॥ ११ ॥
दर्शनाच्चित्रकूटस्य मन्दाकिन्याश्च सर्वशः ।
अधिकं पुरवासे न मन्ये तव च दर्शनात् ॥ १२ ॥
कृताग्निकल्पैर्मुनिभिस्तपोदमसमन्वितैः ।
नित्यं विक्षोभितजलां विगाहस्व मया सह ॥ १३ ॥
सखीवच्च विगाहस्व सीते मन्दाकिनीं नदीं ।
प्रसन्नाम्बुवहां नित्यं तरङ्गाङ्गदभूषणां ॥ १४ ॥
नरैरिव नगैः पूर्णामयोध्यामिव पर्वतं ।
मन्यस्व वनिते नित्यं शरयूं तामिमां नदीं ॥ १५ ॥
लक्ष्मणश्चापि धर्मात्मा मन्निदेशे व्यवस्थितः ।
त्वं चानुकूला वैदेहि प्रीतिं जनयथो मम ॥ १६ ॥
नलिनान्युपभुञ्जाना सलिलानि च भाविनि ।
पाणिभ्यां पद्मपत्राभ्यां विगाहस्व सरिद्वरां ॥ १७ ॥
उपस्पृशंस्त्रिषवणं वने मूलफलाशनः ।
नायोध्यायै न राज्याय स्पृहयामि त्वया सह ॥ १८ ॥

इमां हि पश्यन् मृगयूथलोडितां
निपीततोयां गजसिंहवानरैः ।

सुपुष्पितैस्तीररुहैरलंकृतां
न सोऽस्ति योऽस्यां न गतक्लमो भवेत् ।। १९ ।।
इतीव रामो विततं शुभं वचः
प्रियाद्वितीयः सरितं प्रति ब्रुवन् ।
चचार रम्यं नयनाञ्जनप्रभं
स चित्रकूटं रघुवंशवर्धनः ।। २० ।।

इत्यार्षे रामायणे अयोध्याकाण्डे मन्दाकिनीवर्णना
नाम चतुःशततमः सर्गः ।।

CV.

रामस्तु नलिनीं रम्यां चित्रकूटं च पर्वतं ।
सुतां जनकराजस्य दर्शयित्वा न्यवर्तत ॥ १ ॥
उत्तरे तु गिरेः पादे चित्रकूटस्य राघवः ।
ददर्श कन्दरं रम्यं शिलाधातुसमाचितं ॥ २ ॥
सुखप्रवेशैस्तरुभिः पुष्पभारावलम्बिभिः ।
संवृतं च रहस्यं च मत्तद्विजगणायुतं ॥ ३ ॥
तं दृष्ट्वा सर्वभूतानां मनोदृष्टिहरं दरं ।
उवाच राघवः सीतां वनदर्शनविस्मितां ॥ ४ ॥
वैदेहि रमते चक्षुस्तवास्मिन् गिरिकन्दरे ।
परिश्रमविघातार्थं साधु तावदिहास्यतां ॥ ५ ॥
त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः ।
अस्य पार्श्वे तरुः पुष्पैः प्रवृष्ट इव केशरः ॥ ६ ॥
राघवेणैवमुक्ता सा सीता प्रकृतिसुन्दरी ।
उवाच प्रणयस्निग्धमिदं श्लक्ष्णतरं वचः ॥ ७ ॥
अवश्यकार्यं वचनं तव मे रघुनन्दन ।
भूतार्थं चैव पश्यामि एनं पुष्पितपादपं ॥ ८ ॥
एवमुक्तस्तया तस्मिन्नुपविष्टः शिलातले ।
सह पत्न्या विशालाक्षीं वचनं चेदमब्रवीत् ॥ ९ ॥

गजदन्ताहतान् वृक्षान् पश्य निर्यासवाष्पिणः ।
किल्लिका विरुतैर्दीर्घै रुदन्तीव समन्ततः ॥ १० ॥
पुत्रप्रियोऽसौ शकुनिः पुत्र पुत्रेति भाषते ।
मधुरां करुणां वाचं पुरेव जननी मम ॥ ११ ॥
विहगो भृङ्गराजोऽयं सालस्कन्धसमाश्रितः ।
संगीतमिव कुर्वाणः कोकिलस्यानुकूजति ॥ १२ ॥
अयं गोष्ठीविटः शङ्के कोकिलानां विहङ्गमः ।
सुखबद्धमसंबद्धं तथा ह्येष प्रभाषते ॥ १३ ॥
एषा कुसुमितं वृक्षं पुष्पभारानता लता ।
दृश्यते मामिवात्यर्थं श्रमाद्देवि त्वमाश्रिता ॥ १४ ॥
एवमुक्त्वा प्रियस्याङ्के मैथिली प्रियभाषिणी ।
भूयस्तरामनिन्द्याङ्गी समारोहत भाविनी ॥ १५ ॥
विवर्तमाना साङ्के तु सीता सुरसुतोपमा ।
हर्षयामास रामस्य हृदयं प्रियदर्शना ॥ १६ ॥
स निघृष्याङ्गुलिं रामो धौते मनःशिलागिरौ ।
चकार तिलकं पत्न्या ललाटे रुचिरं तदा ॥ १७ ॥
बालार्कसमवर्णेन तेन सा गिरिधातुना ।
ललाटे विनिविष्टेन ससंधेव निशाभवत् ॥ १८ ॥
केशरस्य च पुष्पाणि करेणामृद्य राघवः ।
अलकान् पूरयामास मैथिल्याः प्रीतिमानसः ॥ १९ ॥

अभिरम्य तथा तस्यां शिलायां रघुनन्दनः ।
अन्वीयमानो मैथिल्या देशमन्यं जगाम सः ॥ २० ॥
विचरन्ती तथा सीता ददर्श हरियूथपं ।
वने बहुमृगाकीर्णे सा भयाद्राममाश्लिषत् ॥ २१ ॥
रामस्तां परिरम्भार्तां परिरभ्य महाभुजः ।
सान्त्वयामास वामोरूमभिभर्त्स्य स वानरं ॥ २२ ॥
मनःशिलायास्तिलकः सीतायाः सोऽथ वक्षसि ।
समदृश्यत संक्रान्तो रामस्य विपुलोरसः ॥ २३ ॥
प्रजहास ततः सीता गते वानरयूथपे ।
दृष्ट्वा भर्तुर्विसंक्रान्तमपाङ्गं समनःशिलं ॥ २४ ॥
अपश्यदथ वैदेही वने तस्मिन् मनोहरे ।
अविदूरे त्वशोकानां प्रदीप्तमिव काननं ॥ २५ ॥
दृष्ट्वा च साब्रवीद्राममशोककुसुमार्थिनी ।
साधेतदनुगच्छाव वनमिक्ष्वाकुनन्दन ॥ २६ ॥
तस्याः प्रियार्थं रामस्तु देव्या दिव्यानुरूपया ।
सहितस्तदशोकानां विशोकः प्रययौ वनं ॥ २७ ॥
तदशोकवनं रामः सभार्यो व्यचरत् तदा ।
गिरिपुत्र्या पिनाकीव सह हैमवतं वनं ॥ २८ ॥
तावन्योन्यमशोकस्य पुष्पैः पल्लवधारिभिः ।
समलंचक्रतुरुभौ कामिनौ नीललोहितौ ॥ २९ ॥

आबद्धवनमालौ तौ कृतापीडावतंसकौ ।
भार्यापती तावचलं शोभयां चक्रतुर्भृशं ॥ ३० ॥
एवं स विविधान् देशान् दर्शयित्वा प्रियां प्रियः ।
आजगामाश्रमपदं सुसंमृष्टमलंकृतं ॥ ३१ ॥
प्रत्युज्जगाम संभ्रान्तो लक्ष्मणो गुरुवत्सलः ।
दर्शयन् विविधं कर्म सौमित्रिः स्वकृतं तदा ॥ ३२ ॥
शुद्धवाणहतांस्तत्र मेध्यान् कृष्णमृगान् दश ।
पेशीकृतान् शुष्यमाणानामान् पक्वांश्च कांश्चन ॥ ३३ ॥
तद्दृष्ट्वा कर्म सौमित्रेर्भ्राता प्रीतोऽभवत् तदा ।
क्रियन्तां बलयश्चेति रामः सीतामथान्वशात् ॥ ३४ ॥
अग्र्यं प्रदाय भूतेभ्यः सीताथ वरवर्णिनी ।
तयोरप्यददाद्भ्रात्रोर्मधुमांसं च संभृतं ॥ ३५ ॥
तयोस्तृप्तिमथोत्पाद्य वीरयोः कृतशौचयोः ।
विधिवज्जानकी पश्चाच्चक्रे सा प्राणधारणां ॥ ३६ ॥
शिष्टं मांसं निकृत्तं यच्छोषणायोपकल्पितं ।
तद्रामवचनात् सीता काकेभ्यः पर्यरक्षत ॥ ३७ ॥
तां ददर्श ततो भर्ता काकेनायासितां भृशं ।
यः स धारान्तरचरः कामचारी विहङ्गमः ॥ ३८ ॥
काकेनालोड्यमानां तां रामोऽप्यहसदातुरां ।
सा चुकोपानवद्याङ्गी भर्तुः प्रणयदर्पिता ॥ ३९ ॥

इतश्चेतश्च तां काको वारयन्तीं पुनः पुनः ।
कोपयामास वैदेहीं पक्षतुण्डनखैस्तुदन् ॥ ४० ॥
तस्याः प्रस्फुरमाणौष्ठं भ्रुकुटीपुटसूचितं ।
मुखमालोक्य काकुत्स्थस्तं काकं प्रत्यषेधयत् ॥ ४१ ॥
स धृष्टमानी विहगो राममप्यविचिन्तयन् ।
सीतामभिपपातैव ततश्चुक्रोध राघवः ॥ ४२ ॥
सोऽभिमन्त्र्य शरेषीकामिषीकास्त्रेण वीर्यवान् ।
काकं तमभिसंधाय ससर्ज पुरुषर्षभः ॥ ४३ ॥
स तयाभिद्रुतः काकस्त्रीँल्लोकान् पर्यधावत ।
देवैर्दत्तवरः पक्षी धारान्तरचरो लघुः ॥ ४४ ॥
यत्र यत्रागमत् काकस्तत्र तत्र ददर्श सः ।
इषीकाभूतमाकाशं स रामं पुनरागमत् ॥ ४५ ॥
स मूर्ध्ना न्यपतत् काको राघवस्याथ पादयोः ।
सीतायास्तत्र पश्यन्त्या मानुषीमीरयन् गिरं ॥ ४६ ॥
प्रसादं कुरु मे राम प्राणैः सामग्र्यमस्तु मे ।
अस्त्रस्यास्य प्रभावेन शरणं न लभे क्वचित् ॥ ४७ ॥
तं काकमब्रवीद्रामः पादयोः शिरसा गतं ।
सानुक्रोशतया सत्यमिदं वाक्यमुदीरयन् ॥ ४८ ॥
मया रोषपरीतेन सीताप्रियचिकीर्षुणा ।
अस्त्रमेतत् समाधाय त्वद्वधायानुमन्त्रितं ॥ ४९ ॥

यत् तु मे चरणौ मूर्ध्ना गतस्त्वं जीवितेप्सया ।
अत्रास्त्यपेक्षा त्वयि मे रक्ष्यो हि शरणागतः ॥५०॥
अमोघं क्रियतामस्त्रमङ्गमेकं परित्यज ।
किमङ्गं शातयतु ते शरेषीकेति कथ्यतां ॥५१॥
एतावद्धि मया शक्यं तव कर्तुं प्रियं खग ।
एकाङ्गहीनो जीव त्वं जीवितं मरणाद्वरं ॥५२॥
एवमुक्तस्तु रामेण संप्रधार्य स वायसः ।
अध्यगच्छद्द्वयोरक्षणोस्त्यागमेकस्य पण्डितः ॥५३॥
सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहं ।
एकनेत्रोऽपि जीवेयं त्वत्प्रसादान्नराधिप ॥५४॥
रामानुज्ञातमेकं तत् काकनेत्रमशातयत् ।
वैदेही विस्मिता तत्र काकस्य नयने हृते ॥५५॥
निपत्य शिरसा काको जगामाशु यथेप्सितं ।
लक्ष्मणानुचरो रामश्चकारानन्तरक्रियाः ॥५६॥
अथ सैन्यस्य महतो गजवाजिरथोद्धतं ।
शुश्राव तुमुलं शब्दं सागरस्येव वर्धतः ॥५७॥
अथ स विबुधराजविक्रमः कमलदलायतदृष्टिरब्रवित् ।
किमिदमिति समीक्ष्य लक्ष्मणं स गुरुवचः प्रतिपूज्य चोत्थितः ।५८।
इत्यार्षे रामायणे अयोध्याकाण्डे इषीकास्त्रविसर्जनं
नाम पञ्चशततमः सर्गः ॥

## CVI.

अथ रामे समासीने भरते चाभिगच्छति ।
तस्य सैन्यस्य महतः प्रादुरासीन्महास्वनः ॥ १ ॥
तेन स्वनेन महता वर्धमानेन बोधिताः ।
गुहाः संतत्यजुर्व्याघ्रा निलिल्युर्वनवासिनः ॥ २ ॥
समुत्पेतुः खगास्त्रस्ता मृगयूथाश्च दुद्रुवुः ।
ऋक्षाश्चोत्ससृजुर्वृक्षान् प्रपेतुर्हरयो गुहाः ॥ ३ ॥
दावाग्नेरिव वित्रस्ता दुद्रुवुर्गजयूथपाः ।
व्यजृम्भन्त महासिंहा महिषाश्च व्यलोकयन् ॥ ४ ॥
विलानि विविशुर्व्यालाः स्वस्ति जेपुर्द्विजातयः ।
विद्याधराः समुत्पेतुः किन्नरा भेजिरे दरीः ॥ ५ ॥
अभ्यासे प्रतिपद्याथ तस्य देशस्य लक्ष्मणः ।
सैन्यस्यागच्छतः शब्द इति रामे न्यवेदयत् ॥ ६ ॥
तमुवाचाव्यथो रामः सुमित्रासुप्रजास्त्वया ।
महो स्वनति गम्भीरं तत्त्वं विज्ञायतामिति ॥ ७ ॥
स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितं ।
दिशः क्रमेण संप्रेक्ष्य प्राचीं दिशमवैक्षत ॥ ८ ॥
उदङ्मुखः सुसंप्रेक्ष्य ददर्श महतीं चमूं ।
रथाश्वगजसंपूर्णां यत्तैर्गुप्तां पदातिभिः ॥ ९ ॥

स रामाय नरव्याघ्रो लक्ष्मणः परवीरहा ।
शशंस सेनामायान्तीं वचनं चेदमब्रवीत् ॥ १० ॥
रतिं संशमय त्वार्य सीता निविशतां गुहां ।
कुरु सज्ये च धनुषी कवचं धारयस्व च ॥ ११ ॥
नागाश्वरथसंपूर्णां तां चमूं स निशम्य च ।
रामः पप्रच्छ सौमित्रिं कस्येमां मन्यसे चमूं ॥ १२ ॥
राजा वा राजपुत्रो वा वनेऽस्मिन् मृगयां गतः ।
मन्यसे वा यथातत्त्वं तथा लक्ष्मण शंस मे ॥ १३ ॥
एवमुक्तोऽथ रामेण लक्ष्मणो वाक्यमब्रवीत् ।
दिधक्षन्निव कोपेन ज्वलितः पावको यथा ॥ १४ ॥
सपत्नो राज्यकामोऽयं व्यक्तं राज्येऽभिषेचितः ।
आवां हन्तुमिहाभ्येति भरतः केकयीसुतः ॥ १५ ॥
असौ च सुमहास्कन्धो विटपी सुमहाद्रुमः ।
विराजति गजस्कन्धे कोविदारध्वजो यथा ॥ १६ ॥
भवन्तीव यथाकाममश्वा वाजियुजा द्रुताः ।
गृहीतधनुषश्चामी योधाः सज्जो भवानघ ॥ १७ ॥
अथवा त्वं गिरिगुहां सभार्यः प्रविश स्वयं ।
अस्मान् हन्तुं समायातः कोविदारध्वजो रणे ॥ १८ ॥
एते राजन्ति संहृष्टा हयानारुह्य सादिनः ।
समन्तात् परियातोऽसि राम शैलमुपाश्रय ॥ १९ ॥

अपि पश्येयमद्याहं भरतं यत्कृते महत्।
राघव त्वमिदं प्राप्तो दुःखं वै सहितो मया ॥ २० ॥
यन्निमित्तं भवान् राज्याच्च्युतो राघव शाश्वतात्।
संप्राप्तोऽयमरिः पापो भरतो बाणगोचरं ॥ २१ ॥
भरतस्य बधे दोषं नाहं पश्यामि राघव।
एतस्मिन् निहतेऽद्य त्वमनुशाधि वसुंधरां ॥ २२ ॥
अद्य पुत्रं हतं संख्ये कैकेयी राज्यकामिनी।
मया पश्यतु दुःखार्ता हस्तिभग्नमिव द्रुमं ॥ २३ ॥
कैकेयीं च हनिष्यामि सानुबन्धां सबान्धवां।
कलुषेणाद्य महता मेदिनी परिमुच्यतां ॥ २४ ॥
अद्येमं संयतं क्रोधमसत्कारं च मानद।
प्रतिमोक्ष्यामि योधेषु कक्षेष्विव हुताशनं ॥ २५ ॥
अद्येदं चित्रकूटस्य काननं निशितैः शरैः।
छिन्नशत्रुशरीराणां करिष्ये शोणितोदकं ॥ २६ ॥
शरैर्निर्भिन्नहृदयाः कुञ्जरास्तुरगास्तथा।
श्वापदैः परिकृष्यन्तां नराश्च निहता मया ॥ २७ ॥
शराणां धनुषश्चाहमनृणोऽद्य महारणे।
ससैन्यं भरतं हत्वा भवेयं नात्र संशयः ॥ २८ ॥
प्रमथितहयनागां स्यन्दनोत्क्षिप्तचक्रां।
विमथितनरगात्रां शोणितार्द्रां नरेश ॥ २९ ॥

भरतनृपचमूं त्वं द्रक्ष्यसीमां शयानां ।
मृगखगवृकभुक्तामद्य मद्बाणभिन्नां ॥३०॥

इत्यार्षे रामायणे अयोध्याकाण्डे लक्ष्मणक्रोधो
नाम षट्शततमः सर्गः ॥

## CVII.

असंक्रुद्धस्तु सौमित्रिं लक्ष्मणं क्रोधमूर्छितं ।
रामः संशमयामास वचनं चेदमब्रवीत् ॥ १ ॥
विप्रियं कृतपूर्वं ते भरतेन कदा नु किं ।
अनिष्टं भरतात् किन्नु येन त्वं हन्तुमिच्छसि ॥ २ ॥
किमत्र धनुषा कार्यमसिना वा सचर्मणा ।
महेष्वासे महाप्राज्ञे भ्रातरि स्वयमागते ॥ ३ ॥
प्राप्तकालोपदेशोऽस्मान् भरतो द्रष्टुमिच्छति ।
अस्मासु मनसाप्येष नाहितं कर्तुमाचरेत् ॥ ४ ॥
न च ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः ।
अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥ ५ ॥
कथं नु पुत्रः पितरं हन्यात् कस्याञ्चिदापदि ।
भ्राता वा भ्रातरं हन्यात् सौमित्रे प्रियमात्मनः ॥ ६ ॥
यदि राज्यस्य हेतोस्त्वमिमा वाचः प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयतां ॥ ७ ॥
उच्यमानो हि भरतो मया लक्ष्मण तत्त्वतः ।
राज्यमस्मै प्रयच्छेति बाढमित्येव वक्ष्यति ॥ ८ ॥
तथोक्तो धर्मशीलेन तेन सत्यहितेन सः ।
लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ ९ ॥

तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्युवाच ह ।
त्वां मन्ये द्रष्टुमायातो भ्राता ते भरतः स्वयं ॥ १० ॥
व्रीडितं लक्ष्मणं दृष्ट्वा राघवः प्रत्युवाच ह ।
एवं मन्ये महाबाहुरस्मान् द्रष्टुमुपागतः ॥ ११ ॥
इमां वाप्येष वैदेहीमेकान्तसुखलालितां ।
वनवासमनुध्याय गृहं नेतुमिहागतः ॥ १२ ॥
एतौ तौ संप्रकाशेते गोत्रवन्तौ महाबलौ ।
वायुवेगसमौ घोरावग्रगौ नृपतेर्हयौ ॥ १३ ॥
एष चैव महाकायो राजते वाहिनीमुखे ।
नागः शत्रुञ्जयो नाम वृद्धस्तातस्य धीमतः ॥ १४ ॥
इति संभाषमाणस्तु रामः सौमित्रिणा सह ।
तां चमूं हर्षसंपूर्णां ददर्श सह सीतया ॥ १५ ॥
अवतीर्य च सालाग्राल्लक्ष्मणो लज्जयान्वितः ।
रामस्य पार्श्वमागम्य वीरस्तस्थावधोमुखः ॥ १६ ॥
भरतेनाथ संदिष्टा संमर्दो मा भवेदिति ।
समन्तात् तस्य देशस्य सेना वासमकल्पयत् ॥ १७ ॥
अध्यर्धमिक्ष्वाकुचमूर्योजनं पर्वतस्य सा ।
आवृत्यावासितारण्ये गजवाजिसमाकुला ॥ १८ ॥
निवेश्य सेनां भरतः पद्भ्यां पादवतां वरः ।
अभिगन्तुं स काकुत्स्थमियेष गुरुवर्तकः ॥ १९ ॥

सा चित्रकूटे भरतेन सेना
धर्मं पुरस्कृत्य विहाय दर्पं ।
प्रसादनार्थाय तदाग्रजस्य
विरोचते नीतिमता प्रणीता ।। २० ।।

इत्यार्षे रामायणे अयोध्याकाण्डे सालाधिरोहणं
नाम सप्तशततमः सर्गः ।।

# अयोध्याकाण्डं

## CVIII.

निविष्टायां तु सेनायामुत्सुको भरतस्तदा ।
जगाम भ्रातरं द्रष्टुं शत्रुघ्नसहितो विभुः ॥ १ ॥
ऋषिं वशिष्ठं संदिश्य मातॄर्मे शीघ्रमानय ।
इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥
सुमन्त्रस्त्वथ शत्रुघ्नं स वेगेनान्वपद्यत ।
रामदर्शनजो हर्षो भरतस्येव तस्य हि ॥ ३ ॥
पृच्छन्नेवाथ भरतस्तापसानालयस्थितान् ।
ददर्श च वने तस्मिन् महतः संचयान् कृतान् ॥ ४ ॥
मृगाणां महिषाणां च करीषानग्निकारणात् ।
गच्छन्नेव महाबाहुर्द्युतिमान् पुरुषर्षभः ॥ ५ ॥
अमात्यानब्रवीत् सर्वान् भरतः सत्कृतान् पितुः ।
मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ६ ॥
नातिदूरमहं मन्ये नदीं मन्दाकिनीमितः ।
इदं फलानां संश्लिष्टं पुष्पाण्यवचितानि च ॥ ७ ॥
काष्ठानि परिभग्नानि मूलान्यावेष्टितानि च ।
उच्चैर्बद्धानि चीराणि लक्ष्मणेन तथा ध्रुवं ॥ ८ ॥
अभिज्ञानाङ्कितः पन्था विकालेऽश्रममीयुषां ।
इदं पाण्डरदन्तानां कुञ्जराणां तरस्विनां ॥ ९ ॥

शैलपार्श्वे परिक्रान्तमन्योन्यमभिगर्जतां ।
यमप्याधातुमिच्छन्ति तापसाः सततं वने ॥१०॥
तस्यासौ दृश्यते धूमः संकुलः कृष्णवर्त्मनः ।
अहं तं पुरुषव्याघ्रं पितुः संदेशकारिणं ॥११॥
अद्य द्रक्ष्यामि काकुत्स्थं महर्षिसमदर्शनं ।
अथ गत्वा मुहूर्तं तु चित्रकूटं समन्ततः ॥१२॥
मन्दाकिनीमनुप्राप्तस्तं जनं वाक्यमब्रवीत् ।
जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः ॥१३॥
नरेन्द्रो निर्जनं प्राप्तो धिङ्मे जन्म सजीवितं ।
मत्कृते व्यसनं प्राप्तो लोकपालोपमो वशी ॥१४॥
सर्वान् कामान् परित्यज्य वने वसति राघवः ।
इति लोकवरिष्ठस्य पादयोः संप्रसादयन् ॥१५॥
रामस्य निपतिष्यामि सीतायाश्च पुनः पुनः ।
एवं लालप्यमानः स वने दशरथात्मजः ॥१६॥
ददर्श महतीं पुण्यां पर्णशालां मनोरमां ।
सालतालाश्वकर्णानां पर्णैर्बहुभिरावृतां ॥१७॥
विशालामूर्ध्वविस्तारां दर्भैर्वेदिमिवाध्वरे ।
शक्रायुधनिकाशाभ्यां कार्मुकाभ्यां विभूषितां ॥१८॥
वृहद्भ्यां रुक्मपृष्ठाभ्यां नागाभ्यामिव चावृतां ।
अर्करश्मिप्रतीकाशैर्घोरैस्तूणगतैः शरैः ॥१९॥

शोभितां दीप्तवदनैः सर्पैर्भोगवतीमिव ।
महारजतकक्षाभ्यामसिभ्यां च विराजितां ॥ २० ॥
रुक्मविन्दुविचित्राभ्यां चर्मभ्यां चापि शोभितां ।
गोधाङ्गुलित्रैरासक्तैश्चित्रैः कनकभूषितैः ॥ २१ ॥
अरिसंघैरनाधृष्यां मृगैः सिंहगुहामिव ।
प्रागुदक्प्रवणे देशे वेदीं संदीप्तपावकां ॥ २२ ॥
ददर्श भरतस्तत्र पुण्यां रामनिवेशने ।
स विलोक्य मुहूर्तं तु ददर्श भरतो गुरुं ॥ २३ ॥
उटजे राममासीनं जटावल्कलधारिणं ।
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणं ॥ २४ ॥
पृथिव्याः सागरान्ताया गोप्तारं धर्मचारिणं ।
महात्मानं महाभागं ब्रह्माणमिव शाश्वतं ॥ २५ ॥
सहोपविष्टमासीनं सीतया लक्ष्मणेन च ।
तं दृष्ट्वा भरतः श्रीमान् दुःखशोकपरिप्लुतः ॥ २६ ॥
अभ्यधावत धर्मात्मा भ्रातरं कैकयीसुतः ।
दृष्ट्वा च विललापार्तो वाष्पसंदिग्धया गिरा ॥ २७ ॥
अशक्नुवन् धारयितुं धैर्यं वचनमब्रवीत् ।
यो हस्त्यश्वरथैः पूर्वं सर्वतः परिवार्यते ॥ २८ ॥
लोकैरन्योन्यसंबाधैर्यो द्रष्टुं च न शक्यते ।
वन्यैर्मृगैः परिवृतः सोऽयमास्ते ममाग्रजः ॥ २९ ॥

यस्य यज्ञैर्यथोद्दिष्टैर्युक्तो धर्मस्य संचयः ।
शरीरक्लेशसंभूतं स धर्मं परिमार्गति ॥ ३० ॥
चन्दनेन महार्हेण यस्याङ्गमुपलेपितं ।
मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते ॥ ३१ ॥
वासोभिर्बहुसाहस्रैर्यो वै निवसितः पुरा ।
धृताजिनः सोऽयमिह प्रसुप्तो जगतीतले ॥ ३२ ॥
अधारयद्यो विविधाश्चित्राः सुमनसः स्रजः ।
सोऽयं जटाभारमिमं सहते राघवः कथं ॥ ३३ ॥
मन्निमित्तमिदं प्राप्तो दुःखं रामः सुखोचितः ।
धिग्जीवितं नृशंसस्य मम लोके विगर्हितं ॥ ३४ ॥
इत्यसौ विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावुपेत्य रामस्य प्रापतद्भरतो रुदन् ॥ ३५ ॥
दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वार्येति सकृद्दीनः पुनर्नोवाच किंचन ॥ ३६ ॥
बाष्पापिहितकण्ठो हि रामं प्रेक्ष्य यशस्विनं ।
आर्येत्येवं समाभाष्य व्याहर्तुं नाशकत् तदा ॥ ३७ ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ च समालिङ्ग्य रामोऽप्यश्रूण्यवर्तयत् ॥ ३८ ॥
ततः सुमन्त्रेण च तेन चैव
समीयतू राजसुतावरण्ये ।

दिवाकरश्चैव निशाकरश्च
यथाम्बरे शुक्रबृहस्पतिभ्यां ॥ ३९ ॥
तान् पार्थिवान् वारणयूथकल्पान्
समागतांस्तत्र महत्यरण्ये ।
वनौकसः प्रेक्ष्य समेत्य सर्वे
कृपागृहीता रुरुदुस्तदानीं ॥ ४० ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतसमागमो
नाम अष्टशततमः सर्गः ॥

## CIX.

आघ्राय तु स तं मूर्ध्नि परिष्वज्य च राघवः ।
अङ्के भरतमारोप्य पर्यपृच्छत् समाहितः ॥ १ ॥
क्व नु तात पिता तेऽभूद्यदरण्यं त्वमागतः ।
न हि त्वं जीवतस्तस्य गुरोरागन्तुमर्हसि ॥ २ ॥
चिरस्य बत पश्यामि दूराद्भरतमागतं ।
दुष्प्रणीतमरण्येऽस्मिन् किं तात वनमागतः ॥ ३ ॥
कच्चिद्दशरथो राजा कुशली सत्यसङ्गरः ।
राजसूयाश्वमेधानामाहर्ता धर्मतत्त्ववित् ॥ ४ ॥
स कच्चिद्ब्राह्मणो विद्वान् धर्मनित्यस्तपोधनः ।
इक्ष्वाकूणामुपाध्यायो यथावत् तात पूज्यते ॥ ५ ॥
तात कच्चिच्च कौशल्या सुमित्रा च यशस्विनी ।
सुखिता कच्चिदार्या च देवी नन्दति कैकयी ॥ ६ ॥
कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्राप्तः सत्कृतश्च पुरोहितः ॥ ७ ॥
कच्चिदग्निषु ते युक्तो ब्राह्मणो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥ ८ ॥
इष्वस्त्रे परमाचार्यमस्त्रशास्त्रविशारदं ।
सुधन्वानमुपाध्यायं कच्चित् त्वं नावमन्यसे ॥ ९ ॥

## अयोध्याकाण्डं

कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः ।
कृतज्ञाश्चेङ्गितज्ञाश्च भक्तास्ते तात मन्त्रिणः ॥ १० ॥
मन्त्रमूलो हि विजयो राज्ञो भवति राघव ।
सुसंवृतो मन्त्रिवरैरमात्यैर्धर्मकोविदैः ॥ ११ ॥
कच्चिन्निद्रावशं नैषि कच्चित् काले विबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥ १२ ॥
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित् ते मन्त्रितो मन्त्रो न राष्ट्रमनुधावति ॥ १३ ॥
कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयं ।
क्षिप्रमारभसे कर्तुं न दीर्घयसि राघव ॥ १४ ॥
कच्चिन्न क्रियमाणानि कृतप्रायाणि वा पुनः ।
विदुस्ते सर्वकार्याणि कर्तव्यानि नरेश्वराः ॥ १५ ॥
कच्चिन्न तर्कयुक्ता वा ये चाप्यपरितर्किताः ।
त्वया वा तव वामात्यैर्बाध्यन्ते तात मानवाः ॥ १६ ॥
कच्चिन्मूर्खसहस्रेण एकं क्रीणासि पण्डितं ।
पण्डितो ह्यर्थकृच्छ्रेषु ब्रूयान्निःश्रेयसं वचः ॥ १७ ॥
सहस्रैरपि मूर्खाणां यो नृपः पर्युपास्यते ।
तथैवाप्ययुतैस्तस्य नास्ति तेषु सहायता ॥ १८ ॥
एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियं ॥ १९ ॥

कच्चिन्मुख्याश्च मुख्येषु मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्यास्तात नियोजिताः ॥ २० ॥
कच्चित् कृषिकरैस्तात सुनिविष्टो जनाकुलः ।
देवस्थानैः प्रपाभिश्च तडागैश्चोपशोभितः ॥ २१ ॥
प्रहृष्टनरनारीकः समाजोत्सवभूषितः ।
सुकृष्टसीमः पशुमान् विहिंसापरिवर्जितः ॥ २२ ॥
अदेवमातृकः कच्चित् श्वापदैश्च विवर्जितः ।
कच्चिज्जनपदः स्फीतः सुखं वसति राघव ॥ २३ ॥
कच्चित् ते निरता वैश्याः कृषिगोरक्षकर्मसु ।
वार्त्तायां संस्थितस्तात लोको हि कृषिजीवनः ॥ २४ ॥
तेषां गुप्तिपरीहारैः कच्चित् ते धारणा कृता ।
रक्ष्या हि राजधर्मेण सर्वे विषयवासिनः ॥ २५ ॥
कच्चित् स्त्रियः सान्त्वयसि कच्चित् ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ २६ ॥
कच्चिन्नागबलं गुप्तं कैकेयीसुप्रजास्त्वया ।
कच्चिदुन्नतदन्तानां कुञ्जराणां न तृप्यसे ॥ २७ ॥
कच्चित् संग्रामनीतिज्ञः शूरस्ते वाहिनीपतिः ।
असंहार्योऽनुरक्तश्च हिते नित्यं च तिष्ठति ॥ २८ ॥
कच्चिन्नु लौकायतिकान् ब्राह्मणानुपसेवसे ।
अनर्थकुशला ह्येते मूढाः पण्डितमानिनः ॥ २९ ॥

शास्त्रेष्वन्येषु मुख्येषु विद्यमानेषु दुर्विधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थान् प्रवदन्ति ते ॥ ३० ॥
कच्चित् पितरि संवृत्तिं वर्तसे पुरुषर्षभ ।
पितामहानामपिवा वर्तसे तुल्यगौरवः ॥ ३१ ॥
अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् ।
श्रेष्ठान् श्रेष्ठेषु कच्चित् त्वं नियोजयसि कर्मसु ॥ ३२ ॥
कच्चिद्द्रव्यं तथा भोज्यमेको नाश्नासि राघव ।
कच्चिदाशं समानेभ्यो भृत्येभ्यः संप्रयच्छसि ॥ ३३ ॥
कच्चिदश्वांश्च नागांश्च भोजयन्ति तवाग्रतः ।
शस्त्रकर्मकृतो वैद्या दक्षाः कुशलसंमताः ॥ ३४ ॥
कच्चित् ते वाहनं गुप्तं प्रसृताः प्रवहन्ति च ।
कच्चिन्न राष्ट्रे वर्तन्ते परिवित्तापहारिणः ॥ ३५ ॥
कच्चित् त्वां नावजानन्ति याजकाः पतितं यथा ।
उग्रं प्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ ३६ ॥
ये बालिशा ये च दक्षा ये मूढा ये च पण्डिताः ।
दृष्टान्तं जीवितं येषां कच्चित् ते ते सुरक्षिताः ॥ ३७ ॥
उपायकुशलं वैद्यं भृत्यं संभाषणे रतं ।
शूरमैश्वर्यकामं च यो ऽवजानाति वध्यते ॥ ३८ ॥
कच्चिच्च बलिनो मुख्याः सर्वयुद्धविशारदाः ।
दृष्टावदाना विक्रान्ताः स्वयं सत्कृत्य मानिताः ॥ ३९ ॥

कच्चिद्धृष्टश्च शूरश्च धृतिमान् मतिमान् शुचिः ।
कुलीनश्चाप्रमत्तश्च दक्षः सेनापतिस्तव ॥ ४० ॥
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितं ।
संप्राप्तकालं दातव्यं ददासि न विकर्षसि ॥ ४१ ॥
कालातिक्रमणादेव भक्तवेतनयोर्भृताः ।
भर्तुरप्यपकुर्वन्ति सोऽनर्थः सुमहान् भवेत् ॥ ४२ ॥
कच्चित् पूर्वानुरक्तास्ते कुलपुत्राः प्रधानतः ।
आहवेषु प्रियान् प्राणान् संत्यजन्ति समाहिताः ॥ ४३ ॥
कच्चिज्जानपदो विद्वानक्लीबः प्रतिभानवान् ।
यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥ ४४ ॥
कच्चिदष्टादशान्येषु स्वपक्षे दशपञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ४५ ॥
कच्चित् त्वं द्विषतामर्थः प्रतिपन्नश्च सर्वशः ।
सुदुर्बलांश्च धारयन् वर्तसे रिपुसूदन ॥ ४६ ॥
धीरैरध्युषितां पूर्वमस्माकमिह पूर्वजैः ।
सत्यनामां दृढद्वारां हस्त्यश्वरथसंकुलां ॥ ४७ ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैस्तात स्वकर्मसु ।
जितेन्द्रियैर्महोत्साहैर्वृतां चाढ्यैः सहस्रदैः ॥ ४८ ॥
प्रासादैर्विविधाकारैर्वृतां दिव्यैरलंकृतैः ।
कच्चित् प्रमुदितां स्फीतामयोध्यां परिरक्षसि ॥ ४९ ॥

कच्चिन्मनुजशार्दूल मनुष्यान् समलंकृतान् ।
उत्थायोत्थाय पूर्वाह्णे राजपुत्राभिवीक्षसे ॥५०॥
कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्किताः ।
सर्वे वा पुनरुत्सृष्टा व्यामिश्रं यत्र कारणं ॥५१॥
कच्चित् सदा ते दुर्गानि धनधान्योदकायुधैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥५२॥
आयस्ते विपुलः कच्चित् कच्चिदल्पतरो व्ययः ।
अपात्रेषु न ते कच्चित् कोषो गच्छति पार्थिव ॥५३॥
देवतार्थेषु पितृषु ब्राह्मणाभ्यागमेषु च ।
योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥५४॥
कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणा ।
अदृष्टः शास्त्रकुशलैर्नापध्यायति मानवः ॥५५॥
गृहीतपृष्टश्चारक्षैः कुशलैर्दृष्टकारणः ।
कच्चिन्न मुच्यते चौरो धनलोभान्नरर्षभ ॥५६॥
कच्चिद्विवदतोऽर्थेषु बलिनो दुर्बलस्य च ।
अपक्षपातात् पश्यन्ति कार्येष्वधिकृता नराः ॥५७॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदतां ।
तानि पुत्र पशून् घ्नन्ति तेषां मिथ्याभिशंसिनां ॥५८॥
कच्चिद्वृद्धांश्च बालांश्च मुख्यान् वैद्यान् ससोमपान् ।
दानेन वचसा साम्ना त्रिभिरर्चयसेऽनघ ॥५९॥

कच्चिद्गुरूंश्च वृद्धांश्च तापसान् देवतातिथीन् ।
पूज्यांश्च सर्वान् सिद्धार्थान् ब्राह्मणांश्च नमस्यसि ॥ ६० ॥
कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः ।
उभौ वा प्रीतिसारेण कामेन न विबाधसे ॥ ६१ ॥
कच्चिदर्थं च धर्मं च कामं च वदतां वर ।
विभज्य कालं कालज्ञः सर्वान् वरद सेवसे ॥ ६२ ॥
कच्चित् ते ब्राह्मणाः सर्वे सर्वशास्त्रार्थकोविदाः ।
न शोचन्ति महाप्रज्ञाः पौरजानपदैः सह ॥ ६३ ॥
नास्तिक्यमनृतं क्रोधः प्रमादो दीर्घसूत्रता ।
अदर्शनं ज्ञानवतामालस्यं पापवृत्तिता ॥ ६४ ॥
एकचिन्तनमर्थानां बहुभिर्निर्नित्यमन्त्रणं ।
निश्चितानामनारम्भो मन्त्रस्यापरिपालनं ॥ ६५ ॥
कच्चित् ते नोपपद्यन्ते दोषा द्वादश राघव ।
यैराविष्टो महीं क्षिप्रं नाशयेज्जगतीपतिः ॥ ६६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कच्चित्सर्गो नाम
नवशततमः सर्गः ॥

## CX.

तथा चैवानुपृच्छन्तं रामं व्यथितचेतनः ।
अज्ञापयद्दुःशार्तोऽसौ भरतो मरणं पितुः ॥ १ ॥
आर्य राज्यं परित्यज्य कृत्वा कर्म सुदुष्करं ।
गतः स्वर्गं महाराजः पुत्रशोकाभिपीडितः ॥ २ ॥

त्वामेव शोचंस्तव दर्शनेप्सुस्
त्वय्येव सक्तामनिवार्य बुद्धिं ।
त्वया विहीनस्तव शोकदग्धस्
त्वदर्थमेवास्तमितः पिता नः ॥ ३ ॥
पूर्वं तु रामस्तमिहानुयुज्य
श्रुत्वा च वाक्यं भरतस्य तस्य ।
चिकीर्षमाणो रघुनन्दनस्तां
पितुः प्रतिज्ञां स बभूव तूष्णीं ॥ ४ ॥

[लक्ष्मण उवाच]

दुष्टां स्त्रीबुद्धिमास्थाय कैकेयी राज्यकामिनी ।
चकार सुमहत् पापमिदमम्बा यशोहरं ॥ ५ ॥
सा राज्यफलमप्राप्य विधवा शोककर्षिता ।
पतिष्यति महाघोरं निरयं जननी मम ॥ ६ ॥
तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ।

अभिषिच्यस्व चानेन राज्येन मघवानिव ॥७॥
इमाः प्रकृतयः सर्वा विधवा मातरश्च मे ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥८॥
त्वमानुपूर्व्या युक्तश्च युक्तं कामेन मानद ।
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥९॥
भवत्वविधवा भूमिस्त्वया पत्या समन्विता ।
शशिना विमलेनेव शारदी रजनी यथा ॥१०॥
एभिश्च सचिवैः सार्धं शिरसा याचितो मया ।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥११॥
तदिदं शाश्वतं सर्वं पित्रा सचिवमण्डलं ।
पूजितं मनुजव्याघ्र नातिक्रमितुमर्हसि ॥१२॥
एवमुक्त्वा महाबाहुः सबाष्पः केकयीसुतः ।
रामस्य शिरसा पादौ जग्राह भरतस्तदा ॥१३॥
तमार्तमिव मातङ्गं निःश्वसन्तं मुहुर्मुहुः ।
भरतं भ्रातरं रामः परिष्वज्येदमब्रवीत् ॥१४॥
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं पापमाचरेन्मद्विधो जनः ॥१५॥
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ।
न चापि जननीं बाल्यात् त्वं विगर्हितुमर्हसि ॥१६॥
यावत् पितरि धर्मज्ञे गौरवं मम मानद ।

तावदेव जनन्यां मे कैकेय्यामपि गौरवं ॥ १७ ॥
स ताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ।
मातापितृभ्यामुक्तः सन् कथं कुर्यामतोऽन्यथा ॥ १८ ॥
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतं ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ १९ ॥
एवं कृत्वा महाभागो विभागं लोकसंनिधौ ।
व्यादिश्य चैव धर्मात्मा दिवं दशरथो गतः ॥ २० ॥
स चेत् प्रमाणं राजेन्द्रो राजा लोकगुरुस्तव ।
पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २१ ॥
चतुर्दश समाः सौम्य दण्डकारण्यमाश्रितः ।
उपभोक्ष्ये यथा दत्तं भागं पित्रा महात्मना ॥ २२ ॥
यदब्रवीन्मां सुरलोकसत्कृतः
पिता महात्मा विबुधोपमो नृपः ।
तदेव मन्ये परमात्मनो हितं
न सर्वलोकेश्वरतां हि सत्कृतां ॥ २३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामप्रश्नो
नाम दशशततमः सर्गः ॥

CXI.

रामस्य तु वचः श्रुत्वा भरतः प्रत्युवाच ह ।
किं मे धर्माद्विहीनस्य राजवृत्तं भविष्यति ॥ १ ॥
शाश्वतोऽयं सदा धर्मः स्थितोऽस्माकं नरर्षभ ।
ज्येष्ठे त्वयि स्थिते रामे कनीयान् न भवेन्नृपः ॥ २ ॥
सुसमृद्धजनां रम्यामयोध्यां गच्छ राघव ।
अभिषेचय चात्मानं कुलस्यास्य भवान् प्रभुः ॥ ३ ॥
राजानं मानुषं चाहुर्देवस्त्वं संमतो मम ।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषं ॥ ४ ॥
केकयस्थे मयि श्रीमांस्त्वयि चारण्यमाश्रिते ।
दिवं यातो महाराजः पिता नः संमतः सतां ॥ ५ ॥
उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ६ ॥
प्रियेण किल दत्तं हि पितृलोकेषु राघव ।
अक्षयं भवतीत्याहुर्भवांश्चातिप्रियः सुतः ॥ ७ ॥
तां श्रुत्वा करुणां वाचं पितुर्मरणसंहितां ।
राघवो भरतेनोक्तां बभूव गतचेतनः ॥ ८ ॥
तं तु वज्रमिवोत्सृष्टमाहवे दानवारिणा ।
वाग्वज्रं भरतेनोक्तममनोज्ञं निशम्य तु ॥ ९ ॥

प्रगृह्य बाहू रामो ऽथ पुष्पिताग्रो द्रुमो यथा ।
वने परशुना कृत्तस्तथा भूमौ पपात सः ॥ १० ॥
तथा हि पतितं रामं जगत्यां जगतीपतिं ।
कूलपातपरिश्रान्तं प्रसुप्तमिव कुञ्जरं ॥ ११ ॥
भ्रातरस्तं महेष्वासं द्विगुणं शोककर्षिताः ।
रुदन्तः सह वैदेह्या सिषिचुर्नेत्रवारिणा ॥ १२ ॥
स तु संज्ञां पुनर्लब्ध्वा नेत्राभ्यां वाष्पमुत्सृजन् ।
उवाच भरतं वाक्यं ताते दिष्टान्तमागते ॥ १३ ॥
किन्नु तस्य मया कार्यं दुर्जातेन महात्मनः ।
यो मृतो मम शोकेन मया च न स सत्कृतः ॥ १४ ॥
अहो भरत सिद्धार्थो येन राजा त्वयानघ ।
शत्रुघ्नेन च सर्वेषु प्रेतकार्येषु सत्कृतः ॥ १५ ॥
निष्प्रधानामनेकाग्रां हीनां नृपवरेण तां ।
निवृत्तवनवासो ऽपि नायोध्यां गन्तुमुत्सहे ॥ १६ ॥
संपूर्णवनवासं मामयोध्यायां परंतप ।
कः प्रशासिष्यति पुनस्ताते लोकान्तरं गते ॥ १७ ॥
पुरा प्रोष्य निवृत्तं मां पिता यान्याह सान्त्वयन् ।
कुतः श्रोष्यामि वाक्यानि तानि कर्णसुखान्यहं ॥ १८ ॥
एवमुक्त्वा तु भरतं भार्यामभ्येत्य राघवः ।
उवाच शोकसंतप्तः पूर्णचन्द्रनिभाननां ॥ १९ ॥

सीते मृतस्ते श्वशुरः पित्रा हीनः स लक्ष्मणः ।
भरतो दुःखमाचष्टे स्वर्गतं पृथिवीपतिं ॥ २० ॥
जानकी श्वशुरं श्रुत्वा सर्वलोकगुरुं मृतं ।
नेत्राभ्यामश्रुपूर्णाभ्यां न शशाक निरीक्षितुं ॥ २१ ॥
ततो बहुगुणस्तेषां वाष्पो नेत्रेष्वजायत ।
तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनां ॥ २२ ॥
ततस्ते भ्रातरः सर्वे आर्तमाश्वास्य राघवं ।
अब्रुवन् जगतीपालं वाष्पसंदिग्धया गिरा ॥ २३ ॥
उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ २४ ॥
स रामः संपरिष्वज्य रुदतीं जनकात्मजां ।
उवाच लक्ष्मणं प्रेक्ष्य दुःखार्तो दुःखितं वचः ॥ २५ ॥
आनयेङ्गुदपिण्याकं चीरं च वसनोत्तमं ।
जलक्रियार्थं तातस्य गमिष्यामि परंतप ॥ २६ ॥
सीता पुरस्ताद्व्रजतु त्वमेनामभितो व्रज ।
अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥ २७ ॥
ततो नित्यानुगस्तेषां विदितात्मा महीपतेः ।
मृदुः क्षान्तश्च दान्तश्च रामे च दृढभक्तिमान् ॥ २८ ॥
सुमन्त्रस्तैर्नृपसुतैः सार्धमाश्वास्य राघवं ।
अवातारयदालम्ब्य नदीं मन्दाकिनीं ततः ॥ २९ ॥

ते सुतीर्थां नदीं कृच्छ्रादुपागम्य यशस्विनः ।
पुण्यां मन्दाकिनीं रम्यां बहुपुष्पितकाननां ॥ ३० ॥
शीततोयां समे देशे विगाह्य विमलां शुभां ।
असिञ्चन्नुदकं सर्वे तस्मै ह्येतद्भवेदिति ॥ ३१ ॥
प्रगृह्य च रघुश्रेष्ठो जलपूरितमञ्जलिं ।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत् ॥ ३२ ॥
एतत् ते नृपशार्दूल विमलं तोयमुत्तमं ।
पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठतु ॥ ३३ ॥
ततो मन्दाकिनीतीरे शुचौ देशे नराधिपः ।
पितुर्न्यवर्तयच्छ्रीमान् निवापं भ्रातृभिः सह ॥ ३४ ॥
ऐङ्गुदं बदरोन्मिश्रं पिण्याकं दर्भसंस्तरे ।
न्युप्य रामः सुदुःखार्त इदं वचनमब्रवीत् ॥ ३५ ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयं ।
यदन्नः पुरुषो नूनं तदन्नाः पितृदेवताः ॥ ३६ ॥
ततस्तेनैव मार्गेण प्रत्युत्तीर्य नराधिपः ।
आरुरोह नरव्याघ्रो रम्यसानुं महीधरं ॥ ३७ ॥
ततः पर्णकुटीद्वारमागत्य जगतीपतिः ।
परिजग्राह पाणिभ्यामुभौ भरतलक्ष्मणौ ॥ ३८ ॥
तेषां तु रुदतां शब्दः खमावृत्य समन्ततः ।
भ्रातृणां सह वैदेह्या सिंहनादसमोऽभवत् ॥ ३९ ॥

महाबलानां रुदतां कुर्वतामुदकं पितुः ।
विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ४० ॥
अब्रुवंश्चापि रामेण भरतः संगतो ध्रुवं ।
तेषामेष महान् नदः शोचतां पितरं मृतं ॥ ४१ ॥
अथ वासं परित्यज्य सर्वे तेऽभिमुखाः स्वयं ।
अप्येकतः समागम्य यथासन्नं प्रधाविताः ॥ ४२ ॥
अचिरप्रोषितं रामं चिरविप्रोषितं यथा ।
द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमं ॥ ४३ ॥
भ्रातॄणां त्वरितास्ते तु द्रष्टुकामाः समागमं ।
ययुर्बहुविधैर्यानैस्त्वराविष्टाः समाकुलाः ॥ ४४ ॥
अश्वैरन्ये गजैरन्ये रथैरन्ये स्वलंकृताः ।
सुकुमारास्तथैवान्ये पद्भ्यामेव प्रदुद्रुवुः ॥ ४५ ॥
सा भूमिर्बहुभिर्यानैः खुरनेमिस्वनेन च ।
मुमोच तुमुलं शब्दं द्यौरिवाभ्रसमागमे ॥ ४६ ॥
तेन वित्रासिता नागाः करेणुपरिवारिताः ।
असहन्तोऽतुलं शब्दं जग्मुरन्यद्वनं प्रति ॥ ४७ ॥
वराहमृगसंघाश्च महिषाश्च वने चराः ।
व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥ ४८ ॥
रथाङ्गसंज्ञा दात्यूहा हंसकारण्डवाः प्लवाः ।
तथा पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः ॥ ४९ ॥

तेन शब्देन वित्रस्तैराकाशं पक्षिभिर्वृतं ।
मानुषैरावृता भूमिरुभयं प्रबभौ तदा ॥५०॥
तान् नरान् बाष्पपूर्णाक्षान् समीक्ष्य च सुदुःखितान् ।
पर्यष्वजत धर्मज्ञः पितृवन्मातृवच्च सः ॥५१॥

स तत्र कांश्चित् परिषस्वजे नरान्
नराश्च तं केचिदथाभ्यवादयन् ।
चकार सर्वैरपि संविदं तदा
यथार्हमानैः पुरुषैर्नृपात्मजः ॥५२॥
तथा च तेषां रुदतां महात्मनां
दिवं च खं चानुननाद निस्वनः ।
तथा गुहाश्चैव दिशश्च नादयन्
महाभ्रनादप्रतिमः स शुश्रुवे ॥५३॥

इत्यार्षे रामायणे अयोध्याकाण्डे उदकदानं नाम
एकादशशततमः सर्गः ॥

## CXII.

वशिष्ठः पुरतः कृत्वा दारान् दशरथस्य सः ।
अभिचक्राम तं देशं रामदर्शनकाङ्क्षया ॥ १ ॥
राजपत्न्यस्तु गच्छन्त्यो नदीं मन्दाकिनीं प्रति ।
ददृशुस्तत्र तास्तीर्थं रामलक्ष्मणसेवितं ॥ २ ॥
कौशल्या वाष्पपूर्णेन मुखेन परिशुष्यता ।
सुमित्रां चाब्रवीद्दीनां याश्चान्या राजयोषितः ॥ ३ ॥
इदं तेषामनाथानां शुभमक्लिष्टकर्मणां ।
वने प्राक् केवलं तीर्थं ये ते निर्विषयीकृताः ॥ ४ ॥
इतः सुमित्रे रामार्थं जलमादाय वीर्यवान् ।
सदा गच्छति सौमित्रिर्मम पुत्रस्य कारणात् ॥ ५ ॥
दुष्करं कुरुते पुत्रः सुमित्रे तव धार्मिकः ।
शुश्रूषतेऽनुरागेण यो ज्येष्ठं भ्रातरं वने ॥ ६ ॥
स्त्रीप्रधानेन यः पित्रा त्यक्तो निरपराधवान् ।
दुष्टश्वापदजुष्टेषु वनेषु सह सीतया ॥ ७ ॥
एवं विलपमाना सा कौशल्या वाष्पविक्लवा ।
ददर्शेङ्गुदपिण्याकैर्निर्वापं पुलिने कृतं ॥ ८ ॥
दक्षिणाग्रेषु दर्भेषु सपुष्पेषु निवेशितं ।
उपहारं पितुर्दत्तं भर्तुरायतलोचना ॥ ९ ॥

सा तमिङ्गुदपिण्याकं दृष्ट्वा द्विगुणदुःखिता ।
उवाच देवी कौशल्या सर्वा दशरथस्त्रियः ॥ १० ॥
इदमिक्ष्वाकुनाथेन राघवेण महात्मना ।
पितुरिक्ष्वाकुनाथस्य न्युप्तं पश्यत यादृशं ॥ ११ ॥
तस्य देवसमस्येदं पार्थिवस्य महात्मनः ।
नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनं ॥ १२ ॥
चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो विभुः ।
कथमिङ्गुदपिण्याकं स भुङ्क्ते वसुधाधिपः ॥ १३ ॥
अतो दुःखतरं लोके न किंचित् प्रतिभाति मे ।
यत्र रामः पितुर्दद्यात् तापसान्नाद्यमीदृशं ॥ १४ ॥
रामेणेङ्गुदपिण्याकं पितुर्दत्तं समीक्ष्य तत् ।
कथं नामात्महृदयं न विदीर्येत् सहस्रधा ॥ १५ ॥
सा जगामाश्रमपदं कौशल्या यत्र राघवः ।
ततस्तु त्वरितं गत्वा सर्वा नृपतियोषितः ॥ १६ ॥
अपश्यन्नाश्रमे रामं स्वर्गच्युतमिवामरं ।
तं भोगैः संपरित्यक्तं रामं प्रेक्ष्यैव मातरः ॥ १७ ॥
आर्ता मुमुचुरश्रूणि सुस्वरं शोकलालसाः ।
तासां रामः समुत्थाय जग्राह चरणान् शुभान् ॥ १८ ॥
मातॄणां पुरुषव्याघ्रः सर्वासामनुपूर्वशः ।
पाणिभिः सुखसंस्पर्शैर्मृद्वङ्गुलितलैः शुभैः ॥ १९ ॥

मूर्धन्याघ्राय तं रामं रुरुदुः पार्थिवस्त्रियः ।
सौमित्रिरपि ताः सर्वाः स मातॄः शोककर्षिताः ॥ २० ॥
अभ्यवादयत प्रह्वो दीनो रामादनन्तरं ।
आशीर्वादाश्च रामस्य लक्ष्मणस्य तथैव च ॥ २१ ॥
देशकालानुरूपाश्च येऽनुरूपाश्च मातृषु ।
यथा रामे तथा तस्मिन् सर्वा ववृतिरे स्त्रियः ॥ २२ ॥
वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ।
सीतापि रुदती तासां पदं स्पृष्ट्वा सुदुःखिता ॥ २३ ॥
श्वश्रूणामश्रुपूर्णाक्षी सा बभूवाग्रतः स्थिता ।
तां परिष्वज्य कौशल्या माता दुहितरं यथा ॥ २४ ॥
वनवासकृशां दीनामिदं वचनमब्रवीत् ।
विदेहराजस्य सुता स्नुषा दशरथस्य च ॥ २५ ॥
रामपत्नी कथं दुर्गं वनं प्राप्तासि जानकि ।
पद्ममातपसंतप्तं परिक्लिष्टमिवोत्पलं ॥ २६ ॥
काञ्चनं रजसा ध्वस्तं दिवा चन्द्रमिवाप्रभं ।
मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयं ॥ २७ ॥
भृशं तवेह वैदेहि व्यसनारणिसंभवः ।
दहत्यग्निर्मुखं कान्तं निस्तोयमिव पङ्कजं ॥ २८ ॥
ब्रुवत्यामेवमार्तायां जनन्यां भरताग्रजः ।
पादावासाद्य जग्राह वशिष्ठस्याथ राघवः ॥ २९ ॥

पुरोहितस्याग्निसमस्य राघवो
बृहस्पतेरिन्द्र इवामराधिपः ।
निपीड्य पादौ सुसमृद्धतेजसः
सहैव तेनोपविवेश राघवः ॥ ३० ॥

ततो जघन्यं भरतोऽपि मन्त्रिभिर्
बलप्रधानैश्च सहैव सैनिकैः ।
जनेन धर्मज्ञतमेन धर्मवित्
सहोपविष्टः समुपेत्य राघवं ॥ ३१ ॥

किमेष वाक्यं भरतोऽद्य राघवं
प्रणम्य सत्कृत्य च साधु वक्ष्यति ।
इतीव तस्यार्यजनस्य तत्त्वतो
बभूव कौतूहलमुत्तमं तदा ॥ ३२ ॥

स राघवः सत्यधृतिश्च लक्ष्मणो
महानुभावो भरतश्च धर्मवित् ।
वृताः सुहृद्भिः परिरेजुरोजसा
यथा सदस्यैर्ऋषिभिस्त्रयोऽग्नयः ॥ ३३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे मातृसंगमो
नाम द्वादशशततमः सर्गः ॥

## CXIII.

अथोपविष्टं ध्यायन्तं रामं प्रकृतिसंसदि ।
उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः ॥ १ ॥
प्रोषिते मयि यन्मात्रा पापं मत्कारणात् कृतं ।
तुद्रया न तदिष्टं मे प्रसीदतु भवान् मम ॥ २ ॥
धर्मबन्धानुबद्धोऽस्मि येन नाद्येह मातरं ।
हन्मि तीव्रेण दण्डेन दण्डार्हामपकारिणीं ॥ ३ ॥
कथं दशरथाज्जातः शुद्धाभिजनकर्मवान् ।
अहं भ्रातृव्यवद्भातुः कुर्यां कर्म विगर्हितं ॥ ४ ॥
गुरुः क्रियावान् वृद्धश्च राजा प्रेतः पितैव नः ।
ततो न परिगर्हामि दैवतं चेति संसदि ॥ ५ ॥
को हि धर्मार्थयोर्हीनमीदृशं कर्म गर्हितं ।
स्त्रियाः प्रियचिकीर्षुत्वात् कुर्याद्धर्मज्ञ धर्मवित् ॥ ६ ॥
अन्तकाले मतिर्व्यक्तं मर्त्यानां किल मुह्यति ।
राज्ञैवं वर्तिना लोके प्रत्यक्षं सा श्रुतिः कृता ॥ ७ ॥
तस्य तं मतिसंमोहमन्तकालसमुद्भवं ।
तातस्य समतिक्रान्तं प्रत्याहर्तुं त्वमर्हसि ॥ ८ ॥
पितुर्हि समतिक्रान्तं यः साधु कुरुते सुतः ।
तदपत्यमिति प्रोक्तमनपत्यमतोऽन्यथा । ॥ ९ ॥

तदपत्यं भवानस्तु मेदं त्वं दुष्कृतं पितुः ।
अनुवर्तस्व काकुत्स्थ लोके साधुविगर्हितं ॥१०॥
कैकेयीं मातरं मां च सुहृदो बान्धवांश्च नः ।
पौरजानपदान् भृत्यांस्त्रायस्व सकलानिमान् ॥११॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनं ।
ईदृशं व्याहतं कर्म न भवान् कर्तुमर्हति ॥१२॥
अथ क्लेशजमेवं त्वं धर्मं चरितुमिच्छसि ।
संगृह्य चतुरो वर्णान् पालयन् क्लेशमाप्नुहि ॥१३॥
चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमं ।
आहुर्धर्मं च धर्मज्ञास्तं कथं त्यक्तुमिच्छसि ॥१४॥
त्वत्तश्च बुद्ध्या ज्ञानेन जन्मना चावरो ह्यहं ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥१५॥
हीनबुद्धिर्हीनगुणो हीनः स्थानेन चाप्यहं ।
भवता च विनाभूतो न वर्तयितुमुत्सहे ॥१६॥
इदमखिलमव्यग्रं पित्र्यं राज्यमकण्टकं ।
अनुशाधि स्वधर्मेण धर्मज्ञ सह बन्धुभिः ॥१७॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयस्तथा ।
ऋत्विजः सवशिष्ठाश्च ब्राह्मणा मन्त्रकोविदाः ॥१८॥
अभिषिक्तस्त्वमस्माभिरयोध्यापालने व्रज ।
विजित्य तरसा लोकान् मरुद्भिरिव वासवः ॥१९॥

ऋणानि त्रीण्यपाकुर्वन् दुर्हृदः साधु कर्षयन् ।
सुहृदस्तर्पयन् कामैस्त्वं तत्र प्रशाधि नः ॥ २० ॥
अद्य दैन्यमुदस्यन्तु सुहृदस्तेऽभिषेचने ।
अद्य भीताः पलायन्तां दुर्हृदस्ते दिशो दश ॥ २१ ॥
अश्रूणि मम मातुश्च प्रमृज पुरुषर्षभ ।
अद्य तत्र भवान् स्वं च पितरं रक्ष किल्विषात् ॥ २२ ॥
धर्मो ह्येष वरः प्रोक्तः क्षत्रियस्याभिषेचनं ।
यजनं च महाप्राज्ञैः प्रजानां चैव रक्षणं ॥ २३ ॥
शिरसा त्वाभियाचेऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ २४ ॥
अथ मां पृष्ठतः कृत्वा वनमेव भवानितः ।
गमिष्यति गमिष्यामि भवता सार्धमप्यहं ॥ २५ ॥

तमृत्विजो मागधसूतवन्दिनः
सुतप्रिया वाष्पकलाश्च मातरः ।
तथा ब्रुवन्तं भरतं प्रतुष्टुवुः
प्रणम्य रामं च ययाचिरे सह ॥ २६ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतवाक्यं नाम
त्रयोदशशततमः सर्गः ॥

# अयोध्याकाण्डं

## CXIV.

स तथा भरतेनोक्तो रामो धर्मपथे स्थितः ।
इदं वचनमक्लीवं मध्ये परिषदोऽब्रवीत् ॥ १ ॥
नात्मनः कामकारोऽस्ति पुरुषोऽयमनीश्वरः ।
इतरेतरतश्चैनं कृतान्तः परिकर्षति ॥ २ ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगाश्च वियोगान्ता मरणान्तं च जीवितं ॥ ३ ॥
यथा फलानां पक्वानां नान्यत्र पतनाद्भयं ।
एवं नराणां जातानां नान्यत्र मरणाद्भयं ॥ ४ ॥
यथागारं दृढस्थूलं जीर्णं भूत्वावसीदति ।
तथावसीदन्ति नरा मृत्युपाशवशं गताः ॥ ५ ॥
सहैव मृत्युर्व्रजति सह मृत्युश्च तिष्ठति ।
गत्वा सुदूरमध्वानं सह मृत्युर्निवर्तते ॥ ६ ॥
अहोरात्राणि वर्तन्ते सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ ७ ॥
आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्ते क्षीयते यस्य स्थितस्य चरतस्तथा ॥ ८ ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा सुखी भवेत् ॥ ९ ॥

नन्दत्युदित आदित्ये नन्दत्यस्तमितेऽपि च ।
आत्मनो नावबुध्यन्ते पुरुषा जीवितक्षयं ॥ १० ॥
दृष्ट्वा प्रसूनं हृष्यन्ति नवं नवमिवागतं ।
ऋतूनां परिवर्तेन प्राणिनः प्राणसंक्षये ॥ ११ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां स्थित्वा किञ्चित् क्षणान्तरं ॥ १२ ॥
एवं भार्याश्च पुत्राश्च सुहृदश्च वसूनि च ।
समेत्य व्यवधीयन्ते ध्रुवस्तेषां पराभवः ॥ १३ ॥
न कश्चिदन्यथा भावं प्राणी समभिवर्तते ।
तेन नास्तीह सामर्थ्यं प्रेतस्य ह्यनुशोचतः ॥ १४ ॥
यथा हि सार्थं गच्छन्तं ब्रूयात् कश्चित् पथि स्थितः ।
अहमप्यनुयास्यामि पृष्ठतो भवतामिति ॥ १५ ॥
यः पूर्वं प्रकृतो मार्गः पितृपैतामहो ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ १६ ॥
वयसः प्लवमानस्य स्रोतसो वातिवर्तिनः ।
आत्मा धर्मे नियोक्तव्यो धर्मयोज्याः प्रजाः स्मृताः ॥ १७ ॥
धर्मात्मानः शुभैर्वृत्तैः क्रतुभिश्चाप्तदक्षिणैः ।
धूतपापा गताः स्वर्गं पितामहनिषेवितं ॥ १८ ॥
भृत्यानां भरणं कृत्वा प्रजानां परिपालनं ।
अन्नदानं च साधुभ्यः पिता नस्त्रिदिवं गतः ॥ १९ ॥

इष्ट्वा यज्ञैर्बहुविधैर्भोगांश्चावाप्य केवलान् ।
उत्तमं चायुरासाद्य स्वर्गतो जगतीपतिः ॥ २० ॥
स जीर्णं मानुषं देहं परित्यज्य पिता मम ।
दैवीं गतिमनुप्राप्तो दिव्यलोकविहारिणीं ॥ २१ ॥
तत्र नैवंविधं कश्चित् प्राज्ञः शोचितुमर्हति ।
त्वद्विधो मद्विधो वापि श्रुतिमान् बुद्धिमान् नरः ॥ २२ ॥
एते बहुविधाः शोका विलापो रुदितं तथा ।
विवर्जनीया धीरेण सर्वावस्थासु धीमता ॥ २३ ॥
संस्तम्भय ततः शोकं मा शुचो वस तां पुरीं ।
यथा पित्रा नियुक्तोऽसि तथा कुरु नरर्षभ ॥ २४ ॥
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा ।
तदेव हि करिष्यामि पितुरार्यस्य शासनं ॥ २५ ॥
न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम ।
तत् त्वयापि सदा कार्यं स नो बन्धुः स नः पिता ॥ २६ ॥
स एवमुक्तो भरतो रामं वचनमब्रवीत् ।
कियन्तस्तादृशा लोके यादृशस्त्वमरिंदम ॥ २७ ॥
न त्वां प्रव्यथते दुःखं सुखं वापि प्रहर्षयेत् ।
संमतश्चासि वृद्धानां शक्रो नाकौकसामिव ॥ २८ ॥
यथा मृते तथा जीवे यथासति तथा सति ।
यस्यैष बुद्धिलाभः स्याद्यथा ते मनुजाधिप ॥ २९ ॥

स एवं व्यसनं प्राप्य न विषीदितुमर्हति ।
अमरोपमसत्त्वोऽसि महात्मा सत्यसंगरः ॥३०॥
न त्वामेवं गुणैर्युक्तं प्रभवापायकोविदं ।
अविषह्यतमः शोकः संसादयितुमर्हति ॥३१॥
आसाद्य हि निवर्तेत संतापस्त्वामरिंदम ।
अश्मानमिव काकुत्स्थ परश्वुर्वीरि पातितः ॥३२॥
अहं तु रहितो धीमंस्त्वया दशरथेन च ।
न जीविष्यामि दुःखार्तो रुरुर्दिग्धहतो यथा ॥३३॥
वसन्तमार्य सह लक्ष्मणेन सभार्यमायस्तमनाः समीक्ष्य ।
प्राणान् न जह्यां विजने यथाहं तथा कुरु त्वं पृथिवीं प्रशाधि ।३४

तथा तु रामो भरतेन तप्यता
प्रसाद्यमानः शिरसा महीपतिः ।
मतिं न चक्रे गमनाय सत्त्ववान्
स्थितः पितुस्तद्वचनप्रतीक्षया ॥३५॥
तदद्भुतं धैर्यमवेक्ष्य राघवे
समं जनो हर्षमवाप दुःखितः ।
न यात्ययोध्यामिति दुःखितोऽभवत्
स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः ॥३६॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतप्रत्याश्वासनं
नाम चतुःशततमः सर्गः ॥

# अयोध्याकाण्डं

## CXV.

पुनरेवं ब्रुवाणं तु भरतं भरताग्रजः ।
प्रत्युवाच पुनः श्रीमान् जनमध्येऽभिसंस्कृतं ॥ १ ॥
उपपन्नमिदं वीर यत् त्वमेवमवोचथाः ।
जातः पुत्रो दशरथात् कैकेय्यां राजसत्तमात् ॥ २ ॥
पुरा किल महाराजो मातरं ते समुद्वहन् ।
मातामहाय ते प्रादाद्राज्यं शुल्कमनुत्तमं ॥ ३ ॥
देवासुरे तु संग्रामे जनन्यै तव पार्थिव ।
प्रहृष्टः प्रददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥
ततः सा समुपागम्य तव माता यशस्विनी ।
अयाचत महाराजं द्वौ वरौ वरवर्णिनी ॥ ५ ॥
तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा ।
तत्र राजा तथैवास्यै नियुक्तः प्रददौ स्वयं ॥ ६ ॥
तेन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ ।
चतुर्दश वने वासं वर्षाणि वरदानिकं ॥ ७ ॥
सोऽहं वनमिदं दुर्गं निर्जनं लक्ष्मणान्वितः ।
ससीतश्चागतो वीर सत्यवाक्ये स्थितः पितुः ॥ ८ ॥
भवानपि तथा क्षिप्रं पितरं सत्यवादिनं ।
कर्तुमर्हति राजेन्द्र शाधि राज्यमकण्टकं ॥ ९ ॥

ऋणान्मोचय राजानं मत्कृते भरत प्रभुं ।
पितरं त्राहि धर्मज्ञ मातरं चापि नन्दय ॥ १० ॥
श्रूयते हि पुरा तात श्रुतिर्गीता यशस्विना ।
गयेन यजमानेन गयायां च पितॄन् प्रति ॥ ११ ॥
पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ १२ ॥
एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः ।
तेषां हि समवेतानां यद्येकोऽपि गयां व्रजेत् ॥ १३ ॥
एवं राजर्षयः सर्वे प्रतीता रघुनन्दन ।
तत् त्रायस्व नरश्रेष्ठ पितरं नरकात् प्रभो ॥ १४ ॥
अयोध्यां गच्छ भरत प्रकृतीरनुरञ्जय ।
शत्रुघ्नसहितो वीर सह सर्वैर्द्विजातिभिः ॥ १५ ॥
प्रवेक्ष्ये दण्डकारण्यमहमप्यृषिभिः सह ।
आभ्यां तु सहितो राजन् वैदेह्या लक्ष्मणेन च ॥ १६ ॥
त्वं राजा भरत भवाशु नागराणां
वन्यानामहमपि राजराण्मृगाणां ।
गच्छ त्वं पुरवरमद्य संप्रहृष्टः
शान्तात्मा त्वहमपि दण्डकान् प्रवेक्ष्ये ॥ १७ ॥
छायां ते दिनकरभाः प्रबाधमानं
छत्रं वै भरत करोतु मूर्ध्नि शीतां ।

एतेषामहमपि काननद्रुमाणां
छायां तामतिशिशिरां समाश्रयिष्ये ॥१८॥
शत्रुघ्नः कुशलतरोऽस्तु ते सहायः
सौमित्रिर्मम विदितः प्रधानमल्ली ।
चत्वारस्तनयवरा वयं नरेन्द्रं
सत्यस्थं नृप करवाम मा विषीद ॥१९॥

इत्यार्षे रामायणे अयोध्याकाण्डे रामवाक्यं नाम
पञ्चदशशततमः सर्गः ॥

## CXVI.

अथ राममनिच्छन्तं गमनाय पुरं प्रति ।
राज्ञो नैयायिकस्तेषां संमतः सर्वशास्त्रवित् ॥ १ ॥
आश्वासयंश्च भरतं जाबालिर्ब्राह्मणोत्तमः ।
उवाच रामं धर्मज्ञो धर्मोपेतमिदं वचः ॥ २ ॥
साधु राघव मा ते भूद्बुद्धिरेवं निरर्थका ।
नरस्य प्राकृतस्येव गर्ह्या बुद्धिस्तपस्विनः ॥ ३ ॥
यावद्वाक्यं पितुर्युक्तं कर्तुं नरवर त्वया ।
कृतं सर्वं समारभ्य यथा त्वय्युपपद्यते ॥ ४ ॥
निर्वेदाद्दीपितो भूयः क्लैव्यं मागन्तुमर्हसि ।
तपोधर्माभिरामेण राज्ये च निरपेक्षया ॥ ५ ॥
ननु ते तात तेनैव पूर्वं दत्तमिदं जगत् ।
यस्मिन् न्यस्तं च भरते सोऽयं त्वामेव याचते ॥ ६ ॥
यदर्थं च कृतं पित्रा तवेदं कलुषं विभो ।
कैकेयी च सपुत्रासौ राज्यं तुभ्यं प्रयच्छति ॥ ७ ॥
तद्गृहाण प्रजाः पाहि स्वजनं सुखिनं कुरु ।
सौमित्रेर्वीरि देव्याश्च वैदेह्या भारमुत्सृज ॥ ८ ॥
अतः परमिमां प्रज्ञां प्राज्ञैरनुपसेवितां ।
कामादात्मकृतां मिथ्या नाभिगन्तुं त्वमर्हसि ॥ ९ ॥

त्यजन्ति गुरवस्तात कामलोभवशं गताः ।
ऋचीक इव पुत्रं स्वं शुनःशेफं नरोत्तमं ॥ १० ॥
न हि त्वां स्वर्गतस्तात पितोपालब्धुमर्हति ।
यस्मात् तेषु शरीरेषु शरीरान्तरमाश्रितः ॥ ११ ॥
कः कस्य पुरुषो बन्धुः किं कार्यं कस्य केनचित् ।
यदेको जायते जन्तुरेक एव विनश्यति ॥ १२ ॥
तस्मान्माता पिता चैव प्रतिश्रयसमावुभौ ।
उन्मत्त इव विज्ञेयो योऽत्र सज्जेत वै नरः ॥ १३ ॥
यथा ग्रामान्तरं गच्छन् नरः कश्चित् क्वचिद्वसेत् ।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ १४ ॥
एवमेव मनुष्याणां पिता माता गृहं वसु ।
आवासमात्रं काकुत्स्थ तत्रालं कामचिन्तया ॥ १५ ॥
नीरजस्कं समं हित्वा पन्थानमकुतोभयं ।
आस्थातुं नार्हसे वीर कापथं बहुकण्टकं ॥ १६ ॥
समृद्धायामयोध्यायामात्मानमभिषेचय ।
एकवेणीधरा हि त्वां नगरी संप्रतीक्षते ॥ १७ ॥
राजभोगाननुभवन् महार्हान् पार्थिवात्मज ।
विहर त्वमयोध्यायां यथा शक्रस्त्रिपिष्टपे ॥ १८ ॥
न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन ।
अन्यो राजा त्वमप्यन्यस्तस्मात् कुरु यदुच्यते ॥ १९ ॥

वीजमात्रं पिता जन्तोः शुक्रं रुधिरवायुना ।
संयुक्तमृतुना मातुः पुरुषस्यात्मजन्म तत् ॥ २० ॥
गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै ।
प्रवृत्तिरेषा भूतानां त्वं तु मिथ्या विहन्यसे ॥ २१ ॥
अथ धर्मविदो ये ये तांस्तान् पृच्छामि नेतरान् ।
ते हि दुःखमनुप्राप्य विनाशं प्रेत्य भेजिरे ॥ २२ ॥
अष्टकाः पितृदैवत्यः कार्याभिप्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृते किमवशिष्यते ॥ २३ ॥
यदि भुक्तमिहान्येन कायमन्यस्य गच्छति ।
दद्यात् प्रवसतः श्राद्धं न स पथ्योदनं वहेत् ॥ २४ ॥
दानसंवर्धना ह्येते ग्रन्था मेधाविभिः कृताः ।
यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ २५ ॥
स नास्ति पर इत्येतां कुरु बुद्धिं महामते ।
परोक्षं मा मतं कार्षीः प्रत्यक्षं कुरु राघव ॥ २६ ॥
स तां बुद्धिं पुरस्कृत्य सर्वलोकविदर्शिनीं ।
राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ २७ ॥
तस्मात् कुरु हितां बुद्धिं तिष्ठ राजन् स्ववर्त्मनि ।
ब्रह्मणो मानसः पुत्रः क्षुपो नाम महायशाः ॥ २८ ॥
इक्ष्वाकुश्च महाभागः काकुत्स्थश्च परंतपः ।
रघुर्दिलीपः सगरो दुष्यन्तश्च नरर्षभः ॥ २९ ॥

दीप्तिर्भरतः श्रीमांश्चक्रवर्ती महायशाः ।
पुरुकुत्सः शिविर्धीमान् धुन्धुमारो भगीरथः ॥ ३० ॥
विष्वक्सेनोऽनरण्यश्च राजा वज्रधरोपमः ।
अरिष्टनेमिर्धर्मात्मा युवनाश्वश्च वीर्यवान् ॥ ३१ ॥
मान्धाता यौवनाश्विश्च राजा वैश्रवणोपमः ।
ययातिश्चैव राजर्षिः संभूतश्च महायशाः ॥ ३२ ॥
बृहदश्वो मनुष्येन्द्रः सत्त्ववाँल्लोकविश्रुतः ।
एते चान्ये च बहवो नरलोकाधिपोत्तमाः ॥ ३३ ॥
प्रियान् पुत्रांश्च दारांश्च हित्वा कालवशं गताः ।
तांस्तात नैव गन्धर्वान् न यक्षान् न च राक्षसान् ॥ ३४ ॥
जानीमः क्व गतास्ते स्युरित्थं संमोहितं जगत् ।
एतेषां नाममात्राणि श्रूयन्ते हि महीक्षितां ॥ ३५ ॥
यश्चैतान् काङ्क्षते यत्र स च तांस्तत्र मन्यते ।
इति नास्ति व्यवस्थास्मिन् क्वेदं संतिष्ठते जगत् ॥ ३६ ॥
अयमेव परो लोकस्तस्मात् त्वं सुखभाग्भव ।
न हि धर्मपरः सर्वः सुखायैवोपपद्यते ॥ ३७ ॥
धर्मवन्तो हि काकुत्स्थ भवन्ति भृशदुःखिताः ।
अधर्मवन्तः सुखिनो दृश्यन्ते खलु मानवाः ॥ ३८ ॥
एतदेव पुनर्व्यस्तं सर्वथा व्याकुलं जगत् ।
तस्मादभ्यागतां लक्ष्मीं मावमंस्था नरर्षभ ॥ ३९ ॥

प्रतीच्छ विपुलं राज्यमसपत्नमकण्टकं ।
इति श्रुत्वा वचस्तस्य मन्दकोपोऽपि राघवः ॥ ४० ॥
अशेषं परिचुक्रोध नास्तिक्यमनुदर्शितः ।
उवाच च वचः किञ्चित् सक्रोधो लक्ष्मणाग्रजः ॥ ४१ ॥
पितृव्यसनसंतप्तः प्रभिन्न इव कुञ्जरः ।
नाहं पितृसमादेशाद्विचलेयं समाहितः ॥ ४२ ॥
मार्गादिव विनीताश्वः स्त्रीव भर्तृव्यपाश्रया ।
यद्यहं जीवतः कृत्वा वचः कुर्यां मृतेऽन्यथा ॥ ४३ ॥
ननु सर्वस्य लोकस्य क्लीवग्रहणमाप्नुयां ।
न ह्यहं हेतुवचनैरेभिरेवं निरर्थकैः ॥ ४४ ॥
त्वया चालयितुं शक्यो वातैरिव महीधरः ।
कर्मणामपि वैफल्यं यदात्थ बहुगर्हितं ॥ ४५ ॥
एतदप्यर्थविद्विष्टं नोदाहर्तुमिहार्हसि ।
यदा क्रतुशतैरिन्द्रः प्राप्तः स्थानं सुराधिपः ॥ ४६ ॥
प्रमाणं तद्गतं चैव कस्मात् तद्वितथं तु ते ।
स्वस्त्यात्रेयसुतश्चापि मम मित्रं स कौशिकः ।
तपोभिः स्थानमाहात्म्यं प्रापुरन्ये तथर्षयः ॥ ४७ ॥

भवत्विदं कर्तुमिहाद्य निष्फलं
यथातथा वास्तु यथा त्वमिच्छसि ।

## अयोध्याकाण्डं

पितुर्नियोगान्न चलेयमादृताद्
व्रतान्महर्षिः परमादिवाहितात् ॥ ४८ ॥
यथाप्रदिष्टं भरतः प्रशास्तु गां
न राज्यमिच्छामि नृपेण वारितं ।
तथोक्तवान् भास्करवंशवर्धनस्
ततोऽभ्युपोढा रजनी दिनक्षये ॥ ४९ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे जाबालिवाक्यं
नाम षोडशशततमः सर्गः ॥

## CXVII.

तथा पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ।
जाग्रतामेव रजनी कल्यं सा समवर्तत ॥ १ ॥
रजन्यां तु प्रभातायां भ्रातरस्ते सुहृद्वृताः ।
मन्दाकिन्यां पृथग्जप्यं कृत्वा राममुपागमन् ॥ २ ॥
तूष्णीकाः समुपासीना न कश्चित् किंचिदब्रवीत् ।
भरतस्तु सुहृन्मध्ये रामं भूयोऽब्रवीद्वचः ॥ ३ ॥
सत्यवादी महाप्राज्ञो यन्मे राज्यमदात् पिता ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकं ॥ ४ ॥
आर्य प्रसादं कुरु मे शिरसा त्वां प्रसादये ।
न च तद्विदितं पापं जनन्या मम यत् कृतं ॥ ५ ॥
तवास्मि शिष्यो दासश्च प्रेष्यः प्रेष्यानुगः परः ।
न कार्यं मम राज्येन यत् त्वया नोपभुज्यते ॥ ६ ॥
नेच्छामि यदिदं राज्यमपनीतमनार्यया ।
मात्रा मम गृहाण त्वं तत् ते निर्यातयाम्यहं ॥ ७ ॥
महतेवाप्सुवेगेन भिन्नः सेतुर्महार्णवे ।
दुराचारं त्वदन्येन पित्र्यं राज्यमिदं भुवि ॥ ८ ॥
गतिं खर इवाश्वस्य सुपर्णस्येव पक्षिणः ।
अनुगन्तुं न शक्तोऽस्मि राज्यं तव महीपते ॥ ९ ॥

पितृपैतामहं राज्यं तवैवाहमुपाहरन् ।
नैतद्रोचयते मह्यं पारक्यमिव भूषणं ॥ १० ॥
अभिषिक्तस्त्वमद्यैव विधिवत् पार्थिवात्मज ।
सहास्माभिरतिस्निग्धैर्भुङ्क्ष राज्यमकण्टकं ॥ ११ ॥
सुजीवं नित्यशस्तेन यः परैरुपजीव्यते ।
वीर तेन तु दुर्जीवं यः परानुपजीवति ॥ १२ ॥
यदा तु रोपितो वृक्षः पुरुषेण फलार्थिना ।
ह्रस्वको धर्षणीयः स्याद्विवृद्धः सुदुरारुहः ॥ १३ ॥
यदा तु पुष्पितो भूत्वा फलानि न विदर्शयेत् ।
स तां नानुभवेत् प्रीतिं यस्य हेतोः प्ररोपितः ॥ १४ ॥
एषोपमा मया प्रोक्ता तां स्वयं वेत्तुमर्हसि ।
स त्वं कुलधुरं गुर्वीं धूर्यवद्वोढुमर्हसि ॥ १५ ॥
श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्तमिवादित्यं राज्ये स्थितमरिंदम ॥ १६ ॥
तवानुयाने काकुत्स्थ मत्ता गर्जन्तु कुञ्जराः ।
अन्तःपुरगता नार्यो गान्तु वैतालिकाश्च ये ॥ १७ ॥
तव वश्या वयं सर्वे त्वं नो राजा परंतप ।
किमर्थं वा त्यजस्यस्मान् किमस्माभिः कृतं तव ॥ १८ ॥
यदि मात्रा कृतं पापं प्रोषिते मयि राघव ।
मम कोऽत्रापराधोऽस्ति स्वयं तावद्विमृश्यतां ॥ १९ ॥

यन्न शक्यं चालयितुमप्रधृष्यं यदुच्यते ।
यस्य लोकास्त्रयो वश्यास्तद्दैवमपराध्यति ॥ २० ॥
जनोऽयं नागरः सर्वो भूयिष्ठो भृशमागतः ।
नेतुं हि त्वामितो नाथ साधु यादृक् कुरुष्व मे ॥ २१ ॥
ज्ञातीनां बान्धवानां च भ्रातृणां सुहृदां तथा ।
पौराणां च द्विजानां च हृदयं साधु नन्दय ॥ २२ ॥
साधु त्वं मा शुचः शोच्यं लोकनाथं सुदुःखितं ।
पित्रा शून्यमधिष्ठानं पाहि पालयतां वर ॥ २३ ॥
आत्मानं नानुशोचामि किन्तु शोचामि पार्थिवं ।
बहुपुत्रो विना पुत्रं योऽसौ स्वर्गमुपागतः ॥ २४ ॥
पुत्रेभ्य एव शुश्रूषां योऽनवाप्य दिवं गतः ।
तं शोच्यमनुशोचामि नित्यशः पितरं मृतं ॥ २५ ॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनं ।
रामः कृतात्मा भरतं प्रत्याश्वासयदात्मवान् ॥ २६ ॥
एवं तस्य वचः श्रुत्वा नागरा बहुधा जनाः ।
मेनिरे ते तदा सर्वे प्रसादं नः करिष्यति ॥ २७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतवाक्यं
नाम सप्तदशशततमः सर्गः ॥

# अयोध्याकाण्डं

## CXVIII.

जावालेस्तु वचः श्रुत्वा भरतस्य च वीर्यवान् ।
उवाच रामो जावालिं सम्यग्बुद्ध्या विपन्नया ॥ १ ॥
भवान् मां प्रियकामार्थं वचनं यदिहोक्तवान् ।
अकार्यं कार्यसंकाशमपथ्यं पथ्यसंज्ञितं ॥ २ ॥
निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३ ॥
कुलीनमकुलीनं वा नरं पुरुषमानिनं ।
चारित्र्यमेव व्याचष्टे शुभं वा यदिवाशुभं ॥ ४ ॥
अनार्यस्त्वार्यसंस्थानः शौचान्वित इवाशुचिः ।
निर्लक्षणो लक्षणवान् दुःशीलः शीलवानपि ॥ ५ ॥
अधर्मं धर्मवेशेन यद्यहं लोकगर्हितं ।
अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जितं ॥ ६ ॥
कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः ।
बहुमन्येत मां लोके भिन्नचारित्रदर्शनं ॥ ७ ॥
कस्यां पास्याम्यहं नद्यां जलमुद्धृत्य पाणिना ।
मिथ्या वाक्यं पितुः कृत्वा तथा हीनः प्रतिज्ञया ॥ ८ ॥
राजवृत्तं किल लोकः कृत्स्नः समनुवर्तते ।
यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति मानवाः ॥ ९ ॥

सत्यं चैवानृशंस्यं च राजवृत्तं सनातनं ।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकाः प्रतिष्ठिताः ॥१०॥
दत्तमिष्टं हुतं चैव तपो यज्ञाश्च केवलाः ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं तपः ॥११॥
ऋषयो देवताश्चैव सत्यमेव सभासते ।
सत्यवादी हि लोकेऽस्मिन् प्रेत्य गच्छति सद्गतिं ॥१२॥
उद्विजन्ते यथा सर्पात् तथैवानृतिकाज्जनात् ।
धर्मः सत्यपरो लोके मूलं धर्मस्य सत्यता ॥१३॥
सत्यमेवेश्वरो लोके सत्ये श्रीर्नियतं स्थिता ।
सर्वं सत्यप्रतिष्ठानं तस्मात् सत्यपरो भवेत् ॥१४॥
एकः पालयते लोकानेकः पालयते कुलं ।
मज्जत्येको हि नरके एकः स्वर्गे महीयते ॥१५॥
सोऽहं पितुर्नियोगं तं किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यः सत्येनास्मि वशीकृतः ॥१६॥
नैव लोभान्न मोहाद्वा नाप्यज्ञानसमन्वितः ।
सेतुं सत्यस्य भेत्स्यामि गुरुः सत्यप्रतिश्रवं ॥१७॥
असत्यसंधस्य सतश्चलस्यास्थिरचेतसः ।
नैव देवा न पितरः प्रीयन्ते इति नः श्रुतं ॥१८॥
त्यक्ष्ये धर्ममहं क्षात्रमधर्मं धर्मसंज्ञितं ।
क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥१९॥

# अयोध्याकाण्डं

प्रत्यक्षमेव धर्मं हि सत्यं पश्याम्यहं स्वयं ।
चेतः सुकृतिनां यत्र रघूणां रमते सदा ॥ २० ॥
कायेन कुरुते पापं मनसा संप्रधार्य यः ।
अनृतं जिह्वया चाह त्रिविधं कर्मपातकं ॥ २१ ॥
भूतिं कीर्तिं यशो लक्ष्मीं पुरुषः प्रार्थयन्निह ।
स्वर्गार्थमनुरुद्धश्च सत्यमेव वदेत् सदा ॥ २२ ॥
अश्रेयोऽनार्यमेतद्धि यन्मां बोधितवानसि ।
अस्वर्ग्यमहितैर्वाक्यैस्त्वमिदं भद्र कुर्विति ॥ २३ ॥
कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरोः ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा पितुरग्रतः ।
प्रहृष्टमानसा देवी कैकेयी चाभवत् तदा ॥ २५ ॥
वनवासं वसेयं तु शुचिर्नियतमानसः ।
पुष्पमूलफलैर्वन्यैः पितॄन् देवांश्च तर्पयन् ॥ २६ ॥
अनष्टपञ्चवर्गोऽहं लोकयात्राप्रवर्तकः ।
अक्षुद्रः सावधानश्च कार्याकार्यं विचार्य च ॥ २७ ॥
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभं ।
अग्निर्वायुश्च सोमश्च कर्मणः फलमश्नुते ॥ २८ ॥
शतं क्रतूनामाहृत्य देवराजो दिवं गतः ।
तपांस्युग्राणि चास्थाय दिवं याता महर्षयः ॥ २९ ॥

पितामहाः पूर्वतराश्च तेषां
शुभानि कर्माणि बहूनि कृत्वा ।
जित्वा तपोभिः परमं च लोकं
गताः प्रजानां च हितानि कृत्वा ॥ ३० ॥

धर्मे रताः सत्पुरुषैः समेतास्
तेजस्विनो दानगुणप्रधानाः ।
अहिंसका वीतमलाश्च लोके
भवन्ति पूज्या मुनयः प्रजानां ॥ ३१ ॥

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३२ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे सत्यप्रशंसा
नाम अष्टादशशततमः सर्गः ॥

## CXIX.

रामस्य वचनं श्रुत्वा वशिष्ठः प्रत्युवाच ह ।
जावालिरपि जानाति लोकस्यास्य गतागतिं ॥ १ ॥
निवर्तयितुकामस्तु त्वामेतद्वाक्यमुक्तवान् ।
इमां लोकसमुत्पत्तिं लोकनाथ निबोध मे ॥ २ ॥
सर्वं सलिलमेवासीद्वसुधा येन निर्मिता ।
ततः समभवद्ब्रह्मा स्वयम्भूर्विष्णुरव्ययः ॥ ३ ॥
स वराहोऽथ भूत्वेमामुज्जहार वसुंधरां ।
असृजच्च जगत् सर्वं सचराचरमव्ययं ॥ ४ ॥
आकाशप्रभवो ब्रह्मा शाश्वतो नित्यमव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ ५ ॥
ततः पर्यायसर्गेण विवस्वानसृजन्मनुं ।
मनोर्दशसु पुत्रेषु इक्ष्वाकुर्धर्मतो वरः ॥ ६ ॥
यस्येयं प्रथमं दत्ता समृद्धा मनुना मही ।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वजं ॥ ७ ॥
इक्ष्वाकोरथ पुत्रोऽभूत् कुक्षिरित्येव नः श्रुतं ।
कुक्षितस्तु महाराजो विकुक्षिरुदपद्यत ॥ ८ ॥
विकुक्षेस्तु महातेजा रेणुः पुत्रो व्यजायत ।
रेणोः पुष्योऽथ पुष्याच्च अनरण्यो व्यजायत ॥ ९ ॥

नानावृष्टिभयं तस्मिन् न दुर्भिक्षं सतां वरे ।
अनरण्ये महाभागे बभूवुर्नापि तस्कराः ॥ १० ॥
अनरण्यान्महाराजः पृथुर्नाम व्यजायत ।
पृथोरपि महाराजस्त्रिशङ्कुरुदपद्यत ॥ ११ ॥
स सत्यवाक् प्राणिहितः सशरीरो दिवं गतः ।
त्रिशङ्कुतो महाराजो धुन्धुमारो व्यजायत ॥ १२ ॥
धुन्धुमारान्महाप्राज्ञो युवनाश्वो व्यजायत ।
युवनाश्वान्महाराजो मान्धाता चोदपद्यत ॥ १३ ॥
मान्धातुश्च महातेजाः सुसंधिरुदपद्यत ।
सुसंधेरथ पुत्रौ द्वौ धृतसंधिः प्रसेनजित् ॥ १४ ॥
यशस्वी धृतसंधेस्तु भरतो राघवाभवत् ।
असितो नाम जज्ञेऽथ भरतात् सुमहारथः ॥ १५ ॥
यस्य ते प्रतिराजान उदपद्यन्त शत्रवः ।
हैहयास्तालजङ्घाश्च सर्वे च शशविन्दवः ॥ १६ ॥
प्रतियुध्य स तैर्युद्धे विननाश महीपतिः ।
द्वे चास्य भार्ये गर्भिण्याविति तत्र स्म नः श्रुतं ॥ १७ ॥
तस्य ज्येष्ठा तु महिषी यासौ कन्यैव दूषिता ।
गरेण नाम्ना कालिन्दी असिते स्वर्गते सति ॥ १८ ॥
अथर्षिस्तत्र धर्मात्मा बभूवाभिरतो मुनिः ।
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ॥ १९ ॥

तमृषिं चाभ्युपागम्य कालिन्दी साभ्यवादयत् ।
स तामभ्यवदद्विप्रो वरेप्सुं पुत्रजन्मनि ॥ २० ॥
ततः सा गृहमागम्य पुत्रं देवी व्यजायत ।
सह तेन गरेणैव ततोऽसौ सगरोऽभवत् ॥ २१ ॥
सगरश्चापि धर्मात्मा यः समुद्रमखानयत् ।
दृष्ट्वा कपिलरूपेण यत्रास्य तनया हताः ॥ २२ ॥
असमञ्जास्तु पुत्रोऽभूत् सगरस्येति नः श्रुतं ।
जीवन्नेव स पित्रा तु निरस्तः पापकर्मकृत् ॥ २३ ॥
पुत्रोऽसमञ्जसश्चासीदंशुमानिति विश्रुतः ।
दिलीपोऽंशुमतः पुत्रो दिलीपाच्च भगीरथः ॥ २४ ॥
भगीरथात् ककुत्स्थश्च काकुत्स्थोऽसि यतः स्मृतः ।
ककुत्स्थस्य तु पुत्रोऽभूद्रघुर्येनासि राघवः ॥ २५ ॥
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।
कल्माषपादः स पुरादपराद्धो व्यनीनशत् ॥ २६ ॥
कल्माषपादपुत्रोऽभूत् खनित्रश्चेति विश्रुतः ।
यो वै दैवेन विधिना ससैन्यो व्यनशत् पुरा ॥ २७ ॥
खनित्रस्य च पुत्रोऽभूच्छूरः श्रीमान् सुदर्शनः ।
सुदर्शनादग्निवर्णस्तस्मादथ च शीघ्रगः ॥ २८ ॥
शीघ्रगस्य मरुः पुत्रो मरोः पुत्रः प्रशुश्रुवः ।
प्रशुश्रुवस्य पुत्रोऽभूदम्बरीष इति श्रुतं ॥ २९ ॥

अम्बरीषस्य पुत्रोऽभून्नहुषः सत्यविक्रमः ।
नहुषस्य तु नाभागः पुत्रः परमधार्मिकः ॥ ३० ॥
अजश्च नाभागसुतः पृथुश्रीः पृथिवीपतिः ।
अजस्यापि च धर्मात्मा राजा दशरथः सुतः ॥ ३१ ॥
तस्य ज्येष्ठोऽसि दायादो राम इत्यभिविश्रुतः ।
बुध्यस्व सर्वं बोद्धव्यं राजपुत्र महायशः ॥ ३२ ॥
इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
स त्वं राज्येऽभिषिच्यस्व पूर्वजो ह्यसि राघव ॥ ३३ ॥

स राघवेमं कुलवंशमात्मनः
सनातनं नाद्य विहातुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं
समृद्धराष्ट्रां पितृवन्महायशाः ॥ ३४ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे इक्ष्वाकुवंशकीर्तनं
नाम नवदशशततमः सर्गः ॥

## CXX.

वशिष्ठस्तु तदा राममुक्त्वा राजपुरोहितः ।
अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥
पुरुषस्येह जातस्य भवन्ति गुरवस्त्रयः ।
आचार्यश्चैव काकुत्स्थ पिता माता च ते त्रयः ॥ २ ॥
पिता ह्येनं जनयति माता संवर्धयत्यपि ।
प्रज्ञां ददाति चाचार्यस्तस्मात् स गुरुरुच्यते ॥ ३ ॥
स तेऽहं पितुराचार्यस्तव चैव महाद्युते ।
मम त्वं वचनं कुर्वन् नातिक्रामेः सतां गतिं ॥ ४ ॥
इमा हि ताः परिषदः श्रेणयश्च समागताः ।
एष पुत्र सतां धर्मो नातिक्रामेः सतां गतिं ॥ ५ ॥
वृद्धाया धर्मशीलाया मातुर्नार्हसि लज्जितुं ।
तस्यास्तु वचनं कुर्वन् नातिवर्तस्व सद्गतिं ॥ ६ ॥
भरतस्य वचः कुर्वन् याचमानस्य राघव ।
आत्मानं नातिवर्तस्व सत्यधर्मपरायण ॥ ७ ॥
एवमुक्तः स मधुरं गुरुणा राघवः स्वयं ।
प्रत्युवाच तथासीनं वशिष्ठं पुरुषर्षभः ॥ ८ ॥
मातापितृषु यद्वृत्तं सम्यक् कुर्वन्ति मानवाः ।
न स्वप्रतिकरं ताभ्यां मात्रा पित्रा च यत् कृतं ॥ ९ ॥

तथाशनप्रदानेन शयनाच्छादनेन च ।
नित्यं च प्रियवादेन तथा संवर्धनेन च ॥ १० ॥
स हि राजा दशरथः पिता जनयिता मम ।
प्रतिज्ञातं मया तस्य न कार्यं वाक्यमन्यथा ॥ ११ ॥
एवमुक्ते तु रामेण भरतस्तदनन्तरं ।
उवाच विपुलोरस्कः सूतं परमदुर्मनाः ॥ १२ ॥
इह मे स्थण्डिले शीघ्रं क्रियतां संस्तरः कुशैः ।
आर्यं प्रत्युपवेक्ष्यामि यावन्मे न प्रसीदति ॥ १३ ॥
अनाहारो निरालोको धनहीनो यथालसः ।
शये पुरस्ताच्छालायां यावन्न प्रतियास्यति ॥ १४ ॥
स तु राममभिप्रेक्ष्य भरतश्च सुदुर्मनाः ।
कुशास्तरैरुपस्थाप्य भूमावेवास्तृणात् स्वयं ॥ १५ ॥
तमुवाच महातेजा रामो राजर्षिनन्दनः ।
किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसि ॥ १६ ॥
ब्राह्मणो ह्येकपार्श्वेन शयानस्तु पुरं दहेत् ।
न तु मूर्धाभिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥
उत्तिष्ठ राजशार्दूल हित्वैतद्दारुणं व्रतं ।
अयोध्यां गच्छ शीघ्रं त्वं कुरु सत्यं पितुर्वचः ॥ १८ ॥
मया यथासि संदिष्टस्तथा भरत यत्नवान् ।
अनुपालय धर्मेण प्रजाः स्विष्टा इव प्रजाः ॥ १९ ॥

आसीनस्त्वेवं भरतः पौरजानपदं जनं ।
उवाच सर्वतः प्रेक्ष्य किमार्यं नानुयाचथ ॥ २० ॥
ते तमूचुर्महात्मानं पौरजानपदा जनाः ।
भरतं बाष्परक्ताक्षं रामानुनयविह्वलं ॥ २१ ॥
अभिजानीमः काकुत्स्थं सत्यधर्मपरायणं ।
वक्तुं न शक्नुमः स्नेहान्न हि नः श्रोष्यते वचः ॥ २२ ॥
पितुरेष महाभागो वचनं परिपालयन् ।
न गुरूणां न मातॄणां न तव श्रोतुमिच्छति ॥ २३ ॥
अतो न शक्नुमो ह्येनं व्यावर्तयितुमञ्जसा ।
धृतिमन्तं स्थितं सत्ये रामं दयितबान्धवं ॥ २४ ॥
नैव शक्यश्चालयितुं सत्यात् सत्यपरायणः ।
हिमवानिव शैलेन्द्रो वायुना द्रुमवैरिणा ॥ २५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतप्रत्युपवेशो
नाम विंशतिशततमः सर्गः ॥

## CXXI.

पौराणां तु वचः श्रुत्वा राघवः पौरवत्सलः ।
प्रहर्षमतुलं लेभे प्रहृष्टश्चेदमब्रवीत् ॥ १ ॥
वेदवेदाङ्गविदुषां ब्राह्मणानां तपस्विनां ।
उपपन्नं च युक्तं च वचनं ज्ञानचक्षुषां ॥ २ ॥
सर्वज्ञानां कृतज्ञानां पूज्यानामनुदैवतं ।
सत्ययुक्तं च युक्तं च धर्मयुक्तं विशेषतः ॥ ३ ॥
पित्रा नः पुत्रवत् तात रक्षितानां प्रयत्नतः ।
पौराणां नृपभक्तानामेतत् स्वसदृशं वचः ॥ ४ ॥
पुनरुक्तं ब्रवीमि त्वां भरत प्रतिगम्यतां ।
इहावश्यं हि वस्तव्यं प्रतिज्ञां रक्षता मया ॥ ५ ॥
शापितः खल्वसि मया किमर्थमवलम्बसे ।
सम्यगूचुरिमे सर्वे सुहृदो नो हितैषिणः ॥ ६ ॥
किमस्मांस्ते परिक्लिश्य भरत प्रतिगम्यतां ।
महार्णवः शोषयितुं भवेच्छक्यो नदीपतिः ॥ ७ ॥
विन्ध्यो वा वसुधाकीर्णः शक्यश्चालयितुं क्षितेः ।
अहं तु शासनं वीर न करिष्येऽनृतं पितुः ॥ ८ ॥
एतच्च प्रतिजानामि सत्येन च शपाम्यहं ।
एतच्चैवोभयं श्रुत्वा सम्यक् संपश्य राघव ॥ ९ ॥

एवं तद्वचनं श्रुत्वा भरतः पार्थिवात्मजः ।
विवर्णवदनो भूत्वा परं दैन्यमुपागतः ॥ १० ॥
स दर्भशयनात् तस्मादुत्थाय भरतस्तदा ।
उपस्पृश्योदकं वीरो वाक्यमेतदुवाच ह ॥ ११ ॥
शृण्वन्तु मे परिषदो मन्त्रिणो मातरस्तथा ।
अनुरक्ताश्च सुहृदः पौरजानपदास्तथा ॥ १२ ॥
भवद्भिः श्रुतमिच्छामि सर्वैरेव विशेषतः ।
विशुद्धिं दातुमिच्छामि गर्हितस्यास्य कर्मणः ॥ १३ ॥
न राज्यं पितरं याचे नानुशोचामि मातरं ।
आर्यं परमधर्मज्ञं नावजानामि राघवं ॥ १४ ॥
यदि त्ववश्यं वस्तव्यं कर्तव्यं वचनं पितुः ।
अहमेतानि वत्स्यामि वर्षाणीह चतुर्दश ॥ १५ ॥
धर्मात्मा स तु तथ्येन भ्रातुर्वाक्येन विस्मितः ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनं ॥ १६ ॥
विक्रीडमाहितं दत्तं यत् पित्रा जीवता मम ।
तन्न लङ्घयितुं शक्यं मया वा भरतेन वा ॥ १७ ॥
उपाधिर्न मया कार्यो वनवासस्य कुत्सितः ।
अम्बाया ह्यग्रतः शप्तं पित्रा मे सुकृतं स्वयं ॥ १८ ॥
जानामि भरतं शान्तं गुरुसत्कारकारिणं ।
सर्वमेवात्र कल्याणं प्रत्याशंसे महात्मनि ॥ १९ ॥

अनेन धर्मशीलेन वनात् प्रत्यागतोऽपि सन् ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ २० ॥
कृतं चापि मयाम्बायाः कैकेय्या वचनं प्रियं ।
अनृतान्मोचयानेन पितरं तं महामतिं ॥ २१ ॥

इत्यार्ये रामायणे अयोध्याकाण्डे भरतानुशासनं
नाम एकविंशतिशततनः सर्गः ॥

# अयोध्याकाण्डं

## CXXII.

अथाप्रतिमतेजोभ्यां भ्रातृभ्यां लोमहर्षणं ।
विस्मिताः संगमं प्रेक्ष्य समवेता महर्षयः ॥ १ ॥
गन्धर्वाः समुनिगणाः सिद्धाश्च परमर्षयः ।
भ्रातरौ तौ महात्मानौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
धन्यः स यस्य पुत्रौ द्वौ धर्मज्ञौ सत्यविक्रमौ ।
श्रुत्वा वां तातसंभाषामुभाभ्यां स्पृहयामहे ॥ ३ ॥
ततो मुनिगणाः सर्वे दशग्रीववधैषिणः ।
भरतं राजशार्दूलमूचुस्ते खगता वचः ॥ ४ ॥
कुले जात महाप्राज्ञ महावृत्त महायशः ।
ग्राह्यं रामस्य वचनं पितरं यद्यवेक्षसे ॥ ५ ॥
तेनानृणमिमं रामं वयमिच्छामहे पितुः ।
सत्यप्रतिज्ञं कैकेय्याः स्वर्गस्थं पितरं च ते ॥ ६ ॥
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः ।
राजर्षयश्च ते सर्वे तथा स्वां गतिं गताः ॥ ७ ॥
ह्लादितस्तेन वाक्येन शुभेन शुभदर्शनः ।
रामः संहृष्टवत् सर्वांस्तानृषीन् प्रत्यपूजयत् ॥ ८ ॥
स्रस्तगात्रस्तु भरतो वाचा संसज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥

राजधर्ममिमं प्रेक्ष्य कुलधर्मार्थसंहितं ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च पावनं ॥१०॥
रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे ।
पौरजानपदं चापि राज्ये रञ्जयितुं जनं ॥११॥
ज्ञातयश्चापि योधाश्च मित्राणि सुहृदस्तथा ।
त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः ॥१२॥
इदं च राज्यं धर्मज्ञ सर्वं त्वं प्रतिपद्य हि ।
शक्तिमान् न हि काकुत्स्थ लोकस्य परिपालने ॥१३॥
इत्युक्त्वा न्यपतद्भ्रातुः पादयोर्भरतस्तदा ।
भृशमाराधयामास राममेव प्रियंवदः ॥१४॥
तमङ्के भरतं कृत्वा रामो वचनमब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंसगतिस्वनं ॥१५॥
इयं ते यादृशी बुद्धिः स्वभावाद्विनयाश्रया ।
भृशमुत्सहते सेयं त्रैलोक्यस्यापि रक्षणे ॥१३॥
शक्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ।
सोमस्य च पृथिव्याश्च राजन् वृत्तमिदं शृणु ॥१७॥
चतुरो वार्षिकान् मासान् यथा शक्रोऽभिवर्षति ।
परिहारैस्तथा राष्ट्रमभिवर्षेज्जनाधिपः ॥१८॥
अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः ।
एवं धर्मेण संचेयं तदादित्यव्रतं स्मृतं ॥१०॥

प्रविष्टः सर्वभूतानि यथाचरति मारुतः ।
चारेणैवं चरेद्राजा स्मृतं तन्मारुतं व्रतं ॥ २० ॥
यथा यमः प्राप्तकालः प्रियद्वेष्यौ नियच्छति ।
एवं राजा विनिश्चित्य समो हि स्यात् प्रियाप्रिये ॥ २१ ॥
वरुणेव यथा पाशैर्बद्ध एव हि दृश्यते ।
एवं राज्ञा नियन्तव्या दस्यवो वारुणैर्व्रतैः ॥ २२ ॥
परिपूर्णो यथा सोमो दृष्टो ह्लादयते मनः ।
एवं यस्मिन् प्रजाः सर्वा निर्वृतास्तच्छशिव्रतं ॥ २३ ॥
पृथिवी सर्वभूतानि समं धारयतेऽनिशं ।
स तथैव प्रजाः सर्वा धारयेत् पृथिवीपतिः ॥ २४ ॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
पूर्वं कार्याणि संस्मृत्य सुसंचिन्त्य हि कारयेत् ॥ २५ ॥
चन्द्रादपक्रमेल्लक्ष्मीर्हिमवांश्च परिव्रजेत् ।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥ २६ ॥
कामाद्वा यदिवा लोभान्मात्रा ते यदिदं कृतं ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥ २७ ॥
एवमस्त्विति वाक्यं तु भरतो राममब्रवीत् ।
तेजसादित्यसंकाशं प्रतिपच्चन्द्रदर्शनं ॥ २८ ॥
ततोऽथ रामस्य पुनः कृताञ्जलिः
स वाष्पकण्ठो भरतो महात्मनः ।

अलब्धकामः स बभूव दुःखितः
प्रगृह्य पादौ शिरसा महीगतः ॥ २१ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतविसर्जनं नाम
द्वाविंशतिशततमः सर्गः ॥

## CXXIII.

रामस्तु भरतं दृष्ट्वा शिरसा पादयोर्गतं ।
अपासर्पद्द्रुतं किञ्चिद्बाष्पपर्याकुलेक्षणः ॥ १ ॥
ततः पादौ हि संस्पृश्य भरतो न्यपतत् क्षितौ ।
रुदन्नतितरामार्तः कूलाद्वृक्ष इव च्युतः ॥ २ ॥
ससर्प इव मेदिन्यां शोकबाष्पपरिप्लुतः ।
अचेष्टत मुहुर्दीनः सर्वतः सस्वरं रुदन् ॥ ३ ॥
मातरश्चास्य ताः सर्वाः सीता च जनकात्मजा ।
अरुदंस्तस्य कारुण्याद्बाष्पप्रस्रवणैर्मुखैः ॥ ४ ॥
सयोधश्रेणिनिगमः सोपाध्यायपुरोहितः ।
तस्मिन् मुहूर्ते दुःखार्तः सर्वः प्ररुदितो जनः ॥ ५ ॥
अपि पुष्पप्रमोक्षेण सर्वाः प्ररुदिता लताः ।
नराणां किं पुनः स्नेहात्मनो येषां हि मानुषं ॥ ६ ॥
भरतं बाष्पपूर्णाक्षं स्नेहादागतविक्लवः ।
गाढमाश्लिष्य दुःखार्तं रामो वचनमब्रवीत् ॥ ७ ॥
साधुः पर्याप्तमेतावत् साधु बाष्पो निगृह्यतां ।
शोकार्तान् साधवेक्षास्मान् साधितः प्रतिगम्यतां ॥ ८ ॥
न त्वां शक्नोम्यहं द्रष्टुमेवंभूतं नृपात्मजं ।
शोकभारसमाक्रान्तं सीदतीव हि मे मनः ॥ ९ ॥

शापितोऽसि मया वीर सीतया लक्ष्मणेन च ।
न च त्वामभिभाषेयं यद्ययोध्यां न गच्छसि ॥१०॥
एवमुक्तस्तु भरतः प्रमृज्याश्रुकृतं मुखं ।
पूर्वमुक्त्वा प्रसीदेति राघवं स ततोऽब्रवीत् ॥११॥
अलं शप्तेन यास्यामि यद्येवं परितप्यसे ।
अहं हि जीवितेनापि प्रियं कुर्यां तव प्रभो ॥१२॥
गमिष्ये सर्वथायोध्यां मातृभिः सह राघव ।
प्रकर्षन् महतीं सेनां किन्तु विज्ञापयामि ते ॥१३॥
अपि स्मरिष्यसीक्ष्वाकोर्न्यासधर्मान्नृपश्रियं ।
धारयस्वेति धर्मज्ञ समयं स खलु प्रभो ॥१४॥
स प्रहृष्टतरो रामो भरतं गमनोत्सुकं ।
सान्त्वयित्वा शुभैर्वाक्यैस्तथेत्यभिदधे पुनः ॥१५॥
एतस्मिन्नन्तरे शिष्याः शरभङ्गस्य धीमतः ।
उपायनमनुप्राप्ता गृहीत्वा कुशपादुके ॥१६॥
मुनेस्तु कुशलं स्पृष्ट्वा निवेद्य सुमहात्मनः ।
राघवः प्रतिजग्राह ते उभे कुशपादुके ॥१७॥
ते गृहीत्वा तु भरत पादुके मुनिनाहृते ।
राघवस्याशु पादाभ्यामददत् कुशपादुके ॥१८॥
अब्रवीच्च तदा वाक्यं जनौघैः परिवारितः ।
वशिष्ठो वाक्यकुशलो दैन्यं हर्षं च वर्धयन् ॥१९॥

अधिरोह्यार्य पादाभ्यामिमे गृह्णीष्व पादुके ।
एते हि सर्वलोकस्य योगक्षेमं करिष्यतः ॥ २० ॥
सोऽधिरोह्य महातेजाः पादुके व्यपरोह्य च ।
प्रायच्छत तदा धीमान् भरताय महात्मने ॥ २१ ॥

स पादुके ते भरतः प्रतापवान्
स्वयं गृहीत्वा तु मुदा धृतव्रतः ।
प्रदक्षिणं चैव चकार राघवं
चकार चैवोत्तमनागमूर्धनि ॥ २२ ॥
अथानुपूर्व्या प्रतिपूज्य तं जनं
गुरूंन् वशिष्ठप्रभृतींस्तथानुगान् ।
व्यसर्जयद्राघववंशवर्धनः
स्थितः स्वधर्मे हिमवानिवाचलः ॥ २३ ॥
तं मातरो बाष्पनिरुद्धकण्ठ्यो
दुःखेन नामन्त्रयितुं हि शेकुः ।
स एव सर्वा अभिवाद्य मातॄ
रुदन् कुटीं संप्रविवेश रामः ॥ २४ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे कुशपादुकोपग्रहो
नाम त्रयोविंशतिशततमः सर्गः ॥

## CXXIV.

ततः शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ॥ १ ॥
वशिष्ठो वामदेवश्च जावालिश्च दृढव्रतः ।
अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २ ॥
मन्दाकिनीं नदीं पुण्यां प्राङ्मुखास्ते ययुस्तदा ।
प्रदक्षिणं च कुर्वाणाश्चित्रकूटं महागिरिं ॥ ३ ॥
यस्य धातुसहस्राणि रम्याणि गिरिसानुषु ।
प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ॥ ४ ॥
अदूराच्चित्रकूटस्य ददर्श स मुनेस्ततः ।
आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः ॥ ५ ॥
स तमाश्रममासाद्य भरद्वाजस्य बुद्धिमान् ।
अवतीर्य रथात् पादौ ववन्दे कुलनन्दनः ॥ ६ ॥
ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् ।
अपि कृत्यं कृतं तात रामेण च समागतं ॥ ७ ॥
एवमुक्तस्तु भरतो भरद्वाजेन धीमता ।
प्रत्युवाच भरद्वाजं धर्मिष्ठो धर्मवत्सलं ॥ ८ ॥
याच्यमानोऽपि गुरुभिर्मया च दृढनिश्चयः ।
राघवः परमप्रीतस्तत्रेदं वाक्यमब्रवीत् ॥ ९ ॥

पितुः प्रतिज्ञां तत्त्वेन पालयिष्याम्यतन्द्रितः ।
चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १० ॥
एवमुक्तो महातेजा वशिष्ठः प्रत्युवाच ह ।
वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥
एते प्रयच्छ धर्मात्मन् पादुके सुदृढव्रतः ।
अयोध्यायां नरव्याघ्र योगक्षेमं करिष्यतः ॥ १२ ॥
एवमुक्तो वशिष्ठेन राघवः प्राङ्मुखः स्थितः ।
पादुके सुकृते शुभ्रे मम राज्याय सोऽददत् ॥ १३ ॥
निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना ।
अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
भरद्वाजस्तु भरतं मुनिर्वचनमब्रवीत् ॥ १५ ॥
नैतच्चित्रं नरव्याघ्र शीलवृत्तिधृतां वर ।
यदार्जवं त्वयि तिष्ठेन्निम्ने वृष्टमिवोदकं ॥ १६ ॥
अमृतः स महाभागः पिता दशरथस्तव ।
यस्य त्वमीदृशः पुत्रो धर्मो विग्रहवानिव ॥ १७ ॥
तमृषिं तु महाप्राज्ञमुक्तवाक्यं कृताञ्जलिः ।
आमन्त्रयितुमारेभे ववन्दे चरणावपि ॥ १८ ॥
ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनः पुनः ।
भरतः प्रययौ धीमानयोध्यां मन्त्रिभिः सह ॥ १९ ॥

यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः ।
पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥
ततस्त्रिपथगां रम्यामतिशीघ्रोर्मिमालिनीं ।
ददृशुस्ते तदा सर्वे गङ्गां शिवजलां नदीं ॥ २१ ॥
तां नक्रमकराकीर्णां संतीर्य सह बन्धुभिः ।
शृङ्गवेरपुरं राजा जगाम सहसैनिकः ॥ २२ ॥
शृङ्गवेरपुराद्गच्छन्नयोध्यां स ददर्श ह ।
भरतो दुःखसंतप्तस्ततः सूतमथाब्रवीत् ॥ २३ ॥
सारथे पश्य नगरीमयोध्यां शून्यकाननां ।
निराकारां निरानन्दां दीनां प्रतिहतस्वनां ॥ २४ ॥
वियुक्तां पुरुषेन्द्रेण ससुतेन महात्मना ।
राज्ञा दशरथेनेमां नोत्सहे प्रतिवीक्षितुं ॥ २५ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे भरतप्रतियानं नाम
चतुर्विंशतिशततमः सर्गः ॥

# अयोध्याकाण्डं

## CXXV.

स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान् प्रभुः ।
अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥
मार्जारोलूकसंकीर्णां सुदीननरवाहनां ।
तिमिराभ्याहतां कालीमप्रकाशां निशामिव ॥ २ ॥
राहुशत्रोर्वरां पत्नीं श्रिया प्रज्वलितामिव ।
ग्रहेणाभ्युत्थितामेकां रोहिणीमिव पीडितां ॥ ३ ॥
अल्पोष्णक्षुब्धसलिलां तप्तस्वरविहङ्गमां ।
लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥
विधूमामिव हेमाभामध्वराग्निसमुत्थितां ।
हविरभ्युक्षितां पश्चाच्छिखां विप्रलयं गतां ॥ ५ ॥
गोष्ठमध्ये स्थितामार्तामाचरन्तीं नवं तृणं ।
गोवृषेण परित्यक्तां गोकन्यामिव सोत्सुकां ॥ ६ ॥
प्रभाकराभैः सुस्निग्धैः प्रज्वलद्भिः शिखोपमैः ।
विमुक्तां मणिभिर्जात्यैर्नवां मुक्तावलीमिव ॥ ७ ॥
सहसा चलितां स्थानान्महीं पुण्यक्षयादिव ।
संहृतद्युतिविस्तारां तारामिव नभश्च्युतां ॥ ८ ॥
पुष्पनद्धां वसन्तान्ते मत्तभ्रमरनादितां ।
द्रुमदावाग्निविप्लुष्टां क्लान्तां वनलतामिव ॥ ९ ॥

संमूढनिगमां सर्वां संक्षिप्तविपणापणां ।
प्रच्छन्नशशिनक्षत्रां द्यामिवाम्बुधरैर्वृतां ॥ १० ॥
क्षीणपानोत्तमैर्भिन्नैः शरावैरभिसंवृतां ।
गतशौण्डामिव ध्वस्तां पानभूमिमसंस्कृतां ॥ ११ ॥
वृक्णभूमितलां निम्नां वृक्णपत्रसमावृतां ।
उपयुक्तोदकां भग्नां प्रपां निपतितामिव ॥ १२ ॥
विपुलां विनतां चैव मुक्तचापमहास्वनां ।
भूमौ बाणैर्विनिध्वस्तां पतितां ज्यामिवायुधात् ॥ १३ ॥
सहसा युद्धशौण्डेन हयारोहेण वाहितां ।
विक्षिप्तभाण्डामुत्सृष्टां किशोरीमिव दुर्बलां ॥ १४ ॥
शुष्कतोयां महामत्स्यैः कूर्मैश्च बहुभिर्वृतां ।
प्रभिन्नामिव विस्तीर्णां वापीमपहृतोत्पलां ॥ १५ ॥
पुरुषस्य प्रकृष्टस्य प्रतिषिद्धानुलेपनां ।
संतप्तामिव दुःखेन गात्रयष्टिमभूषणां ॥ १६ ॥
प्रावृषीव महारौद्रां प्रविष्टस्याभ्रसंचयां ।
प्रच्छन्नां नीलजीमूतैर्भास्करस्य प्रभामिव ॥ १७ ॥
भरतस्तु रथस्थोऽथ श्रीमान् दशरथात्मजः ।
वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत् ॥ १८ ॥
किन्नु खल्वत्र गम्भीरो मूर्छितो न निशम्यते ।
यथा पूर्वमयोध्यायां गीतवादित्रनिस्वनः ॥ १९ ॥

तरुणैश्चारुवेशैश्च नरैरुत्तमभूषणैः ।
संपतद्भिरयोध्यायां न विभान्ति महापथाः ॥ २० ॥
वारुणीमदगन्धश्च माल्यगन्धश्च मूर्छितः ।
धूपनागुरुगन्धश्च न प्रवाति यथा पुरा ॥ २१ ॥
यानप्रवरघोषश्च स्निग्धश्च हयनिस्वनः ।
मत्तनागनिनादश्च श्रूयते न यथा पुरा ॥ २२ ॥
अयोध्यां च प्रविश्यैव जगाम भवनं पितुः ।
तेन हीनं नरेन्द्रेण सिंहहीनां गुहामिव ॥ २३ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे अयोध्याप्रवेशो नाम
पञ्चविंशतिशततमः सर्गः ॥

## CXXVI.

ततो निधाय नगरे मातॄः स तु दृढव्रतः ।
अब्रवीद्भरतो वाक्यं गुरून् सर्वानशेषतः ॥ १ ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयामि वः ।
तत्र सर्वमिदं दुःखं सहिष्ये राघवं विना ॥ २ ॥
पिता मृतश्च मे राजा वनस्थश्च गुरुर्मम ।
रामप्रतीक्षो राज्याय पालयिष्ये वसुंधरां ॥ ३ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
अब्रुवन् मन्त्रिणः सर्वे तं वशिष्ठपुरोगमाः ॥ ४ ॥
सदृशं श्लाघनीयं च यदुक्तं भरत त्वया ।
वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ॥ ५ ॥
नित्यं ते भ्रातृवात्सल्यात् तिष्ठतो भ्रातृसौहृदे ।
मार्गमार्यप्रवृत्तस्य नानुमन्येत कः पुमान् ॥ ६ ॥
मन्त्रिणां वचनं श्रुत्वा यथाभिलषितं प्रियं ।
अब्रवीत् सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७ ॥

इत्यार्षे रामायणे अयोध्याकाण्डे नन्दिग्रामगमनव्यवसायो
नाम षड्विंशतिशततमः सर्गः ॥

# अयोध्याकाण्डं

## CXXVII.

प्रहृष्टमनसः सर्वा मातॄस्ताः सोऽभिवाद्य च ।
भरतो रथमारोहच्छत्रुघ्नसहितस्तदा ॥ १ ॥
आरुह्य तु रथं दिव्यं भ्रातरौ सहितावुभौ ।
ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥ २ ॥
अग्रतो गुरवस्तस्य वशिष्ठप्रमुखा द्विजाः ।
प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतोऽभवत् ॥ ३ ॥
अनुजग्मुश्च तं यान्तं भरतं पुरवासिनः ।
बलं चैव समाहूतं रथाश्वगजवाजिनः ॥ ४ ॥
रथस्थः स तु धर्मात्मा भरतो भ्रातृवत्सलः ।
गृहीत्वा पादुके ते तु नन्दिग्रामं जगाम ह ॥ ५ ॥
भरतस्तु ततः क्षिप्रं नन्दिग्रामं प्रविश्य हि ।
अवतीर्य रथात् तूर्णं गुरूनिदमुवाच ह ॥ ६ ॥
एतद्राज्यं मम भ्रात्रा दत्तं संन्यासवत् स्वयं ।
योगक्षेमकरे चैते पादुके शुभदर्शने ॥ ७ ॥
भरतः शिरसा कृत्वा संन्यस्य पादुके ततः ।
अब्रवीद्दुःखसंतप्तः सर्वप्रकृतिमण्डलं ॥ ८ ॥

छत्त्रं धारयत क्षिप्रमानीयार्यस्य पादयोः ।
एते राज्यं करिष्येते पादुके समलंकृते ॥ ९ ॥
भ्रातुर्मम च संन्यासो निक्षिप्तः सौहृदादपि ।
तमहं पालयिष्यामि राघवागमनं प्रति ॥ १० ॥
राघवस्य च संन्यासं दत्त्वेमे वरपादुके ।
राज्यं चेदमयोध्यायां भवेयं गतकल्मषः ॥ ११ ॥
अभिषिक्ते तु काकुत्स्थे प्रहृष्टमुदिते जने ।
प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणं ॥ १२ ॥
एवं तु विलपन् दीनो भरतः स महायशाः ।
नन्दिग्रामेऽकरोद्राज्यं पूजितो मन्त्रिभिः सह ॥ १३ ॥
स वल्कलजटाचीरमुनिवेशधरः प्रभुः ।
नन्दिग्रामेऽवसद्दीनः ससैन्यो भरतस्तदा ॥ १४ ॥
रामस्यागमनाकाङ्क्षी भरतो गुरुवत्सलः ।
भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तदा ॥ १५ ॥
ततस्तुः भरतः श्रीमानभिषिच्यार्यपादुके ।
स बालव्यजनं तत्र धारयामास च स्वयं ॥ १६ ॥
पादुके त्वभिषिच्याथ नन्दिग्रामे पुरोत्तमे ।
भरतः शासनं सर्वं पादुकाभ्यां न्यवेदयत् ॥ १७ ॥
एवं कालो व्यतिक्रामद्भरतस्य महात्मनः ।
यावदागमनं तस्य रामस्याक्लिष्टकर्मणः ॥ १८ ॥

अयोध्याकाण्डं

इत्यार्षे रामायणे वाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम्
अयोध्याकाण्डे नन्दिग्रामनिवासो नाम
सप्तविंशतिशततमः सर्गः ॥

अयोध्याकाण्डं समाप्तं ॥

# सर्गसंग्रहपत्रं

## अयोध्याकाण्डं

## सर्गसंग्रहपत्रं

# सर्गसंग्रहपत्रं

सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्र

# रामायणं

# RAMAYANA

## POEMA INDIANO DI VALMICI

PUBBLICATO

PER GASPARE GORRESIO

SOCIO DELLA REALE ACCADEMIA DELLE SCIENZE DI TORINO
CAVALIERE DELL' ORDINE DEL MERITO CIVILE DI SAVOJA
OFFICIALE DELLA LEGION D'ONORE DI FRANCIA
ECC.

III



PARIGI

DALLA STAMPERIA NAZIONALE DI FRANCIA

M DCCC L

Digitized by Google

LA PRESENTE EDIZIONE SI TROVA DEPOSITATA

ALLA LIBRERIA

DEL SIGNOR A. FRANCK

SUCCESSORE DEI SIGNORI BROCKHAUS E AVENARIUS

IN PARIGI

VIA RICHELIEU, N° 69

Digitized by Google

FA
16640

# RAMAYANA

POEMA INDIANO

# DI VALMICI

TESTO SANSCRITO SECONDO I CODICI MANOSCRITTI

DELLA SCUOLA GAUDANA

PER

GASPARE GORRESIO

SOCIO DELLA REALE ACCADEMIA DELLE SCIENZE DI TORINO
CAVALIERE DELL' ORDINE DEL MERITO CIVILE DI SAVOJA
DELLA LEGION D' ONORE DI FRANCIA
ECC.

VOLUME TERZO




PARIGI

DALLA STAMPERIA REALE

PER AUTORIZZAZIONE DEL GUARDASIGILLI DI FRANCIA

M DCCC XLV

Digitized by Google

# PREFAZIONE.

Dopo un volgere di circa mezzo secolo dalla prima apparizione del testo Serampurese, oscurata più tardi dai luminosi lavori del critico di Bonna, s' oltrepassa oggi finalmente di quasi due libri il libro secondo, che pareva essere fin quì il limite fatale alla pubblicazione della grande epopea. Dei tre volumi, che ho fino a quest' ora elaborati e sposti in luce, questo è il prediletto, quello in cui mi compiaccio con particolare amore. Quì l' Eroe, settima incarnazione di Visnu, umanatosi nella famiglia di Dasaratha re d' Ayodhyâ, sul finir del Tretayuga, discende alquanto dall' altezza della divina sua essenza, e ravvicinandosi all' umana natura, ne partecipa le passioni, le sventure, i dolori. Quindi la poesia anch' essa diventa, per così dire, più umana, si sviluppa per poco dall' oscurità del simbolo, in cui si diletta, e sgorga mirabile in vergine vena di sentimento e d' affetto. Ma forse che a farmi prediligere sopra i due primi questo terzonato contribuisce anche la maggior pena che io



Digitized by Google

ebbi nell' elaborarlo; perciocchè tra le gioje travagliose del pensiero, che si affatica, non ultima suole esser quella della difficoltà superata.

La traduzione italiana, a cui ho già posto mano, e che sarà continuata senza interruzione fino al termine del testo pubblicato, dischiuderà fra breve gli arcani fonti della poesia Valmiceja. Frattanto, e perchè meglio si abbracci compendiata l' ampia tela dell' epopea, ed affinchè più facilmente si comprendano le osservazioni critiche, che m' occorrerà di dover fare più innanzi sul libro terzo e quarto, sporrò quì un sunto di questi due libri, che seguita e si connette a quello, che ho tratteggiato nell' Introduzione al volume primo [1].

Partitosi Bharata dal monte Citracuta senza aver potuto smuovere Rama dal suo proposto di compiere nelle selve i quattordeci anni del suo esilio, i romiti abitatori di quelle montane regioni soliti per l' addietro a conversar con Rama, si conducono a lui con sembianti oscuri e mesti, annunziandogli il loro pensiero di abbandonar que' luoghi ora più che mai infestati dai Racsasi. E così com' erano raccolti in ischiera, tolto congedo da Rama, s' indirizzano ad altre sedi più sicure. Il Citracuta fatto

[1] Pag. XXIV e seguenti.

vuoto, silenzioso e tristo per la partenza dei Muni, venne in tedio a Rama. Que' luoghi, dove s' erano a lui mostrati poc' anzi Caikeyî, Bharata, la madre, gli rinnovavano nel pensiero troppo acerbe memorie; ond' ei deliberò d' abbandonare anch' esso il Citracuta insieme con Sitâ e Lacsmano, e di visitare in una lunga peregrinazione attraverso i monti meridionali dell' India, i più celebri romitaggj e i saggj più venerati per età, per santità e sapienza. Si conduce ei dapprima all' eremo del solitario Atri. Quivi i tre esuli videro ed onorarono la celebrata Anasûyâ consorte del Risci, la penitente antica di cui eglino avevano udito già raccontare le austerità, le meraviglie, i prodigj. La divina Anasûyâ, canuta e tremante per antica età, accoglie con mirabile festa la bella e giovane Sitâ, si stringe con lei a fidato colloquio, la commenda del suo amore al consorte, dell' aver anteposto, per seguitarlo, i disagj delle selve alle dolcezze d' Ayodhyâ, e le offre in dono un prezioso unguento che perpetuerà la sua bellezza, e la renderà ogni dì più cara e piacente allo sposo. E continuando fra loro i secreti colloquj, Sitâ interrogata da Anasûyâ le racconta la portentosa sua origine, e il suo divenir sposa a Rama; come, uscito un dì il re di Mithilâ colle consorti regali a disegnar

Digitized by Google

coll' aratro l' area del sacrificio, ella Sitâ sorgesse improvviso fuori del solco arato, levando in alto le tenere mani (quì traluce l' idea madre del mito di Proserpina); come fosse con amore raccolta e cresciuta dal re Mithilese; come, venuto il tempo del doverla fidanzare, fosse ella dal padre proposta come premio a quello tra i giovani principi, che avesse potuto tendere l' arco maraviglioso di Siva; come molti vi si provassero inutilmente, finchè giunse a Mithilâ Rama, il quale non solamente tese, ma spezzò l' arco prodigioso, ed ottenne lei in isposa. Tra questo conversare è sopravvenuta la notte. Compiute ai vicini lavacri le vespertine abluzioni, si raccolgono taciti ai loro asili i solitarj Muni; gli augelli s' appiattano tra le fronde; s' accovacciano nelle lor tane le belve, e cominciano a vagare attorno gli esseri, cui son care le tenebre della notte. Cessa allora ogni conversar tra gli ospiti, e alla gioja del ragionare succede la quiete del sonno. Al sopravvenir del nuovo giorno Rama, Sitâ e Lacsmano tolgon congedo da Anasûyâ ed Atri. Questi addita loro il cammino, che hanno essi a tenere; e i tre peregrini si rimettono in via. In sull' entrare nella foresta Dandaca, la gran selva oscura ed aspra e forte, si scopre loro dinanzi una cerchia d' eremi.

Digitized by Google

Nuovi solitarj accolgono quì i tre esuli, narrano a Rama le crudeltà dei Racsasi, ed implorano contr' essi il suo soccorso. Dipartitosi da loro Rama colla consorte e il fratello s' addentra nel fitto della selva. Improvvisamente si fa loro incontro un mostro orrendo, immane, che attraversa loro il cammino, e pon le mani sopra Sitâ : il suo nome è Viradho. Rama e Lacsmano vengono con lui a conflitto, e dopo varia ed aspra lotta lo distendono a terra trafitto da mortale saetta. Allora Viradho rivolge a Rama liete e soavi parole; e gli narra, ch' ei fu già per lo addietro un essere divino, uno splendido Gandharvo per nome Tumburu, ch' ei venne per un suo misfatto maledetto dal Dio Vaisravano, e trasmutato in quelle orride forme fino al dì, in cui cadesse trafitto dalle saette di Rama. La sua espiazione è oggimai compiuta, e gli è concesso risalire alle celesti sue sedi. Intuona egli gloria a Rama, lo consiglia di condursi all' eremo del gran Risci Sarabhango, e, riassunte le divine sembianze, si solleva al cielo. Quì, come in alcuni altri luoghi del poema, l' epopea va indicando la divina natura dell' Eroe, che sparge sui suoi passi benedizione, salvezza, riscatto. I tre peregrini proseguono oltre. In sull' avvicinarsi all' eremo di Sarabhango scorgono

Digitized by Google

essi manifesti i segni della presenza d' un Dio : è Indra disceso al romitaggio di Sarabhango; Rama l' ha riconosciuto alle note sue insegne. S' appressa egli reverente al santo luogo; ma il Nume scompare improvviso : chè non è venuto ancora il tempo, in cui Indra e gli altri Dei si discoprano manifesti a Rama. Ei li vedrà presenti e combattenti con lui, quando sarà accesa la gran guerra coi Racsasi. I due fratelli e Sitâ si trovano intanto al cospetto di Sarabhango; Rama raccoglie con religioso affetto le parole del Risci; ne riceve doni ospitali, e viene da lui indirizzato all' eremo di Suticsno, di cui il Risci gli addita il dilettoso sito. In questo, suscitato il divo fuoco e sparsovi sopra il sacro liquore, Sarabhango maturato da lunghe austerità v' entra nel mezzo per deporvi la salma mortale ed avviarsi al cielo. Consunte dal fuoco le terrene membra, il Risci n' esce fuori raggiante di gioventù immortale, e sen vola in seno a Brahma.

I Muni de' circostanti romitaggj s' adunano intorno a Rama sbigottiti, squallenti, maceri, e gli indirizzano parole di preghiera e di sgomento : « O Rama, onor della stirpe d' Icsvacu, difensor delle genti, deh! ci proteggi, ci salva dall' incrudelir dei Racsasi; mira sparsi per le selve i corpi de' solitarj

Digitized by Google

uccisi da loro; tu, signor del castigo, vendica i nostri oltraggj. » Rama li conforta, li rassicura, promette loro difesa e sostegno, e s' avvia all' eremo di Suticsno. Quivi egli entra in ragionamenti col venerando Risci; passa la notte sotto l' ospitale suo tetto; e al nascer dell' aurora s' avvia oltre con Sitâ e Lacsmano, fatta promessa a Suticsno, che il rivedrebbe altra volta. Tra via Sitâ agitata da secreti presentimenti tenta con soave discorso di rimuover Rama dal suo pensiero d' entrare in guerra coi Racsasi, che in nulla l' hanno offeso. Rama difende e giustifica agli occhi della consorte il suo disegno. Frattanto i tre viandanti, attraversati monti e selve e fiumi, giungono ad un lago, da cui esce come un concento di canti e suoni. Un Muni, per nome Dharmabhrit, racconta a Rama l' origine di quel lago, che s' appella Pancapsaro. Gran numero d' eremi è sparso colà intorno: Rama colla consorte e il fratello visita a uno a uno tutti quei romitaggj, e i contemplatori austeri che v' hanno solitaria stanza. In questo peregrinar di Rama trascorsero intieri dieci anni. Conforme alla sua promessa ei si riconduce allora all' eremo di Suticsno, e si trattiene colà ospite qualche tempo. Un ultimo desiderio rimane a Rama prima di por fine a questa sua lunga pere-

Digitized by Google

grinazione : ei desidera visitare il divino e celebre Risci Agastyo. Suticsno gli descrive a parte a parte il cammino, che mena all' eremo desiderato; quindi Rama con Sitâ e Lacsmano, tolto per la seconda volta congedo dal Risci, s' avvia alla dimora dell' antico saggio. Ragionando varie cose fra loro, rinfrescando la memoria dei mirabili prischi fatti d' Agastyo, osservando i luoghi ch' ei vanno attraversando, i tre viandanti cominciano a discoprire i segni della vicinanza del Risci, indicati da Suticsno. La selva si dimostra men fosca, inarborata di piante più miti : quà e là fiori leggiadri, e tutt' intorno un alito di più tepida aura. « O Lacsmano, così parla Rama, siam giunti all' eremo del divino Agastyo; entra tu innanzi alquanto, ed annunzia al Risci, che io son quì con Sitâ venuto ad onorare l' altissimo saggio. » Lacsmano obbedisce alle parole del fratello, e poco stante il gran Risci s' appresenta egli stesso sulla soglia dell' eremo. Quì liete ed iterate accoglienze e lunghi ragionamenti fra gli ospiti. Agastyo fa dono a Rama d' un arco maraviglioso, invincibile; e richiesto da lui che gli additi in quelle vicinanze un luogo, dove ei possa fermar sua stanza e compiere gli anni del suo esilio, Agastyo gli indica un dilettevole sito, che s' appella Pancavati, lieto

Digitized by Google

d' acque e di fronde, dove Sitâ potrà ricreare tra la varietà d' amabili oggetti i lenti giorni della sua solitudine. Venuti al termine del loro peregrinare i tre esuli regali si dipartono da Agastyo, e s' indirizzano alla volta del Pancavati per fermarvi loro sede. Mentre progrediscono innanzi, s' accosta improvviso a Rama Gatayu, essere misterioso, simbolico, creazione strana ma grandiosa dell' epopea; il quale debbe aver gran parte nel dramma lamentoso che si prepara. Gatayu è sovrano augello, re degli avoltoj गृध्रराजा, grande, smisurato, altero. Egli fu amico di Dasaratha, mentrechè visse l' infelice padre di Rama; egli antico di secoli ha assistito alla generazione degli esseri, che popolaron la terra; egli è re degli spazj aerei, sovrano degli avoltoj. Gatayu adunque s' appressa a Rama, siccome a figlio del suo amico Dasaratha, e s' accompagna con lui. Interrogato da Rama intorno alla sua origine, Gatayu gli espone tutta intiera una cosmogonia. In questo mentre son pervenuti al Pancavati. Lacsmano s' adopra immantinente a drizzare colà una capanna atta a servir loro d' asilo; la quale messa in punto vien poscia purificata conforme ai riti lustrali. Sopraggiunge intanto il verno, soggetto di bella descrizione all' epopea; Gatayu si diparte da loro, stretta ami-



Digitized by Google

cizia con Rama; e rimangono soli abitatori del Pancavati Lacsmano, Rama, e la donna sua diletta, la consolatrice del suo esilio, Sitâ.

Tutte quelle regioni meridionali erano allora, siccome canta l'epopea, percorse e funestate dai Racsasi, che avevano loro sede principale in Ceylan, seggio del feroce regnator di Lancâ, Ravano. Nel continuo andare attorno, che fanno per quelle selve i Racsi, soprarriva nel Pancavati una Racsasa, per nome Surpanakhâ, sorella di Ravano. Costei, veduto Rama bello della persona, nobile d'aspetto, fiorente di gioventù, arde improvviso d'amore per lui: gli si appressa, gli apre la sua passione, e lo stringe con ardenti istanze, perchè ei consenta a divenirle sposo. I due fratelli si piglian dapprima scherzo di lei deridendola; ma, veduta poi dalla Racsasa minacciata ed oltraggiata Sitâ, volgono in isdegno il riso, e incrudeliscono contro Surpanakhâ fino a mozzarle le orecchie e il naso. La Racsasa si rinselva empiendo l'aria di gridi, e se ne va correndo a Kharo suo fratello, posto da Ravano con grand' oste di Racsasi a custodir que' luoghi. Venuta dinanzi a Kharo tutta insanguinata e deforme, gli narra, che due eccelsi garzoni, non sa se uomini o Dei, belli come Gandharvi, aventi con loro una donna

Digitized by Google

o Dea raggiante di beltà celeste, furono da lei incontrati nel Ganasthana (sede delle genti), che ella gittatasi sopra loro per isbranarli (quì mente la Racsasa) ne venne a quel modo malconcia. Chiede ella vendetta di loro, e vuol berne caldo caldo il sangue. Kharo sceglie quattordeci fra i più intrepidi Racsi, e gli invia con Surpanakhâ contro Rama. Finora preparata a mano a mano dall' epopea incomincia quì propriamente la gran guerra contro i Racsasi, che s' andrà d' ora in poi vieppiù sempre ampliando fino alla disfatta di quella gente nemica, la quale sarà cantata sul finir del sesto libro. I quattordeci Racsasi inviati poc' anzi sono tutti uccisi da Rama. Surpanakhâ, testimone di quella strage, sen fugge impaurita, e ritorna a Kharo, annunziandogli tutti distesi a terra dalle saette di Rama i quattordici guerrieri da lui spediti. Kharo s' accende di vergogna e d' ira, e si dispone a marciare egli stesso con quattordici mila Racsasi per aver vendetta di quell' oltraggio, e cancellar quell' onta. Segni paurosi annunziatori di morte accompagnano la partenza di quell' oste. Giunge essa al Ganasthana capitanata da Kharo; entra in battaglia con Rama; e dopo lungo e vario combattere vien ella parte disfatta, parte volta in fuga; Kharo egli stesso vi rimane

Digitized by Google

estinto. Quì appare di nuovo la natura divina dell' Eroe. Tutta questa serie d' eventi e di battaglie, che io non ho fatto quì che accennare, è dall' epopea descritta a lungo e con magnifici colori.

Omai s' avvicina il momento, in cui entrerà terribile attor nel gran dramma Ravano, l' oltracotante e temuto signor dei Racsasi. Veduto lo sterminio dell' oste, Surpanakhâ s' è messa in via alla volta di Lancâ : vi giunge tutta ancora esterrefatta, e si presenta a Ravano suo fratello. Il dominator di Lancâ è là fiero, superbo, indomito, solcato la fronte e il petto dalle cicatrici, che gli impressero, nella sua guerra coi Devi, i fulmini d' Indra, il disco di Visnu, le zanne dell' elefante Airavato. Surpanakhâ comincia dal rimproverargli l' ozio imbelle, a cui egli s' abbandona ora in Lancâ; poi gli narra i disastri del Ganasthana. Ma nel raccontargli quella doppia disfatta dei suoi, ella, per vieppiù accendere forse il suo animo alla vendetta, si stende particolarmente a descrivergli la bellezza di Sitâ. « Nessuna donna mortale, o Ravano, mi venne veduta mai così bella; tu la diresti una Dea, una Gandharva. Oh! felice colui, che può nomarla sposa, e ch' ella farà lieta de' suoi amplessi! Tale è Sitâ, o Ravano, di te ben degna consorte. » Non bisogna più oltre. Ravano già

Digitized by Google

arde d'amoroso fuoco; la sua determinazione è presa; ei rapirà a Rama la bella sua Sitâ, e ne farà lieto il regale suo talamo in Lancâ. Ed ecco nell' epopea, forse la più antica dei tempi mitici, fatto nodo principale del dramma epico un rapimento di donna; poco più tardi canterà un nuovo ratto e una nuova guerra il vate antico della Grecia; e la storia mitica dei rapimenti di donne si troverà diffusa nelle tradizioni di quasi tutti i prischi popoli. Il re de' Racsi adunque, deliberato di rapir Sitâ e divisatone fra se il modo, esce secreto da Lancâ, e si conduce in sulla sponda del mare opposta a Ceylan, ad un luogo romito abitato allora dal Racsaso Marico. Questi fu già altre volte uno tra i più audaci compagni delle spedizioni di Ravano; il quale molto in lui si confida, e vuole ora associarlo alla rischiosa sua impresa. Quando il figlio primonato di Dasaratha, garzoncello ancora, protesse contro i Racsi il sacrifizio di Visvamitra [1], Marico era stato uno dei Racsasi, che egli aveva percosso delle sue saette; poi in altri scontri ancora il feroce Marico era stato da Rama fieramente maltrattato. Entratogli per questo nell' animo timor di quell' avversario e dispetto di quelle disfatte, s' era egli ridotto a viver solitario

[1] Libro I.

Digitized by Google

fuori del tumulto delle continue lotte. Ravano tenta ora di raccendere l'antico suo ardore. Ma allor che Marico ode pronunziare il nome di Rama, e conosce che contro lui debb' esser rivolto il tenebroso disegno di Ravano, un terrore invincibile s' impadronisce di lui, ricusa ogni ajuto a quella impresa, e s' adopra a distoglierne Ravano stesso, affermandogli che non può risultarne altro che danno e rovina. Ma nulla giova : Ravano, esaurite le preghiere, adopra il comando, e costringe Marico a piegarsi al suo ineluttabile volere. Quì son giunto a quella parte del dramma epico, che canta il rapimento di Sitâ, ed a cui non so quale altra creazione poetica si potrebbe comparare : tanta quì abbonda la vena del sentimento, la maestà del dolore, la verità degli affetti, la gentilezza de' pensieri, la delicatezza e l' efficacia di stile. Stupenda creazione! Lascierò intatte per la traduzione tutte le grazie pudiche di questo pietoso racconto, e mi contenterò di seguitare il movimento del dramma. Il mezzo convenuto tra Marico e Ravano per rapir Sitâ è questo. Marico debbe trasmutarsi in bello ed amabile cervo (i Racsasi hanno virtù di mutar forme), mostrarsi a Sitâ, e scherzare innanzi ad essa in mille graziosi modi. Sitâ non potrà rimanersi dal desi-

Digitized by Google

derar quel cervo, o vivo se fia possibile, o morto per averne il delicato vello. Come prima Rama, tolto l'arco e le saette, si porrà in traccia del cervo per compiacere al desiderio di Sitâ, Marico s' andrà via via dilungando ora visibile, ora nascosto fra la selva, finchè abbia di gran tratto allontanato Rama. Simulandone allora destramente la voce Marico griderà in suono di sgomento: « Oh Lacsmano, oh Lacsmano, ajuto! » Sitâ, spaventata a quel grido, crederà il consorte in pericolo della vita, e invierà Lacsmano al suo soccorso: rimasta ella sola, uscirà dall' aguato Ravano, e la rapirà senza contrasto. Ordinata così la scellerata insidia, si mettono in via alla volta del Ganasthana. All' appressarsi di Ravano s' appiattano impauriti ne' covili le belve, tra la frasca gli augelli; s' arresta immoto l' aleggiar de' venti; volgono più lente e chete le lor onde i fiumi. Tutto addiviene come era stato divisato. Marico, in sembianza di bellissimo cervo, invaghisce Sitâ, ed allontana da essa Rama, poi Lacsmano; esce in quel mentre dalle latebre della foresta Ravano, e rapisce sul suo carro aereo Sitâ piangente e chiedente invano aita. « O Ganasthana, o monti, o fiumi, o Divinità protettrici di queste selve, deh! narrate a Rama, che io son fatta preda d' un rapitor spietato.

Digitized by Google

Addio care sponde della bella Godavari, addio piante ospitali, fidi e cari recessi addio. » Posato sulla più alta cima d' un monte, dorme ai caldi raggj del sole il sovrano augello degli avoltoj, il vecchio Gatayu. Ode egli fra il sonno i lamenti, che si spandono intorno; si desta improvviso, volge gli occhi in giro, e vede rapita per l' aria la consorte di Rama. Ratto ei si dispicca dalla vetta del monte, e librando immote dinanzi al rapitore le ali immense, contende a Ravano il cammino e la preda. Quì s' appicca tra Ravano e Gatayu una battaglia aerea, strana, orribile, degna di Dante. Il vecchio Gatayu soccombe, e Ravano colla sua preda si ravvia a Lancâ. Inosservata da Ravano Sitâ lascia cadere sulla sua via alcuni suoi femminili ornamenti, se mai per avventura potessero essi servir d' indizio a Rama e porlo sulla sua traccia. Al trapassar della dolente infelice mostra segni di duolo la natura impietosita. Fremono nelle lor fronde le cupe foreste; percuotono l' aria di lunghi ululati le belve; si vela di nubi il sole; gonfia il suo seno il mare. Il gran misfatto è consumato; è giunto Ravano in Lancâ colla donna rapita. Chi potrà oggimai riaverla in Lancâ, cui fanno insuperabil riparo i vasti flutti del mare? Ivi ei s' adopra, ma invano, a raddolcirla : la confida

Digitized by Google

alla custodia delle sue donne; loro impone di non contristarla, per quanto han cara la vita; nè dispera di vincerne più tardi l'inflessibil rigore. Mentre Sitâ attorniata da strana custodia s'abbandona senza speranza al suo dolore, nè pare aver più sollecitudine alcuna della vita, discende a lei inviato da Brahma Indra, il re dei Devi, in compagnia del Sonno. Il Dio la conforta, e raccende in lei colla speranza l'amor della vita, promettendole che fra breve vedrà dinanzi a Lancâ Rama venuto con formidabile esercito a riconquistarla. Confortata così di care parole l'infelice derelitta, si dilegua il Nume.

In questo mezzo Rama, ferito il cervo, riconosce in lui il Racsaso trasmutato, e discopre la frode. Precipitoso ei ritorna sui suoi passi funestato da sinistri presagj, e scontratosi col fratello, che veniva alla sua volta: « Tu quì, o Lacsmano, esclama, lungi da Sitâ! Siam tutti ludibrio d'un fatale inganno. Il grido di sgomento, che quì ti trasse, non uscì dalla mia bocca, ma dal cervo malauguroso che discopersi un Racsaso: tremo pensando a Sitâ, che tu lasciasti sola. » I due fratelli affrettano i passi; giungono al loro abituro, e lo trovan deserto e muto. Rama ne percorre affannoso ogni angolo più ri-



Digitized by Google

posto; chiama iterando Sitâ; nessuno risponde; tutto è solitudine e silenzio.

> Chi narrerà le angosce, i pianti, i gridi,
> L' alta querela che nel ciel penétra,

quando Rama cominciò ad esser certo della sua sventura? Tutto quel dì e l' altro ancora e l' altro andò cercando la sua diletta per monti e selve e valli; tutto fu invano: al nome di Sitâ non rispondea che dai cupi antri l' eco. Nel suo errar forsennato ei ritrovò giacente a terra Gatayu: ma il sovrano augello morente potè dirgli appena, che Sitâ era stata rapita, che egli tentò difenderla e fu vinto, che il rapitore era il dominator di Lancâ. Ma chi è costui? dove è Lancâ? Rama nol sa. La geografia del Ramayana, come quella d' Omero, è ancora molto ristretta, e non ha che una conoscenza oscura delle regioni meridionali dell' India. Più utili indizj all' uopo vengon dati al vedovato consorte di Sitâ da Cabandho. Fu già questi un Danavo, trasformato per maledizione d' Indra in mostro: Rama l' incontra nella foresta, e il proscioglie dalla sua espiazione. Cabandho addita ai due fratelli il monte Risciamuco, dove ha sua sede Sugrivo, signor delle scimmie (così qualifica l' epopea i montani abitatori del mezzodì dell' India, poco a lei noti). Sugrivo

Digitized by Google

conosce tutta quanta la terra (l' India); ei l'ha percorsa ramingo, allorchè ei fuggiva l' odio mortale del suo fratello Bali. Conviene che Rama entri in alleanza con lui : egli potrà meglio d' ogni altro aiutarlo nell' impresa di racquistare la rapita consorte, e di vendicar sopra i Racsi l' iniquo oltraggio. Tale è il consiglio di Cabandho; Rama si dispone a recarlo ad effetto, ed insieme con Lacsmano s' avvia al Risciamuco. Quì termina il libro terzo, l' *Aranyakanda*.

Il libro quarto canta la lega tra Rama e Sugrivo il re delle scimmie, e narra i primi preparativi per la gran spedizione contro Lancâ. Sugrivo attorniato da' suoi fidi vede dall' alto del Risciamuco appressarsi armati di scimitarra e d' arco i due fratelli Rama e Lacsmano. Nasce in lui sospetto e timore a quell' insolita vista, e immantinente a gran salti, spezzando e atterrando sul suo passaggio alberi e piante, si conduce di vetta in vetta dal Risciamuco al monte Malayo, seguitato da' suoi compagni. Quivi fermatosi manda un suo fidato per nome Hanuman a scoprire chi fossero i due armati, che s' appressavano alla loro volta. Il messaggiere raggiunge tra via Rama e Lacsmano; e conosciuto qual fosse la cagione del loro venire, si rassicura e li intro-

Digitized by Google

duce innanzi a Sugrivo. I casi di Rama, la sua sventura, il suo disegno son fatti manifesti al signor delle scimmie. Sugrivo è lieto di tant' ospite a lui venuto: gli narra, che ha veduto trapassar per l' aria il rapitor della donna, che ei piange; gli mostra alcuni ornamenti, che lasciò cader la rapita, e ch' egli ha raccolti; poi, senza frapporre indugio, acceso il sacro fuoco, al cospetto della fiamma che arde, stringe con lui amicizia e lega. Sugrivo entra ora in un lungo episodio a raccontare a Rama i casi suoi proprj. Egli è da lungo tempo, per cagioni che ei racconta appieno, scopo all' odio e alla persecuzione di Bali suo fratello primonato. Bali ha forza smisurata, ha impero sulle scimmie, e sede nella gran spelonca Kiskindhyâ. Di lui vive in continua paura Sugrivo; chè ei sa, quant' egli possa, e come egli aneli alla sua morte. Se gli venisse fatto di liberarsi da Bali, ei sarebbe oltre ogni dire felice e signore assoluto delle scimmie. Rama consiglia a Sugrivo di sfidare a singolar battaglia Bali, e gli promette la sua assistenza e l' aiuto delle sue temute saette. Incoraggiato da Rama Sugrivo sen va con lui alla spelonca Kiskindhyâ, e chiama Bali a battaglia. Combatte col fratello una prima volta con infelice successo, e ne è aspramente percosso. Ma

Digitized by Google

rinnovata una seconda volta la pugna, Bali cade ferito dalle saette di Rama. In sul morire egli rimprovera al suo uccisore l' atto disleale e ingiusto dell' averlo ferito di nascosto e fuor d' ogni ragione. Rama gli risponde per giustificare quel fatto; e nei rimproveri dell' uno, nella risposta dell' altro sono espresse opinioni, usanze, idee veramente singolari e teorie strane di diritto sociale e di regia autorità. In questo muore Bali tra i compianti di Tarâ sua consorte e delle altre donne regali. Sugrivo è allora proclamato e consecrato re, signor supremo delle scimmie. Quì pare condensata in un fatto solo qualche guerra antica tra i silvestri abitatori delle regioni meridionali, alla qual guerra ebbero forse parte i popoli settentrionali dell' India. Tutti questi fatti, che io ho quì solamente indicati, sono materia di lunga e magnifica narrazione all' epopea.

Sopravviene intanto la stagione delle pioggie. Rama e Lacsmano, cui è interdetto dalla condizion dell' esilio l' entrare in città o villagio, si riducono ad abitare sur un monte vicino; Sugrivo entra in possesso della regal spelonca Kiskindhyâ, e s' attende il cessar della stagion delle piove (stagion che cade nei mesi di luglio e agosto) per recare ad effetto la gran spedizione contro Ravano. Ma gli ozj della

Digitized by Google

## XII.

रामस्तु सहसौमित्रिः सुतीक्ष्णेनाभिपूजितः ।
तां समुष्य निशां कृत्स्नां प्रभाते प्रत्यबुध्यत ॥ १ ॥
तावुत्थाय यथाकालं सीतया सह राघवौ ।
शौचं प्रचक्रतुर्वीरौ जलेनोत्पलगन्धिना ॥ २ ॥
अथ तेऽग्नित्रयं तत्र वैदेही रामलक्ष्मणौ ।
उपतस्थुर्महाभागास्तपस्विशरणे वने ॥ ३ ॥
उद्यन्तं दिनकरं दृष्ट्वा विगतकल्मषाः ।
सुतीक्ष्णमभिगम्येदं रामो वचनमब्रवीत् ॥ ४ ॥
सुखोषिताः स्मो भगवंस्त्वया पूज्येन पूजिताः ।
आपृच्छे त्वां प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५ ॥
त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलं ।
ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनां ॥ ६ ॥
अभ्यनुज्ञातुमिच्छामः सहैभिर्मुनिपुङ्गवैः ।
धर्मशीलैस्तपोवृद्धैर्विशिखैरिव पावकैः ॥ ७ ॥
अविषह्यांशुरादित्यो यावन्नातितपत्यसौ ।
तावदेवेत इच्छामो गन्तव्येऽनुमतं त्वया ॥ ८ ॥
एवमुक्त्वा ततो रामो ववन्दे चरणौ मुनेः ।
लक्ष्मणेन सह भ्रात्रा सीतया च महाद्युतिः ॥ ९ ॥

Digitized by Google

तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः ।
गाढमालिङ्ग्य सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥
अविघ्नं गच्छ पन्थानं राम सौमित्रिणा सह ।
सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११ ॥
पश्याश्रमपदं राम दण्डकारण्यवासिनां ।
एषां तपस्विनां वीर तपसा भावितात्मनां ॥ १२ ॥
सुप्रापफलपुष्पाणि विचित्राणि वनानि च ।
प्रशान्तमृगयूथानि कान्तपक्षिगणानि च ॥ १३ ॥
फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
कारण्डवविघुष्टानि तडागानि सरांसि च ॥ १४ ॥
पश्य त्वं दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
रमणीयान्यरण्यानि मयूरविरुतानि च ॥ १५ ॥
शिवाय गम्यतां राम सौमित्रे वत्स गम्यतां ।
आगन्तव्यं तु नो द्रष्टुं पुनराश्रममण्डलं ॥ १६ ॥
एवमुक्तस्तथेत्युक्त्वा काकुत्स्थः सहलक्ष्मणः ।
प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७ ॥
ततः शुभतरांस्तूणान् धनुषी चायतेक्षणा ।
ददौ सीता तयोर्भ्रात्रोरसी चारिनिवर्हणौ ॥ १८ ॥
निबध्य तौ च तांस्तूणान् धनुषी च प्रगृह्य तौ ।
निष्क्रान्तावाश्रमं द्रष्टुं ततस्तौ रामलक्ष्मणौ ॥ १९ ॥

Digitized by Google

## XIII.

प्रस्थितौ धृतचापौ च तौ निशम्याथ जानकी ।
स्नेहया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १ ॥
प्राप्यतेऽहिंसया राम धर्मः सद्भिः सदा शुभः ।
नाशनानि पुनस्तस्य सप्ताहुर्व्यसनानि च ॥ २ ॥
तत्र कामसमुत्थानि चत्वार्युक्तानि राघव ।
क्रोधोद्भवानि च त्रीणि व्यसनानि प्रचक्षते ॥ ३ ॥
मिथ्यावाक्यं तु प्रथमं यत् सद्भिस्त्यज्यते सदा ।
परदाराभिगमनं विना वैरं च रौद्रता ॥ ४ ॥
तानि सर्वाणि संयन्तुं शक्यं राम जितेन्द्रियैः ।
तव वश्येन्द्रियत्वं च जानामि शुभनिश्चयं ॥ ५ ॥
मिथ्यावाक्यं न ते भूतं न भविष्यति राघव ।
कुतो नु दूषणं राम कुतः स्त्रीगमनं प्रभो ॥ ६ ॥
अस्थाने वैरकरणं तच्च ते समुपस्थितं ।
यदिदं ते व्यवसितं परहिंसाकृतं व्रतं ॥ ७ ॥
वैरप्रसङ्गजननं रक्षोभिस्ते न ते हितं ।
प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनां ॥ ८ ॥
ऋषीणां रक्षणाकृते बधः संयति रक्षसां ।
बधार्थे रक्षसां वीर दण्डकारण्यवासिनां ॥ ९ ॥

Digitized by Google

प्रस्थितस्त्वं सह भ्रात्रा गृहीत्वा सशरं धनुः ।
त्वां चैव प्रस्थितं दृष्ट्वा राम चिन्ताकुलं मनः ॥ १० ॥
सर्वतश्चिन्तयन्त्या मे तव निःश्रेयसं नृप ।
न च मे रोचते वीर गमनं दण्डकं प्रति ॥ ११ ॥
कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां च मे ।
त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनं गतः ॥ १२ ॥
दृष्ट्वा वनचरान् नाथ किं न कुर्याः शरव्ययं ।
क्षत्रियस्य धनुः प्रोक्तं हुताशस्येन्धनं यथा ॥ १३ ॥
तत्समीपे स्थितं भूयस्तेजो मूर्छयते बलात् ।
एवं हि दृष्ट्वा विक्रान्तं वित्रस्यन्ति वने चराः ॥ १४ ॥
एकान्तेऽपि स्थितास्ते तु बधमिच्छन्ति तावकं ।
पुरा किल महाबाहो तपस्वी संयतेन्द्रियः ॥ १५ ॥
कश्चिद्वनगतः सिद्धस्तापसारण्यमाश्रितः ।
तस्य केनचिदागत्य निशितं खड्गमुत्तमं ॥ १६ ॥
संन्यासविधिना दत्तं पुण्ये महति तिष्ठतः ।
स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ॥ १७ ॥
वनेऽपि न जहात्येनं रक्षन् प्रत्ययमात्मनः ।
यत्र गच्छत्युपादातुं पुष्पाणि च फलानि च ॥ १८ ॥
न विना तत्र खड्गेन याति न्यासविशङ्कितः ।
नित्यं शस्त्रं परिचरन् क्रमेण स तपोधनः ॥ १९ ॥

Digitized by Google

चकार रौद्रां स्वां बुद्धिं त्यक्त्वा तापसनिश्चयं ।
ततः स रौद्रया बुद्ध्या तदानीं धर्मकर्षितः ॥ २० ॥
तस्य शस्त्रस्य संसर्गाज्जगाम निरयं मुनिः ।
स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥ २१ ॥
न कथञ्चिन्मनः कार्यं गृहीतधनुषा त्वया ।
राक्षसानां विना वैरं बधो वीर न युज्यते ॥ २२ ॥
अपराधादृते नापि हन्तव्या राक्षसास्त्वया ।
क्षत्रियाणां हि शूराणां स्वधर्मनिरतात्मनां ॥ २३ ॥
धनुषा कार्यमेतावदार्तानां परिरक्षणं ।
क्व च शस्त्रं क्व च रणं क्व च क्षात्रं तपः क्व च ॥ २४ ॥
प्रतिषिद्धमिदं सर्वमेष धर्मस्तु पूज्यतां ।
त्वमार्य कलुषां बुद्धिं त्यजेनां शास्त्रगर्हितां ॥ २५ ॥
गत्वा पुनरयोध्यायां क्षत्रधर्मं चरिष्यसि ।
अक्षया हि भवेत् प्रीतिः श्वश्रूश्वशुरयोर्मम ॥ २६ ॥
अधर्मकलुषा बुद्धिर्जायते शस्त्रसेवनात् ।
यदि राज्येऽपि संत्यक्ते भवेस्त्वं नियतो मुनिः ॥ २७ ॥
धर्मादर्थः प्रभवति धर्मात् प्रभवते सुखं ।
धर्मेण लभ्यते स्वर्गो धर्मसारमिदं जगत् ॥ २८ ॥
आत्मानं नियमैस्तैस्तैः कर्षयित्वा प्रयत्नतः ।
प्राप्यते पुरुषैः स्वर्गो न सुखाल्लभ्यते सुखं ॥ २९ ॥

Digitized by Google

अहिंसानिरतः सौम्य भव धर्मपरायणः ।
सर्वं हि ते सुविदितं लोके राघव तत्त्वतः ॥३०॥

स्त्रीचापलादेतदुदाहृतं मे
धर्मं हि वक्तुं तव कः समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन
यद्रोचते वै कुरु तन्नरेन्द्र ॥३१॥

इत्यार्षे रामायणे आरण्यककाण्डे सुतीक्ष्णाश्रमनिवासो
नाम द्वादशः सर्गः — सीतावाक्यं नाम
त्रयोदशः सर्गः ॥

Digitized by Google

## XIV.

वाक्यमेतत् तु वैदेह्या व्याहृतं धर्मसंहितं ।
निशम्य मधुरं रामो मैथिलीं प्रत्युवाच ह ॥ १ ॥
हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
कुलं स्वमभिसंधाय धर्मज्ञे जनकात्मजे ॥ २ ॥
किं ते वक्ष्यामि सुश्रोणि यत् त्वयोक्तमिदं वचः ।
क्षत्रियैर्धार्यते शस्त्रं नार्तशब्दो भवेदिति ॥ ३ ॥
ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ।
मां सीते स्वयमागत्य शरण्याः शरणं गताः ॥ ४ ॥
वसन्तो धर्मनिरता वने मूलफलाशनाः ।
न लभन्ते सुखं सीते राक्षसैः परिपीडिताः ॥ ५ ॥
नियताः सर्वकालेषु विविधैर्नियमैर्वने ।
भक्ष्यन्ते राक्षसैर्घोरैर्विकृतैर्वनचारिभिः ॥ ६ ॥
ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ।
अस्मानभ्युपपद्यैव तत्रोचुर्भयविह्वलाः ॥ ७ ॥
मया च वचनं श्रुत्वा तेषामेतन्मुखच्युतं ।
कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतं ॥ ८ ॥
प्रसीदन्तु भवन्तो मे व्रीडैषा मम दारुणा ।
यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ॥ ९ ॥

Digitized by Google

मया किं करणीयं च इत्युक्ते द्विजसंनिधौ ।
सर्वैरेव च तैरार्तैर्वागियं समुदाहृता ॥ १० ॥
राक्षसैर्दण्डकारण्ये बहुभिः क्रूरकर्मभिः ।
अर्दिताः स्म भृशं राम तेभ्यो नस्त्रातुमर्हसि ॥ ११ ॥
होमकालेऽग्निहोत्राणां पर्वकाले च राघव ।
क्रुद्धाः प्रधर्षयन्त्यस्मान् राक्षसाः पिशिताशनाः ॥ १२ ॥
राक्षसैः पीड्यमानानां तापसानां तपस्विनां ।
नान्या विमृशतामस्ति त्वद्दते परमा गतिः ॥ १३ ॥
कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान् ।
चिरार्जितं तु नेच्छामस्तपः खण्डयितुं स्वयं ॥ १४ ॥
बहुविघ्नं तपश्चर्तुं दुश्चरं चैव राघव ।
तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १५ ॥
तदर्घमानान् रक्षोभिर्दण्डकारण्यवासिभिः ।
रक्षास्मांश्चापमुद्यम्य त्वन्नाथा हि वयं वने ॥ १६ ॥
मया चैतद्वचः श्रुत्वा यत्नेन परिपालनं ।
ऋषीणां दण्डकारण्ये संश्रुतं लोकसाक्षिकं ॥ १७ ॥
संश्रुत्य च न शक्नोमि जीवन्नेतत् प्रतिश्रुतं ।
मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८ ॥
अप्यहं जीवितं जह्यां त्वां सीते सहलक्ष्मणां ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः ॥ १९ ॥



Digitized by Google

तदवश्यं मया कार्यमृषीणां परिपालनं ।
अनुद्वेगेन ये धर्मं साधयन्ति मनीषिणः ॥ २० ॥
रक्षार्थं मुनिसंघानामेतदुक्तं मयापि ह ।
अनुक्तेनापि वैदेहि किं पुनः सत्यसंश्रवे ॥ २१ ॥
मद्भक्त्या तु त्वया सीते हितमुक्तं वचो मम ।
सदृशं चानुरूपं च कुलस्य तव शोभने ॥ २२ ॥
मम स्नेहेन प्रीत्या च यदुक्तोऽहं त्वया वचः ।
परितुष्टोऽस्मि वैदेहि नानिष्टो ह्यनुशास्यते ॥ २३ ॥

एतावदुक्त्वा वचनं महात्मा
सीतां तदा मैथिलराजपुत्रीं ।
रामो धनुष्मान् सह लक्ष्मणेन
जगाम रम्याणि तपोवनानि ॥ २४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामवाक्यं नाम
चतुर्दशः सर्गः ॥

Digitized by Google

## XV.

अग्रतोऽथ ययौ रामः सीता मध्ये सुमध्यमा ।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १ ॥
पश्यन्तौ तौ च रम्याणि वनान्युपवनानि च ।
पर्वतांश्च नदीश्चैव राघवौ सह सीतया ॥ २ ॥
सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः ।
सरांसि च सपद्मानि नानापक्षिगणानि च ॥ ३ ॥
हरीणां यूथपांश्चैव मदोद्धूतांश्च कुञ्जरान् ।
महिषांश्च वराहांश्च गवयांश्चमरांस्तथा ॥ ४ ॥
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
ददृशुः सहिता रम्यं तडागं योजनायतं ॥ ५ ॥
पद्मोत्करविचित्राङ्गं गजयूथविलोडितं ।
शरारिहंसकुररैराकीर्णं जलचारिभिः ॥ ६ ॥
प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे ।
गीतवादित्रनिर्घोषो न तु कश्चिददृश्यत ॥ ७ ॥
ततः कौतूहलाद्रामो लक्ष्मणश्च महायशाः ।
मुनिं धर्मभृतं नाम पपृच्छतुरुपेत्य वै ॥ ८ ॥
इदमत्यद्भुतं दृष्ट्वा सर्वेषां नो महाद्युते ।
कौतूहलं महज्जातं किमिदं साधु कथ्यतां ॥ ९ ॥

Digitized by Google

तेनैवमुक्तो धर्मात्मा राघवेण महात्मना ।
प्रभावं तस्य सरस आख्यातुमुपचक्रमे ॥ १० ॥
इदं पञ्चाप्सरो नाम सरः पौराणमुच्यते ।
निर्मितं तपसा राम मुनिना मन्दकर्णिना ॥ ११ ॥
स हि तेपे तपस्तीव्रं मन्दकर्णिर्महामुनिः ।
दशवर्षसहस्राणि वायुभक्ष्यः शिलासनः ॥ १२ ॥
ततः प्रव्यथिताः सर्वे देवा इन्द्रपुरोगमाः ।
अब्रुवन्नयमस्माकं स्थानं प्रार्थयते मुनिः ॥ १३ ॥
तस्य कर्तुं तपोविघ्नं नियुक्ताः सर्वदैवतैः ।
प्रधानाप्सरसः पञ्च दिव्याभरणभूषिताः ॥ १४ ॥
तत्रागतास्ता गायन्त्यो नृत्यन्त्यश्च सुमध्यमाः ।
तमलोभयन् ललना मुनिं तीव्रतपोव्रतं ॥ १५ ॥
अप्सरोभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः ।
नीतो मदनवश्यत्वं सुराणामर्थसिद्धये ॥ १६ ॥
ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः ।
तडागे निर्मितं तासामस्मिन्नन्तर्हितं गृहं ॥ १७ ॥
ता इहाप्सरसः पञ्च निवसन्ति यथासुखं ।
रमयन्ति तपोयोगान्मुनिं यौवनदर्पिताः ॥ १८ ॥
तासां संक्रीडमानानां महानेषोऽत्र निस्वनः ।
श्रूयते भूषणोन्मिश्रो गीतः श्रुतिमनोहरः ॥ १९ ॥

Digitized by Google

आश्चर्यमिति तस्यैतद्वचनं भावितात्मनः ।
राघवः प्रतिजग्राह सह भ्रात्रा महाबलः ॥ २० ॥
एवं कथयतस्तस्य ददर्शाश्रममण्डलं ।
कुशचीरपरिक्षिप्तं नानावृक्षलतावृतं ॥ २१ ॥
तं प्रविश्याश्रमं रामः सीतया लक्ष्मणेन च ।
सहितो मुनिभिः सर्वैः सत्कारेणाथ सत्कृतः ॥ २२ ॥
ततस्तस्मिन् स काकुत्स्थः श्रीमत्याश्रममण्डले ।
न्यवसत् सुसुखस्तैस्तैः पूज्यमानो महर्षिभिः ॥ २३ ॥
जगाम चाश्रमं तेषां पर्यायेन महात्मनां ।
पादाभिवादनं कर्तुं सकाशं राघवस्तदा ॥ २४ ॥
क्वचित् परिवसन् मासमेकं संवत्सरं तथा ।
क्वचिच्च चतुरो मासान् पञ्च षट् वापि च क्वचित् ॥ २५ ॥
अपरत्राधिकं मासमध्यर्धमपरं क्वचित् ।
त्रीन् मासानपरानष्टौ राघवो न्यवसत् सुखं ॥ २६ ॥
मासद्वयं चापरत्र साग्रं संवत्सरं क्वचित् ।
पक्षमन्यत्र मासं च न्यवसद्राघवस्तदा ॥ २७ ॥
तथा संवसतस्तस्य मुनीनामाश्रमे सुखं ।
रमतश्चानुकूल्येन ययुः संवत्सरा दश ॥ २८ ॥
तथा परिवसंश्चैव राघवः सह सीतया ।
सुतीक्ष्णस्याश्रमं श्रीमान् पुनरेव जगाम ह ॥ २९ ॥

Digitized by Google

स तदाश्रममागत्य मुनिभिः प्रतिपूजितः ।
तत्रापि न्यवसद्रामः कञ्चित् कालमरिंदमः ॥ ३० ॥
अथाश्रमस्थः काकुत्स्थः कदाचित् तं महामुनिं ।
उपासीनः स धर्मात्मा सुतीक्ष्णमिदमब्रवीत् ॥ ३१ ॥
अस्मिन्नरण्ये भगवन्नगस्त्यो मुनिसत्तमः ।
वसतीति मया पूर्वं सतां कथयतां श्रुतं ॥ ३२ ॥
न तु जानामि तं देशं वनस्यास्य महत्तया ।
यत्राश्रमपदं पुण्यं महर्षेस्तस्य धीमतः ॥ ३३ ॥
तव प्रसादाद्भगवन् सानुजः सह सीतया ।
अगस्त्यमभिगच्छेयमभिवादयितुं मुनिं ॥ ३४ ॥
मनोरथो हि मे नित्यं महान् मनसि वर्तते ।
यदहं तं मुनिश्रेष्ठं शुश्रूषेयमपि क्षणं ॥ ३५ ॥
इति रामस्य स मुनिः श्रुत्वा वचनमुत्तमं ।
सुतीक्ष्णः प्रत्युवाचेदं प्रीत्या दशरथात्मजं ॥ ३६ ॥
अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणं ।
अगस्त्यमभिगच्छेति सीतां च जनकात्मजां ॥ ३७ ॥
दिष्ट्या त्विदानीं राम त्वं स्वयमेव ब्रवीषि मां ।
अहमाख्यामि ते वत्स यत्रागस्त्यो महामुनिः ॥ ३८ ॥
योजनान्याश्रमाद्गत्वा ह्यस्माच्चत्वारि राघव ।
दक्षिणेन ततः श्रीमानाश्रमस्तस्य धीमतः ॥ ३९ ॥

Digitized by Google

अगस्त्यस्य तु धर्मात्मा भ्राता प्राणसमो मुनिः ।
वसत्यभिरतो धर्मे यथा ख्यातस्तपोधनः ॥ ४० ॥
तृणप्राये शुभे देशे पिप्पलीवनशोभिते ।
पुष्पमूलफले रम्ये नानाशकुनिनादिते ॥ ४१ ॥
पद्मिन्यो विमलास्तत्र प्रसन्नसलिलाः शुभाः ।
उषित्वा रजनीं तत्र प्रभाते राम यास्यसि ॥ ४२ ॥
दक्षिणां दिशमास्थाय वनषण्डस्य पार्श्वतः ।
तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरं ॥ ४३ ॥
बहुभिः पक्षिभिर्जुष्टं नानामृगनिषेवितं ।
रमणीये वनोद्देशे विविधायतपादपे ॥ ४४ ॥
रंस्यते तत्र वैदेही लक्ष्मणश्च सह त्वया ।
स हि रम्यो वनोद्देशो बहुमूलफलान्वितः ॥ ४५ ॥
यदि बुद्धिः कृता राम द्रष्टुं तं मुनिपुङ्गवं ।
अद्यैव गमने बुद्धिं रोचयस्व महामते ॥ ४६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे अगस्त्यसंकीर्तनं नाम
पञ्चदशः सर्गः ॥

Digitized by Google

## XVI.

इति रामो मुनेः श्रुत्वा सह भ्रात्राभिवाद्य च ।
प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सह सीतया ॥ १ ॥
पश्यन् वनानि चित्राणि पर्वतांश्चाभ्रसंनिभान् ।
सरांसि सरितश्चैव पथि मार्गवशानुगाः ॥ २ ॥
स सुतीक्ष्णोपदेशेन गत्वा तेन यथासुखं ।
इदं परमसंहृष्टो वाक्यं लक्ष्मणमब्रवीत् ॥ ३ ॥
एतत् तदाश्रमपदं नूनं तस्य महात्मनः ।
अगस्त्यस्य मुनेर्भ्रातुर्दृश्यते पुण्यकर्मणः ॥ ४ ॥
तथा हीमे वनस्यास्य प्रथिताः पथि लक्ष्मण ।
संनताः फलभारेण पुष्पभारेण च द्रुमाः ॥ ५ ॥
सुखच्छायाः सुगन्धाढ्या हस्तप्राप्याश्च लक्ष्मण ।
नानाविहगसंकीर्णाः सर्वे स्वादुफलद्रुमाः ॥ ६ ॥
पिप्पलीनां च पक्वानां वनादस्मादुपागतः ।
गन्धोऽयं पवनोत्क्षिप्तः सहसा कटुकान्वयः ॥ ७ ॥
तत्र तत्र च दृश्यन्ते रचिताः काष्ठराशयः ।
लूनाश्च पथि दृश्यन्ते कुशा वैदूर्यसंनिभाः ॥ ८ ॥
एतच्च वनमध्यस्थं दृश्यते सहसोत्थितं ।
पावकस्याश्रमस्थस्य धूमाग्रं संप्रदृश्यतां ॥ ९ ॥

Digitized by Google

विविक्तेषु च तीर्थेषु कृतस्नानोत्थितैर्द्विजैः ।
पुष्पोपहारा दृश्यन्ते कुसुमैः स्वयमाहृतैः ॥ १० ॥
वचनं हि सुतीक्ष्णस्य यथा सौम्य मया श्रुतं ।
तस्यागस्त्यस्य वै भ्रातुर्दृश्यते नूनमाश्रमः ॥ ११ ॥
निगृह्य तपसा मृत्युं भूतानां हितकाम्यया ।
यस्य ज्येष्ठेन हि भ्रात्रा शरण्या दिगियं कृता ॥ १२ ॥
इहान्यदा किल क्रूरो वातापिरपि चेल्वलः ।
भ्रातरौ सहितावास्तां ब्रह्मघ्नौ तौ महासुरौ ॥ १३ ॥
धारयन् ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् ।
न्यमन्त्रयत विप्रान् स श्राद्धमुद्दिश्य निर्घृणः ॥ १४ ॥
भ्रातरं स तु तं भ्राता संस्कृतं मेषरूपिणं ।
तान् द्विजान् भोजयामास श्राद्धकाले यथाविधि ॥ १५ ॥
ततो भुक्तवतां तेषामिल्वलो वाक्यमब्रवीत् ।
वातापे निष्क्रमस्वेति परया स्वरसंपदा ॥ १६ ॥
ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषनिस्वनः ।
भित्त्वा भित्त्वा शरीराणि निष्पपात द्विजन्मनां ॥ १७ ॥
ब्राह्मणानां सहस्राणि ताभ्यामेवं परंतप ।
विनाशितानि संहत्य नित्यशः पिशिताशया ॥ १८ ॥
ततस्तु भक्षितान् श्रुत्वा ब्राह्मणानृषिसत्तमः ।
आगतस्त्वरितस्तत्र यत्र तौ पापकारिणौ ॥ १९ ॥



Digitized by Google

अगस्त्यमागतं दृष्ट्वा प्रहृष्टौ तावथोचतुः ।
तूर्णमामन्त्र्य सहितौ भगवन् भुज्यतामिति ॥ २० ॥
स एवमुक्तस्तु मुनिर्नैर्ऋताभ्यामनिन्दितः ।
प्रतिगृह्य वचस्ताभ्यां बाढमित्यब्रवीन्मुनिः ॥ २१ ॥
प्रत्युवाच ततश्चैनमिल्वलः प्रहसन्निव ।
कथं हि मेषमेकस्त्वं भक्षयिष्यसि वै द्विज ॥ २२ ॥
तमुवाच ततो विप्रः प्रहसन्निव राक्षसं ।
अहं तु भक्षयिष्यामि सर्वमास्थापयस्व मे ॥ २३ ॥
क्षुधितोऽहं दानपते तपसा बहुलाः समाः ।
शक्यामि मेषमेकोऽपि श्राद्धे भोक्तुमहं सुखं ॥ २४ ॥
अगस्त्यस्य वचः श्रुत्वा इल्वलो वाक्यमब्रवीत् ।
बाढमेवं विधास्यामि भक्ष त्वं यदि शक्यते ॥ २५ ॥
ततस्तु कल्पितं भक्ष्यं वातापिं मेषरूपिणं ।
भक्षयामास भगवानिल्वलस्य स पश्यतः ॥ २६ ॥
ततो जुहाव मनसा गङ्गां भागीरथीमृषिः ।
सा तस्य वरदा तूर्णं प्रविवेश कमण्डलुं ॥ २७ ॥
प्रच्छन्नं जलमादाय जप्येनोपस्पृशन् मुनिः ।
निरवशेषं तं मेषं बुभुजे द्विजसत्तमः ॥ २८ ॥
तमगस्त्यमविज्ञाय मुनिं परमकोपिणं ।
भ्रातरं निष्क्रमेत्युच्चैरिल्वलः समभाषत ॥ २९ ॥

Digitized by Google

तं तथा भाषमाणं तु भ्रातरं विप्रघातिनं ।
अब्रवीत् प्रहसन् वाक्यमगस्त्यो मुनिसत्तमः ॥ ३० ॥
कुतो निष्क्रमितुं शक्तिर्मया भुक्तस्य रक्षसः ।
भ्रातुस्ते मेषरूपस्य निष्क्रमो नोपपद्यते ॥ ३१ ॥
भक्षितं हि मया रक्षो न ह्यस्य पुनरागमः ।
सेन्द्रा देवगणाः कुर्युरिति मे निश्चिता मतिः ॥ ३२ ॥
अगस्त्यवचनं श्रुत्वा भ्रातुर्निधनदुःखितः ।
प्रधर्षयितुमारेभे मुनिं क्रुद्धो निशाचरः ॥ ३३ ॥
सोऽभ्यद्रवद्द्विजद्रोही मुनिमादीप्ततेजसं ।
चक्षुषा तस्य तीव्रेण निर्दग्धो भस्मसादभूत् ॥ ३४ ॥
ब्रह्मघ्नौ नाशयित्वा तु राक्षसौ पापकारिणौ ।
आश्रमं प्रवरं विप्रो न्यवेशयत धर्मवित् ॥ ३५ ॥
तस्य संदृश्यते तात आश्रमः पुण्यकर्मणः ।
बहुपुष्पफलोपेतो विविक्तः प्रवरोदकः ॥ ३६ ॥
दिव्यतेजःप्रभावस्य तडागवनशोभितः ।
विप्रानुकम्पया येन कर्मैतद्दुष्करं कृतं ॥ ३७ ॥
एवं कथयतस्तस्य राघवस्य महात्मनः ।
जगामास्तं ततः सूर्यः संध्या च समजायत ॥ ३८ ॥
तत्रोपास्य ततः संध्यां सह भ्रात्रा यथाविधि ।
प्रविवेशाश्रमपदं मुनिं तं चाभ्यवादयत् ॥ ३९ ॥

Digitized by Google

सम्यक् प्रतिगृहीतस्तु मुनिना तेन राघवः ।
न्यवसत् तां निशां तत्र प्राश्य मूलफलं शुचिः ॥ ४० ॥

ततस्तु ते तेन महात्मना समं
समेत्य सम्यङ्मुनिना यथाविधि ।
सुखोषितास्तत्र निशात्यये पुनस्
तपस्विनं द्रष्टुमभिप्रतस्थिरे ॥ ४१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे अगस्त्यभ्रातृदर्शनं
नाम षोडशः सर्गः ॥

Digitized by Google

## XVII.

तस्यां रात्र्यां व्यतीतायां विमलेऽभ्युदिते रवौ ।
अगस्त्यभ्रातरमृषिमामन्त्रयत राघवः ॥ १ ॥
आमन्त्रये त्वां भगवन् सुखमभ्युषितो निशां ।
द्रष्टुमिच्छाम्यगस्त्यं हि भ्रातरं तेऽग्रजं मुनिं ॥ २ ॥
गम्यतामिति तेनोक्तो जगाम रघुनन्दनः ।
यथोपदिष्टेन पथा गच्छन् समवलोकयन् ॥ ३ ॥
ददर्श रामः शतशः फुल्लकान्तारपादपान् ।
ततोऽब्रवीत् समीपस्थं लक्ष्मणं शुभलक्षणं ॥ ४ ॥
पश्य लक्ष्मण रम्याणि वनस्यास्य शुभानि च ।
काननानि विचित्राणि फलमूलधरैर्द्रुमैः ॥ ५ ॥
शुभांश्च शुभगन्धांश्च सुस्वादून् सुबहूंस्तथा ।
पादपानां समूहांस्त्वं पश्य लक्ष्मण सर्वशः ॥ ६ ॥
वानीरांस्तिनिशान् निम्बान् मधुकान् निचुलासनान् ।
आम्रानाम्रातकांश्चैव तिन्दुकामलकांस्तथा ॥ ७ ॥
जम्बुतालकपित्थांश्च पनसान् वीजपूरकान् ।
सोमवृक्षान् कर्मरङ्गान् पियालांश्च क्वचित् क्वचित् ॥ ८ ॥
खर्जूरान् बदरीश्चैव सालान् भल्लातकांस्तथा ।
कदलीवेत्रवेणूंश्च तथा चान्यान् सहस्रशः ॥ ९ ॥

Digitized by Google

दाडिमान् करवीरांश्च अशोकांस्तिलकांस्तथा ।
अङ्कोठांश्च कुठेरांश्च नीलाशोकांश्च सर्वशः ॥ १० ॥
लोध्रान् शिरीषवृक्षांश्च मुचुकुन्दांश्च पाटलान् ।
चम्पकांश्च प्रियङ्गूंश्च सप्तपर्णांश्च पादपान् ॥ ११ ॥
अन्यान् वृक्षसमूहांश्च नानागुल्मलतायुतान् ।
इतस्ततः काननेषु पश्य लक्ष्मण राजतः ॥ १२ ॥
पुष्पितान् पुष्पिताग्राभिर्लताभिः परिवेष्टितान् ।
स दृष्ट्वा काननं रम्यं पथि गच्छन् महायशाः ॥ १३ ॥
अब्रवीच्च पुनस्तत्र रामो राजीवलोचनः ।
पृष्ठानुगं दाशरथिं लक्ष्मणं लक्ष्मिवर्धनं ॥ १४ ॥
पश्य सौम्य यथाभ्यासे नन्दनप्रतिमं वनं ।
रमणीयं च सौम्यं च यथेदं दीप्यते पुनः ॥ १५ ॥
स्निग्धपत्रा यथा वृक्षा यथा क्षान्ततरा मृगाः ।
आश्रमो नातिदूरेऽसौ तस्य विश्रुतकर्मणः ॥ १६ ॥
अगस्त्य इति यः ख्यातो लोके पुण्येन कर्मणा ।
आश्रमो दृश्यते तस्य परिश्रान्तसुखावहः ॥ १७ ॥
आज्यधूमाकुलवनश्चीरमालापरिष्कृतः ।
प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥ १८ ॥
निगृह्य तपसा मृत्युं लोकानां हितकाम्यया ।
दक्षिणा दिक् कृता येन शरण्या पुण्यकर्मणा ॥ १९ ॥

Digitized by Google

तस्यैतदाश्रमपदं प्रभावाद्यस्य राक्षसैः ।
दिगियं दक्षिणा तात दृश्यते नोपभुज्यते ॥ २० ॥
यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा ।
तदाप्रभृति सर्वेऽस्य प्रशान्ता रजनीचराः ॥ २१ ॥
नाम्ना चेयं भगवतो दक्षिणा दिक् प्रदक्षिणा ।
प्रथिता त्रिषु लोकेषु दुष्प्रेक्षा क्रूरकर्मभिः ॥ २२ ॥
क्रोधात् प्रवृद्धः सुमहान् भास्करस्य नगोत्तमः
आदेशं पालयंस्तस्य विन्ध्यशैलो न वर्धते ॥ २३ ॥
समुद्रमपिवच्चापि तिमिनक्रसमाकुलं ।
दानवानां विनाशार्थं देवैः सेन्द्रैः प्रसादितः ॥ २४ ॥
तस्यायं दीप्ततपसो लोके विख्याततेजसः ।
अगस्त्यस्याश्रमः श्रीमान् विनीतमुनिसेवितः ॥ २५ ॥
देवलोकार्चितः साधुर्हिते नित्यं रतः सतां ।
अस्मानभिगतानेष श्रेयसा योजयिष्यति ॥ २६ ॥
आराधयिष्याम्यत्राहमगस्त्यं मुनिसत्तमं ।
वनवासस्य कालं च शेषं वत्स्यामहे वयं ॥ २७ ॥
अत्र देवाः सगन्धर्वाः सभूताः सहचारणाः ।
अगस्त्यं नियताहाराः सततं पर्युपासते ॥ २८ ॥
नात्र जीवेन्मृषावादी क्रूरो नैकृतिकोऽशुचिः ।
नृशंसः पापवृत्तो वा अनिज्ञो यस्तथाविधः ॥ २९ ॥

Digitized by Google

पन्नगा गुह्यकाश्चैव तथा विद्याधरादयः ।
वसन्ति नियताहारा मुनिमाराधयिष्णवः ॥ ३० ॥
अत्र सिद्धा महात्मानो विमानैः सूर्यसंनिभैः ।
त्यक्त्वा देहान् नवैर्देहैः स्वर्याताः परमर्षयः ॥ ३१ ॥
यक्षत्वममरत्वं च राज्यानि च धनानि च ।
नराणामत्र भगवान् विदधे तपसा विभुः ॥ ३२ ॥
एवं स राजेन्द्रसुतो ब्रुवन् गुणान्
ऋषेरगस्त्यस्य चिराय राघवः ।
प्राप्तः क्रमाद्द्वारमथाश्रमस्य
यत्र स्थितो दीप्तवपुर्महात्मा ॥ ३३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे अगस्त्याश्रमवर्णनं नाम
सप्तदशः सर्गः ॥

Digitized by Google

## XVIII.

स्थितस्त्वमरसंकाशो महाबलपराक्रमः ।
राघवः सह वैदेह्या लक्ष्मणं वाक्यमब्रवीत् ॥ १ ॥
संप्राप्ताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः ।
निवेदय च मां प्राप्तमृषये सह सीतया ॥ २ ॥
स प्रविश्याश्रमपदं लक्ष्मणो राघवाज्ञया ।
अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ ३ ॥
राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली ।
रामो नाम महाभाग मुनिं द्रष्टुमिहेच्छति ॥ ४ ॥
लक्ष्मणो नाम तस्याहं भ्राता तदनुजो हितः ।
सदारः सहतेजस्वी मुनिं द्रष्टुमिहागतः ॥ ५ ॥
प्रियः सर्वस्य लोकस्य प्रियधर्मश्च स प्रभुः ।
अनुरक्तजनश्चैव यदि ते श्रुतिमागतः ॥ ६ ॥
ते वयं मुनिमुद्दिश्य भगवन्तमुपागताः ।
द्रष्टुमिच्छामहे सर्वे त्वत्प्रसादान्महामुनिं ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः ।
तथेत्युक्त्वाश्रमपदं प्रविवेश निवेदितुं ॥ ८ ॥
प्रविश्य चाग्निशरणं तमृषिं दुष्प्रधर्षणं ।
कृताञ्जलिरुवाचेदं वचनं श्लक्ष्णया गिरा ॥ ९ ॥



Digitized by Google

पुत्रो दशरथस्यासौ रामो नाम महायशाः ।
सह भ्रात्राश्रमद्वारि भार्यया सह तिष्ठति ॥ १० ॥
भवन्तमिच्छति द्रष्टुं शुश्रूषार्थमिहागतः ।
यदत्रानन्तरं कार्यं तदाज्ञापय मे मुने ॥ ११ ॥
ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणं ।
वैदेहीं च महाभागामिदं वचनमब्रवीत् ॥ १२ ॥
दिष्ट्या रामो महाबाहुः सभार्यो मामुपागतः ।
मनसा काङ्क्षितं तस्य ममाप्यागमनं स्वयं ॥ १३ ॥
गम्यतां सत्कृतो रामः सभार्यः सहलक्ष्मणः ।
प्रवेश्यतामिह क्षिप्रं किं चासौ न प्रवेशितः ॥ १४ ॥
एवमुक्तस्तदा तेन धर्मज्ञेन तपस्विना ।
अभिवाद्याब्रवीच्छिष्यस्तथेति नियताञ्जलिः ॥ १५ ॥
ततो निष्क्रम्य संभ्रान्तः शिष्यो लक्ष्मणमब्रवीत् ।
क्वासौ रामो महाबाहुः सौमित्रे दर्शयस्व मे ॥ १६ ॥
क्व चास्य भार्या वैदेही नित्यं भर्तृहिते रता ।
महर्षिवचनात् तात द्रष्टुमिच्छामि तावुभौ ॥ १७ ॥
ततो गत्वाश्रमद्वारं शिष्येण सह लक्ष्मणः ।
दर्शयामास काकुत्स्थं सीतां च जनकात्मजां ॥ १८ ॥
स दृष्ट्वा तमुवाचेदं मुनिरिक्ष्वाकुनन्दनं ।
स्वागतं तव राजेन्द्र मैथिल्या लक्ष्मणस्य च ॥ १९ ॥

Digitized by Google

इति स प्रसृतैर्वाक्यैरगस्त्यवचनादथ ।
प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतं ॥ २० ॥
प्रविवेश ततो राम आश्रमं पुण्यकर्मणः ।
प्रशान्तमृगसंकीर्णं समन्तादवलोकयन् ॥ २१ ॥
ततः शिष्यैः परिवृतो निश्चक्राम महामुनिः ।
कृष्णाजिनाम्बरधरैश्चीरवल्कलधारिभिः ॥ २२ ॥
तं दृष्ट्वा चोग्रतपसं प्रज्वलन्तमिवानलं ।
अगस्त्यं स मुनिश्रेष्ठं रामो लक्ष्मणमब्रवीत् ॥ २३ ॥
अयमग्निरयं सोम एष धर्मः सनातनः ।
अस्मानिहागतानेष निष्क्रम्याभ्युपगच्छति ॥ २४ ॥
औदार्येणापि गच्छामः सोऽगस्त्योऽयं न संशयः ।
निधानं तपसामेष तेजोराशिर्विभावसोः ॥ २५ ॥
अहो भगवतस्तेज इत्युक्त्वोपेत्य चैव हि ।
जग्राह परमप्रीतस्तस्य पादावृषेस्तदा ॥ २६ ॥
सीतया सह वैदेह्या लक्ष्मणेन च राघवः ।
अभिवाद्य यथान्यायं तस्थौ रामः कृताञ्जलिः ॥ २७ ॥
अभिवादितवन्तं च राघवं सुमहातपाः ।
मूर्धन्युपाघ्राय तदा निषीदेत्यब्रवीन्मुनिः ॥ २८ ॥
दत्तासनं तदा रामं वैदेहीं लक्ष्मणं तथा ।
अर्चयित्वा तु पप्रच्छ कुशलानामयं मुनिः ॥ २९ ॥

Digitized by Google

पृष्ट्वा चानन्तरं शिष्यमुवाचेदं वचस्तदा ।
अग्नौ हुत्वा हविः पूर्वं शेषं रामाय धीमते ॥ ३० ॥
प्रतिपाद्य सत्कृत्य मन्त्रवत् प्राश्यतामयं ।
वानप्रस्थेन विधिना सत्कारार्हो हि राघवः ॥ ३१ ॥
तस्मादेनं सत्क्रियया सत्करिष्येऽहमागतं ।
पूजनीयश्च मान्यश्च प्राप्तोऽयं नः प्रियातिथिः ॥ ३२ ॥
अयं सर्वस्य लोकस्य गतिर्नाथश्च राघवः ।
लोकनाथमिमं प्राप्तं पूजयिष्ये यथाविधि ॥ ३३ ॥
अपूजयन् हि काकुत्स्थं तपस्विनमुपागतं ।
दुःसाक्षीव परे लोके स्वानि मांसानि खादति ॥ ३४ ॥
यो गृहायातमतिथिं यथाशक्ति न पूजयेत् ।
दत्वा स दुष्कृतं तस्य पुण्यमादाय गच्छति ॥ ३५ ॥
एवमुक्त्वा फलैर्मूलैः पुष्पैरद्भिश्च राघवं ।
अर्चयित्वा यथान्यायं पुनरेवाब्रवीद्वचः ॥ ३६ ॥
धनुर्वरमिदं दिव्यं वज्रहेमपरिष्कृतं ।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥ ३७ ॥
अमोघा इषवश्चेमे ब्रह्मदत्ताः सुतेजसः ।
दत्ता मह्यं महेन्द्रेण तूणी चाक्षयसायकौ ॥ ३८ ॥
संपूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पन्नगैः ।
महाकोषनिवासी च महासिर्हेमविग्रहः ॥ ३९ ॥

Digitized by Google

अनेन धनुषा राम हत्वा संख्ये महासुरान् ।
आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसां ॥ ४० ॥
इदं धनुः सतूणीरं खड्गं चेमं मयोद्यतं ।
जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ ४१ ॥
पुरा चोक्तोऽहमिन्द्रेण सहस्राक्षेण राघव ।
यदा राम इहागच्छेत् तस्मै देयमिदं धनुः ॥ ४२ ॥
स त्वं राम चिरेणासि संप्राप्तो ह्यस्मदाश्रमं ।
गृहाण तदिदं दिव्यं धनुर्वरमनुत्तमं ॥ ४३ ॥
अनेन धनुषा राम कृत्स्नस्य जगतस्तथा ।
अविषह्यमपीन्द्रस्य विजेतासि परंतप ॥ ४४ ॥
एवमुक्त्वा महातेजाः सशरं तन्महद्धनुः ।
दत्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥ ४५ ॥
धनुषानेन काकुत्स्थ यदा योत्स्यसि संयुगे ।
त्रयाणामपि लोकानां तदा शान्तिर्भविष्यति ॥ ४६ ॥
दत्वा धनुश्चैव शरांश्च विप्रः खड्गं च तूणी च पृषत्कपूर्णौ ।
वस्त्रोत्तमं चैव ददौ महात्मा शक्रेण दत्ते अपि कुण्डले च ॥ ४७ ॥
तद्राघवोऽथ प्रतिगृह्य दत्तं महाप्रदानं मुनिना प्रतीतः ।
महाद्युतिर्वीर्यगुणोपपन्नो वचो मुनेरुत्तरमाचकाङ्क्ष ॥ ४८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे धनुःप्रदानं नाम
अष्टादशः सर्गः ॥

Digitized by Google

## XIX.

पूजयित्वा यथान्यायं दैवेन विधिना मुनिः ।
प्रसृतं बहुविस्तारमगस्त्यो वाक्यमब्रवीत् ॥ १ ॥
पुत्र प्रीतोऽस्मि ते राम परितुष्टोऽस्मि लक्ष्मण ।
अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया ॥ २ ॥
अपि श्रमो न वैदेहीं बाधते रघुनन्दन ।
सीता हि सुकुमाराङ्गी सुखैश्च न विनाकृता ॥ ३ ॥
बहुदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ।
यथा रमेत वैदेही वने राम तथा कुरु ॥ ४ ॥
दुष्करं हि करोत्येषा त्वत्कृते वनमागता ।
प्रकृतिर्हि सदा स्त्रीणां भीरुत्वं क्लैव्यमेव च ॥ ५ ॥
समस्थमनुरुध्यन्ते विषमस्थं त्यजन्ति च ।
स्वभाव एष हि स्त्रीणां सृष्टिश्च पुरुषर्षभ ॥ ६ ॥
शतह्रदानां लोलत्वं शस्त्राणां चापि तीक्ष्णतां ।
दहनानिलयोः शैघ्र्यमनुकुर्वन्ति योषितः ॥ ७ ॥
इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता ।
श्लाघ्या च व्यपदेश्या च यथा देवेष्वरुन्धती ॥ ८ ॥
अयं ह्यलंकृतो देशस्त्वया सौमित्रिणा सह ।
वैदेह्या चानया साध्व्या वसतेह ममाश्रमे ॥ ९ ॥

Digitized by Google

एवमुक्तस्तु मुनिना राघवः संकृताञ्जलिः ।
उवाच प्रसृतं वाक्यं तमृषिं सत्यविक्रमः ॥ १० ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः ।
गुणैः सभ्रातृभार्यस्य सुतोषः परितुष्यति ॥ ११ ॥
किन्तु व्यादिश मे देशं सोदकं बहुकाननं ।
यत्राश्रमपदं कृत्वा वसेयं निरतः सुखी ॥ १२ ॥
ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य तद्वचः ।
ध्यात्वा मुहूर्तं धर्मात्मा धीमान् धीरतरं वचः ॥ १३ ॥
इतो द्वियोजने राम स्वादुमूलफलैर्युतः ।
देशः शुचिजलः श्रीमान् पञ्चवटीति विश्रुतः ॥ १४ ॥
तत्र गत्वाश्रमं कृत्वा राम सौमित्रिणा सह ।
निवस त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥ १५ ॥
विदितश्चैव वृत्तान्तस्तव सर्वो मयानघ ।
तपसश्च प्रभावेन स्नेहाद्दशरथस्य च ॥ १६ ॥
हृद्गतश्चैव भावस्ते विज्ञातस्तपसा मया ।
इह वासं प्रतिज्ञाय मया सह तपोवने ॥ १७ ॥
अतश्च त्वां वयं ब्रूमो गच्छ पञ्चवटीमिति ।
स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते ॥ १८ ॥
स देशः श्लाघनीयश्च नातिदूरे च राघव ।
गोदावर्याः समीपे च तत्र सीताभिरंस्यते ॥ १९ ॥

Digitized by Google

प्राज्यमूलफलश्चैव नानामृगगणायुतः ।
विविक्तश्च महाबाहो पुण्यो रम्यस्तथैव च ॥ २० ॥
भवानपि सदारश्च शक्तश्च परिरक्षणे ।
अपि चात्र वसन् राम तापसान् पालयिष्यसि ॥ २१ ॥
एतदालक्ष्यते राम मधूकानां महद्वनं ।
उत्तरेणास्य गन्तव्यं न्यग्रोधमधिगच्छता ॥ २२ ॥
ततः स्थलीमुपारूढा पर्वतस्याविदूरतः ।
तत्र पञ्चवटी नाम दिव्यपुष्पितकानना ॥ २३ ॥
तां गत्वा राघव क्षिप्रमितस्त्वं द्रष्टुमर्हसि ।
स्वस्ति प्राप्नुहि काकुत्स्थ गम्यतां वत्स मा चिरं ॥ २४ ॥
एवमुक्तस्त्वगस्त्येन रामः सौमित्रिणा सह ।
सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनं ॥ २५ ॥
तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवादनौ ।
सीतया सह काकुत्स्थौ जग्मतुर्वासकाङ्क्षिणौ ॥ २६ ॥
गृहीतचापौ तु नराधिपात्मजौ
विषक्ततूणौ समरेष्वकातरौ ।
यथोपदिष्टेन पथा महाबलौ
प्रजग्मतुः पञ्चवटीं समाहितौ ॥ २७ ॥

इत्यार्षे रामायणे आरण्यककाण्डे अगस्त्योपदेशो
नाम नवदशः सर्गः ॥

Digitized by Google

## XX.

पञ्चवटीं तु गच्छन्तमन्तरा रघुनन्दनं ।
आससाद महान् गृध्रो जटायुरिति विश्रुतः ॥ १ ॥
स रामं श्लक्ष्णया वाचा सौम्यया प्रीयमाणया ।
उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥ २ ॥
स तं पितृसखं मत्वा पूजयामास राघवः ।
कुशलानामयं चैनमपृच्छद्विनयान्वितः ॥ ३ ॥
आत्मनः संभवं तात संततिं कुलमेव च ।
कथयेत्यथ स प्राह रामः कौतूहलान्वितः ॥ ४ ॥
रामस्य तु वचः श्रुत्वा स्वकुलं जन्म चात्मनः ।
आचचक्षे द्विजश्रेष्ठो यथावत् परिपृच्छते ॥ ५ ॥
आदिकाले महाबाहो ये प्रजापतयोऽभवन् ।
तान् मे निगदतः सर्वानादितः शृणु राघव ॥ ६ ॥
कर्दमः प्रथमस्तेषां विक्रीतस्तदनन्तरं ।
शेषश्च सुव्रतश्चैव बहुपुत्रश्च वीर्यवान् ॥ ७ ॥
स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः ।
पुलस्त्यः पुलहश्चैव प्रचेताश्चैव वीर्यवान् ॥ ८ ॥
दक्षो विवस्वानवरोऽरिष्टनेमिस्तथैव च ।
कश्यपश्च महाभागस्तेषामासीदपश्चिमः ॥ ९ ॥



Digitized by Google

प्रजापतेश्च दक्षस्य बभूवुरिति नः श्रुतं ।
षष्टिर्दुहितरो राम यशस्विन्यो यशस्विनः ॥ १० ॥
कश्यपः प्रतिजग्राह तासामष्टौ सुमध्यमाः ।
अङ्गिराश्चापरा राम कन्याः प्रत्यङ्गिरास्तथा ॥ ११ ॥
अदितिं च दितिं चैव कालकां दनुमेव च ।
ताम्रां क्रोधवशां चैव बलामतिबलामपि ॥ १२ ॥
तास्तु कन्या भृशं प्रीतः कश्यपो वाक्यमब्रवीत् ।
पुत्रांस्त्रैलोक्यभर्तॄन् वै मत्तः संजनयिष्यथ ॥ १३ ॥
अदितिस्तन्मना राम दितिश्च मनुजर्षभ ।
दनुश्च कालका चैव शेषा विमनसोऽभवन् ॥ १४ ॥
अदितिर्जनयामास त्रयस्त्रिंशत् शुभान् सुरान् ।
आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि ॥ १५ ॥
दितिस्तु जनयामास दैत्यांश्चाथ यशस्विनः ।
येषामियं वसुमती पुरासीत् समहार्णवा ॥ १६ ॥
दनुस्त्वजनयत् पुत्रमश्वग्रीवमनुत्तमं ।
नरकं कालकञ्जं च कालका समजीजनत् ॥ १७ ॥
क्रौञ्चीं भासीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीं ।
ताम्रापि सुषुवे कन्याः पञ्चैता लोकविश्रुताः ॥ १८ ॥
क्रौञ्चांश्चाजनयत् क्रौञ्ची भासी भासानजायत ।
श्येनी श्येनांश्च गृध्रांश्च तथोलूकानजायत ॥ १९ ॥

Digitized by Google

धृतराष्ट्री त्वजनयद्धंसान् जलविहारिणः ।
चक्रवाकांश्च भद्रं ते सारसांश्चैव सर्वशः ॥ २० ॥
शुकी शुकानजनयत् तनयान् विनयान्वितान् ।
कल्याणगुणसंपन्नान् सर्वलक्षणपूजितान् ॥ २१ ॥
तथा क्रोधवशा नाम जज्ञे सा चात्मसंभवान् ।
मृगीं मृगवतीं चैव शार्दूलीं क्रोष्टुकीं तथा ॥ २२ ॥
मातङ्गीं सिंहिकां चैव श्वेतां सुरभिमेव च ।
सर्वलक्षणसंपन्नां सुरसां च यशस्विनीं ॥ २३ ॥
मृग्याः सुता मृगाः सर्वे तत्र तासां परंतप ।
मृगवत्यास्तथर्क्षाश्च सृमराश्च तथा विभो ॥ २४ ॥
गजमैरावणं नाम मातङ्ग्यजनयत् सुतं ।
ऐरावणात् पुनर्जाता मृगमन्द्रादयो गजाः ॥ २५ ॥
हर्याश्च हरयोऽपत्यं वानरा भुवि विश्रुताः ।
गोलाङ्गुलाश्च शार्दूली व्याघ्रानजनयत् सुतान् ॥ २६ ॥
मातङ्ग्यपि च मातङ्गानपत्यं पुरुषर्षभ ।
दिग्गजं चैव शङ्खाख्यं श्वेता वै समजायत ॥ २७ ॥
ततो दुहितरौ राम सुरभिस्तु व्यजायत ।
रोहिणीं चैव भद्रां च गन्धर्वीं च यशस्विनीं ॥ २८ ॥
रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनस्तथा ।
सुरसाजनयन्नागान् राम कद्रुश्च पन्नगान् ॥ २९ ॥

Digitized by Google

मनुर्मनुष्यांश्च तथा जनयामास राघव ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्च पुरुषर्षभ ॥ ३० ॥
शिरसो ब्राह्मणा जाता उरसः क्षत्रिया भुवि ।
जाताश्चाप्यूरुतो वैश्याः शूद्राणां जन्म पादतः ॥ ३१ ॥
सप्त पिण्डफलान् वृक्षान् ललनापि व्यजायत ।
कद्रुर्नागसहस्रं तु जनयामास भूधरं ॥ ३२ ॥
विनतां तु श्येनी जज्ञे अन्यैः सह सुतैः सुतां ।
विनतायाः सुतौ राम जज्ञाते गरुडारुणौ ॥ ३३ ॥
तस्माज्जातोऽस्मि गरुडात् सम्पातिश्चाग्रजो मम ।
जटायुषं तु मां विद्धि श्येनीपुत्रमरिंदम ॥ ३४ ॥
सोऽहं वत्स सहायस्ते भविष्यामि यदीच्छसि ।
सीतां तवेह रक्षिष्ये त्वयि शून्ये सलक्ष्मणे ॥ ३५ ॥
तथेति तं तु प्रतिगृह्य राघवो मुदा परिष्वज्य च तं खगोत्तमं ।
पितुर्हि शुश्राव सखित्वमात्मनो जटायुषा संकथितं पुनः पुनः ॥३६॥
स तत्र सीतां परिदाय मैथिलीं सहैव तेनातिबलेन पक्षिणा ।
जगाम पञ्चावटमाश्रमं ततो जटायुषा तेन समेत्य वीर्यवान् ॥३७॥
ततोऽविदूरे वनसंघसंकटे सलक्ष्मणो राघववंशवर्धनः ।
विवेश पञ्चावटमुग्रसेवितं रिपून् दिधक्षुः शलभानिवाग्न्यभुक् ॥३८॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुषः समागमो नाम विंशतितमः सर्गः ॥

Digitized by Google

## XXI.

स तु पञ्चवटीं गत्वा नानाव्यालनिषेवितां ।
उवाच भ्रातरं रामो लक्ष्मणं दीप्ततेजसं ॥ १ ॥
आगताः स्मो यथोद्दिष्टमिमं देशं महर्षिणा ।
रमणीयं वनं यत्र पुष्पमूलफलं स्थिरं ॥ २ ॥
पञ्चवटीयं सौमित्रे देशः पुष्पितकाननः ।
सर्वतश्चार्यतां दृष्टिर्विपुला निपुणो ह्यसि ॥ ३ ॥
आश्रमः कतरस्मिंस्तु देशे च तव संमतः ।
रमेत यत्र वैदेही त्वमहं चैव लक्ष्मण ॥ ४ ॥
संनिकृष्टं च यत्र स्यादिध्मपुष्पफलोदकं ।
वनं रम्यं च सौमित्रे स्थली रम्या च यद्भवेत् ॥ ५ ॥
एवमुक्तस्तु रामेण लक्ष्मणः संहृताञ्जलिः ।
सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥ ६ ॥
परवानस्मि काकुत्स्थ त्वयि वर्षायुते स्थिते ।
स्वयमेव रुचिर्देशो दृश्यतां यत्र रोचते ॥ ७ ॥
सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महाद्युतिः ।
विमृश्य रोचयामास देशं सर्वगुणान्वितं ॥ ८ ॥
स तं रुचिरपानीयं देशमाश्रमकर्मणि ।
प्रगृह्य हस्तं हस्तेन रामो लक्ष्मणमब्रवीत् ॥ ९ ॥

Digitized by Google

अयं देशः शुभः श्रीमान् पुष्पितैस्तरुभिर्वृतः ।
इहाश्रमपदं सौम्य यथावत् कर्तुमर्हसि ॥ १० ॥
इयमादित्यसंकाशैः पद्मैः सुरभिगन्धिभिः ।
अदूरे दृश्यते रम्या पुण्या गोदावरी सरित् ॥ ११ ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ।
न च दूरे न चाभ्यासे मृगयूथैर्विलोडिता ॥ १२ ॥
मयूराभिरुतो रम्यः प्रांशुः कन्दरवान् गिरिः ।
नानालतावितानाढ्यः पुष्पितैस्तरुभिर्वृतः ॥ १३ ॥
सालैस्तालैस्तमालैश्च खर्जूरैश्चोपशोभितः ।
राजतैर्धातुभिश्चित्रैर्देशे देशे च लक्षितः ॥ १४ ॥
वानीरैस्तिनिशैश्चैव पलाशैरर्जुनैर्धवैः ।
चम्पकैः कर्णिकारैश्च तथाशोकैर्विभूषितः ॥ १५ ॥
वृक्षगुल्मसहस्रैश्च तिलकैस्तिन्दुकैरपि ।
दृश्यतामेष सौमित्रे नानामृगगणान्वितः ॥ १६ ॥
राजता धातवो यत्र काञ्चनाश्च महागिरिः ।
आयसाश्चैव ताम्राश्च विभ्राजन्ते समन्ततः ॥ १७ ॥
अभ्यास एव शैलस्य विशाला भूमयः समाः ।
यासु तालास्तमालाश्च खर्जूराश्च सहस्रशः ॥ १८ ॥
वानीराश्च तिमीराश्च पुन्नागाश्च नगोत्तमाः ।
देशोऽयं फलपुष्पाढ्यः प्रकृष्ट इति मे मतिः ॥ १९ ॥

Digitized by Google

चन्दनैः स्यन्दनैश्चैव पियालैर्वकुलैरपि ।
धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः ॥ २० ॥
इदं मेध्यमिदं रम्यमिदं बहुगुणं वनं ।
वत्स्यामोऽत्रैव सौमित्रे सहायेन पतत्रिणा ॥ २१ ॥
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
अचिरेणाश्रमं भ्रातुश्चकार सुमनोहरं ॥ २२ ॥
पर्णशालां स मतिमांश्चकार विपुलां तदा ।
मनोज्ञां राघवस्यार्थे प्रेक्षणीयां मनोरमां ॥ २३ ॥
गत्वा तु लक्ष्मणः श्रीमान् नदीं गोदावरीं ततः ।
स्नात्वा पद्मान्युपादाय स शीघ्रं पुनरायथौ ॥ २४ ॥
पुष्पोपहारं कृत्वाथ हुत्वा चाग्निं विधानतः ।
दर्शयामास रामाय तदाश्रमपदं कृतं ॥ २५ ॥
स तु दृष्ट्वाश्रमं रम्यमागत्य सह सीतया ।
राघवः पर्णशालायां हर्षमाहारयत् परं ॥ २६ ॥
संप्रहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा ।
अतिस्निग्धं मनोहारि वचनं श्लक्ष्णमब्रवीत् ॥ २७ ॥
प्रीतोऽस्मि ते महत् कर्म त्वया यत् कृतमीदृशं ।
परिष्वङ्गमिमं तावत् प्रीतिदायं गृहाण मे ॥ २८ ॥
गुणज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण ।
सत्पुत्रेण त्वया तात तारिताः पितरो मम ॥ २९ ॥

Digitized by Google

एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनं ।
तस्मिन् देशे बहुफले बहुपुष्पोपशोभिते ॥३०॥
न्यवसत् सहितो वीरः सीतया लक्ष्मणेन च ।
कञ्चित् कालं स धर्मात्मा स्वर्ग इन्द्र इवापरः ॥३१॥

इत्यार्षे रामायणे आरण्यककाण्डे पञ्चवटीनिवासो
नाम एकविंशतितमः सर्गः ॥

Digitized by Google

## XXII.

वसतस्तस्य तु सुखं राघवस्य तपोवने ।
शरद्यपाये हेमन्तः प्रावर्तत भृशं प्रियः ॥ १ ॥
स कदाचित् प्रभातायां शर्वर्यां रघुनन्दनः ।
अभिषेकार्थमुत्थाय ययौ गोदावरीं नदीं ॥ २ ॥
प्रह्वः कलसहस्तश्च सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥
अयं स कालः संप्राप्तः प्रभो यस्ते प्रियः सदा ।
अलंकृत इवाभाति येन संवत्सरो गुणैः ॥ ४ ॥
नीहारः परुषो वायुः पृथिवी शस्यशालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
नवाग्रायणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताग्रायणभोक्तारः सर्वे विगतकल्मषाः ॥ ६ ॥
प्राप्तकामा जनपदाः संपन्नयवगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ७ ॥
अगस्त्यसेवितामाशां सेवमाने दिवाकरे ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोषाढ्यो दूरसूर्यश्च सम्प्रति ।
यथार्थकृतनामासौ हिमवान् हिमवान् गिरिः ॥ ९ ॥



Digitized by Google

प्रत्यूषे दुःखसंचारा मध्याह्नसमये सुखाः ।
दिवसाः सुभगाः पुण्यास्त्वरिता व्यतियान्ति नः ॥ १० ॥
मृदुसूर्याः सनीहाराः पटुशीतानिलान्विताः ।
शून्यारण्या हिमध्वस्ताः प्रत्यूषे भान्ति साम्प्रतं ॥ ११ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामास्त्रियामा यान्ति साम्प्रतं ॥ १२ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
सनिःश्वास इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥
पौर्णमास्यामपि ज्योत्स्ना तुषारकलुषीकृता ।
सीतेव तपसा क्षीणा लक्ष्यते न तु शोभते ॥ १४ ॥
प्रकृत्या शीतसंस्पर्शो हिमविद्धश्च सम्प्रति ।
प्रवाति पश्चिमो वायुः कल्यं द्विगुणशीतलः ॥ १५ ॥
हिमच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पुष्पमण्डितैः ।
शोभन्ते किञ्चिदालम्बैः शालयः कनकप्रभाः ॥ १७ ॥
शालिशूकपरित्रासात् किञ्चिदामीलितेक्षणः ।
वृषः पिबति केदारे निःश्वासाकुलितं पयः ॥ १८ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरादभ्युदितः सूर्यश्चन्द्रमा इव दृश्यते ॥ १९ ॥

अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संरक्तः किञ्चिदापाण्डुरपराह्णे तथातपः ॥ २० ॥
अवश्यायनिपातेन किञ्चित् प्रक्लिन्नशाद्वला ।
वनानां दृश्यते भूमिर्निविष्टतरुणातपा ॥ २१ ॥
अवश्यायपरिक्लिन्ना नीहारतमसावृताः ।
प्रसुप्ता इव दृश्यन्ते समन्ताद्वनराजयः ॥ २२ ॥
वाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रबालुकैस्तीरैः सरितो भान्ति साम्प्रतं ॥ २३ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलं ॥ २४ ॥
जराजर्जरितैः पत्रैः शीर्णकेशरकर्णिकैः ।
नालशिष्टा हिमैर्दग्धा न भान्ति कमलाकराः ॥ २५ ॥
अस्मिन् स पुरुषव्याघ्र काले दुःखसमन्वितः ।
तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २६ ॥
त्यक्त्वा राज्यं च भोगांश्च विषयांश्चैव सर्वशः ।
तपस्वी नियताहारः शीते शेते महीतले ॥ २७ ॥
सोऽपि नूनमिमां वेलामभिषेकार्थमुद्यतः ।
वृतः प्रकृतिभिर्भक्त्या प्रयाति सरयूं नदीं ॥ २८ ॥
अत्यन्तसुखसंवृद्धः सुकुमारो हिमार्दितः ।
कथं चापररात्रेषु सरयूमवगाहते ॥ २९ ॥

Digitized by Google

धर्मज्ञः सत्यवादी च ह्रीनिषेवो जितेन्द्रियः ।
संत्यज्य विविधं सौख्यमार्यं सर्वात्मनाश्रितः ॥ ३० ॥
जितः स्वर्गो मम भ्रात्रा भरतेन महात्मना ।
वनस्थं नगरस्थो हि भक्त्या त्वामनुयाति सः ॥ ३१ ॥
न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३२ ॥
भर्ता दशरथो यस्याः साधुश्च भरतः सुतः ।
कथं नु साम्बा कैकेयी तादृशी मनुजेश्वर ॥ ३३ ॥
इत्यथो लक्ष्मणे वाक्यं स्नेहाद्ब्रुवति धार्मिके ।
परिवादनिवृत्तात्मा वचनं राघवोऽब्रवीत् ॥ ३४ ॥
न तेऽम्बा मध्यमा तात गर्हितव्या ममाग्रतः ।
तस्यैवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३५ ॥
निश्चितैव हि मे बुद्धिर्वनवासाय लक्ष्मण ।
भरतस्नेहसंतप्ता बालिशा क्रियते पुनः ॥ ३६ ॥
इत्यसौ प्रवदन्नेव प्राप्य गोदावरीं नदीं ।
कृताभिषेकः काकुत्स्थः सानुजः सह सीतया ॥ ३७ ॥
तर्पयित्वा तु विधिवत् पितॄन् देवांश्च राघवः ।
उपास्त सानुजः सूर्यमुद्यन्तं सह सीतया ॥ ३८ ॥
कृताभिषेकस्तु रराज रामः सीताद्वितीयः सह लक्ष्मणेन ।
कृताभिषेकः सह शैलपुत्र्या रुद्रः सविष्णुर्भगवानिवेशः ॥ ३९ ॥

Digitized by Google

## XXIII.

कृताभिषेको रामस्तु सीता सौमित्रिरेव च ।
तस्माद्गोदावरीतीरात् पुनरायात् स्वमाश्रमं ॥ १ ॥
आश्रमं समुपागम्य राघवः परवीरहा ।
कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपाविशत् ॥ २ ॥
स रामः पर्णशालायामासीनः सह सीतया ।
लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ३ ॥
कथाः कथयतस्तस्य सह भ्रात्रा महात्मनः ।
गृध्रराजः समागम्य राघवं वाक्यमब्रवीत् ॥ ४ ॥
महेष्वास महाभाग महाबल महाभुज ।
आपृच्छे त्वां नरश्रेष्ठ गमिष्यामि स्वमालयं ॥ ५ ॥
अप्रमादश्च कर्तव्यः सर्वभूतेषु राघव ।
सुहृद्बन्धूनमित्रघ्न गन्तुमिच्छामि राघव ॥ ६ ॥
दृष्ट्वा तु सुहृदः सर्वानात्मीयान् पुरुषोत्तम ।
आगमिष्यामि भद्रं ते तत् ते तत्त्वं ब्रवीम्यहं ॥ ७ ॥
तमुवाच ततो रामो लक्ष्मणश्च खगेश्वरं ।
गम्यतां पतगश्रेष्ठ पुनः संदर्शनाय नः ॥ ८ ॥
गृध्रराजे गते तस्मिन् राघवः प्रियदर्शनः ।
पर्णशालामुपागम्य प्राविशत् सह सीतया ॥ ९ ॥

Digitized by Google

लक्ष्मणोऽथ समुत्थाय चतुःशालं मनोहरं ।
प्रविवेश महाबाहुःसिंहो गिरिगुहामिव ॥ १० ॥
रामस्तु पर्णशालायामासीनः सह सीतया ।
विरराज महाबाहुश्चित्रयेव निशाकरः ॥ ११ ॥
तं देशं राक्षसी काचिदाजगाम यदृच्छया ।
सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ॥ १२ ॥
भगिनी राममागम्य ददर्श त्रिदशोपमं ।
सिंहस्कन्धं महाबाहुं पद्मपत्रनिभेक्षणं ॥ १३ ॥
तं दृष्ट्वा देवसंकाशं राक्षसी मदनार्दिता ।
प्रकृत्या चैव दुर्वर्णा दुःशीला दुःखचारिणी ॥ १४ ॥
दुष्कुलीना दुरासेवा केवलं स्त्री तु सा स्मृता ।
सुमुखं दुर्मुखी रामं वृत्तपार्श्वं महोदरी ॥ १५ ॥
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ।
अतिरूपं विरूपा सा सुस्वरं भैरवस्वना ॥ १६ ॥
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ।
तं न्यायवृत्तं दुर्वृत्ता प्रियमप्रियदर्शना ॥ १७ ॥
सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितं ।
कामभारसमाविष्टा दृष्ट्वा राममचिन्तयत् ॥ १८ ॥
अयं परमरूपाढ्यो युवा यौवनगर्वितः ।
मन्यते देवगन्धर्वैस्तुल्यमात्मानमात्मवान् ॥ १९ ॥



Digitized by Google

अस्याहं श्लाघ्यरूपस्य रामस्याद्भुतकर्मणः ।
काममुत्पादयिष्यामि रूपेणान्येन कामिनी ॥ २० ॥
अस्य प्रकृतिकल्याणी भार्या सीतेति विश्रुता ।
रूपयौवनसंपन्ना श्रीरिवामरवर्णिनी ॥ २१ ॥
तां विहाय यथा ह्येष मामिकां रूपसंपदं ।
दृष्ट्वा मामेव भजते तथा कर्तुमहं यते ॥ २२ ॥
रूपयौवनसंपन्ना श्रीः किल त्रिदिवौकसां ।
श्रीर्माया रक्षसामेषां संमतेति मतिर्मम ॥ २३ ॥
सा त्वहं श्रीरिवाकाशान्मायेव पतिता भुवि ।
राममुन्मादयिष्यामि शर्मिष्ठा नाहुषं यथा ॥ २४ ॥
साभिगम्य महाबाहुं भूत्वा वै कामरूपिणी ।
स्त्रीस्वभावं पुरस्कृत्य सस्मितं वाक्यमब्रवीत् ॥ २५ ॥
कस्त्वं तापसरूपेण सभार्यः शरचापधृक् ।
इमं देशमनुप्राप्तो दुर्गं राक्षससेवितं ॥ २६ ॥
नातिदूरमितः शूरा राक्षसा घोरविक्रमाः ।
उत्सादयन्त्यृषीन् सर्वान् जनस्थाने महाबलाः ॥ २७ ॥
वसन्तः क्रूरकर्माणस्ततस्त्वां वै ब्रवीम्यहं ।
कथं त्वमरमुख्यानां सदृशस्त्वमिहागतः ॥ २८ ॥
इदं गोदावरीतीरमृषयः पावकोपमाः ।
त्वद्बाहुबलमाश्रित्य तिष्ठन्तीति मतिर्मम ॥ २९ ॥

Digitized by Google

एवमुक्तस्तु राक्षस्या शूर्पणख्या स राघवः ।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ ३० ॥
राजा दशरथो नाम धर्मात्मा विश्रुतः क्षितौ ।
तस्याहमग्रजः पुत्रो राम इत्यभिविश्रुतः ॥ ३१ ॥
सीतेयं मम भार्या च भ्रातायं लक्ष्मणस्तथा ।
नियोगात् तु नरेन्द्रस्य पितुर्मातुश्च शासनात् ॥ ३२ ॥
धर्मात्मा धर्मकामश्च वने वस्तुमिहागतः ।
रूपलक्षणसंपन्ना साक्षाच्छ्रीरिव सुन्दरी ॥ ३३ ॥
वने घोरतमे भीरु का त्वं चरसि दण्डके ।
त्वामहं ज्ञातुमिच्छामि कथ्यतां कासि कस्य वा ॥ ३४ ॥
इह वा किंनिमित्तं त्वमेका चरसि निर्भया ।
साब्रवीत् तद्वचः श्रुत्वा राक्षसी मदविह्वला ॥ ३५ ॥
श्रूयतां राम वक्ष्यामि सह भ्रात्रा वचो मम ।
अहं शूर्पणखा नाम राक्षसी कामरूपिणी ॥ ३६ ॥
अरण्ये विचराम्येका सर्वभूतभयंकरी ।
उत्सादयन्ती पुण्यानि तीर्थान्यायतनानि च ॥ ३७ ॥
रावणो नाम मे भ्राता राक्षसो राक्षसेश्वरः ।
विभीषणश्च धर्मात्मा राक्षसाचारवर्जितः ॥ ३८ ॥
प्रवृद्धनिद्रश्च तथा कुम्भकर्णो महाबलः ।
प्रख्यातबलवीर्यौ च राक्षसौ खरदूषणौ ॥ ३९ ॥

Digitized by Google

साहं त्वद्दर्शनाद्राम कामवैक्लव्यतां गता ।
भजस्व भजमानां मां सीतया किं तवानया ॥ ४० ॥
विकृतेयं विरूपा च न चैव सदृशी तव ।
अहमेवानुरूपा ते भार्या रूपगुणान्विता ॥ ४१ ॥
पश्य मां दिव्यरूपां त्वं दिव्याभरणभूषितां ।
कान्तोरुनयनां कान्तां पीनश्रोणिपयोधरां ॥ ४२ ॥
इमामरूपामसतीं भक्षयिष्यामि मानुषीं ।
अनेन ते सह भ्रात्रा द्वितीयेन गतायुषा ॥ ४३ ॥
ततः पर्वतशृङ्गाणि वनानि रुचिराणि च ।
पश्यन् सह मया कान्त दण्डकान् विचरिष्यसि ॥ ४४ ॥
एतत् तु वचनं श्रुत्वा राक्षस्या ह्यतिदारुणं ।
ईक्षां चक्रे तदा सीतां लक्ष्मणं च महाभुजः ॥ ४५ ॥
संप्रहासनिमित्तं च रामः शूर्पणखां ततः ।
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ ४६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे हेमन्तवर्णना नाम
द्वाविंशतितमः सर्गः — शूर्पणखादर्शनं नाम
त्रयोविंशतितमः सर्गः ॥

## XXIV.

तां तु शूर्पणखां दृष्ट्वा रामः कामशरार्दितां ।
श्लक्ष्णया युक्तया वाचा स्मितपूर्वमभाषत ॥ १ ॥
कृतदारोऽस्मि भवति भार्येयं दयिता मम ।
त्वद्विधा तु न वै नारी सपत्नीं मर्षयेदिमां ॥ २ ॥
अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः ।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३ ॥
एषोऽनुरूपो भर्ता ते रूपस्यास्य भविष्यति ।
तरुणो भार्यया चार्थी रूपवान् प्रियदर्शनः ॥ ४ ॥
किं मया ते विरूपेण कृतदारेण राक्षसि ।
एनं भज विशालाक्षि भर्तारं भ्रातरं मम ॥ ५ ॥
इत्युक्ता साथ रामेण राक्षसी कामरूपिणी ।
विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६ ॥
तवानुरूपां रूपस्य भार्यां मां भज मानद ।
मया सह सुखी रम्यं दण्डकं विचरिष्यसि ॥ ७ ॥
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ।
वीक्ष्य शूर्पणखां वाक्यं ततस्तामिदमब्रवीत् ॥ ८ ॥
कथं दासस्य दासी त्वं भार्या भवितुमर्हसि ।
योऽहमार्येण परवान् भ्रात्रा ज्येष्ठेन भाविनि ॥ ९ ॥

Digitized by Google

समृद्धार्थस्य सिद्धार्था विदुषः कामचारिणी ।
आर्यस्यैव विशालाक्षि भार्या भव यवीयसी ॥ १० ॥
एतामविरूपामसतीं करालां विकृतोदरीं ।
भार्यां वृद्धां परित्यज्य त्वामेवार्यो भजिष्यति ॥ ११ ॥
को हि रूपमिदं त्यक्त्वा दिव्यं तव विलासिनि ।
मानुषीषु वरारोहे भावं कुर्याद्विचक्षणः ॥ १२ ॥
इति सा लक्ष्मणेनोक्ता कराला निर्नतोदरी ।
मेनेऽथ सत्यमेवेति परिहासमदक्षिणा ॥ १३ ॥
ततः सा राघवं भूयः समुत्पत्य महाद्युतिं ।
सीतया सह दुर्धर्षमब्रवीत् काममोहिता ॥ १४ ॥
अहं त्वदभिकामा च राम त्वत्पूर्वदर्शना ।
चिराय भव मे भर्ता सीतया किं तवानया ॥ १५ ॥
इमां विरूपामसतीं करालां निःसृतोदरीं ।
वृद्धां भार्यामवष्टभ्य त्वं मां न बहुमन्यसे ॥ १६ ॥
अद्येमां भक्षयिष्यामि पश्यतस्तेऽतिमानिनः ।
ततस्त्वया रमिष्येऽहं निःसपत्ना यथासुखं ॥ १७ ॥
इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा ।
अभ्यधावत वैदेहीं महोल्का रोहिणीमिव ॥ १८ ॥
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
निवार्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १९ ॥

Digitized by Google

क्रूरैः सुदुष्टैः सौमित्रे संप्रहासः कथञ्चन ।
न कार्यः पश्य वैदेही कथञ्चित् सौम्य जीवति ॥ २० ॥
इमां विरूपां दुर्वृत्तामतिमत्तां महोदरीं ।
राक्षसीं पुरुषव्याघ्र निवर्तयितुमर्हसि ॥ २१ ॥
इत्युक्तो लक्ष्मणः क्रुद्धस्तस्य रामस्य पश्यतः ।
खड्गेन तस्याश्चिच्छेद कर्णनासां निगृह्य तां ॥ २२ ॥
निकृत्तकर्णनासा तु विस्वरं प्रतिनद्य सा ।
यथागतं जगामाशु घोरा शूर्पणखा वनं ॥ २३ ॥
सा च क्षरन्ती रुधिरं बहुधा रुधिरोक्षिता ।
ननाद विविधान् नादान् यथा प्रावृषि तोयदः ॥ २४ ॥
सा विरूपा महाघोरा राक्षसी भीमनिस्वना ।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनं ॥ २५ ॥
ततस्तु सा राक्षससंघसंवृतं
खरं जनस्थानगतं विरूपिता ।
उत्पत्य वै भ्रातरमुग्रतेजसं
पपात भूमौ गगनादिवाशनिः ॥ २६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे शूर्पणखाविरूपणं
नाम चतुर्विंशतितमः सर्गः ॥

Digitized by Google

## XXV.

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षितां ।
भगिनीं क्रोधताम्राक्षः खरः पप्रच्छ राक्षसः ॥ १ ॥
बलविक्रमसंपन्ना यथाकामविचारिणी ।
इमामवस्थां नीतासि केनान्तकसमा भुवि ॥ २ ॥
देवगन्धर्वभूतानां मुनीनां च महात्मनां ।
कोऽयमेवं महावीर्यस्त्वां विरूपां चकार यः ॥ ३ ॥
न हि पश्यामि तं लोके यः कुर्यादप्रियं मम ।
अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनं ॥ ४ ॥
कस्याहं मार्गणैः प्राणानादास्ये जीवितान्तकैः ।
सरसः सलिलं स्तोकमादित्यो रश्मिभिर्यथा ॥ ५ ॥
निहतस्य मया संख्ये शरसंकृत्तमर्मणः ।
सफेनं रुधिरं भूरि मेदिनी कस्य पास्यति ॥ ६ ॥
कस्य पत्ररथाः कायान्मांसमुत्कृत्य संगतं ।
प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया युधि ॥ ७ ॥
तं न देवा न गन्धर्वा न पिशाचा न दानवाः ।
मयोपसृष्टं कृपणं शक्तास्त्रातुं महाहवे ॥ ८ ॥
उपलभ्य ततः संज्ञां तं मे शंसितुमर्हसि ।
येन त्वं दुर्विनीतेन विरूपवदना कृता ॥ ९ ॥

Digitized by Google

इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य वदतस्तथा ।
ततः शूर्पणखा वाक्यं वाष्पगद्गदमब्रवीत् ॥ १० ॥
तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ ११ ॥
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
देवौ वा तौ मनुष्यौ वा न तर्कयितुमुत्सहे ॥ १२ ॥
आत्मसंभावितौ वीरौ राजपुत्रौ मनस्विनौ ।
तापसौ च धनुष्पाणी सिंहविक्रान्तगामिनौ । ॥ १३ ॥
त्वदीयं वनमाक्रम्य कृत्वा चाश्रममण्डलं ।
तत्र तौ बलसंपन्नौ वसतो रावणानुज ॥ १४ ॥
तरुणी रूपसंपन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १५ ॥
तां च तौ चाहमारब्धा बलाद्धर्षयितुं वने ।
इमामवस्थां नीतास्मि यथानाथवती तथा ॥ १६ ॥
क्रोशन्त्या विस्फुरन्त्याश्च बलादाकृष्य संयुगे ।
त्वया नाथेन पश्येमां धर्षणां मम वै कृतां ॥ १७ ॥
त्वत्प्रसादात् तयोश्चैव तस्याश्चैव निशाचर ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १८ ॥
एष मेऽभिहितः कामस्त्वया वीर कृतो भवेत् ।
तयोस्तस्याश्च रुधिरं यत् पिबेयमहं युधि ॥ १९ ॥

इत्युक्तः स तया तत्र चतुर्दश निशाचरान् ।
आदिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ २० ॥
मानुषौ शस्त्रसंपन्नौ चीरकृष्णाजिनाम्बरौ ।
प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ २१ ॥
तां हत्वा तौ च दुर्वृत्तावुपावर्तितुमर्हथ ।
ममेयं भगिनी तेषां पातुमिच्छति शोणितं ॥ २२ ॥
मनोरथोऽयमिष्टस्तु भगिन्या मम राक्षसाः ।
क्षिप्रं प्रसाध्यतामद्य प्रमथ्य स्वेन तेजसा ॥ २३ ॥
युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे ।
इयं प्रीता च तुष्टा च युधि पास्यति शोणितं ॥ २४ ॥
इति प्रतिसमादिष्टा राक्षसाः शूलपाणयः ।
तत्राजग्मुस्तया सार्धं मेघा वातेरिता इव ॥ २५ ॥

ततो ययुस्ते परमप्रहारिणः
प्रकम्पयन्तः पृथिवीं सकाननां ।
खराज्ञया रामरणावमर्दने
कृतोद्यमा दैत्यवरा इवाहवे ॥ २६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे राक्षसप्रयाणं
नाम पञ्चविंशतितमः सर्गः ॥

Digitized by Google

## XXVI.

ततः शूर्पणखा घोरा राघवाश्रममागता ।
रक्षसामाचचक्षेऽथ राघवौ सह सीतया ॥ १ ॥
ते रामं पर्णशालायामुपविष्टं महाबलं ।
ददृशुः सीतया सार्धं लक्ष्मणेन च धीमता ॥ २ ॥
तान् दृष्ट्वा राघवः क्रूरान् राक्षसांस्तां च राक्षसीं ।
अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसं ॥ ३ ॥
मुहूर्तं भव सौमित्रे वैदेह्याः प्रत्यनन्तरः ।
यावन्निहन्मि रक्षांसि घोराणीमानि संयुगे ॥ ४ ॥
वाक्यमेतदुपश्रुत्य रामस्यामिततेजसः ।
तथेत्युक्त्वा स वैदेह्या अभवत् प्रत्यनन्तरः ॥ ५ ॥
रामोऽपि सुमहच्चापं चामीकरविभूषितं ।
चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ।
प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकं वनं ॥ ७ ॥
फलमूलाशनौ दान्तौ तापसौ धर्ममास्थितौ ।
वसन्तौ दण्डकारण्ये किमर्थमभिधावथ ॥ ८ ॥
युष्मद्भिप्रकृतैः पूर्वमृषिभिः संशितव्रतैः ।
नियुक्तावागतौ दुर्गमावां घोरमिदं वनं ॥ ९ ॥

Digitized by Google

इत एव निवर्तध्वं नोपसर्पितुमर्हथ ।
यदि प्राणैरिहार्थो वो निवर्तध्वं निशाचराः ॥ १० ॥
इति रामवचः श्रुत्वा राक्षसास्ते चतुर्दश ।
ऊचुर्वचः सुसंरब्धाः शूलपट्टिशपाणयः ॥ ११ ॥
क्रोधसंरक्तनयना रामं रक्तान्तलोचनं ।
परुषा मधुराभाषं धृष्टा धृष्टपराक्रमं ॥ १२ ॥
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ।
त्वमेव त्यक्ष्यसि प्राणानस्माभिः समरे हतः ॥ १३ ॥
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ ॥
अस्मद्बाहुप्रमुक्तैस्त्वं शूलपट्टिशमुद्गरैः ।
प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्चेदं विचेतनः ॥ १५ ॥
एवमुक्त्वा सुसंरब्धा राक्षसास्ते चतुर्दश ।
उद्यतायुधनिस्त्रिंशा रामं समभिदुद्रुवुः ॥ १६ ॥
अभिद्रुत्य च वेगेन चिक्षिपुस्ते निशाचराः ।
चतुर्दश सुसंरब्धाः शूलपट्टिशमुद्गरान् ॥ १७ ॥
तानि तेषां च शस्त्राणि राक्षसानां चतुर्दश ।
चतुर्दशभिरेवाजौ रामश्चिच्छेद सायकैः ॥ १८ ॥
ततोऽपरानसंभ्रान्तो राघवो लघुविक्रमः ।
जग्राह समरे क्रुद्धश्चतुर्दश शिलीमुखान् ॥ १९ ॥



Digitized by Google

संधाय चापे तानाशु लक्ष्यमुद्दिश्य राक्षसान् ।
मुमोच राघवो बाणान् वज्राशनिसमस्वनान् ॥ २० ॥
ते रुक्मपुङ्खा विशिखाः प्रदीप्ता हेमभूषिताः ।
अन्तरीक्षे महोल्कानां बभूवुस्तुल्यवर्चसः ॥ २१ ॥
ते शरास्तानि रक्षांसि भित्त्वा वह्निणलक्षणाः ।
विविशुर्वेगिता भूमौ वल्मीक इव पन्नगाः ॥ २२ ॥
शोणितार्द्रा महाकाया विगतैरसुभिस्ततः ।
चतुर्दश निपेतुस्ते शरभिन्ना निशाचराः ॥ २३ ॥
ते भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः ।
प्रपेतू राक्षसाः सर्वे रामेण युधि निर्जिताः ॥ २४ ॥
ते रुक्मपुङ्खा विमला विशिखा हेमभूषिताः ।
निहत्य तानि रक्षांसि स्वतूणं पुनरागमन् ॥ २५ ॥
तान् भूमौ पतितान् दृष्ट्वा राक्षसी क्रोधमूर्छिता ।
परित्रस्ता पुनः साथ व्यसृजद्भैरवं रवं ॥ २६ ॥
सा नदन्ती महानादान् जवात् शूर्पणखा ततः ।
जगाम यत्र वै भ्राता सुसंत्रस्ता महाबलः ॥ २७ ॥
उपगम्य खरं सा तु किञ्चित् संशुष्कशोणिता ।
पपात पुनरेवार्ता सनिर्यासेव शल्लकी ॥ २८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे प्रहितराक्षसबधो
नाम षड्विंशतितमः सर्गः ॥

Digitized by Google

## XXVII.

तां पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः ।
उवाच व्यक्तया वाचा तामनर्थार्थमागतां ॥ १ ॥
यदा शूराश्च दृप्ताश्च राक्षसाः पिशिताशनाः ।
त्वत्प्रियार्थं मयोत्सृष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥
भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः ।
न ते न कुर्युर्वचनं जीवितापेक्षया मम ॥ ३ ॥
उच्यतां कारणं भद्रे येन त्वं पुनरागता ।
किमर्थं विलपसि त्वं वास्पदूषितलोचना ॥ ४ ॥
अनाथवद्विलागम्य मयि नाथे व्यवस्थिते ।
उत्तिष्ठ भद्रे मैवं भूर्वैक्लव्यं त्यज्यतामिदं ॥ ५ ॥
सैवं तेन तु दुःखार्ता खरेण परिशान्विता ।
विमृज्य नयने सास्रे खरं वचनमब्रवीत् ॥ ६ ॥
ये त्वया प्रेषिताः शूरा राक्षसाः शूलपाणयः ।
रामेणैकेन ते सर्वे निर्दग्धाः सायकाग्निना ॥ ७ ॥
तान् भूमौ पतितान् दृष्ट्वा छिन्नमूलानिव द्रुमान् ।
रामस्य चैव तत् कर्म परित्रासो ममाभवत् ॥ ८ ॥
सास्मि भीता विषण्णा च समुद्विग्ना च राक्षस ।
शरणं त्वामनुप्राप्ता सर्वतो भयदर्शिनी ॥ ९ ॥

Digitized by Google

विषादनक्रसंकीर्णे परित्रासोर्मिसंकुले ।
किं मां न त्रायसे मग्नामप्लवे शोकसागरे ॥ १० ॥
यदि राममित्रं मे संयुगे न हनिष्यसि ।
संनिधौ ते त्यजाम्येषा जीवितं राक्षसेश्वर ॥ ११ ॥
मयि ते यद्यनुक्रोशो यदि रक्षःसु तेषु च ।
ये ते विनिहता भूमौ रामेण निशितैः शरैः ॥ १२ ॥
तेषामानृण्यमागच्छ यदि तेजोऽस्ति तेऽधुना ।
दण्डकारण्यनिलयं जहि राक्षसकण्टकं ॥ १३ ॥
यापि ते पदवी दत्ता हृता रामेण सापि ते ।
निःसत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ॥ १४ ॥
इतोऽपि त्वरितो याहि जनस्थानात् सबान्धवः ।
उत्पन्नं हि भयं घोरं तव रामसमुद्भवं ॥ १५ ॥
प्रमादी मन्दवीर्यश्च हीनसत्त्वपराक्रमः ।
रामतेजोऽभिभूतस्त्वं क्षिप्रं हि न भविष्यसि ॥ १६ ॥
तेजोवीर्यसमायुक्तो रामो दशरथात्मजः ।
भ्राता चैवास्य वैमात्रो लक्ष्मणो नाम वीर्यवान् ॥ १७ ॥
एवं त्वहं प्रपश्यामि न त्वं रामस्य राक्षस ।
समर्थः संयुगे स्थातुं मुहूर्तमपि सायुधः ॥ १८ ॥
अशूरः शूरमानी त्वं मिथ्याख्यापितविक्रमः ।
मानुषौ यो न शक्नोषि निहन्तुं रामलक्ष्मणौ ॥ १९ ॥

Digitized by Google

कामं तु यदि शक्तिस्ते तेजो वास्ति निशाचर ।
दण्डकारण्यनिलयं जहि राक्षसकण्टकं ॥ २० ॥
यदि त्वं वै ममामित्रं त्वमद्य न हनिष्यसि ।
तवैषा ह्यग्रतः प्राणांस्त्यजामि निरपत्रप ॥ २१ ॥
शूरस्त्वं किल मानी च राक्षसेष्विह तर्कितः ।
लङ्कायां राक्षसेन्द्रेण रावणेन महात्मना ॥ २२ ॥
स ते प्रतापश्च मनस्विता च
सत्त्वं च धैर्यं च पराक्रमश्च ।
हर्षश्च युद्धे रिपुभिश्च वैरं
यशश्च मुख्यं ह्य गतानि तानि ॥ २३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे खरोद्दीपनं नाम
सप्तविंशतितमः सर्गः ॥

Digitized by Google

## XXVIII.

एवमाधर्षितः शूरः शूर्पणख्या खरस्तदा ।
उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥
तवापमानप्रभवः क्रोधोऽयमतुलो मया ।
न शक्यते वारयितुं वेलेव लवणाम्भसा ॥ २ ॥
मानुषं हीनवीर्यं च रामं न गणयाम्यहं ।
आत्मदुश्चरितैः प्राणान् हतो योऽद्य विमोक्ष्यति ॥ ३ ॥
वास्पः संह्रियतामेष संभ्रमश्च विमुच्यतां ।
अद्य रामं सह भ्रात्रा नयामि यमसादनं ॥ ४ ॥
गदयाभिहतस्याद्य गतप्राणस्य भूतले ।
रामस्य रुधिरं व्यक्तमुष्णं पास्यसि राक्षसि ॥ ५ ॥
मम बाणैर्निकृत्तानि तस्याङ्गानि पृथक् पृथक् ।
भक्षयिष्यसि संहृष्टा त्वमानीय ततस्ततः ॥ ६ ॥
सूदैः संपादितान्याशु स्निग्धानि च मृदूनि च ।
हते रामे सह भ्रात्रा सीतामांसानि भक्षयेः ॥ ७ ॥
साथ हृष्टा वचः श्रुत्वा खरस्य हृदयंगमं ।
प्रशशंस पुनर्हृष्टा भ्रातरं रक्षसां वरं ॥ ८ ॥
दिष्ट्या ते वीर विक्रान्ता शत्रुविध्वंसनैषिणी ।
संग्रामे सुभगा बुद्धिर्विवृद्धा राक्षसेश्वर ॥ ९ ॥

Digitized by Google

स्थितं मनः शत्रुबधे दिष्ट्या वीर सुनिश्चितं ।
रावणस्यासि सदृशः शौर्येण च बलेन च ॥ १० ॥
त्वया गुप्ता महाबाहो राक्षसा भीमविक्रमाः ।
विचरन्ति जनस्थाने विहरन्ते यथासुखं ॥ ११ ॥
त्वया त्रैलोक्यविजये दैत्यदानवपन्नगाः ।
रावणेन सह भ्रात्रा सुराश्च युधि निर्जिताः ॥ १२ ॥
तव दत्त्वा जनस्थानं रावणो राक्षसाधिपः ।
लङ्कायां सुखतः शेते ससुहृत् सहबान्धवः ॥ १३ ॥
तव संजातकोपस्य मुखं दृष्ट्वा रणाजिरे ।
विद्रवन्ति भयत्रस्ताः सर्वे भूता दिशो दश ॥ १४ ॥
एक एव स पर्याप्तो भवांस्तस्य गतायुषः ।
किं पुनः संवृतो घोरै राक्षसैर्भीमविक्रमैः ॥ १५ ॥
तच्छीघ्रमभिनिर्याहि बधायास्य दुरात्मनः ।
पातुमिच्छामि रुधिरं रामस्य रणमूर्धनि ॥ १६ ॥
ततः शूर्पणखावाक्यं श्रुत्वा श्रुतिमनोहरं ।
अब्रवीद्दूषणं नाम सेनापतिमुपस्थितं ॥ १७ ॥
चतुर्दश सहस्राणि मम चित्तानुवर्तिनां ।
रक्षसां भीमवेगानां समरेष्वनिवर्तिनां ॥ १८ ॥
नीलजीमूतवर्णानां घोराणां क्रूरकर्मणां ।
लोकहिंसाविहाराणामनेकायुधधारिणां ॥ १९ ॥

Digitized by Google

वज्रप्रतिमवेगानां जनस्थाननिवासिनां ।
मुनिहिंसानुरक्तानां बलिनां कामरूपिणां ॥ २० ॥
तेषां शार्दूलदर्पाणामसह्यानां महौजसां ।
समुद्योगमुदीर्णानां रक्षसां सौम्य कारय ॥ २१ ॥
उपस्थापय च क्षिप्रं रथं मम धनूंषि च ।
शक्तिं च विपुलां दिव्यां खड्गं चाकाशवर्चसं ॥ २२ ॥
आयसीं च गदां दिव्यां शतघ्नीं च महास्वनां ।
परश्वधान् सुतीक्ष्णांश्च नाराचांश्चोग्रदर्शनान् ॥ २३ ॥
भिन्दिपालान् सुतीक्ष्णाग्रान् पाषाणांश्च महोपलान् ।
प्रासान् पाशांस्तथा पर्शून् कुन्तांश्च कुणपांस्तथा ॥ २४ ॥
त्रिकण्टकान् भुशुण्डींश्च मुषलान्यायसानि च ।
परिघांस्तोमरांश्चैव मुद्गरान् कूटमुद्गरान् ॥ २५ ॥
तनुत्राणि विचित्राणि कवचा जालिकास्तथा ।
यानि चान्यानि दिव्यानि आयुधानि महान्ति च ॥ २६ ॥
तान्यस्मिन् स्यन्दने क्षिप्रं न्यस्यन्तामविचारणात् ।
अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनां ॥ २७ ॥
बधार्थं दुर्विनीतस्य रामस्य रणकाङ्क्षिणः ।
इति तस्य वचः श्रुत्वा न चिरेण महारथं ॥ २८ ॥
सदश्वैः सबलैर्युक्तमाचचक्षेऽथ दूषणः ।
तं मेरुशिखराकारं तप्तकाञ्चनभूषणं ॥ २९ ॥

Digitized by Google

हेमचन्द्रमसंबाधं वैदूर्यमणिकूवरं ।
नानारत्नसमाकीर्णं कामगं गगनोपमं ॥ ३० ॥
मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रसूर्यैश्च काञ्चनैः ।
राजतैः पक्षिसंघैश्च ताराभिश्च विचित्रितं ॥ ३१ ॥
ध्वजिनं शस्त्रसंपन्नं किङ्किणीशतमण्डितं ।
सदश्वयुक्तं सामर्षमारुरोह खरो रथं ॥ ३२ ॥
निशम्य तं रथगतं राक्षसा भीमविक्रमाः ।
तस्थुः सपरिवार्यैनं दूषणं च महाबलं ॥ ३३ ॥
खरस्तु तन्महासैन्यं दृष्ट्वा नानायुधध्वजं ।
निर्यातेत्यब्रवीद्धृष्टो रथस्थः सर्वराक्षसान् ॥ ३४ ॥
ततो राक्षससैन्यं तच्छक्तिशूलगदाधरं ।
निर्जगाम जनस्थानान्महोदधिसमस्वनं ॥ ३५ ॥
मुद्गरान् शक्तिखड्गांश्च सुतीक्ष्णांश्च परश्वधान् ।
सर्वे शूलानि चादाय निर्ययू राक्षसर्षभाः ॥ ३६ ॥
पट्टिशैः परिघैश्चान्ये तथासिवरकार्मुकैः ।
गदाभिर्मुषलैश्चक्रैर्गृहीतैरुग्रदर्शनाः ॥ ३७ ॥
राक्षसानां सुघोराणां सहस्राणि चतुर्दश ।
निर्यातानि जनस्थानात् खरस्य वशवर्तिनां ॥ ३८ ॥
निर्गच्छतस्तु तान् दृष्ट्वा राक्षसान् भीमविक्रमान् ।
खरोऽपि स्वरथेनाशु निर्ययौ बलदर्पितः ॥ ३९ ॥



Digitized by Google

ततस्तान् सबलानश्वांस्तप्तकाञ्चनभूषितान् ।
खरस्य मतमाज्ञाय सारथिः प्रत्यचोदयत् ॥ ४० ॥
निर्गच्छन् स रथस्तस्य खरस्य रिपुघातिनः ।
शब्देन पूरयामास दिशश्च विदिशस्तथा ॥ ४१ ॥
विवृद्धमन्युः स खरः खरस्वनो
रिपोर्बधार्थं कुपितोऽन्तकोपमः ।
प्रचोदयामास भृशं स सारथिं
महाबलं तूर्णतरं व्रजेत्यथ ॥ ४२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे खरनिर्याणं नाम
अष्टाविंशतितमः सर्गः ॥

Digitized by Google

## XXIX.

तं प्रयान्तं जयप्रेप्सुमशिवं शोणितोदकं ।
अश्मवर्षं महामेघः सहसैव ववर्ष ह ॥ १ ॥
निपेतुस्तुरगास्तस्य जघनैः स्खलिता भृशं ।
समेऽपि च तदा देशे राजमार्गे गता मुहुः ॥ २ ॥
अथास्य ध्वजमाक्रम्य हेमदण्डं समुच्छ्रितं ।
तस्थौ गृध्रो महाकायो वक्त्राच्छोणितमुद्वमन् ॥ ३ ॥
श्यामं च रक्तपर्यन्तं बभूव परिवेशनं ।
अलातचक्रप्रतिमं प्रतिगृह्य दिवाकरं ॥ ४ ॥
जनस्थानसमीपं च समुत्पत्य महास्वनाः ।
विस्वरं बहुधा नेदुर्मांसादा मृगपक्षिणः ॥ ५ ॥
व्याजहार च दीप्तायां याम्यायां दिशि भैरवं ।
रवं शिवा महाघोरा वमन्ती पावकं मुखात् ॥ ६ ॥
भिन्नभेरीस्वनाश्चैव मांसशोणितवर्षिणः ।
आकाशं तदनाकाशं चक्रुर्भीमा बलाहकाः ॥ ७ ॥
तमसा चैव घोरेण समुद्भूतेन सर्वशः ।
प्रच्छादितं जनस्थानं न चकाशे समन्ततः ॥ ८ ॥
नभश्च रुधिराभासं संध्याकालं विना बभौ ।
खरं चाभिमुखा नेदुः खगाः खस्थाः खरस्वनाः ॥ ९ ॥

Digitized by Google

प्रववौ मारुतश्चण्डो निष्प्रभोऽभूद्दिवाकरः ।
उद्भासद्दिवा चन्द्रस्तारागणसमन्वितः ॥ १० ॥
रुरुवुः संघशो घोराः पावकोद्गारिभिर्मुखैः ।
अशिवा दिशि दीप्तायां शिवास्तत्र भयावहाः ॥ ११ ॥
संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ।
फलपुष्पविहीनाश्च तरवो न चकाशिरे ॥ १२ ॥
उल्काश्चापि सनिर्घाता निपेतुर्घोरनिस्वनाः ।
प्रचचाल मही चापि सशैलवनकानना ॥ १३ ॥
खरस्य च रथस्थस्य नर्दतो जयगर्धिनः ।
प्राकम्पत भुजः सव्यः स्वरश्चापि व्यभिद्यत ॥ १४ ॥
सास्रा दृष्टिरभूद्दीना मुखं चैव व्यशुष्यत ।
ललाटे च रुजा जज्ञे न च मोहान्यवर्तत ॥ १५ ॥
तानुत्थितान् महोत्पातान् निशम्य भृशदारुणान् ।
अब्रवीद्राक्षसान् सर्वान् प्रहसन् वाहिनीपतिः ॥ १६ ॥
महोत्पातानिमान् सर्वानुत्थितान् घोरदर्शनान् ।
न चिन्तयाम्यहं वीर्यमाश्रित्य स्वबलोद्भवं ॥ १७ ॥
तारापतिमपि क्षिप्रं पातयेयं नभस्तलात् ।
मृत्युं मरणधर्मेण योजयेयं रुषान्वितः ॥ १८ ॥
न मे भयं सहस्राक्षाद्धनदाद्वापि विद्यते ।
शक्तोऽहं सर्वभूतानामिति मे निश्चयो दृढः ॥ १९ ॥

Digitized by Google

रामं वीर्यबलोत्सिक्तं भ्रातरं चास्य लक्ष्मण ।
निकृत्य सायकैर्बाणैर्नयामि यमसादनं ॥ २० ॥
सकामा भगिनी मेऽस्तु राक्षसी कामचारिणी ।
यन्निमित्तमसौ रामो लक्ष्मणश्च विपत्स्यते ॥ २१ ॥
न क्वचित् प्राप्तपूर्वो मे संयुगेषु पराजयः ।
युष्माकमेव प्रत्यक्षं नानृतं कथयाम्यहं ॥ २२ ॥
देवराजमपि क्रुद्धं मत्तैरावणगामिनं ।
वज्रपाणिमहं हन्यां किमु तं मानुषं रणे ॥ २३ ॥
तस्यैवं गर्जितं श्रुत्वा राक्षसानां महाचमूः ।
प्रहर्षमतुलं लेभे मृत्युपाशवशं गता ॥ २४ ॥
आजग्मुर्ऋषयः सिद्धास्ततो रणदिदृक्षवः ।
देवगन्धर्वमुख्याश्च दिव्याश्चाप्सरसां गणाः ॥ २५ ॥
समेत्योचुश्च सहितास्तेऽन्योन्यं पुण्यकर्मिणः ।
स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकेभ्यश्चैव सर्वशः ॥ २६ ॥
रामो विजयतां युद्धे सपौलस्त्यान् निशाचरान् ।
पाकहन्ता यथा युद्धे सर्वानसुरपुङ्गवान् ॥ २७ ॥
एतच्चान्यच्च बहुधा ब्रुवाणाः परमर्षयः ।
ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषां ॥ २८ ॥
रथेन तु खरो वेगादथ सैन्याद्विनिःसृतः ।
तं दृष्ट्वा निःसृतं पूर्वं राक्षसा अपि निःसृताः ॥ २९ ॥

Digitized by Google

श्येनगामी पृथुग्रीवो यज्ञशत्रुर्महारथः ।
दुर्जयः कालकाख्यश्च परुषः कालिकामुखः ॥ ३० ॥
मेघमाली महाबाहुः सर्पास्यो विकृतोदरः ।
द्वादशैते महावीर्यास्तस्थुः समन्ततः खरं ॥ ३१ ॥
महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा ।
चत्वार एते सेनाग्रे दूषणं पृष्ठतो ययुः ॥ ३२ ॥

सा भीमवेगा समराभिकामा
सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपायाच्
छायेव राहोर्दिवि चन्द्रसूर्यौ ॥ ३३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे उत्पातदर्शनं नाम
नवविंशतितमः सर्गः ॥

Digitized by Google

## XXX.

आश्रमं समनुप्राप्ते खरे खरपराक्रमे ।
तानुत्पातांस्ततो रामः सह भ्रात्रा ददर्श ह ॥ १ ॥
दृष्ट्वा च तान् महाघोरानुत्पातान् लोमहर्षणान् ।
द्विषतामहितान् सर्वान् रामो वचनमब्रवीत् ॥ २ ॥
इमान् पश्य महाबाहो सर्वभूताशिवाय वै ।
समुत्थितान् महाघोरान् संहर्तुमिव मानुषान् ॥ ३ ॥
इमे रुधिरधाराभिर्वर्षन्तोऽतिखरस्वनाः ।
व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः ॥ ४ ॥
सधूमा इषवश्चेमे महायुद्धाभिनन्दिनः ।
रुक्मपृष्ठमिदं चापि चापं विस्फुरतीव मे ॥ ५ ॥
यथा च विनदन्तीमे पक्षिणो वनचारिणः ।
अत्युग्रं नो भयं घोरं संशयो जीवितस्य च ॥ ६ ॥
संप्रहारः सुतुमुलो भवितेह न संशयः ।
यथा स्फुरत्ययं बाहुर्दक्षिणो मम लक्ष्मण ॥ ७ ॥
संनिकृष्टश्च नो वीर जयः शत्रोः पराजयः ।
सुप्रभं च प्रसन्नं च यथेदं वदनं मम ॥ ८ ॥
उद्यतानां हि युद्धाय येषां भवति लक्ष्मण ।
निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥ ९ ॥

Digitized by Google

निमित्तानि च पश्यामि शरीरे पार्थिवात्मज ।
आत्मनो यानि तान्याङ्घोरं प्राणिनिवर्हणं ॥ १० ॥
अनागतविधानं तु कर्तव्यमिह लक्ष्मण ।
आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ ११ ॥
तस्मात् सीतां गृहीत्वा त्वं शरपाणिर्धनुर्धरः ।
गुहामाश्रय शैलस्य दुर्गां पादपसंवृतां ॥ १२ ॥
तत्र त्वं शस्त्रसंपन्नो वैदेह्या सह संवस ।
आगतानां भयं घोरं नैव द्रक्ष्यसि च स्वयं ॥ १३ ॥
भवस्वावहितस्तत्र ज्यास्वनैः पूरयन् दिशः ।
प्रतिकूलं तु दृष्टव्यं नैव वाक्यमिदं त्वया ॥ १४ ॥
शापितो ह्यसि पत्न्या मे गम्यतां वीर मा चिरं ।
उत्तरं च न वक्तव्यं वीर्यज्ञोऽसि त्वयानघ ॥ १५ ॥
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया ।
शरानादाय चापं च गुहां दुर्गामुपाश्रयत् ॥ १६ ॥
तस्मिन् गुहां प्रविष्टे तु लक्ष्मणे सह सीतया ।
राघवः कृतमित्युक्त्वा बबन्ध कवचं दृढं ॥ १७ ॥
स तेनाग्निनिकाशेन कवचेन विभूषितः ।
रराज रामस्तिमिरं विधूयार्क इवोदितः ॥ १८ ॥
स चापमुद्यम्य महच्छरांश्चाशीविषोपमान् ।
बभूवावस्थितो रामो ज्यास्वनैः पूरयन् दिशः ॥ १९ ॥

Digitized by Google

ततो देवर्षिगन्धर्वाः सिद्धाश्च सह चारणैः ।
ऊचुः परमसंत्रस्ता गुह्यकाश्च परस्परं ॥ २० ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणां ।
एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २१ ॥
रामो नो विदितो योऽयं यथा च वसुधां गतः ।
मनुष्यत्वं तु मत्वास्य कारुण्याद्व्यथितं मनः ॥ २२ ॥
नर्दन्तीव चमूस्तेषां रक्षसां कामरूपिणां ।
नानाविकृतवेशानां रामाश्रममुपागमत् ॥ २३ ॥
तिष्ठ राम हतोऽसीति क्रोशन्तस्ते समन्ततः ।
अभिपेतुः सुसंरब्धा राक्षसा बलदर्पिताः ॥ २४ ॥
विप्रकीर्णां तु तां दृष्ट्वा राक्षसानां महाचमूं ।
शाठ्याद्राक्षसबुद्ध्या च स खरः संन्यवर्तयत् ॥ २५ ॥
संनिवृत्तं तु तत् सैन्यमेकस्थमभवत् तदा ।
पिण्डितं मेघसंकाशं यथा यूथं द्विपायिनां ॥ २६ ॥
तत् तु गम्भीरनिर्ह्रादं घोरवर्मायुधध्वजं ।
अनीकं यातुधानानां समन्तात् पर्यदृश्यत ॥ २७ ॥
वीरस्वनान् विसृजतां गर्जतां चाप्यभीक्ष्णशः ।
चापानि विस्फारयतां जृम्भतां च मुहुर्मुहुः ॥ २८ ॥
विक्रुष्टं संप्रहरतामन्योन्यमभिगर्जतां ।
तेषामत्युल्वणो नादः पूरयामास तद्वनं ॥ २९ ॥

तेन नादेन वित्रस्ताः श्वापदा वनचारिणः ।
बहुधा बहवो यान्तः पृष्ठतो नावलोकयन् ॥ ३० ॥
अभवन्निष्प्रभः सूर्यस्तिमिरेणैव संवृतः ।
मारुतः प्रतिकूलश्च राक्षसानां ववौ तदा ॥ ३१ ॥
तदनीकं महावेगमुपासर्पत राघवं ।
धृतनानाप्रहरणं वर्धमानार्णवोपमं ॥ ३२ ॥
ततो ददर्श काकुत्स्थो रक्षःसैन्यमुपागतं ।
सर्वतश्चारयंश्चक्षुर्युद्धाभिमुखमात्मनः ॥ ३३ ॥
निगृह्य पाणिना चापं तूणादुद्धृत्य शायकान् ।
बभूवावस्थितो योद्धुं ज्यास्वनैः पूरयन् दिशः ॥ ३४ ॥
हसन्निव स्थितः श्रीमान् पुरस्तात् सर्वरक्षसां ।
पुनश्च रोषदुष्प्रेक्ष्यो युगान्ताग्निरिव ज्वलन् ॥ ३५ ॥
तं दृष्ट्वा तेजसा युक्तं विव्यथुर्वनदेवताः ।
दक्षस्येव क्रतुं हन्तुमुद्यतास्त्रं पिनाकिनं ॥ ३६ ॥
तस्य रुष्टस्य तु मुखं रामस्य ददृशुस्तथा ।
खेचरा विस्मिताः सर्वे कालस्येव युगक्षये ॥ ३७ ॥
दृष्ट्वा तु राघवं सर्वे राक्षसा युद्धदुर्मदाः ।
स्थिताः पर्वतसंकाशाः परमं विस्मयं गताः ॥ ३८ ॥
तान् दृष्ट्वा विस्मितान् सर्वान् राक्षसान् राक्षसाधिपः ।
उवाच दूषणं तत्र खरः खरतरं वचः ॥ ३९ ॥

Digitized by Google

न चैवास्ति नदी तार्या सैन्यं चैकपदे स्थितं ।
ज्ञायतां सौम्य तत्त्वेन किमेतदिति निश्चितं ॥ ४० ॥
रथेन दूषणः शीघ्रं सैन्यादथ विनिःसृतः ।
स ददर्श ततो राममग्रतो विधृतायुधं ॥ ४१ ॥
दृष्ट्वा त्रासात् स्थितं सैन्यं पुनरागत्य राक्षसः ।
उवाच दूषणो वाक्यं खरं तं रावणानुजं ॥ ४२ ॥
राम एष धनुष्पाणिः स्थितः समरमूर्धनि ।
यं दृष्ट्वा राक्षसाः सर्वे स्थिताः शत्रुभयंकरं ॥ ४३ ॥
दूषणस्य वचः श्रुत्वा स रथेनाशुविक्रमः ।
अभ्यधावत काकुत्स्थं स्वर्भानुरिव भास्करं ॥ ४४ ॥
तं दृष्ट्वा राक्षसी सेना खरं युद्धाय दंशितं ।
अभ्यधावत गम्भीरा महामेघौघनिस्वना ॥ ४५ ॥

वरायुधस्तां रिपुसंघसूदनो
महारथो दाशरथिर्महायशाः ।
महाचमूं प्रेक्ष्य महार्णवोपमां
न विव्यथे नापि मुमोह राघवः ॥ ४६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे खरसैन्यदर्शनं
नाम त्रिंशः सर्गः ॥

Digitized by Google

XXXI.

अवध्यं सर्वभूतानां राममक्लिष्टकारिणं ।
ददर्शाश्रममागत्य खरः सह निशाचरैः ॥ १ ॥
तं दृष्ट्वा द्विगुणक्रुद्धश्चापमुद्यम्य सज्जयन् ।
राघवाभिमुखं सूतं याहि याहीत्यचोदयत् ॥ २ ॥
स तु तस्याज्ञया सूतस्तुरगान् समचोदयत् ।
ते ययुः शीघ्रगास्तूर्णं यत्र दाशरथिः स्थितः ॥ ३ ॥
तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः ।
नर्दमाना महानादं सचिवाः पर्यवारयन् ॥ ४ ॥
स तेषां यातुधानानां मध्ये रथगतः खरः ।
बभूव मध्ये ताराणां लोहिताङ्ग इव ग्रहः ॥ ५ ॥
ततस्तं भीमकर्माणं क्रुद्धाः सर्वे निशाचराः ।
शस्त्रैर्नानाविधाकारैरभ्यवर्षन् सुदुर्जयं ॥ ६ ॥
मुद्गरैरायसैः शूलैः प्रासखड्गपरश्वधैः ।
राक्षसाः समरे रामं निजघ्नुः क्रोधमूर्छिताः ॥ ७ ॥
ते वलाहकसंकाशा महानादा महौजसः ।
अभ्यधावन्त काकुत्स्थं यातुधाना जिघांसवः ॥ ८ ॥
ते रामे शरवर्षाणि ससृजुः सुमहाबलाः ।
शैलेन्द्रमिव धाराभिः प्रवर्षन्ति पयोधराः ॥ ९ ॥

Digitized by Google

स तैः परिवृतो घोरै राक्षसैर्नृवरात्मजः ।
महादेवः पितृवने गणैः पार्श्वगतैरिव ॥ १० ॥
तेषां मुक्तानि शस्त्राणि राक्षसानां स राघवः ।
स्रोतांसि प्रतिजग्राह नदीनामिव सागरः ॥ ११ ॥
स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे ।
रामः प्रदीप्तैर्बहुभिर्वज्रैरिव महाचलः ॥ १२ ॥
स दिग्धः सर्वतो रामः शोणितेन व्यराजत ।
दिवाकर इवाकाशे संध्याभ्रैर्बहुभिर्वृतः ॥ १३ ॥
निषेदुर्देवगन्धर्वाः सिद्धाश्च सह चारणैः ।
एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतं ॥ १४ ॥
ततो रामो महातेजा मण्डलीकृतकार्मुकः ।
मुमोच निशितान् वाणान् वज्राणीव शतक्रतुः ॥ १५ ॥
दुराधर्षान् दुर्विषहान् कालपाशोपमान् रणे ।
मुमोच बहुधा रामः शरान् कनकभूषणान् ॥ १६ ॥
ते शराः शत्रुसैन्येषु निसृष्टाः कङ्कपत्रिणः ।
आदद्रू रक्षसां प्राणान् शापा इव तपस्विनां ॥ १७ ॥
भित्त्वा राक्षसदेहांस्ते शरा रुधिरदूषिताः ।
अन्तरीक्षगता रेजुर्दीप्ताग्निसमतेजसः ॥ १८ ॥
असंख्येया हि रामस्य सायकाश्चापमण्डलात् ।
विनिष्पेतुर्महावेगा राक्षसानां प्रहारिणः ॥ १९ ॥

Digitized by Google

विनिष्पेतुरसंबद्धाः केचित् तत्र शिलीमुखाः ।
निर्भिद्य राक्षसान् भीमान् न्यविशन्त रसातलं ॥ २० ॥
क्वचिद्बाणनिकृत्तानि शिरांसि द्विषतां रणे ।
स्फुरन्त्याकुञ्चितोष्ठानि गांगतानि सहस्रशः ॥ २१ ॥
रामचापविनिर्मुक्तैः सायकै रुधिराशनैः ।
निकृत्ता राक्षसाः पेतुर्बहवोऽथ सहस्रशः ॥ २२ ॥
तेषां धन्वाग्राणि समं धनूंषि कवचानि च ।
बाहूंश्चैव महाबाहुश्चिच्छेद बहुधा शरैः ॥ २३ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
भीममार्तस्वरं चक्रुश्छिद्यमाना निशाचराः ॥ २४ ॥
केचिद्बाणप्रवेगैस्तु निर्भिन्नकवचा रणे ।
उच्चैर्गगनमाविश्य ततोऽगच्छन् रसातलं ॥ २५ ॥
महाद्रिशिखराकारानञ्जनाचलसंनिभान् ।
खेचरान् पातयामास राक्षसान् धरणीतले ॥ २६ ॥
रामचापविनिर्मुक्ताः सायका राक्षसेश्वरान् ।
भित्वा भित्वाथ वेगेन प्राविशन् धरणीतलं ॥ २७ ॥
तत् सैन्यं निशितैर्बाणैरर्दितं मर्मभेदिभिः
रामेण न सुखं लेभे दह्यमानमिवाग्निना ॥ २८ ॥
ततो निहतभूयिष्ठं शूरराक्षससूदितं ।
तद्बलं राक्षसेन्द्रस्य राघवेण शितैः शरैः ॥ २९ ॥

Digitized by Google

राक्षसा बलसंपन्ना बहवो बहुधा रणे ।
महानिद्रावशं नीता लीलया राघवेण तु ॥ ३० ॥
अवशिष्टाश्च ये केचिद्विषण्णास्ते निशाचराः ।
खरमेवाभ्यवर्तन्त शरार्ताः शरणैषिणः ॥ ३१ ॥
तत् तदा राक्षसं सैन्यं खरदूषणसंश्रितं ।
बभूव पिण्डितं तत्र यथा यूथं विषाणिनां ॥ ३२ ॥
स तु दृष्ट्वा खरः सैन्यं रामसायकपीडितं ।
उवाच शौर्यसंपन्नं दूषणं भीमविक्रमं ॥ ३३ ॥
आश्वास्यतां बलं वीर उद्योगः क्रियतां च वै ।
इमं दाशरथिं रामं नयामि यमसादनं ॥ ३४ ॥
तान् सर्वान् पुनरादाय दूषणो दुरतिक्रमः ।
बहुविस्तरसंयुक्तमाश्वासयत राक्षसान् ॥ ३५ ॥
तेजयित्वा तु तत् सैन्यं समाश्वास्य च दूषणः ।
अभ्यधावत काकुत्स्थं नमुचिर्वासवं यथा ॥ ३६ ॥
राक्षसास्ते पुनः सर्वे दूषणाश्रयनिर्भयाः ।
राममेवाभ्यधावन्त नानाप्रहरणा रणे ॥ ३७ ॥
ते गृहीत्वा शितान् शूलान् प्रासान् खड्गपरश्वधान् ।
चिक्षिपुः परमक्रुद्धा रामाय रजनीचराः ॥ ३८ ॥
तेषां तान्यायुधान्याशु बाणैश्छित्त्वा तु खण्डशः ।
जहार समरे प्राणान् रक्षसां राघवः शरैः ॥ ३९ ॥

Digitized by Google

क्रीडन्निव महाबाहुश्चरन् राक्षसमण्डले ।
चकर्त तरसा वीरो बाहूंश्चैव शिरांसि च ॥ ४० ॥
ततो हलहलाशब्दः पुनः कोलाहलो महान् ।
महान् राक्षसनादस्तु पुनस्तूर्यरवो महान् ॥ ४१ ॥
आयुधानां च निष्पेषो रथानां च महास्वनः ।
सिंहनादश्च दृप्तानां पूरयन् वै नभस्तलं ॥ ४२ ॥
वर्धते दिक्षु सर्वासु प्रविष्टश्च रसातलं ।
ततस्तद्राक्षसं सैन्यं खरदूषणसंश्रयं ॥ ४३ ॥
अभ्यधावत् पुनस्तत्र राघवं रघुनन्दनं ।
तद्बभूवाद्भुतं युद्धं तुमुलं लोमहर्षणं ॥ ४४ ॥
आवर्त्तवन्महाघोरं निशाचरविनाशनं ।
ततो रामो महाबाहुः संधायास्त्रं महाबलं ॥ ४५ ॥
गान्धर्वं नाम विख्यातं मुमोचायतलोचनः ।
ततस्ते राक्षसास्तत्र गान्धर्वास्त्रेण मोहिताः ॥ ४६ ॥
अयं रामस्त्वयं राम इति कालेन चोदिताः ।
अन्योन्यं समरे जघ्नुरुत्पत्य परमायुधैः ॥ ४७ ॥
ते विनिर्भिन्ननयना विनिकृत्तशिरोधराः ।
अपतन् राक्षसास्तत्र निकृत्ता इव पादपाः ॥ ४८ ॥
ततोऽवशेषं तु तथैव राघवः खरावशेषं क्षयदुर्बलं बली ।
जघान रामः स्थिरधर्मपौरुषो रिपोर्बलं दुष्प्रतिवारणैः शरैः ॥ ४९ ॥

Digitized by Google

## XXXII.

रक्षसामवशेषं तु खरदूषणसंश्रयं ।
दुर्बलं बलिनं राममाहवे पुनरुत्थितं ॥ १ ॥
तेषामल्पावशेषाणां सगर्वमुपसर्पतां ।
स्थितः स्थिरमतिर्वीरो गर्वितानामगर्वितः ॥ २ ॥
तेषां शस्त्रमयं वर्षं भीषणं रोमहर्षणं ।
प्रहृष्टः प्रतिजग्राह राघवो निशितैः शरैः ॥ ३ ॥
प्रतिगृह्य तु तद्वर्षं घोरं शत्रुनिसूदनः ।
शारदं स्थूलपृषतं शृङ्गाभ्यां गोवृषो यथा ॥ ४ ॥
ततः क्रोधसमाविष्टः कालान्तकयमोपमः ।
दिव्यं समाददे सोऽस्त्रं बधार्थं सर्वरक्षसां ॥ ५ ॥
उद्यतं तु खरो दृष्ट्वा ह्यस्त्रं राक्षसनाशनं ।
ततो मायामयं दिव्यमस्त्रं चिक्षेप राघवे ॥ ६ ॥
राघवस्तु ततो दृष्ट्वा तदस्त्रं दीप्ततेजसा ।
मायास्त्रेणेव हत्वा तु तदस्त्रं पुनराददे ॥ ७ ॥
हत्वा च राक्षसश्रेष्ठान् खरदूषणसंश्रितान् ।
अवशेषबलं सर्वं निहन्तुमुपचक्रमे ॥ ८ ॥
प्रत्यासन्नास्ततो रामं राक्षसा बलदर्पिताः ।
सावज्ञं प्रत्ययुध्यन्त राघवं शत्रुसूदनं ॥ ९ ॥



Digitized by Google

ततः क्रोधसमाविष्टः प्रदीप्त इव पावकः ।
शरैरवाकिरत् सैन्यं सर्वं सखरदूषणं ॥ १० ॥
ततः सेनापतिः क्रुद्धो दूषणो भीमविक्रमः ।
जग्राह गिरिशृङ्गाभं परिघं घोरदर्शनं ॥ ११ ॥
वेष्टितं काञ्चनैः पट्टैर्बलवानन्तकोपमः ।
आयसैः शङ्कुभिस्तीक्ष्णैः सर्वतः परिवारितं ॥ १२ ॥
वज्राशनिसमस्पर्शं शत्रुदेहविदारणं ।
त्रासनं सर्वभूतानां काञ्चनाङ्गदभूषणं ॥ १३ ॥
तन्महोरगसंकाशं प्रगृह्य परिघं महत् ।
दूषणोऽभ्यद्रवद्रामं वृत्रः शक्रमिवासुरः ॥ १४ ॥
तस्याभिपततः संख्ये दूषणस्य स राघवः ।
शरैरापूरयद्रामः परिघं क्रोधमूर्छितः ॥ १५ ॥
ते शरा राघवोत्सृष्टा आसाद्य परिघं शिताः ।
कुण्ठधाराः क्षितिं जग्मुर्नतशीर्षा इवोरगाः ॥ १६ ॥
ततो दूषणमायान्तं दृष्ट्वा परिघधारिणं ।
बधेप्सुं रोषसंदीप्तं दण्डहस्तमिवान्तकं ॥ १७ ॥
तस्याभिपततः संख्ये दूषणस्य स राघवः ।
द्वाभ्यां शराभ्यां चिच्छेद सशस्त्राभरणौ भुजौ ॥ १८ ॥
भ्रष्टस्तस्य महाघोरः पपात रणमूर्धनि ।
परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः ॥ १९ ॥

Digitized by Google

स भुजाभ्यां निकृत्ताभ्यां पपात भुवि दूषणः ।
विषाणाभ्यां विशीर्णाभ्यां यथा हैमवतो गजः ॥ २० ॥
दृष्ट्वा सपरिघं तत्र दूषणं पतितं भुवि ।
साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ २१ ॥
एतस्मिन्नन्तरे क्रुद्धा विक्रान्ता राक्षसास्त्रयः ।
सहिताभ्यद्रवन् रामं मृत्युपाशवशं गताः ॥ २२ ॥
महाकपालो विपुलं शूलमुद्यम्य राक्षसः ।
स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधं ॥ २३ ॥
दृष्ट्वैव धावमानांस्तान् राक्षसान् राघवः शरैः ।
तीक्ष्णाग्रैः प्रतिजग्राह सत्कारैरतिथीनिव ॥ २४ ॥
महाकपालस्य शिरश्चिच्छेदैकेपुणेव सः ।
बाणैश्च बहुभिस्तीक्ष्णैः प्रममाथ प्रमाथिनं ॥ २५ ॥
स्थूलाक्षस्य च चक्षूंषि पूरयामास मार्गणैः ।
ते निपेतुः परिच्छिन्ना भूमौ रामस्य सायकैः ॥ २६ ॥
ततः पावकसंकाशैः शरैर्हेमविभूषणैः ।
जघान शेषं तेजस्वी रक्षसां सैन्यमाहवे ॥ २७ ॥
ते रुक्मपुङ्खा विशिखाः सधूमा इव खे ग्रहाः ।
निजघ्नुस्तानि रक्षांसि वज्राणीव महाद्रुमान् ॥ २८ ॥
राक्षसानां शतं हत्वा श्रेष्ठानां राघवः पुनः ।
सहस्रं च सहस्रेण शराणां निजघान सः ॥ २९ ॥

Digitized by Google

ते छिन्नवर्मावरणाश्छिन्नभिन्नाः शराहताः ।
निपेतुः शोणितैर्दिग्धाः पृथिव्यां रजनीचराः ॥ ३० ॥
तैर्मुक्तकेशैः पतितैः समरे शोणितोक्षितैः ।
व्यराजद्वसुधाकीर्णा मखवेदी कुशैरिव ॥ ३१ ॥
शून्यं त्वायोधनं सर्वं रामबाणाग्निनाहतं ।
बभूव निरयप्रख्यं मांसशोणितकर्दमं ॥ ३२ ॥
तत्रान्ये शेरते भूमौ शरार्ता गतजीविताः ।
कूजन्त्यन्ये भ्रमन्त्यन्ये मत्ता इव शरार्दिताः ॥ ३३ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणां ।
हतान्येकेन रामेण मानुषेण पदातिना ॥ ३४ ॥
तस्य सर्वस्य सैन्यस्य खरः शेषो महाबलः ।
राक्षसस्त्रिशिराश्चैव हतशेषौ निशाचरौ ॥ ३५ ॥

स दूषणं प्रेक्ष्य रणे निपातितं
निशाचरांश्चाप्रतिमान् रणोत्कटान् ।
रथेन रामं महता खरस्तदा
समभ्यधावन्नमुचिर्यथा हरिं ॥ ३६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे खरसैन्यविध्वंसनं नाम एकत्रिंशः सर्गः — दूषणबधो नाम द्वात्रिंशः सर्गः ॥

Digitized by Google

## XXXIII.

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिं ।
राक्षसस्त्रिशिरा नाम समुत्पत्येदमब्रवीत् ॥ १ ॥
मां नियोजय विक्रान्त संनिवर्तस्व साहसात् ।
पश्य रामं मया वीरं संयुगे विनिपातितं ॥ २ ॥
प्रतिजानामि ते वीर सत्येनायुधमालभे ।
यथा रामं रणे पापं पातयिष्यामि सायकैः ॥ ३ ॥
अहं वास्य रणे मृत्युरेष वा समरे मम ।
विनिवर्त्य रणोत्साहं मुहूर्तं प्राश्निको भव ॥ ४ ॥
प्रहृष्टोऽद्य हते रामे जनस्थाने प्रयास्यसि ।
मयि वा निहते रामं संयुगे पातयिष्यसि ॥ ५ ॥
खरस्त्रिशिरसा त्वेवं मृत्युलोभात् प्रसादितः ।
एवमस्त्विति तद्वाक्यं प्रहृष्टः प्रत्यपद्यत ॥ ६ ॥
ततः प्रहृष्टस्त्रिशिराश्चापमुद्यम्य सस्वनं ।
गच्छ युद्धेऽभ्यनुज्ञातो राघवाभिमुखो ययौ ॥ ७ ॥
एतस्मिन्नन्तरे सैन्यं रक्षसामपरं महत् ।
अभ्येत्य तं त्रिशिरसं हतशेषं न्यवर्तत ॥ ८ ॥
शतधा तत् सुविपुलं महामेघनिभस्वनं ।
व्यनदत् सुभृशं नादं जलक्लिन्नस्य दुन्दुभेः ॥ ९ ॥

Digitized by Google

तानापतत एवाशु संरब्धान् युद्धदुर्मदान् ।
राक्षसान् प्रतिजग्राह रामः सत्यपराक्रमः ॥ १० ॥
स संप्रहारस्तुमुलः कटुकः शोणितोदकः ।
समपद्यत बीभत्सस्तयोः समरमूर्धनि ॥ ११ ॥
बाणवृष्टिभिराकीर्णः सहस्रांशुर्दिवाकरः ।
न प्राकाशत संरुद्धो ववौ च न सदागतिः ॥ १२ ॥
विततं व्योम सर्वत्र शरजालेन भास्वता ।
ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः ॥ १३ ॥
अमर्षात् कुपितो राम इदं वचनमब्रवीत् ।
अहो विक्रम शूरस्य नायकस्य महात्मनः ॥ १४ ॥
रक्षसः सुभृशं युद्धे बलं विक्रमसाधनं ।
महाधनुर्विनिःसृष्टैः संयुगे रोषनिःसृतैः ॥ १५ ॥
पुष्पैरिव शरैर्यस्य ललाटेऽस्मि विभूषितः ।
मया प्रतिगृहीतास्ते शराश्चापगुणाच्युताः ॥ १६ ॥
प्रीतोऽस्मि ते महाबाहो लाघवेन निशाचर ।
न खल्ववज्ञा कर्तव्या रिपावपि सुदुर्बले ॥ १७ ॥
वञ्चितोऽहमवज्ञानात् तिष्ठेदानीं ममाग्रतः ।
इत्युक्त्वा राघवोऽविध्यत् समरे मोक्षयन् बली ॥ १८ ॥
व्याकुलानथ संमूढान् पिण्डितान् वीक्ष्य राघवः ।
जग्राह समरे प्राणांश्छित्त्वा तेषां शिरांसि सः ॥ १९ ॥

Digitized by Google

ते छिन्नशिरसः पेतुश्छिन्नवर्मायुधध्वजाः ।
सुपर्णवातनिक्षिप्ता जगत्यां पादपा इव ॥ २० ॥
हतशेषास्ततः सर्वे राक्षसा भयमोहिताः ।
व्यद्रवन्त दिशस्त्रस्ता व्याघ्रात् क्षुद्रमृगा इव ॥ २१ ॥
तदभूदद्भुतं युद्धं तुमुलं लोमहर्षणं ।
रामस्य च महाबाहोः पुनस्तेषां च रक्षसां ॥ २२ ॥
तस्य सर्वस्य सैन्यस्य पुनः शेषो महाबलः ।
खरश्च त्रिशिराश्चैव रामश्च रिपुसूदनः ॥ २३ ॥
दृष्ट्वा तु निहतं सैन्यं रक्षसां पिशिताशिनां ।
त्रिशिराः परमक्रुद्धः सारथिं प्रत्यचोदयत् ॥ २४ ॥
भर्तुः पिण्डस्य निर्वेशं कर्तुमिच्छामि मा चिरं ।
प्रत्यक्षमस्य वीरस्य खरस्य सुमहात्मनः ॥ २५ ॥
प्रतिजानामि ते सूत सत्येनायुधमालभे ।
यथा रामं हनिष्यामि रामो वा मां हनिष्यति ॥ २६ ॥
एवं संचोदितः सूतश्चोदयामास वाजिनः ।
ततः प्रजविताश्वेन राममभ्यद्रवद्रणे ॥ २७ ॥
आपतन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः ।
प्रतिजग्राह सशरं धनुरुद्यम्य वीर्यवान् ॥ २८ ॥
स संप्रहारस्तुमुलो रामत्रिशिरसोरभूत् ।
बलगर्वितयोर्भीमः सिंहकुञ्जरयोरिव ॥ २९ ॥

Digitized by Google

एष त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनं ।
शरान् प्रतिगृह्णाणेमान् ममापि त्वं धनुश्च्युतान् ॥ ३० ॥
इत्युक्त्वा राघवः क्रुद्धः शरानाशीविषोपमान् ।
निचखान त्रिशिरसो वक्षस्यथ चतुर्दश ॥ ३१ ॥
चतुर्भिश्च चतुर्भिश्च तुरगानस्य मार्गणैः ।
न्यपातयत् स तेजस्वी रथं चिच्छेद सप्तभिः ॥ ३२ ॥
अष्टभिः सायकैश्चान्यैः सूतमस्य न्यपातयत् ।
वाणेनैकेन चिच्छेद ध्वजमस्य समुच्छ्रितं ॥ ३३ ॥
तद्दृष्ट्वा कर्म रामस्य मनसा प्रतिपूजयन् ।
असिमुद्यम्य वेगेन सहसा समभिद्रवत् ॥ ३४ ॥
अवप्लुतं रथात् तस्माद्वेगेन महताथ सः ।
बिभेद रामस्तद्वक्षो हृदये दशभिः शरैः ॥ ३५ ॥
शिरांसि चास्य संक्रुद्धो रामो राजीवलोचनः ।
त्रिभिस्त्रिभिः शरैस्तीक्ष्णैर्न्यकृन्तत् प्रहसन्निव ॥ ३६ ॥
स भूमौ शोणितोद्गारी रामवाणाहतजीवितः ।
न्यपतत् पातितैः पूर्वं शृङ्गैरिव महागिरिः ॥ ३७ ॥
ततो हृतशिरस्तस्य कबन्धं रणमूर्धनि ।
पतितं ह्यचलेन्द्राभमकम्पयत मेदिनीं ॥ ३८ ॥
तं खरः पतितं दृष्ट्वा वीरं त्रिशिरसं रणे ।
रोषसंतप्तहृदयो युद्धशौटीरतां गतः ॥ ३९ ॥

Digitized by Google

हतं त्रिशिरसं दृष्ट्वा दूषणं च निपातितं ।
चतुर्दश सहस्राणि राक्षसानां हतानि च ॥ ४० ॥
ततू खरः समरे दृष्ट्वा रामेण निहतं बलं ।
राघवं सोऽभिदुद्राव राहुश्चन्द्रमसं यथा ॥ ४१ ॥
व्यमृशच्च पुनः किञ्चिन्निहतं प्रेक्ष्य तद्बलं ।
हतमेकेन रामेण तौ च वीरौ निपातितौ ॥ ४२ ॥
चिन्तयंस्तस्य तत् कर्म राघवस्य महात्मनः ।
खरस्याप्यभवत् त्रासो दृष्ट्वा रामस्य विक्रमं ॥ ४३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे त्रिशिरोबधो
नाम त्रयस्त्रिंशः सर्गः ॥



Digitized by Google

## XXXIV.

अथ धैर्यं समाधाय वीरः स रजनीचरः ।
पुनर्व्यवस्थितो युद्धे खरः खरपराक्रमः ॥ १ ॥
चोदयामास तं सूतं राघवाभिमुखं व्रज ।
आससाद ततो रामं यथा वृत्रः पुरंदरं ॥ २ ॥
स विकृष्य महच्चापं नाराचांस्तिग्मतेजसः ।
खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ३ ॥
ज्यां विधुन्वंश्च बहुशो महास्त्राणि च दर्शयन् ।
चचार समरे मार्गान् वाणैरथ गतः खरः ॥ ४ ॥
स सर्वाश्च दिशो वाणैः प्रदिशश्च महारथः ।
पूरयामास बलवान् दशग्रीव इवाहवे ॥ ५ ॥
अथायसैर्दुर्विषहैः सस्फुलिङ्गैरिवाग्निभिः ।
रामश्चकर्त विशिखैः पर्जन्य इव वृष्टिभिः ॥ ६ ॥
तद्बभूव शितैर्वाणैः खररामविसर्जितैः ।
शतह्रदाशिखादीप्तैर्मेघैरिव नभस्तलं ॥ ७ ॥
आगच्छद्भिश्च रामस्य गच्छद्भिश्च खरस्य वै ।
आकाशमभवत् तत्र सर्वशः शरसंकुलं ॥ ८ ॥
शरजालावृतः सूर्यो न च तादृक् प्रकाशते ।
अन्योन्यशरसंपातैः पूर्यमाणे नभस्तले ॥ ९ ॥

Digitized by Google

ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
रुरोध राक्षसं रामस्तोत्त्रैरिव महाद्विपं ॥ १० ॥
तं रथस्थं धनुष्पाणिं राक्षसं समवस्थितं ।
ददृशुः सर्वभूतानि दण्डहस्तमिवान्तकं ॥ ११ ॥
तं सिंहमिव संक्रुद्धं सिंहविक्रान्तगामिनं ।
दृष्ट्वा न विव्यथे रामः सिंहः सिंहमिवापरं ॥ १२ ॥
ततः सूर्यप्रकाशेन रथेन महता खरः ।
आससाद रणे रामं पतङ्ग इव पावकं ॥ १३ ॥
ततो विसृजतो बाणान् रामस्याद्भुतकर्मणः ।
चकर्त बलवद्रक्षः शतशोऽथ सहस्रशः ॥ १४ ॥
ततः परमसंक्रुद्धो राघवः परमेषुणा ।
खरस्य यतमानस्य चकर्त सशरं धनुः ॥ १५ ॥
ततोऽन्यद्धनुरादाय प्रदीप्त इव मन्युना ।
मुमोच निशितान् बाणान् पन्नगानिव तिग्मगान् ॥ १६ ॥
तैः समं व्रणितो रामो निःश्वसन्निव कुञ्जरः ।
नोपलेभे महाबाहुः प्राणधारणमात्मनः ॥ १७ ॥
तस्य बाणपरीतस्य शतधा विवृतं महत् ।
पपात कवचं भूमौ रामस्यादित्यसंनिभं ॥ १८ ॥
रामं विकवचं रक्षः प्रहसन्निव सायकैः ।
विद्ध्वा विद्ध्वानदन्नादान् महामेघ इवोत्थितः ॥ १९ ॥

Digitized by Google

स शरैरर्दितः क्रुद्धः खरेणाग्निशिखोपमैः ।
रराज समरे रामो विधूमाग्निरिव ज्वलन् ॥ २० ॥
तस्य वै यतमानस्य राघवस्य खरस्तदा ।
धनुश्चिच्छेद बाणेन प्रहसन्निव राक्षसः ॥ २१ ॥
ततोऽन्यद्धनुरादाय वैष्णवं तरसा बली ।
अगस्त्यमुनिना दत्तं चक्रे सज्यं स राघवः ॥ २२ ॥
आकर्णात् पूरयित्वा तत् संधाय स शिलीमुखं ।
अभ्यधावत काकुत्स्थः खरं राक्षसमाहवे ॥ २३ ॥
ततः कनकपुङ्खैस्तु शरैः संनतपर्वभिः ।
चिच्छेदानेकधा रामः खरस्य समरे ध्वजं ॥ २४ ॥
दर्शनीयः स बहुधा विकीर्णः काञ्चनोज्ज्वलः ।
जगाम वसुधां क्षिप्रं शक्रस्येव महाध्वजः ॥ २५ ॥
अथैनं दशभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ।
यतमानं महाबाहुः खरं दशरथात्मजः ॥ २६ ॥
ततः परमसंक्रुद्धः खरः सप्तभिराशुगैः ।
विव्याधोरसि धर्मज्ञं राघवं शत्रुतापनं ॥ २७ ॥
स रामो बहुधा बाणैः खरकार्मुकनिःसृतैः ।
क्षतजोक्षितसर्वाङ्गो बभौ दीप्त इवानलः ॥ २८ ॥
ततः शक्रधनुःप्रख्यं विस्फार्य स महद्धनुः ।
मुमोच परमेष्वासः पृषत्कानेकविंशतिं ॥ २९ ॥

Digitized by Google

वक्ष एकेन विव्याध भुजौ द्वाभ्यामरिंदमः ।
चतुर्भिरर्धचन्द्रैश्च जघान चतुरो हयान् ॥ ३० ॥
द्वाभ्यां च सूतं संक्रुद्धस्त्वनयद्यमसादनं ।
चिच्छेद सशरं चास्य धनुः षड्भिर्महाबलः ॥ ३१ ॥
चकर्त युगमापीड्य भल्लेनैकेन राघवः ।
वराहकर्णैस्त्वपरैः पताकाः पञ्च पञ्चभिः ॥ ३२ ॥
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवष्टभ्य तस्थौ भूमौ खरस्तदा ॥ ३३ ॥
ततः कलकलोन्मिश्रो देवदुन्दुभिनिःस्वनः ।
देवतानां विमानेषु ववृधे सखरस्वनः ॥ ३४ ॥
रामस्य विजयं चोचुर्गगने भूतभावनाः ।
अस्तुवन् मुनयश्चैव राक्षसे विरथीकृते ॥ ३५ ॥
तत् कर्म रामस्य महारथस्य
समेतदेवाश्च महर्षयश्च ।
अपूजयन् प्राञ्जलयः प्रहृष्टा
महामृधे देवगणा यथेन्द्रं ॥ ३६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे खरविरथीकरणं
नाम चतुस्त्रिंशः सर्गः ॥

Digitized by Google

XXXV.

खरं तु विरथं रामो गदापाणिमवस्थितं ।
मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १ ॥
गजाश्वरथसंबाधे बले महति तिष्ठति ।
न कार्यं दारुणं कर्म क्रूरं लोकविगर्हितं ॥ २ ॥
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ।
त्रयाणामपि लोकानामीश्वरः खलु निन्द्यते ॥ ३ ॥
कर्म लोकविरुद्धं च कुर्वाणं क्षणदाचर ।
तीक्ष्णं सर्वजनो हन्ति दुष्टसर्पमिवागतं ॥ ४ ॥
लोभात् पापानि कुर्वाणः कामाद्वा यो न बुध्यते ।
भ्रष्टः पश्यति दुःखं स ब्राह्मणः परवानिव ॥ ५ ॥
एवं हि व्यसनं प्राप्य न चिरात् परितप्यते ।
यथा त्वमद्य दुर्बुद्धे मया हतबलानुगः ॥ ६ ॥
वसतो दण्डकारण्ये तापसान् धर्मचारिणः ।
किं नु हत्वा महाभागान् फलं प्राप्स्यसि राक्षस ॥ ७ ॥
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः ।
ऐश्वर्यं प्राप्य तिष्ठन्ति छिन्नमूला इव द्रुमाः ॥ ८ ॥
अवश्यं लभते कर्ता फलं पापस्य कर्मणः ।
युगपर्यागते काले द्रुमः फलमिवार्तवं ॥ ९ ॥

Digitized by Google

न चिरात् प्राप्यते काले पापानां कर्मणां फलं ।
सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥ १० ॥
पापमाचरतां घोरं लोकस्याप्रियमिच्छतां ।
अहमासादितो राजा प्राणान् हन्तुं निशाचर ॥ ११ ॥
अद्य त्वां हि मया मुक्ताः शराः काञ्चनभूषणाः ।
विदार्य निपतिष्यन्ति वल्मीकमिव पन्नगाः ॥ १२ ॥
ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः ।
तानद्य निहतः संख्ये समेत्याधिगमिष्यसि ॥ १३ ॥
अद्य त्वां निहतं बाणैः पश्यन्तु परमर्षयः ।
निरयस्थं विमानस्था ये त्वया हिंसिताः पुरा ॥ १४ ॥
राक्षसैः सह दुष्टात्मन् मुनीन् हिंसितवानसि ।
यत् पुरा दण्डकारण्ये सर्वाः परितपन् दिशः ॥ १५ ॥
कर्मणस्तस्य पापस्य फलं घोरमवाप्नुहि ।
राक्षसेश्वर दुष्टात्मन् स्थिरो भव ममाग्रतः ॥ १६ ॥
प्रयतस्व यथाशक्ति कुरु यत्नं निशाचर ।
अद्य ते प्रमथिष्यामि शिरो बाणेन राक्षस ॥ १७ ॥
एवमुक्तस्तु रामेण खरः संरक्तलोचनः ।
प्रत्युवाच ततो रामं प्रहसन् क्रोधमूर्छितः ॥ १८ ॥
प्राकृतान् राक्षसान् हत्वा युद्धे दशरथात्मज ।
आत्मना कथमात्मानमप्रशंस्यं प्रशंससि ॥ १९ ॥

Digitized by Google

विक्रान्ता बलवन्तोऽपि ये भवन्ति नरर्षभाः ।
न ते स्वगुणमाहात्म्यं कथयन्ति स्वयं युधि ॥ २० ॥
प्राकृता ह्यकृतात्मानो लोकेऽस्मिन् कुलपांसनाः ।
निरर्थकं विकत्थन्ते यथा राम विकत्थसे ॥ २१ ॥
कुलं व्यपदिशन् श्लाघ्यं समरे कोऽभिधास्यति ।
मृत्युकालेऽपि संप्राप्ते स्वयमात्मस्तवे कथां ॥ २२ ॥
सर्वथा तु लघुत्वं ते कत्थनेन विदर्शितं ।
सर्वं पौरुषमेतत् ते नाशयाम्यहमद्य वै ॥ २३ ॥
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरं ।
धराधरमिवाक्षोभ्यमेकशृङ्गं महाबलं ॥ २४ ॥
पर्याप्तोऽहं गदापाणिर्हर्तुं प्राणान् रणे तव ।
त्रयाणामपि वा संख्ये लोकानामन्तको यथा ॥ २५ ॥
कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहं ।
अस्तं गच्छेद्धि सविता युद्धविघ्नं ततो भवेत् ॥ २६ ॥
अग्रतस्त्वां स्थितं दृष्ट्वा वक्तव्ये नास्ति मे स्पृहा ।
रणे यस्य च रुष्यामि मुहूर्तं स न जीवति ॥ २७ ॥
मम कृत्वाप्रियं राम दुर्लभं तव जीवितं ।
तोयवर्षमिवावर्षे स्तोककस्य पिपासतः ॥ २८ ॥
यानि त्वया राक्षसानां सहस्राणि चतुर्दश ।
हतानि तेषां हत्वा त्वां करिष्येऽश्रुप्रमार्जनं ॥ २९ ॥

Digitized by Google

अद्य ते गदया राम शिरो मौलिविभूषितं ।
पातयामि क्षितौ वेगाद्वृष्टिः पांशूत्करानिव ॥ ३० ॥
ततो रुधिरनिस्यन्दैस्त्वच्छरीरप्रवर्तितैः ।
करिष्याम्युदकं तेषां हतानामिह रक्षसां ॥ ३१ ॥
इत्युक्तो राक्षसेन्द्रेण नरेन्द्रः प्रहसन् रणे ।
सुविस्मिततरं वाक्यं बभाषे रघुनन्दनः ॥ ३२ ॥
रणे तु विजयं प्राप्य शोभते तव भाषितं ।
परोक्षं निहतास्त्वेते राक्षसास्तव राक्षस ॥ ३३ ॥
देवदत्तवरा ह्येते देवदत्तवरायुधाः ।
पश्यतस्ते हताः क्रुद्धा राक्षसा भीमविक्रमाः ॥ ३४ ॥
किं वृथा कत्थसे नीच ब्रह्मघ्न राक्षसाधम ।
यत् ते वीर्यं च शक्तिश्च किं विलम्बेन तत् कुरु ॥ ३५ ॥
अद्य ते सशिरस्त्राणं शिरो ज्वलितकुण्डलं ।
पातयाम्यर्धचन्द्रेण प्रज्वलन्तमिव ग्रहं ॥ ३६ ॥
राघवेणैवमुक्तस्तु प्रज्वलन्निव राक्षसः ।
क्रोधसंरक्तनयनः प्रत्युवाच पुनः खरः ॥ ३७ ॥
विदितो मे भवान् रामो विदितो मम लक्ष्मणः ।
राजा दशरथश्चैव विदितोऽहं तथा तव ॥ ३८ ॥
मया खलु विसृष्टाया गदाया वेगमुत्तमं ।
अद्य धारय शक्तिस्ते यद्यस्ति पुरुषाधम ॥ ३९ ॥



Digitized by Google

इत्युक्ता परमक्रुद्धस्तां गदां कनकाङ्गदां ।
खरश्चिक्षेप रामाय प्रदीप्तामशनीमिव ॥ ४० ॥
सा खरस्य महाघोरा प्रदीप्ता महती गदा ।
प्रज्वलन्ती महोल्केव राघवाभिमुखं ययौ ॥ ४१ ॥
भस्म गुल्मांश्च वृक्षांश्च सा चकार समीपगान् ।
सा हि दिव्या गदा तस्य महता तपसार्जिता ॥ ४२ ॥
प्रयत्नेन पुरा दत्ता कुवेरेण महात्मना ।
आपतन्तीं च तां दृष्ट्वा कालदण्डोपमां गदां ॥ ४३ ॥
चिन्तयामास राजेन्द्रः स व्याकुलितचेतनः ।
नैषा वेगाद्गदा शक्या प्रसभं प्राकृतैः शरैः ॥ ४४ ॥
अवार्यवेगा वारयितुं दिव्येयं राक्षसी गदा ।
इदमस्या विघातार्थमाग्नेयं दिव्यमुत्तमं ॥ ४५ ॥
प्रेषयामि महावेगमस्त्रमस्या विनाशने ।
ततस्तस्या बधं प्रेप्सुर्गदाया राघवस्तदा ॥ ४६ ॥
आग्नेयमस्त्रमादाय शरमाशीविषोपमं ।
मुमोच राघवः श्रीमानस्त्रं तत् पावकप्रभं ॥ ४७ ॥
तेनाग्निसमकल्पेन आग्नेयेन महागदा ।
आपतन्त्यम्बरे रुद्धा भ्रामिता च पुनः पुनः ॥ ४८ ॥
तामापतन्तीं ज्वलितां मृत्युपाशोपमां मृधे ।
तेनास्त्रेण महातेजा गदां चिच्छेद राघवः ॥ ४९ ॥

Digitized by Google

तामागच्छदतिक्रम्य तदस्त्रं गगने गदां ।
ततो हुताशनो घोरः प्रादुरासीत् समन्ततः ॥५०॥
ततो ज्वालासहस्रैस्तु अन्तरीक्षं समाचितं ।
गदा च निहता घोरा विशीर्णा न्यपतद्भुवि ॥५१॥
प्रज्ञाक्षये चन्द्रमसो विनाशो विमलात्मनः ।
रौद्रीं तारां समासाद्य ज्वलितेनेव केतुना ॥५२॥
दग्धा सा पतिता भूमौ विशीर्णाङ्गदभूषणा ।
हुताशनप्रदीप्तेव राक्षसी विच्युता गदा ॥५३॥
तां भस्मभूतां कौवेरीं दिव्येनास्त्रेण नाशितां ।
दृष्ट्वा दाशरथिस्तुष्टो मेने चात्मवशं खरं ॥५४॥
राक्षसोऽपि हतां मायामवेक्ष्य महतीं गदां ।
हतमेवाभ्यगच्छत् स आत्मानं रणमूर्धनि ॥५५॥
ततः परमतेजस्वी राघवः परवीरहा ।
खरं परुषया वाचा वाक्यं बहुतरं ब्रवीत् ॥५६॥
यत् त्वया श्लाघया वाक्यमुक्तं मद्वधकाङ्क्षया ।
रुधिरं ते प्रपास्यामि राक्षसाधम तन्मृषा ॥५७॥
एषा ते बाणनिर्दग्धा भस्मीभूता मया गदा ।
विशीर्णा पतिता भूमौ बाणेनैकेन पीडिता ॥५८॥
अभिधानप्रगल्भस्य तव प्रत्ययघातिनी ।
एतत् ते बलसर्वस्वं दर्शितं राक्षसाधम ॥५९॥

Digitized by Google

नीचस्य क्षुद्रशीलस्य असत्यपरिभाषिणः ।
न ते जीवितमिच्छामि यतस्त्वान्यतमं रणं ॥ ६० ॥
नीचस्य दुष्टवृत्तस्य सद्वृत्तपरितापिनः ।
प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ६१ ॥
अद्य ते कण्ठनिर्गीर्णं फेनबुद्बुदभूषितं ।
विदारितस्य मद्बाणैर्मही पास्यति शोणितं ॥ ६२ ॥
पांशुरूषितसर्वाङ्गस्त्वं संन्यस्तभुजद्वयः ।
स्वप्स्यसि क्ष्मां समालिङ्ग्य प्रमदां वल्लभामिव ॥ ६३ ॥
श्रुत्वा त्वामद्य निहतं मुनयः पिशिताशन ।
प्रवृद्धनिद्राशयिते त्वय्यद्य मुनिकण्टके ॥ ६४ ॥
भविष्यन्त्यशरण्यानां शरण्या इव दण्डकाः ।
जनस्थाने हतस्थाने त्वयि राक्षस मत्सरे ॥ ६५ ॥
निर्भया विचरिष्यन्ति सर्वतो मुनयो वनं ।
अद्य शोकरसज्ञास्ता भविष्यन्ति निशाचर ॥ ६६ ॥
अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः ।
अद्य शोकमहं घोरमृषीणां भयसंभवं ॥ ६७ ॥
त्वन्मूलमपनेष्यामि शश्वद्ब्राह्मणकण्टक ।
नृशंसशील क्षुद्रात्मन् न मे जीवन् विमोक्ष्यसे ॥ ६८ ॥
यत्कृते शङ्कितैर्हव्यं मुनिभिर्हूयतेऽनले ।
इमे तेऽद्य हता दिष्ट्या मया तापसकण्टकाः ॥ ६९ ॥

Digitized by Google

अधर्मस्य फलं सद्यः प्राप्तं तैरिह संयुगे ।
आत्मन् ब्रह्मविद्विष्ट त्यक्तधर्म सुपापकृत् ॥ ७० ॥
त्वं चाद्य कर्मणां पाप फलं पापमवाप्स्यसि ।
तमेवं प्रतिसंक्रुद्धं ब्रुवाणं राघवं रणे ॥ ७१ ॥
वाचा निर्भर्त्सयामास कुपितः खरया खरः ।
दृढं खल्ववलिप्तोऽसि भये सति सुनिर्भयः ॥ ७२ ॥
वाच्यावाच्यं यथा हि त्वं मृत्युवश्यो न बुध्यसे ।
कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये ॥ ७३ ॥
कार्याकार्यं न जानन्ति ते व्यतीतार्थचिन्तकाः ।
यच्च मां मन्यसे राम निरस्त्रमिति बालिश ॥ ७४ ॥
नन्विदं काननं सर्वं स्यान्ममायुधसंज्ञितं ।
सवृक्षोपलसंघातं सव्यालमृगसंकुलं ॥ ७५ ॥
शैलमुत्पाद्य वेगेन त्वद्वधाय सृजाम्यहं ।
एवमुक्त्वा सुसंक्रुद्धः संहृत्य भ्रूकुटीं ततः ॥ ७६ ॥
रणे प्रहरणस्यार्थे समन्तादवलोकयन् ।
स ददर्श महासालमविदूरे निशाचरः ॥ ७७ ॥
तमुत्पाट्य ततो दोर्भ्यां संदष्टौष्ठपुटस्तदा ।
अभिद्रुत्य स वेगेन विनद्य च महाबलः ॥ ७८ ॥
राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ।
तमापतन्तं बाणौघैश्छित्त्वा रामः प्रतापवान् ॥ ७९ ॥

Digitized by Google

रोषमाहारयत् तीव्रं निहन्तुं समरे खरं ।
यं यं वृक्षं स ग्रादत्ते तं तं रिपुनिसूदनः ॥ ८० ॥
चिच्छेद तिलशो रामः शरैः संनतपर्वभिः ।
ग्रगस्त्येन हि यच्चापं दत्तं वैष्णवमद्भुतं ॥ ८१ ॥
क्षिप्त्वा क्षिप्त्वा शरांस्तेन शिला वृक्षांश्च राघवः ।
क्रोडन्निव महाबाहुश्चिच्छेद तिलशः शरैः ॥ ८२ ॥
जातस्वेदस्ततो रोषाद्रामो रक्तान्तलोचनः ।
निर्बिभेद सहस्रेण शराणां समरे खरं ॥ ८३ ॥
तस्य वाणान्तरेभ्यस्तु बहु सुस्राव शोणितं ।
गिरेः प्रस्रवण इव तोयधाराः सहस्रशः ॥ ८४ ॥
विह्वलः स कृतो वाणैः खरो रामेण संयुगे ।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतं ॥ ८५ ॥
तमापतन्तं वेगेन दीप्तास्यं रुधिरप्लुतं ।
ग्रपसृत्य ततः स्थानाद्दृष्ट्वा त्वरितविक्रमः ॥ ८६ ॥
दीप्तपावकसंकाशं प्रज्वलन्तमिवोरगं ।
निशितं पञ्चपर्वाणं पञ्चपत्रमजिह्मगं ॥ ८७ ॥
स्वयं दत्तं मघवता सहस्राक्षेण वज्रिणा ।
रक्षणार्थममित्रघ्नं पुरा रामस्य धीमतः ॥ ८८ ॥
तमिन्द्राशनिसंकाशं संधाय स ततः शरं ।
चिक्षेप समरे रामो बधार्थं तस्य रक्षसः ॥ ८९ ॥

Digitized by Google

स विमुक्तो महाबाणो निर्घातसमनिःस्वनः ।
रामेण धनुरानम्य निपपात खरोरसि ॥ १० ॥
सुपर्णानिलवेगेन तेनाभिपतता खरः ।
महमर्मास्थिसंघातो भिन्नः क्रौञ्च इवाचलः ॥ ११ ॥
पपात वज्रसंकाशः प्रज्वलन्निव सायकः ।
शक्रेणेव विनिर्मुक्तो वज्रस्तरुवरोपरि ॥ १२ ॥
स पपात खरो भूमौ दह्यमानः शराग्निना ।
रुद्रेणेव विनिर्दग्धः श्वेतारण्ये पुरान्धकः ॥ १३ ॥
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा ।
राघवास्त्रेण निहतो निपपात खरस्तदा ॥ १४ ॥
ततः कलकलोन्मिश्रो देवदुन्दुभिनिस्वनः ।
साधु साध्विति शब्दश्च अन्तरीक्षेऽभ्यवर्तत ॥ १५ ॥
राममूर्ध्न्यपतद्दिव्या पुष्पवृष्टी रणाजिरे ।
हत एव दुरात्मेति शुश्रुवे दिक्षु निःस्वनः ॥ १६ ॥
ततो राजर्षयः सर्वे संगताश्च महर्षयः ।
देवर्षयश्च सहिता दृष्ट्वा ब्रह्मर्षिभिः सह ॥ १७ ॥
अवतीर्य महीं सर्वे प्रज्वलन्तो यथाग्नयः ।
सभाजयित्वा मुदिता रामं वचनमब्रुवन् ॥ १८ ॥
धर्मज्ञ वर्धसे दिष्ट्या क्षत्रधर्मेण राघव ।
दिष्ट्या देवर्षयः सर्वे स्वस्तिकर्मसु तत्पराः ॥ १९ ॥

Digitized by Google

दिष्ट्या हतोऽयं पापात्मा त्वया ब्राह्मणकण्टकः ।
त्वत्प्रसादादरण्येषु विचरिष्यन्ति तापसाः ॥ १०० ॥
दिष्ट्यासि सहितस्तात लक्ष्मणेन महात्मना ।
सीतया चानया राम तापसैश्च महात्मभिः ॥ १०१ ॥
इत्यर्थं हि महाराज महेन्द्रः पाकशासनः ।
शरभङ्गाश्रमं पुण्यमाजगाम पुरंदरः ॥ १०२ ॥
आनीतस्त्वमिमं देशमुपायेन महर्षिभिः ।
एषां बधार्थं क्रूराणां रक्षसां क्रूरकर्मणां ॥ १०३ ॥
तदिदं नस्त्वया कार्यं कृतं दशरथात्मज ।
सुखं धर्मं चरिष्यन्ति मुनयो दण्डके वने ॥ १०४ ॥
एते देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
जयाशीर्भिः स्तुवन्ति त्वां विष्ठिताः पश्य राघव ॥ १०५ ॥
इदं दृष्ट्वा सुयुद्धं ते ब्रह्मा ब्रह्मविदां वरः ।
देवैः परिवृतः सर्वैर्विष्ठितस्त्वां सभाजयन् ॥ १०६ ॥
प्रीतश्चैव महादेवः सर्वैः पारिषदैर्वृतः ।
जयेन त्वां विमानस्थः सभाजयति राघव ॥ १०७ ॥
एवमुक्तः स धर्मात्मा मुनिभिर्धर्मवत्सलैः ।
नमश्चक्रे विमानस्थान् दृष्ट्वाद्दूरे दिवौकसः ॥ १०८ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ।
गिरिदुर्गाद्विनिःसृत्य पुनरायात् स्वमाश्रमं ॥ १०९ ॥

Digitized by Google

राघवोऽपि खरं हत्वा पूज्यमानो महर्षिभिः ।
प्रविवेशाश्रमपदं लक्ष्मणेनाभिवादितः ॥११०॥
दृष्ट्वा विजयिनं रामं महर्षीणां सुखावहं ।
सीता परमसंहृष्टा परिष्वज्येदमब्रवीत् ॥१११॥
दिष्ट्यार्यपुत्र सत्या ते प्रतिज्ञा सफलीकृता ।
मुनीनां सततं शत्रुं हत्वा तं राक्षसं खरं ॥११२॥
सुखं धर्मं चरिष्यन्ति मुनयो हतकण्टकाः ।
त्वद्बाहुबलमाश्रित्य वनेऽस्मिन् नियतेन्द्रियाः ॥११३॥

ततः समाश्वास्य महाधनुर्धरः
समाहितोऽभ्यर्च्य मुनीन् समागतान् ।
महारणे शत्रुबलावमर्दनो
दिवीव शक्रः स रराज राघवः ॥११४॥
ततः स रामो मुदितः सलक्ष्मणः
प्राश्वास्य सीतां मृगचारुलोचनां ।
उवास तस्मिन् मुदितस्तदाश्रमे
सभाज्यमानो मुनिभिः समागतैः ॥११५॥

इत्यार्षे रामायणे आरण्यककाण्डे खरबधो नाम
पञ्चत्रिंशः सर्गः ॥



Digitized by Google

## XXXVI.

तानि शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश ।
हतान्येकेन रामेण मानुषेण पदातिना ॥ १ ॥
खरं त्रिशिरसं चैव दूषणं च निपातितं ।
सा दृष्ट्वा कर्म रामेण कृतमन्यैः सुदुष्करं ॥ २ ॥
आजगाम समुद्विग्ना लङ्कां रावणपालितां ।
सा ददर्श विमानाग्रे रावणं लोकरावणं ॥ ३ ॥
सहोपविष्टं सचिवैर्मरुद्भिरिव वासवं ।
आसीनं सूर्यसंकाशे काञ्चने परमासने ॥ ४ ॥
रुक्मवेदीगतं देवं ज्वलन्तमिव पावकं ।
दशास्यं विंशतिभुजं दर्शनीयपरिच्छदं ॥ ५ ॥
ताम्राक्षं विपुलोरस्कं राजलक्षणलक्षितं ।
स्निग्धजीमूतसदृशं तप्तकाञ्चनभूषणं ॥ ६ ॥
सुभुजं श्वेतदशनं महास्यं पर्वतोपमं ।
देवदानवयक्षाणामृषीणां च महात्मनां ॥ ७ ॥
अजेयं समरे शूरं व्यात्ताननमिवान्तकं ।
देवासुरविमर्देषु वज्राशनिकृतव्रणं ॥ ८ ॥
ऐरावतविषाणाग्रैर्बहुशः कृतलक्षणं ।
विष्णुचक्रनिपातैश्च बहुशो देवसंयुगे ॥ ९ ॥

Digitized by Google

विक्षताङ्गं समग्रैश्च देवप्रहरणै रणे ।
अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणं ॥ १० ॥
भेत्तारं पर्वताग्राणां शूराणां च महाबलं ।
उच्छेत्तारं च धर्माणां परदाराभिमर्दनं ॥ ११ ॥
दैत्यानां दानवानां च राक्षसानां च संयुगे ।
हन्तारमथ चास्त्राणां प्रयोक्तारं महारथं ॥ १२ ॥
येन भोगवतीं गत्वा पराजित्य च वासुकिं ।
तक्षकस्य प्रिया भार्या विक्रमेण हृता पुरा ॥ १३ ॥
येन वैश्रवणो राजा रणे विक्रम्य निर्जितः ।
कैलासं पर्वतश्रेष्ठमध्यासीनो महाबलः ॥ १४ ॥
विमानं पुष्पकं तस्य कामगं च जहार यः ।
प्रसादद्रुमचित्राङ्गं नानाखगमृगाकुलं ॥ १५ ॥
वनं चैत्ररथं दिव्यं नलिनीनन्दनं वनं ।
यो विनाशितवान् क्रोधाद्देवोद्यानानि वीर्यवान् ॥ १६ ॥
सूर्याचन्द्रमसौ देवावुत्तिष्ठन्तौ परंतपः ।
निवारयति बाहुभ्यां यः शैलशिखरोपमः ॥ १७ ॥
दशवर्षसहस्राणि तपस्तप्तं महावने ।
ऊर्ध्वपादेन गोकर्णे येन पावकसंचये ॥ १८ ॥
ब्रह्मणा योऽभ्यनुज्ञातो निमेषान्तरचारिणा ।
कामरूपधरत्वं च प्रतिपेदे महारथः ॥ १९ ॥

Digitized by Google

बालेन्दुनिभदंष्ट्राणि भास्कराभानि वीर्यवान् ।
स्वयम्भुवे यस्तरसा शिरांस्युपजहार ह ॥ २० ॥
मन्त्रैरभिष्टुतं पूर्वमध्वरेषु द्विजातिभिः ।
हविर्दानेषु यः सोमं धर्षयामास नैकशः ॥ २१ ॥
उपर्युपरि यस्यैति संगृहीतांशुरंशुमान् ।
पुर्यां राक्षसराजस्य भीतभीतो दिवाकरः ॥ २२ ॥
पुण्ययज्ञहनं क्रूरं ब्रह्मघ्नं दुष्टचारिणं ।
कर्कशं निरनुक्रोशं प्रजानामहिते रतं ॥ २३ ॥
देवदानवयक्षाणां पिशाचोरगरक्षसां ।
अभयं यस्य संग्रामे मृत्युतो मानुषादृते ॥ २४ ॥
रावणं सर्वलोकानां सर्वसत्त्वभयंकरं ।
राक्षसं भ्रातरं दृष्ट्वा क्रुद्धा समुपसृत्य च ॥ २५ ॥

तमब्रवीद्दीप्तविशाललोचना
विषण्णरूपा भयमोहमूर्छिता ।
सुदारुणं वाक्यमदीनभाषिणी
महाबलं शूर्पणखा विद्रुपिता ॥ २६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणवर्णना नाम
षट्त्रिंशः सर्गः ॥

Digitized by Google

## XXXVII.

ततः शूर्पणखा दीना रावणं लोकरावणं ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १ ॥
प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ।
समुत्पन्नं भयं घोरं बोद्धव्यं नानुबुध्यसे ॥ २ ॥
सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिं ।
लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥
स्वयं कार्याणि यः काले नानुतिष्ठति भूमिपः ।
तस्यात्मा सह राज्येन सह कार्यैर्विनश्यति ॥ ४ ॥
भ्रष्टाचारमधर्मज्ञमस्वाधीनं नराधिपं ।
वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ५ ॥
ये न रक्षन्ति विषयं पराधीना नराधिपाः ।
ते मग्ना न प्रकाशन्ते गिरयः सागरे यथा ॥ ६ ॥
विगृह्यमाणा गन्धर्वैरात्मवद्भिश्च दानवैः ।
अयुक्तचारा राजानो भविष्यन्ति कथं नु ते ॥ ७ ॥
येषां कामश्च क्रोधश्च नयश्च नयतां वर ।
अस्वाधीना नरेन्द्राणां प्राकृतैस्ते नरैः समाः ॥ ८ ॥
यस्मात् पश्यन्ति दूरस्थाः सर्वानर्थान् नराधिपाः ।
चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः ॥ ९ ॥

Digitized by Google

अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतं ।
जनस्थानं हतस्थानं यो मौर्ख्यान्नावबुध्यसे ॥ १० ॥
खरं विनिहतं संख्ये दूषणं च निपातितं ।
न बुध्यसे जनस्थाने शयानौ शरपीडितौ ॥ ११ ॥
चतुर्दश सहस्राणि रक्षसां दीप्ततेजसां ।
हतान्येकेन रामेण मानुषेण पदातिना ॥ १२ ॥
ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः ।
धर्षितं च जनस्थानं रामेणाक्लिष्टकर्मणा ॥ १३ ॥
त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च रावण ।
विषये स्वे समुत्पन्नं भयं घोरं न बुध्यसे ॥ १४ ॥
तीक्ष्णं क्रूरमदातारं प्रमत्तं मददर्पितं ।
व्यसने नानुकम्पन्ते सर्वभूतानि भूमिपं ॥ १५ ॥
अभिमानिनमुद्भ्रान्तमात्मसंभावितं शठं ।
क्रोधनं चैव नृपतिं व्यसने घ्नन्ति वैरिणः ॥ १६ ॥
नानुतिष्ठसि कार्याणि भयेषु न विभेषि च ।
क्षिप्रं राज्यच्युतो दीनस्तृणतुल्यो भविष्यसि ॥ १७ ॥
शुष्कैः काष्ठैर्भवेत् कार्यमपिवा पांशुलोष्टकैः ।
न तु राज्यपरिभ्रष्टैः किञ्चित् कार्यं नराधिपैः ॥ १८ ॥
उपभुक्तं यथा वासः स्रजो विमृदिता यथा ।
तथा राज्यपरिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १९ ॥

Digitized by Google

अप्रमत्तस्तु यो राजा सर्वज्ञो विजितेन्द्रियः ।
कृतज्ञो धर्मशीलश्च स राज्ये तिष्ठति चिरं ॥ २० ॥
नयनैर्यः प्रसुप्तोऽपि जागर्त्ति नयचक्षुषा ।
त्यक्तक्रोधोऽप्रमादश्च शस्यत स मह्लीपतिः ॥ २१ ॥
त्वं तु रावण दुर्बुद्धिर्गुणैरेतैर्विवर्जितः ।
यस्य तेऽयं न विदितो रक्षसां बध ईदृशः ॥ २२ ॥
परावमन्ता विषयेषुसङ्गवान्
न देशकालप्रविभागकोविदः ।
अयुक्तबुद्धिर्गुणदोषदर्शने
कथं नु राजा भवितासि रक्षसां ॥ २३ ॥
इति स्वदोषान् परिकीर्त्तितांस्तया
विमृश्य बुद्ध्या क्षणदाचरेश्वरः ।
धनेन दर्पेण बलेन चान्वितः
प्रचिन्तयामास चिरं स रावणः ॥ २४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणोद्दीपनं नाम
सप्तत्रिंशः सर्गः ॥

Digitized by Google

## XXXVIII.

ततः शूर्पणखां क्रुद्धां ब्रुवतीं परुषं वचः ।
अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः ॥ १ ॥
कश्च रामः कुतो रामः किंवीर्यः किंपराक्रमः ।
किमर्थं दण्डकारण्यं प्रविष्टश्च सुदुर्गमं ॥ २ ॥
आयुधं किं च रामस्य निहता येन राक्षसाः ।
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ॥ ३ ॥
इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्छिता ।
ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४ ॥
दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः ।
कन्दर्पसमरूपश्च रामो दशरथात्मजः ॥ ५ ॥
शक्रचापनिभं चापं विकृष्य कनकाङ्गदं ।
दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान् ॥ ६ ॥
नाददानं शरान् घोरान् न मुञ्चन्तं महाबलं ।
कार्मुकं वा विकर्षन्तं रामं पश्यामि संयुगे ॥ ७ ॥
हतमेव तु तत् सैन्यं पश्यामि शरवृष्टिभिः ।
राघवेणोत्तमं शस्यमिन्द्रेणेवाश्मवृष्टिभिः ॥ ८ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणां ।
निहतानि शरैस्तीक्ष्णैस्तेनैकेन धनुष्मता ॥ ९ ॥

Digitized by Google

खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।
ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः ॥ १० ॥
कथञ्चिदेका मुक्ताहं कारुण्यात् स्त्रीति च प्रभो ।
रामेण तत् कृतं कर्म मामेवं परिभूय च ॥ ११ ॥
भ्राता चास्य महातेजा गुणवांस्तुल्यलक्षणः ।
अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १२ ॥
अमर्षी दुर्जयो जेता विक्रान्तो बलवान् सुखी ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १३ ॥
रामस्य तु विशालाक्षी धर्मपत्नी यशस्विनी ।
सीता नाम वरारोहा वेदिप्रतिममध्यमा ॥ १४ ॥
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
तथारूपा मया नारी दृष्टपूर्वा महीतले ॥ १५ ॥
यस्य भार्या भवेत् सीता यं च हृष्टा परिष्वजेत् ।
अपि जीवेत् स लोकेषु देवेष्विव पुरंदरः ॥ १६ ॥
एवं सीता महाराज रूपेणाप्रतिमा भुवि ।
तवानुरूपा भार्या सा त्वं च तस्याः पतिस्तथा ॥ १७ ॥
सा हि विस्तीर्णजघना पद्मरक्तान्तलोचना ।
दृश्यमाना प्रयत्नेन ममापि हरते मनः ॥ १८ ॥
त्वया दृष्टा च वैदेही पूर्णचन्द्रनिभानना ।
मन्मथस्य शराणां च विधेयत्वं गमिष्यसि ॥ १९ ॥

तस्यास्त्वप्रतिरूपाया वचनं मधुराक्षरं ।
अकामोऽपि बलात् कामं दर्शनादेव कामयेत् ॥ २० ॥
यदि तस्यामभिप्रायो भार्यार्थे तव जायते ।
शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः ॥ २१ ॥
वैरं प्रतिकुरुष्वेह तस्मिन् राक्षसपुङ्गव ।
यत् ते भ्रातृबधाज्जातं रामे वैरं सलक्ष्मणे ॥ २२ ॥
कुरु प्रतिक्रियां तेषां रक्षसां राक्षसेश्वर ।
बधात् तस्य नृशंसस्य रामस्याश्रमवासिनः ॥ २३ ॥
तं शरैर्निशितैर्हत्वा लक्ष्मणं च महारथं ।
हृतनाथां सुखं सीतां यथावदुपभोक्ष्यसे ॥ २४ ॥
यदि ते रोचते वाक्यं ममेदं राक्षसेश्वर ।
क्रियतां निर्विशङ्केन नेदृशं प्राप्स्यसे प्रियं ॥ २५ ॥

विधत्स्व रामस्य बधं दुरात्मनः
सलक्ष्मणस्याहवदुर्मदस्य ।
समाहितं चार्थपरायणं रणे
समीक्ष्य सम्यक् क्रियतां मनोरथः ॥ २६ ॥
तथा हि तद्राक्षसवंशनाशनं
तया प्रयुक्तं वचनं स रावणः ।
मुदा च संहृष्य नरेन्द्रतापनम्
चकार बुद्धिं स्वकुलस्य नाशनीं ॥ २७ ॥

Digitized by Google

## XXXIX.

ततः शूर्पणखावाक्यं श्रुत्वा तल्लोमहर्षणं ।
सचिवानभ्यनुज्ञाय कार्यं बुद्ध्या जगाम सः ॥ १ ॥
विमृश्य च ततः कार्यं यथावदुपलभ्य च ।
दोषाणां च गुणानां च संप्रधार्य बलाबलं ॥ २ ॥
इति कर्तव्यमिति च कृत्वा निश्चयमात्मनः ।
स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥ ३ ॥
यानशालां ततो गत्वा प्रच्छन्नं राक्षसेश्वरः ।
सूतं संचोदयामास रथो मे युज्यतामिति ॥ ४ ॥
एवमुक्तः क्षणे तस्मिन् सारथिर्लघुविक्रमः ।
रथं संयोजयामास तस्याभिरुचिरं शुभं ॥ ५ ॥
सर्वोपकरणैर्युक्तं पताकाभिरलंकृतं ।
स तं काञ्चनमास्थाय कामगं हेमभूषितं ॥ ६ ॥
पिशाचवदनैर्युक्तं खरैः कनकभूषणैः ।
राक्षसाधिपतिः श्रीमान् ययौ नदनदीपतिं ॥ ७ ॥
स श्वेतबालव्यजनः श्वेतच्छत्त्रो दशाननः ।
शतक्रतुरिवादित्यो दिव्यकाञ्चनभूषणः ॥ ८ ॥
काञ्चनं रथमास्थाय शुशुभे राक्षसाधिपः ।
विद्युन्मण्डलवान् मेघः सबलाक इवाम्बरे ॥ ९ ॥

Digitized by Google

स्निग्धवैदूर्यसंकाशस्तप्तकाञ्चनभूषणः ।
घर्मान्ते मारुतोद्भूतः सविद्युदिव तोयदः ॥ १० ॥
स शैलसागरानूपं वीर्यवानवलोकयन् ।
रमणीयं ततोऽपश्यद्गङ्गान्तं चैव सागरं ॥ ११ ॥
सत्त्वैर्बहुविधैर्व्याप्तं क्वचिच्चित्रं क्वचित् समं ।
केतकद्रुमसंघातैर्नारिकेलोपशोभितैः ॥ १२ ॥
सालैस्तालैश्च हिन्तालैरर्जुनैः प्रियकैर्वरैः ।
अन्यैश्च वृक्षैर्बहुभिः समाकीर्णं सहस्रशः ॥ १३ ॥
विशालैश्चाश्रमपदैः शोभितं च महर्षिभिः ।
शीतनिर्मलतोयाभिर्नदीभिश्च समाकुलं ॥ १४ ॥
नागैः सुपर्णगन्धर्वैः किन्नरैश्च सहस्रशः ।
जितकामैश्च सिद्धैश्च कृतपुण्यैर्विशोभितं ॥ १५ ॥
पाण्डराणि विचित्राणि दिव्यमाल्ययुतानि च ।
क्रीडागृहाण्यप्सरोभिर्भूषितान्यवलोकयन् ॥ १६ ॥
क्रीडारतिविधिज्ञाभिरप्सरोभिः समन्ततः ।
दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतं ॥ १७ ॥
उत्तरांश्च कुरून् पश्यन् पश्यंश्चैव नगोत्तमान् ।
देवदानवसंघैश्च सेवितं ह्यमृतार्थिभिः ॥ १८ ॥
हंससारससंघैश्च समन्तादनुनादितं ।
तूर्यगीतविघुष्टानि विमानानि समन्ततः ॥ १९ ॥

Digitized by Google

तपसार्जितलोकानामितश्चेतश्च धावतां ।
गन्धर्वाप्सरसां चैव ददर्श धनदानुजः ॥ २० ॥
वैदूर्यशङ्खमुक्तानां प्रबालानां च संचयान् ।
अन्येषां चैव रत्नानां कृतान् रत्नोपजीविभिः ॥ २१ ॥
वनानि च सुरम्याणि कक्कोलानां त्वचस्य च ।
अगुरूणां तमालस्य गुल्मांश्च मरिचस्य च ॥ २२ ॥
काञ्चनान् पर्वतांश्चैव राजतांश्च सहस्रशः ।
ह्रदान् निर्मलतोयांश्च शैलप्रस्रवणानि च ॥ २३ ॥
धनधान्योपपन्नानि स्त्रीरत्नैरावृतानि च ।
हस्त्यश्वरथपूर्णानि नगराण्यवलोकयन् ॥ २४ ॥
स पश्यन्नथ संप्राप्त आश्रमं पुण्यकर्मणः ।
सिन्धुराजस्य तु मुनेर्जटामण्डलधारिणः ॥ २५ ॥
तमतिक्रम्य वेगेन रावणो गगने चरः ।
तदनन्तरमेवासौ पश्यति स्म महाद्रुमं ॥ २६ ॥
नीलजीमूतसंकाशं न्यग्रोधमृषिभिर्वृतं ।
समन्ताद्यस्य ताः शाखा विवृद्धाः शतयोजनं ॥ २७ ॥
यस्य हस्तिनमादाय महाकायं च कच्छपं ।
भक्षार्थी गरुडः शाखामाजगाम महाबलः ॥ २८ ॥
यस्य तां महतीं शाखां भारेण पतगोत्तमः ।
सुपर्णः पर्णबहुलां बभञ्ज तरसा बली ॥ २९ ॥

Digitized by Google

यत्र वैखानसाः सिद्धा बालिखिल्या मरीचिपाः ।
लम्बमानास्तपोग्लानाः शाखायां परमर्षयः ॥ ३० ॥
बभूवुर्बहुसाहस्रा यत्र ते च महर्षयः ।
अजाश्च वाजिमेषाश्च संगता ह्यूर्ध्वरेतसः ॥ ३१ ॥
येषां दयार्थं गरुडस्तां शाखां शतयोजनां ।
जगामादाय वेगेन तौ चोभौ गजकच्छपौ ॥ ३२ ॥
यो निषादेषु धर्मात्मा भक्षयित्वा तदामिषं ।
निषादविषयं कृत्स्नं शाखया निजघान ह ॥ ३३ ॥
निषादविषयं हत्वा शाखया पतगोत्तमः ।
प्रहर्षमतुलं लेभे महर्षींश्च विमुच्य तान् ॥ ३४ ॥
तेनैव तु स हर्षेण द्विगुणाद्भुतविक्रमः ।
अमृतानयनार्थं च चकार मतिमान् मतिं ॥ ३५ ॥
अयोजालं च तं छित्वा गृहं छित्वा च काञ्चनं ।
महेन्द्रभवनाद्दुप्तमाजहार ततोऽमृतं ॥ ३६ ॥
प्रकाश्यापि स्वकं तेजस्तानृषीन् विप्रमुच्य च ।
कृतकृत्यमिवात्मानं स मेने पक्षिणां वरः ॥ ३७ ॥
तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणं ।
नाम्ना सुचन्द्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३८ ॥
स गत्वा तु परं पारं समुद्रस्य नदीपतेः ।
ददर्शाश्रममेकान्ते पुण्ये रम्ये वनान्तरे ॥ ३९ ॥

Digitized by Google

तत्र कृष्णाजिनधरं जटामण्डलधारिणं ।
ददर्श नियताहारं मारीचं नाम राक्षसं ॥४०॥
स रावणः समागम्य विधिवत् तेन पूजितः ।
पश्चादिदं ततो वाक्यमब्रवीद्वाक्यकोविदः ॥४१॥

अचलबलमतिप्रकाशधैर्यो
ह्यचलबलाश्रयमाश्रयो बलानां ।
अचलबलसमः कथान्तरे तं
वचनमिदं स जगाद देवशत्रुः ॥४२॥

इत्यार्षे रामायणे आरण्यककाण्डे शूर्पणखावाक्यं नाम
अष्टात्रिंशः सर्गः — मारीचाश्रमप्रवेशो
नाम नवत्रिंशः सर्गः ॥

Digitized by Google

## XL.

मारीच श्रूयतां तावद्वचनं मम जल्पतः ।
आर्तोऽस्मि मम चार्तस्य भवानद्य परा गतिः ॥ १ ॥
नैर्ऋतानां सहस्रेषु संगतेषु बहुष्वपि ।
न तवास्ति रणे वीर सहायः सदृशः क्वचित् ॥ २ ॥
मत्तद्विपसहस्रस्य यद्बलं बलशालिनः ।
संक्रुद्धस्य हि मारीच तद्बलं त्वयि तिष्ठति ॥ ३ ॥
बलं तेऽतिबलं तात येनाहं परितोषितः ।
संयुगे शत्रुसैन्यस्थो यदा क्रोधं नियच्छसि ॥ ४ ॥
त्वं हि योग्यः सहायत्वे त्वं हि योग्यः पराक्रमे ।
त्वद्विधं न च पश्यामि लङ्कायां बलशालिनं ॥ ५ ॥
न च प्रणयभङ्गो मे कर्तव्यो भवता विह ।
अर्थी त्वां प्रार्थयाम्यद्य कुरुष्व वचनं मम ॥ ६ ॥
जानीषे त्वं जनस्थानं भ्राता यत्र खरो मम ।
दूषणश्च महावीर्यः स्वसा शूर्पणखा च मे ॥ ७ ॥
त्रिशिराश्च महातेजा राक्षसः पिशिताशनः ।
अन्ये च बहवः शूरा लब्धलक्ष्या निशाचराः ॥ ८ ॥
वसन्ति मन्नियोगेन कृतवासाश्च राक्षसाः ।
बाधमाना महारण्ये मुनीन् धर्मपरायणान् ॥ ९ ॥

Digitized by Google

चतुर्दशसहस्राणि रक्षसां भीमकर्मणां ।
बहुशो लब्धलक्ष्याणां खरस्य वशवर्तिनां ॥ १० ॥
ते त्विदानीं जनस्थाने निवसन्तो महाबलाः ।
संगताः परमायस्ता रामेण किल संयुगे ॥ ११ ॥
तेन संजातरोषेण रामेण रणमूर्धनि ।
अनुक्त्वा परुषं किंचिच्छरैराशीविषोपमैः ॥ १२ ॥
ततस्तानि सहस्राणि राक्षसानां चतुर्दश ।
निहतानि जनस्थाने मानुषेण पदातिना ॥ १३ ॥
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।
ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः ॥ १४ ॥
दुर्भगातनयो यो ऽसौ सुभगावाक्यकारिणा ।
पित्रा निरस्तः क्रुद्धेन सभार्यः सहलक्ष्मणः ॥ १५ ॥
स हत्वा तस्य सैन्यस्य रामः क्षत्रियपांसनः ।
अशीलः कर्कशो मूर्खो लुब्धस्तीक्ष्णो ऽजितेन्द्रियः ॥ १६ ॥
त्यक्तधर्मस्त्वधर्मज्ञो भूतानामहिते रतः ।
तपस्वी चीरधारी च सभार्यः स धनुर्धरः ॥ १७ ॥
येन वैरं विनारण्ये सत्त्वमाश्रित्य केवलं ।
कर्णनासापहारेण भगिनी मे विरूपिता ॥ १८ ॥
तस्य भार्या विशालाक्षी नाम्ना सीतेति विश्रुता ।
रूपयौवनसंपन्ना श्रीरपद्मेव शोभना ॥ १९ ॥



Digitized by Google

अद्य गत्वा जनस्थाने तामहं लोकसुन्दरीं ।
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ॥ २० ॥
त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ।
सेन्द्रानपि सुरान् युद्धे समस्तान् न विचिन्तये ॥ २१ ॥
तत् सहायो भव त्वं मे समर्थोऽसि हि राक्षस ।
वीर्ये शौर्ये च बुद्धौ च नैवास्ति सदृशस्तव ॥ २२ ॥
एतदर्थमहं प्राप्तस्त्वत्सकाशमरिंदम ।
एतन्मम प्रियं तात मारीच कुरु नान्यथा ॥ २३ ॥
तपोवनस्थं नियतं जानामि त्वां महाबलं ।
अर्थगौरवमप्येतत् ततस्त्वां प्रब्रवीम्यहं ॥ २४ ॥
यच्चापि भवता कार्यं तत्र यातेन मे प्रियं ।
तच्छृणु त्वं महाबाहो महावीर्य वचो मम ॥ २५ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतविन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ २६ ॥
त्वां हि निःसंशयं दृष्ट्वा निष्क्रम्य मृगरूपिणं ।
गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ २७ ॥
रामे सलक्ष्मणे याते सीतां शून्ये यथासुखं ।
निरालम्बां हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २८ ॥
अपयानेऽपि च भवान् समर्थो लघुविक्रमः ।
कार्यस्य गौरवे चापि विक्रमेण भवान् बली ॥ २९ ॥

Digitized by Google

जनस्थाने कृता ये च राक्षसा भीमविक्रमाः ।
खरो दूषणस्त्रिशिरास्तेषां चैको न ते समः ॥ ३० ॥
त्वन्मार्गमन्विते तस्मिन् राघवे सहलक्ष्मणे ।
हृतायां चापि वैदेह्यां कृते शूर्पणखाप्रिये ॥ ३१ ॥
कृतोऽसि सुखं रामे भार्याहरणदुःखिते ।
विस्रब्धं विहरिष्यामि कृतार्थेनान्तरात्मना ॥ ३२ ॥
एतत् प्रियं मे कुरु याच्यमानो
न मे सहायोऽस्ति भवद्विशिष्टः ।
कार्यं च कालं च समीक्ष्य बुद्ध्या
सर्वानुपायान् विदधासि नित्यं ॥ ३३ ॥
स रामवीर्यज्ञतया विचेतनो
महाहवे रावणवाक्यचोदितः ।
कृताञ्जलिश्चेदमुवाच रावणं
हितं च युक्तं परमार्थतो वचः ॥ ३४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणवाक्यं नाम
चत्वारिंशः सर्गः ॥

Digitized by Google

XLI.

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १ ॥
नूनं न बुध्यसे रामं यथावीर्यं यथाबलं ।
अयुक्तचारश्चपलो महेन्द्रवरुणोपमं ॥ २ ॥
रामेण चेद्राक्षसेन्द्र वर्धते तव विग्रहः ।
सर्वं राक्षसलोकं हि तिष्ठन्तं विद्धि संशये ॥ ३ ॥
अपि स्वस्ति भवेत् तात सर्वेषां भुवि रक्षसां ।
अपि रामो न संक्रुद्धः कुर्याल्लोकमराक्षसं ॥ ४ ॥
अल्पवीर्यो महावीर्यमुत्कृष्टबलपौरुषं ।
रामं त्वं समरे मोहादासादयितुमिच्छसि ॥ ५ ॥
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ।
अपि सीतानिमित्तं ते न भवेद्व्यसनं महत् ॥ ६ ॥
अपि ते स्वस्ति वंशाय अपि स्वस्ति सुताय ते ।
अपि त्वां विपुला लक्ष्मीर्न जह्याद्धनदानुज ॥ ७ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तमनङ्कुशं ।
न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥ ८ ॥
दुःशीलस्त्वद्विधः पापः कामवृत्तोऽजितेन्द्रियः ।
आत्मानं स्वजनं राजा हन्ति राष्ट्रं च दुर्मतिः ॥ ९ ॥

Digitized by Google

ये च पूर्वं त्वया प्रोक्ता दोषा रामस्य धीमतः।
दुःश्रुतं तव तद्रक्षः स महात्मा महायशाः ॥१०॥
न स पित्रा परित्यक्तो नामर्यादः कथञ्चन।
प्रजा न विमनास्तस्य न तस्य विमुखा द्विजाः ॥११॥
निर्मर्यादः स नो वीरो न हीनो राजलक्षणैः।
न पापो न च दुःशीलो न च क्षत्रियपांसनः ॥१२॥
न रामः कर्कशस्तात नाविद्वान् नाजितेन्द्रियः।
अनृतं दुःश्रुतं त्वेतद्वचनं तव राक्षस ॥१३॥
न स धर्मगुणैर्हीनः कौशल्यानन्दिवर्धनः।
न च तीक्ष्णो न भूतानां सर्वेषामहिते रतः ॥१४॥
एते दोषा न रामस्य अनृतं तव भाषितं।
दुःश्रुतं च त्वया वीर रामो हि गुणवत्तरः ॥१५॥
वञ्चितं पितरं ज्ञात्वा कैकेय्या सत्यवादिनं।
करिष्यामीति धर्मात्मा ततः प्रव्रजितो वनं ॥१६॥
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च।
हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकं वनं ॥१७॥
धर्मी विग्रहवान् रामः साधुः सत्यप्रतिश्रुतः।
मधुरः शीलसंपन्नो मध्यस्थो न च गर्वितः ॥१८॥
गुणैरुपचितः सर्वैः सर्वदोषविवर्जितः।
राजा सर्वस्य लोकस्य देवानामिव वासवः ॥१९॥

Digitized by Google

कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
हर्तुमिच्छसि दुर्बुद्धे प्रभामिव विभावसोः ॥ २० ॥
भार्यां रामस्य सदृशीं हृत्वा दशरथस्नुषां ।
न शक्यं रक्षितुं प्राणान् यस्यापि त्रिदशागतिः ॥ २१ ॥
शरार्चिषमनाधृष्यं घोरचापेन्धनं रणे ।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ २२ ॥
कार्मुकव्यात्तदीप्तास्यं शरजिह्वास्त्रकेशरं ।
रामसिंहं वने तात न धर्षयितुमर्हसि ॥ २३ ॥
प्रज्ञाधातुं शीलशृङ्गं द्रूपपुष्पितकाननं ।
रामशैलमशीलस्त्वं न कम्पयितुमर्हसि ॥ २४ ॥
बुद्धिवेलापरिक्षिप्तं धनुर्विस्फारितस्वनं ।
रामसागरमक्षोभ्यं न दोर्भ्यां तर्तुमर्हसि ॥ २५ ॥
खड्गदण्डं धनुष्पाशं शरौघजठरं प्रभुं ।
रामकालमकालेन न कालयितुमर्हसि ॥ २६ ॥
राज्यं सुखं च भोगांश्च जीवितं च यदीच्छसि ।
नैवासादयितव्यो हि त्वया रामः प्रतापवान् ॥ २७ ॥
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
प्राणेभ्योऽपि प्रियतमा भार्या नित्यमनुव्रता ॥ २८ ॥
न त्वं समर्थस्तां हर्तुं रामबाहुबलाश्रयां ।
दीप्तस्येव हुताशस्य शिखां सीतां सुमध्यमां ॥ २९ ॥

Digitized by Google

किमुद्यमं व्यर्थमिमं कुर्यास्त्वं राक्षसेश्वर ।
दृष्टो चावां रणे तेन तदन्तं जीवितं च नौ ॥ ३० ॥
जीवितं चैव राज्यं च सुखं चैव सुदुर्लभं ।
राघवेण विरुद्धस्य सर्वं संशयितं तव ॥ ३१ ॥
गम्यतां स्वपुरीं त्यक्त्वा रोषं मध्यस्थतां व्रज ।
गुरुलाघवसंयुक्तं मन्त्रिभिः सह मन्त्रय ॥ ३२ ॥
तिष्ठन्तु मन्त्रिणः सर्वे राक्षसेन्द्रं विभीषणं ।
सर्वकार्येषु पृच्छ त्वं स ते श्रेयोऽभिधास्यति ॥ ३३ ॥
महातपोधनां सिद्धां सर्वदोषवहिष्कृतां ।
त्रिजटां पृच्छ राजेन्द्र सा ते श्रेयोऽभिधास्यति ॥ ३४ ॥
दूषणस्य कृते यत् ते हृदन्तं कोपधारणं ।
खरस्य च कृते यच्च रक्षस्त्रिशिरसस्तथा ॥ ३५ ॥
कृते शूर्पणखायाश्च तथान्येषां च रक्षसां ।
न ते तद्धृदये कार्यं राक्षसेन्द्र प्रसीद मे ॥ ३६ ॥
दोषाणां च गुणानां च संप्रधार्य बलाबलं ।
आत्मनश्च बलं ज्ञात्वा रामस्य च पराक्रमं ॥ ३७ ॥
समस्तैर्मन्त्रिभिः सार्धं मन्त्रयित्वा च रावण ।
आयतौ हितमालोक्य ततस्त्वं कर्तुमर्हसि ॥ ३८ ॥
अहं तु मन्ये तव न क्षमं रणे समागमं कोशलराजसूनुना ।
इदं च भूयः शृणु वाक्यमुत्तमं हितं च युक्तं च निशाचराधिप । ३९ ।

Digitized by Google

## XLII.

एवमुक्त्वा तु मारीचो रावणं राक्षसाधिपं ।
पुनरेव महाप्राज्ञ इदं वचनमब्रवीत् ॥ १ ॥
विदितं मम ते जन्म विदितं मम ते बलं ।
विदितं मम तेजस्ते विदितो मम विक्रमः ॥ २ ॥
पुराहं मेघसंकाशस्तप्तकाञ्चनकुण्डलः ।
व्यचरं दण्डकारण्ये मांसशोणितभोजनः ॥ ३ ॥
बलं नागसहस्रस्य धारयन् पर्वतोपमः ।
भयं लोकस्य जनयन् किरीटी परिघायुधः ॥ ४ ॥
भीषणै राक्षसैर्घोरैः पुरुषादैः समावृतः ।
न्यवसं दण्डकारण्ये ऋषिमांसानि भक्षयन् ॥ ५ ॥
अथ काले तु संप्राप्ते संप्राप्तोऽहं तमाश्रमं ।
यस्मिन् वसति धर्मात्मा विश्वामित्रो महामुनिः ॥ ६ ॥
ततः सपरीवारोऽहमज्ञानादाश्रमं गतः ।
दृष्टश्च तापसैस्तत्र उद्विग्नाश्च तपोधनाः ॥ ७ ॥
यदा चाप्रयतास्ते वै यदोच्छिष्टा भवन्ति च ।
होमव्यासक्तहृदया यदा ते राक्षसाधिप ॥ ८ ॥
राक्षसेन्द्र तदा तेषां करोमि कदनं महत् ।
अप्रमत्ता यदा राजन् शुचयो मुनिपुङ्गवाः ॥ ९ ॥

Digitized by Google

प्रदीप्तं दहनं क्रुद्धा दहेयुरिति मे मतिः ।
मन्यमानाः प्राणिबधमृषयः पावकोपमाः ॥ १० ॥
न ते क्रोधं विमुञ्चन्ति तपसस्तस्य नाशनं ।
विश्वामित्रोऽथ धर्मात्मा जितक्रोधो महामुनिः ॥ ११ ॥
अभिगम्य दशरथं नरेन्द्रमिदमब्रवीत् ।
अयं मां त्रायतां रामः पर्वकाले समाहितः ॥ १२ ॥
मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर ।
तस्माद्रक्षितुमिच्छामि पर्वकाल उपस्थिते ॥ १३ ॥
मम चैतत् समारब्धं पर्व राजवरोत्तम ।
संप्राप्तः सपरीवारो मारीचो राक्षसश्च सः ॥ १४ ॥
एतदर्थमहं प्राप्तो भयार्तस्तव संनिधिं ।
इच्छामि चाभयं दत्तं परित्राणं च रक्षसः ॥ १५ ॥
एवमुक्तः स धर्मात्मा राजा दशरथस्तदा ।
प्रत्युवाच महातेजा विश्वामित्रं महामुनिं ॥ १६ ॥
न भेतव्यं महाब्रह्मन् रक्षसो घोरविक्रमात् ।
ततो ददौ नृपस्तस्मै विश्वामित्राय धीमते ॥ १७ ॥
बलाध्यक्षसमायुक्तां वाहिनीं चतुरङ्गिणीं ।
तां दत्तां नृपसिंहेन नाभ्यरोचयत द्विजः ॥ १८ ॥
ततो दशरथो राजा शक्रतुल्यपराक्रमः ।
विस्तीर्णं बलमादाय प्रयातुमुपचक्रमे ॥ १९ ॥



Digitized by Google

विश्वामित्रोऽथ धर्मात्मा राजसिंहं महाद्युतिं ।
सान्त्वयित्वा महेन्द्राभमिदं वचनमब्रवीत् ॥ २० ॥
कृतं मम नरव्याघ्र सह सैन्येन पार्थिव ।
किं च क्लेशेन भवतो राममेकं विसर्जय ॥ २१ ॥
एवमुक्तस्तु मुनिना राजा दशरथस्तदा ।
प्रत्युवाच महाप्राज्ञं तं मुनिं स पुनस्तदा ॥ २२ ॥
ऊनषोडशवर्षोऽयमकृतास्त्रश्च राघवः ।
कथं शक्ष्यति तद्रक्ष एकः प्रतिसमासितुं ॥ २३ ॥
अयमव्यक्तनिर्माणो बालो बालमृगेक्षणः ।
न शक्तो राक्षसेन्द्रस्य प्रसीद भगवन्निति ॥ २४ ॥
एवमुक्तोऽथ नृपतिं स मुनिः पुनरब्रवीत् ।
रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः ॥ २५ ॥
बालोऽप्येष महाबाहुः पर्याप्तस्तस्य निग्रहे ।
यास्यामि राममादाय स्वस्ति तेऽस्तु नराधिप ॥ २६ ॥
मया च गुप्तं कः शक्तो रामं वीर्यात् प्रबाधितुं ।
ततः स हर्षमादाय राजा राघवमब्रवीत् ॥ २७ ॥
गमिष्यसि सहानेन वनं किल महर्षिणा ।
पितुः स वचनं श्रुत्वा बाढमित्यब्रवीद्वचः ॥ २८ ॥
रामात् तु वचनं श्रुत्वा विश्वामित्रं मुनिं तदा ।
विचार्य मनसा राजा गम्यतामित्यभाषत ॥ २९ ॥

Digitized by Google

एवमुक्तस्तु स मुनिस्तमादाय नृपात्मजं।
जगाम परमप्रीतो विश्वामित्रो दृढव्रतः ॥ ३० ॥
स तदा दण्डकारण्ये विश्वामित्राश्रमे बली।
उपयातेषु विप्रेषु पर्वकाले ह्युपस्थिते ॥ ३१ ॥
विश्वामित्रेण मुनिना दत्तशस्त्रो नृपात्मजः।
बभूवावस्थितो रामश्चिरं विस्फारयन् धनुः ॥ ३२ ॥
अजातव्यञ्जनः श्रीमान् बालः श्यामः शुभेक्षणः।
काकपक्षधरो धन्वी राजत्कुण्डलमालया ॥ ३३ ॥
शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा।
अदृश्यत तदा रामो बालचन्द्र इवोदितः ॥ ३४ ॥
कामरूपित्वमादाय महाद्रिशिखरोपमः।
उपस्थितोऽम्बरस्यान्ते संध्याभ्र इव शारदः ॥ ३५ ॥
बली दत्तवरो दर्पादागतोऽस्मि तदाश्रमं।
तेन दृष्टः प्रविष्टश्च सहसाहं तमाश्रमं ॥ ३६ ॥
मां च दृष्ट्वा धनुः सज्यमसंभ्रान्तश्चकार ह।
राक्षसा ये च पार्श्वस्था मम तत्र महाबलाः ॥ ३७ ॥
बालं दृष्ट्वा धनुष्पाणिं चक्रुरास्फालनं तु ते।
अवज्ञाय च तं मोहाद्बालोऽयमिति राघवं ॥ ३८ ॥
विश्वामित्रं परामर्ष्टुमभ्यधावंस्त्वरान्विताः।
तेन मुक्त्वा महाबाणं वज्राशनिसमस्वनं ॥ ३९ ॥

Digitized by Google

हृदये ताडितस्तत्र हतश्चास्मि नभस्तलात् ।
ततो बाणसहस्राणि मुमोचायतलोचनः ॥ ४० ॥
भ्रामयन् दारयंश्चैव देहं मम सहस्रशः ।
पक्षिवद्भ्रामयित्वा च गगने मां निराकृतं ॥ ४१ ॥
वेगेन पातयामास परे पारे महोदधेः ।
भूयश्च शरवर्षेण निरस्तोऽहं विचेतनः ॥ ४२ ॥
अवाप्य संज्ञां कृच्छ्रेण लङ्कां प्रतिगतः पुरीं ।
राक्षसा ये च पार्श्वस्था मम तत्र महाबलाः ॥ ४३ ॥
ते तु रामेण तत्रैव क्षणेन विनिपातिताः ।
एवमस्मि तदा मुक्तः कथञ्चित् तेन संयुगे ॥ ४४ ॥
अकृतास्त्रेण बालेन नीतो हीतां दशां पुरा ।
किं पुनः स कृतास्त्रोऽद्य रामः सत्यपराक्रमः ॥ ४५ ॥
तन्मया वार्यमाणस्त्वं यदि रामेण विग्रहं ।
करिष्यस्यापदं घोरां क्षिप्रं प्राप्स्यसि दुस्तरां ॥ ४६ ॥
क्रीडारतिविधिज्ञानां समाजोत्सवशालिनां ।
राक्षसानां च संतापमनर्थं चोपलप्स्यसे ॥ ४७ ॥
हर्म्यप्रासादसंबाधां नानापण्यविभूषितां ।
द्रक्ष्यसि त्वं पुरीं लङ्कामाकुलां मैथिलीकृते ॥ ४८ ॥
दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान् ।
राक्षसान् निहतान् भूमौ रामेण द्रक्ष्यसे रणे ॥ ४९ ॥

Digitized by Google

अकुर्वन्तो हि पापानि शुचयः पापसंश्रयात् ।
परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥५०॥
राक्षसानां महाशोकं द्विषतां च प्रियं प्रभो ।
आत्मनश्चापि संदेहं मा कृथास्त्वं कुलस्य च ॥५१॥
हृतदारान् सदारांश्च दश विद्रवतो दिशः ।
हृतशेषानशरणान् द्रक्ष्यसि त्वं निशाचरान् ॥५२॥
शरजालपरिक्षिप्तामग्निज्वालासमावृतां ।
प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं न संशयः ॥५३॥
प्रमदानां सहस्राणि तव राजन् परिग्रहः ।
सीताहेतोः समग्राणि विद्रविष्यन्ति रावण ॥५४॥
आत्मनस्त्वं महाराज पुरस्यान्तःपुरस्य च ।
राक्षसानां च नाशाय वैदेहीमानयिष्यसि ॥५५॥
मानं वृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ।
दारांश्च त्यक्ष्यसि क्षिप्रं रणे रामेण संगतः ॥५६॥
मया सुरगणाः सर्वे निर्जिता बहुशस्त्विति ।
यस्ते गर्वो महाराज तं ते रामो हरिष्यति ॥५७॥
सुखं वृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ।
यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियं ॥५८॥
निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि हर्तुमिच्छसि ।
गमिष्यसि क्षीणतनुस्त्वमाहवे यमक्षयं रामशरात्तजीवितः ॥५९॥

Digitized by Google

XLIII.

एवमुक्त्वा तदा तत्र रावणं राक्षसाधिपं ।
हितं तथ्यं च पथ्यं च मारीचः पुनरब्रवीत् ॥ १ ॥
विदितं ते महाराज यथा मे देवसंयुगे ।
शक्रवज्रनिपातैस्तु शरीरं विक्षतं भृशं ॥ २ ॥
विष्णुचक्रावलीढाङ्गः शरवृष्टिपरिक्षतः ।
दैत्यदानवसंघानां नानाप्रहरणैश्चितः ॥ ३ ॥
तथाहं वरदानस्य दर्पोत्सेकेन दर्पितः ।
पदातिना मनुष्येण रामेणैकेन रावण ॥ ४ ॥
अकृतास्त्रेण बालेन काकपक्षधरेण च ।
शरेण हृदये विद्धो बाणैः क्षिप्तोऽस्मि सागरे ॥ ५ ॥
एवमस्मि तदा मुक्तः कथञ्चित् तेन संयुगे ।
इदानीमपि यद्वृत्तं तन्मे शृणु दशानन ॥ ६ ॥
राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथा कृतः ।
सहितो मृगरूपेण प्रविष्टो दण्डकं वनं ॥ ७ ॥
दीप्तजिह्वो महाकायस्तीक्ष्णशृङ्गो महाबलः ।
व्यचरं दण्डकारण्ये ऋषिमांसानि भक्षयन् ॥ ८ ॥
अग्निहोत्रेषु वेदीषु चैत्यवृक्षेषु रावण ।
अत्यन्तनियताहारांस्तापसांस्तानभक्षयं ॥ ९ ॥

Digitized by Google

रुधिराणि पिबंस्तेषां भूमौ च विनिपातितान्।
निहन्मि दण्डकारण्ये मुनीन् धर्मपरायणान् ॥ १० ॥
गतभी राक्षसश्रेष्ठ मुनीनां धर्मदूषकः।
चरन् रुधिरमत्तोऽहं विश्वस्तो दण्डकं वनं ॥ ११ ॥
तथाहं दण्डकारण्ये विचरंश्च सदूषणः।
आससाद वने रामं तापसं धर्मचारिणं ॥ १२ ॥
वैदेहीं च महाभागां लक्ष्मणं च महाबलं।
तापसं नियताहारं चीरकृष्णाजिनाम्बरं ॥ १३ ॥
सोऽहं वनगतं रामं परिभूयामितौजसं।
तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ॥ १४ ॥
ततो मोहाच्च रोषाच्च वर्धमानेन तेजसा।
अवोचं राक्षसौ तौ च भक्ष्योऽयं नो महानिति ॥ १५ ॥
राक्षसाभ्यां वृतस्ताभ्यां ततो हन्तुं महाबलं।
लुब्धो मानुषमांसेन क्रव्यादगणमोदनः ॥ १६ ॥
अभ्यधावमतिक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः।
जिघांसुरग्रतस्तस्य संप्रहारमनुस्मरन् ॥ १७ ॥
आपतन्तं च मां दृष्ट्वा नीलवर्णं च भीषणं।
अपावृतमुखाभ्यां च राक्षसाभ्यां समन्वितं ॥ १८ ॥
तेन लीलायमानेन अविभ्रान्तमविस्मितं।
विकृष्य सुमहच्चापं राघवेण महात्मना ॥ १९ ॥

Digitized by Google

मुक्तास्तत्र त्रयो बाणाः शिताः शत्रुभयंकराः ।
संनताः पञ्चपर्वाणः सुपर्णानिलरंहसः ॥ २० ॥
तैर्बाणैर्दण्डकारण्यं मुक्तैराशीविषोपमैः ।
कृतं वितिमिरं सर्वं रामेणाक्लिष्टकर्मणा ॥ २१ ॥
ते बाणा वज्रसंकाशाः सुघोरा रक्तभोजनाः ।
आजग्मुर्निशिताः सर्वे त्रयाणां सुसमाहिताः ॥ २२ ॥
पराक्रमज्ञो रामस्य तथा दृष्टभयः पुरा ।
आपतन्तं शरं दृष्ट्वा मेघगम्भीरनिस्वनं ॥ २३ ॥
ततोऽहं वेगवांस्तत्र वातरंहा निमेषतः ।
अपक्रान्तः परं पारं निवृत्तः सागराच्छरः ॥ २४ ॥
यौ तौ मया सह गतौ राक्षसौ दण्डकं वनं ।
निहतौ तौ शराभ्यां तु पतितौ शोणितोक्षितौ ॥ २५ ॥
शरेण मुक्तो रामस्य कथञ्चित् प्राप्य जीवितं ।
भयेन महता ह्रन्नो लङ्कां प्राप्य समाश्वसं ॥ २६ ॥
विश्वामित्राश्रमे यश्च प्रहारो हृदि पातितः ।
राघवेण महाबाहो रुजा अद्यापि तस्य मे ॥ २७ ॥
जीवितान्तकरां प्राप्य मानुषाद्धर्षणां तथा ।
कृच्छ्राच्च परमात् तात निर्वेदो मेऽभवत् तदा ॥ २८ ॥
ततो लङ्कां गृहं दारान् राक्षसान् स्वजनं तथा ।
कामभोगांश्च विपुलान् परित्यज्य सुदुर्लभान् ॥ २९ ॥

Digitized by Google

जवेनागम्य राजेन्द्र प्राप्येदं सुमहद्वनं ।
अहं प्रव्रजितस्तस्मान्निर्वेदादस्मि रावण ॥ ३० ॥
कथं तस्य प्रभावज्ञः शरसंस्पर्शकोविदः ।
समीपमुपगच्छेयं दृष्टपूर्वबलस्य वै ॥ ३१ ॥
अपि रामसहस्राणि भीतः पश्यामि रावण ।
राममूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ ३२ ॥
वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरं ।
शरचापधरं रामं पाशहस्तमिवान्तकं ॥ ३३ ॥
राममेवानुपश्यामि रहितेष्वाकुलेषु च ।
दृष्ट्वा स्वप्नगतो राममुद्भ्रमामि विचेतनः ॥ ३४ ॥
रकारादीनि वाक्यानि रामाद्भीतस्य रावण ।
रत्नानि च रमण्यश्च त्रासं संजनयन्ति मे ॥ ३५ ॥
अहं तस्य प्रभावज्ञो युद्धं तेन न ते क्षमं ।
न ते रामकथा कार्या यदि मे श्रोतुमिच्छसि ॥ ३६ ॥
धर्मार्थौ धर्मकामौ च कामार्थावपि केवलौ ।
नित्यमेते प्रदृश्यन्ते संनिपातश्च दृश्यते ॥ ३७ ॥
इच्छया जायते काम ईहयार्थो विवर्धते ।
श्रद्धया वर्धते धर्मस्तेषां फलमिदं त्रिधा ॥ ३८ ॥
तव नान्यत् प्रपश्यामि किञ्चिद्वीर्यस्य संशयं ।
ऋते रामनिपातात् तु संनिवर्तस्व रावण ॥ ३९ ॥

केनेदमुपदिष्टं ते मृत्युद्वारमपावृतं ।
यत् प्राप्येह विनश्येम वयं सर्वे च राक्षसाः ॥ ४० ॥

यदि त्वया देवगणाः समस्ता
रणे जिता वज्रधरेण सार्धं ।
यमः कुबेरो वरुणस्तथापि
भवान् न शक्तो युधि राघवस्य ॥ ४१ ॥

स्थानादपीन्द्रं कुपितः प्रकर्षेद्
यमं समेयाद्वरुणं नियच्छेत् ।
कालस्य कालश्च भवेत् स रामः
संक्षिप्य लोकांश्च सृजेदथान्यान् ॥ ४२ ॥

इदं वचो बन्धुजनार्थसिद्धये
मयोच्यमानं यदि नानुपश्यसि ।
ततोऽचिरात् त्यक्ष्यसि जीवितं प्रियं
हतोऽद्य रामेण शरैरजिह्मगैः ॥ ४३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचवाक्यं नाम
एकचत्वारिंशः सर्गः — मारीचवाक्यं नाम
द्वाचत्वारिंशः सर्गः — मारिचवाक्यं
नाम त्रिचत्वारिंशः सर्गः ॥

Digitized by Google

## XLIV.

मारीचेन तु तद्वाक्यं हितमुक्तो दशाननः ।
मानान्न प्रतिजग्राह मर्तुकाम इवौषधं ॥ १ ॥
तं पथ्यहितवक्तारं मारीचं राक्षसेश्वरः ।
अब्रवीत् परुषं वाक्यमयुक्तं कालचोदितः ॥ २ ॥
तत् किमेतदयुक्तार्थं मारीच मयि कथ्यते ।
वाक्यं निष्फलमत्यर्थं बीजमुप्तमिवोषरे ॥ ३ ॥
त्वद्वाक्यैर्न मया शक्यं राघवाद्गन्तुमाहवे ।
धर्मशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥ ४ ॥
यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा ।
स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ५ ॥
अवश्यं तु मया तस्य संयुगे खरघातिनः ।
प्राणैस्तुल्या वने सीता हर्तव्या तव संनिधौ ॥ ६ ॥
एषा मे निश्चिता बुद्धिर्हृदि मारीच वर्तते ।
न निवर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ७ ॥
गुणदोषं तथापायमन्यद्वा हेतुमद्वचः ।
उपायमनुपायं वा कार्यस्य च विनिश्चये ॥ ८ ॥
सम्यक् पृष्टेन वक्तव्यः सचिवेन कृतात्मना ।
उद्यताञ्जलिना राज्ञा य इच्छेद्भूतिमात्मनः ॥ ९ ॥

Digitized by Google

वाक्यमप्रतिकूलं हि मृदुपूर्वं हितं शुभं ।
उपचारेण संयुक्तं वक्तव्यो वसुधाधिपः ॥ १० ॥
सोपसर्गं तु यद्वाक्यमायतीहितमुच्यते ।
नाभिनन्दति तद्राजा मानार्हो मानवर्जितं ॥ ११ ॥
पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥ १२ ॥
प्रसादं चानुकुर्वन्ति तेषां क्रोधं च पार्थिवाः ।
तस्मात् सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ॥ १३ ॥
त्वं तु धर्ममविज्ञाय केवलं मोहमाश्रितः ।
अभ्यागतं मां दौरात्म्यात् परुषं बहु भाषसे ॥ १४ ॥
गुणदोषौ न पृच्छामि क्षेमं वापदमात्मनः ।
अस्मिंस्तु तात कृत्ये मे साहाय्यं कर्तुमर्हसि ॥ १५ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतविन्दुभिः ।
प्रलोभ्य चैव वैदेहीं यथेष्टं कर्तुमर्हसि ॥ १६ ॥
त्वां हि मायामृगं दृष्ट्वा काञ्चनं जातविस्मया ।
आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥ १७ ॥
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखं ।
आनयिष्यामि वैदेहीं सुपर्णः पन्नगीमिव ॥ १८ ॥
एवं कृतमिदं कार्यमनपायं भविष्यति ।
गच्छ सौम्य शिवं मार्गं कार्यस्यास्यार्थसिद्धये ॥ १९ ॥

Digitized by Google

प्राप्य सीतामयुद्धेन वञ्चयित्वा च राघवं ।
लङ्कामभिगमिष्यामि कृतकृत्यस्त्वया सह ॥ २० ॥
एतत् कार्यमवश्यं त्वां कारयिष्ये बलादपि ।
राज्ञां हि प्रतिकूलो यो न जातु सुखमेधते ॥ २१ ॥
तस्मिन् कार्ये च संसिद्धे मारीच भवतेऽप्यहं ।
राज्यस्यार्धं प्रदास्यामि कृतार्थेनान्तरात्मना ॥ २२ ॥
यथा प्राप्स्यामि वैदेहीं तथा तात करिष्यसि ।
तथा व्यवसितं कार्यमेतदस्मद्व्यपाश्रयात् ॥ २३ ॥
बलं चाभिजनं शौर्यमैश्वर्यं वीक्ष्य मामकं ।
कथं रामाद्धिहीनार्थाद्भयं पश्यसि दारुणं ॥ २४ ॥
अगतिस्तत्र रामस्य कस्यचिन्मानुषस्य वा ।
आदाय मैथिलीं यत्र गमिष्यामि विहायसा ॥ २५ ॥
त्वं च मायाधरस्तस्मादाश्रमादपनीय तौ ।
मोहयित्वा वने वीरौ क्षिप्रमेव गमिष्यसि ॥ २६ ॥
अपारस्याप्रमेयस्य परं पारमुपाश्रिते ।
किं करिष्यति काकुत्स्थो यतमानः सलक्ष्मणः ॥ २७ ॥
शक्रं च समरे दृष्ट्वा सगणं निर्जितं मया ।
धनाध्यक्षयमौ चापि कस्माद्रामाद्विषीदसि ॥ २८ ॥
विक्रोशन्तीं च रुदतीं वेपमानामितस्ततः ।
सीतां द्रक्ष्यन्ति भूतानि ह्रियमाणां मया बलात् ॥ २९ ॥

Digitized by Google

आपतन्तमनाबाधे पथि सिद्धनिषेविते ।
अनुयातुं न पर्याप्तो गरुडो वायुना सह ॥ ३० ॥
आसाद्य तं जीवितसंशयो वा
मृत्युर्ध्रुवस्तेऽद्य मया विरुध्य ।
एवं यथावद्विगणय्य बुद्ध्या
यद्रोचते तत् कुरु यच्च पथ्यं ॥ ३१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणवाक्यं नाम
चतुश्चत्वारिंशः सर्गः ॥

Digitized by Google

## XLV.

आक्षिप्तो रावणेनाथ प्रतिकूलं निशाचरः ।
अब्रवीत् परुषं वाक्यं मारीचो राक्षसेश्वरं ॥ १ ॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा ।
सपुरस्य सराष्ट्रस्य सामात्यस्य निशाचर ॥ २ ॥
कस्त्वया सुखिना राजन् न हृष्यति न नन्दति ।
केनेदमुपदिष्टं ते मृत्युद्वारमपावृतं ॥ ३ ॥
शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचराः ।
इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥ ४ ॥
तैर्नूनमुपदिष्टं ते विनाशसुखमुत्तमं ।
ये त्वामिच्छन्ति नश्यन्तं स्वकृतेनेह कर्मणा ॥ ५ ॥
बध्याः खलु न बध्यन्ते सचिवास्तव रावण ।
ये त्वामुत्पथमारूढं न नियच्छन्ति शास्त्रतः ॥ ६ ॥
अमात्यैः कामवृत्तो हि राजा विपथमाश्रितः ।
निग्राह्यः सर्वथा सद्भिर्निग्राह्यो न निगृह्यसे ॥ ७ ॥
धर्ममर्थं च कामं च यशश्च विपुलं भुवि ।
स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति निशाचर ॥ ८ ॥
विपर्ययेन व्यसनं स्वामिनो मन्त्रिणः पुनः ।
वैगुण्याच्च महाराज लभन्ते सह बन्धुभिः ॥ ९ ॥

Digitized by Google

राजमूलो हि धर्मश्च यशश्च जयतां वर ।
तस्मात् सर्वास्ववस्थासु रक्षितव्यो नराधिपः ॥ १० ॥
न चापि प्रतिकूलेन नाविनीतेन रावण ।
राज्यं पालयितुं शक्यं राज्ञा तीक्ष्णेन वा पुनः ॥ ११ ॥
ये तीक्ष्णमनुवर्तन्ते भ्रश्यन्ते सह तेन ते ।
विषमेण रथाः शीर्णा मन्दसारथिना यथा ॥ १२ ॥
अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् ।
परदोषैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ १३ ॥
बहवः साधवो लोके युक्ता धर्ममनुव्रताः ।
परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ १४ ॥
स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण ।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ १५ ॥
अवश्यं हि विनङ्क्ष्यन्ति सर्वे रावण राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ १६ ॥
तदिदं काकतालीयं वैरमासादितं त्वया ।
अत्र किं शोभनं यस्त्वं सहसैन्यो विनङ्क्ष्यसि ॥ १७ ॥
अनेन कृतकृत्योऽस्मि यन्मां स पुरुषेश्वरः ।
दिव्यास्त्रविन्महेष्वासो मृत्युं समुपदेक्ष्यति ॥ १८ ॥
त्वं तु मोहान्न गृह्णीषे वचनं मम राक्षस ।
कालपाशपरिक्षिप्तो मुमूर्षुरिव भेषजं ॥ १९ ॥

Digitized by Google

दर्शनादेव रामस्य हतं मामवधारय ।
आत्मानं च हतं विद्धि हृत्वा सीतां सबान्धवं ॥ २० ॥
आनयिष्यसि चेत् सीतामाश्रमात् सहितो मया ।
नैव त्वमसि नैवाहं नैव लङ्का न राक्षसाः ॥ २१ ॥

निवार्यमाणस्य मया हितैषिणा
न रोचते ते वचनं दशानन ।
परेतकल्पा हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितं ॥ २२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचवाक्यं नाम
पञ्चचत्वारिंशः सर्गः ॥



Digitized by Google

XLVI.

भूय एव तु मारीचो रावणं राक्षसेश्वरं ।
धर्मार्थसहितं पथ्यमिदं वचनमब्रवीत् ॥ १ ॥
आकेशग्रहणाद्राजन् यतितव्यं मया तव ।
यथा ते न विनाशः स्याद्राघवान्मम चैव हि ॥ २ ॥
पुरस्तादेव रामस्य गुणाः संकीर्तितास्तव ।
भूय एव तु वक्ष्यामि गुणांस्तस्य महात्मनः ॥ ३ ॥
तस्य कर्म निबोध त्वं यत् सुरैरपि डुष्करं ।
सत्यधर्मरुचेर्दारान् न त्वं हिंसितुमर्हसि ॥ ४ ॥
जनस्थानं वशे कृत्वा विराधं बलिनं तथा ।
निहत्य विजनेऽरण्ये रमते लक्ष्मणाग्रजः ॥ ५ ॥
तस्य दारान् तु वीरस्य निकृत्या हरतस्तव ।
विनाशमनुपश्यामि न चिरादात्मनस्तथा ॥ ६ ॥
व्यतिक्रमं कश्चिदन्यं मर्षयेत् स हि राघवः ।
सतां वृत्त्यमनुस्मृत्य न तु दारप्रधर्षणं ॥ ७ ॥
सर्वस्वहरणादेतत् कर्मातीवजुगुप्सितं ।
स्वान् प्राणान् प्राणिनो यत्र त्यक्त्वा कुर्वन्ति विक्रमं ॥ ८ ॥
स रामो दारहरणान्निकृतस्तेऽन्तको भवेत् ।
तदनागतमेवेदं बोद्धुमर्हसि कारणं ॥ ९ ॥

Digitized by Google

कामवेगादमर्षाच्च प्रकृत्या दृढविक्रमः ।
संतप्यमानस्तेजस्वी समुद्रमपि शोषयेत् ॥ १० ॥
सोऽहमस्मिन् समारम्भे सुनीतस्य कलामपि ।
विमृशन् नाभिपश्यामि रामदाराभिमर्षणे ॥ ११ ॥
यदि वाप्यपनेष्यामि मृगरूपेण राघवं ।
तथाप्यशक्या वैदेही त्वया स्प्रष्टुं निशाचर ॥ १२ ॥
अपनीते मया रामे जीवत्यपि च लक्ष्मणे ।
नैव शक्या त्वया सीता हर्तुं रावण कर्हिचित् ॥ १३ ॥
अथवा रक्षितां द्वाभ्यां कथञ्चिदुपलप्स्यसे ।
ब्रह्मलोकगतस्यापि न ते स्थानं भविष्यति ॥ १४ ॥
अवाप्य तु वरारोहां सीतां सुरसुतोपमां ।
त्रैलोक्यमपि दुष्प्रापं प्राप्तमित्युपधारय ॥ १५ ॥
अमन्त्रयित्वा सचिवैर्योऽर्थं कृच्छ्रं नृपश्चरेत् ।
न स तिष्ठेच्चिरं राज्ये पुष्करे सलिलं यथा ॥ १६ ॥
सोऽहं विवर्जितं सद्भिरपथ्यं मार्गमञ्जसा ।
नानुवर्तितुमिच्छामि स्मरन् प्रकृतिमात्मनः ॥ १७ ॥
बध्यतो हि ममैकस्य दुःखं तव प्रयोजनं ।
यदि केवलमेतद्धि कार्यस्य निधनं भवेत् ॥ १८ ॥
अनयेनापि मां हत्वा त्वमितो राक्षसान् प्रति ।
प्रतियाहि स्वमावासमगत्वा रामकिल्विषं ॥ १९ ॥

Digitized by Google

उच्यमानोऽसकृद्वाक्यं न गृह्णीषे रणप्रिय ।
किं करिष्यामि मन्दात्मा करिष्यामि तव प्रियं ॥ २० ॥
उपस्थितविनाशोऽसि ध्रुवं त्वं राक्षसेश्वर ।
कार्यं वा यदिवाकार्यं कृतमेवेच्छति प्रभुः ॥ २१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचाभ्युपपत्तिर्
नाम षट्चत्वारिंशः सर्गः ॥

Digitized by Google

## XLVII.

मारीचस्य वचः श्रुत्वा करिष्य इति राक्षसः ।
रावणः प्रहसन् वाक्यमिदं मारीचमब्रवीत् ॥ १ ॥
हृतराज्यो हृतधनो मित्रहीनो वने चरः ।
किं करिष्यति काकुत्स्थः शक्रतुल्यबलोऽपि सन् ॥ २ ॥
आत्मनश्च बलज्ञस्त्वं मम चैव न संशयः ।
कथं रामाद्विहीनार्थाद्भयं मारीच गच्छसि ॥ ३ ॥
अगतिर्या तु मर्त्यानां रक्षसां विहिता च सा ।
उत्पतिष्यामि वैदेहीं समादाय विहायसा ॥ ४ ॥
मयि रामः समुद्रस्य परं पारं समाश्रिते ।
किं करिष्यति मूर्खोऽसौ कुर्वन्नपि यथाबलं ॥ ५ ॥
सुराश्चासुरसंघाश्च न मे प्रतिबला युधि ।
त्रयाणामपि लोकानामलमस्मि निवारणे ॥ ६ ॥
मया विक्रम्य शक्रोऽपि मत्तैरावणवाहनः ।
स वज्रपाणिर्निर्भग्नः समस्तैस्त्रिदशैः सह ॥ ७ ॥
भ्राता मे धनदश्चैव यमोऽथ वरुणस्तथा ।
सर्वे च पृथिवीपाला वशे च स्थापिता रणे ॥ ८ ॥
त्रैलोक्यं निर्जितं येन स्थापितं च मया वशे ।
मच्छासनावघुष्टश्च स बिभेति कथं भवान् ॥ ९ ॥

Digitized by Google

हरः संक्रीडमानश्च उमया सह पर्वते ।
भुजाभ्यामुद्धृतो वीर्यात् तेन तुष्टोऽभवद्भवः ॥ १० ॥
भुञ्जानस्य हि लोकांस्त्रीन् न मे प्रतिबलं क्वचित् ।
दृश्यते दिवि देवेषु यत्तलोकेऽथवा पुनः ॥ ११ ॥
रसातले वा नागेषु का शङ्का मानुषेषु मे ।
गृहीत्वा मैथिलीं चाहं पथानेन विहायसा ॥ १२ ॥
लङ्कामभिगमिष्यामि निमेषेणैव सत्वरः ।
सागरेण परिक्षिप्तां सर्वतः शतयोजनां ॥ १३ ॥
लङ्कां गन्तुं कुतः शक्तिरपि स्वप्नमनोरथैः ।
मायावी त्वं समर्थश्च गतियुक्तोऽथ बुद्धिमान् ॥ १४ ॥
प्रलोभ्य चैव वैदेहीं क्षिप्रं त्वत्तर्हितो भव ।
ममैतद्वचनं कृत्वा मोहयित्वा च राघवौ ॥ १५ ॥
मामेवागच्छ भद्रं ते यास्यावः सहितौ पुरीं ।
सीतामवाप्य तां क्षिप्रं वञ्चयित्वा च राघवौ ॥ १६ ॥
विस्रब्धं विक्रमिष्यावः कृतार्थेनान्तरात्मना ।
एवं स सान्त्वितस्तेन मारीचो रावणेन वै ॥ १७ ॥
विनिश्वसन् मुहुश्चैव दृष्टदुःखश्च राक्षसः ।
प्रतस्थे न चिरादेव दशग्रीवसहायवान् ॥ १८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचसान्त्वनं
नाम सप्तचत्वारिंशः सर्गः ॥

Digitized by Google

## XLVIII.

आत्मनो मरणं मत्वा संशयं परमं गतः ।
अकामो भयसंविग्नो निःश्वस्य बहुशस्तदा ॥ १ ॥
निश्चितं रावणं दृष्ट्वा मारीचो भयविह्वलः ।
गच्छामीत्यब्रवीद्भीतो दीनो नक्तञ्चरेश्वरं ॥ २ ॥
प्रहृष्टस्त्वभवत् तेन वचसा राक्षसेश्वरः ।
परिषज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ॥ ३ ॥
एतच्छौटीरयुक्तं ते स्वच्छन्दादिव भाषितं ।
इदानीमसि मारीच प्रकृतिं स्वामुपागतः ॥ ४ ॥
आरुह्यतामयं शीघ्रं कामगो रत्नभूषितः ।
मया सह रथो युक्तः पिशाचवदनैः खरैः ॥ ५ ॥
ततो रावणमारीचौ विमानमिव तं रथं ।
आरुह्य ययतुः शीघ्रं तस्मादाश्रममण्डलात् ॥ ६ ॥
पश्यन्तावथ रम्याणि पत्तनानि सरांसि च ।
पर्वतान् सरितश्चैव राष्ट्राणि विविधानि च ॥ ७ ॥
आगत्य दण्डकारण्यं राघवस्याश्रमं ततः ।
ददर्श सहमारीचो रावणो राक्षसेश्वरः ॥ ८ ॥
अवतीर्य रथात् तस्मात् कामगाद्रत्नभूषितात् ।
हस्ते संगृह्य मारीचं रावणो वाक्यमब्रवीत् ॥ ९ ॥

Digitized by Google

एष रामाश्रमो दूराद्दृश्यते कदलीवृतः ।
क्रियतां तत् सखे शीघ्रं यदर्थं वयमागताः ॥ १० ॥
स रावणवचः श्रुत्वा मारीचस्त्वरयान्वितः ।
तत्क्षणाद्राक्षसं रूपं त्यक्त्वा हैमोऽभवन्मृगः ॥ ११ ॥
रौप्यविन्दुशतचित्रः सर्वभूतमनोहरः ।
मसारगल्वर्कनिभैश्चित्रैः पत्त्रैरलंकृतः ॥ १२ ॥
जातरूपमयैः शृङ्गैश्चतुर्भिर्मणिभूषितैः ।
मृगो भूत्वाश्रमद्वारि रामस्य विचचार ह ॥ १३ ॥
ततोऽस्य बुद्धिरभवत् तस्मिन् काले गतायुषः ।
कार्यं वा यदिवाकार्यं कर्तव्यं नात्र संशयः ॥ १४ ॥
भर्तुर्हितार्थिना शीघ्रं स्वर्गं वाप्यभिकाङ्क्षया ।
स्मृत्वा रामस्य वीर्यं च भर्तुराज्ञां च दारुणां ॥ १५ ॥
श्रेयो मे भर्तृवचनं न जीवितमिहात्मनः ।
एतां बुद्धिं समाश्रित्य कृत्वा निश्चयमात्मनः ॥ १६ ॥
मृत्युं चात्मनि संचिन्त्य मारीचः प्रचचार ह ।
समीपे तस्य रामस्य सीतायाश्च मनो हरन् ॥ १७ ॥
अथाससादाभिजनोपपन्नं मारीच उग्रं नरदेवपुत्रं ।
रामं प्रतिज्ञानिरतं वनस्थं त्यक्त्वा सुखं धर्मपथे निविष्टं ॥ १८ ॥
तस्याविदूरान्महिषीमनिन्द्यां प्रभामिवास्तोपगतस्य भानोः ।
सुन्दस्य पुत्रः स ददर्श सीतां सीता च तं पूर्वतरं ददर्श ॥ १९ ॥

Digitized by Google

## XLIX.

तं तु सीता मृगं दृष्ट्वा वने काञ्चनसुप्रभं ।
हेमराजतचित्राभ्यां पार्श्वाभ्यां समलंकृतं ॥ १ ॥
शृङ्गाभ्यां हेमवर्णाभ्यां कान्तिमद्भ्यां विभूषितं ।
वैदूर्यमणिवर्णाभ्यां कर्णाभ्यां चारुदर्शनं ॥ २ ॥
प्रभया परिराजन्तं सूक्ष्मरोमतनुत्वचं ।
नानारत्नविचित्राङ्गं सा व्यस्मयत भाविनी ॥ ३ ॥
तेन काञ्चनरोम्णा च प्रबालमणिशृङ्गिणा ।
लोहितादित्यजिह्वेन नक्षत्रपथवर्चसा ॥ ४ ॥
सा विस्मितानवद्याङ्गी मृगेण जनकात्मजा ।
उवाच राघवं सीता स्मितपूर्वाभिभाषिणी ॥ ५ ॥
इमं मणिविचित्राङ्गं पश्य हेममयं मृगं ।
आश्चर्यभूतं काकुत्स्थ कामात् स्वयमिहागतं ॥ ६ ॥
ईदृशा दण्डकारण्ये यदि हेममया मृगाः ।
न मिथ्या खलु काकुत्स्थ लोककान्तमिदं वनं ॥ ७ ॥
अस्मिन्नरण्ये दृष्ट्वेमं मृगं हाटकभूषणं ।
स्पृहा मे जायतेऽत्यर्थं तुष्टिश्चाप्यनुवर्तते ॥ ८ ॥
आर्यपुत्र मृगस्यास्य जाम्बूनदनिभां त्वचं ।
स्वशय्यायां परिस्तीर्य सुखमिच्छेयमासितुं ॥ ९ ॥



Digitized by Google

काममुक्तमिदं रौद्रं स्त्रीणामसदृशं मया ।
वपुषा त्वस्य सत्त्वस्य लोभेनापहृतं मनः ॥ १० ॥
तच्छ्रुत्वा वचनं तस्याः प्रीतायाः पुरुषर्षभः ।
उवाच परिसंहृष्टः सौमित्रिं राघवस्तदा ॥ ११ ॥
पश्य लक्ष्मण वैदेह्या मृगं प्रतिगतां स्पृहां ।
त्वक्प्रधानतया ह्येष मृगोऽद्य न भविष्यति ॥ १२ ॥
अप्रमादेन ते भाव्यं राजपुत्र्यां नृपात्मज ।
यावत् पृषतमेकेन सायकेन निहन्म्यहं ॥ १३ ॥
हत्वैनं चर्म चादाय शीघ्रमेष्यामि लक्ष्मण ।
तावन्न चलितव्यं ते यावन्नाहमिहागतः ॥ १४ ॥
अद्य भ्राजिष्यते सीता चारुणा मृगचर्मणा ।
राङ्कवास्तरणे पूर्वमयोध्यायामिवासने ॥ १५ ॥
शङ्कमानस्तु तं दृष्ट्वा तारामृगसमप्रभं ।
विचार्य बहुधा बुद्ध्या लक्ष्मणो वाक्यमब्रवीत् ॥ १६ ॥
यथा नः कथितं पूर्वमृषिभिः पावकोपमैः ।
अयं मायाधरो वीर मारीचो नाम राक्षसः ॥ १७ ॥
चरन्तो मृगयां हृष्टा रथिनो धन्विनो वने ।
अनेन मृगरूपेण राजानो बहवो हताः ॥ १८ ॥
अस्य रूपमिदं दृष्ट्वा नानारत्नविभूषितं ।
अवगन्तुं त्वया युक्तं बुद्ध्या बुद्धिमतां वर ॥ १९ ॥

Digitized by Google

मृगो हेममयो नैष हेमकस्य मृगस्य च ।
कुतो लोके नरव्याघ्र संयोगः साधु चिन्तय ॥ २० ॥
प्रबालमणिशृङ्गोऽयं न मृगो रत्नलोचनः ।
एतं मायामृगं मन्ये राक्षसं मृगरूपिणं ॥ २१ ॥
एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य शुचिस्मिता ।
उवाच सीता संहृष्टा छद्मना हृतचेतना ॥ २२ ॥
आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ २३ ॥
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः ।
मृगाश्चरन्ति सहिताश्चमराः सृमरास्तथा ॥ २४ ॥
न चास्य सदृशो राम दृष्टपूर्वो मृगो मया ।
तेजसा क्षमया दीप्त्या यथायं मृगसत्तमः ॥ २५ ॥
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव ।
आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ २६ ॥
समाप्तवनवासानां राज्यस्थानां च नः पुनः ।
अन्तःपुरेऽपि भूषार्थो मृग एष भविष्यति ॥ २७ ॥
जीवन् न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ।
अजिनं नरशार्दूल रुचिरं तु भविष्यति ॥ २८ ॥
निहतस्यास्य सत्वस्य जाम्बूनदसमत्वचि ।
शष्पवृष्यां विनीतायामिच्छाम्यहमुपासितुं ॥ २९ ॥

Digitized by Google

इति सीतावचः श्रुत्वा दृष्ट्वा च मृगमद्भुतं ।
मोहितो राघवः श्रीमानिदं लक्ष्मणमब्रवीत् ॥ ३० ॥
मृगोऽयमद्य सौमित्रे यदि मायामयो भवेत् ।
सर्वथैनं बधिष्यामि लोभनीयो हि मे दृढं ॥ ३१ ॥
न वने नन्दने तस्मिन् नापि चैत्ररथे वने ।
कुतः पृथिव्यां सौमित्रे योऽस्य रूपसमो भवेत् ॥ ३२ ॥
अनुलोमाः सुलोमाश्च रुचिरा रोमराजयः ।
शोभन्तेऽस्याश्रिताः काये विस्रब्धं चरतो वने ॥ ३३ ॥
पश्यास्य जृम्भमाणस्य दीप्तवह्निशिखोपमां ।
जिह्वां मुखान्निष्पतन्तीमुल्कां प्रज्वलितामिव ॥ ३४ ॥
तप्तहेमनिभो ह्येष पादैर्विद्रुमसंनिभैः ।
पार्श्वयोश्चार्धचन्द्राभ्यां रूप्यताराविचित्रितः ॥ ३५ ॥
अतिस्निग्धवपुर्ह्येष शङ्खमुक्तानिभाननः ।
कस्य नामातिरूपोऽयं न मनो लोभयेन्मृगः ॥ ३६ ॥
अस्य रूपमिदं दृष्ट्वा जाम्बूनदसमप्रभं ।
नानारत्नविचित्राङ्गमतीव च मनोहरं ॥ ३७ ॥
पश्यन् रत्नाकुलं चित्रं नरः को नानुलोभयेत् ।
मनो हरति मेऽत्यर्थं दर्शनीयतमो मृगः ॥ ३८ ॥
घ्नन्ति लक्ष्मण राजानो मृगयायां वनौकसः ।
मांसहेतोरभिरता विहारार्थे च धन्विनः ॥ ३९ ॥

Digitized by Google

पृथिव्यां यानि रत्नानि विचरन्ति महावने ।
धातवो विविधाश्चैव मणिरत्नसुवर्णजाः ॥ ४० ॥
वक्सारमखिलं सर्वं धनं वीजविवर्धनं ।
मनसा चिन्तितं सर्वं यथा शक्रस्य लक्ष्मण ॥ ४१ ॥
तथेदमुपपन्नं मे मृगरूपस्य धर्षणं ।
राजार्हाणि च रत्नानि रत्नभाजो वयं ध्रुवं ॥ ४२ ॥
एतस्य मृगरूपस्य परार्ध्ये काञ्चनाजिने ।
उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ४३ ॥
न पत्रोर्णं न कौशेयं न प्रावेण्यं न चाविकं ।
भवेदेतस्य सदृशं संस्पर्शे इति मे मतिः ॥ ४४ ॥
श्रीमान् वनमृगश्चायं दिव्यश्चान्यो नभश्चरः ।
उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ४५ ॥
यदि चायं तथा यन्मां भवेद्वदसि लक्ष्मण ।
मृगयामागता येन धन्विनो निहता वने ॥ ४६ ॥
निहता राजपुत्राश्च राजानो बलिनस्तथा ।
वने मायाविना येन चरता मृगरूपिणा ॥ ४७ ॥
यस्माच्च बहवोऽनेन पार्थिवा मृगयां गताः ।
निहताः परमेष्वासास्तस्माद्वध्यो भवेन्मम ॥ ४८ ॥
वातापिर्देवतान् सर्वान् द्विजान् हन्ति स्म लक्ष्मण ।
उदरस्य समुत्थाने स्वगर्भोऽश्वतरीमिव ॥ ४९ ॥

Digitized by Google

स कदाचिच्चिरात् कालादाससाद महामुनिं ।
अगस्त्यं तेजसा दीप्तं भक्षितश्च महात्मना ॥५०॥
समुत्थाने च तद्रूपं कर्तुकामं समुत्थितं ।
सस्मितं भगवान् वाक्यमिदं वातापिमब्रवीत् ॥५१॥
तवाभिपद्य वातापे ब्राह्मणस्योदरं यथा ।
भवत्यवज्ञा दुष्टात्मंस्तस्माज्जीर्णो भवेह मे ॥५२॥
मद्विधं योऽवमन्येत धर्मनित्यं जितेन्द्रियं ।
एवमासादयेन्मृत्युं यथा त्वं प्राप्य मामिह ॥५३॥
एषोऽपि मामनुप्राप्य मन्यमानो मृगोत्तमः ।
सौमित्रे लप्स्यते मृत्युमगस्त्यादिव राक्षसः ॥५४॥
अहमेनं बधिष्यामि मृगराजं न संशयः ।
इहाप्रमत्तस्त्वं वीर परिपालय मैथिलीं ॥५५॥
तावन्न चलितव्यं ते यावन्नाहमिहागतः ।
राक्षसा दुष्टभावा हि यतन्ते विक्रियां वने ॥५६॥
एवं समादिश्य रघुप्रवीरः सुलक्षणं लक्ष्मणमुग्रतेजाः ।
पुनः पुनश्चैव समादिदेश यतस्त्वया वीर न खेदितव्यं ॥५७॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचमृगप्रवेशो
नाम अष्टचत्वारिंशः सर्गः — लक्ष्मणसमादेशो
नाम नवचत्वारिंशः सर्गः ॥

Digitized by Google

## L.

तथा तु तं समादिश्य लक्ष्मणं रघुनन्दनः ।
मतिं कृत्वा बधे तस्य प्रदुद्राव यतो मृगः ॥ १ ॥
गृहीत्वा विनतं चैव चापं हाटकभूषितं ।
बद्धा महेषुधी चापि तथासिं हेमवत्सरुं ॥ २ ॥
आबध्य कवचं चैव प्रदुद्राव वने मृगं ।
मनोमारुतवेगश्च मारीचः प्राद्रवद्वने ॥ ३ ॥
नातिदूरेण तं रामो गच्छन्तमनुगच्छति ।
स च रामभयोद्विग्नो मारीचो दण्डके वने ॥ ४ ॥
बभूवान्तर्हितस्तत्र क्षणात् पुनरदृश्यत ।
एषोऽयमयमेतीति वेगवान् राघवो ययौ ॥ ५ ॥
मुहूर्तादेव ददृशे मुहूर्तान्न प्रकाशते ।
अतिवृत्त इषुत्रासाल्लोभयन् स रघूत्तमं ॥ ६ ॥
क्वचिद्दृष्टः क्वचिन्नष्टः क्वचित् त्रासाच्च विद्रुतः ।
क्वचित् स्थितः क्वचिल्लीनः क्वचिद्वेगेन निःसृतः ॥ ७ ॥
भयेन महताच्छन्नो मारीचो याति कानने ।
तमपश्यत् ततो रामस्तत्र यान्तमिवाग्रतः ॥ ८ ॥
मायामृगं प्रद्रवन्तं धनुरायम्य क्रोधनः ।
तमापतन्तं संप्रेक्ष्य राघवं धन्विनं मृगः ॥ ९ ॥

Digitized by Google

अन्तर्हितो मुहुर्भूत्वा पुनः संदर्शयत्यपि ।
ददृशे मुहुरासन्ने मुहुर्दूराददृश्यत ॥ १० ॥
दर्शनादर्शनेनैवमपाकर्षत् स राघवं ।
अवेद्याविद्य धावन्तं धनुष्पाणिर्महावने ॥ ११ ॥
दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् ।
छिन्नाभ्रैरिव संवीतं शरदीवेन्दुमण्डलं ॥ १२ ॥
इतो गतोऽसौ दृष्टश्च पुनरन्तर्हितो मृगः ।
इति तांस्तान् वनोद्देशान् काकुत्स्थः पर्यधावत ॥ १३ ॥
राघवस्तु ततः क्रुद्धो मुहूर्तं तेन मोहितः ।
अतिष्ठत् स वने तस्मिंश्छायामाश्रित्य शाद्वले ॥ १४ ॥
मृगैः परिवृतश्चासावदूरात् प्रत्यदृश्यत ।
अवस्थितैः समीपस्थैस्त्रासादुत्फुल्ललोचनैः ॥ १५ ॥
दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ।
विकृष्य बलवच्चापं संधाय च शरोत्तमं ॥ १६ ॥
अवणान्तमुपानीय व्यवच्छिन्नेन मुष्टिना ।
तमेव मृगमुद्दिश्य तं शरं राघवः शितं ॥ १७ ॥
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितं ।
स मारीचस्य हृदयं बिभेदारिनिर्वहणः ॥ १८ ॥
तेन मर्माणि निर्विद्धः शरेणाप्रतिमेन ह ।
तालमात्रमथोत्पत्य न्यपतत् स शरातुरः ॥ १९ ॥

Digitized by Google

ततो विचित्रकेयूरः सर्वाभरणभूषितः ।
हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ॥ २० ॥
व्यनदद्भैरवं नादं धरण्यां शरपीडितः ।
म्रियमाणस्तु मारीचश्चिन्तयन् स्वामिनः प्रियं ॥ २१ ॥
रामस्य सदृशं व्यक्तं स्वरमालम्ब्य पापकृत् ।
हा लक्ष्मणेति चुक्रोश त्रायस्वेति महावने ॥ २२ ॥
अन्तकालेऽपि संप्राप्ते तस्य बुद्धिरभूदियं ।
स्वरमेतं यदि श्रुत्वा लक्ष्मणं प्रेरयेदिह ॥ २३ ॥
सीता शून्येन मनसा भर्तृस्नेहसमुत्सुका ।
ततो लक्ष्मणहीनां तां रावणो वै हरेदिति ॥ २४ ॥
एतत् संचिन्त्य मनसा तं चकार स्वरं तदा ।
रावणस्य प्रियं कुर्वन्नन्तकाले निशाचरः ॥ २५ ॥
मृगरूपं च तत् त्यक्त्वा राक्षसं रूपमास्थितः ।
स चक्रे सुमहत् कायं मारीचो जीवितं त्यजन् ॥ २६ ॥
तं दृष्ट्वा पतितं भूमौ राक्षसं भीमदर्शनं ।
जगाम मनसा सीतां रामो हृष्टतनूरुहः ॥ २७ ॥
स तस्य रौद्रस्य हतस्य रूपं तद्राक्षसं घोरमवेक्षमाणः ।
रामः प्रतस्थे सुविषण्णचेतास्तेनैव तेनैव पथा निवृत्तः ॥ २८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचबधो
नाम पञ्चाशः सर्गः ॥

LI.

आर्तस्वरं तु विज्ञाय तं भर्तुः सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवं ॥ १ ॥
न हि मे जीवितं स्थाने हृदयं चावतिष्ठते ।
क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशं ॥ २ ॥
सहायं भ्रातरं ज्येष्ठं सङ्कटं स्थानमागतं ।
क्रन्दन्तमेवं सौमित्रे परित्रातुं त्वमर्हसि ॥ ३ ॥
तं क्षिप्रमभिधावस्व भ्रातरं शरणैषिणं ।
रक्षसां वशमापन्नं सिंहानामिव गोपतिं ॥ ४ ॥
तस्यास्तद्वचनं श्रुत्वा स्त्रीस्वभावप्रदूषितं ।
उवाच लक्ष्मणः सीतां त्रासादुत्फुल्ललोचनां ॥ ५ ॥
न मे शक्यस्त्रिभिर्लोकैः सेन्द्रैरपि सुरासुरैः ।
भ्राता धर्षयितुं बाढमित्युवाच स जानकीं ॥ ६ ॥
कनिष्ठायामप्यङ्गुल्यां भ्रातुर्मम स राक्षसः ।
दुःखं कर्तुमपर्याप्तो देवि कस्माद्विषीदसि ॥ ७ ॥
न जगाम तथोक्तोऽपि भ्रातुराज्ञाय शासनं ।
तमुवाच ततः सीता कुपिता जनकात्मजा ॥ ८ ॥
अमित्रो मित्ररूपेण भ्रातुस्त्वमसि लक्ष्मण ।
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे ॥ ९ ॥

Digitized by Google

व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ।
येन तिष्ठसि विस्रब्धस्तमपश्यन् महाद्युतिं ॥ १० ॥
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ।
न मे शुश्रूषसे वाक्यं यस्मादभिहितं मया ॥ ११ ॥
वर्तयेयं न रामेण मुहूर्तमपि वर्जिता ।
कुरु मे वचनं वीर भ्रातरं पाहि मा चिरं ॥ १२ ॥
किं हि संशयमापन्ने तस्मिन्निह मया तव ।
मुहूर्तमप्यजीवन्त्या यन्नान्वेष्यसि राघवं ॥ १३ ॥
इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुतां ।
अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ॥ १४ ॥
देवि देवमनुष्येषु गन्धर्वपतगेषु च ।
राक्षसेषु पिशाचेषु किन्नरेषूरगेषु च ॥ १५ ॥
दानवेषु च घोरेषु विद्यते न च शोभने ।
यो रामं प्रतियुध्येत महेन्द्रमिव मानुषः ॥ १६ ॥
अबध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ।
नोत्सहे त्वां विरहितुं शून्येऽहं राघवं विना ॥ १७ ॥
न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ।
रामेण सत्यसंधेन न त्वां त्यक्तुमिहोत्सहे ॥ १८ ॥
कृतवैराश्च कल्याणि वयमेतैर्निशाचरैः ।
सुक्रुद्धैः सह भद्रं ते जनस्थानबधं प्रति ॥ १९ ॥

Digitized by Google

रक्षांसि विविधा वाचो विसृजन्ति महावने ।
हिंसाविहारे वैदेहि न चिन्तयितुमर्हसि ॥ २० ॥
अप्रमेयं हि तत्तेजः शक्यं तुलयितुं न वै ।
अविचार्य बलं तस्य नैवं त्वं वक्तुमर्हसि ॥ २१ ॥
हृदयं निर्वृतं तेऽस्तु संतापस्त्यज्यतामयं ।
आगमिष्यति भर्ता ते शीघ्रं हत्वा मृगोत्तमं ॥ २२ ॥
न तस्यायं स्वरो देवि विस्वरो यस्त्वया श्रुतः ।
कष्टायामप्यवस्थायां न रामो गर्हितं वदेत् ॥ २३ ॥
एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना ।
अब्रवीत् परुषं वाक्यं लक्ष्मणं पथ्यवादिनं ॥ २४ ॥
हानार्य करुणारम्भ नृशंस कुलपांसन ।
अहं तव प्रिया मन्ये येनैवं त्वं प्रभाषसे ॥ २५ ॥
नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् ।
त्वद्विधेषु मनुष्येषु नित्यं प्रच्छन्नचारिषु ॥ २६ ॥
संदुष्टस्त्वं वने नूनं राममेकोऽनुधावसि ।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २७ ॥
कथमिन्दीवरश्यामं रामं कमललोचनं ।
उपसंगृह्य भर्तारं कामयेयं पृथग्जनं ॥ २८ ॥
अपि चाहं प्रवेक्ष्यामि प्रदीप्तं हव्यवाहनं ।
न चापि राघवादन्यं पादेनापि नरं स्पृशे ॥ २९ ॥

Digitized by Google

इति लक्ष्मणमाक्रुश्य सीता सुरसुतोपमा ।
पाणिभ्यां रुदती तत्र उरः परिपिपेष सा ॥ ३० ॥
इत्युक्तः परुषं वाक्यं सीतया लोमहर्षणं ।
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिश्चलितेन्द्रियः ॥ ३१ ॥
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।
वाक्यमप्रतिरूपं हि न चित्रं स्त्रीषु मैथिलि ॥ ३२ ॥
स्वभावश्चैव नारीणामेष लोकेषु दृश्यते ।
विमुक्तधर्माश्चपला भ्रातृभेदकराः स्त्रियः ॥ ३३ ॥
उपशृण्वन्तु मे सर्वे साक्षीभूता वने चराः ।
न्यायवादी यथान्यायमुक्तोऽहं परुषं त्वया ॥ ३४ ॥
धिक् त्वामस्तु विनश्य त्वं यन्मामेवं विशङ्कसे ।
स्त्रीस्वभावेन दुष्टेन गुरुवाक्ये व्यवस्थितं ॥ ३५ ॥
उक्तेति परुषं वाक्यं पश्चात् तापसमन्वितः ।
सामपूर्वं पुनः सीतां वक्तुमारब्धवानिदं ॥ ३६ ॥
गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ।
रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ॥ ३७ ॥
निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे ।
अपि त्वां सह रामेण पश्येयं पुनरागतः ॥ ३८ ॥
लक्ष्मणेनैवमुक्ता सा वैदेही जनकात्मजा ।
प्रत्युवाच ततो वाक्यं सीता साश्रुपरिप्लुता ॥ ३९ ॥

Digitized by Google

गोदावरीं प्रवेक्ष्यामि हीना रामेण लक्ष्मण ।
उद्बन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः ॥ ४० ॥
अपि वाहं भृशं दीप्तं प्रविशेयं हुताशनं ।
स्पृशेयं राघवादन्यं पदापि पुरुषं न हि ॥ ४१ ॥
इति लक्ष्मणमुक्त्वा सा सीता दुःखसमन्विता ।
भृशं रुदन्ती पाणिभ्यामुरः परिपिपेष सा ॥ ४२ ॥
तामार्तरूपां रुदतीं तदानीं
सौमित्रिरालोक्य विशालनेत्रां ।
आश्वासयामास न चैव भर्तुस्
तं भ्रातरं किञ्चिदुवाच सीता ॥ ४३ ॥
ततस्तु सीतामभिवाद्य लक्ष्मणः
कृताञ्जलिः किञ्चिदभिप्रणम्य च ।
अवेक्षमाणश्च पुनः स मैथिलीं
जगाम रामस्य समीपमात्मवान् ॥ ४४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे लक्ष्मणप्रयाणं
नाम एकपञ्चाशः सर्गः ॥

Digitized by Google

## LII.

तथा परुषमुक्तस्तु कुपितो राघवानुजः ।
जगाम यत्र रामोऽसौ सीतां त्यक्का महावने ॥ १ ॥
मारीचेनापकृष्टे तु राघवे सहलक्ष्मणे ।
कृतकृत्यमिवात्मानं रावणः सममन्यत ॥ २ ॥
लक्ष्मणश्चापि धर्मात्मा भयेन महताकुलः ।
अकाम इव विप्रेक्ष्य प्रतस्थे न चिरादिव ॥ ३ ॥
एतदन्तरमासाद्य दशग्रीवः प्रतापवान् ।
अभिचक्राम वैदेहीं परिव्राट्छद्मना तदा ॥ ४ ॥
तामपश्यत् ततो बालां भ्रातृभ्यां रहितां वने ।
रहितामर्कचन्द्राभ्यां संध्यामिव महत् तमः ॥ ५ ॥
स दृष्ट्वाप्रतिरूपां तां रहिते राक्षसेश्वरः ।
ततस्तत्र दशग्रीवश्चिन्तयामास दुर्मतिः ॥ ६ ॥
इयं विरहिता यावद्भर्त्रा सौमित्रिणापि च ।
कालो मम ततस्तावदभ्युपेतुं वराननां ॥ ७ ॥
चिन्तयित्वा दशग्रीवः क्षिप्रमन्तरमात्मनः ।
उपतस्थे तदा सीतां भिक्षुरूपेण रावणः ॥ ८ ॥
सूक्ष्मकाषायसंवीतः शिखी छत्री सपादुकः ।
सव्यांसासक्तभारश्च सत्रिदण्डकमण्डलुः ॥ ९ ॥

Digitized by Google

तमुग्रतेजःकर्माणं जनस्थानरुहद्रुमाः ।
तथैव विविधा वल्ल्यः सत्त्वानि सह पक्षिभिः ॥ १० ॥
समीक्ष्य न व्यकम्पन्त प्रववौ न च मारुतः ।
शीघ्रवेगागतं दृष्ट्वा विष्ठितं राक्षसेश्वरं ॥ ११ ॥
स्तिमितं गन्तुमारेभे तदा गोदावरी नदी ।
जनस्थानसमीपे च पञ्चवट्यां तपोवने ॥ १२ ॥
पक्षिणो ये मृगाश्चैव भयात् तस्य प्रदुद्रुवुः ।
स रामस्यान्तरप्रेक्षी रावणस्तदनन्तरं ॥ १३ ॥
आससाद तदा सीतां भिक्षुरूपेण संवृतः ।
अभव्यो भव्यरूपां तां भर्तारमनुशोचतीं ॥ १४ ॥
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ।
स पापस्तेन रूपेण तृणैः कूप इवावृतः ॥ १५ ॥
अतिष्ठत् प्रेक्ष्य रामस्य पत्नीं सीतां तु रावणः ।
स तां रुचिरदन्तौष्ठीं पूर्णचन्द्रनिभाननां ॥ १६ ॥
आसीनां पर्णशालायां वास्पशोकपरिप्लुतां ।
रामलक्ष्मणहीनां तां चिन्ताशोकपरायणां ॥ १७ ॥
तमसा महताच्छन्नामचन्द्रां रजनीमिव ।
ददर्श यद्यद्वैदेह्या गात्रं चक्षुर्मनोहरं ॥ १८ ॥
न शशाक ततो हर्तुं दृशं मग्नामिवात्र सः ।
फुल्लपद्मविशालाक्षीं पीतकौषेयवासिनीं ॥ १९ ॥

Digitized by Google

अभ्यागच्छत वैदेहीं दुष्टचेता निशाचरः ।
तां मन्मथशराविष्टो ब्रह्मघोषमुदीरयन् ॥ २० ॥
अब्रवीत् प्रसृतं वाक्यं रहिते राक्षसेश्वरः ।
विभ्राजमानां वपुषा काञ्चनीं प्रतिमामिव ॥ २१ ॥
अनुत्तमां त्रिलोकेषु पद्महीनामिव श्रियं ।
विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥ २२ ॥
चारुस्मिते चारुमुखि चारुनेत्रे विलासिनि ।
अतीव भ्राजसे भीरु वनराजीव पुष्पिता ॥ २३ ॥
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ ।
मुक्ताहेमचितौ पीनौ रत्नजुष्टौ मनोहरौ ॥ २४ ॥
हृद्यावुपचितौ वृत्तौ संहतौ ते विराजतः ।
का त्वं काञ्चनगर्भाभे पीतकौषेयवासिनि ॥ २५ ॥
मालां पद्मोत्पलयुतां बिभ्रती प्रियदर्शना ।
ह्रीः कीर्तिः श्रीः शुभा लक्ष्मीरासां का त्वं वरानने ॥ २६ ॥
भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी ।
समाः शिखरिणः स्निग्धाः पाण्डरा दशनास्तव ॥ २७ ॥
सुसंस्थिते च कान्ते च भ्रुवौ नयनभूषणे ।
सुप्रभौ सुकुमारौ च अनुरूपौ सुसंस्थितौ ॥ २८ ॥
सुपीनौ दर्शनीयौ च संहतौ च वरानने ।
अनुरूपौ च वक्त्रस्य कपोलौ तव सुन्दरि ॥ २९ ॥



Digitized by Google

तप्तकाञ्चनसंवीतौ स्वभावात् संस्कृतौ शुभौ ।
श्रवणौ ते विराजेते प्रमाणेन समुन्नतौ ॥ ३० ॥
करौ च तव सुश्रोणि पद्मपत्रारुणौ शुभौ ।
अनुरूपं च ते मध्यं दुर्बलं चारुहासिनि ॥ ३१ ॥
रोम राज्या विभक्तं च द्विधेव तव सुन्दरि ।
विशालं जघनं पीनमूरू गजकरोपमौ ॥ ३२ ॥
सुकुमाराङ्गुली दिव्यौ सुकुमारतलौ शुभौ ।
चरणौ संहतावेतौ परस्परविभूषणौ ॥ ३३ ॥
संचाररम्यौ च शुभौ पद्मकोषसमप्रभौ ।
विशाले विमले नेत्रे रक्तान्ते नीलतारके ॥ ३४ ॥
करसंवृतमध्यासि सुकेशी संहतस्तनी ।
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥ ३५ ॥
एवंरूपा मया नारी दृष्टपूर्वा महीतले ।
रूपमग्र्यं च ते लोके सौकुमार्यं च शाश्वतं ॥ ३६ ॥
इह वासश्च कान्तारे चिन्तामुत्पादयन्ति मे ।
संप्रतीक्ष्य च भद्रं ते न त्वं वस्तुमिहार्हसि ॥ ३७ ॥
राक्षसानामयं वासो घोराणां कामचारिणां ।
प्रासादाग्र्याणि रम्याणि नगरोपवनानि च ॥ ३८ ॥
सपद्मानि च तोयानि देवोद्यानानि चैव हि ।
नन्दनादीनि दिव्यानि युक्तान्यासेवितुं त्वया ॥ ३९ ॥

Digitized by Google

वरं माल्यं वरं रत्नं वरं वस्त्रं च शोभने ।
भर्तारं च वरं मन्ये ते युक्तमसितेक्षणे ॥ ४० ॥
भूमिशय्या परिक्लिष्टा वने मूलफलाशना ।
वस्तुं नार्हसि कल्याणि सुखार्हा सुखवर्जिता ॥ ४१ ॥
का त्वं भवसि रुद्राणां मरुतां वा शुचिस्मिते ।
वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ ४२ ॥
एतासां देवतानां तु का त्वं भवसि शोभने ।
गन्धर्वी वा महाभागे अप्सरा वा सुमध्यमे ॥ ४३ ॥
नेहागच्छन्ति गन्धर्वा न देवा न च मानुषाः ।
राक्षसानामयं वासः कथं नु त्वमिहागता ॥ ४४ ॥
इमे शाखामृगाः सिंहा व्याघ्रा द्वीपिमृगास्तथा ।
ऋक्षास्तरक्षवः कोकाः कथं तेभ्यो न ते भयं ॥ ४५ ॥
मत्तानां गिरिकल्पानां कुञ्जराणां तरस्विनां ।
कथमेका महारण्ये न बिभेषि शुचिस्मिते ॥ ४६ ॥
कासि कस्य कुतश्च त्वं किंनिमित्तं च दण्डके ।
एकाकिनी प्रविष्टासि घोरे राक्षससेविते ॥ ४७ ॥
इत्यसौ रावणेनोक्ता दुष्टेन जनकात्मजा ।
अविश्वासभयात् तत्र शङ्किता पर्यसर्पत ॥ ४८ ॥
विश्वासं पुनरागत्य ब्राह्मणेति सुमध्यमा ।
प्रत्युवाचानवद्याङ्गी रावणं भिक्षुरूपिणं ॥ ४९ ॥

Digitized by Google

द्विजातिदर्शनं साथ दृष्ट्वा राक्षसमागतं ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिलीव ॥५०॥
उपनीयोदकं पूर्वं वन्येनोपनिमन्त्र्य च ।
अब्रवीत् सिद्धमित्येवं तं पापं सौम्यदर्शनं ॥५१॥
निमन्त्रयन्तीं परिपूर्णभाषिणीं
नरेन्द्रपुत्रीं प्रसमीक्ष्य रावणः ।
प्रसक्त तस्या हरणे दृढव्रतः
सकाममात्मानमसावमन्यत ॥५२॥
स तां वरोरुं मृगयागतं पतिं
प्रतीक्षमाणां सह लक्ष्मणेन च ।
निरीक्षमाणो रहिते समन्ततो
महावने प्रीतमना बभूव ह ॥५३॥

इत्यार्षे रामायणे आरण्यककाण्डे सीतारावणसंवादो
नाम द्विपञ्चाशः सर्गः ॥

Digitized by Google

## LIII.

अथोक्तं मधुरं वाक्यं रावणेन वराङ्गना ।
चिन्तयित्वा तु वैदेही ततो वचनमब्रवीत् ॥ १ ॥
दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते भार्या रामस्य धीमतः ॥ २ ॥
संवत्सरं चाध्युषिता राघवस्य निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ ३ ॥
ततः संवत्सरादूर्ध्वं सममन्यत मे पतिं ।
अभिषेचयितुं राजा संमन्त्र्य सचिवैः सह ॥ ४ ॥
तस्मिन् संक्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तारमनार्या श्वशुरं मम ॥ ५ ॥
प्रतिगृह्य प्रणयिनी प्रथमं सुकृतेन वै ।
मम प्रव्राजनं भर्तुर्देवी वरमयाचत ॥ ६ ॥
न शयिष्ये न पास्यामि न च भोक्ष्ये कदाचन ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ७ ॥
यस्त्वया मे वरो दत्तः पुरा देवासुरे प्रभो ।
तत्सत्यं कुरु राजेन्द्र प्रतिज्ञापारगो भव ॥ ८ ॥
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यतां ।
राघवश्च वनं घोरमद्यैव प्रतिपद्यतां ॥ ९ ॥

Digitized by Google

चतुर्दश हि वर्षाणि चीरकृष्णाजिनाम्बरः ।
रामश्च प्रेष्यतां शीघ्रं भरतश्चाभिषिच्यतां ॥ १० ॥
इति ब्रुवाणां कैकेयीं श्वशुरो मे महारथः ।
वाक्यैरयाचत धर्म्यैर्न तदाज्ञां चकार सा ॥ ११ ॥
मम भर्ता महावीर्यो गुणवान् सत्यवाक् शुचिः ।
रामेति प्रथितो लोके सर्वभूतहिते रतः ॥ १२ ॥
तं च राजा महातेजाः पिता दशरथः स्वयं ।
कैकेय्याः प्रियकामार्थं रामं नैवाभ्यषेचयत् ॥ १३ ॥
अथाभिषेकाय पितुः समीपं राममागतं ।
कैकेयी मम भर्तारमित्युवाच दृढव्रतं ॥ १४ ॥
तव पित्राभ्यनुज्ञातं ममेदं शृणु राघव ।
भरताय प्रदास्यामि पितृराज्यमकण्टकं ॥ १५ ॥
त्वया च खलु वस्तव्यं नव वर्षाणि पञ्च च ।
वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् ॥ १६ ॥
तथेत्युवाच तां रामः कैकेयीं पितुरग्रतः ।
चकार वचनं तस्या मम भर्ता दृढव्रतः ॥ १७ ॥
दद्यान्न प्रतिगृह्णीयान्न ब्रूयादनृतां गिरं ।
एतद्ब्राह्मण रामस्य व्रतं ध्रुवमनुत्तमं ॥ १८ ॥
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
रामस्य पुरुषव्याघ्रः सहायः समपद्यत ॥ १९ ॥

Digitized by Google

तेनोच्यमानस्तेजस्वी राघवो हेतुमद्वचः ।
लक्ष्मणं प्रत्युवाचेदं सत्ये मे रमते मनः ॥ २० ॥
तं भ्राता लक्ष्मणो धीमान् धर्मचारी महाबलः ।
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ॥ २१ ॥
ते वयं प्रच्युता राज्यात् कैकेय्या वचनात् त्रयः ।
विचरामो द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥ २२ ॥
तस्मिन् व्यालसमाकीर्णे वने प्रतिवसामहे ।
समाश्वसिहि तावत् त्वं शक्यं वस्तुमिह त्वया ॥ २३ ॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलं ।
स त्वं नाम च गोत्रं च कुलं चाचक्ष्व तत्त्वतः ॥ २४ ॥
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ।
रामो मे संशयो नास्ति यथा त्वां सत्करिष्यति ॥ २५ ॥
यतयश्च प्रियास्तस्य भर्ता प्रियकथश्च मे ।
एवं ब्रुवत्यां सीतायां रामपत्न्यां महाबलः ॥ २६ ॥
कामबाणार्दितस्तत्र राक्षसस्त्विदमब्रवीत् ।
शृणु यश्च यतश्चाहं श्रुत्वा मां प्रतिमानय ॥ २७ ॥
अनेन छद्मना भद्रे स्वयं त्वां द्रष्टुमागतः ।
येन विद्राविता लोकाः सामराः सामराधिपाः ॥ २८ ॥
अहं स रावणो नाम सर्वलोकप्रतापनः ।
यस्यादेशाच्च सुश्रोणि खरो रक्षति दण्डकं ॥ २९ ॥

Digitized by Google

भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि ।
पुत्रो विश्रवसः शूर औरसोऽहं महात्मनः ॥ ३० ॥
पुलस्त्यो ब्रह्मणः पुत्रः पौत्रस्तस्याहमङ्गने ।
स्वयम्भुवा दत्तवरः कामरूपी मनोगतिः ॥ ३१ ॥
दशग्रीव इति ख्यातो लोके ख्यातपराक्रमः ।
विश्रुतं कर्मजं नाम रावणोऽस्मि शुचिस्मिते ॥ ३२ ॥
त्वां तु काञ्चनगर्भाभां पीतकौषेयवासिनीं ।
रतिं स्वकेषु दारेषु नाधिगच्छामि चिन्तयन् ॥ ३३ ॥
बह्वीनामुत्तमस्त्रीणां भार्याणां मम मैथिलि ।
सर्वासामेव तासां त्वं ममाग्रमहिषी भव ॥ ३४ ॥
लङ्का नाम समुद्रस्य द्वीपश्रेष्ठा पुरी मम ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥ ३५ ॥
तप्तहेममयैः शृङ्गैरुच्छ्रितैरभ्यलंकृता ।
खातगम्भीरपरिखा प्रासादाट्टावतंसका ॥ ३६ ॥
विश्रुता त्रिषु लोकेषु यथेन्द्रस्यामरावती ।
नीलजीमूतवर्णानां राक्षसानां महापुरी ॥ ३७ ॥
विश्वकर्मकृता दिव्या त्रिंशद्योजनविस्तृता ।
तत्र सीते मया सार्धं वनेषु विचरिष्यसि ॥ ३८ ॥
न चास्यारण्यवासस्य स्पृहयिष्यसि भाविनि ।
मम मूर्धाभिषिक्तस्य राक्षसानां महात्मनां ॥ ३९ ॥

Digitized by Google

सुरूपा बह्वो भार्यास्तासां त्वं प्रथमा भव ।
पञ्चदासीशतानि त्वां सर्वाभरणभूषितां ॥ ४० ॥
सीते परिचरिष्यन्ति भार्या मे भव शोभने ।
सप्तसप्तकवेत्ताह्मष्टाष्टकविभूषितः ॥ ४१ ॥
पञ्चपञ्चकतत्त्वज्ञो रावणोऽहं भजस्व मां ।
रावणेनैवमुक्ता सा रुषिता जनकात्मजा ॥ ४२ ॥
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसं ।
महाचलमिवाकम्प्यं महेन्द्रसदृशं पतिं ॥ ४३ ॥
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ।
पूर्णचन्द्रनिभं शूरं राजपुत्रं जितेन्द्रियं ॥ ४४ ॥
पृथुकीर्तिं महावीर्यमहं राममनुव्रता ।
महाबलं महोरस्कं सिंहविक्रान्तगामिनं ॥ ४५ ॥
सिंहं सिंहीव विक्रान्तमहं राममनुव्रता ।
त्वं पुनर्जम्बुको व्याघ्रीं मामिच्छसि सुदुर्लभां ॥ ४६ ॥
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ।
पादपान् काञ्चनान् नूनं बहून् पश्यसि दुर्मते ॥ ४७ ॥
राघवस्य प्रियां भार्यां यस्त्वं हर्तुमिहेच्छसि ।
कोपितस्येव बलिनो मृगशत्रोस्तरस्विनः ॥ ४८ ॥
सिंहस्य खादतो मांसं मुखादादातुमिच्छसि ।
यो रामस्य प्रियां भार्यां बलात् त्वं हर्तुमिच्छसि ॥ ४९ ॥



Digitized by Google

त्वं क्षुरं जिह्वया लेढि सूच्या स्पृशसि लोचने ।
यो रामस्य प्रियां भार्यां पापबुद्ध्या निरीक्षसे ॥ ५० ॥
व्याघ्र्यास्तरुणपुत्राया: प्रग्रामादातुमिच्छसि ।
यो रामस्य प्रियां भार्यां विध्वंसयितुमिच्छसि ॥ ५१ ॥
अवसज्य शिलां कण्ठे सागरं तर्तुमिच्छसि ।
रामस्य दयितां भार्यां यस्त्वं हर्तुमिहेच्छसि ॥ ५२ ॥
अयोमुखानां शूलानामग्रे चरितुमिच्छसि ।
रामस्य सदृशीं भार्यां यदि त्वं नेतुमिच्छसि ॥ ५३ ॥
अग्निं प्रज्वलितं बद्धा वस्त्रान्ते नेतुमिच्छसि ।
कल्याणवृत्तां रामस्य भार्यां यो हर्तुमिच्छसि ॥ ५४ ॥
कृष्णसर्पमतिक्रुद्धं निश्वसन्तं महाविषं ।
स्प्रष्टुमिच्छसि हस्तेन यन्मां त्वमभिकाङ्क्षसे ॥ ५५ ॥

यदन्तरं सिंहशृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः ।
सुराष्ट्रसौवीरकयोर्यदन्तरं
तदन्तरं वै तव राघवस्य ॥ ५६ ॥

यदन्तरं काञ्चननीललोहयोर्
यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिविडालयोर्भवेत्
तदन्तरं स्यात् तव राघवस्य ॥ ५७ ॥

Digitized by Google

यदन्तरं वायसवैनतेययोर्
यदन्तरं वर्हिणलावयोर्भवेत् ।
यदन्तरं सारसगृध्रयोर्भवेत्
तदन्तरं ते रघुनन्दनस्य च ॥ ५८ ॥

तस्मिन् सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये
वज्रं यथा मक्षिकया निगीर्णं ॥ ५९ ॥

शक्या शची वज्रधरस्य हर्तुं
शिखापि वा दीप्तशिखस्य वह्नेः ।
स्थाणोरुमा वा जगदीश्वरस्य
नाहं त्वया रावण राघवस्य ॥ ६० ॥

इतीव तद्वाक्यमदुष्टभावा
सुदुष्टमुक्ता रजनीचरेण ।
प्रत्युच्य सीता व्यथिता चकम्पे
छिन्नेव युक्ता कदली गजेन ॥ ६१ ॥

तां वेपमानामभिवीक्ष्य सीतां स रावणो मृत्युसमप्रभावः ।
कुलं बलं नाम तथैव वीर्यं समाचचक्षे भयकारणार्थं ॥ ६२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे सीतारावणसंवादो
नाम त्रिपञ्चाशः सर्गः ॥

Digitized by Google

## LIV.

एवं ब्रुवत्यां सीतायां संरब्धपरुषाक्षरं ।
ललाटे भ्रूकुटीं बद्ध्वा रावणः प्रत्युवाच ह ॥ १ ॥
भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि ।
रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥
यस्य देवाः सगन्धर्वाः सपिशाचाः सपन्नगाः ।
विद्रवन्ति भयाद्भद्रे मृत्योरिव मुखात् प्रजाः ॥ ३ ॥
येन वैश्रवणो राजा वैमात्रः कारणान्तरे ।
क्रुद्धेन द्वन्द्वमासाद्य मया विक्रम्य निर्जितः ॥ ४ ॥
यद्भयात् संपरित्यज्य स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥
तस्यैतत् पुष्पकं नाम विमानं कामगं महत् ।
वीर्यादवजितं भद्रे येन यामि विहायसा ॥ ६ ॥
मम संजातरोषस्य मुखं दृष्ट्वैव मैथिलि ।
विद्रवन्ति परित्रस्ताः सर्वे लोका दिशो दश ॥ ७ ॥
मया शक्रोऽपि विक्रम्य मत्तैरावणगर्वितः ।
वृतः सुरगणैः सर्वैः समरे निर्जितः पुरा ॥ ८ ॥
पाशहस्तो विपाशस्तु रणे वरुण एव च ।
भग्नः प्रयातः सहसा मया सीते ह्यपां पतिः ॥ ९ ॥

Digitized by Google

कालमुद्गरहस्तश्च मृत्युप्रहरणो रणे ।
यमो याम्यां दिशं नीतो मद्भयान्न विचेष्टते ॥ १० ॥
त इमे लोकपाला वै समग्रैर्दैवतैः सह ।
मामग्रे यान्ति गच्छन्तं शङ्किताः सर्वतो दिशः ॥ ११ ॥
यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः ।
तीक्ष्णांशुः शिशिरांशुत्वं भयात् संपद्यते रविः ॥ १२ ॥
निष्कम्पपर्णास्तरवो नद्यश्च तिमितोदकाः ।
भवन्ति तत्र यत्राहं तिष्ठामि विचरामि च ॥ १३ ॥
मम पारे समुद्रस्य लङ्का नाम महापुरी ।
संपूर्णा राक्षसैर्घोरैरिन्द्रस्येवामरावती ॥ १४ ॥
प्राकारेण प्रवृद्धेन पाण्डरेण समावृता ।
हेमकक्षा दृष्टिरम्या वैदूर्यमणितोरणा ॥ १५ ॥
हस्त्यश्वरथसंबाधा तूर्यनादनिनादिता ।
सर्वकामफलैर्वृक्षैरुद्यानैश्चैव भूषिता ॥ १६ ॥
तस्मिन् वसन्ती त्वं सीते राजपुत्री मया सह ।
न स्मरिष्यसि नारीणां मानुषीणां मनस्विनि ॥ १७ ॥
भुञ्जानामानुषान् भोगान् दिव्यांश्च वरवर्णिनि ।
न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥ १८ ॥
स्थापयित्वा प्रियं पुत्रं राज्ये दशरथो नृपः ।
मन्दवीर्यं ततो ज्येष्ठं पुत्रं प्रास्थापयद्वनं ॥ १९ ॥

Digitized by Google

तेन किं भ्रष्टराज्येन रामेण गतचेतसा ।
करिष्यसि विशालाक्षि तापसेन तपस्विनी ॥ २० ॥
सर्वराक्षसभर्तारं कामात् स्वयमिहागतं ।
न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥ २१ ॥
प्रत्याख्याय हि मां भीरु परितापं गमिष्यसि ।
ताडयित्वेव पादेन पुरूरवसमुर्वशी ॥ २२ ॥
एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना ।
अब्रवीत् परुषं वाक्यं रहिते राक्षसेश्वरं ॥ २३ ॥
कथं वैश्रवणं देवं सर्वसत्त्वनमस्कृतं ।
भ्रातरं त्वं व्यपदिशन् पापं कर्तुमिहेच्छसि ॥ २४ ॥
अवश्यं हि विनङ्क्ष्यन्ति सर्वे रावण राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २५ ॥
अपनीय शचीं भार्यां शक्यमिन्द्रस्य जीवितुं ।
न तु मामपनीयेह शक्यं रामस्य जीवितुं ॥ २६ ॥
जीवेच्चिरं वज्रधरस्य पत्नीं शचीं प्रहृत्यापि निशाचरेश ।
न त्वेव रामस्य विधाय पापं शक्तश्चिरं जीवितुमन्तकोऽपि ॥ २७ ॥
श्रियमिह विपुलां विहाय रौद्रीं द्विजगणसिद्धगणान् निमथ्य संख्ये ।
यमविषयमितो गमिष्यसि त्वं हत इह राघवसायकैः प्रदीप्तैः ॥ २८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे सीतारावणसंवादो
नाम चतुःपञ्चाशः सर्गः ॥

Digitized by Google

## LV.

सीतायास्तद्वचः श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं विनिष्पिष्य चकार सुमहद्वपुः ॥ १ ॥
स परिव्राजकच्छद्मा महाकायशिरोधरः ।
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः ॥ २ ॥
सद्यः सौम्यं परित्यज्य भिक्षुरूपं निशाचरः ।
स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ३ ॥
महाललाटो रक्ताक्षो व्यूढोरस्को महाभुजः ।
सिंहदंष्ट्रो वृषस्कन्धश्चित्राङ्गो दीप्तमूर्धजः ॥ ४ ॥
कृष्णः संहृष्टरोमाङ्गः कृष्णाञ्जनगिरिप्रभः ।
रक्ताम्बरधरो घोरस्तप्तकाञ्चनकुण्डलः ॥ ५ ॥
स तामसितकेशान्तां विप्रनष्टविशेषकां ।
रुचिराभरणोपेतां प्रत्युवाच निशाचरः ॥ ६ ॥
यदि मां स्वेन रूपेण भर्तारं न त्वमिच्छसि ।
वशे त्वां हि करिष्यामि स्वयमेवाबले बलात् ॥ ७ ॥
वत्स्यसे यद्य वीर्येण रामं त्वद्गतचेतसं ।
उन्मत्ते न श्रुतं मन्ये मम वीर्यं त्वयातुलं ॥ ८ ॥
उद्वहेयं भुजाभ्यां हि मेदिनीमम्बरे स्थितः ।
आपिबेयं समुद्रं च मृत्युं हन्यां रणे स्थितः ॥ ९ ॥

Digitized by Google

अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्निर्भिन्द्यां मेदिनीतलं ।
कामरूपिणमुन्मत्ते पश्य मां कामदं पतिं ॥ १० ॥
एवमुक्ता तु वैदेही रावणेन शिखिप्रभे ।
ददर्श रक्तपर्यन्ते नेत्रे क्रुद्धस्य रक्षसः ॥ ११ ॥
स च संरक्तनयनस्तप्तकाञ्चनकुण्डलः ।
दशास्यः कार्मुकी बाणी बभूव क्षणदाचरः ॥ १२ ॥
संरक्तनयनः पापः कालजीमूतसंनिभः ।
रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीं ॥ १३ ॥
स तामसितकेशान्तां भास्करस्य प्रभामिव ।
वसनाभरणोपेतां रावणः प्राह मैथिलीं ॥ १४ ॥
कथं रामं च वैदेहि चीरवल्कलवाससं ।
वातातपाभ्यां तप्ताङ्गं दुर्बुद्धिमनुरज्यसे ॥ १५ ॥
त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ।
मां भजस्व चिराय त्वमहं श्लाघ्यस्तवाश्रयः ॥ १६ ॥
नैवायासं क्वचिद्भद्रे प्राप्स्यसे न च विप्रियं ।
त्यज्यतां मानुषे भावो मयि भावो विधीयतां ॥ १७ ॥
राक्षसेति समुद्वेगं न त्वमागन्तुमर्हसि ।
अहं तव वशे भीरु भविष्यामि न संशयः ॥ १८ ॥
संवत्सरं तत्र गतां न त्वां वक्ष्यामि विप्रियं ।
यावद्रामस्य निर्वेदस्तव वै चित्तमागतः ॥ १९ ॥

Digitized by Google

राज्यच्युतमसिद्धार्थं रामं परिमितायुषं ।
कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि ॥ २० ॥
यः स्त्रिया वचनाद्राज्यं विहाय स सुहृज्जनं ।
अस्मिन् व्यालानुचरिते वने वसति दुर्मतिः ॥ २१ ॥
इत्युक्त्वा मैथिलीं वाक्यं दुष्टात्मा काममोहितः ।
जग्राह रावणः सीतां खे बुधो रोहिणीमिव ॥ २२ ॥
प्रत्युवाच ततः सीता क्रुद्धा साश्रुपरिप्लुता ।
हतस्त्वं तेजसा पाप राघवस्य महात्मनः ॥ २३ ॥
सानुगस्त्यक्ष्यसि प्राणान् दुर्बुद्धे राक्षसाधम ।
एवमुक्तस्य वैदेह्या रावणस्य दुरात्मनः ॥ २४ ॥
भृशं जीमूतवर्णानि वदनानि चकाशिरे ।
अग्निज्वालाप्रभैर्नेत्रैर्भ्रूजिह्मैः सुविभीषणैः ॥ २५ ॥
वैदेहीं रावणः क्रुद्धो निर्दहन्निव राक्षसः ।
सव्येन सीतां पद्माक्षीं मूर्धजेषु करेण सः ॥ २६ ॥
ऊर्वोस्तु दक्षिणेनैनामग्रहीत् पाणिना शुभां ।
सा गृहीता विचुक्रोश राक्षसेन बलीयसा ॥ २७ ॥
हार्यपुत्र न मां पासि वीरहा लक्ष्मणेति च ।
तं दृष्ट्वा गिरिशृङ्गाभं तीक्ष्णदंष्ट्रं महाबलं ॥ २८ ॥
व्यद्रवन्त सुसंत्रस्ता भयार्ता वनदेवताः ।
रामकामां स कामार्तः पन्नगेन्द्रवधूमिव ॥ २९ ॥

चेष्टमानां परिगृह्य उत्पपात ततो नभः ।
गृहीत्वा स तु बाहुभ्यामुत्पपात महाबलः ॥ ३० ॥
गरुडः शीघ्रमादाय पन्नगेन्द्रवधूमिव ।
स च मायामयो दिव्यः खरयुक्तः खरस्वनः ॥ ३१ ॥
प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ।
ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वरः ॥ ३२ ॥
अङ्केनादाय वैदेहीं रथमारोपयत् तदा ।
अर्धरात्रार्धदिवसे अर्धचन्द्रार्धभास्करे ॥ ३३ ॥
रक्षो जग्राह वैदेहीं शूद्रो वेदश्रुतीमिव ।
सा गृहीता प्रचुक्रोश राक्षसेन मनस्विनी ॥ ३४ ॥
हार्यपुत्रेति दुःखार्ता पतिं दूरचरं वने ।
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ॥ ३५ ॥
मत्तेव मन्दं प्रोवाच भ्रान्तचित्तेव चातुरा ।
हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ॥ ३६ ॥
ह्रियमाणां न जानीषे राक्षसेन दुरात्मना ।
ननु रामाविनीतानां विनेतासि परंतप ॥ ३७ ॥
धर्मशील महाबाहो सत्यव्रत महायशः ।
ह्रियमाणामनाथां मां राक्षसेन न पश्यसि ॥ ३८ ॥
रक्षसामविनीतानां विनेतासि परंतप ।
कथमेवंविधं पापं न त्वं शास्सि च रावणं ॥ ३९ ॥

Digitized by Google

तत्त्वधर्मापनीतस्य दृश्यते कर्मणः फलं ।
जीवितान्तफलं नूनं रावणः समवाप्स्यति ॥ ४० ॥
हन्तेदानीं सकामास्तु कैकेयी सह बान्धवैः ।
ह्रियेऽहं धर्मकामस्य धर्मपत्नी चिराय यत् ॥ ४१ ॥
भवत्वद्य प्रहृष्टा सा कैकेयी दुष्टचारिणी ।
यया प्रस्थापितो रामः सभार्यो निर्जनं वनं ॥ ४२ ॥
आमन्त्रये जनस्थानं वन्दे वृक्षांश्च पुष्पितान् ।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ४३ ॥
टङ्कवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिं ।
क्षिप्रं रामाय शंसेथाः सीतां हरति रावणः ॥ ४४ ॥
सुखगन्धाश्च वन्देऽहं वनराजीः सुपुष्पिताः ।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ४५ ॥
हंससारससंघुष्टां वन्दे गोदावरीं नदीं ।
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥ ४६ ॥
दैवतानि च यान्यस्मिन् वने विविधपादपे ।
नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृतां ॥ ४७ ॥
यानि कानिचिदप्यस्मिन् निवसन्ति महावने ।
सर्वाणि शरणं यामि सत्त्वानि विविधान्यहं ॥ ४८ ॥
यावान् पक्षिगणः कश्चिद्दंष्ट्रिणश्च महाबलाः ।
तिष्ठन्तीह महारण्ये तानहं शरणं गता ॥ ४९ ॥

Digitized by Google

असान्निध्यात् तु रामस्य लक्ष्मणस्य च धीमतः ।
रावणेनापकृष्टास्मि रामायेच्छामि शंसितुं ॥५०॥
ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीं ।
विवशां रक्षसानेन शंसध्वं राघवाय मां ॥५१॥
मां विदित्वा महाबाहुर्हृतेति स महामनाः ।
आनयिष्यति विक्रम्य यमस्य विषयादपि ॥५२॥

इत्यार्षे रामायणे आरण्यककाण्डे सीताहरणं
नाम पञ्चपञ्चाशः सर्गः ॥

Digitized by Google

## LVI.

अथ रम्ये गिरिप्रस्थे कानने विविधाश्रये ।
पक्षिराजो महातेजा महाबलपराक्रमः ॥ १ ॥
प्रसुप्तः पृष्ठतः कृत्वा दीप्यमानं दिवाकरं ।
तं शब्दं शुश्रुवे तत्र स्वप्ने वाक्यमिवाहृतं ॥ २ ॥
तेन वाक्येन पक्षीन्द्रः प्रविष्टेन श्रुतेः पथं ।
वज्रस्येव निपातेन ताडितो हृदये भृशं ॥ ३ ॥
प्रतिबुद्धस्तु वेगेन स्नेहाद्दशरथस्य च ।
रथशब्दं स शुश्राव मेघगर्जितनिःस्वनं ॥ ४ ॥
स निरीक्ष्य दिशः सर्वा जटायुः क्रमशो नभः ।
अपश्यद्रावणं सोऽथ क्रन्दन्तीं तां च जानकीं ॥ ५ ॥
ह्रियमाणां तु तां दृष्ट्वा स्नुषामथ स पक्षिराट् ।
क्रोधेन महताविष्टो वेगेनोत्पतितो नभः ॥ ६ ॥
समुत्पत्य ततः पक्षी स बली तस्य रक्षसः ।
रथमार्गमवष्टभ्य स्थितः क्रोधादिव ज्वलन् ॥ ७ ॥
स रुद्ध्वा रथमार्गं तु पक्षिराडिव पर्वतः ।
वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरं ॥ ८ ॥
दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रयः ।
जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः ॥ ९ ॥

Digitized by Google

त्वं च राक्षसवंशस्य प्रवरः सुमहाबलः ।
विबुधाश्च त्वया राजन् बहुशो निर्जिता रणे ॥ १० ॥
मम वृद्धस्य पौलस्त्य बलहीनस्य पक्षिणः ।
विक्रमं द्रक्ष्यसे युद्धे जीवंश्चैव न यास्यसि ॥ ११ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
लोकानां च हिते युक्तो रामो दशरथात्मजः ॥ १२ ॥
तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ।
सीता नाम वरारोहा यां त्वं हर्तुमिहोद्यतः ॥ १३ ॥
कथं राजा स्थितो धर्मे परदारान् परामृषेत् ।
रक्षणीया विशेषेण परदारा महीभृतां ॥ १४ ॥
निवर्तय मतिं नीच परदाराभिमर्षणात् ।
मा त्वां वृक्षादिव फलं पातयिष्ये रथोत्तमात् ॥ १५ ॥
समाचरेन्न तद्धीरो यत् परेषां विगर्हितं ।
यथात्मनस्तथान्येषां रक्ष्या दारा विमृश्यतां ॥ १६ ॥
कामं स्वभावो यो यस्य न स शक्यः प्रमार्जितुं ।
न हि दुष्टात्मनामार्या निवसन्त्यालये चिरं ॥ १७ ॥
अर्थं वा यदि वा कामं नयशास्त्रेष्वनागतं ।
व्यवस्येन्न नरः पापं धर्मात् पौलस्त्यनन्दन ॥ १८ ॥
राजा धर्मस्य कामस्य द्रव्याणां चोत्तमो निधिः ।
धर्मं शुभं वाप्यशुभं राजमूलात् प्रवर्तते ॥ १९ ॥

Digitized by Google

पापस्वभावश्चपलः कथं त्वं राक्षसाधम ।
ऐश्वर्यमपि संप्राप्तो विमानमिव दुष्कृती ॥ २० ॥
विषये वा पुरे वापि यदा रामस्तवानघः ।
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ २१ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ।
अतिवृत्तो हतः पापः को दोषो राघवस्य तु ॥ २२ ॥
चतुर्दशसहस्राणि राक्षसानां यदा ययुः ।
रामलक्ष्मणनाशाय राघवेण च ते हताः ॥ २३ ॥
अत्र ब्रूहि यथासत्यं को रामस्य व्यतिक्रमः ।
यस्य त्वं लोकनाथस्य भार्यां हर्तुमिहोद्यतः ॥ २४ ॥
क्षिप्रं विसृज वैदेहीं मा त्वां घोरेण चक्षुषा ।
दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा । २५ ॥
सर्पमाशीविषं बद्धा वस्त्रान्ते नावबुध्यसे ।
ग्रीवायां च समासक्तं कालपाशं न बुध्यसे ॥ २६ ॥
स भावो मूढ कर्तव्यो यो नरं नावसादयेत् ।
न रत्नं प्रतिवोढव्यं यद्रत्नं क्षयमावहेत् ॥ २७ ॥
यत् कृत्वा न भवेद्धर्मो यत् कृत्वा न भवेद्यशः ।
शरीरदोषश्च भवेन्न तत् कर्म समाचरेत् ॥ २८ ॥
षष्टिवर्षसहस्राणि मम जातस्य रावण ।
पितृपैतामहं राज्यं यथावदनुशासतः ॥ २९ ॥

Digitized by Google

वृद्धोऽहं त्वं युवा वीर रथस्थः कवची शरी ।
न चाप्यादाय वैदेहीं कुशली त्वं गमिष्यसि ॥ ३० ॥
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ।
हेतुभिर्न्यायसंबद्धैः शूद्रो वेदश्रुतीमिव ॥ ३१ ॥
इत्युक्तस्य यथान्यायं राक्षसस्य जटायुषा ।
क्रुद्धस्याग्निनिभा घोरा विरेजुर्विंशतिर्दृशः ॥ ३२ ॥
संरक्तनयनः कोपात् तप्तकाञ्चनकुण्डलः ।
राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ ३३ ॥
स संप्रहारस्तुमुलस्तयोस्तस्मिन् महावने ।
बभूव वातोद्धुतयोर्गगने मेघयोरिव ॥ ३४ ॥
तुण्डपक्षप्रहारेण जटायुश्चरणायुधः ।
रावणश्च महावीर्यो युयुधाते परस्परं ॥ ३५ ॥
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोर्महत् ।
शब्दस्तयोर्भृशं तत्र गगने मेघयोरिव ॥ ३६ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
अभ्यवर्षन्महाघोरैर्गृध्रराजं शरोर्मिभिः ॥ ३७ ॥
स तानि शरजालानि गृध्रः पत्ररथेश्वरः ।
जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ३८ ॥
ततः स क्रोधसंरक्तो विकीर्ण इव पर्वतः ।
पृष्ठेऽस्य न्यपतद्गृध्रो नखैश्च विचकर्त सः ॥ ३९ ॥

Digitized by Google

तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
चक्रे सरुधिरान् गात्रे व्रणांश्च पतगेश्वरः ॥ ४० ॥
स चाप्यशनिसंकाशैः स्वर्णपुङ्खैरजिह्मगैः ।
निर्बिभेद गृध्रपतिमतिक्रुद्धो दशाननः ॥ ४१ ॥
स रावणविमुक्तांस्तु शरान् वै पतगेश्वरः ।
अचिन्तयन् प्रहारांस्तान् रावणं समुपाद्रवत् ॥ ४२ ॥
उत्पत्य च महाबाहुः पक्षावुद्यम्य मूर्धनि ।
पक्षाभ्यामतिसंरब्धस्ताडयामास रावणं ॥ ४३ ॥
ततोऽस्य सशरं चापं मणिमुक्ताविभूषितं ।
चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ४४ ॥
भङ्क्त्वाग्निसदृशं दिव्यं रावणस्य शरासनं ।
पक्षाभ्यां स महातेजा दुद्राव पतगेश्वरः ॥ ४५ ॥
ततो बहुश आविध्य तत्किरीटं महाबलः ।
जाम्बूनदमयं दिव्यं सर्वरत्नोपशोभितं ॥ ४६ ॥
व्यसर्जयत पक्षीन्द्रो रोषाविष्टो नभस्तले ।
अशोभत पतत् तच्च सूर्यमण्डलसंनिभं ॥ ४७ ॥
काञ्चनावच्छदान् हत्वा पिशाचवदनान् खरान् ।
विकृष्य तरसा पक्षी क्षिप्रं प्राणैर्व्ययोजयत् ॥ ४८ ॥
कामगं तु महाघोरं चक्रकूवरभूषणं ।
मणिहेमविचित्राङ्गं बभञ्ज च महारथं ॥ ४९ ॥

समाक्षिप्य रथात् तस्मात् सारथिं पतगेश्वरः ।
गजाङ्कुशनिभेनाशु दारयित्वा पदासृजत् ॥५०॥
स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥५१॥
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनं ।
साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥५२॥
ततस्तु तं परबलयानभञ्जनं
सुरासुरैः समरमुखेष्वनिर्जितं ।
पराजितं पतगवरेण रावणं
विसिस्मियरे सुरमुनिभिर्विलोक्य तं ॥५३॥
ततोऽस्तुवन् पतगवरं दिवौकसः
सुदुष्करं कृतमिह कर्म तेन यत् ।
प्रशस्यते तु विहगराजसत्तमो
व्यवस्थितः पुनरपि युद्धमर्षितः ॥५४॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुरावणयुद्धं
नाम षट्पञ्चाशः सर्गः ॥

Digitized by Google

## LVII.

कृत्वा तु तन्महत् कर्म जटायुर्जरयान्वितः ।
परिश्रान्तो बभूवाथालक्षयत् तं च रावणः ॥ १ ॥
परिश्रान्तं स तं दृष्ट्वा जरया पक्षिपुङ्गवं ।
उत्पपात पुनर्हृष्टः सीतामादाय रावणः ॥ २ ॥
तां प्रगृह्य निजे चाङ्के हरन्तं जनकात्मजां ।
गृध्रराजः खमुत्पत्य जटायुरिदमब्रवीत् ॥ ३ ॥
वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण ।
अल्पबुद्धे हरस्येतां बधाय खलु रक्षसां ॥ ४ ॥
समित्रबन्धुः सबलः सामात्यः सपरिच्छदः ।
विषपानं पिबस्येतत् पिपासित इवोदकं ॥ ५ ॥
अनुबन्धमजानन्तः कर्मणामविचक्षणाः ।
शीघ्रमेव विनश्यन्ति यथा त्वं हि विनङ्क्ष्यसि ॥ ६ ॥
बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ।
वडिशामिषमादाय बधार्थं मकरो यथा ॥ ७ ॥
सिंहो वा धर्षणां प्राप्य पादस्पर्शमिवोरगः ।
मैथिल्याः स परामर्षं राघवो न सहिष्यति ॥ ८ ॥
न हि जातु दुराधर्षौ धर्मदारपराभवं ।
धर्षणां वाश्रमस्येह सहेते रामलक्ष्मणौ ॥ ९ ॥

Digitized by Google

इमां तस्करभावेन क्रूर पाप नृशंसकृत् ।
यतोऽपनयसे सीतां प्रोक्षितस्त्वं यथा पशुः ॥ १० ॥
हत्वा वा ह्रियते शूरः शेते वा निहतः शरैः ।
तस्कराचरितो मार्गो नैव शूरनिषेवितः ॥ ११ ॥
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण ।
शयिष्यसि हतो भूमौ यथा भ्राता खरस्तव ॥ १२ ॥
असकृत् संयुगे येन निहता दैत्यदानवाः ।
न चिराच्चीरवासास्त्वां राघवो निहनिष्यति ॥ १३ ॥
रामो दाशरथिः श्रीमान् क्षत्रधर्मव्यवस्थितः ।
एवमुक्तो राक्षसेन्द्रः पक्षीन्द्रेण स गर्वितः ॥ १४ ॥
रोषसंरक्तनयन इदं वचनमब्रवीत् ।
सौहार्दं दर्शितं राज्ञस्त्वया दशरथस्य हि ॥ १५ ॥
रामस्य हि तथानृण्यं गतस्त्वं मा कृथाः श्रमं ।
एवमुक्तोऽब्रवीद्वाक्यमविश्रान्तः खगोत्तमः ॥ १६ ॥
यत् ते तेजो बलं शक्तिः पौरुषं यच्च ते महत् ।
तद्दर्शय न मे क्रूर जीवन् प्रतिगमिष्यसि ॥ १७ ॥
परीतकालः पुरुषो यत् कर्म प्रतिपद्यते ।
विनाशायात्मनस्तस्मात् प्रतिपन्नोऽसि तच्च हि ॥ १८ ॥
पापानुबन्धो यस्य स्यात् कर्मणः पाप को नु तत् ।
कुर्वीत लोकाधिपतिः स्वयम्भूर्भगवानपि ॥ १९ ॥

Digitized by Google

अक्षमोऽसत्यसंधश्च परदारी नृशंसकृत् ।
पच्यते नरके घोरे दह्यमानः स्वकर्मणा ॥ २० ॥
एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ।
निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ २१ ॥
गजाङ्कुशनिभैस्तीक्ष्णैर्दारयित्वा भुजान्तरे ॥
नखतुण्डप्रहारैस्तु राक्षसो विदलीकृतः ॥ २२ ॥
स गृहीतो नखैस्तीक्ष्णैर्विचचाल समन्ततः ।
अधिरूढे गजारोहे यथा स्याच्चलितो गजः ॥ २३ ॥
विददार नखैस्तस्य पृष्ठं स पतगेश्वरः ।
तीक्ष्णतुण्डार्पणैर्ग्रीवां नखैः सर्वां व्यदारयत् ॥ २४ ॥
वेदनापीडिताक्षीणि वदनानि चकार सः ।
केशांश्चोत्पाटयामास पक्षतुण्डनखायुधैः ॥ २५ ॥
स तथा गृध्रराजेन कृष्यमाणो मुहुर्मुहुः ।
अमर्षात् स्फुरमाणौष्ठः समकम्पत राक्षसः ॥ २६ ॥
परिगृह्य च वैदेहीं वामेनाङ्केन रावणः ।
तलेनाभिजघानाशु संक्रुद्धस्तु जटायुषं ॥ २७ ॥
जटायुरपि संक्रुद्धः पक्षतुण्डनखैर्मुहुः ।
चकार रावणं संख्ये फुल्लाशोकसमप्रभं ॥ २८ ॥
पुनः क्रुद्धो दशग्रीवः सीतामुत्सृज्य वीर्यवान् ।
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ २९ ॥

Digitized by Google

तयोर्मुहूर्तं संग्रामो बभूवाद्भुतवीर्ययोः ।
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥ ३० ॥
तस्य प्रयतमानस्य रामस्यार्थे स रावणः ।
पक्षौ पादौ च पार्श्वे च चिच्छेदोद्यम्य सायकं ॥ ३१ ॥
स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात ततो गृध्रो धरण्यां मन्दजीवितः ॥ ३२ ॥
तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषं ।
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ३३ ॥
तं कृष्णजीमूतनिकाशकायं
सुपाण्डरोरस्कमुदारसत्त्वं ।
ददर्श लङ्काधिपतिर्जटायुषं
हतं पृथिव्यां कृपणं स्फुरन्तं ॥ ३४ ॥
ततस्तु तं पत्त्ररथं महीतले
निपातितं रावणखड्गनिर्जितं ।
भृशं परिष्वज्य शशिप्रभानना
रुरोद सीता जनकात्मजा तदा ॥ ३५ ॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुर्बधो
नाम सप्तपञ्चाशः सर्गः ॥

Digitized by Google

## LVIII.

तमल्पजीवितं भूमौ स्फुरन्तं राक्षसाधिपः ।
दृष्ट्वा निपातितं तत्र शोणितार्द्रं विचेतनं ॥ १ ॥
न्यस्तां भूमौ च वैदेहीं सारथिं चावलोकयन् ।
पिशाचवदनांस्तांश्च रथं मायामयं च तं ॥ २ ॥
रावणश्छत्त्रधारं च बालव्यजनधारिणौ ।
निहतान् गृध्रराजेन सोऽपश्यद्धरणीतले ॥ ३ ॥
सा तु ताराधिपमुखी रावणेन परिक्षतं ।
गृध्रराजं निपतितं विललाप सुदुःखिता ॥ ४ ॥
निमित्तलक्षणज्ञानं शाकुनं स्वप्नदर्शनं ।
अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ५ ॥
त्वं हि तातो नरेन्द्रस्य राघवस्य महात्मनः ।
निधनं तव पक्षीन्द्र मत्कृते जातमीदृशं ॥ ६ ॥
त्वं हि राजा दशरथो मिथिलाधिपतिः पिता ।
त्वं हि नाथो नरेन्द्रस्य राघवस्य महात्मनः ॥ ७ ॥
भवता पक्षपातेन राघवस्य महात्मना ।
कृतं युद्धं महाप्राज्ञ प्राप्तश्चान्तः सुदारुणः ॥ ८ ॥
जीवन्तीं योऽपि मां रामे ब्रूयादेवं गतां सतीं ।
स शेते निहतो भूमौ कालोऽयं मरणस्य मे ॥ ९ ॥

Digitized by Google

नूनं रामो न जानाति मद्व्यसनमागतं ।
न चासौ खलु काकुत्स्थः सज्यधन्वात्र चारिणं ॥ १० ॥
सकृद्रामं पुनः श्वश्रूं तथा लक्ष्मणमेव च ।
संत्रस्ता सा तु वैदेही क्रन्दति स्म पुनः पुनः ॥ ११ ॥
तां क्लिष्टमाल्याभरणां विवर्णवदनां पुनः ।
अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥ १२ ॥
पादपाग्रेषु सज्जन्तीमालिङ्गन्तीं महाद्रुमान् ।
मुञ्च मुञ्चेति बहुशः क्रोशन्तीं मधुरस्वरां ॥ १३ ॥
तां तु क्षामस्वरां दीनां रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसंनिभः ॥ १४ ॥
क्लिष्टाश्च व्यथिताश्चासन् समस्ताः परमर्षयः ।
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः ॥ १५ ॥
प्रधर्षितायां सीतायां बभूव सचराचरं ।
जगत् सर्वममर्यादमन्धेन तमसावृतं ॥ १६ ॥
दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा ।
कृतं कार्यमिति श्रीमान् व्याजहार पितामहः ॥ १७ ॥
स तु तां राम रामेति रुदन्तीं लक्ष्मणेति च ।
जगामाकाशमादाय रावणो जनकात्मजां ॥ १८ ॥
तप्ताभरणजुष्टाङ्गी पीतकौषेयवाससी ।
राजपुत्री रराजाथ व्योम्नि सौदामिनी यथा ॥ १९ ॥

Digitized by Google

उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः ।
अधिकं परिबभ्राज गिरिर्दीप्त इवाग्निना ॥ २० ॥
नीलजीमूतवर्णाभस्तप्तकाञ्चनकुण्डलः ।
वायुक्षिप्त इवादाय भाति सौदामिनीं घनः ॥ २१ ॥
तस्याः कौषेयमुद्धूतमाकाशे रजतप्रभं ।
बभूवादित्यरागेण ताम्रमभ्रमिवातपे ॥ २२ ॥
तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च ।
च्युतानि पद्मपत्राणि रावणं समवाकिरन् ॥ २३ ॥
अनसूयया यद्दत्तं दिव्यमाच्छादनं तथा ।
अङ्गरागः स्रजश्चैव गगने तदशोभत ॥ २४ ॥
तस्यास्तद्विमलं वक्त्रमाकाशे रावणाङ्कगं ।
बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः ॥ २५ ॥
सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपं ।
शुशुभे काञ्चनी काञ्ची नीलं मणिमिवाश्रिता ॥ २६ ॥
सा पद्मवर्णा मेघाभं रावणं जनकात्मजा ।
विद्युद्घनमिवाविध्य शुशुभे तप्तभूषणा ॥ २७ ॥
तस्या भूषणघोषेण वैदेह्या राक्षसाधिपः ।
बभूव गगने नीलः सघोष इव तोयदः ॥ २८ ॥
उत्तमाङ्गच्युता तस्याः पुष्पवृष्टिर्मनोहरा ।
सीतायाः ह्रियमाणायाः पपात धरणीतले ॥ २९ ॥



Digitized by Google

सा तु रावणवेगेन समुद्भूता समन्ततः ।
पुष्पवृष्टिर्दशग्रीवं पुनरेवाभ्यवर्षत ॥ ३० ॥
अभ्यवर्षत पुष्पाणां धारा वैश्रवणानुजं ।
नगप्रवरमुक्तेव पुष्पवृष्टिर्महीधरं ॥ ३१ ॥
चरणान्नूपुरं भ्रष्टं वैदेह्याः पावकोपमं ।
विद्युन्मण्डलसंकाशं पपात धरणीतले ॥ ३२ ॥
निष्टप्तकनकाभा सा नीलाङ्गं राक्षसाधिपं ।
शोभयामास वैदेही गजं कक्षेव काञ्चनी ॥ ३३ ॥
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ।
जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ ३४ ॥
तस्यास्तान्यग्निवर्णानि भूषणानि महीतले ।
सद्यः खान्निर्व्यशीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३५ ॥
विशीर्णः पाण्डरः श्रीमांस्तस्या हारः स्तनान्तरात् ।
वैदेह्या निपतन् भाति गङ्गेव नभसश्च्युता ॥ ३६ ॥
ततस्तु वाताभिहता नानाद्विजकुलावृताः ।
मा भैषीरिति धूताग्रा व्याजह्रुरिव पादपाः ॥ ३७ ॥
नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः ।
वयस्या इव चामुष्याः शोचन्ति जनकात्मजां ॥ ३८ ॥
तथा महावने क्रुद्धाः सिंहव्याघ्रमृगद्विपाः ।
अन्वधावंस्तदा सीतां सर्वे छायानुगामिनः ॥ ३९ ॥

Digitized by Google

जलप्रपातविरुतैः शृङ्गैरुच्छ्रितबाहवः ।
सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ४० ॥
ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
परिध्वस्तप्रभाजाल आसीत् पाण्डरमण्डलः ॥ ४१ ॥
नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ।
यत्र रामस्य वैदेहीं सीतां हरति रावणः ॥ ४२ ॥
इति सर्वाणि भूतानि गगने पर्यदेवयन् ।
दृष्ट्वा सीतां परामृष्टां रावणेन यशस्विनीं ॥ ४३ ॥
हा लक्ष्मणेति रामेति क्रोशन्तीं मधुराक्षरं ।
अवेक्षमाणां वैदेहीं बहुशो धरणीतलं ॥ ४४ ॥
स तामाकुलकेशान्तां विप्रनष्टविशेषकां ।
जहारात्मविनाशाय दशग्रीवो मनस्विनीं ॥ ४५ ॥

ततस्तु सा वै रुदती शुचिस्मिता
विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ
विवर्णवक्त्रा भयमोहमूर्छिता ॥ ४६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणप्रतिप्रयाणं
नाम अष्टापञ्चाशः सर्गः ॥

LIX.

गच्छन्ती साथ वैदेही रावणाङ्के मनस्विनी ।
रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपं ॥ १ ॥
रुदती रावणं सीता ह्रियमाणेदमब्रवीत् ।
परमं खलु वीर्यं ते दृश्यते राक्षसाधिप ॥ २ ॥
न व्यपत्रपसे नीच कर्मणानेन रावण ।
ज्ञात्वा विरहितां यो मां बलात् त्वं हर्तुमिच्छसि ॥ ३ ॥
त्वयैव नूनं दुष्टात्मन् भीरुणा हर्तुमिच्छता ।
ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४ ॥
परमं खलु वीर्यं ते दृश्यते राक्षसाधिप ।
विश्राव्य नामधेयं ते युद्धेनास्मि विनिर्जिता ॥ ५ ॥
रामस्य सदृशेनैव स्वरेण करुणं च यत् ।
विक्रुष्टं त्वत्प्रयोगोऽसावस्मद्धृदयतापनः ॥ ६ ॥
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
स्त्रियाश्च हरणं नीच रहिते च परस्य च ॥ ७ ॥
कथयिष्यन्ति ते लोके जनाः कर्म जुगुप्सितं ।
सुनृशंसमधर्मिष्ठं तव शौटीर्यमानिनः ॥ ८ ॥
धिक् ते वीर्यं च सत्त्वं च यत् त्वया कथितं स्वयं ।
कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशं ॥ ९ ॥

Digitized by Google

एवं गते तु किं शक्यं कर्तुं यस्त्वं पलायसे ।
मुहूर्तमपि तिष्ठ त्वं न जीवन् प्रतियास्यसि ॥ १० ॥
न हि चक्षुःपथं प्राप्य तयोः पुरुषसिंहयोः ।
ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुं ॥ ११ ॥
न त्वं शक्तः शरस्पर्शं तयोः सोढुं कथञ्चन ।
वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः ॥ १२ ॥
येन त्वं व्यवसायेन बलान्मामभिवाञ्छसि ।
व्यवसायः स ते पाप भविष्यति निरर्थकः ॥ १३ ॥
न ह्यहं तमपश्यन्ती भर्तारं विबुधोपमं ।
उत्सहे शत्रुवशगा प्राणान् धारयितुं चिरं ॥ १४ ॥
सत्यो लोकप्रवादोऽयं श्रूयते भुवि राक्षस ।
यदि ते न श्रुतं पूर्वं तरुण्याः श्रूयतां मम ॥ १५ ॥
दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीं ।
न जिघ्रति मुमूर्षुर्यो न शृणोति न पश्यति ॥ १६ ॥
नूनं त्वं नात्मनः श्रेयः समवेक्षितुमिच्छसि ।
शून्नाथवर्तामिवं यो मां त्वं हर्तुमिच्छसि ॥ १७ ॥
मुमूर्षूणां हि सर्वेषां यत् पथ्यं तन्न रोचते ।
पश्याम्येव हि कण्ठे त्वां कालपाशावपाशितं ॥ १८ ॥
यथा चास्मिन् भयस्थाने न बिभेषि दशानन ।
नूनं हिरण्मयान् मोहात् त्वं पश्यसि महीरुहान् ॥ १९ ॥

Digitized by Google

नदीं वैतरणीं मृत्योः क्षारगम्भीरवाहिनीं ।
खड्गपत्रबलं तत्र भीमं द्रक्ष्यसि रावण ॥ २० ॥
तप्तकाञ्चनप्रख्यां च वैदूर्यहरितच्छदां ।
द्रक्ष्यसे शाल्मलीं कीर्णां तीक्ष्णैरायसकण्टकैः ॥ २१ ॥
बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ।
क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः ॥ २२ ॥
न हि त्वमीदृशं कृत्वा तस्यामीवं दशानन ।
जीवितुं शक्यसि चिरं विषं पीत्वेव दुर्मतिः ॥ २३ ॥
निमेषान्तरमात्रेण विना भ्रात्रा महात्मना ।
रक्षसां निहतान्याजौ सहस्राणि चतुर्दश ॥ २४ ॥
स कथं राघवो वीरः सर्वास्त्रकुशलो बली ।
न त्वां हन्याच्छरैस्तीक्ष्णै रिपुं भार्यापहारिणं ॥ २५ ॥
एतच्चान्यच्च परुषं मैथिली रावणाङ्कगा ।
दुःखशोकसमाविष्टा करुणं विललाप ह ॥ २६ ॥

तथा भृशार्तां बहुशस्तदातुरां
विलापपूर्वां करुणाभिभाषिणीं ।
जहार पापः कृपणां सुदुःखितां
विचेष्टमानां धृतवास्यवेपथुं ॥ २७ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणभर्त्सनं नाम
नवपञ्चाशः सर्गः ॥

Digitized by Google

## LX.

संभ्रान्तश्चैव संहृष्टः प्रगृह्य जनकात्मजां ।
जवेन महताविष्टः संप्रयातो नभस्तलं ॥ १ ॥
पूर्वां दिशं जनस्थानान्मूढचेता जगाम सः ।
जटायुषं निहत्याजौ घोरविक्रमशालिनं ॥ २ ॥
वीक्षमाणो दिशः सर्वा नेत्रैरनिमिषैरिव ।
संभ्रान्तोऽथ स दिङ्मूढः पम्पामभिमुखो ययौ ॥ ३ ॥
उपर्युपरि पम्पायामृष्यमूकं च पर्वतं ।
जगामादाय रुदतीं मैथिलीं राक्षसेश्वरः ॥ ४ ॥
ह्रियमाणा तु वैदेही क्वचिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ॥ ५ ॥
तेषां मध्ये विशालाक्षी कौषेयं कनकप्रभं ।
उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ ६ ॥
मुमोच यदि रामस्य शंसेयुरिति जानकी ।
वसुधासक्तनयना नेत्रजं वारि मुञ्चती ॥ ७ ॥
वस्त्रं सभूषणं क्षिप्रं तेषां मध्ये न्यपातयत् ।
संभ्रमात् तु दशग्रीवः सीतां नैवावबुद्धवान् ॥ ८ ॥
भूषणानि च सर्वाणि दिव्यं चूडामणिं विना ।
विसृजन्तीं वरारोहां तदा वानरसंनिधौ ॥ ९ ॥

Digitized by Google

पिङ्गाक्षास्ते विशालाक्षीं नेत्रैरनिमिषैरिव ।
विक्रोशन्तीं तदा सीतां ददृशुर्वानरर्षभाः ॥ १० ॥
तस्या विचेष्टमानायाः शस्तं वसनमुत्तमं ।
स्रजश्च विविधाश्छिन्नाः पेतुराभरणानि च ॥ ११ ॥
तानि वै कलधौतानि पावकार्चिर्निभानि च ।
नक्षत्रविमलाभानि निपेतुर्गिरिसानुषु ॥ १२ ॥
संभ्रमात् तु दशग्रीवो वैदेहीं नोपलब्धवान् ।
भूषणानि विधुन्वन्तीं तेषां मध्ये वनौकसां ॥ १३ ॥
ऋष्यमूकं तु दृष्ट्वा स पम्पां चैव निशाचरः ।
उपलभ्य दिशस्तत्र चकार गमने मतिं ॥ १४ ॥
स तु पम्पामतिक्रम्य लङ्कामभिमुखः पुरीं ।
जगामादाय रुदतीं मैथिलीं राक्षसाधिपः ॥ १५ ॥
वनानि सरितः शैलान् सरांसि च विहायसा ।
क्षिप्रं समतिचक्राम चापाच्छर इव च्युतः ॥ १६ ॥
अन्तरीक्षगता वाचः ससृजुश्चारणास्तदा ।
एतदन्तो दशग्रीव इति हृष्टतनूरुहाः ॥ १७ ॥
तिमिनक्रनिकेतं तु वरुणालयमक्षयं ।
क्षणेनैवातिचक्राम सागरं सरितां पतिं ॥ १८ ॥
सधूमः परिवृत्तोर्मिः क्रुद्धमीनमहोरगः ।
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥ १९ ॥

Digitized by Google

स सागरमतिक्रम्य लङ्कामासाद्य रावणः ।
विवेशादाय तां शीघ्रं सीतां मृत्युमिवात्मनः ॥ २० ॥
स प्रविश्य पुरीं लङ्कां सुविभक्तमहापथां ।
निदधे रावणः सीतां मयो मायामिवासुरः ॥ २१ ॥
संदिदेश दशग्रीवः पिशाचीर्घोरदर्शनाः ।
रक्षणार्थं समाहूय वैदेह्या राक्षसेश्वरः ॥ २२ ॥
कृताञ्जलिपुटाः सर्वाः सहिताः पुरतः स्थिताः ।
यथा नैनां पुमान् स्त्री वा सीतां पश्येदसंमतः ॥ २३ ॥
तथैव प्रयतितव्यमप्रमत्ताभिरेव हि ।
मणिमुक्तासुवर्णानि वस्त्राण्यजिनचन्दनं ॥ २४ ॥
यद्यदिच्छति वैदेही तद्देयं विदितं मया ।
या च वक्ष्यति वैदेहीं वचनं किञ्चिदप्रियं ॥ २५ ॥
अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियं ।
तथा स राक्षसीरुक्ता राक्षसेन्द्रः प्रतापवान् ॥ २६ ॥
निष्क्रम्यान्तःपुरात् तस्थौ किं कृत्यमिति चिन्तयन् ।
स चिन्तयित्वा सुचिरं रावणो राक्षसेश्वरः ॥ २७ ॥
आजुहाव महावीर्यानष्टौ राक्षसपुङ्गवान् ।
स तान् भीमान् महावीर्यान् वरदानेन मोहितः ॥ २८ ॥
उवाच वचनं स्निग्धं प्रशस्य बलवीर्यतः ।
नानाप्रहरणाः क्षिप्रमितो गच्छत राक्षसाः ॥ २९ ॥



Digitized by Google

जनस्थानं हृतस्थानं भूतपूर्वं खरालयं।
तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ॥३०॥
पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः।
बलं हि सुमहद्यन्मे जनस्थाने निवेशितं ॥३१॥
सदूषणखरं संख्ये हतं तद्रामसायकैः।
हतेन तेन महता मया सृष्टेन राक्षसाः ॥३२॥
संजातं सुमहद्वैरं रामं प्रति सुदारुणं।
निर्यातयितुमिच्छामि वैरं तस्य दुरात्मनः ॥३३॥
न हि लप्स्याम्यहं निद्रामहत्वा राघवं रणे।
तस्माद्भवद्भिस्तत् कार्यं यथा बध्येत मे रिपुः ॥३४॥
तमहं निहतं श्रुत्वा खरदूषणघातिनं।
रामं शर्माभिगच्छेयं धनं लब्धेव निर्धनः ॥३५॥
जनस्थाने भवद्भिस्तु वसद्भी रामसंश्रया।
प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥३६॥
अप्रमादश्च कर्तव्यः सर्वैरेव निशाचरैः।
कर्तव्यश्च सदा यत्नो राघवस्य बधं प्रति ॥३७॥
युष्माकं हि बलं ज्ञात्वा बहुशो रणकर्मणि।
अतश्च विनियोगेऽस्मिन् भवन्तो विनियोजिताः ॥३८॥
ततः प्रियं वाक्यमवेक्ष्य राक्षसा यथार्थमष्टावभिवाद्य रावणं।
विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थानमलक्ष्यदर्शनाः ॥३९॥

Digitized by Google

## LXI.

राक्षसांस्तु समादिश्य रावणोऽष्टौ महाबलान् ।
आत्मानं बुद्धिदौर्बल्यात् कृतकृत्यममन्यत ॥ १ ॥
स चिन्तयानो वैदेहीं कामवाणप्रपीडितः ।
प्रविवेश गृहं रम्यं सीतां द्रष्टुमतित्वरन् ॥ २ ॥
संप्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः ।
अपश्यद्राक्षसीमध्ये सीतां शोकपरायणां ॥ ३ ॥
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृतां ।
तां तु शोकवशां दीनां स बली राक्षसाधिपः ॥ ४ ॥
विवशां दर्शयामास गृहं देवगृहोपमं ।
हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितं ॥ ५ ॥
नानापक्षिगणैर्जुष्टं नानामृगसमाकुलं ।
काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैस्तथा ॥ ६ ॥
वज्रवैदूर्यगर्भैश्च स्तम्भैर्दृष्टिमनोहरैः ।
आक्रीडालंकृतं स्फीतं सुविभक्तं सुसंस्कृतं ॥ ७ ॥
चन्द्रार्कपथमावृत्य स्थितं श्वेतघनोपमं ।
पर्वतस्येव शिखरं सुमेरोर्ज्वलितप्रभं ॥ ८ ॥
काञ्चनी वडभी यस्य सूर्यमार्गपथे स्थिता ।
अर्करश्मिप्रतिहता ज्वलदग्निचयोपमा ॥ ९ ॥

Digitized by Google

प्रासादः पाण्डरो यस्य तप्तकाञ्चनवेदिकः ।
काञ्चनाङ्गदसंवीतः कालेन्दुरिव दृश्यते ॥ १० ॥
क्वचित् काञ्चनसंबाधं क्वचिद्रजतवेदिकं ।
क्वचिन्मणिविचित्रं च मुक्ताफलविभूषितं ॥ ११ ॥
सोपानं काञ्चनं चित्रमारुह्याथ तया सह ।
दर्शयामास तत् तस्या रामपत्न्या गृहोत्तमं ॥ १२ ॥
दान्तिकै राजतैश्चैव गवाक्षैः प्रियदर्शनैः ।
हेमजालावृतैश्चैव रम्यैः साग्रवितानकैः ॥ १३ ॥
पुष्पकं च विमानं तु दैवं सद्मनिवेशितं ।
अदर्शयद्दशग्रीवः कामगं कामरूपिणं ॥ १४ ॥
मुक्तामणिविचित्रांश्च भूमिभागांस्ततस्ततः ।
दशग्रीवः स्वभवने दर्शयामास राक्षसः ॥ १५ ॥
चित्रशालाश्च विविधाः कृत्रिमांश्चैव पर्वतान् ।
रम्यान् क्रीडागृहांश्चैव सोऽदर्शयदितस्ततः ॥ १६ ॥
तप्तकाञ्चनसोपाना वापीः कमलपिङ्गलाः ।
दीर्घिकाः पुष्करिणीश्च नानावृक्षसमाकुलाः ॥ १७ ॥
रावणो दर्शयामास नानापतगसंवृताः ।
नन्दनप्रतिमान्येव तथैवोद्यानकान्यपि ॥ १८ ॥
प्रहृष्टः सोऽप्यहृष्टां तां विवशां राक्षसो बलात् ।
रावणः पश्य पश्येति दीनास्यामब्रवीत् पुनः ॥ १९ ॥

Digitized by Google

दर्शयित्वा त्वकामाया वैदेह्यास्तद्गृहोत्तमं ।
उवाच वाक्यं पापात्मा रावणो जनकात्मजां ॥ २० ॥
शृणु मैथिलि वाक्यं मे यत् त्वां वक्ष्यामि भाविनि ।
प्रमाणं कथयिष्यामि राक्षसानां वरानने ॥ २१ ॥
त्रिंशत्कोटिसहस्राणि द्वात्रिंशद्रक्षसां तथा ।
द्विस्तावच्च पिशाचानां येषामहमिहेश्वरः ॥ २२ ॥
तेषामपि च शूराणां संग्रामेष्वनिवर्तिनां ।
एकैकस्य पृथक् संख्ये सहस्रमनुयायिनां ॥ २३ ॥
लङ्कायां विषयान्तेषु राक्षसा घोरविक्रमाः ।
देवदत्तवराः सर्वे समरेष्वनिवर्तिनः ॥ २४ ॥
तेषां शतसहस्राणि द्वे च त्रीणि च पञ्च च ।
एकैकस्य विशालाक्षि सततचत्वारि पृष्ठतः ॥ २५ ॥
एतन्मे सुमहत् सैन्यमक्षयं रिपुनाशनं ।
वर्जयित्वा जरावृद्धान् बालांश्च रजनीचरान् ॥ २६ ॥
ऋद्धस्फीतजनपदा लङ्केयं नगरी शुभा ।
कोषश्च विपुलो भद्रे रत्नानि च सहस्रशः ॥ २७ ॥
तदिदं राष्ट्रतन्त्रं मे त्वयि सर्वं प्रतिष्ठितं ।
जीवितं च विशालाक्षि त्वं हि प्राणैर्गरीयसी ॥ २८ ॥
बह्वनि स्त्रीसहस्राणि मम यानि परिग्रहः ।
तेषां त्वमीश्वरी सीते मम चैव भवेश्वरी ॥ २९ ॥

Digitized by Google

साधु किं तेऽन्यया बुद्ध्या रोचयस्व वचो मम ।
भद्रे कामाभितप्तस्य प्रसादं कुरु जानकि ॥ ३० ॥
परिक्षिप्ता समुद्रेण लङ्का वै शतयोजना ।
नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ३१ ॥
न देवेषु न यक्षेषु न गन्धर्वपतत्रिषु ।
न तं पश्याम्यहं लोके यो मे प्रतिबलो भवेत् ॥ ३२ ॥
राज्यभ्रष्टेन दीनेन तापसेन गतायुषा ।
किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ ३३ ॥
मामेव भज भद्रं ते भर्तारं सदृशं तव ।
अध्रुवं यौवनं भीरु रम तस्मान्मया सह ॥ ३४ ॥
रामसंदर्शनयुतां सीते बुद्धिं निवर्तय ।
कस्य शक्तिरिहागन्तुमपि स्वप्नमनोरथैः ॥ ३५ ॥
न शक्यो वायुराकाशे पाशैर्बन्द्धुं मनोजवः ।
दीप्यमानस्य वा वह्नेर्ग्रहीतुं विमलाः शिखाः ॥ ३६ ॥
न तं पश्यामि पुरुषं त्रिषु लोकेषु मैथिलि ।
विक्रमेण नयेद्यस्त्वां मद्बाहुपरिपालितां ॥ ३७ ॥
लङ्कायां सुमहद्राज्यमिदं प्राप्य सुदुर्लभं ।
अभिषेकोदकक्लिन्ना हृष्टा रम मया सह ॥ ३८ ॥
दुष्कृतं यत् पुरा कर्म वनवासेन तद्गतं ।
यच्च ते सुकृतं कर्म तस्येदं फलमाप्नुहि ॥ ३९ ॥

Digitized by Google

इह सर्वाणि माल्यानि दिव्यगन्धानि मैथिलि ।
भूषणानि च मुख्यानि निषेवस्व मया सह ॥ ४० ॥
पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ।
विमानं सूर्यसंकाशं तरसा निर्जितं मया ॥ ४१ ॥
विशालं रमणीयं च तद्विमानं मनोजवं ।
तत्र सीते मया सार्धं विहरस्व यथासुखं ॥ ४२ ॥
अमलं पद्मसंकाशं वदनं चारुदर्शनं ।
शोकार्तं तव रम्भोरु भ्राजते न वरानने ॥ ४३ ॥
इत्युक्तायाा मुखं तस्याः पूर्णचन्द्रसमप्रभं ।
दग्धं विरूपतां यातं तद्वाक्येन च वह्निना ॥ ४४ ॥
तस्या विवर्णतां दृष्ट्वा रावणो लोकरावणः ।
अब्रवीद्वचनं तत्र सान्त्वयित्वा नृपात्मजां ॥ ४५ ॥
अलं व्रीडेन वैदेहि धर्मतापकृतेन ते ।
कर्णोऽयं देवि विस्पष्टो यस्त्वामुपगमिष्यति ॥ ४६ ॥
एतौ पादौ मया स्निग्धौ शिरोभिरवपीडितौ ।
प्रसादं कुरु मे क्षिप्रं पश्य दासोऽहमस्मि ते ॥ ४७ ॥
नेमाः शून्याः कृथा वाचः शुष्यमाणेन भाषिताः ।
न चापि रावणो याचेन्मूर्ध्ना काञ्चिदपि स्त्रियं ॥ ४८ ॥
एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजां ।
कृतान्तवशमापन्नो ममेयमिति मन्यते ॥ ४९ ॥

Digitized by Google

## LXII.

सा तथोक्ता तु वैदेही निर्भया शोककर्षिता ।
तृणमन्तरतः कृत्वा रावणं वाक्यमब्रवीत् ॥ १ ॥
राजा दशरथो नाम धर्मसेतुरिवाचलः ।
सत्यसंधः परिख्यातो यस्य पुत्रः स राघवः ॥ २ ॥
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
दीर्घबाहुर्विशालाक्षो दैवतं स पतिर्मम ॥ ३ ॥
इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाबलः ।
लक्ष्मणेन सह भ्रात्रा स ते प्राणान् हरिष्यति ॥ ४ ॥
प्रत्यक्षं यद्यहं तस्य भवेयं वै हृता त्वया ।
सुव्यक्तं त्वं सह प्राणैर्मुञ्चेथाश्चैव मां युधि ॥ ५ ॥
यानि ते राक्षसास्त्राणि घोराणि च बहूनि च ।
तानि रामेऽफलानि स्युः सुपर्णे पन्नगा इव ॥ ६ ॥
तस्य ज्याविप्रमुक्तास्तु शराः काञ्चनभूषणाः ।
शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७ ॥
असुरैर्वा सुरैर्वा त्वं यदि रावण रक्ष्यसे ।
उत्पाद्य सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८ ॥
तं विरोध्य महात्मानं राघवं रघुनन्दनं ।
प्रेषितस्तच्छरैराशु गन्तासि यमसादनं ॥ ९ ॥

Digitized by Google

स ते जीवितशेषस्य जीवनान्तकरो बली ।
पशोर्यूपगतस्येव जीवितं तव दुर्लभं ॥ १० ॥
यदि पश्येद्य ते रामो रोषतीव्रेण चक्षुषा ।
सुव्यक्तं तत्क्षणैर्दग्धो गच्छेराशु पराभवं ॥ ११ ॥
यश्चन्द्रं नभसो भूमौ तरसा पातयेदिह ।
सागरं शोषयेद्वापि स सीतां मोक्षयेदिह ॥ १२ ॥
सहस्ररश्मिरादित्यो दीप्तिं जह्यान्महातपाः ।
न तु मां मोह आगच्छेत् त्वं तु मोहाद्विमुच्यसे ॥ १३ ॥
अपि यास्ये त्वयं पाप न तु यास्यामि ते वशं ।
गतायुस्त्वं गतश्रीश्च गतसत्त्वो गतेन्द्रियः ॥ १४ ॥
लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति ।
प्रत्यक्षं तस्य वीरस्य यो मामपहरेद्बलात् ॥ १५ ॥
तदैव बाणैर्निर्दग्धो नेमां वाचमुदीरयेः ।
इदं पाप न ते कर्म सुखोदर्कं भविष्यति ॥ १६ ॥
याहं नीता विना भावं पतिहस्ताद्बलात् त्वया ।
स दिव्यभावसंपन्नो मम भर्ता महायशाः ॥ १७ ॥
निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके ।
मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम ॥ १८ ॥
आत्मनो रक्षसां चैव पुरस्यान्तःपुरस्य च ।
स ते दर्पं बलं वीर्यं मानं चैव निशाचर ॥ १९ ॥



Digitized by Google

अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ।
यदा विनाशकालो वै लक्ष्यते दैवनिर्मितः ॥ २० ॥
तदा वै विपरीतेषु मनः प्रकुरुते नरः ।
प्राप्तानुरागपुरुषो नयोऽयमिति मन्यते ॥ २१ ॥
स चानयं प्रकुर्वीत कृतान्तमतिमोहितः ।
मां प्रधृष्य स ते कालः संप्राप्तो दुरतिक्रमः ॥ २२ ॥
नैर्ऋतानां च सर्वेषां राक्षसाधम पापकृत् ।
न शक्या यज्ञमध्यस्था वेदी स्रुग्भाण्डमण्डिता ॥ २३ ॥
द्विजातिमन्त्रसंयुक्ता चाण्डालेनाभिमर्दितुं ।
राक्षसेन्द्र नरेन्द्रेण प्राकृतेन न धार्यते ॥ २४ ॥
इदं शरीरं निःसंज्ञं पीड्यतां भक्ष्यतामपि ।
वर्तामि विषये तेऽहमिह क्रोधो विधीयतां ॥ २५ ॥
नेदं शरीरं रक्षामि जीवितं वापि रावण ।
न तु शक्नोम्युपक्रोशं पृथिव्यां धातुमात्मनः ॥ २६ ॥
एवमुक्त्वा तु वैदेही क्रोधात् स परुषं वचः ।
रावणं मैथिली तत्र ततो नोवाच किञ्चन ॥ २७ ॥
स सीताया वचः श्रुत्वा परुषं लोमहर्षणं ।
रावणः क्रोधरक्ताक्ष इदं वचनमब्रवीत् ॥ २८ ॥
शीघ्रमायान्तु राक्षस्यो विकृता घोरदर्शनाः ।
दर्पमस्या विनेष्यन्ति मांसशोणितभोजनाः ॥ २९ ॥

Digitized by Google

आगतो वचनादेव तस्याथ राक्षसीगणः ।
प्राञ्जलिर्वन्दयित्वा च मैथिलीं पर्यवारयत् ॥ ३० ॥
निश्वासा राक्षसीनां तु कम्पयन्ति नभस्तलं ।
भीषणैश्चरणाकम्पैः कम्पयन्तीव मेदिनीं ॥ ३१ ॥
उवाच राक्षसीस्तास्तु स्फुरमाणाधराननाः ।
अशोकवनिकामेव मैथिली नीयतामिति ॥ ३२ ॥
तत्रेमां तर्जनैर्घोरैः पुनः सान्त्वैश्च योक्ष्यथ ।
तत्रैव वसतां चापि युष्माभिः परिपालिता ॥ ३३ ॥
आनयध्वं वशं सीतां वन्यां गजवधूमिव ।
इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ॥ ३४ ॥
अशोकवनिकां जग्मुर्मैथिलीं परिगृह्य तां ।
सर्वकामप्रदैर्वृक्षैर्नानापुष्पफलैर्वृतां ॥ ३५ ॥
दिव्यगन्धैश्च कुसुमैः सुगन्धैः सर्वतो वृतां ।
सर्वकालमदैश्चैव नानापक्षिभिरावृतां ॥ ३६ ॥
मह्वारससुसंवीतैः सलिलैश्च ततस्ततः ।
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ।
राक्षसीनां वशं प्राप्ता व्याघ्रीणां हरिणी यथा ॥ ३७ ॥
न विन्दते तत्र तु शर्म मैथिली विरूपरूपाभिरुपेत्य रक्षिता ।
पतिं स्मरन्ती दयितं च देवरं विनिश्वसन्ती भयशोकपीडिता । ३८ ।

Digitized by Google

## LXIII.

प्रवेशितायां सीतायां लङ्कां प्रति पितामहः ।
ब्रह्मा प्रोवाच देवेन्द्रं परितुष्टः शतक्रतुं ॥ १ ॥
त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च ।
लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥ २ ॥
पतिव्रता महाभागा नित्यं चैव सुखोषिता ।
अपश्यन्ती च भर्तारं पश्यन्ती राक्षसानथ ॥ ३ ॥
राक्षसीभिस्तर्ज्यमाना भर्तृशोकेन चाकुला ।
निविष्टा च पुरीं लङ्कां द्वीपे नदनदीपतेः ॥ ४ ॥
कथं ज्ञास्यति मां राम इहस्थां धर्मचारिणीं ।
एवं सा चिन्तयन्ती च विवशा परिदुर्बला ॥ ५ ॥
प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्यसंशयं ।
स भूयः संशयो जातः सीतायाः प्राणधारणे ॥ ६ ॥
स त्वं शीघ्रमितो गत्वा सीतां सान्त्वय वासव ।
प्रयच्छास्याः प्रविश्य त्वं सीताया हविरुत्तमं ॥ ७ ॥
स एवमुक्तो देवेन्द्रः पुरीं रावणपालितां ।
अगच्छन्निद्रया सार्धं भगवान् पाकशासनः ॥ ८ ॥
उवाच निद्रे इह त्वं राक्षसीः संप्रमोहय ।
सा तथोक्ता भगवता देवी परमहर्षिता ॥ ९ ॥
देवराजस्य सिद्ध्यर्थं प्रास्वापयत राक्षसीः ।

Digitized by Google

एतस्मिन्नन्तरे देवः सहस्राक्षः शचीपतिः ॥ १० ॥
आससाद ततः सीतामभयं च ददौ प्रभुः ।
देवराजोऽस्मि भद्रं ते पश्य मां त्वं शुचिस्मिते ॥ ११ ॥
राघवस्य सह भ्रात्रा कुशलं जनकात्मजे ।
आगमिष्यति धर्मात्मा लङ्कां रावणपालितां ॥ १२ ॥
ऋक्षवानरकोटीनां सहस्रैरभिसंवृतः ।
निहत्य राक्षसान् सर्वान् स्वबाहुबलमाश्रितः ॥ १३ ॥
नयिष्यति त्वां स्वपुरीं हत्वा रावणमाहवे ।
सानुजः सबलश्चैव राघवो जनकात्मजे ॥ १४ ॥
सबलं रावणं हत्वा त्वामितो नेष्यते बली ।
पुष्पकेण विमानेन जहि त्वं मानसं ज्वरं ॥ १५ ॥
अहं च कार्यसिद्ध्यर्थं तस्य राज्ञो महात्मनः ।
साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥ १६ ॥
मत्प्रसादात् समुद्रं हि तरिष्यति महाबलः ।
मयैवेह स्म राक्षस्यो मायया मोहिताबले ॥ १७ ॥
इदं मयोद्यतं तुभ्यं पायसं स्वादु चोत्तमं ।
गृह्य प्राश महाभागे मा च कालात्ययं कुरु ॥ १८ ॥
एतत् प्राश्य क्षुधा देवि न त्वां बाधिष्यते शुभे ।
रुजाश्च घोरा धर्मिष्ठे वैवर्ण्यं वापि भाविनि ॥ १९ ॥
एवमुक्ता तु देवेन्द्रमुवाच परिशङ्किता ।

Digitized by Google

कथं ज्ञास्यामि देवेन्द्रं त्वामिहस्थं शचीपतिं ॥ २० ॥
देवलिङ्गानि यान्यासन् श्रुतानि गुरुसंनिधौ ।
तानि मे दर्शय क्षिप्रं यदि त्वं देवराट् स्वयं ॥ २१ ॥
सीताया वचनं श्रुत्वा तथा चक्रे स वासवः ।
पृथिवीं नास्पृशत् पद्ध्यामनिमेषेक्षणो बभौ ॥ २२ ॥
तं दृष्ट्वा देवराजं च संहृष्टा प्राह मैथिली ।
यथा मे श्वशुरो राजा पिता च मिथिलेश्वरः ॥ २३ ॥
तथा त्वामद्य पश्यामि सनाथो मे पतिस्त्वया ।
त्वया नाथेन देवेन्द्र दिष्ट्या जीवति राघवः ॥ २४ ॥
सह भ्रात्रा महावीर्य दिष्ट्या च श्रुतिरागता ।
तवाज्ञया च देवेन्द्र पयोऽमृतमनुत्तमं ।
प्राशिष्यामि त्वया दत्तं रघूणां कुलवर्धनं ॥ २५ ॥
इन्द्रहस्तात् ततो गृह्य पायसं सा शुचिस्मिता ।
न्यवेदयत भर्त्रे सा लक्ष्मणाय च मैथिली ॥ २६ ॥
चिरं जीवतु मे भर्ता भ्रात्रा सह महाबलः ।
इत्येवमुक्त्वा वैदेही प्राश्नीयात् पायसं शुभं ॥ २७ ॥
तथा तु तत् प्राश्य वराननासौ जहौ तदा तृट्समुद्भवं क्लमं ।
संश्राव्य वार्त्तां स पुनर्महेन्द्रो जगाम देव्यामुदितस्तदा सः ॥ २८ ॥
इन्द्रात् प्रवृत्तिं प्रतिलभ्य सीता काकुत्स्थयोः प्रीतिमना बभूव ।
स चापि देवो विबुधेशस्तदा प्रीत्या ययौ राघवकर्महेतौ ॥ २९ ॥

Digitized by Google

## LXIV.

राक्षसं मृगरूपेण चरन्तं कामरूपिणं ।
निहत्य रामो मारीचमथारण्यान्न्यवर्तत ॥ १ ॥
तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीं ।
क्रूरस्वरो भयंकरो गोमायुः पृष्ठतोऽनदत् ॥ २ ॥
स तस्य स्वरमाज्ञाय व्याहृतं लोमहर्षणं ।
रामः प्रोवाच गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥
अशुभं वत रूक्षोऽयं गोमायुर्वाशते यथा ।
स्वस्ति स्यादपि वैदेह्या रक्षोभ्यो रक्षणं विना ॥ ४ ॥
मारीचेन हि विज्ञाय स्वरमालम्ब्य मामकं ।
प्रक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयादिति ॥ ५ ॥
तं सौमित्रिः स्वरं श्रुत्वा व्यक्तं हित्वैव मैथिलीं ।
स्वरमाकर्ण्य संतप्तो भविष्यति विचेतनः ॥ ६ ॥
असहन्ती च विक्रुष्टं स्नेहात् पिहितमानसा ।
विवशं लक्ष्मणं सीता प्रेषयिष्यति विह्वला ॥ ७ ॥
तया च प्रेषितः क्षिप्रं मत्समीपं प्रतापवान् ।
नूनमेष्यति सौमित्रिः सीतावाक्यप्रचोदितः ॥ ८ ॥
नूनं रहसि रक्षोभिर्मैथिल्याश्चिन्तितो बधः ।
मारीचेन तथोत्क्रुष्टं स्वरमालम्ब्य मामकं ॥ ९ ॥

Digitized by Google

इतीव चिन्तयन् रामः श्रुत्वा गोमायुवाशितं ।
न्यवर्तत तदा रामो जवेनाश्रममण्डलं ॥ १० ॥
आत्मनश्चापनयनं चिन्तयन् परिशङ्कितः ।
काञ्चनः स मृगो भूत्वा राक्षसोऽभूच्छराहतः ॥ ११ ॥
हा लक्ष्मण हतोऽस्मीति यद्वाक्यं व्याजहार ह ।
तेन शब्देन रक्षोभिर्लब्धं हि ध्रुवमन्तरं ॥ १२ ॥
अपि स्वस्ति भवेत् तस्यै रहितायै महावने ।
जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ १३ ॥
इति सीतां वरारोहां लक्ष्मणं च महाबलं ।
आजगाम जनस्थानं चिन्तयन्नेव राघवः ॥ १४ ॥
तं दीनमानसं शून्यमासाद्य मृगपक्षिणः ।
सव्यं चक्रुर्महात्मानं घोरांश्च ससृजुः स्वरान् ॥ १५ ॥
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ।
ततो लक्ष्मणमायान्तं ददर्श विगतप्रभं ॥ १६ ॥
स्वयं दीनतरो दीनं मुखेन परिशुष्यता ।
विषण्णं तं विषण्णो वै दुःखितं दुःखितोऽब्रवीत् ॥ १७ ॥
अहो लक्ष्मण वाच्याः स्म त्वयेहागच्छता कृताः ।
सीतां विहाय तां शून्ये वने राक्षससेविते ॥ १८ ॥
नास्ति मे संशयो वीर सर्वथा जनकात्मजा ।
विनष्टा भक्षिता वापि राक्षसैर्वनसेविभिः ॥ १९ ॥

Digitized by Google

अशुभाश्चैव भूयिष्ठा यथा प्रादुर्भवन्ति नः ।
उत्पाता अपि वैदेहीं समग्रां प्राप्नुयामहि ॥ २० ॥
अयं हि सत्त्वो मृगसंनिकाशः
प्रलोभयन् मामपकृष्य दूरं ।
हतः कथञ्चिन्महता श्रमेण
मृगत्वमुत्सृज्य बभूव राक्षसः ॥ २१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे सीतालङ्काप्रवेशो नाम षष्टितमः सर्गः — सीतानुनयो नाम एकषष्टितमः सर्गः — सीताविभूतिदर्शनं नाम द्विषष्टितमः सर्गः — सीतासमाश्वासो नाम त्रिषष्टितमः सर्गः — लक्ष्मणसंदर्शनं नाम चतुःषष्टितमः सर्गः ॥



Digitized by Google

LXV.

तथोक्त्वा लक्ष्मणं सोऽथ रामो दीनो भयाकुलः ।
पर्यपृच्छत् ततः शून्यं वैदेह्या तं विनागतं ॥ १ ॥
प्रस्थितं दण्डकारण्यं या मामनुजगाम ह ।
क्व सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २ ॥
राज्यभ्रष्टस्य दीनस्य दण्डकं परिधावतः ।
क्व सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३ ॥
यां विना नोत्सहे सौम्य मुहूर्तमपि जीवितुं ।
क्व सा प्राणसमा मेऽद्य सीता सुरसुतोपमा ॥ ४ ॥
सिद्धत्वममरत्वं वा पृथिवीं वापि लक्ष्मण ।
विना तां नवहेमाभां नेच्छेयं जनकात्मजां ॥ ५ ॥
कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम ।
कच्चित् प्रव्रजनं सौम्य न मे मिथ्या भविष्यति ॥ ६ ॥
कच्चित् सकामा सुखिनी कैकेयी न भविष्यति ।
सीतानिमित्तं सौमित्रे मृते वनगते मयि ॥ ७ ॥
यदि जीवति वैदेही गमिष्यामि पुरीं पुनः ।
सुवृत्ता यदिवा वृत्ता प्राणांस्त्यक्ष्यामि लक्ष्मण ॥ ८ ॥
यदि मामाश्रमगतमभिभाषेत मैथिली ।
पुनः प्रहसिता बाला न विनङ्क्ष्यामि लक्ष्मण ॥ ९ ॥

Digitized by Google

ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा ।
सीता त्वया प्रमुक्ता सा भक्षिता वा निशाचरैः ॥१०॥
सुकुमारी च बाला च नित्यं चादुःखदर्शिनी ।
मद्वियोगेन वैदेही दुःखं शोचति दुःखिता ॥११॥
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना ।
वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयं ॥१२॥
श्रुतश्च शङ्के वैदेह्या स स्वरः सदृशो मम ।
त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्रमागतः ॥१३॥
सर्वथा ते कृतं वाच्यं सीतामुत्सृजता वने ।
प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरं ॥१४॥
निश्चिताः खरघातेन राक्षसाः पिशिताशनाः ।
तैः सीता भक्षिता घोरैर्भविष्यति न संशयः ॥१५॥
अपारेऽस्मिन् वयं मग्नाः सर्वथा शोकसागरे ।
किं विदानीं करिष्यामः प्राप्ता व्यसनमीदृशं ॥१६॥
इति सीतां वरारोहां चिन्तयन्नेव राघवः ।
आजगाम जनस्थानं त्वरमाणः सलक्ष्मणः ॥१७॥
विगर्हयन् लक्ष्मणमाययौ तदा स्वमाश्रमं क्षुत्श्रमशोककर्षितः ।
विनिश्वसन् शुष्कमुखस्वरान्वितः प्रतिश्रयं शून्यमथाससाद सः ।१८।
स्वमाश्रमं तं प्रविगाह्य वीरो विहारदेशाननुसृत्य सर्वान् ।
एतत् तदेवेति निवासमध्ये प्रहृष्टरोमा व्यथितो बभूव ॥१९॥

Digitized by Google

## LXVI.

अथाश्रमं समन्विष्य अत्तरा रघुनन्दनः ।
परिपप्रच्छ सौमित्रिं रामो दुःखसमन्वितः ॥ १ ॥
सा यदा तव विश्वासान्मैथिली रक्षिते शुभा ।
न्यासधर्मान्मया दत्ता वने राक्षससेविते ॥ २ ॥
कथं त्वं तां समुत्सृज्य मत्समीपमुपागतः ।
तवैवागमनान्मेऽद्य सीतां संत्यज्य लक्ष्मण ॥ ३ ॥
शङ्कमानं महत् पापं यत् सत्यं व्यथितं मनः ।
स्पन्दते नयनं सव्यं बाहुश्च हृदयं च मे ॥ ४ ॥
दृष्ट्वा लक्ष्मण दूरात् त्वां सीताविरहितं वने ।
एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ॥ ५ ॥
दुःखशोकसमाविष्टो राघवं वाक्यमब्रवीत् ।
न स्वयं कामकारेण तीतां त्यक्त्वा समागतः ॥ ६ ॥
प्रदेशितस्तयैवाहं ततस्त्वां समुपागतः ।
आर्येण हि परिक्रुष्टं लक्ष्मणेति सुविस्तरं ॥ ७ ॥
परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतं ।
सा तु चार्तस्वरं श्रुत्वा भर्तृस्नेहेन मैथिली ॥ ८ ॥
गच्छ गच्छेति मामाह रुदती भयविह्वला ।
प्रदिश्यमानेन तया गच्छेति बहुशस्तदा ॥ ९ ॥

Digitized by Google

प्रत्युक्ता मैथिली वाक्यं मया त्वत्प्रियकाम्यया ।
न तं पश्याम्यहं सीते यस्तस्य भयमानयेत् ॥ १० ॥
निर्वृता भव नास्त्येतच्छङ्के केनाप्युदाहृतं ।
विगर्हितं च दीनं च कथमार्यो ऽभिधास्यति ॥ ११ ॥
त्रायस्वेति वचः सीते यस्त्राता त्रिदशानपि ।
किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरं ॥ १२ ॥
विस्वरं व्याहृतं वाक्यं सौमित्रे पाहि मामिति ।
अलं वैक्लव्यमागत्य सुस्था भव निरुत्सुका ॥ १३ ॥
न सो ऽस्ति त्रिषु लोकेषु पुमान् यो राघवं रणे ।
जातो वापि जनिष्यो वा संग्रामे यः पराभवेत् ॥ १४ ॥
एवमुक्ता तु वैदेही परिमोहितमानसा ।
उवाचाश्रूणि मुञ्चन्ती तदा मां परुषं वचः ॥ १५ ॥
भावो मयि तवात्यर्थं पापभावो ऽसि लक्ष्मण ।
विनाशं भर्तरि प्राप्ते न त्वेनां समवाप्स्यसि ॥ १६ ॥
प्रहितो भरतेन त्वं रामं समनुगच्छसि ।
क्रोशमानं तथा हि त्वं नैनमभ्युपपद्यसे ॥ १७ ॥
इयं मृते भ्रातरि मे मयि वत्स्यति मैथिली ।
न चाहमाशां कुर्यां ते पाप प्रच्छन्नचारक ॥ १८ ॥
नूनं प्रच्छन्नरूपस्त्वं रामं समनुगच्छसि ।
राघवस्यान्तरप्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९ ॥

Digitized by Google

एवमुक्तस्तु वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधात् प्रस्फुरमाणौष्ठो निःसृतोऽहमथाश्रमात् ॥ २० ॥
एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः ।
अब्रवीद्दुष्कृतं सौम्य यत्त्वमागम आश्रमात् ॥ २१ ॥
जानन्नपि वनस्थं मां राक्षसां विनिवारणे ।
अनेन क्रोधवाक्येन मैथिल्या निःसृतो भवान् ॥ २२ ॥
न तेऽहं परितुष्यामि त्यक्त्वा यदसि मैथिलीं ।
क्रुद्धायाः परुषं वाक्यं स्त्रियाः श्रुत्वा विशेषतः ॥ २३ ॥
सर्वथा त्वपनीतं ते सीताया यत् प्रदेशितः ।
क्रोधस्य वशमागत्य माकृथा वचनं मम ॥ २४ ॥
असौ स राक्षसः शेते शरेणाभिहतो मया ।
मृगरूपेण येनाहमाश्रमादपवाहितः ॥ २५ ॥

शराहतेन व्यतितप्तया गिरा
स्वरं समालम्ब्य विदूरसंश्रवं ।
उदाहृतं तद्वचनं सुदारुणं
त्वमागतो येन विसृज्य मैथिलीं ॥ २६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामोपयानं नाम
पञ्चषष्टितमः सर्गः — लक्ष्मणगर्हणं नाम
षट्षष्टितमः सर्गः ॥

Digitized by Google

## LXVII.

स तु दृष्ट्वा जनस्थानं शून्यं दशरथात्मजः ।
रहितां पर्णशालां च प्रविद्धान्यासनानि च ॥ १ ॥
अदृष्ट्वा तत्र वैदेहीं स निरीक्ष्य च सर्वशः ।
अब्रवील्लक्ष्मणं दीनो मुखेन परिशुष्यता ॥ २ ॥
क्व सा लक्ष्मण वैदेही कं वा देशमुपागता ।
हृता वा केन सौमित्रे भक्षिता वा तपस्विनी ॥ ३ ॥
तथा दृष्ट्वा जनस्थानं रुदन्तमिव सर्वतः ।
उवाच रामः प्रक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥ ४ ॥
वृक्षेणावार्य यदि मां सीते हसितुमिच्छसि ।
अलं ते हसितेनार्ये मां विज्ञाय सुदुःखितं ॥ ५ ॥
यैः सह क्रीडते सीता विश्रब्धैर्मृगपोतकैः ।
तां विना ते विशालाक्षीं दृश्यन्ते चेह लक्ष्मण ॥ ६ ॥
इमे लक्ष्मण वैदेह्यास्तापनीया विभूषणाः ।
धरण्यां सह माल्येन शीर्णाः कनकविन्दवः ॥ ७ ॥
तप्तरुक्मप्रकाशैश्च घोरैः क्षतजविन्दुभिः ।
आवृतं पश्य सौमित्रे सर्वतो धरणीतलं ॥ ८ ॥
मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः ।
छित्त्वा भित्त्वा विभक्ता वा भक्षिता वा तपस्विनी ॥ ९ ॥

Digitized by Google

तस्या निमित्तं वैदेह्या द्वयोर्विवदमानयोः ।
प्रवृत्तं पश्य सौमित्रे युद्धं राक्षसयोरिह ॥ १० ॥
कथं चन्द्रप्रतीकाशं सीताया विमलं मुखं ।
आसीद्राक्षसयोर्मध्ये द्वयोर्विवदमानयोः ॥ ११ ॥
भूयः सीताविनाशाद्धि प्रयुक्तं राक्षसैः सह ।
वैरं स्थानेऽत्र सौमित्रे तेषामात्मबधाय वा ॥ १२ ॥
शक्रचापनिभं चेदं तपनीयविभूषितं ।
धरण्यां पतितं भग्नं कस्य सौम्य महद्धनुः ॥ १३ ॥
तरुणादित्यसंकाशं वैदूर्यमणिभूषितं ।
विशीर्णं कवचं भूमौ पतितं कस्य काञ्चनं ॥ १४ ॥
छत्त्रं शतशलाकं च दिव्यमाल्योपशोभितं ।
भग्नदण्डमिदं सौम्य कस्य भूमौ निपातितं ॥ १५ ॥
काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ।
भीमरूपा महाकायाः कस्य वीर हता रणे ॥ १६ ॥
दीप्तपावकसंकाशः सपताकः सहध्वजः ।
अपविद्धश्च भग्नश्च कस्य सांग्रामिको रथः ॥ १७ ॥
रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ।
कस्येमे निशिता वाणाः प्रकीर्णा घोरकर्मिणः ॥ १८ ॥
घोरं प्रतिकृतं पश्य ममेदं जीवितान्तकृत् ।
वैरं शतगुणं वीर राक्षसैः कामरूपिभिः ॥ १९ ॥

मृतं शोकेन महता सीताहरणजेन मां ।
परलोके महाराजो नूनं वक्ष्यति मे पिता ॥ २० ॥
कथं प्रतिज्ञां संश्रुत्य वनवासे कृतां मम ।
अपूरयित्वा तं कालं मत्सकाशमिहागतः ॥ २१ ॥
कामवृत्तमनार्यं च मृषावादमधार्मिकं ।
धिक् त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता ॥ २२ ॥
विवशं शोकसंतप्तं दीनं भग्नमनोरथं ।
मां समुत्सृज्य कृपणां कीर्तिर्नरमिवानृजुं ॥ २३ ॥

क्व सा गता चारुदती शुभेक्षणा
ममेश्वरी लक्ष्मण युक्तभाषिणी ।
विहाय मां शोकबलाभिपीडितं
प्रभा यथा भास्करमस्तमूर्धनि ॥ २४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामविलापो
नाम सप्तषष्टितमः सर्गः ॥



Digitized by Google

## LXVIII.

स तथा तु जनस्थानं सर्वतः परिलोकयन् ।
नाससाद सुदुःखार्तो राघवो जनकात्मजां ॥ १ ॥
अनासादयमानस्तु सीतां दशरथात्मजः ।
पङ्कमासाद्य विपुलं सीदन्निव महाद्विपः ॥ २ ॥
संधारयितुमात्मानं न शशाक नरोत्तमः ।
सीतावियोगजे दुःखे मग्नो महति दारुणे ॥ ३ ॥
तं निःश्वसन्तं ध्यायन्तं दीनं वास्पपरायणं ।
शोकेन महताविष्टं नवबद्धमिव द्विपं ॥ ४ ॥
लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ।
मा विषादं गमो वीर कुरु यत्नं मया सह ॥ ५ ॥
इदं चैव वनं सौम्य बहुपादपशोभितं ।
प्रियकाननसंचारा वनोन्मत्ता च मैथिली ॥ ६ ॥
सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पितां ।
सरितं वानुसंप्राप्ता मीनवञ्जुलसेवितां ॥ ७ ॥
वित्रासयितुकामा वा लीना स्यात् कानने क्वचित् ।
जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभ ॥ ८ ॥
यत्नमन्वेषणे तस्याः कुरु राम मया सह ।
वनं सर्वं विचिन्वानो यत्र सा जनकात्मजा ॥ ९ ॥

Digitized by Google

एवमुक्तस्तु वचनं लक्ष्मणेन समाहितः ।
सह सौमित्रिणा रामो विचेतुमुपचक्रमे ॥ १० ॥
तौ वनानि गिरींश्चैव सरितश्च सरांसि च ।
निरीक्षां चक्रतुर्वीरौ सीतादर्शनकाङ्क्षया ॥ ११ ॥
पर्वतं बहुकूटं तु नानाधातुशतैश्चितं ।
सकाननवनं रामो व्यचिनोत् सहलक्ष्मणः ॥ १२ ॥
तस्य शैलस्य सानूनि गुहाश्च शिखराणि च ।
नलिनीश्च विचिन्वन्तौ नैव तामधिजग्मतुः ॥ १३ ॥
विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ।
नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभे ॥ १४ ॥
स तथैवातिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् ।
विचरन् दण्डकारण्यं भ्रातरं दीनमानसं ॥ १५ ॥
प्राप्स्यसि त्वं महाबाहो मैथिलीं जनकात्मजां ।
यथा विष्णुर्महावीर्यो बलिं बद्ध्वा महीमिमां ॥ १६ ॥
एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
अब्रवीद्दीनया वाचा दुःखाभिहतचेतनः ॥ १७ ॥
वनं सर्वं प्रविचितं पद्मिन्यश्च सपङ्कजाः ।
गिरयश्च महातेजो बहुकन्दरनिर्झराः ॥ १८ ॥
न च पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीं ।
विचिन्वानो गिरिं सर्वं वनं च निखिलं महत् ॥ १९ ॥

Digitized by Google

एवं स विलपन् दीनः सीताहरणकर्षितः ।
राघवः शोकसंतप्तो मुहूर्तं विह्वलोऽभवत् ॥ २० ॥
स विह्वलितसर्वाङ्गो गतसत्त्वो विचेतनः ।
निशश्वासातुरो दीनः शोकसंतप्तमानसः ॥ २१ ॥
बहुधा तु विनिश्वस्य रामो राजीवलोचनः ।
हा प्रिये क्वासि नष्टासि व्याक्रोशन् न्यपतत् क्षितौ ॥ २२ ॥
तं सान्त्वयामास ततो लक्ष्मणः प्रियबान्धवः ।
बहुप्रकारं धर्मज्ञः प्रसृतः प्रयताञ्जलिः ॥ २३ ॥
अनादृत्य तु तद्वाक्यं लक्ष्मणस्य मुखाच्युतं ।
अपश्यन् स प्रियां भार्यां विलपन्निदमब्रवीत् ॥ २४ ॥
त्रैलोक्याधिपते देव शक्र इन्द्र निबोध मे ।
पुरंदर चिरायेह भार्या साध्वी जहाति मां ॥ २५ ॥
यस्मिन् काले युवा भार्यां लब्ध्वा भूयोऽभिनन्दति ।
तस्मिन्नभ्यागते काले प्रिया भार्या जहाति मां ॥ २६ ॥
निर्यूथ इव मातङ्गः पुरं वृत्तोत्सवं यथा ।
न भात्ययं ममावासो हृतधन इवाहवः ॥ २७ ॥
स्वर्गादिव परिभ्रष्टः परित्यज्येव चामृतं ।
नाशयित्वेव सर्वस्वमनुशोचामि जानकीं ॥ २८ ॥
शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीं ।
अपि गोदावरीं सीता पद्मान्युद्धरितुं गता ॥ २९ ॥

Digitized by Google

एवमुक्तस्तु रामेण लक्ष्मणस्त्वरितो भृशं ।
नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ॥ ३० ॥
तां लक्ष्मणस्तीर्थवतीं विचित्योवाच राघवं ।
न तां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ॥ ३१ ॥
कं नु सा देशमापन्ना वैदेही जनकात्मजा ।
न ह्यहं वेद्मि तं देशं यत्र सा तनुमध्यमा ॥ ३२ ॥
निराशस्त्वपि भूयो वै सीताया दर्शने कृतः ।
उवाच रामः सौमित्रिं दुःखितो दुःखितं वचः ॥ ३३ ॥
किं तु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः ।
मातरं वापि कौशल्यां विना सीतामितो गतः ॥ ३४ ॥
या मे राज्याद्विहीनस्य वने वन्येन जीवतः ।
सर्वं व्यपनयेच्छोकं वैदेही क्व नु सा गता ॥ ३५ ॥
ज्ञातिभ्यश्च विहीनस्य राजपुत्रीमपश्यतः ।
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ॥ ३६ ॥
गोदावरीं जनस्थानमिमं प्रस्रवणं गिरिं ।
सर्वाण्यनुचरिष्यामि यावत् सीता न दृश्यते ॥ ३७ ॥
तथा तु विलपन्तं तं रामं शोकपरायणं ।
प्रत्युवाच महाप्राज्ञो लक्ष्मणः परवीरहा ॥ ३८ ॥
अलमाहृत्य संतापं स्थिरो भव नरोत्तम ।
विचित्य तां मया सार्धं नष्टामधिगमिष्यसि ॥ ३९ ॥

Digitized by Google

एवं संभाषमाणौ तु तावुभौ रामलक्ष्मणौ ।
वसुंधरायां पतितां पुष्पमालामपश्यतां ॥ ४० ॥
तां पुष्पवेणीं वैदेह्या दृष्ट्वा रामो महीतले ।
उवाच लक्ष्मणं दीनो दुःखार्तो दुःखितं भृशं ॥ ४१ ॥
अभिजानामि पुष्पाणि तान्येवेमानि लक्ष्मण ।
अपि बद्धानि वैदेह्याः पूर्वं चैतानि कानने ॥ ४२ ॥
एवमुक्त्वा महातेजा लक्ष्मणं पुरुषर्षभः ।
क्रुद्धोऽब्रवीत् तदा रामो गिरिं संतर्जयन्निव ॥ ४३ ॥
तां मृष्टहेमवर्णाभां सीतां दर्शय पर्वत ।
पुरा शिलाशितैर्बाणैर्मा त्वां विध्वंसयाम्यहं ॥ ४४ ॥
स तं दाशरथी रामस्तर्जयन् जगतीधरं ।
ददर्श भूमौ विक्रान्तं राक्षसस्य महत् पदं ॥ ४५ ॥
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ।
संभ्रान्तहृदयो राम उवाच भ्रातरं प्रियं ॥ ४६ ॥
एहि लक्ष्मण पश्येदं राक्षसस्य महत् पदं ।
मिथ्या संतर्जितः शैलो न सीता गिरिकन्दरे ॥ ४७ ॥
व्रीडितं लक्ष्मणं दृष्ट्वा पराजितमिवागतं ।
अथाब्रवीदिदं वाक्यं विस्फारयन् महद्धनुः ॥ ४८ ॥
यमः सपरिवारो वा कालो वा दुरतिक्रमः ।
न त्वां धर्षयितुं शक्तो रक्षो वा मयि तिष्ठति ॥ ४९ ॥

Digitized by Google

अन्तरीक्षगतो मन्ये सीतामादाय राक्षसः ।
न तस्या गमने सौम्य गमनं चैव लक्ष्यते ॥ ५० ॥
कथं कं विद्व पृच्छामि कां दिशं यामि लक्ष्मण ।
तां दिशं नाधिगच्छामि यत्र सीता हृता भवेत् ॥ ५१ ॥
एवमुक्तस्तु रामेण लक्ष्मणः सत्यविक्रमः ।
रामं शोकाग्निसंतप्तमिदं वचनमब्रवीत् ॥ ५२ ॥
संप्राप्य पण्डितः कृच्छ्रं प्रज्ञामेवावगाहते ।
बालस्तु कृच्छ्रमासाद्य शिलेवाम्भसि मज्जति ॥ ५३ ॥
तं शोकवेगाभिहतं व्याधिः स्पृशति दारुणः ।
तस्यात्मा संप्रमुच्येत न च शोकात् प्रमुच्यते ॥ ५४ ॥
स पण्डितवरः प्राज्ञः प्रज्ञाकर्मविशारदः ।
अप्राज्ञ इव किं त्वार्य भार्याहेतोर्विमुह्यसि ॥ ५५ ॥
तं रामः प्रत्युवाचेदं शोकसंतप्तचेतनः ।
यथा ब्रवीषि सौमित्रे तत् कर्तुं प्रयताम्यहं ॥ ५६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामविलापो नाम
अष्टाषष्टितमः सर्गः ॥

Digitized by Google

## LXIX.

ततः सौम्योऽपि तं रामः क्रुद्धो वचनमब्रवीत् ।
संहृत्येव शशी ज्योत्स्नां ज्वलन् सूर्य इवोदितः ॥ १ ॥
असौ लक्ष्मण भूतात्मा नूनं मामवमन्यते ।
अनुक्रोशान्मृदुत्वाच्च नृपात्मज निवर्त्तते ॥ २ ॥
योऽहं राज्यं परित्यज्य त्यक्त्वा दीनां च मातरं ।
स्वधर्ममग्रतः कृत्वा प्रविष्टो दण्डकं वनं ॥ ३ ॥
तस्य मे धर्मकामस्य स्थितस्य वचने पितुः ।
न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ४ ॥
यदा धर्मप्रधानस्य धर्मसेतुर्विभिद्यते ।
तदा खिन्नस्य सौमित्रे नास्तिक्यमुपजायते ॥ ५ ॥
भक्षितायां च वैदेह्यां हृतायां वापि लक्ष्मण ।
केनान्येन प्रियं कर्तुं शक्या मम सुरेश्वराः ॥ ६ ॥
कर्तारमपि लोकानां शूरं करुणवेदिनं ।
अज्ञानादवमन्यन्ते सर्वभूतानि लक्ष्मण ॥ ७ ॥
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनं ।
निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ८ ॥
स गुणः प्राप्य मां दोषः संवृत्तः पश्य लक्ष्मण ।
अज्ञानात् सर्वभूतानां लोकानामभवाय हि ॥ ९ ॥

Digitized by Google

येन सौम्य हृता सीता भक्षिता वा तपस्विनी ।
दृष्टे तस्मिन् भवेच्छान्तिर्लोकानां पार्थिवात्मज ॥ १० ॥
नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ।
किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥ ११ ॥
यदि जीवति वैदेही लोकेभ्यः स्वस्ति लक्ष्मण ।
अथ नष्टा जगत् कृत्स्नं विनष्टमुपधारय ॥ १२ ॥
अमानुषाणां सौमित्रे शरैरग्निशिखोपमैः ।
संभ्रमं जनयिष्यामि सीताया मानुषः कृते ॥ १३ ॥
न चेत् कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः ।
अस्मिन् मुहूर्ते सौमित्रे द्रक्ष्यन्ति मम विक्रमं ॥ १४ ॥
यान्याकाशे प्रतिष्ठन्ति सर्वभूतानि लक्ष्मण ।
मम बाणासनान्मुक्तैर्बाणजालैरजिह्मगैः ॥ १५ ॥
आकर्णमुक्तैरिषुभिर्जीवलोकं दुरासदैः ।
करिष्ये मैथिलीहेतोरपिशाचमराक्षसं ॥ १६ ॥
मम रोषप्रमुक्तानां सायकानां बलं सुराः ।
द्रक्ष्यन्त्यद्य शिताग्राणां शराणां दूरपातिनां ॥ १७ ॥
नैव देवा न गन्धर्वा न यक्षा न च राक्षसाः ।
भविष्यन्ति मम क्रोधादद्य लक्ष्मण पश्य मां ॥ १८ ॥
निर्मर्यादमिमं लोकं करिष्याम्यद्य सायकैः ।
कालानलसमस्पर्शैरतिक्रुद्ध इवान्तकः ॥ १९ ॥

यथा यमो यथा मृत्युर्यथा कालो यथा विधिः ।
हन्तास्मि राक्षसानद्य सृष्टा येन च राक्षसाः ॥ २० ॥
अयं मां विपुलः शोकः प्रदीपयति लक्ष्मण ।
सीताहरणजो घोरो दावाग्निरिव पर्वतं ॥ २१ ॥
यादृशोऽयं मम क्रोधो दैवात् समुपजायते ।
व्यक्तमद्य जगत् सर्वं नाशयिष्यामि सायकैः ॥ २२ ॥
न चेदद्य प्रदास्यन्ति साम्ना सीतां हृतामपि ।
अद्य पश्यन्तु मे लोकास्त्रयो विक्रममाहवे ॥ २३ ॥
आहता मम वाणौघैर्दीप्तास्यैः पन्नगैरिव ।
बहुधा निपतिष्यन्ति लोका वै शकलीकृताः ॥ २४ ॥
यथा रोषपरीतेन मयेदं पूरितं धनुः ।
अराक्षसमिदं कृत्स्नं जगत् पश्यसि लक्ष्मण ॥ २५ ॥
न हीमां धर्षणां सोढुं शक्तोऽहं रघुनन्दन ।
हन्तास्मि लोकान् सकलानद्य सृष्टाश्च येन ते ॥ २६ ॥
प्रिया सुरूपा सहधर्मचारिणी
मयाद्य भार्या यदि सा न दृश्यते ।
सयक्षगन्धर्वमनुष्यराक्षसं
जगत् सशैलं परिवर्तयिष्ये ॥ २७ ॥
इत्यार्षे रामायणे आरण्यककाण्डे रामकोपो नाम
नवषष्टितमः सर्गः ॥

Digitized by Google

## LXX.

भाषमाणं तथा रामं सीताहरणकर्षितं ।
लोकानामभवे युक्तं संवर्तकमिवानलं ॥ १ ॥
विक्षिपन्तं धनुः सज्यं निःश्वसन्तं मुहुर्मुहुः ।
हन्तुकामं पशुं रुद्रं क्रुद्धं दक्षक्रतौ यथा ॥ २ ॥
अदृष्टपूर्वं तं कोपं दृष्ट्वा रामस्य लक्ष्मणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३ ॥
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतत् तु नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५ ॥
उच्यमानं मया वाक्यं सीता शशिनिभानना ।
हितं न प्रतिजग्राह वैदेही जनकात्मजा ॥ ६ ॥
अयुक्तं क्रुद्धया वाक्यमुक्तोऽहं परुषं तया ।
उत्तरं तस्य वाक्यस्य न वक्तव्यं कथञ्चन ॥ ७ ॥
सीतया चोद्यमानोऽहं गच्छ गच्छेति राघव ।
अवेक्षमाणो वैदेहीं त्वत्सकाशमुपागतः ॥ ८ ॥
न तु जानामि कस्यायं भग्नः सांग्रामिको रथः ।
केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ॥ ९ ॥

Digitized by Google

रथनेमिहतश्चायं सिक्तो रुधिरविन्दुभिः ।
देशो निर्वृत्तसंग्रामः सुघोरः पार्थिवात्मज ॥ १० ॥
न निवृत्तस्य पश्यामि बलस्य महतः पदं ।
एकस्य हि विमर्दोऽयं द्वयोर्वा वदतां वर ॥ ११ ॥
न चैकस्य कृते लोकानुत्सादयितुमर्हसि ।
युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥ १२ ॥
न वनानां गिरीणां वा राजा भवति राघव ।
तस्मात् प्राणहरं दण्डं न धारयितुमर्हसि ॥ १३ ॥
यदा त्वं सर्वभूतानां शरण्यः शरणार्थिनां ।
को नु दारप्रणाशं ते साधुमन्येत राघव ॥ १४ ॥
सरितः सागराः शैला देवगन्धर्वदानवाः ।
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥ १५ ॥
येन वीर हृता सीता तमन्वेष्टुं त्वमर्हसि ।
मद्द्वितीयो धनुष्पाणिर्व्यवसाय सहायवान् ॥ १६ ॥
समुद्रांश्च विचेष्यामः पर्वतांश्च वनानि च ।
गुहाश्च विविधाकारा विलानि च सरांसि च ॥ १७ ॥
देवदानवयक्षांश्च विचेष्यामः समन्ततः ।
यावन्नाधिगमिष्यामस्तव भार्यापहारिणं ॥ १८ ॥
न चेत् संदर्शयिष्यन्ति तं पापं त्रिदशेश्वराः ।
कोशलेन्द्र ततः पश्चात् प्राप्तकालं करिष्यसि ॥ १९ ॥

Digitized by Google

आनुपूर्वीं च धर्मस्य गत्वा लोकेषु राघव ।
ततश्छेत्स्यसि नाराचैर्जगत् सर्वं सराक्षसं ॥ २० ॥

शिवेन साम्ना विनयेन चैव
न चेत् प्रियां प्राप्स्यसि जानकीं त्वं ।
ततः समुत्सादयितासि लोकान्
महेन्द्रवज्रप्रतिमैः शरोत्तमैः ॥ २१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे लक्ष्मणवाक्यं नाम
सप्ततितमः सर्गः ॥

Digitized by Google

## LXXI.

एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
प्रतिगृह्य वचस्तथ्यं वनानि विचचार ह ॥ १ ॥
स तं बाणधनुष्पाणिर्बद्धासिर्विततायुधः ।
लक्ष्मणो भ्रातरं दीनं पृष्ठतोऽनुजगाम ह ॥ २ ॥
क्रोधेन च विलापेन शोकेन च समाकुलं ।
क्षुत्पिपासापरिश्रान्तमाशीविषमिवोरगं ॥ ३ ॥
सीताहरणदुःखार्तं व्यथितात्मानमातुरं ।
हेतुयुक्तं पुनर्वाक्यं लक्ष्मणस्तथ्यमब्रवीत् ॥ ४ ॥
आश्वसिहि महाबाहो प्राणिनं सर्वमापदः ।
स्पृशन्त्यनिलवल्लोके क्षणेन प्रतियान्ति च ॥ ५ ॥
यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसि ।
प्राकृतश्चाल्पसत्त्वश्च सहिष्यति कथं नरः ॥ ६ ॥
रुषितो हि भवान् लोकांस्तेजसा यदि धक्ष्यति ।
आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिं ॥ ७ ॥
नहुषस्यात्मजो राम ययातिः कर्मभिः स्वकैः ।
गतः शक्रस्य सायुज्यमनयाच्चापतद्भुवि ॥ ८ ॥
महर्षेश्च वशिष्ठस्य यः पितुर्नः पुरोहितः ।
अह्नात् पुत्रशतं जज्ञे तथैव च पुनर्गतं ॥ ९ ॥

Digitized by Google

शक्रादिष्वपि लोकेषु वर्तमानौ नयानयौ ।
श्रूयेते नरशार्दूल न त्वं शोचितुमर्हसि ॥ १० ॥
नष्टायामपि वैदेह्यां मृतायां वापि राघव ।
शोचितुं नार्हसे देव यथान्यः प्राकृतस्तथा ॥ ११ ॥
त्वद्विधा न हि शोचन्ति सततं तत्त्वदर्शिनः ।
सुमहत्स्वपि कृच्छ्रेषु बुद्ध्या निश्चितनिश्चयाः ॥ १२ ॥
अदृष्टगुणदोषाणां कर्मस्वभिरतात्मनां ।
नान्तरेण क्रियां वीर फलमिष्टं प्रवर्तते ॥ १३ ॥
इदं हि स्मारयामि त्वां नोपदेशं करोमि ते ।
अनुशिष्याद्धि को नु त्वां साक्षादपि बृहस्पतिः ॥ १४ ॥
बुद्धिश्च ते महाप्राज्ञ लोकैरपि दुरत्यया ।
इति प्रसुप्तं शोकेन पुनः संबोधयाम्यहं ॥ १५ ॥
दिव्यं त्वं मानुषं चास्त्रमात्मनश्च पराक्रमं ।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां बधे ॥ १६ ॥
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ ।
तमेवैकं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ १७ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामानुनयो नाम
एकसप्ततितमः सर्गः ॥

Digitized by Google

LXXII.

एवमुक्तस्तु तद्वाक्यं लक्ष्मणेन सुभाषितं ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥
स निगृह्य महाबाहुः प्रवृद्धं क्रोधमात्मनः ।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २ ॥
किं करोमि नरव्याघ्र क्व नु गच्छामि लक्ष्मण ।
केनोपायेन पश्येयं सीतां सुरसुतोपमां ॥ ३ ॥
तं तथा भाषमाणं तु दुःखार्त्तं धर्मचारिणं ।
राममाश्वासयन् वाक्यं लक्ष्मणः पुनरब्रवीत् ॥ ४ ॥
जनस्थानमिदं भूयस्त्वमन्वेषितुमर्हसि ।
रक्षोभिर्बहुभिः कीर्णं नानासत्त्वनिषेवितं ॥ ५ ॥
सन्तीह गिरिदुर्गाणि निर्झराश्च शिलायुताः ।
गुहाश्च विविधाकारा नानाद्रुमलतावृताः ॥ ६ ॥
आवासाः किन्नराणां च गन्धर्वनिलयास्तथा ।
तेषु युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ॥ ७ ॥
त्वद्विधा बुद्धिसंपन्ना महात्मानो नरर्षभाः ।
आधिभिर्न प्रकम्पन्ते वायुवेगैरिवाचलाः ॥ ८ ॥
इत्युक्तस्तद्वनं रामो विचचार सलक्ष्मणः ।
शङ्कितः सशरं घोरं गृहीत्वा स महाधनुः ॥ ९ ॥

Digitized by Google

ततः पर्वतकूटाभं छिन्नपक्षं द्विजोत्तमं ।
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषं ॥ १० ॥
तं दृष्ट्वा गिरिसंकाशं रामो लक्ष्मणमब्रवीत् ।
अनेन सीता वैदेही भक्षितात्र न संशयः ॥ ११ ॥
गृध्ररूपमिदं रक्षो व्यक्तं भ्रमति कानने ।
भक्षयित्वा विशालाक्षीं सीतामास्ते यथासुखं ॥ १२ ॥
एनं हनिष्ये दीप्ताग्रैः शीघ्रं बाणैरजिह्मगैः ।
जातरोषः सहस्राक्षो वज्रेणेव महाचलं ॥ १३ ॥
इत्युक्त्वाभ्यपतद्गृध्रं संधाय धनुषि क्षुरं ।
क्रुद्धो रामः समुद्रान्तश्चालयन्निव मेदिनीं ॥ १४ ॥
स दीनो दीनया वाचा मुखेन रुधिरं वमन् ।
अभ्यभाषत तं क्रुद्धं राम रामेति राघवं ॥ १५ ॥
यामोषधीमिवारण्ये विचिनोषि नृपात्मज ।
सा सीता मम च प्राणा रावणेनोभयं हृतं ॥ १६ ॥
त्वया विहीना वैदेही लक्ष्मणेन च राघव ।
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १७ ॥
सीतामभ्युपपन्नोऽहं रावणश्च रणे मया ।
विध्वंसितरथः पुत्र पातितो धरणीतले ॥ १८ ॥
एतत् तस्य धनुर्भग्नमेतच्छत्त्रं विमर्दितं ।
अयं तस्य रथो राम भग्नः सांग्रामिको मया ॥ १९ ॥



Digitized by Google

अत्र युद्धं मया दत्तं रावणस्य पुनः पुनः ।
पक्षतुण्डनखैर्घोरं गात्राण्यारुजता महत् ॥ २० ॥
अथ श्रान्तस्य मे पक्षौ छित्वा वृद्धस्य रावणः ।
अङ्केनादाय वैदेहीमुत्पपात विहायसा ॥ २१ ॥
सीतामभ्युपपन्नोऽहं रावणेन हतो रणे ।
रक्षसा निहतं पूर्वं न त्वं मां हन्तुमर्हसि ॥ २२ ॥
जटायुषं तु विज्ञाय कथयन्तमिमां कथां ।
गृध्रराजं परिष्वज्य रुरोद सहलक्ष्मणः ॥ २३ ॥
एकमेकायने दुर्गे निःश्वसन्तं कथञ्चन ।
समीक्ष्य दुःखित तत्र रामः सौमित्रिमब्रवीत् ॥ २४ ॥
राज्यभ्रंशो वने वासः सीता नष्टा मृतः पिता ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकं ॥ २५ ॥
यद्यहं सलिलस्यार्थे व्रजेयं लवणाम्भसं ।
सोऽपि मां नूनमासाद्य शुष्येन्नदनदीपतिः ॥ २६ ॥
नास्त्यभाग्यतरो लोके मयास्मिन् सचराचरे ।
येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २७ ॥
अयं पितृवयस्यो मे गृध्रराजो जरान्वितः ।
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २८ ॥
इत्येवमुक्त्वा तु वचो राघवः सहलक्ष्मणः ।
पस्पर्श पाणिना गृध्रं पितुः स्नेहं विदर्शयन् ॥ २९ ॥

Digitized by Google

## LXXIII.

रामः प्रेक्ष्य तु तं गृध्रं भुवि रौद्रेण पातितं ।
सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥ १ ॥
ममायं नूनमर्थाय यतमानो विहङ्गमः ।
राक्षसेन हतः संख्ये प्राणांस्त्यजति दुस्त्यजान् ॥ २ ॥
मन्दप्राणो ह्ययं पक्षी कथञ्चिद्यदि जीवति ।
स्वरहीनश्च दीनश्च विस्फुरः समुदीक्षते ॥ ३ ॥
यावदेव ससंज्ञोऽयं यावच्छक्नोति भाषितुं ।
तावत् पृच्छाम्यहं सीतां राजानं पिशिताशिनां ॥ ४ ॥
जटायो यदि शक्नोषि वाचमीरयितुं पुनः ।
सीतामाचक्ष्व भद्रं ते वधमात्मन एव च ॥ ५ ॥
कृत्वा त्वामहमव्यग्रं संरूढव्रणमुत्सहे ।
गन्तुं वर्षसहस्राणि जीव त्वं चिरमण्डज ॥ ६ ॥
किंनिमित्तं हृता सीता रावणस्य च किं मया ।
अपराद्धं क्व वा दृष्टा रावणेन मम प्रिया ॥ ७ ॥
कथं तदिन्दुसंकाशं मुखमासीन्मनोहरं ।
सीताया ह्रियमाणायास्तदा क्रूरेण रक्षसा ॥ ८ ॥
कथंरूपः कथंवीर्यः किंकर्मा च स राक्षसः ।
क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ९ ॥

Digitized by Google

कथं वा समनुप्राप्तो दण्डकं स मरुद्वनं ।
चित्रकाननसंपन्नं बहुपादपसंकुलं ॥ १० ॥
तमुदीक्ष्याथ दीनात्मा विलपन्तमरिंदमं ।
कृच्छ्रादुत्तिष्ठदाश्वस्य जटायुः परमातुरः ॥ ११ ॥
स वाचा व्यक्तया राममिदं वचनमब्रवीत् ।
सा हृता राक्षसेन्द्रेण रावणेन बलीयसा ॥ १२ ॥
मायामाश्रित्य विपुलां वातदुर्दिनसंकुलां ।
परिश्रान्तस्य मे युद्धे छित्वा पक्षौ निशाचरः ॥ १३ ॥
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः ।
उपरुध्यन्ति मे प्राणा दृष्टिर्भ्राम्यति राघव ॥ १४ ॥
पश्यामि वृक्षानेतांश्च सौवर्णानिव सांप्रतं ।
येन राम मुहूर्तेन सीतामादत्त रावणः ॥ १५ ॥
तस्मिन् नष्टं धनं स्वामी क्षिप्रं संप्रतिपद्यते ।
विन्दो नाम मुहूर्तोऽसौ नाबुध्यत स तं तदा ॥ १६ ॥
कषो यथामिषं प्राप्य क्षिप्रं न स भविष्यति ।
तन्न व्यथा राजपुत्र कर्तव्या राम रंस्यसे ॥ १७ ॥
वैदेह्या सहितः क्षिप्रं हत्वा तं रावणं रणे ।
असंस्थानस्य गृध्रस्य रामं प्रत्यभिभाषिणः ॥ १८ ॥
आस्यात् सुस्राव रुधिरं म्रियमाणस्य सामिषं ।
इदं चोवाच वचनं म्रियमाणो विहङ्गमः ॥ १९ ॥

Digitized by Google

सर्वतश्चारयन् दृष्टिमस्थिरामतिविह्वलः ।
समुद्रे दक्षिणे द्वीपे लङ्काधिपतिरीश्वरः ॥ २० ॥
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ।
इत्युक्त्वा दुर्बलः प्राणान् मुमोच पतगेश्वरः ॥ २१ ॥
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ।
त्यक्त्वा शरीरं गृध्रस्य प्राणा जग्मुर्जटायुषः ॥ २२ ॥
स निक्षिप्य शिरो भूमौ प्रसार्य च शिरोधरं ।
विक्षिप्य चरणौ गृध्रः पपात धरणीतले ॥ २३ ॥
तं गृध्रं प्रेक्ष्य पतितं गतासुं पर्वतोपमं ।
रामः सुबहुदुःखार्तो वचः सौमित्रिमब्रवीत् ॥ २४ ॥
बहूनि राक्षसावासे वर्षाणि वसता सुखं ।
अनेन दण्डकारण्यं विचीर्णमिह पक्षिणा ॥ २५ ॥
अनेकवर्षशतिकश्चिरकालमुपस्थितः ।
सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २६ ॥
ततः प्रियहिते युक्तं मृतं दृष्ट्वा जटायुषं ।
अब्रवील्लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २७ ॥
पश्य लक्ष्मण गृध्रोऽयमुपकारी द्विजोत्तमः ।
सीतामभ्युपपन्नश्च रावणेन हतो बली ॥ २८ ॥
गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ।
मम हेतोरयं प्राणानमुञ्चत् पतगेश्वरः ॥ २९ ॥

Digitized by Google

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ॥ ३० ॥
अयं सखा मम पितुः सानुक्रोशो विहङ्गमः ।
मम हेतोः पराक्रान्तो गतः स्वर्गं न संशयः ॥ ३१ ॥
पुत्रैरपत्यैर्दारैश्च परिहीनो महावने ।
अस्मदर्थाय धर्मात्मा गतो वैवस्वतक्षयं ॥ ३२ ॥
सीताहरणजं दुःखं न मे दुःखं तथाविधं ।
यथा विनाशो गृध्रस्य मत्कृतेन परंतप ॥ ३३ ॥
राजा दशरथः श्रीमान् यथा मम महायशाः ।
पूजनीयश्च मान्यश्च तथायं पतगेश्वरः ॥ ३४ ॥
लक्ष्मणाहर काष्ठानि निर्मथिष्यामि पावकं ।
पक्षीन्द्रं सत्करिष्यामि मदर्थे निधनं गतं ॥ ३५ ॥
नाथं पतगलोकस्य चितामारोप्य लक्ष्मण ।
इमं धक्ष्यामि सौमित्रे हतं रौद्रेण पक्षिणं ॥ ३६ ॥
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरं ।
ददाह रामो धर्मात्मा पतगेन्द्रं जटायुषं ॥ ३७ ॥
रामोऽथ सहसौमित्रिर्विगाह्य जलमोजसा ।
कृत्वा चोदककार्यं तु भ्रातरौ रामलक्ष्मणौ ॥ ३८ ॥
रोहिमांसानि चोत्कृत्य पेषीकृत्य महायशाः ।
शकुनेभ्यो ददौ रामो रम्ये हरितशाद्वले ॥ ३९ ॥

Digitized by Google

यं तु मृतस्य मर्त्यस्य जपन्तीह द्विजातयः ।
तं स्वर्गगमने तस्य मन्त्रं रामो जजाप ह ॥ ४० ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं ददतुस्तस्मै गृध्रराजे जटायुषे ॥ ४१ ॥

स गृध्रराजः कृतवान् यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च तेन सत्कृतो
जगाम पुण्यां गतिमुत्तमां शुभां ॥ ४२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुदर्शनं नाम
द्विसप्ततितमः सर्गः — जटायुसंस्कारो नाम
त्रिसप्ततितमः सर्गः ॥

Digitized by Google

## LXXIV.

कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ ।
भ्रातरौ मेघसंकाशं जनस्थानमुपेयतुः ॥ १ ॥
ततोऽस्तं हि गते सूर्ये संश्रितौ स्वकमाश्रमं ।
कल्यमुत्थाय च पुनः कृतजप्याह्निकावुभौ ॥ २ ॥
ततः शून्यं जनस्थानं परित्यज्य महाबलौ ।
अन्वेषमाणौ तौ सीतां जग्मतुः पश्चिमां दिशं ॥ ३ ॥
ततस्तौ पश्चिमां गत्वा शरचापासिधारिणौ ।
अविप्रहतमिक्ष्वाकू पन्थानं प्रतिपद्य वै ॥ ४ ॥
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च समावृतं ।
पर्वतैरुन्नतैर्दुर्गं महद्वनमपश्यतां ॥ ५ ॥
व्यतिक्रम्य तु वेगेन व्यालसिंहनिषेवित ।
अतिभीमं महारण्यं भ्रातरौ तौ महाबलौ ॥ ६ ॥
ततः परं जनस्थानात् क्रोशत्रयमतीत्य वै ।
क्रौञ्चालयं विविशतुर्गहनं वनमोजसा ॥ ७ ॥
नानामेघगणप्रख्यं प्रहृष्टमिव सर्वतः ।
नानावृक्षैः शुभैः कीर्णं मृगपक्षिगणाकुलं ॥ ८ ॥
मार्गमाणौ तु वैदेहीं भ्रातरौ तौ विचेरतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणदुःखितौ ॥ ९ ॥

Digitized by Google

लक्ष्मणस्तु महातेजाः सत्यवाक् शीलवान् शुचिः ।
अब्रवीत् प्राञ्जलिर्वाक्यं भ्रातरं दीनचेतसं ॥ १० ॥
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ।
विपरीतानि पश्यामि निमित्तानि महाभुज ॥ ११ ॥
घोररूपाणि दृश्यन्ते कुरु वीर मनः स्थिरं ।
इमानि हि निमित्तानि सद्यः शंसन्ति विग्रहं ॥ १२ ॥
एष वञ्जुलको नाम पक्षी परमदारुणः ।
अपसव्यं प्रयात्याशु शंसयन् नौ महद्भयं ॥ १३ ॥
अथ तत्र महाघोरं विकृतं तं महोच्छ्रयं ।
विवृद्धमशिरोग्रीवं कबन्धमुदरे मुखं ॥ १४ ॥
रोमभिर्निचितं तीक्ष्णैर्महागिरिमिवोच्छ्रितं ।
नीलमेघनिभं घोरं मेघस्तनितनिस्वनं ॥ १५ ॥
महता चातिपिङ्गेन विपुलेनायतेन च ।
एकेनोरसि दीर्घेण नयनेनातिदर्शिना ॥ १६ ॥
महादंष्ट्रोपपन्नं तं बलिनं सर्वघातिनं ।
भक्षयन्तं महाकायं घोरानृक्षमहाद्विपान् ॥ १७ ॥
भुजौ दीर्घौ विकुर्वाणं घोरौ योजनमायतौ ।
आदाय विविधांश्चैव कराभ्यां मृगपक्षिणः ॥ १८ ॥
आकर्षन्तं वनात् तस्मादनेकान् मृगयूथपान् ।
स्थितमावृत्य पन्थानं कबन्धं तावपश्यतां ॥ १९ ॥

अथ तौ समतिक्रान्तौ क्रोशमात्रान्तरेण तु ।
भ्रातरावतिकायेन गृहीतौ दीर्घबाहुना ॥ २० ॥
परिगृह्य बलाद्वीरौ क्षुधार्तेन महाबलौ ।
कृष्यमाणौ ददृशतुर्बाहू परिघसंनिभौ ॥ २१ ॥
महागजकराकारौ खरौ रोमभिराचितौ ।
दीर्घशुष्कनखौ घोरौ पञ्चास्याविव पन्नगौ ॥ २२ ॥
ताभ्यामाकृष्यमाणौ तु खड्गबाणधनुर्धरौ ।
कृच्छ्रेणास्य समीपं तावुपनीतौ व्यवस्थितौ ॥ २३ ॥
न शशाक हि तौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रक्षेप्तुमास्ये बाहुभ्यामवष्टब्धौ स्वतेजसा ॥ २४ ॥
अथोवाच महाबाहुः कबन्धो दानवोत्तमः ।
शरचापधरौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥ २५ ॥
कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ।
घोरं वनमिदं प्राप्तौ मम भक्ष्यावुपस्थितौ ॥ २६ ॥
ब्रूत मह्यं च कामं च किमर्थं चागतौ युवां ।
यौ मे देशमनुप्राप्तौ क्षुधार्तस्यात्र तिष्ठतः ॥ २७ ॥
तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २८ ॥
कृच्छ्रात् कृच्छ्रतरं प्राप्तौ दारुणं सत्यमेव तु ।
व्यसनं जीवितान्ताय प्रियामनुपलभ्य च ॥ २९ ॥

Digitized by Google

नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ।
आत्मानं मां च सौमित्रे व्यसनैः पश्य मोहितौ ॥ ३० ॥
शूराश्च बलवन्तश्च कृतास्त्राश्च नरा भुवि ।
कालाभिपन्नाः सीदन्ति सिकतासेतवो यथा ॥ ३१ ॥
इति ब्रुवाणो दृढसत्यविक्रमः
प्रतापवान् दाशरथिर्महायशाः ।
अवेक्ष्य सौमित्रिमुदारदर्शनं
मतिं चकारास्य स दोर्निकर्तने ॥ ३२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे कबन्धाङ्कगोचरो
नाम चतुःसप्ततितमः सर्गः ॥

Digitized by Google

LXXV.

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥
तिष्ठथः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
आहारार्थमनुप्राप्तौ किं मां न प्रतिजल्पथः ॥ २ ॥
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हि तं तदा ।
उवाचार्तिसमापन्नं विक्रमे कृतनिश्चयः ॥ ३ ॥
त्वां च मां च पुनस्तूर्णमादत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याशु बाहू कृन्ताव मा चिरं ॥ ४ ॥
ततश्च देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
बाहू तस्यांशदेशाभ्यामुभावेव निकृन्ततां ॥ ५ ॥
दक्षिणो दक्षिणं बाहुमसक्तमसिना तदा ।
रामश्चिच्छेद वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ६ ॥
स पपात महाकायश्छिन्नबाहुर्महासुरः ।
खं च गां च दिशश्चैव नादयन् जलदो यथा ॥ ७ ॥
स निकृत्तौ भुजौ दृष्ट्वा शोणितेन समुक्षितः ।
प्रीतः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ ८ ॥
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः ।
समाचष्ट स तस्याथ कबन्धस्य महाबलः ॥ ९ ॥

Digitized by Google

अयमिक्ष्वाकुदायादो रामो नाम महायशाः ।
अस्य चावरजं विद्धि भ्रातरं मां तु लक्ष्मणं ॥ १० ॥
अस्य देवप्रभावस्य वसतो विजने वने ।
रक्षसापहृता भार्या तामन्वेष्टुमिहागतः ॥ ११ ॥
त्वं तु को वा किमर्थं वा कबन्ध वससे वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घोऽतिभीषणः ॥ १२ ॥
एवमुक्तः कबन्धस्तु लक्ष्मणेन तथा वचः ।
उवाच परमप्रीतः स इन्द्रवचनं स्मरन् ॥ १३ ॥
स्वागतं युवयोर्वीरौ दिष्ट्या प्राप्तौ च राघवौ ।
दिष्ट्या चेमौ निकृत्तौ मे बाहू परिघसंनिभौ ॥ १४ ॥
ममाप्यनेन वेशेन निर्वेदः समपद्यत ।
मृत्पिण्डभूतो लोकस्थः सर्वलोकविगर्हितः ॥ १५ ॥
विकृतः पिशिताहारो जीवलोकभयावहः ।
न किञ्चिदत्यजं सत्त्वं बाहुमध्यमुपागतं ॥ १६ ॥
मृगर्क्षं महिषं वापि शार्दूलं मानुषं गजं ।
नावर्जयमुपप्राप्तं क्षीणपुण्यः क्षुधान्वितः ॥ १७ ॥
व्यसने वर्तमानेन शोके महति तिष्ठता ।
राघवौ यन्मया दृष्टौ नास्ति धन्यतरो मम ॥ १८ ॥
कीर्तिमन्तौ महावीर्यौ धार्मिकौ सत्यविक्रमौ ।
सहितौ भ्रातरौ दृष्ट्वा मुक्तोऽहं पापजीवितात् ॥ १९ ॥

Digitized by Google

रूपवानहमप्यासं कन्दर्पसदृशः क्षितौ ।
अहमात्मापराधेन प्राप्तो रूपविपर्ययं ॥ २० ॥
विरूपं यच्च मे रूपमिदं सर्वभयावहं ।
शापदोषेण संप्राप्तं मया बीभत्समीदृशं ॥ २१ ॥
अवश्यं माननीयौ मे भ्रातरौ रामलक्ष्मणौ ।
कीर्त्यमानं यथातथ्यमिदं मे श्रूयतां वचः ॥ २२ ॥
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतं ।
यथा शुक्रस्य सोमस्य सूर्यस्य च बृहस्पतेः ॥ २३ ॥
श्रियो मां मध्यमं पुत्रं दनुं नाम्ना च दानवं ।
इन्द्रकोपादिदं रूपं प्राप्तवत्तमवेहि च ॥ २४ ॥
अहं हि तपसोग्रेण पितामहमतोषयं ।
दीर्घमायुः स मे प्रादात् ततोऽहं पूर्णमानसः ॥ २५ ॥
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ।
इत्येतां बुद्धिमास्थाय रणे शक्रमधर्षयं ॥ २६ ॥
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ।
सक्थिनी मे शिरश्चैव शरीरे संनिवेशितं ॥ २७ ॥
स तु मां याच्यमानोऽपि नानयद्यमसादनं ।
पितामहवचस्तथ्यं तदस्त्विति च सोऽब्रवीत् ॥ २८ ॥
एवंभूतेन तु मया निरस्तेनाल्पतेजसा ।
इदमुक्तः सुरपतिर्मूर्ध्नि कृत्वाञ्जलिं तदा ॥ २९ ॥

Digitized by Google

अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ।
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुं ॥ ३० ॥
एवमुक्तो मया शक्रो बाहू योजनमायतौ ।
प्रादादृतसि चास्यं मे तीक्ष्णदंष्ट्रमिदं महत् ॥ ३१ ॥
सोऽहं भुजाभ्यां दीर्घाभ्यामाकृष्यास्मिन् महावने ।
गजान् व्याघ्रान् मृगानृक्षान् भक्षयामि समन्ततः ॥ ३२ ॥
स च मामब्रवीदिन्द्रो यदा ते रामलक्ष्मणौ ।
छेत्स्यतः समरे बाहू तदा स्वर्गं गमिष्यसि ॥ ३३ ॥
स त्वं रामोऽसि भद्रं ते नाहमन्येन केनचित् ।
शक्यो हन्तुं यथा वाक्यमेतदुक्तं दिवौकसा ॥ ३४ ॥
अहं वामपि साहाय्यं करिष्यामि नरर्षभौ ।
मित्रं चैवोपदेक्ष्यामि भवतोरग्निसाक्षिकं ॥ ३५ ॥
एवमुक्तस्तु दनुना धर्मात्मा तेन राघवः ।
इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ॥ ३६ ॥
रावणेन हृता सीता मम भार्या यशस्विनी ।
निष्क्रान्तस्य जनस्थानात् सह भ्रात्रा यथासुखं ॥ ३७ ॥
नाममात्रं तु जानामि न रूपं तस्य रक्षसः ।
निवासं वा प्रभावं वा न वयं तस्य विद्महे ॥ ३८ ॥
स त्वं सीतां समाचक्ष्व यत्र येनापि वा हृता ।
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ॥ ३९ ॥

Digitized by Google

शोकार्तानामनर्थानामेवं नः परिधावतां ।
कारुण्यात् सदृशं कर्तुमुपकारे च वर्ततां ॥ ४० ॥
एवमुक्तस्तु रामेण वाक्यं तत् करुणाद्धरं ।
प्रोवाच कुशलो वक्तुं वक्तारमपि राघवं ॥ ४१ ॥
दिव्यमस्ति न मे ज्ञानं नापि जानामि मैथिलीं ।
यस्तां ज्ञास्यति तं ज्ञास्ये दग्धः स्वं रूपमास्थितः ॥ ४२ ॥
मेऽदग्धस्य न विज्ञातुं शक्तिरस्ति नरर्षभौ ।
राक्षसं तं महावीर्यं येन सीता हृता बलात् ॥ ४३ ॥
विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ।
स्वकृतेन मया प्राप्तो योऽयं लोकविगर्हितः ॥ ४४ ॥
किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ।
तावन्मामवटे कृत्वा दह राम यथाविधि ॥ ४५ ॥
दग्धस्त्वयाहं न्यायेन ततोऽहं रघुनन्दन ।
वक्ष्यामि तमहं वीर यस्ते वक्ष्यति रावणं ॥ ४६ ॥
तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव ।
करिष्यति स ते वीर साहाय्यमरिमर्दन ॥ ४७ ॥
न ह्यस्त्यविदितं तस्य त्रिषु लोकेषु राघव ।
सर्वान् परिसृतो देशान् स बली कारणान्तरे ॥ ४८ ॥
एवमुक्तौ तु तौ वीरौ तेनाथो रामलक्ष्मणौ ।
गिरिप्रस्तरमारोप्य कबन्धं समुपेयतुः ॥ ४९ ॥

Digitized by Google

काष्ठनिर्मथनादग्निं जनयित्वा महाबलौ ।
कबन्धमवटे कृत्वा चक्रतुस्तौ चितां ततः ॥५०॥
लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः ।
चितामादीपयामास प्रजज्वाल च सर्वशः ॥५१॥
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसः पच्यमानस्य मन्दं दहति पावकः ॥५२॥
स विधूय चितामाशु भूत्वा चानिमिषेक्षणः ।
विमले वाससी बिभ्रन् मालां सन्तानिकीमपि ॥५३॥
ततश्चितायां वेगेन भास्वरो विरजोऽम्बरः ।
उत्पपात तदा हृष्टः सर्वप्रत्यङ्गभूषितः ॥५४॥
विमाने सोऽम्बरे तिष्ठन् हंसयुक्ते मनोरमे ।
प्रभया च महातेजा दिशो दश विराजयन् ॥५५॥
सोऽन्तरीक्षगतो रामं कबन्धो वाक्यमब्रवीत् ।
शृणु राघव तत्त्वेन सीतां योऽधिगमिष्यति ॥५६॥
पम्पा नामाभितो वापी तदभ्यासमितो गिरिः ।
ऋष्यमूक इति ख्यातो वने वसति तस्य च ॥५७॥
सुग्रीव इति विख्यातः कामरूपो महाबलः ।
सोऽभिगम्यश्च पूज्यश्च कर्तव्यश्च प्रदक्षिणं ॥५८॥
राम यद्युक्तयो लोके याभिः सर्वं विमृश्यते ।
परिमृश्य दशास्तास्ता दशाभागेन वर्तते ॥५९॥



Digitized by Google

तां दशामागतो दीनां त्वं राम सहलक्ष्मणः ।
यत्कृते व्यसनं प्राप्तं त्वया भार्यापहारजं ॥ ६० ॥
तदवश्यं त्वया कार्यं सुमहत् सौहृदं वचः ।
अकृत्वा न हि ते सिद्धिमहं पश्यामि चिन्तयन् ॥ ६१ ॥
स तु ते राम धर्मात्मा सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन बालिना शक्रसूनुना ॥ ६२ ॥
ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते ।
स वसत्यात्मवान् शूरश्चतुर्भिः सह वानरैः ॥ ६३ ॥
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव ।
तत्सहायस्य पश्यामि तव कार्यविनिश्चयं ॥ ६४ ॥
तस्माद्वानरराजं तं कृतज्ञं व्रज सुव्रत ।
अत्रोत्थाय समागम्य दीप्यमाने विभावसौ ॥ ६५ ॥
न तु ते सोऽवमन्तव्यः सुग्रीवो वानरोऽपि सन् ।
कृतज्ञः कामरूपी च सहायार्थे च कृत्यवान् ॥ ६६ ॥
स हि शक्तो बली कर्तुं कार्यं ते हरियूथपः ।
कृतार्थो वाकृतार्थो वा कृत्यं ते स करिष्यति ॥ ६७ ॥
स वानरवरः श्रीमान् पम्पामटति शङ्कितः ।
भास्करस्यौरसः पुत्रो बालिना कृतविग्रहः ॥ ६८ ॥
संनिधायायुधं क्षिप्रमृष्यमूकालयं कपिं ।
कुरु राघव सत्येन वयस्यं वानराधिपं ॥ ६९ ॥

Digitized by Google

स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिपुङ्गवः ।
नरमांसाशिनां लोके नैपुण्येनोपलप्स्यते ॥ ७० ॥
न तस्याविदितं लोके किञ्चिदस्तीह राघव ।
यावत् सूर्यः प्रतपति सहस्रांशुररिन्दम ॥ ७१ ॥
तावदेव सह भ्रात्रा गच्छ त्वं सूर्यनन्दनं ।
स नदीर्विविधान् शैलान् गिरीणां कन्दराणि च ॥ ७२ ॥
अन्विष्यन् वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ।
वानरांश्च महावीर्यान् प्रेषयिष्यति वानरः ।
दिशो विचेतुं तां सीतां त्वद्वियोगेन कर्षितां ॥ ७३ ॥
सुमेरुशृङ्गाग्रे गतामनिन्दितां
प्रमथ्य पातालतलेऽपि वाश्रितां ।
प्लवङ्गमानां प्रवरस्तव प्रियां
निरस्य रक्षांसि तव प्रदास्यति ॥ ७४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे कबन्धवाक्यं नाम
पञ्चसप्ततितमः सर्गः ॥

Digitized by Google

## LXXVI.

निवेद्याथ स रामस्य सीतायाः प्रतिपादनं ।
वाक्यमर्थार्थतत्त्वज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥
एष राम गतः पन्था येनैते पुष्पिता द्रुमाः ।
प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोहराः ॥ २ ॥
विल्वाः पियालाः पलसाः प्लक्षन्यग्रोधतिन्दुकाः ।
अश्वत्थाः कर्णिकाराश्च मधूका धवचन्दनाः ॥ ३ ॥
आरुह्य यदिवा भूमौ पातयित्वा यथासुखं ।
फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ॥ ४ ॥
संक्रामन्तौ बहून् देशान् शैलाच्छैलं वनाद्वनं ।
ततः पुष्करिणीं रम्यां पम्पामासादयिष्यथः ॥ ५ ॥
अशर्करां सुसलिलां समतीर्थामशैवलां ।
राम संजातशालूकां कमलोत्पलमालिनीं ॥ ६ ॥
तत्र हंसाः प्लवाः क्रौञ्चाः सारसाश्चैव राघव ।
वल्गुस्वरा विकूजन्ति पम्पासलिलगोचराः ॥ ७ ॥
नोद्विजन्ते नरान् दृष्ट्वा बधस्याकोविदाः पुरा ।
घृतपिण्डोपमान् स्थूलान् द्विजांस्तान् भक्षयिष्यथः ॥ ८ ॥
रोहितान् शकुलांश्चैव नलमीनांश्च राघव ।
पम्पायामिषुभिर्मत्स्यान् हत्वा राम वरान् वरान् ॥ ९ ॥
तांस्तान् पक्वान् विनिष्टप्तानकृशानेककण्टकान् ।

Digitized by Google

विचित्य पाणौ छित्त्वा च लक्ष्मणस्ते प्रदास्यति ॥१०॥
सुखं ते खादतो मांसं पम्पायां पुष्पसंचये ।
पद्मगन्धि शिवं वारि सुखं शीतमनाविलं ॥११॥
आदाय पद्मिनीपत्रैर्लक्ष्मणस्तव दास्यति ।
पृषतश्चैव चित्राङ्गान् विमलान् वनचारिणः ॥१२॥
तत्रानुपेतान् पम्पायां दृष्ट्वा शोकं विहास्यसि ।
चित्राः सुमनसस्तत्र तिलकाः कृतमालकाः ॥१३॥
उत्पलानि च फुल्लानि तथा तामरसानि च ।
चक्रवाकवलाकानां सारसानां च रासतां ॥१४॥
रम्यं कारण्डवानां च शब्दं श्रोष्यसि राघव ।
द्रक्ष्यसे पद्मषण्डानि व्याकोषाणि समन्ततः ॥१५॥
तप्तकाञ्चनवर्णानि दावाग्निसदृशानि च ।
न तेषां तत्र माल्यानां कश्चिद्रोपयिता नरः ॥१६॥
मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः ।
अथ तेषामनावृष्ट्यां वन्यमाहरतां गुरोः ॥१७॥
ये प्रपेतुर्मह्यां तूर्णं शरीरात् स्वेदविन्दवः ।
तानि माल्यानि जातानि मुनीनां भावितात्मनां ॥१८॥
स्वेदविन्दुप्ररूढानि शोभयन्ति महत् सरः ।
तेषामद्यापि तत्रैव दृश्यते सहचारिणी ॥१९॥
श्रवणा शवरी नाम काकुत्स्थ चिरजीविनी ।

Digitized by Google

त्वां तु धर्मरतं नित्यं सर्वभूतनमस्कृतं ॥ २० ॥
दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ।
गच्छ पम्पामितो राम भ्रात्रानेन सह द्रुतं ॥ २१ ॥
बहुवृक्षान् वनोद्देशान् पश्यन् पुष्पसुगन्धिनः ।
ततस्त्वं राम पम्पायास्तीरमासाद्य पश्चिमं ॥ २२ ॥
आश्रमस्थानमतुलं शून्यं द्रक्ष्यसि राघव ।
तत्रासन् यज्ञपात्राणि परित्यक्तानि मानद ॥ २३ ॥
स्थानं प्रपचतां तत्र दृष्ट्वा नीवारतण्डुलान् ।
पिप्पलीलवणाभ्यां च मत्स्यान् संपादयिष्यथः ॥ २४ ॥
प्रभूततण्डुलीयं हि पिप्पलीप्रततं वनं ।
न तमाक्रमितुं नागाः शक्नुवन्ति वराश्रमं ॥ २५ ॥
ऋषेस्तस्य मतङ्गस्य विविधं तच्च काननं ।
तस्मिन् नन्दनसंकाशे देवारण्यनिभे वने ॥ २६ ॥
नानाविहगसंघुष्टे न यात्येव ग्रां नरः ।
ऋष्यमूकस्तु पम्पायाः पुरस्तात् पुष्पितद्रुमः ॥ २७ ॥
स दुर्गारोहणो राम शिशुनागाभिरक्षितः ।
यस्तु तं विषमाचारः पापकर्माधिरोहति ॥ २८ ॥
तत्रैवाशु हरन्त्येनं सुप्तमादाय राक्षसाः ।
शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ॥ २९ ॥
यत् स्वप्ने लभते वित्तं तत् प्रबुद्धोऽधिगच्छति ।

Digitized by Google

उदारो ब्रह्मणश्चैत्यः पूर्वकालाभिनिर्मितः ॥ ३० ॥
महात्मभिर्महाप्रज्ञैश्चितस्तत्र द्विजातिभिः ।
तत्रैव निशि नागानामाक्रन्दः श्रूयते महान् ॥ ३१ ॥
क्रीडतां राम पम्पायां मतङ्गाश्रमसंनिधौ ।
सिक्ता रुधिरधाराभिर्हत्वान्योन्यं वनद्विपाः ॥ ३२ ॥
पृथक् तीर्थानि गाहन्ते मेघवर्णास्तरस्विनः ।
ते तत्र पीत्वा पानीयं रजः प्रक्षाल्य चाङ्गजं ॥ ३३ ॥
निवृत्ताः प्रतिगाहन्ते वनानि वनगोचराः ।
राम तस्य तु शैलस्य महती शोभना गुहा ॥ ३४ ॥
शिलापिधाना काकुत्स्थ दुर्गं चास्याः प्रवेशनं ।
तस्या गुहायाः प्रद्वारे महान् शीतोदको ह्रदः ॥ ३५ ॥
बहुपुष्पफलो रम्यो नानोरगसमावृतः ।
तस्मिन् वसति सुग्रीवश्चतुर्भिः सचिवैः सह ॥ ३६ ॥
कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते ।
कबन्धस्त्वनुशास्यैवमुभौ तौ रामलक्ष्मणौ ॥ ३७ ॥
स्रग्वी भास्करवर्णाभः खे व्यराजत वीर्यवान् ।
तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ ॥ ३८ ॥
स्वस्ति तेऽस्तु प्रयाहीति राघवौ वाक्यमूचतुः ।
गम्यतां कार्यसिद्ध्यर्थमित्युवाच ततो दनुः ।
सुप्रीतौ तावनुज्ञातौ दनुं संपूज्य जग्मतुः ॥ ३९ ॥

Digitized by Google

## LXXVII.

ततः कबन्धः खगतः स्रग्वी भास्करदर्शनः ।
जगामामन्त्र्य काकुत्स्थं शुभं भवनमात्मनः ॥ १ ॥
तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने ।
आदाय तस्थतुः प्राचीं दिशं दशरथात्मजौ ॥ २ ॥
तौ शैलैराचितान् देशान् क्षौद्रकल्पफलद्रुमान् ।
त्वरितौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ ३ ॥
कृत्वा तु शैलपृष्ठे तौ वासमेकां निशां ततः ।
प्रभातायां पुनर्वीरौ जग्मतुः प्रथमेऽह्नि ॥ ४ ॥
तौ गत्वा दूरमध्वानं विचित्रवनभूषितं ।
पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ५ ॥
तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमं ।
ततो ददृशतुस्तत्र शवर्या रम्यमाश्रमं ॥ ६ ॥
तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतं ।
सुरम्यमभिपश्यन्तौ शवरीमभ्युपेयतुः ॥ ७ ॥
तौ दृष्ट्वा सा तदा सिद्धा समुत्थाय कृताञ्जलिः ।
पादौ रामस्य जग्राह लक्ष्मणस्य च धीमतः ॥ ८ ॥
तामुवाच ततो रामः शवरीं शंसितव्रतां ।
कच्चित् ते निर्जिता विघ्नाः कच्चित् ते वर्तते तपः ॥ ९ ॥

Digitized by Google

कच्चित् ते गुरुशुश्रूषा सफला गुरुवत्सले ।
कच्चित् ते विनयः प्राप्तः कच्चित् तेऽन्द्रियसंयमः ॥ १० ॥
क्व च ते संशितात्मानस्तपःसिद्धा महर्षयः ।
ये त्वयोपासिताः पूर्वं श्रोतुमिच्छामि तानहं ॥ ११ ॥
राघवेण तथा पृष्टा सा सिद्धा सिद्धसंमता ।
शशंस शवरी तस्य ये मया पर्युपासिताः ॥ १२ ॥
चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ।
इह ते दिवमारूढा ये मयाभ्यर्चिताः पुरा ॥ १३ ॥
तैश्चाहमुक्ता धर्मिष्ठैर्महाभागैर्महर्षिभिः ।
आगमिष्यति काकुत्स्थः सुपुण्यमिममाश्रमं ॥ १४ ॥
स ते प्रतिगृहीतव्यो रामः सौमित्रिणा सह ।
तमर्चित्वा ध्रुवं स्वर्गी भविष्यति तवान्वयः ॥ १५ ॥
मया तु विविधं वन्यं संचितं रघुनन्दन ।
तवार्थे नरशार्दूल पम्पायामिह दृश्यतां ॥ १६ ॥
स एवमुक्तो धर्मात्मा शवर्या शवरीमिदं ।
उवाच रामो विज्ञाय तापसैरवहिष्कृतां ॥ १७ ॥
दनोः सकाशात् तत्त्वेन प्रभावो मे महात्मनां ।
श्रुतः प्रत्यक्षमिच्छामि तत्त्वेनाद्य निरीक्षितुं ॥ १८ ॥
एतत् तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतं ।
शवरी दर्शयामास तावुभौ तद्वनं महत् ॥ १९ ॥



Digitized by Google

उवाच वचनं चेदं तावुभौ रामलक्ष्मणौ ।
बहुपुष्पफलं रम्यं दर्शनीयं महद्वनं ॥ २० ॥
पश्य मेघचयप्रख्यं मृगपक्षिगणायुतं ।
मतङ्गवनमित्येतद्विश्रुतं भुवि राघव ॥ २१ ॥
इह ते भावितात्मानो गुरवो मे महाद्युते ।
जुहुवांचक्रुरनलं मन्त्रवन्मन्त्रकोविदाः ॥ २२ ॥
इयं प्रत्यक्स्थली वेदी यत्र ते देवसत्क्रियाः ।
पुष्पोपहारैः प्रणताश्चक्रुरभ्युद्यतैः करैः ॥ २३ ॥
तेषां तपःप्रभावेन पश्याद्यापि रघूत्तम ।
न म्लायन्ति न शुष्यन्ति कुसुमानि कुशास्तथा ॥ २४ ॥
अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः ।
चिन्तितानागतान् पश्य सहितान् सप्त सागरान् ॥ २५ ॥
कृताभिषेकैर्न्यस्तानि वल्कलानीह तैर्द्विजैः ।
पश्याद्यापि न शुष्यन्ति वृक्षासक्तानि राघव ॥ २६ ॥
एतांश्चान्यांश्च सा तस्मै प्रभावांस्तपसो बलात् ।
तेषां मुनीनामाचष्ट रामाय विदितात्मने ॥ २७ ॥
आश्चर्यमिति रामश्च प्रतिजग्राह तद्वचः ।
वचनान्ते च सा राममिदं वचनमब्रवीत् ॥ २८ ॥
कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया ।
तदिच्छाम्यभ्यनुज्ञातुं त्यजामीदं कलेवरं ॥ २९ ॥

Digitized by Google

तेषामिच्छाम्यहं गन्तुं मुनीनां भावितात्मनां ।
समीपमाश्रमस्थानां यानहं पर्यचारिषं ॥ ३० ॥
धर्मिष्ठं तु वचस्तस्याः श्रुत्वा रामः सलक्ष्मणः ।
अनुजानामि गच्छेति प्रहृष्टवदनोऽब्रवीत् ॥ ३१ ॥
अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने ।
ज्वलन्ती स्वेन वपुषा स्वर्गमेव जगाम सा ॥ ३२ ॥
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ।
तत् पुण्यं शवरी स्थानं जगामेव समाधिना ॥ ३३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे कबन्धोपदेशो नाम
षट्सप्ततितमः सर्गः — शवरीदर्शनं नाम
सप्तसप्ततितमः सर्गः ॥

Digitized by Google

## LXXVIII.

दिवं तस्यां तु यातायां शर्वर्यां स्वेन कर्मणा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥
चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनां ।
इदं भ्रातरमेकाग्रं लक्ष्मणं वाक्यमब्रवीत् ॥ २ ॥
दृष्टोऽयमाश्रमः पुण्यो बह्वाश्चर्यो महात्मनां ।
विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३ ॥
सप्तानां तु समुद्राणामेषां तीर्थेषु लक्ष्मण ।
उपस्पृष्टं तु विधिवत् पितरश्चैव तर्पिताः ॥ ४ ॥
प्रनष्टमशुभं सर्वं कल्याणं समुपस्थितं ।
तथा हि संप्रहृष्टं मे हृदयं पश्य लक्ष्मण ॥ ५ ॥
हृदयं हि नरस्याह शुभं वा यदिवाशुभं ।
पूर्वं हि मनसा ध्यातं पश्चादेतदवाप्यते ॥ ६ ॥
येरस्य दृष्टैर्नियतं शोकः शान्तिमवाप्स्यति ।
तानीमानि च दृश्यन्ते मनोज्ञानि समन्ततः ॥ ७ ॥
मन्दस्तु मन्दशिशिरो विरजाः प्रणुदन् क्लमं ।
अनुलोमसुखो वायुरनुसारयतीव मां ॥ ८ ॥
शोकश्च मनसो मेऽद्य मन्दमन्दमपैति च ।
स्थिरीभवन्ति गात्राणि विशुध्यन्तीन्द्रियाणि च ॥ ९ ॥

Digitized by Google

एवमप्यतितप्तस्य शोको मे व्यवधूयते ।
शरीरे ज्ञायते लक्ष्मीर्धृतिश्चैव यथा पुरा ॥ १० ॥
न चापि दर्शनं दूरे तस्या वाप्या विचिन्तये ।
वीक्षस्व पुरुषव्याघ्र सिद्धिं शंसन्ति लक्ष्मण ॥ ११ ॥
एते मम सुखाः सौम्या मृगाः सर्वे प्रदक्षिणाः ।
मनोज्ञैः परितो वाग्भिर्गायन्तीव महागिरौ ॥ १२ ॥
सुखशीतो वनस्यास्य नानागन्धवहः शिवः ।
देशयन्निव पन्थानं मन्दं वहति मारुतः ॥ १३ ॥
सुप्रभं च प्रसन्नं च वदनं तेऽद्य लक्ष्मण ।
पूर्वं हि हृदयेऽज्ञातौ गुणदोषौ समश्नुते ॥ १४ ॥
शक्यं चिरमपि स्थातुं पुण्येऽस्मिन् मुनिसंश्रये ।
न च तृप्तिं गमिष्यामि वर्षाणामयुतैरपि ॥ १५ ॥
मार्गितव्या तु वैदेही त्वया सह ममानघ ।
न स्यात् कालो द्युतिमते आसीनानामिहाश्रमे ॥ १६ ॥
तस्मादागच्छ गच्छावस्तां पम्पां शुभकाननां ।
ऋष्यमूको गिरिर्यस्या नातिदूरे प्रकाशते ॥ १७ ॥
यस्मिन् वसति स प्राज्ञः सुग्रीवोऽंशुमतः सुतः ।
नित्यं बालिभयत्रस्तश्चतुर्भिः सचिवैः सह ॥ १८ ॥
तमहं त्वरितो द्रष्टुं स्वकार्यत्वरया हरिं ।
तदधीनं हि नः सौम्य सीतायाः परिमार्गणं ॥ १९ ॥

Digitized by Google

ब्रुवाणमेवं तु तदा रामं सौमित्रिरब्रवीत् ।
गच्छावः सहितौ तत्र ममापि त्वरते मनः ॥ २० ॥
आश्रमादथ निष्क्रम्य तस्मात् स रघुनन्दनः ।
आजगाम ततः पम्पां नानापादपशोभितां ॥ २१ ॥
निरीक्षमाणो विविधान् सर्वतः पुष्पितान् द्रुमान् ।
प्रमदाभिरिव स्कन्धे लताभिः परिवेष्टितान् ॥ २२ ॥
कोयष्टिकैर्वञ्जुलकैः शतपत्रैस्तित्तिरीटकैः ।
पुत्रप्रियैः पूर्णमुखैर्भरद्वाजैः प्रियम्वदैः ॥ २३ ॥
एतैरन्यैश्च विहगैर्नादितं तन्महद्वनं ।
असावगच्छद्धिक्रान्तो राघवः सहलक्ष्मणः ॥ १४ ॥
स ददर्श ततः पम्पां शुभशीतजलाशयां ।
प्रहृष्टनानाशकुनां बहुपादपसंकुलां ॥ २५ ॥
कुमुदोत्पलिनीं रम्यां शुभां मणिनिभोदकां ।
बहुपङ्कजसंबाधां बहुपुष्करमण्डितां ॥ २६ ॥
हंसकारण्डवाकीर्णां महर्षिगणसेवितां ।
चक्रवाकोपक्रीडां च कादम्बैः कूजितां तथा ॥ २७ ॥
वीज्यमानस्तु शीतेन सुखस्पर्शेन वायुना ।
जहौ परिश्रमं रामः सह सौमित्रिणा तदा ॥ २८ ॥
द्रुमान् पुष्पफलोपेतान् परपुष्टविनादितान् ।
मृदुशाद्वलनीलानि दृष्ट्वा भूमितलानि च ॥ २९ ॥

Digitized by Google

संप्रहृष्टस्ततो रामः पम्पां च सुमनोहरां ।
बालार्कसदृशैः पद्मैः प्रदीप्तामिव सर्वतः ॥ ३० ॥
महाबलौ तां तु शिवामकर्दमां
निरीक्ष्य पम्पामभिरामदर्शनां ।
अपीततां विष्णुपदीं महानदीं
यथैव मित्रावरुणावहृष्यतां ॥ ३१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे पम्पागमनं नाम
अष्टासप्ततितमः सर्गः ॥

Digitized by Google

LXXIX.

तां समन्तात् समालोक्य रम्यां पुष्करिणीं शुभां ।
रामः सौमित्रिमाभाष्य विललापाकुलेन्द्रियः ॥ १ ॥
सौमित्रे पश्य पम्पायाः काननं शुभदर्शनं ।
भ्राजन्ते यत्र शैलाभा द्रुमाः सशिखरा इव ॥ २ ॥
सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः ।
गन्धवान् सुरभिर्वातो नानापुष्पितकाननः ॥ ३ ॥
पश्य पुष्पाणि सौमित्रे वनानां पुष्पशालिनां ।
सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव ॥ ४ ॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति मां ॥ ५ ॥
मारुतः सुखसंस्पर्शी वाति चन्दनशीतलः ।
षट्पदैरभिकूजद्भिर्वनेषु च सुगन्धिषु ॥ ६ ॥
गिरिप्रस्थेषु सौमित्रे पुष्पवद्भिर्मनोरमैः ।
संसक्तविटपस्कन्धैर्द्रुमैर्निरीक्ष्यं नभस्तलं ॥ ७ ॥
पुष्पिताग्रांश्च पश्येमान् कर्णिकारान् समन्ततः ।
हाटकप्रतिमाच्छन्नान् नरान् पीताम्बरानिव ॥ ८ ॥
वसन्तकालः प्राप्तोऽयं नानाविहगकूजितः ।
विशालाक्षीविहीनस्य मम शोकविवर्धनः ॥ ९ ॥

Digitized by Google

सौमित्रे मां सुदुःखार्तं संतापयति मन्मथः ।
हृष्टो विवदमानश्च कोकिलो मामिवाह्वयत् ॥ १० ॥
प्रियासहायो मुदितो वसन्तकामदीपितः ।
एष दात्यूहको हृष्टो रम्ये काननिर्झरे ॥ ११ ॥
प्रवदन् मन्मथाविष्टः स्वकान्तामनुतिष्ठति ।
विचित्रमिह गायन्ति वायुभोगाभिनन्दिनः ॥ १२ ॥
भृङ्गराजाभिरुदिताः सौमित्रे मधुरस्वराः ।
मां विना मृगशावाक्षीं सीतां वाष्पजडीकृतां ॥ १३ ॥
संतापयन्ति सौमित्रे क्रूरश्चित्रामिव ग्रहः ।
शिखिनीभिर्वृता भान्ति मयूरा गिरिसानुषु ॥ १४ ॥
पश्य लक्ष्मण नृत्यन्तं मयूरमनुनृत्यतीं ।
मयूरीं मन्मथाविष्टां मम शोकविवृद्धये ॥ १५ ॥
नैव नूनं मयूरस्य रक्षसापहृता प्रिया ।
अहं यथा विरहितः पुष्पमासि सुमध्यमां ॥ १६ ॥
परिचुम्बति संविश्य भ्रमरश्चूतमञ्जरीं ।
नवसंगमसंहृष्टः कामी प्रणयिनीमिव ॥ १७ ॥
पश्य चारूणि पुष्पाणि निष्फलानि भवन्ति मे ।
पुष्पभारसमृद्धानां द्रुमाणां शिशिरात्यये ॥ १८ ॥
एष पुष्पवहो वायुः सुखस्पर्शः सुखावहः ।
तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ १९ ॥



Digitized by Google

श्यामा पद्मपलाशाक्षी विनाभूता मया प्रिया ।
सीता परवशं प्राप्ता सापि शोच्या वयं यथा ॥ २० ॥
अस्मिन् काले प्रमुदिताः संघशः शकुनाः कलं ।
आह्वयन्ति इवान्योन्यं कामोत्साहकरा मम ॥ २१ ॥
नमिताङ्गोऽयमस्तब्धो मत्तः प्रमुदितः सुखं ।
वायसः शिखरस्यान्ते हृष्टं मामभिनन्दति ॥ २२ ॥
एष मे तत्र वैदेह्याः सकाशं कथयिष्यति ।
पक्षी कुशलवृत्तान्तं तस्याश्च कुशलं मम ॥ २३ ॥
पश्य लक्ष्मण संवादं मम मन्मथवर्धनं ।
पुष्पिताग्रेषु वृक्षेषु द्विजानामनुकूजतां ॥ २४ ॥
सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु ।
मधुरं कोकिलालापमृतुदोषेण कूजतां ॥ २५ ॥
एषा प्रसन्नसलिला पद्मिनी चोत्पलायुता ।
हंसकारण्डवाकीर्णा फुल्लसौगन्धिकाकुला ॥ २६ ॥
चक्रवाकयुता नित्यं विचित्रकुसुमोत्करा ।
मातङ्गमृगयूथैश्च सेवितेयं जलार्थिभिः ॥ २७ ॥
पद्मान्यशोकपुष्पाणि दृष्ट्वा दृष्टिर्विहन्यते ।
सीताया नेत्रकोषाभ्यां सदृशानीव लक्ष्मण ॥ २८ ॥
पद्मपुष्परजोन्मिश्रो वृक्षान्तरविनिःसृतः ।
निश्वास इव सीताया वायुर्वाति मनोरमः ॥ २९ ॥

Digitized by Google

सौमित्रे पश्य पम्पायां दक्षिणे गिरिसानुषु ।
पुष्पिताः कर्णिकारस्य यष्टीः परमशोभनाः ॥ ३० ॥
अधिकं शैलराजोऽयं धातुभिश्च विभूषितः ।
धातुजं सृजते रेणुं वायुवेगेन घर्षितं ॥ ३१ ॥
पम्पातीररुहाश्चैव पुष्पिता मधुगन्धिनः ।
मालत्यो मल्लिकाश्चैव करवीराः सुपुष्पिताः ॥ ३२ ॥
गिरिप्रस्थे तु सौमित्रे सर्वतः पुष्पितान् द्रुमान् ।
निष्पत्रान् दूरतः पश्य प्रदीप्तानिव किंशुकान् ॥ ३३ ॥
शोभन्ते माधवे मासि सिन्धुवाराः सुपुष्पिताः ।
चिरविल्वा मधूकाश्च वञ्जुलास्तिन्दुकास्तथा ॥ ३४ ॥
चम्पकास्तिलकाश्चैव नागपुष्पाश्च पुष्पिताः ।
अर्जुना मुचुकुन्दाश्च दृश्यन्ते गिरिसानुषु ॥ ३५ ॥
केतकोद्दालकाश्चैव शिरीषाः शिंशपास्तथा ।
धवाः शाल्मलयश्चैव रक्ताः कुरुवकास्तथा ॥ ३६ ॥
तिनिशा नक्तमालाश्च चन्दनाः पिचुला अपि ।
तथा तालास्तमालाश्च नागवल्ल्यः करञ्जकाः ॥ ३७ ॥
उडुम्बराः कदम्बाश्च पूर्णकाः पारिभद्रकाः ।
नीपाश्च वरुणाश्चैव सर्वतो भान्ति पुष्पिताः ॥ ३८ ॥
वनेषु पश्य सौमित्रे द्रुमाणां पुष्पसंपदं ।
पुष्पमासं विकुर्वाणाः प्रहर्षादिव पुष्पिताः ॥ ३९ ॥

Digitized by Google

पश्य पम्पां शुभजलां सुप्रभां पुष्करावृतां ।
चक्रवाकानुचरितां हंसकारण्डवायुतां ॥ ४० ॥
प्लवैः क्रौञ्चैश्च संघुष्टां सारसैरभिनादितां ।
अधिकं शोभते पम्पा कूजद्भिर्विहगोत्तमैः ॥ ४१ ॥
दीपयन्ति च मे कामं विविधा मुदिता द्विजाः ।
श्यामां पद्ममुखीं स्मृत्वा मन्मथो वर्धते मम ॥ ४२ ॥
पश्य सानुषु चित्रेषु मृगीभिः सहितान् मृगान् ।
अहं तु मृगशावाक्ष्या वैदेह्या रहितोऽसुखी ॥ ४३ ॥
अस्मिन् सानुरुहे रम्ये मत्तद्विजगणायुते ।
पद्मसौगन्धिकयुते दुःखशोकापहे शिवे ॥ ४४ ॥
रमेयं विहगोद्घुष्टे विविधे काननोत्तमे ।
पश्येयं यदि वैदेहीं नलिन्युपवने सुखे ॥ ४५ ॥
हा प्रिये मृगशावाक्षि तप्तकाञ्चनवर्णिनि ।
कष्टं मां नाभिजानासि विह्वितं मूर्खचेतसं ॥ ४६ ॥
निर्वास्यमानं कैकेय्या हृतराज्यं वने चरं ।
मा त्यजः कथमद्य त्वं त्यक्त्वा निर्विषयं गता ॥ ४७ ॥
क्व प्रीतिः क्व च ते ऽक्तिः क्व भक्तिः क्व च सा दया ।
यन्न मां दुःखशोकार्तं नाभिजानासि जानकि ॥ ४८ ॥
एवं स विलपंस्तत्र शोकोपहतचेतनः ।
अवैक्षत शिवां पम्पां रम्यवारिवहां शुभां ॥ ४९ ॥

Digitized by Google

निरीक्षमाणास्तु ततो महात्मा
सर्वं वनं पादपनिर्झरांश्च ।
उद्विग्नचेताः सह लक्ष्मणेन
विलप्य दुःखोपहतः प्रतस्थे ॥५०॥
तावृष्यमूकं सहितौ प्रयातौ
सुग्रीवशाखामृगसेवितं तं ।
त्रस्ताश्च दृष्ट्वा हरयो बभूवुर्
महौजसौ राघवलक्ष्मणौ तौ ॥५१॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम्
आरण्यककाण्डे रामोन्मादकरो नाम
नवसप्ततितमः सर्गः ॥

आरण्यककाण्डं समाप्तं ॥

Digitized by Google

# अथ
# श्रीरामायणे वाल्मीकीये
# किष्किन्धाकाण्डं

## I.

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ॥ १ ॥
चिन्तयाभिपरीतात्मा निश्चित्य गिरिलङ्घने ।
वरायुधधरौ वीरौ सुग्रीवः प्लवगेश्वरः ॥ २ ॥
न स चक्रे मनः स्थातुं वीक्षमाणो महाबलौ ।
उद्विग्नहृदयः सर्वा दिशः समवलोकयन् ॥ ३ ॥
व्यवातिष्ठत नैकस्मिन् देशे वानरपुङ्गवः ।
स चिन्तयामास विभुर्विमृश्य च पुनः पुनः ॥ ४ ॥
त्यक्तुकामो गिरेः शृङ्गं यत्रासीत् समवस्थितः ।
चिन्तयन्नेव सहसा हनूमत्प्रमुखान् हरीन् ॥ ५ ॥
महानिश्चयतत्त्वज्ञान् समीपस्थान् व्यलोकयत् ।
ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ॥ ६ ॥

शशंस परमोद्विग्नो गच्छन्तौ रामलक्ष्मणौ ।
एतौ वनमिदं दुर्गं बालिप्रणिहितौ चरौ ॥ ७॥
छद्मना चीरवसनौ मनुष्यावागताविह ।
ततः सुग्रीवसचिवा दृष्ट्वा तौ वरधन्विनौ ॥ ८॥
जग्मुस्ते शिखरं तस्मादन्यत् प्लवगपुङ्गवाः ।
ते क्षिप्रमभिसंगम्य यूथपा यूथपर्षभं ॥ ९॥
हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ।
ततः शाखामृगाः सर्वे प्लवमाना महाबलाः ॥ १०॥
वेगेनाकम्पयन् वृक्षान् गिरीणां शिखराणि च ।
एवमेकायने दुर्गे प्लवमाना गिरेर्गिरिं ॥ ११॥
बभञ्जुः पादपांस्तत्र पुष्पितांश्च वनद्रुमान् ।
सालाश्वकर्णककुभास्तिलकार्जुनवञ्जुलाः ॥ १२॥
पातिताः सहसा सर्वे न्यग्रोधाश्वत्थतिन्दुकाः ।
व्याघ्रगोकर्णकपयो वराहा मृगयूथपाः ॥ १३॥
त्रासिताः सहसा भीतैर्भीता दश दिशो गताः ।
प्लवमानैः कपिवरैरप्रमत्तैः प्रवेगितैः ॥ १४॥
सत्त्वान्यतिप्रविद्धानि त्रासितानि हतानि च ।
शिखराच्छिखरं गत्वा सुपर्णानिलवेगितः ॥ १५॥
मलयस्योत्तरे शृङ्गे सुग्रीवस्तु स्थितोऽभवत् ।
आप्लुत्य गिरिदुर्गानि मलयस्य वनौकसः ॥ १६॥

Digitized by Google

मार्जारमृगशार्दूलांस्त्रासयन्तो ययुस्तदा ।
ततः सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः ॥ १७ ॥
संगम्य कपिमुख्येन स्थिताः प्राञ्जलयस्तदा ।
ततस्तमुपसंभ्रान्तं वालिकिल्बिषशङ्कितं ॥ १८ ॥
उवाच हनुमान् प्राज्ञः सुग्रीवं वाक्यमर्थवत् ।
कस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुङ्गव ॥ १९ ॥
तं घोरदर्शनं क्रूरं नेह पश्यामि वालिनं ।
यस्मात् तव भयं नित्यं पूर्वजात् पापकर्मणः ॥ २० ॥
स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयं ।
अहो शाखामृगत्वं ते व्यक्तितं प्लवगर्षभ ॥ २१ ॥
विनीतैरभिविख्यातैः सैव ते लघुचित्तता ।
बुद्धिविज्ञानसंपन्नैरिङ्गितज्ञैर्महात्मभिः ॥ २२ ॥
न ह्यबुद्धिंगतो राजा सर्वभूतानि पाति ह ।
सुग्रीवस्तु शुभं वाक्यं श्रुत्वा तत्र हनूमतः ॥ २३ ॥
ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ।
एतौ दृष्ट्वा महावीर्यौ धन्विनौ विपुलौजसौ ॥ २४ ॥
दीर्घबाहू विशालाक्षौ न स्यात् कस्य महद्भयं ।
वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ ॥ २५ ॥
बहुमित्राश्च राजानः शत्रुषु प्रहरन्ति च ।
कृत्येषु वाली मेधावी राजानो बहुदर्शनाः ॥ २६ ॥

Digitized by Google

भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्न हि ।
तदिमौ प्राकृतेनैव त्वया ज्ञेयौ प्लवङ्गम ॥ २७ ॥
गतिचेष्टाविकारैश्च रूपतो भाषितैस्तथा ।
लक्षयस्व तयोर्भावं दुष्टादुष्टं समाहितः ॥ २८ ॥
विश्वासेन प्रशंसाभिरिङ्गितैश्च पुनः पुनः ।
ममैवाभिमुखः स्थित्वा पृच्छ त्वं हरिपुङ्गव ॥ २९ ॥
प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ।
पृच्छ त्वं रूपसंपन्नौ किं कार्यमिह लिप्सितं ॥ ३० ॥
शुद्धात्मानौ च यदि तौ पश्यसि प्लवगर्षभ ।
व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टता तयोः ॥ ३१ ॥
इत्यसौ कपिराजेन संदिष्टो मारुतात्मजः ।
चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ ३२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सुग्रीववित्रासो नाम प्रथमः सर्गः ॥

Digitized by Google

## II.

तत् तु विज्ञाय हनुमान् सुग्रीवस्य महद्वचः ।
पर्वताद्दृक्षमूलात् स पुप्लुवे यत्र राघवौ ॥ १ ॥
स तत्र गत्वा हनुमान् बलवान् वानरोत्तमः ।
उपचक्राम तौ वाग्भिर्मृद्वीभिः सत्यविक्रमः ॥ २ ॥
स्वकं रूपं परित्यज्य भिक्षुरूपेण वानरः ।
तथाबभाषे तौ वीरौ यथावत् प्रशशंस च ॥ ३ ॥
देवराजप्रतीकाशौ तापसौ संशितव्रतौ ।
देशं कथमिमं प्राप्तौ भवन्तौ वनचारिणौ ॥ ४ ॥
त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः ।
पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः ॥ ५ ॥
इमां नदीं शीतजलां शोभयन्तौ तपस्विनौ ।
धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ॥ ६ ॥
सिंहविप्रेक्षणौ वीरौ सिंहातिबलसंमितौ ।
शक्रचापनिभे चापे प्रगृह्य विपुलैर्भुजैः ॥ ७ ॥
श्रीमन्तौ रूपसंपन्नौ कुञ्जरर्षभदर्शनौ ।
मत्तद्विपगतिप्रख्यौ द्युतिमन्तौ नरर्षभौ ॥ ८ ॥
प्रभया पर्वतेन्द्रोऽयं युवयोरवभासितः ।
राज्यार्हावमरप्रख्यौ प्राप्तौ देशमिमं कथं ॥ ९ ॥

Digitized by Google

पद्मपत्रेक्षणौ वीरौ जटामुकुटधारिणौ ।
युवामन्योन्यसदृशौ देवलोकादिवागतौ ॥ १० ॥
विशालवक्षसौ सौम्यौ मानुषौ देवरूपिणौ ।
उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमां ॥ ११ ॥
ससागरवनां कृत्स्नां मेरुविन्ध्यविभूषितां ।
एवमर्हाणि पश्यामि पार्थिवव्यञ्जनानि च ॥ १२ ॥
इमे च धनुषी चित्रे द्विषच्चित्तानुतापने ।
प्रकाशेते यथेन्द्रस्य वज्रे हेमपरिष्कृते ॥ १३ ॥
सुपूर्णा निशितैर्बाणैस्तूणाश्चापि सुदर्शनाः ।
जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः ॥ १४ ॥
महाप्रभावौ विस्तीर्णौ तप्तहाटकभूषणौ ।
खड्गावेतौ विराजेते निर्मुक्तोरगसंनिभौ ॥ १५ ॥
एवं मया भाष्यमाणौ कस्मान्मां नाभिपश्यथः ।
विवक्तुं समनुप्राप्तं किं च मां नाभिजल्पथः ॥ १६ ॥
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः ।
वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ १७ ॥
दूतोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ।
राज्ञा वानरमुख्यानां हनूमान् नाम वानरः ॥ १८ ॥
युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति ।
तस्य मां सचिवं वित्तं वानरं पवनात्मजं ॥ १९ ॥

Digitized by Google

भिक्षुरूपपरिच्छन्नं सुग्रीवहितकाम्यया ।
मलयादिह संप्राप्तं कामगं कामरूपिणं ॥ २० ॥
एवमुक्त्वा तु हनूमांस्तावुभौ रामलक्ष्मणौ ।
वाक्यज्ञो वाक्यकुशलस्ततो नोवाच किञ्चन ॥ २१ ॥
ततः संचिन्त्य मनसा रामो लक्ष्मणमब्रवीत् ।
सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ॥ २२ ॥
तमाभाषस्व सौमित्रे मत्समीपमुपागतं ।
वाक्यज्ञं मधुरैर्वाक्यैः सत्यज्ञं सत्यवादिनं ॥ २३ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनूमद्वाक्यं
नाम द्वितीयः सर्गः ॥

Digitized by Google

III.

ततः प्रहृष्टो रामस्य हनूमानिति तद्वचः ।
श्रुत्वा व्यथितभावं तं सुग्रीवं मनसास्मरत् ॥ १ ॥
नामन्त्रूपागमं तस्य प्राविद्यत वानरः ।
रामे स कृतवान् राज्ञः कृत्यं चैवाभ्युपायतः ॥ २ ॥
रामस्तु सुमहाप्राज्ञो धनुष्पाणिरवस्थितः ।
लक्ष्मणेन सह भ्रात्रा काले कालविदां वरः ॥ ३ ॥
ततः परमसंहृष्टो हनूमान् मारुतात्मजः ।
प्रत्युवाचोत्तरं वाक्यं रामं वाक्यविशारदः ॥ ४ ॥
किमर्थं त्वं वनं घोरं सिंहव्याघ्रसमाकुलं ।
आगतः सानुजो दुर्गं पम्पाकाननसेवितं ॥ ५ ॥
ततस्तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः ।
आचचक्षे महात्मानं वानरं पवनात्मजं ॥ ६ ॥
राजा दशरथो नाम धृतिमान् धर्मवत्सलः ।
तस्यायमग्रजः पुत्रो रामो नाम महायशाः ॥ ७ ॥
धर्मशीलो मृदुर्दान्तः सर्वभूतहिते रतः ।
शरण्यः शरणेच्छूनां पितुरादेशपारगः ॥ ८ ॥
पित्रा ह्येष महातेजाः सत्यसंधेन राघवः ।
राज्यभ्रष्टो वने न्यस्तो मया सार्धमिहागतः ॥ ९ ॥

Digitized by Google

भार्यया च विशालाक्ष्या सीतयानुगतः स्वयं ।
दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥१०॥
पिता चास्य महाराजो मग्नः शोकमहार्णवे ।
सुखार्हः स गतः स्वर्गं सर्वलोकहितात्मनः ॥११॥
भ्रातरं लक्ष्मणं नाम मां च विद्धि प्लवङ्गम ।
यवीयांसं मनुष्यत्वं गुणैर्दासत्वमागतं ॥१२॥
ऐश्वर्येण विहीनस्य वनवासाश्रितस्य च ।
रक्षसापहृता भार्या छलेनास्य महाद्युतेः ॥१३॥
तत् तु न ज्ञायते रक्षो येनास्यापहृता प्रिया ।
दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः ॥१४॥
सुग्रीवस्तेन चाख्यातः समर्थो वानराधिपः ।
स ज्ञास्यति महावीर्यस्तव भार्यापहारिणं ॥१५॥
एवमुक्त्वा दनुः स्वर्गं गतो द्युतिमतां वरः ।
एतत् ते सर्वमाख्यातं याथातथ्येन पृच्छतः ॥१६॥
सोऽयं दत्वा बहुद्रव्यं प्राप्य चानुत्तमं यशः ।
लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥१७॥
चिन्ताभिभूते रामे तु स्त्रीहेतोः शरणं गते ।
कर्तुमर्हति सुग्रीवः साहाय्यं सह यूथपैः ॥१८॥
एवं ब्रुवाणं सौमित्रिं करुणं साश्रुलोचनं ।
हनूमान् प्रत्युवाचेदं लक्ष्मणाभिमुखः स्थितः ॥१९॥



Digitized by Google

ईदृशा बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियाः ।
नराः सर्व्वोपकारास्तु वसुधां पालयन्ति ते ॥ २० ॥
इत्येवमुक्का हनुमान् सलक्ष्मणं मधुरया गिरा ।
बभाषेऽथाभिगच्छामः सुग्रीवो यत्र वानरः ॥ २१ ॥
स हि राज्यात् परिभ्रष्टः कृतवैरश्च बालिना ।
हृतदारो वने त्रस्तो भ्रात्रा च निकृतो भृशं ॥ २२ ॥
करिष्यति स साहाय्यं रामस्य करुणात्मनः ।
सुग्रीवः सहितोऽस्माभिर्वैदेह्याः परिमार्गणे ॥ २३ ॥
एवं ब्रुवति तस्मिंस्तु वानरे पवनात्मजे ।
प्रतिपूज्य ततो राममिदं प्रोवाच लक्ष्मणः ॥ २४ ॥
कपिर्यथा समाचष्टे हृष्टोऽयं मारुतात्मजः ।
कृतवान् सोऽपि सुग्रीवः कृतकृत्यास्तथा वयं ॥ २५ ॥
प्रसन्नमुखवर्णोऽयं व्यक्तं हृष्टश्च भाषते ।
नानृतं वक्ष्यते वीरो हनूमान् हरिपुङ्गवः ॥ २६ ॥
ततः स सुमहाप्राज्ञो हनूमानिदमब्रवीत् ।
स्वं रूपमभिसंप्राप्य संहृष्टो हेमपिङ्गलः ॥ २७ ॥
आरुह्यतां नृपश्रेष्ठ मम पृष्ठमरिंदम ।
लक्ष्मणेन सह भ्रात्रा सुग्रीवं द्रष्टुमर्हसि ॥ २८ ॥
एवमुक्का महाकायो हनूमान् पवनात्मजः ।
जगामादाय तौ वीरौ सुग्रीवो यत्र वानरः ॥ २९ ॥

Digitized by Google

IV.

ऋष्यमूकात् तु हनूमान् गत्वा मलयपर्वतं ।
कथयामास तौ वीरौ सुग्रीवाय महात्मने ॥ १ ॥
अयं रामो महाबाहुर्धीमान् दशरथात्मजः ।
लक्ष्मणेन सह भ्रात्रा शरणं त्वामुपागतः ॥ २ ॥
राजसूयाश्वमेधाभ्यां वह्निर्येनाभितर्पितः ।
दक्षिणार्थे ददौ चापि यो गाः शतसहस्रशः ॥ ३ ॥
धर्मतः सत्यवाक्येन वसुधा येन पालिता ।
स्त्रीहेतोस्तस्य पुत्रोऽयं रामस्त्वां शरणं गतः ॥ ४ ॥
इक्ष्वाकूणां कुले जातः पित्रा ह्येष महात्मना ।
नियुक्तः सत्यसंधेन वनवासाय राघवः ॥ ५ ॥
तत्रास्य वसतोऽरण्ये पितुरादेशकारिणः ।
रावणेन हृता सीता मायामास्थाय रक्षसा ॥ ६ ॥
एवं भूतोऽयं धर्मात्मा पार्श्वं ते समुपागतः ।
लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः ॥ ७ ॥
भवता रामसौमित्री राघवौ सख्यमिच्छतः ।
परिगृह्यार्चयस्वेमौ यथावत् प्रतिनन्द्य च ॥ ८ ॥
श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः ।
भयं स राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ९ ॥

Digitized by Google

कृत्वा च मानुषं रूपं सुग्रीवः प्लवगाधिपः ।
दर्शनीयस्ततो भूत्वा प्रत्युवाच स राघवं ॥ १० ॥
भवान् धर्मविनीतश्च विक्रान्तः साधुवत्सलः ।
आख्याता वायुपुत्रेण तत्त्वमेते भवद्गुणाः ॥ ११ ॥
तन्ममैवैष सत्कारो लाभश्च वदतां वर ।
यदीच्छसि सखित्वं त्वं वानरेण मया सह ॥ १२ ॥
यदि ते रोचते सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां स्थिरा ॥ १३ ॥
एतत् तु वचनं श्रुत्वा रामः सुग्रीवभाषितं ।
संप्रहृष्टमना हस्तं पीडयामास पाणिना ॥ १४ ॥
ततो रामस्य सुग्रीवः पाणिं जग्राह पाणिना ।
हार्दं सौहृदमालम्ब्य परिष्वज्य च पीडितं ॥ १५ ॥
ततस्तु हनुमान् दृष्ट्वा तयोः संबन्धमीप्सितं ।
विधिवत् सोऽथ काष्ठाभ्यां जनयामास पावकं ॥ १६ ॥
दीप्यमानं ततो वह्निं पुष्पैः सत्कृत्य सत्कृतं ।
तत्रोपन्यस्य च प्रीतस्तयोर्मध्ये समेधितं ॥ १७ ॥
तमग्निं दीप्यमानं तु चक्रतुस्तौ प्रदक्षिणं ।
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥ १८ ॥
प्रहृष्टमानसौ वीरौ तावुभौ रामवानरौ ।
अन्योन्यमभिपश्यन्तौ न तृप्तिमुपजग्मतुः ॥ १९ ॥

Digitized by Google

ततः सर्वार्थविद्वांसं रामं दशरथात्मजं ।
सुग्रीवः प्राह तेजस्वी वाक्यमेकमनास्तदा ॥ २० ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे लक्ष्मणवाक्यं नाम
तृतीयः सर्गः — रामसुग्रीवसख्यं
नाम चतुर्थः सर्गः ॥

Digitized by Google

V.

अयमाचष्ट मे राम सचिवो मन्त्रिसत्तमः ।
हनूमान् यन्निमित्तं त्वं निर्जनं वनमागतः ॥ १ ॥
लक्ष्मणेन सहानेन वसतश्च वने तव ।
रक्षसापहृता भार्या मैथिली जनकात्मजा ॥ २ ॥
अन्तरप्रेप्सुना दीना रुदती रक्षसा हृता ।
त्वया विहीना शूरेण लक्ष्मणेन च मैथिली ॥ ३ ॥
भार्यावियोगजं दुःखमचिरात् त्वं विमोक्ष्यसे ।
अहं तामानयिष्यामि नष्टां वेदश्रुतिं यथा ॥ ४ ॥
पातालं यदि वा नीता वर्तते वा नभस्तले ।
अहमानीय दास्यामि तव भार्यामरिंदम ॥ ५ ॥
इदं तथ्यं मम वचः शृणु राघवसत्तम ।
त्यज शोकं महाबाहो सखे सत्येन ते शपे ॥ ६ ॥
अनुमानेन जानामि मैथिली सा न संशयः ।
ह्रियमाणा मया दृष्टा तदा क्रूरेण रक्षसा ॥ ७ ॥
क्रोशन्ती राम रामेति करुणं लक्ष्मणेति च ।
स्फुरन्ती राक्षसस्याङ्के पन्नगेन्द्रवधूरिव ॥ ८ ॥
आत्मना पञ्चमं दृष्ट्वा मां शैलस्य तटे स्थितं ।
उत्तरीयं तया क्षिप्तं शुभान्याभरणानि च ॥ ९ ॥

Digitized by Google

यान्यस्माभिर्गृहीतानि तानि तिष्ठन्ति राघव ।
आनयिष्याम्यहं तानि त्वमभिज्ञातुमर्हसि ॥ १० ॥
ततोऽब्रवीद्दाशरथिः सुग्रीवं प्रियवादिनं ।
आनयस्व सखे क्षिप्रं किमर्थं त्वं विलम्बसे ॥ ११ ॥
एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहां ।
प्रविवेश ततः क्षिप्रं रामस्य प्रियकाम्यया ॥ १२ ॥
उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च ।
इदं पश्येति रामाय दर्शयामास वानरः ॥ १३ ॥
सोऽपि वीक्ष्याथ तद्वासः सीताया भूषणानि च ।
अभवद्बाष्पसंपूर्णः सनीहार इवोडुराट् ॥ १४ ॥
सीतास्नेहप्रवृद्धेन स तु बाष्पेण धर्षितः ।
हा प्रिये जानकीत्युक्त्वा धैर्यं त्यक्त्वापतत् क्षितौ ॥ १५ ॥
हृदि कृत्वा तु बहुशस्तमलङ्कारमार्तवत् ।
विनिःश्वसंश्च बहुशो भुजङ्ग इव रोषितः ॥ १६ ॥
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य राघवः ।
परिदेवयितुं दीनो रामः समुपचक्रमे ॥ १७ ॥
पश्य लक्ष्मण वैदेह्या संत्यक्तं ह्रियमाणया ।
उत्तरीयमिदं पीतं शरीराद्भूषणानि च ॥ १८ ॥
शाद्वलिन्यां तदा भूमौ सीतया ह्रियमाणया ।
उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते ॥ १९ ॥

Digitized by Google

ब्रूहि सुग्रीव कं देशं ह्रियमाणोपलक्षिता ।
रक्षसा तेन रौद्रेण मम प्राणसमप्रिया ॥ २० ॥
क्व वा वसति तद्रक्षो महाव्यसनदं मम ।
यन्निमित्तमहं सर्वान् निहनिष्यामि राक्षसान् ॥ २१ ॥
मैथिलीं हरता तेन मां च रोधयता भृशं ।
आत्मनो जीवितान्ताय मृत्युद्वारमपावृतं ॥ २२ ॥
यादृशोऽयं मम क्रोधः सीतार्थे वानराधिप ।
अद्य पश्यन्तु मे वीर्यं देवाः सर्षिगणास्तथा ॥ २३ ॥
अनिशं मुञ्चतो वीर शरानाशीविषोपमान् ।
अद्य पश्यन्तु चापस्य विस्फूर्जितमिवाशनेः ॥ २४ ॥
अलातचक्रवच्चक्रं भ्रमतोऽरिनिर्वहणं ।
शीघ्रमाचक्ष्व सुग्रीव यत्रासौ राक्षसाधिपः ॥ २५ ॥
दिशं तां कर्तुमिच्छामि निःसपत्नां शरैरहं ।
यावत् सूर्यः प्रतपति दिशि तस्यां न संशयः ॥ २६ ॥
तावत् सर्वान् हनिष्यामि राक्षसान् ब्रूहि मा चिरं ।
अथवा किं चिरेणाद्य जगत् सर्वमराक्षसं ॥ २७ ॥
करिष्ये वानरेन्द्राहं सृष्टा येन च राक्षसाः ।
इमं क्रोधं न शक्यामि व्यर्थं कर्तुं सखे प्रिय ॥ २८ ॥
रामः कपीन्द्रं सुग्रीवमित्युवाच रुषान्वितः ।
तस्य तत् क्रोधताम्राक्षं भ्रूकुटीकुटिलं मुखं ॥ २९ ॥

Digitized by Google

यथा क्रुद्धस्य रुद्रस्य त्रिपुरं वै विजिगीषुषः ।
दृष्ट्वा ते वायुपुत्राद्याः सर्वे वानरपुङ्गवाः ।
ऊचुः सर्वविनाशाय क्रुद्धोऽयमिति ते मिथः ॥३०॥

अतीव रामो दयितामनुस्मरन्
स रोषताम्रायतदीप्तलोचनः ।
जगाद वाक्यं हरिराजसंनिधौ
विनिश्वसन् क्रुद्ध इवोरगाधिपः ॥३१॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे वस्त्रालङ्कारोपनयनं
नाम पञ्चमः सर्गः ॥



Digitized by Google

VI.

तस्याथ शमयन् क्रोधं बुद्ध्या सोऽष्टाङ्गया तदा ।
मुखमस्य परामृश्य जलक्लिन्नेन पाणिना ॥ १ ॥
परिष्वज्य च बाहुभ्यां स्नेहाद्वानरपुङ्गवः ।
अब्रवीत् प्राञ्जलिर्वाक्यं सदुःखो बाष्पविक्लवं ॥ २ ॥
न जाने निलयं तस्य सर्वथा पापकर्मणः ।
सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलं ॥ ३ ॥
अहं ते प्रतिजानामि त्यज शोकमरिंदम ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि जानकीं ॥ ४ ॥
रावणं सगणं हत्वा समास्थायात्मपौरुषं ।
तथा कर्तास्मि न चिराद्यथा प्रीतो भविष्यसि ॥ ५ ॥
अलं वैक्लव्यमागत्य धैर्यमात्मवतां स्मर ।
सदृशं त्वद्विधानां हि नेदृशं सत्वलाघवं ॥ ६ ॥
मयापि व्यसनं प्राप्तं भार्याहरणजं महत् ।
न चाहमेवं शोचामि न च धैर्यं परित्यजे ॥ ७ ॥
शोकं वापतितं धैर्यान्निगृह्णामि पदे पदे ।
अहं तावन्न शोचामि वानरः प्राकृतोऽपि सन् ॥ ८ ॥
महात्मा सुमहांश्चैव धृतिमान् किं पुनर्भवान् ।
शोकमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि ॥ ९ ॥

Digitized by Google

मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ।
व्यसने वाथ कृच्छ्रे वा भये वा जीवितान्तके ॥ १० ॥
विमृष त्वं स्वयं बुद्ध्या धृतिमान् नावसीदति ।
बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते ॥ ११ ॥
स मज्जत्यवशः शोके वातेनाभिहतेव नौः ।
एषोऽञ्जलिर्मया बद्धः प्रणम्य त्वां प्रसादये ॥ १२ ॥
पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ।
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखं ॥ १३ ॥
तेजश्च शोकः क्षयति तन्न शोचितुमर्हसि ।
हितं संसृष्टभावेन राम नोपदिशामि ते ॥ १४ ॥
वयस्यभावाच्छृणु मे न त्वं शोचितुमर्हसि ।
मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ॥ १५ ॥
मुखमश्रुपरिक्लिन्नं वस्त्रान्तेनाभ्यमार्जयत् ।
प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात् प्रभुः ॥ १६ ॥
संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ।
कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च ॥ १७ ॥
अनुरूपं च युक्तं च कृतं सुग्रीव तत् त्वया ।
दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः ॥ १८ ॥
किन्तु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे ।
राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९ ॥

Digitized by Google

मया तु यदनुष्ठेयं विस्रब्धेन तदुच्यतां ।
सुवर्षेणेव सुक्षेत्रे सस्यं निष्पाद्यतां तव ॥ २० ॥
मया च यदिदं वाक्यमभिमानात् समीरितं ।
तत् त्वया हरिशार्दूल तत्त्वमित्यवधार्यतां ॥ २१ ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
एतत् ते प्रतिजानामि सत्येनैव शपाम्यहं ॥ २२ ॥
ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह ।
राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३ ॥
स हीति वाक्येन हरिप्रवीरः
प्रीतोऽभवद्धर्षविवृद्धवक्त्रः ।
रामस्य तेनाद्भुतविक्रमश्रीः
सत्येन सत्यव्रतशासितस्य ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे रामानुनयो
नाम षष्ठः सर्गः ॥

Digitized by Google

## VII.

परितुष्टः स सुग्रीवस्तेन वाक्येन वानरः ।
लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १ ॥
सर्वथाहमनुग्राह्यो देवतानां न संशयः ।
उपपन्नो गुणोपेतो भवान् यस्य सखा मम ॥ २ ॥
शक्यं खलु भवद्वीर्यात् सहायेन त्वया मया ।
सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः सखे ॥ ३ ॥
सोऽहं सुभाग्यो बन्धूनां सुहृदां च महाबल ।
येनाग्निसाक्षिकं सख्यं लब्धं राम त्वया सह ॥ ४ ॥
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
न तु वक्तुं समर्थोऽहं स्वयमेवात्मनो गुणान् ॥ ५ ॥
महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनां ।
निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥ ६ ॥
रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च ।
अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७ ॥
आढ्यो वापि दरिद्रो वा दीनो वा दुःखितोऽपि वा ।
निर्दोषश्च क्षमावांश्च वयस्यः परमा गतिः ॥ ८ ॥
धनत्यागः सुखत्यागो बन्धुत्यागस्तथैव च ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधं ॥ ९ ॥

Digitized by Google

तं तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनं ।
लक्ष्मणस्याग्रतः प्रीत्या सुग्रीवमनुरञ्जयन् ॥ १० ॥
ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलं ।
सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११ ॥
स ददर्श ततः सालमविदूरे हरीश्वरः ।
सपुष्पमीषत् पर्णाढ्यं भ्रमरैरुपशोभितं ॥ १२ ॥
तस्यैकां पर्णबहुलां शाखां भङ्क्त्वा सुपुष्पितां ।
सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥ १३ ॥
तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणं ।
शाखां चन्दनवृक्षस्य समाक्षिप्य न्यवेशयत् ॥ १४ ॥
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णां मधुरया गिरा ।
उवाच प्रणयाद्वाक्यमीषद्व्याकुलिताक्षरं ॥ १५ ॥
अहं विनिकृतो राम चरामि वसुधामिमां ।
हृतदारः समासाद्य ऋष्यमूकं समाश्रितः ॥ १६ ॥
बलिनो बालिनो भीतो वने वित्रस्तमानसः ।
सोऽहं सुनिकृतो भ्रात्रा कृतवैरश्च राघव ॥ १७ ॥
बालिनस्तु भयार्तस्य सर्वलोकभयंकरात् ।
ममापि त्वमनाथस्य नाथो भवितुमर्हसि ॥ १८ ॥
एवमुक्तः स तेजस्वी धर्मज्ञो धर्मवत्सलः ।
अभ्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ १९ ॥

Digitized by Google

उपकारफलं मित्रं विदितं मे भवान् यथा ।
अद्यैव तं हनिष्यामि तव भार्यापहारिणं ॥ २० ॥
इमे हि मे महाभागाः पत्रिणस्तिग्मतेजसः ।
कार्त्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २१ ॥
कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसंनिभाः ।
सुपर्वाणः सुतीक्ष्णाग्राः सरोषा इव पन्नगाः ॥ २२ ॥
तमद्य बालिनं पश्य क्रुद्धैराशीविषोपमैः ।
शरैर्विनिहतं भूमौ विशीर्णमिव पर्वतं ॥ २३ ॥
राघवेणैवमुक्तस्तु सुग्रीवो वाहिनीपतिः ।
प्रहर्षमतुलं लेभे प्रहृष्टश्चेदमब्रवीत् ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे सुग्रीवसमागमे
रामावष्टम्भो नाम सप्तमः सर्गः ॥

Digitized by Google

## VIII.

तद्वयस्यवचः श्रुत्वा हर्षपौरुषवर्धनं ।
सुग्रीवः पूजयां चक्रे राघवं प्रशशंस च ॥ १ ॥
असंशयं प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः ।
दहेस्त्वं कुपितो लोकान् युगान्ते रश्मिवानिव ॥ २ ॥
बालिनः पौरुषं यच्च वीर्यं तेजो धृतिश्च या ।
तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरं ॥ ३ ॥
समुद्रात् पश्चिमात् पूर्वं दक्षिणादपि चोत्तरं ।
क्रामत्यनुदिते सूर्ये बाली व्यपगतक्लमः ॥ ४ ॥
अग्राण्यालम्ब्य शैलानां शिखराणि महान्त्यपि ।
ऊर्ध्वमुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥
बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ।
बालिना तरसा भग्ना बलजिज्ञासयात्मनः ॥ ६ ॥
सर्वप्राणभृतां लोके द्वितीयं नोपलक्षये ।
ईदृशो विक्रमो यस्य युद्धे चानुत्तमा धृतिः ॥ ७ ॥
तत् प्रचिन्तय काकुत्स्थ हन्येतैकेषुणा यथा ।
अथवा कोपितो बाली कालमस्य क्षमामहे ॥ ८ ॥
हिंस्यादपि हि नः सर्वान् बाली शरनिराकृतः ।
तथा ब्रुवन्तं सुग्रीवं प्रहसन् लक्ष्मणोऽब्रवीत् ॥ ९ ॥

Digitized by Google

सदेवनरनागेषु दैत्ययक्षपतत्रिषु ।
समस्तैर्न हि शक्यो वै योद्धुं रामो धनुर्धरः ॥ १० ॥
कस्मिंस्तु कर्मणि कृते श्रद्दध्या बालिनो बधं ।
तमथोवाच सुग्रीवः सप्ततालानिमान् पुरा ॥ ११ ॥
अविध्यदेकशो बाली त्रीनेषां स महाबलः ।
काकुत्स्थः पाटयेदेतान् सर्वानेकेषुणा यदि ॥ १२ ॥
रामस्य विक्रमं दृष्ट्वा मन्येऽहं बालिनं हतं ।
एवमुक्त्वा तु सुग्रीवो लक्ष्मणं कपिपुङ्गवः ॥ १३ ॥
उवाच करुणं भूयो राघवं वचनं ततः ।
राम शोकाभिभूतानां भयार्तानां भवान् गतिः ॥ १४ ॥
वयस्य इति विज्ञाय येनेदं पर्यदेवयं ।
त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकः ॥ १५ ॥
कृतः प्राणैः प्रियतरः सखे सत्येन ते शपे ।
वयस्य इति कृत्वा च विश्रब्धं प्रवदाम्यहं ॥ १६ ॥
दुःखमन्तर्गतं यन्मे मनो दहति सर्वदा ।
एवमुक्त्वा स वचनं वाष्पपूरितलोचनः ॥ १७ ॥
वाष्पोपहतया वाचा नाशक्नोद्वक्तुमुत्तरं ।
वाष्पवेगं तु सहसा नदीवेगमिवागतं ॥ १८ ॥
वारयामास धैर्येण सुग्रीवो रामसंनिधौ ।
निगृह्य वाष्पवेगं तु विमृज्य नयने शुभे ॥ १९ ॥



Digitized by Google

सुग्रीवः सान्त्वितः स्नेहादिदं वचनमब्रवीत् ।
पुराहं बालिना राम राज्यात् स्वादवरोपितः ॥ २० ॥
परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ।
हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी ॥ २१ ॥
सुहृदश्च मदीया ये ते संयम्य विमानिताः ।
अद्यापि स हि दुष्टात्मा मद्विनाशाय राघव ॥ २२ ॥
बहुशस्तत्प्रयुक्ताश्च निहता वानरा मया ।
एतया शङ्कया चापि दृष्ट्वा त्वामपि राघव ॥ २३ ॥
नेहोपसृतवान् भीतो भयात् सर्वं बिभेति हि ।
केवलं तु सहाया मे हनूमत्प्रमुखा इमे ॥ २४ ॥
यतोऽहं धारयाम्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ।
एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः ॥ २५ ॥
सहगच्छन्ति गच्छन्तं तिष्ठन्ति च मयि स्थिते ।
यश्च तं समरे हन्यात् स मे स्यात् प्राणदः सुहृत् ॥ २६ ॥
एष ते राम शोकार्थः शोकार्तेन निवेदितः ।
सुखितो दुःखितो वापि सख्युर्नित्यं सखा गतिः ॥ २७ ॥
श्रुत्वैव तद्वचो रामः सुग्रीवमिदमब्रवीत् ।
किंनिमित्तमिदं दुःखं श्रोतुमिच्छामि तत्त्वतः ॥ २८ ॥
अहं हि कारणं श्रुत्वा वैरस्यातीव मानद ।
सर्वं तथा विधास्यामि संप्रधार्य बलाबलं ॥ २९ ॥

Digitized by Google

बलवान् हि ममामर्षः श्रुत्वा त्वामपमानितं ।
तत् कथयस्व विस्रब्धं यावन्नारोपये धनुः ॥ ३० ॥
सृष्टाश्च हि मया बाणा निरस्तश्च रिपुस्तव ।
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ॥ ३१ ॥
प्रहर्षमतुलं लेभे चतुर्भिः सचिवैः सह ।
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ॥ ३२ ॥
वैरस्य कारणं सर्वमाख्यातुमुपचक्रमे ।
बाली नाम मम ज्येष्ठो भ्राता शत्रुनिसूदनः ॥ ३३ ॥
पितुर्बहुमतो नित्यं मम चापि बभूव सः ।
पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः ॥ ३४ ॥
कपीनामीश्वरो राजा कृतः परमसंमतः ।
राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ॥ ३५ ॥
अहं सर्वेषु कार्येषु प्रणतः प्रेष्यवत् सदा ।
मायावी नाम तेजस्वी पूर्वजो दुन्दुभेस्तु यः ॥ ३६ ॥
तेन तस्य महद्वैरं स्त्रीनिमित्तं किलाभवत् ।
स तु सुप्तजने रात्रौ किष्किन्धाद्वारमागतः ॥ ३७ ॥
नर्दति स्म सुसंरब्धो बालिनं च समाह्वयत् ।
स तु रात्रौ मम भ्राता नर्दितं भैरवस्वनं ॥ ३८ ॥
श्रुत्वामर्षवशं प्राप्तो निर्जगाम गुहामुखात् ।
वार्यमाणः स तु स्त्रीभिर्मया च प्रयतात्मना ॥ ३९ ॥

Digitized by Google

अमर्षतोऽपि संरम्भान्निर्जगामाविचारयन् ।
तं विनिर्धूय निर्यान्तमस्मान् सर्वान् कपीश्वरं ॥ ४० ॥
अन्वधावमहं शीघ्रं सौहार्दमनुचिन्तयन् ।
स तु मे भ्रातरं दृष्ट्वा ममाद्दूरादवस्थितं ॥ ४१ ॥
असुरो ज्ञातसंत्रासः प्रदुद्राव ततो भृशं ।
तं विद्रवन्तं संत्रस्तमावां द्रुततरं गतौ ॥ ४२ ॥
प्रकाश्यं तु गतो मार्गश्चन्द्रेणोदयता तदा ।
स तृणैरावृतं दृष्ट्वा धरण्यां विवरं महत् ॥ ४३ ॥
प्रविवेशासुरो वेगादावां त्वासाद्य वेष्टितौ ।
तं प्रविष्टं विलं दृष्ट्वा रिपुं क्रोधवशं गतः ॥ ४४ ॥
मामुवाच ततो बाली वचनं क्षुभितेन्द्रियः ।
इह त्वं तिष्ठ सुग्रीव विलद्वारि समाहितः ॥ ४५ ॥
यावत् तं निहनिष्यामि प्रविश्य सुदुरासदं ।
मया तु वचनं श्रुत्वा भ्रातुस्तस्य प्रयत्नतः ॥ ४६ ॥
प्रतिषिद्धस्तदानीं स प्राविशच्चैव तद्विलं ।
तस्य प्रविष्टस्य विलं साग्रः संवत्सरो गतः ॥ ४७ ॥
स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ।
अनिष्पतन्तं तं ज्ञात्वा स्नेहादागतसंभ्रमः ॥ ४८ ॥
भ्रातरं पुरुषव्याघ्र पापशङ्काभवत् तदा ।
अथ दीर्घस्य कालस्य विलात् तस्माद्विनिःसृतं ॥ ४९ ॥

Digitized by Google

सफेनं रुधिरं व्यक्तं दृष्ट्वाहं व्यथितोऽभवं ।
नर्दतामसु  णां च ध्वनिर्मे श्रोत्रमागतः ॥५०॥
निरस्तस्य च संग्रामे क्रोशतो निःसृतो महान् ।
अहं त्वपगतो बुद्ध्वा चिह्नैस्तैर्भ्रातरं हतं ॥५१॥
पूरयित्वा शिलाभिस्तु विलं शोकसमन्वितः
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे ॥५२॥
गूहमानस्य मे तत् तु यत्नतो मन्त्रिभिः श्रुतं ।
ततोऽहं मन्त्रिभिः सर्वै राज्येऽस्मिन्नभिषेचितः ॥५३॥
मयि शासति राज्यं तु धर्मेण रघुनन्दन ।
आजगाम रिपुं हत्वा घोरं तं सोऽथ वानरः ॥५४॥
अभिषिक्तं तु मां दृष्ट्वा क्रोधसंरक्तलोचनः ।
मदीयान् मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ॥५५॥
निग्रहेऽपि समर्थस्य तस्य पापस्य राघव ।
प्रावर्तत न मे बुद्धिस्तदा गौरवयन्त्रिता ॥५६॥
असान्त्वयमहं तं च यथावदभिनन्दयन् ।
उचिताश्चाशिषस्तस्य प्रयुञ्जन् वै यथाविधि ॥५७॥
एवंविधेन मानेन मानयामि स्म बालिनं ।
न च स प्रतिजग्राह कलुषेणान्तरात्मना ॥५८॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे वैरनिवेदनं
नाम अष्टमः सर्गः ॥

Digitized by Google

IX.

ततस्तं क्रोधसंरक्तं संरम्भसमुपागतं ।
संप्रासादयमव्यग्रो भ्रातरं प्रियकाम्यया ॥ १ ॥
दिष्ट्यासि कुशली प्राप्तो दिष्ट्यापि निहतो रिपुः ।
अनाथस्य हि मे नाथस्त्वमेकः कपियूथपः ॥ २ ॥
इदं बहुशलाकं ते पूर्णचन्द्रनिभं शुभं ।
छत्त्रं सबालव्यजनं प्रतीच्छ त्वं मयोद्यतं ॥ ३ ॥
त्वमेव राजा लोकानां तव चाज्ञाकरा वयं ।
अमात्यैर्विनियुक्तोऽहं राज्ये नात्मेच्छया विभो ॥ ४ ॥
न्यासभूतमिदं राज्यं तव विज्ञापयाम्यहं ।
मा च रोषं कृथा वीर मम शत्रुनिसूदन ॥ ५ ॥
याचे त्वां शिरसा राजन् मया बद्धोऽयमञ्जलिः ।
बलादस्मिन् समागम्य मन्त्रिभिः पुरवासिभिः ॥ ६ ॥
राज्यभारे नियुक्तोऽस्मि राज्याय न हि मे स्पृहा ।
अनिच्छन्नपि विक्रोशंस्त्वया हीने पुरेऽनघ ॥ ७ ॥
तमेवं भाषमाणं तु स मां निर्भर्त्स्य वानरः ।
धिक्कृत्य परुषं वाक्यं बहु तत् तदुवाच ह ॥ ८ ॥
प्रकृतीस्तु समानाय्य तदा स प्लवगेश्वरः ।
मामाह सुहृदां मध्ये वाक्यमेतत् सुदारुणं ॥ ९ ॥

Digitized by Google

विदितं वो यथा रात्रौ मायावी स महासुरः ।
समाह्वयति मां नित्यं युद्धाकाङ्क्षी महोद्धतः ॥ १० ॥
तस्यातिगर्जितं श्रुत्वा निःसृतोऽस्मि गुहामुखात् ।
अनुयातश्च मां तूर्णमयं भ्रातृमुखो रिपुः ॥ ११ ॥
स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ।
प्राद्रवत् परमत्रस्तः पृष्ठतो नावलोकयन् ॥ १२ ॥
विद्रवन्तं तथा तं तु निशम्य भुवि दानवं ।
अवोचं सहसुग्रीवस्तिष्ठ तिष्ठेत्यमर्षितः ॥ १३ ॥
स तु द्वादशमात्राणि योजनानि प्रधावितः ।
ततो धरण्यां विवरं प्रविवेश भयार्दितः ॥ १४ ॥
तं तु दृष्ट्वा बिलप्राप्तं सपत्नं नित्यशोऽहितं ।
अयमुक्तोऽधमो भ्राता शुचिना क्रूरदर्शनः ॥ १५ ॥
अहत्वा नास्ति मे बुद्धिः प्रतिगन्तुमितः पुरीं ।
बिलद्वारि प्रतीक्षस्वेत्युक्त एष मया तदा ॥ १६ ॥
स्थितोऽयमिति मत्वाहं प्रविष्टस्तद्बिलं महत् ।
द्वारं मे मार्गमाणस्य साग्रः संवत्सरो गतः ॥ १७ ॥
स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः ।
निहतश्च मया सद्यः सोऽसुरो बन्धुभिः सह ॥ १८ ॥
तस्यास्यात् तु प्रवृत्तेन रुधिरौघेण तद्बिलं ।
पूर्णमासीद्दुराक्रोशं स्तनतस्तस्य भूतले ॥ १९ ॥

Digitized by Google

मायाविनं सूदयित्वा तं शत्रु दुन्दुभिप्रियं ।
निष्क्रामन्नेव चापश्यं विलस्यापिहितं मुखं ॥ २० ॥
विक्रोशतोऽपि हि मम सुग्रीवेति पुनः पुनः ।
यदा प्रतिवचो नास्ति मन्युमानभवं तदा ॥ २१ ॥
पादप्रहारैश्च मया बहुशस्तद्विदारितं ।
ततोऽहं तेन निष्क्रम्य यथागतमिहागतः ॥ २२ ॥
तत्र तेनास्मि संरुद्धो राज्यं प्रार्थयता तदा ।
सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदं ॥ २३ ॥
एवमुक्ता तु मां तत्र वस्त्रेणैकेन वानरः ।
ततो निष्क्रामयामास बाली विगतसाध्वसः ॥ २४ ॥
इत्थं तेनास्मि निकृतो बहुशो रघुनन्दन ।
हृतदारो हृतश्रीको लूनपक्ष इव द्विजः ॥ २५ ॥
मद्वधे कृतबुद्धिश्च विनिःसृत्य गुहामुखात् ।
त्रासयामास मां बाली वृक्षमुद्यम्य दारुणं ॥ २६ ॥
तद्भयाच्च मया सर्वा पृथिवी सागराम्बरा ।
पर्वतैश्च समाकीर्णा चरिता रघुनन्दन ॥ २७ ॥
ततोऽहमेतं शैलेन्द्रमृष्यमूकमुपागतः ।
कारणान्तराद्दुर्धर्षः शैलं बाली व्यवर्जयत् ॥ २८ ॥
एतत् ते सर्वमाख्यातं वैरस्यागमनं महत् ।
अनागसा मया प्राप्तः पश्य राघव संशयः ॥ २९ ॥

Digitized by Google

बालित्रासादिहार्तस्य कृच्छ्रप्राणस्य राघव ।
कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहे ॥ ३० ॥
एवमुक्तः स तेजस्वी सुग्रीवेण परंतपः ।
आश्वासयितुमारेभे सुग्रीवं रघुनन्दनः ॥ ३१ ॥
अमोघाः सूर्यसंकाशा ममैते निशिताः शराः ।
तस्मिन् बालिनि सुग्रीव पतिष्यन्ति मयेरिताः ॥ ३२ ॥
यावत् तं न हि पश्येयं तव भार्यापहारिणं ।
तावज्जीवेत् स दुष्टात्मा बाली चारित्रदूषकः ॥ ३३ ॥
आत्मानुमानाज्जानामि मग्नं त्वां शोकसागरे ।
अद्य बालिनि मोक्ष्यामि रावणक्रोधमागतं ॥ ३४ ॥
स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितं ।
सुग्रीवः शङ्कयाविष्टः पुनर्वचनमब्रवीत् ॥ ३५ ॥
आसीन्महासुरः पूर्वं दुन्दुभिर्नाम राघव ।
बलं नागसहस्रस्य धारयंश्च स वीर्यवान् ॥ ३६ ॥
वीर्योत्सुकः स दुष्टात्मा वरदानाच्च मोहितः ।
आजगाम महाबाहुः समुद्रं सरितां पतिं ॥ ३७ ॥
ऊर्मिमन्तं समासाद्य सागरं मकरालयं ।
मम युद्धं प्रयच्छेति स उवाच महार्णवं ॥ ३८ ॥
ततः समुद्रो धर्मात्मा समुत्थाय महास्वनः ।
अब्रवीद्वचनं दैत्यं राम कालप्रचोदितं ॥ ३९ ॥



Digitized by Google

न ते दातुं समर्थोऽहं युद्धं युद्धविशारद ।
श्रूयतामभिधास्यामि येन युद्धं तव क्षमं ॥ ४० ॥
शैलराजो महारण्ये तपस्विशरणं महान् ।
शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ ४१ ॥
गुहाप्रस्रवणोपेतो बहुकन्दरनिर्झरः ।
स समर्थस्तव प्रीतिमतुलां कर्तुमाहवे ॥ ४२ ॥
तमशक्तमिति ज्ञात्वा समुद्रमसुरोत्तमः ।
हिमवद्वनमागच्छच्छरश्चापादिव च्युतः ॥ ४३ ॥
ततस्तस्य गिरेः श्वेता गजेन्द्रप्रतिमाः शिलाः ।
चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ ४४ ॥
युद्धं प्रयच्छ मे शीघ्रं पर्वतेन्द्र महाबल ।
समुद्रेण समाख्यातस्त्वं वै युद्धविशारदः ॥ ४५ ॥
ततो हिमधरो धीरः सौम्यः प्रतिभयाकृतिं ।
हिमवानब्रवीद्वाक्यं दुन्दुभिं दानवर्षभं ॥ ४६ ॥
अवदारयितुं वीर न त्वमर्हसि मामिह ।
अशक्तोऽस्मि रणोद्धर्षे तपस्विशरणं ह्यहं ॥ ४७ ॥
तस्य तद्वचनं श्रुत्वा गिरिराजस्य दानवः ।
उवाच दुन्दुभिर्वाक्यं क्रोधसंरक्तलोचनः ॥ ४८ ॥
युद्धे यद्यसमर्थस्त्वं यदि वासि निरुद्यमः ।
तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सवे ॥ ४९ ॥

Digitized by Google

ततो गिरिवरो दध्यौ केनोपायेन दुन्दुभिं ।
न पश्येयं रणे कोऽस्य भवेदभिमुखो नरः ॥५०॥
मुहूर्तमिव स ध्यात्वा हिमवानथ बालिनं ।
जगाम मनसा शैलो दुन्दुभिं चेदमब्रवीत् ॥५१॥
दुन्दुभे युद्धदानाय नाहं प्रतिबलस्तव ।
दत्तं युद्धं तदप्याकुर्यत् सम्यगुपदिश्यते ॥५२॥
बाली नाम महाबाहुः शक्रतुल्यपराक्रमः ।
अध्यास्ते वानरः श्रीमान् किष्किन्धामतुलप्रभः ॥५३॥
स समर्थो महाप्राज्ञस्तव युद्धविशारदः ।
द्वन्द्वयुद्धं महान् दातुं नमुचेरिव वासवः ॥५४॥
तं शीघ्रमभिगच्छ त्वं यदि मृत्युवरा तव ।
स हि दुर्धर्षणो बाली नित्यं समरकर्मसु ॥५५॥
किष्किन्धां त्वमुपागम्य हेममालिगुहां शुभां ।
चरन् मधुवने तस्य मधु सर्वं विनाशय ॥५६॥
स युद्धतृष्णां कुपितस्तवेमामपनेष्यति ।
न हि जातु तमासाद्य जीवन् प्रतिगमिष्यसि ॥५७॥
स विनद्य महानादं दुन्दुभिर्विजिगीषया ।
जितमेव तदा मेने बालिनं बलदर्पितः ॥५८॥
ततः श्रुत्वा हिमवतः पर्वतेन्द्रस्य दुन्दुभिः ।
जगाम तां पुरीं रम्यां किष्किन्धां बालिपालितां ॥५९॥

Digitized by Google

धारयन् माहिषं रूपं तीक्ष्णशृङ्गो भयावहः ।
प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ ६० ॥
स निष्पीड्य महाद्वारं किष्किन्धाया महाबलः ।
ननर्द कम्पयन् भूमिं दुन्दुभिर्विजिगीषया ॥ ६१ ॥
समीपगान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः ।
शृङ्गाभ्यामालिखन् दर्पात् तद्द्वारं द्विरदो यथा ॥ ६२ ॥
तं तु मेघप्रतीकाशं नर्दन्तं च भयावहं ।
दुन्दुभिं दानवश्रेष्ठं न कश्चित् प्रत्यषेधयत् ॥ ६३ ॥
तस्य वै रुवतो वाली श्रुत्वा शब्दममर्षणः ।
निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ ६४ ॥
मदाव्यक्ताक्षरपदं तमुवाच स दुन्दुभिं ।
हरीणामीश्वरो वाली सर्वेषां वनचारिणां ॥ ६५ ॥
किमर्थं नगरद्वारमिदं रुद्ध्वा विनर्दसि ।
दुन्दुभे विदितो मे त्वं प्राणान् रक्ष महासुर ॥ ६६ ॥
तस्यैतद्वचनं श्रुत्वा वानरेन्द्रस्य वालिनः ।
उवाच दुन्दुभिर्वाक्यं क्रोधसंरक्तलोचनः ॥ ६७ ॥
किं त्वं स्त्रीसंनिधौ वीर शूरवाक्यानि मुञ्चसि ।
मम युद्धं प्रयच्छ त्वं ततो ज्ञास्यसि मे बलं ॥ ६८ ॥
अथवा मर्षयिष्यामि क्रोधमद्य निशामिमां ।
गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ६९ ॥

Digitized by Google

यो मत्तं वा प्रमत्तं वा सुप्तं वा रहितं रतं ।
हन्यात् स खलु हन्याद्धि त्वद्विधं मदविह्वलं ॥ ७० ॥
तं प्रहस्याब्रवीद्वाली वाक्यं वाक्यविशारदः ।
विसृज्य ताः स्त्रियः सर्वास्ताराग्या वानरेश्वरः ॥ ७१ ॥
मत्तोऽयमिति दुर्बुद्धे मोहान्मामवमन्यसे ।
मदीये संप्रहारेऽस्मिन् वीर पानं समर्थ्यतां ॥ ७२ ॥
यदि युद्धस्पृहा तेऽद्य यदि भीतो न संयुगे ।
तिष्ठ त्वं समरे मेऽद्य दर्शयस्व स्वपौरुषं ॥ ७३ ॥
तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीं ।
पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ७४ ॥
ततो युद्धं प्रववृते तयोः सुतुमुलं तदा ।
बालिनश्च महाबाह्वोर्बलिनो दानवस्य च ॥ ७५ ॥
ततो बाली विषाणाग्रैर्लिखितो दनुसूनुना ।
प्रचकाशे महाबाहुरशोक इव पुष्पितः ॥ ७६ ॥
स तेन सह विक्रीड्य मुहूर्तं वानरेश्वरः ।
प्रहसन् दानववृषं वीरो वचनमब्रवीत् ॥ ७७ ॥
असुराधम दुर्बुद्धे वरदानेन दर्पितः ।
अद्य ते बलमुद्धृत्तं शमयेऽग्निमिवाम्भसा ॥ ७८ ॥
स गृहीत्वा विषाणाभ्यां दुन्दुभिं दानवर्षभं ।
आविध्य बलवान् वाली भूतले निष्पिपेष ह ॥ ७९ ॥

Digitized by Google

आविद्धस्तेन बलिना विनिष्पिष्टो महासुरः ।
विमुञ्चन् रुधिरं खेभ्यः प्राणांस्तत्याज वीर्यवान् ॥ ८० ॥
स पपात महाकायः क्षितौ पञ्चत्वमागतः ।
तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनं ॥ ८१ ॥
चिक्षेप बलवान् बाली पादेनैकेन योजनं ।
तस्य वेगप्रवृद्धस्य वक्त्रात् क्षतजविन्दवः ॥ ८२ ॥
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमे किल ।
तान् दृष्ट्वा पतितान् गात्रे मुनिः शोणितविन्दुकान् ॥ ८३ ॥
उपस्पृश्य ददौ शापं क्षेप्तारं बालिनं प्रति ।
येनैष दानवः क्षिप्तो ममाश्रमपदं प्रति ॥ ८४ ॥
इह ते न प्रवेष्टव्यमृष्यमूकवनं हरे ।
प्रविष्टस्य हि ते सद्यो जीवितं न भवेदिति ॥ ८५ ॥
ततः शापभयाद्वाली ऋष्यमूकं महागिरिं ।
प्रवेष्टुं न स शक्नोति द्रष्टुं वा रघुनन्दन ॥ ८६ ॥
तस्याप्रवेशं मत्वाहमिह राम महावने ।
विचरामि सहामात्यो भयं संत्यज्य दूरतः ॥ ८७ ॥
एतत् तस्यास्थि काकुत्स्थ दुन्दुभेः संप्रकाशते ।
वीर्योत्सेकनिरस्तस्य गिरिकूटनिभं महत् ॥ ८८ ॥
इमे च विपुलास्तालाः सप्त शाखावलम्बिनः ।
वाणैर्येषां त्रयो भिन्नास्तेन वीर्यं वितन्वता ॥ ८९ ॥

Digitized by Google

एतत् तस्य महद्वीर्यं तव संकीर्त्तितं मया ।
कथमुत्सहसे हन्तुं समरे तं दुरासदं ॥ १० ॥
अथैवं वदतस्तस्य सुग्रीवस्य महात्मनः ।
राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन तोलयन् ॥ ११ ॥
लीलयैव तदा रामश्चिक्षेप शतयोजनं ।
असुरस्य तनुं शुष्कां पादेनैकेन राघवः ॥ १२ ॥
क्षिप्तं दृष्ट्वा च तं कायं सुग्रीवः प्लवगेश्वरः ।
लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १३ ॥
परिश्रान्तेन मत्तेन भ्रात्रा मे बालिना पुरा ।
आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायस्तदा सखे ॥ १४ ॥
लघुः संप्रति निर्मांसस्तृणभूतश्च शुष्ककः ।
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाधिकं ॥ १५ ॥
स हि शूरश्च मानी च प्रख्यातबलपौरुषः ।
तेजस्वी वानरो बाली संयुगेष्वपराजितः ॥ १६ ॥
दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरासुरैः ।
यानि संस्मृत्य संस्मृत्य ऋष्यमूकं त्यजामि न ॥ १७ ॥
उद्विग्नः शङ्कितश्चाहं वनेषूद्भ्रान्तचेतनः ।
अनुरक्तैः सहामात्यैश्चरामि हनुमादिभिः ॥ १८ ॥
यदि भिन्द्याद्भवान् सालानिमानेकेषुणा ततः ।
जानीयां त्वां महाबाहो समर्थं वालिनो बधे ॥ १९ ॥

Digitized by Google

खल्वहं त्वां न तुलये नावमन्ये च राघव ।
कर्मभिस्तस्य भीमैस्तु कातर्यं जायते मम ॥ १०० ॥
उपलब्धं हि मित्रं मे सुश्लाघ्यं मित्रवत्सलं ।
त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः ॥ १०१ ॥
किन्तु तस्य बलज्ञोऽहं भ्रातृरूपस्य वैरिणः ।
अप्रत्यक्षं च मे वीर्यं समरे तव राघव ॥ १०२ ॥
स्निग्धानां प्रीतियुक्तानां सुहृदां सुहृदं प्रति ।
कातरं हृदयं राम प्रत्ययं नाधिगच्छति ॥ १०३ ॥
यच्चैवं तोलयामि त्वां तच्च मे क्षन्तुमर्हसि ।
अवश्यं हि बलं ज्ञेयं मया तव च तस्य च ॥ १०४ ॥
कामं राम तव त्रीणि प्रमाणं धैर्यमाकृतिः ।
सूचयन्ति परं तेजो भस्मच्छन्नमिवानलं ॥ १०५ ॥
तत् कृत्वा कार्मुकं सज्यं हस्तिहस्तमिवायतं ।
आकर्णमूलमाकृष्य विसृज त्वं महाशरं ॥ १०६ ॥
इमान् हि तालान् प्रहितस्त्वया शरो न संशयो मेऽस्ति विदारयेद्ध्रुवं ।
अलं विमर्शेन सखे मम प्रियं कुरुष्व राजात्मज याचितो मया ॥ १०७ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे दुन्दुभ्युपाख्यानं
नाम नवमः सर्गः ॥

X.

एवमुक्त्वा तु सुग्रीवो रामं दशरथात्मजं ।
ध्यात्वा मुहूर्तं काकुत्स्थमिदं वचनमब्रवीत् ॥ १ ॥
य एष रावणो नाम सीतां हरति दुर्मतिः ।
एष वीर्यवतां वीर्यमादत्ते राक्षसेश्वरः ॥ २ ॥
देवदानवगन्धर्वयक्षरक्षोमहोरगाः ।
मानवाश्चैव राजानो महाबलपराक्रमाः ॥ ३ ॥
त्रैलोक्यविजयार्थाय युधि विक्रम्य निर्जिताः ।
पितामहवरोत्सिक्तोऽगणयन्न हि किञ्चन ॥ ४ ॥
एवंप्रभावो रक्षः स रावणो युधि दुर्जयः ।
नित्यं तु बाली समये भ्राता मे वानरेश्वरः ॥ ५ ॥
संध्यामुपासितुं याति समुद्रौ पूर्वपश्चिमौ ।
गच्छन्तं चानुगच्छामि नित्यं भ्रातरमग्रजं ॥ ६ ॥
अन्वेष्टुं पदवीं चास्य न शक्यं गरुडादृते ।
तस्यानिलगतेः पूर्वं समुद्रतटमासतः ॥ ७ ॥
देवकार्यं कर्तुकामो रावणोऽभ्यागमत् तदा ।
बलवन्तं तमालक्ष्य राक्षसः पुरुषादकः ॥ ८ ॥
जितकाशी दुरात्मा स युद्धं देहीति चाब्रवीत् ।
वानरेन्द्रो राक्षसेन्द्रमब्रवीत् प्रियदुर्मते ॥ ९ ॥



Digitized by Google

मुहूर्तं मृष्यतां संध्या यावदुपासिता मया ।
तच्छ्रुत्वा क्रोधरक्ताक्षो दशग्रीवो महाबलः ॥ १० ॥
कोऽयं देवोऽथ वा यस्य पूजां त्वं कर्तुमर्हसि ।
मामनादृत्य दुर्बुद्धे कर्तव्यस्तव निग्रहः ॥ ११ ॥
यदा देवा मया युद्धे सासुरोरगदानवाः ।
निर्जिता युधि विक्रम्य मन्नामैव च घुष्यतां ॥ १२ ॥
दुर्बुद्धे अकृतप्रज्ञ वानर त्वं न बुध्यसे ।
लोकेश्वरं रावणं मां पौलस्त्यकुलनन्दनं ॥ १३ ॥
आख्यातो नारदेनासि ततस्त्वं विदितो मम ।
तिष्ठ त्वं देहि युद्धं मे ततो हन्यसि पूर्वजान् ॥ १४ ॥
तच्छ्रुत्वा वानरेन्द्रस्तु युद्धायैव मनो दधे ।
एह्येहि रावण क्रूर वेद्मि त्वां देवकण्टकं ॥ १५ ॥
युध्यस्व यदि ते शक्तिर्मया सह निशाचर ।
हृष्टाः पश्यन्तु निहतं त्वामद्य त्रिदिवौकसः ॥ १६ ॥
स तथोक्तो दशग्रीवो मुष्टिमुद्यम्य वानरं ।
प्रहर्तुकामश्चक्राम दृष्ट्वा बालिनमाहवे ॥ १७ ॥
दशास्यं विंशतिभुजं राक्षसं पर्वतोपमं ।
दीर्घदंष्ट्रं महाकायं विकृतास्यं महाभुजं ॥ १८ ॥
असंभ्रान्तं तदा बाली प्रहस्य बलिनां वरं ।
नातितीव्रेण देवारिं गृह्य कक्षान्तरेऽकरोत् ॥ १९ ॥

Digitized by Google

तस्य निष्पीड्यमानस्य भुजान्तरगतस्य च ।
सोच्छ्रा समभवद्वक्त्रं सार्चिर्ज्वालाकुलं महत् ॥ २० ॥
अविच्छिन्नान्तरज्वालो हुताहुतिरिवानलः ।
बाहुदण्डविरुद्धस्तु निःश्वासपरमोऽभवत् ॥ २१ ॥
दशशीर्षो महाबाहुः कन्धरान्तरसंवृतः ।
वृक्षमूले महानागो यथा पाशेन यन्त्रितः ॥ २२ ॥
सभाजितश्च मे भ्राता दिष्ट्या दिष्ट्येति चाब्रवीत् ।
समाभाष्य परिष्वज्य मामथैकेन पाणिना ॥ २३ ॥
उपस्पृश्य शुचिर्भूत्वा संध्यां तां समुपासत ।
स तु संध्यामुपासित्वा वायुमार्गमथाविशत् ॥ २४ ॥
महाभारैरिवासक्तैः सव्वालकवलैर्मुखैः ।
तुण्डाग्रनखपुच्छस्तु गरुत्मानिव वीर्यवान् ॥ २५ ॥
गच्छता वायुवेगेन कालमेघेन संगतः ।
हिमवान् पारिपात्रो वा विन्ध्यो वेति ततस्ततः ॥ २६ ॥
गिरिकन्दरमूर्ध्नि स्थो नगो वेति विभाव्यते ।
पूर्वां संध्यामुपासित्वा दक्षिणेन प्रदक्षिणः ॥ २७ ॥
मध्याह्नात् पश्चिमे स्थित्वा सोत्तरे वार्युपास्पृशत् ।
किष्किन्ध्यामागतः शीघ्रमथ वाली महाबलः ॥ २८ ॥
उवाच रावणं मुक्त्वा कृतकृत्योऽस्मि साम्प्रतं ।
आदित्यगं तदाभून्मे मनो राक्षसपुङ्गव ॥ २९ ॥

Digitized by Google

ततो युद्धं मया वीर न ते दत्तं महाबल ।
साम्प्रतं कृतकृत्योऽस्मि युध्यस्व बलमास्थितः ॥ ३० ॥
एवमुक्तो दशग्रीवो मुखेन परिशुष्यता ।
कृच्छ्राद्व्रीडायुतोवाच भुजयन्त्रनिपीडितः ॥ ३१ ॥
वानरेन्द्र महाबाहो बलवीर्यसमन्वितः ।
त्रिषु लोकेष्वजेयोऽस्मि सोऽहमद्य त्वया जितः ॥ ३२ ॥
अनुज्ञातो गमिष्यामि त्वया वानरपुङ्गव ।
संनिवर्ताभिनन्दस्व गच्छेयं स्वस्तिमागतः ॥ ३३ ॥
तस्य तद्वचनं श्रुत्वा बाली बलवतां वरः ।
सिद्धार्थो गच्छ रक्षेति किष्किन्ध्यामगमत् तदा ॥ ३४ ॥
एवंप्रभावो बाली स यदि शक्नोषि संयुगे ।
शरेणैकेन तं हन्तुं ततो युध्यामि संयुगे ॥ ३५ ॥
इतीव काकुत्स्थबलं विचिन्तयन् बलं च बालिप्रभवं स वानरः ।
न वेद रामस्य स पौरुषं ध्रुवं सुरासुरैरप्यविषह्यमाहवे ॥ ३६ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबलप्रख्यापनं
नाम दशमः सर्गः ॥

Digitized by Google

## XI.

तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः ।
स्मितपूर्वमिदं रामः प्रत्युवाच कपीश्वरं ॥ १ ॥
यदि न प्रत्ययोऽस्मासु विद्यते तव वानर ।
प्रत्ययं समरश्लाघ्यमहमुत्पादयामि ते ॥ २ ॥
स गृहीत्वा धनुर्दिव्यं शक्रचापसमद्युति ।
मुमोच बाणं संधाय तालानुद्दिश्य राघवः ॥ ३ ॥
स विसृष्टो बलवता बाणो हेमपरिष्कृतः ।
भित्त्वा तालान् गिरिं चैव प्रविवेश रसातलं ॥ ४ ॥
स तु हंसस्य रूपेण तत उत्पत्य सायकः ।
आजगाम पुनस्तूणं रामस्यामिततेजसः ॥ ५ ॥
तान् दृष्ट्वा सप्त निर्भिन्नान् तालान् वानरपुङ्गवः ।
रामस्य शरवेगेन विस्मयं परमं गतः ॥ ६ ॥
सुदुष्करं तु तत् कर्म सुग्रीवः प्रसमीक्ष्य हि ।
मूर्ध्नि कृत्वाञ्जलिं हृष्टो राघवं प्रशशंस ह ॥ ७ ॥
राम विक्रमशौटीरमहेन्द्रवरुणोपम ।
अहो ते चापमुक्तस्य सायकस्य महद्बलं ॥ ८ ॥
पूर्वमेव मया राम तर्कितस्त्वं नरर्षभ ।
महता तेजसा युक्तो गूढोऽग्निरिव दारुषु ॥ ९ ॥

Digitized by Google

नाभवद्भूतभव्यानां विश्वे जगति राघव ।
समर्थस्तव काकुत्स्थ धनुष्यस्त्रबले मतौ ॥ १० ॥

यथा हि तेजस्विवरो दिवाकरो
यथा नगानां च वरो हिमालयः ।
यथोदधीनां च वरो महार्णवस्
तथा नराणामसि विक्रमे वरः ॥ ११ ॥

न वृत्रशत्रुर्न यमो न चासुरो
न सर्वयक्षेशधनेश्वरो विभुः ।
न पाशहस्तो वरुणश्च ते समो
न मारुतो नैव च हव्यवाहनः ॥ १२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तालनिर्भेदो
नाम एकादशः सर्गः

Digitized by Google

## XII.

स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतमूर्धजः ।
सुग्रीवो विपुलग्रीवो राघवाय कृताञ्जलिः ॥ १ ॥
इदं चोवाच वचनं पुनरेव कपीश्वरः ।
रामं सर्वास्त्रसंपन्नं श्रेष्ठं सर्वधनुष्मतां ॥ २ ॥
सेन्द्रानपि सुरान् सर्वांस्त्वं बाणैः पुरुषर्षभ ।
समर्थः समरे हन्तुं किं पुनर्बालिनं रणे ॥ ३ ॥
अपि बालिसहस्राणां सहस्रं पार्थिवात्मज ।
समर्थोऽसि रणे जेतुं किमुतैकमरिंदम ॥ ४ ॥
येन सप्त महातालाः शैलोऽयं दानवास्थितः ।
शरेणैकेन निर्भिन्नाः समर्थस्तस्य कः पुमान् ॥ ५ ॥
अद्य मे विगतः शोकः प्रीतिरद्य परा मम ।
अद्य मन्ये विनिहतं बालिनं युद्धदुर्मदं ॥ ६ ॥
सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमं ।
उद्युक्तेभ्योऽपि देवेभ्यः समरे नास्ति मे भयं ॥ ७ ॥
तदद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणं । ।
बालिनं जहि काकुत्स्थ संवरं मघवानिव ॥ ८ ॥
ततो रामः परिष्वज्य सुग्रीवं प्रियवादिनं ।
प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ ९ ॥

Digitized by Google

एहि गच्छामि सुग्रीव किष्किन्धां बालिपालितां ।
गत्वा चाह्वय युद्धाय वैरिणं भ्रातृरूपिणं ॥ १० ॥
एवमुक्तस्तु सुग्रीवो रामेण रिपुघातिना ।
गच्छामीत्यब्रवीद्धृष्टः प्रयातास्तेऽथ सत्वराः ॥ ११ ॥
किष्किन्धां त्वरितं गत्वा देशे पादपसङ्कटे ।
वृक्षैरात्मानमावृत्य तेऽतिष्ठन् गहने वने ॥ १२ ॥
अथ रामोऽब्रवीत् तत्र सुग्रीवं प्रियवादिनं ।
कुरु नादं गुहाद्वारि स्थित्वा त्वमकुतोभयः ॥ १३ ॥
बालिनं चाह्वय तथा निष्क्रमेत् स गुहामुखात् ।
तमहं निहनिष्यामि शरेणाशनिवर्चसा ॥ १४ ॥
एवमुक्ते तु वचने काकुत्स्थेनामितौजसा ।
नादः स्निग्धोऽथ गम्भीरो महानासीत् तदा दिवि ॥ १५ ॥
माला च काञ्चनी दिव्या नानारत्नविभूषिता ।
दिवः सुग्रीवमूर्धानमभितो निपपात ह ॥ १६ ॥
सा पतन्ती महीं माला काञ्चनी देवनिर्मिता ।
प्रचकाशे तदाकाशे विद्युन्माला मनोहरा ॥ १७ ॥
सा हि पित्रा सुतस्नेहादादित्येन दिवौकसा ।
बालिनो मालया तुल्या स्वयं यत्नाद्विनिर्मिता ॥ १८ ॥
तयापि नद्धया तत्र सुग्रीवः प्लवगेश्वरः ।
शुशुभे हरिशार्दूलो ज्वलदग्निरिवानलः ॥ १९ ॥

Digitized by Google

ततः स कृत्वा सुग्रीवो नमस्कारं दिवं प्रति ।
कृताञ्जलिरथो पश्चाद्राघवं परिषस्वजे ॥ २० ॥
स पूजितो गुरुस्नेहाल्लक्ष्मणेनापि धीमता ।
अभिवादितश्च विधिवल्लक्ष्मणं परिषस्वजे ॥ २१ ॥
प्रदक्षिणं समावृत्य स तौ दशरथात्मजौ ।
सुग्रीवो विपुलग्रीव आजगाम गुहामुखं ॥ २२ ॥
ततो नदन् महानादं बालिनं स समाह्वयत् ।
सुग्रीवो गाढसंवीतो नादैर्भिन्दन्निवाम्बरं ॥ २३ ॥
तं श्रुत्वा विनदं बाली घोरं चुक्रोध वीर्यवान् ।
निष्पपात च संक्रुद्धस्तोयदादिव भास्करः ॥ २४ ॥
तयोः सुतुमुलं युद्धं बालिसुग्रीवयोरभूत् ।
दिवीव ग्रहयोर्घोरं बुधाङ्गारकयोर्महत् ॥ २५ ॥
तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
जघ्नतुः समरेऽन्योन्यं वृक्षैर्गिरितटैरपि ॥ २६ ॥
रामोऽथ धनुरादाय तावुभौ समवैक्षत ।
पश्यंश्च बालिसुग्रीवौ ददर्श वपुषा समौ ॥ २७ ॥
अन्योन्यसदृशौ वीरावन्योन्यसमविक्रमौ ।
उभौ जज्ञे तदा तुल्यावश्विनाविव रूपिणौ ॥ २८ ॥
स नाभिजानन् सुग्रीवं बालिनं चापि राघवः ।
न चकार तदा बुद्धिं सायकस्य विमोक्षणे ॥ २९ ॥

एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन बालिना ।
ऋष्यमूकं प्रदुद्राव ज्ञात्वा रामस्य चाश्रयं ॥ ३० ॥
क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः ।
बालिनाभिहतो रोषात् प्रविवेश महावनं ॥ ३१ ॥
तं प्रविष्टं वनं दृष्ट्वा बाली शापभयात् तदा ।
मुक्तस्त्वमिति होवाच संनिवृत्य महाद्युतिः ॥ ३२ ॥
राघवोऽपि सह भ्रात्रा तैश्चापि सह मन्त्रिभिः ।
तदेव वनमागच्छत् सुग्रीवो यत्र वानरः ॥ ३३ ॥
तं दृष्ट्वाभ्यागतं रामं सामात्यं सहलक्ष्मणं ।
दीनोऽथाधोमुखो ह्रीमान् सुग्रीवो वाक्यमब्रवीत् ॥ ३४ ॥
आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमं ।
वैरिणा घातयित्वा मां किमुपेक्षा कृता त्वया ॥ ३५ ॥
तस्मिन्नेव हि वक्तव्यं काले राघव तत्वतः ।
न हनिष्याम्यहमिति न स्थास्ये क्षणमप्यहं ॥ ३६ ॥
अभविष्यं विनिहतो बालिना यद्यहं रणे ।
ममाभविष्यत् को राज्येनार्थी बन्धुजनेन वा ॥ ३७ ॥
तमेवमादिवचनं वदन्तं कृपणं बहु ।
अनामर्षयमाणश्च रामः सुग्रीवमब्रवीत् ॥ ३८ ॥
सुग्रीव श्रूयतां तावन्मन्युश्चैवापनीयतां ।
कारणं येन बाणोऽयं न मुक्तः प्लवगाधिप ॥ ३९ ॥

Digitized by Google

अलंकारेण वेशेन प्रमाणेन गतेन च ।
त्वं च सुग्रीव बाली च सदृशौ स्थः परस्परं ॥ ४० ॥
स्वरेण वर्चसा चैव प्रेक्षितेन स्थितेन च ।
विक्रमेण च वाचा च व्यक्तं वां नोपलक्षये ॥ ४१ ॥
तदहं रूपसादृश्यान्मोहितो वानरेश्वर ।
कथं सुहृद्वधो न स्यादिति बाणं न मुक्तवान् ॥ ४२ ॥
इमं मुहूर्तं तु मया पश्य बालिनमाहवे ।
निरस्तमिषुणैकेन चेष्टमानं महीतले ॥ ४३ ॥
चिह्नभूतं त्वभिज्ञानं त्वमङ्गे कर्तुमर्हसि ।
येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतं ॥ ४४ ॥
गजपुष्पमयीं मालामुत्पाट्य कुसुमायुतां ।
कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ४५ ॥
ततो गिरितटे जातामारुह्य सुदुरासदां ।
लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे स सक्तवान् ॥ ४६ ॥
स तया शुशुभे वीरो मालया कण्ठसक्तया ।
विहायसि बलाकानां मालया तोयदो यथा ॥ ४७ ॥
भ्राजमानेन वपुषा मालया कृतलक्षणः ।
प्रतस्थे सह रामेण पुनरेव गुहां प्रति ॥ ४८ ॥
इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबधविधानं
नाम द्वादशः सर्गः ॥

Digitized by Google

## XIII.

ऋष्यमूकात् स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ।
जगाम सहसुग्रीवो वालिपौरुषपालितां ॥ १ ॥
समुद्यम्य महच्चापं रामः काञ्चनभूषणं ।
बाणमुद्धृत्य चैवैकं ज्वलितानलवर्चसं ॥ २ ॥
अग्रतः प्रययौ तस्य राघवस्य महात्मनः ।
सुग्रीवो विपुलग्रीवो लक्ष्मणश्चैव वीर्यवान् ॥ ३ ॥
पृष्ठतो हनुमान् वीरो नलनीलौ च वानरौ ।
तारश्चैव महातेजा हरियूथपयूथपाः ॥ ४ ॥
पश्यन्तस्ते ययुर्वृक्षान् पुष्पितान् रुचिरान् बहून् ।
प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५ ॥
कन्दराणि च शैलानां निर्झराणि गुहास्तथा ।
शिखराणि च दिव्यानि दरीश्च विविधाः शुभाः ॥ ६ ॥
वैडूर्यकान्ततोयाश्च नलिनीः फुल्लपङ्कजाः ।
पश्यन्तः प्रययुर्मार्गे नानापुष्पगणैर्युताः ॥ ७ ॥
कादम्बैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः ।
चक्रवाकैस्तथान्यैश्च दात्यूहैश्च विनादिताः ॥ ८ ॥
सुस्थांश्चापि गताशङ्कान् वनराजिसमाश्रयान् ।
चरतो वीक्षमाणाश्च ययुर्मृगगणान् वने ॥ ९ ॥

Digitized by Google

तडागसेविनश्चैव कुञ्जरान् गिरिसंनिभान् ।
जलस्थांश्च स्थलस्थांश्च करेणुगणसंवृतान् ॥ १० ॥
वने वनचरांश्चान्यान् विविधान् मृगपक्षिणः ।
पश्यन्तस्ते ययुः सर्वे सुग्रीवपरिवर्तिनः ॥ ११ ॥
तेषां तु गच्छतां तत्र त्वरितं सुमनोहरं ।
द्रुमषण्डमथो दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १२ ॥
कस्येदं मेघसंकाशं तरुषण्डं प्रकाशते ।
नानागुल्मलतानद्धं पर्यन्तकदलीवनं ॥ १३ ॥
किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं हि मे ।
महदस्य परिज्ञाने गच्छन्नेव च शंस मे ॥ १४ ॥
तस्यैतद्वचनं श्रुत्वा राघवस्य महात्मनः ।
गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महावनं ॥ १५ ॥
यदेतन्मेघसंकाशं पश्यस्याश्रममण्डलं ।
कदलीवनसंछन्नं स्वादुमूलफलोदकं ॥ १६ ॥
अत्र सप्तजना नाम मुनयः संशितव्रताः ।
सप्तैवासन् धर्मशीला नित्यं वायुजलाशनाः ॥ १७ ॥
अहोरात्रकृताहारा मौनव्रतपरायणाः ।
दिवं वर्षशतैर्याताः सप्तभिः सकलेवराः ॥ १८ ॥
तेषामेष प्रभावेन कदलीवनसंवृतः ।
आश्रमः सुदुराधर्षः सेन्द्रैरपि सुरासुरैः ॥ १९ ॥

Digitized by Google

पक्षिणो वर्जयन्त्येनं तथान्ये वनचारिणः ।
विशन्ति मोहाद्ये ह्येनं निवर्तन्ति न ते पुनः ॥ २० ॥
विभूषणरवो ह्यत्र श्रूयते सकलाक्षरः ।
तूर्यगीतनिनादश्च दिव्यो गन्धः प्रवाति च ॥ २१ ॥
दृश्यन्ते चाग्नयो दीप्तास्तेषामत्र महात्मनां ।
धूमश्च दृश्यतेऽद्यापि कपोताङ्गारुणो महान् ॥ २२ ॥
कुरु प्रणामं धर्मज्ञ तानुद्दिश्य तपोधनान् ।
लक्ष्मणेन सह भ्रात्रा प्रयतः संहताञ्जलिः ॥ २३ ॥
प्रणमन्ति हि ये तेषामृषीणां संशितात्मनां ।
न तेषामशुभं किञ्चित् कदाचिदुपपद्यते ॥ २४ ॥
ततो रामः सह भ्रात्रा प्रयतः संहताञ्जलिः ।
स निश्चित्य नमश्चक्रे महर्षीन् संशितव्रतान् ॥ २५ ॥
स च प्रणम्य तान् सर्वान् रामो भूयः सलक्ष्मणः ।
ससुग्रीवः पुनर्हृष्टो गुहामभिमुखो ययौ ॥ २६ ॥
ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् ।
ददृशुस्तां दुराधर्षां किष्किन्धां बालिपालितां ॥ २७ ॥
वृक्षैर्देहांस्तथावृत्य व्यतिष्ठन् गहने वने ।
राघवावथ सुग्रीवो हनुमत्प्रमुखाश्च ये ॥ २८ ॥
अथ राजीवताम्राक्षं दृप्तसिंहर्षभास्थितं ।
वीक्ष्य रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥ २९ ॥

Digitized by Google

हरिराजगुहां दीप्तां तप्तकाञ्चनतोरणां ।
प्राप्ताः स्मो धजयन्त्राढ्यां किष्किन्धां बालिपालितां ॥ ३० ॥
या प्रतिज्ञा त्वया वीर पुरा बालिबधे कृता ।
सफलां तां कुरु क्षिप्रं लतां कुसुमितामिव ॥ ३१ ॥
एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ।
सुग्रीवं हर्षयन् वाक्यमुवाचेदमनन्तरं ॥ ३२ ॥
कृतचिह्नस्त्वमनया मालया वानरेश्वर ।
विश्रब्धं बालिनं भूयः समाह्वय सखे युधि ॥ ३३ ॥
अद्य बालिसमुत्थं ते भयं दुःखं च वानर ।
नाशयाम्येकबाणेन सखे सत्येन ते शपे ॥ ३४ ॥
मम दर्शय तं पापं वैरिणं भ्रातृरूपिणं ।
यं तमद्यैव बाणेन हतं पांशुषु शाययें ॥ ३५ ॥
यदि दृष्टिपथं प्राप्तो भूयो जीवन् व्रजेत सः ।
तव शत्रुस्ततो मां त्वं गर्हयेथा विगर्हितं ॥ ३६ ॥
प्रत्यक्षं ते मया तालाः सप्त बाणेन दारिताः ।
तेनाद्य विद्या नियतं बालिनं समरे हतं ॥ ३७ ॥
अनृतं नोक्तपूर्वं हि मया कृच्छ्रेऽपि तिष्ठता ।
धर्मलोपभयाद्वीर न च वक्ष्ये कदाचन ॥ ३८ ॥
सफलां ते करिष्यामि प्रतिज्ञां संभ्रमं त्यज ।
प्राप्तबीजमिव क्षेत्रं वृष्टिसर्गेण वासवः ॥ ३९ ॥

Digitized by Google

आह्वानं कारणं तस्माद्वालिनो हेममालिनः ।
सुग्रीव कुरु संशब्दं निष्पतेत् स यथा पुनः ॥ ४० ॥
जितकाशी बलश्लाघी त्वया च धर्षितः पुरा ।
निष्पतिष्यत्यमर्षेण बाली स प्रियसङ्गरः ॥ ४१ ॥
रिपुतो धर्षणां वीरो मर्षयेन्न स संयुगे ।
जानीमो हि स्वकं वीर्य्यं स्त्रीसमक्षं विशेषतः ॥ ४२ ॥
स तद्रामवचः श्रुत्वा हेमपिङ्गेक्षणः कपिः ।
ननाद पुनरेवोच्चैर्नादैर्भिन्दन्निवाम्बरं ॥ ४३ ॥
विचार्य्य स ततो दृष्टिं कानने काननप्रियः ।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयत् परं ॥ ४४ ॥
ननादोच्चैर्गुहां सर्वां शब्देनापूरयन्निव ।
गाढं निरसितः श्रीमानाह्वयद्वालिनं युधि ॥ ४५ ॥
तेन शब्देन वित्रस्ता बभ्रमुर्मृगपक्षिणः ।
राजदोषपरामृष्टाः कुलस्त्रिय इवातुराः ॥ ४६ ॥
व्यद्रवंश्च भयाद्भीता दिशो वनगजास्तथा ।
गुहागता मृगेन्द्राश्च वित्रेसुः शब्दधर्षिताः ॥ ४७ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे किष्किन्ध्यागमनं
नाम त्रयोदशः सर्गः ॥

Digitized by Google

## XIV.

अथ तस्य निनादं तु सुग्रीवस्याभिगर्जितं ।
शुश्रावान्तःपुरगतो बाली भ्रातुरमर्षणः ॥ १ ॥
श्रुत्वैव च निनादं तु बलिनो दारुणं पुनः ।
मद एकपदे नष्टः क्रोधश्चास्य ततोऽभवत् ॥ २ ॥
स रोषताम्रनयनो बाली संध्यातपप्रभः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३ ॥
दंष्ट्राकरालवदनः क्रोधताम्रतराकृतिः ।
बभ्राजोत्फुल्लनयनः समृणाल इव ह्रदः ॥ ४ ॥
सोऽमर्षवशमापन्नो निष्पपात हरीश्वरः ।
वेगेन चरणन्यासैः कम्पयन्निव मेदिनीं ॥ ५ ॥
तमुवाच ततस्तारा भर्तारं वानरेश्वरं ।
परिष्वज्य भयादित्थं निष्पतन्तं गुहामुखात् ॥ ६ ॥
साधु क्रोधमिमं वीर नदीवेगमिवागतं ।
शयनादुत्थितः कल्यं माल्यं भुक्तमिव त्यज ॥ ७ ॥
तवायं सहसा भूयो निर्गमो मे न रोचते ।
श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥ ८ ॥
पूर्वमापतितः क्रोधात् त्वां स आहूतवान् युधि ।
भयाद्द्रुतस्त्वया संख्ये बलान्निःसृत्य निर्जितः ॥ ९ ॥

त्वया तस्य निरस्तस्य सूदितस्य विशेषतः ।
इहैव पुनराह्वानं शङ्कां जनयतीव मे ॥ १० ॥
दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः ।
निनादस्य च संह्रादो नैतदल्पप्रयोजनं ॥ ११ ॥
ससहायमहं मन्ये सुग्रीवमतितेजसं ।
सुव्यक्तमाश्रयं लब्धा वलिनं पुनरागतः ॥ १२ ॥
प्रकृत्या निपुणश्चासौ बुद्धिमांश्चैव वानरः ।
नानाश्रयात् समाह्वानं तव भूयः करोति सः ॥ १३ ॥
सत्यसंधेन वीरेण राघवेण महात्मना ।
किल कृत्वैव सुमहत् सख्यमत्रागतः पुनः ॥ १४ ॥
सुपरीक्षितवीर्येण लब्धलक्ष्येण धीमता ।
परिश्रुतो मया पूर्वं रामेणैष सहायवान् ॥ १५ ॥
तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः ।
रामः परबलामर्दी युगान्ताग्निसमः किल ॥ १६ ॥
निवासवृक्षः साधूनामार्तानामार्तिनाशनः ।
संपदां महतीनां च यशसो भुवि भाजनं ॥ १७ ॥
ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ।
धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥ १८ ॥
तत् क्षमं न विरोद्धुं ते सह तेन महात्मना ।
दुर्जयेनाप्रमेयेन वीरेण रणकर्मणि ॥ १९ ॥

Digitized by Google

वक्ष्यामि त्वां हितं किञ्चिन्न तु सम्यगसूयया ।
श्रूयतां क्रियतां चैव यत् त्वां वक्ष्याम्यहं हितं ॥ २० ॥
सुग्रीवं प्लवगश्रेष्ठं यौवराज्येऽभिषेचय ।
विग्रहं मा कृथा वीर रामेणामिततेजसा ॥ २१ ॥
अहं हि ते क्षमं मन्ये रामेण सह सौहृदं ।
सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥ २२ ॥
लालनीयो हि ते भ्राता यवीयान वानरेश्वर ।
विधेयो वाविधेयो वा सर्वथा बन्धुरेव सः ॥ २३ ॥
यदिवा मत्प्रियं कार्यं यदिवावैषि ते हितं ।
याच्यमानः प्रयत्नेन साधु मे कुरु भाषितं ॥ २४ ॥
रामो घोरतरो वीरः साक्षात् काल इवान्तकः ।
तस्यैव च महावीर्यो भ्राता वै लक्ष्मणः श्रुतः ॥ २५ ॥
तावुभौ सहितौ नित्यं धनुर्हस्तौ महाबलौ ।
नैव सादयितव्यौ ते मनसापि कथञ्चन ॥ २६ ॥
अथ सर्वाणि रत्नानि यानि सन्तीह ते गृहे ।
तान्यादायाङ्गदो यातु राघवाय प्रयच्छतु ॥ २७ ॥
संधिं गच्छतु रामेण युगान्तरवितेजसा ।
गुहामिमां परित्यज्य देशं वान्यं व्रजामहे ॥ २८ ॥
रामः सुग्रीवसहितो यतिष्यति महाभये ।
अनागतविधानं च तस्यार्थे प्रविधीयतां ॥ २९ ॥

Digitized by Google

संभ्रमोऽयं समुत्पन्नस्तस्माद्देशमिमं त्यज ।
समर्थस्त्वमिमं जेतुमधिष्ठानपराक्रमैः ॥ ३० ॥
अशक्यः संयुगे स्थातुमवद्वास्यो बलीयसा ।
कुलबन्धुप्रयुक्तेन दृष्टापसरणे मतिः ॥ ३१ ॥
तस्यास्तद्वचनं बाली हितमप्यायतिक्षमं ।
तारायाः सौम्यरूपाया नागृह्णात् कालचोदितः ॥ ३२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तारावाक्यं
नाम चतुर्दशः सर्गः ॥

Digitized by Google

## XV.

तामेवं ब्रुवतीं तारां तारापतिनिभाननां ।
बाली निर्भर्त्सयामास वाक्यमेतदुवाच ह ॥ १ ॥
गर्जतोऽस्य सुविस्रब्धं शत्रोर्नित्याततायिनः ।
मर्षयिष्यामि संशब्दं जातक्रोधः कथं प्रिये ॥ २ ॥
अधर्षितानां शूराणां संयुगेष्वनिवर्तिनां ।
धर्षणामर्षणं कान्ते मरणादतिरिच्यते ॥ ३ ॥
सोढुं न च समर्थोऽहं योद्धुकामस्य संयुगे ।
सुग्रीवस्यातिसंशब्दं पीनग्रीवस्य गर्जतः ॥ ४ ॥
प्रयुक्तां धर्षणां मानी यो मर्षयति शक्तिमान् ।
मनुष्य इति नाहं तं गणयामि मनस्विनि ॥ ५ ॥
भूयश्च सिंहविक्रान्तस्तारामाह हरीश्वरः ।
नाहं त्वन्मतिमासाद्य वैक्लव्याद्दैन्यमास्थितः ॥ ६ ॥
स्वपराक्रमयुक्तश्च भविष्यामि पराङ्मुखः ।
उत्पाटयतु वा रामो बाहुभ्यां विन्ध्यपर्वतं ॥ ७ ॥
इमां सप्तसमुद्रान्तां संवर्तयतु वा महीं ।
सचन्द्रतारं गगनं जगच्चेदं चराचरं ॥ ८ ॥
दहत्वग्निशिखैर्वापि सायकैर्मर्मभेदिभिः ।
न बिभीयामहं रामात् सुग्रीवसहितादपि ॥ ९ ॥

Digitized by Google

न तु कार्यो विषादस्ते राघवं प्रति मत्कृते ।
धर्मज्ञश्च कृतज्ञश्च न स पापं करिष्यति ॥१०॥
प्रतियोत्स्याम्यहं गत्वा सुग्रीवं त्यज संभ्रमं ।
दर्पं चास्यापनेष्यामि न च प्राणैर्विमोक्ष्यते ॥११॥
निवर्तस्व सह स्त्रीभिः किं वा भूयोऽनुगच्छसि ।
सौहृदं दर्शितं भद्रे मम तत् सुकृतं त्वया ॥१२॥
शापितासि मम प्राणैर्निवर्तस्व जयेन च ।
अयं जित्वा निवृत्तोऽस्मि तमहं भ्रातरं रणे ॥१३॥
तं तु तारा परिष्वज्य बालिनं प्रियदर्शनं ।
चकार रुदती मन्दं वेपमाना प्रदक्षिणं ॥१४॥
ततः स्वस्त्ययनं कृत्वा मन्त्रवद्विजयैषिणी ।
अन्तःपुरं सह स्त्रीभिः प्रविवेश सुमध्यमा ॥१५॥
प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयं ।
निश्चक्राम ततो बाली महासर्प इव श्वसन् ॥१६॥
स निष्पत्य महावेगः क्रोधपर्याकुलेक्षणः ।
सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकाङ्क्षया ॥१७॥
स ददर्श ततो दूरात् सुग्रीवं हेमपिङ्गलं ।
तमेवाभिमुखश्चापि ययौ योद्धुमतित्वरन् ॥१८॥
सुसंनद्धं योद्धुकामं रामस्याश्रयगर्वितं ।
स तं दृष्ट्वा महावीर्यः सुग्रीवं प्रत्युपस्थितं ॥१९॥

Digitized by Google

गाढं संनह्नं चक्रे करिष्यन् कर्म दुष्करं ।
उवाच चातिताम्राक्षः सुग्रीवं रोषमूर्छितः ॥ २० ॥
दुर्बुद्धे पाप सुग्रीव का त्वरा मरणे पुनः ।
एष मुष्टिर्मया बद्धस्त्वद्वधार्थं समुद्यतः ॥ २१ ॥
यस्ते मूर्ध्नि विनिर्मुक्तः प्राणानपहरिष्यति ।
एवमुक्त्वा तु सुग्रीवो हृदये तेन ताडितः ॥ २२ ॥
स क्रुद्धस्ताडितस्तेन समभिद्रुत्य वेगितः ।
अभवच्छोणितोद्गारात् सोत्पीड इव सर्वतः ॥ २३ ॥
सुग्रीवेण तु निःशङ्कं सालमुत्पाट्य तेजसा ।
हृदये निहतो बाली वज्रेणेव महागिरिः ॥ २४ ॥
स तु बाली रणगतः सालताडनविह्वलः ।
गुरुभारसमाक्रान्तश्चचाल च नुघूर्ण च ॥ २५ ॥
तौ भीमबलविक्रान्तौ सुपर्णगतिवेगितौ ।
प्रयुद्धौ घोररूपौ च खस्थौ पापग्रहाविव ॥ २६ ॥
बालिना भग्नदर्पे तु सुग्रीवे मन्दतेजसि ।
बालिनं प्रति सामर्षश्चुक्रोधातीव राघवः ॥ २७ ॥
ततः संधाय रामेण शरमाशीविषोपमं ।
निहतो हृदये बाली हेममाली महाबलः ॥ २८ ॥
स तेन हृदये बाली निहतो निपपात ह ।
हा हतोऽस्मीति विक्रुश्य भ्रष्टमार्गश्च विह्वलः ॥ २९ ॥

Digitized by Google

वाष्पसंरुद्धकण्ठोऽथ दृष्ट्वा राममुपस्थितं ।
उवाचार्तस्वरो बाली पङ्कमग्न इव द्विपः ॥ ३० ॥
पराङ्मुखबधं कृत्वा को नु प्राप्तस्त्वया गुणः ।
यदहं युद्धसंसक्तस्त्वयादृश्येन ताडितः ॥ ३१ ॥
न शोचामि तथात्मानं न तारां न च बान्धवान् ।
यथा पुत्रं गुणश्रेष्ठमङ्गदं कनकाङ्गदं ॥ ३२ ॥
यो मयादर्शनाद्दीनो बाल्यात् प्रभृति लालितः ।
दुःखमासाद्य सहसा सततं मामनुस्मरन् ॥ ३३ ॥
वाय्वर्कपरिपीताम्बुर्विपरिम्लानपङ्कजः ।
तडाग इव कालेन परिशोषं गमिष्यति ॥ ३४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबधो
नाम पञ्चदशः सर्गः ॥

Digitized by Google

## XVI.

तथा शरेणाभिहतो रामेणाक्लिष्टकर्मणा ।
पपात सहसा भूमौ निकृत्त इव पादपः ॥ १ ॥
स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः ।
पपात देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥
तस्मिन् निपतिते वीरे तदा वानरपुङ्गवे ।
मग्नचन्द्रमिव व्योम न प्रकाशति मेदिनी ॥ ३ ॥
भूमौ निपतितस्यापि तस्य देहं महात्मनः ।
जहौ न लक्ष्मीर्न प्राणो न तेजो न पराक्रमः ॥ ४ ॥
तस्य दिव्या हि सा माला काञ्चनी देवनिर्मिता ।
दधार हरिमुख्यस्य प्राणानन्ते समाहिता ॥ ५ ॥
स तया मालया वीरः शुशुभे शक्रदत्तया ।
संध्यानुगतपर्यन्तः पयोधर इवोद्गतः ॥ ६ ॥
तस्य माला च देहश्च मर्मघाती शरश्च सः ।
त्रिधेवोत्पतिता लक्ष्मीः पतितस्याप्यशोभत ॥ ७ ॥
ततस्तं बालिनं भूमौ शयानं रुधिरोक्षितं ।
ययातिमिव पुण्यान्ते देवलोकात् परिच्युतं ॥ ८ ॥
महेन्द्रपुत्रं पतितं दीप्तास्यं हरिलोचनं ।
उपासर्पत सुग्रीवो भ्रातरं प्लवगर्षभं ॥ ९ ॥



Digitized by Google

बहुमानाच्च तं वीरं कर्कशं रणशोभितं ।
लक्ष्मणानुचरो रामो ददर्शोपससर्प च ॥ १० ॥
स दृष्ट्वा राघवं बाली लक्ष्मणं च महाबलं ।
अब्रवीत् परुषं वाक्यं प्रसृतं धर्मसंहितं ॥ ११ ॥
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
रामः कारुण्यवेदी च प्रजानां च हिते रतः ॥ १२ ॥
सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः ।
इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ १३ ॥
तान् गुणान् संप्रधार्याहमग्र्यं चाभिजनं तव ।
तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः ॥ १४ ॥
त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
लिङ्गमेतच्च ते राम दृश्यते धर्मसंहितं ॥ १५ ॥
इयं चासीन्मम मतिस्त्वयि संभाविता गुणाः ।
न त्वहं त्वां विजानामि धर्मच्छद्मवृतं शठं ॥ १६ ॥
न च त्वां बुद्धवानस्मि तृणैः कूपमिवावृतं ।
सतां वेशधरं पापं भस्मच्छन्नमिवानलं ॥ १७ ॥
धर्मवैतंसिकं क्षुद्रमहं त्वां नावबुद्धवान् ।
सतां वेशधरं पापं प्रच्छन्नाधर्मचारिणं ॥ १८ ॥
नगरे वा पुरे वापि यदि नापकरोम्यहं ।
न च तेऽहं विरुध्यामि कस्मान्मां हतवानसि ॥ १९ ॥

Digitized by Google

राज्ञो दशरथस्याथ पुत्रः ख्यातो मतः कथं ।
धर्मात् परिच्युतो रामो धर्मलिङ्गधरश्च सन् ॥ २० ॥
कः क्षत्रियकुले जातः श्रुतवान् छिन्नसंशयः ।
छद्मधर्मपरिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २१ ॥
साम दानमहङ्कारः क्षमा सत्यं धृतिः स्थितिः ।
इति क्षत्रगुणा राम दण्डश्चाप्यपकारिणां ॥ २२ ॥
वयं शाखामृगा राम पुष्पमूलफलाशनाः ।
संप्रवर्तामहे नैवं यथा राम प्रवर्तसे ॥ २३ ॥
भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ।
तत्र कस्ते मदीयेऽस्मिन् वने लोभः फलेषु वा ॥ २४ ॥
नयश्च विनयश्चैव निग्रहानुग्रहौ तथा ।
राजवृत्तमसंकीर्णं न स्यात् कामात्मको नृपः ॥ २५ ॥
त्वं तु कामप्रधानश्च राजवृत्ते न च स्थितः ।
संकीर्णधर्मवृत्तिश्च हिंसालोभपरायणः ॥ २६ ॥
न तेऽस्ति सुमतिर्धर्मे नार्थे बुद्धिरुपस्थिता ।
इन्द्रियैः कामवृत्तैस्त्वं क्लिश्यसे प्राकृतो यथा ॥ २७ ॥
फलमूलाशनं राम बालिनं वनगोचरं ।
मामिहायुध्यमानं त्वमन्येन च समागतं ॥ २८ ॥
हत्वा बाणेन तीक्ष्णेन ज्वलतानपकारिणं ।
किं वक्ष्यसि सतां मध्ये कृत्वा कर्म जुगुप्सितं ॥ २९ ॥

Digitized by Google

राजहा ब्रह्महा गोघ्नश्चोरः प्राणिबधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३० ॥
अधार्यं चर्म मे सद्भिः करिष्यसि किमस्थिभिः ।
अभक्ष्यं चैव मे मांसं त्वादृशैर्ब्रह्मचारिभिः ॥ ३१ ॥
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेषु राघव ।
शशकः शल्लकी गोधा खड्गः कूर्मश्च पञ्चमः ॥ ३२ ॥
अभक्ष्याणि च पञ्चैव यानि राम श्रुतानि मे ।
शृगालश्चैव नक्रश्च वानरः किन्नरो नरः ॥ ३३ ॥
चर्म चास्थि च मे राम न स्पृशन्ति मनीषिणः ।
भक्ष्यं नैव च मे मांसं सद्भिः पञ्चनखो ह्यहं ॥ ३४ ॥
त्वया नाथेन काकुत्स्थ न सनाथा वसुंधरा ।
प्रमदा शीलसंपन्ना धूर्तेन पतिना यथा ॥ ३५ ॥
शठो नैकृतिकः क्षुद्रो धर्मवैतंसिकोऽनृजुः ।
कथं दशरथेन त्वं जातः पापो महात्मना ॥ ३६ ॥
छिन्नचारित्रकक्षेण सतां धर्मातिवर्तिना ।
त्यक्तधर्माङ्कुशेनाहं निहतो राम हस्तिना ॥ ३७ ॥
त्वया ह्यदृष्टेन रणे निहतोऽहं दुरात्मना ।
प्रसुप्तः पन्नगेनेव नरः कालवशंगतः ॥ ३८ ॥
दृश्यस्त्वं यदि युध्येथा मया सह नृपात्मज ।
अद्य वैवस्वतं पश्येस्त्वं ध्रुवं निहतो मया ॥ ३९ ॥

Digitized by Google

सुग्रीवप्रियकामेन यदहं हिंसितस्त्वया ।
कण्ठे बद्धा प्रदत्तः स्यान्मया तव स रावणः ॥ ४० ॥
न्यस्तां सागरतोये वा पाताले वापि मैथिलीं ।
आनयेयमहं दर्शे श्वेतामश्वतरीमिव ॥ ४१ ॥
पूर्वं मां स किलागत्य रावणो राक्षसाधिपः ।
संध्याकालेऽब्रवीद्रक्षो युध्यस्वेति मया सह ॥ ४२ ॥
इति ब्रुवन् मया चोक्तो मुहूर्तं मृष्यतामिति ।
यावत् संध्यामुपासेऽहं चातुःसागरिकीमिमां ॥ ४३ ॥
एवमुक्तं यदा रक्षो न व्यतिष्ठत पापकृत् ।
तदा वै बाहुपाशेन बद्धा संध्यामुपास्य च ॥ ४४ ॥
इहानीय मया प्रोक्तो युध्यस्वेति स राक्षसः ।
स प्रणम्य गतो नाहं तव शक्त इति ब्रुवन् ॥ ४५ ॥
तत् तु कार्यमयं नैव सुग्रीवस्ते करिष्यति ।
चिरेण वा मन्दबुद्धिः कृच्छ्रेण च करिष्यति ॥ ४६ ॥
अहं यदर्थं निहतस्त्वया वै कार्यगौरवात् ।
अहमेव त्वया तत्र किमर्थं न नियोजितः ॥ ४७ ॥
कार्यस्य कारणार्थाय यदर्थं परितप्यसे ।
मयैव दत्तः स भवेत् तव भार्यापहारकः ॥ ४८ ॥
युक्तं यत् प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ।
तदयुक्तमधर्मेण यत् त्वयाहं हतो रणे ॥ ४९ ॥

Digitized by Google

कामसेवंविधो लोकः कालेन परिमुच्यते ।
क्षमं कृतं चेद्भवता दुष्कृतं संप्रधार्यतां ॥ ५० ॥
इन्द्रदत्तामिमां मालां सुग्रीवः प्रतिमुञ्चतु ।
प्राप्नोतु हरिराज्यं च त्यक्ष्यामि जीवितं स्वयं ॥ ५१ ॥
सुग्रीवमङ्गदं चैव तारां चैव सुदुःखितां ।
भवान् परिग्रहैः प्राप्तैर्यथावदनुपश्यतु ॥ ५२ ॥
इत्येवमुक्त्वा परिशुष्कवक्त्रः
शराभिघातव्यथितान्तरात्मा ।
समीक्ष्य रामं रविसंनिकाशं
बभूव तूष्णीं स तदा विचेताः ॥ ५३ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिवाक्यं
नाम षोडशः सर्गः ॥

Digitized by Google

## XVII.

इत्युक्तः प्रसृतं वाक्यं रामो धर्मार्थसंहितं ।
परुषं बालिना तत्र पतितेन धरातले ॥ १ ॥
तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदं ।
उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलं ॥ २ ॥
धर्मार्थगुणसंयुक्तं शरीराहितमुत्तमं ।
अधिक्षिप्तस्तदा रामस्तथा वचनमब्रवीत् ॥ ३ ॥
धर्ममर्थं च कामं च समयं चापि लौकिकं ।
अविज्ञाय कथं बालिन् मां धर्षयितुमर्हसि ॥ ४ ॥
अपृष्ट्वा बुद्धिसंपन्नान् वैद्यान् वानर चापलात् ।
यत्किञ्चन प्रलापी त्वं वाक्शरैरुपकृन्तसि ॥ ५ ॥
सूक्ष्मः परमदुर्बोधः सतां धर्मः प्लवङ्गम ।
हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभे ॥ ६ ॥
चपलैः सचिवैः सार्धं वानरैरकृतात्मभिः ।
अन्धोऽन्धैरिव संयुक्तो विज्ञास्यसि कथं नयं ॥ ७ ॥
अहं तु व्यर्थतामस्य वचनस्य ब्रवीमि ते ।
नैव मां केवलं रोषात् त्वं धर्षयितुमर्हसि ॥ ८ ॥
इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।
मृगपक्षिमनुष्येषु निग्राह्या धर्मदूषकाः ॥ ९ ॥

Digitized by Google

तामिमां पालयत्यद्य भरतः पृथिवीपतिः ।
धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ १० ॥
नयज्ञो विनयज्ञश्च यस्मिन् सत्यं च संस्थितं ।
विक्रमी देशकालज्ञो विजिगीषुर्जितेन्द्रियः ॥ ११ ॥
यस्य धर्मकृतोद्देशाद्वयमन्ये च साधवः ।
चरन्ति वसुधां कृत्स्नां धर्माधर्मानवेक्षकाः ॥ १२ ॥
अस्मिन् नृपतिशार्दूले सततं धर्मवत्सले ।
पालयत्यखिलां भूमिं कस्य बुध्येत विग्रहः ॥ १३ ॥
ते वयं शासनात् तस्य चरन्तः पृथिवीमिमां ।
धर्मातिक्रमिणां धर्म्यं कुर्महे दण्डधारणं ॥ १४ ॥
स त्वं विक्लिष्टधर्मा च पापकर्मा विगर्हितः ।
कामतन्त्रप्रधानश्च प्राकृतो वानरो यथा ॥ १५ ॥
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ।
प्रतिच्छन्नाश्च दृश्याश्च निघ्नन्ति स्म बहून् मृगान् ॥ १६ ॥
प्रधावितानविश्वस्तान् विश्वस्तानप्यविद्रुतान् ।
प्रसुप्तानप्रसुप्तांश्च घ्नन्ति मांसार्थिनो मृगान् ॥ १७ ॥
यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
लिप्यन्ते न च दोषेण निघ्नन्तोऽपि मृगान् बहून् ॥ १८ ॥
तस्मात् त्वं निहतो युद्धे मया बाणेन वानर ।
अयुध्यन् प्रतियुध्यन् वा सौम्य शाखामृगो ह्यसि ॥ १९ ॥

Digitized by Google

पूर्वेण मम मान्धात्रा संप्राप्तं व्यसनं महत् ।
श्रवणेन कृते पापे यथा पापं कृतं त्वया ॥ २० ॥
अन्यैरपि कृते पापे प्रमत्तैर्वसुधाधिपाः ।
प्रायश्चित्तानि कुर्वन्ति यथोद्दिष्टानि वानर ॥ २१ ॥
तेन तेषां न तत् पापं कृतं सौम्येन कर्मणा ।
नात्यारोहति जातोर्मिर्महौघः स्वनवानपि ॥ २२ ॥
ततस्त्वं निहतः पाप शरेणानतपर्वणा ।
गमिष्यसि सतां लोकान् शस्त्रपूतो मनोरमान् ॥ २३ ॥
राजभिर्धृतदण्डा ये कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ २४ ॥
दुर्लभस्य हि धर्मस्य जीवितस्य सुखस्य च ।
राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ २५ ॥
पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ॥ २६ ॥
तान् न हिंस्यान्न चाक्रोशेन्नासत्यं नाप्रियं वदेत् ।
देवानामनुरूपा हि चरन्त्येते महीतले ॥ २७ ॥
कारणं चापरं पश्य मया येनासि हिंसितः ।
भार्यायां वर्तसे भ्रातू रुमायां त्वमधार्मिकः ॥ २८ ॥
अस्य त्वं ध्रियमाणस्य सुग्रीवस्य यवीयसः ।
स्त्रीविमुक्तः कथं मूढ त्यक्त्वा धर्मं सनातनं ॥ २९ ॥

ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेया धर्मे चेदनुरुध्यते ॥ ३० ॥
यवीयान् सोदरः पुत्रः शिष्यश्च गुणवानपि ।
पुत्रवत् तेऽपि संचिन्त्या धर्मश्चेदस्ति कारणं ॥ ३१ ॥
तद्यतीतस्य ते धर्मात् कपिवृत्तस्य वानर ।
भ्रातुर्भार्यापहर्तुस्ते दण्डोऽयं विनिपातितः ॥ ३२ ॥
न हि धर्मविरुद्धस्य लोभवृत्तस्य पापिनः ।
दण्डादन्यं न पश्यामि निग्रहं हरियूथप ॥ ३३ ॥
औरसस्य च पुत्रस्य पत्न्याश्चैवानुजस्य च ।
स्वैरवृत्तस्य कर्तव्यं राजभिर्दण्डधारणं ॥ ३४ ॥
भरतश्च महीपालो वयं चादेशकारिणः ।
त्वं च धर्मव्यतिक्रान्तः कथं शक्यमुपेक्षितुं ॥ ३५ ॥
गुरुवृत्तश्च विक्रान्तः प्रजा धर्मेण पालयन् ।
भरतः कामवृत्तानां निग्रहे पर्युपस्थितः ॥ ३६ ॥
ते वयं भरतादेशं विधिं कृत्वा विशेषतः ।
त्वद्विधान् भिन्नमर्यादान् नियन्तुं सततोद्यताः ॥ ३७ ॥
सुग्रीवश्चैव रक्ष्योऽयं लक्ष्मणोऽयं यथा तथा ।
दारराज्यहरोऽस्य त्वमतोऽसि निहतो मया ॥ ३८ ॥
प्रतिज्ञातं मया तस्य तदा वानरसंनिधौ ।
राज्यं दाराश्च तच्छक्यं कथं कर्तुं मयान्यथा ॥ ३९ ॥

Digitized by Google

प्रतिज्ञा च कथं मिथ्या कर्तव्या मद्विधेन हि ।
न मे मिथ्या भवेद्वाक्यमतोऽसि विनिपातितः ॥ ४० ॥
तदेतैः कारणैर्धर्म्यैर्ह्यसि निहतो मया ।
न मां धर्ममविज्ञाय त्वं गर्हयितुमर्हसि ॥ ४१ ॥
अविज्ञाय परं धर्मं केवलं मौर्ख्यमास्थितः ।
नान्तकाले हि परुषं वक्तुमेवं त्वमर्हसि ॥ ४२ ॥
सर्वथा धर्म्य एवैष कृतस्ते निग्रहो मया ।
भ्रातृदाराभिमर्दी च मया तेनासि हिंसितः ॥ ४३ ॥
अलं ते परितप्तस्य पूतोऽसि निहतो मया ।
स्वर्गं प्राप्नुहि दुष्प्राप्यं कार्यार्थं निहतो ह्यसि ॥ ४४ ॥
यदि वा लोभमास्थाय मया त्वं निहतो वृथा ।
तत् क्षम्यतां हरिश्रेष्ठ मान्यो ह्येवं गतोऽसि मे ॥ ४५ ॥
इति रामवचः श्रुत्वा वाली धर्मार्थसंहितं ।
समाहितमनोबुद्धिरिदं वचनमब्रवीत् ॥ ४६ ॥
यदात्थ रघुशार्दूल तथेदं नात्र संशयः ।
प्रतिकर्तुं प्रकृष्टस्य नावकृष्टेन युज्यते ॥ ४७ ॥
यच्चडुक्तं मया पूर्वं संरम्भाद्वाक्यमप्रियं ।
क्षन्तुमर्हसि मे दोषमेतं रिपुनिसूदन ॥ ४८ ॥
त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः ।
कार्यकारणयुक्ता ते प्रसन्ना बुद्धिरुत्तमा ॥ ४९ ॥

Digitized by Google

स त्वं धर्माद्यपगतं कामवृत्तं वनौकसं ।
धर्मसंयुक्तया बुद्ध्या स्वधर्मं प्रतिपादय ॥५०॥
सुग्रीवे चाङ्गदे चैव विधत्स्व यदनन्तरं ।
त्वं हि शास्ता च गोप्ता च भूतानां रघुनन्दन ॥५१॥
या ते नरपते वृत्तिर्भरते लक्ष्मणे तथा ।
सुग्रीवाङ्गदयोश्चापि तां त्वं वर्तितुमर्हसि ॥५२॥
मद्दोषकृतदोषां च यथा तारां तपस्विनीं ।
नावमन्येत सुग्रीवस्तथा त्वं कर्तुमर्हसि ॥५३॥
त्वया ह्यनुगृह्णीतेन शक्यं राज्यं प्रशासितुं ।
त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥५४॥
इति बालिवचः श्रुत्वा रामो राजीवलोचनः ।
आश्वासयन्निदं वाक्यमुवाच मधुराक्षरं ॥५५॥
न शेषं भवता चिन्त्यं नात्मनोऽपि सुहृज्जनः ।
धर्मतः शेषकरणे प्रतीक्षिष्यामहे वयं ॥५६॥
दण्ड्ये निपातयन् दण्डमदण्ड्यं परिपालयन् ।
समः शत्रौ च मित्रे च यो राजा स न सीदति ॥५७॥
स भवान् दण्डसंयोगेनानेन हृतकिल्विषः ।
गतः शुभां गतिं पुण्यां न शोचितुमतोऽर्हसि ॥५८॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबधे
रामवाक्यं नाम सप्तदशः सर्गः ॥

Digitized by Google

XVIII.

स वानरो महातेजाः शयानः शरविक्षतः ।
प्रत्युक्तो हेतुमद्वाक्यं नोत्तरं प्रत्यपद्यत ॥ १ ॥
अश्मभिः परिभिन्नाङ्गः पादपैराहतो भृशं ।
रामबाणेन चाक्रान्तो मुमोह भयपीडितः ॥ २ ॥
तं भार्या राममुक्तेन शरेण भृशताडितं ।
तारा शुश्राव पतितं भर्तारं बालिनं तदा ॥ ३ ॥
सा सपुत्रा बधं श्रुत्वा तारा भर्तुः सुदारुणं ।
निष्पपात द्रुतं तस्माद्रुदती गिरिगह्वरात् ॥ ४ ॥
सा ददर्श परित्रस्तान् हरीनापततो द्रुतं ।
यूथादिव परिभ्रष्टान् मृगान् निहतयूथपान् ॥ ५ ॥
तानुवाच समासाद्य दुःखितान् भृशदुःखिता ।
रामवित्रासितान् भीतान् भृशविद्धानिवेषुभिः ॥ ६ ॥
वानरा वानरेन्द्रस्य यस्य यूयं पुरःसराः ।
तं विहाय परित्रस्ताः कस्माद्द्रवथ संघशः ॥ ७ ॥
कच्चिद्भर्ता च रौद्रेण राज्यलुब्धेन घातितः ।
रामेण विकृताकारैः शरैराशीविषोपमैः ॥ ८ ॥
कपीन्द्रपत्न्यास्तच्छ्रुत्वा वानराः करुणं वचः ।
प्राप्तकालं वचस्तस्या ऊचुः संभ्रान्तमानसाः ॥ ९ ॥

Digitized by Google

जीवपुत्रि निवर्तस्व रक्ष पुत्रं त्वमङ्गदं ।
अन्तको रामरूपेण हत्वा हरति बालिनं ॥ १० ॥
क्षिपन् वृक्षान् महाकायान् विसृजंश्च महाशिलाः ।
वज्रिवज्रोपमैर्बाणै रामेण विनिपातितः ॥ ११ ॥
भीतभीतमिदं सर्वं विद्रुतं वानरं बलं ।
तस्मिन् प्लवगशार्दूले हते समिति शोभने ॥ १२ ॥
रक्ष्यतां नगरी शूरैरङ्गदश्चाभिषिच्यतां ।
पदस्थं बालिनः पुत्रं भजिष्यन्तेऽथ वानराः ॥ १३ ॥
एतत् ते रोचतां क्षिप्रमङ्गदस्याभिषेचनं ।
अनेन विधिना श्रेयो भविष्यति तवाङ्गने ॥ १४ ॥
विशन्तु वनदुर्गानि क्षिप्रमन्यानि वानराः ।
अदाराश्च सदाराश्च बहवो निहतेश्वराः ॥ १५ ॥
सर्वेषां हि प्रकृत्यैव स्वेभ्यो नः सुमहद्भयं ।
भीतानां भृशमार्तानामन्योन्यं हि वनौकसां ॥ १६ ॥
अल्पान्तरगतानां तु श्रुत्वा तेषां वचोऽङ्गना ।
आत्मनः प्रतिरूपं सा बभाषे चारुभाषिणी ॥ १७ ॥
पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ।
कपिसिंहे महाभागे विनष्टे मम भर्तरि ॥ १८ ॥
पादमूलं गमिष्यामि तस्यैव विदितात्मनः ।
एवमुक्त्वा प्रदुद्राव रुदती शोकलालसा ॥ १९ ॥

Digitized by Google

शिरश्चोरश्च पाणिभ्यां निघ्नती साथ निर्दयं ।
आधावन्ती ददर्शाथ पतिं निपतितं भुवि ॥ २० ॥
भर्तारं वानरेन्द्राणां संयुगेष्वनिवर्तिनां ।
क्षेप्तारं गिरिशृङ्गाणां वज्राणामिव वासवं ॥ २१ ॥
संवर्त्तनिनदं घोरं शूरं शूरेण संगतं ।
शार्दूलेनामिषस्यार्थे मृगराजं यथा हतं ॥ २२ ॥
अर्चितं सर्वलोकानां सस्कन्धविटपं द्रुमं ।
नागहेतोः सुपर्णेन चैत्यमुन्मूलितं यथा ॥ २३ ॥
अवष्टभ्य च तिष्ठन्तं ददर्श धनुरुत्तमं ।
रामं रामानुजं चैव भर्तुश्चैवानुजं तथा ॥ २४ ॥
सा तदा तु समालक्ष्य भर्तारं निहतं रणे ।
आसाद्य व्यथिता भूमौ सपुत्रा निषसाद ह ॥ २५ ॥
प्रसुप्तमिव चालिङ्ग्य ह्यार्यपुत्रेति भाषिणी ।
ननाद संपरिष्वज्य पतितं धरणीतले ॥ २६ ॥
हा हतास्मि महाबाहो त्वयाद्य विधवा कृता ।
अशृण्वता मम वचस्त्वयेदमनुभूयते ॥ २७ ॥
न कालस्य प्रियः कश्चिन्न द्वेष्योऽस्ति कपीश्वर ।
कालः कालयते सर्वान् सर्वः कालेन बध्यते ॥ २८ ॥
कालः सर्वस्य मध्यस्थः प्रियस्यैवाप्रियस्य च ।
कालेनासि हतो नूनं मम वैधव्यकारिणा ॥ २९ ॥

Digitized by Google

उक्तो ऽसि हरिशार्दूल मया सुबहुशस्तदा ।
उत्तिष्ठ वानरश्रेष्ठ किं शेषे पतितः क्षितौ ॥ ३० ॥
न मां पश्यसि दुःखार्ता सपुत्रां पतितां भुवि ।
समाश्वासय तावन्मां यथापूर्वमरिंदम ॥ ३१ ॥
अनाथां परितप्यन्तीं सपुत्रां निहते त्वयि ।
तामवेक्ष्याथ सौमित्रिः क्रोशन्तीं कुररीमिव ।
अङ्गदं सचिवांश्चार्तान् मुमोचाश्रूणि वीर्यवान् ॥ ३२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तारानिष्पतनं
नाम अष्टादशः सर्गः ॥

Digitized by Google

XIX.

रामचापविमुक्तेन शरेण हृदि विक्षतं ।
भर्तारमथ सालोक्य तारा निपतितं भुवि ॥ १ ॥
शरीरे न दयां काञ्चिदात्मनः समवेक्षत ।
विनिष्पिपेष चात्मानं प्रगृह्य सुभुजा भुजौ ॥ २ ॥
हा हतास्मीति विक्रुश्य पपात धरणीतले ।
व्यावर्तत च सा भूमौ लुब्धेनेव हता मृगी ॥ ३ ॥
परिग्रहश्च यस्तस्य बालिनोऽभ्यन्तरस्त्रियः ।
कुरर्य इव वानर्यो विनिष्पेतुर्गुहामुखात् ॥ ४ ॥
विक्रोशन्त्यो महानादान् यावांस्तस्य परिग्रहः ।
ताश्चाप्यतीव शोकार्तास्तारां शोकाभिसंवृतां ॥ ५ ॥
रुदतीमार्तरूपां तां दुःखोपहतचेतनां ।
आर्तामाश्वासयन्ति स्म वानर्यः शोकलालसाः ॥ ६ ॥
सर्वाः कृच्छ्रगताः स्मार्ताः सर्वा एव स्म पीडिताः ।
सर्वासां व्यसनं कृच्छ्रमिदमस्माकमागतं ॥ ७ ॥
रामधनुर्विमुक्तेन महावेगेन पत्रिणा ।
हताः स्मैकेषुणा सर्वाः शाखामृगपतौ हते ॥ ८ ॥
कृता स्म विधवाः सर्वाः सर्वाश्च निहताः समं ।
सर्वासां नः सुखं जीर्णं हतेऽस्मिन् हरिपुङ्गवे ॥ ९ ॥



Digitized by Google

अथ तारा परिष्वज्य पतिं शक्रपराक्रमं ।
उवाच रुदती दीना साश्रुपाताविलेक्षणा ॥ १० ॥
कृता ताराहमुन्मूला तव मूलविनाशनात् ।
दुःखशोकवती लोके वर्तयिष्यामि जीवितं ॥ ११ ॥
स्मरन्त्या हसितं चारु संलापं च शुचिस्मितं ।
धक्ष्यते हृदयं नूनं ममायं शोकपावकः ॥ १२ ॥
यानि चापि त्वया सार्धं वनेषु च सुगन्धिषु ।
विहृतानि सुखं काले तेषामुपरमः कृतः ॥ १३ ॥
निरानन्दा निराशाहं निमग्ना शोकसागरे ।
त्वयि पञ्चत्वमापन्ने महावानरयूथपे ॥ १४ ॥
वज्रसारमिदं नूनं हृदयं मे कपीश्वर ।
यत् त्वां दृष्ट्वा हतं भूमौ स्फुटितं न सहस्रधा ॥ १५ ॥
सुग्रीवस्य प्रिया भार्या हृता स च विवासितः ।
अद्य तस्य फलं प्राप्तं त्वया वानरपुङ्गव ॥ १६ ॥
निःश्रेयसपरा चाहं त्वया वीर विगर्हिता ।
भाषमाणा हितं वाक्यं वानरेन्द्रहितैषिणी ॥ १७ ॥
कालो निःसंशयमयं जीवितान्तकरस्तव ।
बलाद्येनाभिपन्नोऽसि सुग्रीवस्यावशो वशं ॥ १८ ॥
त्वया विहीना दुःखार्ता निरपेक्षास्मि जीविते ।
भवता विप्रयुक्ताया दुर्लभं मम जीवनं ॥ १९ ॥

Digitized by Google

खादन्तु मम मांसानि गृध्रवायसजम्बुकाः ।
ये चान्ये पिशिताहारा मृगपक्षिगणा भुवि ॥ २० ॥
निरनुक्रोशयुक्तेति कामं वक्ष्यति मां जनः ।
त्यजन्तीं दयितं पुत्रमङ्गदं प्रियदर्शनं ॥ २१ ॥
न पुत्रो न पिता तत्र भवेद्यत्र स्त्रियाः पतिः ।
न चैतदवगच्छन्ति प्रायशः प्राकृताः स्त्रियः ॥ २२ ॥
न ह्याज्ञापयितुं शक्यः सुतोऽस्य विहते त्वयि ।
अप्रियो वा प्रियो वापि यथा भर्ता सदा स्त्रियाः ॥ २३ ॥
हितार्थं विप्रियं ह्युक्तो मातुः कुप्यति वै सुतः ।
क्रुद्धया तु स्त्रिया ह्युक्तो भर्ता नैव हि कुप्यति ॥ २४ ॥
अनुवर्तितुमिच्छन्ति मातरं सततं सुताः ।
मात्रर्थे न तथा पुत्रो दारार्थे वै यथा पतिः ॥ २५ ॥
पुत्रहस्तात् तु का नारी सत्त्वयुक्ता मनस्विनी ।
भोक्तुमुत्सहते पिण्डं वैधव्यमलदूषिता ॥ २६ ॥
जीवितं हि विहास्यामि विमुक्तसुतसंश्रया ।
श्रेयान् प्राणपरित्यागस्तेन चैव गतिः सह ॥ २७ ॥
एष मे रोचते मार्गस्त्यक्त्वा जीवितमप्रियं ।
भर्तारमनुगच्छेयं प्रयान्तं स्वर्गमक्षयं ॥ २८ ॥
एवं तु रुदती तारा बाष्पगद्गदभाषिणी ।
शरीराद्भूषणं सर्वमात्मनः सावतारयत् ॥ २९ ॥

Digitized by Google

सा विभूषणहीनाङ्गी चन्द्रहीनेव शर्वरी ।
अश्रुसंरुद्धनयना सोपरागेव रोहिणी ॥ ३० ॥
क्रोशन्ती हार्यपुत्रेति भर्तृवैधव्यकर्षिता ।
पपात सहसा भूमौ दिव्योल्केव नभश्च्युता ॥ ३१ ॥
सा विवर्णमुखी दीना वेपमाना महीतले ।
पांशुदूषितसर्वाङ्गी रुदती पर्यचेष्टत ॥ ३२ ॥
प्रेरयन्ती ततश्चक्षुः सुग्रीवं सा ददर्श च ।
कनिष्ठं भ्रातरं भर्तुस्तारा दीनमवस्थितं ॥ ३३ ॥
सा समाभाष्य सक्रोधाद्दुःखादागतसंभ्रमा ।
उवाच वाक्यं वाक्यज्ञा संरब्धा मधुराक्षरं ॥ ३४ ॥
साधु मामपि सुग्रीव परित्याजय जीवितं ।
धिङ्मे सत्पतिहीनायाः कृपणं जीवितं स्त्रियाः ॥ ३५ ॥
हतेवाहं त्वया पूर्वं निघ्नता दयितं मम ।
परं हि मरणं स्त्रीणां लोके पतिबधेन तु ॥ ३६ ॥
एवमुक्तस्तु सुग्रीवो वचनं तारया तदा ।
वसुधासक्तनयनो नोत्तरं प्रत्यपद्यत ॥ ३७ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे ताराविलापो
नाम ऊनविंशतितमः सर्गः ॥

Digitized by Google

## XX.

तां तथा परितप्यन्तीं तारां शोकसमाकुलां ।
वानर्यो विविधैर्वाक्यैर्हेतुमद्भिर्न्यदर्शयन् ॥ १ ॥
तासां वचनमाज्ञाय मर्तव्ये कृतनिश्चया ।
भूयो रोषसमाक्रान्ता विलप्तुमुपचक्रमे ॥ २ ॥
अङ्गदप्रतिरूपाणां पुत्राणां शतमेकतः ।
मृतस्यापि च मे भर्तुः सङ्ग एव विशिष्यते ॥ ३ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ४ ॥
पार्थिवेन प्रियेणाहं मुहूर्तमपि वर्जिता ।
कथं प्राणैः परित्यक्तं न त्यक्ष्यामि कलेवरं ॥ ५ ॥
अवश्यं मरणं चात्र न जाने कालमात्मनः ।
भर्तृयुक्तं हि विधिवच् श्लाघनीयतरं मम ॥ ६ ॥
राजर्षिकुलजातस्य वने वन्येन जीवतः ।
अनुरूपो न ते राम निर्वैरं बालिनो बधः ॥ ७ ॥
प्रहरन्ति महात्मानो न नारीषु न वानरे ।
बालिनो मन्दभाग्यत्वात् सर्वं रामेण विस्मृतं ॥ ८ ॥
नात्यर्थं परितप्येऽहं हतो यदि भवेत् समं ।
इमं व्याजहतं दृष्ट्वा मनो मे परितप्यते ॥ ९ ॥

Digitized by Google

अस्थाने बालिनं हत्वा राम किं त्वं न तप्यसे ।
पलाशप्रेप्सुना भग्नं त्वयाच्युतवनं महत् ॥ १० ॥
यदि वानरसाध्यत्वं मन्यसे कार्यमात्मनः ।
ज्ञातीनां प्रवरः कस्मान्न बाली विनियोजितः ॥ ११ ॥
सेन्द्रैरपि सुरैः सीता यदिवा सह्वितैर्हृता ।
गतः सहायतां बाली न चिरादानयेत् स तां ॥ १२ ॥
बाहुभ्यां येन सुग्रीवः सुसुखं नैकशो जितः ।
सोऽद्य त्वया रणे राम जीवितं त्याजितः कथं ॥ १३ ॥
त्वां तु शप्तुं समर्थास्मि पतिव्रतसमाश्रयात् ।
वैदेह्यास्त्वभिभूताया न तावच्छापमर्हसि ॥ १४ ॥
अचिरेण तु कालेन त्वया वाणैरुपार्जिता ।
न सीता मम शापेन चिरं त्वयि भविष्यति ॥ १५ ॥
आत्मनः शौचमाधार्य पतिव्रतगुणा सती ।
याच्यमाना त्वया सीता पुनर्यास्यति भूतलं ॥ १६ ॥
एवमुक्त्वा ततस्तारा तदा रामाश्रितं वचः ।
संनिकर्षे स्थितं पुत्रमिदं वचनमब्रवीत् ॥ १७ ॥
मित्राण्येव हि रक्षन्ति मित्रवान् नावसीदति ।
मित्रादुत्पादितं वैरमपि मूलं निकृन्तति ॥ १८ ॥
अश्रुधाराविलमुखी साथ तारा तपस्विनी ।
क्रोशन्ती न्यपतद्भूमौ पतिशोकेन विह्वला ॥ १९ ॥

Digitized by Google

ततो मोहगतस्याङ्के शीर्षमारोप्य बालिनः ।
मुमोच सहसा बाष्पं शोकेन महतावृता ॥ २० ॥
तस्या रुदितशब्देन बाली मोहं गतोऽपि सन् ।
शनैरुन्मीलयामास नयने हरिपिङ्गले ॥ २१ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तारानुशोचनं
नाम विंशतितमः सर्गः ॥

Digitized by Google

## XXI.

वीक्षमाणस्तु मन्दाक्षः सर्वतो मन्दमुच्छ्वसन् ।
बाली सुग्रीवमभितो ददर्शानुजमात्मनः ॥ १ ॥
तं प्राप्तविजयं बाली सुग्रीवं प्लवगेश्वरं ।
आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥
न मां दोषेण सुग्रीव गन्तुमर्हस्यकिल्बिषं ।
भाविना बुद्धिमोहेन कृष्यमाणं प्लवङ्गम ॥ ३ ॥
युगपद्विहितं नूनं न मन्ये सुखमावयोः ।
सौन्दर्यं भ्रातृयुक्तं हि विहितं तु ततोऽन्यथा ॥ ४ ॥
प्रतिपद्यस्व चाद्यैव राज्यमेषां वनौकसां ।
मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयं ॥ ५ ॥
शरो हि मे शरीरस्थो बहु मर्म निकृन्तति ।
सुतीक्ष्णः सूक्ष्मकर्मा वै जीवितं भ्रंशयत्यतः ॥ ६ ॥
जीवितं च हि राज्यं च श्रियं च विपुलामिमां ।
विजहाम्येष वै तूर्णं महच्चाभ्युद्गतं यशः ॥ ७ ॥
अस्यामहमवस्थायां वीर वक्ष्यामि यद्वचः ।
यद्यप्यसुकरं तन्मे कर्तुमेवं त्वमर्हसि ॥ ८ ॥
सुखार्हं सुखसंवृद्धं बालमेतमबालिशं ।
बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदं ॥ ९ ॥

Digitized by Google

मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसं ।
मया हीनमनाथं हि सर्वतः परिपालय ॥ १० ॥
त्वमस्याग्य पिता तात परित्राता च धर्मतः ।
भयेष्वभयदश्चैव यथाहं प्लवगेश्वर ॥ ११ ॥
एष तारात्मजः श्रीमानङ्गदः कनकाङ्गदः ।
राक्षसानां वधे तेषामग्रयोधी भविष्यति ॥ १२ ॥
अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे ।
करिष्यति महाबाहुस्तेजस्वी तरुणोऽङ्गदः ॥ १३ ॥
सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये ।
औत्पातिके च विविधे सर्वत्र परिनिष्ठिता ॥ १४ ॥
यदेषा साधिति ब्रूयात् तत् कर्तव्यमसंशयं ।
न हि तारामतं किञ्चिदन्यथा परिवर्तते ॥ १५ ॥
राघवस्य च ते कार्यं कर्तव्यं वाक्प्रचोदनात् ।
स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥ १६ ॥
इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीं ।
उदारा श्रीः स्थिता ह्यस्यां त्वामेष्यति मृते मयि ॥ १७ ॥
इत्येवमुक्त्वा सुग्रीवं रामं प्राञ्जलिरब्रवीत् ।
प्रणम्य शिरसा वाली पुत्रं प्रति महायशाः ॥ १८ ॥
आदितः कृशवृत्तिर्यः कृपणो न स राघव ।
महात्मा व्यसनं प्राप्तो दीनः कृपण उच्यते ॥ १९ ॥

कुलेऽप्यकृपणो राम संभूतः सर्वकामदे ।
अङ्गदः कृपणो राम मृते मयि भविष्यति ॥ २० ॥
एतदेवानुशोचामि यः प्रियं प्रियदर्शनं ।
न द्रक्ष्याम्यङ्गदं पुत्रं पापकर्मा दिवं यथा ॥ २१ ॥
दर्शनेनाङ्गदस्याहं पुत्रस्य नृवरात्मज ।
अवितृप्तो मरिष्यामि त्वया वीर रणे हतः ॥ २२ ॥
त्वं गतिः सर्वभूतानां शरणं च परंतप ।
प्रतिगृह्णीष्व मे पुत्रमङ्गदं कनकाङ्गदं ॥ २३ ॥
छिन्नमर्मा परामार्तिं प्राप्तोऽस्मि शरपीडितः ।
जीवितं त्यक्तुमिच्छामि प्राणाः संवरयन्ति मां ॥ २४ ॥
इयमैन्द्री शुभा माला काञ्चनी शतपुष्करा ।
दत्ता मम महेन्द्रेण प्रीतेन मनुजर्षभ ॥ २५ ॥
इमामैन्द्रीं शुभां मालां लक्ष्मणः प्रतिपद्यतां ।
स्वयं वा त्वं महाबाहो सुग्रीवाय प्रयच्छ वा ॥ २६ ॥
तमब्रवीत् ततो रामो दुःखार्तं बालिनं प्रभुः ।
गच्छ लोकान् महेन्द्रस्य शस्त्रपूतो मनोरमान् ॥ २७ ॥
इत्येवमुक्त्वा रामस्तु ततः सुग्रीवमब्रवीत् ।
इमां मालां त्वमाधत्स्व दिव्यां सुग्रीव काञ्चनीं ॥ २८ ॥
उदारा श्रीः स्थिता ह्यस्यां सा हि त्वां समुपैष्यति ।
इत्येवमुक्तः सुग्रीवो राघवेण महात्मना ॥ २९ ॥

Digitized by Google

भेजे प्रहर्षं शोकं च मालाप्या बालिनाशजं ।
बालिना त्वभ्यनुज्ञातो राघवेण च धीमता ॥ ३० ॥
बहुमेने स तामाज्ञां सुग्रीवो हरिपुङ्गवः ।
जग्राह चाभ्यनुज्ञातो मालामिन्द्रीं कृताञ्जलिः ॥ ३१ ॥
तां मालां काञ्चनीं दत्वा मूर्ध्न्युपाघ्राय चाङ्गदं ।
संसिद्धः प्रेतभावाय स्नेहादङ्गदमब्रवीत् ॥ ३२ ॥
देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः पुत्र सुग्रीववशगो भव ॥ ३३ ॥
एष चैव मया बाल्ये लालितः सततं यथा ।
स तथा मन्यमानस्त्वां सुग्रीवः साधु मंस्यते ॥ ३४ ॥
मास्य शत्रुभिरेको भूस्तदीयादेशमाश्रय ।
सुग्रीवस्य महाबाहोः कृतज्ञो भव पुत्रक ॥ ३५ ॥
न चातिप्रणयः कार्यः कर्तव्यः प्रणयश्च ते ।
एकान्ते हि महान् दोषस्तस्मादुभयभाग्भव ॥ ३६ ॥
इति जल्पन् विवृत्ताक्षः शरसंपीडितो भृशं ।
विशीर्णैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ ३७ ॥
ततस्तु तारा व्यसनार्णवप्लुता निरीक्षमाणा वदनं प्रियस्य वै ।
विवेश भूमौ परिरभ्य बालिनं महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३८ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिप्राणोद्गमो
नाम एकत्रिंशतितमः सर्गः ॥

Digitized by Google

## XXII.

ततः समुपजिघ्रन्ती कपिराजमधोमुखी ।
पतिलोकच्युता तारा पतिं वचनमब्रवीत् ॥ १ ॥
शेषे त्वं व्यसनेऽदुःखमकृत्वा वचनं मम ।
प्रियान् हित्वा ततः प्राणानद्वितीयस्त्रिभिर्हतः ॥ २ ॥
मत्तः प्रियतरा नूनं वानरेन्द्र मही तव ।
शेषे ह्येनां परिष्वज्य मां न च प्रतिभाषसे ॥ ३ ॥
श्रीमन् मन्नाथ विक्रान्त सर्वसाहसिकप्रिय ।
अन्तवानरमुख्यास्त्वां बहवः पर्युपासते ॥ ४ ॥
रणामर्षणविक्रान्त प्रदीप्त तपतां वर ।
किमेतदद्य ते वीर पुरोगान् नाभिनन्दसि ॥ ५ ॥
नन्दयन् सुहृदः सर्वान् सामदानपरिग्रहैः ।
यः पुरा बुध्यसे कान्त सोऽद्य किं त्वं न बुध्यसे ॥ ६ ॥
एषां विलपतां कृच्छ्रं क्रोशतश्चाङ्गदस्य च ।
ममापि विलपन्त्याश्च शयानः किं न बुध्यसे ॥ ७ ॥
पश्येममङ्गदं वीर तीव्रशोकमुपस्थितं ।
कृताञ्जलिमुपासीनं किमेतं नाभिभाषसे ॥ ८ ॥
इदं तच्छूर शयनं यत्र शेषे हतो युधि ।
समीपे मन्दभाग्यायाः कथितं यत् त्वया मम ॥ ९ ॥

Digitized by Google

उत्तिष्ठ हरिशार्दूल त्यजैतच्छयनं क्षितौ ।
वीरा नैवंविधा भूमौ शेरते कृतलक्षणाः ॥ १० ॥
अतीव ननु ते कान्ता वसुधा वसुधाधिप ।
गतायुरपि यां गात्रैर्मां विहाय निषेवसे ॥ ११ ॥
विशुद्धसत्त्वविज्ञान प्रियकाम मम प्रिय ।
मामनाथां विहायैको गतः खल्वसि मानद ॥ १२ ॥
न शूराय प्रदातव्या कन्या खलु विपश्चिता ।
शूरभार्यां हि मां पश्य सद्यो वैधव्यमागतां ॥ १३ ॥
अवभग्नश्च मे मानो गतिर्भग्ना च शाश्वती ।
आकाशान्ते निमग्नास्मि विवृते शोकसागरे ॥ १४ ॥
अश्मसारमयं नूनमिदं मे हृदयं दृढं ।
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा गतं ॥ १५ ॥
सुहृच्चैव च भर्ता च प्रकृत्या च मम प्रियः ।
आहवे विपरिक्रान्तः शूरः पञ्चत्वमागतः ॥ १६ ॥
पतिहीना च या नारी कामं भवति पुत्रिणी ।
धनधान्यौघयुक्तापि विधवेत्युच्यते बुधैः ॥ १७ ॥
स्वगात्रप्रभवे वीर शेषे रुधिरकर्दमे ।
कृमिरागपरिस्तोमे यथैव शयने पुरा ॥ १८ ॥
प्रहारैर्विक्षतं गात्रं रामसायकपीडितं ।
परिरब्धुं न शक्नोमि बाहुभ्यां ते हरीश्वर ॥ १९ ॥

Digitized by Google

कृतकार्यो ऽथ सुग्रीवो वैरे ऽस्मिन् प्रतिपादिते ।
युष्माभिः कपिराजस्य प्राणा यत् सार्यकैर्हृताः ॥ २० ॥
उद्दधार ततो नीलः शरं तस्य कलेवरात् ।
घोरमाशीविषं दीप्तं पर्वतस्येव गह्वरात् ॥ २१ ॥
तस्य निष्कृष्यमाणस्य सायकस्याभवद्द्युतिः ।
वर्षवेगनिगूढायाः स्फुरन्त्या इव विद्युतः ॥ २२ ॥
पेतुः क्षतजधाराश्च व्रणेभ्यस्तस्य सर्वशः ।
ताम्रधातुविनिर्मुक्ता धारा इव धराधरात् ॥ २३ ॥
अवकीर्णं प्रमार्जन्ती भर्तारं रणपांसुभिः ।
अश्रुपातैर्नयनजैः सिषेच भृशदुःखिता ॥ २४ ॥
विवर्तमाना तं दृष्ट्वा धरण्यां पतितं पतिं ।
उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥ २५ ॥
अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणां ।
संप्रसक्तस्य वैरस्य कृतो ऽन्तः पापकर्मणा ॥ २६ ॥
अप्रतीतो ऽसि सततं नीयमानं यमक्षयं ।
अभिवादय राजानं पितरं पुत्र मानिनं ॥ २७ ॥
एवमुक्तः स च तया जग्राह चरणौ पितुः ।
भुजाभ्यां पीनवृत्ताभ्यामङ्गदो ऽहमिति ब्रुवन् ॥ २८ ॥
तं दृष्ट्वा रुदती तारा बालिनं वाक्यमब्रवीत् ।
अभिवादयमानं त्वमङ्गदं च यथा पुरा ॥ २९ ॥

Digitized by Google

आयुष्मान् भव पुत्रेति किमर्थं नाभिभाषसे ।
आर्यपुत्र सपुत्रा त्वामुपासे गतचेतनं ॥ ३० ॥
सिंहेन निहतं गोष्ठे गौः सवत्सेव गोपतिं ।
इष्ट्वा संग्रामयज्ञेन रामबाणमहाम्भसा ॥ ३१ ॥
अस्मिन्नवभृथे स्नातः किं त्वं पत्न्या मया विना ।
शातकुम्भमयीं मालां न ते पश्यामि मूर्धनि ॥ ३२ ॥
या दत्ता देवराजेन स्वयमेवासुरे हते ।
न त्वां श्रीर्विजहात्येव गतायुषमपि प्रभो ॥ ३३ ॥
अर्कस्यावर्तमानस्य शैलराजमिव प्रभा ।
किष्किन्धेव पुरी पूर्वं स्वर्गमार्गः प्रकाशते ।
विदितं ते परं स्थानं शूरमार्गप्रदर्शितं ॥ ३४ ॥

किमङ्गदं त्वं च सुदीर्घबाहुं
विहाय यास्यस्यचिरेण वीर ।
न युक्तमेवंविधमुग्रवीर्यं
विहाय पुत्रं प्रियपुत्र गन्तुं ॥ ३५ ॥
किमप्रियं ते प्रियभार्य तावत्
कृतं मया वासवपुत्र येन ।
सहायिनीमद्य विहाय वीर
यमक्षयं गच्छसि दुर्निवृत्तं ॥ ३६ ॥
कथं हरीनृक्षगणान् समस्तान्

Digitized by Google

प्रियेषु पथ्येषु च वर्तमानान् ।
प्राणैः प्रकृष्टैरपि पालयित्वा
परित्यजन् यासि पितुः समीपे ॥ ३७ ॥
यदप्रियं किञ्चिदसंप्रधार्य
कृतं मया वै तव दीर्घबाहो ।
क्षमस्व तन्मे हरियूथनाथ
व्रजामि मूर्ध्ना तव वीर पादौ ॥ ३८ ॥
न मे वचस्तथ्यमिदं त्वया कृतं
न चास्मि शक्ता विनिवारणे तव ।
हता सपुत्रास्मि हते रणे त्वयि
त्वया सह श्रीश्च विनिर्गता मम ॥ ३९ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे ताराक्रन्दनो
नाम द्वाविंशतितमः सर्गः ॥

Digitized by Google

## XXIII.

तामार्तां पतितां दृष्ट्वा च्युतामिव विहायसः ।
तारामाश्वासयामास हनूमान् कपिसत्तमः ॥ १ ॥
यस्य स्म हरिमुख्यानामयुतान्यर्बुदानि च ।
तत्पराणि दधुश्चाज्ञां सोऽयं भूमौ विचेष्टते ॥ २ ॥
तदस्मिंस्त्यागधर्मार्थसामदानक्षमापरे ।
गते धर्मार्जितांल्लोकान् नैवं शोचितुमर्हसि ॥ ३ ॥
त्वया चापि वयं चिन्त्याः सपितृव्यस्तथाङ्गदः
हरयश्च महाभागे गोलाङ्गूलर्क्षसंहताः ॥ ४ ॥
तमिमं शोकसंतापं शनैर्मोक्ष्यसि मानिनि ।
प्रशासति हरीन् सर्वानङ्गदे त्वत्परिग्रहात् ॥ ५ ॥
आनन्तर्येण यद्दृष्टं कर्म यच्चापि साम्प्रतं ।
राज्ञस्तन्नियतं कर्तुमेष लोकस्य निश्चयः ॥ ६ ॥
सत्कृत्य बालिनं वीरमङ्गदः स्थाप्यतामिति ।
सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ७ ॥
सा तस्य वचनं श्रुत्वा भर्तृव्यसनकर्षिता ।
अब्रवीदुत्तरं तारा हनूमन्तमवस्थितं ॥ ८ ॥
किं कार्यं पतिहीनायाः पुत्राणामयुतैरपि ।
निहतस्यास्य वीरस्य गात्रच्छाया विशिष्यते ॥ ९ ॥



Digitized by Google

न चाहं हरिराजस्य प्रभवाम्यङ्गदस्य च ।
पितृव्यस्तस्य वीरस्य सर्वकार्येष्वनन्तरं ॥ १० ॥
न ह्येषा बुद्धिरास्थेया हनूमन्नङ्गदं प्रति ।
पितेव बन्धुः पुत्रस्य न माता हरिपुङ्गव ॥ ११ ॥
न हि मम हरिराजसंश्रयात्
क्षमतरमस्ति परत्र शोभनं ।
अभिमुखहतवीरसेवितं
शयनमिदं मम सेवितुं क्षमं ॥ १२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे ताराविलापे
हनूमद्वाक्यं नाम त्रयोविंशतितमः सर्गः ॥

Digitized by Google

## XXIV.

गतासुं बालिनं दृष्ट्वा राघवस्तदनन्तरं ।
अब्रवीत् प्रसृतं वाक्यं सुग्रीवं शत्रुनाशनः ॥ १ ॥
न तथा परितापेन श्रेयसा युज्यते नरः ।
सपुत्रा त्वां समाश्रित्य तारा वसतु संप्रति ॥ २ ॥
शोकप्रभावानुगतो बाष्पमोक्षः कृतश्च ते ।
न कालादुत्तरं किञ्चित् कर्म शेषमुपासितुं ॥ ३ ॥
नियतिः कारणं लोके नियतिर्लोकसंग्रहः ।
नियतिः सर्वभूतानां वियोगेष्वपि कारणं ॥ ४ ॥
न कर्ता कस्यचित् कश्चिन्नियोगे नापि चेश्वरः ।
स्वभावे वर्तते कालः कस्य कालः परायणः ॥ ५ ॥
न कालः कालमभ्येति न कालः परिक्षीयते ।
स्वभावं वा समासाद्य न किञ्चिदतिवर्तते ॥ ६ ॥
न कालस्यात्महेतुत्वान्न बुद्धिर्न पराक्रमः ।
न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशः ॥ ७ ॥
किन्तु कालपरीणामे द्रष्टव्यं साधु दृश्यतां ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥
प्रयातः प्रकृतिं बाली हतः प्राप्तः क्रियाफलं ।
स संपन्नोऽर्थसंयोगैः सत्कार्यः प्लवगेश्वरः ॥ ९ ॥

Digitized by Google

अधर्मफलसंयोगात् त्यक्ता तेनात्मनस्तनूः ।
स्वर्गः परिगृहीतश्च स्वधर्मं परिरक्षता ॥ १० ॥
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ।
अलं हि परिसंतप्य प्राप्तकालमुपास्यतां ॥ ११ ॥
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ।
अब्रवीत् प्रसृतं वाक्यं सुग्रीवं प्लवगेश्वरं ॥ १२ ॥
क्रियतामस्य सुग्रीव प्रेतकार्यमनन्तरं ।
ताराङ्गदाभ्यां सह वै वीरेण च हनूमता ॥ १३ ॥
समानाय्य च काष्ठानि शुष्काणि च बहूनि च ।
चन्दनागुरुमुख्यानि बालिसत्कारकारणात् ॥ १४ ॥
समाश्वासय तारां त्वमङ्गदं च शुभाङ्गदं ।
मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरं ॥ १५ ॥
हनूमन् गच्छ माल्यानि वस्त्राणि विविधानि च ।
गन्धतैलं च गन्धांश्च पश्चात्र समनन्तरं ॥ १६ ॥
सत्वरं शिविकां शीघ्रमादायागच्छ वानर ।
त्वरा गुणवती प्रोक्ता ह्यस्मिन् काले विशेषतः ॥ १७ ॥
सज्जीभवन्तु प्लवगाः शिविकावाहनोचिताः ।
समर्था बलिनश्चैव ये वहिष्यन्ति बालिनं ॥ १८ ॥
आज्ञाप्य चैव सुग्रीवं सुमित्रानन्दिवर्धनः ।
तस्थौ भ्रातुः समीपेऽथ लक्ष्मणः परवीरहा ॥ १९ ॥

Digitized by Google

लक्ष्मणस्य वचः श्रुत्वा तारः संतप्तमानसः ।
प्रविवेश गुहां शीघ्रं शिविकानयनोद्यतः ॥ २० ॥
आदाय शिविकां तारः स तु पर्यापतत् पुरः ।
वाह्कैरुह्यमानां तां शूरैरुद्वहनोचितैः ॥ २१ ॥
ततो बालिनमुद्यम्य सुग्रीवः शिविकां तदा ।
आरोपयदभिक्रोशन्नङ्गदेन सह प्रभुः ॥ २२ ॥
आरोप्य शिविकायां तु बालिनं नष्टजीवितं ।
वाससाच्छादयामास माल्यैनावचकार च ॥ २३ ॥
तदा चाज्ञापयामास सुग्रीवः प्लवगेश्वरः ।
और्ध्वदेहिकमार्यस्य क्रियतामिति वानराः ॥ २४ ॥
ततो रत्नानि हरयो बहूनि विविधानि च ।
ययुरग्रे प्रयच्छन्तः शिविकासमनन्तरं ॥ २५ ॥
राज्ञां मूर्ध्नि विशेषा हि दृश्यन्ते भुवि यादृशाः ।
तादृशैर्बालिनः सर्वमकुर्वन्नौर्ध्वदेहिकं ॥ २६ ॥
अङ्गदं परिगृह्याथ तारप्रभृतयस्तदा ।
क्रोशन्तः प्रययुस्तत्र प्रशंसन्तश्च बालिनं ॥ २७ ॥
ताराप्रभृतयश्चापि वानर्यो हतबान्धवाः ।
अनुजग्मुः कपीन्द्रं तं क्रोशन्त्यो बाष्पविक्लवाः ॥ २८ ॥
तासां रुदितशब्देन वानरीणां वनान्तरे ।
वनानि गिरयश्चैव रुदन्तीव समन्ततः ॥ २९ ॥

Digitized by Google

पुलिने गिरिनद्याश्च विविक्ते जलसंवृते ।
चितां चक्रुः सुबहुशो वानरा बालिवल्लभाः ॥ ३० ॥
अवरोप्य च तां स्कन्धाच्छिबिकां वानरर्षभाः ।
तस्थुरेकान्तमासाद्य सर्वे ध्यानपरायणाः ॥ ३१ ॥
ततस्तारा पतिं दृष्ट्वा शिबिकालयशायिनं ।
आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३२ ॥
अङ्गदोऽयं प्रियो नाम ननु ते पुत्रवत्सल ।
जलवत् पश्यसीमं त्वं कस्माच्छोकाभिपीडितं ॥ ३३ ॥
प्रहृष्टमिव ते वक्त्रं गतासोरपि वानर ।
तरुणादित्यसदृशं दृश्यते जीवतो यथा ॥ ३४ ॥
एष त्वां रामरूपेण कालः कर्षति वानर ।
येन स्मो विधवाः सर्वा एकवाणहताः कृताः ॥ ३५ ॥
इमास्ते च स्त्रियो वीर सर्वाः सुदयिता भृशं ।
पादै रुदन्त्यो नगरादागताः किं न बुध्यसे ॥ ३६ ॥
तवेष्टा ननु नामैता भार्याश्चन्द्रनिभाननाः ।
कथमीर्षां न कुरुषे सुग्रीवस्य समीपतः ॥ ३७ ॥
एते हि सचिवा राजंस्तारप्रभृतयस्तव ।
पुरवासी जनश्चायं परिवार्य स्थिता विभो ॥ ३८ ॥
विसर्जयैतान् सचिवान् यथापूर्वमरिंदम ।
ततः क्रीडाम सहिता वनेऽस्मिन् मदिरोत्कटाः ॥ ३९ ॥

Digitized by Google

एवं विलपतीं तारां पतिशोकपरिप्लुतां ।
उत्थापयन्ति स्म तदा वानर्यः शोकविह्वलाः ॥ ४० ॥
सुग्रीवेण ततः सार्धमङ्गदः पितरं रुदन् ।
चितामारोपयामास क्रन्दमानो मुहुर्मुहुः ॥ ४१ ॥
ततोऽग्निं विधिवद्दत्वा सोऽपसव्यं चकार ह ।
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ४२ ॥
बालिनं ते तु सत्कृत्य विधिपूर्वं प्लवङ्गमाः ।
आजग्मुरुदकं कर्तुं पम्पां शीतजलां शुभां ॥ ४३ ॥
ततः कृतोदकाः सर्वे पम्पायां क्लिन्नवाससः ।
आजग्मू राघवं द्रष्टुं लक्ष्मणं च महौजसं ॥ ४४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिसत्कारो
नाम चतुर्विंशतितमः सर्गः ॥

Digitized by Google

XXV.

ततः शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससं ।
शाखामृगमहामात्राः परिवव्रुः कृतोदकाः ॥ १ ॥
अभिगम्य च काकुत्स्थं राममक्लिष्टकारिणं ।
तस्थुः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ २ ॥
ततः शैलवपुर्धीमांस्तरुणादित्यसंनिभः ।
अब्रवीत् प्राञ्जलिर्वाक्यं हनूमान् रघुनन्दनं ॥ ३ ॥
तव प्रसादात् सुग्रीवः पितृपैतामहं महत् ।
वानराणां सुदुष्प्रापं प्राप राज्यं परंतप ॥ ४ ॥
भवता समनुज्ञातः प्रविश्य नगरीमिमां ।
संविधास्यति कार्याणि सर्वथा ससुहृज्जनः ॥ ५ ॥
स्नातोऽयं विविधै रत्नैरौषधैश्च समन्ततः ।
अर्चयिष्यति दिव्यैश्च गन्धैस्त्वां प्रीतिमानसः ॥ ६ ॥
इमां गिरिगुहां दिव्यामभियातुं त्वमर्हसि ।
कुरुष्व स्वामिसंबन्धं वानरान् संप्रहर्षयन् ॥ ७ ॥
एवमुक्तो हनुमता रामो दशरथात्मजः ।
प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः ॥ ८ ॥
चतुर्दशसमाः सौम्य ग्रामं वा यदिवा पुरं ।
न प्रवेक्ष्यामि हनुमन् पितुरादेश एष मे ॥ ९ ॥

Digitized by Google

यूयं प्रविशत क्षिप्रं कुरुध्वं यदनन्तरं ।
सुग्रीवो विधिना तात एष राज्येऽभिषिच्यतां ॥ १० ॥
एवमुक्का हनूमन्तं रामः सुग्रीवमब्रवीत् ।
एनमप्यङ्गदं राजन् यौवराज्येऽभिषेचय ॥ ११ ॥
प्रथमो वार्षिको मासः श्रावणः सलिलाप्लुतः ।
प्रवृत्ताः सौम्य चत्वारो मासाश्च वार्षिका इमे ॥ १२ ॥
नायमुद्योगसमयः प्रविश त्वं पुरीमिमां ।
इह वत्स्याम्यहं सौम्य पर्वते नियतेन्द्रियः ॥ १३ ॥
इयं गिरिगुहा रम्या विशाला युक्तमारुता ।
इह वत्स्याम्यहं सौम्य वर्षा सौमित्रिणा सह ॥ १४ ॥
प्रसन्नसलिलां रम्यां प्रभूतकमलोत्पलां ।
कार्त्तिकीं समतिक्रम्य त्वं रावणबधे यत ॥ १५ ॥
एष नः समयः सौम्य प्रविश त्वं पुरीं शुभां ।
अभिषिक्तः स्वराज्ये च सुहृदः संप्रहर्षय ॥ १६ ॥
इति रामाभ्यनुज्ञातः सुग्रीवो वानरर्षभः ।
प्रविवेश पुरीं रम्यां प्रहृष्टो विगतज्वरः ॥ १७ ॥
तं वानरसहस्राणि प्रविष्टं वानरर्षभं ।
अभिवाद्य प्रहृष्टानि सर्वतः पर्यवारयन् ॥ १८ ॥
ततः प्रकृतयः सर्वा वन्दयित्वा हरीश्वरं ।
जयेति पतिता भूमौ शिरोभिः सुसमाहिताः ॥ १९ ॥



Digitized by Google

ताः समुत्थाप्य सुग्रीवः संमान्य च यथाविधि ।
भ्रातुरन्तःपुरं रम्यं प्रविवेश महाकपिः ॥ २० ॥
प्रविश्य चाभिनिष्क्रान्तं सुग्रीवं वानरर्षभाः ।
अभ्यषिञ्चन् महामात्राः सहस्राक्षमिवामराः ॥ २१ ॥
तस्य पाण्डरमाजह्रुश्छत्त्रं कनकभूषणं ।
शुक्ले च बालव्यजने हेमदण्डपरिष्कृते ॥ २२ ॥
दिव्यानि मणिरत्नानि सर्ववीजौषधानि च ।
सक्षीराणां च वृक्षाणां प्ररोहं कुसुमानि च ॥ २३ ॥
सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ।
वासांसि चाथ मुख्यानि गन्धांश्च विविधान् वरान् ॥ २४ ॥
अक्षतं जातरूपं च प्रियङ्गुं मधुसर्पिषी ।
दधि चर्म च वैयाघ्रं वरार्हे चैव पादुके ॥ २५ ॥
समालम्भनमादाय लाजाश्च शुभदर्शनाः ।
आजग्मुस्तत्र सहिता वराः कन्याश्च षोडश ॥ २६ ॥
ततस्ते वानरश्रेष्ठा यथाभागं यथाविधि ।
रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् ॥ २७ ॥
ततः कुशपरिस्तीर्णं समिद्धं जातवेदसं ।
मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥ २८ ॥
ततो हेमप्रतिष्ठानं वरास्तरणसंवृतं ।
प्रासादशिखराकारं चित्रमाल्योपशोभितं ॥ २९ ॥

Digitized by Google

प्राङ्मुखं विधिवन्मन्त्रैः स्थापयित्वा वरासनं ।
नदीनदेभ्यः संहृत्य जलं दिव्यं च शोभनं ॥ ३० ॥
आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः ।
अपः कनककुम्भेषु निधाय विमलाः शुभाः ॥ ३१ ॥
शुभैस्ताम्रैश्च रौप्यैश्च कलसैश्चापि पार्थिवैः ।
शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ३२ ॥
गयो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवांस्तथा ॥ ३३ ॥
अभ्यषिञ्चन्त सुग्रीवं विमलेन सुगन्धिना ।
सलिलेन सपद्मेन वसवो वासवं यथा ॥ ३४ ॥
अभिषिक्ते तु सुग्रीवे सर्वे ते वानरर्षभाः ।
प्रचुक्रुशुर्महात्मानो हृष्टरूपाः सहस्रशः ॥ ३५ ॥
रामस्य वचनं कुर्वन् सुग्रीवो वानरर्षभः ।
अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥ ३६ ॥
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ।
साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ॥ ३७ ॥
तुष्टहृष्टजनाकीर्णा पताकाध्वजमालिनी ।
बभूव नगरी रम्या किष्किन्धा चित्रकानना ॥ ३८ ॥
निवेद्य रामाय महात्मने ततः कृताभिषेकः कपिवाहिनीपतिः ।
उवास भार्यां प्रतिलभ्य वीर्यवानवाप्य राज्यं त्रिदशाधिपो यथा ।३९।

Digitized by Google

## XXVI.

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहां ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिं ॥ १ ॥
शार्दूलमृगसंघुष्टं सिंहैर्भीमैर्बलैर्वृतं ।
ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितं ॥ २ ॥
मेघराशिनिभं शैलं नित्यं गिरिगुहाकुलं ।
तस्य शैलस्य शिखरे महतीमायतां गुहां ॥ ३ ॥
प्रतिजग्राह वासार्थं रामः सौमित्रिणा सह ।
गुहायाश्चाप्यदूरस्थं गिरिकुण्डं बहूदकं ॥ ४ ॥
विस्तीर्णं चायतं चैव पद्मिन्या चोपशोभितं ।
दात्यूहैः सारसैश्चैव कादम्बैश्चाप्यलंकृतं ॥ ५ ॥
अन्वसेवत धर्मात्मा राघवः सहलक्ष्मणः ।
बहुनिम्ने दरी कुञ्जे सुपुण्ये धरणीतले ॥ ६ ॥
बहुरम्ये वनोद्देशे नानामृगसमाकुले ।
अशुशोच राघवस्तत्र लक्ष्मणस्य समीपतः ॥ ७ ॥
हृतां च भार्यां कौमारीं प्राणेभ्योऽपि गरीयसीं ।
दध्यावभ्युदयं दृष्ट्वा शशाङ्कं स विशेषतः ॥ ८ ॥
न विवेश च निद्रैनं निशासु शयनं गतं ।
चिन्ता चैव विवेशैनं वाष्पशोकपरिप्लुतं ॥ ९ ॥

Digitized by Google

शोचन्तमथ काकुत्स्थं निशि शोकपरायणं ।
तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयं वचः ॥ १० ॥
अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि ।
शोचन्तो ह्यवसीदन्ति सर्वथा विदितं हि ते ॥ ११ ॥
भव कार्यपरो नित्यं भव धर्मपरायणः ।
अक्रोधो धर्मशीलश्च व्यवसायी स राघव ॥ १२ ॥
न ह्यव्यवसितः शत्रुं राक्षसं च विशेषतः ।
समर्थस्त्वं रणे जेतुं विक्रमे सिंहसंनिभं ॥ १३ ॥
समुद्दीपय तेजस्त्वं व्यवसायं स्थिरीकुरु ।
ततः सपरिवारं तं निष्कुलं कुरु वैरिणं ॥ १४ ॥
पृथिवीमपि कामं त्वं ससागरवनाचलां ।
परिवर्तयितुं शक्तः किमु तं रावणं रणे ॥ १५ ॥
हतं तु खलु वीर्यं ते प्रसुप्तं प्रतिबोधय ।
दीप्तमाहुतिभिः काले भस्मच्छन्नमिवानलं ॥ १६ ॥
लक्ष्मणस्य तु तद्वाक्यं प्रतिगृह्य शुभं हितं ।
राघवः सौहृदस्निग्धमिदं वचनमब्रवीत् ॥ १७ ॥
वाच्यं यदनुरक्तेन स्निग्धेनावहितेन च ।
सत्वविक्रमयुक्तेन तदुक्तं लक्ष्मण त्वया ॥ १८ ॥
एष शोकः परित्यक्तः सर्वकार्यावसादकः ।
विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहं ॥ १९ ॥

शरत्कालं प्रतीक्षेऽहमियं प्रावृडुपस्थिता ।
ततः सराष्ट्रं सगणं राक्षसं तं निहन्म्यहं ॥ २० ॥
तस्य तद्वचनं श्रुत्वा हृष्टो रामस्य लक्ष्मणः ।
पुनरेवाब्रवीद्वाक्यं सौमित्रिर्मित्रनन्दनः ॥ २१ ॥
एतत् ते सदृशं वाक्यमुक्तं शत्रुनिर्वर्हण ।
इदानीमसि काकुत्स्थ प्रकृतिं स्वामुपागतः ॥ २२ ॥
विज्ञाय ह्यात्मवीर्यं त्वं तथ्यं भावितुमर्हसि ।
एतत् सदृशमुक्तं ते श्रुतस्याभिजनस्य च ॥ २३ ॥
तस्मात् पुरुषशार्दूल चिन्तयन् शत्रुनिग्रहं ।
वर्षारात्रमनुप्राप्तमतिक्रामय राघव ॥ २४ ॥
भजस्व शान्तिं प्रतिलभ्यतां शरत्
क्षमस्व मासांश्चतुरो मया सह ।
वसाचलेऽस्मिन् मृगराजसेविते
समर्थयन् शत्रुबधे समुद्यमं ॥ २५ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सुग्रीवाभिषेको नाम
पञ्चविंशतितमः सर्गः—प्रस्रवणगिरिनिवासो
नाम षड्विंशतितमः सर्गः ॥

Digitized by Google

## XXVII.

स तथा बालिनं हत्वा सुग्रीवमभिषिच्य च ।
वसन् माल्यवतः पृष्ठे रामः सौमित्रिमब्रवीत् ॥ १ ॥
अयं लक्ष्मण संप्राप्तः समयो जलदागमः ।
पश्याद्य गगनं मेघैरावृतं गिरिसंनिभैः ॥ २ ॥
अष्टमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
रसं सर्वसमुद्राणां द्यौः प्रसूते रसायनं ॥ ३ ॥
एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतासंतापतप्तेव मही वास्पं विमुञ्चति ॥ ४ ॥
एष फुल्लार्जुनः शैलः केतकैरधिवासितः ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ५ ॥
नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभात्यसौ ।
स्फुरन्ती रावणस्याङ्के ह्रियमाणेव मैथिली ॥ ६ ॥
इमास्ता मन्मथव्यथाहिताः प्रतिमुखा निशाः ।
अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ ७ ॥
यतो याता नरेन्द्राणां सेनाः प्रतिनिवर्तिताः ।
वैराणि च हि मार्गाश्च सलिलेन समीकृताः ॥ ८ ॥
घनैः समुदितै रुद्धो दीनरूपः प्रकाशते ।
सूर्यः प्रनष्टो धर्मज्ञ शोकेनाहमिवावृतः ॥ ९ ॥

Digitized by Google

मासः प्रौष्ठपदो रम्यो ब्राह्मणानां विवक्षतां ।
अयं स्वाध्यायसमयः सामगानामुपस्थितः ॥ १० ॥
निवृत्तकर्मा प्रयतो नूनं संचितसंचयः ।
आषाढीमभ्युपगतो भरतः कोशलाधिपः ॥ ११ ॥
नूनमापूर्यमाणायाः शरय्वा वर्धते रवः ।
मां समीक्ष्य वनं यान्तमयोध्याया इव स्वनः ॥ १२ ॥
इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमेधते ।
विजितारिः सदारश्च राज्ये च महति स्थितः ॥ १३ ॥
अहं तु हृतदारश्च राज्याच्च महतश्च्युतः ।
नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥ १४ ॥
सागरश्चापि विस्तीर्णो पन्थानो भृशदुर्गमाः ।
रावणश्च महाशत्रुरपारः प्रतिभाति मे ॥ १५ ॥
अयात्रां चैव दृष्ट्वेमां सागरस्य च दुर्गतां ।
प्रणते चापि सुग्रीवे न किञ्चिद्व्याहृतं मया ॥ १६ ॥
अपि चातिपरिक्लिष्टं चिराद्दारैः समागतं ।
आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरं ॥ १७ ॥
स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपस्थितं ।
उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ १८ ॥
तस्य संकल्प्य विश्वासं स्थितोऽहमिदमन्तरं ।
सुग्रीवस्य नदीनां च प्रसादं प्रतिपालयन् ॥ १९ ॥

Digitized by Google

उपकारः कृतघ्नेषु प्रतिकारेण युज्यते ।
अकृतघ्ने प्रतिकृतं हन्ति सत्त्ववतां मनः ॥ २० ॥

अथैवमुक्तः प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत् प्रतिभाषितं वचः ।
उवाच रामं स्वभिरामदर्शनं
प्रदर्शयन् दर्शनमात्मनः शुभं ॥ २१ ॥

यथोक्तमेतत् तव सर्वमीप्सितं
नरेन्द्र कर्ता न चिरेण वानरः ।
शरत्प्रतीक्षं क्षमतामिमं भवान्
त्यज प्रलापं रिपुनिग्रहे रतः ॥ २२ ॥

तथापि तस्मिन् वसतो महागिरौ
महात्मनश्चिन्तयतो हृतां प्रियां ।
विसृज्य तोयं जलभारवाहना
घना निवृत्ताः शरदं न्यवेदयन् ॥ २३ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे प्रावृड्वर्णनं
नाम सप्तविंशतितमः सर्गः ॥



Digitized by Google

XXVIII.

समीक्ष्य कामात् सुग्रीवं मन्दं धर्मार्थसंग्रहे ।
रत्यर्थे ऽवहितात्मानं कान्तास्वेकान्तमानसं ॥ १ ॥
निवृत्ताशमभिप्रायैरिष्टैर्भ्रात्रा विवासितं ।
प्राप्तवन्तमभिप्रायान् सर्वानेव मनोरमान् ॥ २ ॥
स्वां च पत्नीमभिप्रेतां तारां च परमेप्सितां ।
सहस्रं राजपत्नीनां लब्धा कामपरायणं ॥ ३ ॥
विहरन्तमहोरात्रं कृतार्थं विगतज्वरं ।
मरुत्पतिं शक्रमिव नन्दने साप्सरोगणं ॥ ४ ॥
मन्त्रिसंन्यस्तकार्यार्थं मन्त्रिणामनपेक्षिणां ।
राज्यस्थं सुखसंदोहे वर्तमानमुपस्थिते ॥ ५ ॥
निश्चितार्थो ऽर्थतत्त्वज्ञः कार्यकालविशेषवित् ।
प्रसादमधुरैर्वाक्यैर्हरीणां मानयन् पतिं ॥ ६ ॥
वाक्यविद्वाक्यतत्त्वज्ञं सुग्रीवं मारुतात्मजः ।
हितं तथ्यं च पथ्यं च धर्मकामार्थहेतुमत् ॥ ७ ॥
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयः ।
हरीश्वरमुपामन्त्र्य हनूमान् वाक्यमब्रवीत् ॥ ८ ॥
राज्यं राजन् यशो दिव्यं कौली श्रीरात्मसात्कृता ।
रञ्जिताश्च प्रकृतयः स्वजनाः प्रतिपूजिताः ॥ ९ ॥

Digitized by Google

शत्रवस्ते प्रतापेन नाममात्रावशेषिताः ।
मित्राणां संग्रहः शेषस्तद्भवाननुबुध्यतां ॥ १० ॥
यो हि मित्रेषु मित्रज्ञः सततं साधु वर्तते ।
तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ॥ ११ ॥
यस्य दण्डश्च कोषश्च मित्राण्यात्मा च भूमिप ।
समवेतानि सर्वाणि स राजा श्रियमश्नुते ॥ १२ ॥
स भवान् वृत्तसंपन्नः स्थितः पथि निरत्यये ।
मित्रार्थमभिनीतस्त्वं यथावत् कर्तुमर्हसि ॥ १३ ॥
यो हि कालव्यतीतेषु मित्रकार्येषु वर्तते ।
स कृत्वा महतोऽप्यर्थान् न मित्रार्थेन युज्यते ॥ १४ ॥
मनसापि हि कर्माणि यः काले प्रतिपद्यते ।
स राजा बुद्धिसंपन्नः परेषां मूर्ध्नि वर्तते ॥ १५ ॥
तदिदं मित्रकार्यं ते कालातीतमरिंदम ।
रामस्य रणविक्रान्त वैदेह्याः परिमार्गणं ॥ १६ ॥
न च कालमतीतं त्वां संचोदयति धर्मवित् ।
त्वरमाणोऽपि स प्राज्ञस्तव राजन् वशानुगः ॥ १७ ॥
कुलस्य केतुः स्फीतस्य दीर्घकालं स राघवः ।
अप्रमेयोऽप्रमेयैः स स्वयमप्रतिमो गुणैः ॥ १८ ॥
तस्य प्राक्चोदनात् कार्यं पूर्वं कृतवतः प्रियं ।
हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि ॥ १९ ॥

Digitized by Google

असह्यगतयो ह्रीमे हरिवीरा महाबलाः ।
न हि तावद्भवेत् कालो व्यतीतश्चोदनाय ते ॥ २० ॥
अचोदितस्य कार्यस्य भवेत् कालव्यतिक्रमः ।
अकर्तुरपि कार्यं भो भवान् कर्ता हरीश्वर ॥ २१ ॥
किं पुनर्यः प्रियं कर्ता राज्ये त्वय्यर्पणस्य च ।
शक्तिमानसि विक्रान्त हर्यृक्षाणां गणेश्वरः ॥ २२ ॥
कर्तुं दाशरथेः प्रीतिमाज्ञया सज्जते तव ।
कामं खलु शरैः शक्तः ससुरासुरमानुषान् ॥ २३ ॥
वशे दाशरथिः कर्तुं प्रतिज्ञां तव काङ्क्षते ।
प्राणत्यागविशङ्केन कृतं येन तव प्रियं ॥ २४ ॥
तस्य मृग्या तु वैदेही पृथिव्यामपि चाम्बरे ।
तदेवं शक्तिसंपन्नः पूर्वं कृतवतः प्रियं ॥ २५ ॥
कर्तुमर्हसि पिङ्गाक्ष राघवस्य महत् प्रियं ।
नाधस्तान्नोपरिष्टाच्च गतिर्नाप्सु न चाम्बरे ॥ २६ ॥
कस्यचित् सज्जतेऽस्माकं सज्जते तु तवाज्ञया ।
तदाज्ञापय कः कस्मिन् कुतो वापि व्यवस्यतु ॥ २७ ॥
हरयो ह्यप्रधृष्यास्ते सन्ति कोट्यग्रगा नृप ।
तस्य तद्वचनं श्रुत्वा काले साधु निवेदितं ॥ २८ ॥
सुग्रीवः सत्त्वसंपन्नश्चकार मतिमात्मवान् ।
स संदिदेशाथ कपिं नीलं नित्यकृतोद्यमं ॥ २९ ॥

Digitized by Google

दिक्षु सर्वासु सैन्यानां सर्वेषां कुरु संग्रहं ।
यथा सेनाः समग्रा मे यूथपालाश्च सर्वशः ॥ ३० ॥
समागच्छन्त्यसंमोहात् सेनाग्राणि तथा कुरु ।
ये चान्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः ॥ ३१ ॥
स्वयं चानन्तरं सैन्यं भवानेवानुपश्यतु ।
यः पञ्चरात्रादूर्ध्वं मे नागमिष्यति वानरः ।
तस्य प्राणान्तिकं दण्डं कुर्यामिति मतिर्मम ॥ ३२ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे सैन्यव्यपदेशो
नाम अष्टाविंशतितमः सर्गः ॥

Digitized by Google

XXIX.

शरद्यथोपयातायां विमुक्ते गगने घनैः ।
वर्षाकालोषितो रामः कामशोकाभिपीडितः ॥ १ ॥
कामवन्तं च सुग्रीवं नष्टां च जनकात्मजां ।
बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥ २ ॥
ततः संज्ञामुपागम्य मुहूर्तात् पुनरात्मनः ।
मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ३ ॥
पाण्डरं विमलं व्योम्नि विमले चन्द्रमण्डलं ।
रक्तां च रजनीं दृष्ट्वा शरज्ज्योत्स्नानुलेपनां ॥ ४ ॥
आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ।
कन्दर्पशरसंतप्तो जगाम मनसा प्रियां ॥ ५ ॥
ततः पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् ।
स शून्यहृदयः शून्ये फलार्थे लक्ष्मणे गते ॥ ६ ॥
अब्रवील्लक्ष्मणं दीनो मुखेन परिशुष्यता ।
तर्पयित्वा सहस्राक्षः सलिलेन वसुंधरां ॥ ७ ॥
निर्वर्त्य सर्वसंभूतिं कृतकर्मा पुरंदरः ।
स्निग्धगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः ॥ ८ ॥
विसृज्य सलिलं मेघाः प्रतियाता नृपात्मज ।
नीलोत्पलदलश्यामाः श्यामीकृत्य दिशो दश ॥ ९ ॥

Digitized by Google

समदा इव मातङ्गा गतवेगाः पयोधराः ।
जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ॥ १० ॥
निर्ववुः शतशश्चैव वृष्टिवाताः सविद्युतः ।
असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ॥ ११ ॥
लक्ष्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ।
मेघानां वारणानां च मयूराणां च लक्ष्मण ॥ १२ ॥
नादाः प्रस्रवणानां च विनिवृत्ताः सदर्दुराः ।
उत्पलैः पुण्डरीकैश्च कुमुदैश्चापि पुष्पितैः ॥ १३ ॥
वाप्यः समभिशोभन्ते श्रीमत्यः प्रमदा इव ।
अभिवृष्टा महामेघैर्निर्मलाश्चित्रधातवः ॥ १४ ॥
अनुलिप्ता इवाभान्ति गिरयः पश्य लक्ष्मण ।
प्रसन्नसलिलाः सौम्य कुररैः संप्रणादिताः ॥ १५ ॥
हंसकारण्डवाकीर्णाः सपद्माः सलिलाशयाः ।
पुष्पितान् सलतान् स्तोमैः काञ्चनैरिव निर्मितान् ॥ १६ ॥
कथं मे वर्तते बाला पश्यन्ती मामपश्यती ।
या पुरा कलहंसानां स्वनेन कलभाषिणी ॥ १७ ॥
बोध्यते चारुसर्वाङ्गी साद्य मे बोध्यते कथं ।
क्रीडतां चक्रवाकानां विशम्य सहचारिणां ॥ १८ ॥
पुण्डरीकविशालाक्षी कथमेका भविष्यति ।
तां विना मृगशावाक्षीं चिरं नाद्य सुखं लभे ॥ १९ ॥

Digitized by Google

तां कथं मद्वियोगाच्च सुकुमारीं यशस्विनीं ।
न भृशं पीडयेत् कामः शरद्गुणनिरन्तरः ॥ २० ॥
एवमादि नरव्याघ्रो विललाप नृपात्मजः ।
विहङ्ग इव सारङ्गो जलार्थी त्रिदिवेश्वरं ॥ २१ ॥
ततश्चचूर्य रम्येषु फलार्थी गिरिसानुषु ।
ददर्श पर्युपावृत्तो लक्ष्मीवाँल्लक्ष्मणोऽग्रजं ॥ २२ ॥
स चिन्तया दुःसहयाभिभूतं विसंज्ञमेनं स्वशुचा मनस्वी ।
भ्रातुर्विषादात् परितापदीनः समीक्ष्य सौमित्रिरुवाच रामं ॥ २३ ॥
किमार्य कामस्य वशे स्थितेन किमात्मसौभाग्यपराभवेन ।
नायं सदा संध्रियतां समाधिः किमात्मयोगेन निवर्तितेन ॥ २४ ॥
नयाभियोगं मनसः प्रसादं समापयस्वात्मगुणेन कामं ।
भजस्व सामर्थ्यमदीनसत्त्व कामार्थहेतौ च कुरु प्रयत्नं ॥ २५ ॥
न जानकी पार्थिववंशनाथ स्वशीलगुप्ता सुलभा परेण ।
न चाग्निवत् तां ज्वलितामुपेत्य न धक्ष्यते वीर वरार्ह कश्चित् ॥ २६ ॥
स लक्ष्मणं लक्ष्मणवाक्यहृष्टः सभाजयन् वाक्यमुवाच रामः ।
हितं च तत्त्वं च तथा त्वयोक्तं समानधर्मार्थसमाहितं च ॥ २७ ॥
सुभाषितं ते नरवर्य कार्ये कोऽन्यः समोऽस्तीह हितस्य वक्ता ।
स्थितोऽस्मि सत्यां धृतिमद्य कृत्वा त्यक्तो मया शोककृतः प्रलापः ॥ २८ ॥
निःसंशयं कार्यमुपेक्षितव्यं क्रियाविशेषो ह्यनुवर्तनीयः ।
ननु प्रवृद्धस्य दुरासदस्य बलं निहन्तुं मम मन्मथस्य ॥ २९ ॥

Digitized by Google

## XXX.

एवमुक्त्वा तु काकुत्स्थो मुहूर्तं ध्यानमास्थितः ।
लक्ष्मणं कार्यसिद्ध्यर्थं पुनर्वचनमब्रवीत् ॥ १ ॥
अन्योन्यं बद्धवैराणां मानिनां विषयैषिणां ।
उद्योगसमयः सौम्य पार्थिवानां महात्मनां ॥ २ ॥
इयं सा प्रथमा यात्रा पार्थिवानां जयार्थिनां ।
न च पश्यामि सुग्रीवमुद्योगं वा तथाविधं ॥ ३ ॥
चत्वारो वार्षिका मासा गता वर्षशतोपमाः ।
मम कामाभितप्तस्य सौम्य सीतामपश्यतः ॥ ४ ॥
प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते ।
कृपां न कुरुते राजा सुग्रीवो मयि मानद ॥ ५ ॥
अनाथो राष्ट्रभ्रष्टश्च रावणेन च धर्षितः ।
दीनो दूरगृहः कामी मां चापि शरणं गतः ॥ ६ ॥
इत्येभिः कारणैः सौम्य सुग्रीवस्य दुरात्मनः ।
अहं वानरराजस्य परिभूतः परंतप ॥ ७ ॥
स कालं परिसंख्याय सीतायाः परिमार्गणे ।
कृतार्थः समयं कृत्वा दुर्मतिर्नाभिपद्यते ॥ ८ ॥
स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुङ्गवं ।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनं मम ॥ ९ ॥



Digitized by Google

समयस्ते कृतो यो ऽसौ तस्य कालविलम्बनं ।
अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणां ॥ १० ॥
आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ।
शुभं वा यदिवा पापं येन वाक्यमुदीरितं ॥ ११ ॥
सत्यमित्यभिजानाति स लोके पुरुषोत्तमः ।
सत्कृताश्च कृतार्थाश्च मित्राणां न भजन्ति ये ॥ १२ ॥
तान् मृतानपि क्रव्यादाः कृतघ्नान् नोपभुञ्जते ।
प्रतिकारं हि मे राजा प्रतिज्ञाय हरीश्वरः ॥ १३ ॥
व्यतीतांश्चतुरो मासान् विहरन् नावबुध्यते ।
तत् कालपरिणामश्च सहायश्चानवस्थितः ॥ १४ ॥
तस्याश्च गतिरज्ञाता कथं शक्यं न शोचितुं ।
यदर्थमयमारम्भः कृतः परपुरंजय ॥ १५ ॥
तमसौ नाभिजानाति कृतार्थः प्लवगेश्वरः ।
सामात्यः परिसंक्रीडन् कामस्य वशमागतः ॥ १६ ॥
शोकदीनेषु चास्मासु रमते निरपत्रपः ।
तदेवं विहिते काले हितं यत् पुरुषर्षभ ॥ १७ ॥
तच्चिन्तयाशु वैदेह्या न कालो ऽतिक्रमेद्यथा ।
नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ॥ १८ ॥
द्रष्टुमिच्छसि चापस्य रूपं विद्युद्गणोपमं ।
घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे ॥ १९ ॥

Digitized by Google

निष्पेषमिव वज्रस्य श्रोतुमिच्छसि वानर ।
न हि संकुचितः पन्था येन बाली हतो गतः ॥२०॥
समये तिष्ठ सुग्रीव मा बालिपथमन्वगाः ।
एक एव मया बाली बाणेन निहतः पुरा ।
त्वां तु सत्यादपक्रान्तं हनिष्यामि सबान्धवं ॥२१॥

कुरुष्व सत्यं मयि वानरेन्द्र तत्
प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतं ।
न बालिनं प्रेतगतं यमक्षये
हतोऽद्य पश्येस्त्वमजिह्मगैः शरैः ॥२२॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे शरद्विलापो नाम
एकोनत्रिंशः सर्गः—सुग्रीवाक्रोशो
नाम त्रिंशःसर्गः ॥

Digitized by Google

## XXXI.

स लक्ष्मणस्तद्वचनं निशम्य
रामस्य शोकाभिपरिप्लुतस्य ।
उवाच वाक्यं मतिमानमर्षी
रामार्थसिद्ध्यर्थमदीनसत्त्वः ॥ १ ॥

न वानरः स्थास्यति साधुवृत्ते
न मंस्यते कर्मफलानुबन्धं ।
न भोक्ष्यते वानरराज्यलक्ष्मीं
तथा हि नातिक्रमतेऽस्य बुद्धिः ॥ २ ॥

मतिक्षयाद्ग्राम्यसुखेषु सक्तः
कामप्रवृत्तोऽप्रतिकारबुद्धिः ।
हतोऽग्रजं पश्यतु बालिनं स
न राज्यमेवंविगुणस्य देयं ॥ ३ ॥

न धारये कोपमुदीर्णवेगं
निहन्मि सुग्रीवमयुक्तमद्य ।
हतप्रवीरोऽद्य हरीन्द्रसूनुर्
नरेन्द्रकन्याविचयं करोतु ॥ ४ ॥

तमात्तबाणासनमुत्पतन्तं
निवेदितार्थं रणचण्डवेगं ।

Digitized by Google

उवाच रामः परवीरहन्ता
स्ववेक्षितं सानुनयं च वाक्यं ॥ ५ ॥
न खल्वस्मद्विधास्तात पापमेवं प्रकुर्वते ।
पापाभावेन यो हन्ति स वीरः पुरुषोत्तमः ॥ ६ ॥
नेदमद्य त्वया कार्यं साधुवृत्तेन लक्ष्मण ।
तां वृत्तिमनुवर्तस्व पूर्ववत् तं च सौहृदं ॥ ७ ॥
सामोपहितया वाचा रूक्षाणि परिवर्जयन् ।
वक्तुमर्हसि सुग्रीवमतीतं कालसंग्रहे ॥ ८ ॥
सोऽग्रजेनानुशिष्टार्थो यथावत् पुरुषर्षभः ।
आजगाम पुरीं श्रीमाँल्लक्ष्मणः शुभलक्षणः ॥ ९ ॥
अतिवेगगतिः प्राज्ञो भ्रातुः प्रियहिते रतः ।
लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १० ॥
शक्रबाणासनप्रख्यं धनुर्दण्डमिवान्तकः ।
प्रगृह्य स महावीर्यो बभौ रामानुजस्तदा ॥ ११ ॥
रामक्रोधसमुत्थेन ज्वलितेनाग्निनावृतः ।
प्रभञ्जनो यथाधृष्टः स ययौ लक्ष्मणस्तथा ॥ १२ ॥
सालांस्तालाश्वकर्णांश्च तरसा पातयन् बहून् ।
दूरादेकपदीं त्यक्त्वा ययौ कार्यवशाद्द्रुतं ॥ १३ ॥
तामपश्यत् समाकीर्णां कपिराजपुरीं ततः ।
कपिभिः शैलसंकाशैः समाहितैर्महाबलैः ॥ १४ ॥

Digitized by Google

शैलशृङ्गाणि शतशः प्रवृद्धांश्च महाद्रुमान् ।
जगृहुः कुञ्जरप्रख्या वानरास्तद्भयात् तदा ॥ १५ ॥
तान् गृहीतप्रहरणान् सर्वान् दृष्ट्वा स लक्ष्मणः ।
भूय एवाभवत् क्रुद्धो हविषाक्त इवानलः ॥ १६ ॥
तं ते भयसमाविष्टाः क्रुद्धं दृष्ट्वा प्लवङ्गमाः ।
कालमृत्युयुगान्ताभं शतशो विद्रुतास्ततः ॥ १७ ॥
ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ।
ते शशंसुरमात्येभ्यो लक्ष्मणं क्रुद्धमागतं ॥ १८ ॥
तारया सह सुग्रीवो रममाणः सुखस्तदा ।
न तेषां कपिवीराणां शुश्राव क्रोशतां स्वनं ॥ १९ ॥
ततः सचिवसंदिष्टा हरयो लोमहर्षणाः ।
गिरिकुञ्जरमेघाभा नगरान्निर्ययुस्तदा ॥ २० ॥
नखदंष्ट्रायुधा वीराः सर्वे विकृतदर्शनाः ।
दशनागबलाः केचित् केचिद्दशगुणोत्तराः ॥ २१ ॥
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ।
सन्ति चौघबलाः केचित् केचित् पवनरंहसः ॥ २२ ॥
अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ।
विप्रकीर्णमिवाकाशं संछन्नमिव तद्वनं ॥ २४ ॥
तेन वानरसैन्येन सुग्रीवस्य महात्मनः ।
ततो द्वाराणि बलवानङ्गदः सचिवाज्ञया ॥ २४ ॥

Digitized by Google

पर्यधावत दुर्धर्षो महावेगेन सर्वशः ।
स कृत्स्नां कपिभिर्व्याप्तां द्रुमहस्तैः समन्ततः ॥ २५ ॥
अपश्यल्लक्ष्मणस्तत्र किष्किन्धां बालिपालितां ।
ततस्ते वानराः सर्वे प्राकारपरिखान्तरात् ॥ २६ ॥
निर्ययुश्च पुरोद्यानाद्ये तत्र पुरतः स्थिताः ।
ते महाभ्रनिभाकारा वज्राशनिसमस्वनाः ॥ २७ ॥
सिंहनादं तदा चक्रुर्लक्ष्मणस्य समीपतः ।
तेन शब्देन महता तारया च विबोधितः ॥ २८ ॥
सुग्रीवः सचिवैः सार्धं मन्त्रार्थं समुपाविशत् ।
विनतश्च सुषेणश्च नीलोऽथ नल एव च ॥ २९ ॥
अङ्गदो वायुपुत्रश्च हनूमांश्चैव बुद्धिमान् ।
एते सर्वे महात्मानः सुग्रीवं वानरोत्तमं ॥ ३० ॥
पर्युपासत आसीनं शक्रं सुरगणा इव ।
बलविक्रमयुक्ताश्च मन्त्रे च परिनिष्ठिताः ॥ ३१ ॥
उत्साहं च प्रमाणं च मन्त्रिणामर्थनिश्चये ।
वाक्यमुच्चावचं प्राप्तं लक्ष्मणं प्रति शुश्रुवान् ॥ ३२ ॥
अथ प्रसाद्य सुग्रीवं वचनं मारुतात्मजः ।
उवाच मन्त्रिप्रवरो यथा शक्रं बृहस्पतिः ॥ ३३ ॥
सत्यसंधौ महोत्साहौ भ्रातरौ रामलक्ष्मणौ ।
उपकारे च वर्तेते तव राज्यप्रदायकौ ॥ ३४ ॥

Digitized by Google

तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः ।
तस्य भीता वेपमाना नादं मुञ्चन्ति वानराः ॥ ३५ ॥
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः ।
व्यवसायरथं प्राप्तस्तस्य रामस्य शासनात् ॥ ३६ ॥
हनूमतो वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ।
तथेति कृत्वा च पितुरेतदर्थं न्यवेदयत् ॥ ३७ ॥

स दृश्यतां वा प्रतिषिध्यतां वा
यदत्र क्षेमं कुरु मन्यसे तत् ।
क्रुद्धः किलागच्छति लक्ष्मणोऽयं
रोषस्य हेतुं न हि विद्म सर्वे ॥ ३८ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे लक्ष्मणप्रयाणं
नाम एकत्रिंशः सर्गः ॥

Digitized by Google

## XXXII.

एवमुक्तस्तु सुग्रीवो मन्त्रिभिर्हनुमादिभिः ।
मुहूर्तं चिन्तयामास दीनः किञ्चिदवाङ्मुखः ॥ १ ॥
सचिवानब्रवीत् सर्वान् स निश्चित्य बलाबलं ।
वचनं वाक्यकुशलो मन्त्रेषु परिनिष्ठितान् ॥ २ ॥
न मे दुर्व्याहृतं किञ्चिन्नापि मे दुरनुष्ठितं ।
लक्ष्मणो राघवभ्राता यस्मात् क्रुद्ध इहागतः ॥ ३ ॥
असहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः ।
नूनं दोषानसदृशान् श्रावितो लक्ष्मणाग्रजः ॥ ४ ॥
तत्र तावद्यथाबुद्धि सर्वैरेवाभिधीयतां ।
भवद्भिर्निश्चयस्तत्त्वविज्ञानकुशलैर्मम ॥ ५ ॥
न खल्वस्ति मम त्रासो राघवाद्वापि लक्ष्मणात् ।
मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमं ॥ ६ ॥
सुकरं सर्वथा मैत्रं दुष्करं प्रतिपालनं ।
अनित्यत्वाद्धि चित्तानां प्रीतिरल्पेन भिद्यते ॥ ७ ॥
अतोऽतिमात्रं त्रस्तोऽहं राघवेण महात्मना ।
यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥ ८ ॥
सुग्रीवेणैवमुक्तस्तु हनूमान् हरियूथपः ।
उवाच वदतां श्रेष्ठो मध्ये वानरमन्त्रिणां ॥ ९ ॥



Digitized by Google

सर्वथा नैतदाश्चर्यं यत् त्वं हरिगणेश्वर ।
न विस्मरिष्यसि स्निग्धमुपकारं महत् कृतं ॥ १० ॥
राघवेण हि शूरेण नामयित्वा महद्धनुः ।
त्वत्प्रियार्थं हतो बाली शक्रतुल्यपराक्रमः ॥ ११ ॥
सर्वथाप्रणयक्रुद्धो राघवो नात्र संशयः ।
भ्रातरं यत् प्रहितवान् लक्ष्मणं लक्ष्मिवर्धनं ॥ १२ ॥
त्वं प्रमत्तो न जानासि कालं कालविदां वर ।
फुल्लं सप्तच्छदवनं प्रवृत्ताः शरदर्चिषः ॥ १३ ॥
निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका ।
प्रसन्ना हि दिशः सर्वाः सरितश्च सरांसि च ॥ १४ ॥
प्राप्तमुद्योगकालं च नावैषि हरिपुङ्गव ।
त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥
आर्तस्य हृतदारस्य परुषं वानरोत्तम ।
वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६ ॥
कृतोपकारस्याहं वै नान्यं पश्यामि ते क्षमं ।
अन्तरेणाञ्जलिं बद्धा लक्ष्मणस्य प्रसादनं ॥ १७ ॥
विमुक्तैर्मन्त्रिभिर्वाच्यमिति विज्ञाय पार्थिव ।
अत एव भयं त्यक्त्वा प्रब्रवीमि हितं वचः ॥ १८ ॥
अपि क्रुद्धः समर्थो हि चापमुद्यम्य राघवः ।
वशे स्थापयितुं वीर त्रैलोक्यं सचराचरं ॥ १९ ॥

Digitized by Google

न स क्षमः कोपयितुं प्रसाद्यश्च पुनः पुनः ।
पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २० ॥
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः ।
राजंस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवः ॥ २१ ॥
दहेद्धि लोकान् रुषितः स राघवस्
तव प्रतिज्ञां चलितां निशम्य ।
तदन्यथा नार्हसि कर्तुमात्मना
त्वमग्निशक्राशनितुल्यविक्रमः ॥ २२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे हनूमद्वाक्यं
नाम द्वात्रिंशः सर्गः ॥

Digitized by Google

## XXXIII.

ततो रोषपरीतात्मा लक्ष्मणः परवीरहा ।
प्रविवेश गुहां घोरां किष्किन्धां रामशासनात् ॥ १ ॥
द्वारस्था हरयस्तत्र महाकाया महाबलाः ।
ते सर्वे लक्ष्मणं दृष्ट्वा त्रस्ताः प्राञ्जलयः स्थिताः ॥ २ ॥
क्रुद्धं विनिश्वसन्तं तं प्रदीप्तमिव तेजसा ।
बभूवुर्हरयो भीता न चैनं प्रत्यवारयन् ॥ ३ ॥
स तु रोषपरीतात्मा लक्ष्मणः परवीरहा ।
जातरूपमयीं दिव्यां ददर्श महतीं गुहां ॥ ४ ॥
रम्यां यत्नसमाकीर्णामुद्यानवनशोभितां ।
शुभां रत्नमयीं दिव्यां चित्रपुष्पितकाननां ॥ ५ ॥
हर्म्यप्रासादसंबाधां नानावन्योपशोभितां ।
कीर्णां काममयैर्वृक्षैर्निर्मितां विश्वकर्मणा ॥ ६ ॥
देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः ।
दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ७ ॥
चन्दनागुरुपद्मानां गन्धैः सुरभिगन्धिभिः ।
मैरेयाणां मधूनां च समावृतमहापथां ॥ ८ ॥
कैलासशिखराभाश्च बहुरूपाः समन्ततः ।
दृष्टास्तेन तु मार्गेषु शुक्लाः प्रासादपंक्तयः ॥ ९ ॥

Digitized by Google

देवतानां निकेतांश्च राजमार्गे ददर्श सः ।
सुधावदातान् सुकृतान् विमानान्येव सर्वतः ॥ १० ॥
सरांसि च सपद्मानि पुष्पितानि वनानि च ।
तत्रापश्यद्गिरिनदीं विमलां भरतानुजः ॥ ११ ॥
अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ।
गवयस्य गवाक्षस्य शरभस्य च धीमतः ॥ १२ ॥
विद्युन्मालस्य संपातेः सूर्याक्षस्य हनूमतः ।
वीरबाहोः सुबाहोश्च नीलस्य पनसस्य च ॥ १३ ॥
कुमुदस्याथ धूम्रस्य विनतस्य च केशरेः ।
कपेः शतवलेश्चैव कुम्भस्य च रभस्य च ॥ १४ ॥
एतेषां कपिमुख्यानां राजमार्गे महात्मनां ।
ददर्श गृहमुख्यानि महासाराणि सर्वतः ॥ १५ ॥
पाण्डराभ्रप्रकाशानि दिव्यमाल्ययुतानि च ।
प्रभूतधनरत्नानि स्त्रीरत्नैः शोभितानि च ॥ १६ ॥
पाण्डरेणेव शैलेन परिक्षिप्तं दुरासदं ।
वानरेन्द्रगृहं रम्यं महेन्द्रभवनोपमं ॥ १७ ॥
शुक्लैः प्रासादशिखरैः कैलासशिखरैरिव ।
सर्वर्तुकफलैश्चैव पादपैरुपशोभितं ॥ १८ ॥
महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसंनिभैः ।
दिव्यैर्नन्दनजैर्वृक्षैः सर्वतश्चोपशोभितं ॥ १९ ॥

Digitized by Google

हरिभिश्चावृतं भीमैः सर्वतः शस्त्रपाणिभिः ।
दिव्यपुष्पसमाकीर्णं तप्तकाञ्चनतोरणं ॥ २० ॥
सुग्रीवस्य गृहं रम्यं नानारत्नविभूषितं ।
दृष्टं सुविपुलं तत्र ददर्श सुधया सितं ॥ २१ ॥
तमुपायान्तमव्यग्रं मत्वा सुग्रीवशासनात् ।
प्रत्याजग्मुस्तु सचिवाः कृताञ्जलिपुटास्तदा ॥ २२ ॥
तानाभाष्य यथान्यायं हनुमत्प्रमुखान् कपीन् ।
धर्मबुद्ध्या न दौर्बल्याद्विदितः प्रविवेश ह ॥ २३ ॥
स सप्तकक्ष्यं धर्मात्मा यानासनसमावृतं ।
प्रविश्य सुमहद्गुप्तं ददर्शान्तःपुरं महत् ॥ २४ ॥
हैमराजतसंकीर्णैर्बहुभिश्च वरासनैः ।
महार्हास्तरणोपेतैस्तत्र तत्रोपशोभितं ॥ २५ ॥
स तत्र मधुरं गीतं शुश्राव सुमनोहरं ।
एकतामिव संयातं तन्त्रीवल्लकिवेणुभिः ॥ २६ ॥
बह्वीश्च विविधाकारा रूपयौवनगर्विताः ।
स्त्रियः सुग्रीवभवने ददर्श भरतानुजः ॥ २७ ॥
रूपदाक्षिण्यसंपन्नाश्चित्रमाल्यकृतस्रजः ।
नानाविरागवसना भूषणोत्तमभूषिताः ॥ २८ ॥
नातृप्तान् नामदव्यग्रान् नाल्पदत्तपरिच्छदान् ।
सुग्रीवानुचरांस्तत्र लक्षयामास लक्ष्मणः ॥ २९ ॥

Digitized by Google

स सुग्रीवप्रमोदं च पूर्वज्ञे चार्तिमेव च ।
बुद्धा कोपवशो वीरः पुनरेव जगाम ह ॥ ३० ॥
निःश्वस्य दीर्घमुष्णं च कोपाद्रक्तान्तलोचनः ।
बभूव नरशार्दूलो विधूम इव पावकः ॥ ३१ ॥
तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितं ।
सहसैवाङ्गदो दृष्ट्वा श्रान्तो क्षीणमुखोऽभवत् ॥ ३२ ॥
अन्ये च हरयो द्वाःस्था गृहकक्ष्यगतास्तथा ।
कृताञ्जलिपुटा नीचैर्लक्ष्मणाय प्रणेमिरे ॥ ३३ ॥
ततः सुग्रीवमासीनं काञ्चने परमासने ।
महार्हास्तरणोपेते ददर्शादित्यसंनिभे ॥ ३४ ॥
दिव्याभरणचित्राङ्गं दिव्यमाल्यानुलेपनं ।
दिव्याम्बरधरं साक्षान्महेन्द्रमिव दुर्जयं ॥ ३५ ॥
स्त्रीभिः परमरूपाभिर्वृतं शतसहस्रशः ।
अप्सरोभिः परिवृतं कुवेरमिव मन्दरे ॥ ३६ ॥
वामपार्श्वे स्थितां चास्य भार्यां तारामपश्यत ।
रुमां च दक्षिणे पार्श्वे सुग्रीवस्य महात्मनः ॥ ३७ ॥
शुक्ले च बालव्यजने तप्तकाञ्चनभूषिते ।
दोधूयमाने नारीभ्यामभितस्तं ददर्श सः ॥ ३८ ॥
तं दृष्ट्वा तस्य ललितमौदासीन्यं च लक्ष्मणः ।
परमातुरं च रामं द्विगुणं क्रोधमाहरत् ॥ ३८ ॥

Digitized by Google

तं क्रोधरक्तनयनं कुर्वन्तं भ्रूकुटीमुखं ।
दष्टाधरौष्ठरुचकं प्रेक्षमाणं समन्ततः ॥ ४० ॥
दीर्घमुष्णं च निश्वासं विमुञ्चन्तं मुहुर्मुहुः ।
कुपितं सप्तशिरसं ज्वालारुद्धमिवोरगं ॥ ४१ ॥
तं दृष्ट्वा क्रोधरक्ताक्षं प्रगृह्णीतशरासनं ।
सुग्रीवः सहसोत्तस्थौ कृताञ्जलिपुटस्तदा ॥ ४२ ॥
तस्य तारा रुमा चैव द्वे भार्ये पार्श्वतः स्थिते ।
कृताञ्जलिपुटे चास्तां लक्ष्मणाभिमुखे तथा ॥ ४३ ॥
पत्न्योर्मध्यगतस्तत्र सुग्रीवः स व्यराजत ।
विशाखयोर्मध्यगतः संपूर्ण इव चन्द्रमाः ॥ ४४ ॥
प्रत्युद्गम्य च सुग्रीवो बहुमानेन लक्ष्मणं ।
गृहं प्रवेशयामास सामात्यः सपुरोहितः ॥ ४५ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे लक्ष्मणप्रवेशो
नाम त्रयस्त्रिंशः सर्गः ॥


Digitized by Google

# NOTA

## AL TESTO DEL LIBRO SECONDO.

---

Dopo lo sloco 15 del capitolo XXXVIII, libro II : इति राज्ञा समादिष्टो, ecc. i manoscritti J e G hanno tre stanze, le quali non si trovano nei manoscritti W e M. Attenendomi ai due ultimi codici io lasciai fuori le tre stanze sopradette. Ma nel riandare e meditare, come ho uso, il testo dei volumi già pubblicati per ritoccarlo e corrergerlo ove abbisognasse, ho veduto, che se l'ultima delle tre stanze debb' essere omessa perchè inopportuna e soverchia, le due prime sarebbero per contrario bene appropriate al contesto, e contribuirebbero assai alla pienezza ed all' eleganza del pensiero; onde ho giudicato doverle aggiungere. Le stanze sono quelle, che seguono quì sotto; il loro luogo è dopo lo sloco 15 del capitolo XXXVIII, libro II.

अथो महार्हाभरणानि देव्यै ददौ स्नुषायै व्यपनीय चीरं ।
चीरं न युक्तं परिधानमस्या निवारयामीत्यवदन्नमिष्टः ॥
एकस्य रामस्य वने निवासस्त्वया वृतः कैकयराजपुत्रि ।
विभूषितेयं प्रतिकर्मणा तु वसत्वरण्ये सह राघवेण ॥

---



Digitized by Google

# ANNOTAZIONI

## AL TESTO DEL LIBRO TERZO.

---

Capitolo IV, sloco 25, verso 2. — न्यासो मम पितुर्दत्तं, ecc. Il पितुर् debb' essere quì preso nella significazione d'*antenato,* e non di *G'anaca* padre di Sitâ; altrimenti ne nascerebbe contraddizione : perchè nel libro primo, capitolo LXVIII, sloco 8, vien detto da G'anaca, che l'arco, di cui parla quì Sitâ, fu deposto nelle mani di Devarata, uno de' suoi antenati. Il manoscritto G ha questo verso così :

दत्तं धनुर्वरं प्रीत्या तुणीरौ चाक्षयौ तथा ।

Capitolo X, sloco 2, verso 1. — मरीचिपाः, il codice G ha मरीचयः, il codice M मरीचियाः. Il manoscritto W commenta il मरीचिपाः così : स्वयं पतितैः फलादिकैर्जीवन्तः रश्मिपाना वा ।; e commenta il वैखानसा e il बालिखिल्या dello stesso verso in questo modo : वैखानसा अकृष्टपच्यवृत्तयः बालिखिल्या नवे अन्ने प्राप्ते पूर्वसंचितान् त्यागिनः ।

Capitolo XIII, sloco 26, verso 2. — Quì Sitâ fa allusione a Dasaratha, come s' egli fosse ancor vivo. Ma la morte dello suocero era pur nota a Sitâ. Tutti i codici consentono nella stessa lezione. Forse v' ha quì una delicatezza recondita del poeta.

Capitolo XXXIII, sloco 8. — L'esercito, di cui quì si parla, non è già un esercito nuovo; ma sono le reliquie dei quattor-

Digitized by Google

dici mila. In questo senso l'intende il commentatore Lokanatha, il quale chiosa l'हतशेषं del verso 2 di questo sloco così : हतशेषं चतुर्दशसहस्राणां मध्ये हतावशिष्टं ।. Ma perocchè si dice al capitolo XXXII, sloco 34, che i quattordici mila Racsasi erano stati tutti disfatti हतानि da Rama, eccetto Kharo e Trisira, gli editori di Serampur fanno a questo sloco 8 del capitolo XXXIII, dove è detto che l'esercito सैन्यं ritornò e si rannodò a Trisira, la seguente annotazione : « This ill agrees with their being « all killed a little before; the Pundits however can neither « remove the difficulty, nor alter the text. » Ma la difficoltà, che parve insuperabile ai Panditi, svanisce, se si consideri che l'हत vuol dire non solamente ucciso, ma percosso, rotto, disfatto, messo in fuga, ecc. Onde i quattordici mila, che erano stati prima tutti हतानि da Rama, non furono perciò tutti uccisi, ma solamente disfatti, messi in fuga; cosicchè poterono benissimo rannodarsi e tornare di nuovo alla battaglia.

Capitolo XXXV, sloco 45, verso 1. — अवार्यवेगा, ecc. Questo verso è irregolare, ha una sillaba di troppo nel primo pado. Tutti i manoscritti concordano nella medesima lezione.

Capitolo XLIX, sloco 41, verso 2. — यथा शक्रस्य, ecc. Se il शक्रस्य debbe quì prendersi nel suo significato proprio d'*Indra*, il pensiero genuino di questo luogo non è facile a cogliersi. Ma forse che il vocabolo शक्र, il quale in origine non significava altro che *potente*, come ve ne hanno esempj nei Vedi, e che divenne più tardi uno dei nomi d'Indra, può essere stato nella lingua antica adoperato anche a significare *re*, *signore*, ecc. In tale caso il senso di questo luogo diventerebbe chiaro e logico; e si troverebbe quì una nozione primitiva

Digitized by Google

## XL.

आगतांश्च निविष्टांश्च पृथिव्यां सर्ववानरान् ।
दृष्ट्वा प्रहृष्टः सुग्रीवो रामं वचनमब्रवीत् ॥ १ ॥
राघवेन्द्र महात्मानो ये मद्विषयवासिनः ।
त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः ॥ २ ॥
आगता वानराः शूरा देवदानवसंनिभाः ।
पृथिव्यन्तचरा राम नानारण्यनिवासिनः ॥ ३ ॥
कोटिशः समनुप्राप्ता वानरास्तव किङ्कराः ।
ख्यातकर्मापदेशाश्च बलवन्तो जितश्रमाः ॥ ४ ॥
पराक्रमेषु विख्याता व्यवसाये तथोत्तमाः ।
निदेशवर्तिनः सर्वे सर्वे गुरुहिते रताः ॥ ५ ॥
अभिप्रेतमनुष्ठातुं शक्तास्तव परंतप ।
यन्मन्यसे महाभाग प्राप्तकालं तदुच्यतां ॥ ६ ॥
मां सर्वबलसंयुक्तमाज्ञापयितुमर्हसि ।
काममेवमिदं कार्यं विदितं वीर तत्वतः ॥ ७ ॥
तथापि च यथाचारमर्थमाज्ञप्तुमर्हसि ।
तथा ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ॥ ८ ॥
बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ।
ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ॥ ९ ॥

Digitized by Google

स च देशो महाप्राज्ञ यस्मिन् वसति रावणः ।
अवगम्य तु वैदेहीं निलयं रावणस्य च ॥ १० ॥
प्राप्तकालं करिष्यामि सामर्थ्यं भवता सह ।
अत्र नाहं प्रभुः कार्ये वानरेन्द्र सलक्ष्मणः ॥ ११ ॥
त्वमस्य हेतुः कार्यस्य त्वयि चैतत् समाहितं ।
त्वमेवाज्ञापय विभो मम कार्यविनिश्चयं ॥ १२ ॥
सुहृद्विनीतो विक्रान्तः प्राज्ञः कार्यविशेषवित् ।
युक्तो यस्य भवानर्थे स कृतार्थो न संशयः ॥ १३ ॥
एवमुक्तस्तु सुग्रीवो रामेण स्नेहसंयुतं ।
विनतं नाम यूथेशं समाहूय वचोऽब्रवीत् ॥ १४ ॥
शैलाभं मेघनिर्घोषं सुग्रीवः प्लवगेश्वरः ।
विनयावनतं वीरं वानरं भीमविक्रमं ॥ १५ ॥
सोमसूर्यात्मजैः सार्द्धं वानरैर्वानरोत्तमैः ।
देशकालविधानज्ञैर्नयापनयकोविदैः ॥ १६ ॥
वृतः कोटीसहस्रेण वानराणां तरस्विनां ।
मृगयस्व दिशं पूर्वां सशैलवनकाननां ॥ १७ ॥
तत्र सीतां च वैदेहीं निलयं रावणस्य च ।
मार्गध्वं वनदुर्गेषु गुहासु च वनेषु च ॥ १८ ॥
यमुनामापगां दिव्यां यामुनं च महागिरिं ।
नदीं भागीरथीं चैव सरयूं कौशिकीमपि ॥ १९ ॥

Digitized by Google

मेकलप्रभवं शोणं नदं मणिनिभोदकं ।
रुचिरां कुटिलां चैव चन्दनीं चापगां तथा ॥ २० ॥
वेदवैनासिकां चैव रम्यां माहिषिकामपि ।
ततः शकपुलिन्दांश्च कलिङ्गांश्चैव मार्गत ॥ २१ ॥
अन्विष्य दण्डकारण्यं सशैलवनकाननं ।
तत्र गोदावरीं पुण्यां प्रसन्नसलिलां नदीं ॥ २२ ॥
तत्र पर्वतजालेषु कान्तारविषयेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २३ ॥
नदीं कालमसीं चैव तमसां च महानदीं ।
गोमतीं गोकुलाकीर्णां तथा पूर्वां सरस्वतीं ॥ २४ ॥
सुम्भान् मान्यान् विदेहांश्च मलयान् काशिकोशलान् ।
मागधान् दण्डकूलांश्च वङ्गानङ्गांस्तथैव च ॥ २५ ॥ ॥
महानादं च लौहित्यं शैलकाननशोभितं ।
पत्तनं कोषकाराणां तिमिरं कनकाकरं ॥ २६ ॥
सर्वमेतद्विचेतव्यं सीतार्थे रावणस्य च ।
वानरैः सूर्यसंकाशैर्बुद्धिशौर्यसमन्वितैः ॥ २७ ॥
समुद्रमवगाढानि पत्तनानि गिरीनपि ।
मन्दरस्य च ये कोटीः किराताः केचिदाश्रिताः ॥ २८ ॥
कर्णप्रावरणाश्चैव किरातांश्चोग्रकर्णिकाः ।
घोराः कालमुखाश्चैव पारकाः कर्बुकास्तथा ॥ २९ ॥

Digitized by Google

अन्नया बलवन्तश्च पुरुषाः पुरुषादकाः ।
किराताः स्थूलचूडाश्च हेमाभाः प्रियदर्शनाः ॥ ३० ॥
आममत्स्याशनाश्चैव किराता द्वीपवासिनः ।
अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ॥ ३१ ॥
एतेषामालयाः सर्वे विचेया वनगोचराः ।
हरिभिर्ये च गम्यन्ते प्लवेन प्लवनेन च ॥ ३२ ॥
रत्नवन्तं जलद्वीपं फलभोज्योपशोभितं ।
सुवर्णरूप्यकं चैव गणद्वीपं तथैव च ॥ ३३ ॥
जम्बुद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ।
शृङ्गैर्नभःस्पृशैर्दिव्यैर्देवदानवसत्कृतैः ॥ ३४ ॥
तस्य रम्येषु शृङ्गेषु गुहासूपवनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३५ ॥
ततः कालोदकं नाम समुद्रं भीमदर्शनं ।
आक्रीडं दानवेन्द्राणां गता द्रक्ष्यथ वानराः ॥ ३६ ॥
तत्र रक्षोगणा घोराश्छायां गृह्णन्त्यलक्षिताः ।
ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥ ३७ ॥
तं कालमेघप्रतिमं महोरगनिषेवितं ।
अभिगम्य महानादं तथा नदनदीपतिं ॥ ३८ ॥
ततो रक्तजलं घोरं लोहितं नाम सागरं ।
गत्वा द्रक्ष्यथ तां चैव वृहतीं कूटशाल्मलीं ॥ ३९ ॥

Digitized by Google

गृहं च वैनतेयस्य नानारत्नविभूषितं ।
शुभ्रं कैलाससंकाशं निर्मितं विश्वकर्मणा ।। ४० ।।
तेषु रम्येषु देशेषु विचेया जनकात्मजा ।
ततः शृङ्गसहस्रेण भित्वा सलिलमुत्थितं ।। ४१ ।।
द्रक्ष्यथाम्बुरुहं दिव्यं गोशृङ्गं नाम पर्वतं ।
तस्य शृङ्गसहस्रेषु मन्देहा नाम राक्षसाः ।। ४२ ।।
अरत्निमात्रा लक्ष्यन्ते नानारूपा भयावहाः ।
ते पतन्ति जले घोराः सूर्यस्योदयनं प्रति ।। ४३ ।।
अभिशप्ता महेन्द्रेण निशायामुत्पतन्ति च ।
ततः पाण्डरमेघाभं क्षीरोदं नाम सागरं ।। ४४ ।।
गता द्रक्ष्यथ दुर्धर्षं मुक्तामणिवरालयं ।
तत्र मध्येऽंशुमान् नाम स्थितो रजतपर्वतः ।। ४५ ।।
दिव्यगन्धैः सुकुसुमै राजतैः पादपैर्वृतः ।
तत्र सा राजतैः पद्मैर्नलिनी हेमकेशरैः ।। ४६ ।।
नाम्ना सुदर्शना नाम राजहंससमाकुला ।
किन्नरा वानरा यक्षा गन्धर्वाप्सरसस्तथा ।। ४७ ।।
हृष्टास्तामभिगच्छन्ति नलिनीं चारुदर्शिनीं ।
क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः ।। ४८ ।।
घृतोदमुदधिश्रेष्ठं सर्वभूतमनोहरं ।
यत्र तत्क्रोधजं तेजः कृत्वा हयमुखं हरिः ।। ४९ ।।



Digitized by Google

हरिद्भूतं जलं नित्यमपिवद्बडवामुखः ।
तत्र विक्रोशतां नादो भूतानां सलिलौकसां ॥ ५० ॥
श्रूयते भृशमार्त्तानां विशतां बडवामुखं ।
घृतोदस्योत्तरे कूले योजनानि चतुर्दश ॥ ५१ ॥
जातरूपशिलो नाम जातः कनकपर्वतः ।
तस्यासीनं नगस्याग्रे द्रक्ष्यथ ज्वलितं श्रिया ॥ ५२ ॥
सहस्रशिरसं देवमनन्तं पीतवाससं ।
त्रिशिराः काञ्चनस्तालस्तस्य केतुर्महात्मनः ॥ ५३ ॥
स्थापितः पर्वतस्याग्रे राजते चित्रवेदिकः ।
पूर्वस्यां दिशि निर्माणं द्रक्ष्यथ ब्रह्मनिर्मितं ॥ ५४ ॥
ततो हेममयः श्रीमानुदयो देवपर्वतः ।
तस्य कोटिर्दिवं प्राप्ता शतयोजनमायता ॥ ५५ ॥
जातरूपमयी दिव्या राजते च सवेदिका ।
सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥ ५६ ॥
जातरूपमयैः शृङ्गैः शोभते सूर्यसंनिभैः ।
तस्य पर्वतशृङ्गेषु वनेषु च गुहासु च ॥ ५७ ॥
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।
तमतिक्रम्य शैलेन्द्रं पुनर्द्रक्ष्यथ वानराः ॥ ५८ ॥
दशयोजनविस्तारमुच्छ्रितं शतयोजनं ।
नगं सौमनसं नाम जातरूपमयं दृढं ॥ ५९ ॥

Digitized by Google

तस्य पर्वतराजस्य महच्छृङ्गं मनोरमं ।
तत्र वैखानसा नाम बालिखिल्या मरीचिपाः ॥ ६० ॥
प्रादेशमात्रा दृश्यन्ते सूर्यवर्णास्तपोधनाः ।
काञ्चनस्य च शैलस्य सूर्यस्येव महात्मनः ॥ ६१ ॥
प्रमृष्टा तेजसा पूर्वा सन्ध्या रक्ता प्रकाशते ।
तत्र पूर्वं पदं कृत्वा तदा विष्णुस्त्रिविक्रमः ॥ ६२ ॥
द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ।
उत्तरेण परिक्रम्य जम्बुद्वीपं दिवाकरः ॥ ६३ ॥
दृश्यो भवति भूतानां शिखरं तमुपाश्रितः ।
ततः संदर्शनद्वीपो गोभिरस्य प्रकाशते ॥ ६४ ॥
ततस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ।
आक्षिप्य सहसा सूर्यो द्योतते स्वेन तेजसा ॥ ६५ ॥
शैलेष्वेतेषु दिव्येषु सागरेषु वनेषु च ।
ये विभक्ता मया देशा विचेया तेषु जानकी ॥ ६६ ॥
ततः परमगम्या सा पूर्वा दिक् तिमिरावृता ।
रहिता चन्द्रसूर्याभ्यामदृश्या लोमहर्षिणी ॥ ६७ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्यादं न जानामि ततः परं ॥ ६८ ॥
उदयं पर्वतं गत्वा आमासाद्विनिवर्तत ।
मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ ६९ ॥

Digitized by Google

सिद्धार्थाः संनिवर्तध्वमवगम्य तु मैथिलीं ।
एवं प्रतिसमादिष्टाः सुग्रीवेण महात्मना ॥ ७० ॥

महेन्द्रकान्तां वनशैलमण्डितां
दिशं कपीन्द्रा निपुणं विचित्य ।
नरेन्द्रपत्नीमुपलभ्य मैथिलीं
ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे पूर्वदिक्प्रेषणं
नाम चत्वारिंशः सर्गः ॥

Digitized by Google

## XLI.

अथ प्रस्थाप्य स हरीन् दिशं पूर्वां हरीश्वरः ।
अपरान् प्रेषयामास वानरान् दक्षिणां दिशं ॥ १ ॥
अब्रवीद् गिरिसंकाशं हनूमन्तमुपस्थितं ।
पितामहसुतं चैव जाम्बवन्तं महाकपिं ॥ २ ॥
नीलमग्निसुतं चैव नलं चन्दनमेव च ।
शरार्चिषं सुहोत्रं च शरगुल्मं तथैव च ॥ ३ ॥
गयं गवाक्षं गवयं कुमुदमृषभं तथा ।
मैन्दं च द्विविदं चैव शरभं गन्धमादनं ॥ ४ ॥
दरीमुखं भीममुखं तारं च वनगोचरं ।
अङ्गदप्रमुखानेतान् हरीन् कपिगणेश्वरः ॥ ५ ॥
वेगविक्रमसंपन्नान् संदिदेश विशेषतः ।
तेषां दोषं गुणं चैव महद्बलमसङ्गतं ॥ ६ ॥
विमृश्य हरिवीराणामादिशद्दक्षिणां दिशं ।
वृतः शतसहस्रेण तारो यो हरिसत्तमः ॥ ७ ॥
एतैः सह महाभागैर्वानरैः कामरूपिभिः ।
अभियाति महाभागां विशालां दक्षिणां दिशं ॥ ८ ॥
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ।
सुग्रीवः कपिमुख्यानामादिदेश च तान् हरीन् ॥ ९ ॥

Digitized by Google

सहस्रशिखरं विन्ध्यं नानाद्रुमलतावृतं ।
नर्मदां च नदीं दुर्गां विचिन्वन्तु वनौकसः ॥ १० ॥
पर्वतप्रभवां दिव्यां तीक्ष्णस्रोतस्तरङ्गिणीं ।
नानापक्षिरुतां रम्यां पुण्यां वेत्रवतीं नदीं ॥ ११ ॥
तत्र पर्वतदेशेषु कुञ्जेषु विषमेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १२ ॥
तां च दिव्यां गिरिनदीं कृष्णवर्णां महानदीं ।
देविकां बाहुदां रम्यां पुण्यां बाहुमतीमपि ॥ १३ ॥
मेकलानुत्कलांश्चेदीन् दशार्णान् कुकुरानपि ।
अन्तर्वेदींश्च विमलान् विचिन्वन्तु वनौकसः ॥ १४ ॥
ततो भोजांश्च पाण्ड्यांश्च विचित्य गिरिभिर्वृतान् ।
गन्तव्यो मलयः श्रीमान् पर्वतो धातुमण्डितः ॥ १५ ॥
अम्बुशीतां वेगवतीं समृद्धानि पुराणि च ।
विदर्भानृषिकांश्चैव रम्यां माहिषिकीमपि ॥ १६ ॥
तथाश्मकान् पुलिन्दांश्च कलिङ्गांश्च विशेषतः ।
अन्विष्य दण्डकारण्यं सनिर्झरनदीगुहं ॥ १७ ॥
नदीं गोदावरीं चैव प्रसन्नाम्बुरुहां शिवां ।
तथौड्रान् द्राविडान् पुण्ड्रान् चोलांश्चैव सकेरलान् ॥ १८ ॥
अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः ।
सुचित्रशिखरः श्रीमान् चित्रपुष्पितकाननः ॥ १९ ॥

Digitized by Google

सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ।
ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवां ॥ २० ॥
गता द्रक्ष्यथ कावेरीं वृतामप्सरसां गणैः ।
तत्रासीनं नगस्याग्रे मलयस्य महौजसः ॥ २१ ॥
द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमं ।
ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ॥ २२ ॥
तां महाग्राहजुष्टोदां तरिष्यथ महानदीं ।
या चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी ॥ २३ ॥
कान्तेव कृतसङ्केता समुद्रमभिधावति ।
ततो हेममयं दिव्यं तोरणं मणिभूषितं ॥ २४ ॥
कपाटगुप्तं पाण्ड्यानां गता द्रक्ष्यथ वानराः ।
तामतिक्रम्य कावेरीमावृत्य मलयं गिरिं ॥ २५ ॥
पौष्पीमिव कृतां मालां वेलां द्रक्ष्यथ वानराः ।
मर्यादां तां समुद्रस्य वेलां गत्वा यशस्विनीं ॥ २६ ॥
सचन्दनवनां रम्यां विचिन्वन्तु वनौकसः ।
तत्र केतकषण्डेषु पुन्नागगहनेषु च ॥ २७ ॥
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।
ततः समुद्रः संतार्यो ऽगाधः पुलिनमण्डितः ॥ २८ ॥
अतरङ्गः स देशो हि कश्यपेन पुरा कृतः ।
उपहारं भुवि न्यस्तं तरङ्गैराकुलीकृतं ॥ २९ ॥

Digitized by Google

दृष्ट्वा भगवता शप्तो ह्यतरङ्गो भवेति सः ।
ततः स वचनात् तस्य समुद्रः सरितां पतिः ॥ ३० ॥
अतरङ्गोऽभवत् क्षिप्रं निर्मलादर्शदर्शनः ।
ततो द्वीपः समुद्रस्य शतयोजनमायतः ॥ ३१ ॥
तमतिक्रम्य शैलेन्द्रो महेन्द्र इति विश्रुतः ।
जातरूपमयैः शृङ्गैरप्सरोगणसेवितः ॥ ३२ ॥
सिद्धचारणसंघैश्च विनिकीर्णो मनोरमः ।
यमुपैति सहस्राक्षः सदा पर्वणि पर्वणि ॥ ३३ ॥
तत्र यत्नश्च कर्तव्यो विचेया जनकात्मजा ।
पुनः समुद्रमागम्य दक्षिणं लवणालयं ॥ ३४ ॥
द्वीपस्तस्य परे पारे शतयोजनमायतः ।
अगम्यं मानुषैर्दिव्यं यमाकुर्वनगोचराः ॥ ३५ ॥
तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ।
स हि देवर्षिचरितः सिद्धचारणसेवितः ॥ ३६ ॥
यत्र देवैरबध्यस्य रावणस्य दुरात्मनः ।
राक्षसाधिपतेर्वासः श्रूयते वानरर्षभाः ॥ ३७ ॥
मध्ये चापि समुद्रस्य सिंहिका नाम राक्षसी ।
आषाढिकेति विख्याता छायाग्राही सुदारुणा ॥ ३८ ॥
तमतिक्रम्य द्वीपं तु गिरिं द्रक्ष्यथ काञ्चनं ।
उत्थितं सागरं भित्त्वा वयस्यं चन्द्रसूर्ययोः ॥ ३९ ॥

Digitized by Google

चन्द्रसूर्यांशुसंकाशं सागराम्बुसमावृतं ।
राजन्तमुच्छ्रितैः शृङ्गैर्विलिखन्तमिवाम्बरं ॥ ४० ॥
तस्यैकं काञ्चनं शृङ्गं सेवते यद्दिवाकरः ।
अपरं राजतं शृङ्गं सेवते यन्निशाकरः ॥ ४१ ॥
तं कृतघ्ना न पश्यन्ति न नृशंसा न नास्तिकाः ।
प्रणम्य शिरसा शैलं तं विचिन्वन्तु वानराः ॥ ४२ ॥
तमतिक्रम्य दुर्धर्षं गिरिमादित्यसंनिभं ।
परे पारे समुद्रस्य योजनानि चतुर्दश ॥ ४३ ॥
ततः सागरमुत्तीर्य विद्युद्वान् नाम पर्वतः ।
सर्वकामफलैर्वृक्षैर्निर्मितो विश्वकर्मणा ॥ ४४ ॥
तत्र भुक्त्वा वरान्नानि मूलानि च फलानि च ।
मधूनि पीत्वा मुख्यानि गम्यतां वानराः परं ॥ ४५ ॥
तमतिक्रम्य शैलेन्द्रं नानारत्नविभूषितं ।
उषीरवीजं दिव्यं च पर्वतं द्रष्टुमर्हथ ॥ ४६ ॥
जातरूपमयैर्वृक्षैः पुष्पितैः परिशोभितं ।
मर्तुकामा नराः पूर्वं तं पश्यन्ति मही्धरं ॥ ४७ ॥
जातरूपमयांस्तांश्च विविधांस्तत्र पादपान् ।
उषीरवीजो यैर्जुष्टो यमस्योत्तरपर्वतः ॥ ४८ ॥
तस्य पर्वतशृङ्गेषु पुष्पितेषु वनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४९ ॥

ततः शक्रध्वजाकारः कुञ्जरो नाम पर्वतः ।
अगस्त्यभवनं तत्र निर्मितं विश्वकर्मणा ॥ ५० ॥
तत्र योजनविस्तारमुच्छ्रितं शतयोजनं ।
तोरणं काञ्चनं दिव्यं नानारत्नविभूषितं ॥ ५१ ॥
तत्र भोगवती नाम सर्पाणामालयः पुरी ।
विशालरथ्या दुर्धर्षा तप्तकाञ्चनतोरणा ॥ ५२ ॥
रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ।
सर्पराजो महातेजा यस्यां वसति वासुकिः ॥ ५३ ॥
तस्य चित्रेषु पार्श्वेषु वनेषु च सुगन्धिषु ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ५४ ॥
सरिद्व्यञ्जना नाम वहत्यस्मिंस्तडित्प्रभा ।
अगस्त्यस्याभिषेकार्थं कुञ्जरे पर्वतोत्तमे ॥ ५५ ॥
यत्र मूलौषधिर्नाम सहेमरजताकरः ।
कुञ्जरं पर्वतं गत्वा महर्षिर्यत्र संस्थितः ॥ ५६ ॥
रक्तचन्दनपङ्काढ्यां मणिविद्रुमशर्करां ।
देवर्षिचरितां दिव्यां सावित्रीं तां सरस्वतीं ॥ ५७ ॥
ततस्तां समतिक्रम्य महावृषभसंस्थितिः ।
सर्वरत्नमयः श्रीमान् वृषभो नाम पर्वतः ॥ ५८ ॥
गोशीर्षं चन्दनं यत्र पद्मकज्वाग्निसंनिभं ।
दिव्यमुत्पद्यते यत्र तच्चैवाग्निशिखोपमं ॥ ५९ ॥

Digitized by Google

न च तच्चन्दनं दिव्यं स्प्रष्टव्यं हि कथञ्चन ।
रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनं ॥ ६० ॥
तेषां गन्धर्वपतयश्च द्वारः सूर्यवर्चसः ।
शैलूषो ग्रामणीः सिन्धुः स्थानो बभ्रुश्च वीर्यवान् ॥ ६१ ॥
तृणाङ्कोराश्रमं तत्र महर्षेः पुण्यकर्मणः ।
गता द्रक्ष्यन्ति हरयः स्वर्गी यत्र गतः स्वयं ॥ ६२ ॥
तमाश्रममतिक्रम्य तृणाङ्कोः पर्वतोऽपरः ।
यत्र सौमनसा नाम शृङ्गात् प्रभवते नदी ॥ ६३ ॥
तस्य सानुषु रम्येषु चन्दनागुरुगन्धिषु ।
शिलातलविनिष्पिष्टैः क्रीडतीव महोर्मिभिः ॥ ६४ ॥
तस्याः पुलिनशालिन्यास्तीरं रम्यं मनोहरं ।
उत्तरं प्लवगश्रेष्ठा दक्षिणं न तु दृश्यते ॥ ६५ ॥
ततः परमनाधृष्यः पितृलोकः सुदारुणः ।
विपुलां राजधानीं तामतिक्रम्य तमो महत् ॥ ६६ ॥
वैवस्वतस्य राज्ञो हि तत्र पारिप्लवप्रभः ।
प्रासादः काञ्चनैः स्तम्भैर्वज्रवैदूर्यवेदिकः ॥ ६७ ॥
नानावृक्षलतागुल्मैः सर्वतः परिशोभितः ।
यत्र वैवस्वतो राजा धर्मासनगतः प्रभुः ॥ ६८ ॥
व्यभजत् सर्वभूतानामुभे सुकृतदुष्कृते ।
तृणाङ्कोराश्रमं गत्वा महर्षेः पुण्यकर्मणः ॥ ६९ ॥

Digitized by Google

अन्तं पृथिव्या दुर्धर्षं न गन्तव्यं ततः परं ।
एतावदेव युष्माभिः शूरैः प्लवगपुङ्गवैः ॥ ७० ॥
शक्यं गन्तुं विचेतुं च दक्षिणां वै दिशं प्रति ।
अभास्करममर्यादं न जानामि ततः परं ॥ ७१ ॥
तृणाङ्कोराश्रमं गत्वा तां च विज्ञाय मैथिलीं ।
ततः शीघ्रं निवर्तध्वं कृतकार्या वनौकसः ॥ ७२ ॥
यो मां निवृत्तो युष्माकं दृष्टा सीतेति वक्ष्यति ।
स मे तुल्यफलो राज्ये मानार्हश्च भविष्यति ॥ ७३ ॥
निखिलेन विचेतव्यं यथोद्दिष्टं वनौकसः ।
यच्चान्यदपि नोद्दिष्टं तत्रापि क्रियतां मतिः ॥ ७४ ॥
शैलेष्वेतेषु दुर्गेषु निर्झरेषु गुहासु च ।
वनेषु च विचित्रेषु पत्तनेषु महत्सु च ॥ ७५ ॥
अन्वेष्या महिषी सीता राघवस्य महात्मनः ।
अधिगम्य च वैदेहीं निलयं रावणस्य च ॥ ७६ ॥
गतिं विदित्वा वैदेह्याः संनिवर्तितुमर्हथ ।
मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ ७७ ॥
यथोक्तं चैव कर्तव्यमेवं स्यां प्रीतिमानहं ।
अन्यथा संशयो वः स्याद्दाराणां जीवितस्य च ॥ ७८ ॥
अमितबलपराक्रमा भवन्तो गुणविपुलेषु कुलेषु संप्रसूताः ।
मनुजपतिसुतां द्रुतं लभध्वं तदतिगुणं पुरुषार्थमाचरध्वं ॥ ७९ ॥

Digitized by Google

## XLII.

विशेषेण तु सुग्रीवो हनूमन्तमुवाच ह ।
स हि तस्मिन् हरिश्रेष्ठे संभावयति विक्रमं ॥ १ ॥
न भूमावन्तरीक्षे वा पाताले वा सुरालये ।
अप्सु वा गतिभङ्गं ते पश्यामि हरिपुङ्गव ॥ २ ॥
ससुराः सहगन्धर्वाः सनागाः सहदानवाः ।
विदिता वीर लोकास्ते ससागरधराधराः ॥ ३ ॥
गतिर्वेगश्च तेजश्च लाघवश्च महाकपे ।
पितुस्ते सदृशं वीर मारुतस्य महात्मनः ॥ ४ ॥
तेजसा चापि ते भूतं न समं विद्यते भुवि ।
तद्यथा दृश्यते सीता तथा त्वं कर्तुमर्हसि ॥ ५ ॥
त्वय्येव हनूमन् सर्वं बलं तेजः पराक्रमः ।
देशकालानुवृत्तिश्च नयश्चानयवर्जितः ॥ ६ ॥
स तं कार्यसमासङ्गमवसज्य हनूमति ।
कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥ ७ ॥
ततः कार्यसमाधानमवसक्तं हनूमति ।
विदित्वा स महाबुद्धिश्चिन्तयामास राघवः ॥ ८ ॥
सर्वथा निश्चितार्थोऽयं हनूमति कपीश्वरः ।
निश्चितानुभवश्चापि हनूमान् कार्यसाधने ॥ ९ ॥

Digitized by Google

तदेवं प्रहितस्यास्य परिज्ञातस्य कर्मभिः ।
भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १० ॥
स समीक्ष्य महातेजा व्यवसायोत्तरं कपिं ।
करिष्यति ध्रुवं कार्यमयमित्यन्ववैक्षत ॥ ११ ॥
ददौ चास्य तदा प्रीतः स्वनामाङ्काभिचिह्नितं ।
अङ्गुरीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥
अस्य सा हरिशार्दूल दर्शनाज्जनकात्मजा ।
मंस्यते मन्नियुक्तं त्वां न चोद्वेगं करिष्यति ॥ १३ ॥
व्यवसायो हि ते वीर कर्म चैव प्रकाशितं ।
सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ॥ १४ ॥
स तं गृहीत्वा हनूमान् कृत्वा मूर्द्ध्नि कृताञ्जलिः ।
पादौ प्रणम्य रामस्य सुग्रीवस्य च मारुतिः ।
सहार्यैः सहितो व्योम पुप्लुवे वानरर्षभः ॥ १५ ॥

स हर्षयंस्तद्बलिनां महद्बलं
वनौकसां वायुसुतो बभौ तदा ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः
शशीव नक्षत्रगणैः समावृतः ॥ १६ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे दक्षिणदिग्निर्देशो
नाम एकचत्वारिंशः सर्गः — अङ्गुरीयप्रदानं
नाम द्विचत्वारिंशः सर्गः ॥

Digitized by Google

## XLIII.

ततः प्रस्थाप्य सुग्रीवो हनूमत्प्रमुखान् हरीन् ।
बुद्धिविक्रमसंपन्नान् वायुवेगसमान् जवे ॥ १ ॥
अथाहूय महातेजाः सुषेणं नाम यूथपं ।
तारायाः पितरं राजा श्वशुरं भीमविक्रमं ॥ २ ॥
अब्रवीत् प्राञ्जलिर्वाक्यमभिपूज्य प्रणम्य च ।
साहाय्यं कुरु रामस्य कृत्येऽस्मिन् समुपस्थिते ॥ ३ ॥
वृतः शतसहस्रेण वानराणां तरस्विनां ।
अभिगच्छ दिशं सौम्य पश्चिमां वारुणीं प्रभो ॥ ४ ॥
सुराष्ट्रान् सहवाह्लीकान् भद्राभीरांस्तथैव च ।
स्फीतान् जनपदांश्चैव विशालानि पुराणि च ॥ ५ ॥
प्रभासादीनि तीर्थानि तथा द्वारवतीमपि ।
तत्र केतकषण्डेषु तथा तालीवनेषु च ॥ ६ ॥
हरयो विहरिष्यन्ति नारिकेलवनेषु च ।
पुन्नागवृक्षबहुलं वकुलोद्दालकाकुलं ॥ ७ ॥
मरीचिपत्तनं चैव रम्यं च जटिलस्थलं ।
सुवीरमङ्गलोकं च तथा कोलूकमेव च ॥ ८ ॥
क्रमशस्तानि सर्वाणि विचेतव्यानि वानरैः ।
रत्नवन्ति विशालानि पत्तनानि समन्ततः ॥ ९ ॥
प्रत्यक्स्रोतोविशालाश्च नद्यः शीतजलाः शिवाः ।

Digitized by Google

तापसानामरण्यानि गिरीणां कन्दराणि च ॥ १० ॥
कैकेयान् सिन्धुसौवीरान् कान्तारगिरयश्च ये ।
गिरिजालावृतां दुर्गां मार्गध्वं पश्चिमां दिशं ॥ ११ ॥
ततः पश्चिममागम्य समुद्रं द्रष्टुमर्हथ ।
द्वीपांश्च बहुशस्तत्र बहुपादपशोभितान् ॥ १२ ॥
आनर्त्तांश्चैव मार्गध्वं कान्तारण्यटवीस्तथा ।
सिन्धुसागरयोश्चैव संगमे पर्वतो महान् ॥ १३ ॥
स वै फेनगिरिर्नाम शतशृङ्गो बहुद्रुमः ।
तस्य प्रस्थेषु रम्येषु सिंहा क्रीडन्ति सर्वशः ॥ १४ ॥
हृष्टाश्च मत्तमातङ्गास्तोयदस्वननिस्वनाः ।
यत्र पतङ्गमाः सिंहा बलिनो विलवासिनः ॥ १५ ॥
नाप्यासादयितव्याश्च पुरा दत्तवरा हि ते ।
तिमिमत्स्यान् गजांश्चैव नीडानारोपयन्ति ते ॥ १६ ॥
सरस्तत्र सुविस्तीर्णं नलिनी च मनोरमा ।
तानि नीडानि सिंहानां गिरेः शृङ्गशतं च तत् ॥ १७ ॥
सर्वमाशु विचेतव्यं हरिभिः कामरूपिभिः ।
सिन्धोरेव च तीर्थानि विचेतव्यानि यत्नतः ॥ १८ ॥
मरूंश्चानुमरूंश्चैव शूराभीरालयाश्च ये ।
गिरयश्च विचेतव्या वनान्युपवनानि च ॥ १९ ॥
स्त्रीणां शोकावहं स्थानं दत्तमिन्द्रेण रुष्यता ।

Digitized by Google

पुराणि यवनानां च विचिन्वन्तु वनौकसः ॥ २० ॥
आलोक्य पह्लवावासं यद्य तेषां समीपतः ।
ततः पञ्चनदं कृत्स्नं विचेतव्यं समन्ततः ॥ २१ ॥
काश्मीरमण्डलं चैव शमीपीलुवनानि च ।
पुराणि च सशैलानि विचिन्वन्तु वनौकसः ॥ २२ ॥
ततस्तक्षशिलां रम्यां शलाकां पुष्करावतीं ।
अपरानपि शाल्वादीन् मणिमन्तं च पर्वतं ॥ २३ ॥
तथा गान्धारदेशश्च मरुभूमिश्च सर्वशः ।
विचेयं रमणीयं च कैकेयानां निवेशनं ॥ २४ ॥
गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशं ।
अच्छिद्रेण विचेतव्या देशाः सगिरिकन्दराः ॥ २५ ॥
ततः पश्चिममासाद्य समुद्रं भीमदर्शनं ।
मार्गध्वं वानरास्तत्र भीमं सागरमुत्तमं ॥ २६ ॥
ततः शृङ्गं दिवि स्तब्धं काञ्चनं भीमपादपं ।
दुर्धर्षं पारियात्रस्य गता द्रक्ष्यथ वानराः ॥ २७ ॥
चतस्रो विंशतिश्चैव गन्धर्वाणां महात्मनां ।
कोट्यस्तत्रार्कवर्णानां वसन्ति क्रूरकर्मणां ॥ २८ ॥
दूरतो वर्जनीयास्ते वानरैर्भीमविक्रमैः ।
न ग्राह्यं फलमूलं च तस्मिन् देशे प्लवङ्गमैः ॥ २९ ॥
दुराधर्षा हि ते वीराः सत्त्ववन्तो विशेषतः ।



Digitized by Google

रक्षन्ति फलमूलानि गन्धर्वा भीमविक्रमाः ॥ ३० ॥
तत्र प्रयत्नः कर्तव्यो मार्गितव्या च मैथिली ।
न हि वोऽस्ति भयं तेभ्यः कार्येषु मम वर्ततां ॥ ३१ ॥
अवगाढः समुद्रस्य चक्रवान् नाम पर्वतः ।
सर्वरत्नमयैः शृङ्गैर्नैकतालसमुच्छ्रयैः ॥ ३२ ॥
तत्र चक्रं महासारं वज्रनाभमयोमयं ।
सुरारिमथनं दिव्यं वराहेण निवेशितं ॥ ३३ ॥
तत्र पञ्चजनं हत्वा हयग्रीवं च दानवं ।
आजहार पुरा शङ्खं चक्रं च मधुसूदनः ॥ ३४ ॥
तत्र सानुषु रम्येषु विशालासु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३५ ॥
योजनानां चतुःषष्टिं वराहो नाम पर्वतः ।
सुवर्णशृङ्गः स श्रीमानगाधश्च महोदधिः ॥ ३६ ॥
तमतिक्रम्य शैलेन्द्रं काञ्चनैर्धातुभिर्वृतं ।
शिखराच्चास्य धाराणां सहस्रं संप्रवर्तते ॥ ३७ ॥
ततो मेघमिवोद्यन्तं वज्राशनिसमस्वनं ।
द्रक्ष्यन्ति कपयः शैलमुल्लिखन्तमिवाम्बरं ॥ ३८ ॥
द्विरदाश्च मयूराश्च सिंहा व्याघ्राश्च यत्र वै ।
अभिगर्जन्ति शतशो धाराशब्दैः कृतोद्यमाः ॥ ३९ ॥
तस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः ।

Digitized by Google

अभिषिक्तः सुरैः पूर्वं सुमेघे रत्नपर्वते ॥ ४० ॥
तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितं ।
षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ४१ ॥
तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
जाततूपमयैः शृङ्गैः पुष्पितैः शोभनानि च ॥ ४२ ॥
तेषां मध्ये स्थितो राजा मेरुः कनकपर्वतः ।
आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ४३ ॥
यादृशी मे प्रभा शैल तादृशी ते भविष्यति ।
प्रभावान्मम शैलेन्द्र सर्वे भावाश्चराचराः ॥ ४४ ॥
तवाश्रया भविष्यन्ति दिवारात्रौ च काञ्चनाः ।
त्वयि ये च निवत्स्यन्ति देवगन्धर्वदानवाः ॥ ४५ ॥
ते भविष्यन्ति मुक्ताभा रत्नाभाः काञ्चनप्रभाः ।
आदित्या मरुतो रुद्रा वसवश्चाश्विनावपि ॥ ४६ ॥
आगम्य पश्चिमां सन्ध्यां मेरोरुत्तरमूर्द्धनि ।
आदित्यमुपतिष्ठन्ते तैश्च सूर्यो ऽभिपूजितः ॥ ४७ ॥
अदृश्यः सर्वभूतानामस्तं गच्छति पर्वतं ।
योजनानां सहस्राणि दश याति दिवाकरः ॥ ४८ ॥
निमेषान्तरमात्रेण गच्छत्यस्तं शिलोच्चयं ।
अगम्यो हि ततो मेरुर्यत्र स द्युतिमानृषिः ॥ ४९ ॥
प्रभासयति तं देशं द्वितीय इव भास्करः ।

Digitized by Google

प्रष्टव्यः स च सावर्णिर्महर्षिः सूर्यसंनिभः ॥५०॥
प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ।
अन्तरा मेरुमस्तं च भानोर्दशशिरा महान् ॥५१॥
स्थापितः पर्वतस्याग्रे विभ्राजति सवेदिकः ।
तत्र पर्वतशृङ्गेषु कन्दरेषु गुहासु च ॥५२॥
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।
अत्र चैवापरं शैलं लोहितार्कसमप्रभं ॥५३॥
अस्तमालोकयिष्यन्ति कपयः कामरूपिणः ।
स तु शैलो न गन्तव्यो वानरैर्वानरर्षभाः ॥५४॥
स हि वैश्वानराज्जातस्तेजसा घर्मदः सदा ।
न तं सिंहा न शार्दूला न मृगा न च पक्षिणः ॥५५॥
अभिगच्छन्ति शैलेन्द्रं न देवा न च पन्नगाः ।
तस्य शृङ्गे महद्दिव्यं भवनं सूर्यसंनिभं ॥५६॥
प्रासादशतसंबाधं निर्मितं विश्वकर्मणा ।
शोभितं पद्मिनीभिश्च काञ्चनैश्च महाद्रुमैः ॥५७॥
निलयः पाशहस्तस्य वरुणस्य महात्मनः ।
एतावज्जीवलोकस्य भास्करो रजनाक्षये ॥५८॥
कृत्वा वितिमिरं भाभिरस्तं गच्छति पर्वतं ।
प्रतीच्यां दिशि निर्माणं कृतं देवैः पुरा महत् ॥५९॥
जातरूपमयः श्रीमान् सोमार्चिर्नाम वानराः ।

Digitized by Google

एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ॥ ६० ॥
अभास्करममर्यादं न जानामि ततः परं ।
अधिगम्य च वैदेहीं निलयं रावणस्य च ॥ ६१ ॥
अस्तं पर्वतमासाद्य पूर्णे मासे निवर्तथ ।
मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ ६२ ॥
अगम्यं हि परं तत्र देवैरपि सवासवैः ।
इत्यर्थमेव श्वशुरः पितृभूतो विसर्जितः ॥ ६३ ॥
कृत्स्नास्वापत्सु भवतां समर्थः परिपालने ।
श्रोतव्यं सर्वमेतस्य यथैव मम वानराः ॥ ६४ ॥
योऽन्यथा स्थास्यति कपिः स मे बध्यो भविष्यति ।
अतोऽन्यदपि यत् किञ्चित् कार्यमस्मद्धितं भवेत् ॥ ६५ ॥
तत् सुषेणमतं कार्यं देशकालोपपादितं ।
एतच्छ्रुत्वा मया प्रोक्तं भवन्तः पश्चिमां दिशं ॥ ६६ ॥
सर्वतः परिमार्गन्तां यथा दृश्येत जानकी ।
रामपत्न्यां तु दृष्टायां मैथिल्यां सर्वथा वयं ।
ऋणान्मुक्ता भविष्यामः कृतप्रत्युपकारिणः ॥ ६७ ॥

भवान् गुरुर्मे श्वशुरो यथा पिता न मे सुहृत् त्वत्सदृशोऽस्ति कश्चन ।
कृतेन कार्येण भवन्तमागतं यथाशु पश्यामि तथा विधीयतां ॥ ६८ ॥
ततः सुषेणप्रमुखाः प्लवङ्गमाः कपीन्द्रवाक्यं निपुणं निशम्य तत् ।
दिशं विचेतुं वरुणाभिपालितामभिप्रयाताः समुदीर्णमानसाः ॥ ६९ ॥

## XLIV.

ततः प्रस्थाप्य सुग्रीवः सुषेणं पश्चिमां दिशं ।
वीरं शतबलिं नाम वानरं वानरर्षभः ॥ १ ॥
उवाच राजा राजानं सर्ववानरसंमतं ।
शूरं रामहितं वाक्यमहितं रावणस्य च ॥ २ ॥
वृतः शतसहस्रेण वानराणां तरस्विनां ।
वैवस्वतसुतैः सार्द्धं मृगयस्वोत्तरां दिशं ॥ ३ ॥
यक्षराक्षसगन्धर्वकिन्नरेशेन धीमता ।
पालितामेकपिङ्गेन धनदेन महात्मना ॥ ४ ॥
विदेहतनयां तत्र पत्नीं रामस्य धीमतः ।
विचिन्वन्तु भवन्तस्तां दुर्धर्षैर्वानरैः सह ॥ ५ ॥
दिशमेतां सुविचितां कर्तुमर्हथ वानराः ।
विदेहराजदुहितुः कृते संत्यक्तजीविताः ॥ ६ ॥
अस्मिन् कार्येऽथ निर्वृत्ते कृते दाशरथिप्रिये ।
ऋणान्मुक्ता भविष्यामः कृतप्रत्युपकारिणः ॥ ७ ॥
कृतं हि प्रियमस्माकं राघवेण महात्मना ।
तस्य प्रतिकृते हि स्यात् सफलं जीवितं मम ॥ ८ ॥
एतां बुद्धिं पुरस्कृत्य दृश्यते जानकी यथा ।
तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ९ ॥

Digitized by Google

अयं हि सर्वभूतानां संमान्यो हरिसत्तमाः ।
अस्मासु च गतो भक्तिं परां परपुरंजयः ॥ १० ॥
इमानि शैलशृङ्गाणि नदीः शैलान्तराणि च ।
भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदः ॥ ११ ॥
तत्र मत्स्यान् पुलिन्दांश्च शूरसेनांस्तथैव च ।
प्रचरान् भद्रकांश्चैव कुरूंश्च सह मद्रकैः ॥ १२ ॥
गान्धारान् यवनांश्चैव शकानोड्रान् सपारदान् ।
वाह्लीकानृषिकांश्चैव पौरवानथ किङ्करान् ॥ १३ ॥
चीनानपरचीनांश्च तुखारान् वर्वरानपि ।
काञ्चनैः कमलैश्चैव काम्बोजानपि संवृतान् ॥ १४ ॥
एतानत्यद्भुतान् देशान् सपर्वतनदीवनान् ।
अन्विष्य दरदांश्चैव हिमवन्तं गमिष्यथ ॥ १५ ॥
लोध्रपद्मकषण्डैश्च देवदारुवनैस्तथा ।
सालैस्तालैस्तमालैश्च भूर्जैश्च बकुभिर्वृतं ॥ १६ ॥
किन्नरैश्चोरगैः सिद्धैः पिशाचैर्यक्षराक्षसैः ।
अनुकीर्णं स्थितं शैलमावृत्य दिशमुत्तरां ॥ १७ ॥
पन्नगैर्मृगयूथैश्च नानापक्षिगणैरपि ।
अनुकीर्णं वनं सर्वं वानरैश्च सहस्रशः ॥ १८ ॥
तस्य पर्वतजालेषु नदीषु च गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९ ॥

Digitized by Google

किरातांष्टङ्कणान् भद्रान् पशुपालांश्च दारुणान् ।
अन्विष्याथ भृगोस्तुङ्गं गमिष्यथ महाश्रमं ॥ २० ॥
ततो महाश्रमं गत्वा देवगन्धर्वसेवितं ।
कालं नाम सदा शान्तं गमिष्यथ शिलोच्चयं ॥ २१ ॥
तस्य पर्वतदुर्गेषु वनेषु च गुहासु च ।
अन्वेष्यः सह वैदेह्या रावणो राक्षसाधिपः ॥ २२ ॥
ताम्राकरमतिक्रम्य हेमगर्भ महागिरिं ।
ततः सुदर्शनं नाम गमिष्यथ शिलोच्चयं ॥ २३ ॥
तस्य काननषण्डेषु प्रियङ्गुगहनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २४ ॥
तमतिक्रम्य शैलेन्द्रं सर्वतः शतयोजनं ।
अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितं ॥ २५ ॥
संतप्तमेव तं नित्यं सवित्रा तिग्मरश्मिभिः ।
त्वरमाणैः कृताहारैः पीततोयैश्च वानरैः ॥ २६ ॥
तं तु शीघ्रमतिक्रम्य कान्तारं लोमहर्षणं ।
पाण्डरं द्रक्ष्यथ ततः कैलासं नाम पर्वतं ॥ २७ ॥
तत्र पाण्डुरमेघाभं जाम्बुनदपरिष्कृतं ।
कुवेरभवनं दिव्यं निर्मितं विश्वकर्मणा ॥ २८ ॥
विशाला नलिनी तत्र प्रभूतकमलोत्पला ।
हंसकारण्डवाकीर्णा मुक्तावैदूर्यबालुका ॥ २९ ॥

Digitized by Google

तत्र वैश्रवणो राजा सर्वलोकनमस्कृतः ।
धनदो रमते नित्यं गुह्यकैः सह यक्षराट् ॥ ३० ॥
तस्य सर्वनिकायेषु निर्झरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३१ ॥
क्रौञ्चं पर्वतमासाद्य गिरेस्तस्य वनं महत् ।
दुष्प्रवेशं दुराधर्षं सिद्धचारणसेवितं ॥ ३२ ॥
वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ।
देवैरभ्यर्चिताः शश्वद्देवरूपा महर्षयः ॥ ३३ ॥
क्रौञ्चस्य च गुहा दिव्याः सानूनि शिखराणि च ।
निर्झराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ ३४ ॥
क्रौञ्चस्य शिखरस्थं च तद्द्रक्ष्यथ सरो महत् ।
अवृक्षकमशैलं च मानसं विहगालयं ॥ ३५ ॥
न गतिस्तत्र देवानां न भूतानां न रक्षसां ।
तस्मादालोकनीयं तदप्रमत्तैः प्लवङ्गमैः ॥ ३६ ॥
क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ।
मयस्य भवनं तत्र दानवस्य स्वयं कृतं ॥ ३७ ॥
मैनाकस्तु विचेतव्यः ससानुप्रस्थकन्दरः ।
स्त्रीणामश्वमुखीनां च निकेतास्तत्र शोभनाः ॥ ३८ ॥
तत्राश्रमपदं रम्यमृषीणामूर्द्ध्वरेतसां ।
दीप्तं सप्तर्षिचरितं धर्मैककृतनिश्चयैः ॥ ३९ ॥

तमाश्रममतिक्रम्य शैलो बहुफलोदकः ।
सिद्धा वैखानसास्तत्र बालिखिल्याश्च तापसाः ॥ ४० ॥
वन्द्या देवोपमाः सर्वे तपसा नीरजस्तमाः ।
प्रष्टव्यास्ते च सीतायाः प्रवृत्तिममितौजसः ॥ ४१ ॥
हेमपुष्करसंछन्नं तत्र वैखानसं सरः ।
तरुणादित्यसंकाशं खगैर्वारिचरैर्वृतं ॥ ४२ ॥
औपवाह्यः कुवेरस्य सार्वभौम इति श्रुतः ।
गजः पर्येति तं देशं सदा सह करेणुभिः ॥ ४३ ॥
तत् सरः समतिक्रम्य नष्टचन्द्रदिवाकरं ।
अनक्षत्रगणं व्योमनिर्माणं घनगर्जितं ॥ ४४ ॥
गभस्तिभिरिवार्कस्य स देशः संप्रकाशते ।
शाम्यद्भिस्तापसैस्तत्र द्योतितः स्वेन तेजसा ॥ ४५ ॥
तं तु देशमतिक्रम्य त्रिशृङ्गो नाम पर्वतः ।
तस्य पादे सरो दिव्यं महत् काञ्चनपुष्करं ॥ ४६ ॥
ततः प्रच्यवते दिव्या तीक्ष्णस्रोतास्तरङ्गिणी ।
नदी नैकग्रहाकीर्णा कुटिला लोकभाविनी ॥ ४७ ॥
तस्यैकं काञ्चनं शृङ्गं पर्वतस्याग्निसंनिभं ।
वैदूर्यमयमेकं च शैलस्यास्य समुच्छ्रितं ॥ ४८ ॥
अनुत्पन्नेषु भूतेषु बभूव किल भूमितः ।
अग्रजः सर्वभूतानां विश्वकर्मेति विश्रुतः ॥ ४९ ॥

Digitized by Google

तत् तस्य किल पौराणमग्निहोत्रं महात्मनः ।
आसीत् त्रिशिखरः शैलः प्रवृत्तास्तत्र येऽग्नयः ॥५०॥
तत्र सर्वाणि भूतानि सर्वमेधे महामखे ।
कृत्वाभवन्महातेजाः सर्वलोकमहेश्वरः ॥५१॥
रुद्रस्य किल संस्थानं सरो वै सार्वमेधिकं ।
ततः प्रवृत्ता सरयूर्घोरनक्रवती नदी ॥५२॥
देवगन्धर्वपतगाः पिशाचोरगदानवाः ।
प्रविशन्ति न तं देशं प्रदीप्तमिव पावकं ॥५३॥
तमतिक्रम्य शैलेन्द्रं महादेवाभिपालितं ।
योजनानि चतुःषष्टिं पर्वतो गन्धमादनः ॥५४॥
तालीशैश्च तमालैश्च सरलैश्चोपशोभितः ।
शैलः पुष्पाचितः श्रीमानासीदुरगभूषितः ॥५५॥
शृङ्गे तस्य स्थिता जम्बुर्नाम्ना दिव्या सुदर्शना ।
जातरूपमयी दिव्या विराजति सवेदिका ॥५६॥
जम्बुद्वीपस्य सा जम्बुर्ध्वजो वानरपुङ्गवाः ।
अर्चिता चोपगीता च नित्यमप्सरसां गणैः ॥५७॥
तत्र पर्वतशृङ्गेषु समीपेषु वनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥५८॥
तं तु देशमतिक्रम्य सिद्धचारणसेवितं ।
तुषारचयसंकाशं मन्दरं द्रक्ष्यथाचिरात् ॥५९॥

Digitized by Google

शृङ्गे तस्य ह्रदो दिव्यः प्रसन्नसलिलप्रभः ।
विश्रुतो घृतमण्डोदः पितामहनिषेवितः ॥ ६० ॥
तस्मिन् वसति सा दिव्या रम्या त्रिपथगामिनी ।
आकाशगङ्गा दुर्धर्षा पूरयन्ती नभस्तलं ॥ ६१ ॥
सा धारा पाण्डरा दिव्या सलिलस्य दिवश्च्युता ।
तस्मिन् पतति दुर्धर्षे महानादे महाह्रदे ॥ ६२ ॥
ततः प्रहरते गङ्गा गिरिकाननसंचयान् ।
प्रवहन्ती महावेगा शिलाश्च समनःशिलाः ॥ ६३ ॥
सा गङ्गा सा चतुर्भागा सा चाप्यतिजला शुभा ।
तामिन्द्रमार्गां दुर्धर्षां कथयन्ति मनीषिणः ॥ ६४ ॥
शतद्रुः कौशिकी पुण्या सा च वैतरणी नदी ।
लोहितोदा वसापङ्का मेदमांसास्थिसंकुला ॥ ६५ ॥
तत्र यक्षाः सगन्धर्वाः पिशाचोरगराक्षसाः ।
विमुञ्चन्त्यवशा देहं कालस्य वशमागताः ॥ ६६ ॥
तस्मिंस्तेषां शरीराणि दृश्यन्ते न महीतले ।
यथा मृतानां दृश्यन्ते मनुष्याणां प्लवङ्गमाः ॥ ६७ ॥
तमतिक्रम्य शैलेन्द्रं मन्दरं मुनिसेवितं ।
उत्तरं रत्नसंपूर्णं समुद्रं गन्तुमर्हथ ॥ ६८ ॥
तं कालमेघप्रतिमं महानादं भयावहं ।
उत्तरं तीरमासाद्य न विश्वसितुमर्हथ ॥ ६९ ॥

Digitized by Google

तीरे तस्य समुद्रस्य सहस्रशिखरो महान् ।
काञ्चनः सूर्यसंकाशो बहुकेतुरिति श्रुतः ॥ ७० ॥
तस्योपरि शुचिर्दिव्यः प्रसन्नसलिलो ह्रदः ।
महच्छरवणं तत्र काञ्चनं समवाप्स्यथ ॥ ७१ ॥
तस्मिन् शरवणे दिव्ये नित्यं तपति पावकः ।
जातो यत्र महासेनः कार्त्तिकेयः प्रतापवान् ॥ ७२ ॥
आवर्त्तकलिलो यस्य समीपे सलिलोदधिः ।
उन्मज्जति महाघोरं यस्मिन् हयशिरो महत् ॥ ७३ ॥
तस्य पर्वतदुर्गेषु निर्झरेषु गुहासु च ।
सिद्धचारणजुष्टेषु पुष्पितेषु वनेषु च ॥ ७४ ॥
आश्रमेषु च रम्येषु लतानां गहनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ७५ ॥
तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
उभयोस्तीरयोर्यस्याः कीचका नाम वेणवः ॥ ७६ ॥
सा न शक्या तरीतुं हि नदी परमदुर्गमा ।
तस्याः स्पृष्ट्वैव सलिलं नरः शैलोऽभिजायते ॥ ७७ ॥
तेऽपि तीरगतास्तस्या नद्याः कीचकवेणवः ।
समागच्छन्त्ययत्नेन संगमं च परस्परं ॥ ७८ ॥
ते नयन्ति परं पारं सिद्धान् प्रत्यानयन्ति च ।
आपगां दूरपारां ते संतरन्ति हि वेणुभिः ॥ ७९ ॥

Digitized by Google

ततः शीतां नदीं शुभां ह्यन्यथाद्भुतगोचरां ।
तस्यां स्नात्वाशु शुचयो निश्चिताः पुण्यकर्मणः ॥ ८० ॥
कुरून् यातोत्तरान् शीघ्रं शक्रलोकसमान् गुणैः ।
नदी नीला महाघोरा सर्वभूतापहारिणी ॥ ८१ ॥
तामुत्तीर्य प्रयत्नेन निपुणं प्रविचिन्त्य च ।
तान् गच्छत हरिश्रेष्ठा विशालानुत्तरान् कुरून् ॥ ८२ ॥
दानशीलान् महाभागान् नित्यतुष्टान् गतज्वरान् ।
न तत्र शीतमुष्णं वा न जरा नामयस्तथा ॥ ८३ ॥
न शोको न भयं वापि न वर्षं नापि भास्करः ।
सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिता ॥ ८४ ॥
शोभिता काञ्चनैश्चैव विशालै रत्नपर्वतैः ।
भूमिः सुषिक्ता पाण्डुश्च समा निस्तृणकण्टका ॥ ८५ ॥
नीरजस्का सुगन्धा च क्वचिच्च मृदुशाद्वला ।
तत्र काञ्चनपद्माश्च नद्यः काञ्चनबालुकाः ॥ ८६ ॥
तत्र हेमद्रुमच्छन्ना विगाढा हेमपर्वतैः ।
तप्तकाञ्चनपद्माश्च नलिन्यस्तत्र साण्डजाः ॥ ८७ ॥
रम्याणि तापनीयानि वनान्युपवनानि च ।
हेमकिञ्जल्कवर्णानि सुगन्धीनि क्वचित् क्वचित् ॥ ८८ ॥
नीलवैदूर्यतोयाश्च वाप्यस्तत्र समन्ततः ।
रक्तोत्पलवनैश्चान्यैर्मणिदण्डैर्हिरण्मयैः ॥ ८९ ॥

Digitized by Google

शोभितास्तत्र गन्धाढ्या नलिन्यः फुल्लपङ्कजाः ।
महार्हैर्मणिवर्हैरिश्च काञ्चनप्रभकेशरैः ॥ १० ॥
नीलोत्पलवनैर्दिव्यैः स देशः सर्वतो वृतः ।
निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ॥ ११ ॥
उद्धूतनलिनास्तत्र निम्नगा विमलोदकाः ।
सुवर्णगिरयस्तत्र मणिरत्नशिलोच्चयाः ॥ १२ ॥
सर्वरत्नमया भान्ति पादपैरुपशोभिताः ।
नित्यपुष्पफलाश्चान्ये नगाः पत्ररथाकुलाः ॥ १३ ॥
दिव्यगन्धाः सुखस्पर्शाः सर्वकामान् फलन्ति वै ।
सप्तर्षिभवनं तत्र तत्र मन्दाकिनी नदी ॥ १४ ॥
देवर्षिभवनं रम्यं तत्र चैत्ररथं वनं ।
तत्र क्षीरवहा नद्यो ह्रदाः पायसकर्दमाः ॥ १५ ॥
ब्रह्मणा विहितास्तत्र पादपाश्च मधुच्युताः ।
जातरूपमयाश्चैव हुताशनसमप्रभाः ॥ १६ ॥
नानावर्णानि वासांसि फलन्त्यन्ये नगोत्तमाः ।
स्त्रीणां यान्यनुरूपाणि पुरुषाणां तथैव च ॥ १७ ॥
मनःसंकल्परूपाणि रत्नगर्भाणि च द्रुमाः ।
भूषणानि विचित्राणि जातरूपमयानि च ॥ १८ ॥
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ।
विचित्रान् गन्धसंयोगान् सर्वगन्धानुगांस्तथा ॥ १९ ॥

Digitized by Google

सर्वर्तुकालसंसाध्यान् फलन्त्यन्ये नगोत्तमाः ।
पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥ १०० ॥
विचित्राणि प्रभूतानि फलन्ति धरणीरुहाः ।
स्त्रियश्च गुणसंपन्ना रूपयौवनदर्पिताः ॥ १०१ ॥
गन्धर्वाः किन्नराः सिद्धा नागा विद्याधरास्तथा ।
रमन्ते सहितास्तत्र ताभिर्भास्करसंनिभाः ॥ १०२ ॥
तत्र पादपशाखाग्रेष्ववसक्ताः सहस्रशः ।
कान्तिमत्यः शुभा नार्यः सर्वाभरणभूषिताः ॥ १०३ ॥
पुरुषाश्चोत्तमौदार्या रूपवन्तो महौजसः ।
निस्तन्द्रीनुद्भयत्रासा मधुरप्रियवादिनः ॥ १०४ ॥
सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ।
सिद्धकामाः समृद्धार्था वसन्ति सहयोषितः ॥ १०५ ॥
गीतवादित्रनिर्घोषाः सोत्कृष्टहसितस्वनाः ।
अपर्वतीया वृक्षाढ्या गुहाः पन्नगसेविताः ॥ १०६ ॥
तत्रानुपमकल्याण्यो रूपजल्पितचेष्टितैः ।
स्त्रियः पुरुषलोभिन्यः कमलाननलोचनाः ॥ १०७ ॥
सर्वाभरणसंपन्नाः सर्वा मधुरनिस्वनाः ।
सदा पुरुषनिर्मुक्ताः परस्परकथाप्रियाः ॥ १०८ ॥
अह्ना तु तासां सर्वासां यौवनं व्यतिवर्तते ।
जाताः सूर्योदये जीर्णा भवन्ति रजनीक्षये ॥ १०९ ॥

Digitized by Google

पूर्वमप्सरसो दिव्यास्ताः किलोत्तमतेजसः ।
अचिन्तयित्वा देवेशं तत्र क्रीडन्ति नित्यशः ॥ ११० ॥
तस्य देशस्य रम्यत्वादिन्द्रोपस्थानविस्मृताः ।
शशाप किल ताः सर्वा महेन्द्रः पाकशासनः ॥ १११ ॥
जरामरणदुःखार्त्ताः कल्यं कल्यमतन्द्रिताः ।
सर्वा भवत दुर्मेधास्तस्मिन्नेव गुहामुखे ॥ ११२ ॥
इति शापपराभूताः शक्रस्यैवाज्ञया हि ताः ।
अशून्यां कुर्वते नित्यं गुहां तां तिमिरावृतां ॥ ११३ ॥
अभिशापान्महेन्द्रस्य ताः किलाप्सरसस्तथा ।
अहन्यहनि जायन्ते म्रियन्ते च पुनः पुनः ॥ ११४ ॥
गुहायां तु तमोवत्यां गुहाः सन्ति सहस्रशः ।
पार्श्वे स्थूला महाभीमाः शैलाश्चैव गृहाणि च ॥ ११५ ॥
सीता तत्र विचेतव्या यत्नमास्थाय दारुणं ।
वानरैस्त्रिदशप्रख्यैर्बुद्धिशौर्यसमन्वितैः ॥ ११६ ॥
कुरूंस्तान् समतिक्रम्य उत्तरे पयसां निधिः ।
तत्र सोमगिरिर्नाम हिरण्मयसमो महान् ॥ ११७ ॥
इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ।
सर्वे ते समवेक्षन्त गिरिराजं दिवं गताः ॥ ११८ ॥
असूर्योऽपि हि देशः स तस्य भासः प्रकाशते ।
ससूर्य इव लक्ष्मीवांस्तपतीव दिवाकरे ॥ ११९ ॥



Digitized by Google

भगवांस्तत्र भूतात्मा स्वयम्भूर्बहुधात्मकः ।
ब्रह्मा भवति वश्यात्मा सर्वात्मा सर्वभावनः ॥ १२० ॥
न कथञ्चन गन्तव्यं कुरूणामुत्तरेण च ।
अन्येषामपि भूतानां न तत्र क्रमते गतिः ॥ १२१ ॥
स हि सोमगिरिर्नाम देवानामपि दुर्गमः ।
तमालोक्य ततः शीघ्रमुपावर्तितुमर्हथ ॥ १२२ ॥
तस्य शैलस्य पार्श्वेषु नोपरिष्टात् कथञ्चन ।
कान्तारेषु च शून्येषु निर्झरेषु गुहासु च ॥ १२३ ॥
उद्यानेषु च रम्येषु गन्धर्वभवनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १२४ ॥
अवगम्य तु वैदेहीं निलयं रावणस्य च ।
मासादूर्द्ध्वं न वस्तव्यं वसन् बध्यो भवेन्मम ॥ १२५ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्यादं न जानामि ततः परं ॥ १२६ ॥
सर्वमेतदशेषेण मार्गितव्यं प्रयत्नतः ।
यदन्यदपि नोद्दिष्टं तत्रापि क्रियतां मतिः ॥ १२७ ॥

ततः कृतं दाशरथेर्महत् प्रियं
महत्तरं चापि ततो मम प्रियं ।
कृतं भविष्यत्यनलानिलोपमा
विदेहजादर्शनजेन कर्मणा ॥ १२८ ॥

Digitized by Google

ततः कृतार्थाः सहिताः सबान्धवा
मयार्चिताः सर्वगुणैर्मनोरमैः ।
यथेप्सितं शीघ्रमथ प्लवङ्गमाः
सहप्रिया भूतधरां चरिष्यथ ॥ १२९ ॥

इत्येवमुक्त्वा हरयोऽथ शीघ्रं
रामं ससुग्रीवमनन्तवीर्यं ।
शिरोभिरुर्व्यां सहिताः प्रणम्य
जग्मुर्दिशं वैश्रवणाभिगुप्तां ॥ १३० ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे पश्चिमदिग्निर्देशो नाम
त्रिचत्वारिंशः सर्गः — उत्तरदिग्निर्देशो नाम
चतुश्चत्वारिंशः सर्गः ॥

Digitized by Google

## XLV.

तद्रुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ।
शलभा इव संछाद्य पृथिवीं संप्रतस्थिरे ॥ १ ॥
पूर्वां तु दिशमास्थाय विनतः प्लवगैः सह ।
प्रतस्थे कपिशार्दूलो वानरैर्बहुभिर्वृतः ॥ २ ॥
ताराङ्गदाभ्यां सहितः प्लवगः पवनात्मजः ।
अगस्त्यचरितामाशां प्रतस्थे प्लवगैः सह ॥ ३ ॥
सुषेणः कपिशार्दूलो हृष्टो वरुणपालितां ।
प्रतस्थे विक्रमोपेतैः सुदुर्गां प्लवगैः सह ॥ ४ ॥
उत्तरां तु दिशं दुर्गां गिरिराजसमावृतां ।
वीरः शतबलिर्नाम ययौ बहुबलानुगः ॥ ५ ॥
सागरान् पर्वतानूपान् सरितः पत्तनानि च ।
सर्वाणि कपयो जग्मुर्नदन्तो भीमविक्रमाः ॥ ६ ॥
अनुशिष्टा यथा सर्वे सुग्रीवेण वनौकसः ।
स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ७ ॥
नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
क्ष्वेडन्तो धावमानाश्च प्रययुस्ते महाजवाः ॥ ८ ॥
आनेष्यामो वयं सीतामपि मृत्युमुखागतां ।
पातालतलसंस्थां वा यदिवाप्युदधिं गतां ॥ ९ ॥

Digitized by Google

प्रतिज्ञां चक्रिरे वीराः प्लवमाना महौजसः ।
अहमेको हनिष्यामि रावणं दुष्टमाहवे ॥१०॥
तथैवोन्मथ्य तरसा हरिष्ये जनकात्मजां ।
किं बहूनां श्रमेणाद्य भवद्भिः श्रूयतामिह ॥११॥
अहमेवानयिष्यामि पातालादपि जानकीं ।
विधमिष्याम्यहं वृक्षांश्चालयिष्यामि पर्वतान् ॥१२॥
वसुधां दारयिष्यामि क्षोभयिष्यामि सागरान् ।
अहं योजनविंशानां प्लविता नात्र संशयः ॥१३॥
अबुद्धिर्वानरपतिर्यः क्षोभयति वानरान् ।
अहमेको भविष्यामि कार्यस्यैतस्य साधकः ॥१४॥
भूतले सागरे वापि सरिच्छैलेषु वा पुनः ।
पातालस्यापि वा मध्ये न विहन्येत मे गतिः ॥१५॥
एवमेकैकशस्तत्र वानरा बलदर्पिताः ।
ऊचुस्ते वचनं तस्मिन् हरिराजस्य संगमे ॥१६॥
एवमुक्ता हरिश्रेष्ठाः स्वां स्वां दिशं महाबलाः ।
तदाजग्मुर्महात्मानः सुग्रीवस्य हितैषिणः ॥१७॥
इति राजा दिशः सर्वाः संप्रस्थाप्य विचारकान् ।
कपिसेनापतीन् मुख्यान् सुग्रीवो मुदितोऽभवत् ॥१८॥
रामः प्रस्रवणे तस्मिन् न्यवसत् सहलक्ष्मणः ।
प्रतीक्षमाणस्तं मासं सीताधिगमने कृतं ॥१९॥

Digitized by Google

## XLVI.

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् ।
कथं त्वया महाबाहो दृष्टपूर्वा वसुंधरा ॥ १ ॥
कथं भवान् विजानीते सुदुर्वेदमिदं महत् ।
पृथिवीमण्डलं सर्वं कथं त्वं गतवानसि ॥ २ ॥
एवमुक्तस्तु रामेण सुग्रीवः प्लवगाधिपः ।
उवाच श्रूयतां राम यथा दृष्टं मया पुरा ॥ ३ ॥
यस्ते मया समाख्यातो दुन्दुभिर्नाम दानवः ।
बलदर्पसमुत्सिक्तो निहतो बालिना रणे ॥ ४ ॥
महिषो नाम तेजस्वी दुन्दुभेः पूर्वजः स्मृतः ।
बलं नागसहस्रस्य धारयन्नकुतोभयः ॥ ५ ॥
बलदर्पसमुत्सिक्तस्त्रासयन् वनगोचरान् ।
किष्किन्धाद्वारमासाद्य समाहूय च बालिनं ॥ ६ ॥
स तेन निहतः संख्ये यथा ते बहुशः श्रुतं ।
तस्मिंश्चिरायमाणे च यथाक्रमभिषेचितः ॥ ७ ॥
अभिषिक्तं च मां दृष्ट्वा चिरादागत्य कोपनः ।
स मां निरस्त्यक्तवान् बाली चतुर्भिः सचिवैः सह ॥ ८ ॥
ततो जवेन काकुत्स्थ विद्रुतोऽहं भयातुरः ।
उत्सार्यमाणस्तेनाहं दृष्टवान् सर्वतो महीं ॥ ९ ॥
नदीश्च विविधाः पश्यन् नगराणि वनानि च ।

Digitized by Google

ततः पूर्वामहं गत्वा दक्षिणां दिशमाश्रितः ॥ १० ॥
दिशं च पश्चिमां भूयो गतोऽस्मि भयशङ्कितः ।
चिराच्च वायुपुत्रो मां संस्मृत्येदं वचोऽब्रवीत् ॥ ११ ॥
शप्तो बाली मतङ्गेन पुरा महिषकारणात् ।
इह ते न प्रवेष्टव्यमृष्यमूकवनं कपे ॥ १२ ॥
शतधा ते स्फुटेन्मूर्धा प्रविशेस्त्वमिदं यदि ।
इदानीं मे स्मृतो राजन्नृष्यमूको महागिरिः ॥ १३ ॥
तं तु गच्छाम वै सर्वे तत्रासौ न भविष्यति ।
ततोऽहं तद्भयाक्रान्तः शतकृत्वा वसुन्धरां ॥ १४ ॥
हनूमत इति श्रुत्वा प्रविष्टोऽस्मि तमाश्रमं ।
समागतस्त्वया यत्र मया सख्यमवाप्य ते ॥ १५ ॥
नाचिन्तयं रिपुं यत्र मतङ्गभयमोहितं ।
यत्राभिषेचितो राज्ये त्वयाहं रघुनन्दन ॥ १६ ॥
निहत्य बालिनं संख्ये भयमुत्सृज्य दूरतः ।
एवं राघव तत्त्वेन मयैषा पृथिवी तदा ॥ १७ ॥
जम्बुद्वीपश्च विस्तीर्णः प्रत्यक्षमुपलक्षितः ।
पृथिवीमण्डलं कृत्स्नं शैला नद्यो वनानि च ।
दृष्टमेतन्मया राजन् यन्मां त्वं परिपृच्छसि ॥ १८ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे वानरप्रयाणं नाम
पञ्चचत्वारिंशः सर्गः — पृथिवीमण्डलपरिज्ञाननिवेदनं
नाम षट्चत्वारिंशः सर्गः ॥

Digitized by Google

## XLVII.

अन्विष्यन्तस्ततः सीतां सर्वे ते कपियूथपाः ।
पृथिवीं परिचिन्वन्तः सशैलवनकाननां ॥ १ ॥
व्यादिष्टाः कपिसिंहेन यथोक्तं सर्व एव हि ।
व्यचिन्वन्त दिशः सर्वाः सीताधिगमने तदा ॥ २ ॥
ते सरांसि गिरीन् सर्वान् सङ्कटानि वनानि च ।
दरीर्दुर्गांश्च शैलांश्च कृत्स्नांस्तानभिचक्रमुः ॥ ३ ॥
निर्झराणि नितम्बांश्च विचिन्वन्तस्ततस्ततः ।
सुग्रीवेणाभिसंख्यातान् देशांस्ते वानरर्षभाः ॥ ४ ॥
विचेरुर्वृक्षबहुलान् सानुप्रस्थाननेकशः ।
सर्वे सर्वनिवासांश्च सीताधिगमने धृताः ॥ ५ ॥
समागच्छन् तु मेदिन्या दिग्भागेषु प्लवङ्गमाः ।
संवर्तयन्तः शैलेषु वानरा विविधांस्तरून् ॥ ६ ॥
विचेयं प्रथमे मासि कृत्वा प्रस्रवणे गिरौ ।
कपिराजं समासेदुर्निराशा हरियूथपाः ॥ ७ ॥
विचित्य तु दिशं पूर्वां विनतः प्लवगैः सह ।
अदृष्ट्वैव ततः सीतां किष्किन्धामाजगाम सः ॥ ८ ॥
उत्तरां तु दिशं सर्वां विचित्य स महाकपिः ।
अदृष्ट्वैवागतः सीतां वीरः शतबलिर्हरिः ॥ ९ ॥

Digitized by Google

सुषेणः पश्चिमां गत्वा प्राप्य प्रस्रवणं गिरिं ।
निवृत्य मासे संपूर्णे सुग्रीवं संददर्श ह ॥ १० ॥
ते प्रस्रवणपार्श्वस्थमभिगम्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ ११ ॥
विचिताः पर्वताः सर्वे वनानि गहनानि च ।
निम्नगाः सागरान्ताश्च सर्वे जनपदास्तथा ॥ १२ ॥
गुहाश्च विविधाकाराः संक्रमाः परिवर्तिताः ।
उद्भूताश्च लतागुल्मास्तृणं च विदलीकृतं ॥ १३ ॥
महातेजांसि घोराणि महासत्त्वबलानि च ।
सत्त्वान्यतिप्रवृद्धानि त्रासितानि हतानि च ॥ १४ ॥
रावणं मन्यमानैश्च तत्र तत्र प्लवङ्गमैः ।
प्रविशन्ति नदन्तश्च धावन्तश्च प्लवङ्गमाः ॥ १५ ॥
प्लवमाना व्रजन्तश्च पर्यधावन्त वानराः ।
ये चैव गहना देशा विचितास्ते पुनः पुनः ॥ १६ ॥
आगमप्रतिकारश्च वानरैस्तत्र चेष्टितः ।
प्रवृत्तिर्न च वैदेह्याः क्वचिदप्युपलभ्यते ॥ १७ ॥
हनूमान् राघवार्थे तु यत्नवान् प्रियदर्शनः ।
आगमं तस्य काङ्क्षामो ध्रुवं सोऽधिगमिष्यति ॥ १८ ॥
उदारसत्त्वाभिजनो हनूमान् स मैथिलीं ज्ञास्यति वानरेन्द्रः ।
दिशं च यामेव हृता हि सीता तामाश्रितो वायुसुतो महात्मा । १९ ।



Digitized by Google

## XLVIII.

अथाङ्गदमुखैः सार्द्धं हनूमान् वानरैस्ततः ।
सुग्रीवेण यथोद्दिष्टो दक्षिणामगमद्दिशं ॥ १ ॥
स विन्ध्यवनमागम्य सर्वैस्तैर्हरिभिर्वृतः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥
शैलाग्राणि नदीं दुर्गां कन्दराणि वनानि च ।
वृक्षषण्डांश्च विस्तीर्णान् सर्वान् सवनपादपान् ॥ ३ ॥
अन्वेषमाणास्तु तथा सर्वे ते हरियूथपाः ।
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजां ॥ ४ ॥
फलमूलानि वन्यानि भक्षयन्तो वने चराः ।
जानकीं मृगयामासुः पिबन्तः सलिलं शुचि ॥ ५ ॥
तत्रैव वसतां तेषां स कालो व्यत्यवर्तत ।
स हि देशो दुरन्वेष्यो गुहागहनवान् महान् ॥ ६ ॥
त्यक्त्वा तु तं ततो देशं सर्वे ते हरियूथपाः ।
देशमन्यं दुराधर्षमन्वेषन्नकुतोभयाः ॥ ७ ॥
यत्र वै निष्फला वृक्षा निष्पत्राः पुष्पवर्जिताः ।
निस्तोयाः सरितो यत्र यत्र मूलं सुदुर्लभं ॥ ८ ॥
न सन्ति महिषा यत्र न मृगा नापि हस्तिनः ।
शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः ॥ ९ ॥

Digitized by Google

स्निग्धपत्राः स्थलेजाताः पद्मिन्यः फुल्लपङ्कजाः ।
प्रेक्षणीयाः सुगन्धाश्च भ्रमरैः परिशिञ्जिताः ॥ १० ॥
कण्ठो नाम महाभागः सत्यवादी तपोधनः ।
महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ ११ ॥
तस्य तस्मिन् वने पुत्रो बालको दशवार्षिकः ।
प्रनष्टो जीवितान्ताय क्रुद्धः सोऽभून्महामुनिः । ॥ १२ ॥
तेन धर्मात्मना शप्तं सर्वं तत् सुमहद्वनं ।
ततोऽभवदनाधृष्यं मृगपक्षिगणैरपि ॥ १३ ॥
तत्र ते काननान्तानि गिरीणां निर्झराणि च ।
गहनानि नदीनां च व्यचिन्वन् सहिताः समं ॥ १४ ॥
तत्रापि ते महात्मानो नापश्यन् जनकात्मजां ।
हर्तारं रावणं वापि रामस्याप्रियकारिणं ॥ १५ ॥
अवगतं तु ते कृत्वा तत् सर्वं काननं पुनः ।
अन्यदेव महाघोरं प्राविशन् गिरिगह्वरं ॥ १६ ॥
ते प्रविश्य तु तद्भीमं लतागुल्मसमावृतं ।
ददृशुः सुमहाकायमसुरं सुरनिर्भयं ॥ १७ ॥
तं दृष्ट्वा वानरा भीमं स्थितं शैलमिवापरं ।
गाढं परिदधुः सर्वे तस्मिन् पतितचक्षुषः ॥ १८ ॥
सोऽपि मारीचतनयस्तृणवत् तानपश्यत ।
तमङ्गदः सुसंक्रुद्धो युद्धाय समुपाद्रवत् ॥ १९ ॥

Digitized by Google

राक्षसोऽपि सुसंक्रुद्धस्तिष्ठ तिष्ठेत्युपाह्वय ।
मुष्टिमुद्यम्य विनदन्नङ्गदं समुपाद्रवत् ॥ २० ॥
तमापतन्तं वेगेन बालिपुत्रोऽङ्गदो बली ।
रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥ २१ ॥
स बालिपुत्राभिहतो वक्त्राच्छोणितमुद्गिरन् ।
राक्षसो न्यपतद्भूमौ वज्राहत इव द्रुमः ॥ २२ ॥
ते तु तस्मिन् निपतिते वानरा जितकाशिनः ।
प्रव्यचिन्वन् प्रयत्नेन सर्वं तं गिरिगह्वरं ॥ २३ ॥
ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
एकान्ते वृक्षमूलेषु निषेदुर्दीनमानसाः ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वानरप्रत्यागमनं नाम
सप्तचत्वारिंशः सर्गः — असुरबधो नाम
अष्टाचत्वारिंशः सर्गः ॥

Digitized by Google

## XLIX.

ततो वायुसुतः श्रीमानङ्गदप्रमुखान् हरीन् ।
आसीनानब्रवीद्धीमान् वाक्यं वाक्यविशारदः ॥ १ ॥
परिश्रान्तान् महाप्राज्ञः समानीय शनैरिदं ।
सानूनि गिरयो नद्यो दुर्गाणि गहनानि च ॥ २ ॥
निर्झरा गिरिशृङ्गाणि वनान्युपवनानि च ।
गुह्यकानां निवासाश्च गन्धर्वभवनानि च ॥ ३ ॥
गुहाश्च विविधाकारा मार्गितानि ततस्ततः ।
विचितं च वनं सर्वं तृणं च विदलीकृतं ॥ ४ ॥
पश्यामो न च वैदेहीं रावणं चापि राक्षसं ।
सुग्रीवेण यथोद्दिष्टा देशाः सुविचिताः कृताः ॥ ५ ॥
यांश्च नोद्दिष्टवान् देशांस्ते चापि विचिताः पृथक् ।
नैव प्रवृत्तिं शृणुमस्तयोः कस्यचिदन्तिकात् ॥ ६ ॥
कालश्च सुमहान् यातो मार्गतां जनकात्मजां ।
कृतश्च कालपर्यन्तः सुग्रीवश्चोग्रशासनः ॥ ७ ॥
न च सा दृश्यते सीता रामपत्नी च रावणः ।
उच्यतामत्र दुर्धर्षा यन्नः क्षेममनन्तरं ॥ ८ ॥
न हि सा दृश्यते सीता यन्निमित्तं भ्रमामहे ।
एवं ब्रुवाणं तं वाक्यमङ्गदः पवनात्मजं ॥ ९ ॥

Digitized by Google

उवाच वचनं वीरो वानराणां हितावहं ।
सर्व एव समर्थाश्च बलवन्तश्च वानराः ॥ १० ॥
अलं नैराश्यमागत्य सीताधिगमनं प्रति ।
ते वयं परिमार्गामः पुनस्तां जनकात्मजां ॥ ११ ॥
संत्यज्यापि प्रियान् प्राणान् यथा पश्याम मैथिलीं ।
अनिर्वेदश्च दाक्ष्यं च मनसश्च पराजयः ॥ १२ ॥
अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलं ।
यद्यप्येतद्वनं सर्वं विचितं हि समाहितैः ॥ १३ ॥
खेदं त्यक्त्वा पुनः सर्वं विचिन्वन्तु वनौकसः ।
अलं निर्वेदमागत्य न हि नो हीदृशं क्षमं ॥ १४ ॥
सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डश्च वानरः ।
भेतव्यं तस्य शूरस्य रामस्य च महात्मनः ॥ १५ ॥
हितार्थमेतदुक्तं मे क्रियतां यदि रोचते ।
उच्यतां वा क्षमं यन्नः सर्वेषामेव वानराः ॥ १६ ॥
अङ्गदस्य तु तच्छ्रुत्वा वचनं गन्धमादनः ।
उवाच प्रसृतं वाक्यं सर्ववानरसंनिधौ ॥ १७ ॥
सदृशं चानुरूपं च वाक्यमङ्गदभाषितं ।
हितं च पथ्यं च भवेत् क्रियमाणं न संशयः ॥ १८ ॥
पुनर्मार्गामहे शैलान् सकन्दरगुहान्तरान् ।
काननानि विचित्राणि नदीः प्रस्रवणानि च ॥ १९ ॥

Digitized by Google

यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ।
निश्चयं परमं कृत्वा विचिन्वन्तु वनौकसः ॥ २० ॥
ततः सर्वे समुत्थाय वानरास्ते महाबलाः ।
विन्ध्यकाननसंकीर्णां विचेरुर्दक्षिणां दिशं ॥ २१ ॥
ते शारदाभ्रप्रतिमं नगं रजतसंनिभं ।
शृङ्गवन्तं दरीवन्तमारोहन् हरिपुङ्गवाः ॥ २२ ॥
तत्र लोध्रवनं रम्यं सप्तपर्णवनानि च ।
व्यचिन्वंस्ते हरिवराः सीतादर्शनकाङ्क्षिणः ॥ २३ ॥
तस्याग्रमधिरूढास्ते श्रान्ताः सुलघुविक्रमाः ।
न चापश्यन्त वैदेहीं रामस्य महिषीं प्रियां ॥ २४ ॥
ते तु दृष्टिहतं कृत्वा तं शैलं बहुकन्दरं ।
अवारोहन्त हरयः प्रविचित्य समन्ततः ॥ २५ ॥
अवरुह्य च ते भूमिं श्रान्ता दुःखितचेतसः ।
स्थिता मुहूर्त्तं तत्रासन् वृक्षमूलान्युपाश्रिताः ॥ २६ ॥
ते मुहूर्त्तं समाश्वस्ताः किञ्चिन्नष्टपरिश्रमाः ।
पुनरेवोद्यताः कृच्छ्रान्मार्गितुं जनकात्मजां ॥ २७ ॥
दरीशिखरनद्योघलतापादपसंकुलं ।
विन्ध्यं वानरमुख्यास्ते मार्गन्ति स्म समन्ततः ॥ २८ ॥
प्रयत्नतस्ते हरयः समन्ततो गुहासु शैलान्तरनिर्झरेषु ।
अन्विष्यमाणा जनकात्मजां च भ्रमन्ति तस्मिन् गिरिसंकटे तदा ।२९।

Digitized by Google

L.

तमासाद्याङ्गदमुखैर्हरिभिर्हनुमांस्तदा ।
व्यचिनोत् तस्य विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥
ते मार्गमाणाः संरब्धा रामार्थे त्यक्तजीविताः ।
घोराणि गिरिदुर्गाणि प्रविशन्ति प्लवङ्गमाः ॥ २ ॥
तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ।
स हि देशो दुराधर्षो लतागहनवान् महान् ॥ ३ ॥
ततो भूयो विचिन्वाना हनूमत्प्रमुखास्तदा ।
वृक्षच्छायोपविष्टास्ते दृष्ट्वान्योन्यं समब्रुवन् ॥ ४ ॥
परस्परेणावहिताः सीतादर्शनकाङ्क्षिणः ।
गयो गवाक्षो गवयः शरभो गन्धमादनः ॥ ५ ॥
मैन्दश्च द्विविधश्चैव हनूमान् जाम्बवान् नलः ।
अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ ६ ॥
गिरिजालावृतां दुर्गां मार्गित्वा दक्षिणां दिशं ।
क्षुत्पिपासापरिश्रान्ताः क्लान्ताश्च सलिलार्थिनः ॥ ७ ॥
जलं च सीतां च पुनर्मृगयामासुरातुराः ।
समागम्य ततः सर्वे श्रमार्त्ता वनगोचराः ॥ ८ ॥
जग्मुर्विषादं संत्रस्ताः सुग्रीवाद्वानराधिपात् ।
ते विषण्णमुखा दीनाः सुग्रीवभयमोहिताः ॥ ९ ॥
अवीक्षमाणाः सीतां च रावणं च सुदुःखिताः ।

Digitized by Google

बुभुक्षिताः परिश्रान्तास्तृषिताः सलिलार्थिनः ॥ १० ॥
अथावदीर्णं ददृशुर्विलं वृक्षैः समावृतं ।
तमसा महता ग्रस्तमिन्द्रस्यापि भयावहं ॥ ११ ॥
ततः क्रौञ्चाश्च हंसाश्च सारसाः कुकरास्तथा ।
जलार्द्राश्चक्रवाकाश्च पद्मरेणुभिरञ्जिताः ॥ १२ ॥
कुररा मञ्जुलाश्चैव तथैव चलकुक्कुटाः ।
रक्ताङ्गाश्चैव कादम्बा निष्पतन्तः समन्ततः ॥ १३ ॥
कलहंसाः प्लवाश्चैव तथान्ये जलचारिणः ।
ते तु दृष्ट्वा विलं सर्वे विस्मयाकुलचेतसः ॥ १४ ॥
अभवन् दीनमनसो हृष्टाश्च जलशङ्कया ।
ततः पर्वतसंकाशो हनूमान् मारुतात्मजः ॥ १५ ॥
समेतान् वानरान् सर्वानिदं वचनमब्रवीत् ।
गिरिजालावृतां दुर्गां मार्गित्वा दक्षिणां दिशं ॥ १६ ॥
वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीं ।
अस्मादपि तु पश्यामो विलान्निष्पततो बहून् ॥ १७ ॥
जले चरान् पक्षिगणान् शतशोऽथ सहस्रशः ।
नूनं सलिलवानत्र कूपो वा यदिवा ह्रदः ॥ १८ ॥
भविष्यति तथा ह्येते निष्पतन्ति पतत्रिणः ।
प्रविश्यात्रापनेष्यामस्त्रासं सलिलजं वयं ॥ १९ ॥
सीतां च मृगयिष्यामः सर्वत्रास्मिन् महाविले ।



Digitized by Google

व्यक्तं बहूदको ह्यत्र भविष्यति महाह्रदः ॥ २० ॥
इत्युक्त्वा तद्बिलं सर्वे विविशुस्तमसावृतं ।
अचन्द्रसूर्यं हरयो भीकरं लोमहर्षणं ॥ २१ ॥
ततस्तस्मिन् बिले दुर्गे लतापादपसंकुले ।
हनूमानग्रतस्तेषामङ्गदाद्या अनन्तरं ॥ २२ ॥
अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरं ।
स्वसंज्ञया विमूढास्ते वानराश्चक्रुरारवं ॥ २३ ॥
ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ।
विविशुस्तद्बिलं घोरं मासमात्रं प्लवङ्गमाः ॥ २४ ॥
ते कृशा दीनवदनाः परिश्रान्ताः पिपासिताः ।
यदृच्छयैव ददृशुरालोकं सूर्यसंनिभं ॥ २५ ॥
ततस्तं देशमागम्य प्रनष्टतिमिरं शुभं ।
ददृशुः काञ्चनान् वृक्षान् वैश्वानरसमप्रभान् ॥ २६ ॥
सालान् प्रियङ्गून् वकुलान् पनसांश्चम्पकान् वरान् ।
अशोकान् नागपुष्पांश्च नानाशकुनिनादितान् ॥ २७ ॥
तरुणादित्यसंकाशान् रक्तैः किसलयैर्वृतान् ।
जातरूपमयैश्चापि चरद्भिर्मत्स्यकच्छपैः ॥ २८ ॥
नलिनीस्तत्र ददृशुः प्रसन्नसलिलाः शुभाः ।
काञ्चनानि विमानानि स्फाटिकानि गृहाणि च ॥ २९ ॥
तापनीयगवाक्षाणि मुक्ताजालान्तराणि च ।

Digitized by Google

हैमराजतभौमानि वैडूर्यमणिवन्ति च ॥ ३० ॥
प्रभया भ्राजमानानि विचित्राणि वृहन्ति च ।
ददृशुस्तत्र हरयो रत्नराशीन् समन्ततः ॥ ३१ ॥
दन्तकाञ्चनचित्राणि शयनान्यासनानि च ।
स्वास्तीर्णानि विशालानि ददृशुस्ते वनौकसः ॥ ३२ ॥
हैमराजतकांस्यानां भाजनानां च संचयान् ।
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ॥ ३३ ॥
महार्हाणि च पानानि मधूनि विविधानि च ।
कुथानां कम्बलानां च राङ्कवाणां च संचयान् ॥ ३४ ॥
अगुरूणां सुगन्धानां चन्दनानां तथैव च ।
वाससां च महार्हाणामजिनानां च संचयान् ॥ ३५ ॥
तत्र तत्र प्रदीप्तांश्च काञ्चनानां च संचयान् ।
ददृशुर्वानरा दिव्यान् वैश्वानरशिखोपमान् ॥ ३६ ॥
ददृशुस्तत्र चासीनां विष्टरे काञ्चने शुभे ।
तापसीं नियताहारां चीरकृष्णाजिनाम्बरां ॥ ३७ ॥
ततो हनूमान् गिरिसंनिकाशः कृताञ्जलिस्तामभिवाद्य विद्वान् ।
पप्रच्छ का त्वं भवनं विलं च रत्नानि चेमानि वराणि कस्य ॥ ३८ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे दक्षिणस्यां दिशि
सीतान्वेषणं नाम ऊनपञ्चाशः सर्गः — विलप्रवेशो
नाम पञ्चाशः सर्गः ॥

Digitized by Google

LI.

अथ तां हनूमान् प्राज्ञः पुनः कृष्णाजिनाम्बरां ।
अब्रवीत् सुमहाभागां तापसीं शंसितव्रतां ॥ १ ॥
वानराः स्म महाभागे सततं वनगोचराः ।
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतं ॥ २ ॥
क्षुधिताश्च परिश्रान्ताः परिखिन्नाः पिपासिताः ।
इदं धरण्या विवरं प्रविष्टाः स्म जलार्थिनः ॥ ३ ॥
दृष्ट्वाद्भुतमिदं दिव्यं श्रीमत् सुगहनं बिलं ।
भूयो वयं प्रव्यथिताः संभ्रान्ता नष्टचेतसः ॥ ४ ॥
कस्येमे काञ्चना वृक्षास्तरुणादित्यसंनिभाः ।
पुष्पिताः फलिताश्चापि पुण्याः सुरभिगन्धिनः ॥ ५ ॥
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ६ ॥
तापनीयगवाक्षाणि मुक्ताजालान्तराणि च ।
इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ॥ ७ ॥
पद्मानि च महार्हाणि सुगन्धीनि कथं विह ।
कथं मत्स्याश्च सौवर्णाश्चरन्ति विमले जले ॥ ८ ॥
आत्मानमनुभावं च यस्य चेदं महद्बिलं ।
अजानतां नः सर्वेषां व्यक्तं व्याख्यातुमर्हसि ॥ ९ ॥

Digitized by Google

एवमुक्ता हनूमता तापसी धर्मचारिणी ।
प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥ १० ॥
मयो नाम महातेजा मायावी दानवर्षभः ।
तेनेदं निर्मितं सर्वं मायया काञ्चनं विलं ॥ ११ ॥
पुरा दानवमुख्यानां विश्वकर्मा बभूव सः ।
तेनेदं काञ्चनमयं निर्मितं भवनोत्तमं ॥ १२ ॥
स हि वर्षसहस्राणि तपस्तप्त्वा महावने ।
पितामहाद्वरं लेभे सर्वमौशनसं बलं ॥ १३ ॥
विहाय मृत्युं बलवान् सर्वकामेश्वरस्तदा ।
उवास सुखितः कालं कश्चिदस्मिन् महाविले ॥ १४ ॥
तमप्सरसि हेमायां सक्तं दानवपुङ्गवं ।
आगत्याशनिमादाय निजघान पुरन्दरः ॥ १५ ॥
तदिदं ब्रह्मणा दत्तं हेमायां वनमुत्तमं ।
शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयं ॥ १६ ॥
दुहिता हेमसावर्णेरहं नाम्ना स्वयम्प्रभा ।
इदं रक्षामि भवनं हेमाया वानरर्षभाः ॥ १७ ॥
मम प्रियसखी हेमा नृत्यगीतविशारदा ।
तया सखित्वाद्बद्धाहं रक्षामि भवनोत्तमं ॥ १८ ॥
एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ।
हनूमान् कपिशार्दूलः प्रत्युवाच स्वयम्प्रभां ॥ १९ ॥

Digitized by Google

अर्थिनः स्म प्रयच्छार्ये जलं जलजलोचने ।
म्रियमाणान् निराहारान् संजीवयितुमर्हसि ॥ २० ॥
सा सु तस्य वचः श्रुत्वा तापसी धर्मचारिणी ।
आदाय फलमूलानि विधिनोपजहार ह ॥ २१ ॥
प्रतिगृह्य तु ते तस्यास्तदातिथ्यं वने चराः ।
विधिवद्भक्षयामासुस्तां चैव समपूजयन् ॥ २२ ॥
ते भक्षयित्वा तत् सर्वं पीत्वा च विमलं जलं ।
सर्वे ददृशुरालोकं सर्वतो हरियूथपाः ॥ २३ ॥
प्रसन्नमनसः सर्वे सर्वे च विगतज्वराः ।
संजातबलदर्पाश्च तत्रासन् हरियूथपाः ॥ २४ ॥
अथ तानब्रवीत् सर्वान् संहृष्टान् वनगोचरान् ।
इदं वचनमव्यग्रं तापसी ब्रह्मचारिणी ॥ २५ ॥
किं कार्यं कस्य वा हेतोः कान्ताराणि समाश्रिताः ।
कथं चेदं विलं दुर्गं युष्माभिरुपलक्षितं ॥ २६ ॥
वानरा यदि वः खेदः प्रनष्टो मूलभक्षणात् ।
यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यतां ॥ २७ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
आर्जवेन यथा तत्त्वमाख्यातुमुपचक्रमे ॥ २८ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनं ॥ २९ ॥

Digitized by Google

लक्ष्मणेन सह भ्रात्रा भार्यया चापि सीतया ।
तस्य भार्या जनस्थाने रावणेन हृता बलात् ॥ ३० ॥
तस्य वीरः सखा प्राज्ञः सुग्रीवो नाम वानरः ।
राजा वानरवीराणां येन प्रस्थापिता वयं ॥ ३१ ॥
अगस्त्यचरितामाशां दक्षिणां यमरक्षितां ।
सहैभिर्वानरैर्वीरैरङ्गदप्रमुखैर्वृताः ॥ ३२ ॥
रावणं सहिताः सर्वे राक्षसं कामरूपिणं ।
सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ३३ ॥
विचिन्वन्तो वयं सर्वे समग्रां दक्षिणां दिशं ।
नाधिगच्छामो वैदेहीं रावणं चापि तं रिपुं ॥ ३४ ॥
बुभुक्षिताः परिश्रान्ता वृक्षमूलान्युपाश्रिताः ।
विवर्णवादनाः सर्वे सुग्रीवभयकर्षिताः ॥ ३५ ॥
तृष्णया चार्दिताः सर्वे सर्वे ध्यानपरायणाः ।
नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ ३६ ॥
चारयन्तस्ततश्चक्षुः पश्यामो विवृतं विलं ।
लतापादपसंछन्नं महदास्यमिव क्षितेः ॥ ३७ ॥
ततो हंसाः समुत्पेतुः पक्षैः सजलशीकरैः ।
कुरराः सारसाश्चैव मञ्जुलाश्चक्रसाह्वयाः ॥ ३८ ॥
कादम्बा जलपृक्ताश्च तथान्ये च जले चराः ।
ततो नो मतिरुत्पन्ना दृष्ट्वा तान् जलचारिणः ॥ ३९ ॥

Digitized by Google

साधत्र प्रविशामेति मयोक्ता वै प्लवङ्गमाः ।
एषामपि च सर्वेषामेकमत्यमुपागतं ॥ ४० ॥
गच्छामः प्रविशामेति भर्तृकार्ये त्वरावतां ।
परिगृह्य ततो गाढं वयं हस्तं परस्परं ॥ ४१ ॥
इदं प्रविष्टाः सहसा विलं तिमिरसंवृतं ।
एतन्नः कार्यमेतेन कृत्येन विलमागताः ॥ ४२ ॥
त्वां चैवोपगताः सर्वे म्रियमाणा बुभुक्षया ।
आतिथ्यधर्मदत्तानि त्वया मूलफलानि च ॥ ४३ ॥
अस्माभिरुपभुक्तानि बुभुक्षाश्रमकर्षितैः ।
ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ॥ ४४ ॥
एवमुक्ता तु सा तत्र तापसी वायुसूनुना ।
प्रत्युवाच ततः सर्वान् वानरान् संशितव्रता ॥ ४५ ॥
सर्वेषां परितुष्टास्मि वानराणां महौजसां ।
चरन्त्या मम धर्मं हि न कार्यमिह केनचित् ॥ ४६ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे स्वयम्प्रभासंवादो
नाम एकपञ्चाशः सर्गः ॥

Digitized by Google

## LII.

एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ।
हनूमान् कपिशार्दूलः प्रत्युवाच पुनर्वचः ॥ १ ॥
भवत्यानुगृहीताः स्म सर्व एव वनौकसः ।
कृतमातिथ्यमस्माकं श्रमश्चापगतो महान् ॥ २ ॥
कथितं चापि ते तत्त्वमस्माभिर्धर्मचारिणि ।
कारणं चापि वैदेह्या मार्गणं ते निवेदितं ॥ ३ ॥
विचितः शतशश्चायं देशो दक्षिणसंश्रितः ।
प्रेषितैर्वानरेन्द्रेण सीतार्थेऽस्माभिरागतैः ॥ ४ ॥
समयश्च कृतस्तेन कपीनां संनिधौ तदा ।
पूर्णे मासि निवर्तध्वं वसन् बध्यो भवेन्मम ॥ ५ ॥
इति प्रतिसमादिष्टा भर्त्रा वयमनिन्दिते ।
विचिन्वन्तो दिशः सर्वा वानराः शीघ्रगामिनः ॥ ६ ॥
वयं तु दक्षिणामाशां सुग्रीवेण प्रचोदिताः ।
समन्तात् परिधावन्तः पश्यामो विवृतं विलं ॥ ७ ॥
प्रविश्य चैव सहसा सीताविचयकारणात् ।
न च पश्यामि निष्काशं विलादस्मात् सुमध्यमे ॥ ८ ॥
एवमुक्ते हनूमता सर्वे ते वानरास्तदा ।
ऊचुः प्राञ्जलयो भूत्वा तापसीं धर्मचारिणीं ॥ ९ ॥



Digitized by Google

लोलस्वभावैरस्माभिः किञ्चित् ते ऽपकृतं यदि ।
सर्वं मर्षयितव्यं ते सर्वैरेव कृतो ऽञ्जलिः ॥ १० ॥
एकं तु वयमिच्छामस्त्वां वक्तुं धर्मचारिणि ।
श्रूयतां चाभिधास्यामः सर्व एव तवाग्रतः ॥ ११ ॥
सर्वे परिगता देशा बिले ऽस्मिन् सर्ववानरैः ।
न च पश्याम तं देशं प्रविष्टा येन वानराः ॥ १२ ॥
तदिच्छामो वयं सर्वे बिलादस्मान्मनोरमात् ।
त्वत्प्रसादाद्विनिर्गन्तुं त्वं हि नः परमा गतिः ॥ १३ ॥
यः कृतः समयो ऽस्माकं सुग्रीवेण महात्मना ।
स कालः समतिक्रान्तो बिले ऽस्मिन् परिधावतां ॥ १४ ॥
सा त्वमस्माद्विलात् सर्वानुत्तारयितुमर्हसि ।
तीक्ष्णो हि राजा सुग्रीवः प्रियार्थी राघवस्य च ॥ १५ ॥
महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ॥
तच्चापि न कृतं कार्यमिह नः परिलङ्घनात् ॥ १६ ॥
तद्राजभयभीतानां त्राणं भवितुमर्हसि ।
अस्मानस्माद्विलाद्दुर्गादुत्तारयितुमर्हसि ॥ १७ ॥
इति ब्रुवाणांस्तान् सर्वान् सर्वभूतहिते रता ।
उवाच परमप्रीता बिलादुत्तारणेच्छया ॥ १८ ॥
इदं विबुधराजेन बिलं शक्रेण संयुगे ।
असुरार्थे विमुक्तेन पुरा वज्रेण दारितं ॥ १९ ॥

Digitized by Google

दुरासदं सुदुर्धर्षं बहुरत्नसमाकुलं ।
महाप्राज्ञेन पुत्रार्थे निर्मितं विश्वकर्मणा ॥ २० ॥
तस्य वैरातिसर्गेण विलेऽस्मिन् वज्रदारिते ।
जीवितं दुष्करं मन्ये प्रविष्टेन निवर्तितुं ॥ २१ ॥
तपसस्तु प्रभावेन नियमोपार्जितेन च ।
सर्व एव विलादस्मान्निर्गमिष्यथ वानराः ॥ २२ ॥
निमीलयत नेत्राणि सर्वे वानरयूथपाः ।
न हि निष्क्रमितुं शक्यं चक्षुषि ह्यनिमीलिते ॥ २३ ॥
ततस्ते हरयः सर्वे सुकुमारतलैः करैः ।
समं न्यमीलयंश्चक्षुर्विनिर्गमनकाङ्क्षिणः ॥ २४ ॥
वानरास्तु महात्मानो हृस्तरुद्धमुखास्तथा ।
निमेषान्तरमात्रेण विलान्निःसारितास्तया ॥ २५ ॥
ततः सा तान् समुत्तीर्णान् समाश्वास्येदमब्रवीत् ।
एष विन्ध्यो गिरिः श्रीमान् बहुकन्दरनिर्झरः ॥ २६ ॥
एष प्रस्रवणः शैल एष पार्श्वे महोदधिः ।
स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरोत्तमाः ॥ २७ ॥
इत्युक्त्वा तद्विलं घोरं प्रविवेश तपस्विनी ।
तपोयोगप्रभावेन निमेषान्तरचारिणी ॥ २८ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे विलनिष्क्रमणं
नाम द्वापञ्चाशः सर्गः ॥

## LIII.

वानरास्तु महावीर्या हस्तरुद्धमुखाः स्थिताः
चक्षूंष्युन्मीलयामासुर्मुहूर्त्तात् सर्व एव हि ॥ १ ॥
ततस्ते ददृशुर्घोरं समुद्रं वरुणालयं ।
अपारमिव गर्जन्तं महोरगनिषेवितं ॥ २ ॥
ततस्तं देशमागम्य सौम्यं वितिमिरं शुभं ।
यथाप्राप्तमकृत्वा च ततो वचनमब्रुवन् ॥ ३ ॥
रामस्य भार्यां तां द्रष्टुं रावणं च निशाचरं ।
स नः कालो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ ४ ॥
ते विन्ध्यस्य गिरेः पार्श्वे संप्रपुष्पितपादपे ।
उपविश्य महाकायाश्चिन्तामापेदिरे परां ॥ ५ ॥
ततः सिंहर्षभस्कन्धः पीनायतभुजः कपिः ।
युवराजो महद्वाक्यमङ्गदस्तानथाब्रवीत् ॥ ६ ॥
शासनात् कपिसिंहस्य सर्वे वयमिहागताः ।
मासं पूर्णं विलगता नावबुध्याम वानराः ॥ ७ ॥
तस्मिन् व्यतीते काले तु सुग्रीवेण स्वयं कृते ।
प्रायोपवेशनं युक्तं सर्वेषां नो वनौकसां ॥ ८ ॥
सुग्रीवो बलवांस्तीक्ष्णः प्रकृत्या वानरेश्वरः ।
न क्षमिष्यति सोऽस्माकं व्यतिक्रममिमं प्रभुः ॥ ९ ॥

Digitized by Google

न हि क्षास्यति सुग्रीवो घोरं कर्म कृतं महत् ।
सीताधिगमनेऽस्माभिः पापमेव करिष्यति ॥ १० ॥
प्राप्तादेशा वयं सर्वे साधु प्रायमुपास्महे ।
त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥ ११ ॥
न चासौ घातयेद्राजा पश्चात् प्रतिगतान् हि नः ।
बधेनाप्रतिरूपेण मृत्युः श्रेयानिहैव नः ॥ १२ ॥
न चाहं यौवराज्ये वै सुग्रीवेणाभिषेचितः ।
नरेन्द्रेणाभिषिक्तोऽहं रामेण विदितात्मना ॥ १३ ॥
स पूर्वबद्धवैरो मां दृष्ट्वा राजा व्यतिक्रमं ।
घातयिष्यति तीक्ष्णेन दण्डेनातिचिराद्गतं ॥ १४ ॥
किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तकं ।
इहैव प्रायमाशिष्ये रम्ये सागररोधसि ॥ १५ ॥
एतच्छ्रुत्वा तु करुणं युवराजस्य भाषितं ।
ते सर्वे वानरश्रेष्ठा इदं वचनमब्रुवन् ॥ १६ ॥
तीक्ष्णः प्रकृत्या सुग्रीवः प्रियार्थी राघवस्य च ।
अस्मानकृतकार्यांश्च तस्मिंश्च समये गते ॥ १७ ॥
अदृष्टायां च सीतायां दृष्ट्वास्मानागतान् प्रभुः ।
राघवप्रियकामार्थी हनिष्याति न संशयः ॥ १८ ॥
आगांसि न क्षमन्ते हि प्रधानानां नराधिपाः ।
प्रधानभूताश्च वयं सुग्रीवस्य सुसंमताः ॥ १९ ॥

Digitized by Google

श्रेयः प्रायोपगमनमीदृशे कार्य आगते ।
भयार्दितानां तेषां तु प्लवगानां महात्मनां ॥ २० ॥
उवाच वचनं तारस्तत्कालसदृशं हितं ।
विषादस्त्यज्यतामेष सर्वैरेव प्लवङ्गमैः ॥ २१ ॥
प्रविशामो विलं दुर्गं वयं यस्माद्विनिर्गताः ।
यदि वो रोचते वाक्यं सर्वेषां हरिपुङ्गवाः ॥ २२ ॥
क्रियतां किं विमर्षेण श्रेयो नः क्रियतामिदं ।
दुर्धर्षं च महच्चेदं बहुभक्ष्यं च वानराः ॥ २३ ॥
तत्र स्थांश्च न नः शक्ताः स्प्रष्टुं सेन्द्राश्च देवताः ।
किं पुनर्मानुषो रामो लक्ष्मणो वापि वीर्यवान् ।
सुग्रीवो वानरेन्द्रो वा तथा सर्वे वनौकसः ॥ २४ ॥

इदं हि मायाविहितं सुदुर्गमं
प्रभूतभक्ष्योदकभोज्यपेयं ।
ग्रहीतुमिन्द्रोऽपि न नोऽत्र शक्तः
सुग्रीवरामौ सहितौ न चापि ॥ २५ ॥
तदङ्गदस्यापि रुरोच वाक्यम्
ऊचुश्च सर्वे हरयः समेताः ।
यथा न हन्येमहि तद्विधानं
विधीयतां संशयमागताः स्मः ॥ २६ ॥

Digitized by Google

## LIV.

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ।
अथ मेने कृतं राज्यं हनूमानङ्गदेन हि ॥ १ ॥
बुद्ध्यासंशयया युक्तं पितुस्तेजोगुणान्वितं ।
चतुर्दशगुणं मेने हनूमान् बालिनः सुतं ॥ २ ॥
आपूर्यमाणं शश्वश्च तेजोबलपराक्रमैः ।
शशिनं शुक्लपक्षादौ वर्धमानमिवौजसा ॥ ३ ॥
बृहस्पतिसमं बुद्ध्या विक्रमेण समं पितुः ।
शुश्रूषमाणं तारस्य यथा शक्रं बृहस्पतेः ॥ ४ ॥
भर्तुः कार्ये पराक्रान्तः सर्वशास्त्रविशारदः ।
अभिसंधातुमारेभे हनूमानङ्गदं ततः ॥ ५ ॥
स चतुर्णामुपायानां तृतीयमनुवर्तयन् ।
भेदयामास तान् सर्वान् वानरान् वाक्यसंपदा ॥ ६ ॥
तेषु सर्वेषु भिन्नेषु ततोऽभेदयदङ्गदं ।
भीषणैर्बहुभिर्वाक्यैः शिक्षार्थं ह्यङ्गदं च तैः ॥ ७ ॥
सामर्थ्ये त्वं पितुस्तुल्यो युधि मल्लक्रियाविधौ ।
दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥
नित्यमस्थिरचित्तास्तु हरयो हरिसत्तम ।
न वस्तुं विषहिष्यन्ति पुत्रदारैर्विना त्वया ॥ ९ ॥

Digitized by Google

न ते त्वामनुरज्येरन् प्रत्यक्षं प्रवदामि ते ।
यथाहं रामसुग्रीवौ लक्ष्मणश्च पितुस्तव ॥ १० ॥
न चाहं न च ते सर्वे सामदानविभेदनैः ।
न दण्डैर्न युधा शक्याः सुग्रीवादपकर्षितुं ॥ ११ ॥
न विग्रहं समं प्राहुर्दुर्बलस्य बलीयसा ।
आत्मक्षयकरं तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥
यां चेमां मन्यसे वीर गुहां दुर्गसमाश्रयां ।
एषा लक्ष्मणबाणानामीषत्कार्या विदारणे ॥ १३ ॥
स्तोकं हि कृतमिन्द्रेण वज्रेणात्र विदारणं ।
लक्ष्मणस्तु शितैर्बाणैर्भिन्द्यात् पत्रपुटं यथा ॥ १४ ॥
एकैवेन्द्राशनिर्ज्ञेया यया दुर्गं विदारितं ।
लक्ष्मणस्य तु नाराचा बहुशः सन्ति तादृशाः ॥ १५ ॥
यदि कर्ता भवानेवं बिलेऽस्मिन्नभिसंश्रयं ।
ततस्त्वां हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः ।
खेदिता दुःखिताश्चैव त्वां करिष्यन्ति पृष्ठतः ॥ १७ ॥
स विहीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः ।
तृणादपि भयोद्विग्नः स्पन्दमानस्त्रसिष्यसि ॥ १८ ॥
न तु जातु न हिंस्युस्त्वां रामलक्ष्मणसायकाः ।
अपवृत्ता महावेगा यदि त्वं नागमिष्यसि ॥ १९ ॥

Digitized by Google

अस्माभिस्तु गतं सार्द्धं विनीतवदुपस्थितं ।
आनुपूर्व्या स सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २० ॥
धर्मकामः पितृव्यस्ते धर्मात्मा संशितव्रतः ।
शुचिः सत्यप्रतिज्ञश्च न स यातं न साल्वयेत् ॥ २१ ॥
प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितं ।
तस्यापत्यं न चास्त्यन्यत् तस्मादङ्गद गम्यतां ॥ २२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तारवाक्यं नाम
त्रिपञ्चाशः सर्गः — हनूमद्वाक्यं नाम
चतुःपञ्चाशः सर्गः ॥



Digitized by Google

LV.

श्रुत्वा तु हनुमद्वाक्यं प्रसृतं धर्मसंहितं ।
स्वामिसत्कारसंयुक्तमङ्गदः प्रत्युवाच ह ॥ १ ॥
स्थैर्यं धर्मात्मता शौचमानृशंस्यमथार्जवं ।
विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥
कथं स धर्मं जानाति भ्रातरं पूर्वजं हि यः ।
अश्मभिः प्रत्यरौत्सीद्धि ह्यभानुपतने बिले ॥ ३ ॥
भ्रातुर्ज्येष्ठस्य यः क्रुद्धो जीवतो महिषीं प्रियां ।
धर्मतो मातरमिव स्वीकरोति जुगुप्सितः ॥ ४ ॥
सखा पाणिगृहीतश्च कृतकर्मा महायशाः ।
न स्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥ ५ ॥
लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा ।
आरब्धा मार्गितुं सीता धर्मस्तत्र कथं भवेत् ॥ ६ ॥
तस्मिन् पापे कृतघ्ने च स्मृतिहीने चलात्मनि ।
विश्वसेत् कः पुमान् प्राज्ञस्तत्कुलीनो जिजीविषुः ॥ ७ ॥
राजपुत्रं प्रतिष्ठाप्य सगुणं वापि निर्गुणं ।
कथं शत्रुः कुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥
भिन्नमन्त्रो विरुद्धश्च हीनः शक्त्या कथं ह्यहं ।
किष्किन्धां प्राप्य जीवेयं गतायुरिव सङ्गरं ॥ ९ ॥

उपांशुदण्डेन हि मां बन्धनेनावसादयेत् ।
शठः क्रूरः कृतघ्नश्च सुग्रीवो राज्यकारणात् ॥ १० ॥
बन्धनान्मरणाच्छ्रेय इह प्रायोपवेशनं ।
अनुजानीत मां सर्वे गृहान् गच्छत वानराः ॥ ११ ॥
भवन्तः प्रतिगच्छन्तु न गमिष्याम्यहं पुनः ।
इहैव प्रायमाशिष्ये श्रेयो मरणमेव मे ॥ १२ ॥
अभिवादनपूर्वं तु सुग्रीवः प्लवगेश्वरः ।
वाच्यस्ततो यवीयान् मे कुशलं वचनान्मम ॥ १३ ॥
आरोग्यपूर्वं कुशलं वाच्या माता रुमा तथा ।
मातरं चापि मे तारामाश्वासयितुमर्हथ ॥ १४ ॥
प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ।
विनष्टं मामिह श्रुत्वा व्यक्तं त्यक्ष्यति जीवितं ॥ १५ ॥
एतावदुक्त्वा वचनं वृद्धांस्तत्राभिवाद्य च ।
संविवेशाङ्गदो भूमौ रुदन् दर्भेषु दुर्मनाः ॥ १६ ॥
तस्य श्रुत्वा वचस्तत्र करुणं वानरर्षभाः ।
नयनेभ्यस्तु ससृजुर्नेत्रजं वारि दुःखिताः ॥ १७ ॥
सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च बालिनं ।
परिवार्याङ्गदं सर्वे व्यवस्य प्रायमाशितुं ॥ १८ ॥
तद्वाक्यं बालिपुत्रस्य विज्ञाय प्लवगर्षभाः ।
उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥ १९ ॥

Digitized by Google

दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः।
तमेवानुमरिष्यन्तः सर्वे संविविशुर्भुवि ॥ २० ॥
स संविशद्भिर्बहुभिर्महीधरो
महाद्रिशृङ्गप्रतिमैः प्लवङ्गमैः।
बभूव संनादितनिर्भरान्तरो
भृशं नदद्भिर्जलदैरिवाम्बरः ॥ २१ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे प्रायोपवेशनारम्भो
नाम पञ्चपञ्चाशः सर्गः ॥

Digitized by Google

## LVI.

उपविष्टास्तु ते सर्वे तस्मिन् प्रायं धराधरे ।
हरयो गृध्रराजश्च तं देशं समुपास्थितः ॥ १ ॥
सम्पातिर्नाम नाम्ना तु दीर्घजीवी द्विजोत्तमः ।
जटायुषोऽग्रजो भ्राता प्रख्यातबलपौरुषः ॥ २ ॥
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ।
उपविष्टान् हरीन् दृष्ट्वा प्रीतो वचनमब्रवीत् ॥ ३ ॥
विधिः किल परे लोके विधानेनोपतिष्ठते ।
यथेदं विहितं भक्ष्यं चिरान्मे समुपस्थितं ॥ ४ ॥
वरं वराणां खादिष्ये वानराणां मृतं मृतं ।
एवमुक्त्वा तु सम्पाती तानवैक्षत वानरान् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा गृध्रराजस्य दारुणं ।
अङ्गदः परमत्रस्तो हनूमन्तमुवाच ह ॥ ६ ॥
पश्य सीताप्रणाशेन साक्षाद्विवस्वतो यमः ।
इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥
रामस्य न कृतं कार्यं न राज्ञो वचनं कृतं ।
हरीणामियमज्ञाता विपत्तिः समुपागता ॥ ८ ॥
वैदेह्यां क्रियमाणायां कृतं कर्म जटायुषा ।
गृध्रराज्ञा जनस्थाने श्रुतं वस्तन्न संशयः ॥ ९ ॥

Digitized by Google

रावणेन नृशंसेन स वै प्राणैर्वियोजितः ।
एवं सर्वाणि भुतानि तिर्यग्योनिगतान्यपि ॥ १० ॥
प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान् वयं यथा ।
राघवार्थे पराक्रान्तास्तदर्थं त्यक्तजीविताः ॥ ११ ॥
कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीं ।
सुखितो गृध्रराजस्तु रावणेन हतो रणे ॥ १२ ॥
मुक्तश्च सुग्रीवभयाद्गतश्च गतिमुत्तमां ।
पितुर्मम विनाशाय जहार जनकात्मजां ॥ १३ ॥
राक्षसापसदः पापः पौलस्त्यकुलपांसनः ।
मृतान् मृतान् नो गृध्रोऽयं भक्षयिष्यति वानरान् ॥ १४ ॥
जटायुषो बालिनश्च नाशाद्दशरथस्य च ।
हरणे चापि वैदेह्याः संशयं वानरा गताः ॥ १५ ॥
सुदुष्करं कृतं कर्म कैकेय्या धर्मगर्हितं ।
यया समस्तं निहतं कुलमात्मा यशो वयं ॥ १६ ॥
कैकेय्या हि कृते पापे शोकेन स महाद्युतिः ।
तथा क्षितिपतिः प्रेतः पुत्रं संप्रेष्य दण्डकं ॥ १७ ॥
उपकारं तु कुर्वन्ति साधवः सज्जने सदा ।
धन्यः स गृध्राधिपतिर्जटायुः परवीरहा ॥ १८ ॥
यो राघवार्थे निहतो रावणेन पराक्रमात् ।
एतच्छ्रुत्वा तु वचनमङ्गदस्य मुखाच्च्युतं ॥ १९ ॥

Digitized by Google

भ्रातृस्नेहेन सम्पाती सहसा व्यथितोऽभवत् ।
तांश्च प्रायमुपाविष्टांस्तदा गिरिवरे स्थितः ॥ २० ॥
अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो दुरासदः ।
जटायुषं को वदति प्राणैरिष्टतरं मम ॥ २१ ॥
तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ।
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ॥ २२ ॥
कथं जटायुर्निहतः कश्च रामो जटायुषः ।
कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः ॥ २३ ॥
पूर्वजोऽहं जटायुर्मे यवीयान् हरिपुङ्गवाः ।
हतः केन कथं कुत्र कस्माद्वा प्रायमास्यते ॥ २४ ॥
यवीयसो गुणाढ्यस्य श्लाघनीयस्य विक्रमैः ।
नामधेयमिदं भ्रातुश्चिरादद्य मया श्रुतं ॥ २५ ॥
तस्येष्टस्य मम भ्रातुः सखा दशरथो नृपः ।
यस्य रामः प्रियः पुत्रो ज्येष्ठः श्रेष्ठश्च सद्गुणैः ॥ २६ ॥
वनं प्रविष्टः स कथं सीतया सह भार्यया ।
पृष्ठतोऽनुगतो भ्रात्रा लक्ष्मणेन च वीर्यवान् ॥ २७ ॥
कथं चापि हृता सीता केन वा हरिपुङ्गवाः ।
केन वा कारणेनैतत् सर्वमाख्यातुमर्हथ ॥ २८ ॥
सूर्यांशुदग्धपक्षोऽहं न समर्थो विसर्पणे ।
इच्छेयमस्माद्गिर्यग्राद्भवद्भिरवतारणं ॥ २९ ॥

LVII.

शोकाकृष्टस्वरमपि श्रुत्वा ते हरियूथपाः ।
अश्रद्दधुर्नैव तद्वाक्यं कर्मणा तेन शङ्किताः ॥ १ ॥
ते तु प्रायमुपाविष्टाश्चिन्तयन्तोऽवनीमुखाः ।
चक्रुर्बुद्धिमयं पापः सर्वान् नो भक्षयिष्यति ॥ २ ॥
सर्वथा प्रायमासीनान् यदि नो भक्षयिष्यति ।
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥ ३ ॥
एतां बुद्धिं तदा कृत्वा सर्वे वानरपुङ्गवाः ।
ततोऽवतारयामासुर्गिरिशृङ्गात् खगोत्तमं ॥ ४ ॥
अवतार्य ततश्चैनमङ्गदो वाक्यमब्रवीत् ।
प्राग् बभूवर्क्षराजो वै वानरेन्द्रः प्रतापवान् ॥ ५ ॥
ममार्यकः पक्षिवर धार्मिकः शुचिरात्मवान् ।
तस्यात्मजौ महात्मानौ बलवन्तौ बभूवतुः ॥ ६ ॥
बाली च हरिशार्दूलः सुग्रीवश्च परंतपः ।
लोके विश्रुतकर्माणौ राजा चासीत् पिता मम ॥ ७ ॥
राजा सर्वस्य लोकस्य क्षत्रियाणां महारथः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनं ॥ ८ ॥
लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।
पितुर्निर्देशान्निष्क्रान्तो धर्मपन्थानमास्थितः ॥ ९ ॥

Digitized by Google

ब्राह्मणद्वेषिणा नित्यं सर्वपापातिसिद्धिना ।
तस्य भार्या जनस्थानाद्रावणेन हृता छलात् ॥ १० ॥
रामस्य च पितुर्मित्रं जटायुर्नाम धार्मिकः ।
ददर्श नीयमानां तां राक्षसेन स मैथिलीं ॥ ११ ॥
रावणं विरथं कृत्वा मोचयित्वा च मैथिलीं ।
परिश्रान्तश्च वृद्धश्च रावणेन ततो हतः ॥ १२ ॥
एवं गृध्रो हतस्तेन रावणेन बलीयसा ।
मित्रार्थमभिसंतप्तः परं पौरुषमास्थितः ॥ १३ ॥
सत्कृतश्चापि रामेण गतः स्वर्गं न संशयः ।
एवं रामप्रयुक्ताः स्मो मार्गमाणास्ततस्ततः ॥ १४ ॥
वैदेहीं नाधिगच्छामो निशि सूर्यप्रभामिव ।
एवमिक्ष्वाकुनाथस्य वसतः कानने प्रियां ॥ १५ ॥
जहार रावणो भार्यां हत्वा गृध्रं जटायुषं ।
तव भ्रातृनिहन्तारं रामभार्यापहारिणं ॥ १६ ॥
निहन्युः कपयः शीघ्रं जानीयुर्यदि यत्र सः ।
ततो मम पितृव्येण सुग्रीवेण महात्मना ॥ १७ ॥
चकार राघवः सख्यमबधीत् पितरं च मे ।
मम पित्रा विरुद्धं तु सुग्रीवं सचिवैः सह ॥ १८ ॥
निहत्य बालिनं रामस्ततस्तमभिषिक्तवान् ।
स राज्ये स्थापितस्तेन सुग्रीवो वानराधिपः ॥ १९ ॥



Digitized by Google

राज्ञा वानरमुख्यानां येन प्रस्थापिता वयं ।
ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ॥ २० ॥
अविज्ञानात् प्रविष्टाः स्म धरण्यां विवृतं विलं ।
मयस्य मायाविहितं विलं तच्च विचिन्वतां ॥ २१ ॥
व्यतीतस्तत्र नो मासो राज्ञा यः समयः कृतः ।
तेन स्म कपिराजेन प्रेषिताः सर्वतो दिशं ॥ २२ ॥
कृतां संस्थामतिक्रम्य भयेन प्रायमास्महे ।
अस्मदीयैः शरीरैस्त्वं कुरु कार्यं यथेप्सितं ॥ २३ ॥
सुग्रीवे हि भृशं क्रुद्धे राघवे लक्ष्मणे तथा ।
गतानामपि सर्वेषां नास्ति किञ्चन जीवितं ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सम्पातिदर्शनं
नाम षट्पञ्चाशः सर्गः — अङ्गदवाक्यं
नाम सप्तपञ्चाशः सर्गः ॥

## LVIII.

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
सबाष्पं वानरान् गृध्रः प्रत्युवाच महामतिः ॥ १ ॥
यवीयान् मम स भ्राता जटायुर्नाम वानराः ।
यमाख्यात हतं संख्ये रावणेन दुरात्मना ॥ २ ॥
वृद्धभावादपक्षत्वं श्रवणात् तस्य मर्षये ।
न हि मे शक्तिरद्यास्ति भ्रातुर्वधविचारणे ॥ ३ ॥
पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ ।
तरुणौ बलवन्तौ च सहर्षाद्गगनप्लुतौ ॥ ४ ॥
उदयादुदितं दीप्तं ज्वालापिण्डसमप्रभं ।
आदित्यमनुसंयातौ ज्वलन्तं रश्मिमालिनं ॥ ५ ॥
अहं चैव जटायुश्च जवेनोत्पतितौ भृशं ।
मध्यं प्राप्ते ततः सूर्ये जटायुः सोऽवसीदत ॥ ६ ॥
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितं ।
पक्षाभ्यां छादयां चक्रे स्नेहात् परमविह्वलः ॥ ७ ॥
निर्दग्धपक्षः पतितः पर्वतेऽस्मिन् पराजितः ।
अस्मिन् विन्ध्ये न तु भ्रातुः प्रवृत्तिमुपलक्षये ॥ ८ ॥
सुदीर्घस्याथ कालस्य प्रवृत्तिः कथिता हि नः ।
अब्रवीत् पुनरेवेदं बाष्पसंदिग्धया गिरा ॥ ९ ॥

Digitized by Google

न भयं कपिवीराणां विद्यते मत्सकाशतः ।
भ्रातुर्जटायुषो मृत्युं श्रुत्वा शोकेन विह्वलः ॥ १० ॥
युष्मान् समुपसर्पामि प्रवृत्त्यर्थं यवीयसः ।
तदेतदुपलब्धं मे तस्य वीरस्य नैधनं ॥ ११ ॥
एवमुक्तो जटायोस्तु भ्रात्रा तत्त्वार्थदर्शिना ।
युवराजोऽङ्गदो भूयः प्रोवाच वचनं हरिः ॥ १२ ॥
जटायुषः प्रियभ्रातुः श्रुतं ते ब्रुवतो मम ।
आचक्ष्व यदि जानासि भवनं तस्य रक्षसः ॥ १३ ॥
अदीर्घदर्शिनं रौद्रं रावणं राक्षसाधमं ।
इहाभ्यासे विदूरे वा यदि जानासि शंस नः ॥ १४ ॥
ततोऽब्रवीन्महातेजाः सम्पाती गृध्रसत्तमः ।
आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥ १५ ॥
निर्दग्धपक्षो वृद्धोऽहं गतवीर्यश्च वानराः ।
वाङ्मात्रेण तु रामस्य करिष्ये कार्यमुत्तमं ॥ १६ ॥
जानामि गरुडाज्ज्ञातो विष्णोस्त्रीन् विक्रमानपि ।
महासुरविमर्दं च अमृतस्य च मन्थनं ॥ १७ ॥
रामस्य यदिदं कृत्यं कृत्यं तत् परमं मम ।
जरया तु हृतं तेजः प्राणाश्च शिथिला मम ॥ १८ ॥
तरुणी रूपसंपन्ना वराभरणभूषिता ।
ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १९ ॥

Digitized by Google

क्रोशन्ती राम रामेति करुणं लक्ष्मणेति च ।
भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती ॥ २० ॥
सूर्यप्रभेव शैलाग्रे तस्याः कौषेयमुत्तमं ।
असितं राक्षसे भाति महामेघे यथा तडित् ॥ २१ ॥
अहं तु सीतां तां मन्ये रामस्य परिकीर्त्तनात् ।
श्रूयतां चापि वक्ष्यामि निलयं तस्य रक्षसः ॥ २२ ॥
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ।
अध्यास्ते नगरीं लङ्कां रावणो राक्षसाधिपः ॥ २३ ॥
इतो द्वीपः समुद्रस्य समग्रे शतयोजने ।
तस्मिन् लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २४ ॥
तस्यां वसति वैदेही दीना कौषेयवासिनी ।
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ २५ ॥
जनकस्य सुतां राज्ञस्तस्यां द्रक्ष्यथ मैथिलीं ।
लङ्कायामभिगुप्तायां सागरेण समन्ततः ॥ २६ ॥
संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनं ।
विक्रम्य दक्षिणं कूलं ततो द्रक्ष्यथ वानराः ॥ २७ ॥
ते यूयं त्वरिताः सर्वे विक्रमध्वं प्लवङ्गमाः ।
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २८ ॥
आद्यः पन्थाः पतङ्गानां ये च धान्योपजीविनः ।
द्वितीयो बलिभोक्तॄणां ये च पुष्पफले रताः ॥ २९ ॥

Digitized by Google

भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह ।
श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमं ॥ ३० ॥
बलवीर्योपपन्नानां रूपयौवनशालिनां ।
षष्ठो मार्गस्तु हंसानां वैनतेयगतिः परा ॥ ३१ ॥
वैनतेयाच्च नो जन्म पूर्वेषां वानरर्षभाः ।
गर्हितं तु कृतं कर्म येन स्मः पिशिताशनाः ॥ ३२ ॥
इहस्थोऽपि हि पश्यामि रावणं तां च मैथिलीं ।
अस्माकं ह्यतिसौपर्णं दिव्यं चक्षुर्बलं महत् ॥ ३३ ॥
तस्मादाहारलोभेन निसर्गेण च वानराः ।
आयोजनशतात् साग्रात् पश्यामो वयमामिषं ॥ ३४ ॥
अस्माकं विहिता दृष्टिर्निसर्गेण विदूरतः ।
विहिता पादमूले तु वृत्तिश्चरणयोधिनां ॥ ३५ ॥
उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ।
अधिगम्य च वैदेहीं समृद्धार्था भविष्यथ ॥ ३६ ॥
भवद्भिर्नीतिमिच्छामि आत्मानं वरुणालयं ।
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३७ ॥
ते नीत्वा तु समं देशं तीरे नदनदीपतेः ।
निर्दग्धपक्षं सम्पातिमवतार्याथ सागरं ॥ ३८ ॥
प्रत्यानीय पुनश्चापि प्रत्यारोप्य कृतोदकं ।
बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३९ ॥

Digitized by Google

## LIX.

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः ।
उपविष्टं गिरितटे परिवार्योपतस्थिरे ॥ १ ॥
ततोऽङ्गदमुपासीनं निशम्य हरिभिर्वृतं ।
जनितप्रत्ययो हर्षात् सम्पातिः पुनरब्रवीत् ॥ २ ॥
कृत्वा निःशब्दमेकाग्राः शृणुत प्लवगर्षभाः ।
तथ्यं संकीर्तयिष्यामि येन जानामि मैथिलीं ॥ ३ ॥
अस्य विन्ध्यस्य शिखरे पुरास्मि पतितो दिवः ।
दाहदुःखपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ ४ ॥
लब्धसंज्ञस्तु षड्रात्रात् सहजो विह्वलन्निव ।
वीक्षमाणो दिशः सर्वा नाभिजानामि तत्त्वतः ॥ ५ ॥
अथेमान् सागरोद्देशान् नदीः शैलान् वनानि च ।
सरांसि निर्झरांश्चैव पश्यतः स्मृतिराविशत् ॥ ६ ॥
हृष्टपक्षिगणाकीर्णः कन्दरोदककूपवान् ।
दक्षिणस्योदधेः कूले विन्ध्योऽयमिति मे मतिः ॥ ७ ॥
अस्ति चात्राश्रमः पुण्यः सुरैरपि सुपूजितः ।
ऋषिर्निशाकरो नाम तस्मिन्नुग्रतपा अभूत् ॥ ८ ॥
अष्टौ वर्षसहस्राणि तेनास्मिन्नुषितं गिरौ ।
स्वर्गतस्य शतं त्वेकं द्वे शते वसतो मम ॥ ९ ॥

Digitized by Google

अवतीर्य च शैलाग्रात् कृच्छ्रेण विषमाच्छनैः ।
तीक्ष्णदर्भां वसुमतीं विचरामि सुदुःखितः ॥ १० ॥
तमृषिं द्रष्टुकामोऽस्मि प्रयत्नं कृतवान् भृशं ।
जटायुषा मया पूर्वं बहुशोऽभिगतो हि सः ॥ ११ ॥
अभ्यासे चाश्रमात् पुण्याद्ववुर्वाताः सुगन्धिनः ।
वृक्षो नापुष्पितः कश्चिदफलो वात्र दृश्यते ॥ १२ ॥
उत्पत्य चाश्रमद्वारि वृक्षमूलमुपाश्रितः ।
द्रष्टुकामः प्रतीक्षे तं भगवन्तं निशाकरं ॥ १३ ॥
अथ पश्यामि दूरस्थमृषिं ज्वलिततेजसं ।
कृताभिषेकं दुर्धर्षमुपावृत्तमुपान्तिकात् ॥ १४ ॥
तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः ।
परिवार्यानुगच्छन्ति धातारमिव देहिनः ॥ १५ ॥
संप्राप्तं तमृषिं दृष्ट्वा दिग्भ्यस्ते प्रययुस्ततः ।
प्रविष्टस्येव भवनं राज्ञः सामात्यकं बलं ॥ १६ ॥
ऋषिर्दृष्ट्वा तु मां तूर्ष्णीं प्रविवेशाश्रमं प्रभुः ।
स मुहूर्त्ताद्विनिष्क्रम्य ततः कार्यं स पृष्टवान् ॥ १७ ॥
वर्णविवर्णमालोक्य पक्षयोश्च पराजयं ।
नाभिजानामि पूर्वं त्वां पश्चात् स्मृत्वाहमागतः ॥ १८ ॥
तव विह्वलतां दृष्ट्वा रोम्नां न ज्ञातवानहं ।
अग्निदग्धाविमौ पक्षौ शरीरं च व्रणावृतं ॥ १९ ॥

Digitized by Google

गृध्रौ द्वौ दृष्टपूर्वौ मे वायुवेगसमौ जवे ।
गृध्राणां चैव राजानौ भ्रातरौ कालरूपिणौ ॥ २० ॥
तयोर्ज्येष्ठश्च सम्पाती जटायुरनुजश्च ह ।
मानुषं रूपमास्थाय पादौ जगृह्तुर्मम ॥ २१ ॥
तयोस्तुल्यं न पश्यामि रूपेण च बलेन च ।
विचित्य च जगत् कृत्स्नं तयोस्तुल्यो न विद्यते ॥ २२ ॥
कस्ते व्याधिः समुत्पन्नः पक्षयोः पतनं कथं ।
दण्डो वा पातितः केन तथ्यमिच्छामि वेदितुं ॥ २३ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वार्त्तोपलब्धिर्नाम
अष्टापञ्चाशः सर्गः — निशाकरमुनिसंकीर्तनं
नाम नवपञ्चाशः सर्गः ॥

## LX.

एवमुक्तस्त्वहं तेन तदा धर्मात्मना वचः ।
अनुजं संस्मरन् किञ्चिद्बाष्पपूर्णमुखोऽभवं ॥ १ ॥
धारयित्वाश्रुवेगं तु भ्रातृस्नेहादुपस्थितं ।
निवेदयामास तदा महर्षिं संहृताञ्जलिः ॥ २ ॥
भगवन् प्रतिरुद्धत्वाल्लज्जया चापि नामितः ।
तद्वाहर्तुं न शक्नोमि मुखं बाष्पो रुणद्धि मे ॥ ३ ॥
सम्पातिनं मां भगवन् विद्धि दुष्कृतकारिणं ।
भ्रातरं ज्येष्ठमिष्टस्य वीरस्य च जटायुषः ॥ ४ ॥
कारणं चाभिधास्यामि येन पक्षाविमौ मम ।
निर्दग्धौ च विरूपौ च भगवन् श्रोतुमर्हसि ॥ ५ ॥
अहं चैव जटायुश्च संहृष्टौ दर्पमोहितौ ।
वीर्यादुत्पतितौ वेगाज्जिज्ञासन्तौ परां गतिं ॥ ६ ॥
विन्ध्यस्याग्रे पणं कृत्वा मुनीनामग्रतः पुरा ।
पणेषु राज्यमुद्दिश्य कालस्य वशमागतौ ॥ ७ ॥
रविरस्मानुयातव्यो यावदस्तमथोदयं ।
अथ वायुपथं प्राप्य पश्यावः पृथिवीतले ॥ ८ ॥
रथचक्रप्रमाणानि नगराणि क्वचित् क्वचित् ।
क्वचिद्वादित्रनिर्घोषान् ब्रह्मघोषान् क्वचित् क्वचित् ॥ ९ ॥

Digitized by Google

तथैवाप्सरसो बह्वीः पश्यावो मृष्टकुण्डलाः ।
निश्वासतावुभौ वीर्यमन्योन्यस्यान्तरैषिणौ ॥ १० ॥
तूर्णमुत्पत्य चाकाशमादित्यपथमास्थितौ ।
आवमालोकयन्तौ तु वेगमुत्तममागतौ ॥ ११ ॥
पृथिवी च तदा मन्ये नवशाद्वलशोभिता ।
उत्पलैरिव संछन्ना दृश्यते स्म शिलोच्चयैः ॥ १२ ॥
आपगाश्च प्रदृश्यन्ते लाङ्गलस्य गतिर्यथा ।
हिमवांश्चैव विन्ध्यश्च मेरुश्चाप्यर्णवावृताः ॥ १३ ॥
भूतले संप्रकाशन्ते नागा इव शिलातले ।
तीव्रः खेदश्च दाहश्च तदा ग्लानिश्च या परा ॥ १४ ॥
समाविवेश मोहश्च भयं चासीत् तदावयोः ।
दिश्च विज्ञायते पूर्वा न कौवेरी न पश्चिमा ॥ १५ ॥
न याम्या नापि विदिशः काश्चिदर्कप्रतापिताः ।
युगान्तनियते काले पावकेन यथा भवेत् ॥ १६ ॥
अग्निराशिरिवाकाशे भास्करः सर्वलोहितः ।
अप्रमेयवपुस्तस्य नातिव्यक्तं प्रकाशते ॥ १७ ॥
यत्नेन महता व्योम्नि मया समवलोकितः ।
तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति मे ॥ १८ ॥
जटायुर्मामनादृत्य पपातावाङ्मुखस्तदा ।
तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहं ॥ १९ ॥

Digitized by Google

पक्षाभ्यां च मया गुप्तो जटायुर्न व्यदह्यत ।
पश्चाहं भृशनिर्दग्धोऽपतं वायुपथाच्च्युतः ॥ २० ॥
अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ।
अश्रौषं पतितं चाहं जनस्थाने जटायुषं ॥ २१ ॥
पुण्यानामवशेषेण निमग्नो नास्मि सागरे ।
आकाशे वा मृतो नास्मि विषमे वा शिलोच्चये ॥ २२ ॥
राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च ।
सर्वथा मर्तुमिच्छामि पतिष्यामि गिरेस्तटात् ॥ २३ ॥
को हि मे जीवितेनार्थो विपक्षस्याद्य पक्षिणः ।
परैः संचरमाणस्य काष्ठलोष्टसधर्मिणः ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सम्पातिवाक्यं
नाम षष्टितमः सर्गः ॥

Digitized by Google

## LXI.

एवमुक्त्वा मुनिश्रेष्ठं प्ररुदन् दुःखितो भृशं ।
असृजं नेत्रजं वारि गिरिः प्रस्रवणादिव ॥ १ ॥
मां तु बाष्पमुखं दृष्ट्वा महर्षिः करुणान्वितः ।
अथ ध्यात्वा मुहूर्त्तं मां भगवानिदमब्रवीत् ॥ २ ॥
पक्षौ तु ते पक्षिपते पुनरन्यौ भविष्यतः ।
चक्षुषी प्राणबुद्धिश्च विक्रमश्च बलं च ते ॥ ३ ॥
पुराणे तु महत् कृत्यं त्वया कार्यं श्रुतं मया ।
दृष्टं मे तपसा चैव सत्यमेतन्निबोध मे ॥ ४ ॥
राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः ।
तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ५ ॥
अरण्यं भार्यया सार्द्धं भ्रात्रा चैव गमिष्यति ।
कस्मिंश्चिदर्थे पित्रा स नियुक्तः सत्यविक्रमः ॥ ६ ॥
तस्य वै रावणो नाम भार्यामपहरिष्यति ।
राक्षसेन्द्रो जनस्थानादबध्यः सुरदानवैः ॥ ७ ॥
प्रलोभ्यमाना सा कामैर्वरैस्तैस्तैश्च मैथिली ।
याच्यमाना सती तन दुःखमग्ना न भोक्ष्यति ॥ ८ ॥
वरमन्नं च वैदेह्या ज्ञात्वा दास्यति वासवः ।
यदन्नममृतप्रख्यं सुराणामपि दुर्लभं ॥ ९ ॥

तदन्नं मैथिली प्राप्य विज्ञायेन्द्राददिदं विति ।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ १० ॥
यदि जीवति मे भर्ता देवरो वा स लक्ष्मणः ।
इह वा प्रेतलोके वा तयोः स्यादिदमक्षयं ॥ ११ ॥
एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः ।
आख्येया राममहिषी तेभ्यस्ते जनकात्मजा ॥ १२ ॥
सर्वथा नैव गन्तव्यमीदृशः क्व गमिष्यसि ।
एवं कालं प्रतीक्षस्व पक्षौ हि प्रतिलप्स्यसे ॥ १३ ॥
उत्सहेयं तवाद्यैव पक्षौ कर्तुं यथा पुरा ।
इहस्थस्त्वं तु लोकानां महत् कार्यं करिष्यसि ॥ १४ ॥
तवापि खलु तत् कार्यं तयोश्च नृपपुत्रयोः ।
ब्राह्मणानां मुनीनां च देवानां वासवस्य च ॥ १५ ॥
इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
न चिरं जीवितव्यं स्यादतस्त्यक्ष्ये कलेवरं ॥ १६ ॥
एतैश्चान्यैश्च बहुभिर्वाक्यैर्धर्मार्थसंहितैः ।
मामाश्वास्याभ्यनुज्ञाय प्रविवेशाश्रमं मुनिः ॥ १७ ॥
ऋषेश्चाहं वचः कुर्वन् द्रष्टुकामश्च राघवं ।
अतो दुःखसमाविष्टो न त्यजामि कलेवरं ॥ १८ ॥
कन्दराद्विनिःसृत्याहं विचरन् वै शनैः शनैः ।
इममद्रिं समारुह्य भवतः प्रतिपालये ॥ १९ ॥

Digitized by Google

अद्य त्वेतस्य कालस्य साग्रं वर्षशतत्रयं ।
देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ २० ॥
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ।
स मां दहति संतापो वितर्कैर्बहुभिर्वृतं ॥ २१ ॥
उत्थितां महतीं बुद्धिं मरणे संहराम्यहं ।
श्रुतैस्तैः शमयन् वाक्यैरग्निमम्बुघटैरिव ॥ २२ ॥
सत्यार्था निश्चिता बुद्धिर्धर्मार्थे वानरर्षभाः ।
सा मे विनयते दुःखं दीपस्येव शिखा तमः ॥ २३ ॥
भक्ष्यैस्तु विविधैस्तैस्तैः पुत्रो मामिह पुष्यति ।
एकं कालं जनन्यर्थे हिमवन्तं जगाम सः ॥ २४ ॥
पक्षाभ्यामावृतस्तेन रावणो मैथिलीं हरन् ।
संप्रधार्य ममावस्थां धर्मापेक्षी न युद्धवान् ॥ २५ ॥
जानता तु मया वीर्यं रावणस्य दुरात्मनः ।
पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिली कथं ॥ २६ ॥
तस्या विलपितं श्रुत्वा तौ च सीताविनाकृतौ ।
न मे दशरथस्नेहात् पुत्रेणोत्पादितं प्रियं ॥ २७ ॥
इत्येवममृतास्वादं गृध्रराजसमीरितं ।
निशम्य वचनं हृष्टास्ते भूयः प्लवगर्षभाः ॥ २८ ॥
जाम्बवांश्च हरिश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
भूतलात् सहसोत्पत्य गृध्रराजमथाब्रवीत् ॥ २९ ॥

Digitized by Google

कथं पुत्रेण ते दृष्टा ह्रियमाणायतेक्षणा ।
सर्वमाख्याहि भद्रं ते गतिर्भव वनौकसां ॥ ३० ॥
स हरीन् प्रतिसंहृष्टान् सीताश्रुतिसमाहितान् ।
पुनराश्वासयत् पक्षी वचनं चाब्रवीदिदं ॥ ३१ ॥
श्रूयतां हन्त वैदेह्या यथा मे हरणं श्रुतं ।
पुत्रेण हीदमाख्यातं महावीर्येण धीमता ॥ ३२ ॥
अहमस्मिन् गिरौ दुर्गे योजनायतविस्तरे ।
चिरात् प्रपतितो वृद्धः क्षीणवीर्यपराक्रमः ॥ ३३ ॥
स मां गुरुहितः पुत्रः सुपार्श्वस्तु गुणान्वितः ।
आहारेण यथाकालं प्रीणाति पततां वरः ॥ ३४ ॥
तीक्ष्णकोपास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः ।
मृगाणां च भयं तीक्ष्णमस्माकं क्षुद्भयं तथा ॥ ३५ ॥
स कदाचित् क्षुधार्त्तस्य ममाहाराभिकाङ्क्षिणः ।
गतसूर्येऽहनि प्राप्तो मम पुत्रो निरामिषः ॥ ३६ ॥
स मया क्रुद्धभावेन कोपाच्च परिभर्त्सितः ।
क्षुत्पिपासाभिभूतेन कुमारः पतगोत्तमः ॥ ३७ ॥
स ममाहारसंरोधात् पीडितः प्रीतिवर्धनः ।
अनुमान्य यथातथ्यमिदं वचनमब्रवीत् ॥ ३८ ॥
अहं तात यथाकालमाहारार्थी खमुत्प्लुतः ।
महेन्द्रस्य गिरेर्द्वारं महदावृत्य विष्ठितः ॥ ३९ ॥

Digitized by Google

स हि सत्त्वसहस्राणां नगराद्वनचारिणां ।
एको व्यवस्थितः पन्था महेन्द्रगिरिवासिनां ॥ ४० ॥
तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभः ।
खमावृत्याभिधावंश्च स्त्रियमाहृत्य वीर्यवान् ॥ ४१ ॥
सोऽहमभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः ।
तेन साम्ना विनीतेन पन्थानमहमर्थितः ॥ ४२ ॥
न च सामोपपन्नानां प्रहर्ता भुवि विद्यते ।
नीचेनापि महाप्राज्ञ किं पुनर्मद्विधेन वै ॥ ४३ ॥
स यातस्तेजसा व्योम संक्षिपन्निव वेगितः ।
अथाहं खे चरैर्भूतैरभिगम्य सभाजितः ॥ ४४ ॥
दिष्ट्या जीवसि वत्सेति मां ब्रुवंश्च महर्षयः ।
केवलं सकलत्रोऽसौ तेन स्वस्ति न संशयः ॥ ४५ ॥
कथञ्चिद्बालभावात् तु न हतस्त्वं खगोत्तम ।
एष वै रावणो नाम देवदानवमर्दनः ॥ ४६ ॥
अटन् पर्येति पृथिवीं वरदानेन दर्पितः ।
एवमुक्तस्ततोऽहं तैस्तपःसिद्धैर्महर्षिभिः ॥ ४७ ॥
न च मां रक्षसां राजा रावणः प्रतिचोदितः ।
हरन् दाशरथेर्भार्यां रामस्य जनकात्मजां ॥ ४८ ॥
भ्रष्टाभरणकौषेयां शोकमोहपरायणां ।
रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्द्धजां ॥ ४९ ॥

एवं कालात्ययस्तात इति कालविदां वर ।
एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ॥५०॥
एतच्छ्रुत्वा न मे काचिद्बुद्धिरासीत् पराक्रमे ।
अपत्नो हि कथं पत्नी कर्म किञ्चित् समाचरेत् ॥५१॥
यत् तु शक्यं मया कर्तुमपि षड्गुणवर्तिना ।
वाङ्मात्रेण समर्थोऽहं साहाय्ये वानरर्षभाः ॥५२॥
श्रूयतां चाभिधास्यामि भवतां पौरुषाश्रयं ।
यच्च दाशरथेर्दुःखं मम तन्नास्ति संशयः ॥५३॥
भवन्तो हि मतिश्रेष्ठा मतिमन्तो यशस्विनः ।
सहिताः कपिराजेन देवैरपि दुरासदाः ॥५४॥
रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः ।
त्रयाणामपि लोकानां समर्थास्त्राणनिग्रहे ॥५५॥
कामं खलु दशग्रीवस्तेजोबलसमन्वितः ।
भवतां तु समग्राणां न किञ्चित् कर्म दुष्करं ॥५६॥
तदलं कालहान्या तु क्रियतां बुद्धिनिश्चयः ।
न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥५७॥
न हीदमनुरूपं वो भूमौ प्रायोपवेशनं ।
सत्वविक्रमगाम्भीर्यबलयौवनशालिनां ॥५८॥
उत्तिष्ठध्वं न युक्तं हि त्यक्तुं कार्यमनुष्ठितं ।
कृते पुरुषकारे हि मरणं नाभिबाधते ॥५९॥

Digitized by Google

## LXII.

एवं कथयतस्तस्य सम्पातेः सुमहात्मनः ।
उवाच जाम्बवान् वीरस्तत्कालसदृशं वचः ॥ १ ॥
सर्वं साधु सुयुक्तं च भवानर्थं प्रभाषते ।
वृद्धभावानुरूपं च हितं रघुकुलस्य च ॥ २ ॥
अस्माकं तु विचिन्तेयं कथं सागरलङ्घनं ।
भवेदिति महाप्राज्ञ तेन स्मो व्याकुलीकृताः ॥ ३ ॥
तत्र नो गतिसाहाय्यं भवान् वै दातुमर्हति ।
परं पारं समुद्रस्य यथा नो गमनं भवेत् ॥ ४ ॥
तमेवं भाषमाणं तु युक्तमित्यङ्गदोऽब्रवीत् ।
अथाङ्गदमुवाचेदं सम्पाती मधुरं वचः ॥ ५ ॥
न मे दाशरथेः स्नेहादकार्यमिह विद्यते ।
किं करिष्याम्यशक्तस्तु प्लवने प्लवतां वर ॥ ६ ॥
तदैव हि दुरात्मासौ रावणः स्पर्धितो मया ।
यदि पक्षौ न दग्धौ मे भवेतां सूर्यतेजसा ॥ ७ ॥
मामासाद्य हि संक्रुद्धं समरे राक्षसाधमः ।
न जीवेदिति बुद्धिर्मे तत्त्वमेतद्ब्रवीमि ते ॥ ८ ॥
सोऽहं वृद्धः कपिश्रेष्ठ न च शक्तः पराक्रमे ।
लङ्कां नेतुं न शक्नोमि स्वयं त्वां प्लवगेश्वर ॥ ९ ॥

Digitized by Google

असौ ममात्मजः श्रीमान् सुपार्श्वो नामधेयतः ।
एष नेतुं समर्थस्त्वां लङ्कां रावणपालितां ॥ १० ॥
इत्युक्त्वा पतगेन्द्रस्तु स्वं पुत्रं मनसास्मरत् ।
अथ प्रादुरभूत् तत्र मारुतः सुमहाद्भुतः ॥ ११ ॥
पक्षक्षेपपरिक्लिष्टाः सुपार्श्वेऽभ्युपयास्यति ।
सपुष्पाङ्कुरशाखाग्रा नृत्यन्तीव गिरेर्द्रुमाः ॥ १२ ॥
ततः प्रमाणाभ्यधिको गृध्रपुत्रो महाबलः ।
महापर्वतसंकाशो वानरानभ्यवर्तत ॥ १३ ॥
ततः सम्पातिपुत्रस्तु सुपार्श्वः सहसागतः ।
उवाच पितरं वाक्यमाकृतस्तात किं त्वहं ॥ १४ ॥
अथ पुत्रस्य सम्पातिः कथयामास विस्तरं ।
कथयित्वा च गमनं लङ्कां प्रत्यभ्यचोदयत् ॥ १५ ॥
एवमर्थं पितुः श्रुत्वा सुपार्श्वोऽङ्गदमब्रवीत् ।
त्यज्यतां मनसश्चिन्ता तारयिष्ये महार्णवं ॥ १६ ॥
बलं प्रमाणं शक्तिश्च परैरनुपमं मम ।
वेगस्तेजः प्रभावश्च मय्येव ध्रुवमक्षयं ॥ १७ ॥
शिखरात् तु महेन्द्रस्य पर्वतस्य प्लवङ्गमाः ।
सविंशे योजनशते सा लङ्का यत्र रावणः ॥ १८ ॥
क्षिप्रमारोह मे पृष्ठं शीघ्रगोऽहं महाबलः ।
अहं त्वां प्रापयिष्यामि परं पारं महोदधेः ॥ १९ ॥

Digitized by Google

अथोवाच महातेजा गृध्रराजमिदं वचः ।
अङ्गदो वदतां श्रेष्ठो मधुरं वाक्यमुत्तमं ॥ २० ॥
सदृशं चानुरूपं च वचनं भाषते भवान् ।
कृतमेतावदस्माकं यत् प्रवृत्तिर्निवेदिता ॥ २१ ॥
दिव्यविक्रमसंपन्ना बहवः सन्ति वानराः ।
उत्पाट्य तु महेन्द्रं ये गृध्र गच्छेयुरम्बरं ॥ २२ ॥
विश्रम त्वं महाबुद्धे सह पित्रा परंतप ।
कृता हि गमने बुद्धिर्मया रावणदर्शने ॥ २३ ॥
ते तु तद्वचनं श्रुत्वा प्रीतिसंहृष्टमानसाः ।
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ २४ ॥
अथ पवनसमानविक्रमाः
प्लवगपुङ्गवाः परिपूर्णमानसाः ।
प्रियवचनशतानुवादिनो
हरितनयाः स च जाम्बवान् बभूवुः ॥ २५ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे वानराश्वासनं नाम
एकषष्टितमः सर्गः — सुपार्श्वागमनं
नाम द्वाषष्टितमः सर्गः ॥

Digitized by Google

## LXIII.

एवं कथयतस्तस्य पतगस्य महात्मनः ।
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणां ॥ १ ॥
स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैश्च तनुच्छदैः ।
प्रहर्षमतुलं लेभे सपुत्रः स महाबलः ॥ २ ॥
युवराजोऽङ्गदश्चैव जाम्बवांश्चर्क्षपार्थिवः ।
नलो नीलो गयो मैन्दो द्विविदो गवयस्तथा ॥ ३ ॥
तारो गवाक्षः कुमुदः शरभः पनसो हरिः ।
हनूमान् क्रथनश्चैव परं हर्षमुपागमन् ॥ ४ ॥
ऊचुश्च राममाहात्म्यं महावीर्यं च लक्ष्मणं ।
ययोः प्रभावात् सम्पातिरपक्षः पक्षवानभूत् ॥ ५ ॥
अशरीरा ततो वाणी दिव्या प्रादुरभूत् तदा ।
एवमेतद्धरिश्रेष्ठाः प्रभाषध्वं यथावचः ॥ ६ ॥
ततः प्रहृष्टः सम्पाती वानरानिदमब्रवीत् ।
हर्षविस्तीर्णया वाचा स्वरसंपत्प्रसक्तया ॥ ७ ॥
निशाकरस्य विप्रर्षेः प्रभावात् सुमहात्मनः ।
समुत्थिताविमौ पक्षौ सर्वे पश्यन्तु वानराः ॥ ८ ॥
इत्युक्त्वा वानरान् सर्वान् सम्पाती खचरेश्वरः ।
उत्पपात गिरेः शृङ्गाज्जिज्ञासन्नात्मनो गतिं ॥ ९ ॥

Digitized by Google

ततस्तु वानराः सर्वे विस्मयोत्फुल्ललोचनाः ।
पर्वताग्रमवैतन्त सम्पातिगमनं महत् ॥ १० ॥
शिखरस्थस्तु सम्पाती पुनस्तानिदमब्रवीत् ।
हर्षविस्तीर्णया वाचा स्वरसंपत्प्रयुक्तया ॥ ११ ॥
निशाकरस्य तस्यर्षेः सर्वे पश्यत वानराः ।
सम्यक् तप्तस्य तपसः प्रभावमिममीदृशं ॥ १२ ॥
आदित्यरश्मिनिर्दग्धौ पत्तावगमनत्तमौ ।
संवृत्तौ तत्प्रभावेन त्तणेन गमनत्तमौ ॥ १३ ॥
यौवने वर्तमानस्य ममासीद्यः पराक्रमः ।
तमेवाद्याधिगच्छामि बलं पौराणमात्मनः ॥ १४ ॥
सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ।
पत्तलम्भो ममायं वः प्रत्यत्तं संनिदर्शितः ॥ १५ ॥
क्रोशमात्रमितो गत्वा दत्तिणस्योत्तरं गिरिं ।
शतयोजनविस्तीर्णं लङ्घयित्वा महोदधिं ॥ १६ ॥
तत्र त्रिकूटशिखरे रत्तितां रावणेन यां ।
लङ्कां द्रत्त्यथ दुर्धर्षां निहिता यत्र मैथिली ॥ १७ ॥
रत्त्यमाणा सुघोराभी रात्तसीभिः समन्ततः ।
निर्भर्त्स्यमाना बहुशस्तस्य रौद्रस्य शासनात् ॥ १८ ॥
कृतार्थाश्च प्रतीताश्च दृष्ट्वा सीतां तपस्विनीं ।
धर्षयित्वा पुरीं लङ्कां पुनरेष्यथ वानराः ॥ १९ ॥

Digitized by Google

न खल्वस्ति बलं किञ्चिन्मम ज्ञातुमनागतं ।
अनुभावात् तु जानामि महर्षेर्भावितात्मनः ॥ २० ॥
हिमवन्तं गमिष्यामि शङ्करश्वशुरं गिरिं ।
यत्र मे दयिता भार्या तनयाश्च कृतालयाः ॥ २१ ॥
विशालशिखरः प्रांशुर्मलयस्याविदूरतः ।
वानरा गम्यतामेष दक्षिणस्योत्तरो गिरिः ॥ २२ ॥
यः शक्तो योजनशतं निरालम्बमपर्वतं ।
क्रमितुं वानरः शूरः सर्वैः स विनियुज्यतां ॥ २३ ॥
एवमुक्त्वा तु सम्पाती तानामन्त्र्य प्लवङ्गमान् ।
जगामाकाशमाविश्य सुपर्ण इव वेगितः ॥ २४ ॥
प्रोड्डीनं तु खगं दृष्ट्वा प्रहृष्टान् वानरर्षभान् ।
इदं हृष्टतमो भूत्वा बालिपुत्रोऽङ्गदोऽब्रवीत् ॥ २५ ॥
दत्त्वा प्रवृत्तिं वैदेह्या जीवयित्वा च वानरान् ।
गतः स्वं निलयं पक्षी सम्पाती हृष्टमानसः ॥ २६ ॥
तदागच्छत गच्छाम दक्षिणस्योत्तरं गिरिं ।
तत्रस्थाश्चिन्तयिष्यामो लङ्घनं वै महोदधेः ॥ २७ ॥

ततस्तथेति प्रवदन्तमङ्गदं
प्रहर्षयुक्ता अवदन् महाबलाः ।
स चान्वितो ज्ञातिबलेन सत्वरो
जगाम तं गृध्रनिवेदितं गिरिं ॥ २८ ॥

Digitized by Google

अथ पवनसमानविक्रमाः
प्लवङ्गमाः परिपूर्णमानसाः ।
त्वरितमभिमतां दिशं ययुस्ते
कृतमतयः पितृराजरक्षितां ॥ २१ ॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम्
किष्किन्धाकाण्डे सम्पातिपक्षोद्गमनं नाम
त्रिषष्टितमः सर्गः ॥

किष्किन्धाकाण्डं समाप्तं ॥



Digitized by Google

# RAMAYANA

POEMA INDIANO

# DI VALMICI

TESTO SANSCRITO SECONDO I CODICI MANOSCRITTI

DELLA SCUOLA GAUDANA


PER

GASPARE GORRESIO

SOCIO DELLA REALE ACCADEMIA DELLE SCIENZE DI TORINO

CAVALIERE DELL' ORDINE DEL MERITO CIVILE DI SAVOJA

OFFICIALE DELLA LEGION D' ONORE DI FRANCIA

ECC.


---

VOLUME QUARTO





PARIGI

DALLA STAMPERIA NAZIONALE

PER AUTORIZZAZIONE DEL GOVERNO

---

M DCCC XLVIII

# VALMIKI RAMAYANA

*Eastern Recension*

## SUNDARAKANDAM

सुन्दरकाण्डं

EDITED BY
Prof. GASPARE GORRESIO

1980
Indian Heritage Trust
Madras, India

# FOREWORD

Valmiki's Ramayana, the fountain-head of Sanskrit poetry, is current in three main recensions, the Southern, which is most prevalent and has been held to be nearer to the original, and the North-West and the Eastern. The differences among these three versions are in respect of division of the seven books (*Kandas*) and the consequent number of Cantos (*Sargas*) in each book, additional Cantos and verses, absence or presence of particular episodes, sequence of verses in particular contexts, and a large number of variant readings in single verses.

Of these three versions, the North-Western and Eastern are less known. It was to the credit of Professor G. Gorresio, who occupied the first Chair for Sanskrit in Italy, at the University of Turin, that the Eastern version was published in six volumes, with Italian translation and Notes, as early as 1843-67. The Devanagari types for this edition were cut in Paris and the whole undertaking was supported financially by the local ruler whose palace, leading Sanskritists had the pleasure and privilege of visiting during the IInd World Sanskrit Conference in 1975 at the University of Turin.

For the study of the motifs of the Epic and for finding readings more archaic and satisfying, it is most essential

to make a comparative study of these three versions. In respect of the most prominent of these differences, the motifs, some of these current in popular beliefs and in later literature and versions in regional languages, could be found in one or the other of these three recensions.

The edition by Gorresio has been little known in India and copies of it have been, for a long time, not available at all. The present effort to reproduce the volumes of the text not only places this text in the hands of the scholars and others interested in the Ramayana but forms also a homage to a savant who was a pioneer in Ramayana studies.

For the present Indian Reprint, the publishers obtained the permission of the *Biblioteca Nazionale di Torino* through the help of the present successor of Gorresio in the Sanskrit Chair at Turin, Prof. Oscar Botto. Prof. Botto also kindly secured for our use a set of Gorresio's edition which is difficult to get even in Italy.

# PREFACE

कूजन्तं रामरामेति, मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

Prof. Gaspare Gorresio's edition of Valmiki Ramayana has fascinated me ever since I came across his great work about forty years ago. I got in touch with several antiquarian booksellers to acquire a set but without success.

*

When SAMATA BOOKS the new imprint was contemplated in 1977, I sought the advice of Dr. V. Raghavan on the books I proposed to publish and we discussed several ideas. He was helpful from the beginning with his advice and suggestions. He appreciated the idea of my publishing Prof. Gorresio's edition of Valmiki Ramayana, and he took the initiative to obtain a set for the purpose. He also gave me a note for circulation among friends, and it is published as the Foreword to this volume.

*

This publishing project shaped itself receiving the needed impetus from Sundaram Charities who have so readily and generously financed the reprint of the

SUNDARA KANDAM, which has been chosen for publication initially as it is revered all over India as the most important Kanda of the great poem because of its *māntric* power.

सुन्दरे सुन्दरी लङ्का सुन्दरे सुन्दरी कथा।
सुन्दरे सुन्दरी सीता सुन्दरे किं न सुन्दरम्॥
सुन्दरे सुन्दरीं सीतामक्षतां मारुतेर्मुखात्।
श्रुत्वा हृष्टस्तथैवास्तु स रामः सततं हृदि॥

*

Alas! Dr. V. Raghavan is no more. He passed away on this day, Sri Rama Navami, last year. I miss him very much to-day for he would have been overjoyed to see this Indian Reprint. Dr. V. Raghavan, who had specialised in the Ramayana and had brought out a number of studies on the Indian and other Asian versions of the Epic, was to have been in charge of the editorial work of the present Reprint and he was to have contributed the Introduction besides his own critical study of these volumes.

I feel, however, heartened by Prof. Oscar Botto's gesture in offering to translate into English Prof. Gorresio's Introductions and Notes in Italian, in furtherance of the scholarly value of our Reprint. It is proposed to issue them in a separate volume.

*

This facsimile edition incorporates the errata prepared by Prof. Gorresio. Readers may kindly point out any errors they may find. There is a difference between some of the letters of the Sanskrit Alphabet used in this edition and those in use now. Readers will find no difficulty in reading the text and they will be able to identify such letters easily.

This is not a priced publication. It is proposed to issue a trade edition of the 7–volume set in due course. May I express the hope that it will be possible to offer the complete set to the public before the next Sri Rama Navami with *Rasikas* and *Bhaktas* coming forward with their generous support. This numbered edition will be presented by the Indian Heritage Trust to every donor contributing liberally to the Trust as long as copies last.

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥

*Sri Rama Navami,*
March 25, 1980.

V. Sadanand

# अथ
# श्रीरामायणे वाल्मीकीये
# सुन्दरकाण्डं

## I.

आख्याते गृध्रराजेन समुत्पत्य प्लवङ्गमाः ।
सहिताः प्रीतिसंहृष्टाः सिंहनादं विनेदिरे ॥ १ ॥
ते तु गत्वा समुद्रस्य दक्षिणस्योत्तरं गिरिं ।
समुद्रं ददृशुर्भीमं तिमिनक्रसमाकुलं ॥ २ ॥
तं समुद्रं समालोक्य वानरा भीमविक्रमाः ।
सर्वलोकस्य महतः प्रतिविम्बमिवार्णवं ॥ ३ ॥
सत्त्वैर्महद्भिर्विकृतैः क्रीडद्भिर्बहुभिर्जले ।
व्यादितास्यैर्महाकायैरूर्मिभिश्च समावृतं ॥ ४ ॥
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव कुत्रचित् ।
क्वचित् पर्वतमात्रैश्च जलराशिभिरुच्छ्रितैः ॥ ५ ॥
संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
लोमहर्षणमक्षोभ्यं दृष्ट्वा ते सागरं तदा ॥ ६ ॥

# रामायणं

दक्षिणस्य समुद्रस्य तीरमुत्तरमागताः ।
संनिवेशं ततश्चक्रुः सर्वे ते हरियूथपाः ॥७॥
आकाशमिव निष्पारं दृष्ट्वा ते सागरं ततः ।
निषेदुः कपयः केचित् केचिज्जहृषिरे मुदा ॥८॥
विषण्णवदनान् दृष्ट्वा तत्र कांश्चित् प्लवङ्गमान् ।
आश्वासनार्थं तेजस्वी तारेयो वाक्यमब्रवीत् ॥९॥
अनुमान्य हरीन् वृद्धानितराननुशास्य च ।
उवाच मा पुनर्भैष्ट कृतकृत्या दृढं वयं ॥१०॥
निशां तावदिमां सर्वे वसन्तु विगतज्वराः ।
श्वः प्रभाते करिष्यामो यन्नः श्रेयो भविष्यति ॥११॥
अथ रात्र्यां व्यतीतायामङ्गदो हरियूथपः ।
सह तैर्वानरैः सर्वैर्निषसाद गिरेस्तटे ॥१२॥
सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ ।
वासवं परिवार्येव वाहिनी मरुतां यथा ॥१३॥
कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् ।
अङ्गदाद्द्विविदान्मैन्दादन्यतो वा हनूमतः ॥१४॥
तान् विषादेन महता सहसाभिपरिप्लुतान् ।
बालिपुत्रोऽङ्गदो धीमानिदं वचनमब्रवीत् ॥१५॥
न विषादं महावीर्याः कर्तुमर्हथ वानराः ।
विषण्णो हि जनः शक्तो न भवत्यर्थसाधकः ॥१६॥

# सुन्दरकाण्डं

यो विषादं प्रसहते विषमे समुपस्थिते ।
तेजसा तस्य युक्तस्य पुरुषार्थो न रिच्यते ॥ १७॥
न विषादे मनः कार्यं विषादो विषमुत्तमं ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ १८॥
को योजनशतं साग्रं लङ्घयेत प्लवङ्गमाः ।
क इमान् वानरान् सर्वान् मोक्षयेद्वधबन्धनात् ॥ १९॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ।
विक्रम्य सहसा हस्तादमृतं स इहानयेत् ॥ २०॥
चन्द्रादपि हरेल्लक्ष्मीं तेजो वा रविमण्डलात् ।
लङ्कामितो विक्रमेण गच्छेय्य इति मे मतिः ॥ २१॥
विक्रम्य य इतो लङ्कां गत्वा तु पुनराव्रजेत् ।
बुद्ध्वा बुद्ध्वा समाख्यातु यस्य या परमा गतिः ॥ २२॥
यस्य प्रसादात् पुत्रांश्च दारांश्चैव धनानि च ।
इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयं ॥ २३॥
कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलं ।
अभिगच्छेम संहृष्टाः सुग्रीवं च कपीश्वरं ॥ २४॥
यदि कश्चित् समर्थो वः सागरप्लवने हरिः ।
स ददातु जनस्यास्य पुण्यामभयदक्षिणां ॥ २५॥
अङ्गदस्य वचः श्रुत्वा न किञ्चित् कश्चिदब्रवीत् ।
तिमिताश्चाभवन् सर्वे तत्र ते हरियूथपाः ॥ २६॥

अथ तांस्तिमितान् दृष्ट्वा स्विन्नगात्रान् व्यवस्थितान् ।
अङ्गदो हरिशार्दूलः पुनर्वचनमब्रवीत् ॥ २७ ॥
वानराः क इदानीं वो लङ्घयिष्यति सागरं ।
कः करिष्यति रामस्य नृपस्य प्रियमुत्तमं ॥ २८ ॥
क इमान् वानरान् सर्वान् प्राणसंशयमागतान् ।
मोक्षयिष्यति सुग्रीवात् क्रुद्धान्मृत्युमुखादिव ॥ २९ ॥
कः करिष्यति सुग्रीवं सत्यसन्धमसंशयं ।
कः करिष्यति रामस्य प्रियमात्यन्तिकं हरिः ॥ ३० ॥
सर्वे हि प्लवतां श्रेष्ठाः सर्वे विश्रुतपौरुषाः ।
उपदेशे च विख्याताः पूजिताश्चाप्यभीक्ष्णशः ॥ ३१ ॥
न हि नो गमने भङ्गः कदाचित् कस्यचित् क्वचित् ।
सर्वे भवन्तो विख्याता गरुडानिलरंहसः ॥ ३२ ॥
यदि कश्चित् समर्थो वः सागरप्लवने हरिः ।
स ब्रवीतु हरिश्रेष्ठो वीर्यमूर्जितमात्मनः ॥ ३३ ॥
दृष्टपूर्वोऽपि वा लोके श्रुतपूर्वोऽपि वा क्वचित् ।
को वः किम्वा प्रक्रमते हरिश्रेष्ठो महाबलः ॥ ३४ ॥
दृष्ट्वा वीर्यमहं तस्य भवद्भिः सहितस्त्वरन् ।
कृतकृत्यो भविष्यामि ध्रुवं प्लवगसत्तमाः ॥ ३५ ॥
तद्ब्रूत त्वरिताः सर्वे यस्य या परमा गतिः ।
अथाङ्गदवचः श्रुत्वा हृष्टाः शाखामृगर्षभाः ॥ ३६ ॥

# सुन्दरकाण्डं

कृताञ्जलिपुटास्तत्र वाक्यमङ्गदमब्रुवन् ।
सेनामध्यात् समुत्पत्य हर्षयन्तः प्लवङ्गमान् ॥३७॥
गयो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवान् नलः ॥३८॥
नीलस्तारश्च रम्भश्च ऋषभः क्रथनस्तथा ।
सानुप्रस्थोऽथ पनसस्तथा दधिमुखो हरिः ॥३९॥
एतच्छ्रुत्वा महद्वाक्यमङ्गदेन समीरितं ।
वक्तुकामा महात्मानस्तस्थुःप्राञ्जलयस्तदा ॥४०॥
गयः पूर्वमुवाचेदं गमिष्ये दशयोजनं ।
गवाक्षो योजनान्याह गमिष्ये विंशतिं परं ॥४१॥
अब्रवीद्गवयः श्रीमांस्तस्यां वानरसंसदि ।
यामि त्रिंशतमेकाह्ना योजनानीति वीर्यवान् ॥४२॥
अथाद्रिशिखराकारो विक्रमेऽप्रतिमो हरिः ।
शरभः सुमहातेजाः प्रत्युवाचेदमङ्गदं ॥४३॥
चत्वारिंशतमेकाह्ना योजनानि व्रजाम्यहं ।
ततो हेमोपमः श्रीमानब्रवीद्गन्धमादनः ॥४४॥
सुखं योजनपञ्चाशत् क्रमेयं वानरर्षभाः ।
ततस्तु हिमवत्प्रायो मैन्दो वाक्यमथाब्रवीत् ॥४५॥
योजनानामहं षष्टिमुपक्रमितुमुत्सहे ।
द्विविदस्तु महातेजाः प्रत्युवाचेदमङ्गदं ॥४६॥

गमिष्यामि न संदेहः सप्ततिं योजनान्यहं ।
अग्निपुत्रस्ततो धीमान् नीलो वचनमब्रवीत् ॥४७॥
अशीतिं वै गमिष्यामि योजनानां प्लवङ्गमाः ।
त्वष्टुः पुत्रो नलः श्रीमानब्रवीद्धरिपुङ्गवः ॥४८॥
गच्छेयं नवतिं पूर्णां योजनानीति हृष्टवत् ।
तारोऽब्रवीत् ततस्तत्र महाबलपराक्रमः ॥४९॥
नवतिं योजने द्वे च गमिष्यामीति वीर्यवान् ।
ततः सागरगम्भीरो वानरः पवनो जवे ॥५०॥
मन्दरस्य प्रमाणेन भास्कराग्निसमप्रभः ।
तत्र सर्वान् हरिवरान् जाम्बवाननुमान्य ह ॥५१॥
उवाच हरिमुख्यानां संनिधौ प्रहसन्निव ।
तारुण्ये मे बलं वीर्यं यश्चासीद्विक्रमो मम ॥५२॥
नैतावानेव खल्वस्ति गमने वा पराक्रमे ।
यत् कृतं यौवनस्थेन मया तच्छ्रोतुमर्हथ ॥५३॥
मया जटायुषा चैव बलियज्ञे सनातनः ।
विक्रमांस्त्रीन् क्रमन् विष्णुस्त्रिस्त्रिः प्रदक्षिणीकृतः ॥५४॥
बालभावे तदासीन्मे बलमप्रतिमं परं ।
स इदानीमहं वृद्धो न तथा विक्रमान्वितः ॥५५॥
संप्रत्येतावतीं शक्तिं गमने तर्कयाम्यहं ।
दशोनं योजनशतं नवोनं वा न संशयः ॥५६॥

# सुन्दरकाण्डं

एतावता समाप्तिश्च न कार्यस्यास्य दृश्यते ।
हेतुमद्वाहकं वाक्यं तथोक्तवति जाम्बवे ॥ ५७ ॥
ततः पर्वतसंकाशो हनूमानञ्जनासुतः ।
न किञ्चिदब्रवीत् तत्र बलं पौरुषमात्मनः ॥ ५८ ॥
अथोत्तरमुदारार्थमङ्गदो वाक्यमब्रवीत् ।
अनुमान्य महात्मानं जाम्बवन्तं महाकपिं ॥ ५९ ॥
क्रमेयं योजनशतं संदेहो नास्ति वानराः ।
पुनस्त्वागमने शक्तिं शीघ्रं नामर्षयाम्यहं ॥ ६० ॥
बाल्यादक्लिष्टभावाच्च गुणदोषाविचारणात् ।
पित्राहं लालितः स्नेहान्न श्रमं ग्राहितः पुरा ॥ ६१ ॥
तमुवाच महाप्राज्ञो जाम्बवान् प्रहसन्निव ।
नैवं युक्तं त्वया वीर वक्तुं वानरसंसदि ॥ ६२ ॥
वयं सर्वे विजानीमो युवराज बलं तव ।
गत्वा गत्वा निवर्तेथाः शतकृत्वा महार्णवं ॥ ६३ ॥
त्वं हि बालिबलाद्धीनः किञ्चिद्वानरपुङ्गव ।
योजनानां सहस्रस्य भवान् शक्तो हि लङ्घने ॥ ६४ ॥
यादृशो हरिशार्दूलो बालिः प्रथितविक्रमः ।
सुग्रीवश्च महाबाहुस्तादृशस्त्वं हरीश्वर ॥ ६५ ॥
त्वं हि प्रेषयितास्माकं निग्रहानुग्रहे प्रभुः ।
तवाज्ञानिरताः सर्वे वयं मार्गाम मैथिलीं ॥ ६६ ॥

अस्माकं यदि न स्यास्त्वमग्रणीर्वानरेश्वर ।
न कस्यचिद्वयं किञ्चिच्छृणुयाम परस्परं ॥ ६७ ॥
न च प्रेषयिता कश्चित् प्रेष्यैः समनुयुज्यते ।
भवतश्च वयं सर्वे प्रेष्या वानरसत्तम ॥ ६८ ॥
भवान् सर्वत्र चास्माकं स्वामिभावे व्यवस्थितः ।
स्वामी किल त्वं सैन्यस्य मतिरेषा परा सतां ॥ ६९ ॥
अस्माकं च महाबाहो भवान् मूलमरिन्दम ।
तस्मात् कलत्रवत् तात परिपाल्यः सदा भवान् ॥ ७० ॥
मूलं हि सर्वदा रक्ष्यं वृक्षस्य हरिपुङ्गव ।
मूले हि रक्षिते तात गुणाः पुष्पफलोदयाः ॥ ७१ ॥
तद्भवानस्य सैन्यस्य मूलं सत्यपराक्रम ।
वयं तव महाबाहो शाखापत्रफलोपमाः ॥ ७२ ॥
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ।
भवन्तमाश्रित्य वयं समर्था ह्यर्थनिश्चये ॥ ७३ ॥
तन्न शक्यं त्वया गन्तुमस्मानुत्सृज्य वै क्वचित् ।
न चास्माकं क्षमं वीर मोक्तुं त्वां हरिपुङ्गव ॥ ७४ ॥
उक्तवन्तं महाप्राज्ञं जाम्बवं हरियूथपं ।
प्रत्युवाचोत्तरं वाक्यं हृष्टदीनमुखोऽङ्गदः ॥ ७५ ॥
यदि नाहं गमिष्यामि न चान्यो वानरर्षभः ।
गमिष्यति द्रुतं लङ्कां ते वयं संशयं गताः ॥ ७६ ॥

# सुन्दरकाण्डं

पुनः खल्विदमस्माकं प्राप्तं प्रायोपवेशनं ।
न ह्यकृत्वा हरिपतेः संदेशं तस्य धीमतः ॥ ७७ ॥
तत्रापि गत्वा प्राणानां पश्यामि परिरक्षणं ।
अतीतसमयानस्मान् दृष्ट्वा स हरिसत्तमः ॥ ७८ ॥
शङ्कमानश्च मां दृष्ट्वा बधायाज्ञापयिष्यति ।
विशेषेण च सुग्रीवो मय्येव हरिपुङ्गवः ॥ ७९ ॥
निपातयिष्यति क्रूरं दण्डं प्राणापहारिणं ।
निः संशयोऽपि हि बधः सुग्रीवान्मम दृश्यते ॥ ८० ॥
ससंशयं च गत्वा मे पुनः प्रतिनिवर्त्तनं ।
निःसंशयादभावाच्च श्रेयान् संशयितो बधः ॥ ८१ ॥
इत्येवमर्थशास्त्रेषु प्रवृत्तिरुपलभ्यते ।
स हि क्रोधे प्रसादे च प्रभुरस्माकमीश्वरः ॥ ८२ ॥
अकृत्वा तस्य संदेशं विनाशो नियतं भवेत् ।
सोऽहं निःसंशयं यास्ये परं पारं महोदधेः ॥ ८३ ॥
आगमिष्यामि च पुनर्दृष्ट्वैव जनकात्मजां ।
तदेतत् सुविनिश्चित्य बुद्ध्या-सर्वे वनौकसः ॥ ८४ ॥
यन्नः क्षेमं कृत्यतमं द्रुतं तद्वक्तुमर्हथ ।
तद्यथा ह्यस्य कार्यस्य न भवेदन्यथा गतिः ॥ ८५ ॥
यूयं हि बुद्धिशास्त्रज्ञाः संचिन्तयितुमर्हथ ।
तथोक्तवति तद्वाक्यं युवराजेऽङ्गदे तदा ॥ ८६ ॥

कृताञ्जलिपुटाः सर्वे वानराः संप्रणेदिरे ।
न शक्यं भवता गन्तुमितः पदमपि क्वचित् ॥ ८७ ॥
दृष्ट्वा मन्यामहे सर्वे त्वां वयं बालिदर्शनं ।
शुभं वा यदिवा पापं प्रियं वा यदिवाप्रियं ॥ ८८ ॥
सहितास्तत् सहिष्यामः सुग्रीवाद्यद्भविष्यति ।
अङ्गदे तु शुभं वाक्यं प्रत्युक्ते प्लवगर्षभैः ॥ ८९ ॥
अथ तत्र महाबुद्धिर्बुद्ध्या संचिन्त्य वानरान् ।
वानरप्रीतिजननमुदारं वाक्यकोविदः ॥ ९० ॥
जाम्बवानुत्तरं वाक्यमब्रवीद्वालिनः सुतं ।
सेत्स्यते वीर कार्यार्थी न किञ्चित् परिहास्यते ॥ ९१ ॥
अहं संनोदयाम्येनं यः कार्यं साधयिष्यति ।
मुहूर्त्तमात्रं निःशब्दा भवत प्लवगर्षभाः ॥ ९२ ॥
यावन्निःश्रेयसं वाक्यं किञ्चित् प्रकथयाम्यहं ।
जाम्बवेन तथोक्ते तु वाक्ये वानरसंसदि ॥ ९३ ॥
सर्वा सा वानरचमूस्तूष्णीं तमभितः स्थिता ।
सोऽब्रवीत् तु महाबाहुर्जाम्बवो हरियूथपः ॥ ९४ ॥
अङ्गदाभिमुखः स्थित्वा संप्रहृष्टतनूरुहः ।
अहं जानामि तं वीरं वानरं वानरर्षभाः ॥ ९५ ॥
यो गत्वा योजनशतं कृतार्थः पुनरेष्यति ।
शलाकाग्निप्रविष्टा तु संनिकर्षान्न दृश्यते ।

सेव दूरस्थिता दृश्या भवत्यनभिसंवृता ।। १६ ।।

ततः कपिर्वृद्धतमस्तु जाम्बवान्
तूष्णीकमासाद्य सुखोपविष्टं ।
आमन्त्रयामास कपिप्रवीरम्
एकान्तशान्तं हनुमन्तमेकं ।। १७ ।।

इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रक्रमणचिन्ता
नाम प्रथमः सर्गः ।।

# रामायणं

## II.

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीं ।
जाम्बवान् समुदीक्ष्याथ हनूमन्तमुवाच ह ॥ १ ॥
मुख्यं वानरसैन्यस्य सर्वशास्त्रार्थकोविदं ।
तूष्णीमेकान्तमासाद्य हनुमन् किं न भाषसे ॥ २ ॥
यो युक्तो बुद्धिशास्त्राभ्यां यशसा विक्रमेण च ।
कर्मणां चाप्युपायज्ञः सोऽस्यां धुरि नियुज्यते ॥ ३ ॥
अथाब्रवीन्महातेजास्तारेयो वानरोऽङ्गदः ।
अहमेतान् गुणान् मन्ये भूयिष्ठांश्च गुणोत्तरान् ॥ ४ ॥
वानरा वानरश्रेष्ठे वपुष्मति हनूमति ।
एष वायोर्बले तुल्यस्तद्वेग इव शीघ्रगः ॥ ५ ॥
हनूमान् वायुपुत्रस्तु कार्येऽत्र विनियुज्यतां ।
यशस्वी द्युतिमांश्चैव रामसुग्रीवयोर्हितः ॥ ६ ॥
अनेन सह सख्यं च विहितं लोकवीरयोः ।
धर्मजुष्टमिदं कार्यं लोकजुष्टं यशस्करं ॥ ७ ॥
प्रियं वानरराजस्य करिष्यति न संशयः ।
इति वानरमुख्यस्य समनुज्ञाय शासनं ॥ ८ ॥
अथोचुर्हनुमन्तं ते वानरा वानरर्षभं ।
हनुमन् हरिराजस्य सुग्रीवस्य समो ह्यसि ॥ ९ ॥

# सुन्दरकाण्डं

रामलक्ष्मणयोश्चापि तेजसा च बलेन च ।
अरिष्टनेमिनो भ्राता वैनतेयो महाबलः ॥ १० ॥
विक्रमश्चैव वेगश्च ते न तेनावहीयते ।
बलं बुद्धिश्च तेजश्च सत्त्वं च हरिपुङ्गव ॥ ११ ॥
विशिष्टं सर्वभूतानामात्मानं किं न बुध्यसे ।
अप्सराप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ॥ १२ ॥
अभिशापादभूत् तात वानरी कामरूपिणी ।
दुहिता हरिमुख्यस्य कुञ्जरस्य महात्मनः ॥ १३ ॥
अञ्जनेति परिख्याता पत्नी केशरिणः कपेः ।
अभिशापक्षयाज्जाता पुनश्च दिवि चारिणी ॥ १४ ॥
कपित्वे चारुसर्वाङ्गी कदाचित् कामरूपिणी ।
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ॥ १५ ॥
व्यचरत् पर्वतस्याग्रे प्रावृष्यम्बुदसंनिभे ।
विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥ १६ ॥
वस्त्रं तस्या विशालाक्ष्याः पीतरक्तं सुशोभनं ।
स्थितायाः पर्वतस्याग्रे मारुतोऽपाहरच्छनैः ॥ १७ ॥
स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ।
स्तनौ पीनौ च रुचिरौ सुरूपौ प्रियदर्शनौ ॥ १८ ॥
तां विशालायतश्रोणीं तनुमध्यामनिन्दितां ।
दृष्ट्वैव चारुसर्वाङ्गीं मारुतः काममोहितः ॥ १९ ॥

स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत भाविनीं ।
मन्मथाविष्टसर्वात्मा ते मातरमनिन्दितां ।। २० ।।
तत्र सा कोपसंरक्ता सुनेत्रा वाक्यमब्रवीत् ।
एकपत्नीव्रतमिदं को नाशयितुमिच्छति ।। २१ ।।
अञ्जनाया वचः श्रुत्वा प्रत्यभाषत मारुतः ।
न त्वां हिंसामि कल्याणि मारुतोऽस्मि शुभानने ।। २२ ।।
मनसास्मि गतो यत्त्वां परिष्वज्य यशस्विनीं ।
वीर्यवान् बुद्धिसंपन्नस्तव पुत्रो भविष्यति ।। २३ ।।
स त्वं केशरिणः क्षेत्रे संभूतोऽमितविक्रमः ।
मारुतस्यौरसः पुत्रस्तेजसा चासि तत्समः ।। २४ ।।
उद्यन्तं हि त्वमादित्यं बालो दृष्ट्वा महाचले ।
गृहीतुकामः क्रीडार्थं गिरेरुत्पतितो दिवं ।। २५ ।।
शतानि त्रीणि तत्रोर्द्ध्वं योजनानां महाकपे ।
तेजसार्कस्य निर्धूतो न विषादं गतस्तदा ।। २६ ।।
भवत्युत्पतिते शीघ्रमन्तरीक्षं महाकपे ।
क्षिप्तमिन्द्रेण वज्रं ते क्रोधाविष्टेन धीमता ।। २७ ।।
तत्राधःपतितो दिव्यादन्तरीक्षात् कपे तव ।
हनुः शैलेन्द्रशिखरे वाम एष त्वभज्यत ।। २८ ।।
ततस्तु नामधेयं ते हनूमानिति विश्रुतं ।
त्वं हि वायुसुतस्तात बलवान् कपिकुञ्जरः ।। २९ ।।

वयमद्य गतप्राणा न तथा विक्रमोऽस्ति नः ।
तेजोबलसमायुक्तः पक्षिराजसमक्रमः ॥ ३० ॥
त्रिविक्रमः पुरास्माभिः कृतो विष्णुः प्रदक्षिणः ।
त्रिःसप्तकृत्वः पृथिवी कृतास्माभिः प्रदक्षिणा ॥ ३१ ॥
तथा चौषधयोऽस्माभिः संचिता देवशासनात् ।
निष्पन्नममृतं याभिस्तदासीन्नो महद्बलं ॥ ३२ ॥
स इदानीमहं वृद्धो व्यतिक्रान्तपराक्रमः ।
साम्प्रतं मृत्युकालोऽयं भवान् सर्वगुणान्वितः ॥ ३३ ॥
तद्विजृम्भस्व विक्रान्त प्लवतां प्रवरो ह्यसि ।
यो हि विक्रमते धृष्टं विषमे पर्युपस्थिते ॥ ३४ ॥
पर्जन्यमिव भूतानि लोकस्तमनुजीवति ।
एतावान् पुरुषार्थो हि विक्रमस्य प्रयोजनं ॥ ३५ ॥
यस्य पौरुषमश्नन्ति मित्रस्वजनबान्धवाः ।
अमरा इव शक्रस्य सफलं तस्य जीवितं ॥ ३६ ॥
युक्तो यो बुद्धिशास्त्राभ्यां प्रशस्तः पौरुषेण च ।
कर्मणां चाप्युपायज्ञः सोऽस्यां धुरि नियुज्यते ॥ ३७ ॥
तदप्रमेयं वचनं सम्यग्विज्ञाय तत्त्वतः ।
हनूमन्तमथोचुस्ते लङ्कां गच्छेति वानराः ॥ ३८ ॥
दर्शयस्व महातेजो लोके लोकाधिको ह्यसि ।
अप्रमेयाप्रमेयस्य पारं गच्छ महोदधेः ॥ ३९ ॥

विस्मापय जगत् सर्वं विक्रमस्व दिवं कपे ।
सीतायाश्चिरनष्टायास्त्वमद्य पदवीं चर ॥४०॥
कथ्यतां त्रिषु लोकेषु कर्म ते पुण्यकर्मणः ।
अमानुषमिदं कर्म लङ्घनं लवणाम्भसः ॥४१॥
यशसा योजयात्मानमायुषा चापि बान्धवान् ।
निर्देशसिद्ध्या भर्तारं परिज्ञानेन राघवं ॥४२॥
त्वद्वीर्यं द्रष्टुकामेयं सर्वा वानरवाहिनी ।
उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवं ॥४३॥
वायोरपि गतिर्नैषा हनूमन् या गतिस्तव ।
विषण्णान् प्लवगान् सर्वान् हनूमन् किमुपेक्षसे ॥४४॥
विक्रमस्व महाबाहो विष्णुस्त्रीन् विक्रमानिव ।
समर्थो ह्यनिलस्यापि गतिं गन्तुं सुदुर्गमां ॥४५॥
ततः कपीनां प्रवरेण चोदितः
प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवाहिनीं तदा
चकार रूपं प्लवनाय विस्तृतं ॥४६॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमदुत्तेजनं
नाम द्वितीयः सर्गः ॥

# सुन्दरकाण्डं

## III.

संस्तूयमानो हनुमान् व्यवर्धत महाकपिः ।
समाविध्यत लाङ्गूलं चरणौ चान्तकोपमः ॥ १ ॥
तस्य सस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः ।
तेजसा पूर्यमाणस्य रूपमासीत् तदद्भुतं ॥ २ ॥
यथा चन्द्रमसो वृद्ध्या पूर्यते सागरोऽम्भसा ।
ववृधे स्तूयमानस्य तथा वीर्यं हनूमतः ॥ ३ ॥
यथा विजृम्भते सिंहः प्रवृद्धः काननान्तरे ।
मारुतस्यौरसः पुत्रस्तथा संप्रत्यजृम्भत ॥ ४ ॥
अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ।
अम्बरीषोपमं दीप्तं विधूम इव पावकः ॥ ५ ॥
हरीणामुत्थितो मध्यात् संप्रहृष्टतनूरुहः ।
अभिवाद्य कपीन् वृद्धानिदं वचनमब्रवीत् ॥ ६ ॥
एवं भवतु विक्रम्य लङ्घयिष्यामि सागरं ।
कृतार्थश्च निवर्तिष्ये अद्यद्य मे प्लवङ्गमाः ॥ ७ ॥
यद्येतच्छतकृत्वोऽपि गन्तव्यं शतयोजनं ।
अहमेतद्गमिष्यामि प्रीताः सन्तु वनौकसः ॥ ८ ॥
बलं च मम वीर्यं च पिता यश्च मम प्रभुः ।
मातुश्च मम यद्वृत्तं सर्वं तच्छ्रोतुमर्हथ ॥ ९ ॥

प्रत्ययार्थं स्ववीर्यस्य कुलं वक्ष्यामि यादृशं ।
न विस्मयकृताद्भावान्नोत्सेकात् प्रवदाम्यहं ॥१०॥
इदं केशरिणस्तस्य पितुरासीन्मयाऽश्रुतं ।
मम जन्म यथासत्यमद्भुतं मातरिश्वनः ॥११॥
पश्चिमस्य समुद्रस्य तीर्थं पुण्यमभिष्टुतं ।
प्रभासमृषयो यत्र निमज्जन्ति समाहिताः ॥१२॥
तत्राथ धवलो नाम दुष्टः कश्चन दिग्गजः ।
स तानृषीन् भीमबलो जघान किल वीर्यवान् ॥१३॥
तदुपस्पर्शनं पुण्यं गच्छन्तमृषिपूजितं ।
भरद्वाजमृषिं तत्र सोऽभ्यद्रवदजस्तदा ॥१४॥
ततः पर्वतकूटाभः पिता मम महाबलः ।
तं ददर्श महात्मानं हस्तिना समभिद्रुतं ॥१५॥
स तु तूर्णं महाभीमं रूपं कृत्वा पिता मम ।
तस्योपरिष्टान्न्यपतत् कुञ्जरस्य तरस्विनः ॥१६॥
स नखैश्च सुतीक्ष्णाग्रैर्दशनैश्च महाबलः ।
संप्रमथ्याक्षिणी तस्य बिभेद कपिकुञ्जरः ॥१७॥
अवप्लुत्य च वेगेन पिता मम कपीश्वरः ।
तस्य वक्त्रादुभौ दन्तावुज्जहार बलाद्बली ॥१८॥
ताभ्यामेव जघानैनं दन्ताभ्यामेव वेगितः ।
स पपात हतो भूमौ नागो नग इवापरः ॥१९॥

तस्मिन् हते गते रौद्रे गृहीत्वा पितरं मुनिः ।
आजगाम मुनिभ्यश्च न्यवेदयत तं हतं ॥ २० ॥
योऽसौ रौद्रो गजः पुण्यं तीर्थमुत्सादयत्यलं ।
सोऽनेन कपिराजेन निहतोऽक्लिष्टकर्मणा ॥ २१ ॥
परस्परेण संगम्य प्रीतो मुनिगणोऽब्रवीत् ।
यदिच्छति कपिस्तद्धि वरमस्मै प्रदीयतां ॥ २२ ॥
ततस्ते मुनयः सर्वे वरमस्मै ददुस्तदा ।
पित्रे मम महात्मानो वरं वेदविदां वराः ॥ २३ ॥
ततो मम पिता वव्रे पुत्रं मारुतविक्रमं ।
द्विजप्रसादादिच्छेयं कामरूपिणमव्ययं ॥ २४ ॥
ततस्ते मुनयः प्रीता अब्रुवन् पितरं मम ।
भविष्यति सुतस्ते हि यथोद्दिष्टो महाकपे ॥ २५ ॥
इति लब्ध्वा वरं हृष्टः पिता मम महाबलः ।
विजहार यथाकामं वनेषु मधुगन्धिषु ॥ २६ ॥
ततो मे वर्तमाना सा यौवने जननी पुरा ।
विचचाराञ्जना नाम प्रोक्तं जाम्बवता यथा ॥ २७ ॥
दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ।
संवृद्धा मलये दिव्ये पर्वते कामरूपिणी ॥ २८ ॥
सागरे सा शिरःस्नाता रक्तचन्दनरूषिता ।
प्रकीर्य केशांस्तोयार्द्रांस्तस्थौ मलयमूर्द्धनि ॥ २९ ॥

रूपयौवनसंपन्नां तां दृष्ट्वा मारुतस्तदा ।
बाहुभ्यां संपरिष्वज्य ततः प्राञ्जलिरब्रवीत् ॥ ३० ॥
मारुतोऽस्मि विशालाक्षि प्राणः सर्वशरीरिणां ।
अवशस्त्वामभिगतः कन्दर्पशरपीडितः ॥ ३१ ॥
ममाभिगमनाद्दोषं न प्राप्स्यसि वरानने ।
वानरेन्द्रश्च ते पुत्रो भविष्यति महाबलः ॥ ३२ ।
मम लक्ष्मीश्च तेजश्च बलं वीर्यं च यादृशं ।
तादृशेनोपपन्नस्ते पुत्रः शीघ्रं भविष्यति ॥ ३३ ॥
इत्येवं मारुतः श्रीमान् जनन्यै मे ददौ वरं ।
प्राणदः सर्वभूतानां हुताशनसखोऽनिलः ॥ ३४ ॥
वेगवानप्रमेयश्च वायुराकाशगोचरः ।
तस्याहं भीमवेगस्य शीघ्रगस्य महात्मनः ॥ ३५ ॥
मारुतस्यौरसः पुत्रः प्लवने नास्ति मत्समः ।
उत्सहे चापि विस्तीर्णमुल्लिखन्तमिवाम्बरं ॥ ३६ ॥
मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ।
ममोरुभुजवेगेन भविष्यति समुद्धतः ॥ ३७ ॥
संमूर्छितमहाग्राहः समुद्रो वरुणालयः ।
बाहुवेगप्रणुन्नेन समुद्रेण समुत्सहे ॥ ३८ ॥
सर्वां प्लावयितुं लङ्कां सपर्वतवनद्रुमां ।
पन्नगाशनमाकाशे पतन्तं पक्षिसेविते ॥ ३९ ॥

# सुन्दरकाण्डं

अभिभूय जवेनाशु लङ्कां संपादये ध्रुवं ।
संस्पृशन् भुवमागन्तुं पुनरप्यहमुत्सहे ॥४०॥
उदयादुत्थितं चाहं स्वतेजोरश्मिमालिनं ।
अनस्तं गतमादित्यमप्यतिक्रान्तुमुत्सहे ॥४१॥
ऊरुवेगेन महता भीमेन परिकर्षिणा ।
उत्सहेऽहं परिक्रान्तुं सर्वानाकाशगोचरान् ॥४२॥
हरिष्ये चोरुवेगेन प्लवमानो महार्णवं ।
लतानां विविधं पुष्पं पादपानां च सर्वशः ॥४३॥
अनुबन्धेन पुष्पाणां विविधेन सुगन्धिनां ।
भविष्यति च मे पन्थाः स्वर्गमार्ग इवाम्बरे ॥४४॥
पार्श्वे तु मलयस्यास्य रम्ये प्रस्रवणे गिरौ ।
त्यजन्तु हरयः शोकं निर्मोकमिव पन्नगाः ॥४५॥
बलं हि सुमहन्मन्ये आत्मनः प्लवनं प्रति ।
कारणं चाभिधास्यामि श्रोतुमिच्छथ तत्पराः ॥४६॥
ततो निःशब्दसंवृत्ते विस्तीर्णे ज्ञातिमण्डले ।
पवनस्यात्मजः श्रीमान् हनूमान् वाक्यमब्रवीत् ॥४७॥
तदा किल मया बाल्ये मातुरुत्सङ्गशायिना ।
जवापीडनिभस्ताम्रो बालसूर्यो निरीक्षितः ॥४८॥
तत्र कौतूहलं जातं मम स्प्रष्टुं दिवाकरं ।
चापलात् नेत्रदोषस्य मार्तण्डमनुगच्छतः ॥४९॥

जनन्या गिरिसंकाशादङ्कादुत्पत्य सत्वरः ।
दीर्घं कृत्वात्मनः कायमाकाशं क्रान्तवानहं ॥५०॥
समासाद्य तु दीप्तांशुं भास्करं ज्वलनप्रभं ।
निर्दग्धः पतितस्तेन तस्मिन्नेव शिलोच्चये ॥५१॥
मया च पतता तत्र स्वैर्गात्रैः शर्करीकृतं ।
शिखरं च गिरेस्तस्य शिलाश्च समनः शिलाः ॥५२॥
तदिदं विकृतं गात्रं हनुदेशे निरीक्ष्यतां ।
येनास्मि कारणेनाहं हनूमानिति विश्रुतः ॥५३॥
तदहं वानरान् सर्वानङ्गदप्रमुखान् भयात् ।
सुग्रीवान्मोक्षयाम्येको लङ्घनेन महोदधेः ॥५४॥
विमलं घोरमाकाशमुत्पतिष्यन्तमेव हि ।
द्रक्ष्यन्ति निपतन्तं च सर्वभूतानि वानराः ॥५५॥
महामेघप्रतीकाशं मां द्रक्ष्यन्ति दिवौकसः ।
नभ आवृत्य बाहुभ्यां ग्रसमानमिवाम्बरं ॥५६॥
विधमिष्यामि जीमूतान् कम्पयिष्यामि पर्वतान् ।
सागरं क्षोभयिष्यामि प्लवमानः समाहितः ॥५७॥
मनस्विनोर्धर्मवतोर्महासंहननाङ्गयोः ।
ऋष्यमूके निवसतोः शूरयो राजपुत्रयोः ॥५८॥
तयोः प्रियं करिष्यामि वैदेहीलम्भजं महत् ।
आनयिष्यामि वैदेहीं रामस्य महिषीं प्रियां ॥५९॥

# सुन्दरकाण्डं

विस्तृत्य गरुडः पक्षौ हरन्निव महोरगं ।
विहरिष्यामि वेगेन आकाशं विहगालयं ॥ ६० ॥
इहैव मां प्रतीक्षध्वं सर्वे वानरपुङ्गवाः ।
अहमेतद्गमिष्यामि योजनानां शतं द्रुतं ॥ ६१ ॥
आदित्यचन्द्रचरिते ग्रहनक्षत्रसेविते ।
वैनतेयस्य वा शक्तिर्मम वा मारुतस्य वा ॥ ६२ ॥
ऋते सुपर्णराजाच्च मारुताच्च महाजवात् ।
न तद्भूतं प्रपश्यामि यो मां द्रुतमनुव्रजेत् ॥ ६३ ॥
निमेषान्तरमात्रेण निरालम्बनमम्बरं ।
सहसा निपतिष्यामि घनाद्विद्युदिवाम्बरे ॥ ६४ ॥
भविष्यति च मे रूपं प्लवमानस्य सागरं ।
विष्णोर्विक्रममाणस्य यथा देवासुरे पुरा ॥ ६५ ॥
बुद्ध्या यथा च पश्यामि शंसतीव मनश्च मे ।
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ॥ ६६ ॥
मारुतस्य समो वेगे वैनतेयसमो बले ।
अयुतं योजनानां हि गच्छेयमविचारयन् ॥ ६७ ॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ।
विक्रम्य सहसा हस्तादानयेयं सुधामहं ॥ ६८ ॥
चन्द्रादपि तथा कान्तिं सूर्यादपि तथा प्रभां ।
लङ्कामपि समुत्क्षिप्य सीतां तामहमानये ॥ ६९ ॥

तमेवं वानरश्रेष्ठं गर्जन्तं मरुतः सुतं ।
प्रत्युवाच शुभं वाक्यमङ्गदोऽथ विशारदः ॥ ७० ॥
वीर केशरिणः पुत्र वीर्यवान् मारुतात्मज ।
ज्ञातीनां सुमहाशोकस्त्वया प्लवग नाशितः ॥ ७१ ॥
तव कल्याणरुचयः कपिमुख्याः समागताः ।
मङ्गलान्यथ सिद्धयर्थं करिष्यन्ति प्लवङ्गमाः ॥ ७२ ॥
ब्रह्मर्षीणां प्रसादेन कपिवृद्धमतेन च ।
गुरूणां च प्रसादेन प्रक्रम त्वं महार्णवं ॥ ७३ ॥
स्थास्यामश्चैकपादेन यावदागमनं तव ।
त्वद्गतानि हि जीवानि सर्वेषां नः प्लवङ्गम ॥ ७४ ॥
एवमुक्तः परिषदा सोऽङ्गदेन च वानरः ।
अभिवाद्याभिवाद्यांश्च व्यजृम्भत महाकपिः ॥ ७५ ॥
वीक्षां चक्रे च संहृष्टः समन्ताद्वानरर्षभान् ।
उत्पत्य च हरिस्तूर्णमुवाच हरियूथपान् ॥ ७६ ॥
क्रामन्तं वर्द्धमानं च धरणी मां न धारयेत् ।
प्लवतो हि ममाधारं न करिष्यति मेदिनी ॥ ७७ ॥
उच्छ्रितं शैलशिखरं विशालं सुदृढं महत् ।
ज्ञायतां तत्र गच्छामो यन्मे वेगं सहिष्यति ॥ ७८ ॥
पार्श्वे हि मलयस्यायं रम्यः प्रस्रवणो गिरिः ।
आरुह्यैनं क्रमिष्यामि सागरं सरितां पतिं ॥ ७९ ॥

# सुन्दरकाण्डं

## IV.

एवं तस्य ब्रुवाणस्य सर्वे ते वानरर्षभाः ।
चक्रुः प्रणामं मुदिताः शक्रस्येव मरुद्गणाः ॥ १ ॥
तस्य पुष्पवतीं चित्रां वनमालां महात्मनः ।
चक्रुस्ते वानरश्रेष्ठाश्चन्दनैरङ्गदादयः ॥ २ ॥
स तैः परिवृतः श्रीमान् वानरैर्वानरर्षभः ।
आरुरोह गिरिश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ३ ॥
वृतं नानाविधैर्वृक्षैर्मृगसेवितशाद्वलं ।
लतावितानसंछन्नं नित्यपुष्पफलद्रुमं ॥ ४ ॥
मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसंकुलं ।
सिंहशार्दूलचरितं मत्तमातङ्गसेवितं ॥ ५ ॥
महद्भिरुच्छ्रितैः शृङ्गैरुल्लिखन्तमिवाम्बरं ।
सर्वसत्वालयं श्रीमत्सानुमन्तं समन्ततः ॥ ६ ॥
स तस्य शिखरे श्रीमान् महेन्द्रस्य महाकपिः ।
विरराज महातेजा द्वितीय इव पर्वतः ॥ ७ ॥
स पद्भ्यां पीडितस्तेन कपिना पर्वतोत्तमः ।
ररास सिंहाभिहतो महामत्त इव द्विपः ॥ ८ ॥
मुमोच सलिलोत्पीडं विशीर्णशिखरोच्छ्रयः ।
वित्रस्तकपिमातङ्गः प्रकम्पितमहाद्रुमः ॥ ९ ॥

शिलान्तरगताः सर्पाः पीड्यमाना महाविषाः ।
सधूमज्वलितं घोरं मुमुचुर्ज्वलनं मुखैः ॥ १० ॥
नागगन्धर्वमिथुनैर्मानसंसर्गकर्कशैः ।
उत्पतद्भिर्विहङ्गैश्च विद्याधरगणैरपि ॥ ११ ॥
त्यज्यमानमहासानुः संप्रलीनमहोरगः ।
पृथुशृङ्गशिलोद्घातस्तदाभूत् स महागिरिः ॥ १२ ॥
ऋषिभिस्त्राससंभ्रान्तैस्त्यज्यमानः स लक्ष्यते ।
सीदन् महति कान्तारे नाथहीन इवाध्वगः ॥ १३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रलङ्घनव्यवसायो
नाम तृतीयः सर्गः—महेन्द्रारोहणं
नाम चतुर्थः सर्गः ॥

# सुन्दरकाण्डं

## V.

ततो रावणनीतायाः सीतायाः शत्रुकर्षणः ।
इयेष पदमन्वेष्टुं चारणाभ्यर्चिते पथि ॥ १ ॥
स ददर्श महाघोरं सागरं वरुणालयं ।
अपारमिव गर्जन्तं महोरगनिषेवितं ॥ २ ॥
स तिष्ठन् पर्वतस्याग्रे प्रबभौ हरिपुङ्गवः ।
लोकानिव पुरा विष्णुः क्रमिष्यन् विक्रमैस्त्रिभिः ॥ ३ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
ज्ञातकौतूहलास्तत्र द्रष्टुकामास्तदद्भुतं ॥ ४ ॥
पार्थिवानि च भूतानि सागरान्तर्गतानि च ।
शैलद्रुमनिवासीनि तस्थुस्तत्र समन्ततः ॥ ५ ॥
प्रणम्य तु महाबाहुर्देवताभ्यः समाहितः ।
चन्द्रसूर्यमहेन्द्रेभ्यः पवनाय स्वयम्भुवे ॥ ६ ॥
महेश्वराय स्कन्दाय यमाय वरुणाय च ।
रामलक्ष्मणसीताभ्यः सुग्रीवाय महात्मने ॥ ७ ॥
ऋषिभ्यश्च पितृभ्यश्च यक्षेन्द्राय च धीमते ।
भूतेभ्यश्चाञ्जलिं कृत्वा प्लवनाय महोदधेः ॥ ८ ॥
ज्ञातींश्च संपरिष्वज्य कृत्वा चाभिप्रदक्षिणं ।
अरिष्टं मार्गमातिष्ठत् पुण्यं वायुनिषेवितं ॥ ९ ॥

पुनरागमनायेति वानरैरभिपूजितः ।
प्रगृह्य स महाबाहून् लङ्काभिमुखसंस्थितः ॥ १० ॥
समाक्रामत् स तं शैलं स चचाल महागिरिः ।
गिरेराक्रम्यमाणस्य तरवस्तरुणाङ्कुराः ॥ ११ ॥
मुमुचुश्चन्दनरसं रक्तमुत्पलगन्धयः ।
गैरिकाञ्जनसंश्लिष्टा हरितालसमावृताः ॥ १२ ॥
व्यशीर्यन्त गिरेस्तस्य शिलाश्च समनःशिलाः ।
शैलान्तरगताः सर्पाः पीड्यमाना महाविषाः ॥ १३ ॥
सधूमं ज्वलनं घोरं ससृजुस्ते महाबलाः ।
समाक्रान्तो बलवता वानरेण महागिरिः ॥ १४ ॥
मुमोच पाण्डरा धाराः सलिलस्य समन्ततः ।
सिद्धचारणजुष्टानि किन्नरैश्चरितानि च ॥ १५ ॥
गिरेराक्रम्यमाणस्य शिखराणि चकम्पिरे ।
तद्रुणां पुष्पिताग्राणां सर्वपुष्पमशीर्यत ॥ १६ ॥
तेन पादपमुक्तेन कुसुमेन सुगन्धिना ।
सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥ १७ ॥
पद्भ्यां दृढमवस्थानं स कृत्वा कपिकुञ्जरः ।
विकुञ्च्य कर्णौ हनुमानुत्पपात महाबलः ॥ १८ ॥
तदूरुवेगोन्मथिताः शालस्यन्दनचन्दनाः ।
उत्पतन्तं समुत्पेतुर्हनुमन्तं सुपुष्पिताः ॥ १९ ॥

# सुन्दरकाण्डं

समुन्मथितवेगास्ते नगेन्द्रवनरोहिणः ।
सस्कन्धविटपा भग्नाः समुत्पेतुः समन्ततः ॥ २० ॥
तस्य वेगोद्धुतैः पुष्पैः शरीरं शुशुभे चितं ।
ताराभिरतिताम्राभिरुदिताभिरिवाम्बरं ॥ २१ ॥
तस्याम्बरगतौ बाहू शुशुभाते प्रसारितौ ।
अमलाविव निस्त्रिंशौ निर्मुक्तौ भुजगाविव ॥ २२ ॥
मुखे पिङ्गाक्षमुख्यस्य महती परिमण्डले ।
चक्षुषी संप्रकाशेते शनैश्चरबुधाविव ॥ २३ ॥
तस्य वानरसिंहस्य क्रममाणस्य सागरं ।
कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥ २४ ॥
लाङ्गूलं च समाविद्धं प्रभावात् तस्य शोभते ।
अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः ॥ २५ ॥
स्फिग्देशेनातिताम्रेण रराज स महाकपिः ।
महता दारितेनेव गिरिर्गैरिकधातुना ॥ २६ ॥
पतत्पतगसंपाते व्यायतं शुशुभे कपिः ।
प्रवृद्ध इव मातङ्गः कक्षया बध्यमानया ॥ २७ ॥
यं यं देशं समुद्रस्य स जगाम महाकपिः ।
स स तस्याङ्गवातेन सोन्माद इव लक्ष्यते ॥ २८ ॥
प्लवमानं समीक्ष्याथ भुजगाः सागरालयाः ।
व्योम्नि तं कपिशार्दूलं सुपर्णमिव मेनिरे ॥ २९ ॥

दशयोजनविस्तीर्णा दृष्ट्वा त्रिगुणमायतां ।
छायां वानरराजस्य जलजा विस्मयं गताः ॥३०॥
श्वेताभ्रे मेघराजीव वायुपुत्रानुगामिनी ।
तस्य सा शुशुभे छाया प्रवृद्धा लवणाम्भसि ।
खे पुरा वैनतेयस्य हरिष्यत इवामृतं ॥३१॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनुमत्प्लवनं
नाम पञ्चमः सर्गः ॥

# सुन्दरकाण्डं

## VI.

स सागरमनाधृष्यं मध्येन वरुणालयं ।
जगामाकाशमाविश्य वेगेन गरुडो यथा ॥ १ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन् सूर्यसंकाशां सुरसां नागमातरं ॥ २ ॥
अयं वायुसुतः श्रीमाँल्लङ्घयिष्यति सागरं ।
हनूमान् नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥ ३ ॥
राक्षसीरूपमास्थाय सुघोरा पर्वतोपमा ।
दंष्ट्राकरालपिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशं ॥ ४ ॥
बलं विज्ञातुमिच्छामः सत्त्वं चास्य महात्मनः ।
कं करिष्यत्युपायं वा विषादं वा गमिष्यति ॥ ५ ॥
एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ।
समुद्रमध्ये तरसाधारयद्राक्षसीं तनुं ॥ ६ ॥
विकृतं च विरूपं च कृत्वा रूपं भयावहं ।
प्लवमानं हनूमन्तं समावृत्येदमब्रवीत् ॥ ७ ॥
मम भक्ष्यः प्रदिष्टस्त्वं सेन्द्रैः सुरगणैः कपे ।
छायां गृह्णामि भूतानां प्रविशेदं ममाननं ॥ ८ ॥
एवमुक्तः सुरसया प्राञ्जलिर्वानरर्षभः ।
विषण्णवदनः श्रीमानिदं वचनमब्रवीत् ॥ ९ ॥
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनं ।

लक्ष्मणेन सह भ्रात्रा पत्न्या च सह सीतया ॥ १० ॥
जनस्थाननिमित्तं च बद्धवैरस्य राक्षसैः ।
जहार भार्यां वैदेहीं रावणो राक्षसाधिपः ॥ ११ ॥
तस्याः सकाशं यास्यामि दूतोऽहं रामशासनात् ।
कर्तुमर्हसि रामस्य सख्यं विषयवासिनि ॥ १२ ॥
अहं तु मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणं ।
आगमिष्यामि ते वक्त्रं सत्यमेतद्ब्रवीम्यहं ॥ १३ ॥
एवमुक्ता हनूमता सुरसा कामरूपिणी ।
अब्रवीन्नातिवर्तन्ते केचिदेतन्मुखं मम ॥ १४ ॥
एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ।
अब्रवीत् कुरु तद्वक्त्रं येन मां भक्षयिष्यसि ॥ १५ ॥
इत्युक्त्वा सुरसां क्रुद्धस्त्रिंशद्योजनमायतः ।
दशयोजनविस्तारो बभूव पवनात्मजः ॥ १६ ॥
तद्दृष्ट्वा सुमहद्रूपं राक्षसी घोरदर्शना ।
चकार सुरसा वक्त्रं दशयोजनमायतं ॥ १७ ॥
तां दृष्ट्वा दशविस्तारां सोऽभूद्विंशतियोजनः ।
दृष्ट्वा विंशतिविस्तारं सा त्रिंशद्योजनाभवत् ॥ १८ ॥
त्रिंशद्योजनिकां दृष्ट्वा चत्वारिंशद्गतो ह्यसौ ।
चत्वारिंशद्गतं दृष्ट्वा सा तु पञ्चाशतं गता ॥ १९ ॥
स तां पञ्चाशतं दृष्ट्वा षष्टियोजनिकोऽभवत् ।

षष्टियोजनिकं दृष्ट्वा साभूत् सप्ततियोजना ॥ २० ॥
सप्तत्यां राक्षसीं दृष्ट्वा अशीत्येवं गतो ह्यसौ ।
अशीतिकं च तं दृष्ट्वा साभून्नवतियोजना ॥ २१ ॥
नवत्यां राक्षसीं दृष्ट्वा सोऽभवच्छतयोजनः ।
शतयोजनविस्तारं तं दृष्ट्वा राक्षसी ततः ॥ २२ ॥
चकार सुरसा वक्त्रं शतयोजनमायतं ।
अलं खेदेन महता प्रविशस्वोदरं मम ॥ २३ ॥
दीप्तजिह्वं सुरसाया विलोक्य निरयोपमं ।
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ॥ २४ ॥
तस्मिन् मुहूर्त्ते हनूमान् बभूवाङ्गुष्ठमात्रकः ।
सोऽभिपत्य महावक्त्रे निष्पत्य च महाजवः ॥ २५ ॥
अन्तरीक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ।
दाक्षायणि प्रविष्टोऽहं तव वक्त्रं नमोऽस्तु ते ॥ २६ ॥
गच्छामि यत्र वैदेही सत्यं वचनमस्तु ते ।
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ॥ २७ ॥
अब्रवीत् सुरसा देवी स्वेन रूपेण वानरं ।
अर्थसिद्धौ हरिश्रेष्ठ गच्छ सौम्य यथासुखं ॥ २८ ॥
समागमय वैदेह्या रामं दशरथात्मजं ।
अद्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करं ।
साधु साध्विति भूतानि शशंसुर्मारुतात्मजं ॥ २९ ॥

# रामायणं

## VII.

तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति ।
इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ १ ॥
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ।
करोमि क्रममाणस्य लोके वाच्यो भवाम्यहं ॥ २ ॥
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ।
इक्ष्वाकुसचिवश्चायं नावमन्तुमिहार्हति ॥ ३ ॥
तथा मया विधातव्यं विश्राम्यति यथा कपिः ।
शेषं हि मयि विश्रान्तः सुखेनाभिपतिष्यति ॥ ४ ॥
इति कृत्वा मतिं साध्वीं समुद्रस्थितमम्भसि ।
हिरण्यनाभं मैनाकं समुद्रो गिरिमब्रवीत् ॥ ५ ॥
त्वमिहासुरसंघानां पातालतलवासिनां ।
देवराजेन मैनाक परिघः संनिवेशितः ॥ ६ ॥
त्वं चैवाज्ञातवीर्याणां पुनरेवोत्पतिष्यतां ।
पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ७ ॥
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्तितुं ।
तस्मात् त्वां चोदयाम्यस्मादुत्तिष्ठ नगसत्तम ॥ ८ ॥
य एष कपिशार्दूलो ममोपर्येति वीर्यवान् ।
हनूमान् नाम कार्यार्थी भीमकर्मा खमाप्लुतः ॥ ९ ॥

तस्य सख्यं मया देयमिक्ष्वाकुहितकाम्यया ।
मम चेक्ष्वाकवः पूज्या गिरे पूज्यतरास्तव ॥ १० ॥
कुरु साह्याय्यमस्माकं नातः कार्यं त्वयान्यथा ।
कर्तव्यं सुहृदां कार्यं त्वयाद्य वचनान्मम ॥ ११ ॥
सलिलादूर्द्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ।
अस्माकमतिथिर्ह्येष पूज्यश्च प्लवतां वरः ॥ १२ ॥
चामीकरमहानाभ नागगन्धर्वसेवित ।
हनुमान् त्वयि विश्रान्तो मम शेषं क्रमिष्यति ॥ १३ ॥
काकुत्स्थस्यानृशंसस्य मैथिल्याश्च विवासनं ।
श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ १४ ॥
हिरण्यनाभस्तद्वचो निशम्य लवणाम्भसः ।
उत्पपात जलात् तूर्णं महाद्रुमलतावृतः ॥ १५ ॥
ततो नीलात् समुद्रस्य सलिलात् प्रज्वलन्निव ।
उत्पपात महातेजाः पर्वतः सूर्यसंनिभः ॥ १६ ॥
स सागरतलं भित्वाविदूराडुत्थितस्तथा ।
यथा जलधरं भित्वा दीप्तरश्मिर्दिवाकरः ॥ १७ ॥
शातकुम्भमयैः शृङ्गैः सकिन्नरमहोरगैः ।
आदित्योदयसंकाशैरुल्लिखद्भिरिवाम्बरं ॥ १८ ॥
तस्य जाम्बूनदैः शृङ्गैः पर्वतस्य समुच्छ्रितैः ।
आकाशं रत्नसंकाशमभवत् काञ्चनप्रभं ॥ १९ ॥

जातरूपमयैः शृङ्गैः सोऽभवद्गिरिसत्तमः ।
आदित्यवर्णसंकाशो भ्राजमानैः स्वयंप्रभैः ॥ २० ॥
समुत्थितमसङ्गेन हनूमानग्रतः स्थितं ।
मध्ये लवणतोयस्य विघ्नोऽयमिति बुद्धवान् ॥ २१ ॥
तमभ्युत्थितमत्यर्थं महावेगो महाकपिः ।
तरसाच्छादयामास जीमूत इव मारुतिः ॥ २२ ॥
स तथाच्छादितस्तेन कपिना पर्वतोत्तमः ।
बुद्ध्वा तस्य कपेर्वेगं जहर्ष च ननाद च ॥ २३ ॥
स तमाकाशगम्भीरमाकाशस्थमवस्थितं ।
हृष्टः प्रीतियुतं वाक्यमब्रवीत् पर्वतः कपिं ॥ २४ ॥
मानुषं धारयन् रूपमात्मनः शिखरे स्थितः ।
पूर्वकै राघवस्यायमुदधिः संप्रवर्धितः ॥ २५ ॥
स त्वां रामहिते युक्तं प्रत्यर्चयितुमिच्छति ।
कृते हि प्रतिकर्तव्यमेष धर्मः सनातनः ॥ २६ ॥
सोऽयं त्वत्प्रियकामार्थी तत् त्वं संवस्तुमर्हसि ।
त्वन्निमित्तमनेनाहं बहुमानात् प्रचोदितः ॥ २७ ॥
उत्तिष्ठ पर्वतश्रेष्ठ विश्रान्तो वै गमिष्यति ।
योजनानां शतं साग्रं कपिरेष समाहितः ॥ २८ ॥
तव सानुषु विश्रम्य शेषं प्रक्रमतामिति ।
दुष्करं कृतवान् कर्म त्वमिदं वानरेश्वर ॥ २९ ॥

निपत्य मम शृङ्गेषु विश्रम्येह यथासुखं ।
तदिदं गन्धवत् स्वादु शुचि मूलफलं बहु ॥३०॥
समास्वाद्य हरिश्रेष्ठ विश्रान्तो वै गमिष्यसि ।
अस्माकमपि संबन्धः कपिमुख्य महांस्त्वयि ॥३१॥
प्रथितस्त्रिषु लोकेषु महागुणपरिग्रहः ।
वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज ॥३२॥
तेषां मुख्यतमं मन्ये त्वामहं पवनात्मज ।
अतिथिः किल पूजार्हः संप्राप्तः प्राकृतो ह्यपि ॥३३॥
धर्मज्ञश्च कपिश्रेष्ठ किं पुनर्यादृशो भवान् ।
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ॥३४॥
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ।
पूजिते त्वयि पूजार्हे पूजां प्राप्नोति मारुतः ॥३५॥
तस्मात् पूजार्ह एव त्वं शृणु चाप्यत्र कारणं ।
एवमुक्तस्तु हनुमान् सुनाभेन महात्मना ॥३६॥
अन्तरीक्षगतः श्रीमान् मारुतस्यात्मसंभवः ।
स तु दृष्ट्वा महावीर्यं पर्वतं हेमभूषितं ॥३७॥
मणिरत्नाकरं दिव्यं सुनाभमिदमब्रवीत् ।
समुद्रस्याप्रमेयस्य महामकरसंकुले ॥३८॥
किं त्वमन्तर्जले श्रीमान् विगाढो ब्रूहि कारणं ।
एवमुक्तः शुभं वाक्यं सुनाभः पर्वतोत्तमः ॥३९॥

प्रत्युवाच हनूमन्तं वाक्यज्ञो वाक्यकोविदं ।
पक्षवन्तः पुरा शैला बभूवुः शीघ्रगामिनः ॥ ४० ॥
व्रजन्ति स्म दिशः सर्वा गरुडानिलरंहसः ।
ततस्तेषु प्रयातेषु देवसंघाः सहस्रशः ॥ ४१ ॥
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ।
ततः क्रुद्धः सहस्राक्षः पर्वतानां सहस्रशः ॥ ४२ ॥
पक्षांश्चिच्छेद वज्रेण तत्र तत्र शतक्रतुः ।
स मामुपागतः क्रुद्धो वज्रमुद्यम्य देवराट् ॥ ४३ ॥
ततोऽहं सहसा क्षिप्तः पवनेन महात्मना ।
अस्मिँल्लवणतोये च विक्षिप्तो वानरर्षभ ॥ ४४ ॥
गुप्तपक्षः समर्थश्च तव पित्राभिरक्षितः ।
तदा गिरीणां सर्वेषां छिद्यमानान् महात्मना ॥ ४५ ॥
पक्षान् दृष्ट्वा महेन्द्रेण प्रविष्टोऽहं महार्णवं ।
सोऽहमिन्द्रभयात् तात प्रविष्टो वरुणालयं ॥ ४६ ॥
वसाम्यन्तर्जले घोरे भोगवानिव पन्नगः ।
हिरण्यनाभो नाम्नाहं काञ्चनः पर्वतोत्तमः ॥ ४७ ॥
मा भैषीर्विश्रमात्र त्वं त्वदर्थमहमुत्थितः ।
ततोऽहं मानयामि त्वां मान्यस्यासि सुतो मम ॥ ४८ ॥
एष मे त्वयि संबन्धः कपिमुख्य महागुणः ।
तस्मिन्नेवं गते कार्ये सागरस्य ममैव च ॥ ४९ ॥

प्रीतिं प्रीतिमतः कर्तुं त्वमर्हसि महाकपे ।
श्रममोक्षाय पाद्यार्घ्यं गृहाण च कपीश्वर ॥५०॥
प्रीतिं च बहुमन्यस्व प्रीतोऽस्मि तव दर्शने ।
इत्युक्तः शैलराजेन हनूमान् मारुतात्मजः ॥५१॥
अब्रवीत् कृतकृत्योऽस्मि विश्रान्तश्च नगोत्तम ।
प्रीतोऽस्मि कृतमातिथ्यं हार्दिकं चापि दर्शितं ॥५२॥
त्वरया कार्यहेतोर्मे कालश्चैवातिवर्तते ।
क्रमिष्यता प्रतिज्ञातं मया च ज्ञातिमण्डले ॥५३॥
अप्राप्ते योजनशते नान्तरास्थेयमित्युत ।
तस्मादिह न तिष्ठामि त्वयि पर्वतसत्तम ॥५४॥
स्पृशामि त्वाहमङ्गुल्या मानितोऽस्तु भवानिति ।
इत्युक्त्वा पाणिना शैलं संस्पृश्य हरिपुङ्गवः ॥५५॥
पितुः पन्थानमास्थाय जगाम प्रहसन्निव ।
स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ॥५६॥
पूजितश्चोपपन्नाभिराशीर्भिरनिलात्मजः ।
शुशुभे सुमहातेजा महाकायो महाबलः ॥५७॥
वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ।
सेविते वारिधाराभिः पतगैश्च निषेविते ॥५८॥
चरिते कौशिकाचार्यैरैरावणनिषेविते ।
सिंहकुञ्जरशार्दूलतुरगोरगवाहनैः ॥५९॥

विमानैः संपतद्भिश्च विविधैः समलंकृते ।
ग्रहचन्द्रार्कनक्षत्रतारागणनिषेविते ॥ ६० ॥
महर्षिदेवगन्धर्वयक्षराक्षससेविते ।
आयाते पक्षिसंघानां पक्षिराडिव सोऽव्रजत् ॥ ६१ ॥
कृतपुण्यैर्महाभागैः स्वर्गवद्भिरलंकृते ।
वहता हव्यमत्यन्तं सेविते चित्रभानुना ॥ ६२ ॥
पाण्डरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ ६३ ॥
वज्राशनीनां संपाते वज्राशनिविभूषिते ।
वज्राशनिनिपाताच्च पावकैरुपशोभिते ॥ ६४ ॥
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ६५ ॥
तत् तु भीमं हनुमतो दृष्ट्वा कर्म सुदुष्करं ।
देवता अभवंस्तुष्टाः सर्वे च परमर्षयः ॥ ६६ ॥
नागगन्धर्वदैतेयास्तत्रस्थास्तेन कर्मणा ।
काञ्चनस्य सुनाभस्य परितुष्टश्च वासवः ॥ ६७ ॥
इदं चोवाच वचनं खस्थस्तं दैवतैः सह ।
सुनाभं पर्वतश्रेष्ठं स्वयमिन्द्रः सुरेश्वरः ॥ ६८ ॥
हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशं ।
अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखं ॥ ६९ ॥

# सुन्दरकाण्डं

सख्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः ।
क्रामतो योजनशतं निर्भयस्य भये सति ॥७०॥
रामस्य हि स दौत्येन याति दाशरथेर्हरिः ।
सत्क्रियां कुर्वता शक्त्या तोषितास्ते दृढं वयं ॥७१॥
ततः प्रहर्षमतुलं लेभे साधुशिलोच्चयः ।
देवतानां प्रभुं दृष्ट्वा परितुष्टं शतक्रतुं ॥७२॥
स तैर्दत्तवरः शैलो बभूवावस्थितस्तदा ।
देवताः सिद्धगन्धर्वाः साधु साध्वित्यपूजयन् ॥७३॥

इत्यार्षे रामायणे सुन्दरकाण्डे सुरसावक्त्रप्रवेशो
नाम षष्ठः सर्गः—सुनाभोद्गमो
नाम सप्तमः सर्गः ॥

# रामायणं

## VIII.

प्लवमाने ततस्तस्मिन् सिंहिका नाम राक्षसी ।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १ ॥
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ।
इदं खे सुमहत् सत्त्वं चिरस्य वशमागतं ॥ २ ॥
इति संचिन्त्य मनसा छायां वस्त्रमिवाक्षिपत् ।
छायायां निगृहीतायां चिन्तयामास वानरः ॥ ३ ॥
अहो क्षिप्तोऽस्मि सहसा निर्धूत इव पर्वतः ।
प्रतिलोमेन वातेन महानौरिव सागरे ॥ ४ ॥
तिर्यगूर्द्ध्वमधस्ताच्च वीक्षमाणस्तु मारुतिः ।
स ददर्श महत् सत्त्वमुत्थितं लवणाम्भसः ॥ ५ ॥
कथितं कपिराजेन यत् सत्त्वं मे महोदधौ ।
छायाग्राहि महावीर्यं तदिदं नात्र संशयः ॥ ६ ॥
स तां बुद्धाथ तत्त्वेन सिंहिकां मतिमान् कपिः ।
व्यवर्धत महाकायः प्रावृषीव पयोधरः ॥ ७ ॥
तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ।
वक्त्रं व्यवृणुतात्यर्थं पातालसदृशं तदा ॥ ८ ॥
स ददर्श ततस्तस्याः सुमहद्विवृतं मुखं ।
कार्यवत्तां च मेधावी मर्माणि च महाकपिः ॥ ९ ॥

# सुन्दरकाण्डं

तस्मिन् स विवृते वक्त्रे वज्रसंहननः कपिः ।
संक्षिप्य मुहुरात्मानं प्रविवेश महाबलः ॥१०॥
ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ।
उत्पपाताथ वेगेन मनोमारुतविक्रमः ॥११॥
दृष्ट्या धार्ष्ट्येन धृत्या च दाक्ष्येण च बलेन च ।
स कपिः परमं वेगं विदधे पुनरात्मवान् ॥१२॥
सा तु तेनातिवेगेन मनोमारुतरंहसा ।
निहता वानरेन्द्रेण निपपात महोदधौ ॥१३॥
स सिंहिकाबधं कृत्वा वेगवान् सुसमाहितः ।
लङ्कां प्रतिजगामाशु वेगेन गरुडो यथा ॥१४॥
निहतां वानरेन्द्रेण पतितां वीक्ष्य सिंहिकां ।
भूतान्याकाशचारीणि तमूचुः प्लवगर्षभं ॥१५॥
भीमं कर्म कृतं तात महत् सत्त्वं त्वया हतं ।
यस्या भयात् सुरपतिर्देवाश्च सह चारणैः ॥१६॥
इमं देशं वर्जयन्ति सा त्वया निहता बलात् ।
कृताः क्षेमाश्च पन्थानः सुखं गच्छन्ति खेचराः ॥१७॥
अज्ञेया निहता ह्येषा राक्षसी कामरूपिणी ।
साधयार्थमभिप्रेतमरिष्टं व्रज वानर ॥१८॥
एतानि यस्य चत्वारि वानरेन्द्र यथा तव ।
धृतिर्मतिर्बलं धार्ष्ट्यं स कर्मसु न सीदति ॥१९॥

स तैः सभाजितः प्राज्ञः प्रतिपन्नप्रयोजनः ।
जगामाकाशमाविश्य त्वरमाणो महाकपिः ॥ २० ॥
स सागरमनाधृष्यं क्रमित्वा वानरर्षभः ।
योजनानां शतस्यान्ते वनराजीं ददर्श ह ॥ २१ ॥
प्राप्तभूयिष्ठपारश्च सर्वतः स विलोकयन् ।
ददर्श महतीं लङ्कां त्रिकूटशिखरे स्थितां ॥ २२ ॥
संपूर्णां राक्षसैर्घोरैरिन्द्रस्येवामरावतीं ।
स महामेघसंकाशं समीक्ष्यात्मानमात्मना ॥ २३ ॥
निरुन्धन्तमिवाकाशं प्रदध्यावात्मवान् कपिः ।
कायवृद्धिं प्रवेशं च मम दृष्ट्वैव राक्षसाः ॥ २४ ॥
मयि कौतूहलं कुर्युरिति मे निश्चिता मतिः ।
ततः शरीरमत्यर्थं संक्षिप्याथ सुसंवृतः ।
कपिः प्रकृतिमापेदे विष्णुर्विक्रान्तवानिव ॥ २५ ॥

ततः सुवेलस्य गिरेः प्रवृद्धे
विविक्तकूटे निपपात शृङ्गे ।
सकेतकोद्दालकनारिकेले
महाभ्रकूटप्रतिमे महात्मा ॥ २६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे सागरलङ्घनं
नाम अष्टमः सर्गः ॥

# सुन्दरकाण्डं

## IX.

ततः स हनुमान् क्रान्तः सागरं मकरालयं ।
निपत्य च परे पारे विश्रम्य च महाबलः ॥ १ ॥
ददर्श तां पुरीं लङ्कां त्रिकूटशिखरे स्थितां ।
सारवान् सागरस्यान्ते निपत्योत्तमविक्रमः ॥ २ ॥
समाश्वस्य कपिस्तत्र न ग्लानिमध्यगच्छत ।
योजनानां सहस्राणि क्रमेयं सुबहून्यपि ॥ ३ ॥
किं पुनः सागरस्यान्तं परिसंख्यातयोजनं ।
इति वीर्यवतां श्रेष्ठो मतिं कृत्वानिलात्मजः ॥ ४ ॥
प्रातिष्ठत समाश्वस्तो लङ्कां प्रति महाबलः ।
शाद्वलानि च नीलानि विविधानि वनानि च ॥ ५ ॥
गन्धवन्ति च संपश्यन् प्रफुल्लनगवन्ति च ।
शैलांश्च तरुसंछन्नान् वनराजीश्च पुष्पिताः ॥ ६ ॥
शरलान् कर्णिकारांश्च खर्जूरांश्चांश्च पुष्पितान् ।
पियालान् मुचुकुन्दांश्च नीपान् सप्तच्छदांस्तथा ॥ ७ ॥
अशोकान् कोविदारांश्च करवीरांश्च पुष्पितान् ।
पुष्पभारावनद्धांश्च तथा मुकुलितानपि ॥ ८ ॥
पादपान् विहगाकीर्णान् पवनोद्धूतमस्तकान् ।
हंसकारण्डवाकीर्णा वापीः पद्मोत्पलावृताः ॥ ९ ॥

नदीः शुभजलाश्चैव पादपैरुपशोभिताः ।
आक्रीडान् विविधान् रम्यान् विविधांश्च जलाशयान् ।१०।
संवृतान् विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः ।
उद्यानानि च रम्याणि निरीक्ष्य कपिसत्तमः ॥११॥
आससाद स लक्ष्मीवाँल्लङ्कां रावणपालितां ।
शङ्खमौक्तिकसंघातैरवकीर्णेन पर्वसु ॥१२॥
अधिकोद्वृत्ततोयेन वेलालोलमहोर्मिणा ।
नानारत्नाकरवता किन्नरावासदायिना ॥१३॥
नागासुरनिवासेन पवनोद्भूतवीचिना ।
ग्रसतेव नभः कृत्स्नं सागरेणाभिसंवृतां ॥१४॥
वप्रैः श्वेतचयाकारैः परिखाभिश्च सर्वतः ।
अगाधाव्ययतोयाभिरधः परिक्षितामिव ॥१५॥
शातकुम्भेन महता प्राकारेण सुसंवृतां ।
अचिन्त्यां सुकृतप्राप्यां कुवेराध्युषितां पुरा ॥१६॥
अट्टालकशताकीर्णां पताकाध्वजशोभितां ।
स्फाटिकैः काञ्चनैश्चैव शोभितामिन्द्रकोषकैः ॥१७॥
प्राकारतलविन्यस्तैश्चन्द्रसूर्यशतैरिव ।
मसारगल्वर्कमयैः स्तम्भैरुच्छ्रिततोरणां ॥१८॥
स्फाटिकैर्हेमभक्त्यन्तैः कपाटैर्भूषितामिव ।
राक्षसैरभियुक्तैश्च यन्त्रैः सायुधसंचयैः ॥१९॥

# सुन्दरकाण्डं

अलंकृतपुरद्वारां समृद्धामिव रूपिणीं ।
विमानैर्हेमनिर्यूहैर्भास्वद्भिर्मणिवेदिकैः ॥ २० ॥
घण्टाध्वजपताकाभिरुन्मीलन्तीमिव श्रियं ।
नानातूर्यनिनादैश्च हयानां हेषितेन च ॥ २१ ॥
वृंहितेन च नागानां रथनेमिस्वनेन च ।
सिंहनादैश्च दृप्तानां राक्षसानां भयावहैः ॥ २२ ॥
सागरस्य च घोषेण हर्षात् प्रहसितामिव ।
गिरिमूर्द्ध्नि स्थितां दिव्यां निर्मितां विश्वकर्मणा ॥ २३ ॥
प्लवमानामिवाकाशे पुरीं देवपुरोपमां ।
उत्तरद्वारमासाद्य तस्याश्च हरिपुङ्गवः ॥ २४ ॥
कैलासशिखरप्रख्यं समुल्लिखदिवाम्बरं ।
लङ्कायां महतीं गुप्तिं सागरं च निरीक्ष्य सः ॥ २५ ॥
रावणं चापि राजानं चिन्तयामास वानरः ।
आगता हरयो ह्यत्र गमिष्यन्ति निरर्थकाः ॥ २६ ॥
नेह युद्धेन वा शक्यं किञ्चिद्व्यवसितेन वा ।
इमां सुविषमां दुर्गां लङ्कां रावणपालितां ॥ २७ ॥
प्राप्य दाशरथी रामः किं करिष्यति वीर्यवान् ।
अवकाशो न सान्त्वस्य राक्षसेष्विह दृश्यते ॥ २८ ॥
न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ।
गतिरत्र चतुर्णां हि वानराणां महात्मनां ॥ २९ ॥

बालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ।
यावज्जानामि वैदेहीं यदि जीवति वा न वा ॥३०॥
तत्रैव चिन्तयिष्यामि तां दृष्ट्वा जनकात्मजां ।
रूपेणानेन तु मया न शक्यं राक्षसीं पुरीं ॥३१॥
प्रवेष्टुं राक्षसैर्दृप्तैर्गुप्तां बलसमन्वितैः ।
उग्रौजसो महावीर्या बलवन्तश्च राक्षसाः ॥३२॥
वञ्चनीया मया सर्वे जानकीं परिमार्गता ।
लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कां पुरीमिमां ॥३३॥
प्रवेष्टुं प्राप्तकालो मे कृत्यं साधयितुं महत् ।
पुनश्च चिन्तयामास हनुमान् मारुतात्मजः ॥३४॥
केनोपायेन पश्येयं मैथिलीं जनकात्मजां ।
अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥३५॥
न विनश्येत् कथं कार्यं रामस्य विदितात्मनः ।
पश्येयं कथमेकान्ते रहितां जनकात्मजां ॥३६॥
भूता ह्यर्था विनश्यन्ति देशकालविरोधिताः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥३७॥
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥३८॥
न विनश्येत् कथं कार्यं वैक्लव्यं न कथं भवेत् ।
लङ्घनं च समुद्रस्य कथं तु न वृथा भवेत् ॥३९॥

मयि दृष्टे हि रक्षोभी रामस्य विदितात्मनः ।
भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥४०॥
कथं शक्यमिह स्थातुमविज्ञातेन राक्षसैः ।
अपि राक्षसरूपेण न शक्यमटितुं मया ॥४१॥
वायुरप्यत्र नाज्ञातश्चरेदिति मतिर्मम ।
न ह्यत्राविदितं किञ्चिद्राक्षसानां बलीयसां ॥४२॥
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ।
विनाशं शीघ्रमेष्यामि भर्तुरर्थश्च हास्यते ॥४३॥
तदनेनैव रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिपतिष्यामि राघवस्यार्थसिद्धये ॥४४॥
रावणस्य पुरीं रात्रौ संप्रविश्य दुरासदां ।
भवनानि विचिन्वानो द्रक्ष्यामि जनकात्मजां ॥४५॥
इति संचिन्त्य हनुमान् सूर्यस्यास्तमनं प्रति ।
रक्षसामन्तरप्रेक्षी तस्थावाश्रित्य काननं ॥४६॥
वृषदंशप्रमाणस्तु ततो भूत्वा गतेऽहनि ।
निशि लङ्कां महातेजाः प्रवेक्ष्यन् मारुतात्मजः ॥४७॥
निविष्टां पर्वतस्याग्रे लङ्कामङ्कगतामिव ।
कृत्स्नामालोकयामास प्राकारमभिरुह्य सः ॥४८॥
सागरोपमनिर्घोषां सागरानिलसेवितां ।
सुगुप्तां राक्षसेन्द्रेण यथेन्द्रेणामरावतीं ॥४९॥

सुविभक्तमहारथ्यां चत्वरापणशोभितां ।
अनेकयोजनायामामुद्यानवनशोभितां ॥५०॥
सन्नयन्त्रोपकरणां प्रभूतबलवाहनां ।
हृष्टराक्षससंपूर्णां सर्वकामसमृद्धिनीं ॥५१॥
शिलाप्रबालवैदूर्यमुक्ताकाञ्चनराजतैः ।
जाम्बूनदमयैर्द्वारैर्वैदूर्यमणिवेदिकैः ॥५२॥
मणिसोपानसंपन्नैः प्रबालाचितभूमिभिः ।
कैलासशिखराकारैः शारदाम्बुदपाण्डरैः ॥५३॥
भ्राजमानां गृहश्रेष्ठैर्नक्षत्रैर्गगनं यथा ।
वीक्षमाणामिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥५४॥
धन्विभिर्बलिभिर्वीरैः शूलपट्टिशधारिभिः ।
रक्षितां राक्षसैर्घोरैर्नागैर्भोगवतीमिव ॥५५॥
उत्सिक्तैरवलिप्तैश्च भोगिभिर्बलिभिः सदा ।
संपूर्णां राक्षसैर्भीमैर्गुहामाशीविषैरिव ॥५६॥
साभ्रज्योतिर्गणाकीर्णां विद्युज्ज्वालाभिपीडितां ।
चन्द्रमारुतसंपूर्णां शक्रस्येवामरावतीं ॥५७॥
चारुतोरणनिर्यूहां पाण्डरद्वारगोपुरां ।
महाचक्रमहाशक्तिप्रासप्रहरणायुतां ॥५८॥
किङ्किणीजालवाचालां पताकाभिरलंकृतां ।
क्रौञ्चसारससंघुष्टैर्हंसकारण्डवावृतैः ॥५९॥

तूर्यभूषणघोषैश्च सर्वतः प्रतिनादितां ।
विस्मयोत्फुल्लनयनः समन्तादवलोकयन् ॥ ६० ॥
वस्वोकसाराप्रतिमां रावणस्य पुरीं शुभां ।
अचिन्त्यामद्भुताकारां हनूमान् मारुतात्मजः ॥ ६१ ॥
आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ।
तां समीक्ष्य पुरीं लङ्कां राक्षसाधिपतेः शुभां ॥ ६२ ॥
अनुत्तमामृद्धिमतीं चिन्तयामास वानरः ।
नेयमन्येन नगरी शक्या धर्षयितुं बलात् ॥ ६३ ॥
रक्षिता रावणबलैरुद्यतायुधपाणिभिः ।
सुग्रीवाङ्गदयोश्चैव सुषेणस्य कपेस्तथा ॥ ६४ ॥
प्रसाध्येयं भवेद्भूमिर्मैन्दद्विविदयोरपि ।
कुमुदस्याथ नीलस्य हरेश्च वृषपर्वणः ॥ ६५ ॥
ऋक्षस्य केतुमालस्य मम चेह गतिर्भवेत् ।
समीक्ष्य तु महाबाहो राघवस्य पराक्रमं ॥ ६६ ॥
लक्ष्मणस्य च विक्रान्तं तेन हृष्याम्यहं पुनः ।
सत्त्वमास्थाय मेधावी ततो मारुतनन्दनः ॥ ६७ ॥
प्रदोषसमये धीमांस्तूर्णमुत्पत्य वेगवान् ।
प्रविवेश पुरीं लङ्कां सुविभक्तमहापथां ॥ ६८ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमतो
लङ्काप्रवेशो नाम नवमः सर्गः ॥

# रामायणं

## X.

स रत्नवसनां लङ्कां कोष्ठागारावतंसकां ।
सुन्यस्तां सुसमृद्धार्थां प्रमदामिव रूपिणीं ॥ १ ॥
प्रनष्टतिमिरां दीप्तैर्भास्वरैश्च महागृहैः ।
नगरीं राक्षसेन्द्रस्य प्रविशन् रुरुचे कपिः ॥ २ ॥
जल्पितोत्क्रुष्टहसितैस्तूर्यघोषपुरःसरैः ।
जजल्पेव तदा लङ्का राक्षसानां च वेश्मसु ॥ ३ ॥
ध्वजाग्रहसितैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ।
वर्धमानविशेषैश्च वर्धमानाजिरैस्तथा ॥ ४ ॥
वज्रवैदूर्यचित्रैश्च हेमजालविभूषितैः ।
गृहमेघैः पुरी भूयः शुशुभे द्यौरिवाम्बुदैः ॥ ५ ॥
स महापथमास्थाय सर्वतः परिलोकयन् ।
मातङ्गमदगन्धाढ्यं चकार मतिमान् मतिं ॥ ६ ॥
अमीषां गृहमुख्यानां नक्षत्रग्रहशोभिनां ।
निवेशमनुपश्यामि खं समुत्पततामिव ॥ ७ ॥
विचित्रनानाभरणांस्ततस्तान् भवनोत्तमान् ।
राघवार्थे कपिः श्रीमान् ददर्श च ननन्द च ॥ ८ ॥
प्रासादमाला विविधाः स्तम्भैः काञ्चनराजतैः ।
शातकुम्भमयैर्जालैर्गन्धर्वनगरोपमैः ॥ ९ ॥

# सुन्दरकाण्डं

वैदूर्यमणिसंकाशैर्मुक्ताराजतचित्रितैः ।
तलैः स्फाटिकसंकाशैरुपेताः सुमनोहरैः ॥ १० ॥
ददर्श बहुभौमांश्च सप्तभौमांश्च वानरः ।
शुश्राव मधुरं गीतं तन्त्रीतालसमन्वितं ॥ ११ ॥
स्त्रीणां मदसमृद्धानां त्रिदिवेऽप्सरसामिव ।
क्वचिच्च काञ्चीनिनदं नूपुरस्वनसंहितं ॥ १२ ॥
प्रस्वापननिनादांश्च भवनेषु महाकपिः ।
आस्फोटननिनादांश्च बालानां क्ष्वेलतां तथा ॥ १३ ॥
रावणस्तवयुक्तानि रक्षसां जल्पितानि च ।
अथ राजपथे तत्र स्थितं रक्षोबलं महत् ॥ १४ ॥
ददर्श बहुशस्त्राढ्यं रावणस्य वशानुगं ।
दीक्षितान् जटिलान् मुण्डानजिनाम्बरवाससः ॥ १५ ॥
स्वाध्यायनिरतांस्तत्र यातुधानान् सहस्रशः ।
दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा ॥ १६ ॥
प्रासमुद्गरपाणींश्च दण्डायुधधरानपि ।
अतिस्थूलानतिकृशान् दीर्घान् कुब्जांस्तथापरान् ॥ १७ ॥
स ददर्श महाबाहून् राक्षसान् घोरदर्शनान् ।
एकाक्षानेककर्णांश्च चलल्लम्बस्तनोदरान् ॥ १८ ॥
करालान् भग्नसक्थींश्च विकटान् वामनांस्तथा ।
विरूपान् बहुरूपांश्च सुरूपांस्तिग्मवर्चसः ॥ १९ ॥

विशाले राजमार्गे तु यथायथमवस्थितान् ।
स्रग्विनो लिप्तकायांश्च परमाभरणाम्बरान् ॥ २० ॥
विवृत्तोरुशिरोग्रीवान् विकटानुत्कटानपि ।
शक्तिशूलायुधान् कांश्चित् पट्टिशायुधधारिणः ॥ २१ ॥
धन्विनः खड्गिनश्चापि शतघ्नीमुषलायुधान् ।
परिघोत्तमहस्तांश्च स ददर्श महाकपिः ।
राक्षसान् शतशस्तस्मिन्नारक्षे मध्यमे स्थितान् ॥ २२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्काविचयो
नाम दशमः सर्गः ॥

# सुन्दरकाण्डं

## XI.

चन्द्रश्च साचिव्यमिवास्य कुर्वन्
  तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन विचित्य लोकान्
  अभ्युत्थितोऽनेकसहस्ररश्मिः ॥ १ ॥
शङ्खप्रभं क्षीरमृणालगौरम्
  उद्यन्तमाशां निशि भासयन्तं ।
ददर्श चन्द्रं स कपिप्रवीरः
  पोप्लूयमानं सरसीव हंसं ॥ २ ॥
ततः स मध्ये गतमंशुमन्तं
  ज्योत्स्नावितानं महदुद्वहन्तं ।
ददर्श वीरो दिवि भानुमन्तं
  गोष्ठे वृषं मत्तमिव भ्रमन्तं ॥ ३ ॥
लोकस्य पापानि विशातयन्तं
  महोदधिं चापि समेधयन्तं ।
भूतानि सर्वाणि विराजयन्तं
  ददर्श शीतांशुमथोदयन्तं ॥ ४ ।
यथा हि लक्ष्मीर्भुवि मन्दरस्था
  यथा प्रभातेषु च पुष्करस्था ।

यथैव तोयेषु च सागरस्था
तथा रराजैव निशाकरस्था ॥५॥
हंसो यथा राजति पुष्करस्थः
सिंहो यथा राजति कन्दरस्थः
वीरो यथा राजति सङ्गरस्थो
रराज चन्द्रोऽपि तथाम्बरस्थः ॥६॥
सितः ककुद्मानिव तीक्ष्णशृङ्गो
महाबलः श्वेत इवोच्चशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो
रराज चन्द्रः परिपूर्णशृङ्गः ॥७॥
प्रकाशचन्द्रोदयरम्यदोषः
प्रवृत्तरक्षःपिशिताशिदोषः ।
रामाभिरामेरितचित्तदोषः
स्वर्गोपमोऽभूद्भगवान् प्रदोषः ॥८॥
तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः
स्वपन्ति नार्यः पतिभिः सुवृत्ताः ।
नक्तंचराश्चापि तदा प्रवृत्ता
विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥९॥
मत्तप्रमत्तानां समाकुलानि
रथाश्वभद्रासनसंकुलानि ।

# सुन्दरकाण्डं

वीरश्रिया चापि समाकुलानि
  ददर्श धीमान् विचरन् कुलानि ॥१०॥
परस्परं वाग्भिरुपक्षिपन्ति
  भुजांश्च पीनानभितः क्षिपन्ति ।
धूर्त्तप्रलापानभितः क्षिपन्ति
  मत्ता यथान्योन्यमधिक्षिपन्ति ॥११॥
रक्षांसि रक्षांसि विनिक्षिपन्ति
  गात्राणि कान्तासु च निक्षिपन्ति ।
ददर्श कान्ताश्च परिस्पृशन्ति
  यथायथं चापि पुनः स्वपन्ति ॥१२॥
महार्गजैर्गीतमदैर्भ्रमद्भिः
  संपूजितैर्लक्षणतः सुहृद्भिः ।
रराज रक्षोभिरभिश्वसद्भिर्
  ह्रदो भुजङ्गैरिव निश्वसद्भिः ॥१३॥
प्रधानबुद्धीन् रुचिरप्रधानान्
  सच्छ्रद्दधानांस्तपसो निधानान् ।
नानाविधान् ब्रह्मसमादधानान्
  ददर्श तस्यां पुरि यातुधानान् ॥१४॥
निनिन्द दृष्ट्वा तु स तान् विरूपान्
  ननन्द कांश्चिच्च पुनःसुरूपान् ।

नानागुणानात्मकुलानुरूपान्
　　निष्ठावतो न्यायवतोऽनुरूपान् ॥ १५ ॥
ततो वरार्हाः सुविशुद्धभावास्
　　तेषां स्त्रियस्तत्र महानुभावाः ।
प्रियस्य भावेषु च सक्तभावा
　　ददर्श तारा इव सुप्रभावाः ॥ १६ ॥
श्रिया ज्वलन्तीर्दयितोपगूढा
　　ददर्श काश्चित् प्रमदा नवोढाः ।
लतास्तमालस्य नवप्ररूढा
　　यथा विहङ्गैः कुसुमोपगूढाः ॥ १७ ॥
अन्याः पुनर्हर्म्यतलोपविष्टाः
　　काश्चित् प्रियाङ्केषु सुखोपविष्टाः ।
भर्तृप्रिया धर्मपथे निविष्टा
　　ददर्श काश्चिन्मदनाभिविष्टाः ॥ १८ ॥
अपाश्रितान् काञ्चनराशिवर्णान्
　　तथा परार्ध्यास्तरणीयपूर्णान् ।
अपाश्रयान् काञ्चनचित्रवर्णान्
　　ददर्श वीरो रुचिराङ्गवर्णान् ॥ १९ ॥
एवं स्त्रियो वै क्रमशोऽभिरामाः
　　सुप्रीतियुक्ताः सुमनोऽभिरामाः ।

गृहे गृहे ताः स हरिप्रवीरः
    परिभ्रमंस्तत्र ददर्श रामाः ॥ २० ॥
न त्वेव सीतां परमाभिजातां
    पथि स्थितां राजकुलप्रजातां ।
लतां प्रफुल्लामिव साधुजातां
    ददर्श तन्वीमचिरप्रजातां ॥ २१ ॥
सनातने वर्त्मनि संनिविष्टां
    रामैषिणीं तां मदनाभिविष्टां ।
भर्तुर्मनश्चापि तथा प्रविष्टां
    स्त्रीभ्यो वराभ्यश्च सतीं विशिष्टां ॥ २२ ॥
शोकान्वितामश्रुचितौष्ठकण्ठीं
    वरां वरार्हां वरनिष्ककण्ठीं ।
अजातपक्षामभिजातकण्ठीं
    वने प्रवृत्तामिव नीलकण्ठीं ॥ २३ ॥
अव्यक्तरूपामिव चन्द्ररेखां
    पांशुप्रदिग्धामिव हेमरेखां ।
क्षतप्ररूढामिव बाणरेखां
    वायुप्रभिन्नामिव धूमरेखां ॥ २४ ॥
स तामपश्यन् मनुजेश्वरस्य
    रामस्य भार्यां जयतां वरस्य ।

बभूव दुःखाभिहतश्चिरस्य
   लेभे प्रसादं त्वथ बुद्धिरस्य ॥ २५ ॥
प्रविश्य जाम्बूनदजालकान्तं
   मणिप्रवेकामलजालकान्तं ।
परार्ध्यरत्नाकरमृद्धिमन्तं
   दशाननान्तर्नगरं विभान्तं ॥ २६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे प्रदोषवर्णना
नाम एकादशः सर्गः ॥

# सुन्दरकाण्डं

## XII.

स संक्षिप्यात्मनः कायं प्रविष्टोऽनुपलक्षितः ।
रावणस्य पुरे गुप्तां मार्गिष्यन् जनकात्मजां ॥ १ ॥
चिन्तयामास हनुमान् राघवप्रियकाम्यया ।
कपिप्रवीरो मनसा मुहूर्त्तं ध्यानमास्थितः ॥ २ ॥
कीदृशे बन्धने बद्धा मुक्ता वा स्वैरचारिणी ।
कश्च रक्षति वैदेहीं कथंरूपा च सा भवेत् ॥ ३ ॥
अदृष्टपूर्वा हि मया वैदेही जनकात्मजा ।
इङ्गितैरनुमानैश्च मया ज्ञेया भविष्यति ॥ ४ ॥
एतां बुद्धिं तदा कृत्वा हनुमान् मारुतात्मजः ।
अन्वियेष तदा सीतां रावणस्य पुरे शुभे ॥ ५ ॥
गृहं स राक्षसेन्द्राणामुद्यानानि च वानरः ।
वीक्षमाणो व्यचरत प्रासादांश्चैव सर्वशः ॥ ६ ॥
स पुप्लुवे महावेगः प्रहस्तस्य निवेशनं ।
ततोऽन्यत् पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ ७ ॥
गत्वा मेघप्रतीकाशं कुम्भकर्णनिवेशनं ।
विभीषणगृहं रम्यं प्रविवेश महाकपिः ॥ ८ ॥
महोदरस्य च गृहं महाकायस्य चैव हि ।
विद्युज्जिह्वस्य च तथा पुप्लुवे कपिकुञ्जरः ॥ ९ ॥

शुकस्य च महावेगः सारणस्य तथैव च ।
ततश्चेन्द्रजितो वेश्म जगाम हरियूथपः ॥ १० ॥
उल्काजिह्वस्य च ततो जगाम भवनं कपिः ।
रश्मिक्रीडस्य भवनं सूर्पाक्षस्य तथैव हि ॥ ११ ॥
धूम्राक्षस्य च सम्पातेर्भवनं मारुतात्मजः ।
विरूपाक्षस्य भीमस्य घसस्य प्रघसस्य च ॥ १२ ॥
शुकनासस्य वक्रस्य कठस्य विकठस्य च ।
रक्षसो लोमहर्षस्य दंष्ट्रालक्ष्स्वकर्णयोः ॥ १३ ॥
युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य नादिनः ।
विद्युदुल्काग्निजिह्वानां तथा हस्तिमुखस्य च ॥ १४ ॥
करालस्य पिशाचस्य शोणिताक्षस्य रक्षसः ।
क्रममाणः क्रमेणैवं हनूमान् मारुतात्मजः ॥ १५ ॥
तेषु तेषु पतन् वीरो भवनेषु महाकपिः ।
ऋद्धिमत्सु परामृद्धिं दृष्टः पश्यन् मुहुर्मुहुः ॥ १६ ॥
सर्वेषां समतिक्रम्य भवनानि महाकपिः ।
आससाद स लक्ष्मीवान् राक्षसेन्द्रनिवेशनं ॥ १७ ॥
प्राकारेणार्कवर्णेन महता सुसमावृतं ।
पुण्डरीकावतंसाभिः परिखाभिः परिष्कृतं ॥ १८ ॥
स वीक्षमाणो भवनं परिचक्राम वानरः ।
मणिरत्नसुसंपूर्णैस्तोरणैर्हेमनिर्मितैः ॥ १९ ॥

राजतीभिश्च कक्ष्याभिः स्तम्भैर्हेममयैरपि ।
महासत्त्वैर्महामात्रैः शूरैश्च विगतश्रमैः ॥ २० ॥
उपस्थितमसंहार्यैर्हयस्यन्दनयायिभिः ।
सिंहव्याघ्राजिनच्छन्नैर्दान्तकाञ्चनराजतैः ॥ २१ ॥
घोषवद्भिर्विचित्रैश्च सदानुचरितं रथैः ।
स्वाहाकारवषट्कारैर्ब्रह्मघोषैश्च नादितं ॥ २२ ॥
भेरीमृदङ्गाभिरुतं शङ्खघोषनिनादितं ।
नित्यार्चितमहापूजं सदा पर्वसु राक्षसैः ॥ २३ ॥
समुद्रमिव गम्भीरं पर्जन्यमिव सस्वनं ।
बहुरूपैर्विरूपैश्च मेघपर्वतसंनिभैः ॥ २४ ॥
कुठारशूलासिधरैः शक्तितोमरपाणिभिः ।
रक्षितं राक्षसैर्घोरैः सिंहैरिव महावनं ॥ २५ ॥
महाजनसमापूर्णं हंसैः सर इवाकुलं ।
विराजमानं बहुधा गजाश्वरथसंकुलं ॥ २६ ॥
तं त्रिपिष्टपसंकाशमेकस्थं विश्वकर्मणा ।
कृत्स्नस्य जगतः सारं नवनीतमिवोद्धृतं ॥ २७ ॥
सुराणामसुराणां च दूरादपि भयंकरं ।
सिंहशार्दूलसंपूर्णं कैलासस्येव कन्दरं ॥ २८ ॥
रावणस्य गृहं दृष्ट्वा स कपिः शूरसंमतः ।
लङ्काभरणमित्येव तदामन्यत विस्मितः ॥ २९ ॥

शूलतोमरहस्तानां शक्तिमुद्गरधारिणां ।
ददर्श च महागुल्मं निष्पतन्तं ततो गृहात् ॥ ३० ॥
ततः सुविहितान् हृष्टानीशादन्तान् सुविष्ठितान् ।
कुलीनान् रूपसंपन्नान् गजान् परगजारुहान् ॥ ३१ ॥
निष्ठितान् गजशिखायामैरावतसमद्युतीन् ।
मेघस्तनितनिर्घोषान् दुर्धर्षानमरैरपि ॥ ३२ ॥
सहस्रशो वहिस्तत्र जाम्बूनदविभूषणान् ।
हेमच्छन्नैरधिततांस्तरुणादित्यवर्चसः ॥ ३३ ॥
हर्त्तृंश्च परसैन्यानां गृहे तस्मिन् ददर्श सः ।
रक्तान् पीतान् सितान् नीलान् हरींश्च स महाजवान् ।३४।
ऋष्यकांस्तालजङ्घांश्च शोणान् पाटलरोमकान् ।
मल्लिकाक्षान् विरूपाक्षान् क्रौञ्चपक्षान् मनोजवान् ॥३५॥
आरट्टजांश्च काम्बोजान् वाह्लिकान् शुभलक्षणान् ।
शुकाननांश्च तुरगानपश्यत् कपिसत्तमः ॥ ३६ ॥
विस्मितो राक्षसेन्द्रस्य रावणस्य निवेशने ।
स मन्दरनगप्रख्यं मयूरस्वनसंकुलं ॥ ३७॥
ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमं ।
अनन्तरत्नसंपूर्णं निधिजालसमावृतं ॥ ३८ ॥
वीरनिष्ठितकर्मान्तं गृहं भूतपतेरिव ।
नानाविधमहारत्नं परार्ध्यासनभाजनं ॥ ३९ ॥

# सुन्दरकाण्डं

दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः ।
विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ४० ॥
यथायथं च मुख्याभिर्वरनारीभिरास्थितं ।
अर्चिषा वररत्नानां तेजसा रावणस्य च ॥ ४१ ॥
विराजमानं सततं रश्मिमन्तमिवांशुभिः ः
मद्यासवकृतक्लेदं मणिभाजनसंकुलं ॥ ४२ ॥
मनोरममसंबाधं कुवेरभवनोपमं ।
महार्हास्तरणोपेतैरुपेतं शयनोत्तमैः ॥ ४३ ॥
विसृतागुरुधूपं च श्वेतमाल्यविभूषितं ।
नूपुराणां च घोषेण काञ्चीनां निःस्वनेन च ॥ ४४ ॥
मृदङ्गतालघोषैश्च सर्वतो विप्रणादितं ।
कूटागारशतैर्युक्तं गन्धर्वनगरोपमं ॥ ४५ ॥
स्त्रीविशैः स्त्रीसमाचारैर्ज्वलिताङ्गपयोधरैः ।
इतश्चेतश्च धावद्भिर्वृतं सत्त्वैर्मनोरमैः ॥ ४६ ॥
जाम्बूनदमयान्येव भाजनान्यासनानि च ।
भूषणानि च शुभ्राणि ददर्श कपिकुञ्जरः ॥ ४७ ॥
शोभयन्ति च तद्देशम भ्रममाणा वरस्त्रियः ।
यथा कैलासशृङ्गाणि शतशः किन्नरीगणाः ॥ ४८ ॥
विनीतजनसंबाधं स्त्रीरत्नशतशोभितं ।
सुव्यूहकक्षं हनुमान् तद्विवेश महद्गृहं ॥ ४९ ॥

# रामायणं

## XIII.

अथ शुश्राव निनदं मेघानामिव गर्जतां ।
शङ्खदुन्दुभिवाद्यानां तूर्यघोषविमिश्रितं ॥ १ ॥
ततस्तं देशमागम्य शुश्रुवे यत्र निस्वनः ।
ददर्श पुष्पकं नाम विमानं काञ्चनप्रभं ॥ २ ॥
अर्द्धयोजनविस्तारमर्द्धयोजनमायतं ।
काञ्चनस्तम्भसंबाधं मणिकाञ्चनतोरणं ॥ ३ ॥
मुक्ताजालप्रतिच्छन्नं सर्वकामफलद्रुमं ।
नातिशीतं न चात्युष्णं सर्वर्तुसुखदं शुभं ॥ ४ ॥
दिव्यं कामगमं दृष्ट्वा प्रबालाचिततोरणं ।
आरुरोह हरिश्रेष्ठो विमानं पुष्पकं महत् ॥ ५ ॥
तस्यातीव वरिष्ठं च मध्ये विपुलमायतं ।
ददर्श भवनश्रेष्ठं हनूमान् मारुतात्मजः ॥ ६ ॥
हेमजालपरिच्छन्नं रुक्मवैदूर्यतोरणं ।
सुगुप्तं राक्षसेन्द्रस्य बहुप्राकारशोभितं ॥ ७ ॥
ववौ च तत्र सुरभिः पानमाल्यानुलेपनैः ।
दिव्यः संमूर्च्छितो गन्धो रूपवानिव मारुतः ॥ ८ ॥
सुगन्धस्तं महासत्त्वं बन्धुं बन्धुरिवोत्थितः ।
इत एहीत्युवाचैनं तत्र तत्र स वानरं ॥ ९ ॥

# सुन्दरकाण्डं

ततः संप्रस्थितः शालां ददर्श महतीं शुभां ।
रावणस्य मनःकान्तां कान्तामिव वरस्त्रियं ॥१०॥
मणिसोपानविकटां हेमजालविराजितां ।
स्फाटिकप्रावृततलां दन्तान्ताचितरूपकां ॥११॥
मुक्तामणिप्रबालैश्च रौप्यचामीकरैरपि ।
विभूषितैर्मणिस्तम्भैः समन्तादुपशोभितां ॥१२॥
समैर्ऋजुभिरत्युच्चैः सर्वतः समलंकृतैः ।
स्तम्भैर्धनैस्तथात्युच्चैर्दिवं संप्रस्थितैरिव ॥१३॥
महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया ।
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालया ॥१४॥
उपेतां मत्तविहगैर्दिव्यगन्धाधिवासितां ।
परार्ध्यशयनैर्जुष्टां रक्षोऽधिपतिषेवितां ॥१५॥
धूम्रामगुरुधूपेन विमलां हंसपङ्क्तिभिः ।
चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभां ॥१६॥
मनःप्रह्लादजननीं कर्णस्यापि प्रसादनीं ।
हृच्छोकनाशिनीं दिव्यां श्रियः संजननीमिव ॥१७॥
इन्द्रियाणीन्द्रियार्थैश्च समं पञ्चभिरुत्तमैः ।
तर्पयन्तीमिव मुख्यैः सदा रावणसेवितां ॥१८॥
राक्षसेन्द्रप्रभावेन श्रिया चातुलया तथा ।
अर्चिर्भिर्भूषणानां च ज्वलन्तीमिव सर्वतः ॥१९॥

स्वर्गोऽयं देवलोकोऽयमियं सिद्धिः परा भवेत् ।
इति संचिन्तयामास बहुधा स विलोकयन् ॥ २० ॥
प्रध्यायत इवापश्यद्दीपांस्तत्र च काञ्चनान् ।
धूर्त्तानिव महाधूर्त्तैर्देवनेन पराजितान् ॥ २१ ॥
कुथांश्चापश्यदासीना नानावर्णाम्बरस्रजः ।
नारीः सहस्रशस्तत्र नानावेशोज्ज्वलत्विषः ॥ २२ ॥
परावृत्तार्द्धरात्रे तु पाननिद्रावशं गतं ।
क्रीडितोपरतं स्त्रैणं प्रसुप्तं बहुधा तदा ॥ २३ ॥
प्रसुप्तविहगं चैव निःशब्दाम्बरभूषणं ।
निःशब्दहंसभ्रमरं बभौ पद्मवनं यथा ॥ २४ ॥
तासां संवृतदंष्ट्राणि मीलिताक्षाणि मारुतिः ।
अपश्यत् पद्मगन्धीनि वदनानि स योषितां ॥ २५ ॥
प्रबुद्धानीव पद्मानि तासां बुद्ध्वा क्षपात्यये ।
तदा तु कुमुदानीव वदनानि विलोक्य सः ॥ २६ ॥
इमानि वक्त्रपद्मानि नियतं प्रियषट्पदाः ।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ॥ २७ ॥
इत्यमन्यत स श्रीमान् तान्यालोक्य महाकपिः ।
मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ २८ ॥
सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता ।
शरदीव प्रसन्ना द्यौस्ताराभिरुपशोभिता ॥ २९ ॥

ताभिः परिवृतः स्त्रीभिः शुशुभे राक्षसेश्वरः ।
यथा तारापतिः श्रीमांस्ताराभिरुपशोभितः ॥ ३० ॥
याश्च च्यवन्तेऽम्बरात् ताराः काले काले निराकृताः ।
इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा ॥ ३१ ॥
ताराणामिव हि व्यक्तं महतीनां शुभार्चिषां ।
प्रभावर्णः प्रसादश्च विरेजुस्तत्र योषितां ॥ ३२ ॥
व्यावृत्तशिरसस्तत्र प्रकीर्णाम्बरभूषणाः ।
पानव्यायामखिन्नाश्च निद्रापहृतचेतसः ॥ ३३ ॥
व्यामृष्टतिलकाः काश्चित् काश्चिदुद्भ्रान्तनूपुराः ।
पार्श्वागलितहाराश्च काश्चित् परमयोषितः ॥ ३४ ॥
सुप्ताः सवसनाः काश्चित् काश्चिदामुक्तवाससः ।
व्याविद्धरसनोद्दामाः किशोर्य इव चापराः ॥ ३५ ॥
सुकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः ।
गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ३६ ॥
चन्द्रांशुनिकराभाश्च हाराः कासांचिदुत्कटाः ।
स्तनमध्ये सुविन्यस्ता विरेजुर्हंसपाण्डराः ॥ ३७ ॥
अपरासां च वैदूर्याः कादम्बा इव पक्षिणः ।
हेमसूत्राणि चान्यासां चक्रवाका इवाबभुः ॥ ३८ ॥
मृदुष्वङ्गेषु कासांचिदग्रतः समुपस्थिताः ।
बभूवुर्भूषणानीव शुभा भूषणराजयः ॥ ३९ ॥

अंशुकान्ताश्च कासाञ्चिन्मुखमारुतघट्टिताः ।
उपर्युपरि वक्त्राणि व्याधूयन्ते पुनः पुनः ॥ ४० ॥
ववल्गुश्चापि कासाञ्चित् कुण्डलान्यङ्गदानि च ।
सुखमारुतकम्पेन मन्दं मन्देन योषितां ॥ ४१ ॥
काचिदादर्शके लीना सुप्ता तत्र व्यराजत ।
महानदीप्रकीर्णेव नलिनी प्लवमाश्रिता ॥ ४२ ॥
कक्षागतविपञ्चीका शुशुभेऽन्यासितेक्षणा ।
प्रसुप्ता कामिनी तत्र बालपुत्रेव वत्सला ॥ ४३ ॥
पटहं चारुसर्वाङ्गी समालिङ्ग्य तथापरा ।
चिरस्य रमणं लब्ध्वा परिष्वज्येव कामिनी ॥ ४४ ॥
मदविन्याससंन्यस्ताः स्वप्नयुक्तास्तथापराः ।
तेषु तेषु च भावेषु प्रसुप्तास्तनुमध्यमाः ॥ ४५ ॥
प्रियङ्गुफलसंकाशैस्तनुमध्याः पयोधरैः ।
मृदङ्गान् परिपीड्यान्याः सुप्ताः कमललोचनाः ॥ ४६ ॥
आलिङ्ग्येषु तलान् कृत्वा प्रसुप्ताः परमाः स्त्रियः ।
वेणुशय्याप्रवृत्ताश्च प्रसुप्ताः पानखेदिताः ॥ ४७ ॥
भुजपार्श्वान्तरस्थेन मृदङ्गेन कृशोदरी ।
पणवं च समालिङ्ग्य सुप्ता मदकृतश्रमा ॥ ४८ ॥
डिण्डिमं परिगृह्यान्या तथैवासक्तगोमुखा ।
प्रसुप्ता तरुणं वत्समुपगुह्येव भाविनी ॥ ४९ ॥

कलसं च समालिङ्ग्य प्रसुप्ता भाति भाविनी ।
वसन्तपुष्पग्रथिता मालेव परिवर्जिता ॥५०॥
काचिदाडम्परं नारी भुजसंयोगपीडितं ।
कृत्वा कमलपत्राक्षी प्रसुप्ता काममोहिता ॥५१॥
कृत्वा पाणी तथान्योन्यं स्तनान्तरमुपाश्रितौ ।
उपगृह्याबलाः सुप्ता निद्रावेशपराजिताः ॥५२॥
अन्या कमलपत्राक्षी पूर्णचन्द्रनिभानना ।
वीणामालिङ्ग्य सुश्रोणी प्रसुप्ता मदविह्वला ॥५३॥
पणवेषु मृदङ्गेषु पीठिकासु तथैव च ।
कुथास्तरणमुख्येषु तथा तालीयकेषु च ॥५४॥
क्रीडितेनापराः क्लान्ताः क्लान्ता गीतेन चापराः ।
नृत्येन चापराः क्लान्ताः प्रसुप्तास्तत्र योषितः ॥५५॥
स्वभुजावुपधायान्याः परिहार्योपशोभिताः ।
अंशुकानि च सूक्ष्माणि सुसुपुस्तत्र योषितः ॥५६॥
अन्या वक्षसि चान्यस्यास्तस्याश्चाप्यपराः कुचे ।
ऊरूपार्श्वकटीपृष्ठमन्योन्यं समुपाश्रिताः ॥५७॥
परस्पराश्लेषिताङ्ग्यो मदस्नेहवशानुगाः ।
एकीकृतभुजाः सर्वाः सुसुपुस्तत्र योषितः ॥५८॥
अन्योन्यस्याङ्गसंस्पर्शात् प्रीयमाणाः सुमध्यमाः ।
अन्योन्यभुजसूत्रैस्ताः स्त्रीमाला ग्रथिता यथा ॥५९॥

मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ।
लतानां माधवे मासि फुल्लानां वायुसेविते ॥ ६० ॥
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयं ।
आसीद्वनमिवोद्भूतं स्त्रीवनं रावणस्य तत् ॥ ६१ ॥
तासां निद्रावशत्वाच्च मूर्च्छितानां मदेन च ।
पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ॥ ६२ ॥
तासामुच्छ्वासवातेन माल्यं वस्त्रं च गात्रतः ।
नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलं ॥ ६३ ॥
सुचिरेणापि सुव्यक्तं न तासां योषितां तदा ।
विवेकः शक्यते कर्तुं भूषणेन्दीवरस्रजां ॥ ६४ ॥
नृनागासुरदैत्यानां गन्धर्वाणां च योषितः ।
रक्षसां चाभवन् कन्याः स हि तस्य परिग्रहः ॥ ६५ ॥
तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः ।
व्यराजत विमानं तन्नभस्तारागणैरिव ॥ ६६ ॥
नूपुरैरपविद्धैश्च वलयैश्चापि भास्वरैः ।
हारैश्च हरिणाक्षीणां प्रकीर्णा शुशुभे मही ॥ ६७ ॥

न तत्र काचित् प्रमदा प्रधाना
रूपेण वीर्येण च या न लब्धा ।
न चान्यकामा न तथान्यपूर्वा
हीना च याभूज्जनकात्मजायाः ॥ ६८ ॥

न चाकुलीना न च हीनरूपा
नादक्षिणा नानुपचारयुक्ता ।
भार्याभवत् तस्य न हीनसत्त्वा
न चान्यकामा न च कामहीना ॥ ६९ ॥

बभूव बुद्धिश्च कपीश्वरस्य
यदीदृशी राघवधर्मपत्नी ।
इमा यथा राक्षसनाथभार्याः
सुजातमस्या इति जातबुद्धिः ॥ ७० ॥

पुनश्च सोऽचिन्तयदार्त्तरूपो
ध्रुवं विशिष्टा गुणतो हि सीता ।
अर्थाय यस्याः कृतवान् महात्मा
लङ्केश्वरः कष्टमकार्यमेतत् ॥ ७१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे रावणभवनदर्शनं
नाम द्वादशः सर्गः—अवरोधदर्शनं
नाम त्रयोदशः सर्गः ॥

## XIV.

अथ दिव्योपमं तत्र स्फाटिकं रत्नभूषितं ।
निरीक्षमाणो हनुमान् ददर्श परमासनं ॥ १ ॥
परमास्तरणास्तीर्णमाविकाजिनसंवृतं ।
तस्य चैकतमे देशे नानारत्नविभूषितं ॥ २ ॥
ददर्श पाण्डरं छत्त्रं ताराधिपतिसंनिभं ।
दामभिर्वरमाल्यानां समन्तादुपशोभितं ॥ ३ ॥
ततो जीमूतसंकाशं प्रतप्तोत्तमकुण्डलं ।
रोहिताक्षं महाबाहुं महारजतवाससं ॥ ४ ॥
लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना ।
संध्यारक्तमिवाकाशे तोयदं सतडिद्गणं ॥ ५ ॥
वृतमाभरणैर्मुख्यैः सुदृप्तं कामरूपिणं ।
सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरं ॥ ६ ॥
क्रीडित्वा विरतं रात्रौ वराभरणभूषितं ।
गन्धैश्च विविधैर्जुष्टं वरधूपोपधूपितं ॥ ७ ॥
वीज्यमानं वरस्त्रीभिर्बालव्यजनपाणिभिः ।
प्रियं नैर्ऋतकन्यानां राक्षसीनां सुखावहं ॥ ८ ॥
पीत्वा मधूनि विरतं तं ददर्श महाकपिः ।
भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपं ॥ ९ ॥

अङ्गनानां सहस्रेण भूषितेन समन्ततः ।
वृतमालापशीलेन युक्तगीतानुवादिना ॥ १० ॥
देशकालविधिज्ञेन युक्तवाक्याभिधायिना ।
रतोपरमसंसुप्तं राक्षसेन्द्रं महाबलं ॥ ११ ॥
निश्वसन्तं यथा नागं रावणं वानरोत्तमः ।
सहसा परमोद्विग्नः सोपासर्पद्भीस्ततः ॥ १२ ॥
संबभौ राक्षसेन्द्रस्य स्वपतः शयनोत्तमं ।
गन्धहस्तिनि संविष्टे यथा प्रस्रवणो गिरिः ॥ १३ ॥
अथारोहणमासाद्य वेदिकान्तरमाश्रितः ।
सुप्तं राक्षसशार्दूलं वीक्षां चक्रे महाकपिः ॥ १४ ॥
काञ्चनाङ्गदनद्धांश्च ददर्शास्य महात्मनः ।
विक्षिप्तान् राक्षसेन्द्रस्य भुजानिन्द्रध्वजानिव ॥ १५ ॥
ऐरावतविषाणाग्रैरापीडितकृतव्रणान् ।
वज्रोल्लिखितपीनांशान् नानायुधपरिक्षतान् ॥ १६ ॥
उन्नतांशान् समान् पीनान् संहतान् भुजगायतान् ।
विस्तीर्णे शयने शुभ्रे प्रच्छशीर्षानिवोरगान् ॥ १७ ॥
शशलोहितकल्पेन शीतलेन सुगन्धिना ।
चन्दनेन परार्ध्येन स्वनुलिप्तान् सुतेजसः ॥ १८ ॥
बाहूंस्तस्य महाबाहोर्भुजगेन्द्राङ्गसंनिभान् ।
वज्रवैदूर्यगर्भाणि श्रवणान्तेषु चैव हि ॥ १९ ॥

दर्दर्श तापनीयानि कुण्डलान्यङ्गदानि च ।
पत्नीश्च प्रियभार्यस्य तस्य रक्षःपतेस्तदा ॥ २० ॥
शशिप्रकाशवदना वरकुण्डलभूषिताः ।
अम्लानमाल्याभरणाः सोऽपश्यदुपशायिनीः ॥ २१ ॥
नृत्यवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः ।
वराभरणसंछन्नाः स्त्रियोऽपश्यत् तथापराः ॥ २२ ॥
श्यामावदाताः सुन्यस्ताः काश्चित् कृष्णा वराङ्गनाः ।
काश्चित् काञ्चनवर्णाङ्गाः प्रमदास्तमुपाश्रिताः ॥ २३ ॥
मदिरासवगन्धी च प्रकृत्या सुरभिः शुभः ।
तासां वदननिश्वासः सिषेवे रावणं तदा ॥ २४ ॥
रावणाननसंपर्कात् काश्चिद्रावणयोषितः ।
वदनानि सपत्नीनामुपाजिघ्रन् पुनः पुनः ॥ २५ ॥
रत्यर्थं सक्तमनसो रावणे रावणस्त्रियः ।
बाहुभिः परिरभ्यैनमत्यर्थं निजुगूहिरे ॥ २६ ॥
तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः ।
गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥ २७ ॥
स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयं ।
करेणुभिर्महारण्ये परिकीर्णो यथा द्विपः ॥ २८ ॥
तस्य चोपान्तसंन्यस्ते शयानां शयने शुभे ।
ददर्श रूपसंपन्नां सुश्रोणीं स कपिः स्त्रियं ॥ २९ ॥

गौरीं कनकवर्णाभामिष्टामन्तःपुरेश्वरीं ।
तत्र मन्दोदरीं नाम शयानां शयनोत्तमे ॥ ३० ॥
ददर्श जलदे नीले ज्वलन्तीमिव विद्युतं ।
मुक्तामणिसमायुक्तैर्भूषणैस्तप्तकाञ्चनैः ॥ ३१ ॥
भास्वरैर्भासयन्तीं च स्वश्रिया भवनोत्तमं ।
स तां वीक्ष्य महाबाहुर्हनुमान् मारुतात्मजः ॥ ३२ ॥
तर्कयामास सीतेति रूपयौवनसंपदा ।
हर्षेण महताविष्टो ननन्द च सुविस्मितः ॥ ३३ ॥
ततस्तां मारुतिश्चिन्तां व्यवधूय व्यवस्थितः ।
जगाम चिन्तामपरां सीतां प्रति महामतिः ॥ ३४ ॥
न रामेण वियुक्ता सा स्वप्तुमर्हति भाविनी ।
न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुं ॥ ३५ ॥
नान्यं नरमुपस्थातुं सुराणामपि वासवं ।
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥ ३६ ॥
कथं सीता महाभागा धर्मज्ञा धर्मचारिणी ।
कामयुक्तेन मनसा ह्युपतिष्ठेत रावणं ॥ ३७ ॥
इति वायुसुतस्तत्र धीमानालोचनापरः ।
इङ्गितैर्लक्षयामास नेयं सीतेति निश्चितं ॥ ३८ ॥
अन्येयमिति निश्चित्य भूयस्तामन्वियेष सः ।
पानभूमौ हरिश्रेष्ठः सीतासंदर्शनोत्सुकः ॥ ३९ ॥

सर्वकामरसोपेतां पानभूमिं महात्मनः ।
ददर्श कपिशार्दूलस्तस्य रक्षःपतेर्गृहे ॥ ४० ॥
मृगाणां महिषाणां च वराहाणां च सर्वशः ।
तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ॥ ४१ ॥
रौक्मेषु च विशालेषु भाजनेष्वर्द्धभक्षितान् ।
ददर्श कपिशार्दूलो मयूरान् कुक्कुटांस्तथा ॥ ४२ ॥
वराहवध्रीः सुकृता दधिसौवर्चलायुताः ।
लेह्यमुच्चावचं पेयं फलानि विविधानि च ॥ ४३ ॥
रागषाडवयोगांश्च विविधान् स ददर्श ह ।
शर्करासवमाध्वीकं पुष्पासवफलासवं ॥ ४४ ॥
तथाम्ललवणोपेतैर्गुडेन सह मिश्रितैः ।
संपन्नरूपैर्बहुभिर्मांसैः समुपपादितैः ॥ ४५ ॥
गन्धैश्चूर्णैश्च माल्यैश्च विविधैश्च पृथक् पृथक् ।
संतता शुशुभे भूमिर्भक्ष्यैश्च विविधैस्तथा ॥ ४६ ॥
सोऽपश्यच्छातकुम्भानि शीधोर्मणिमयानि च ।
राजतानि च पूर्णानि भाजनानि महाकपिः ॥ ४७ ॥
हिरण्मयैश्च करकैर्भाजनैः स्फाटिकैरपि ।
जाम्बूनदमयैश्चान्यैः सरकैरपि पूरितैः ॥ ४८ ॥
पानभूमिं तदाकीर्णां ददर्श कपिकुञ्जरः ।
क्वचिदर्द्धावशेषाणि क्वचित् पीतानि सर्वशः ॥ ४९ ॥

क्वचिन्नैव च पीतानि स पानानि व्यलोकयत् ।
क्वचिद्भक्ष्यांश्च विविधान् पानानि च क्वचित् क्वचित् ॥५०॥
फलानि चार्धशेषाणि क्वचिन्निःशेषितानि च ।
क्वचित् प्रभिन्नान् करकान् क्वचिदालोडितान् घटान् ।५१।
क्वचित् संयुक्तमाल्यानि फलानि विविधानि च ।
मृदितान्यपविद्धानि गन्धवन्ति तथैव च ॥५२॥
स्रजश्च विविधाश्चित्रा विप्रकीर्णा ददर्श सः ।
चन्दनस्य च दिव्यस्य शीधोश्च मधुरस्य च ॥५३॥
प्रववौ सुरभिर्वायुर्विमाने पुष्पके तथा ।
एवं सर्वमशेषेण रावणान्तःपुरं कपिः ॥५४॥
अन्वियेष महातेजा न चापश्यत् स जानकीं ।
जगामाथ ततश्चिन्तां धर्मशङ्करशङ्कितः ॥५५॥
परदारावरोधस्य सुप्तस्य च निरीक्षणं ।
इदं खलु ममात्यर्थं धर्मलोपो भविष्यति ॥५६॥
न हि मे परदाराणां दृष्टिर्विषयवर्तिनी ।
अयं चात्र मया दृष्टः परदारपरिग्रहः ॥५७॥
तस्य प्रादुरभूच्चिन्ता पुनरेव महात्मनः ।
निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनः ॥५८॥
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ।
न च मे मनसः किञ्चिद्वैकृत्यमुपलभ्यते ॥५९॥

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितं ॥ ६० ॥
न चान्यत्र मया शक्या वैदेही परिमार्गितुं ।
स्त्रियो हि स्त्रीषु दृश्यन्ते सदा संपरिमार्गणे ॥ ६१ ॥
यस्य सत्त्वस्य या योनिस्तस्यां तत् परिमृग्यते ।
न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुं ॥ ६२ ॥
तदिदं मार्गितं तावद्विशुद्धेनान्तरात्मना ।
रावणान्तःपुरं सर्वं दृश्यते न तु जानकी ॥ ६३ ॥
देवगन्धर्वकन्याश्च नागकन्यास्तथैव च ।
यक्षराक्षसकन्याश्च दृश्यन्ते न तु जानकी ॥ ६४ ॥

ततः स मध्ये भवनस्य मारुतिर्
लतागृहांश्चित्रगृहान् निशागृहान् ।
विचित्य सीतां प्रतिदर्शनोत्सुको
न चैव तामैक्षत चारुदर्शनां ॥ ६५ ॥
स चिन्तयामास महाकपिस्तदा
प्रियामवीक्षमाणो रघुनन्दस्य ।
ध्रुवं न सीता ध्रियते यतो हि मे
विचिन्वतो दर्शनमेति नैव सा ॥ ६६ ॥
सा राक्षसानां प्रवरेण चाबला
स्वशीलसंरक्षणतत्परा सती ।

अनेन नूनं प्रतिरौद्रकर्मणा
कृता भवेदार्यपथे व्यवस्थिता ॥ ६७ ॥
विरूपरूपा विकृता विवर्चसो
महानना दीर्घविरूपदर्शनाः ।
समीक्ष्य सा राक्षसराजयोषितो
भयाद्विपन्ना जनकात्मजाथवा ॥ ६८ ॥
सीतामदृष्ट्वा ह्यनवाप्य पौरुषं
विहृत्य कालं सह बान्धवैश्चिरं ।
न मेऽस्ति सुग्रीवसमीपगा गतिः
सुतीक्ष्णदण्डो बलवान् हि वानरः ॥ ६९ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे अन्तःपुरदर्शनं
नाम चतुर्दशः सर्गः ॥

# रामायणं

## XV.

दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ १ ॥
किन्नु मां वानराः सर्वे गतं वक्ष्यन्ति शुष्मिणः ।
गत्वा तत्र त्वया वीर कृतं किं तद्विवज्जितं ॥ २ ॥
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजां ।
किन्नु वक्ष्यत्यसौ वृद्धो जाम्बवानङ्गदश्च सः ॥ ३ ॥
गतं पारं समुद्रस्य लङ्घनं व्यर्थकं मम ।
पुनः प्रायमुपैष्यन्ति नूनं हि गतिरीदृशी ॥ ४ ॥
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखं ।
अनिर्वेदो हि सततं सर्वार्थेष्वनुवर्तते ॥ ५ ॥
करोति सफलं जन्तोर्जीवितं ह्यल्पयत्नेष्वपि ।
तस्मादनिर्वेदकरं यत्नं कर्तास्म्यनुत्तमं ॥ ६ ॥
भूयस्तावद्विचेष्यामि न यत्र विचयः कृतः ।
इति कृत्वा मतिं तत्र हनूमान् मारुतात्मजः ॥ ७ ॥
आपानशाला विविधास्तथा पुष्पगृहाणि च ।
चित्रशालाश्च विविधा भूयः क्रीडागृहाणि च ॥ ८ ॥
निष्कुटान्तररथ्याश्च विमानानि च सर्वशः ।
उत्पतन् निपतंश्चापि तिष्ठन् गच्छन् पुनः क्वचित् ॥ ९ ॥

द्वाराणि समुपावृण्वन् कपाटान्यवघट्टयन् ।
प्रविशन् निष्पतंश्चैव उत्पतन् निपतन्नपि ॥१०॥
स कपिः शीघ्रसंचारी प्रभञ्जन इवापरः ।
चतुरङ्गुलमात्रः सन् परिबभ्राम वानरः ॥११॥
न हि यत्रागतिस्तस्य सोऽवकाशो न विद्यते ।
रावणान्तःपुरे तस्मिन् न किञ्चिन्न चचार सः ॥१२॥
प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः ।
श्वभ्राणि पुष्करिण्यश्च समस्तास्तेन वीक्षिताः ॥१३॥
राक्षस्यो विविधाकाराः सुरूपा विकृतास्तथा ।
दृष्टा हनुमता तत्र न त्वेव जनकात्मजा ॥१४॥
रूपेणाप्रतिमा लोके श्रेष्ठा विद्याधरस्त्रियः ।
दृष्टा हनुमता तत्र न सा जनकनन्दिनी ॥१५॥
प्रमथ्य राक्षसेन्द्रेण दवकन्या बलाद्धृताः ।
दृष्टा हनूमता तत्र न सा दशरथस्नुषा ॥१६॥
अपश्यंस्तां महाबाहुः पश्यन्नन्या वरस्त्रियः ।
विषसाद तदा तत्र हनूमान् मारुतात्मजः ॥१७॥
अवतीर्य विमानाच्च चिन्तयामास दुःखितः ।
प्रकाशमिह न स्थातुं शक्यते राक्षसालये ॥१८॥
राजा हि रावणः क्रूर इति संचिन्त्य बुद्धिमान् ।
परिक्रम्य ततो दीनः पुनर्ध्यानमुपागमत् ॥१९॥

ततो लङ्कां प्रयत्नेन विचित्य पवनात्मजः ।
रजन्यामर्द्धशेषायां प्राकारे निषसाद सः ।। २० ।।
निराशो मोघसंकल्पश्चिन्तयन् विविधा गतीः ।
विक्रान्तः सागरं क्रान्तो मग्नश्चिन्तामहार्णवे ।। २१ ।।
स त्वहृष्टेन मनसा प्राकारस्थो महाकपिः ।
अपश्यन् जानकीं सीतां विललाप सुदुःखितः ।। २२ ।।
यत्कृते वानराः सर्वे विक्षिप्ताः सर्वतो दिशः ।
वयं चाप्रतिमं तीर्णाः सागरं मकरालयं ।। २३ ।।
तां न पश्यामि वैदेहीं धर्मज्ञां धर्मदर्शिनीं ।
सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियां ।। २४ ।।
न सन्ति भुवि शैला वा सरितः काननानि वा ।
येष्वार्या न प्रयत्नेन मार्गिता चरता मया ।। २५ ।।
इह सम्पातिना सीता रावणस्य निवेशने ।
आख्याता गृध्रराजेन न च पश्यामि मैथिलीं ।। २६ ।।
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ।
प्रच्युता रावणस्याङ्कादन्तरा पतिता भुवि ।। २७ ।।
तस्या वा ह्रियमाणायाः पथि सिद्धनिषेविते ।
शङ्के हृदयमार्यायाः स्फुटितं प्रेक्ष्य रावणं ।। २८ ।।
रावणस्योरुवेगेन भुजयोः पीडनेन च ।
तया मन्ये विशालाक्ष्या जीवितं त्यक्तमार्यया ।। २९ ।।

उपर्युपरि वा नूनं सागरं क्रमतस्तदा ।
विचेष्टमाना पतिता समुद्रे जानकी ध्रुवं ॥३०॥
अथ क्षुद्रेण वा तेन रक्षन्ती शीलमात्मनः ।
अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ॥३१॥
अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ।
अदुष्टा दुष्टचित्ताभिर्भक्षिता जनकात्मजा ॥३२॥
अथवा चन्द्रसंकाशं वक्त्रमुज्ज्वलकुण्डलं ।
रामस्य चिन्तयन्ती सा पञ्चत्वं कृपणा गता ॥३३॥
हा राम लक्ष्मणेत्येवं हायोध्या इति चासकृत् ।
विलप्य बहु वैदेही मृतावश्यं तपस्विनी ॥३४॥
अथवा निहिता मन्ये रावणस्य निवेशने ।
क्वचिल्लालप्यते बाला पञ्जरस्थेव सारिका ॥३५॥
जनकस्य कुले जाता रामपत्नी यशस्विनी ।
कथमुत्पलपत्राक्षी रावणस्य वशं गता ॥३६॥
विनष्टा वा प्रनष्टा वा भक्षिता वापि मैथिली ।
रामस्य प्रियभार्यस्य न निवेदयितुं क्षमं ॥३७॥
निवेद्यमाने दोषः स्यान्नादोषमनिवेदनं ।
कथं नु खलु कर्तव्यं व्यसनं खल्विदं महत् ॥३८॥
यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितः ।
गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥३९॥

किं मां वक्ष्यति सुग्रीवो हरयो वा समागताः ।
किष्किन्धां समनुप्राप्तौ तौ वा दशरथात्मजौ ॥ ४० ॥
गत्वा तं यदि काकुत्स्थं वक्ष्यामि परमप्रियं ।
न दृष्टा मैथिलीत्येवं तदा त्यक्ष्यति जीवितं ॥ ४१ ॥
परुषं दारुणं क्षुद्रं क्रूरमिन्द्रियतापनं ।
सीतानिमित्तं स श्रुत्वा दुर्वाच्यं न भविष्यति ॥ ४२ ॥
तं तु कृच्छ्रगतं दृष्ट्वा रामं पञ्चत्वमागतं ।
भृशानुरक्तो मेधावी न भविष्यति लक्ष्मणः ॥ ४३ ॥
भरतो मातरश्चैव शत्रुघ्नश्च मरिष्यति ।
यदि गच्छाम्यहं सीतामदृष्ट्वा जनकात्मजां ॥ ४४ ॥
कृत्स्नस्येक्ष्वाकुवंशस्य नाश एव भवेद्ध्रुवं ।
कृतज्ञः सत्यसंधश्च सुग्रीवः प्लवगेश्वरः ॥ ४५ ॥
रामं कृच्छ्रगतं दृष्ट्वा राजा त्यक्ष्यति जीवितं ।
भीममारोपणं व्यक्तं भविष्यति मयि गते ॥ ४६ ॥
दुर्बला व्यथिता दीना रुमा तस्य मरिष्यति ।
पीडिता भर्तृशोकेन भार्या चैव पतिव्रता ॥ ४७ ॥
भर्तृजेन च दुःखेन पीडिता शोककर्षिता ।
पञ्चत्वगमने राज्ञस्तारापि न भविष्यति ॥ ४८ ॥
मातापितृवियोगेन सुग्रीवव्यसनेन च ।
कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितं ॥ ४९ ॥

## सुन्दरकाण्डं

सान्त्वेन तु प्रदानेन मानेन च यशस्विना ।
पालिताः कपिराजेन देहं त्यक्ष्यन्ति वानराः ॥५०॥
गिरीणां वनषण्डेषु नदीतीरेषु वा पुनः ।
क्रीडां नानुभविष्यन्ति समेत्य कपिकुञ्जराः ॥५१॥
सपुत्रदाराः सामात्या रामव्यसनमूर्छिताः ।
शैलाग्रात् प्रपतिष्यन्ति समेत्य हरिपुङ्गवाः ॥५२॥
घोरं तु वैशसं मन्ये गते मयि भविष्यति ।
इक्ष्वाकुकुलनाशश्च सर्वेषां च वनौकसां ॥५३॥
सोऽहं वै न गमिष्यामि सुग्रीवस्य पुरीमितः ।
एतावन्तं विनाशं हि न द्रष्टुमहमुत्सहे ॥५४॥
सागरानूपदेशे च बहुमूलफलान्विते ।
चितां कृत्वा प्रवेक्ष्यामि समिद्धं जातवेदसं ॥५५॥
प्रविष्टस्य हि मे नूनं स्वदेहं साधयिष्यतः ।
शरीरं भक्षयिष्यन्ति श्वापदाश्च वयांसि च ॥५६॥
इदमत्यसुखं प्राप्य निश्चितं मनसो हि मे ।
अपो वापि प्रवेक्ष्येऽहमदृष्ट्वा जनकात्मजां ॥५७॥
तापसो वा भविष्यामि वृक्षमूलफलाशनः ।
न तु प्रतिगमिष्यामि तामदृष्ट्वा शुभाननां ॥५८॥
इति चिन्तासमापन्नः सीतामनधिगम्य सः ।
ध्यानशोकपरीताङ्गस्तस्थौ च विमनाः कपिः ॥५९॥

## XVI.

स तु शोकसमाविष्टः प्राकारस्थो महाकपिः ।
पुष्पिताग्रानथापश्यदेकत्र विविधान् द्रुमान् ॥ १ ॥
सालानशोकानन्यांश्च चम्पकानतिमुक्तकान् ।
ददर्श नागपुष्पांश्च चूतान् कपित्थकानपि ॥ २ ॥
तां तु दृष्ट्वा महाबाहुरशोकवनिकां शुभां ।
चिन्तयामास मेधावी हनूमान् मारुतात्मजः ॥ ३ ॥
अशोकवनिका हीयं महती सुमहाद्रुमा ।
इमामपि विचेष्यामि न ह्येषा विचिता मया ॥ ४ ॥
अथ धैर्यं समालम्ब्य प्रमृज्याश्रूणि वानरः ।
ज्यामुक्त इव नाराचः पुप्लुवेऽशोकवाटिकां ॥ ५ ॥
स गत्वा वेगवान् वेगाद्बलवान् मारुतात्मजः ।
ततः पादपसंकीर्णां लताशतसमावृतां ॥ ६ ॥
अशोकवनिकां स्फीतां प्रविवेश महाकपिः ।
स प्रविश्य विचित्रां तां विहगैरुपशोभितां ॥ ७ ॥
राजतैः काञ्चनैश्चैव पादपैरनुसंततां ।
विहगैर्मृगसंघैश्च विचित्रां चित्रकाननां ॥ ८ ॥
अचिरोदितसूर्याभामपश्यन्मारुतात्मजः ।
कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविता ॥ ९ ॥

वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः ।
प्रहृष्टमुदिते काले मृगपक्षिनिषेविते ॥ १० ॥
मत्तबर्हिणचक्राङ्के वसन्ते कामदीपने ।
मार्गमाणो वरारोहां राजपुत्रीमनिन्दितां ॥ ११ ॥
सुखप्रसुप्तान् विहगान् बोधयामास वानरः ।
उत्पतद्भिर्द्विजगणैः पक्षवातसमुद्धताः ॥ १२ ॥
अनेकवर्णास्तरुभिर्विमुक्ताः पुष्पवृष्टयः ।
तत्रावकीर्णः शुशुभे हनुमान् मारुतात्मजः ॥ १३ ॥
अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ।
दिशः सर्वा विधावन्तं वृक्षषण्डगतं कपिं ॥ १४ ॥
दृष्ट्वा भूतानि सर्वाणि वसन्तमिव मेनिरे ।
द्रुमेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः ॥ १५ ॥
रराज वसुधा तत्र प्रमदेव विभूषिता ।
तरस्विना तरुगणास्तरसा संप्रकम्पिताः ॥ १६ ॥
पुष्पवृष्टिमवर्षंस्ते विचित्रां कपिना धुताः ।
निर्धूतपर्णशिखराः कीर्णपुष्पफलद्रुमाः ॥ १७ ॥
विक्षिप्तवस्त्राभरणा धूर्त्ता इव पराजिताः ।
हनुमता वेगवता कम्पितास्ते नगोत्तमाः ॥ १८ ॥
पर्णपुष्पफलान्याशु मुमुचुः फलशालिनः ।
विहङ्गसङ्घहीनाश्च फलपुष्पविनाकृताः ॥ १९ ॥

नापुष्यन्त श्रियं वृक्षा निराशा इव निर्धनाः ।
बभूवुरगमाः सर्वे मारुतेन विनिर्धुताः ॥ २० ॥
विधूतवेशा प्रमदा यथा मृदितवर्णका ।
क्रीडनाद्भाति विरता नखदन्ताभिविक्षता ॥ २१ ॥
तथा लाङ्गूलहस्ताभ्यां चरणाभ्यां च मर्दिता ।
बभूवाशोकवनिका भग्नप्रवरपादपा ॥ २२ ॥
स तत्र मणिभूमीश्च काञ्चनीश्च महाकपिः ।
तथा रजतभूमीश्च विचचार समाहितः ॥ २३ ॥
वापीश्च विविधाकाराः पूर्णाः परमवारिणा ।
प्रसन्नसलिलाश्चान्या नलिनीः फुल्लपङ्कजाः ॥ २४ ।
महार्हमणिसोपानैरुपपन्नास्ततस्ततः ।
मणिप्रबालसिकताः स्फाटिकान्तरकुट्टिमाः ॥ २५ ॥
काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ।
फुल्लपद्मोत्पलवतीश्चक्रवाकोपशोभिताः ॥ २६ ॥
मत्तकारण्डवाकीर्णा हंससारसनादिताः ।
दीर्घाभिर्द्रुमयुक्ताभिः सरोभिश्च ततस्ततः ॥ २७ ॥
लताशतैरवततामवतानशतैस्तथा ।
लतागृहवनोपेतां करवीरवनान्तरां ॥ २८ ॥
तामम्बुधरसंकाशैः प्रवृद्धशिखरैः शुभैः ।
विचित्रकूटकूटैश्च पर्वतैरुपशोभितां ॥ २९ ॥

शिलागृहपरिक्षिप्तां नानागृहसमावृतां ।
ददर्श वनमध्यगां नदीं निर्ह्रादिनीं कपिः ॥ ३० ॥
अङ्कादिव समुत्पत्य प्रियस्य कुपितां प्रियां ।
बालपल्लवशाखाग्रां स ददर्श नगोत्तमे ॥ ३१ ॥
क्रीडन्तीं दोलया तुष्टां प्रमदामिव सुन्दरीं ।
पुनरावर्तमानां च ददर्श सरितं कपिः ॥ ३२ ॥
प्रसन्नामिव कान्तस्य कान्तां च पुनरागतां ।
सपद्माश्च नदीस्तत्र नानाद्विजगणायुताः ॥ ३३ ॥
ददर्श हनुमान् वीरो नदद्भिर्विहगैः शुभैः ।
कृत्रिमां च नदीमन्यां पूर्णां शीतेन वारिणा ॥ ३४ ॥
मणिप्रबालसोपानां मुक्तामिश्रितबालुकां ।
प्रासादैः सुमहद्भिश्च सुकृतैर्विश्वकर्मणा ॥ ३५ ॥
काञ्चनैः पर्वतैश्चैव कृत्रिमैरुपशोभितां ।
ये केचित् पादपास्तत्र पुष्पोपगफलोपगाः ॥ ३६ ॥
सुच्छदा विविधाकाराः सर्वे सौवर्णवेदिकाः ।
दिव्याभिर्बहुपुष्पाभिर्लताभिरनुवेष्टिताः ॥ ३७ ॥
वीक्षमाणश्च तत्रासौ मार्गमाणश्च मैथिलीं ।
अवेक्षमाणो भूमिं च सर्वतः सोऽन्ववैक्षत ॥ ३८ ॥
सुसंमृष्टेषु देशेषु सुमृष्टमणितोरणं ।
ददर्श विविधाकारं मणिकाञ्चनवेदिकं ॥ ३९ ॥

तथा विचरतस्तस्य तद्वनं पुष्पितद्रुमं ।
मार्गमाणस्य वैदेहीं व्यतीयाय विभावरी ॥४०॥
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनां ।
शुश्राव ब्रह्मघोषं च तूर्यघोषं च मारुतिः ॥४१॥
मुक्ता विहङ्गाः स्थानानि ययुः पद्मसरांसि वै ।
बोधयित्वा शुभैर्वाक्यैः कामिनीमिव कामुकः ॥४२॥
सोऽपश्यद्भूमिभागांश्च तत्र प्रस्रवणानि च ।
तथा सुवर्णवृक्षांश्च सौवर्णकुसुमच्छदान् ॥४३॥
तेषां द्रुमाणां प्रभया मेरोरिव समप्रभः ।
अमन्यत महातेजाः काञ्चनोऽस्मीति मारुतिः ॥४४॥
तान् काञ्चनांस्तरुगणान् मारुतेन समीरितान् ।
किङ्किणीशतनिर्घोषान् ददर्श पवनात्मजः ॥४५॥
ततां प्रवालैस्तरुणैः पत्रैश्च बहुभिर्वृतां ।
काञ्चनीं शिंशपामेकां ददर्श महतीं कपिः ॥४६॥
तेषां काञ्चनवृक्षाणां मध्ये जातं महाद्रुमं ।
प्रवृद्धं शिंशपावृक्षं पुप्लुवे तं महाकपिः ॥४७॥
आप्लुत्य हनुमान् वीरो ददर्श रुचिरप्रभां ।
वृतां हेममयीभिश्च वेदिकाभिः समन्ततः ॥४८॥
सुपुष्पिताग्रां रुचिरां तरुणाङ्कुरकोमलां ।
समारुह्य महातेजाः शिंशपां तामचिन्तयत् ॥४९॥

इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसां ।
इतश्चेतश्च दुःखितां संपतन्तीं यदृच्छया ॥५०॥
निरुद्धां परमोद्विग्नां वाष्पापिहितलोचनां ।
मृगेण हरिणीं हीनां मृगराजवशामिव ॥५१॥
अशोकवनिका हीयं दृष्टं रम्या दुरात्मनः ।
काञ्चनैरावृता वृक्षैर्बहुभिः सुमनोहरैः ॥५२॥
चम्पकैः सरलैश्चैव शोभिता चन्दनैस्तथा ।
लताभिश्च सुपुष्पाभिर्माल्यैश्च जलजैस्तथा ॥५३॥
इयं च नलिनी रम्या द्विजसंघनिषेविता ।
इह सा राममहिषी नूनमेष्यति जानकी ॥५४॥
एवं तु मत्वा हनुमान् महात्मा
परीक्षमाणो मनुजेन्द्रपत्नीं ।
अवेक्षमाणश्च ददर्श सर्वं
सुपुष्पिते पत्रघने निलीनः ॥५५॥

इत्यार्षे रामायणे सुन्दरकाण्डे प्राकारस्थहनूमच्चिन्ता
नाम पञ्चदशः सर्गः — अशोकवनिकाप्रवेशो
नाम षोडशः सर्गः ॥

# रामायणं

## XVII.

परीक्षमाणास्तत्राथ मार्गमाणाश्च जानकीं ।
अपश्यद्भूमिभागांश्च सर्वतः सुसमाहितान् ॥ १ ॥
सुसंमृष्टेषु देशेषु विन्यस्तान् मणिवेदिकान् ।
ददर्श हनुमांस्तत्र मणिकाञ्चनराजतान् ॥ २ ॥
संतानकलताभिश्च पादपाननुवेष्टितान् ।
सृजतः पुष्पवर्षाणि जीमूतानिव वर्षतः ॥ ३ ॥
केशरांश्चाप्यशोकांश्च तथा शाल्मलिकिंशुकान् ।
ज्वलनार्कनिभान् फुल्लान् समन्तादनुशोभिनः ॥ ४ ॥
शातकुम्भप्रभाः केचित् केचिदग्निशिखोपमाः ।
नीलाञ्जननिभाः केचित् तत्राशोकाः समन्ततः ॥ ५ ॥
नन्दनं विविधोद्यानं वनं चैत्ररथं तथा ।
अतिवृक्षमचिन्त्यं च दिव्यं रम्यं श्रिया वृतं ॥ ६ ॥
द्वितीयमिव चाकाशं पुष्पज्योतिर्गणावृतं ।
पुष्परत्नशतैश्चित्रैः पञ्चमं सागरं यथा ॥ ७ ॥
स तन्नन्दनसंकाशं मृगपक्षिनिषेवितं ।
हर्म्यप्रासादसंबाधं कोकिलोत्कूजनादितं ॥ ८ ॥
पुष्पितोत्पलपद्माभिर्वापीभिरुपशोभितं ।
बह्वासनगृहोपेतं बहुभूमिशतैर्वृतं ॥ ९ ॥

लताविताननैर्विविधैः पुष्पैरवनतद्रुमं ।
तथा गुल्मसहस्रैश्च सर्वतः समलंकृतं ॥ १० ॥
दिव्यैः सर्वर्तुकुसुमैः फलवद्भिश्च पादपैः ।
दिव्यगन्धरसस्पर्शैः शोभितं संप्रपुष्पितैः ॥ ११ ॥
पुष्पितानामशोकानां प्रभां सूर्योदयं प्रति ।
प्रदीप्तामिव तत्रस्थो मारुतिः समुदैक्षत ॥ १२ ॥
निष्पत्रशाखाश्च नगाः क्रियमाणा इवापरे ।
निष्पतद्भिश्च शतशश्छिन्नैः पुष्पावतंसकैः ॥ १३ ॥
आमूलात् पुष्पनिचितैरशोकैः शोकनाशनैः ।
पुष्पभारातिभारेण स्पृशद्भिरिव मेदिनीं ॥ १४ ॥
शरलैः कर्णिकारैश्च किंशुकैश्च सुपुष्पितैः ।
स देशो भ्रमरायोगः प्रदीप्त इव लक्ष्यते ॥ १५ ॥
पुन्नगाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा ।
विवृद्धमूलाः शतशः शोभयन्ते सुपुष्पिताः ॥ १६ ॥
सर्वर्तुफुल्लकुसुमैः पादपैर्मधुगन्धिभिः ।
नानाविहगसंघुष्टैर्दिव्यं मृगगणायुतं ॥ १७ ॥
अनेकगन्धप्रवहं पुण्यगन्धिमनोहरं ।
शैलेन्द्रमिव गन्धानामाकरं गन्धमादनं ॥ १८ ॥
तरुणादित्यसंकाशं शोभितं प्रियदर्शनं ।
कोकिलैर्भृङ्गराजैश्च हंसैर्मत्तैश्च सारसैः ॥ १९ ॥

अशोकवनिकायां तु तस्यां वानरपुङ्गवः ।
सोऽपश्यदविदूरस्थं प्रासादं चैत्यमुत्तमं ॥ २० ॥
धृतं स्तम्भसहस्रेण रम्यं कैलासपाण्डरं ।
प्रबालकृतसोपानं तप्तकाञ्चनवेदिकं ॥ २१ ॥
मुष्णन्तमिव चक्षूंषि द्योतयन्तमिव श्रिया ।
विपुलं प्रांशुतायोगादुल्लिखन्तमिवाम्बरं ॥ २२ ॥
स प्रविश्य महाबाहुरशोकवनिकां शुभां ।
ददर्श विकृतास्तत्र राक्षसीः कपिकुञ्जरः ॥ २३ ॥
त्रिकर्णीः शङ्कुकर्णीश्च लम्बकर्णीरकर्णिकाः ।
एकाक्षीश्चैककर्णीश्च कर्णप्रावरणास्तथा ॥ २४ ॥
अतिमात्रोत्तमाङ्गाश्च तनुदीर्घशिरोधराः ।
सुकेशीश्च तथाकेशीः केशकम्बलधारिणीः ॥ २५ ॥
पृथुकर्णललाटाश्च लम्बोदरपयोधराः ।
कराला भग्नवक्त्राश्च विरूपा विकृताननाः ॥ २६ ॥
दुर्मुखीः कपिलाः कृष्णाः क्रोधनाः कलहप्रियाः ।
कालायसमहाशूलकूटमुद्गरधारिणीः ॥ २७ ॥
वराहनक्रवक्त्राश्च अशिवाः शिवदर्शनाः ।
ह्रस्वा दीर्घास्तथा कुब्जा विकटा वामनास्तथा ॥ २८ ॥
गजोष्ट्रखरपादीश्च शार्दूलमहिषाननाः ।
हस्त्यश्वखरनागास्या मस्तकोच्छ्रितनासिकाः ॥ २९ ॥

चतुष्पादीर्द्विपादीश्च पृथुपादीस्त्रिपादिका: ।
अतिमात्रशिरोग्रीवा अतिमात्रपयोधरा: ॥ ३० ॥
अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखीस्तथा ।
अजमुखीरश्वमुखीर्गोमुखी: सूकरीमुखी: ॥ ३१ ॥
नरजुखरवक्त्राश्च राक्षसीर्भीमविक्रमा: ।
ह्रस्वनासातिनासाश्च तिर्यग्नासा अनासिका: ॥ ३२ ॥
असिमुद्गरशूलानि दधतीर्मांसभोजना: ।
मांसशोणितदिग्धाङ्गीर्वसादिग्धकरानना: ॥ ३३ ॥
पिबन्ती: खादमानाश्च नित्यं मांसवसाप्रिया: ।
अनाशिता: सदा पुष्टा: सर्वभक्षा: समुत्थिता: ॥ ३४ ॥
ता दृष्ट्वा वानरो हृष्टो लोमहर्षसमुद्धत: ।
स्कन्धवन्तमुपासीन: परिवार्य वनस्पतिं ॥ ३५ ॥
ताभि: परिवृतां तत्र सग्रहामिव रोहिणीं ।
ददर्श हनुमांस्तत्र लतां कुसुमितामिव ॥ ३६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे राक्षसीदर्शनं
नाम सप्तदश: सर्ग: ॥

## XVIII.

मलिनाम्बरसंवीतां राक्षसीभिः सुसंवृतां ।
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ॥ १ ॥
ध्यानशोकपरां देवीं भर्तृव्यसनकर्षितां ।
ददर्श हनुमान् वीरो बद्धां गजवधूमिव ॥ २ ॥
वृक्षमूले निरानन्दां ददर्श कपिरङ्गनां ।
सीदन्तीं शुक्लपक्षादौ चन्द्ररेखामिवाविलां ॥ ३ ॥
मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन तां ।
पिनद्धां धूमजालेन प्रभामिव विभावसोः ॥ ४ ॥
पीतेनैकेन संवीतां कृष्णेनोत्तरवाससा ।
भुजाभ्यां साधुवृत्ताभ्यां प्रतिच्छन्नकुचोदरीं ॥ ५ ॥
संपन्नामनलङ्कारां स पद्मामिव पद्मिनीं ।
व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीं ॥ ६ ॥
ग्रहेण लोहिताङ्गेन रोहिणीमिव पीडितां ।
तां स्मृतिमिव संदिग्धामृद्धिं निपतितामिव ॥ ७ ॥
आशामिव व्यपगतामाज्ञां प्रतिहतामिव ।
अश्रुधौतमुखीं दीनां कृशामनशनेन च ॥ ८ ॥
दुर्बलां दुःखसंतप्तां सुकुमारीं तपस्विनीं ।
निःश्वासबहुलां भीतां पन्नगेन्द्रवधूमिव ॥ ९ ॥

शोकजालेन महता विततेनाभिसंवृतां ।
संछन्नां धूमजालेन शिखामिव विभावसोः ॥ १० ॥
नीलनागाभया वेण्या जघनं गतयैकया ।
भूमौ देवीं तदासीनां नियतां तापसीमिव ॥ ११ ॥
प्रध्यानपरमां बालां रुदन्तीं कुररीमिव ।
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीजनं ॥ १२ ॥
यूथपेन मृगीं हीनां शार्दूलानुसृतामिव ।
सोपसर्गां यथा सिद्धिं बुद्धिं प्रतिहतामिव ॥ १३ ॥
रामापराधव्यथितां रक्षोहरणकर्षितां ।
चित्रामिव ग्रहग्रस्तां राक्षसीगणरक्षितां ॥ १४ ॥
अबलां मृगशावाक्षीं वीक्षमाणामितस्ततः ।
शोकबाष्पाभिपूर्णेन चारुकृष्णाक्षिपक्ष्मणा ॥ १५ ॥
वदनेनाप्रसन्नेन निश्वसन्तीं मुहुर्मुहुः ।
मलपङ्कधरां दीनां मण्डनार्हाममण्डितां ॥ १६ ॥
प्रभां नक्षत्रराजस्य कालमेघैरिवावृतां ।
तस्य संदिदिहे बुद्धिस्तां दृष्ट्वा तद्विनिर्णये ॥ १७ ॥
अधीतां योगहीनस्य विद्यां प्रतिगतामिव ।
दुःखेन बुबुधे चैनां हनुमान् मारुतात्मजः ॥ १८ ॥
संस्कारेण यथा हीनां वाचमर्थान्तरं गतां ।
निष्कृतीमनलङ्कारां दीप्यमानां स्वतेजसा ॥ १९ ॥

अवशां दुःखसंतप्तां निरानन्दां तपस्विनीं ।
अश्रुपूर्णमुखीं श्रान्तां कृशामनशनेन च ॥ २० ॥
एकवेणीधरां दीनां तापसीवेशधारिणीं ।
सुखार्हां दुःखसंतप्तां व्यसनानामकोविदां ॥ २१ ॥
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशां ।
तर्कयामास सीतेति कारणैरुपपादयन् ॥ २२ ॥
ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ।
यथा पुरा वै दृष्टा मे तथारूपेयमङ्गना ॥ २३ ॥
पूर्णचन्द्रानना श्यामा चारुवृत्तपयोधरा ।
कुर्वन्ती प्रभया देवी सर्वा वितिमिरा दिशः ॥ २४ ॥
तां नीलकेशीं बिम्बौष्ठीं सुमध्यां सुप्रतिष्ठितां ।
पीनांचितगुरुश्रोणीं वरोरूं संहतस्तनीं ॥ २५ ॥
पद्मपत्रविशालाक्षीं मन्मथस्य रतीमिव ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रनिभामिव ॥ २६ ॥
तां दृष्ट्वा तप्तहेमाभां लोककान्तामिव श्रियं ।
जगाम मनसा रामं मारुतस्यात्मसंभवः ॥ २७ ॥
अस्या हेतोर्विशालाक्ष्या हतो बाली महाबलः ।
रावणप्रतिमो वीर्ये कबन्धश्च निपातितः ॥ २८ ॥
विराधश्च हतः संख्ये राक्षसो भीमविक्रमः ।
तेन विक्रम्य रामेण महेन्द्रेणेव सम्बरः ॥ २९ ॥

चतुर्दशसहस्राणि रक्षसां भीमकर्मणां ।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ।। ३० ।।
खरश्च निहतः संख्ये दूषणश्च महाबलः ।
त्रिशिराश्च महातेजा रामेण विदितात्मना ।। ३१ ।।
घोरा शूर्पणखा चैव कृत्तकर्णाग्रनासिका ।
ऐश्वर्यं वानराणां च दुर्लभं बालिपालितं ।। ३२ ।।
तारां रुमां च माल्यां च कपिराज्यं च शाश्वतं ।
अस्या निमित्ते सुग्रीवः प्राप्तवाँल्लोकसत्कृतं ।। ३३ ।।
सागरश्च मया क्रान्तः श्रीमान् नदनदीपतिः ।
अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ।। ३४ ।।
यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगत् सर्वमनुमन्येत केवलं ।। ३५ ।।
राज्यं वा त्रिषु लोकेषु सीतां वा जनकात्मजां ।
मन्ये लोकास्त्रयोऽप्येते नार्हन्ति जनकात्मजां ।। ३६ ।।
दुष्करं कुरुते रामो यदिमां मत्तकाशिनीं ।
विना सीतां महाभागां मुहूर्त्तमपि जीवति ।। ३७ ।।
एवं दृष्ट्वा तदा सीतां हनुमान् मारुतात्मजः ।
जगाम मनसा रामं सीतां च प्रशशंस ह ।। ३८ ।।

इत्यार्षे रामायणे सुन्दरकाण्डे सीतादर्शनं नाम
अष्टादशः सर्गः ।।

# रामायणं

## XIX.

प्रशस्य तु प्रशंस्तव्यां सीतां स हरिपुङ्गवः ।
गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥ १ ॥
स मुहूर्त्तमिव ध्यात्वा वाष्पपर्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी विललाप सुदुःखितः ॥ २ ॥
इयं सा धर्मशीलस्य मैथिलस्य महात्मनः ।
सुता जनकराजस्य सीता भर्तृदृढव्रता ॥ ३ ॥
उत्थिता धरणीं भित्वा क्षेत्राद्धलमुखक्षतात् ।
पद्मरेणुनिभैः सृष्टा गौरैः केदारपांशुभिः ॥ ४ ॥
विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्त्तिनः ।
स्नुषा दशरथस्यैषा चारित्राढ्या यशस्विनी ॥ ५ ॥
धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः ।
इयं सा दयिता भार्या राक्षसीवशमागता ॥ ६ ॥
सुखं सर्वं परित्यज्य भर्तृस्नेहबलाद्धृता ।
अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनं ॥ ७ ॥
संतुष्टा फलमूलेन भर्तृशुश्रूषणे रता ।
यां गृहे भजते प्रीतिं वनेऽपि भजते तथा ॥ ८ ॥
सेयं कनकवर्णाभा नित्यं सस्मितभाषिणी ।
सहते यातनां घोरामनाथा मन्दभागिनी ॥ ९ ॥

पीतं कनकवर्णाभमस्यास्तद्वसनोत्तमं ।
उत्तरीयं नगे त्यक्तं दृष्टं मे वानरैः सह ॥ १० ॥
भूषणानि च मुख्यानि दृष्टानि धरणीतले ।
अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥ ११ ॥
सुकृतौ कर्णवेष्टौ च कुण्डले च सुसंस्कृते ।
मणिविद्रुमयुक्तानि हस्तयोर्भूषणानि च ॥ १२ ॥
यानि चैव विमुक्तानि तथा संस्थानवन्ति च ।
तान्यस्या एव मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥ १३ ॥
अनया तु विहीनानि तान्येतानि न संशयः ।
इमां तु शीलसंपन्नां प्रष्टुमिच्छामि मैथिलीं ॥ १४ ॥
रावणेन प्रमथितां प्रपामिव पिपासुना ।
इक्ष्वाकुसरसस्तस्माद्रावणेनोद्धृता बलात् ॥ १५ ॥
मृणाली पङ्कलिप्तेव न विभाति तपस्विनी ।
इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ॥ १६ ॥
कारुण्येनानृशंस्येन शोकेन मदनेन च ।
स्त्री प्रनष्टेति कारुण्यमाश्रितेत्यनृशंसता ॥ १७ ॥
पतिव्रतेति शोकेन प्रियेति मदनेन च ।
अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितं ॥ १८ ॥
तेनेयं स च धर्मात्मा ज्ञात्वा कृच्छ्रेण जीवतः ।
इयमिन्दीवरश्यामा रामस्य महिषी प्रिया ॥ १९ ॥

चिरप्रनष्टापि सती हृदयान्न प्रणश्यति ।
पतिशोकेन चाविष्टा तपसा च कृशा भृशं ॥ २० ॥
प्रतिपच्चन्द्रलेखेव दृश्यते द्योतते न च ।
इयं प्रकृत्या तन्वङ्गी तद्वियोगाच्च कर्षिता ॥ २१ ॥
अनभ्यसनशीलस्य विद्येव तनुतां गता ।
नूनमस्याः पुनर्लाभाद्राघवः प्रीतिमेष्यति ॥ २२ ॥
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीं ।
कामभोगविहीनेयं हीना बन्धुजनेन च ॥ २३ ॥
धारयत्यात्मनो देहं तत्समागमकाङ्क्षया ।
राक्षसीर्वीक्षिते नैषा नेमान् पुष्पधरान् द्रुमान् ॥ २४ ॥
एकस्थं हृदयं ह्यस्या राममेवानुपश्यति ।
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ॥ २५ ॥
एषा तस्यानुरागेण शोभतेऽप्यनलंकृता ।
दुष्करं कुरुते रामो हीनो यदनया विभुः ॥ २६ ॥
धारयत्यात्मनो देहं न शोकेनावसीदति ।
इमामसितकेशान्तां शतपत्रनिभाननां ॥ २७ ॥
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ।
कदा तु खलु दुःखस्य पारं यास्यति मैथिली ॥ २८ ॥
राघवस्याप्रमेयस्य लक्ष्मणस्य च जीवतः ।
यदि सीतापि दुःखार्त्ता कालः स दुरतिक्रमः ॥ २९ ॥

रामस्य व्यवसायज्ञा सत्त्वज्ञा लक्ष्मणस्य च ।
नात्यर्थं क्षुभ्यते बाला गङ्गेव जलदागमे ॥ ३० ॥
अस्या देव्या यथा युक्तमङ्गप्रत्यङ्गसौष्ठवं ।
रामस्य हि तथा युक्ता पत्नीयमसितेक्षणा ॥ ३१ ॥
तुल्यरूपवयोयुक्तां तुल्याभिजनलक्षणां ।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ३२ ॥

इयं पुरा पङ्कजसंनिभाक्षी या रक्षिता राघवलक्ष्मणाभ्यां ।
सा राक्षसीभिर्विकृताननाभिः संरक्ष्यते संप्रति वृक्षमूले ॥ ३३ ॥
एवं स तां हेतुभिरनुवीक्ष्य सीतेयमित्येव निविष्टबुद्धिः ।
संलीय तस्मिन् निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ॥३४॥
इमे च पुष्पावनताः सुशाखाः शोकं भृशं मे जनयन्त्यशोकाः ।
क्षपाव्यपाये त्वथ मन्दरश्मिरभ्युत्थितो दृष्टिहतः शशाङ्कः ॥ ३५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्विलापो
नाम नवदशः सर्गः ॥

# रामायणं

## XX.

साचिव्यमिव कुर्वाणः प्रभया निर्मलप्रभः ।
चन्द्रमा रश्मिभिः शीतैः सिषिचे मारुतात्मजं ॥ १
स ददर्श ततः सीतां पूर्णचन्द्रनिभाननां ।
शोकभारसमाक्रान्तां भरैर्नावमिवाम्भसि ॥ २ ॥
राक्षसीनां स तां मध्ये ददर्श कपिरङ्गनां ।
उदितां शुक्लपक्षादौ चन्द्ररेखामिवामलां ॥ ३ ॥
अथ मङ्गलवादित्रघोषः श्रोत्रमनोहरः ।
बोध्यमाने दशग्रीवे महानासीत् तदाद्भुतः ॥ ४ ॥
स विबुध्य यथाकालं राक्षसेन्द्रो महाबलः ।
स्रस्तमाल्याम्बरः क्षीवो वैदेहीमन्वचिन्तयत् ॥ ५ ॥
भृशं नियुक्तस्तस्यां हि मदनेन मदोत्कटः ।
न शशाकात्मनः काममागतं विनिगूहितुं ॥ ६ ॥
मैथिलीं द्रष्टुकामोऽथ निर्जगाम ततो गृहात् ।
स सर्वाभरणोपेतो बिभ्रन् श्रियमनुत्तमां ॥ ७ ॥
अशोकवनिकामेव प्राविशत् संततद्रुमां ।
तां नगैर्विविधैर्जुष्टां दिव्यपुष्पफलोपगैः ॥ ८ ॥
वृतां पुष्करिणीभिश्च चित्रैश्च बहुभिर्गृहैः ।
सदामत्तैश्च विहगैर्विचित्रैर्मधुरस्वनैः ॥ ९ ॥

# सुन्दरकाण्डं

समभूमितलां रम्यां दिव्यां चित्रपथद्रुमां ।
वीथीं संप्रेक्षमाणश्च मणिकाञ्चनतोरणां ॥ १० ॥
नानामृगगणैः कीर्णां विहगैश्च सदामदैः ।
चित्रमृगैश्च विविधैर्वृतां दृष्टिमनोहरैः ॥ ११ ॥
क्रीडामृगैश्च विविधैरावृतां सर्वतो दिशं ।
जगाम मदनोन्मत्तो दशग्रीवो महाबलः ॥ १२ ॥
अङ्गनाशतमात्रं तु तं व्रजन्तमुपाव्रजत् ।
कुवेरमिव पौलस्त्यं देवगन्धर्वयोषितः ॥ १३ ॥
काञ्चनोर्दीपिकाश्चित्रा जगृहुस्तत्र योषितः ।
बालव्यजनमन्यास्तु तालवृन्तानि चापराः ॥ १४ ॥
काश्चिद्रत्नमयीः पात्रीः पूर्णाः पानस्य योषितः ।
दक्षिणा दक्षिणैर्हस्तैरादाय जग्मुरङ्गनाः ॥ १५ ॥
ततः काञ्चीनिनादं च नूपुराणां च निः स्वनं ।
शुश्राव परमस्त्रीणां स तदा मारुतात्मजः ॥ १६ ॥
तमप्रतिमकर्माणमचिन्त्यबलपौरुषं ।
द्वारदेशमनुप्राप्तं ददर्श पवनात्मजः ॥ १७ ॥
दीपिकाभिरनेकाभिः समन्तादवभासितं ।
गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ १८ ॥
कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणं ।
सामर्षमिव कन्दर्पमपविद्धशरासनं ॥ १९ ॥

मथितामृतफेनाभमरजोऽम्बरमुत्तमं ।
सपुष्पमिव कर्षन्तं विसृष्टं स्नस्तमग्रतः ॥ २० ॥
स वृक्षविटपे लीनः पुष्पपत्रलतावृतः ।
हनुमानभिगच्छन्तं तमवैक्षत वानरः ॥ २१ ॥
अवेक्षमाणश्च ततो ददर्श कपिरङ्गनाः ।
रूपयौवनसंपन्ना भूषणोत्तमभूषिताः ॥ २२ ॥
ताभिः परिवृतो राजा युवतीभिर्महायशाः ।
तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनं ॥ २३ ॥
क्षीवो विचित्राभरणः शङ्कुकर्णो महाबलः ।
श्मशानचैत्यद्रुमवद्भूषितोऽपि भयंकरः ॥ २४ ॥
तेन विश्रवसः पुत्रः स दृष्टो राक्षसेश्वरः ।
वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः ॥ २५ ॥
तं दृष्ट्वा च महातेजास्तेजोऽनलकरं कपिः ।
राजायं स महाबाहुरिति संचिन्त्य वीर्यवान् ॥ २६ ॥
अवप्लुत्य महाबुद्धिर्दिदृक्षुस्तस्य चेष्टितं ।
पर्णगुल्मवृतामन्यां शाखां गत्वा स्थितोऽभवत् ॥ २७ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे रावणदर्शनं
नाम विंशतितमः सर्गः ॥

# सुन्दरकाण्डं

## XXI.

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपं ।
प्रावेपत महाभागा कदलीवानिलाहता ॥ १ ॥
प्रच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ ।
उपविष्टा वरारोहा रुदती वरवर्णिनी ॥ २ ॥
दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः ।
ददर्श दीनां दुःखार्त्तां मग्नां नावमिवार्णवे ॥ ३ ॥
असंवृतायामासीनां धरण्यां सुदृढव्रतां ।
छिन्नां निपतितां भूमौ लतामिव वनस्पतेः ॥ ४ ॥
मृजाविहीनां दीप्ताङ्गीं मण्डनार्हाममण्डितां ।
सुविशुद्धां रजोध्वस्तां काञ्चनीं प्रतिमामिव ॥ ५ ॥
समीपं राजसिंहस्य रामस्य विदितात्मनः ।
संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ६ ॥
स्मरन्तीं दयितं चैकं शोकेनोपहतां भृशं ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रतां ॥ ७ ॥
दिव्येनैवाङ्गरागेण द्योतमानामनिन्दितां ।
विचेष्टमानामाविष्टां पन्नगेन्द्रवधूमिव ॥ ८ ॥
धूम्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ।
मृतामिव कुले जातामाचारवति धार्मिके ॥ ९ ॥

पुनः संस्कारमापन्नां जातामिव सुदुष्कुले ।
प्रमादितां कीर्त्तिमिव श्रद्धामिव विमानितां ॥१०॥
प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव ।
देवतामिव विध्वस्तामाज्ञां विनिहतामिव ॥११॥
पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ।
प्रभामिव तमोध्वस्तां परिक्षीणामिवापगां ॥१२॥
वेदीमिव परामृष्टां शान्तामग्निशिखामिव ।
निष्प्रभां पतितां भूमौ चन्द्ररेखामिवाम्बरात् ॥१३॥
पौर्णमासीमिव निशां राहुग्रस्तनिशाकरां ।
विध्वस्तपत्रकमलां वित्रासितविहङ्गमां ॥१४॥
हस्तिहस्तपरिक्लिष्टामाकुलां पद्मिनीमिव ।
पतिशोकातुरां दीनां शुष्कस्रोतोनदीमिव ॥१५॥
परया प्रभया हीनां कृष्णपक्षे निशामिव ।
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचितां ॥१६॥
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृतां ।
गृहीत्वा पालितां स्तम्भे यूथपेन विनाकृतां ॥१७॥
निःश्वसन्तीं सुदुःखार्त्तां गजराजवधूमिव ।
वित्रस्तां छादयन्तीं च गात्रैर्गात्राणि सर्वशः ॥१८॥
नाभिमण्डलगामिन्या प्रसन्नायतनीलया ।
भूषयन्तीं स्वकौ पीनौ रोमराज्या पयोधरौ ॥१९॥

संहतौ च सुजातौ च स्तनौ स्तवकसंनिभौ ।
प्रच्छादयन्तीं सव्रीडां पीतस्यान्तेन वाससः ॥ २० ॥
उपवासेन शोकेन ध्यानेन च भयेन च ।
परिक्षीणां कृशां दीनां त्यक्ताहारां तपोधनां ॥ २१ ॥
आयाचमानां दुःखार्त्तां प्राञ्जलीं देवतामिव ।
रामस्य च भवं नित्यमभवं रावणस्य च ॥ २२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीतासंस्थानवर्णना
नाम एकत्रिंशः सर्गः ॥

## XXII.

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीं ।
सकामो रावणः सीतामिदं वचनमब्रवीत् ॥ १॥
मां दृष्ट्वा नागनासोरु गूहमाना ततस्ततः ।
अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २॥
नेह केचिन्मनुष्या वा राक्षसा वापि भाविनि ।
व्यपगच्छतु ते सीते भयं मत्तः समुत्थितं ॥ ३॥
स्वधर्मो रक्षसां भीरु सर्वथैव सनातनः ।
ग्रहणं वा बलात् स्त्रीणां हरणं संप्रमथ्य वा ॥ ४॥
कामये त्वां विशालाक्षि बहुमन्यस्व मां प्रिये ।
सर्वाङ्गगुणसंपन्ने सर्वलोकमनोहरे ॥ ५॥
एवं चैतदकामां च न त्वां द्रक्ष्यामि भाविनि ।
कामं कामः शरीरे मे यथाकामं प्रवर्ततां ॥ ६॥
देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये ।
प्रणयं कुरु वैदेहि मैवं शोकपरा भव ॥ ७॥
एकवेणीधरत्वं च ध्यानं मलिनमम्बरं ।
अस्नानं चोपवासश्च नैतान्यौपयिकानि ते ॥ ८॥
विचित्राणि च माल्यानि चन्दनान्यगुरूणि च ।
विविधानि च वासांसि दिव्यान्याभरणानि च ॥ ९॥

# सुन्दरकाण्डं

महार्हाणि च माल्यानि शयनान्यासनानि च ।
गीतं नृत्यं च वाद्यं च मां चैवार्हसि मैथिलि ॥१०॥
स्त्रीरत्नमसि कल्याणि कुरु गात्रेषु भूषणं ।
मां प्राप्य हि कथं नु स्यास्त्वमेवं वरवर्णिनि ॥११॥
इदं ते चारु संजातं यौवनं व्यतिवर्तते ।
यदतीतं पुनर्नैति श्रोतः शीघ्रमपामिव ॥१२॥
त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वकृत् ।
न हि रूपोपमा काचित् तव मैथिलि वर्तते ॥१३॥
त्वां समासाद्य वैदेहि रूपयौवनशालिनीं ।
कः पुमानतिवर्तेत साक्षादपि पितामहः ॥१४॥
यद्यत् पश्यामि ते गात्रं चन्द्रांशुसदृशानने ।
तस्मिंस्तस्मिन् पृथुश्रोणि चक्षुर्मम निबध्यते ॥१५॥
भव मैथिलि भार्या मे मोहमेतं विसर्जय ।
बह्वीनामुत्तमस्त्रीणां त्वमग्रमहिषी भव ॥१६॥
लोकेभ्यो यानि रत्नानि संप्रमथ्य हृतानि मे ।
तानि ते भीरु सर्वाणि राज्यं चेदमहं च ते ॥१७॥
विजित्य पृथिवीं सर्वां नानानगरसंवृतां ।
जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥१८॥
न हि पश्यामि लोकेऽस्मिन् यो मे प्रतिबलो भवेत् ।
शृणु मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥१९॥

असकृत् संयुगे भग्ना मया विमृदितध्वजाः ।
न शक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ॥ २० ॥
इच्छ त्वं क्रियतामद्य प्रतिकर्म तवोत्तमं ।
सुप्रभाण्यवसज्यन्तां शरीरे भूषणानि ते ॥ २१ ॥
साधु पश्यामि ते रूपं संयुक्तं प्रतिकर्मणा ।
प्रतिकर्म च संयुक्तं दाक्षिण्येन तवाङ्गने ॥ २२ ॥
भुङ्क्ष्व भोगान् यथाकामं पिब त्वं विहरस्व च ।
यस्येच्छसि प्रयच्छ त्वं तस्य पृथ्वीधनानि च ॥ २३ ॥
ललस्व मयि विश्रब्धा हृष्टमाज्ञापयस्व च ।
मत्प्रसादाल्ललन्त्याश्च ललन्तु तव बान्धवाः ॥ २४ ॥
ऋद्धिं मामनुपश्य त्वं श्रियं भद्रे यशश्च मे ।
किं करिष्यसि रामेण सुभगे चीरवाससा ॥ २५ ॥
निक्षिप्तविषयो रामो गतश्रीर्वनगोचरः ।
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६ ॥
न च वैदेहि रामस्त्वां भूयः पश्येत् कथञ्चन ।
स्निग्धैर्बलाहकैर्व्योम्नि चन्द्ररेखामिवावृतां ॥ २७ ॥
न च त्वां मम हस्ताद्धि प्राप्तुमर्हति राघवः ।
हिरण्यकशिपुर्लक्ष्मीमिन्द्रहस्तगतामिव ॥ २८ ॥
चारुस्मिते चारुवक्त्रे चारुनेत्रे विलासिनि ।
मनो हरसि मे देवि सुपर्णा इव पन्नगं ॥ २९ ॥

कृष्णकौशेयवसनामेवमप्यनलंकृतां ।
त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभे प्रिये ॥३०॥
अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः ।
यावत्यो मम तासां त्वमैश्वर्यं कुरु भाविनि ॥३१॥
मम ह्यसितकेशान्ते त्रैलोक्यप्रवराः स्त्रियः ।
तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ॥३२॥
यानि वैश्रवणस्यासन् रत्नानि विविधानि च ।
तानि लङ्कां च सुश्रोणि मां च भुङ्क्ष्व यथासुखं ॥३३॥
न रामस्तपसा सीते न बलेन न विक्रमैः ।
न धनेन मया तुल्यस्तेजसा यशसापि वा ॥३४॥

कुसुमिततरुजालसंवृतानि
प्रसरयुतानि समुद्रतीरजानि ।
विमलकनकहारशोभिताङ्गी
विहर मया सह भीरु काननानि ॥३५॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीताप्रलोभनं
नाम द्वाविंशः सर्गः ॥

## XXIII.

तस्यैतद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्त्ता दीनस्वरा दीना प्रत्युवाच ततः शनैः ॥ १ ॥
अकार्यं न मया कार्यं साधुपत्न्या विगर्हितं ।
कुले संप्राप्तया पुण्ये कुले महति जातया ॥ २ ॥
एवमुक्त्वा तु वैदेही राक्षसेन्द्रं तपस्विनी ।
रावणं पृष्ठतः कृत्वा भूयोऽप्याह शुभानना ॥ ३ ॥
नाहमौपयिकी भार्या परभार्या सती तव ।
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ॥ ४ ॥
यथा तव तथान्येषां दारा रक्ष्या निशाचर ।
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यतां ॥ ५ ॥
असंतुष्टं स्वदारेषु चपलं चलितेन्द्रियं ।
नयन्ति निकृतप्रज्ञं परदाराः पराभवं ॥ ६ ॥
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
न च धर्मं प्रणीतं ते पथ्यमुक्तं विचक्षणैः ॥ ७ ॥
अकृतात्मानमासाद्य लङ्का रत्नौघसंवृता ।
अपराधात् तवैकस्य न चिरेण विनङ्क्ष्यति ॥ ८ ॥
अकृतात्मानमासाद्य भर्तारमनये स्थितं ।
सुसमृद्धा विनङ्क्ष्यन्ति देशाश्च नगराणि च ॥ ९ ॥

स्वदोषैर्हन्यमानस्य रावणादीर्घदर्शिनः ।
अभिनन्दन्ति भूतानि विनाशं पापकर्मणः ॥ १० ॥
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृतं जनाः ।
दिष्ट्यायं व्यसनं प्राप्तो रौद्रकर्मेति हर्षिताः ॥ ११ ॥
नाहं लोभयितुं शक्या ऐश्वर्येण धनेन वा ।
अनन्या राघवस्याहं भास्करस्य प्रभा यथा ॥ १२ ॥
तस्याहं लोकनाथस्य रामस्य विदितात्मनः ।
उपधाय भुजं सव्यं लोककान्तस्य सत्कृतं ॥ १३ ॥
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ।
अहमौपयिकी भार्या तस्यैव सुमहात्मनः ॥ १४ ॥
स्नातव्रतस्य विप्रस्य विद्येव विजितात्मनः ।
साधु रावण रामेण मां समानय दुःखितां ॥ १५ ॥
वने वासितया मत्तं करेण्वा यूथपं यथा ।
मित्रमौपयिकं कर्तुं राघवं रावण त्वया ॥ १६ ॥
बधं चानिच्छता घोरं पुरीं च परिरक्षितुं ।
वर्जयेदन्तकृन्मर्त्यं वर्जयेदनिलोऽनलं ॥ १७ ॥
न तु त्वां रावण क्रुद्धो लोकनाथः स राघवः ।
रामस्य धनुषः शब्दं श्रोष्यसे घोरनिस्वनं ॥ १८ ॥
वज्रिहस्तविमुक्ताया विस्फूर्जितमिवाशनेः ।
इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ॥ १९ ॥

शरास्तीव्राः पतिष्यन्ति रामलक्ष्मणलक्षिताः ।
रक्षसां बध्यमानानामस्यां पूर्यां समन्ततः ॥ २० ॥
आसंबाधा भविष्यन्ति पन्थानः शरवृष्टिभिः ।
राक्षसेन्द्र महासर्पं स रामो गरुडो महान् ॥ २१ ॥
त्वां हनिष्यति वेगेन वैनतेय इवोरगं ।
अचिराद्राघवः क्रुद्धः प्राप्य त्वामपकारिणं ॥ २२ ॥
अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिन्दमः ।
असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥ २३ ॥
एवमुक्तस्तु संक्रुद्धो मैथिल्या राक्षसाधिपः ।
अमर्षादभवत् क्रुद्धो वचनं चेदमब्रवीत् ॥ २४ ॥
स्त्रीत्वादबध्यमात्मानं मन्यसे त्वमसंशयः ।
तथा हि परुषाण्येवं भाषसे गतसाध्वसा ॥ २५ ॥
न युक्तं परुषं वक्तुमीश्वरे विप्रियाणि च ।
जनस्य महतो मध्ये प्रभविष्णोर्विशेषतः ॥ २६ ॥
अलङ्कारो हि नारीणां दाक्षिण्यं परमुच्यते ।
दुर्लभं तच्च ते भद्रे भर्तुरिच्छा कथं त्वयि ॥ २७ ॥
यादृशोऽयं मम क्रोधो यथा च त्वामुपस्थितः ।
बधाय विसृजेयं त्वां स्त्रीस्वभावेन धार्यसे ॥ २८ ॥
तस्य राक्षसराजस्य सीता न ममृषे वचः ।
पुण्यकीर्त्तिरिवाकीर्त्तिं ततः कोपादुवाच ह ॥ २९ ॥

जनस्थानबधं श्रुत्वा हतौ च खरदूषणौ ।
पूर्ववैरमनुध्याय मामिहानीतवानसि ॥३०॥
आलयं हि तयोः शून्यमासीत् तन्नरसिंहयोः ।
मृगयां गतयोर्भ्रात्रोस्तदानीं सिंहयोरिव ॥३१॥
न हि गन्धं समाघ्राय रामलक्ष्मणयोस्त्वया ।
शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव ॥३२॥
तस्य ते विग्रहस्ताभ्यामयुक्तो यमुपस्थितः ।
वृत्रस्येवेन्द्रबाहुभ्यां राक्षोरेकस्य विग्रहः ॥३३॥
क्षिप्रं तव ससैन्यस्य रामः सौमित्रिणा सह ।
तोयमल्पमिवादित्यः प्राणानादाय यास्यति ॥३४॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीतावाक्यं
नाम त्रयोविंशः सर्गः ॥

# रामायणं

## XXIV.

सीतायास्तु वचः श्रुत्वा परुषं राक्षसेश्वरः ।
प्रत्युवाच पुनः सीतां विप्रियं प्रियदर्शनां ॥ १ ॥
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २ ॥
संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतो मार्गमासाद्य ह्यानिव सुसारथिः ॥ ३ ॥
कामं कामो मनुष्याणां यस्मिन् किल निबध्यते ।
जने तस्मिन्ननुक्रोशः स्नेहश्च खलु जायते ॥ ४ ॥
एतस्मात् कारणान्न त्वां घातयामि वरानने ।
बधार्हामपमानार्हां मिथ्या प्रव्रजिते रतां ॥ ५ ॥
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि मां ।
तेषु तेषु बधो युक्तस्तव मैथिलि दारुणः ॥ ६ ॥
द्वौ मासौ रक्षितव्यौ मे कालो यस्ते कृतो मया ।
ततः शयनमारोह मामकं मदिरेक्षणे ॥ ७ ॥
द्वाभ्यामूर्द्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीं ।
मम त्वां प्रातराशाय सूदाश्छेत्स्यन्ति खण्डशः ॥ ८ ॥
न च मैथिलि रामस्त्वां पुनः समुपलप्स्यते ।
हिरण्यकशिपुर्लक्ष्मीमिन्द्रहस्तगतामिव ॥ ९ ॥

तां तर्ज्यमानां संलक्ष्य दशग्रीवेण जानकीं ।
देवगन्धर्वकन्यास्ता विषेदुर्विपुलेक्षणाः ॥१०॥
कटाक्षौष्ठविकारैश्च मुखाकारैस्तथापराः ।
सीतामाश्वासयन्ति स्म तर्जितां तेन रक्षसा ॥११॥
ताभिराश्वासिता देवी रावणं लोकरावणं ।
उवाचात्महितं वाक्यं वृत्तशौटीर्यगर्विता ॥१२॥
नूनं न ते जनः कश्चिदस्ति निःश्रेयसे परः ।
निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥१३॥
न हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः ।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसापि मां ॥१४॥
राक्षसाधम रामस्य पत्नीममिततेजसः ।
उक्तवानीदृशं वाक्यं द्रक्ष्यसे तस्य निश्चयं ॥१५॥
यथा दृप्तश्च मातङ्गः शशश्चासदृशो युधि ।
तथा मातङ्गवद्रामस्त्वं नीचः शशवन्मतः ॥१६॥
स त्वमिक्ष्वाकुदायादं क्षिपन्नेवं न बुध्यसे ।
चक्षुषोर्विषये तस्य न तावदवतिष्ठसे ॥१७॥
इमे ते नयने क्रूरे विषमे कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मादृष्ट्वैवं मां हि पश्यतः ॥१८॥
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ।
कथं व्याहरतः पाप जिह्वा न पतिता तव ॥१९॥

असंदेशाद्धि रामस्य तपसश्चानुपालनात् ।
न त्वां करोमि पापात्मन् भस्मसादद्य तेजसा ॥ २० ॥
नापहर्तुमहं शक्या तस्य रामस्य जीवतः ।
विधिस्तव बधार्थाय विहितोऽयं न संशयः ॥ २१ ॥
सीतायास्तद्वचः श्रुत्वा रावणो राक्षसाधिपः ।
विवृत्य नयने रौद्रे जानकीमन्ववैक्षत ॥ २२ ॥
नीलजीमूतसंकाशो महाभुजशिरोधरः ।
सिंहसत्त्वगतिः श्रीमान् दीप्तास्यो दीप्तलोचनः ॥ २३ ॥
चलाग्रमुकुटः प्रांशुश्चित्रमाल्यानुलेपनः ।
रक्ताम्बरधरः श्रीमांस्तप्तकाञ्चनभूषणः ॥ २४ ॥
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः ।
रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २५ ॥
श्रोणीसूत्रेण महता मेखलेन सुसंवृतः ।
अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २६ ॥
अवेक्षमाणो वैदेहीं क्रोधसंरक्तलोचनः ।
उवाच रावणः सीतां भुजङ्ग इव निश्वसन् ॥ २७ ॥
अनयेनाभिसंयुक्तामर्थहीनामनुव्रतां ।
नाशयाम्यहमद्य त्वां सूर्यः संध्यामिवोदितः ॥ २८ ॥
इत्युक्त्वा मैथिलीं तत्र रावणो लोकरावणः ।
संदिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ २९ ॥

नानाप्रकरणा घोरा नानारूपसमन्विताः ।
मांसशोणितदिग्धाङ्गीर्मेदोदिग्धकराननाः ॥ ३० ॥
अनाशिता असंतुष्टाः सदा मांसवसाप्रियाः ।
नानारूपसमुत्थाना नानावेशधराः सदा ॥ ३१ ॥
आत्तमुद्गरनिस्त्रिंशशक्तिप्रासपरश्वधाः ।
विचित्रमाल्याभरणा रक्तमाल्यानुलेपनाः ॥ ३२ ॥
यथा मद्वशगा सीता क्षिप्रं भवति जानकी ।
तथा कुरुत राक्षस्यो निःशङ्कं मम शासनात् ॥ ३३ ॥
सामदानविभेदैश्च प्रतिलोमानुलोमतः ।
आवर्तयत वैदेहीं ब्रङ्कदण्डोद्यमैरपि ॥ ३४ ॥
इति प्रतिसमादिश्य राक्षसी राक्षसेश्वरः ।
काममन्युपरीतात्मा जानकीं पर्यवर्जयत् ॥ ३५ ॥
उपगम्य ततस्तूर्णं प्रिया मन्दोदरी तदा ।
परिषज्य दशग्रीवमिदं वचनमब्रवीत् ॥ ३६ ॥
मया क्रीड महाराज सीतया किं करिष्यसि ।
अकामां काममानस्य शरीरं परिपीड्यते ॥ ३७ ॥
इच्छन्तीं काममानस्य रतिर्भवति शोभना ।
प्रीतिमाङ्गस्तु विद्वांसः कामस्य फलमुत्तमं ॥ ३८ ॥
एवमुक्तो दशग्रीवः प्रियया सोऽनुरूपया ।
तप्तकाञ्चनवर्णाभं प्रविवेश गृहं ततः ॥ ३९ ॥

# रामायणं

## XXV.

देवगन्धर्वकन्याश्च नागकन्याश्च तास्तदा ।
परिवार्य दशग्रीवं प्राविशन् गृहमुत्तमं ॥ १ ॥
निर्याते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ।
राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २ ॥
ततः प्रहस्य तां सीतां राक्षस्यो विकृताननाः ।
परुषं परुषानर्हामप्रियं वाक्यमब्रुवन् ॥ ३ ॥
किं त्वमन्तःपुरे सीते सर्वकामसमन्विते ।
महार्हशयनोपेते निवासं नाभिनन्दसि ॥ ४ ॥
मनसा मानुषं चैव भर्तारं बहुमन्यसे ।
निवर्तय मतिं रामान्न त्वं जातु गमिष्यसि ॥ ५ ॥
किं त्वमावसथे रम्ये नानारत्नविभूषिते ।
सह राक्षसराजेन रमसे नाद्य मैथिलि ॥ ६ ॥
येन देवास्त्रयस्त्रिंशत् सुरराजश्च निर्जितः ।
तस्य नैर्ऋतराजस्य भार्यायै किं न कल्पसे ॥ ७ ॥
मानुषी मानुषं किं त्वं राममिच्छसि शोभने ।
राज्यभ्रष्टमसिद्धार्थं विक्लवं हीनबान्धवं ॥ ८ ॥
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभानना ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ९ ॥

# सुन्दरकाण्डं

यदिदं लोकविद्विष्टमुदाहरथ दारुणं ।
न तन्मनसि वाक्यं मे किल्विषं संप्रवर्तते ॥१०॥
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।
यथा भृगुर्महावीर्यः स्वस्याः पत्न्या मतोऽभवत् ॥११॥
तथाशक्यः परित्यक्तुं ममासौ दैवतं पतिः ।
सीतायास्तद्वचः श्रुत्वा राक्षस्यः क्रोधमूर्छिताः ॥१२॥
भर्त्सयन्ति स्म वैदेहीं क्रूरैर्वाक्यैस्ततस्ततः ।
अवलीनस्तु तद्वाक्यं हनूमान् शिंशपाद्रुमे ॥१३॥
सीतां संतर्जयन्तीनां राक्षसीनां स शुश्रुवे ।
तामतिक्रम्य संरब्धा वेपमानां समन्ततः ॥१४॥
भृशं संलिलिहुर्जिह्वाः प्रलम्बवदनच्छदाः ।
ऊचुश्चैनां सुसंरब्धा गृहीत्वासिपरश्वधान् ॥१५॥
यदि नेच्छसि भर्तारं रावणं बध्यसे ध्रुवं ।
सा भर्त्स्यमाना घोराभी राक्षसीभिर्वराङ्गना ॥१६॥
सवाष्पमपसर्पन्ती शिंशपां तामुपागमत् ।
ततस्तां शिंशपां सीता राक्षसीभिरभिद्रुता ॥१७॥
अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ।
तां कृशां दीनवदनां मलिनाम्बरसंवृतां ॥१८॥
अत्रासयन्त वैदेहीं राक्षस्यस्ताः समन्ततः ।
ततस्तु विनता नाम राक्षसी घोरदर्शना ॥१९॥

अब्रवीत् कुपिताकारा कराला निर्णतोदरी ।
सीते पर्याप्तमेतावद्भर्तृस्नेहनिदर्शनं ॥ २० ॥
सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ।
परितुष्टास्मि ते भद्रे कर्तव्यं मानुषं कृतं ॥ २१ ॥
मम चापि वचस्तथ्यं ब्रुवत्याः शृणु मैथिलि ।
रावणं भज भर्तारं भर्तारं सर्वरक्षसां ॥ २२ ॥
विक्रान्तं रूपवन्तं च वीरमिन्द्रसमं युधि ।
दक्षिणं चार्यशीलं च सर्वस्य प्रियवादिनं ॥ २३ ॥
मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ।
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ॥ २४ ॥
अद्यप्रभृति लोकानां सर्वेषामीश्वरी भव ।
अग्नेः स्वाहा यथा पत्नी शक्रस्य च यथा शची ॥ २५ ॥
उमा रुद्रस्य देवस्य सूर्यस्य च सुवर्चला ।
दीक्षा सोमस्य महिषी लक्ष्मीर्विष्णोर्यशस्विनी ॥ २६ ॥
ब्रह्मणो वा क्रिया भार्या सन्ध्या पूष्णो वराङ्गना ।
एवं त्वं राक्षसेन्द्रस्य भव पत्नी वरानने ॥ २७ ॥
किं ते रामेण सुभगे कृपणेन गतायुषा ।
रावणं भज भर्तारं त्वच्चित्तं त्वत्परायणं ॥ २८ ॥
एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि ।
अस्मिन् मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयं ॥ २९ ॥

अन्या तु विकटा नाम राक्षसी घोरदर्शना ।
अब्रवीत् कुपिताकारा मुष्टिमुद्यम्य गर्जती ॥ ३० ॥
बह्वन्यप्रतिरूपाणि वचनानि सहामहे ।
अनुक्रोशान्मृदुत्वाच्च स्नेहाच्च तव जानकि ॥ ३१ ॥
तव हेतोर्वयं बाले परिक्लिश्यामहे भृशं ।
इच्छ वा रावणं सीते नश्य वा किं चिरेण ते ॥ ३२ ॥
एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि ।
अस्मिन् मुहूर्त्ते सर्वास्त्वां भक्षयिष्यन्त्यसंशयं ॥ ३३ ॥
ततो हयमुखी घोरा लम्बितास्या निशाचरी ।
अब्रवीत् कुपिता सीतां दीप्तास्या दीप्तलोचना ॥ ३४ ॥
अनुनीता त्वमस्माभिश्चिरं सान्त्वेन मैथिलि ।
न च नः कुरुषे वाक्यं हितं कालपरिष्कृतं ॥ ३५ ॥
आनीतासि समुद्रस्य पारमन्यैर्दुरासदं ।
रावणान्तःपुरं घोरं प्रविष्टासि च मैथिलि ॥ ३६ ॥
अलमश्रुप्रपातेन त्यज शोकं निरर्थकं ।
रावणान्तःपुरे रुद्धामस्माभिश्च सुरक्षितां ॥ ३७ ॥
न त्वां शक्तः परित्रातुमपि देवः पुरन्दरः ।
कुरुष्व हितवादिन्या वचनं मम मैथिलि ॥ ३८ ॥
भज प्रीतिं च हर्षं च त्यजैतां नित्यदीनतां ।
सीते राक्षसराजेन सह क्रीड यथासुखं ॥ ३९ ॥

न ज्ञानासि यथा भीरु स्त्रिया यौवनमध्रुवं ।
यावन्न तद्व्यतिक्रामेत् तावत् सुखमवाप्नुहि ॥ ४० ॥
उद्यानानि च रम्याणि पर्वतोपवनानि च ।
सह राक्षसराजेन भ्रम त्वं मदिरोत्कटा ॥ ४१ ॥
स्त्रीसहस्राणि ते सप्त वशे स्थास्यन्ति मैथिलि ।
रावणं भज भर्तारं भर्तारं सर्वरक्षसां ॥ ४२ ॥
उत्पाट्य वा ते हृदयं भक्षयिष्यामहे वयं ।
यदि मे व्याहृतं वाक्यं यथावन्न करिष्यसि ॥ ४३ ॥
ततो वक्रोदरी नाम राक्षसी घोरदर्शना ।
भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् ॥ ४४ ॥
इमां हरिणलोलाक्षीं त्रासोत्कम्पिपयोधरां ।
रावणेन हृतां दृष्ट्वा ममाभूद्दोहदो महान् ॥ ४५ ॥
यकृत्पिण्डमथो क्रोडं हृदयं रसबन्धनं ।
अन्त्राणि च तथा शीर्षं स्वादेयमिति मे मतिः ॥ ४६ ॥
पुनर्वै विकटा नाम राक्षसी वाक्यमब्रवीत् ।
कण्ठमस्या निपीड्यैव मृतेति प्रतिवेद्यतां ॥ ४७ ॥
दृष्ट्वा ह्येतां निरुच्छ्वासां वैवस्वतवशं गतां ।
भक्ष्यतामिति सुव्यक्तं प्रभुराज्ञापयिष्यति ॥ ४८ ॥
ततस्त्वजमुखी नाम राक्षसी प्रत्युवाच तां ।
विभजाम वयं सर्वा विवादो मे न रोचते ॥ ४९ ॥

ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ।
अजामुख्या यदेवोक्तं तदेव मम रोचते ॥५०॥
सुरा चानीयतां क्षिप्रं माल्यं च विविधं बहु ।
मानुषं मांसमास्वाद्य प्रनृत्याम निकुम्भिले ॥५१॥
उच्यमानैवमस्माभिः करोति वचनं न चेत् ।
तस्मादेनामवष्टभ्य खादाम सहिता वयं ॥५२॥
एवं निर्भर्त्स्यमाना सा सीता सुरसुतोपमा ।
राक्षसीभिः सुघोराभिर्धैर्यं त्यक्त्वा रुरोद ह ॥५३॥
तथा तासां वदन्तीनां परुषं दारुणं बहु ।
राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥५४॥
विपुलौ स्नपयन्ती सा स्तनौ नेत्रजलस्रवैः ।
चिन्तयन्ती च शोकस्य तस्यान्तं नाधिगच्छति ॥५५॥
सर्वोपायैरुपक्रम्य सीतां तां रावणस्त्रियः ।
तूष्णीं बभूवुर्युगपत् कृत्वाज्ञां भर्तुरादृताः ॥५६॥

इत्यार्षे रामायणे सुन्दरकाण्डे रावणगर्जनं
नाम चतुर्विंशः सर्गः—राक्षसीतर्जनं
नाम पञ्चविंशः सर्गः ॥

# रामायणं

## XXVI.

श्रुत्वा तद्वेपमाना सा प्रवाते कदली यथा ।
राक्षसीनां भयात् तत्र विवर्णवदनाभवत् ॥ १ ॥
तस्याः सुविपुला दीर्घा वेपन्त्याः परमस्त्रियाः ।
दृश्यते कम्पिता वेणी व्यालीव परिवर्तिनी ॥ २ ॥
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी ।
उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ ३ ॥
न मानुषी राक्षसस्य भार्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ४ ॥
निःश्वसन्ती सुदुःखार्त्ता दुःखोपहतचेतना ।
आर्त्ता व्यसृजदश्रूणि मैथिली विललाप च ॥ ५ ॥
लोकप्रवादः सत्योऽयं पण्डितैरुपलक्षितः ।
अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषेण वा ॥ ६ ॥
यदाहमाभिः क्रूराभिः राक्षसीभिरभिद्रुता ।
जीवामि पतिहीना च मुहूर्त्तमपि दुःखिता ॥ ७ ॥
सा राक्षसीमध्यगता सीता सुरसुतोपमा ।
न शर्म तत्रालभत राघवेण विनाकृता ॥ ८ ॥
स्वगात्रं प्रविशन्तीव सा चावेपत मैथिली ।
वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ९ ॥

सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पितां ।
चिन्तयामास शोकार्त्ता भर्तारं गतमानसा ॥१०॥
हा राम इति शोकार्त्ता हा पुनर्लक्ष्मणेति च ।
हा श्वश्रूर्मम कौशल्ये सुमित्रे चैव भाविनि ॥११॥
एषाल्पपुण्या कृपणा विलपामि यथासुखं ।
समुद्रमध्ये नौः पूर्णा ताडिता मारुतैर्यथा ॥१२॥
भर्तारं तमपश्यन्ती पश्यन्ती राक्षसीगणं ।
सीदामि खलु शोकेन कूलं तोयहतं यथा ॥१३॥
त पद्मदलरक्ताक्षं सिंहविक्रमशालिनं ।
धन्याः पश्यन्ति काकुत्स्थं कृतज्ञं प्रियवादिनं ॥१४॥
सर्वथा तेन हीनाया रामेण विदितात्मना ।
तीक्ष्णं विषमिवास्वाद्य दुर्लभं जीवितं मम ॥१५॥
कीदृशं तु मया पापं पुरा देहान्तरे कृतं ।
यदयं प्राप्यते शोको मया घोरा च यातना ॥१६॥
जीवितं त्यक्तुमिच्छामि शोकेन महतावृता ।
मया नावाप्यते कामो राक्षसीभिः सुरक्षिता ॥१७॥
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यतां ।
यन्न शक्यं परित्यक्तुमात्मच्छन्देन जीवितं ॥१८॥
यस्मादपारे दुःखे मां प्राप्तां नयति नान्तकः ।
प्रसक्ताश्रुमुखीत्येवं ब्रुवती जनकात्मजा ॥१९॥

अधोमुखमुखी बाला विललाप सुदुःखिता ।
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव चातुरा ॥ २० ॥
उपावृत्ता किशोरीव चेष्टमाना महीतले ।
राघवस्य प्रसक्ता च रक्षसा कामरूपिणा ॥ २१ ॥
रावणेन प्रमथ्याहमानीता रुदती बलात् ।
राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणं ॥ २२ ॥
चिन्तयन्ती सुदुःखार्त्ता न हि शक्नोमि जीवितुं ।
न हि मे जीवितेनार्थो नाप्यर्थैर्न विभूषणैः ॥ २३ ॥
वसन्त्या रक्षसां मध्ये विना रामं महाबलं ।
धिङ्मामनार्यामसतीं याहं तेन विनाकृता ॥ २४ ॥
मुहूर्त्तमपि जीवामि जीवन्ती पापजीविकां ।
का नाम जीविते श्रद्धा सुखे वा तं प्रियं विना ॥ २५ ॥
भर्तारं सागरान्ताया वसुधायाः प्रियंवदं ।
ह्रियतां भक्ष्यतां वापि शरीरं विसृजाम्यहं ॥ २६ ॥
न चेदं सुमहद्दुःखं सहेयं प्रियवर्जिता ।
चरणेनापि वामेन न स्पृशेयं कदाचन ॥ २७ ॥
रावणं किं पुनर्नीचं कामयेयं विगर्हितं ।
प्रत्यादिष्टं न जानाति नात्मानं नात्मनः कुलं ॥ २८ ॥
यो नृशंसस्वभावेन मां परामर्ष्टुमिच्छति ।
छित्वा भित्वा च खादन्तां दीप्ते वाग्नौ प्रवेश्यतां ॥ २९ ॥

रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरं ।
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च राघवः ॥ ३० ॥
सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ।
राक्षसानां जनस्थाने सहस्राणि चतुर्दश ॥ ३१ ॥
येनैकेन निरस्तानि स मां नाभ्युपपद्यते ।
इहस्थां मां न जानीते नूनं लक्ष्मणपूर्वजः ॥ ३२ ॥
जानन् न हि स तेजस्वी धर्षणां मर्षयिष्यति ।
विराधो दण्डकारण्ये येन राक्षसपुङ्गवः ॥ ३३ ॥
शरेणैकेन निहतः स मां नाभ्युपपद्यते ।
हृतेति यो हि मां गत्वा राघवाय निवेदयेत् ॥ ३४ ॥
गृध्रराजो रणे सोऽपि रावणेन निपातितः ।
कृतं कर्म महत् तेन वृद्धेनापि जटायुषा ॥ ३५ ॥
तिष्ठता रावणद्वन्द्वे मां तदाभ्युपपद्यता ।
यदि मामिह जानीयात् तिष्ठन्तीं रावणालये ॥ ३६ ॥
अद्य बाणैः स संक्रुद्धः कुर्याल्लङ्कामराक्षसां ।
विध्वंसयेत् पुरीं लङ्कां शोषयेच्च महार्णवं ॥ ३७ ॥
रावणस्य च नीचस्य दुष्कुलं नावशेषयेत् ।
ततो निहतनाथानां राक्षसीनां गृहे गृहे ॥ ३८ ॥
यथा मे रुदितैरेवं प्रगीतेव पुरी भवेत् ।
अन्विष्याराक्षसीं लङ्कां कुर्याद्रामः सलक्ष्मणः ॥ ३९ ॥

न तयोर्हि शरैः स्पृष्टो मुहूर्त्तमपि जीवति ।
कामं मध्ये समुद्रस्य दुर्धर्षा रक्षसां पुरी ॥ ४० ॥
न तु रामस्य बाणानामप्राप्यं भुवि विद्यते ।
चिताधूमाकुलपथा गृध्रमण्डलसंकुला ॥ ४१ ॥
अचिरेण पुरी लङ्का श्मशानसदृशी भवेत् ।
नूनं राक्षसकन्यानां रुदन्तीनां गृहे गृहे ॥ ४२ ॥
श्रोष्यामि न चिरादेव दुःखार्त्तानां महाधनिं ।
अचिरेणैव कालेन प्राप्स्याम्येवं मनोरथं ।
दुष्टात्मायं यथा याति रावणो बधमात्मनः ॥ ४३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीतानिर्वेदो
नाम षड्विंशः सर्गः ॥

# सुन्दरकाण्डं

## XXVII.

सीतायास्तु वचः श्रुत्वा राक्षस्यः क्रोधमूर्छिताः ।
जग्मुः काश्चित् तदाख्यातुं रावणस्य दुरात्मनः ॥ १ ॥
अन्याः सीतामुपागम्य राक्षस्यो घोरदर्शनाः ।
पुनः परुषमेवार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥
हन्तेदानीं तवानार्ये सीते पापविनिश्चये ।
राक्षस्यो भक्षयिष्यन्ति मांसान्युत्कृत्य सर्वशः ॥ ३ ॥
सीतां ताभिरनार्याभिर्दृष्ट्वा निर्भर्त्सितां तदा ।
राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥ ४ ॥
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्यात्मजामिष्टां स्नुषां दशरथस्य च ॥ ५ ॥
स्वप्नो ह्यद्य मया दृष्टो दारुणो लोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या भवाय च ॥ ६ ॥
एवमुक्तास्त्रिजटया राक्षस्यः प्रेक्ष्य मैथिलीं ।
सर्वा एवाब्रुवन् भीतास्त्रिजटां परिवार्य ताः ॥ ७ ॥
श्रोतुमिच्छामहे सर्वास्तव दुःस्वप्नदर्शनं ।
कीदृशः स त्वया दृष्टः परं कौतूहलं हि नः ॥ ८ ॥
तासामेतद्वचः श्रुत्वा त्रिजटा वृद्धराक्षसी ।
वक्तुं बद्धाञ्जलिपुटा तं स्वप्नमुपचक्रमे ॥ ९ ॥

सपर्वतवनां कृत्स्नां ग्रसमानो वसुन्धरां ।
मयाद्य दृष्टः स्वप्नान्ते रुधिरं पीतवान् बहु ॥१०॥
गजदन्तमयीं दिव्यां शिविकामन्तरीक्षगां ।
युक्तां गजसहस्रेण स्वयमास्थाय राघवः ॥११॥
समुद्रेण परिक्षिप्तमारूढः श्वेतपर्वतं ।
रामेण संगता सीता भास्करेण प्रभा यथा ॥१२॥
इहोपयातः काकुत्स्थो भार्यया सह सीतया ।
लक्ष्मणेन च वीरेण विमाने पुष्पके स्थितः ॥१३॥
पाण्डरर्षभयुक्तेन रथेनाश्वयुजा स्वयं ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन समन्वितः ॥१४॥
विमानात् पुष्पकादद्य रावणः पातितो मया ।
क्रियमाणः स्त्रिया दृष्टो मुण्डो रक्ताम्बरो हसन् ॥१५॥
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
प्रयातो दक्षिणामाशां प्रविष्टः कार्दमं ह्रदं ॥१६॥
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ।
काली कमलपत्राक्षी दिशं याम्यां प्रकर्षति ॥१७॥
वानरेण मया दृष्टः शिशुमारेण चासकृत् ।
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशं ॥१८॥
समाजः सुमहान् वृत्तो नृत्यवादित्रगीतवान् ।
पिबतां मुण्डशीर्षाणां रक्षसां रक्तवाससां ॥१९॥

## सुन्दरकाण्डं

लङ्का चेयं पुरी कृत्स्ना सवाजिरथकुञ्जरा ।
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥ २० ॥
पीत्वा तैलं प्रवृत्ताश्च प्रहसन्त्यो महास्वनाः ।
लङ्कायां भस्मरूपायां सर्वा राक्षसयोषितः ॥ २१ ॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ।
पीतैर्निवासिता वस्त्रैः क्रीडन्तो गोमये ह्रदे ॥ २२ ॥
श्वेतपर्वतमारूढ एक एव विभीषणः ।
चतुर्भिर्मन्त्रिभिः सार्द्धं राक्षसैरनिलादिभिः ॥ २३ ॥
अपसर्पत नश्यध्वं श्रुत्वा खलु स राघवः ।
घातयेत् परमामर्षी सर्वानेव हि राक्षसान् ॥ २४ ॥
प्रियां बहुमतां भार्यां वनवासेऽप्यनुव्रतां ।
भर्त्सितां तर्जितां चापि न रामो मर्षयिष्यति ॥ २५ ॥
निमित्तभूतमेतद्धि श्रुत्वास्याः सुमहत् प्रियं ।
ईषत् प्रहसितं सौम्यं दक्षिणाया अदक्षिणं ॥ २६ ॥
पश्यतः स्पन्दमानं च पद्मपत्रमिवायतं ।
सर्वासामेव युष्माकं प्रत्यक्षमिह लोचनं ॥ २७ ॥
अकस्मादेव वैदेह्या बाहुरेकः प्रवेपितः ।
करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः ॥ २८ ॥
रूपं कथयतीवास्या राघवं पुरतः स्थितं ।
यस्या ह्येतादृशः स्वप्नो दुःखितायाः प्रदृश्यते ॥ २९ ॥

सा दुःखैर्बहुभिर्मुक्ता प्रियं पश्यत्यनन्तरं ।
तत् सीतामभियाचामो राक्षस्यः किं विवक्षया ॥३०॥
राघवाद्धि भयं घोरं राक्षसानामुपस्थितं ।
अपि चास्या विशालाक्ष्या न किञ्चिदुपलक्षये ॥३१॥
विरुद्धं गुणसङ्गेषु सुसूक्ष्ममपि लक्षणं ।
इयं द्वैगुण्यमात्रेण शङ्के दुःखमुपागता ॥३२॥
अदुःखार्हामिमां देवीं न क्लेशयितुमर्हथ ।
इयं वै देवगुह्येन रक्षोनाशार्थमागता ॥३३॥
अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थितां ।
रावणस्य विनाशं च विजयं राघवस्य च ॥३४॥

पक्षी तु शाखानिलयोऽभ्युवाच
पुनः पुनश्चोत्तमसान्त्ववादी ।
सुस्वागतां वाचमुदीरयन् वै
प्राप्तं प्रियं दर्शयतीव काकः ॥३५॥

इत्यार्षे रामायणे सुन्दरकाण्डे त्रिजटास्वप्नकथनं
नाम सप्तविंशः सर्गः ॥

# सुन्दरकाण्डं

## XXVIII.

सा राक्षसेन्द्रस्य वचो निशम्य
    तद्राक्षसीनां च वचः सुतीक्ष्णं ।
सीता वितत्रास यथा वनान्ते
    सिंहाभिपन्नेव गजेन्द्रकन्या ॥ १ ॥
सा राक्षसीमध्यगता च भीरुस्
    तथा भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विहीना
    बालेव योषा विललाप सीता ॥ २ ॥
सत्यं वचो यत् प्रवदन्ति विप्रा
    नाकालमृत्युर्भवतीह लोके ।
यत्राहमेवं पतिना विहीना
    जीवामि दीना क्षणमल्पपुण्या ॥ ३ ॥
सुखैर्विहीनं बहुदुःखपूर्णम्
    इदं हि नूनं हृदयं स्थिरं मे ।
विदीर्यते यन्न सहस्रधाद्य
    वज्राहतं शृङ्गमिवाचलस्य ॥ ४ ॥
नूनं त्विदानीं मम शेषमस्ति
    बध्यास्मि तस्याप्रियदर्शनस्य ।

भावं न तस्याहमनुप्रपद्याम्
मद्द्विजो ब्रह्म यथा न त्यजेत् ॥५॥
नूनं ममाङ्गान्यचिरादनार्यः
शस्त्रैः शितैश्छेत्स्यति राक्षसोऽयं ।
तस्मिन्ननागच्छति लोकनाथे
गर्भान् विनष्टानिव शल्यहर्ता ॥६॥
द्वौ चापि मासौ समयावशिष्टौ
दण्डं च मे धास्यति तीक्ष्णरोषः ।
बद्धस्य बध्यस्य यथावशिष्टो
राजापराधैरिव तस्करस्य ॥७॥
हा राम हा लक्ष्मण हा सुमित्रे
हा राममातः सह मे जनन्या ।
एषा विनश्याम्यहमल्पभाग्या
महार्णवे नौरिव वातमूढा ॥८॥
तरस्विनो धारयतो मृगस्य
व्याजेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विनष्टौ मम कारणे तौ
सिंहर्षभौ वैद्युतवह्निनेव ॥९॥
नूनं स कालो मृगवेशधारी
मामल्पपुण्यां लुलुभे तदानीं ।

न्ययोजयं यत् तु विमूढचेता
रामानुजं लक्ष्मणपूर्वजं च ॥१०॥
तस्याश्च रामं प्रतिचिन्तयन्त्याः
पत्युः कुलं स्वं च कुलं शुभाङ्ग्याः ।
प्रादुर्निमित्तानि तदा बभूवुः
सुरर्षिसिद्धाभ्युपलक्षितानि ॥११॥
तथागतां तां व्यथितामनिन्दितां
व्यपेतहर्षां परिदीनमानसां ।
आसन् निमित्तानि शुभानि सर्वतो
नरं श्रिया जुष्टमिवानुयायिनः ॥१२॥
तस्याः शुभं वाममरालपक्ष्म
राजीकृतं कृष्णविशालशुक्लं ।
प्रास्पन्दतैकं नयनं वराङ्ग्या
मीनाहतं पद्ममिवातिताम्रं ॥१३॥
बाहुश्च पर्यायतपीनवृत्तः
परार्ध्यकालागुरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण
वीरेण वामः परिवेपते स्म ॥१४॥
गजेन्द्रहस्तप्रतिमश्च पीनः
पीतोरुरेकः सुशुभः सुजातः ।

प्रस्पन्दमानः कनकावदातो
 रामं पुरस्तात् स्थितमाचचक्षे ॥१५॥
एतैर्निमित्तैरपरैश्च सुभ्रूः
 संबोधिता प्रागपि साध्यसिद्धिः ।
वातातपक्लान्तमिवाप्रधृष्यं
 वर्षेण बीजं प्रतिसंजिजीवे ॥१६॥
तस्याः पुनर्बिम्बफलाधरौष्ठ्याः
 सुजातकेशान्तमरालपक्ष्म ।
वक्त्रं बभासे सितचारुदन्तं
 राहोर्मुखाच्चन्द्र इवाप्रमुक्तः ॥१७॥
सा वीतशोका व्यपनीततन्द्री
 शान्तज्वरा हर्षविशुद्धसत्वा ।
व्यराजतात्यर्थमतीवशुक्ला
 शीतांशुना रात्रिरिवोदितेन ॥१८॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीतानिमित्तसूचनं
नाम अष्टाविंशः सर्गः ॥

# सुन्दरकाण्डं

## XXIX.

हनूमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसीनां च भाषितं ॥ १ ॥
अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास मारुतिः ॥ २ ॥
यां कपीनां सहस्राणि प्रयुतान्यर्बुदानि च ।
दिक्षु सर्वासु मार्गन्ति सेयमासादिता मया ॥ ३ ॥
चारेण च सुयुक्तेन शत्रोः शक्तिव्यपेक्षया ।
गूढेन चरता तत्त्वमुपेक्षितमिदं मया ॥ ४ ॥
राक्षसानां विशेषश्च पुरी चेयं परीक्षिता ।
राक्षसाधिपतेस्तस्य प्रभावो रावणस्य च ॥ ५ ॥
युक्तं तस्याप्रमेयस्य सत्यं सत्त्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसां ॥ ६ ॥
अदृष्टदुःखा दुःखस्य न ह्यन्तमधिगच्छति ।
यदि त्वहमिमामेकां शोकोपहतचेतसं ॥ ७ ॥
अनाश्वास्य गमिष्यामि दोषो बहुमतो भवेत् ।
मया च स महाबाहुः पूर्णचन्द्रनिभाननः ॥ ८ ॥
समाश्वासयितुं शक्यः सीतादर्शनकाङ्क्षितः ।
निशाचरीणां प्रत्यक्षमक्षमं चाभिभाषणं ॥ ९ ॥

कथं नु खलु कर्तव्यमिति चिन्तापरोऽभवत् ।
अनेनाङ्कोऽवशेषेण यदि नाश्वास्यते मया ॥१०॥
सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितं ।
रामश्च यदि मां पृच्छेत् किं मे कान्ताब्रवीदिति ॥११॥
किमहं तं प्रतिब्रूयामपृष्ट्वेमां सुमध्यमां ।
यदि चोद्वेजयिष्यामि रामं पद्मनिभेक्षणं ॥१२॥
व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ।
सीतासंदेशरहितं मामितस्तरसा गतं ॥१३॥
निर्दहेदपि काकुत्स्थः क्रुद्धस्तीक्ष्णेन चक्षुषा ।
यद्यनाश्वास्य यास्यामि संतापबहुलामिमां ॥१४॥
प्राप्तदोषो भविष्यामि दोषश्चाभाषणे महान् ।
अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः ॥१५॥
अनेनाश्वासयिष्यामि शोकेनापिहितेन्द्रियां ।
अहं ह्यविदितश्चैव वानरश्च विशेषतः ॥१६॥
यदि वाचं वदिष्यामि द्विजातिरिव संस्कृतां ।
सेयमालक्ष्य रूपं च जानकी भाषितं च मे ॥१७॥
रावणं मन्यमाना मां पुनस्त्रास गमिष्यति ।
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ॥१८॥
विजानती विशालाक्षी रावणं कामरूपिणं ।
सीतया च कृते शब्दे सहसा राक्षसीगणः ॥१९॥

नानाप्रहरणैर्घोरैर्मामुपेयान्न संशयः ।
ततो मे परिसंक्षिप्य सर्वास्ता विकृताननाः ॥ २० ॥
बधे वा ग्रहणे वापि यत्नं कुर्युर्यथाबलं ।
ततः शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनां ॥ २१ ॥
शीघ्रं परिविधावन्तं यदा प्राप्तुं न शक्नुयुः ।
तदा कुर्युः समाह्वानं रक्षसां भीमकर्मणां ॥ २२ ॥
राक्षसेन्द्रनियुक्तानां राक्षसानां निवेशने ।
ते शक्तिशरनिस्त्रिंशविविधायुधपाणयः ॥ २३ ॥
आपतेयुर्विमर्देऽस्मिन् वेगिता विघ्नकारिणः ।
स्यादियं वा गृहीताथ मम वा ग्रहणं कृतं ॥ २४ ॥
हिंसारुचित्वान्मां हिंस्युरिमां वा जनकात्मजां ।
विपन्नं स्यात् ततः कार्यं रामसुग्रीवयोरिदं ॥ २५ ॥
हते वापि गृहीते वा मयि क्रुद्धैर्निशाचरैः ।
नान्यं वीक्षेत वैदेही रामस्य चरमीदृशं ॥ २६ ॥
विमृश्य न च पश्यामि यो हते मयि वानरः ।
शतयोजनविस्तीर्णं लङ्घयेच्च महोदधिं ॥ २७ ॥
देशे दुर्गे च दूरे च सागरेणाभिसंवृते ।
गुप्ते वसति वैदेही राक्षसेन्द्राभिरक्षिते ॥ २८ ॥
संबुद्धस्त्वतिवेगेन विध्वंसेयं निशाचरान् ।
शक्नुयां न तु तत् प्राप्तुं परं पारं महोदधेः ॥ २९ ॥

कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसां ।
एवं तु सुमहत् कार्यं विनश्येन्नात्र संशयः ॥३०॥
अनित्यानि च युद्धानि संशयो मे न रोचते ।
कश्च निःसंशये कार्ये कुर्यात् कार्यं ससंशयं ॥३१॥
एष दोषो महान् मे स्यात् सीतासमभिभाषणे ।
कथं नु खलु मे वाक्यं शृणुयान्नोद्विजेत वा ॥३२॥
इति चिन्तापरो भूत्वा चकार मतिमान् मतिं ।
राममक्लिष्टकर्माणं निमित्तैरनुकीर्तयन् ॥३३॥
तस्माद्वक्ष्याम्यहं वाक्यं मनुष्य इव संस्कृतं ।
नैनामुद्वेजयिष्यामि तद्बुद्धिगतमानसां ॥३४॥
पतिं हि परिशृण्वन्ती राममक्लिष्टकारिणं ।
पश्यन्ती चाग्रतः साध्वी नोद्वेगं मे गमिष्यति ॥३५॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्विचारणं
नाम एकोनत्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XXX.

एवं बहुविचित्रार्थं चिन्तयित्वा महाकपिः ।
शनैः संश्रवणे वाक्यं सीताया व्याजहार वै ॥ १ ॥
राजा दशरथो नाम प्रभूतबलवाहनः ।
पुण्यशीलो महाकीर्त्तिर्देवदर्शी महायशाः ॥ २ ॥
अहिंसारुचिरक्षुद्रः कान्तः सत्यपराक्रमः ।
पुण्यस्येक्ष्वाकुवंशस्य विश्रुतः कीर्त्तिवर्धनः ॥ ३ ॥
पार्थिवव्यञ्जनोपेतः पृथुश्रीः पार्थिवर्षभः ।
पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ४ ॥
तस्य पुत्रः प्रियो ज्येष्ठस्तारापतिनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मतां ॥ ५ ॥
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
रक्षिता स्वस्य वंशस्य सुजनस्य च रक्षिता ॥ ६ ॥
स च सत्याभिसंधस्य वृद्धस्य वचनात् पितुः ।
सभार्यः सह भ्रात्रा च रामः प्रव्रजितो वनं ॥ ७ ॥
तत्र तस्य महारण्ये मृगयां परिधावतः ।
रक्षसापहृता भार्या मिथिलाधिपतेः सुता ॥ ८ ॥
जनस्थानबधं श्रुत्वा हतौ च खरदूषणौ ।
तेनामर्षादिहानीता रावणेन दुरात्मना ॥ ९ ॥

## रामायणं

देवि वैदेहि रामस्त्वां पतिः कौशल्यमब्रवीत् ।
देवरश्चापि ते वीरः कुशलं लक्ष्मणोऽब्रवीत् ॥ १० ॥
विररामैवमुक्त्वा तु हनूमान् मारुतात्मजः ।
जानकी चापि तच्छ्रुत्वा जहर्ष च ननन्द च ॥ ११ ॥
ततः सा चारुकेशान्ता क्लेशसंवृतचेतना ।
उन्नम्य वदनं भीरुः शिंशपां तामुदैक्षत ॥ १२ ॥
ततः शाखान्तरे लीनं त्रस्ता चलितमानसा ।
ददर्श प्रसृता सीता वानरं प्रियवादिनं ॥ १३ ॥
सा च दृष्ट्वा हरिवरं विनीतवदुपस्थितं ।
मैथिली चिन्तयामास स्वप्नोऽयमिति भाविनी ॥ १४ ॥
सा तं समीक्ष्यैव विसंज्ञकल्पा विमूढचेताश्च बभूव सीता ।
चिरेण संज्ञां प्रतिलभ्य चैव विचिन्तयामास विशालनेत्रा ॥ १५ ॥
स्वप्नो ममायं शयिता न चास्मि भयेन शोकेन च दह्यमाना ।
निद्रा हि मे नास्ति यथा विहीना तेनाहमिन्दुप्रतिमाननेन । १६ ।
अहं हि तस्यैव मनोभवेन संमोहिता तद्गतसर्वभावा ।
संचिन्तयन्ती सततं तमेव ध्यानेन पश्यामि तथा शृणोमि ॥ १७ ॥
मनोरथैश्चैव तु चिन्तयामि तथैव बुद्ध्या परितर्कयामि ।
किं कारणं तत्र हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं मां ॥ १८ ॥
नमोऽस्तु रुद्राय नमोऽस्तु वज्रिणे स्वयम्भुवे चैव हुताशनाय ।
अनेन वाक्यं यदि सत्यकीर्तितं वनौकसा तन्निखिलं तथास्तु । १९ ।

# सुन्दरकाण्डं

## XXXI.

ततः स हनुमान् भूयो जानकीमभ्यभाषत ।
शिरस्यञ्जलिमाधाय वैदेहीं प्रतिपूजयन् ॥ १ ॥
का त्वं पद्मपलाशाक्षि पीतकौशेयवासिनी ।
द्रुमशाखामथालम्ब्य तिष्ठस्यमरवर्णिनि ॥ २ ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजं ।
पुण्डरीकपलाशाभ्यां सुप्रसन्नमिवोदकं ॥ ३ ॥
का त्वं भवसि रुद्राणां मरुतां वा वरानने ।
का वसूनां वरारोहे देवता प्रतिभासि मे ॥ ४ ॥
अथ चन्द्रमसा हीना पतिता विबुधालयात् ।
रोहिणी ज्योतिषामग्र्या संप्राप्तासि सुलोचने ॥ ५ ॥
कामाद्वा यदिवा लोभाद्भर्तारमसितेक्षणे ।
वशिष्ठं कोपयित्वासि संप्राप्ता त्वमरुन्धती ॥ ६ ॥
व्यञ्जनानि च ते यानि लक्षणानि च लक्षये ।
महिषी भूमिपालस्य राजकन्यासि मे मता ॥ ७ ॥
रावणेन जनस्थानाद्बलादपहृता यदि ।
सीता त्वमसि वैदेही तन्ममाख्याहि भाविनि ॥ ८ ॥
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ।
उवाच वाक्यं वैदेही वृक्षान्तरगतं कपिं ॥ ९ ॥

दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम्ना विख्याता भार्या रामस्य धीमतः ॥ १० ॥
उषिता वर्षमेवैकं राघवस्य निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वभोगसमृद्धिनी ॥ ११ ॥
ततः संवत्सरादूर्द्ध्वं न्यमन्त्रयत तं पिता ।
राज्येनेक्ष्वाकुवंशस्य सामात्यः सपुरोहितः ॥ १२ ॥
ततः संकीर्त्यमाने तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तारमिदं वचनमब्रवीत् ॥ १३ ॥
न पास्ये न च भोक्ष्येऽहं प्रत्यूहं मम भोजनं ।
एष मे जीवितस्यान्तो यदि रामोऽभिषिच्यते ॥ १४ ॥
यदुक्तं हि त्वया वाक्यं प्रीत्या नृपतिसत्तम ।
तच्चैवावितथं तेऽस्तु वनं गच्छतु राघवः ॥ १५ ॥
स राजा वचनात् तस्या वरदानमनुस्मरन् ।
मुमोह दुर्वचः श्रुत्वा कैकेय्यास्तु तदप्रियं ॥ १६ ॥
ततः स स्थविरो राजा सत्यधर्मव्यवस्थितः ।
ज्येष्ठं यशस्विनं पुत्रं रुदन् राज्यमयाचत ॥ १७ ॥
स पितुर्वचनं श्रुत्वा राज्यादपि महत्तरं ।
मनसा पूर्वमासाद्य राज्यं प्रतिगृहीतवान् ॥ १८ ॥
दद्यान्न प्रतिगृह्णीयादृतं ब्रूयान्न चानृतं ।
अपि जीवितहेतोर्हि रामः सत्यपराक्रमः ॥ १९ ॥

स विहायोत्तरीयाणि महार्हाणि महायशाः ।
विसृज्य मनसा राज्यं जनन्यै वनमास्थितः ॥ २० ॥
साहं तस्याग्रतस्तूर्णं प्रस्थिता चीरवाससः ।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥ २१ ॥
प्रागेव तु महाबुद्धिः सौमित्रिर्भ्रातृवत्सलः ।
पूर्वजस्यानुयात्रार्थं द्रुमचीरैरलंकृतः ॥ २२ ॥
ते वयं भर्तुरादेशं बहुमन्य दृढव्रताः ।
प्रविष्टाः स्म पुरं त्यक्त्वा वनं गम्भीरमोजसा ॥ २३ ॥
वसतो दण्डकारण्ये तस्याहममितौजसः ।
रक्षसापहृता भार्या रावणेन दुरात्मना ॥ २४ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् हरिपुङ्गवः ।
दुःखाद्दुःखाभिपन्नात्मा वाक्यमुत्तरमब्रवीत् ॥ २५ ॥
अहं रामस्य संदेशादिह दूतस्तवागतः ।
वैदेहि कुशली रामः स त्वां कौशल्यमब्रवीत् ॥ २६ ॥
लक्ष्मणश्च महाबाहुः सुमित्रानन्दिवर्धनः ।
कृतवान् शोकसंतप्तः शिरसा तेऽभिवादनं ॥ २७ ॥
मातृवत् स्मरति त्वां हि नित्यं नन्दिविवर्धनः ।
यः पुरा छद्मनारण्ये कृत्वा रूपं मनोहरं ॥ २८ ॥
काञ्चनं मृगसंस्थानं देवि त्वां पर्यलोभयत् ।
स तं रामो मम भ्राता ज्येष्ठः पितृसमस्तथा ॥ २९ ॥

धर्मतो धर्मतत्त्वज्ञो राजीवशुभलोचनः ।
विव्याधायतमुक्तेन शरेणानतपर्वणा ॥ ३० ॥
कृत्वा च सुमहानादं मारीचो निपपात ह ।
प्रीत्यर्थं त्वद्वचःश्लाघी पृष्ठतोऽनुससार ह ॥ ३१ ॥
एतस्मिन्नन्तरे वाक्यं यदुक्तं परुषं त्वया ।
स ते प्रणमते नित्यं लक्ष्मणो देवि देवरः ॥ ३२ ॥
वन्दमानं तु तं दृष्ट्वा सीता शशिनिभानना ।
दीर्घमुष्णं च निश्वस्य वानरं वाक्यमब्रवीत् ॥ ३३ ॥
मायाबलमुपाश्रित्य यदि त्वं रावणः स्वयं ।
संतापयसि मां भूयः संतप्तां तन्न शोभनं ॥ ३४ ॥
अथ रामस्य दूतस्त्वमागतो भद्रमस्तु ते ।
पृच्छामि त्वां हरिश्रेष्ठ प्रियां रामकथां हि मे ॥ ३५ ॥
गुणान् रामस्य कथय प्रियस्य मम वानर ।
चित्तं हरसि मे सौम्य नदीकूलमिवोष्लगः ॥ ३६ ॥
अहो स्वप्नमिमं मन्ये स्वप्ने दृष्टश्च वानरः ।
न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो महान् ॥ ३७ ॥
अहो स्वप्नस्य सुखता याहमेव विनाकृता ।
प्रेषितं त्वाभिपश्यामि राघवेण वनौकसं ॥ ३८ ॥
स्वप्नेऽपि यद्यहं रामं पश्येयं सहलक्ष्मणं ।
जीवेयमभिपश्यन्ती स्वप्नोऽपि मम मत्सरी ॥ ३९ ॥

किन्नु मे चित्तमोहोऽयमुत मारुतविक्रिया ।
उन्मादो वा विकारो वा स्यादियं मृगतृष्णिका ॥ ४० ॥
अथवा नायमुन्मादो मोहो ह्युन्मादलक्षणः ।
संबुध्ये चाहमात्मानमिमं चापि वनौकसं ॥ ४१ ॥
इत्येवं बहुधा सीता संप्रधार्य महाबलं ।
राक्षसं कामरूपित्वान्मेने तं वानराधिपं ॥ ४२ ॥
अजिज्ञासत् ततो भूयो वानरं जनकात्मजा ।
एतां बुद्धिं तदा कृत्वा वैदेही वाक्यमब्रवीत् ॥ ४३ ॥
अनुमानैः कपिश्रेष्ठ भूयो मे वक्तुमर्हसि ।
यथा रामस्य दूतस्त्वं कश्च रामो वनौकसां ॥ ४४ ॥
सीतायास्तद्वचः श्रुत्वा वायुपुत्रः प्रतापवान् ।
श्रोत्रानुकूलैर्वचनैरथ तां समभाषत ॥ ४५ ॥
यः स विग्रहवान् धर्मः साधुः सत्यपराक्रमः ।
परित्राता च दाता च सर्वभूतहिते रतः ॥ ४६ ॥
बलवान् मातरिश्वेव महेन्द्र इव दुर्जयः ।
आदित्य इव तेजस्वी लोककान्तो यथा शशी ॥ ४७ ॥
प्रियः सर्वस्य लोकस्य राजा वैश्रवणोपमः ।
विक्रमेणोपपन्नश्च यथा विष्णुर्महाबलः ॥ ४८ ॥
सत्यवादी मधुरवाग् देवो वाचस्पतिर्यथा ।
रूपवान् सुभगः श्रीमान् कन्दर्प इव मूर्त्तिमान् ॥ ४९ ॥

जितक्रोधः प्रहर्ता च श्रेष्ठो लोके महारथः ।
बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः ॥५०॥
न चिराद्रावणं संख्ये स हनिष्यति वीर्यवान् ।
रोषप्रदीप्तैरिषुभिः सविषैरिव पन्नगैः ॥५१॥
अपवाह्याश्रमपदान्मृगरूपेण राघवं ।
शून्ये येनापनीतासि तस्य संद्रक्ष्यसे फलं ॥५२॥
तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः ।
त्वद्वियोगेन शोकार्त्तः स त्वां कौशल्यमब्रवीत् ॥५३॥
लक्ष्मणश्च महातेजाः सुमित्रानन्दिवर्धनः ।
अभिवाद्य महाबाहुः स त्वां कौशल्यमब्रवीत् ॥५४॥
रामस्य च सखा वीरः सुग्रीवो नाम वीर्यवान् ।
राजा वानरमुख्यानां स त्वां कौशल्यमब्रवीत् ॥५५॥
नित्यं स्मरति ते रामः सुग्रीवः सहलक्ष्मणः ।
दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता ॥५६॥
न चिराद्द्रक्ष्यसे रामं सुग्रीवं सहलक्ष्मणं ।
मध्ये वानरकोटीनां मरुतामिव वासवं ॥५७॥
अहं सुग्रीवसचिवो हनूमान् नाम वानरः ।
दूतोऽहं राजसिंहस्य रामस्याक्लिष्टकर्मणः ॥५८॥
त्वत्सकाशमिह प्राप्तो रामवाक्यप्रचोदितः ।
प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिं ॥५९॥

कृत्वा मूर्ध्नि पदन्यास रावणस्य दुरात्मनः ।
कृत्स्ना च विचिता लङ्का स्वमाश्रित्य पराक्रमं ॥ ६० ॥
नाहमस्मि तथा देवि यथा मामधिगच्छसि ।
विशङ्का त्यज्यतामेषा वदतः संप्रतीहि मे ॥ ६१ ॥

मलयगिरितटस्थितोऽहमेको
लवणजलनिधिर्गोष्पदीकृतो मे ।
अनृतमपि मया च नोक्तपूर्वं
वचनमिदं मम मैथिलि प्रतीहि ॥ ६२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीतासंमोहो
नाम त्रिंशःसर्गः — हनुमत्संभाषणं
नाम एकत्रिंशः सर्गः ॥

# रामायणं

## XXXII.

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभं ।
उवाच वचनं तत्त्वमिदं मधुरया गिरा ॥ १ ॥
क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणं ।
वानराणां नराणां च कथमासीत् समागमः ॥ २ ॥
कीदृशं तस्य संस्थानं रूपं रामस्य कीदृशं ।
कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ ३ ॥
एवमुक्तस्तु वैदेह्या हनूमान् मारुतात्मजः ।
ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४ ॥
जानामि परमं दृष्ट्वा यन्मां त्वं परिपृच्छसि ।
भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥ ५ ॥
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
राजा विद्याविनीतानां ब्राह्मणानामुपासिता ॥ ६ ॥
रामो विद्याविनीतश्च विनेता च परान् रणे ।
अर्चिता चार्चनीयानां ब्रह्मचारी दृढव्रतः ॥ ७ ॥
सधूनामुपचारज्ञः प्रचारज्ञश्च कर्मणां ।
दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् ॥ ८ ॥
धनुर्वेदे च वेदे च वेदाङ्गेषु च निष्ठितः ।
यजुर्वेदविनीतश्च विद्वद्भिश्च सुपूजितः ॥ ९ ॥

विपुलांशो महाबाहुः कम्बुग्रीवः शुभाननः ।
दृढजत्रुः सुताम्राक्षो रामः सत्यपराक्रमः ॥ १० ॥
समः समविभक्ताङ्गो दृढगुल्फशिरास्थिकः ।
चतुःकिष्कुश्चतुर्दंष्ट्रो द्विशुल्को दशपद्मवान् ॥ ११ ॥
षडुन्नतो दशावर्त्तीस्त्रिभिर्व्याप्नोति राघवः ।
त्रिवलीकस्त्रिविनतश्चतुर्गन्धस्त्रिकालवित् ॥ १२ ॥
त्रित्रिकस्त्रिप्रलम्बी च महात्यष्टौ महात्मनः ।
चतुः कृष्णश्चतुर्लेखः षोडशाक्षश्चतुःसमः ॥ १३ ॥
चतुर्दशसमद्वन्द्वः पञ्चस्नेहोऽष्टवंशवान् ।
भ्राता चास्य च वैमात्रः सौमित्रिरपराजितः ॥ १४ ॥
अनुरागेण वीर्येण रूपेण च समन्वितः ।
यथा च राघवो दूतं मामवाप शुचिस्मिते ॥ १५ ॥
सुग्रीवेण यथा चैव संगतं तच्छृणुष्व मे ।
हृतायां त्वयि वैदेहि हृते चैव जटायुषि ॥ १६ ॥
रावणेनापनीतां त्वां श्रुत्वा दीनस्तु राघवः ।
अन्विष्टवांस्तदा शूरो जनस्थानमितस्ततः ॥ १७ ॥
अन्वेषमाणस्त्वां चैव भर्ता ते पृथिवीमिमां ।
सुग्रीवं ददर्श भ्रात्रा पूर्वजेन विनाकृतं ॥ १८ ॥
स मया देवि शैलाग्रमानीतः सहलक्ष्मणः ।
चकार मित्रं सुग्रीवं तव दर्शनकाङ्क्षया ॥ १९ ॥

तं रामो बाहुवीर्येण स्वराज्ये प्रत्यपादयत् ।
कपिराजं रणे हत्वा बालिनं सुमहाबलं ॥ २० ॥
स्वराज्यं प्राप्य सुग्रीवो वानरेन्द्रः प्रतापवान् ।
अन्वेष्टुं वानरान् सर्वानादिदेश दिशो दश ॥ २१ ॥
तेन स्म कपिराजेन प्रेषिताः सर्वतो दिशः ।
देवि त्वां राघवस्यार्थे सर्वे वै मृगयामहे ॥ २२ ॥
व्यतिक्रान्ता तु नः संस्था विले नष्टतमोनुदि ।
ततस्तस्य गिरेर्मूर्द्ध्नि वयं प्रायमुपास्महे ॥ २३ ॥
अथ नः पर्वते विन्ध्ये निराशानमितद्युतिः ।
भृशं शोकार्णवे मग्नानङ्गदः प्रत्यवेदयत् ॥ २४ ॥
तव नाशं च वैदेहि बालिनश्च तथा बधं ।
प्रायोपवेशमस्माकं विनाशं च जटायुषः ॥ २५ ॥
तच्छ्रुत्वा गृध्रराजस्य भ्राता सम्पातिरब्रवीत् ।
यवीयान् केन मे भ्राता हतः कस्मिंश्च कारणे ॥ २६ ॥
शशंस चाङ्गदस्तस्य जनस्थाने महाबधं ।
राक्षसेनातिकायेन त्वां च तत्रापवाहितां ॥ २७ ॥
जटायुषस्तु सम्पातिर्बधं श्रुत्वा सुदुःखितः ।
आचष्ट भवतीं देवीं निहितां रावणालये ॥ २८ ॥
सोऽहं दुःखपरीतानां ज्ञातीनां सुमहद्भयं ।
आत्मवीर्यं च विज्ञाय प्लुतवान् मकरालयं ॥ २९ ॥

अहं च कपिमुख्याश्च गुणवन्तो महाबलाः ।
त्वां देवि राघवस्यार्थे मार्गमाणा भ्रमामहे ॥ ३० ॥
अस्माभिस्ते महार्हाणि भूषणान्यपि भूषिते ।
विप्रकीर्णानि दृष्टानि निहितानि च जानकि ॥ ३१ ॥
यानि ते व्यपविद्धानि तरसा ह्रियमाणया ।
तानि रामाय दत्तानि मया भास्मन्ति मैथिलि ॥ ३२ ॥
तान्यङ्के दर्शनीयानि कृत्वा बहुविधं मुहुः ।
तेन देवनिकाशेन रामेण परिदेवितं ॥ ३३ ॥
शयितं च चिरं भूमौ दुःखार्त्तेन महात्मना ।
मया च विविधैर्वाक्यैः कृच्छ्रादुत्थापितस्तदा ॥ ३४ ॥
त्वद्दर्शनपरो देवि राघवः परितप्यते ।
महता ज्वलता देवि वह्निनेवाग्निपर्वतः ॥ ३५ ॥
त्वत्कृते मदनश्चैव शोकचिन्ता च राघवं ।
तापयन्ति महात्मानमग्न्यागारमिवाग्नयः ॥ ३६ ॥
तवादर्शनयुक्तेन शोकेन च विचाल्यते ।
महाभूमिचलेनेव शिलाधातुचितो गिरिः ॥ ३७ ॥
नदी रम्याः स पश्यन् वै काननानि महान्ति च ।
रतिं न विन्दते रामस्त्वामपश्यन् नृपात्मजे ॥ ३८ ॥
स त्वां पुरुषशार्दूलः क्षिप्रं द्रक्ष्यति राघवः ।
समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ ३९ ॥

गोकर्णो दृश्यते यस्मात् पर्वताद्गन्धमादनात् ।
तस्माद्गच्छति गोकर्णं पर्वतं केशरी हरिः ॥४०॥
तत्र देवर्षिभिर्जुष्टे पिता मम महाकपिः ।
तीर्थे नदीपतेर्भुङ्क्ते शङ्खमुक्ताश्च नाथवत् ॥४१॥
तस्य केशरिणः क्षेत्रे जातोऽहं मातरिश्वना ।
हनूमानिति विख्यातः प्रकाशः स्वेन कर्मणा ॥४२॥
विश्वासार्थं हि वैदेहि पितुरुक्ता महागुणाः ।
यथा मां त्वं कपिं व्यक्तं मन्येथा नान्यथेति च ॥४३॥
रामनामाङ्कितं चेदं प्रगृह्णाणाङ्गुरीयकं ।
तदभिज्ञानहेतोर्हि दत्तं तेन महात्मना ॥४४॥
सुवर्णस्य सुवर्णस्य सुवर्णस्य च भाविनि ।
रामेण प्रहितं देवि सुवर्णस्याङ्गुरीयकं ॥४५॥
अथ हर्षपरीताङ्गी वाष्पेणापिहितानना ।
प्रतिजग्राह तं देवी चक्रे शिरसि चैव हि ॥४६॥
श्रुत्वा च रामसंदेशं दृष्ट्वा चैवाङ्गुरीयकं ।
नेत्राभ्यां कृष्णसाराभ्यां मुमोचानन्दजं जलं ॥४७॥
तस्याश्च विमलं वक्त्रं सुदन्तं सुगुणैर्युतं ।
यथा राहुविनिर्मुक्तमभवच्चन्द्रमण्डलं ॥४८॥

इत्यार्षे रामायणे सुन्दरकाण्डे अङ्गुरीयकदानं
नाम द्वात्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XXXIII.

स शोकार्त्तामशोकस्थां ददर्श हनुमान् कपिः ।
विमुक्तां किन्नरेणेव किन्नरीं जनकात्मजां ॥ १ ॥
तां निरीक्ष्य विशालाक्षीं क्षितौ क्षितिरजोऽरुणां ।
वाष्पसंदिग्धया वाचा पुनर्वचनमब्रवीत् ॥ २ ॥
दूतोऽहमनवद्याङ्गि लङ्कां प्राप्तो नृपाज्ञया ।
त्वदर्थं प्रेषितस्तेन राघवेण बलीयसा ॥ ३ ॥
सा तस्य वचनं श्रुत्वा मानुषस्येव जल्पतः ।
अकरोत् सत्वमाश्रित्य न विषादं न विस्मयं ॥ ४ ॥
तथा ब्रुवाणं वैदेही वानरं रावणालये ।
नाभ्यभाषत शोकेन हर्षेण च जडीकृता ॥ ५ ॥
स मुहूर्त्ताद्धरिश्रेष्ठो हनुमानर्थकोविदः ।
निपत्य पादयोर्मूर्द्ध्ना कीर्तयामास राघवं ॥ ६ ॥
यशसा तेजसा चैव धैर्येण च समन्वितः ।
युक्तो योगविदां श्रेष्ठः स त्वां कौशल्यमब्रवीत् ॥ ७ ॥
यः समुद्र इवाक्षोभ्यो हिमवानिव निश्चलः ।
सत्यधर्म इवाकम्प्यः स त्वां कौशल्यमब्रवीत् ॥ ८ ॥
प्रियो यस्य च सौमित्रिः सौमित्रेश्चापि यः प्रियः ।
यो नाथो वानरेन्द्रस्य स त्वां कौशल्यमब्रवीत् ॥ ९ ॥

रामस्य कन्यसो भ्राता सुमित्रा येन सुप्रजा ।
प्रणम्य शिरसा पादौ स त्वां कौशल्यमब्रवीत् ॥ १० ॥
पितृवद्वीक्षते रामं त्वां च पश्यति मातृवत् ।
यो नित्यमरविन्दाक्षि स त्वां कौशल्यमब्रवीत् ॥ ११ ॥
ततस्तद्वचनं श्रुत्वा वानरस्य महात्मनः ।
मुमोच दुःखिता सीता शोकोष्णं वारि नेत्रजं ॥ १२ ॥
अशोभन्त पतन्तोऽस्या नेत्राभ्यामश्रुबिन्दवः ।
फुल्लाभ्यामिव पद्माभ्यां प्रसक्तास्तोयबिन्दवः ॥ १३ ॥
सा प्रमृज्यायते नेत्रे कराभ्यां करुणावती ।
उपपन्नैरभिज्ञानैर्दूतं तमवगच्छत ॥ १४ ॥
सा तु विश्वासिता तेन हेतुभिश्च निदर्शिता ।
अतुलं चागता हर्षं परां प्रीतिं च भाविनी ॥ १५ ॥
बाष्पसंरुद्धनयना शिंशपां तामुदैक्षत ।
दृष्ट्वा च हनुमन्तं सा विनीतं संहताञ्जलिं ॥ १६ ॥
बाष्पसंदिग्धया वाचा शोकहर्षविमिश्रया ।
उवाच मधुरं वाक्यं हरिं हरिणलोचना ॥ १७ ॥
यत्नेयं देवताः काले अस्यार्थे प्लवगोत्तम ।
दिष्ट्या जीवति मे भर्ता दिष्ट्या जीवति लक्ष्मणः ॥ १८ ॥
परितुष्टा चिराच्छ्रुत्वा रामकौशल्यजां कथां ।
लक्ष्मणस्य च वीरस्य प्राशंसदथ मारुतिं ॥ १९ ॥

कपे त्वामभिनन्दामि चिरं जीव सुखी भव ।
सानुजः कुशली भर्ता येन मेऽद्य निवेदितः ॥ २० ॥
बलेन यशसा चैव वर्धस्व प्रज्ञया तथा ।
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं प्लवगर्षभ ॥ २१ ॥
येनायं राक्षसावासस्त्वयैकेन प्रधर्षितः ।
शतयोजनविस्तीर्णः सागरश्च महोदधिः ॥ २२ ॥
विक्रमैः श्लाघनीयेन क्रमता गोष्पदीकृतः ।
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ॥ २३ ॥
यस्य ते नैव संत्रासो रावणान्न च संभ्रमः ।
अर्हसे च कपिश्रेष्ठ मया समभिभाषणं ॥ २४ ॥
यस्मात् संप्रेषितस्तेन रामेण विदितात्मना ।
प्रेषयिष्यति मेधावी रामो न ह्यपरीक्षितं ॥ २५ ॥
पराक्रममविज्ञाय मत्समीपं विशेषतः ।
दिष्ट्या च कुशली रामो धर्मात्मा धर्मवत्सलः ॥ २६ ॥
लक्ष्मणश्च महातेजाः सुमित्रानन्दिवर्धनः ।
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ॥ २७ ॥
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ।
कच्चिद्दीनो न संभ्रान्तः कार्येषु परिमुह्यते ॥ २८ ॥
कच्चित् पुरुषकार्याणि कुरुते पार्थिवात्मजः ।
विविधं त्रिविधोपायमुपायं कच्चिदास्थितः ॥ २९ ॥

अविरागी च धृष्टश्च कच्चित् कर्माणि चोत्थितः ।
यस्तु नारभते कर्म नरो दैवपरायणः ॥ ३० ॥
क्षिप्रं भवति निर्द्रव्यः पलायनपरायणः ।
कच्चिन्मित्राणि भजते मित्रैर्वाप्यधिगम्यते ॥ ३१ ॥
कच्चित् कल्याणवृत्तश्च मित्रैरपि च सत्कृतः ।
देवानां कच्चिदाशास्ते प्रसादं पार्थिवात्मजः ॥ ३२ ॥
कच्चित् पुरुषकारं च दैवं च प्रतिपद्यते ।
कच्चिन्न विगतस्नेहो विप्रवासान्नरर्षभः ॥ ३३ ॥
अपि मां व्यसनादस्मात् सुघोराद्उद्धरिष्यति ।
सुखानामुचितो नित्यमसुखानां च नोचितः ॥ ३४ ॥
दुःखमुत्तममासाद्य कच्चिद्रामो न सीदति ।
मन्निमित्तं च मानार्हः कच्चिद्वानर राघवः ॥ ३५ ॥
अल्पमायास्यते रामो विदेशे नृपतेः सुतः ।
यदि जीवति काकुत्स्थः किमर्थं रावणालयं ॥ ३६ ॥
न निर्दहति कोपेन युगान्ताग्निरिवोत्थितः ।
किमर्थं मर्षयति मामरिसंस्थाममर्षणः ॥ ३७ ॥
न रावणविनाशाय प्रयत्नमनुतिष्ठति ।
अपि मां व्यसनादस्मात् सुघोराद्उद्धरिष्यति ।
धक्ष्यते शार्यकैश्चेमां त्वयि प्रतिगते पुरीं ॥ ३८ ॥

कच्चित् स नाथो मम राजपुत्रः

सर्वस्य लोकस्य च धर्मनाथः ।
मां वीरनाथां बलिना गृहीताम्
अनाथवत् तां प्रतिचिन्तयानः ॥ ३९ ॥
कच्चिन्न तत् सोमसमानकान्तं
तस्याननं पद्मसमानगन्धि ।
शश्वच्छुभं शुष्यति मत्प्रणाशात्
जलात्यये पद्ममिवातपेन ॥ ४० ॥
धर्मोपदेशात् त्यजतः स्वराज्यं
मां चाप्यरण्यं नयतः पदातेः ।
नासीद्व्यथा तस्य न भीर्न शोकः
कच्चित् स धैर्यं वहते सदैव ॥ ४१ ॥
श्रुत्वा ममैतां विषमां प्रवृत्तिं
कच्चित् स विक्रामति लोकनाथः ।
तावच्च जीवेयमहं हनूमन्
यावत् प्रवृत्तिं शृणुयात् प्रियो मे ॥ ४२ ॥
उक्त्वा स पूर्वं परुषं मूढया प्रेषितो मया ।
गतो रामगतं मार्गं कच्चिज्जीवति लक्ष्मणः ॥ ४३ ॥
कच्चिज्जीवति कौशल्या सुमित्रा च यशस्विनी ।
कच्चिदक्षौहिणी भीमा भरतस्य महात्मनः ॥ ४४ ॥
ध्वजिनी मन्त्रिभिर्गुप्ता क्षिप्रमेष्यति मत्कृते ।

कच्चिच्चेहागमिष्यन्ति वानरा भीमविक्रमाः ॥ ४५ ॥
कच्चित् स लक्ष्मणः श्रीमान् सुमित्रानन्दिवर्धनः ।
अस्त्रविच्छरजालेन प्रमथिष्यति राक्षसान् ॥ ४६ ॥
रौद्रेण परमास्त्रेण रामेण निहतं रणे ।
इच्छामि रावणं द्रष्टुं सपुत्रज्ञातिबान्धवं ॥ ४७ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीतावाक्यं
नाम त्रयस्त्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XXXIV.

एतच्छ्रुत्वा शुभं वाक्यं सीताया मारुतात्मजः ।
इदं मधुरया वाचा कृताञ्जलिरभाषत ॥ १ ॥
न तावद्देवि जानीते त्वामिहस्थां स राघवः ।
धक्ष्यते शायकैराशु मयि प्रतिगते पुरीं ॥ २ ॥
विष्टभ्य स हि बाणौघैरगाधं वरुणालयं ।
करिष्यति पुरीं लङ्कां प्रयत्नादप्यराक्षसां ॥ ३ ॥
मम श्रुत्वैव तु वचः क्षिप्रमेष्यति राघवः ।
प्रकर्षन् महतीं सेनां वानराणां महात्मनां ॥ ४ ॥
तत्र यद्यन्तरा मृत्युर्यदि सेन्द्रा दिवौकसः ।
स्थास्यन्ति तानपि रणे काकुत्स्थो निहनिष्यति ॥ ५ ॥
त्वददर्शनशोकेन महता समभिप्लुतः ।
न शान्तिं लभते रामः सिंहार्दित इवर्षभः ॥ ६ ॥
सत्येन वै शपे देवि तथैव सुकृतेन च ।
दर्दुरेण च वैदेहि शपे मूलफलेन च ॥ ७ ॥
वरुणेन सविन्ध्येन मेरुणा मन्दरेण च ।
यथा सुनयनं वीरं बिम्बौष्ठं चारुदर्शनं ॥ ८ ॥
क्षिप्रं द्रक्ष्यसि रामस्य पूर्णचन्द्रनिभं मुखं ।
त्वामेव ध्यायति सदा विशालाक्षि स राघवः ॥ ९ ॥

सुप्तस्यैव हि रामस्य निद्रा नैवोपतिष्ठति ।
न भक्षयति मांसानि न मधूनि च सेवते ॥१०॥
वानेयं विहितं त्वेकमश्नुते भक्ष्यमुत्तमं ।
न कामान्न च संरम्भान्न च कार्यान्न वृद्धये ॥११॥
आहारमाहारयते प्राप्ते काले तथाष्टमे ।
मतिमानपि काकुत्स्थो धीरश्चैव विशेषतः ॥१२॥
त्वद्वियोगजदुःखेन विक्लवः समपद्यत ।
न शौर्ये नास्त्रसंकल्पे न रतौ न च भोजने ॥१३॥
सुखं विन्दति वैदेहि त्वद्गतेनान्तरात्मना ।
विलपन् सततं भीरु शोचंश्च बहुशो भृशं ॥१४॥
जीवितं निन्दते नित्यं कुलं जन्म च सर्वथा ।
धिङ्ममास्त्राणि दिव्यानि धिग् वीर्यं धिक् पराक्रमं ॥१५॥
धिक् च शूरकुले जन्म इक्ष्वाकूणां महात्मनां ।
यत्र मे राक्षसैर्भार्या प्राणैरिष्टतमा सती ॥१६॥
हृतावमन्य तृणवत् कृत्वा मे सर्वथा कुलं ।
नैव दंशान् न मशकान् नान्यानपि सरीसृपान् ॥१७॥
राघवो वारयेदङ्गात् तवार्थे वरवर्णिनि ।
नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ॥१८॥
नान्यच्चिन्तयत चापि त्वद्गतेनान्तरात्मना ।
त्वामेव चिन्तयन् रामः सुप्तोऽपि प्रतिबुध्यते ॥१९॥

सीतेति मधुरां वाणीं व्याहरन् पुरुषर्षभः ।
फलं चालोक्य पुष्पं वा यच्चान्यत् स्त्रीमनोहरं ॥ २० ॥
गृहीत्वा हा प्रियेत्येवं विश्वासपरमोऽभवत् ।
हा सीते हानवद्याङ्गि हा ममाद्भुतदर्शने ।
क्वासि कुत्रासि वैदेहि इति रोदिति सर्वदा ॥ २१ ॥

उदितमपि निशासु वीक्ष्य चन्द्रं
प्रकृतिसुखं सुखशीतलांशुजालं ।
मदनवशगतो विहाय निद्रां
नयति गिरिं नयनैः शशाङ्कमस्तं ॥ २२ ॥

त्वामेव नित्यं परिचिन्तयन् स
प्रियेति हा हेति च तप्यमानः ।
दृढव्रतो राजसुतो महात्मा
तवोपलम्भाय कृतप्रयत्नः ॥ २३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्वाक्यं
नाम चतुस्त्रिंशः सर्गः ॥

## XXXV.

सीता तद्वचनं श्रुत्वा पूर्णचन्द्रनिभानना ।
हनूमन्तमथोवाच वचो धर्मार्थसंहितं ॥ १ ॥
विषेणेवामृतं मिश्रं भाषितं वचनं त्वया ।
यच्च नान्यमना रामो यच्च कामेन पीडितः ॥ २ ॥
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषो बद्ध्वा कृतान्तेनोपनीयते ॥ ३ ॥
नूनं विधिरसंहार्यः प्राणिनां वानरर्षभ ।
सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥ ४ ॥
शोकस्यास्य कदा पारं राघवः संतरिष्यति ।
तरन् पारमिवासाद्य पुरुषः सलिलार्णवे ॥ ५ ॥
राक्षसानां क्षयं कृत्वा नाशयित्वा च रावणं ।
लङ्कामुन्मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥ ६ ॥
स वाच्यः संतरस्वेति यावदेव न पूर्यते ।
अयं संवत्सरः कालस्तावद्धि मम जीवितं ॥ ७ ॥
वर्तते दशमो मासो द्वौ तु मासौ महाकपे ।
रावणेन नृशंसेन यः कृतः समयो मम ॥ ८ ॥
विभीषणस्तु धर्मात्मा राक्षसो रावणानुजः ।
विज्ञप्तवान् रावणं स मम निर्यातनं प्रति ॥ ९ ॥

अनुनीतो मुहुस्तेन न च तत् कृतवानसौ ।
भ्रातुः सकाशात् परुषं लब्धा किल स निर्गतः ॥१०॥
मम प्रतिप्रदानं हि रावणस्य न रोचते ।
राघवान्मार्गते मृत्युं मन्ये कालवशं गतः ॥११॥
विभीषणसुता ज्येष्ठा नन्दा नाम महाकपे ।
तया मे सर्वमाख्यातं मात्रा सा प्रेषिता स्वयं ॥१२॥
अविन्ध्यो नाम तेजस्वी विद्वान् राक्षसपुङ्गवः ।
धृतिमान् शीलवान् वृद्धो रावणस्य सुसंमतः ॥१३॥
सोऽस्यानयमनुप्राप्तं रक्षसां प्रत्यवेदयत् ।
न च तस्यापि दुष्टात्मा शृणोति वचनं हितं ॥१४॥
आशंसामि हरिश्रेष्ठ क्षिप्रमेष्यति राघवः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥१५॥
उत्साहः पौरुषं सत्त्वमप्रमादः कृतज्ञता ।
विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥१६॥
चतुर्दश सहस्राणि राक्षसानां जघान यः ।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥१७॥
नासौ चालयितुं शक्यो धैर्यतः पुरुषर्षभः ।
अहमेव प्रभावज्ञा वासवस्य यथा शची ॥१८॥
शरजालांशुमान् वीरः कदा रामो दिवाकरः ।
विधमिष्यति संक्रुद्धो रावणप्रभवं तमः ॥१९॥

इति संभाषमाणां तां रामार्थे शोककर्षितां ।
अश्रुसंपूर्णवदनामुवाच हरिपुङ्गवः ॥ २० ॥
अहं त्वां चारुकेशान्ते रामायाद्यैव मैथिलि ।
प्रापयिष्यामि देवेभ्यो हव्यं हुतमिवानलः ॥ २१ ॥
अद्यैव पश्य वैदेहि राघवं सहलक्ष्मणं ।
व्यवसायसमायुक्तं दैवयुक्तेन कर्मणा ॥ २२ ॥
एहि पृष्ठं समारुह्य देव्यालम्बस्व रोमसु ।
अहं त्वां दर्शयिष्यामि राममद्यैव पश्य मां ॥ २३ ॥
त्वद्दर्शनकृतोत्साहमाश्रमस्थं महाबलं ।
पुरन्दरमिवासीनं नगराजस्य मूर्द्धनि ॥ २४ ॥
पृष्ठमारोह मे देवि मा विचारय शोभने ।
योगमन्विच्छ रामेण शशाङ्केनेव रोहिणी ॥ २५ ॥
मत्पृष्ठमधिरूढा त्वं तराकाशेन सागरं ।
वृषभं समुपारूढा देवि देवीव पार्वती ॥ २६ ॥
न हि मे संप्रयातस्य गृहीत्वा त्वां शुभानने ।
अनुयातुं गतिं शक्ताः सर्वे लङ्कानिवासिनः ॥ २७ ॥
यथैवाहमिह प्राप्तस्तथैवाहमसंशयं ।
यास्यामि पश्य वैदेहि त्वामुद्यम्य विहायसा ॥ २८ ॥
अथवा संशयो देवि मम पृष्ठाधिरोहणे ।
भूमौ मृगविहङ्गानां कस्य रूपं करोम्यहं ॥ २९ ॥

मैथिली तु हनूमन्तं भीमं भीमपराक्रमं ।
अब्रवीत् प्रसृतं वाक्यं वानरं प्रियवादिनं ॥३०॥
कथमल्पशरीरस्त्वं मामितो वोढुमर्हसि ।
सकाशं मनुजेन्द्रस्य भर्तुर्मे प्लवगर्षभ ॥३१॥
स सीताया वचः श्रुत्वा हनूमान् प्रत्यभाषत ।
हन्त वीक्षस्व वैदेहि यद्रूपं मम केवलं ॥३२॥
ततः स कपिशार्दूलो द्रुतं प्रस्कन्द्य पादपात् ।
व्यवर्धत महातेजाः कामरूपी प्लवङ्गमः ॥३३॥
नीलजीमूतसंकाशः स भूत्वा कपिकुञ्जरः ।
सीतायाः प्रमुखे स्थित्वा वाक्यमेतदथाब्रवीत् ॥३४॥
सपर्वतवनोद्देशां साट्टप्राकारतोरणां ।
लङ्कामपि सनागाश्वां नयितुं शक्तिरस्ति मे ॥३५॥
तदवस्थाप्यतां बुद्धिरलं देवि विवक्षया ।
विशोकं कुरु वैदेहि राघवं सहलक्ष्मणं ॥३६॥
तं दृष्ट्वा गिरिसंकाशमुवाच जनकात्मजा ।
पद्मपत्रविशालाक्षी मारुतस्यौरसं सुतं ॥३७॥
तव सत्त्वं बलं चैव विदितं मे महाकपे ।
वायोरिव गतिश्चैव तेजश्चाग्नेरिवोत्तमं ॥३८॥
प्लवगः कः समर्थो हि वितर्क्य मनसापि यः ।
त्वदृते कपिशार्दूल पारं गन्तुं महोदधेः ॥३९॥

जानामि गमने शक्तिं नयितुं मां च ते कपे ।
अवश्यं संप्रधार्या तु कार्यसिद्धिर्निरामया ॥४०॥
अशक्यं मे हरिश्रेष्ठ त्वया गन्तुं विहायसा ।
वायुवेगसवेगस्य वेगो मां शातयेत् तव ॥४१॥
पतिता सागरे चाहं तिमिनक्रसमाकुले ।
भवेयमाशु विवशा यादसामन्नमुत्तमं ॥४२॥
तस्य धर्मप्रधानस्य पत्न्या रामस्य वानर ।
पृष्ठं पुन्नामधेयस्य न युक्तमधिरोहितुं ॥४३॥
न युक्तो गात्रसंस्पर्शः पुरुषस्य ममानघ ।
भर्तुर्भक्तिं समाश्रित्य रामादन्यस्य कस्यचित् ॥४४॥
यदहं गात्रसंस्पर्शं रावणस्य गता बलात् ।
अनीशा किं करिष्यामि विनाथा त्ववशा सती ॥४५॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न किं तु त्वां बोधयाम्यहं ॥४६॥
बलैः समग्रैर्जित्वा मां रावणं यदि संयुगे ।
नयेत स्वपुरीं रामस्तत् स्यात् तस्य यशस्करं ॥४७॥
स मे हरिश्रेष्ठ सलक्ष्मणं पतिं सयूथपं क्षिप्रमिह त्वमानय ।
चिराय रामेण हि संगतां कपे कुरुष्व मां वानर विस्मृतज्वरां ।४८।
इत्यार्षे रामायणे सुन्दरकाण्डे हनूमत्प्रत्ययदर्शनं
नाम पञ्चत्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XXXVI.

ततः कपिर्गुणश्लाघी मारुतस्यात्मजस्तदा ।
सीतामुवाच तच्छ्रुत्वा धर्मार्थसहितं वचः ॥ १ ॥
युक्तरूपं त्वया देवि भाषितं शुभदर्शने ।
सदृशं स्त्रीस्वभावस्य साध्वीनां नियमस्य च ॥ २ ॥
स्त्रीत्वान्न त्वं समर्थासि सागरं व्यतिवर्तितुं ।
मामधिष्ठाय विस्तीर्णं शतयोजनमायतं ॥ ३ ॥
द्वितीयं कारणं यच्च ब्रवीषि शुभदर्शने ।
वर्जयाम्यहमन्यस्य संसर्गमिति जानकि ॥ ४ ॥
तवैतत् सदृशं वाक्यं पत्न्या रामस्य धीमतः ।
का ह्यन्या त्वदृते ब्रूयाद्वचनं दिव्यमीदृशं ॥ ५ ॥
श्रोष्यत्येतत् स काकुत्स्थस्तव सर्वमशेषतः ।
चेष्टितं यत् त्वया देवि भाषितं च ममाग्रतः ॥ ६ ॥
कारणैर्बहुभिर्देवि रामप्रियचिकीर्षया ।
स्नेहविक्लवया बुद्ध्या मया यत् समुदाहृतं ॥ ७ ॥
इच्छामि त्वां समानेतुमद्यैव रघुनन्दनं ।
गुरुस्नेहेन भक्त्या च नान्यथा तदुदाहृतं ॥ ८ ॥
यदि नोत्सहसे गन्तुं मया सह विहायसा ।
रामो यदभिजानीयादभिज्ञानं प्रयच्छ मे ॥ ९ ॥

एवमुक्ता हनुमता सीता सुरसुतोपमा ।
उवाच वचनं बाला वाष्पगद्गदभाषिणी ॥ १० ॥
ब्रूयास्त्वं नृपतिं सीता त्वत्प्रसादपरायणा ।
अशोकमूले शोकार्त्ता भूमौ स्वपिति जानकी ॥ ११ ॥
मलमण्डलदिग्धाङ्गी शोकाश्रुकलिलानना ।
वसन्तादौ मृताम्भोजा वापीव न विराजते ॥ १२ ॥
शोकोपहतसर्वाङ्गी तव दर्शनलालसा ।
सीता शोकार्णवे मग्ना तां समुद्धर्तुमर्हसि ॥ १३ ॥
सशरः सायुधश्चापि वीर्यवांश्च महीपते ।
ध्रियते च बधार्होऽयं रावणः किं न बुध्यसे ॥ १४ ॥
क्व ते तदायुधं चित्रं क्व शराः पावकप्रभाः ।
क्व तेजः क्व च शस्त्राणि यन्मामेवमुपेक्षसे ॥ १५ ॥
किन्नु ते पौरुषं नष्टं शङ्के मद्भाग्यसंक्षयात् ।
यदयं रावणः पापो ध्रियते जीवति त्वयि ॥ १६ ॥
ये त्वां शूरमिति प्राहुस्तेषां तद्वितथं वचः ।
न हि भार्यां परामृश्य कश्चिच्छूरस्य जीवति ॥ १७ ॥
शूरो हि रक्षते भार्यां भार्या शूरमुपासते ।
न च मां रक्षसे वीर किमिदं शूरलक्षणं ॥ १८ ॥
पूर्वं हि रक्षति पिता कौमारे रघुनन्दन ।
त्वया हीना हृता राजन् रावणेन दुरात्मना ॥ १९ ॥

# सुन्दरकाण्डं

जनकानां कुले जाता राघवाणां कुले वधूः ।
वसाम्यहमनाथेव दीना राक्षसवेश्मनि ॥ २० ॥
उच्छोषणं समुद्रस्य पतनं चन्द्रसूर्ययोः ।
चलनं शैलराजस्य शीतत्वं कृष्णवर्त्मनः ॥ २१ ॥
अश्रद्धेयानि कर्माणि यथैतानि नरोत्तम ।
तथानार्यमिदं मन्ये रावणं यदुपेक्षसे ॥ २२ ॥
एतच्चान्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ २३ ॥
भर्तव्या रक्षणीया च पत्या पत्नी हि सर्वदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ २४ ॥
ततस्तद्वचनं श्रुत्वा वैदेह्याः शोककारणं ।
शोकेन महताविष्टो हनूमान् प्ररुरोद ह ॥ २५ ॥
एवमुक्त्वा वचस्तथ्यं सीता शशिनिभानना ।
उदैक्षत ततो भूयः शिंशपां तां हिरण्मयीं ॥ २६ ॥
प्रादेशमात्रं शाखायामुपविष्टं प्लवङ्गमं ।
ददर्श सीता कल्याणी प्राञ्जलिं प्रियवादिनं ॥ २७ ॥
तं दृष्ट्वापि ततः सीता दुःखिता हि तपस्विनी ।
निश्वस्य दीर्घं तत्रस्थं पुनर्वचनमब्रवीत् ॥ २८ ॥
द्रष्टुमिच्छामि रामस्य वदनं पुष्करेक्षणं ।
पौर्णमास्यां यथा पूर्णं विमलं चन्द्रमण्डलं ॥ २९ ॥

दृष्ट्वा हि वदनं तस्य प्रहृष्येयं प्लवङ्गम ।
अर्द्धसंज्ञातसस्येव तोयं प्राप्य वसुन्धरा ॥ ३० ॥
इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं मम तं प्रियं ।
शैलस्य चित्रकूटस्य पादे तरुलताकुले ॥ ३१ ॥
तापसाश्रमवासिन्याः प्राप्य मूलफलं वने ।
यत् सिद्धसंमते देशे मन्दाकिन्या ह्यदूरतः ॥ ३२ ॥
तेषूपवनषण्डेषु नानापुष्पसुगन्धिषु ।
विहृत्य सलिलक्लिन्ना तवाङ्केऽहमुपाविशं ॥ ३३ ॥
क्रीडता मे तदा चैव त्वयागृह्य मनःशिलां ।
रचितस्तिलको वक्त्रे स संक्रान्तस्तवोरसि ॥ ३४ ॥
रोहिमांसं पुनश्चापि विततं ह्याश्रमं प्रति ।
कर्षन् काको मया चैव लोष्टेन विनिवारितः ॥ ३५ ॥
रोषयन्निव मां काकस्तत्रैव परिपीडयेत् ।
तच्चाप्यपाहरन्मांसं प्रसह्य बलिभोजनः ॥ ३६ ॥
उत्कर्षन्त्याश्च वसनं क्रुद्धायास्तस्य पक्षिणः ।
स्रंस्यमाने च वसने त्वयोपेक्षा कृता मयि ॥ ३७ ॥
त्वयावहसिता चाहं क्रुद्धा विपरिधावती ।
भक्ष्यगृध्रेण काकेन बलवत् परिनिर्जिता ॥ ३८ ॥
आसीनस्य च ते श्रान्ता पुनरङ्के समाश्रिता ।
रुष्यन्ती च प्रहृष्टेन त्वयाहं तोषिता तदा ॥ ३९ ॥

तूर्णमभ्येत्य काकेन स्तनयोरस्मि ताडिता ।
बाष्पपूर्णमुखी दीना चक्षुषी परिमार्जती ॥४०॥
लक्षिताहं त्वया तत्र वायसेन प्रकोपिता ।
तस्योद्धृत्य त्वयेषीका क्षिप्ता वरदपाणिना ॥४१॥
ब्रह्मास्त्रेणाभिसंधाय सा प्रजज्वाल खे तदा ।
अनुविद्धस्तया काको जगाम विविधा गतीः ॥४२॥
संपतन् स इमं लोकं भयादनुचचार ह ।
स च वर्षति पर्जन्ये क्रीडते पृषतान्तरे ॥४३॥
तस्येषीका त्वया क्षिप्ता छायेवानुगता द्रुतं ।
अलब्धा शर्म लोकेषु त्वामेव शरणं गतः ॥४४॥
परिद्यूनो विषण्णश्च स त्वयोक्तस्तदा विभो ।
अमोघोऽयमिषुः क्षिप्तः किमङ्ग शातयामि ते ॥४५॥
तेनैकं नयनं त्यक्तं तदीषीका व्यशातयत् ।
मत्कृते काकमात्रे ते ब्रह्मास्त्रं समुदीरितं ॥४६॥
कस्माद्यो मां हरेत् त्वत्तः क्षमेथास्त्वं महीपते ।
एवमस्त्रविदां श्रेष्ठः सत्ववान् बलवानपि । ४७॥
किमर्थमस्त्रं रक्षःसु न योजयसि राघव ।
तत् कुरुष्व महेष्वास कृपां मयि नरर्षभ ॥४८॥
आनृशंस्यं परो धर्मस्त्वत्त एव श्रुतो मया ।
न नागा न च गन्धर्वा नासुरा न च राक्षसाः ॥४९॥

तव राम रणे शक्ताः शरवेगं समासितुं ।
तव वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ॥५०॥
किमर्थं न शरैस्तीक्ष्णैः क्षयं नयसि राक्षसान् ।
भ्रातुरादेशधर्मज्ञो लक्ष्मणो वा परंतपः ॥५१॥
अस्त्रवित् स महावीर्यो न परित्राति मामितः ।
तौ यदा नरशार्दूलौ वाय्वग्निसमतेजसौ ॥५२॥
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतां ।
ममैव दुष्कृतं मन्ये महदस्ति न संशयः ॥५३॥
समर्थाववि तौ यन्मां नावेक्षेते सुदुःखितां ।
स वाच्यो राघवो वीरः पूर्णचन्द्रनिभाननः ॥५४॥
प्रणम्य पूर्वं सौहार्दात् सस्नेहं वचनं मम ।
कस्मान्न कुरुषे वीर कृपां मयि नरर्षभ ॥५५॥
जानामि त्वां महोत्साहं महासत्त्वं महाबलं ।
महाप्राज्ञं महेष्वासं वेगवन्तमरिन्दमं ॥५६॥
अपराजितमक्षोभ्यं गाम्भीर्ये सागरोपमं ।
कौशल्या लोकभर्तारं सुषुवे यं यशस्विनी ॥५७॥
तं रामं त्वं सुखं पृच्छेः शिरसा च प्रसादयेः ।
तत् कुरुष्व महेष्वास कृपां मयि नरर्षभ ॥५८॥
कथितं चेष्टितं चैव यदि स्मरसि राघव ।
ममार्थे सर्वरत्नानि प्रियाश्चैव वराङ्गनाः ॥५९॥

ऐश्वर्यं च विशालायां पृथिव्यां नाभिनन्दसि ।
पितरं मातरं चोभौ योऽनुमान्य प्रसाद्य च ॥ ६० ॥
अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजा ।
अनुक्रोशेन धर्मात्मा त्यक्त्वा सुखमनुत्तमं ॥ ६१ ॥
अनुगच्छति काकुत्स्थं पालयन् भ्रातरं वने ।
सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ॥ ६२ ॥
वृद्धोपसेवी ह्रीमांश्च शूरो न बहुजल्पिता ।
राजपुत्रः प्रियो राज्ञः सदृशः श्वशुरस्य मे ॥ ६३ ॥
मत्तः प्रियतरो नित्यं मन्ये रामस्य लक्ष्मणः ।
पितृवद्वर्तते रामे मातृवच्च तथा मयि ॥ ६४ ॥
ह्रियमाणां तदा वीरो न मां जानाति लक्ष्मणः ।
युज्यते धुरि यस्यां हि स तामुद्वहते धुरं ॥ ६५ ॥
रामस्नेहाद्वसन्नेवं वृत्तमार्यमनुस्मरन् ।
मृदुर्दान्तः शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ॥ ६६ ॥
स च मद्वचनाद्वाच्यः कुशलं बलवत्तरः ।
अप्रमत्तेन काकुत्स्थे भवितव्यं त्वयेति च ॥ ६७ ॥
उत्थायोत्थाय वक्तव्यः सौमित्रिर्वचनान्मम ।
कुशलं लक्ष्मणं पृष्ट्वा सुग्रीवं च महाबलं ॥ ६८ ॥
इदं ब्रूयाश्च मे वाक्यं रामं शूरं पुनः पुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ॥ ६९ ॥

मासादूर्द्ध्वं न जीवेयं सत्यमेतद्ब्रवीमि ते ।
रावणेनोपसृष्टां मां निकृत्या प्राकृतामिव ॥ ७० ॥
त्रातुमर्हसि नश्यन्तीं पृथिवीमिव वासवः ।
सीताया वचनं श्रुत्वा हनूमानिदमब्रवीत् ॥ ७१ ॥
सर्वं करिष्यते रामो यदुक्तं मैथिलि त्वया ।
यत् तु रामोऽभिजानीयादभिज्ञानमनिन्दिते ॥ ७२ ॥
प्रीतिसंजननं तस्य तत् प्रदातुं त्वमर्हसि ।
सा निरीक्ष्य ततः सर्वं वेण्यां ग्रथितमुत्तमं ॥ ७३ ॥
विमुच्य प्रददौ तस्मै मणिरत्नं हनूमते ।
देयोऽयं राघवायेति सीता सुरसुतोपमा ॥ ७४ ॥
मणिरत्नं हरिवरः प्रतिगृह्याभिवन्द्य च ।
सीतां प्रदक्षिणं कृत्वा प्राञ्जलिः पार्श्वतः स्थितः ॥ ७५ ॥
आपृच्छे त्वां विशालाक्षि नोत्कण्ठां कर्तुमर्हसि ।
हर्षेण महताविष्टः सीतादर्शनजेन सः ।
हृदयेन गतो रामं शरीरेण तु विष्ठितः ॥ ७६ ॥
मणिवरमुपगृह्य तं महार्हं जनकनृपात्मजाधृतं पुरस्तात् ।
द्रुम इव पवनावधूतमूर्त्तिः क्षुभिततनुर्हनुमान् कृतस्तदा ॥ ७७ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे चूडामणिप्रदानं
नाम षट्त्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XXXVII.

एवमुक्त्वा हनूमन्तं प्रियं वाक्यं मनोरमं ।
उवाचात्महितं सीता गमिष्यन्तं प्लवङ्गमं ॥ १ ॥
त्वां दृष्ट्वा प्रियवक्तारं प्रहृष्यामि प्लवङ्गम ।
अर्द्धसंजातसस्येव तोयं प्राप्य वसुन्धरा ॥ २ ॥
अन्यं रामान्न पुरुषं गात्रैर्मतिमतां वर ।
संस्पृशेयं सकामाहं वर एष वृतो मया ॥ ३ ॥
अभिज्ञानं तु रामाय दद्यास्त्वं हरिपुङ्गव ।
क्षिप्तामिषीकां काकस्य रोषादेकाङ्गशातनीं ॥ ४ ॥
मनः शिलायास्तिलको गण्डपार्श्वे निवेशितः ।
त्वया प्रसृष्टः स च मे तच्च संस्मर्तुमर्हसि ॥ ५ ॥
किं रावणगृहे सीतामुपेक्षसि परंतप ।
वसन्तीं राक्षसावासे महेन्द्रवरुणोपम ॥ ६ ॥
ब्रूयाश्चैव हरिश्रेष्ठ मम कान्तं रघूत्तमं ।
एष चूडामणिर्दिव्यो मया सुपरिरक्षितः ॥ ७ ॥
यं दृष्ट्वा संप्रहृष्यामि व्यसनेऽपि तवानघ ।
एष निर्यातितः श्रीमान् मया ते वारिसंभवः ॥ ८ ॥
मासमेकं च जीवेयं तवागमनकाङ्क्षया ।
ततः परं न शक्ष्यामि जीवितुं शोककर्षिता ॥ ९ ॥

असह्यानि च दुःखानि वाचश्च हृदयच्छिदः ।
राक्षसीनां सुघोराणां त्वत्कृते मर्षयाम्यहं ॥१०॥
घोरो राक्षसराजोऽयमध्रुवश्च रणे जयः ।
त्वां च दृष्ट्वा विषीदन्तं न जीवेयमहं क्षणं ॥११॥
अनामयं च ब्रूयास्त्वं सहितौ रामलक्ष्मणौ ।
सुग्रीवं च महासत्त्वं सर्वान् वानरपुङ्गवान् ॥१२॥
जीवन्तीं मां यथा रामः संतारयति कीर्त्तिमान् ।
तत् त्वया हनुमन् वाक्यं वाच्यं धर्ममवाप्नुहि ॥१३॥
नित्यमुत्साहयुक्तस्य श्रुत्वा वाक्यं तवानघ ।
वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥१४॥
ततः स हनुमान् वीरो राघवप्रियकाम्यया ।
सीतामाश्वासयामास पुनश्चैवमथाब्रवीत् ॥१५॥
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ।
कस्तस्य सृजतो बाणान् स्थातुमुत्सहतेऽग्रतः ॥१६॥
अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमं ।
रणे योधयितुं शक्तस्तव हेतोर्विलासिनि ॥१७॥
स हि सागरपर्यन्तां महीं शासितुमर्हति ।
त्वन्निमित्ते हि रामस्य जयो जनकनन्दिनि ॥१८॥
स हि मर्मसु सर्वेषु ताडितो मन्मथेषुणा ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥१९॥

मा देवि शोचमाना हि त्यज शोकमनिन्दिते ।
विष्णुना श्रीरिवेन्द्रेण भर्त्रा नाथवती सती ॥ २० ॥
यस्या नाथस्तवार्याया राक्षसान्तकरः प्रभुः ।
अचिरेणैव कालेन त्वामितो नेष्यते बलात् ॥ २१ ॥
ब्रुवन्तमेवं मधुरं हनूमन्तं प्लवङ्गमं ।
वर्धमानं कृतोत्साहमुवाच जनकात्मजा ॥ २२ ॥
अश्रुपूर्णमुखी दीना वाष्पगद्गदया गिरा ।
हनूमद्गमनोद्भूतशोकसंभ्रान्तमानसा ॥ २३ ॥
हनूमन् कपिशार्दूल मम दुःखाद्विमोचनं ।
यथा भवति भद्रं ते तथा त्वं कर्तुमर्हसि ॥ २४ ॥

इमं च तीव्रं मम शोकवेगं
रक्षोगणौघैः परिभर्त्सनं च ।
ब्रूयाश्च रामस्य गतः समीपं
शिवश्च पन्थास्तव नित्यमस्तु ॥ २५ ॥

एवमुक्तस्तु वैदेह्या हनूमान् मारुतात्मजः ।
पादाभिवन्दनं चक्रे विनीतो हरिपुङ्गवः ॥ २६ ॥

स राजपुत्र्या प्रतिवेदितार्थः
कपिप्रवीरः प्रतिहृष्टमानसः ।
तदल्पशेषं समुदीक्ष्य कार्यम्
आशामुदीचीं मनसा जगाम ॥ २७ ॥

स वाग्भिः सुप्रसन्नाभिर्गमिष्यन् प्रतिपूजितः ।
वन्दित्वा तामतिक्रम्य चिन्तयामास वानरः ॥ २८ ॥

अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा ।
पूर्वानुपायानुत्क्रम्य चतुर्थ इह दृश्यते ॥ २९ ॥

न रावणः शीलगुणाय वर्तते
तथा न सान्त्वोपनयेषु कल्पते ।
न भेदसाध्यो बलदर्पितो जनः
पराक्रमस्त्वस्य ममेह रोचते ॥ ३० ॥

न चास्य कार्यस्य पराक्रमादृते
विनिश्चयस्त्वस्य ममोपपद्यते ।
हतप्रवीरस्य रणे तु रक्षसः
कथञ्चिदासादयतेऽनुमार्दवं ॥ ३१ ॥

एककार्ये विनिर्दिष्टो यो बहून्यपि साधयेत् ।
पूर्वकार्यक्रियासिद्धौ स कार्यं कर्तुमर्हति ॥ ३२ ॥

न ह्येकसाधको हेतुः कर्मणामुपपद्यते ।
कर्मणां समवेतानां बहूनामर्थसिद्धये ।
यस्त्वर्थं बहुधा वेत्ति स समर्थोऽर्थसाधने ॥ ३३ ॥

इहैव तावत् कृतनिश्चयो ह्यदं
परिव्रजेयं मनुजेश्वरालयं ।
परात्मसंहर्षविशेषतत्त्ववित्

ततः कृतं स्यादिह भर्तृशासनं ॥३४॥
कथं न खल्वद्य भवेत् सुखागतं
प्रसह्य युद्धं मम राक्षसैः सह ।
कथं च खल्वात्मबलं च तत्त्वतः
प्रभावयेन्मां च रणे दशाननः ॥३५॥
इदमस्य नृशंसस्य नन्दनोपममुत्तमं ।
वनं नेत्रमनःकान्तं नानाद्रुमलतायुतं ॥३६॥
सर्वं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
तस्मिन् भग्ने ततः क्रोधं मम राजा गमिष्यति ॥३७॥
ततो महत् साश्वरथद्विपाकुलं
बलं समादेक्ष्यति राक्षसाधिपः ।
त्रिशूलकालायसपट्टिशायुधं
ततो महद्युद्धमिदं भविष्यति ॥३८॥
अहं तु तैः संयति भीमविक्रमैः
समेत्य रक्षोभिरभीतचारिभिः ।
निहत्य वै रावणचोदितं बलं
ततो गमिष्यामि कपीश्वरालयं ॥३९॥
ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनं ।
मत्तद्विजगणाकीर्णं नानामृगसमायुतं ॥४०॥
तद्वनं मथितैर्वृक्षैर्भग्नैश्च सलिलाशयैः ।

चूर्णितैः पर्वताग्रैश्च बभूवानिष्टदर्शनं ॥ ४१ ॥

लतागृहैश्चित्रगृहैर्विनाशितैर्
मनोरमैर्बालमृगैश्च निर्धूतैः ।
शिलागृहैर्निर्मथितैस्तदा द्रुमैर्
अदृष्टरूपं तदभून्महद्वनं ॥ ४२ ॥

स तस्य कृत्वा नृपतेर्महाकपिर्
महद्व्यलीकं महतो मनस्विनः ।
युयुत्सुरेको बहुभिर्महाबलैः
श्रियोज्ज्वलंस्तोरणमाश्रितः कपिः ॥ ४३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे अशोकवनिकाभङ्गो
नाम सप्तत्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XXXVIII.

ततः कपिनिनादेन वनभङ्गस्वनेन च ।
बभूवुर्भयसंविग्नाः सर्वे लङ्कानिवासिनः ॥ १ ॥
विद्रुताश्च दिशः सर्वा विनेदुर्मृगपक्षिणः ।
रक्षसां च निमित्तानि क्रूराणि बहुशोऽभवन् ॥ २ ॥
ततो गतायां निद्रायां राक्षस्यो विकृताननाः ।
तद्वनं ददृशुर्भग्नं तं च वीरं महाकपिं ॥ ३ ॥
स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाकपिः ।
चकार सुमहद्रूपं राक्षसीनां भयावहं ॥ ४ ॥
ततस्तं मेघसंकाशमतिकायं महाबलं ।
राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजां ॥ ५ ॥
कोऽयं कस्य कुतो वायं किं निमित्तमिहागतः ।
कथं वा त्वयि संवादं राजपुत्रि करोत्ययं ॥ ६ ॥
आचक्ष्व नो विशालाक्षि भयं मा भूत् तवाङ्गने ।
संवादमसितापाङ्गि त्वया किं कृतवानयं ॥ ७ ॥
अथाब्रवीद्राजपुत्री सीता सर्वाङ्गशोभना ।
रक्षसां कामरूपिणां विज्ञाने नास्ति मे मतिः ॥ ८ ॥
यूयमेव विजानीत योऽयं यच्च करिष्यति ।
अहिरेव ह्यहेः पादान् विजानीयान्न संशयः ॥ ९ ॥

अहमप्यस्य संभीता नेतो निष्क्रमणे मतिं ।
करोमि राक्षसैरस्मि वञ्चिता कामरूपिभिः ॥१०॥
सीताया वचनं श्रुत्वा राक्षस्यो विस्मिता भृशं ।
स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुं ॥११॥
बद्धाञ्जलिपुटाश्चापि शिरोभिर्धरणीं गताः ।
रावणाय सुसंविग्नाः शशंसुर्भ्रान्तलोचनाः ॥१२॥
अशोकवनिकामध्ये राजन् भीमवपुः कपिः ।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥१३॥
न च तं जानकी सीता हरिं हरिणलोचना ।
अस्माभिर्बहुशः पृष्टा निवेदयितुमिच्छति ॥१४॥
इन्द्रस्य हि भवेद्दूतो दूतो वैश्रवणस्य वा ।
प्रेषितो वापि रामेण सीतान्वेषणकारणात् ॥१५॥
सर्वं चैव वनं भग्नं तरसा तेन पार्थिव ।
यत्रास्ते जानकी सीता तदेव न विनाशितं ॥१६॥
जानकीरक्षणार्थं वा श्रमाद्वा नोपलभ्यते ।
अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥१७॥
चारुपल्लवशाखश्च यं सीता समुपस्थित ।
प्रवृद्धः शिंशपावृक्षः स तेन परिपालितः ॥१८॥
तस्योग्रकर्मणो राजन् दण्डमादेष्टुमर्हसि ।
सीता संभाषिता येन तद्वनं च विनाशितं ॥१९॥

स नः प्रतिगृहीतां तां तव रक्षोगणेश्वर ।
कः सीतां परिभाषेत यो न स्यात् त्यक्तजीवितः ॥ २० ॥
राक्षसीनां वचः श्रुत्वा रावणो राक्षसाधिपः ।
हुताग्निरिव जज्वाल क्रोधसंरक्तलोचनः ॥ २१ ॥
सोऽथ मानससंभूतान् किङ्करान् नाम राक्षसान् ।
आदिदेश महातेजा ग्रहणार्थं हनूमतः ॥ २२ ॥
तेषामशीतिसाहस्रा राक्षसानां महाचमूः ।
निर्ययौ भवनात् तस्य शूलमुद्गरपाणिनां ॥ २३ ॥
दृप्ताः स्वामिहिते युक्ता घोररूपा महाबलाः ।
युद्धाभिमनसः सर्वे हनूमन्तमुपाद्रवन् ॥ २४ ॥
हनूमानपि विक्रान्तः स्वपौरुषमुपाश्रितः ।
सहस्रपादमासाद्य तच्चैत्यमधिरूढवान् ॥ २५ ॥
अथाधिरोहतस्तस्य वेगाद्वेगवतो महत् ।
सोपानमभवत् तत्र प्रतिशुक्रं महत्तरं ॥ २६ ॥
आरुह्य स हि दुर्धर्षश्चैत्यप्रासादमुत्तमं ।
हनूमान् प्रज्वलन् लक्ष्म्या पारिपात्रोपमोऽभवत् ॥ २७ ॥
स भूत्वा सुमहाकायः प्रभावान्मारुतात्मजः ।
धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ २८ ॥
तस्यास्फोटितशब्देन महता श्रोत्रघातिना ।
पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ २९ ॥

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥३०॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकारिणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥३१॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥३२॥
नाशयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीं ।
स सिद्धार्थो गमिष्यामि मिषतां सर्वरक्षसां ॥३३॥
एवमुक्त्वा विमानाग्रे चैत्यस्य हरिपुङ्गवः ।
अनदद्भीमनिर्ह्रादो लङ्कां नादैः प्रचालयन् ॥३४॥
तेनाक्रान्तः प्रचलितः प्रासादः स हनूमता ।
व्यशीर्यत गिरेः शृङ्गं वज्रेणेव विदारितं ॥३५॥
तेऽपि वानरमासाद्य चैत्ये तं राक्षसाः स्थितं ।
अभिपेतुर्महावेगाः पतङ्गा इव पावकं ॥३६॥
स तैः परिवृतः श्रीमान् सर्वतो हरिपुङ्गवः ।
समाविध्य च लाङ्गूलं ननाद सुमहास्वनं ॥३७॥
तस्य संनादशब्देन तेऽभवन् भयमोहिताः ।
ददृशुर्हनुमन्तं च महामेघमिवोत्थितं ॥३८॥
स्वामिसंदेशनिःशङ्कास्ततस्ते राक्षसाः कपिं ।
चित्रैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ॥३९॥

# सुन्दरकाण्डं

स तैः परिवृतो भीमैः सर्वतः कपिकुञ्जरः ।
क्रुद्धो वातात्मजः श्रीमान् पश्चद्रूपं समाहितः ॥ ४० ॥
प्रासादस्य समुद्धृत्य स्तम्भं हेमविभूषितं ।
भ्रामयित्वा शतगुणं नाम विश्राव्य चात्मनः ॥ ४१ ॥
राक्षसानां शतं घोरं जघान कपिकुञ्जरः ।
स हत्वा राक्षसान् घोरान् किङ्करान् मारुतात्मजः ॥ ४२ ॥
अनिवृत्तमहोत्साहः पुनर्युद्धमकाङ्क्षत ।
स तं परिघमुद्यम्य तद्धे राक्षसमण्डलं ॥ ४३ ॥
सूदयामास संक्रुद्धो भीमं भीमपराक्रमः ।
अन्तरीक्षगतश्चेदं तदा वाक्यमुदाहरत् ॥ ४४ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ४५ ॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ४६ ॥
ईदृशानां सहस्राणि विशिष्टानां च रक्षसां ।
बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनां ॥ ४७ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः ।
आगमिष्यति सुग्रीवः सर्वेषां वो जिघांसया ॥ ४८ ॥
नेयमस्ति पुरी लङ्का न यूयं न च रावणः ।
यस्य वै लोकवीरेण बद्धं वैरं महात्मना ॥ ४९ ॥

ततस्तस्माद्भयान्मुक्ताः कथञ्चित् तत्र राक्षसाः ।
तान् हतान् सुबहून् दृष्ट्वा विषेदुर्नष्टचेतसः ।। ५० ।।
हतावशेषास्ते जग्मू राक्षसा रावणालयं ।
निहतान् किङ्करान् सर्वान् रावणाय न्यवेदयन् ।
तदप्रियं महाघोरं श्रुत्वा चुक्रोध रावणः ।। ५१ ।।

इत्यार्षे रामायणे सुन्दरकाण्डे चैत्यविध्वंसनं नाम
अष्टात्रिंशः सर्गः ।।

# सुन्दरकाण्डं

## XXXIX.

किङ्करान् सुबहून् हत्वा हनूमान् हरिपुङ्गवः ।
उद्यानं द्रुमसंछन्नं बभञ्ज स लतावृतं ॥ १ ॥
चम्पकान् नागपुष्पांश्च तिलकान् वञ्जुलानपि ।
नारिकेलांस्तथाशोकानन्यांश्च विविधान् द्रुमान् ॥ २ ॥
बभञ्ज परमक्रुद्धो वृक्षपालान् जघान च ।
तं दृष्ट्वा भज्यमानं तु वनपालाः समन्ततः ॥ ३ ॥
विद्रुताः सहसा त्रस्ता जग्मुर्यत्र दशाननः ।
बद्धाञ्जलिपुटाश्चेदमूचुस्ते प्रणता भुवि ॥ ४ ॥
रावणं तत्र संक्रुद्धं शोकविप्लुतलोचनाः ।
नाशितः सुमहांश्चैत्यो राक्षसप्रवरा हताः ॥ ५ ॥
भग्नं च तद्वनं राजन् वानरेण गतायुषा ।
तत् प्रसादं महाबाहो कर्तुमर्हसि मानद ॥ ६ ॥
यथा बध्येत दुष्टात्मा तथा यत्नो विधीयतां ।
श्रुत्वा तु तेषां तद्वाक्यं स क्रोधात् प्रज्वलन्निव ॥ ७ ॥
आदिदेश गणांस्तत्र राक्षसानां महाबलः ।
ते घोराः प्रहिता राज्ञा राक्षसा बलदर्पिताः ॥ ८ ॥
मुञ्चन्तः सिंहनादांश्च प्रययुर्यत्र वानरः ।
समासाद्य च तं वीरं हनूमन्तं महाबलं ॥ ९ ॥

आजग्मुर्विमलैः शूलैः परिघैः सपरश्वधैः ।
अन्यैश्च विविधैः शस्त्रैर्हनूमन्तं तथा शरैः ॥ १० ॥
ततः क्रुद्धः स हनुमान् प्रगृह्य विपुलं द्रुमं ।
जघान राक्षसान् घोरान् समेतांस्तान् महाबलः ॥ ११ ॥
ते पावकमिवासाद्य शलभा जीवितक्षये ।
जग्मुर्विनाशं सर्वे वै किङ्करास्ते च राक्षसाः ॥ १२ ॥
निहतान् किङ्करान् श्रुत्वा रावणो लोकरावणः ।
प्रहस्तस्य सुतं वीरं जम्बुमालिनमादिशत् ॥ १३ ॥
नाहत्वा वानरं शूरं विनिवर्तितुमर्हसि ।
संदिष्टो राक्षसेन्द्रेण प्रहस्ततनयो बली ॥ १४ ॥
जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ।
रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः ॥ १५ ॥
महाविवृत्तनयनश्चण्डः समरदुर्जयः ।
धनुः शक्रधनुः प्रख्यं महद्रुचिरसायकं ॥ १६ ॥
विस्फारयन् स वेगेन वज्रधनिसमस्वनं ।
तस्य विस्फारघोषेण धनुषो महता दिशः ॥ १७ ॥
विदिशो गगनं चैव सहसा समपूरयत् ।
रथेन खरयुक्तेन तमागतमुदीक्ष्य सः ॥ १८ ॥
हनूमान् वेगसंपन्नो जहर्ष च ननाद च ।
तं तोरणविटङ्कस्थं हनूमन्तं महाकपिं ॥ १९ ॥

जम्बुमाली महाबाहुर्विव्याध निशितैः शरैः ।
अर्द्धचन्द्रेण वदने शिरस्येकेन कर्णिना ॥ २० ॥
बाह्वोर्विव्याध नाराचैर्दशभिश्च स्तनान्तरे ।
तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखं ॥ २१ ॥
शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिभिः ।
चुकोप बाणाभिहतो राक्षसस्य महाकपिः ॥ २२ ॥
ततः स पार्श्वे विपुलां ददर्श शिंशपां तदा ।
तरसा तां समुत्पाट्य चिक्षेप बलवान् कपिः ॥ २३ ॥
तां शरैर्दशभिः क्रोधाद्बिभेदाशु निशाचरः ।
विपन्नं कर्म तद्दृष्ट्वा हनूमांश्चण्डविक्रमः ॥ २४ ॥
वृक्षन्तु सालं समुत्पाट्य भ्रामयामास वेगितः ।
भ्रामयन्तं कपिं दृष्ट्वा तं सालं स महाबलं । २५ ॥
चिक्षेप सुबहून् बाणान् जम्बुमाली महाबलः ।
सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे ॥ २६ ॥
पादे चैकेन विव्याध दशभिश्च स्तनान्तरे ।
स शरैः पूरिततनुः क्रोधेन महतावृतः ॥ २७ ॥
तमेव परिघं वीरो भ्रामयामास वेगवान् ।
अतिवेगोऽतिवेगेन भ्रामयित्वा मदोत्कटः ॥ २८ ॥
परिघं पातयामास हृदये जम्बुमालिनः ।
तस्य नैव शिरो नास्ति न जानुर्न भुजद्वयं ॥ २९ ॥

न धनुर्न रथो नाश्वो न सूतश्चापि दृश्यते ।
स हि तस्यातिवेगस्य वेगेन महताहतः ॥३०॥
सर्वश्चूर्णीकृतस्तत्र समांसास्थिशिरास्तनुः ।
जम्बुमाली च निहतः किङ्कराश्चेत्यमर्षितः ।
चुक्रोध रावणः श्रुत्वा वायुसूनोर्महाबलः ॥३१॥
स रोषसंवर्तितलोललोचनः
प्रहस्तपुत्रे निहते महाबले ।
अमात्यपुत्रानानिवार्यविक्रमान्
समादिदेशाशु तदा महारथान् ॥३२॥
स राक्षसानां निहतं महागणं
श्रुत्वा च भग्नं परमं प्रियं वनं ।
हनूमतश्चैव बलं स शुश्रुवान्
अमात्यपुत्रांस्तत आदिशद्युधि ॥३३॥

इत्यार्षे रामायणे सुन्दरकाण्डे जम्बुमालिबधो
नाम नवत्रिंशः सर्गः ॥

# सुन्दरकाण्डं

## XL.

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणां सुताः ।
निर्ययुर्भवनात् तस्मात् सप्तसप्तार्चिवर्चसः ॥ १ ॥
महाबलपरीवारा धनुष्मन्तो महाबलाः ।
कृतास्त्राः परमेष्वासाः परस्परकृतोद्यमाः ॥ २ ॥
महारजतचित्राङ्गैर्ध्वजवद्भिरलंकृतैः ।
तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥
ततः काञ्चनचित्राणि धनूंष्यमितविक्रमाः ।
विस्फारयन्तः संहृष्टास्तडित्वन्त इवाम्बुदाः ॥ ४ ॥
जघन्यतस्ततस्ते तु विदित्वा किङ्करान् हतान् ।
बभूवुः शोकसंतप्ताः सबान्धवसुहृज्जनाः ॥ ५ ॥
ते परस्परसंहर्षास्तप्तकाञ्चनकुण्डलाः ।
अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितं ॥ ६ ॥
सृजन्तो बाणवर्षाणि रथस्वनहयस्वनाः ।
वृष्टिमन्त इवाम्भोदाश्च् छादयामासुरम्बरं ॥ ७ ॥
अवकीर्णस्ततस्तैस्तु हनूमान् शरवृष्टिभिः ।
अभवत् संवृताकारः शैलराडिव वृष्टिभिः ॥ ८ ॥
स शरान् वञ्चयामास तेषामाशु चरन् कपिः ।
रथवेगं च वीराणां विचरन् विमलेऽम्बरे ॥ ९ ॥

स तैः क्रीडन् धनुष्मद्भिर्व्योम्नि वीरो व्यकाशत ।
सहस्राक्षधनुष्मद्भिस्तोयदैरिव मारुतः ॥१०॥
स कृत्वा निनदं घोरं त्रासयन् परवाहिनीं ।
चकार हनुमान् वेगं तेषु रक्षःसु विस्मयं ॥११॥
तलेनाभ्यबधीत् कांश्चित् पद्भ्यामन्यान् परंतपः ।
मुष्टिनाताडयत् कांश्चिन्नखैरन्यानदारयत् ॥१२॥
प्रममाथोरसा कांश्चिदूरुभ्यामपरानपि ।
ततस्तेष्ववसन्नेषु भूमौ निपतितेषु च ॥१३॥
तत् सैन्यमभवत् सर्वं भयोद्विग्नं समन्ततः ।
भग्नचक्रैर्विमथितै रथैर्निहतवाजिभिः ।
भग्ननीडध्वजैश्च् छत्रैर्भूश्चकाशे समन्ततः ॥१४॥
ततः प्रवृद्धान् विनिहत्य राक्षसान्
महाबलांश्चण्डपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसैस्
तदेव वीरोऽभिजगाम तोरणं ॥१५॥

इत्यार्षे रामायणे सुन्दरकाण्डे मन्त्रिपुत्रबधो
नाम चत्वारिंशः सर्गः ॥

# सुन्दरकाण्डं

## XLI.

हतान् मन्त्रिसुतान् श्रुत्वा वानरेण महात्मना ।
रावणः क्षुभिताकारश्चकार मतिमान् मतिं ॥ १ ॥
स विरूपाक्षयूपाक्षौ दुर्धर्षं च महाबलं ।
प्रघसं भासकर्णं च पञ्च सेनाग्रगामिनः ॥ २ ॥
संदिदेश दशग्रीवो वीरान् नयविशारदान् ।
स च क्रोधसमाविष्टो हनूमद्ग्रहणं प्रति ॥ ३ ॥
यान्तु सेनाग्रगाः शीघ्रं महाबलपराक्रमाः ।
सवाजिरथमातङ्गाः स कपिः शास्यतामिति ॥ ४ ॥
यत्नेन खलु योद्धव्यं तमासाद्य महाबलं ।
कर्म चापि समाधेयं देशकालनयक्षमं ॥ ५ ॥
न ह्यहं तं कपिं मन्ये कर्मभिः परितर्कयन् ।
सर्वथा सुमहद्भूतं महाबलपराक्रमं ॥ ६ ॥
वानरोऽयमिति ज्ञात्वा न हि मे शुध्यते मनः ।
नैवाहं तं कपिं मन्ये यथेयं प्रस्तुता कथा ॥ ७ ॥
भवेदिन्द्रेण सृष्टोऽयमस्मान् प्रतिविरुध्यता ।
पन्नगा यक्षगन्धर्वा देवाश्च समहर्षयः ॥ ८ ॥
निर्याताः सर्वसैन्यैश्च संग्रामेषु पराजिताः ।
निर्जिता हि मया देवाः समासाद्य महारणे ॥ ९ ॥

तैरवश्यं विधातव्यं व्यलीकं किञ्चिदेव नः ।
चरोऽयं नात्र संदेहः स प्रसह्य निगृह्यतां ॥ १० ॥
हरिरित्येव नोपेक्ष्यः कपिः क्रूरपराक्रमः ।
दृष्टा हि हरयः शीघ्रा मया विपुलविक्रमाः ॥ ११ ॥
बाली चैव ससुग्रीवो हनूमांश्च महाकपिः ।
नीलः सेनापतिश्चैव ये चान्ये बलवत्तराः ॥ १२ ॥
नैषा तेषां गतिर्भीमा न तेजो न पराक्रमः ।
न मतिर्न बलोत्साहौ न रूपपरिकल्पना ॥ १३ ॥
ते यूयमप्रमत्ता वै कपिरूपव्यवस्थितं ।
सत्त्वं परममास्थाय निवारयितुमर्हथ ॥ १४ ॥
तस्मादस्य महोत्साहैरप्रमत्तैरुदायुधैः ।
सर्वैरेव समर्थैश्च भवितव्यमसंशयं ॥ १५ ॥
कामं लोकास्त्रयः सेन्द्राः ससुरासुरदानवाः ।
भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे ॥ १६ ॥
तथापि तु नयज्ञेन जयं च परिरक्षता ।
रक्षितव्या प्रयत्नेन युद्धे सिद्धिर्हि चञ्चला ॥ १७ ॥
ते स्वामिवचनं मूर्ध्ना प्रतिगृह्य महाबलाः ।
समुत्पेतुर्महावेगा हुताग्निसमवर्चसः ॥ १८ ॥
रथैर्मत्तैश्च मातङ्गैर्वाजिभिश्च महाबलैः ।
शस्त्रैश्च विविधाकारैरुपेताः प्रययुस्तदा ॥ १९ ॥

ततस्ते ददृशुर्भीमं दीप्यमानं महाकपिं ।
रश्मिमन्तमिवादित्यं स्वतेजोरश्मिमालिनं ॥२०॥
तोरणस्थं महावेगं महासत्वं महाबलं ।
महामतिं महोत्साहं महाकायपराक्रमं ॥२१॥
तं समीक्ष्याथ ते सर्वे दिक्षु सर्वास्ववस्थिताः ।
तीक्ष्णैः प्रहरणैर्भीमैरभिपेतुः सहस्रशः ॥२२॥
तस्य पञ्चायसांस्तीक्ष्णान् शितान् पद्ममुखान् ततः ।
शिरस्युत्पलपत्राभान् दुर्धर्षः संन्यवेशयत् ॥२३॥
ततः स वीरो दुर्धर्षः सरथः सज्यकार्मुकः ।
किरन् शरशतैस्तीक्ष्णैरभिपेदे महाकपिं ॥२४॥
भूयश्चाच्छादयामास शरजालेन सर्वतः ।
वृष्टिभिः स निदाघान्ते जीमूत इव पर्वतं ॥२५॥
ताड्यमानस्ततस्तेन दुर्धर्षेणानिलात्मजः ।
चकार निनदं घोरं व्यवर्धत च वानरः ॥२६॥
स दूरात् सहसोत्पत्य दुर्धर्षस्य रथे कपिः ।
निपपात महावेगो विद्युदाशु गिराविव ॥२७॥
ततः प्रमथितं साश्वं रथं भग्नाक्षकूवरं ।
विहाय न्यपतद्भूमौ दुर्धर्षः क्षीणजीवितः ॥२८॥
तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि ।
उत्पेततुः सुसंक्रुद्धौ कूटमुद्गरधारिणौ ॥२९॥

स ताभ्यां सहसोत्पत्य तोरणस्थो महाकपिः ।
मुद्गराभ्यां महातेजा वक्षस्यभिहतो भृशं ॥ ३० ॥
तयोर्वेगवतोर्वेगं निहत्य स महाकपिः ।
निपपात पुनर्भूमौ सुपर्णसमविक्रमः ॥ ३१ ॥
स तालवृक्षमुत्पाट्य प्रसह्य कपिकुञ्जरः ।
तावुभौ राक्षसौ घोरौ जघानामर्षचोदितः ॥ ३२ ॥
ततस्तौ निहतौ दृष्ट्वा वानरेण बलीयसा ।
अभीयाय महातेजा विक्रम्य प्रघसो हरिं ॥ ३३ ॥
भासकर्णश्च संक्रुद्धः शूलमादाय सत्वरं ।
एकं तं कपिशार्दूलमुभौ समभिपेततुः ॥ ३४ ॥
पट्टिशेन खराग्रेण प्रघसः प्रत्यविध्यत ।
भासकर्णश्च शूलेन राक्षसौ हरिमुत्तमं ॥ ३५ ॥
स ताभ्यां विकृतैर्गात्रैः क्षतजार्द्रतनूरुहः ।
शुशुभे वानरश्रेष्ठो बालसूर्य इवोदितः ॥ ३६ ॥
अथोत्पाट्य गिरेः शृङ्गं समृगव्यालपादपं ।
जघान हनुमान् वीरो राक्षसौ कपिकुञ्जरः ॥ ३७ ॥
ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु ।
बलं तदवशेषं तु नाशयामास वानरः ॥ ३८ ॥
अश्वैरश्वान् गजैर्गजान् योधैर्योधान् रथै रथान् ।
स कपिः सूदयामास सहस्राक्ष इवासुरान् ॥ ३९ ॥

हतैर्नागैस्तुरङ्गैश्च भग्नैस्तैश्च महारथैः ।
राक्षसैश्चाभवद्भूमिर्दुर्गमार्गा समन्ततः ॥४०॥

ततः कपिस्तान् ध्वजिनीपतीन् रणे
निहत्य वीरान् बलवान् सबान्धवान् ।
तदेव वीरोऽभिजगाम तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥४१॥

इत्यार्षे रामायणे सुन्दरकाण्डे पञ्चसेनापतिबधो
नाम एकचत्वारिंशः सर्गः ॥

## XLII.

स पञ्चसेनाधिकृतान् हनूमता
    हतान् रणे सानुचरान् सबान्धवान् ।
निशम्य राजा समरे सहोत्सुकं
    कुमारमक्षं प्रसमैक्षताग्र वै ॥ १ ॥
स तस्य दृष्ट्या प्रसभं प्रचोदितः
    प्रतापवान् काञ्चनचित्रकार्मुकः ।
समुत्पपाताशु सदस्युदीरितो
    द्विजातिमुख्यैरिव हव्यवाहनः ॥ २ ॥
ततस्तपःसंचयसंग्रहार्जितं
    प्रतप्तजाम्बूनदजालचन्द्रकं ।
पताकिनं रत्नविभूषितध्वजं
    महाजवाष्टाश्वसमाधिसंवृतं ॥ ३ ॥
सुरासुराधृष्यमसङ्गचारिणं
    रविप्रभं व्योमचरं समाहितं ।
सतूणमिष्टासिनिबन्धसंग्रहं
    यथाक्रमावेशितशक्तितोमरं ॥ ४ ॥
विराजमानं परिपूर्णचन्द्रकं
    सहेमजालं शशिसूर्यवर्चसं ।

स बद्धतूणः स्वरथं समास्थितः
संनिर्जगामामरतुल्यविक्रमः ॥ ५ ॥
ततो हरिं तं प्रसमीक्ष्य गर्वितं
गतश्रमं शत्रुपराजयोचितं ।
अपेक्षमाणः समुदीर्णमानसो
विचित्रबाणं जगृहे तदा धनुः ॥ ६ ॥
स तस्य वीरः कपिसत्तमस्य
सुवर्णपुङ्खान् सविषानिवोरगान् ।
शरानथो मूर्ध्नि समाहितस्तदा
निवेशयामास निशाचरात्मजः ॥ ७ ॥
स तैः शरैर्मूर्ध्नि सुसंनिपातितैश्
चकार नादं घननादसंनिभं ।
महाकपिः संयति राक्षसार्दितः
क्षणं क्षरच्छोणितदिग्धलोचनः ॥ ८ ॥
नवोदितादित्यनिभः स खे चरन्
भुजोरुविक्षेपसुघोरदर्शनः ।
समुत्पपाताशु नभो महाकपिर्
भुजोरुवेगैः परितर्जयन्निव ॥ ९ ॥
समुत्पतन्तं तमभिद्रवद्बली
स राक्षसेन्द्रस्य सुतः प्रतापवान् ।

रथी हरिश्रेष्ठतरं किरन् शरैः
पयोधरः शैलमिवाशु वृष्टिभिः ॥१०॥
स तान् शरांस्तस्य कपिर्विमोचयन्
चचार वीरः पथि वायुसेविते ।
शरान्तरे मारुतवन्मनोजवश्
चलाचलः संयति चण्डविक्रमः ॥११॥
तमात्तबाणासनमाहवप्रियं
समापतन्तं निशितैः शरोत्तमैः ।
अवेक्ष्य सोऽक्षं मनसा च चक्षुषा
जगाम चिन्तामथ मारुतात्मजः ॥१२॥
अबालवद्बालदिवाकरोपमः
करोत्ययं कर्म महन्महाबलः ।
न तावदस्याहवकर्मशोभिनः
प्रपातने मे मतिराशु जायते ॥१३॥
असंशयं कर्म करोत्ययं महत्
सनागयक्षैर्बहुभिश्च दुष्करं ।
पराक्रमोत्साहसमृद्धमानसः
समीक्षते मां समराग्रमास्थितं ॥१४॥
न खल्वयं नाभिभवेदुपेक्षितः
पराक्रमो ह्यस्य रणे विवर्धते ।

प्रमापणं त्वस्य ममाद्य रोचते
    न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥१५॥
ततस्तलेनाभिजघान तद्रथं
    तथा प्लवङ्गाधिपमन्त्रिसत्तमः ।
प्रभग्ननीडः सयुगाक्षकूबरः
    पपात भूमौ हतवाजिसारथिः ॥१६॥
स तं परित्यज्य महारथो रथं
    समुत्पपातासिधरः सकार्मुकः ।
तपोऽभियोगादृषिरुग्रसंयमो
    विहाय देहं मरुतामिवालयं ॥१७॥
ततः कपिस्तं विचरन्तमम्बरे
    पतत्रिराजानिलमार्गचारिणं ।
समाप्लुवन् मारुतसूनुराहवे
    करेण जग्राह स पादयोर्दृढं ॥१८॥
स तं समाविध्य सहस्रशः कपिर्
    महोरगं क्रुद्ध इवाण्डजेश्वरः ।
कुमारमक्षं प्रविकीर्णभूषणं
    विनिष्पिपेषाशुगतिर्महाबलः ॥१९॥
प्रभिन्नवक्षोरुकटीशिरोधरो
    विलम्बबाहुर्मथितास्थिबन्धनः ।

विमुक्तवासास्त्वगसृक्स्रवोक्षितो
क्षतः क्षितौ वायुसुतेन राक्षसः ॥२०॥
महर्षिभिश्चक्रधरैर्महाव्रतैः
समेत्य भूतैश्च सयक्षपन्नगैः ।
सुरैश्च सेन्द्रैर्भृशजातविस्मयैर्
हते कुमारे स कपिः प्रपूजितः ॥२१॥
स तं निहत्यामरवीरमर्दनं
कुमारमक्षं क्षतजोपमेक्षणं ।
तदेव वीरोऽभिजगाम तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥२२॥

इत्यार्षे रामायणे सुन्दरकाण्डे अक्षकुमारबधो
नाम द्विचत्वारिंशः सर्गः ॥

# सुन्दरकाण्डं

## XLIII.

ततः स रक्षोऽधिपतिर्महात्मा
हनूमताक्षे निहते कुमारे ।
मनः समाधाय निवृत्तशोकः
समादिदेशेन्द्रजितं रणाय ॥१॥

त्वमस्त्रभृच्छस्त्रभृतां वरिष्ठः
प्रसन्नबुद्धिः समरेषु शक्तः ।
दैत्येषु देवेषु च दृष्टकर्मा
पितामहाराधनसंचितास्त्रः ॥२॥

तवास्त्रबलमासाद्य न सुरा न मरुद्गणाः ।
समर्थाः समरे स्थातुं त्रैलोक्यमपि चानघ ॥३॥

त्वया तु रक्षसां संघो भुजवीर्याभिरक्षितः ।
देशकालनयज्ञश्च त्वमेव मतिमान् वरः ॥४॥

न तेऽस्त्यसाध्यं समरेषु कर्म
न तेऽस्ति तुल्यो मतिदर्शनेषु ।
न चापि कश्चिद्द्विषतां विनिग्रहे
व्यतिक्रमेदस्त्रबलं बलं च ते ॥५॥

ममानुरूपं सुमहद्बलं च
पराक्रमश्चार्थपरिग्रहश्च ।

सर्वेषु कार्येषु समर्थयुक्ता
बुद्धिस्तवास्त्येव महानुभाव ॥ ६ ॥
न च त्वमासाद्य रणावमर्दं
परिश्रमं गच्छसि निश्चितार्थः ।
निहताः किङ्कराः सर्वे जम्बुमाली च राक्षसः ।
अमात्यपुत्रा वीराश्च पञ्च सेनाग्रगास्तथा ॥ ७ ॥
अक्षः कुमारो निहतो दुर्धर्षश्च महाबलः ।
न च मेऽन्योऽस्ति समरे त्वया तुल्योऽरिसूदन ॥ ८ ॥
न च मे सारता तेषु यथा त्वयि महाद्युते ।
तस्माद्गच्छाशु पुत्र त्वं युद्धाय विजयाय च ॥ ९ ॥
अयं ह्यदृष्टः परमश्च लोके
कपेः प्रभावश्च पराक्रमश्च ।
ममात्मजश्चैव तथैव स त्वं
कुरुष्व वीर्यं स्वगुणानुरूपं ॥ १० ॥
बलावमर्दस्त्वयि संनिविष्टो
यथा न गर्ह्येयुरुदारसत्त्वाः ।
तथा समीक्ष्यात्मबलं परं च
व्रजाहवं कर्म समारभस्व ॥ ११ ॥
न खल्वेषा मतिर्मह्यं यत् त्वां संप्रेषयाम्यहं ।
इयं तु राजधर्माणां क्षत्रस्य च गतिर्मता ॥ १२ ॥

नानाशस्त्रैश्च संग्रामे युध्यस्व त्वमरिन्दम ।
अवश्यमेव योद्धव्यं काम्यश्च विजयो रणे ॥ १३ ॥

ततः पितुस्तद्वचनं निशम्य
प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमुदारसत्त्वो
रणाय वीरः प्रतियातबुद्धिः ॥ १४ ॥

स पक्षिराजोपमभीमवेगैर्
सिंहैश्चतुर्भिः शिततीक्ष्णदंष्ट्रैः ।
रथं समासक्तमसह्यवेगं
समारुरोहेन्द्रजिदप्रधृष्यः ॥ १५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे इन्द्रजिन्निर्याणं
नाम त्रिचत्वारिंशः सर्गः ॥

## XLIV.

स रथी धन्विनां श्रेष्ठः शूरः शस्त्रविदां वरः ।
रथेनादित्यवर्णेन तं वानरमुपाद्रवत् ॥ १ ॥
स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ।
निशम्य कपिशार्दूलः संप्रहृष्टस्ततोऽभवत् ॥ २ ॥
आयातं सरथं दृष्ट्वा शूरमिन्द्रजितं हरिः ।
ननाद सुमहानादं व्यवर्धत च वेगवान् ॥ ३ ॥
इन्द्रजित् तु रथं दिव्यमास्थितश्चित्रकार्मुकः ।
कार्मुकं स्फारयामास तडित्स्फूर्जितनिस्वनं ॥ ४ ॥

ततः समेतौ युधि तीव्रवेगौ
महाबलौ तौ रणकर्कशावुभौ ।
कपिश्च रक्षोऽधिपतेश्च पुत्रः
सुरासुरेन्द्राविव बद्धवैरौ ॥ ५ ॥

ततः स वीरस्य महारथस्य
धनुष्मतः शस्त्रभृतां वरस्य ।
शरप्रवेगानविचिन्तयन् स
चचार मार्गे पितुरप्रमेयः ॥ ६ ॥

शराणामग्रतस्तस्य वीरस्य कपिकुञ्जरः ।
प्रहस्य तस्थौ हनुमान् वायुवेगपराक्रमः ॥ ७ ॥

तावुभौ वेगसंपन्नौ रणकर्मविशारदौ ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमं ॥ ८ ॥

हनूमतो वेत्ति न राक्षसोऽन्तरं
न मारुतिस्तस्य च रक्षसोऽन्तरं ।
परस्परान्तर्विषयौ हि तावुभौ
बभूवतुर्निर्विषपन्नगोपमौ ॥ ९ ॥

ततो मतिं राक्षसराजपुत्रश्च
चकार तस्मिन् हरिवीरमुख्ये ।
अवध्यतां तस्य कपेः समीक्ष्य
कथं न गच्छेदिति निग्रहार्थं ॥ १० ॥

ततस्तं ब्रह्मणोऽस्त्रेण बबन्धेन्द्रजिदस्त्रवित् ।
सोऽभवन्निर्विचेष्टश्च पपात च महीतले ॥ ११ ॥

ततस्ते राक्षसा बुद्ध्वा बद्धमस्त्रेण मारुतिं ।
बबन्धुः शणपट्टैश्च द्रुमवल्कैश्च संहतैः ॥ १२ ॥

अथेन्द्रजित् तं द्रुमवल्कबद्धं
समीक्ष्य वीरं प्लवतां वरिष्ठं ।
मुमोच तं दारुणमस्त्रबन्धम्
अबुद्धमोक्षः कपिकुञ्जरेण ॥ १३ ॥

अहो महत् कर्म कृतं निरर्थकं
न राक्षसैरस्त्रगतिस्तु शक्या ।

पितामहास्त्रे विहतेऽस्त्रमन्यत्
न वर्तते संशयिताः खलु स्मः ॥१४॥

अस्त्रबन्धविमोक्षं तु हनूमान् नावबुध्यत ।
क्लिश्यमानश्च रक्षोभिः शरजालैर्निपीडितः ॥१५॥

ततः पैतामहैर्मन्त्रैर्वरदत्तैः स मारुतिः ।
नात्मानं मोक्षयामास तस्मादस्त्राद्बलान्वितः ॥१६॥

स वीर्यमस्त्रस्य कपिर्विदित्वा
पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं च कपिर्विचिन्त्य
पैतामहीं तामनुवर्तताज्ञां ॥१७॥

स रोचयामास परैश्च बन्धं
प्रसह्य रक्षोभिरवग्रहं च ।
कौतूहलान्मां यदि राक्षसेन्द्रो
द्रष्टुं व्यवस्येदिति ज्ञातबुद्धिः ॥१८॥

हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः ।
समीपं राक्षसेन्द्रस्य संप्रावेश्यत मारुतिः ॥१९॥

स रोषसंवर्तितताम्रनेत्रं
दशाननं वायुसुतो ददर्श ।
सुखोपविष्टं कुलशीलवृद्धान्
समादिशत्तं प्रति मन्त्रिमुख्यान् ॥२०॥

तं वानरेन्द्रः स तदोपगम्य
महाबलं वायुसुतो महात्मा ।
निवेदयामास कपीश्वरस्य
दूतः सकाशादहमागतोऽस्मि ॥ २१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्ग्रहणं नाम
चतुश्चत्वारिंशः सर्गः ॥

# रामायणं

## XLV.

ततस्तैः कर्मभिस्तस्य विस्मितो भीमकर्मणः ।
हनूमान् कोपताम्राक्षो राक्षसेन्द्रमवैक्षत ॥ १ ॥
भ्राजमानं महार्हेण काञ्चनेन विराजता ।
मुक्ताजालवृतान्तेन मुकुटेन महाद्युतिं ॥ २ ॥
वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ।
हैमैराभरणैश्चित्रैर्मानसैरुपशोभितं ॥ ३ ॥
महार्हक्षौमसंवीतं चन्दनोत्तमभूषितं ।
अनुलिप्तं विचित्राभिर्विविधाभिश्च शुक्तिभिः ॥ ४ ॥
विपुलैर्दर्शनीयैश्च रक्ताक्षैर्भीमविक्रमैः ।
दीप्ततीक्ष्णमहादंष्ट्रैः प्रदीप्तदशनच्छदैः ॥ ५ ॥
शिरोभिर्दशभिर्भीमैर्भ्राजमानं महौजसं ।
नानाव्यालमृगाकीर्णं शिखरैरिव मन्दरं ॥ ६ ॥
बाहुभिश्च सकेयूरैश्चन्दनोत्तमभूषितैः ।
भ्राजमानं भुजैः पीनैः पञ्चशीर्षैरिवोरगैः ॥ ७ ॥
महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते ।
उत्तमास्तरणोपेते उपविष्टं वरासने ॥ ८ ॥
अलंकृताभिरत्यर्थं प्रमदाभिः समन्ततः ।
बालव्यजनहस्ताभिः स्त्रीभिश्च परिवीजितं ॥ ९ ॥

महोदरप्रहस्ताभ्यां महापार्श्वेन रक्षसा ।
तथैव रणशूरेण निकुम्भेन महात्मना ॥१०॥
उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः ।
कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥११॥
मन्त्रिभिर्मन्त्रतत्त्वज्ञैरमात्यैः शुभदर्शनैः ।
अन्वास्यमानं सचिवैः सुरैरिव महेश्वरं ॥१२॥
अपश्यद्राक्षसपतिं हनूमानमितौजसं ।
वेष्टितं मेरुशिखरैः सतोयमिव तोयदं ॥१३॥
बन्धनैः पीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षःपतिमवैक्षत ॥१४॥
भ्राजमानं ततो दृष्ट्वा हनूमान् राक्षसेश्वरं ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ॥१५॥
अहो रूपमहो वीर्यमहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥१६॥
यदि नाधर्मपरवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सर्वलोकस्य स्वर्लोकस्यापि रक्षिता ॥१७॥
त्रस्यन्ति तेन खल्वस्माल्लोकाः ससुरदानवाः ।
अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ॥१८॥
इति चिन्तां बहुविधां चकार हनुमान् कपिः ।
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥१९॥

## XLVI.

तमुद्वीक्ष्य महाबाहुं पिङ्गाक्षं पुरतः स्थितं ।
रोषेण महताविष्टो रावणः शत्रुतापनः ॥ १ ॥
संजातरोषताम्राक्षः प्रहस्तं रक्षसां वरं ।
कालयुक्तमुवाचेदं वचो विपुलविक्रमः ॥ २ ॥
दुरात्मा पृच्छ्यतामेष कः किं चास्य प्रयोजनं ।
वनभङ्गः किमर्थं वा राक्षसानां च तर्जनं ॥ ३ ॥
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥ ४ ॥
यदि तावत् त्वमिन्द्रेण प्रेषितो राक्षसालयं ।
तत्त्वमाख्याहि मा भूत् ते भयं वानर मोक्ष्यसे ॥ ५ ॥
यदि वैश्रवणस्यैव यमस्य वरुणस्य वा ।
घोररूपमिदं कृत्वा प्रविष्टोऽसि पुरीमिमां ॥ ६ ॥
विष्णुना प्रेषितो वासि लङ्काविजयकाङ्क्षिणा ।
न हि ते वानरं तेजो रूपमात्रं तु वानरं ॥ ७ ॥
तत्त्वं तु कथयस्वाद्य ततो वानर मोक्ष्यसे ।
अनृतं वदतो ह्यत्र जीवितं तव दुर्लभं ॥ ८ ॥
अथवा किं निमित्तं ते प्रवेशो राक्षसालये ।
त्वमेतत् कथय क्षिप्रं मोक्ष्यसे किं विवक्षया ॥ ९ ॥

एवमुक्तो हरिवरस्तदा राक्षसपुङ्गवं ।
संवीक्ष्य स महावेगो हनूमान् मारुतात्मजः ॥१०॥
धृतिमान् वाक्यसंपन्नो रावणाय न्यवेदयत् ।
अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा ॥११॥
धनदेन न मे सख्यं विष्णुना नास्मि नोदितः ।
मम वै जातिरेवेयं वानरोऽहमिहागतः ॥१२॥
दुर्लभे राक्षसेन्द्रस्य दर्शने सति तन्मया ।
वनं राक्षसराजस्य दर्शनार्थं विनाशितं ॥१३॥
ये च ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ।
रक्षणार्थं शरीरस्य प्रतियुद्धा रणाजिरे ॥१४॥
अस्त्रपाशैर्न शक्योऽहं बद्धुमत्यायतैरपि ।
पितामहादेव पुरा मया लब्धो वरो महान् ॥१५॥
राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितं ।
विमुक्तश्चाहमस्त्रेण इति तद्विदितं च मे ॥१६॥
प्राकृतोऽपि हि मे बन्धो मया समनुवर्तितः ।
स कार्यवत्तया राजन् न दौर्बल्यादवेहि तत् ॥१७॥
दूतोऽहमिह संप्राप्तो राघवस्यामितौजसः ।
श्रूयतां चापि वचनं मम पथ्यमिदं नृप ॥१८॥
इति सुन्दरकाण्डे रावणदर्शनं नाम पञ्चचत्वारिंशः सर्गः
—प्रहस्तवाक्यं नाम षट्चत्वारिंशः सर्गः ॥

## XLVII.

तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिपुङ्गवः ।
वाक्यमर्थवदव्यग्रमुवाच पवनात्मजः ॥ १ ॥
अहं सुग्रीवसंदेशादिह प्राप्तस्तवालयं ।
राक्षसेन्द्र हरीन्द्रस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थसहितं युक्तमिह चान्यत्र च क्षमं ॥ ३ ॥
राजा दशरथो नाम नरकुञ्जरवाजिनां ।
पितेव सर्वलोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रीतिकरः शुभः ।
पितुर्नियोगान्निष्क्रान्तः प्रविष्टो दण्डकं वनं ॥ ५ ॥
लक्ष्मणेन सह भ्रात्रा भार्यया चापि सीतया ।
महर्षिभिरनुक्रान्तं धर्मपन्थानमास्थितः ॥ ६ ॥
तस्य भार्या वने नष्टा सती सीता तपस्विनी ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥
स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः ।
ऋष्यमूकमनुप्राप्तः सुग्रीवेण च संगतः ॥ ८ ॥
तेन तस्य प्रतिज्ञातं सीतायाः परिमार्गणं ।
सुग्रीवस्य च रामेण हरिराज्यं प्रतिश्रुतं ॥ ९ ॥

# सुन्दरकाण्डं

ततस्तेन रणे हत्वा वयस्यं तव बालिनं ।
सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥ १० ॥
स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसङ्गरः ।
हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः ॥ ११ ॥
हरीणां तु सहस्राणि अयुतान्यर्बुदानि च ।
दिक्षु सर्वासु मार्गन्ते पृथिव्यामपि चाम्बरे ॥ १२ ॥
वैनतेयसमाः केचित् केचित् तत्रानिलोपमाः ।
अचिन्त्यगतयः शीघ्रा हरिवीरा महाबलाः ॥ १३ ॥
अहं तु हनुमान् नाम मारुतस्यौरसः सुतः ।
सीतायाः कारणे तूर्णं योजनानां शतं प्लुतः ॥ १४ ॥
तच्छृणुष्व महाराज संदेशं मम सर्वशः ।
इह लोके हितं चैव परत्र च सुखावहं ॥ १५ ॥
तद्भवान् दृष्टधर्मार्थस्तपः कृतपरिग्रहः ।
परदारान् महाप्राज्ञ नोपरोद्धुमिहार्हसि ॥ १६ ॥
न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १७ ॥
कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनां ।
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १८ ॥
न चापि त्रिषु लोकेषु राजन् विद्येत कश्चन ।
राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ १९ ॥

तदद्यात्महितं वीर सुहृदां चैव ते क्षमं ।
मन्यसे नरदेवाय जानकी प्रतिदीयतां ॥ २० ॥
त्वं तु काले हितं वाक्यमर्थधर्मानुसंहितं ।
मन्यस्व नरदेवाय जानकीं प्रतिपादय ॥ २१ ॥
दृष्टा चेयं मया देवी लब्धं यदिह दुर्लभं ।
उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥ २२ ॥
लक्षितेयं विशालाक्षी मया शोकपरायणा ।
आदायेतां न जानीषे पञ्चास्यामिव भोगिनीं ॥ २३ ॥
नेयं जरयितुं शक्या सासुरैरमरैरपि ।
विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥
अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः ।
न सुखं प्राप्नुयाद्राजन् किं पुनस्त्वद्विधो जनः ॥ २५ ॥
यां सीतेत्यभिजानासि सेयं तिष्ठति रूपिणी ।
कालरात्रिं हि तां विद्धि सर्वलङ्कानिवासिनां ॥ २६ ।
तपःसंतानलब्धस्ते योऽयमृद्धिपरिच्छदः ।
रामो नाशयितुं शक्तः सात्मत्राणपरिग्रहः ॥ २७ ॥
अवध्यतां तपोवीर्याद्भवान् यदभिमन्यते ।
आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २८ ॥
सुग्रीवो हि न देवेषु न रक्षःस्वसुरेषु वा ।
बली वानरराजोऽसौ न तस्मादभयं तव ॥ २९ ॥

ततः प्राणपरित्राणं कथं राजन् करिष्यसि ।
न हि धर्मोऽप्यसंहार्यो विधर्मफलसंहितः ॥ ३० ॥
तदेव फलमाप्नोति धर्माणां फलनाशनः ।
प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ॥ ३१ ॥
फलमस्याप्यधर्मस्य क्षिप्रमेवोपभोक्ष्यसे ।
जनस्थानबधं श्रुत्वा बालिनश्च तथा क्षयं ॥ ३२ ॥
रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः ।
कामं खल्वहमप्येकः सवाजिरथकुञ्जरां ॥ ३३ ॥
शक्तो नाशयितुं लङ्कां तत्र नैष तु निश्चयः ।
रामेण तु प्रतिज्ञातं वानराधिपसंनिधौ ॥ ३४ ॥
उच्छेदनममित्रस्य येनासौ मैथिली हृता ।
तदलं कालपाशेन सीताविग्रहरूपिणा ॥ ३५ ॥
स्वयं कण्ठावसक्तेन चिन्त्यतां हितमात्मनः ।
एवमुक्तस्तु कपिना पौलस्त्यो राक्षसाधिपः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्छितः ॥ ३६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे दूतवाक्यं नाम
सप्तचत्वारिंशः सर्गः ॥

## XLVIII.

बधे तस्य समाज्ञप्ते रावणेन हनूमतः ।
निवारयंस्ततो वाक्यमभाषत विभीषणः ॥ १ ॥
स रक्षोऽधिपतिं क्रुद्धं कार्यं चेदमुपस्थितं ।
विदित्वा चिन्तयामास कार्यं कार्यविधिं प्रति ॥ २ ॥
निश्चितार्थं ततः साम्ना पूजयित्वा स रावणं ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ३ ॥
इदं धर्मविरुद्धं हि इहामुत्र च गर्हितं ।
त्वत्तो न सदृशं वीर कपेरस्य प्रमापणं ॥ ४ ॥
असंशयं शत्रुरयं प्रवृद्धः
कृतं ह्यनेनाप्रियमप्रमेयं ।
दूता न बध्या हि वदन्ति सन्तो
दूतस्य दण्डा बहवो विसृष्टाः ॥ ५ ॥
वैरूप्यमङ्गेषु कशानिपातो
मौण्ड्यं तथा लक्षणसंनिपातः ।
एवंविधानर्हति रूक्षवादी
दण्डेषु दूतस्य बधो न दृष्टः ॥ ६ ॥
कथं च धर्मादनपेतबुद्धिः
परापरप्रत्ययनिश्चितार्थः ।

भवद्विधः क्रोधवशं हि गच्छेत्
क्रोधं न गच्छन्ति हि सत्त्ववन्तः ॥ ७॥
न धर्मवादे न च लोकतत्त्वे
न शास्त्रबुद्धौ स्वमते न चापि ।
बले न तुल्यस्तव कश्चिदन्यस्
त्वमुत्तमः सर्वसुरासुरेभ्यः ॥ ८॥
न चैवास्य कपेर्घाते कांश्चित् पश्यामहे गुणान् ।
तेष्वेव पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥ ९॥
साधु वा यदिवासाधु परैर्वचनमर्पितं ।
ब्रुवन् परार्थे धर्मज्ञ न बधं प्राप्तुमर्हति ॥ १०॥
अपि चास्मिन् हते राजन् नान्यं पश्यामि वानरं ।
इह यः पुनरागच्छेत् परं पारं महोदधेः ॥ ११॥
तस्मादस्य बधे यत्नो न कार्यः शत्रुतापन ।
भवान् सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ १२॥
अस्मिन् विनष्टे न हि दूतमन्यं
पश्यामि यस्तौ नरदेवपुत्रौ ।
युद्धाय युद्धर्षभ दुर्विनीताव्
उद्योजयेद्वै भवता विरुद्धौ ॥ १३॥
पराक्रमोत्साहमनस्विना च
सुरासुराणामपि दुर्जयेन ।

त्वया मनोनन्दन नैर्ऋतानां
न राघवः शक्यति योद्धुमाजौ ॥१४॥

हिताश्च शूराश्च समाहिताश्च
कुलेषु जाताश्च महागुणेषु ।
मनस्विनः शस्त्रभृतां वरिष्ठा
योधास्तवेमे बहवोऽपि सन्ति ॥१५॥

एतैः समेतैः सहितो हि राजन्
त्वं योत्स्यसे तौ खलु राजपुत्रौ ।
तस्मादयं गच्छतु तत्र मुक्तः
समाह्वयत्वाशु गतासुकल्पौ ॥१६॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम अष्टचत्वारिंशः सर्गः ॥

# सुन्दरकाण्डं

## XLIX.

तस्य तद्वचनं श्रुत्वा राक्षसेन्द्रो महाबलः ।
देशकालक्षमं भ्रातुर्वाक्यमुत्तरमब्रवीत् ॥ १ ॥
सम्यगाह भवांस्तावद्दूतबध्या विगर्हिता ।
अवश्यं तु बधादन्यः करणीयोऽस्य निग्रहः ॥ २ ॥
कपीनां किल लाङ्गूलमिष्टं भूषणसंज्ञितं ।
तदस्य दीप्यतामाशु तेन दग्धेन गच्छतु ॥ ३ ॥
पश्यन्तु ज्ञातयश्चैनमङ्गवैरूप्यकर्षितं ।
समित्रबान्धवाः सर्वे सुहृदः सकपीश्वराः ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ।
अवेष्टयन्त लाङ्गूलं जीर्णैः कार्पासिकैः पटैः ॥ ५ ॥
संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः ।
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः ॥ ६ ॥
चिन्तयामास मतिमान् देशकालक्षमं बहु ।
कामं खलु न शक्ता मे बद्धस्यापि निशाचराः ॥ ७ ॥
छित्त्वा पाशान् समुत्पत्य गच्छतः प्रतिवारणे ।
अवश्यं चैव मे लङ्का द्रष्टव्या रजनीक्षये ॥ ८ ॥
रात्रौ न हि सुदृष्टा मे दुर्गमार्गा समन्ततः ।
कामं बन्धैश्च मे भूयो लाङ्गूलादीपनेन च ॥ ९ ॥

पीडां कुर्वन्तु रक्षांसि न च मे मनसि क्षमः ।
एवं निश्चित्य हनुमान् कार्यं रामहिते रतः ॥ १० ॥
तत् सर्वं क्षमयामास शक्तोऽपि हरिपुङ्गवः ।
ततस्ते वै दुरात्मानो राक्षसाः क्रोधमूर्छिताः ॥ ११ ॥
स्नेहावसिक्तं तत् कृत्वा ज्वालयामासुरोजसा ।
ततः प्रदीप्तलाङ्गूलं हनूमन्तं महाकपिं ॥ १२ ॥
निर्ययुर्बद्धमादाय राक्षसा राजवेश्मतः ।
शङ्खभेरीनिनादेन घोषयन्तस्ततस्ततः ॥ १३ ॥
राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीं ।
दुर्गकर्म स लङ्कायां सुनिविष्टांश्च रक्षिणः ॥ १४ ॥
गृहाणि च समृद्धानि राक्षसानां महात्मनां ।
अपश्यद्राजमार्गांश्च सुविभक्तांश्च चत्वरान् ॥ १५ ॥
रथ्याश्च गृहसंबाधा वापीर्देवगृहाणि च ।
दीप्यमाने ततस्तत्र लाङ्गूलाग्रे हनूमतः ॥ १६ ॥
राक्षस्यस्त्वरितं गत्वा सीतायै तन्न्यवेदयन् ।
यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥ १७ ॥
स लाङ्गूलेन दीप्तेन रक्षोभिः परिकृष्यते ।
सा श्रुत्वा वचनं क्रूरमात्मनो मरणोपमं ॥ १८ ॥
जानकी शोकसंतप्ता हुताशनमुदीरयत् ।
मङ्गलाभिमुखी तस्य भूत्वा सीता महाकपेः ॥ १९ ॥

# सुन्दरकाण्डं

उपतस्थे विशालाक्षी नियता हव्यवाहनं ।
यद्यस्ति गुरुशुश्रूषा यद्यस्ति चरितं तपः ॥ २० ॥
यदिवाप्येकपत्नीत्वं शिवो भव हनूमतः ।
यदि कश्चिदनुक्रोशस्तस्यापि मयि धीमतः ॥ २१ ॥
यदिवा भाग्यशेषं मे शिवो भव हनूमतः ।
यदि मां वृत्तसंपन्नां सद्भावगतमानसां ॥ २२ ॥
स विजानाति धर्मात्मा शिवो भव हनूमतः ।
ततो विधूमः स्निग्धार्चिः प्रदक्षिणमथानलः ॥ २३ ॥
जज्वाल मृगशावाक्ष्याः शंसन्निव शिवं कपेः ।
स दीप्यमाने लाङ्गूले चिन्तयामास वानरः ॥ २४ ॥
प्रदीप्तोऽग्निरयं कस्मान्न मां दहति पावकः ।
दृश्यते च महाज्वालः कुरुते न च मे व्यथां ॥ २५ ॥
शिशिरस्येव संघातो लाङ्गूले मे प्रतिष्ठितः ।
अथवा तदिदं मन्ये यद्दृष्टं प्लवता मया ॥ २६ ॥
रामप्रसादादाश्चर्यं पर्वतोदधिसंगमे ।
यदि तावत् समुद्रस्य मैनाकस्य नगस्य च ॥ २७ ॥
रामार्थे संभ्रमस्तीव्रः किमग्नेर्न भविष्यति ।
सीतायाश्चानृशंस्येन तेजसा राघवस्य च ॥ २८ ॥
पितुश्च मम सख्येन न मां दहति पावकः ।
स पुरद्वारमाश्रित्य शैलराजमिवोत्थितं ॥ २९ ॥

विभक्तरश्मिसंपातमाससाद महाकपिः ।
स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥ ३० ॥
ह्रस्वतां परमां गत्वा बन्धनानि व्यशातयत् ।
विमुक्तश्च ततः श्रीमानभवत् पर्वतोपमः ॥ ३१ ॥
ददर्श वीक्षमाणश्च परिघं तोरणाश्रयं ।
तमादाय महाबाहुः कालायसमयं दृढं ॥ ३२ ॥
स्वरक्षिणस्ततः सर्वांश्चूर्णयामास वानरः ।
हतशेषाश्च ये तत्र राक्षसास्ते प्रदुद्रुवुः ।
पृष्ठतो नान्वपश्यन् तु मृगा व्याघ्रभयादिव ॥ ३३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे लाङ्गूलप्रदीपनं
नाम एकोनपञ्चाशः सर्गः ॥

# सुन्दरकाण्डं

## L.

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः ।
वर्धमानमहोत्साहः कार्यशेषमचिन्तयत् ॥ १ ॥
किमुत्तरमतः कार्यं कर्तव्यमिह सांप्रतं ।
यदेषां रक्षसां भूयः संतापमुपपादयेत् ॥ २ ॥
बलं तावत् प्रमथितं राक्षसप्रवरा हताः ।
वनैकदेशः क्षयितः शेषं दुर्गविनाशनं ॥ ३ ॥
विनाशितेषु दुर्गेषु भवेद्धि कर्मलाघवं ।
कर्मणाल्पप्रयत्नेन मम स्यात् फलनिश्चयः ॥ ४ ॥
यश्चायं मम लाङ्गूले दीप्यते हव्यवाहनः ।
अस्य संतर्पणं कर्तुं युक्तमेभिर्गृहोत्तमैः ॥ ५ ॥
ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः ।
भवनाग्रेषु लङ्कायां विचचार महाकपिः ॥ ६ ॥
मुमोच हनुमानग्निं प्रदीप्तश्च हुताशनः ।
साचिव्यं तत्र कुर्वाणःसुतस्य सुतवत्सलः ॥ ७ ॥
प्रदीप्तमग्निं पवनस्तेषु वेश्मस्ववीजयत् ।
ततः श्वसनसंयोगादतिदीप्तो हुताशनः ॥ ८ ॥
कालाग्निरिव संहृष्टस्तेषु वेश्मसु दृश्यते ।
तानि काञ्चनजालानि मुक्तामणितलानि च ॥ ९ ॥

भवनानि व्यशीर्यन्त रत्नवन्ति महान्ति च ।
तानि भग्नगवाक्षाणि निपेतुर्वसुधातले ॥ १० ॥
विमानानीव सिद्धानामम्बरात् पुण्यसंक्षये ।
वज्रविद्रुमवैदूर्यमुक्तारजतभूषितान् ॥ ११ ॥
विचित्रभवनोद्देशान् दह्यमानान् ददर्श सः ।
नाग्निस्तृप्यति काष्ठानां नाग्नेः स हरिपुङ्गवः ॥ १२ ॥
न हनूमन्निरस्तानां राक्षसानां वसुन्धरा ।
स तु संवर्धितश्चाग्निर्लङ्कां राक्षससंकुलां ॥ १३ ॥
ज्वालामालापरिक्षेपैरदहन्मारुतात्मजः ।
तेन शब्देन वित्रस्ता धर्षितास्तेन चाग्निना ॥ १४ ॥
अभिपेतुस्तदा घोरास्तं कपिं राक्षसोत्तमाः ।
ते राक्षसा भीमबला नानाप्रहरणान्विताः ॥ १५ ॥
आजग्मुर्वानरं श्रेष्ठं वाणैरादित्यसंनिभैः ।
आवर्त्त इव गाङ्गस्य तोयस्य विपुलो महान् ॥ १६ ॥
परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः ।
ते प्रदीप्तानि शूलानि प्रासान् बहुपरश्वधान् ॥ १७ ॥
तदा प्रति हनूमन्तं क्षिपन्ति स्म निशाचराः ।
ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥ १८ ॥
प्रासादस्य समुत्पाट्य स्तम्भं हेमविभूषितं ।
भ्रामयित्वा शतगुणं नाम विश्राव्य चात्मनः ।

जघान राक्षसान् घोरान् वज्रेणेन्द्र इवासुरान् ॥१९॥

हुताशनार्चिः परिवेष्टिता सा
हतप्रवीरा परमार्त्तयोधा ।
हनूमतः क्रोधबलाभिभूता
बभूव शापोपहतेव लङ्का ॥२०॥

स राक्षसांस्तान् सुबहून् निहत्य
वनं च भङ्क्त्वा बहुचैत्यवन्तं ।
विसृज्य रक्षोभवनेषु चाग्निं
जगाम सीतां मनसा महात्मा ॥२१॥

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्कादाहो
नाम पञ्चाशः सर्गः ॥

## LI.

स दीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीं ।
अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास विह्वलः ॥ १ ॥
यदर्थमयमारम्भस्तत् कार्यमवसादितं ।
मयेह दहता लङ्कां न सीता परिरक्षिता ॥ २ ॥
अल्पशेषमिदं कार्यं कृतमासीन्न संशयः ।
तन्मे कोपपरीतेन समूलमिह नाशितं ॥ ३ ॥
धन्यास्ते पुरुषाः श्रेष्ठा ये बुद्ध्या क्रोधमुत्थितं ।
प्रदीप्तमवलुम्पन्ति दीप्तमग्निमिवाम्भसा ॥ ४ ॥
विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते ।
लङ्कायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ ५ ॥
तदेवं विहते कार्ये मम प्रज्ञाविपर्ययात् ।
इहैव प्राणसंन्यासमहमप्यभिरोचये ॥ ६ ॥
किमग्नौ प्रक्षिपेद्देहमथवा बडवामुखे ।
शरीरमुत सत्त्वानां दद्यामर्णववासिनां ॥ ७ ॥
कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः ।
तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ ८ ॥
तदेवेदं खलु मया रोषदोषात् प्रकाशितं ।
विस्पष्टं त्रिषु लोकेषु कार्यं यदनवस्थितं ॥ ९ ॥

धिगस्तु राक्षसंभावमनीशमनवस्थितं ।
ईश्वरेणैव यद्रागान्मया सीता न रक्षिता ॥१०॥
विनष्टायां हि सीतायां तौ द्वावपि विनङ्क्ष्यतः ।
तयोर्विनाशात् सुग्रीवः सबन्धुर्न भविष्यति ॥११॥
तत एवंविधं श्रुत्वा भरतो भ्रातृवत्सलः ।
धर्मात्मा स च शत्रुघ्नो नियतं न भविष्यति ॥१२॥
इक्ष्वाकुवंशे संनष्टे को धर्मं परिरक्षिता ।
भविष्यन्ति प्रजाश्चैव शोकसंतापपीडिताः ॥१३॥
तदहं मन्दभाग्यस्तु लुप्तधर्मार्थसंग्रहः ।
रोषमोहपरीतात्मा व्यक्तं लोकविनाशकः ॥१४॥
तमेवं शोकसंभ्रान्तं निमित्तान्युपपेदिरे ।
पूर्वमप्युपलब्धानि स वै पुनरचिन्तयत् ॥१५॥
अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न विनङ्क्ष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥१६॥
न हि धर्मात्मनस्तस्य भार्याममिततेजसः ।
स्वचरित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥१७॥
नूनं रामप्रभावेन वैदेह्याः सुकृतेन च ।
यन्मां दहनकर्मापि नादहद्धव्यवाहनः ॥१८॥
त्रयाणां भरतादीनां भ्रातृणां देवतोपमा ।
रामस्य च मनःकान्ता सा कथं नु विनङ्क्ष्यति ॥१९॥

व्रतोपवासपरमां नित्यं रामपरायणां ।
तां कथं धक्ष्यते वह्निरतिवीर्यां तपस्विनीं ॥ २० ॥
सा हि सत्याभिसंधाना तथानन्या च भर्तरि ।
अपि सा निर्दहेदग्निं न तामग्निस्तु निर्दहेत् ॥ २१ ॥
स तथा चिन्तयन् दीनो देव्या धर्मपरिग्रहं ।
शुश्राव हनुमान् वाचश्चारणानां दिवौकसां ॥ २२ ॥
अहो खलु कृतं कर्म दुर्विगाह्यं हनूमता ।
अग्निं विसृजता भीमं भीमे राक्षसमन्दिरे ॥ २३ ॥
दग्धेयं नगरी लङ्का साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोद्भ्रान्तभाषिणां ॥ २४ ॥
स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च हनुमानभवत् प्रीतिमान् पुनः ॥ २५ ॥

ततः कपिः प्राप्तमनोरथार्थस्
तामक्षतां राजसुतां विदित्वा ।
कार्याभियोगेऽभिनिविष्टबुद्धिः
प्रतिप्रयाणाय मतिं चकार ॥ २६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्कादाहे सीतासंशयो
नाम एकपञ्चाशः सर्गः ॥

# सुन्दरकाण्डं

## LII.

ततस्तु सरमा नाम गत्वा सीतामुवाच ह ।
दीप्यमानां स्वया लक्ष्म्या संध्यामौत्पातिकीमिव ॥ १ ॥
प्रशमं गच्छ वैदेहि हनूमन्तं प्रति प्रिये ।
गतः स प्रियदूतस्ते छित्वा पाशमिव द्विपः ॥ २ ॥
स राक्षससहस्राणि विद्राव्य हरिपुङ्गवः ।
निहत्य च वरांस्तत्र दिवमेवोत्पपात ह ॥ ३ ॥
अथ विक्रम्य सहसा स हरिस्तु गृहाद्गृहं ।
लङ्कामादीपयामास वायुपुत्रः प्रतापवान् ॥ ४ ॥
स लाङ्गूलावसिक्ताग्निर्मृत्योर्मुक्तो मुखादिव ।
लङ्कां पर्यचरत् कृत्स्नां खे ग्रहः संपतन्निव ॥ ५ ॥
तोरणेषु गवाक्षेषु हर्म्याणां शिखरेषु च ।
वितिष्ठमानं पश्यन्ति राक्षसाः प्लवगोत्तमं ॥ ६ ॥
सर्वतो हनुमानेकः संपतन् परिराजते ।
हुताशन इवाकाशे ज्वालामालापरिष्कृतः ॥ ७ ॥
अन्तःपुरविमानेषु रावणस्य महाकपिः ।
निपपाताग्निसहितो मूर्त्तिमानिव पावकः ॥ ८ ॥
दावाग्निरिव कोपेन कपिः पावकसंनिभः ।
अदहत् तां पुरीं लङ्कां कृत्स्नां काल इवान्तकः ॥ ९ ॥

कपिकोपविमुक्तेन दीप्तेनेव वनाग्निना ।
सा सर्वादह्यत पुरी शिशिरेणेव पद्मिनी ॥ १० ॥
प्रासादाः पाण्डराभाश्च ज्वलनेन समावृताः ।
पर्वता इव दृश्यन्ते काञ्चनाञ्जनधातवः ॥ ११ ॥
अग्निज्वालाप्रदीप्ताङ्गा भग्नालानाश्च कुञ्जराः ।
राजमार्गेषु दृश्यन्ते तुरङ्गाश्च सहस्रशः ॥ १२ ॥
संप्रदीप्तकलापाग्रा विप्रकीर्णाश्च बर्हिणः ।
संक्रामन्त इवाभान्ति पुष्पिताः कमलाकराः ॥ १३ ॥
काश्चित् किंशुकवर्णाभाः काश्चिच्छाल्मलिसंनिभाः ।
रक्तोत्पलनिभाः काश्चिद्दृश्यन्ते पावकार्चिषः ॥ १४ ॥
ज्वालाङ्गुलीभिर्भगवान् विष्टभ्य स हुताशनः ।
श्वेताश्वमिव प्रासादं ज्वलन्नभ्यवरूढवान् ॥ १५ ॥
रावणान्तःपुरं चैव सर्वतोऽदह्यताग्निना ।
नायं तु दह्यते देशो यत्रासि त्वं पतिव्रते ॥ १६ ॥
सा वायुविभ्रान्तहुताशनार्चिषा पुरी दवाग्निप्रतिमेन सर्वतः ।
प्रसह्य लङ्का प्लवगेन धीमता हुताशनायोपहृता यथा बलिः । १७ ।
तवार्थसिद्धिं प्रवदामि तद्वचो विनाशमेतद्धि वदन्ति पण्डिताः ।
कृतामबुद्धिं प्रवदन्ति सर्वतः कपिप्रवीरस्य समीक्ष्य विक्रमं ॥ १८ ॥
ततो विनष्टां तु निशम्य मैथिली पुरीमिमां रावणबाहुपालितां ।
दृढं हि सा तन्मधुरं वचस्तदा निशम्य तस्या जहृषे ननन्द च । १९ ।

# सुन्दरकाण्डं

## LIII.

प्रवरान् राक्षसान् हत्वा नाम विश्राव्य चात्मनः ।
दग्ध्वा च नगरीं लङ्कां सीतां द्रष्टुं ययौ कपिः ॥ १ ॥
गत्वा चामन्त्रयामास गमनाय महोदधेः ।
तमभिप्रस्थितं दृष्ट्वा वीक्षमाणा पुनः पुनः ॥ २ ॥
भर्तृस्नेहादिदं वाक्यं सौहार्दात् तमथाब्रवीत् ।
यदीह मन्यसे तात वसैकाहमरिन्दम ॥ ३ ॥
क्वचित् त्वं संवृते देशे विश्रान्तः श्वो गमिष्यसि ।
मम चैवाल्पभाग्यायाः सांनिध्यात् तव वानर ॥ ४ ॥
शोकस्यास्याप्रमेयस्य मुहूर्त्तं स्यादपि क्षयः ।
गते हि हरिशार्दूल मुहूर्त्तं गगने त्वयि ॥ ५ ॥
प्राणानामपि विश्वासो मम न स्यात् प्लवङ्गम ।
अदर्शनं च ते वीर भूयो मां तापयिष्यति ॥ ६ ॥
दुःखाद्दुःखतरं प्राप्य दुःखितां शोककर्षितां ।
अयं च वीर संदेहस्तिष्ठतीह ममाग्रतः ॥ ७ ॥
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु महाबल ।
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिं ॥ ८ ॥
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ।
त्रयाणामेव भूतानां सागरस्याभिलङ्घने ॥ ९ ॥
शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ।

तदस्मिन् कार्यनिर्बन्धे समुत्पन्ने सुदारुणे ॥ १० ॥
किं पश्यसि समाधानं त्वं हि कार्यविशारदः ।
काममस्य त्वमेवैकः कार्यस्य परिसाधने ॥ ११ ॥
पर्याप्तः परवीरघ्न नान्यश्चेति मतिर्मम ।
बलैः समग्रैर्यदि मां निहत्य रजनीचरान् ॥ १२ ॥
नयेच्च स्वपुरं रामः परं तत् स्याद्यशस्करं ।
यथाहं तस्य वीरस्य विरहे रुदती सती ॥ १३ ॥
हृता ह्येतेन पापेन तथा नार्हति राघवः ।
बलैस्तु संकुलां कृत्वा लङ्कां परपुरंजयः ॥ १४ ॥
मां नयेद्यदि काकुत्स्थस्तत् तस्य सदृशं भवेत् ।
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ॥ १५ ॥
भवत्याहवशूरस्य तथा त्वमुपपादय ।
तदर्थोपहितं वाक्यं प्रसृतं हेतुसंहितं ॥ १६ ॥
निशम्य हनुमान् वीरो वाक्यमुत्तरमब्रवीत् ।
देवि वानरसैन्यानामीश्वरः शत्रुतापनः ॥ १७ ॥
सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ।
स वानरसहस्राणां कोटिभिरभिसंवृतः ॥ १८ ॥
क्षिप्रमेष्यति सुग्रीवो वैदेहि प्लवगाधिपः ।
तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः ॥ १९ ॥
मनः संकल्पसंपन्ना निर्देशे हरयः स्थिताः ।

येषां नोपरि नाधश्च न तिर्यक् सज्जते गतिः ॥ २० ॥
न ते कर्मसु सीदन्ति महत्स्वमितविक्रमाः ।
नैकशस्तैर्महाभागैः ससागरधराधरा ॥ २१ ॥
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ।
मद्विशिष्टास्तथा तुल्याः सन्ति तत्र वनौकसः ॥ २२ ॥
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ।
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ॥ २३ ॥
न हि प्रकृष्टान् प्रेष्यांस्तु प्रेषयन्त्यवरावरान् ।
तदलं परितापेन देवि मन्युरपैतु ते ॥ २४ ॥
एकोत्पातेन ते लङ्कामेष्यन्ति हरिपुङ्गवाः ।
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ॥ २५ ॥
त्वत्सकाशं महाभागौ नृसिंहावागमिष्यतः ।
सगणं रावणं हत्वा राघवो वरवर्णिनी ॥ २६ ॥
त्वामादाय वरारोहे स्वां पुरीं प्रतियास्यति ।
तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ॥ २७ ॥
क्षिप्रं द्रक्ष्यसि रामेण रावणं निहतं रणे ।
निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे ॥ २८ ॥
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ।
एवमाश्वास्य वैदेहीं हनूमान् मारुतात्मजः ।
गमनाय मतिं कृत्वा जानकीमभ्यवादयत् ॥ २९ ॥

## LIV.

आकुलां नगरीं कृत्वा व्यथयित्वा च रावणं ।
दर्शयित्वा बलं घोरमभिवाद्य च मैथिलीं ॥ १ ॥
ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ।
आरुरोह गिरिं मुख्यमरिष्टं रिपुसूदनः ॥ २ ॥
तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ।
सालतालाश्वकर्णैश्च द्रुमैश्च बहुभिर्वृतं ॥ ३ ॥
लतावितानैर्विविधैः पुष्पवद्भिरलङ्कृतं ।
नानामृगगणाकीर्णं धातुवृन्दविभूषितं ॥ ४ ॥
बहुप्रस्रवणोपेतं शिलासंचयसंकटं ।
महर्षियक्षगन्धर्वकिन्नरोरगसेवितं ॥ ५ ॥
तमारुरोह विपुलं पर्वतं प्लवगोत्तमः ।
रामदर्शनशीघ्रेण प्रहर्षेण प्रचोदितः ॥ ६ ॥
तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु ।
सनिनादमशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥ ७ ॥
स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ।
दक्षिणादुत्तरं पारं गमिष्यँल्लवणाम्भसः ॥ ८ ॥
अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ।
ददर्श सागरं घोरं मीनोरगनिषेवितं ॥ ९ ॥

# सुन्दरकाण्डं

स मारुत इवाकाशे मारुतस्यौरसः सुतः ।
प्रपेदे हरिशार्दूलः पितुः पन्थानमुत्तमं ॥१०॥
ततः स पीडितस्तेन कपिना पर्वतोत्तमः ।
ररास सह तैः सर्वैः प्रविशन् वसुधातलं ॥११॥
कम्पमानैश्च शिखरैर्निपतद्भिस्तथापरैः ।
स गिरिः क्षोभितस्तेन प्रनृत्त इव लक्ष्यते ॥१२॥
तस्योरुवेगोन्मथिताः पादपाः पुष्पशोभिताः ।
निपेतुर्भूतले भग्नाः शक्रवज्रहता इव ॥१३॥
कन्दरान्तरसंस्थानां पीडितानां महौजसां ।
सिंहानां निनदो घोरो मेघानामिव शुश्रुवे ॥१४॥
स्रस्तव्याकृष्टवसना व्याकुलीकृतभूषणाः ।
समुत्पेतुरप्सरसः सहसा धरणीतलात् ॥१५॥
किन्नरोरगगन्धर्वयक्षविद्याधरास्तथा ।
पीडितास्तं नगवरं त्यक्त्वा गगनमास्थिताः ॥१६॥
अतिप्रमाणा बहवो दीप्तजिह्वा महाविषाः ।
निपीडितशिरोग्रीवा व्यचेष्टन्त भुजङ्गमाः ॥१७॥
क्वचित् सुस्राव सलिलं क्वचिच्च रजतस्रवं ।
धतूनन्यत्र विविधान् महाप्लवगपीडितः ॥१८॥
स तु भूमिधरः श्रीमान् बलिना तेन पीडितः ।
सवृक्षशिखरोदग्रः प्रविवेश रसातलं ॥१९॥

## LV.

सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभं ।
पुष्यश्रवणकादम्बमभ्रशैवलशाद्वलं ॥ १ ॥
पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहं ।
ऐरावतमहाद्वीपं स्वातिहंसविलोडितं ॥ २ ॥
वातसंघातघोरोर्मि चन्द्रांशुशिशिरोदकं ।
भुजङ्गयक्षगन्धर्वविवृद्धकमलोत्पलं ॥ ३ ॥
अपारमपरिश्रान्तः सोऽवगाहन्नभःसरः ।
नदन् नादेन महता मेघस्वनमहास्वनः ॥ ४ ॥
तं श्रुत्वा निनदं घोरं वानरास्ते हनूमतः ।
बभूवुर्हृष्टमनसः सुहृद्दर्शनकाङ्क्षिणः ॥ ५ ॥
जाम्बवांश्च हरिश्रेष्ठः प्रीतिसंहृष्टमानसः ।
उपामन्त्र्य हरीन् सर्वान् साङ्गदान् वाक्यमब्रवीत् ॥ ६ ॥
सर्वथा कृतकार्योऽसौ हनूमान् नात्र संशयः ।
न ह्यस्याकृतकृत्यस्य वेग एवंविधो भवेत् ॥ ७ ॥
तस्य बाहूरुवेगं च निनदं च महात्मनः ।
संश्रुत्य हरयो हृष्टाः समुत्पेतुः समन्ततः ॥ ८ ॥
ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ।
प्रहृष्टाः समपश्यन्त हनूमन्तं दिदृक्षवः ॥ ९ ॥

ते प्रीताः पादपाग्राणि द्रुमशाखाश्च पुष्पिताः ।
वासांसि च प्रकाशानि समाविध्यन्त वानराः ॥ १० ॥

उत्तमं जवमास्थाय हर्षाद्द्विगुणविक्रमः ।
आजगाम महातेजाः पुनर्मध्येन सागरं ॥ ११ ॥

पर्वतेन्द्रं सुनाभं च समुपस्पृश्य पाणिना ।
ज्यामुक्त इव नाराचो महावेगमुपागमत् ॥ १२ ॥

मारुतस्यालयं श्रीमान् कपिर्व्योमचरो महान् ।
संप्रयात्येव गगनं कर्षन्निव दिशो दश ॥ १३ ॥

हनूमान् मेघजालानि विकर्षन्निव गच्छति ।
बाहुभ्यामन्तरे सक्तं मेघजालं च पाण्डरं ॥ १४ ॥

पाण्डरारुणवर्णानि नीललोहितकानि च ।
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ १५ ॥

चालयन् मेघवृन्दानि लङ्घयंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ १६ ॥

स किञ्चिदनुसंप्राप्तः समालोक्य महागिरिं ।
अनदद्धनुमान् नादं मेघनादसमस्वनं ॥ १७ ॥

तमग्निचयसंकाशमापतन्तं महाकपिं ।
दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥ १८ ॥

स तस्यैव गिरेः शृङ्गे निपत्य सुमहाजवः ।
निषसाद महेन्द्रस्य मारुतिः पादपाकुले ॥ १९ ॥

ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः ।
हनूमन्तं महात्मानं परिवार्योपतस्थिरे ॥ २० ॥
उपायनानि चादाय मधूनि च फलानि च ।
अर्चयन्तो हरिवरं मारुतस्यौरसं सुतं ॥ २१ ॥
विनेदुर्मुदिताः केचिच्चक्रुः किलकिलाध्वनिं ।
हृष्टाः पादपशाखासु व्यलम्बन्त च केचन ॥ २२ ॥
हनूमांस्तु महावृद्धं जाम्बवन्तं महाकपिं ।
कुमारमङ्गदं चैव ववन्देऽथ महाबलः ॥ २३ ॥
स ताभ्यां पूजितः पूज्यः कपिभिश्च सभाजितः ।
दृष्टा देवीति विक्रान्तः संक्षेपेण न्यवेदयत् ॥ २४ ॥
दृष्टा देवीति वचनं महार्थममृतोपमं ।
श्रुत्वा तु मारुतेस्तस्य मुदिताः कपयोऽभवन् ॥ २५ ॥
क्ष्वेलन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये क्षिपन्ति च ।
चक्रुः किलकिलामन्ये ननन्दुरपरे तथा ॥ २६ ॥
केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ।
कुञ्चितायतदीर्घाणि लाङ्गूलानि विबभ्रमुः ॥ २७ ॥
अपरे हनुमन्तं तु वानरं वानरोत्तमाः ।
आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति प्रहर्षिताः ॥ २८ ॥
स्तुवन्त्यथ नमस्यन्ति परिषस्वजिरेऽपरे ।
प्रहृष्टमनसं दृष्ट्वा हनूमन्तमुपस्थितं ॥ २९ ॥

बालिपुत्रोऽङ्गदश्चैव संपरिष्वज्य पीडितं ।
निषसाद ततो हस्ते गृहीत्वा बालिनः सुतः ॥३०॥
रमणीये वनोद्देशे महेन्द्रस्य महागिरेः ।
परिवार्य च ते सर्वे परां प्रीतिमुपागमन् ॥३१॥
जाम्बवन्तं हनूमन्तमङ्गदं च कपीश्वरं ।
परिवाय हरिश्रेष्ठा भेजिरे विपुलाः शिलाः ॥३२॥
उपविष्टा गिरेस्तस्य शिलासु विपुलासु ते ।
श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥३३॥
दर्शनं चापि लङ्कायाः सीताया रावणस्य च ।
तस्थुः प्राञ्जलयः सर्वे परिवार्य समन्ततः ॥३४॥
प्रीतिविस्फारिताक्षास्ते निःशब्दा हरयोऽभवन् ।
निश्चितास्तत्पराः सर्वे हनूमद्वचनोन्मुखाः ॥३५॥
बभौ तत्राङ्गदः श्रीमान् वानरैर्बहुभिर्वृतः ।
उपास्यमानो विविधैर्देवैरिव पुरन्दरः ॥३६॥

इत्यार्षे रामायणे सुन्दरकाण्डे सरमावाक्यं नाम
द्विपञ्चाशः सर्गः —सीताश्वासनं नाम
त्रिपञ्चाशः सर्गः —अरिष्टारोहणं नाम चतुःपञ्चाशः
सर्गः —हनुमत्प्रत्याप्लवनं नाम पञ्चपञ्चाशः
सर्गः ॥

# रामायणं

## LVI.

ततस्तमब्रवीद्वाक्यं कपीनां प्रवरस्तदा ।
जाम्बवान् कार्यवृत्तान्तमपृच्छत् पवनात्मजं ॥ १ ॥
कथं दृष्टा त्वया सीता रामस्य महिषी प्रिया ।
स च तस्यां कथं वृत्तः क्रूरकर्मा दशाननः ॥ २ ॥
यथावत् सर्वमेतन्नो ब्रूहि ब्रूहि महाकपे ।
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयं ॥ ३ ॥
प्रसन्नवर्णो हि मणिस्तव पाणिगतः शुभः ।
अपि दृष्टा त्वया सीता ब्रूहि नः परिपृच्छतां ॥ ४ ॥
यच्चापि तत्र वक्तव्यो गतैरस्माभिरात्मवान् ।
वक्तव्यं चैव यत् तत्र तद्भवान् व्याकरोतु नः ॥ ५ ॥
इति जाम्बवता पृष्टो वानरानुमतं वचः ।
यथावृत्तं हरिश्रेष्ठः कथयामास मारुतिः ॥ ६ ॥
प्रत्यक्षं वो यथाहं वै महेन्द्राग्रादवप्लुतः ।
उदधेरन्तरं पारं काङ्क्षमाणो महात्मनः ॥ ७ ॥
ततो देवाः सगन्धर्वाः सविद्याधरचारणाः ।
विमानस्थाः खमावृत्य तुष्टुवुः सहिता हि मां ॥ ८ ॥
एतस्मिन्नन्तरेऽधस्ताद्राक्षसी सुमहातनुः ।
विरूपा विकृतं वक्त्रं कृत्वा मां प्रत्यधावत ॥ ९ ॥

# सुन्दरकाण्डं

कायेनाकाशमावृत्य भक्ष्ये त्वामिति चाब्रवीत् ।
तां दृष्ट्वा मेघसंकाशां राक्षसीमग्रतः स्थितां ॥ १० ॥
ईषद्भयसमाविग्न उक्तवानस्मि तामहं ।
राजा दशरथो नाम अयोध्याधिपतिः प्रभुः ॥ ११ ॥
तस्य पुत्त्रोऽग्रजो रामः सीतया लक्ष्मणेन च ।
प्रविष्टो दण्डकारण्यं पित्राज्ञामनुपालयन् ॥ १२ ॥
तस्य भार्या जनस्थानाद्रावणेन दुरात्मना ।
मुनिव्रतं समास्थाय हृत्वा लङ्कां प्रवेशिता ॥ १३ ॥
तस्याः सकाशं गच्छामि दूतोऽहं तस्य राक्षसि ।
दृष्ट्वा सीतां कृतार्थोऽहमागमिष्यामि भीषणे ॥ १४ ॥
सत्यमेतद्ब्रवीमि त्वां तदा भक्षसि मां दृढं ।
एवमुक्ता तदा सा तु न श्रद्धामनुकल्पयत् ॥ १५ ॥
नागन्तुं न च वै गन्तुं न कालातिक्रमं क्षमे ।
ग्रसिष्ये भक्षयिष्येऽहं प्रविश स्वोदरं प्रति ॥ १६ ॥
ततः क्रोधान्मयोक्ता सा कुरु वक्त्रं विशामि ते ।
दृष्ट्वा तु सा मे विस्तारं नादं कृत्वा सुदारुणं ॥ १७ ॥
दशयोजनविस्तारं वक्त्रं कृत्वाग्रतः स्थिता ।
तां दृष्ट्वा दशविस्तारामासं विंशतियोजनः ॥ १८ ॥
दृष्ट्वा विंशतिविस्तारं सा त्रिंशद्योजनान्यभूत् ।
त्रिंशद्योजनिकां दृष्ट्वा चत्वारिंशद्गतो ह्यहं ॥ १९ ॥

चत्वारिंशद्गतं दृष्ट्वा सा तु पञ्चाशतं गता ।
गतां पञ्चाशतं दृष्ट्वा षष्टियोजनिकोऽभवं ॥ २० ॥
षष्टियोजनिकं दृष्ट्वा साभूत् सप्ततियोजना ।
सप्तत्या राक्षसीं दृष्ट्वा अशीत्यैव स्थितो ह्यहं ॥ २१ ॥
अशीतिकं तु मां दृष्ट्वा साभून्नवतियोजना ।
नवत्या राक्षसीं दृष्ट्वा शतयोजनिकोऽभवं ॥ २२ ॥
शतयोजनविस्तारं दृष्ट्वा मां राक्षसी तदा ।
चकार वदनं साथ शतयोजनमायतं ॥ २३ ॥
दृष्ट्वा विक्रमसामर्थ्यादतिरिच्यन्तमेव हि ।
शतेन सा प्रतिष्ठाप्य वदनं मामभाषत ॥ २४ ॥
अलं खेदेन भवतः प्रविश स्वोदरं मम ।
तद्दृष्ट्वा विवृतं वक्त्रं शतयोजनमायतं ॥ २५ ॥
समाहितमना भूत्वा पतङ्ग इव वेगितः ।
अङ्गुष्ठमात्रो भूत्वाहं प्रविष्टोऽस्म्युदरं महत् ॥ २६ ॥
दन्तौष्ठपुटसंबद्धं वक्त्रं सापि तदाकरोत् ।
तद्दृष्ट्वा संवृतं वक्त्रं कर्णमाविश्य दक्षिणं ॥ २७ ॥
निष्क्रम्य तेन तु स्वस्थः प्रहसन् वाक्यमब्रुवं ।
प्रविष्टं ते मया वक्त्रं दाक्षायणि नमोऽस्तु ते ॥ २८ ॥
गमिष्ये यत्र वैदेही दिष्ट्या सत्यं वचस्तव ।
एवमुक्ता मया देवी तुष्टा तत्र च साब्रवीत् ॥ २९ ॥

सुरसा नाम वीराहं देवैः सर्वैर्नियोजिता ।
त्वत्पराक्रमसामर्थ्यं जिज्ञासार्थमिहागता ॥ ३० ॥
तुष्टाहं ते कपिश्रेष्ठ वायुपुत्र महाबल ।
अर्थसिद्धौ व्रजेः सौम्य जयेन पुनराव्रज ॥ ३१ ॥
जय शत्रुं महावीर्यमभेद्यो ह्यपराजितः ।
जिज्ञासयागता वीर सामर्थ्यं तुलयत्यहं ॥ ३२ ॥
अतुल्यविक्रमो हि त्वं तेजस्वी वानरोत्तम ।
स्वस्त्यस्तु ते गमिष्यामि महेन्द्रभवनं प्रति ॥ ३३ ॥
एवमुक्त्वा तु सा देवी तदा स्वभवनं गता ।
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ ३४ ॥
पुष्पवृष्टिनिपातेन साधु साधिति चाब्रुवन् ।
महेन्द्रविक्रमं दृष्ट्वा तव वीराद्भुतोपमं ॥ ३५ ॥
इदं च सुमहत् कर्म कृतं सुरसया सह ।
परितुष्टाः स्म ते वीर शिवोऽस्तु विजयोऽस्तु ते ॥ ३६ ॥
समानयस्व वैदेह्या रामं स्वामिहितं कुरु ।
एवमुक्त्वा ततो देवा गताः स्वान् स्वांस्तदालयान् ॥ ३७ ॥
गतेषु चाहं देवेषु प्रहृष्टेनान्तरात्मना ।
विक्रमेणाप्रधृष्येण वीक्षमाणो महार्णवं ॥ ३८ ॥
प्रभञ्जन इवाविष्टः शरवत् त्वरितोऽव्रजं ।
अपां सुसदृशं व्योम वेगेनाहं परिप्लुतः ॥ ३९ ॥

गच्छतश्चैव मे घोरं विघ्नमापतितं महत् ।
सौवर्णशिखरं दिव्यमपश्यं पर्वतोत्तमं ॥ ४० ॥
समुद्रमध्ये तिष्ठन्तं विघ्नभूतमिवात्मनः ।
उपगम्य च तं दिव्यं काञ्चनं नगमुत्तमं ॥ ४१ ॥
कृता मे मनसा बुद्धिर्भेत्तव्योऽयं महागिरिः ।
प्रहृतस्य मया तस्य लाङ्गूलेन महागिरेः ॥ ४२ ॥
शिखरः सूर्यसंकाशो व्यशीर्यत सहस्रधा ।
तन्मे व्यवसितं दृष्ट्वा स उवाच महागिरिः ॥ ४३ ॥
पुत्रेति मधुरां वाणीमभिसान्त्वपुरस्कृतां ।
पितुरात्मसमं विद्धि सुहृदं मारुतस्य मां ॥ ४४ ॥
सुनाभमिति विख्यातं निवसन्तं महोदधौ ।
पूर्वं पन्नगमाः पुत्र बभूवुः पर्वतोत्तमाः ॥ ४५ ॥
छन्देन पृथिवीं चेरुर्बाधमानास्तपोधनान् ।
श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः ॥ ४६ ॥
चिच्छेद भगवान् पक्षान् वज्रेण गुरुणा ततः ।
अहं तु मोक्षितस्तात तव पित्रा महात्मना ॥ ४७ ॥
मारुतेन तदा वत्स समुद्रं च प्रवेशितः ।
रामस्य च मया सह्ये वर्तितव्यमरिन्दम ॥ ४८ ॥
तस्माद्विश्रम्य गच्छात्र भक्षयित्वा फलानि च ।
एतच्छ्रुत्वा मया तस्य सुनाभस्य समासतः ॥ ४९ ॥

कार्यगौरवमाख्यातं निखिलेन महागिरेः ।
तेन चाहमनुज्ञातः सुनाभेन महात्मना ॥५०॥
उत्तमं जवमास्थाय शेषं पन्थानमास्थितः ।
ततोऽहं सुचिरे काले गच्छन्नुग्रजवः पथि ॥५१॥
बलवन्निगृहीतोऽस्मि न च पश्यामि किञ्चन ।
सोऽहं विगतवेगस्तु दिशो दश विलोकयन् ॥५२॥
न किञ्चित् तत्र पश्यामि येन मेऽपहृता गतिः ।
ततो मे बुद्धिरुत्पन्ना किं नाम गमने मम ॥५३॥
ईदृशो विघ्न उत्पन्नो यत्रारूपो हि विग्रहः ।
अधोमुखी तदा दृष्टिर्गच्छिना विहिता मया ॥५४॥
तत्र पश्याम्यहं भीमां राक्षसीं सलिलालये ।
प्रहस्य च महानादमुक्तोऽहं भीमया गिरा ॥५५॥
अवस्थितमसंभ्रान्तमिदं वाक्यं सुदारुणं ।
क्वासि गन्ता महाकाय क्षुधिताया ममेप्सितः ॥५६॥
चिराय भक्ष्यस्त्वं दत्तो दिष्ट्या धात्रा महात्मना ।
बाढमित्येव तां वाणीं प्रतिगृह्याम्यहं ततः ॥५७॥
वर्धयन् विपुलं कायं तस्याः कायमपूरयं ।
तस्याश्चास्यं महद्भीममभवच्छतयोजनं ॥५८॥
न चात्मानमबुध्यत् सा गतभीर्विकृतं कृतं ।
ततोऽहं विपुलं कायं संक्षिप्य निमिषान्तरात् ॥५९॥

तस्या हृदयमादीर्य प्रस्थितोऽस्मि नभस्तलं ।
सा विसृज्य महानादं पपात लवणाम्भसि ॥ ६० ॥
महापर्वतसंकाशा निकृत्तहृदयानना ।
श्रुता मे खगतानां च वाचो व्योम्नि महात्मनां ॥ ६१ ॥
राक्षसी सिंहिका क्षुद्रा शीघ्रं हनुमता हता ।
तां हत्वा पुनरेवाहं कार्यमात्ययिकं स्मरन् ॥ ६२ ॥
अगच्छं विमले व्योम्नि वायुवेगं समास्थितः ।
गत्वा च महदध्वानं प्राप्तोऽस्मि नगमण्डितं ॥ ६३ ॥
दक्षिणं तीरमुदधेर्यत्र लङ्का महापुरी ।
अस्तं दिवाकरे याते रक्षसां निलयं पुरीं ॥ ६४ ॥
प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ।
तत्राहं सर्वरात्रे तु विचिन्वन् जनकात्मजां ॥ ६५ ॥
राक्षसान्तःपुरे गत्वा न पश्यामि सुमध्यमां ।
ततः सीतामपश्यंस्तु रावणस्य निवेशने ॥ ६६ ॥
शोकसागरमासाद्य न पारमुपलक्षये ।
शोभितं च मया दृष्टं प्राकारेण सुसंवृतं ॥ ६७ ॥
काञ्चनेन प्रकृष्टेन पुरोपवनमुत्तमं ।
तं प्राकारमनुप्राप्य पश्यामि बहुपादपां ॥ ६८ ॥
अशोकवनिकां दिव्यां महेन्द्रस्येव नन्दनं ।
अशोकवनिकामध्ये शिंशपापादपो महान् ॥ ६९ ॥

तमाद्रुतश्च पश्यामि काञ्चनं कदलीवनं ।
अदूराच्छिंशपावृक्षात् पश्यामि वरवर्णिनीं ॥ ७० ॥
गौरीं कमलपत्राक्षीमुपवासकृशामहं ।
राक्षसीभिर्विरूपाभिः क्रूरकर्माभिरावृतां ॥ ७१ ॥
मांसशोणितदिग्धाभिर्व्याघ्रीभिरिव सौरभीं ।
तां दृष्ट्वा तादृशीं नारीं शोकसंतापपीडितां ॥ ७२ ॥
तत्रैव शिंशपावृक्षे पक्षिवत् समुपस्थितः ।
ततो हलहलाशब्दं काञ्चीभूषणमिश्रितं ॥ ७३ ॥
अश्रौषमहमायान्तं रावणस्य निवेशनात् ।
ततोऽहं परमोद्विग्नः स्वं रूपं संक्षिपन् पुनः ॥ ७४ ॥
लीनश्च शिंशपावृक्षे विजिज्ञासुर्व्यवस्थितः ।
ततो रावणदाराश्च रावणश्च महाबलः ॥ ७५ ॥
तं देशं समनुप्राप्तो राक्षसीभिः सुरक्षितं ।
तच्च दृष्ट्वा वरारोहा सीता रक्षो महाबलं ॥ ७६ ॥
संक्षिप्य वासस्तस्थौ सा बाहुभ्यां परिरभ्य च ।
तामुवाच दशग्रीवः सीतां परमदुःखितां ॥ ७७ ॥
अवाक्शिराः प्रपतितो बहुमन्यस्व मामिति ।
यदिवा त्वं तु मां दर्पान्नाभिनन्दस्यपण्डिते ॥ ७८ ॥
द्वौ मासौ समतिक्रम्य पास्यामि रुधिरं तव ।
एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ॥ ७९ ॥

उवाच परमक्रुद्धा सीता सदृशमात्मनः ।
इक्ष्वाकुकुलनाथस्य धर्मपत्नी महात्मनः ॥ ८० ॥
अवाच्यं वदतो जिह्वा कथं न पतिता तव ।
किं च वीर्यं तवानार्य यस्त्वं भर्तुरसंनिधौ ॥ ८१ ॥
मामिहानीतवान् पाप तेनादृष्टो महात्मना ।
गर्हितं कर्म कृत्वा च पापकर्मा न लज्जसे ॥ ८२ ॥
यायजूकः सत्यसंधो रणश्लाघ्यश्च राघवः ।
न त्वं रामस्य दासोऽपि योग्यः किं बहु भाषसे ॥ ८३ ॥
संनिधौ कर्षमाणस्त्वं विराधगतिमाप्नुयाः ।
जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥ ८४ ॥
जज्वाल सहसा क्रोधाद्धुताश इव दीपितः ।
विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणं ॥ ८५ ॥
वैदेहीं हन्तुमारब्धः स्त्रीभिः स तु निवारितः ।
स्त्रीणां मध्यात् समुत्पत्य तस्य भार्या दुरात्मनः ॥ ८६ ॥
मन्दोदरी नाम शुभा तया स प्रतिवारितः ।
उक्तश्च मधुरं वाक्यं तया सानुनयं तदा ॥ ८७ ॥
सीतया तव किं कार्यं महेन्द्रसमविक्रम ।
तव गन्धर्वकन्याश्च यक्षराक्षसयोषितः ॥ ८८ ॥
ताभिः सह रमस्व त्वं सीतया किं तवानया ।
ततस्ताभिः समेताभिर्नारीभिः स महाबलः ॥ ८९ ॥

# सुन्दरकाण्डं

उत्थाप्य सहसा नीतो येनैवाभ्यागतः पथा ।
गते तस्मिन् दशग्रीवे राक्षस्यो विकृताननाः ॥ १० ॥
सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ।
तृणवद्भाषितं तासां तुलयामास जानकी ॥ ११ ॥
गर्जितं च वृथा तासां श्रुत्वा सीता न शोचते ।
वृथा गर्जन्ति निश्चेष्टा राक्षस्यो विकृताननाः ॥ १२ ॥
सीताया व्यवसायं तु रावणाय न्यवेदयन् ।
निहताशास्तु ताः सर्वा हतवेगाः सुदुःखिताः ॥ १३ ॥
परिवार्य तदा देवीं निद्रावशमुपागताः ।
तासु तासु च सुप्तासु सीता भर्तृहिते रता ॥ १४ ॥
विलप्य करुणं दीना तदाशोचत दुःखिता ।
तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशां ॥ १५ ॥
कथं संभाषयाम्येनामिति चिन्तापरोऽभवं ।
संभाषणार्थं च मया जानक्या निश्चितो विधिः ॥ १६ ॥
इक्ष्वाकुराजवंशस्तु स्तुतो रामपुरस्कृतः ।
श्रुत्वा च गदितां वाचं राजर्षिचरितां शुभां ॥ १७ ॥
प्रत्यभाषत मां सीता बाष्पापिहितलोचना ।
कस्त्वं कस्य कथं चेह प्राप्तो वानरपुङ्गव ॥ १८ ॥
कथं रामेण ते प्रीतिस्तन्मे वक्तुमिहार्हसि ।
एवमुक्तस्ततोऽहं तां प्रत्यवोचं कृताञ्जलिः ॥ १९ ॥

विस्तरेण शुभैर्वाक्यै रामसुग्रीवसंगमं ।
देवि रामस्य भर्तुस्ते सखा भीमपराक्रमः ॥ १०० ॥
सुग्रीव इति विख्यातो वानरेन्द्रो महाबलः ।
तस्य मां विद्धि सचिवं हनूमन्तमिहागतं ॥ १०१ ॥
भर्त्रा च प्रहितोऽहं ते रामेणाक्लिष्टकर्मणा ।
इदं च पुरुषव्याघ्र इक्ष्वाकुकुलनन्दनः ॥ १०२ ॥
अङ्गुरीयमभिज्ञानं दत्तवांस्तव मैथिलि ।
तदिच्छेयं त्वयाज्ञप्तं देवि किं करवाण्यहं ॥ १०३ ॥
रामस्य पादमूलं त्वां प्रापयामि यदीच्छसि ।
एतच्छ्रुत्वा च दृष्ट्वा च सीता जनकनन्दिनी ॥ १०४ ॥
आह रावणमुत्साद्य राघवो मां नयत्विति ।
प्रणम्य शिरसा देवीमहमार्यां यशस्विनीं ॥ १०५ ॥
राघवाह्लादनकरमभिज्ञानमयाचिषं ।
एवमुक्ता वरारोहा परमं मणिमुत्तमं ॥ १०६ ॥
प्रायच्छत् परमोद्विग्ना वाचा मां संदिदेश च ।
ततः प्रणम्य शिरसा वैदेहीं वै समाहितः ॥ १०७ ॥
प्रदक्षिणं परिक्रम्य इहाभ्युद्यतमानसः ।
उक्तोऽहमुत्तरं वाक्यमार्यया वाष्पगद्गदं ॥ १०८ ॥
हनूमन् मम वृत्तान्तमिममाख्यातुमर्हसि ।
यथा श्रुत्वा च न चिराद्उभौ तौ रामलक्ष्मणौ ॥ १०९ ॥

सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ।
यद्यन्यथा भवेत् कार्यं द्वौ मासौ मम जीवितं ॥ ११० ॥
न मां पश्यति काकुत्स्थो विनङ्क्ष्याम्यहं शोचती ।
तच्छ्रुत्वा करुणं वाक्यं शोको मामभ्यपूरयत् ॥ १११ ॥
उत्तरं तु मया दृष्टं कार्यशेषमनन्तरं ।
ततोऽवर्धत मे कायो महापर्वतसंनिभः ॥ ११२ ॥
युद्धाकाङ्क्षी वनं तच्च विनाशयितुमुद्यतः ।
तद्भग्नं वनषण्डं च भ्रान्तास्तत्र मृगा द्विजाः ॥ ११३ ॥
प्रतिबुद्धा निरीक्षन्त राक्षस्यो विकृताननाः ।
मां च दृष्ट्वा पराक्रान्तं समागम्य ततस्ततः ॥ ११४ ॥
तासामन्यतमाः क्षिप्रं रावणायाचचक्षिरे ।
राजंस्तव वनं सर्वं दिव्यं भग्नं दुरात्मना ॥ ११५ ॥
चैत्यः प्रासादमुख्यश्च कपिना विनिपातितः ।
दुर्बुद्धिस्तस्य नृपते तव विप्रियकारिणः ॥ ११६ ॥
बधमाज्ञापय क्षिप्रं यथा स विलयं व्रजेत् ।
तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशदुर्जयाः ॥ ११७ ॥
राक्षसाः किङ्करा नाम रावणस्य महौजसः ।
तेषामशीतिसाहस्राः शूलपट्टिशपाणिनां ॥ ११८ ॥
मया तस्मिन् वनोद्देशे परिघेन निसूदिताः ।
तेषां तु हतशिष्टा ये दशग्रीवाय राक्षसाः ॥ ११९ ॥

गत्वा निवेदयामासुर्हतं सैन्यं महारणे ।
तच्छ्रुत्वा राक्षसेन्द्रेण मन्त्रिपुत्रा महारथाः ॥ १२० ॥
पादातबलसंपन्नाः समीपं प्रेषिता मम ।
तमायसं महाघोरमादाय परिघं पुनः ॥ १२१ ॥
सर्वांस्तान् सपरीवारान् राक्षसान् हतवानहं ।
स तान् विनिहतान् श्रुत्वा दशग्रीवः प्रतापवान् ॥ १२२ ॥
प्रहस्तस्य सुतं वीरं जम्बुमालिनमादिशत् ।
तं महाबलसंपन्नं राक्षसं रणकोविदं ॥ १२३ ॥
परिघेनातिकायेन सहसैन्यमसूदयं ।
तं कुमारं हतं श्रुत्वा समरेऽतुलविक्रमं ॥ १२४ ॥
पञ्च सेनाग्रगान् शूरान् प्रेषयामास रावणः ।
तानहं सहसैन्यांस्तु सूदयित्वा महारथान् ॥ १२५ ॥
युद्धार्थी तं रणोद्देशं रक्षामि रणगर्वितः ।
ततः पुनर्दशग्रीवः पुत्रमक्षं महारथं ॥ १२६ ॥
प्रेषयामास बहुभी राक्षसैरपरैर्वृतं ।
तस्याप्यहं बलं सर्वं तं च राक्षसपुङ्गवं ॥ १२७ ॥
सूदयित्वा रणे हृष्टो युद्धमेव व्यरोचयं ।
ततो राजा दशग्रीवः शूरमिन्द्रजितं सुतं ॥ १२८ ॥
प्रेषयामास रक्षोभिर्बहुभिः सुमहाबलं ।
दृष्ट्वाहं तमवष्टब्धं परं हर्षमुपागमं ॥ १२९ ॥

महता हि महाबाहुः प्रत्ययेन महाबलं ।
प्रेषयामास बहुभिः सह वीरैर्बलोत्कटैः ॥१३०॥
तस्याहं रोषसंविग्न उच्चैः सैन्यमसूदयं ।
ब्रह्मणोऽस्त्रेण मां सोऽपि बबन्धाथ सुदुर्मतिः ॥१३१॥
अबध्यं स च मां ज्ञात्वा बद्धवान् रज्जुभिः पुनः ।
रावणस्य समीपं च मामादायानयद्बलात् ॥१३२॥
दृष्ट्वा पृष्टस्तदाहं तु रावणेन दुरात्मना ।
रामदूतोऽहमस्मीति तस्य चावेदितं मया ॥१३३॥
तेन बध्योऽयमाज्ञप्तो रावणेन दुरात्मना ।
रावणस्य परिज्ञाय पापस्य बधनिश्चयं ॥१३४॥
विभीषणो नाम ततस्तस्य भ्राता महामतिः ।
तेन राक्षसराजः स याचितो मम कारणात् ॥१३५॥
दूतबध्या न विहिता राजन्निति च सोऽब्रवीत् ।
विरूपकरणं चास्य ताडनं च निशाचर ॥१३६॥
ततः स रावणः क्रुद्धो राक्षसांस्तान् महाबलान् ।
अब्रवीदस्य लाङ्गूलं क्षिप्रमादीप्यतामिति ॥१३७॥
ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः ।
अवेष्टयन् शणवल्कैः पटैः कार्पासिकैस्तथा ॥१३८॥
आदीपयंश्च मे पुच्छं स्नेहाक्तं दुष्टचेतसः ।
घोषमाणास्ततस्तेऽथ नगरद्वारमागताः ॥१३९॥

ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ।
बन्धान् सर्वान् समुत्क्षिप्य प्रकृतिस्थः पुनः स्थितः ॥१४०॥
आदाय परिघं चापि नगरद्वार्यवस्थितः ।
राक्षसांस्तान् समुत्पत्य सूदयामि समन्ततः ॥ १४१ ॥
लाङ्गूलेन प्रदीप्तेन तां पुरीं साट्टतोरणां ।
दग्धवानस्म्यसंभ्रान्तो युगान्ताग्निरिव प्रजाः ॥ १४२ ॥
दग्ध्वा लङ्कां पुनश्चैव शङ्का मामभ्यवर्तत ।
दग्धा सीता न संदेहो दुष्कृतं खलु मे कृतं ॥ १४३ ॥
खगतानामथो वाक्यं चारणानां मया श्रुतं ।
सर्वा च नगरी दग्धा सीता च परिरक्षिता ॥ १४४ ॥
एतद्रामप्रभावेन वैदेह्याश्च तपोबलात् ।
सुग्रीवस्य प्रियार्थं च मया सर्वमनुष्ठितं ॥ १४५ ॥
एतत् सर्वं मया तत्त्वं यथावदुपवर्णितं ।
यदत्रानन्तरं कार्यं तत् सर्वं क्रियतामिति ॥ १४६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्वाक्यं नाम
षट्पञ्चाशः सर्गः ॥

# सुन्दरकाण्डं

## LVII.

एवमाख्याय तत् सर्वं हनूमान् मारुतात्मजः ।
भूयः समुपचक्राम वचनं वक्तुमुत्तमं ॥ १ ॥
सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः ।
शीलमासाद्य सीताया मम च प्लवनं महत् ॥ २ ॥
आर्याया यादृशं कर्म सीतायाः प्लवगर्षभाः ।
तपसा धारयेल्लोकान् क्रुद्धा सा निर्दहेदपि ॥ ३ ॥
सर्वथातिप्रभावोऽसौ रावणो राक्षसाधिपः ।
यस्य तां स्पृशतः साध्वीं न गात्रं शतधा गतं ॥ ४ ॥
न तथाग्निशिखा कुर्यात् संस्पृष्टा पाणिना सती ।
जनकस्य सुता कुर्याद्यत् क्रोधकलुषीकृता ॥ ५ ॥
अशोकवनिकामध्ये रावणस्य दुरात्मनः ।
अधस्ताच्छिंशपायां तु अध्यास्तेऽतीवदुःखिता ॥ ६ ॥
राक्षसीभिः परिवृता शोकसंतापपीडिता ।
पतिव्रतानां सुश्रोणी सा च पूर्वा नृपात्मजा ॥ ७ ॥
अनुरक्ता हि वैदेही रामं सर्वात्मनाश्रिता ।
अनन्यचित्ता सा रामे पौलोमीव पुरन्दरे ॥ ८ ॥
सा ह्येकवासःसंवीता रजोधस्ता तथैव च ।
शोकसंतापदीनाङ्गी सीता भर्तृहिते रता ॥ ९ ॥

सा मया राक्षसीमध्ये तर्ज्यमाना पुनः पुनः ।
राक्षसीभिर्विरूपाभिः संवृता प्रमदावने ॥१०॥
एकवेणीधरा दीना भर्तृचिन्तापरायणा ।
भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥११॥
रावणाद्विनिवृत्तात्मा मर्तव्ये कृतनिश्चया ।
कथञ्चिन्मृगशावाक्षी विश्वासमुपपादिता ॥१२॥
कृतं संभाषणं चैव तत्त्वमर्थं च दर्शिता ।
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिरताभवत् ॥१३॥
नियमं समुदाचारं भक्तिं भर्तरि चोत्तमां ।
या धारयति शोकेषु महात्मेत्यभिधीयते ॥१४॥
एवमास्ते महाभागा सीता शोकपरायणा ।
यदत्र प्रतिपत्तव्यं तत् सर्वं संविधीयतां ॥१५॥

इत्यार्षे रामायणे सुन्दरकाण्डे सीताप्रशंसा नाम
सप्तपञ्चाशः सर्गः ॥

# सुन्दरकाण्डं

## LVIII.

तस्य तद्वचनं श्रुत्वा बालिसूनुरभाषत ।
जाम्बवत्प्रमुखान् सर्वान् हनूमन्तं च वानरं ॥१॥
अस्मिन्नेवं गते कार्ये भवतां च निवेदिते ।
कोऽन्यो योऽस्मासु वैदेहीं तां पश्येत् पार्थिवात्मजां ॥२॥
अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीं ।
तां लङ्कां तरसा हन्तुं रावणं च निशाचरं ॥३॥
किं पुनः सहितैः सर्वैर्बलवद्भिः कृतात्मभिः ।
कृतास्त्रैः प्लवने शक्तैर्भवद्भिर्विजयैषिभिः ॥४॥
अहं तु रावणं युद्धे ससैन्यं सपुरःसरं ।
सहपुत्रं हनिष्यामि ससुहृद्बान्धवं युधि ॥५॥
ब्रह्मास्त्रं च तथा दिव्यं वायव्यं वारुणं तथा ।
यानि शत्रुजितः सन्ति दुर्निवाराणि संयुगे ॥६॥
तान्यहं विधमिष्यामि हनिष्यामि च रावणं ।
भवतामननुज्ञातं रुणद्धि मम विक्रमं । ॥७॥
मद्बाहुबलसृष्टा हि शरवृष्टिर्निरन्तरा ।
देवानपि रणे हन्यात् किं पुनस्तान् निशाचरान् ॥८॥
अतीयात् सागरो वेलां चलेदपि च मन्दरः ।
न जाम्बवन्तं समरे कम्पयेच्छत्रुवाहिनी ॥९॥

सर्वराक्षससंघातं राक्षसा ये च पूर्वजाः ।
अयमेको निहन्ता हि जाम्बवान् कपिसत्तमः ॥१०॥
पनसस्योरुवेगेन नलस्य च महात्मनः ।
पर्वता अपि दीर्येयुः किं पुनर्युधि राक्षसाः ॥११॥
न देवासुरयक्षेषु पन्नगेषूरगेषु च ।
मैन्दस्य प्रतियोद्धारं मन्येऽहं द्विविदस्य च ॥१२॥
अश्विपुत्रौ महाभागावेतौ हि प्लवगोत्तमौ ।
पितामहवरोत्सेकात् परं दर्पमवस्थितौ ॥१३॥
अश्विनोर्माननार्थं हि सर्वलोकपितामहः ।
सर्वाबध्यत्वमतुलं वीराभ्यामददत् तदा ॥१४॥
तेनोत्सेकेन च तदा प्रधृष्य महतीं चमूं ।
सुराणाममृतं वीरौ पीतवन्तौ प्लवङ्गमौ ॥१५॥
तदेतावतिसंक्रुद्धौ सवाजिरथकुञ्जरां ।
लङ्कां राक्षससंपूर्णां दुर्धर्षां सूदयिष्यतः ॥१६॥
जनकस्य सुतां जित्वा देवीमसितलोचनां ।
युक्तं समीपगमनं राघवस्य महात्मनः ॥१७॥
दृष्टा सीता न चानीता इति तत्र निवेदिते ।
वीर्यविक्रमशौर्याणां घोषणं गर्हितं भवेत् ॥१८॥
अथवा विक्रमे बुद्धिर्युक्ता दिव्येन कर्मणा ।
सागरप्लवने योग्यो न च कश्चित् पराक्रमे ॥१९॥

तुल्यः सामरदैत्येषु लोकेषु हरिपुङ्गवाः ।
जित्वा लङ्कां सरक्षौघां हत्वा तं रावणं रणे ॥२०॥
प्रसह्य सीतामानीय कृतार्था हृष्टमानसाः ।
रामलक्ष्मणयोर्मध्ये नेष्यामो जनकात्मजां ।
किं परिक्लिश्य वः सर्वान् वानरान् वानरर्षभाः ॥२१॥

इत्यार्षे रामायणे सुन्दरकाण्डे अङ्गदवाक्यं नाम
अष्टपञ्चाशः सर्गः ॥

## LIX.

अङ्गदस्य वचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत् ।
नैषा बुद्धिर्महाबाहो यद्ब्रवीषि महामते ॥ १ ॥
विचिनुध्वमिति प्रोक्तं दक्षिणां दिशमुत्तमां ।
न जेतुं कपिराजेन नापि रामेण धीमता ॥ २ ॥
कथं विनिर्जितां सीतामस्माभिः सोऽभिरोचयेत् ।
राघवो नृपशार्दूलः कुलं व्यपदिशन् महत् ॥ ३ ॥
प्रतिज्ञाय स्वयं राजा सीताविजयमग्रतः ।
सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति ॥ ४ ॥
विपुले कर्मणि कृते भवेत् तुष्टिर्न तस्य च ।
वृथा च दर्शितं वीर्यं भवेद्वानरसत्तमाः ॥ ५ ॥
तस्माद्गच्छामहे तत्र यत्र रामः सलक्ष्मणः ।
सुग्रीवश्च महाबाहुः कार्यमेतन्निवेद्यतां ॥ ६ ॥
वाढमित्येव चोक्त्वा ते प्रस्थानं समरोचयन् ।
महेन्द्राग्रात् समुत्पत्य पुप्लुवुश्च समन्ततः ॥ ७ ॥
छादयन्त इवाकाशं महाकाया महाबलाः ।
अग्रे कृत्वा हनूमन्तं सर्वे वानरपुङ्गवाः ॥ ८ ॥
सभाज्यमानं भूतैस्तु हनूमन्तं महाबलं ।
कपिश्रेष्ठं महाभागं पिबन्त इव दृष्टिभिः ॥ ९ ॥

# सुन्दरकाण्डं

रामस्य चार्थनिर्वृत्तिं भर्तुश्च परमं यशः ।
समाधाय समृद्धार्थाः कार्यसिद्धिभिरुन्नताः ॥ १० ॥
प्रियाख्यानोत्सुकाः सर्वे सर्वे युद्धाभिनन्दिनः ।
सर्वे रामप्रीतिकारे निश्चितार्था मनस्विनः ॥ ११ ॥
प्लवमानाः खमावृत्य ततस्ते काननौकसः ।
नन्दनोपममासेदुर्वनं द्रुमलतावृतं ॥ १२ ॥
यत् तन्मधुवनं नाम सुग्रीवस्य सुसंचितं ।
अधृष्यं सर्वभूतानां सर्वभूतमनोहरं ॥ १३ ॥
यद्रक्षति महाबाहुः सदा दधिमुखः कपिः ।
मातुलः कपिराजस्य सुग्रीवस्य महात्मनः ॥ १४ ॥
ते तद्वनमुपागम्य दृष्ट्वा प्रीतिमुपागताः ।
वानरा वानरेशस्य मनःकान्तं मनोहरं ॥ १५ ॥
ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् ।
हनूमन्तमयाचन्त जाम्बवत्प्रमुखास्तदा ॥ १६ ॥
सोऽप्यङ्गदमुपागम्य हनूमानिदमब्रवीत् ।
सिद्धार्थानां त्वमस्माकं प्रसादं कर्तुमर्हसि ॥ १७ ॥
अङ्गदस्तु हनूमन्तं प्रशंस्य शुभया गिरा ।
किमिच्छसि वदस्वेति प्रीतिवाक्यमुवाच ह ॥ १८ ॥
अङ्गदस्य वचः श्रुत्वा हनूमान् मारुतात्मजः ।
ज्ञातिभिः सहितो हर्षादिदं वचनमब्रवीत् ॥ १९ ॥

क्षौद्रस्य यत् ते पितुरप्रधृष्यं
वनं बभूवाप्रतिमं सुगुप्तं ।
तद्देहि दायं हरिपुङ्गवानां
सुदुर्लभं नो हरिराजपुत्र ॥ २० ॥

इत्यार्षे रामायणे सुन्दरकाण्डे मधुवनागमनं
नाम नवपञ्चाशः सर्गः ॥

# सुन्दरकाण्डं

## LX.

श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽङ्गदः ।
प्रत्युवाच हनूमन्तं पिबन्तु हरयो मधु ॥ १ ॥
अवश्यं कृतकार्यस्य कार्यं हनूमतो वचः ।
अकर्तव्यमपि प्राज्ञ किमिदं पुनरीदृशं ॥ २ ॥
एतच्छ्रुत्वा तु वचनमङ्गदस्य मुखाच्च्युतं ।
साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ॥ ३ ॥
तेऽङ्गदेनाभ्यनुज्ञाताः प्रहृष्टाः सर्ववानराः ।
पूजयित्वाङ्गदं सर्वे यूथपा यूथपर्षभं ॥ ४ ॥
जग्मुर्मधुवनं सर्वे पानाय सगणास्तदा ।
अतिहर्षाच्च बहवो दृष्ट्वा श्रुत्वा च मैथिलीं ॥ ५ ॥
उत्पत्य च यथावृन्दं तद्वनं हरियूथपाः ।
अभिसृष्टाः कुमारेण बालिपुत्रेण धीमता ॥ ६ ॥
हरयः प्रत्यपद्यन्त द्रुमान् मधुरसाकुलान् ।
लोडयित्वा तु बहुशः सर्वं मधुवनं तदा ॥ ७ ॥
मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते ।
शातयन्ति स्म संहृष्टा भक्षयन्ति पिबन्ति च ॥ ८ ॥
भक्षयन्तः सुगन्धीनि मधूनि रसवन्ति च ।
जग्मुः प्रहर्षं ते सर्वे बभूवुश्च मदोत्कटाः ॥ ९ ॥

पीत्वा केचिदबध्नन्त मधुपालान् बलीमुखाः ।
अपरे मधुशिष्टेन जघ्नुरन्योन्यमुत्कटाः ॥१०॥
अपरे वृक्षमूलेषु व्यचेष्टन्त प्लवङ्गमाः ।
अत्यर्थमाशिताः क्लान्ताः पर्णान्यास्तीर्य शेरते ॥११॥
उन्मत्तभूताः प्लवगा मधुपानप्रहर्षिताः ।
क्षीवाः कुर्वन्ति हास्यं च कलहांश्च तथापरे ॥१२॥
केचित् तालानकुर्वन्त ननृतुश्च प्रहृष्टवत् ।
हरयो मधुना मत्ताः केचित् सुप्ता महीतले ॥१३॥
उद्धृत्य च तथा वृक्षांस्तद्वनं हरियूथपाः ।
अतृप्तवत् पिबन्त्यन्ये मधूनि मधुपिङ्गलाः ॥१४॥

गायन्ति केचित् प्रवदन्ति केचिन्
नृत्यन्ति केचित् प्रहसन्ति केचित् ।
पिबन्ति केचिद्विनदन्ति केचित्
स्वपन्ति केचित् कथयन्ति केचित् ॥१५॥
परस्परं केचिदपाश्रयन्ते
क्षीवा द्रुमाग्रात् प्रपतन्ति केचित् ।
महीतलात् केचिदुदीर्णवेगाः
पुनर्द्रुमाग्रानभिसंपतन्ति ॥१६॥
प्रतीपमन्यः प्रहसन्नुपैति
प्रसुप्तमन्यः प्रपतन्नुपैति ।

प्रयान्तमन्यः सहसाभ्युपैति
रुदन्तमन्यः प्ररुदन्नुपैति ॥१७॥
समाकुलं तत् कपिसैन्यमासीन्
मधुप्रपानोत्कटसत्त्वचेष्टं ।
न तत्र कश्चिन्न बभूव मत्तो
न चापि कश्चिन्न बभूव तृप्तः ॥१८॥
ततो वनं तत् परिभक्ष्यमाणं
द्रुमांश्च विध्वंसितपुष्पपत्रान् ।
समीक्ष्य तद्धि दधिवक्त्रनामा
निवारयामास कपिः कपींस्तान् ॥१९॥
स तैः प्रमत्तैः परिभर्त्स्यमानो
वनस्य गोप्ता हरिवीरवृद्धः ।
चकार भूयो मतिमुग्रतेजा
वनस्य रक्षां प्रति वानरेषु ॥२०॥

इत्यार्षे रामायणे सुन्दरकाण्डे मधुवनविध्वंसनं नाम
षष्टितमः सर्गः ॥

## LXI.

मधु पीत्वा तु ते नादान् व्यसृजन्त बलीमुखाः ।
उपविष्टास्तथा चान्ये जग्मुरन्ये मदोत्कटाः ॥ १ ॥
अपरे वृक्षशाखासु व्यलम्बन्त बलीमुखाः ।
क्षिपन्ति स्म तथान्योन्यं खेलन्ति स्म परस्परं ॥ २ ॥
तत्र ये मधुपालाश्च स्थिता दधिमुखाज्ञया ।
नाचिन्तयन् तदा सर्वान् वार्यमाणाः प्लवङ्गमाः ॥ ३ ॥
ते विकृष्टाश्च बाहुभ्यां देवमार्गं च दर्शिताः ।
ताड्यमाना दिशः सर्वा जग्मुर्भीताः प्लवङ्गमाः ॥ ४ ॥
अब्रुवंश्च परित्रस्ता गत्वा दधिमुखं तदा ।
हनूमदङ्गदाद्यैस्तैर्हृतं मधुवनं कपे ॥ ५ ॥
यदत्रानन्तरं कार्यं तद्भवान् कर्तुमर्हति ।
वयं विकृष्टा जानुभ्यां देवमार्गं च दर्शिताः ॥ ६ ॥
ततो दधिमुखः क्रुद्धो वनपालाधिपस्तदा ।
हृतं मधुवनं श्रुत्वा स तांश्चाश्वासयत् कपीन् ॥ ७ ॥
एतागच्छत गच्छामो वानरानतिदर्पितान् ।
बलेन वारयिष्यामो भक्षमाणान् मधूत्तमं ॥ ८ ॥
श्रुत्वा दधिमुखस्यैतद्वचनं वानरर्षभाः ।
पुनर्मधुवनं वीरास्तेनैव सहिता ययुः ॥ ९ ॥

मध्ये तेषां दधिमुखो गृहीत्वा पादपोत्तमं ।
समभ्यधावद्वेगेन सह तैः प्लवगोत्तमैः ॥१०॥
ते लताः पादपांश्चैव पाषाणानपि वानराः ।
गृहीत्वाभ्यद्रवन् क्रुद्धा यत्र ते हरिपुङ्गवाः ॥११॥
ते स्वामिवचनं वीरा हृदयेष्ववसज्य वै ।
हरींस्तानभ्यधावन्त सालतालशिलायुधाः ॥१२॥
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुङ्गवाः ।
अभ्यधावन्त संक्रुद्धा हनूमत्प्रमुखास्तदा ॥१३॥
तं सवृक्षं महाबाहुमापतन्तं महाबलः ।
वेगवन्तं निजग्राह भुजाभ्यां कुपितोऽङ्गदः ॥१४॥
मदान्धोऽपि कृपां चक्रे आर्यकोऽयमिति स्मरन् ।
अथैनं निष्पिपेषाशु वेगवान् धरणीतले ॥१५॥
स भग्नबाहूरुमुखो विह्वलः शोणितोक्षितः ।
संमुमोह महावीर्यो मुहूर्त्तं कपिकुञ्जरः ॥१६॥
स समाश्वास्य बलवान् संक्रुद्धो राजमातुलः ।
वानरान् वारयामास हठेन मधुरेण च ॥१७॥
उवाच कांश्चिन्मधुराणि वाचा
संयुक्तमन्यांश्च तलैर्जघान ।
समेत्य कांश्चित् कलहांश्चकार
न चैव तत्रोपजगाम कांश्चित् ॥१८॥

स तैर्मदादप्रतिवार्यवेगैर्
बलाच्च तेनोपनिवार्यमाणैः ।
प्रहर्षितैस्त्यक्तभयैः समेत्य
प्रकृष्यताकृष्यत चानपेक्षैः ॥ १९ ॥

नखैर्लिखन्तो दशनैर्दशन्तस्
तलैश्च पादैश्च हि ताडयन्तः ।
महाकपिं ते कपयः समेता
महाबलं निर्विषयं प्रचक्रुः ॥ २० ॥

इत्यार्षे रामायणे सुन्दरकाण्डे दधिमुखनिवारणं
नाम एकषष्टितमः सर्गः ॥

# सुन्दरकाण्डं

## LXII.

स कथञ्चिद्विमुक्तस्तैर्वानरैर्वानरर्षभः ।
उवाचैकान्तमासाद्य भृत्यांस्तान् समुपागतान् ॥ १ ॥
समागच्छत गच्छामो भर्ता नो यत्र वानराः ।
सुग्रीवो विपुलग्रीवो रामेण सह धीमता ॥ २ ॥
इमं सर्वेऽङ्गदे दोषं श्रावयामोऽद्य वानराः ।
अमर्षी न हि नः श्रुत्वा धर्षणं मर्षयिष्यति ॥ ३ ॥
इष्टं मधुवनं ह्येतत् सुग्रीवस्य महात्मनः ।
पितृपैतामहं दिव्यं देवैरपि ह्यधर्षितं ॥ ४ ॥
स वानरानिमान् सर्वान् मधुलुब्धान् गतायुषः ।
घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ ५ ॥
बध्या ह्येते दुरात्मानो नृपाज्ञापरिघातिनः ।
धर्षणामर्षितो राजा सर्वान् वै घातयिष्यति ॥ ६ ॥
एवमुक्त्वा दधिमुखो वनपालो महाबलः ।
वानरैः सह तैः सर्वैर्जगाम हरियूथपः ॥ ७ ॥
निमेषान्तरमात्रेण स च प्राप्तो वने चरः ।
यत्रास्ते सह रामेण सुग्रीवः सहलक्ष्मणः ॥ ८ ॥
राघवं लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च ।
सर्वप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ९ ॥

संनिपत्य महाबाहुः सर्वैस्तैः परिवारितः ।
हरिर्दधिमुखः पालैर्वनपालाधिपस्तदा ॥१०॥
स दीनवदनस्तत्र कृत्वा शिरसि चाञ्जलिं ।
सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥११॥

इत्यार्षे रामायणे सुन्दरकाण्डे दधिमुखवाक्यं नाम
द्विषष्टितमः सर्गः ॥

# सुन्दरकाण्डं

## LXIII.

ततो मूर्ध्ना निपतितं वानरं स हरीश्वरः ।
दृष्ट्वैवोद्विग्नहृदयं वाक्यमेतदुवाच ह ॥ १ ॥
उत्तिष्ठोत्तिष्ठ कस्मात् त्वं पादयोः पतितो मम ।
अभयं ददामि ते वीर तत्त्वमेवाभिधीयतां ॥ २ ॥
किं संभ्रमाद्विवक्तुस्त्वं ब्रूहि यन्मनसेच्छसि ।
कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥ ३ ॥
स तु प्रश्वासितस्तेन सुग्रीवेण महात्मना ।
उत्थायेदं महाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ४ ॥
यन्नर्क्षपतिना तात न त्वया नापि बालिना ।
वनं प्रधृष्टपूर्वं हि वानरैस्तद्विनाशितं ॥ ५ ॥
अङ्गदः सहितैः सर्वैर्हनुमत्प्रमुखैः कपिः ।
दृष्ट्वा मधून्यपास्यैव सर्वानस्मानभक्षयत् ॥ ६ ॥
मया चैतैः समेतेन वानरैर्वानराधिप ।
प्रतिषिद्धा अनादृत्य भक्षयन्ति स्म वानराः ॥ ७ ॥
अहं तु संरब्धतरस्तथा तैर्नाशिते वने ।
वारयामि स्म बाहुभ्यां सह तैर्वनगोचरैः ॥ ८ ॥
ततस्तैर्बहुभिर्भीमैर्वानरैरङ्गदेन च ।
संरक्तनयनैः क्रोधादहमुत्पत्य ताडितः ॥ ९ ॥

दन्तैः खादन्ति केचिच्च भर्त्सयन्ति स्म चापरे ।
अस्फुरन्नपरे रोषाद्दूर्तैश्चाप्यतर्जयन् ॥१०॥
जानुभ्यां निहताः केचित् केचिन्मुष्टिभिराहताः ।
प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥११॥
इत्येवमतिसंक्रुद्धाः संप्रहारमकुर्वत ।
ते सर्वे परमक्रुद्धा वनपालाश्च मामकाः ॥१२॥
एवमेते हताः शूरैस्त्वयि तिष्ठति भर्तरि ।
कृत्स्नं मधुवनं चैव प्रकामं तव भक्षितं ॥१३॥
एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभं ।
अपृच्छत महाप्राज्ञो लक्ष्मणः परवीरहा ॥१४॥
किमयं वानरो राजन् वनपालः समागतः ।
किं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥१५॥
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥१६॥
अङ्गदप्रमुखैर्वीरैर्हृतं मधुवनं मम ।
विचित्य दक्षिणामाशामागतैर्हरियूथपैः ॥१७॥
आगत्यैव प्रविष्टस्तु तथा मधुवनं महत् ।
अङ्गदो वानरैः सर्वैर्हनुमत्प्रमुखैर्वृतः ॥१८॥
नाशितं च वनं सर्वमुपभुक्तं च वानरैः ।
वार्यमाणैश्च संकृष्टाः पाला जानुभिराहताः ॥१९॥

एतत् सर्वमयं वक्तुं प्राप्तो मधुवनप्रभुः ।
दधिपूर्वमुखो नाम्ना हरिः प्रख्यातविक्रमः ॥ २० ॥
अनादृत्य प्रविष्टस्तु यथा मधुवनं मम ।
अङ्गदो वानरैः सर्वैर्हनुमत्प्रमुखैः सह ॥ २१ ॥
दृष्टा मन्ये तथा देवी सुमित्रानन्दिवर्धन ।
अभिगम्य यदेते स्म पिबन्ति हरयो मधु ॥ २२ ॥
अदृष्ट्वा न हि ते सीतां वानराः पुरुषर्षभ ।
ध्वंसयेयुर्मधुवनं व्यक्तं दृष्टा भविष्यति ॥ २३ ॥
ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः ।
श्रुत्वैतद्वचनं सौम्यं सुग्रीववदनच्युतं ॥ २४ ॥
प्रहृष्टस्य तु रामस्य लक्ष्मणस्य च धीमतः ।
इदं दधिमुखं वाक्यं सुग्रीवो मुदितोऽब्रवीत् ॥ २५ ॥
प्रीतोऽस्मि मा भून्मन्युस्ते कृतकर्मा स वानरः ।
मर्षणीयं च मे तस्य चेष्टितं कृतकर्मणः ॥ २६ ॥
गच्छ शीघ्रं मधुवनं संरक्ष त्वं यथोचितं ।
तांश्च प्रेषय सर्वांस्त्वं हनूमत्प्रमुखान् कपीन् ॥ २७ ॥
इच्छामि शीघ्रं हनुमत्प्रधानान् शाखामृगांस्तान् मृगराजदर्पान् ।
द्रष्टुं कृतार्थान् सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रवृत्तिं ॥ २८ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे दधिमुखनिवेदनं नाम
त्रिषष्टितमः सर्गः ॥

# रामायणं

## LXIV.

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखो हरिः ।
उक्त्वा धन्योऽहमस्मीति चरणावभ्यवादयत् ॥ १ ॥
स प्रणम्य तु सुग्रीवं राघवं लक्ष्मणं तथा ।
वानरैः सहितैः सर्वैर्दिवमेवोत्पपात ह ॥ २ ॥
यथैव चागतः श्रीमान् त्वरितं स ययौ तथा ।
निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥
प्रविश्य तन्मधुवनं ददर्श हरियूथपान् ।
विमदानुत्थितान् सर्वान् वेपमानान् मदात्यये ॥ ४ ॥
स तानुपचरन् वीरो बद्ध्वा करपुटाञ्जलिं ।
उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदं ॥ ५ ॥
सौम्य रोषो न कर्तव्यो यदेभिरसि वारितः ।
अज्ञानाद्यदिवा ज्ञानान्न कश्चिन्नापराध्यति ॥ ६ ॥
युवराजस्त्वमीशश्च वनस्यास्य महाबल ।
मूर्खैरेभिर्यदुक्तस्त्वं तत्र बद्धो मयाञ्जलिः ॥ ७ ॥
श्रान्तस्य दूरात् प्राप्तस्य स्वकं भक्षयतो मधु ।
यो मौर्ख्यादपकारी ते तत्राहं त्वां प्रसादये ॥ ८ ॥
यथैव तु पिता ते स पूर्वं कपिगणेश्वरः ।
तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम ॥ ९ ॥

आख्यातं च मया गत्वा पितृव्यस्य तव प्रभो ।
इहोपयानं युष्माकं सर्वेषां हरिपुङ्गव ॥१०॥
त्वां तु प्राप्तमिह श्रुत्वा सहैभिर्हरियूथपैः ।
संहृष्टो न च संक्रुद्धो वनं श्रुत्वा प्रधर्षितं ॥११॥
मां चाब्रवीत् पितृव्यस्ते सुग्रीवो वानरेश्वरः ।
शीघ्रं प्रेषय तान् सर्वानिति च्छन्देन गम्यतां ॥१२॥
श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः ।
अब्रवीत् तान् हरिवरान् सर्वानेव प्रहर्षयन् ॥१३॥
शङ्के श्रुतोऽयं वृत्तान्तो राज्ञा वानरपुङ्गवाः ।
अयं हि हर्षादाख्याति तेन जानीम हेतुना ॥१४॥
पीतं मधु यथाकामं सर्वैरस्माभिरुत्कटैः ।
तत् क्षमं गमनं तत्र सुग्रीवो यत्र वानरः ॥१५॥
सर्वे यथा मां रक्षन्ति भवन्तो हरियूथपाः ।
तथा प्रतिविधातव्यं भवत्सु परवानहं ॥१६॥
आज्ञापयितुमीशोऽहं युवराजो हि यद्यपि ।
युक्तं च कृतकर्माणो यूयं समनुवर्तितुं ॥१७॥
ब्रुवाणस्याङ्गदस्यैवं श्रुत्वा वचनमुत्तमं ।
प्रहृष्टमनसः सर्वे व्याजह्रुस्ते महाबलाः ॥१८॥
क एवं वक्ष्यते वाक्यं प्रभुः सन् वानरर्षभ ।
ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥१९॥

तवेदं सदृशं वाक्यं भुवि नान्यस्य कस्यचित् ।
संनतिर्हि तवाख्याति भविष्यच्छुभमङ्गद ॥ २० ॥
सर्वे वयमपि प्राप्ताः तत्र गन्तुं कृतत्वराः ।
स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ २१ ॥
त्वया ह्यनुक्ते हरिभिर्नैव युक्तं कथञ्चन ।
व्याहर्तुं हरिशार्दूल तत्त्वमेतन्निबोध नः ॥ २२ ॥
एवं तु ब्रुवतां तेषामङ्गदः समहृष्यत ।
वाढं गच्छामि चेत्युक्त्वा खमुत्पतति वानरः ॥ २३ ॥
उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः ।
कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्तोपला इव ॥ २४ ॥
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः ।
व्यनदन् सुमहानादं मेघा वातेरिता इव ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे मधुवनाद्वानरप्रयाणं
नाम चतुःषष्टितमः सर्गः ॥

# सुन्दरकाण्डं

## LXV.

तेषामागमनं श्रुत्वा सुग्रीवो वानरेश्वरः ।
उवाच शोकाभिहतं रामं कमललोचनं ॥ १ ॥
समाश्वसिहि भद्रं ते दृष्टा सीता न संशयः ।
आगन्तुमिह तैः शक्यमतीते समये न हि ॥ २ ॥
न मत्सकाशमागच्छेन्मत्कृत्ये विनिपातिते ।
युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥ ३ ॥
यदि ह्यकृतकार्योऽसौ मत्सकाशमुपक्रमेत् ।
स भवेद्दीनवदनः भ्रान्तो विप्लुतमानसः ॥ ४ ॥
पितृपैतामहं चैव पूर्वकैरभिरक्षितं ।
न मे मधुवनं हन्याददृष्ट्वा कपिकुञ्जरः ॥ ५ ॥
कौशल्यासुप्रजा राम समाश्वसिहि मा शुच ।
दृष्टा सीता न संदेहो न चान्येन हनूमतः ॥ ६ ॥
नान्योऽस्य कर्मणो हेतुः साधने तद्विधो भवेत् ।
तथा हि दर्पितोदग्राः साङ्गदाः काननौकसः ॥ ७ ॥
नैषामकृतकार्याणामीदृशः स्यादुपक्रमः ।
वनभङ्गेन जानामि मधूनां भक्षणेन च ॥ ८ ॥
दृष्टा ह्येते हि हरयो जानकीं ध्रुवमेव च ।
हनुमति हि सिद्धिश्च मतिश्च रघुनन्दन ॥ ९ ॥

व्यवसायश्च शौर्यं च सूर्यतेज इव ध्रुवं ।
जाम्बवान् यत्र नेताभूदङ्गदश्च बलेश्वरः ॥ १० ॥
हनूमानप्यधिष्ठाता न तत्र गतिरन्यथा ।
नैवं चिन्तयितुं युक्तं संप्रत्यमितविक्रम ॥ ११ ॥
सर्वथा खलु वैदेही लक्षिता नात्र संशयः ।
अतः किलकिलाशब्दं शुश्राव स तदाम्बरे ॥ १२ ॥
हनूमत्कर्महृष्टानां नदतां काननौकसां ।
किष्किन्ध्यामुपयातानां सिद्धिं कथयतामिव ॥ १३ ॥
ततः श्रुत्वा कपीनां तं निनदं कपिसत्तमः ।
आयताश्चितलाङ्गूलः सोऽभवद्धृष्टमानसः ॥ १४ ॥
आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः ।
अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरं ॥ १५ ॥
तेऽङ्गदप्रमुखाः सर्वे संप्रहृष्टमुखास्तदा ।
निपेतुर्हरिराजस्य पादयो राघवस्य च ॥ १६ ॥
हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः ।
अभ्यवादयत प्रह्वो रामं कमललोचनं ॥ १७ ॥
निश्चितार्थस्ततस्तस्मिन् सुग्रीवः पवनात्मजे ।
लक्ष्मणश्च परं हृष्टो हनूमन्तमवैक्षत ॥ १८ ॥
प्रीत्या परमया युक्तो रामश्च परवीरहा ।
बहुमानेन महता हनूमन्तमवैक्षत ॥ १९ ॥

# सुन्दरकाण्डं

## LXVI.

ते तु प्रस्रवणं शैलमागत्य हरिपुङ्गवाः ।
प्रणम्य शिरसा रामं लक्ष्मणं च महारथं ॥ १ ॥
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च ।
प्रवृत्तिमथ सीताया आख्यातुमुपचक्रमुः ॥ २ ॥
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनं ।
अनुरागं च वैदेह्या यश्चापि समयः कृतः ॥ ३ ॥
तदाचचक्षिरे सर्वे वानरा रामसंनिधौ ।
वैदेहीमक्षतां रामः श्रुत्वा चोत्तरमब्रवीत् ॥ ४ ॥
क्व सीता वर्तते देवी कथं च मयि वर्तते ।
एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ५ ॥
रामस्य वचनं श्रुत्वा हरयो रामसंनिधौ ।
अचोदयन् हनूमन्तं सीतावृत्तान्तकोविदं ॥ ६ ॥
श्रुत्वा तु वचनं तेषां हनूमान् मारुतात्मजः ।
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं प्रति ॥ ७ ॥
समुद्रं लङ्घयित्वाहं शतयोजनमायतं ।
अगच्छं जानकीं सीतां मार्गमाणो विहायसा ॥ ८ ॥
लङ्का नाम पुरी तत्र रावणस्य दुरात्मनः ।
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ॥ ९ ॥

तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
संन्यस्य त्वयि भद्रं ते प्राणान् राम मनोरथैः ॥१०॥
दृष्टा मे राक्षसीमध्ये तर्ज्यमाना पुनः पुनः ।
राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ॥११॥
दुःखमास्ते भृशं सीता नित्यं देवी सुखोचिता ।
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥१२॥
एकवेणीधरा दीना त्वच्चित्ता त्वत्परायणा ।
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥१३॥
रावणाद्विनिवृत्तार्था मर्तव्ये कृतनिश्चया ।
कथञ्चिदेव काकुत्स्थ तत्र सासादिता मया ॥१४॥
इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयता मया ।
सा मया रघुशार्दूल विश्वासमुपपादिता ॥१५॥
ततः संभाषिता देवी सर्वमर्थं च श्राविता ।
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागमत् ॥१६॥
विनयः समुदाचारो भक्तिस्तस्यास्तथा त्वयि ।
यन्न हन्ति दशग्रीवं सुमहात्मा सराक्षसं ॥१७॥
एवं मया महाभागा दृष्टा जनकनन्दिनी ।
उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥१८॥
तं मणिं दिव्यरूपं च दीप्यमानं स्वतेजसा ।
दत्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत् ॥१९॥

तासामन्तरमासाद्य राक्षसीनां वराङ्गना ।
अब्रवीन्मां ततः सीता शोकवाष्पपरिप्लुता ॥ २० ॥
वक्तव्यस्ते नरव्याघ्रो रामः सत्यपराक्रमः ।
निखिलेनेह यद्दृष्टं राक्षसीनां च यच्छ्रुतं ॥ २१ ॥
तर्जितं राक्षसेन्द्रस्य गर्जितं भीषणं तथा ।
द्वौ मासौ जीवितव्यं मे स चापि समयः कृतः ॥ २२ ॥
अयं तस्मै प्रदातव्यो यत्नात् सुपरिपालितः ।
स च मद्वचनाद्वाच्यः सुग्रीवस्यैव शृण्वतः ॥ २३ ॥
एष चूडामणिर्दिव्यो मया सुपरिरक्षितः ।
तव निर्यातितः सौम्य येनाहं जीविता विभो ॥ २४ ॥
मनःशिलायास्तिलकं तं स्मरस्वेति चाब्रवीत् ।
विज्ञाप्यः स नरव्याघ्रो यत्नाद्वायुसुत त्वया ॥ २५ ॥
अखिलेनेह यद्दृष्टमिति मामाह जानकी ।
एष निर्यातितः श्रीमान् मया ते वारिसंभवः ॥ २६ ॥
मणिर्जनकराजस्य दुहित्रा प्रेषितोऽनघ ।
एनं दृष्ट्वा प्रहृष्यामि व्यसनेऽपीह चानघ ॥ २७ ॥
जीवितं धारयिष्यामि मासं दशरथात्मज ।
मासादूर्द्ध्वं न जीवेयं राक्षसीवशमागता ॥ २८ ॥
भूयश्चेदमभिज्ञानं वैदेह्याः शृणु राघव ।
उत्तरे चित्रकूटस्य वृत्तं पादे मनोरमे ॥ २९ ॥

रोठमानस्य वैदेह्यीं मांसार्थे वायसस्य तु ।
क्षिप्तामिषीकां काकस्य तस्यार्थे दुष्टकर्मणः ॥३०॥
ऐषीकमस्त्रमपि तत् काकार्थे संनिपातितं ।
जहि पापमिमं रक्षः क्रूरं दारापहारिणं ॥३१॥
इति मामब्रवीत् सीता धर्मज्ञा धर्मचारिणी ।
रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥३२॥
एतत् ते सर्वमाख्यातं मया राघव तत्त्वतः ।
सर्वथा सागरजले संतारं प्रविचिन्तय ॥३३॥
उपायो दृश्यतां कश्चिद्यथा नदनदीपतिं ।
न चिरेण भवान् घोरं ससैन्यः सागरं तरेत् ॥३४॥

इत्यार्षे रामायणे सुन्दरकाण्डे सुग्रीववाक्यं नाम
पञ्चषष्टितमः सर्गः — अभिज्ञानमणिसमर्पणं नाम
षट्षष्टितमः सर्गः ॥

# सुन्दरकाण्डं

## LXVII.

एवमुक्तो हनुमता रामो दशरथात्मजः ।
तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः ॥ १ ॥
निरीक्ष्य तं मणिश्रेष्ठं राघवः शोककर्षितः ।
नेत्राभ्यां वाष्पपूर्णाभ्यामिदं वचनमब्रवीत् ॥ २ ॥
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला ।
एवं मे मणिरत्नस्य वैदेह्या इव दर्शनं ॥ ३ ॥
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण वै ।
वधूकाले तदा बद्धमधिकं मूर्द्ध्न्यशोभत ॥ ४ ॥
अयं हि जलसंभूतो मणिः परमपूजितः ।
राज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥
इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनं ।
अद्याभ्युपगतः सौम्य वैदेह्या इव दर्शनं ॥ ६ ॥
अयं मणिवरः कालं प्रियया धारितश्चिरं ।
अद्यास्य दर्शनेनाहं दृष्टां तामिव चिन्तये ॥ ७ ॥
किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः ।
शोकाग्निना दह्यमानं सिञ्च मां वाक्यवारिणा ॥ ८ ॥
अतस्तु किं दुःखतरं यदेनं वारिसंभवं ।
मणिं पश्यामि हनुमन् वैदेहीमागतां विना ॥ ९ ॥

जीविष्यति चिरं सीता यदि मासं धरिष्यति ।
क्षणं सौम्य न जीवेयं विना तामिति चिन्तये ॥१०॥
नय मां तत्र हनुमन् यत्रास्ते सा मम प्रिया ।
मुहूर्त्तं नावतिष्ठेयं प्रवृत्तिमुपलभ्य हि ॥११॥
कथं सा मम सुश्रोणी भीरुरेकाकिनी सती ।
भयावहानां घोराणां मध्ये तिष्ठति रक्षसां ॥१२॥
शारदस्तिमिरान्मुक्तो नूनं चन्द्र इवाम्बुदैः ।
आवृतं वदनं तस्या न विराजति राक्षसैः ॥१३॥
किमाह सीता हनुमंस्तत्त्वतः कथयस्व मे ।
एतेन खलु जीविष्ये भेषजेन यथातुरः ॥१४॥
मधुरं मधुराभाषा किमाह मम सा प्रिया ।
मद्विहीना वरारोहा हनुमन् कथयस्व मे ॥१५॥

इत्यार्षे रामायणे सुन्दरकाण्डे रामपरिदेवनं
नाम सप्तषष्टितमः सर्गः ॥

# सुन्दरकाण्डं

## LXVIII.

एवमुक्तस्तु रामेण हनुमान् वानरर्षभः ।
पूर्ववृत्तमभिज्ञानं भूयः संप्रत्यभाषत ॥ १ ॥
सुप्ता किल त्वया सार्द्धं जानकी पुनरुत्थिता ।
अथास्या वायसोऽभ्येत्य विददार स्तनान्तरं ॥ २ ॥
देव्यास्त्वमङ्के सुप्तश्च निद्रामभिगतस्तदा ।
पुनश्च किल पक्षी स देव्या अजनयद्व्यथां ॥ ३ ॥
उत्पत्योत्पत्य सहसा विददार भृशं किल ।
ततस्तु बुद्धवांस्तत्र शोणितेन समुक्षितः ॥ ४ ॥
वायसेन च तेनैव सततं बध्यमानया ।
बोधितः किल सुप्तस्त्वं वैदेह्या रघुनन्दन ॥ ५ ॥
तदा दृष्ट्वा वरारोहां वितुन्नां तां स्तनान्तरे ।
आशीविष इव क्रुद्धः श्वसन् वाक्यमभाषथाः ॥ ६ ॥
नखाग्रैः केन ते भीरु वितुन्नं हि स्तनान्तरं ।
कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ ७ ॥
निरीक्षमाणस्त्वमथ वायसं समवैक्षथाः ।
नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितं ॥ ८ ॥
पुत्रः किल स शक्रस्य वायसो विहगोत्तमः ।
धरान्तरचरः श्रीमान् पवनस्य समो गतौ ॥ ९ ॥

ततस्त्वं हि महाबाहो कोपसंवर्तितेक्षणः ।
बधे हि तस्य दुष्टस्य कृतवानसि वै मतिं ॥१०॥
स त्वं प्रदीप्तं चिक्षेप दर्भं किल खगं प्रति ।
दर्भसंस्तरतस्तस्मादिषीकामन्वयोजयत् ॥११॥
स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजं ।
ततस्तं वायसं दीप्तः स दर्भोऽनुजगाम ह ॥१२॥
पित्रा च स परित्यक्तः सुरैश्च समहर्षिभिः ।
परिक्रम्य च लोकांस्त्रींस्त्रातारं नाभ्यविन्दत ॥१३॥
स त्वां निपतितो भूमौ शरण्यं शरणं गतः ।
बधार्हमपि काकुत्स्थो दयया तं ततोऽब्रवीत् ॥१४॥
मोघमस्त्रं न शक्यं तु कर्तुमेतन्मयोद्यतं ।
त्यजैकमङ्गं खचर यत् तेऽनिष्टमिति प्रभो ॥१५॥
तेन चैकं परित्यक्तं नयनं दीनचेतसा ।
ततस्तस्याक्षि काकस्य दक्षिणं शातितं त्वया ॥१६॥
नमस्कृत्वा स ते राम राज्ञे दशरथाय च ।
विसृष्टः स त्वया काकः प्रतिपेदे स्वमालयं ॥१७॥
एवमस्त्रविदां श्रेष्ठः सत्त्ववान् बलवान् स्थिरः ।
किमर्थमस्त्रं रक्षःसु न योजयसि राघव ॥१८॥
न नागा न च गन्धर्वा नासुरा न मरुद्गणाः ।
तव राम रणे शक्ता वेगं प्रतिसमासितुं ॥१९॥

तव वीर्यवतः कश्चिच्चिदस्ति मयि संभ्रमः ।
किमर्थं न शरैस्तीक्ष्णैः क्षयं नयसि राक्षसान् ॥ २० ॥
भ्रातुरादेशमादाय लक्ष्मणो वा परंतपः ।
स किमर्थं च मां वीरस्त्रायते न महामतिः ॥ २१ ॥
शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ।
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ २२ ॥
नूनं मे दुष्कृतं किञ्चिन्महदस्ति न संशयः ।
समर्थौ सहितौ यन्मां नावेक्षेते परंतपौ ॥ २३ ॥
वैदेह्या वचनं श्रुत्वा करुणं साधुभाषितं ।
पुनरप्यहमार्यां तामिदं वचनमुक्तवान् ॥ २४ ॥
त्वच्छोकवशगो रामो देवि सत्येन ते शपे ।
रामदुःखाभिभूतश्च लक्ष्मणः परितप्यते ॥ २५ ॥
कथञ्चिद्भवती दृष्टा न कालः पुनरासितुं ।
न चिरात् त्वं तु दुःखानां पारं द्रक्ष्यसि मैथिलि ॥ २६ ॥
तावुभौ नरशार्दूलौ राजपुत्रावनिन्दितौ ।
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ २७ ॥
हत्वा च समरे रौद्रं रावणं सहबान्धवं ।
राघवस्त्वां वरारोहे स्वां पुरीं प्रापयिष्यति ॥ २८ ॥
यत् तु रामोऽभिजानीयादभिज्ञानमनिन्दिते ।
प्रीतिसंजननं तस्य प्रतिदातुं त्वमर्हसि ॥ २९ ॥

सा समीक्ष्य दिशः सर्वा वेणीग्रथितमुत्तमं ।
विमुच्य प्रददौ मह्यं मणिरत्नमिदं शुभं ॥ ३० ॥
प्रतिगृह्य मणिं देव्यास्तव हेतो रघूत्तम ।
शिरसा तां प्रणम्याहमागतोऽस्मीह सत्वरः ॥ ३१ ॥
गमने च कृतोत्साहं मां वीक्ष्य वरवर्णिनी ।
वर्धमानं स्वसदृशमुवाच जनकात्मजा ॥ ३२ ॥
अश्रुपूर्णमुखी दीना बाष्पसंदिग्धया गिरा ।
धन्योऽस्यनुगृहीतोऽसि सभाग्योऽसि महाकपे ॥ ३३ ॥
यो द्रक्ष्यसि महाबाहुं रामं कमललोचनं ।
लक्ष्मणं च महाकीर्त्तिं देवरं मे यशस्विनं ॥ ३४ ॥
एवमुक्तवती सीता मयाप्युक्ता सुमध्यमा ।
देवि मा त्वं विलम्बस्व पृष्ठमारोह मे शुभे ॥ ३५ ॥
अद्य त्वां दर्शयिष्यामि ससुग्रीवं सलक्ष्मणं ।
राघवं पृथिवीपालमिति मे निश्चिता मतिः ॥ ३६ ॥
साब्रवीन्मां ततो देवी नैष धर्मो महाकपे ।
यत् ते पृष्ठे निषीदेयं स्ववशा हरिपुङ्गव ॥ ३७ ॥
अवशास्मि तदा वीर स्पृष्टा गात्रेण रक्षसा ।
तत्राहं किं करिष्यामि कालेन परिपीडिता ॥ ३८ ॥
गच्छ त्वं कपिशार्दूल यत्र तौ नृवरात्मजौ ।
मां चोत्पतनसंभ्रान्तं भूयः संदेष्टुमारभत् ॥ ३९ ॥

हनूमन् सिंहविक्रान्तौ तावुभौ रामलक्ष्मणौ ।
सुग्रीवं च सहामात्यं ब्रूयाः सर्वमनामयं ॥ ४० ॥
यथा च स महाबाहुर्मां तारयति राघवः ।
अस्माद्दुःखमहाम्भोधेस्तथा त्वं कर्तुमर्हसि ॥ ४१ ॥
इमं च तीव्रं मम शोकवेगं
रक्षोभिरेवं परिभर्त्सनं च ।
वदेर्नृवीरस्य गतः समीपं
शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ ४२ ॥
एतावदार्या नृपराजपुत्री
ज्ञानक्यभिज्ञानमुवाच देवी ।
एतच्च बुद्ध्वा गदितं मया त्वं
सीताप्रलम्भाय कुरुष्व बुद्धिं ॥ ४३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्वाक्यं
नाम अष्टषष्टितमः सर्गः ॥

## LXIX.

उत्पतंश्च पुनर्वाक्यं देव्योक्तोऽस्मि ससंभ्रमं ।
तव स्नेहान्नरव्याघ्र मानयन्त्या च सौहृदं ॥ १ ॥
यदि मां मन्यसे वीर वसैकाहमरिन्दम ।
कस्मिंश्चित् संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ २ ॥
मम चाप्यल्पभाग्याया दर्शनेन तवानघ ।
शोकस्यास्याप्रमेयस्य मुहूर्त्तं स्याद्यदि क्षयः ॥ ३ ॥
गते हि हरिशार्दूल पुनरागमनात् त्वयि ।
प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ ४ ॥
तवादर्शनजं वीर भूयो मां तापयिष्यति ।
इदं दुःखतरं भूतं दुःखानां मन्दभागिनीं ॥ ५ ॥
अयं हि वीर संदेहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु च संशयः ॥ ६ ॥
कथं तु खलु दुष्पारं तरिष्यन्ति महोदधिं ।
तानि वानरसैन्यानि तौ वा नरवरात्मजौ ॥ ७ ॥
त्रयाणामेव भूतानां सागरस्य विलङ्घने ।
शक्तिः स्याद्विनतेयस्य तव वा मारुतस्य वा ॥ ८ ॥
तदस्मिन् कार्यसंदेहे संप्राप्तवति दुष्करे ।
किं पश्यसि समाधानं त्वं हि कार्यविशारदः ॥ ९ ॥

काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न किं तु विज्ञापयामि ते ॥ १० ॥
बलैः समग्रैर्जित्वा मां रावणं यदि संयुगे ।
नयेत स्वपुरीं रामस्तत् स्यात् तस्य यशस्करं ॥ ११ ॥
यथाहं तस्य वीरस्य बलादुपधिना हृता ।
जीवतां रक्षसामेव तथा नार्हति राघवः ॥ १२ ॥
बलैस्तु संकुलां कृत्वा पुरीं परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत् तस्य सदृशं भवेत् ॥ १३ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १४ ॥
तदर्थोपहितं वाक्यं प्रसृतं हेतुसंहितं ।
प्रशस्याहं ततः शेषं वाक्यमुत्तरमब्रुवं ॥ १५ ॥
देवि वानरसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ १६ ॥
तस्य विक्रमसंपन्नाः सत्ववन्तो महाबलाः ।
मनःसंकल्पसंपन्ना निदेशे हरयः स्थिताः ॥ १७ ॥
येषां नोपरि नाधश्च न तिर्यक् सज्जते गतिः ।
न ते कर्मसु सीदन्ति महत्स्वमितविक्रमाः ॥ १८ ॥
नैकशस्तैर्महाभागैः ससागरधराधरा ।
प्रदक्षिणी कृता भूमिर्वायुमार्गानुसारिभिः ॥ १९ ॥

मद्विशिष्टास्तथा तुल्याः सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥ २० ॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टान् प्रेष्यांस्तु प्रेषयन्त्यवरावरान् ॥ २१ ॥
तदलं परितापेन देवि मन्युरपैतु ते ।
एकोत्पातेन ते लङ्कामेष्यन्ति हरिपुङ्गवाः ॥ २२ ॥
मम पृष्ठगतौ तौ हि चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महाभागौ नृसिंहावागमिष्यतः ॥ २३ ॥
न चिराद्द्रक्ष्यसे रामं सुग्रीवं च महाबलं ।
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितं ॥ २४ ॥
नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान् ।
वानरान् वानरेन्द्राभान् क्षिप्रं द्रक्ष्यसि चागतान् ॥ २५ ॥
नीलाम्बुदनिकाशानां लङ्कामलयसानुषु ।
नर्दतां कपिसैन्यानां न चिराच्छ्रोष्यसे ध्वनिं ॥ २६ ॥
निवृत्तवनवासं च त्वया सार्द्धमरिन्दमं ।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवं ॥ २७ ॥
तथा मया वाग्भिरदीनभाषिणी शिवाभिरिष्टाभिरभिप्रसादिता ।
उवाच शान्तिं मम चापि जानकी न चापि शोकं प्रजहाववनिन्दिता ।२८।

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमद्वाक्यं नाम
नवषष्टितमः सर्गः ॥

# सुन्दरकाण्डं

## LXX.

श्रुत्वा हनूमतो वाक्यं यथावदभिभाषितं ।
रामः प्रीतिसमायुक्तमुत्तरं वाक्यमब्रवीत् ॥ १ ॥
कृतं हनूमता कृत्यं सुमहद्भुवि विश्रुतं ।
मनसापि यदन्येन दुष्करं स्याद्धरातले ॥ २ ॥
न हि तं संप्रपश्यामि यः प्लवेत महार्णवं ।
अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३ ॥
देवदानवयक्षाणां पतगोरगरक्षसां ।
अप्रधृष्या पुरी सा हि रावणेन च पालिता ॥ ४ ॥
गुप्ता दुर्गा गिरेर्मूर्द्धि वीरेणैकेन धर्षिता ।
एवं वीर्यबलोपेतो न समः स्याद्धनूमतः ॥ ५ ॥
भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ।
सुसंविधाय स्वबलं सदृशं विक्रमस्य च ॥ ६ ॥
यो हि भृत्यो नियुक्तः सन् भर्त्रा कर्मणि दुष्करे ।
कुर्यात् तदनुरूपं हि तमाहुः पुरुषोत्तमं ॥ ७ ॥
यो भृत्यः परमं कार्यं न कुर्यान्नृपतेः प्रियं ।
सर्वैर्युक्तः समर्थो हि तमाहुः पुरुषाधमं ॥ ८ ॥
तन्नियोगनियुक्तेन कृतं कृत्यं हनूमता ।
न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ ९ ॥

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ १० ॥
इदं तु मम दीनस्य मनो भूयः प्रकर्षति ।
यदस्याहं प्रियाख्याने न करोमि सदृक्प्रियं ॥ ११ ॥
एवं संचिन्त्य बहुधा राघवः प्रीतमानसः ।
निरीक्ष्य सुचिरं प्रीत्या हनूमन्तमुवाच ह ॥ १२ ॥
एष सर्वस्वभूतो मे परिष्वङ्गोऽनिलात्मज ।
अवस्थाकालसदृशं गृहाण त्वमिमं मम ॥ १३ ॥
इत्युक्त्वा वाष्पपूर्णाक्षो राघवः परवीरहा ।
हनूमन्तं परिष्वज्य भूयश्चिन्तापरोऽभवत् ॥ १४ ॥
ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तमः ।
हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ॥ १५ ॥
सर्वथा तु कृतं तावत् सीतायाः परिमार्गणं ।
सागरं तु समासाद्य पुनर्नष्टा मतिर्मम ॥ १६ ॥
कथं तस्य समुद्रस्य दुष्पारस्य महाम्भसः ।
हरयो दक्षिणं कूलं गमिष्यन्ति समागताः ॥ १७ ॥
अद्यापि खलु वैदेह्या वृत्तान्तो विदितो मम ।
समुद्रपारगमने कपीनां हि किमुत्तरं ॥ १८ ॥
इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः ।
हनूमन्तं महात्मानं ततो ध्यानपरोऽभवत् ॥ १९ ॥

# सुन्दरकाण्डं

## LXXI.

ततः शोकपरिच्छन्नं रामं दशरथात्मजं ।
उवाच वचनं श्रीमान् सुग्रीवः शोकनाशनं ॥ १ ॥
किं त्वं संतप्यसे वीर यथान्यः प्राकृतो जनः ।
मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदं ॥ २ ॥
उत्तिष्ठ पुरुषव्याघ्र न शोकं कर्तुमर्हसि ।
संतापस्यास्य ते स्थानं नाहं पश्यामि राघव ॥ ३ ॥
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ।
धृतिमान् पण्डितः प्राज्ञः शास्त्रविच्चासि राघव ॥ ४ ॥
तदलं विक्लवां बुद्धिं कृत्वा सर्वार्थघातिनीं ।
पुरुषस्य हि लोकेऽस्मिन् धैर्यं शोकोऽपकर्षति ॥ ५ ॥
यत् तु कार्यं मनुष्येण शौटीर्यमनुबध्नता ।
अस्मिन् काले मनुष्येन्द्र तत् त्वमातिष्ठ तेजसा ॥ ६ ॥
शूराणां हि मनुष्याणां त्वद्विधानां महात्मनां ।
विनष्टं वा प्रनष्टं वा न युक्तमनुशोचितुं ॥ ७ ॥
त्वं हि सत्त्ववतां श्रेष्ठो विक्रान्तः स्वेन तेजसा ।
भृत्यैरस्मद्विधैः सार्द्धमरातिं जेतुमर्हसि ॥ ८ ॥
न हि पश्यामि तं कश्चित् त्रिषु लोकेषु राघव ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ ९ ॥

वानरेषु समासक्तं न ते कार्यं विपत्स्यते ।
अचिराद्द्रक्ष्यसे सीतां तीर्त्वा राघव सागरं ॥१०॥
तदलं शोकमालम्ब्य क्रोधमालम्ब राघव ।
इमे समर्थाः शूराश्च सर्वे वै हरियूथपाः ॥११॥
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकं ।
एषां हर्षेण जानामि तर्कश्चापि दृढो मम ॥१२॥
विक्रमेणावजेष्यामि सीतां हत्वा रणे रिपून् ।
बध्येताथ यथा सेतुर्यथा गच्छेम तां पुरीं ॥१३॥
तस्य राक्षसराजस्य तथा त्वमुपपादय ।
दृष्ट्वा तां हि पुरीं लङ्कां त्रिकूटशिखरे स्थितां ॥१४॥
समरे च हतं शत्रुं दर्शनादवधारय ।
सेतुर्बद्धः समुद्रे च लङ्का च वशमागता ॥१५॥
सर्वं तीर्णं च नः सैन्यं जितमित्यवधार्यतां ।
इमे हि समरे शूराः शिलापादपयोधिनः ॥१६॥
तां पुरीं विधमिष्यन्ति वानराः कपिरूपिणः ।
कथञ्चिदेव पश्यामि यदि तं रावणालयं ।
बहुनात्र किमुक्तेन सर्वथा विजितं त्वया ॥१७॥

इत्यार्षे रामायणे सुन्दरकाण्डे हनूमत्प्रशंसा नाम
सप्ततितमः सर्गः—सुग्रीववाक्यं नाम
एकसप्ततितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXII.

स विनीय तमायासं सुग्रीवेणोपसान्त्वितः ।
प्रतिगृह्याथ तद्वाक्यं हनूमन्तमुवाच ह ॥ १ ॥
तरसा सेतुबन्धेन सागरोच्छोषणेन च ।
सर्वथाहं समर्थोऽस्मि सागरस्यापि लङ्घने ॥ २ ॥
बलं च परिमाणं च द्वारदुर्गक्रियामपि ।
गुप्तिकर्म च लङ्कायां रक्षसां साधनानि च ॥ ३ ॥
सर्वमाचक्ष्व तत्वेन हनूमन् कुशलो ह्यसि ।
यथावच्च यथातत्वं लङ्कायामपि दृष्टवान् ॥ ४ ॥
श्रुत्वा रामस्य वचनं हनूमान् मारुतात्मजः ।
वाक्यं वाक्यविदां श्रेष्ठः प्रोवाच तदनन्तरं ॥ ५ ॥
श्रूयतां सर्वमाख्यामि दुर्गकर्म विधानतः ।
यथा गुप्ता पुरी लङ्का यथा वा रक्षिता बलैः ॥ ६ ॥
प्रहृष्टा मुदिता लङ्का मत्तद्विपसमाकुला ।
दृढबद्धकपाटा च गम्भीरपरिखावृता ॥ ७ ॥
चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च ।
यन्त्राण्युपरि यन्त्राणि बलवन्ति दृढानि च ॥ ८ ॥
द्वारेषु सुकृता भीमाः कालायसकृताः शिलाः ।
शतधा रचिताः शूरैः शतघ्न्यो रक्षसां गणैः ॥ ९ ॥

महती रथपूर्णा च राक्षसैश्च महाबलैः ।
आगच्छत् परसैन्यं च तत्र तैर्विनिवार्यते ॥ १० ॥
आयसः सुमहांस्तत्र प्राकारो दुष्प्रधर्षणः ।
मणिविद्रुमवैदूर्यमुक्ताहेमविभूषितः ॥ ११ ॥
सर्वतः सुमहाभीमाः शीततोया भयावहाः ।
अगाधा ग्राहवत्यश्च परिखा मीनसेविताः ॥ १२ ॥
चत्वारः संक्रमास्तेषु द्वारेषु परमायताः ।
यन्त्रैरुपेता बहुभिर्महद्भिर्दृढधन्विभिः ॥ १३ ॥
त्रयस्तु संक्रमास्तत्र परसैन्यागमे सति ।
यन्त्रैरभ्यवकीर्यन्ते परिखासु समन्ततः ॥ १४ ॥
एकस्त्वकम्प्यो बलवान् संक्रमः सुमहादृढः ।
काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च संवृतः ॥ १५ ॥
ते मया संक्रमा भग्नाः परिखाश्चैव पूरिताः ।
दग्धा च नगरी सर्वा प्राकाराश्चैव दारिताः ॥ १६ ॥
येन तेन तु मार्गेण तरामो वरुणालयं ।
हतां च नगरीं लङ्कां वानरैरुपधारय ॥ १७ ॥
अङ्गदो द्विविदो मैन्दो जाम्बवान् पनसोऽपि वा ।
नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ १८ ॥
प्लवन्तोऽपि हि गत्वैते तां रावणपुरीमितः ।
सप्राकारां सभवनामालम्बिष्यन्ति राघव ॥ १९ ॥

स त्वमाज्ञापय क्षिप्रं बलानां राम संग्रहं ।
मुहूर्त्तेन सुयुक्तेन प्रस्थानमभिरोचय ॥ २० ॥

इति वचनमिदं निशम्य धीमान्
पवनसुतस्य तदा नरेन्द्रसूनुः ।
जलनिधिमकरोत् तरीतुमीक्षां
रिपुनिधनाय विनिश्चितार्थतत्त्वः ॥ २१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे लङ्कादुर्गाख्यापनं
नाम द्विसप्ततितमः सर्गः ॥

## LXXIII.

पुनरेवाथ पप्रच्छ राघवो रघुनन्दनः ।
बुद्धिमन्तं हनूमन्तं दुर्गकर्मविधिं प्रति ॥ १ ॥
कति दुर्गाणि दुर्गं च कीदृशं मे निवेदय ।
ज्ञातुमिच्छामि तत् सर्वमानुपूर्व्येण वानर ॥ २ ॥
स पृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा ।
आचचक्षे यथेन्द्रेण पृष्टः पूर्वं बृहस्पतिः ॥ ३ ॥
परां समृद्धिं लङ्कायाः सागरस्य च भीमतां ।
विभवं च बलौघस्य निवेशं वाहनस्य च ॥ ४ ॥
अलं प्रकृतिसंपन्नो युयुत्सू राम रावणः ।
उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ ५ ॥
लङ्का पुनर्दुरालम्बा देवदुर्गा भयावहा ।
सारोहा पर्वते यच्च तद्दुर्गं च चतुर्विधं ॥ ६ ॥
दृष्ट्वा मध्ये समुद्रस्य दूरपारस्य राघव ।
लङ्का तत्र पुरी रम्या प्राकारेणोपशोभिता ॥ ७ ॥
नगाग्रे रुचिरा दिव्या साभूद्देवपुरोपमा ।
मत्तवारणसंपूर्णा नित्यं परमदुर्जया ॥ ८ ॥
परिघाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ।
शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥ ९ ॥

# सुन्दरकाण्डं

अयुतं रक्षसां तत्र पश्चिमं द्वारमास्थिताः ।
खड्गचर्मधराः शूराः सर्वे सर्वास्त्रयोधिनः ॥१०॥
अर्बुदं रक्षसां तत्र उत्तरं द्वारमास्थिताः ।
रथिनश्चाश्ववाराश्च कुलपुत्राः सुपूजिताः ॥११॥
शतं शतसहस्राणां मध्यमं गुल्ममाश्रितं ।
यातुधाना दुराधर्षा रावणं पर्युपासते ॥१२॥
श्रुत्वा हनूमतो वाक्यं रामो रिपुनिसूदनः ।
सुग्रीवं विपुलग्रीवमिदं वचनमब्रवीत् ॥१३॥
अस्मिन् मुहूर्त्ते सुग्रीव प्रयाणमभिरोचये ।
मुहूर्त्तो विजये युक्तः प्राप्तो मध्यं दिवाकरः ॥१४॥
उत्तरा फल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाहि सुग्रीव सर्वानीकसमावृतः ॥१५॥
निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति मे ।
निहत्य रावणं व्यक्तमानयिष्यामि मैथिलीं ॥१६॥
उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम ।
विजयं समनुप्राप्तं शंसतीव महामते ॥१७॥
अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुं ।
वृतः शतसहस्रेण वानराणां तरस्विनां ॥१८॥
फलमूलवता नील शीतकाननवारिणा ।
पथा मद्वचनादाशु सेनां सेनापते नय ॥१९॥

दूषयेयुर्दुरात्मानः पथि मूलफलोदकं ।
रक्षांसि परिरक्षेथास्तेषां हि नित्यमुद्यतः ॥ २० ॥
निम्नेषु वनदुर्गेषु नगेषु च नखायुधाः ।
अभिपत्याभिपश्येयुः परेषां निहितं बलं ॥ २१ ॥
यच्च फल्गु बलं किञ्चित् तदिहैवावतिष्ठतां ।
एतद्धि कृत्यं शूराणां विक्रमेषूपयुज्यते ॥ २२ ॥
सागरौघनिभं घोरमग्रानीकं महाबलाः ।
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ २३ ॥
गयश्च गिरिसंकाशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥ २४ ॥
यातु वानरवाहिन्या वानरौघपतिः कपिः ।
पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ २५ ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
यातु वानरवाहिन्याः सव्यं पार्श्वमवस्थितः ॥ २६ ॥
यास्यामि बलमध्येऽहं बलौघमभिपालयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ २७ ॥
अङ्गदं चाधिरूढस्तु लक्ष्मणोऽन्तकं मम ।
सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ २८ ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महात्मा च पृष्ठं रक्षन्तु नस्त्रयः ॥ २९ ॥

## सुन्दरकाण्डं

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
व्यादिदेश महावीर्यो वानरान् वानरर्षभः ॥३०॥
ते वानरवराः सर्वे समुत्पत्य युयुत्सवः ।
गुहाभ्यः शिखरेभ्यश्च तस्मात् पुप्लुविरे क्षणात् ॥३१॥
ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्माससैन्यो दक्षिणां दिशं ॥३२॥
शतैः शतसहस्रैश्च कोटिभिरयुतैरपि ।
वारणाभैः स हरिभिर्ययौ सुपरिवारितः ॥३३॥
तं यान्तमनुयान्ति स्म हरयः सुमहाबलाः ।
हृष्टाः प्रमुदिताश्चैव सुग्रीवेणाभिरक्षिताः ॥३४॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
खेलन्तो विनदन्तश्च प्रजग्मुर्दक्षिणां दिशं ॥३५॥
भक्षयन्तः सुगन्धीनि मूलानि च फलानि च ।
उद्वहन्तो महावृक्षान् शैलखण्डांस्तथैव च ॥३६॥
अन्योन्यं सहसा दृप्ता निर्भजन्ति क्षिपन्ति च ।
पतिताश्चोत्पतन्त्यन्ये पातयन्त्यपरेऽपरान् ॥३७॥
रावणो नो हि हन्तव्यः सर्वे च रजनीचराः ।
इति गर्जन्ति हरयो राघवस्य समीपतः ॥३८॥
पुरस्तात् तस्य सैन्यस्य नीलः कुमुद एव च ।
पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह ॥३९॥

मध्ये राज्ञा तु सुग्रीवो रामो लक्ष्मण एव च ।
हरिभिर्बहुभिर्वीरैर्वृताः शत्रुनिवर्हणैः ॥४०॥
हरिः शतबलिर्वीरः कोटिभिर्दशभिर्वृतः ।
दक्षिणं पार्श्वमासाद्य ररक्ष हरिवाहिनीं ॥४१॥
कोटीशतपरीवारः केशरी वानरोत्तमः
ऋक्षश्चातिबलः पार्श्वं सव्यं सैन्यस्य पालयत् ॥४२॥
जाम्बवांश्च सुषेणश्च दीर्घदर्शी च वानरः ।
सुग्रीवं पुरतः कृत्वा ररक्षुः पृष्ठमावृताः ॥४३॥
दधिमुखः प्रजङ्गश्च रम्भोऽथ शरभस्तथा ।
सर्वपार्श्वान्यधावन्त रक्षणार्थं नृपाज्ञया ॥४४॥
एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः ।
अपश्यन्त गिरिश्रेष्ठं विन्ध्यं द्रुमलतावृतं ॥४५॥
सागरौघनिभं घोरं तद्वानरबलं महत् ।
निःससर्प महाघोषो भीमवेग इवार्णवः ॥४६॥
तस्य दाशरथेरर्थे शूरास्ते कपिपुङ्गवाः ।
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ॥४७॥
कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ।
महद्भ्यामिव संश्लिष्टौ ग्रहाभ्यां चन्द्रभास्करौ ॥४८॥
ततोऽङ्गदगतो रामं लक्ष्मणः शुभया गिरा ।
उवाच परिपूर्णार्थं वचनं प्रतिभानवान् ॥४९॥

हतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणं ।
समृद्धार्थः समृद्धार्थामयोध्यां प्रतियास्यसि ॥५०॥
महान्ति च निमित्तानि दिवि भूमौ च राघव ।
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥५१॥
अनुवाति शुभो वायुः सेनां मृदुहितः सुखः ।
पूर्णवर्णस्वराश्चेमे प्रवदन्ति मृगद्विजाः ॥५२॥
प्रसन्नाश्च दिशः सर्वा निर्मलश्च दिवाकरः ।
उशनाश्च प्रसन्नार्चिरनुत्वं भार्गवो गतः ॥५३॥
ब्रह्मराशिविदः सर्वे विशुद्धाश्च महर्षयः ।
अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणं ॥५४॥
त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः ।
पितामहवरोऽस्माकमिक्ष्वाकूणां पितामहः ॥५५॥
विमले च प्रकाशेते विशाखे निरुपद्रवे ।
नक्षत्रं परमस्माकमिक्ष्वाकूणां महात्मनां ॥५६॥
नैर्ऋतं नैर्ऋतानां च नक्षत्रमुपपीड्यते ।
मूलो मूलवतामृक्षो धूप्यते धूमकेतुना ॥५७॥
सर्वं थैव विनाशोऽयं राक्षसानामुपस्थितः ।
काले कालगृहीतानां नक्षत्रग्रहपीडनात् ॥५८॥
प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च ।
प्रवान्त्यभ्यधिकं गन्धा यथर्तुपुष्पिता द्रुमाः ॥५९॥

व्यूहेषु कपिमुख्यानां प्रकाशोऽभिप्रकाशते ।
देवानामिव सैन्यानां संग्रामे तारकामये ॥ ६० ॥
एवमार्य समीक्ष्य त्वं प्रीतो भवितुमर्हसि ।
इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् ॥ ६१ ॥
अथावृत्य महीं कृत्स्नां जगाम महती चमूः ।
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ॥ ६२ ॥
कराग्रैश्चरणाग्रैश्च वानरैरुद्धतं रजः ।
भौममन्तर्दधे लोकमावृत्य सवितुः प्रभां ॥ ६३ ॥
शतैः शतसहस्रैश्च कोटिभिश्च सहस्रशः ।
वानराणां सुघोराणां श्रीमान् परिवृतो ययौ ॥ ६४ ॥
सा स्म याति दिवारात्रं महती हरिवाहिनी ।
हृष्टा प्रमुदिता सर्वा सुग्रीवेणाभिपालिता ॥ ६५ ॥
जवेन त्वरितं याता सर्वा युद्धाभिकाङ्क्षिणी ।
सा मुमोचयिषुः सीतां मुहूर्त्तं क्वापि नासत ॥ ६६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे वानरानीकप्रयाणं
नाम त्रिसप्ततितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXIV.

ततः पादपसंबाधं नानानगसमावृतं ।
विन्ध्यपर्वतमासाद्य वानरास्ते समारुहन् ॥ १ ॥
काननानि विचित्राणि नदीः प्रस्रवणानि च ।
पश्यन्नभिययौ रामो विन्ध्यस्य मलयस्य च ॥ २ ॥
चन्दनांस्तिलकांश्चूतानशोकान् सिन्दुवारकान् ।
करवीरांस्तिमीरांश्च भञ्जन्तस्ते प्लवङ्गमाः ॥ ३ ॥
कर्णिकारान् कुरुवकांश्चम्पकानतिमुक्तकान् ।
कदम्बपादपान् नीपान् केशरोद्दालकान् नटान् ॥ ४ ॥
सालांस्तालांस्तमालांश्च लवङ्गांश्च समन्ततः ।
वल्गुवाग्भिर्द्विजैश्चित्रैर्नानासत्त्वैश्च सेवितान् ॥ ५ ॥
फलान्यमृतकल्पानि मूलानि च लतास्तथा ।
बभञ्जुर्वानरास्तत्र पादपांश्च बलोत्कटाः ॥ ६ ॥
पश्यन्तश्चारुरूपाणि ययुः शीघ्रमरिन्दमाः ।
द्रोणमात्रप्रमाणानि लम्बमानानि वानराः ॥ ७ ॥
ययुः पिबन्तः स्वादूनि मधूनि मधुपिङ्गलाः ।
पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः ॥ ८ ॥
विधमन्तो गिरिवरान् प्रययुः प्लवगर्षभाः ।
वृक्षानेकत्र कपयो नर्दन्तो मधुदर्पिताः ॥ ९ ॥

अन्यस्मिन् निपतन्ति स्म प्रपतन्त्यपि चापरे ।
बभूव वसुधा तैस्तु संपूर्णा मधुपिङ्गलैः ॥१०॥
यथा कलमकेदारैः परिपक्वैर्वसुन्धरा ।
महेन्द्रमथ संप्राप्य रामो राजीवलोचनः ॥११॥
अध्यारोहन्महाबाहुः शिखराग्रं सुपुष्पितं ।
स तच्छिखरमासाद्य रामो दशरथात्मजः ॥१२॥
कूर्ममीनसमाकीर्णमपश्यद्वरुणालयं ।
ते विन्ध्यं समतिक्रम्य मलयं च महागिरिं ॥१३॥
आसेदुरानुपूर्व्येण समुद्रं भीमनिस्वनं ।
अवरुह्य जगामाशु वेलावनमनुत्तमं ॥१४॥
रामो रमयतां श्रेष्ठः सुग्रीवश्च सलक्ष्मणः ।
अथ धौतामलशिलां तोयौघसमभिप्लुतां ॥१५॥
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ।
एते वयमनुप्राप्ताः सुग्रीव लवणोदधिं ॥१६॥
संतारश्चिन्त्यतामत्र पूर्वं यः प्रसमीक्षितः ।
ततः परमगाधोऽयं सागरः सरितां पतिः ॥१७॥
न चायमनुपायेन तरितुं शक्यतेऽर्णवः ।
निवेशमिह कृत्वा तु मन्त्रयध्वं हितं मम ॥१८॥
यथेदं वानरबलं परं पारमवाप्नुयात् ।
एवमुक्त्वा महाभागः सीताहरणकर्षितः ॥१९॥

# सुन्दरकाण्डं

रामः सागरमासाद्य वासमाज्ञापयत् तदा ।
सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गवाः ॥२०॥
संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ।
स्वां स्वां सेनां समुत्सृज्य मा च कश्चित् कुतश्चन ॥२१॥
गच्छेत वानराः शूरा ज्ञेयं छन्नभयं वनं ।
रामस्य तद्वचः श्रुत्वा सुग्रीवः सहलक्ष्मणः ॥२२॥
न्यवेशयद्बलं तीरे सागरस्य द्रुमायुते ।
गिरिराजसमीपस्थं हरीणां तद्बलं बभौ ॥२३॥
मधुपाण्डुजलः श्रीमान् द्वितीय इव सागरः ।
वेलावनमुपागम्य ततस्ते हरियूथपाः ॥२४॥
संनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ।
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ॥२५॥
त्रिधा निविष्टा महती रामस्यार्थे पराभवत् ।
सा महार्णवमासाद्य हृष्टा वानरवाहिनी ॥२६॥
वायुवेगसमुद्भूतं प्रेक्षमाणा महार्णवं ।
दूरपारमसंबाधं यादोगणनिषेवितं ॥२७॥
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ।
चण्डनक्रग्रहं घोरं क्षपान्तं दिवसक्षये ॥२८॥
चन्द्रोदयसमुद्भूतं प्रतिचन्द्रसमाकुलं ।
चण्डवेगं महावर्त्तमन्तःपङ्क्तिविहारिभिः ॥२९॥

दीप्तभोगैः समाकीर्णं भुजङ्गैर्भुजगालयं ।
अवगाढं महासत्त्वैर्नानाग्रहसमाकुलं ॥ ३० ॥
दुर्गं दुर्गममार्गं तमगाधमसुरालयं ।
मकरैर्नागभोगैश्च विगाढा वातलोडिताः ॥ ३१ ॥
उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ।
अग्निपूर्णमिवाविद्धं भास्वराम्बुमहोरगं ॥ ३२ ॥
सुरारिविषयं घोरं पातालविषयं सदा ।
सागरं ह्यम्बरप्रख्यमम्बरं सागरोपमं ॥ ३३ ॥
अम्बरं सागरं चोभौ निर्विशेषमपश्यत ।
संपृक्तं नभसा ह्यम्भः संपृक्तं च नभोऽम्भसा ॥ ३४ ॥
तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ।
समुत्पतितमेघस्य वीचिमालाकुलस्य च ॥ ३५ ॥
विशेषो न द्वयोरासीत् सागरस्याम्बरस्य च ।
अन्योन्यैराहताः सक्ताः सस्वनुर्भीमनिस्वनाः ॥ ३६ ॥
ऊर्मयः सिन्धुराजस्य महाभेर्य इवाहताः ।
रत्नौघं जलसंनादैर्वियुक्तमिव वायुना ॥ ३७ ॥
उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलं ।
अपश्यंस्ते महात्मानं वाताहतजलाशयं ॥ ३८ ॥
अनिलोद्धूतमाकाशे प्रवल्गन्तमिवोर्मिभिः ।
भ्रान्तोर्मिजलसंनादं प्रलोलमिव सागरं ॥ ३९ ॥

# सुन्दरकाण्डं

## LXXV.

सा तु नीलेन विधिवत् स्ववेक्षा सुसमाहिता ।
सागरस्योत्तरे तीरे सेना साधु निवेशिता ॥ १ ॥
मैन्दश्च द्विविदश्चोभौ तत्र वानरयूथपौ ।
चेरतुश्चारन्नगतौ तां सेनां सर्वतो दिशं ॥ २ ॥
निविष्टायां तु सेनायां तीरे नदनदीपतेः ।
पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३ ॥
शोकः किलेह कालेन गच्छता ह्यपगच्छति ।
मम त्वपश्यतः कान्तामहन्यहनि वर्धते ॥ ४ ॥
न मे दुःखं प्रियादूरे न मे दुःखं हृतेति वा ।
एतदेवानुशोचामि वयो यदतिवर्तते ॥ ५ ॥
तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ।
रात्रिं दिवं शरीरं मे दह्यते मदनाग्निना ॥ ६ ॥
अवगाह्यार्णवं स्वप्स्ये सौमित्रे मैथिलीं विना ।
कथञ्चित् प्रज्वलन् कामो जले सुप्तं न मां दहेत् ॥ ७ ॥
वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ।
त्वय्येतत् कामयानस्य शक्यं तेनापि जीवितुं ॥ ८ ॥
तन्मे दहति गात्राणि विसर्पित इवानलः ।
महासत्त्व प्रिया यन्मे करुणं पर्यदेवयत् ॥ ९ ॥

बह्वेतत् कामयानस्य नैतदल्पं विजानतः ।
यदहं सा च सुश्रोणी धरणीमाश्रितावुभौ ॥१०॥
केदारस्येव केदारः सजलस्येव निर्जलः ।
उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि तां ॥११॥
कदा नु चारुदन्तौष्ठं तस्याः पद्मनिभं मुखं ।
ईषदुन्नम्य पश्यामि रसायनमिवोत्तमं ॥१२॥
सा नूनमसितापाङ्गी राक्षसीमध्यगा प्रिया ।
मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥१३॥
कदावधूय रक्षांसि सा बधूरुत्पतिष्यति ।
निर्भिद्य जलद नीलं तडिल्लेखेव जानकी ॥१४॥
कदा नु खलु सुश्रोणीं पद्मपत्रायतेक्षणां ।
विजित्य शत्रुं द्रक्ष्यामि सीतां स्फीतामिव श्रियं ॥१५॥
कदा शोकमिमं घोरं मैथिलीविप्रयोगजं ।
सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा ॥१६॥
स्वभावतनुरत्यर्थं शोकेनानशनेन च ।
भूयस्तनुतरा सीता दशाभाग्यविपर्यये ॥१७॥
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् ।
सीतां प्रत्यानयिष्यामि शोकवेगपरिप्लुतां ॥१८॥
एवं विलपतस्तत्र तस्य रामस्य धीमतः ।
दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपागमत् ॥१९॥

# सुन्दरकाण्डं

## LXXVI.

दग्धा लङ्कां ततो याते हनूमति महामतौ ।
राक्षसान् निहतानुग्रान् महाबलपराक्रमान् ॥ १ ॥
श्रुत्वा परमदुःखार्त्ता जननी रक्षसां पतेः ।
सुतं परमतत्त्वार्थमित्युवाच विभीषणं ॥ २ ॥
इष्टान् दारान् मृगयता प्रेषितो हनुमानिह ।
राघवेण नयज्ञेन सा च दृष्टा विभीषण ॥ ३ ॥
पुत्र राक्षसराजस्य महानयमुपप्लवः ।
विदितं ते महाप्राज्ञ यथेदं वै भविष्यति ॥ ४ ॥
अधर्मेण हि धर्मज्ञ भुज्यमानं महत् सुखं ।
आवहत्यापदं घोरामसुहृत्प्रीतिवर्धिनीं ॥ ५ ॥
तदिदं गर्हितं कर्म कृतं भ्रात्रा तवानघ ।
न प्रीणयति मां भुक्तमपथ्यमिव भोजनं ॥ ६ ॥
स हि सीतां हृतां ज्ञात्वा सर्वास्त्रगतिकोविदः ।
प्रकरिष्यति धर्मात्मा रामः सदृशमात्मनः ॥ ७ ॥
स हि सत्यव्रतश्चैव दिव्ये चास्त्रबले स्थितः ।
गृहीतचापः संक्रुद्धः शोषयेदपि सागरं ॥ ८ ॥
ये हि युद्धे पुरा तेन हतशेषा निशाचराः ।
इह प्राप्ताः परित्रस्तास्तद्वीर्यहतपौरुषाः ॥ ९ ॥

दुर्विगाह्यं दुराधर्षं क्रुद्धस्य शरदुर्दिनं ।
तस्य वीरस्य दुस्तीर्णं वर्णयन्ति निशाचराः ॥१०॥
चतुर्दशसहस्राणि रक्षसां क्रूरकर्मणां ।
को नु मर्त्यस्तथा हन्यादेकः परमसंयुगे ॥११॥
नूनं चरति लोकांस्तु कालः स नरविग्रहः ।
तादृशं न हि देवेषु वीर्यमस्त्यसुरेषु वा ॥१२॥
खरस्यैव बधान्मन्ये मारीचनिधनात् तथा ।
न रामसदृशोऽस्तीति निशाचरगणेश्वर ॥१३॥
तमेवं गुणसंपन्नं मत्वा दशरथात्मजं ।
न शान्तिमुपगच्छामि भयात् प्रव्यथितेन्द्रिया ॥१४॥
तद्यथा प्राप्तकालस्तु वीर न व्यतिवर्तते ।
तथाचर विशालाक्ष बुद्ध्या परमसूक्ष्मया ॥१५॥
हितं वचनमायत्यां तदा त्वं मधुरोदयं ।
श्रावयाश्वेव वाक्यज्ञ रावणं यदि शक्यसे ॥१६॥
अहमुद्वृत्तहृदयं धर्माच्चलितमानसं ।
न ह्येनमकृतात्मानमुत्सहे पुत्र शासितुं ॥१७॥
सीतां निर्यातयस्वेति वचनं वदतां वर ।
पौलस्त्यः श्राव्यतां शीघ्रमेतदत्र हितं भवेत् ॥१८॥
कर्मभिर्दारुणैः श्रान्तं हतमज्ञाननिद्रया ।
धर्मवाक्यानिलैः शीतैरबुद्धिं प्रतिबोधय ॥१९॥

अस्मिन् रक्षोगणाकीर्णे दारुणे लोमहर्षणे ।
त्वमेको भ्राजसे कीर्त्या घनमुक्त इवोडुराट् ॥२०॥
त्वया ह्येकेन सर्वोऽयमधर्मप्रसृतो जनः ।
धार्यते साधुवृत्तेन सेतुनेव महोदधिः ॥२१॥
यथा न पापग्रहणेन गृह्यसे
यथा न कीर्त्या परया वियुज्यसे ।
तथा यतस्वेह हितानुदर्शने
यथा न मृत्योर्वशमेषि सर्वशः ॥२२॥
इतस्ततो मदसुरभिर्यथा द्रवन्
निवार्यते परमशितैर्महाङ्कुशैः ।
महाद्विपो रजनिचराधिपस्तथा
निवार्यतां हितवचनाङ्कुशैर्बलात् ॥२३॥
अथैवमुक्तश्चरणौ निपीड्य वै
शुभौ जनन्या विषयेष्वमत्सरी ।
कृताभ्यनुज्ञः स तदा कृताञ्जलिर्
जगाम रक्षोऽधिपदर्शनोत्सुकः ॥२४॥
इत्यार्षे रामायणे सुन्दरकाण्डे सागरदर्शनं नाम
चतुः सप्ततितमः सर्गः — रामविलापो नाम
पञ्चसप्ततितमः सर्गः — निकषावाक्यं
नाम षट्सप्ततितमः सर्गः ॥

## LXXVII.

लङ्कायां तत् कृतं कर्म दृष्ट्वा घोरं भयावहं ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥ १ ॥
अमात्यानब्रवीत् सर्वान् राक्षसान् सविभीषणान् ।
रोषसंरक्तनयनः कोपात् किञ्चिदवाङ्मुखः ॥ २ ॥
आगतश्च प्रविष्टश्च हनुमान् नगरीमिमां ।
दृष्टा तेन च वैदेही प्रविश्यान्तःपुरं मम ॥ ३ ॥
प्रासादशिखरं भग्नं प्रवरा राक्षसा हताः ।
आकुला च पुरी लङ्का सर्वा हनुमता कृता ॥ ४ ॥
किं करिष्यामहे तत्र किं वा युक्तमनन्तरं ।
उच्यतां यत् समर्थं नः किमत्र सुकृतं भवेत् ॥ ५ ॥
मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः ।
तस्माद्वो रोच्यतां मन्त्रो रामं प्रति महाबलाः ॥ ६ ॥
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां तु समवेतानां गुणदोषान् वदाम्यहं ॥ ७ ॥
मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिश्चये ।
मित्रैर्वापि समानार्थैर्बान्धवैर्वा हिते रतैः ॥ ८ ॥
सह संमन्त्र्य यो मन्त्रं कर्मारम्भं प्रवर्तयेत् ।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमं ॥ ९ ॥

एकोऽर्थं विमृषत्येको धर्मस्य कुरुते मतिं ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरं ॥१०॥
गुणदोषमचिन्त्यैव व्यक्तं दैवव्यपाश्रयः ।
करिष्यामीति यः कार्यं कुरुते स नराधमः ॥११॥
यथैव पुरुषानाहुरुत्तमाधममध्यमान् ।
तथा मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ॥१२॥
ऐकमत्यमुपागम्य शास्त्रदृष्टेन वर्त्मना ।
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमं ॥१३॥
बह्वीरपि मतीर्दृष्ट्वा मन्त्रिणां मन्त्रनिर्णये ।
पुनर्यत्रैकतां याति स मन्त्रो मध्यमः स्मृतः ॥१४॥
गर्हितान्योन्यमतयो मन्त्रिणो ब्रुवते सदा ।
न चैकमत्यः शेषोऽस्ति मन्त्रः सोऽधम उच्यते ॥१५॥
तस्मात् सुमन्त्रितं साधु भवन्तो मन्त्रिसत्तमाः ।
कार्यं संप्रतिपद्यन्तां तद्धि कार्यतमं मतं ॥१६॥
वानराणां हि वीराणां सहस्रैः परिवारितः ।
तरिष्यति परिव्यक्तं राघवः सागरं सुखं ॥१७॥
तरसा महता युक्तः सबलः सपदानुगः ।
करिष्यत्याकुलां लङ्कां व्यक्तं रामो न संशयः ॥१८॥
तस्मिन्नेवंविधे कार्ये विरुद्धे मम राक्षसाः ।
हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतामिह ॥१९॥

## LXXVIII.

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः ।
ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरं ॥ १ ॥
आपदेषा महाराज प्राप्ता या प्राकृताज्जनात् ।
हृदि नेयं त्वया कार्या तं बधिष्याम राघवं ॥ २ ॥
राजन् परिघशूलेन खड्गपट्टिशसंकुलं ।
सुमहत् ते बलं कस्माद्विषादं भजते भवान् ॥ ३ ॥
कैलासशिखरं गत्वा यक्षैर्बहुभिरावृतं ।
सुमहत् कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ४ ॥
तं महेश्वरसख्येन श्लाघमानं तदा विभो ।
निर्जित्य समरे राजन् लोकपालं महाबलं ॥ ५ ॥
विनिहत्य च यक्षौघान् विक्षोभ्य च निगृह्य च ।
त्वया कैलासशिखराद्विमानमिदमाहृतं ॥ ६ ॥
मयेन दानवेन्द्रेण त्वद्भयात् सख्यमिच्छता ।
दुहिता तव भार्यार्थे दत्ता राक्षसपुङ्गव ॥ ७ ॥
दानवेन्द्रो महाबाहो वीर्योत्सिक्तो मधुस्तथा ।
प्रसह्य वशमानीतः कुम्भीनस्याः कृते त्वया ॥ ८ ॥
निर्जितास्ते महाबाहो नागा गत्वा रसातलं ।
वासुकिस्तक्षकः पद्मः शङ्खकर्कटकादयः ॥ ९ ॥

अक्षया बलवन्तश्च शूरा लब्धवराः पुनः ।
त्वया संवत्सरं युद्धा निवातकवचा रणे ॥ १० ॥
स्वकं बलमवष्टभ्य नीताः सख्यमरिन्दम ।
मायाश्च विविधास्तत्र प्राप्ता राक्षसपुङ्गव ॥ ११ ॥
शूराश्च बलवन्तश्च वरुणस्य सुता रणे ।
निर्जितास्ते महाराज चतुर्विधबलानुगाः ॥ १२ ॥
मृत्युदण्डं महाग्राहं शाल्मलीद्रुमकण्टकं ।
अवगाह्य त्वया राजन् यमस्य बलसागरं ॥ १३ ॥
यशश्च विपुलं प्राप्तं मृत्युश्च प्रतिषेधितः ।
सुयुद्धेन च ते सर्वे लोकास्तत्रैव तोषिताः ॥ १४ ॥
क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः ।
आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १५ ॥
तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे ।
प्रसह्य ते त्वया राजन् हताः परमदुर्जयाः ॥ १६ ॥
तिष्ठ त्वं च महाबाहो श्रमेण तव किं प्रभो ।
अयमेको महाबाहुरिन्द्रजित् प्रमथिष्यति ॥ १७ ॥
अनेन हि महाराज माहेश्वरमनुत्तमं ।
इष्ट्वा यज्ञैर्वरो लब्धो लोके परमदुर्लभः ॥ १८ ॥
शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलं ।
रथाश्वगजतोयौघं पदातिपुलिनं महत् ॥ १९ ॥

अनेन हि समासाद्य देवानां बलसागरं ।
गृहीतो दैवतपतिर्लङ्कायां चोपवेशितः ॥ २० ॥
पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा ।
गतः स्वभवनं राजा सर्वदेवनमस्कृतः ॥ २१ ॥
न च तेऽस्त्यजितं राजंस्त्रिषु लोकेषु किञ्चन ।
सर्वथाप्रतिहार्यं हि तव वीर्यमनुत्तमं ॥ २२ ॥
तमेनं त्वं महाराज नियुङ्क्ष्वेन्द्रजितं प्रभो ।
स हि वानरसेनां तां परमां नयति क्षयं ॥ २३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे रावणवाक्यं
नाम सप्तसप्ततितमः सर्गः—रावणाव्यवस्थापनं
नाम अष्टसप्ततितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXIX.

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः ।
अब्रवीत् प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तथा ॥ १ ॥
देवदानवगन्धर्वाः पिशाचपतगोरगाः ।
न त्वां धर्षयितुं शक्ताः किं पुनर्वानरा रणे ॥ २ ॥
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता ।
न हि नो जीवतां गच्छेज्जीवन् स वनगोचरः ॥ ३ ॥
सर्वां सागरपर्यन्तां सशैलवनकाननां ।
कुर्मो निर्वानरामुर्वीमाज्ञापयतु नो भवान् ॥ ४ ॥
रक्षां प्रति विधास्यामश्चारं च जयतां वर ।
नागमिष्यति नो दुःखं किञ्चिदात्मापराधजं ॥ ५ ॥
अब्रवीद्वज्रदंष्ट्रस्तु राक्षसो राक्षसेश्वरं ।
प्रगृह्य परिघं घोरं मांसशोणितदूषितं ॥ ६ ॥
किं नो हनूमता कार्यं कृपणेन निशाचराः ।
रामे तिष्ठति दुर्धर्षे सुग्रीवे च सलक्ष्मणे ॥ ७ ॥
अद्य रामं निहत्याहं सहसुग्रीवलक्ष्मणं ।
परिघेण परान् हन्मि विक्षोभ्य हरिवाहिनीं ॥ ८ ॥
अब्रवीत् तु सुसंक्रुद्धस्त्रिशिरा नाम राक्षसः ।
इदं न क्षमणीयं नः सर्वेषां वै प्रधर्षणं ॥ ९ ॥

अयं परिभवो घोरो वानरेण विशेषतः ।
श्रीमतो राक्षसेन्द्रस्य पुरस्यान्तःपुरस्य च ॥१०॥
अस्मिन् मुहूर्त्ते हत्वाहं निवर्तिष्यामि वानरान् ।
न ह्यहं धर्षणां घोरां मर्षयिष्यामि भर्तरि ॥११॥
ततो यज्ञहनो नाम राक्षसः पर्वतोपमः ।
क्रुद्धः परिलिहन् वक्त्रं जिह्वया वाक्यमब्रवीत् ॥१२॥
मोदन्तां राक्षसाः सर्वे प्रियाभिः सह संगताः ।
एकोऽहं भक्षयिष्यामि सर्वांस्तान् हरियूथपान् ॥१३॥
कामयस्व यथाकामं राक्षसेन्द्र तव प्रियां ।
अहं रामं हनिष्यामि ससहायं रणाजिरे ॥१४॥
सुतोऽथ कुम्भकर्णस्य कुम्भः परमकोपनः ।
अब्रवीत् परमक्रुद्धो रावणं लोकरावणं ॥१५॥
तिष्ठन्त्विमे महाराज सचिवाः संगतास्तव ।
सुस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तु वरवारुणीं ॥१६॥
अहमेको हनिष्यामि सुग्रीवं सहलक्ष्मणं ।
अङ्गदं सहनूमन्तं रामं शत्रुनिवर्हणं ॥१७॥

इत्यार्षे रामायणे सुन्दरकाण्डे मन्त्रिवाक्यं
नाम नवसप्ततितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXX.

ततो निकुम्भो रभसः सूर्यशत्रुर्महाबलः ।
सुप्तघ्नो यज्ञकोपश्च महापार्श्वमहोदरौ ॥ १ ॥
अग्निकेतुर्महाबाहू रश्मिकेतुश्च राक्षसः ।
इन्द्रजिच्च महामायो बलवान् रावणात्मजः ॥ २ ॥
प्रघसोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः ।
धूम्राक्षोऽथ प्रहस्तश्च दुर्मुखश्चैव राक्षसः ॥ ३ ॥
परिघान् पट्टिशान् प्रासान् शक्तिशूलासिमुद्गरान् ।
चापानि निशितान् वाणान् गदाश्च कनकाङ्गदाः ॥ ४ ॥
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः ।
अब्रुवन् रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५ ॥
अद्य रामं हनिष्यामः ससुग्रीवं सलक्ष्मणं ।
कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ॥ ६ ॥
तान् गृहीतायुधान् सर्वान् वारयित्वा विभीषणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ॥ ७ ॥
त्रिभिराद्यैरुपायैस्तु योऽर्थः प्राप्तुं न शक्यते ।
तस्य विक्रमकालांस्त्रीन् कथयन्ति मनीषिणः ॥ ८ ॥
प्रमत्तेष्वभियुक्तेषु दैवेनोपहतेषु च ।
विक्रमास्तात सिध्यन्ति परीक्ष्य विधिवत् कृताः ॥ ९ ॥

अप्रमत्तं कथं रामं विजिगीषुं रणे स्थितं ।
जातकोपं दुराधर्षं प्रधर्षयितुमिच्छसि ॥ १० ॥
समुद्रं लङ्घयित्वा हि घोरं नदनदीपतिं ।
गतिं हनुमतो लोके कश्चित्तर्कयितुमर्हति ॥ ११ ॥
बलान्यपरिमेयानि वीर्याणि च निशाचराः ।
परेषां सहसावज्ञा न कर्तव्या कथञ्चन ॥ १२ ॥
किं च राक्षसराजस्य रामेणापकृतं पुरा ।
आजहार जनस्थानाद्भार्यां यस्य महात्मनः ॥ १३ ॥
खरो यद्यतिवृत्तस्तु रामेण निहतो रणे ।
अवश्यं प्राणिभिः प्राणा रक्षितव्या यथाबलं ॥ १४ ॥
राजपुत्रीनिमित्तं तु महद्भयमुपागतं ।
तस्मात् सीता परित्याज्या कुलार्थे नात्र संशयः ॥ १५ ॥
कुलं राक्षसराज्यं च लङ्कां चेमां सराक्षसां ।
ऐश्वर्यं चैव दुष्प्राप्यं मत्वा सीता प्रदीयतां ॥ १६ ॥
न ते क्षमं वीर्यवता तेन धर्मानुवर्तिना ।
वैरं निरर्थकं कर्तुं दीयतां तस्य मैथिली ॥ १७ ॥
यावन्नाश्वगजाकीर्णां बहुरत्नसमाकुलां ।
पुरीं दारयते तावन्मैथिली तस्य दीयतां ॥ १८ ॥
यावल्लक्ष्मणबाणौघैर्भिन्नप्राकारतोरणा ।
न भस्मीक्रियते लङ्का तावत् सीता प्रदीयतां ॥ १९ ॥

यावत् सुघोरा महती दुर्धर्षा हरिवाहिनी ।
नावस्कन्दति नो लङ्कां तावत् सीता प्रदीयतां ॥ २० ॥
विनश्येत पुरी लङ्का शूराः सर्वे च राक्षसाः ।
रामस्य यदि पत्नी सा न स्वयं प्रतिदीयते ॥ २१ ॥
प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम ।
ब्रवीम्यहं हितं पथ्यं दीयतां तस्य जानकी ॥ २२ ॥

न ते क्षमं वीर्यवता महौजसा
महात्मना धर्मपरेण धीमता ।
निरर्थकं वैरममित्रघातिना
प्रदीयतां दाशरथाय मैथिली ॥ २३ ॥
पुरी विशाला गजवाजिशोभिता
प्रभूतरत्ना वरराक्षसावृता ।
न चेदियं नशति वानरार्दिता
प्रदीयतां दाशरथाय मैथिली ॥ २४ ॥
पुरा शरान् सूर्यमरीचिसंनिभान्
नृपात्मजोऽसौ निशितान् सुपर्वणः ।
सृजत्यमोघान् विशिखान् बधाय ते
प्रदीयतां दाशरथाय मैथिली ॥ २५ ॥
पुरा रणे राघवबाणपीडिता
द्रवन्त्यमी शोणितरक्तमूर्द्धजाः ।

निशाचराः संयति वानरार्दिताः
    प्रदीयतां दाशरथाय मैथिली ॥ २६ ॥
पुरा सुघोरा हरिवाहिनी पुरीम्
    इमामवस्कन्द्य बलात् प्रधर्षिता ।
दुरासदा राघवबाहुपालिता
    प्रदीयतां दाशरथाय मैथिली ॥ २७ ॥
न ते विनश्येन्नगरी सराक्षसा
    सुदुर्लभं जीवितमात्मनश्च ते ।
कुरुष्व सत्यं सुहृदां हितं वचः
    प्रदीयतां दाशरथाय मैथिली ॥ २८ ॥
इमां परित्राहि पुरीं सराक्षसां
    समृद्धमन्तःपुरमग्र्यमेव च ।
त्वदाश्रयं भृत्यजनं च रावण
    प्रदीयतां दाशरथाय मैथिली ॥ २९ ॥
त्यजस्व कोपं कुलकीर्त्तिनाशनं
    भजस्व धर्मं शुभकीर्त्तिवर्धनं ।
प्रसीद जीवेम सपुत्रबान्धवाः
    प्रदीयतां दाशरथाय मैथिली ॥ ३० ॥
स यावदेवेह शरैर्न लक्ष्मणः
    करोति लङ्कां तपनीयभूषितैः ।

महीमिव प्रावृषि शस्यशालिनीं
महेन्द्रस्तोयैः प्रबलैर्विचित्रितां ॥३१॥

न लक्ष्मणेन प्रहिताः शरोत्तमा
नगेषु शैलेषु गजेषु वाजिषु ।
महत्सु वै कङ्कटवर्मसंधिषु
प्रसज्जयेरन्निति मे ध्रुवा मतिः ॥३२॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम अशीतितमः सर्गः ॥

## LXXXI.

विभीषणवचः श्रुत्वा धर्मार्थसहितं हितं ।
मन्त्रिभिः सह मेधावी मन्त्रयामास रावणः ॥ १ ॥
वाक्यविद्वाक्यकुशलो दृप्तो दृप्तसहायवान् ।
राक्षसाधिपतिर्वाक्यं युक्तार्थमिदमाददे ॥ २ ॥
स्वशक्तिं परशक्तिं च देशकालं च तत्त्वतः ।
समीक्ष्यारभते कर्म यः स बुद्ध इति स्मृतः ॥ ३ ॥
अनर्थं सानुबन्धं यो विदित्वा सर्वकर्मसु ।
अर्थमर्थानुबन्धं च पर्येष्यति स पण्डितः ॥ ४ ॥
सुव्यवस्थितमन्त्रेण परमर्माभिघातिना ।
भवितव्यं नरेन्द्रेण न कामवशवर्तिना ॥ ५ ॥
ऐश्वर्यमदमत्तेन सर्वलोकावमानिना ।
अप्रतर्क्यमनिश्चिन्त्यं दैवं कर्म सनातनं ॥ ६ ॥
अर्थानर्थफलं लोके सर्वप्राणिषु वर्तते ।
तत्र यन्मानुषं कर्म न किञ्चिदपरीक्षितं ॥ ७ ॥
यत् तु तन्मानुषादन्यद्दैवं तदसमीक्षितं ।
अर्थानामनुपश्यन्ति गतिं ये बुद्धिचिन्तकाः ॥ ८ ॥
तान् कृतान्तः प्रभुर्भूत्वा यथेष्टमनुवर्तते ।
कथं वानरमात्रेण लङ्का क्लीवं विगाहितुं ॥ ९ ॥

शक्या दैवादृते तस्माद्दिवं सुमहदद्भुतं ।
विपन्नेष्वपि चार्थेषु यस्माद्वृत्तबलाबलाः ॥१०॥
नयतोऽपि वशं यान्ति तस्मान्मन्त्रः परो नयः ।
ब्राह्मणानामिवौङ्कारः प्राधीतानामिहाभवत् ॥११॥
मन्त्रमूलानि कर्माणि तथा राज्ञां विशेषतः ।
अधीतो हि यथौङ्कारः श्रुतिमार्गप्रदर्शकः ॥१२॥
कुरुते तद्वदेवेह मन्त्रः कर्मपरिग्रहे ।
यादृशैर्मन्त्रिभिर्मन्त्रः परिरक्ष्यश्च यादृशैः ॥१३॥
राज्ञो नयवतो मन्त्रः सर्वमेतत् सुनिश्चितं ।
युक्तमष्टाङ्गया बुद्ध्या सौहार्दगुणभूषणं ॥१४॥
अथाभिजनसंपन्नं राजा मन्त्रिणमिच्छति ।
विपरीतस्ततः सर्वो वर्जनीय इति स्मृतिः ॥१५॥
तस्मात् सर्वैर्गुणैर्युक्तैर्भवद्भिः सह मन्त्र्यते ।
अत्रायं सर्वसंकल्पः श्रूयतां निश्चयान्मम ॥१६॥
ऐकमत्यं च भवतां यत् कुर्यादुपरोधनं ।
कार्यं चैकार्थतां चैव परेषां मम चैव हि ॥१७॥
विदित्वा मन्त्र्यतां मन्त्रः सुविनिश्चयलक्षणः ।
न हि कारयितुं शक्यं राज्यं चिरमनामयं ॥१८॥
यः कार्यनिश्चयं कृत्वा विषयान् विषयाधिपः ।
प्राप्तुं कामयते लोके स राज्यफलमश्नुते ॥१९॥

अर्थानर्थौ विमृषता चेष्टमानेन निश्चितं ।
भवितव्यं विशेषेण राज्ञा नित्यं महात्मना ॥ २० ॥
अलक्ष्या हि यथा लोकैर्व्योम्नि चन्द्रार्कयोर्गतिः ।
नक्षत्राणां ग्रहाणां च तथा वृत्तं महात्मनां ॥ २१ ॥
यं च पन्थानमाक्रम्य प्रयाति मनुजेश्वरः ।
तेनेश्वरनिपातेन पथा याति महाजनः ॥ २२ ॥
बलस्य चतुरङ्गस्य नायकानुगतिर्नयः ।
यथा लोके तथा राज्ञो वृत्तानुगमनं नयः ॥ २३ ॥
पर्याप्तं चाप्यभिज्ञानमिह स्वाधीनतां प्रति ।
यत् प्राप्यापीह वैदेहीं न मां संस्पृशते मदः ॥ २४ ॥
अत्र केचित् कृतात्मानस्तापस्विजनधर्षणात् ।
गर्हेयुस्तत्र मे बुद्धिरियं प्रागेव निश्चिता ॥ २५ ॥
तापसानामलङ्कारं वने धारयता कथं ।
वाणचापासिहस्तेन विद्राव्या वनचारिणः ॥ २६ ॥
ननु शान्तात्मभिर्नाम सर्वभूतदयापरैः ।
भवितव्यं फलाहारैर्नित्यं चाश्रमवासिभिः ॥ २७ ॥
सूक्ष्मरक्ताम्बरधरा तप्तकुण्डलधारिणी ।
का द्वितीया यथा सीता वसत्याश्रमवासिनी ॥ २८ ॥
केन नूपुरनिर्घोषाः सकाञ्च्याभरणस्वनाः ।
श्रुतपूर्वा मनुष्येण धर्मार्थं वसता वने ॥ २९ ॥

राक्षसानां बधश्चैव यस्मात् तेन कृतो महान् ।
तस्मात् स्वधर्मचरणाद्विनिवृत्तस्तु राघवः ॥ ३० ॥
राक्षसानां बधादेव गर्ह्यो ह्येष दिवौकसां ।
अविहस्तः स्वविद्यासु संयुगेऽथ पराक्रमे ॥ ३१ ॥
प्रहस्तः प्रथमं वाक्यमिदं वक्तुमुपाददे ।
यत् किञ्चिद्गुणसंपन्नमनुरूपं महात्मनां ॥ ३२ ॥
चेष्टितं सर्वभूतेषु सर्वं तत् त्वयि वर्तते ।
को हि नाम गुणैर्युक्तस्तैस्तैरेव महाबलैः ॥ ३३ ॥
मन्त्रमूलानि कर्माणि राजन्नात्मनि भावयेत् ।
भवन्ति हि विशेषेण नित्यमुन्मत्तचारिणः ॥ ३४ ॥
राजानः प्रसभं लोके समदा इव हस्तिनः ।
न किञ्चिदप्यकर्तव्यं कृतं नापि करिष्यति ॥ ३५ ॥
न ह्येवंलक्षणाद्धर्माद्विचलन्ति नयानुगाः ।
अथ ये सर्वकार्येषु चत्वारः समुदाहृताः ॥ ३६ ॥
उपायाः कार्यसिद्ध्यर्थं तान् निबोध यदीच्छसि ।
साम चोपप्रदानं च भेदो दण्डश्च सर्वशः ॥ ३७ ॥
एते सर्वात्मना राज्ञा प्रयोक्तव्या विशेषतः
तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च ॥ ३८ ॥
दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः ।
दण्डो हीनेषु पात्यस्तु नित्यकालं दुरात्मसु ॥ ३९ ॥

अपकारिषु चैवेह एष शास्त्रविनिश्चयः ।
यदा विक्रमयोगेन रामोऽस्मान् पूर्वमागतः ॥ ४० ॥
कथं बलवता शक्यः कर्तुं दुर्बलसंश्रयः ।
ननु नैव वयं युक्तास्तेन सामादिभिर्गुणैः ॥ ४१ ॥
दुर्बलेन बलैर्युक्ताः सर्वयत्नैः प्रयाचितुं ।
तत्त्वं प्रतीहि पर्याप्तं दण्ड एवात्र कारणं ॥ ४२ ॥
उपायांस्त्रीनतिक्रम्य यद्दण्डपर एव सः ।
एवं कृते यथान्यायं दण्ड एवात्र साधकः ॥ ४३ ॥
सुखं चैव हि सोऽर्थो नो ह्यनुरूपश्च सर्वथा ।
अथवा वै परगुणां बुद्धिं प्रत्यादिशन्ति नः ॥ ४४ ॥
सामादीनामितः कर्तुं भवेद्युक्तं प्रवर्तनं ।
तत्रापि सुमहान् दोषः सर्वथा प्रतिभाति मे ॥ ४५ ॥
यत् परः कृतवान् पूर्वं प्रसभं दूतविग्रहं ।
शास्त्रविद्वाक्यकुशलः सुहृत् सप्रतिभः शुचिः ॥ ४६ ॥
कुले महति चोत्पन्नो दूत एष सतां मतः ।
विपरीतगुणः सोऽयं रामेण प्रहितश्चरः ॥ ४७ ॥
आत्मकार्यविघातार्थमनयं संप्रदर्शयन् ।
कुर्वतश्चेदृशं कर्म कथं कार्यं हि शासनं ॥ ४८ ॥
युद्धकामसहायस्य बुद्धिमोहादिहेश्वर ।
तस्मादभ्यर्थितः श्रीमान् युद्धकालोऽयमागतः ॥ ४९ ॥

चिरात् प्रभृति योधानामनिशं युद्धकाङ्क्षिणां ।
गदाश्चापानि शक्तीश्च नूनं परश्वधांश्च नः ॥५०॥
युद्धेधाद्धर्तुमिच्छन्ति योधा विक्रमभूषणाः ।
सुव्यक्तं तृषिता भूमिः शोणितं पातुमिच्छति ॥५१॥
हतानां संयुगेऽस्माभिर्वानराणामिहेश्वर ।
लक्ष्मणः सह रामेण सुव्यक्तं शयनं गतः ॥५२॥
भवत्यधिगतः काले दुःस्वप्नप्रतिबोधनः ।
कबन्धनिकरा भूमिः शोणितार्द्रविलेपना ॥५३॥
हतैर्योधैः सुदर्शनैर्नूनं हसितुमिच्छति ।
व्यादेशः सर्वयोधानामद्यैव क्रियतामिह ॥५४॥
येन यः संयुगे राजन् हन्तव्यः समरे रिपुः ।
उद्यताभिर्गदाभिश्च राक्षसैर्बाहुशालिभिः ।
बलं तालवनाकारं भवत्वद्भुतदर्शनं ॥५५॥

इत्यार्षे रामायणे सुन्दरकाण्डे प्रहस्तवाक्यं नाम
एकाशीतितमः सर्गः ॥

## LXXXII.

महान् बुद्धौ च युद्धे च यातुधानोऽब्रवीद्वचः ।
इदं मतिमतां मध्ये मतियुक्तं महोदरः ॥ १ ॥
विस्पष्टं राजचन्द्रेण बुद्धिरश्मिमयं महत् ।
यदुक्तं तेन तत् सर्वं संदिग्धमिव भाषितं ॥ २ ॥
संस्कृतं हेतुसंपन्नमर्थवच्च यदुक्तवान् ।
प्रहस्तस्तद्वचः सर्वमस्मद्वाक्यैकतां गतं ॥ ३ ॥
ममापि वचनं राजन् ब्रुवतः श्रोतुमर्हसि ।
प्रागेव हि मया बुद्ध्या बहुधा तत् समीक्षितं ॥ ४ ॥
सर्वेषामेव नः सर्वमेतत् संविदितं यथा ।
भिन्नं ये मन्त्रिणो मन्त्रमन्योन्ये नाभिसंहितं ॥ ५ ॥
संहिता ह्यनुवर्तन्ते प्रीतियोगात् परस्परं ।
भिन्ना नैकार्थतां यान्ति कार्येषु सुहृदः सदा ॥ ६ ॥
परस्परमते राजंस्ते हि चित्तानुवर्तिनः ।
अभिन्नत्वं तु राजेन्द्र भवत्यैकार्थतां प्रति ॥ ७ ॥
यदि निःश्रेयसो मन्त्रस्तत्परं भूतिलक्षणं ।
एवं च मन्त्रभेदश्च संयोगश्च न शोभनः ॥ ८ ॥
उभौ ह्येतौ महादोषौ राज्ञां मन्त्रविनाशनौ ।
हेतुभिर्भज्यमानैश्च सविशेषैः परीक्षितः ॥ ९ ॥

आश्रावितो विशुद्धार्थो मन्त्रः स परमो मतः ।
युद्धकालमिमं सर्वे वयं विद्मः सकारणं ॥१०॥
तस्माद्युद्धविधौ राजन् विचेतव्यं बलाबलं ।
के वयं के परे युद्धे कानि प्रहरणानि च ॥११॥
देशकालबलः कश्च केषामिह सुखावहः ।
परे च निरधिष्ठानाः साधिष्ठानाश्च यद्वयं ॥१२॥
एष चाभ्यधिकोऽस्माकं गुणो गुणवतां वर ।
रक्षसां रजनीकालः संयुगेषु प्रशस्यते ॥१३॥
तस्माद्राजन् निशायुद्धे जयोऽस्माकं न संशयः ।
तत्र योधैर्युयुत्सद्भिर्निर्गतैः शस्त्रकोविदैः ॥१४॥
रात्रियुद्धं महाराज प्रयोक्तव्यं विशेषतः ।
कर्तॄणां कारणं हेतुर्गुणयुक्तं गुणावहं ॥१५॥
मन्त्रश्चाभ्यधिको युद्धे चारित्र्यं महतामिव ।
एवं देशश्च कालश्च शक्तिश्च बहुभिर्गुणैः ॥१६॥
अस्माकं सर्वमस्तीह तस्माद्युद्धं विधीयतां ।
शस्त्राणां कवचानां च कृत्वा सम्यगुपार्जनं ॥१७॥
युद्धमेवाभिगच्छामो वयं गुणसमन्विताः ।
निहतानां रणे तावद्वानराणामिहेश्वर ॥१८॥
पिबन्तु रुधिरं स्वादु राक्षसास्तृषिता इव ।
राघवस्य रणे तावद्रणशौण्डैः समाहितं ॥१९॥

भवत्वधिरथैः क्षिप्रमाननं रुधिरोक्षितं ।
अभयं याचमानैश्च कूजद्भिश्च परीक्षितैः ॥ २० ॥
वानरैर्लक्ष्यतां भूमिः किञ्चित् प्रमथितैर्मया ।
यदि व्यूढेन वा व्यूह्य योद्धव्यं वा यथातथं ।
तत् तदद्यैव नः सर्वमिहैवास्तु विनिश्चितं ॥ २१ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे महोदरवाक्यं
नाम द्व्यशीतितमः सर्गः

# सुन्दरकाण्डं

## LXXXIII.

वृहस्पतिसमो बुद्ध्या समरे च दुरासदः ।
विरूपाक्षः क्रमापेक्षी ततो वचनमब्रवीत् ॥ १ ॥
रथिनः सादिनश्चैव गजारोहाश्च राक्षसाः ।
पत्तयश्च महाकाया बलमेतच्चतुर्विधं ॥ २ ॥
व्यूहं व्यूहेन विधिना राक्षसैः सुमहाबलैः ।
न निवर्तयितुं शक्यं वानरैरिति मे मतिः ॥ ३ ॥
स्थैर्यं च चलचित्तेषु वानरेषु न विद्यते ।
न च निश्चलचित्तत्वमस्ति तद्वानरे बले ॥ ४ ॥
गर्जितास्फोटितैस्तत्र बहुभिश्च करस्वनैः ।
अनवस्थितचित्तानां द्रवन्तीं पश्य वाहिनीं ॥ ५ ॥
राक्षसैर्निहतानां च शरीराणि विभागशः ।
दृश्यन्तां वानरेन्द्राणां प्लवा इव विसर्पिणः ॥ ६ ॥
रक्षोमध्यगताः सन्तु समरे तत्र वानराः ।
मेघानामन्तरगताः सूर्यस्येव गभस्तयः ॥ ७ ॥
ताडितानां विशीर्णानां त्रिमला दन्तपङ्क्तयः ।
वानराणां प्रदृश्यन्तां तुषारनिकरा इव ॥ ८ ॥
तत्र तत्र च राजेन्द्र वानरैर्निहतैश्चिता ।
भवत्वधिकया लक्ष्म्या वल्मीकशवलेव भूः ॥ ९ ॥

राक्षसा हि सुयुद्धेन भवन्त्वद्य रणाजिरे ।
आहारकल्पिताः सर्वे युगपत् कपिभोजनाः ॥ १० ॥
उद्भूतं धूमसंकाशं रणसंमर्दजं रजः ।
शत्रूणां प्रशमं यातु हतानां शोणिताम्बुना ॥ ११ ॥
राक्षसैर्विक्षताङ्गाश्च वानराः प्रस्तरा भुवि ।
रुधिरस्रवणैः सन्तु गैरिकाणामिवाकराः ॥ १२ ॥
अस्माकं शिविरे तावन्निशिताः शस्त्रपाणयः ।
शत्रूणां जीवपुष्पाणि विचिन्वन्तु नगेष्विव ॥ १३ ॥
समरे वानराः सन्तु शतशः शस्त्रविक्षताः ।
शोणिताम्बुपरिक्लिन्नाः सनिर्यासा इव द्रुमाः ॥ १४ ॥
हतैः शत्रुशरीरैश्च शतशोऽथ गतासुभिः ।
भारार्त्ता भूमिरस्त्वाशु किंशुकाकरसंनिभैः ॥ १५ ॥
शाखामृगाणां समरे शरीरं शस्त्रसंकुलं ।
वायुना कर्णिकाराणां वनमुन्मथितं यथा ॥ १६ ॥
आदेशः क्रियतां तावन्महावीर्य महारणे ।
यस्तत्र प्रवरः शत्रुर्हन्तव्यः स मया विभो ॥ १७ ॥
तं च हत्वा हनिष्यामि ये तत्र समनन्तराः ।
भविष्यन्ति द्विषन्तो मे ये च तत्र पदानुगाः ॥ १८ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विरूपाक्षवाक्यं
नाम त्र्यशीतितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXXIV.

धर्मे चार्थे च कुशलो धैर्येण च समन्वितः ।
अब्रवीन्मधुरं वाक्यमिदं भूयो विभीषणः ॥ १ ॥
यत् प्रियं च हितं चैव सानुबन्धं च सर्वशः ।
ऊचुस्तन्मन्त्रिणो वाक्यं बहु चैव विशेषतः ॥ २ ॥
प्राप्य कार्यं गरीयस्तु प्रियमुत्सृज्य दूरतः ।
हितमेव हि वक्तव्यं सुहृदा मन्त्रिणा सदा ॥ ३ ॥
तव राजेन्द्र विस्तीर्णैर्गुणैर्विश्रम्भतां गतः ।
इममर्थं प्रवक्ष्यामि हितबुद्ध्या परीक्षितं ॥ ४ ॥
इह धर्मार्थकामानामवाप्तिफलमिष्यते ।
तत्रार्थः सह कामेन निरीक्ष्यो धर्मचक्षुषा ॥ ५ ॥
परित्यज्य हि यो धर्ममर्थमर्थाय पश्यति ।
कामं वा कामलाभाय न स बुद्धिषु बुद्धिमान् ॥ ६ ॥
मन्त्रितोऽयं बहुविधो निःसारः सारदर्शिभिः ।
अमात्यैस्तव यो मन्त्रः संनियोगाद्विगर्हितः ॥ ७ ॥
परदाराभिमर्षं तु को धर्म इति वर्णयेत् ।
मतिमान् राजमन्त्रेषु यथावत् कृतनिश्चयः ॥ ८ ॥
यत् त्विदं कथ्यते रामकृतं व्युत्थितलक्षणं ।
तत्र किं लक्ष्यते रामे धर्माद्व्युत्थितलक्षणं ॥ ९ ॥

यदा च भवनाद्रामश्चापपाणिर्विनिर्गतः ।
ज्ञात्वमेवाभिसंधाय धर्माद्विचलितः कथं ॥ १० ॥
यदि तस्य व्यतिक्रान्तं भवेद्रामस्य धीमतः ।
क्रियातस्तस्य दोषो हि न भवेद्वनवासिनः ॥ ११ ॥
यथा हि बलवान् कश्चिदाहारान् द्विगुणानपि ।
भुङ्क्त्वा जरयते तद्वद्रामः पापविनाशनः ॥ १२ ॥
एवं कृत्वा मम मतं यद्रामः स्वपरिग्रहं ।
प्राप्नुयाद्गुणसंपन्नस्त्वां प्राप्य सुमहाबलं ॥ १३ ॥
त्वामवाप्य गुणैर्युक्तं को हि न प्राप्नुयादिह ।
त्वत्तः प्रीतिकरं राजन् गुणहीनोऽप्यसज्जनः ॥ १४ ॥
कार्यमात्मानुरूपं च धर्मो वा यदि रक्ष्यते ।
त्वत्प्रसादादियं सीता राजन् मोक्षणमर्हति ॥ १५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे पुनर्विभीषणवाक्यं
नाम चतुरशीतितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXXV.

विभीषणवचः श्रुत्वा बलवान् राक्षसेश्वरः ।
अभवत् क्रोधसंरक्तः संध्यागत इवांशुमान् ॥ १ ॥
नेत्रे प्रकृतिताम्रे तु भूयस्ताम्रत्वमागते ।
ददृशाते सुभीमे वै शनैश्चरबुधाविव ॥ २ ॥
क्रोधं तस्यानुपश्यन्तस्तीव्रं सक्रोधनस्य ते ।
शीलज्ञाः सचिवाः सर्वे बभूवुर्जातसाध्वसाः ॥ ३ ॥
अथ रोषाद्विनिष्पिष्य भृशं करतले करं ।
अब्रवीद्रावणः क्रोधाद्विभीषणमिदं वचः ॥ ४ ॥
परेषां गुणसंस्कारं मम चानर्थबुद्धितां ।
सर्वथा यद्भवानाह प्रमाणं मम नैव तत् ॥ ५ ॥
अकृत्वानुनयं तावत् सद्भिर्युक्तैः परस्परं ।
प्रयोक्तुं हेतुसंपन्नो विधिः कार्यो विशेषतः ॥ ६ ॥
अभिज्ञाः सर्वकार्येषु मतिपूर्वं महाबलं ।
हरन्त्यभ्यधिकं यत्नान्न तु मोहान्मुमूर्षवः ॥ ७ ॥
उत्प्रेक्ष्यामो वयं तावन्मतिमन्तं विभीषणं ।
सर्वार्थेषु पराभूता गुरुं शिष्यगणा इव ॥ ८ ॥
यन्मौर्ख्यं यच्च कार्पण्यं यः स्तम्भो यामनस्विता ।
योऽधर्मः स च तेऽधर्मस्तमवाप्य महीपतिं ॥ ९ ॥

यथा पतङ्गो मुदितो मोहाद्विशति पावकं ।
क्षिप्रमात्मविनाशाय तद्व्यक्तं शूरलक्षणं ॥ १० ॥
शास्त्रवादानतिक्रम्य यो हि कार्यं महापदि ।
हठेनेच्छति निर्णेतुं तद्व्यक्तं नयलक्षणं ॥ ११ ॥
आकाशगमनादीनां सपक्षस्येव चेष्टने ।
ध्रुवमस्ति फलं किञ्चिच्चिन्तया सिद्धिलक्षणं ॥ १२ ॥
व्यक्तं नायं विशेषज्ञः सुनयापनये जनः ।
अतीन्द्रियमतिं प्राप्य गुणयुक्तं विभीषणं ॥ १३ ॥
यदि शूराः परे युद्धे वयं समरभीरवः ।
क्रियते किं न कार्पण्यात् प्रसभं शत्रुसंश्रयः ॥ १४ ॥
प्रकृतिः शाश्वती चैषा भीरूणामल्पचेतसां ।
युद्धकाले भवत्येव त्वद्विधानां दुरात्मनां ॥ १५ ॥
को हि नाम महासत्त्वः पूर्वमाधर्षितः परैः ।
दीनं वचनमादद्याद्वर्जयित्वा विभीषणं ॥ १६ ॥
किमत्रोक्ता बहुविधं सर्वथायं विभीषणः ।
योग्योऽस्माकं भयाद्दीनो न मन्त्रे न च विक्रमे ॥ १७ ॥
अवश्यं संविचेतव्या युद्धे परमभीरवः ।
ग्रन्थिभूता महादोषाः शूराणां शौर्यनाशनाः ॥ १८ ॥
युद्धं घोरमसंप्राप्य यस्य हि व्यथते मनः ।
कथं समरमासाद्य स भवेत् पूज्यविक्रमः ॥ १९ ॥

निर्वीर्या ये निरुत्साहाः शत्रुभेदे न शोभनाः ।
तेषामेवंविधा बुद्धिर्यादृशी तव कातरा ॥ २० ॥
यदि दर्पं परित्यज्य रामो मां शरणं व्रजेत् ।
किं तदस्ति सतां कार्यं यन्न कुर्युः प्रसादिताः ॥ २१ ॥
वैकृत्यं परिकर्तव्यं शत्रुपक्षे विशेषतः ।
दया सर्वात्मना कार्या भवद्भिः शरणागते ॥ २२ ॥
एवं कृत्वा न योगोऽस्ति विषस्य रुधिरस्य च ।
संनिपातः समागन्तुमतः संयुगमिष्यते ॥ २३ ॥
समर्थश्चाहमेवैको रणे रामं सलक्ष्मणं ।
समरे तेजसा दग्धुं कक्षमग्निरिवोत्थितः ॥ २४ ॥
निश्चयः क्रियतां युद्धे भवद्भिर्युद्धशालिभिः ।
सदैवापसदं दीनं वर्जयित्वा विभीषणं ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे रावणवाक्यं
नाम पञ्चाशीतितमः सर्गः ॥

## LXXXVI.

ततः सागरगम्भीरः सत्त्ववान् विजितेन्द्रियः ।
अब्रवीद्रावणं धीमान् पुनरेव विभीषणः ॥ १ ॥
एतदेव विनाशस्य लक्षणं ब्रुवते बुधाः ।
धर्मिष्ठं वाक्यमुत्सृज्य कापथेन प्रवर्तनं ॥ २ ॥
अधर्मोऽयं महामोहाद्भवद्भिः परिगृह्यते ।
जयश्चैव हि दुष्प्राप्यः प्राप्तुं कलुषबुद्धिना ॥ ३ ॥
निमित्तं घननादस्य विस्तीर्णा विद्युतो यथा ।
अधर्मसहितं प्राप्य जयः कस्य सतां भवेत् ॥ ४ ॥
इह च प्रेत्य चावेक्ष्य सद्भिर्लक्षणलक्षितः ।
दुस्तरः प्राकृतैर्धर्मो बाहुभ्यामिव सागरः ॥ ५ ॥
इच्छाद्वेषादयो भावा नित्यमात्मगुणा यथा ।
तथा धर्मगुणाः कृत्स्नसुखानि सुखिनामिह ॥ ६ ॥
पर्याप्तं चाप्यभिज्ञानं धर्मस्य परिरक्षणे ।
यदल्पसुखिता लोकाः सर्वे भूयिष्ठदुःखिताः ॥ ७ ॥
किं ततः परमं किञ्चित् सुलभं फलमुत्तमं ।
बुद्ध्यापेक्षी च भूतानां सुखी नचापि धर्मतः ॥ ८ ॥
यश्चापि हि तपःश्लाघी न मनः परितापयेत् ।
यथा हि सुखसंयाने नौर्निमित्तमिवाम्भसि ॥ ९ ॥

लोकानां सुखसंयाने तथा धर्मः स्वनुष्ठितः ।
प्रकृतीनां प्रधानश्च यथा नेता भवानिह ॥१०॥
तथा धर्मार्थकामानां धर्मः सम्यगनुष्ठितः ।
यथा ह्यर्थपरित्यागादर्थः संप्राप्यते सुखं ॥११॥
तथा स्वनिश्चयायत्तो धर्मः सुखकरः सतां ।
तद्भावफललुब्धेन नातिदूरनिरीक्षिणा ॥१२॥
न शक्यश्चरितुं धर्मः शुभो ह्यकृतबुद्धिना ।
यथा ह्यर्थश्च कामश्च मनसः प्रीतिवर्धनौ ॥१३॥
तथा क्षमा च धर्मश्च सद्य एव सुखावहौ ।
सुदुश्चरत्वाद्धर्मस्य केचिद्धर्मपरायणाः ॥१४॥
कामे चार्थे च लुब्धानामन्त एव न विद्यते ।
यत्र नेता च गुणवान् सहायाश्च गुणान्विताः ॥१५॥
तत्र धर्मार्थकामानां भवेत् सम्यक् परीक्षणं ।
इह नेता च विगुणः सहायाश्चानुवर्तिनः ॥१६॥
एवं कृत्वा किमप्येतद्वर्तते मन्त्रसंज्ञकं ।
अर्थानर्थाश्च यत्रासन् संशयश्च परीक्ष्यते ॥१७॥
स मन्त्र इति विज्ञेयः शेषास्तु खलु विक्रियाः ।
मन्त्रं समुपनीतेन सुहृदा बुद्धिदर्शिना ॥१८॥
न युक्तं कैतवं कर्तुं हिताकारं विषादनं ।
त्यक्त्वा कामपरं मन्त्रे स्वधर्मपरिवर्जितं ॥१९॥

राममेव गमिष्यामि नित्यं धर्मपरायणं ।
सुरासुरजयी राजा स हि नित्यं मया श्रुतः ॥ २० ॥
संश्रितानामसंत्यागी शरण्यो द्विषतामपि ।
चित्रमेतदयं त्यक्त्वा कृत्स्नं स्वजनमातुरः ॥ २१ ॥
धर्महेतोर्गमिष्यामि सोऽहं मानुषसंश्रयं ।
एवं कृत्वा मयि गते यद्यस्ति गुणदर्शिता ।
क्रियतां निश्चयः सम्यङ् नयबुद्धिनिमित्तजः ॥ २२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं नाम
षडशीतितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXXVII.

एवं ब्रुवाणे राजेन्द्रो भ्रातरि तु विभीषणे ।
उत्पपात सनिस्त्रिंशस्ततः क्रोधात् स रावणः ॥ १ ॥
महाविद्युद्गुणः कृष्णः सनाद इव तोयदः ।
आसनात् तूर्णमुत्पत्य पदा चाभिजघान तं ॥ २ ॥
रावणः क्रोधसंरागादासनस्थं विभीषणं ।
अभवत् पतितो भूमावासनात् स विभीषणः ॥ ३ ॥
वज्रपातहतः श्रीमान् विशीर्ण इव पर्वतः ।
अभवन्मन्त्रिणां तेषां विवादमनुपश्यतां ॥ ४ ॥
पूर्णचन्द्रे ग्रहग्रस्ते प्रजानामिव संभ्रमः ।
प्रहस्तः सासिहस्तं तं कुपितं राक्षसेश्वरं ॥ ५ ॥
शनैर्निवारयामास कोषे चाप्यकरोदसिं ।
ततः प्रकृतिमापन्नः शुशुभे राक्षसेश्वरः ॥ ६ ॥
निवृत्तवेलः समये प्रसन्न इव सागरः ।
परिवार्यासनस्थं च रावणं तेऽवतस्थिरे ॥ ७ ॥
मेरोरिव महाशृङ्गं शिखराः पार्श्वतोऽपरे ।
निःशब्दमभवत् कृत्स्नमथ तन्मन्त्रिमण्डलं ॥ ८ ॥
परिवेश इवालक्ष्यः शशिनश्चारुदर्शनः ।
अभवच्चोच्चसंरागो भूयिष्ठं स विभीषणः ॥ ९ ॥

अधराग्निरिवालक्ष्यः सम्यग्दीप्तसमन्वितः ।
अथ कोपाग्निमुद्भूतं शमयन् स विभीषणः ॥ १० ॥
चिन्तयामास धर्मात्मा मनसा हितमात्मनः ।
मार्दवेन च संपन्नस्तेजसा चैव रञ्जितः ॥ ११ ॥
सदश्व इव मर्यादां कौलीनां नात्यवर्तत ।
स मुहूर्त्तं विनिश्चित्य मुहुः कृत्वा च निश्चयं ॥ १२ ॥
अब्रवीद्वाक्यमुत्थाय धर्मयुक्तं विभीषणः ।
मम धर्मार्थमुत्थानं न कामक्रोधसंज्ञितं ॥ १३ ॥
तस्मात् पादप्रहारोऽपि नायं मम पराभवः ।
तस्मिँल्लोके महादोषाः शोच्या धर्मविवर्जिताः ॥ १४ ॥
येषामभिजनं प्राप्य मतिः क्रोधसमन्विता ।
महत् सर्वविनाशस्य लक्षणं प्रतिभाति मे ॥ १५ ॥
अनयाद्यदयं सर्वैर्भवद्भिः परिगृह्यते ।
शस्त्रमेकं शरीरं हि रणभूमौ विनाशयेत् ॥ १६ ॥
हन्यात् सगणमात्मानं बुद्धिः कलुषचेतसां ।
न हि तं कुरुते दोषं निशितं शस्त्रमुत्तमं ॥ १७ ॥
समुत्थाय यथा दोषाः प्राणिनामल्पचेतसां ।
अनागतपरिज्ञानमर्थस्य कुरुते बुधः ॥ १८ ॥
प्राप्तमर्थमनर्थं च कश्चिदेवावबुध्यते ।
बुद्ध्या ह्यर्थमनर्थं च पश्यन्तीह महागुणाः ॥ १९ ॥

यदर्थे सति नोत्सेकं न भजन्त्यापदि व्यथां ।
कुरुते दूरदर्शी हि सम्यगर्थपरिग्रहं ॥ २० ॥
अनर्थार्थविनिर्मोक्षं समवाप्य महापदं ।
न च दोषं नियच्छन्ति सम्यग्दृष्टपरावराः ॥ २१ ॥
प्रमाणानीह कृत्स्नानि प्रमाणानि महात्मनां ।
अनभिज्ञः प्रमाणानां केवलं दोषमाश्रितः ॥ २२ ॥
शोकाम्भसि महाघोरे स निमग्नः प्रदृश्यते ।
ऐतिह्यमनुमानं च प्रत्यक्षमपि चागमं ॥ २३ ॥
ये हि सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता ।
उपस्थितविनाशं त्वामात्मवंशविनाशनं ॥ २४ ॥
क्रोधाद्यास्यामि हित्वाद्य जलौघ इव सागरं ।
तव भिन्नां मतिं ज्ञात्वा क्रूरां धर्मविदूषणां ॥ २५ ॥
सर्वथासि मम त्याज्यः पङ्कमग्न इव द्विपः ।
दोषपङ्कनिमग्नं त्वामयशः पललावृतं ।
सर्वथा मानुषो रामस्त्वामन्तमुपनेष्यति ॥ २६ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम सप्ताशीतितमः सर्गः ॥

## LXXXVIII.

विभीषणवचः श्रुत्वा रावणः क्रोधमूर्छितः ।
अब्रवीत् परुषं वाक्यं भ्रातरं कालचोदितः ॥ १ ॥
वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण च ।
न तु मिथ्याप्रतिज्ञेन संवसेच्छत्रुसेविना ॥ २ ॥
जानामि शीलं ज्ञातीनां सर्वकार्येषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥
प्रधानं साधनं वैद्यं धर्मज्ञं सज्जने रतं ।
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४ ॥
नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयो नो भयावहाः ॥ ५ ॥
श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् ।
पाशहस्तान् नरान् दृष्ट्वा तान् शृणु त्वं विभीषण ॥ ६ ॥
नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ७ ॥
उपायं ते प्रवक्ष्यन्ति ग्रहणे नो न संशयः ।
सर्वेभ्यो भयेभ्यो ज्ञातिभयं सदा कष्टतमं मतं ॥ ८ ॥
संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
चापल्यं स्त्रीषु संभाव्यं संभाव्यं ज्ञातितो भयं ॥ ९ ॥

न ते प्रियमिदं पाप यदहं लोकसत्कृतः ।
ऐश्वर्यमभियातश्च रिपूणां मूर्ध्नि च स्थितः ॥१०॥
उक्तवाक्ये दशग्रीवे जातकोपो विभीषणः ।
मन्त्रिमध्ये स्थितः श्रीमानिदं वचनमब्रवीत् ॥११॥
सुहृदा ह्यर्थकामेन वाक्यमुक्तं निशाचर ।
न गृह्णन्ति नरा मूढाः कालस्य वशमागताः ॥१२॥
अन्यस्तु यदि मामेवं ब्रूयाद्वाक्यं निशाचर ।
सोऽस्मिन् मुहूर्त्ते न भवेत् त्वां तु धिक् कुलपांशुलं ॥१३॥
इत्युक्त्वा परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात सनिस्त्रिंशश्चतुर्भिः सचिवैः सह ॥१४॥
अब्रवीच्च ततो भूयो जातकोपो विभीषणः ।
अन्तरीक्षगतः श्रीमान् भ्रातरं राक्षसेश्वरं ॥१५॥
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥१६॥
यो हि धर्ममुपाश्रित्य हित्वा भर्तुः प्रियाप्रियं ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥१७॥
स त्वं भ्रातासि मे राजन् ब्रूहि त्वं यद्यदिच्छसि ।
सर्वं ते परुषं वाक्यं क्षमिष्यामि मुमूर्षतः ॥१८॥
शूराश्च बलवन्तश्च कृतास्त्राश्च नराः सदा ।
कालाभिपन्नाः सीदन्ति सिकतासेतवो यथा ॥१९॥

स्वहितं हितवाक्येन वाक्यमुक्तं दशानन ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥
बद्धस्त्वं कालपाशेन सर्वभूतापहारिणा ।
विनश्यमानं त्यक्त्वा त्वां प्रदीप्तं शरणं यथा ॥ २१ ॥
राममेव गमिष्यामि शरणं राक्षसेश्वर ।
चतुर्भिरेतैः सहितः सचिवैः क्षणदाचरैः ॥ २२ ॥
दीप्तपावकसंकाशैः शरैः कनकभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं रणे ॥ २३ ॥
आत्मानं परिरक्षस्व पुरीं चेमां सराक्षसां ।
खरमारीचवद्धत्वा नूनं त्वं यमसादनं ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २४ ॥
निवार्यमाणस्य मया हितैषिणा
न रोचते ते वचनं निशाचर ।
परीतकाला हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितं ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे पुनर्विभीषणवाक्यं
नाम अष्टाशीतितमः सर्गः ॥

# सुन्दरकाण्डं

## LXXXIX.

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
क्रोधसंरक्तनयनं संध्यायामिव तोयदं ॥ १ ॥
भुजङ्गकुटिलां रोषाद्भ्रूकुटीं भृशदारुणां ।
कृत्वासीनं प्रपश्यन्तं प्रासादस्थममर्षणं ॥ २ ॥
अभिवाद्य ततो भूयः क्रोधपर्याकुलेक्षणः ।
चतुर्भिः सचिवैः सार्द्धं निश्चक्राम विभीषणः ॥ ३ ॥
स मातरं पुनर्दृष्ट्वा सर्वमेव निवेद्य तत् ।
जगामाकाशमाविश्य कैलासं पर्वतोत्तमं ॥ ४ ॥
यत्र वैश्रवणो राजा तिष्ठत्यमितविक्रमः ।
गुह्यकैर्बहुभिः सार्द्धं यक्षैश्चैव महाबलैः ॥ ५ ॥
अथ प्रधानो धर्मात्मा लोकानामीश्वरः प्रभुः ।
ततः सभायां देवस्य राज्ञो वैश्रवणस्य सः ॥ ६ ॥
धनाध्यक्षसभां देवः प्राप्तो हि वृषभध्वजः ।
उमासहायो देवेशो गणैश्च बहुभिर्वृतः ॥ ७ ॥
अवतीर्य वृषात् तूर्णं महितः शूलधृग् विभुः ।
गिरिस्तस्य महातेजाः प्रविष्टस्तु सभां हरः ॥ ८ ॥
ऋद्ध्या सहायगुक्तश्च तथा वैश्रवणः स्वयं ।
अन्योन्यं तौ समालिङ्ग्य उपविष्टावुभावपि ॥ ९ ॥

सभायां तत्र तौ देवौ ते च देवा यथाक्रमं ।
उपविष्टा गणाश्चैव यक्षाश्च सह गुह्यकैः ॥१०॥
अक्षद्यूतं ततस्ताभ्यां प्रवृत्तं समनन्तरं ।
एतस्मिन्नन्तरे तत्र राक्षसेन्द्रं विभीषणं ॥११॥
दृष्ट्वा पौलस्त्यमायान्तं शिवः प्राह धनेश्वरं ।
अयं विभीषणः प्राप्तः शरणं तव पार्थिव ॥१२॥
मन्युनाभिप्लुतो वीरो राक्षसेन्द्रविमानितः ।
सिंहासनस्य भङ्गेन सिंहासनरणेन च ॥१३॥
परुषाणां च वाक्यानां तस्मिन् बुद्धा रणेन च ।
इह प्राप्तस्तव ह्येष वस्तुं कृतमतिस्त्वयि ॥१४॥
सर्वथा ह्येष दुर्धर्षः क्षिप्रमद्यैव वीर्यवान् ।
रामाभ्यासं महावीर्यो गच्छतां तव शासनात् ॥१५॥
ततो यातं नरव्याघ्रः स रामः शत्रुतापनः ।
अभिषेक्ष्यति राज्येन राक्षसानां विभीषणं ॥१६॥
सख्ये चैव तदा रामः सुग्रीवश्च तथा कपिः ।
वरयिष्यति दुर्धर्षो रणे वीरं विभीषणं ॥१७॥
ततस्तु संगता ह्येते दीप्तास्त्रय इवाग्नयः ।
लोककार्यं करिष्यन्ति शिवं हि विबुधैः सह ॥१८॥

सविद्युतो विप्रगणैरभिष्टुता
वहन्ति यज्ञं सुरभूतये शुभं ।

सुसंस्कृतं हव्यवहाः क्रतौ हुतं
तथा त्रयो रामविभीषणादयः ॥ १९ ॥
कपिप्रवीरश्च सुसंमतो बली
विभीषणेनानुगतो महात्मा ।
महद्धि लोके ह्यसुरामरे यथा
तथा ह्ययं कर्म करिष्यतेऽनघ ॥ २० ॥
एवं संजल्पतस्तत्र संप्राप्तश्च विभीषणः ।
जानुभ्यां पतितो गत्वा शिरसा ह्यवनीं गतः ॥ २१ ॥
तं प्राह शङ्करः श्रीमान् स च वैश्रवणः प्रभुः ।
उत्तिष्ठोत्तिष्ठ भद्रं ते मा मन्युं कुरु राक्षस ॥ २२ ॥
श्रियं प्राप्नुहि दुर्धर्ष दशग्रीवादनन्तरं ।
गच्छ सौम्य गुणारामो रामो यत्र महाभुजः ॥ २३ ॥
सुग्रीवो वानरश्चैव लक्ष्मणश्च प्रतापवान् ।
इतो गतं महातेजा रामः शस्त्रभृतां वरः ॥ २४ ॥
अभिषेक्ष्यति राज्येन लङ्कायां शत्रुघातिनं ।
रावणं च रणे रामः सगणं पुरुषर्षभः ॥ २५ ॥
निहनिष्यति धर्मात्मा प्रसह्य रणमूर्द्धनि ।
तं निहत्य महाबाहुः सीतामादाय शत्रुहा ॥ २६ ॥
स्वपुरीं यास्यते धीमान् सह सौमित्रिणा प्रभुः ।
लङ्कायामीश्वरं चैव भवन्तं विबुधोपमं ॥ २७ ॥

स्थापयिष्यति धर्मात्मा न चिराय महायशाः ।
ततो वैश्रवणो राजा पौलस्त्यकुलनन्दनं ॥ २८ ॥
विभीषणं राक्षसेन्द्रं तत्र प्राह महाद्युतिः ।
त्वं राजा सर्वथा वीर लङ्कायां प्रस्थितस्तदा ॥ २९ ॥
भविष्यस्यचिरादेव दृष्टमेतत् पुरातनं ।
स त्वं धर्मभृतां श्रेष्ठ क्षिप्रमद्यैव राघवं ॥ ३० ॥
भवाय सर्वभूतानामभवाय च रक्षसां ।
उपगच्छ नरव्याघ्रमात्मनश्च विभूतये ॥ ३१ ॥
त्वं रामसहितः क्षिप्रं कुरु कार्यं दिवौकसां ।
ऋषीणां च महाभाग ये चान्ये धर्ममाश्रिताः ॥ ३२ ॥

अधर्मशीलं निरपत्रपं यथा
निरङ्कुशं वैरमदानुगामिनं ।
तपश्चराणां मृदुसौम्यशीलिनां
सदा विरुद्धं जहि रावणं तथा ॥ ३३ ॥
महाध्वरे सोमविघातने यथा
तथा च चारादिविघातने रतं ।
दशाननं पापरतं यथा स्थितं
प्रियेऽनुजे देवगणे च नित्यं ॥ ३४ ॥
तथा विमार्गे तु यथा स्थितं ध्रुवं
न सत्पथं दूरत एव वर्जयेत् ।

दशाननं वर्जयतस्तवानघ
यशश्च ते नित्यसुखानि यानि नः ॥ ३५ ॥
श्रुत्वैतद्वचनं धीमानग्रजस्य मुखाच्युतं ।
अधोमुखो ध्यानपरो ह्यतिष्ठत् स विभीषणः ॥ ३६ ॥
तं ध्यायमानं भगवानुवाच प्रभुरव्ययः ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र सुखमाप्नुहि शाश्वतं ॥ ३७ ॥
स्वकृतस्य महाप्राज्ञ तपसः फलमीदृशं ।
प्रत्यक्षं दृश्यते वीर सर्वमेतद्विभीषण ॥ ३८ ॥
तस्मादुत्तिष्ठ गच्छ त्वं पुराणं प्रभुमव्ययं ।
आधारं सर्वभूतानां शाश्वतं निरवग्रहं ॥ ३९ ॥
स हि धर्मनिधानं च गतिर्गतिमतां वरः ।
कृत्स्नस्य जगतो मूलं तस्माद्गच्छस्व राघवं ॥ ४० ॥
श्रुत्वैतद्वचनं तत्र नीलकण्ठेन भाषितं ।
उदतिष्ठन्महाबाहुस्तैरेव सचिवैः सह ॥ ४१ ॥
नमस्कृत्वा शिवं देवं तथा वैश्रवणं प्रभुं ।
रामाभ्यासं ययौ क्षिप्रं धर्मात्मा स विभीषणः ॥ ४२ ॥
जगामाकाशमाविश्य रामो यत्र महाबलः ।
आजगाम मुहूर्त्तेन यत्र रामः सलक्ष्मणः ॥ ४३ ॥
तं मेरुशिखराकारं ज्वलन्तमिव तेजसा ।
गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ ४४ ॥

स हि मेघाचलप्रख्यः कालः पुरुषविग्रहः ।
वरायुधधरः श्रीमानुत्पपात विहायसा ॥ ४५ ॥
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः ।
तेऽपि चर्मायुधोपेता भूषणैश्च बभासिरे ॥ ४६ ॥
आत्मना पञ्चमं दृष्ट्वा सुग्रीवो वानरेश्वरः ।
वानरैः सह दुर्धर्षश्चिन्तयामास वीर्यवान् ॥ ४७ ॥
चिन्तयित्वा मुहूर्त्तं तु वानरांस्तानुवाच ह ।
हनुमत्प्रमुखान् सर्वानिदं वचनमुत्तमं ॥ ४८ ॥
एष वर्मायुधोपेतश्चतुर्भिः सह राक्षसैः ।
राक्षसोऽभ्येति वीक्षधमस्मान् हन्तुमसंशयं ॥ ४९ ॥
सुग्रीवस्य वचः श्रुत्वा सर्वे ते हरियूथपाः ।
सालानुत्पाट्य शैलांश्च सुग्रीवमिदमब्रुवन् ॥ ५० ॥
शीघ्रं व्यादिश नो राजन् बधायैषां दुरात्मनां ।
निपतन्तु हता यावद्धरण्यां रुधिरोक्षिताः ॥ ५१ ॥
तेषां संभाषमाणानामन्योन्यं स विभीषणः ।
उत्तरं तीरमासाद्य जलधेः खे व्यवस्थितः ॥ ५२ ॥
स उवाच महाप्राज्ञः स्वरेण महता नदन् ।
सुग्रीवं वानरैः सार्द्धं समवेक्ष्य विभीषणः ॥ ५३ ॥
प्राप्तोऽहं राघवं द्रष्टुं बुध्यधमिति वानराः ।
बलवान् रावणो नाम राक्षसो राक्षसाधिपः ॥ ५४ ॥

येन सीता जनस्थानाद्धृता हत्वा जटायुषं ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥५५॥
तमहं विविधैर्वाक्यैर्हेतुमद्भिर्न्यदर्शयं ।
साधु निर्यात्यतां सीता रामायेति मुहुर्मुहुः ॥५६॥
स च न प्रतिजग्राह रावणः कालचोदितः ।
उच्यमानो हितं वाक्यं मर्तुकाम इवौषधं ॥५७॥
सोऽहं परुषितस्तेन दासवच्च विमानितः ।
त्यक्त्वा मित्राणि दारांश्च राघवं शरणं गतः ॥५८॥
रावणस्यावलिप्तत्वाद्धर्ममेव समाश्रितः ।
सहितः सचिवैर्भक्तै रामं शरणमागतः ॥५९॥
न हि मे जीवितेनार्थो नार्थैरन्यैस्तथा सुखैः ।
तदहं सर्वसंत्यागाद्राघवात् सुखमाप्नुयां ॥६०॥
उच्यमानोऽपि बहुशो मया धर्मार्थसंहितं ।
वचो भृशं न गृह्णाति मुमूर्षुरिव भेषजं ॥६१॥
जानन्नपि हि तस्याहं वीर्यं पौरुषविक्रमं ।
रावणस्यातिदुर्बुद्धेर्दुस्तरं वरसंचयात् ॥६२॥
धर्ममेव समाश्रित्य न ज्ञातिबधकाङ्क्षया ।
संत्यज्य स्वजनं सर्वं राघवं शरणं गतः ॥६३॥
विवत्सया हि तदलं रामसंगमकाङ्क्षया ।
सर्वथादुष्टभावोऽहं न मां शङ्कितुमर्हथ ॥६४॥

निवेदयत मां क्षिप्रं राघवाय महात्मने ।
सर्वभूतशरण्याय शरणं समुपस्थितं ॥ ६५ ॥
तस्य तद्वचनं श्रुत्वा सुग्रीवः प्लवगेश्वरः ।
राघवं समुपागम्य लक्ष्मणं चाब्रवीदिदं ॥ ६६ ॥
रावणस्यानुजो वीरो विभीषण इति श्रुतः ।
चतुर्भिः सचिवैः सार्द्धं भवन्तं शरणं गतः ॥ ६७ ॥
रावणेनैव प्रहितं मन्येऽहं तं विभीषणं ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ ६८ ॥
राक्षस्या दुष्टया बुद्ध्या जिह्मया समुपस्थितः ।
प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नः सोऽपि चानघ ॥ ६९ ॥
बध्यतामेष दण्डेन तीव्रेण ससुहृज्जनः ।
रावणस्य नृशंसस्य प्राप्तो भ्राता विभीषणः ॥ ७० ॥
एवमुक्त्वा तु तं रामं सुग्रीवो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलस्ततो मौनमुपागमत् ॥ ७१ ॥
तस्मिन् मौनमनुप्राप्ते रामो धर्मभृतां वरः ।
धर्ममेवाग्रतः कृत्वा विमर्शमगमत् तदा ॥ ७२ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणागमनं
नाम नवाशीतितमः सर्गः ॥

# सुन्दरकाण्डं

## XC.

प्राप्तं विभीषणं श्रुत्वा रामः सुग्रीवमब्रवीत् ।
आनृशंस्ये तद्भावे च तथायत्यां च संस्थितं ॥ १ ॥
आस्यतामिह सुग्रीव सचिवांश्च समानय ।
हनुमत्प्रमुखान् सर्वानन्यांश्च हरियूथपान् ॥ २ ॥
तैः समेत्य हि कर्तव्यं करिष्यामि परीक्षणं ।
सम्यग् वदसि सुग्रीव राजानो हि बहुच्छलाः ॥ ३ ॥
ततः सुग्रीववचनात् समीयुः कपियूथपाः ।
सर्वे चार्थविदः शूराः सर्वे शस्त्रप्रहारिणः ॥ ४ ॥
विभीषणस्य तद्वाक्यं श्रुत्वा ते हरियूथपाः ।
सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ५ ॥
अज्ञातं नास्ति ते किञ्चित् त्रिषु लोकेषु राघव ।
स जनान् पूजयन् प्राज्ञ पृच्छस्यस्मान् सुहृत्तया ॥ ६ ॥
त्वं हि सत्यरतः शूरो धार्मिको दृढविक्रमः ।
परीक्षकारी मतिमान् विसृष्टात्मा सुहृत्सु च ॥ ७ ॥
तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव ।
हेतुका मन्त्रसंपन्ना ब्रुवश्च पुनः पुनः ॥ ८ ॥
इत्युक्ते तु ततो वाक्ये मतिमानङ्गदस्तदा ।
विभीषणपरीक्षार्थमुवाच वचनं हितं ॥ ९ ॥

शत्रोः सकाशात् संप्राप्तः सर्वथा तर्क्यतामयं ।
विश्वासयोगः सहसा न कर्तव्यो विभीषणे ॥१०॥
प्रच्छाद्य भावमेते हि चरन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुकृतो भवेत् ॥११॥
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत् ततः ।
गुणतः संग्रहं कुर्याद्दोषतस्तु विवर्जनं ॥१२॥
यदि दोषो महांस्तस्मिन् त्यज्यतामविशङ्कितं ।
गुणप्रभूतं मत्वा वा संग्रहः क्रियतां नृप ॥१३॥
शरभश्चाथ निश्चित्य हरिर्वचनमब्रवीत् ।
क्षिप्रमस्मिन् नरव्याघ्र चारः प्रतिविधीयतां ॥१४॥
प्रणिधाय हि चारेण ततो भावः परीक्ष्यतां ।
परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥१५॥
छादयित्वात्मनो भावं भवन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुकृतो भवेत् ॥१६॥
जाम्बवानपि संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ।
वाक्यं विज्ञापयामास गुणवद्दोषवर्जितं ॥१७॥
बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ।
अदेशकाले संप्राप्तः सर्वथा तर्क्यतामयं ॥१८॥
अथ मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः ।
वाक्यं वचनसंपन्नो बभाषे हेतुमत् तदा ॥१९॥

वचनात् तावदस्यैव राघवस्य विभीषणः ।
पृच्छ्यतां मधुरैर्वाक्यैः शनैर्नरपतेः पुनः ॥ २० ॥
भावमस्य तु विज्ञाय ततस्तु त्वं करिष्यसि ।
यदि दुष्टो न वा दुष्टो बुद्धिपूर्वं नरर्षभ ॥ २१ ॥
अथ संस्कारसंपन्नो हनुमान् सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं हितं ॥ २२ ॥
तं ब्रुवन्तं हरिश्रेष्ठं समर्थं वदतां वरं ।
नैवातिशयितुं शक्तो वृहस्पतिरपि ब्रुवन् ॥ २३ ॥
न दानान्न च संहर्षान्नाधिक्यान्न च कामतः ।
वक्ष्यामि वचनं राजन् यथार्थं कार्यगौरवात् ॥ २४ ॥
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव ।
तत्र दोषं न पश्यामि क्रिया न ह्युपपद्यते ॥ २५ ॥
ऋते नियोगात् स्ववशैरवबोद्धुं न शक्यते ।
सहसा विनियोगो हि दोषवान् प्रतिभाति मे ॥ २६ ॥
चारप्रणिधिसंयुक्तं यदुक्तं सचिवैस्तव ।
अर्थस्यासंभवात् तत्र कारणं नोपपद्यते ॥ २७ ॥
सहसा न हि चारेण शक्यो बोद्धुं विभीषणः ।
कालप्रकर्षे दोषश्च तस्माच्चारो न विद्यते ॥ २८ ॥
अदेशकालसंप्राप्त इत्ययं यद्विभीषणः ।
विवक्षा तत्र मेऽस्तीयं तन्निबोध यथामति ॥ २९ ॥

स एष देशः कालश्च भवतीह यथा तथा ।
पुरुषं पुरुषं प्राप्य गुणदोषौ यथा तथा ॥ ३० ॥
सफलं भवति क्षिप्रं योगेनाभिसमाहितं ।
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणं ॥ ३१ ॥
बालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितं ।
राज्यं प्रार्थयमानस्य बुद्धिपूर्वं प्रपश्यतः ॥ ३२ ॥
एतानर्थान् पुरस्कृत्य विद्यते ह्यस्य संश्रयः ।
यथाशक्ति मयोक्तेऽस्मिन् राक्षसस्यार्जवं प्रति ॥ ३३ ॥
त्वं प्रमाणं प्रमाणानां सर्वबुद्धिमतां वरः ।
अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतात् ततः ॥ ३४ ॥
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितः ।
मम चापि विवक्षास्ति काचित् प्रति विभीषणं ॥ ३५ ॥
श्रुतमिच्छामि तत् सर्वं भवद्भिः श्रेयसि स्थितैः ।
मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्मिन् स्यात् सतामेतद्विगर्हितं ॥ ३६ ॥
एवं ज्ञात्वा महात्मानमार्यमार्गव्यवस्थितं ।
आनन्तर्येण संप्राप्तं विशोधयितुमर्हथ ॥ ३७ ॥
राघवस्य सुसंप्रीतः प्रीतो वायुसुतस्य च ।
प्रत्यभाषत सुग्रीवस्तत् कालसदृशं वचः ॥ ३८ ॥
किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावहं ।

यत् त्वमार्य प्रभाषेथाः सत्यवान् सत्पथे स्थितः ।। ३९ ।।
मम चाप्यन्तरात्मा वै शुद्धं वेत्ति विभीषणं ।
हनूमानस्य भावज्ञस्तेन चापि परीक्षितः ।। ४० ।।
तस्मात् क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ।
विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ।। ४१ ।।

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणपरीक्षा
नाम नवतितमः सर्गः ।।

# रामायणं

## XCI.

इत्युक्तवति सुग्रीवे तदा हरिगणेश्वरे ।
उवाच रामो धर्मात्मा धर्मार्थसहितं वचः ॥ १ ॥
सदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
सूक्ष्ममप्यहितं कर्तुं मम शक्तः प्लवङ्गम ॥ २ ॥
पृथिव्यां राक्षसान् सर्वान् पिशाचांश्च सदानवान् ।
शक्तोऽहं सहसा हन्तुं दिव्येनास्त्रबलेन च ॥ ३ ॥
श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ ४ ॥
स तावत् प्रतिजग्राह खगो भार्यानिसूदनं ।
कपोतो वानरश्रेष्ठ किमुताहं विभीषणं ॥ ५ ॥
रावणभ्रातरं दीनं सर्वथा धर्ममाश्रितं ।
आगतं राक्षसैः सार्द्धं सहैभिर्वानरेश्वर ॥ ६ ॥
कन्नस्यर्षेस्त्वनुजेन कण्डुना परमर्षिणा ।
शृणु गाथाश्चिरोद्गीता धर्मिष्ठाः सत्यवादिना ॥ ७ ॥
बद्धाञ्जलिपुटं दीनं याचन्तमपराधिनं ।
हन्यमानमरिं दृष्ट्वा रिपुणा शरणागतं ॥ ८ ॥
आर्त्तो वा यदिवा त्रस्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥ ९ ॥

स चेद्भयाद्वा कामाद्वा मोहाद्वा तं न रक्षति ।
समुद्विग्नं यथाशक्ति स पापो लोकगर्हितः ॥१०॥
विनष्टः पश्यतस्तस्य रक्षितुः शरणागतः ।
आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥११॥
एष दोषो महांस्तात प्रपन्नानामरक्षणे ।
अस्वर्ग्यश्चायशस्यश्च बलवीर्यविनाशनः ॥१२॥
करिष्यामि यथावत् तत् कण्डोर्वचनमुत्तमं ।
धर्मिष्ठं च यशस्यं च स्वर्ग्यं चापि महोदयं ॥१३॥
अभयं सर्वभूतेभ्यो ददामीति हि मे व्रतं ।
संग्रामेऽभिप्रपन्नानां तवास्मीति च वादिनां ॥१४॥
आनयैनं हरिश्रेष्ठ दत्तमस्मै मयाभयं ।
विभीषणाय सुग्रीव यदिवा रावणः स्वयं ॥१५॥
रामेणाथाभये दत्ते स ततो रावणानुजः ।
आहूतो हरिराजेन खात् पपात सहानुगः ॥१६॥
स समेत्य हरिश्रेष्ठः संश्लिष्य च विभीषणं ।
सान्त्वयित्वा च मेधावी दर्शयामास राघवं ॥१७॥
खात् पतित्वावनिं हृष्टो भक्तैरनुचरैः सह ।
आयुधानि च सर्वाणि वृक्षेष्वासज्य केषुचित् ॥१८॥
रूपमन्यच्छुभं चक्रे तैरेवानुचरैः सह ।
स तु रामस्य धर्मात्मा पादयोर्निपपात ह ॥१९॥

शिरसा चरणान्वेषी चतुर्भिः सह राक्षसैः ।
तं च रामः समुत्थाप्य परिष्वज्य च राक्षसं ॥ २० ॥
उवाच मधुरं वाक्यं सखा मम भवानिति ।
अब्रवीच्च तदा वाक्यमुक्तवाक्यं विभीषणः ॥ २१ ॥
धर्मयुक्तं च युक्तं च आत्मनश्च गुणोदयं ।
अनुजो रावणस्याहं तेन चास्मि विमानितः ॥ २२ ॥
भवन्तं सर्वभूतानां शरण्यं शरणं गतः ।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥ २३ ॥
त्वद्गतं चैव मे राज्यं जीवितं च धनानि च ।
रक्षसां च बधे सह्यं लङ्कायाश्च प्रधर्षणे ।
करिष्यामि महाप्राज्ञ नयिष्यामि च वाहिनीं ॥ २४ ॥

स एवमुक्त्वा नरदेवपुत्रं
विभीषणो हर्षमगात् तदानीं ।
तूष्णीं बभूवर्षिकुलप्रसूतो
रामं महात्मानमवेक्षमाणः ॥ २५ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणवाक्यं
नाम एकनवतितमः सर्गः ॥

# सुन्दरकाण्डं

## XCII.

इति ब्रुवाण तं रामः परिष्वज्य विभीषणं ।
उवाच लक्ष्मणं वीरः समुद्राज्जलमानय ॥ १ ॥
मध्ये वानरमुख्यानां प्रसादान्मम चैव हि ।
अभिषिच्यस्व लङ्कायामिमं सौम्य विभीषणं ॥ २ ॥
अद्यैव राक्षसेन्द्रत्वे प्रसन्ने मयि लक्ष्मण ।
एवमुक्तस्तु सौमित्रिरभ्यसिञ्चद्विभीषणं ॥ ३ ॥
मध्ये वानरमुख्यानां स्वराज्ये रामशासनात् ।
तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ॥ ४ ॥
प्रचक्रुश्चुर्महानादान् साधु साधिति चाब्रुवन् ।
तमथोवाच हनुमान् सुग्रीवश्च विभीषणं ॥ ५ ॥
कथं सागरमक्षोभ्यं तरेम मकरालयं ।
उपायं ब्रूहि नः सौम्य यथा नदनदीपतिं ॥ ६ ॥
उत्तरेम शिवेनेमं ससैन्या वरुणालयं ।
एवमुक्तस्तु धर्मात्मा प्रत्युवाच विभीषणः ॥ ७ ॥
समुद्रं शरणं राजा राघवो गन्तुमर्हति ।
खानितः सगरेणायमप्रमेयो महार्णवः ॥ ८ ॥
कर्तुमर्हति रामस्य ज्ञातिसख्यं महोदधिः ।
इति मे वर्तते बुद्धिः दृष्ट्वा रामबलं महत् ॥ ९ ॥

सगरः स हि रामस्य श्रूयते प्रपितामहः ।
ध्रुवमौदार्यमालम्ब्य ज्ञातिसख्यं करिष्यति ॥१०॥
एतद्विभीषणेनोक्तं राक्षसेन विपश्चिता ।
प्रकृत्या धर्मशीलस्य राघवस्य व्यरोचत ॥११॥
स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरं ।
सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमभाषत ॥१२॥
विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ।
ब्रूहि तावच्च सुग्रीव तवापि यदि रोचते ॥१३॥
बुद्धिमान् पण्डितो नित्यं भवान् मन्त्रविचक्षणः ।
उभयोः संप्रधार्यार्थं रोचते यत् तदुच्यतां ॥१४॥
एवमुक्तौ तु तौ वीरौ तदा सुग्रीवलक्ष्मणौ ।
समुदाचारसंयुक्तमिदं वाक्यमरोचतां ॥१५॥
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये ।
शक्यापादयितुं लङ्का सेन्द्रैर्नापि सुरेश्वरैः ॥१६॥
युक्तायुक्तमिदं सौम्य विभीषणवचः कुरु ।
अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यतां ॥१७॥
किमर्थं ते नरव्याघ्र नैतद्रोचिष्यते वचः ।
विभीषणेरितं सौम्य कालेऽस्मिंश्च विशेषतः ॥१८॥
इत्यास्तीर्य कुशान् नक्तं तीरे नदनदीपतेः ।
संविवेश तदा रामो वेद्यामिव हुताशनः ॥१९॥

परेण युक्तस्तपसा नरेश्वरः
    परेण वीर्येण च शत्रुकर्षणः ।
कृत्वा मतिं सागरदर्शने तदा
    बभूव तूष्णीं नियतः स पार्थिवः ॥२०॥

इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रोपवेशो
नाम द्विनवतितमः सर्गः ॥

## XCIII.

तस्य रामस्य सुप्तस्य कुशास्तीर्णे मक्षीतले ।
नियतस्याप्रमेयस्य निशास्तिस्रस्तदा ययुः ॥ १ ॥
न च दर्शयत्यात्मानं तदा रामं मक्षार्णवः ।
प्रयतेनापि रामेण यथार्क्षं प्रतिपूजितः ॥ २ ॥
समुद्रस्य ततः क्रुद्धो रामः संरक्तलोचनः ।
समीपे लक्ष्मणं दृष्ट्वा सरोषं वाक्यमब्रवीत् ॥ ३ ॥
पश्य तावदनार्यस्य पूज्यमानस्य लक्ष्मण ।
अवलेपं समुद्रस्य न दर्शयति मां स्वयं ॥ ४ ॥
प्रशमश्च क्षमा चैव मार्दवं प्रियवादिता ।
असामर्थ्यफला ह्येते निर्गुणेषु सदा गुणाः ॥ ५ ॥
आत्मप्रशंसिनं क्रूरं धृष्टं चापरिभाषणं ।
सर्वथोद्यतदण्डं च लोकः सत्कुरुते नरं ॥ ६ ॥
न साम्ना शक्यते कीर्त्तिर्न साम्ना शक्यते यशः ।
प्राप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रणमूर्द्धनि ॥ ७ ॥
क्षमया हि समायुक्तं मामयं वरुणालयः ।
असमर्थं विजानाति धिक् क्षमामीदृशे जने ॥ ८ ॥
चापमानय मे क्षिप्रं शरांश्चाशीविषोपमान् ।
अद्याक्षोभ्यमिमं क्रुद्धः क्षोभयिष्यामि सागरं ॥ ९ ॥

तलासंस्पर्शमर्यादं सह्रसोर्मिसमाकुलं ।
निर्मर्यादं करिष्यामि शायकैः पश्य सागरं ॥१०॥
ग्रह्य महाणनिर्भिन्नैर्मकरैर्मकरालयं ।
निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः ॥११॥
भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ।
सुमहान्ति च गात्राणि प्लवमानानि सागरे ॥१२॥
सशङ्खमुक्तिकाजालं समीनमकरं शरैः ।
इमं क्रोधेन महता समुद्रं शोषयाम्यहं ॥१३॥
एवमुक्त्वा ततो रामः प्रगृह्य सशरं धनुः ।
दिव्यं लक्ष्मणहस्तस्थं चक्रे सज्यमनन्तरं ॥१४॥
ततो वाणधनुष्पाणिः क्रोधविस्फारितेक्षणः ।
बभूव रामो दुर्धर्षो युगान्ताग्निरिवोज्ज्वलन् ॥१५॥
नामयित्वा महच्चापं कम्पयन्निव मेदिनीं ।
मुमोच निशितान् वाणान् वज्राणीव शतक्रतुः ॥१६॥
ते ज्वलन्तो महावाणास्तेजसा पावकोपमाः ।
विविशुः सागरस्याशु सलिलं त्रस्तपन्नगं ॥१७॥
ततो वेगः समुद्रस्य सनक्रमकरो महान् ।
संबभूव महाघोषः स मार्गणकृतस्तदा ॥१८॥
ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा ।
विन्ध्यपर्वतसंकाशाः समुत्पेतुः सहस्रशः ॥१९॥

महोर्मिजालावततः शङ्खजालसमावृतः ।
स धूमपरिवृत्तोर्मिः संचचाल महोदधिः ॥ २० ॥
व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः ।
दानवाश्च महाकायाः पातालतलवासिनः ॥ २१ ॥
पीड्यमानास्तु ते सर्वे समुद्रं शरणं ययुः ।
स तानाश्वासयामास सर्वानेव सरित्पतिः ॥ २२ ॥

पराक्रमं तस्य ततोऽन्ववेक्ष्य
सरित्पतिर्लोकपतेः सुतस्य ।
महच्च कार्यं समुपस्थितं महान्
प्रदर्शयामास तदात्मनस्तनुः ॥ २३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे शरदाहो नाम
त्रिनवतितमः सर्गः ॥

# सुन्दरकाण्डं

## XCIV.

ततः समीपे रामस्य स्वान् महोर्मीन् विधूय सः ।
पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत ॥ १ ॥
स्निग्धवैदूर्यसंकाशो जाम्बूनदविभूषितः ।
रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः ॥ २ ॥
स राममभिगम्याशु सचिवैः सह सागरः ।
अब्रवीत् प्रसृतं वाक्यं प्राञ्जलिर्मधुरं तदा ॥ ३ ॥
स राममथ रामेति पूर्वमामन्त्र्य वीर्यवान् ।
अब्रवीच्च ततो वाक्यं पद्मपत्रनिभेक्षणः ॥ ४ ॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥ ५ ॥
तत् स्वभावो ममाप्येष यदगाधोऽहमव्ययः ।
विकारस्तु भवेद्गाध इति तत् ते वदाम्यहं ॥ ६ ॥
सगरो नाम पूर्वस्ते मम कर्ता महाद्युतिः ।
तस्याहं नामतःख्यातः सागरः सरितां पतिः ॥ ७ ॥
स्तम्भयेनज्जलं राम दद्यां ते मार्गमुत्तमं ।
गच्छेयुर्येन हरयो न च सेतुर्भविष्यति ॥ ८ ॥
आश्चर्यं तु तदा लोके समुद्रे स्थलसंभवः ।
तच्च मे परिहर्तव्यं त्वत्तो राम विशेषतः ॥ ९ ॥

अन्येऽपि बलवन्तो मे दण्डमुद्यम्य राघव ।
गाधत्वं मम मार्गं च दापयिष्यन्ति तेजसा ॥ १० ॥
अद्भुतं हि नृणां लोके दृष्टमन्तकरं भवेत् ।
गाधत्वं वेत्स्यते तेन नैतद्वाच्यं त्वयान्यथा ॥ ११ ॥
न कामान्न च वै लोभान्न भयात् पार्थिवात्मज ।
क्षमो ग्राहाकुलजले दातुं गाधो ममानघ ॥ १२ ॥
एतदुक्तं मया दैवं वक्ष्यामि त्वथ मानुषं ।
उपायं शृणु मे सौम्य येन मां संतरिष्यसि ॥ १३ ॥
अयं राम नलो नाम तनयो विश्वकर्मणः ।
पित्रा दत्तवरः श्रीमांस्तव चापि हिते रतः ॥ १४ ॥
वानरोऽयं नरश्रेष्ठ युज्यतां सेतुकर्मणि ।
एष सेतुं महोत्साहः करोतु मयि वानरः ॥ १५ ॥
तमहं धारयिष्यामि भवतः कार्यगौरवात् ।
ग्राहा न विचरिष्यन्ति न च वास्यति मारुतः ॥ १६ ॥
सलिलं स्तम्भयिष्येऽहं नलस्य तव चाज्ञया ।
इति ब्रुवाणं तं दृष्ट्वा नलो राघवमब्रवीत् ॥ १७ ॥
अहं सेतुं करिष्यामि विस्तीर्णं मकरालये ।
पितुः सामर्थ्यमाश्रित्य तत्त्वमाह महोदधिः ॥ १८ ॥
मम मात्रे वरो दत्तो महेन्द्रे विश्वकर्मणा ।
औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणः ॥ १९ ॥

न तु कुर्यामहंकारं न वदाम्यात्मनो गुणान् ।
सेतुमद्यैव बध्नन्तु कामं वानरपुङ्गवाः ॥ २० ॥
तव पित्रा मम महत् संगतं देवसंसदि ।
पुरा देवासुरे तत्र संग्रामे तारकामये ॥ २१ ॥
तत्र ते व्याहृतं पित्रा सुराणां हितकाम्यया ।
मया चैव महाबाहो तदासौ सखितां गतः ॥ २२ ॥
सख्युर्हि मे स पुत्रस्त्वं पुत्रो मे ह्यसि धर्मतः ।
अवश्यं तव साहाय्यं मया कार्यं विशेषतः ॥ २३ ॥

इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रोद्गमो नाम
चतुर्नवतितमः सर्गः ॥

## XCV.

एतच्छ्रुत्वा तु वचनं नलेन समुदाहृतं ।
राममामन्त्र्य चैवाथ समुद्रः प्रविवेश वै ॥१॥
तस्मिन् प्रविष्टे सहसा स्वयोनिं वरुणालयं ।
अथ दाशरथी रामो हृष्टात्मा वाक्यमब्रवीत् ॥२॥
हनूमन्तं च विक्रान्तमङ्गदं च महाबलं ।
सुहृदं वानरश्रेष्ठं जाम्बवन्तं च विस्मितं ॥३॥
श्रुत्वा भवद्भिर्वचनं समुद्रस्य नलस्य च ।
यदत्रानुविधातव्यं तत् सर्वं संविधीयतां ॥४॥
एतच्छ्रुत्वा ततो वाक्यं सुग्रीवो वानरेश्वरः ।
त्वरन् वानरसैन्यानि प्रेषयामास सर्वतः ॥५॥
पर्वतांश्च द्रुमांश्चैव लतागुल्मांस्तथैव च ।
सर्वमानयत क्षिप्रं न विलम्बितुमर्हथ ॥६॥
इत्युक्तास्ते तु हरयः सुग्रीवेण त्वरान्विताः ।
अभिपेतुस्तदारण्यं हृष्टाः शतसहस्रशः ॥७॥
ते सालानश्वकर्णांश्च वेणुवेत्राणि वानराः ।
कुटजानर्जुनान् नीपांस्तिलकान् वकुलान् वकान् ॥८॥
अन्यांश्च वृक्षानादाय गिरीणां शिखराणि च ।
समुद्रसलिले सेतुं चक्रुः शतसहस्रशः ॥९॥

# सुन्दरकाण्डं

केचित् पर्वतशृङ्गाणि शिलाश्च कनकोज्ज्वलाः ।
उत्पाट्योत्पाट्य निदधुर्नलहस्ते महौजसः ॥१०॥
ते नगैर्नगरप्रख्यैर्द्रुमैश्च कुसुमोज्ज्वलैः ।
चक्रुः सेतुं समुद्रस्य वानरा वारणोपमाः ॥११॥
दशयोजनविस्तीर्णमायतं शतयोजनं ।
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥१२॥
दशयोजनविस्तारा सा वीथी तत्र सागरे ।
विससारोष्णगे काले महाभ्र इव वायुना ॥१३॥
ततः शाखामृगा वृक्षान् पुष्पितान् विहगायुतान् ।
समूलांस्तूर्णमुत्पाट्य चिक्षिपुर्लवणाम्भसि ॥१४॥
तानि पर्वतशृङ्गाणि तृणकाष्ठानि चैव हि ।
समुद्रे क्षिप्यमाणानि न विषेदुः कथञ्चन ॥१५॥
ते नगान् नगसंकाशान् शाखाः शाखामृगर्षभाः ।
बभञ्जुर्बहवस्तत्र समुद्रे चापि चिक्षिपुः ॥१६॥
गुल्मैः शलभसंतानैस्तथा वेत्रलताचयैः ।
सेतुं बबन्धुः कीर्णेषु वृक्षेषु च महाबलाः ॥१७॥
नवमेघनिकाशैश्च नगैः परमपुष्पितैः ।
तैः सपत्रैः समूलैश्च नलः सेतुं बबन्ध तं ॥१८॥
अन्ये तु सकृदादाय गिरीणां शिखराणि च ।
सागरस्य जले चक्रुः सेतुं शतसहस्रशः ॥१९॥

बलिभिर्वेगिभिर्वेगात् कपिभिस्तीरजा द्रुमाः ।
कम्पिताः पातिताश्चैव समुद्रे सरितां पतौ ॥ २० ॥
शिलानां क्रियमाणानां शिखराणां च भिद्यतां ।
बभूव तुमुलः शब्दस्तदा तस्मिन् महार्णवे ॥ २१ ॥
उन्मत्तभूतः क्षुभितो विघूर्णित इवोदधिः ।
कुर्वद्भिस्त्वरितं सेतुं वानरैस्तैः सहस्रशः ॥ २२ ॥
हस्तिप्राणा महावेगाः कपयः कामरूपिणः ।
पर्वतानानयन्ति स्म नखैः परिलिखन्ति च ॥ २३ ॥
सुग्रीवस्त्वपि शृङ्गाणि गिरीणां मेघसंनिभः ।
आरुह्यारुह्य चिक्षेप शतशोऽथ सहस्रशः ॥ २४ ॥
दर्दुरस्याङ्गदः शृङ्गं श्रीमानारुह्य पाणिना ।
लवणाम्भसि चिक्षेप सविद्युतमिवाम्बुदं ॥ २५ ॥
सचन्दनवनं शृङ्गं सर्वतः पुष्पितं महत् ।
आरुह्य प्रहुतः शीघ्रं मैन्दो द्विविद एव च ॥ २६ ॥
गिरीणां भिद्यमानानां वानरैः सेतुकर्मणि ।
भुवि दिव्यन्तरीक्षे च शुश्रुवे निनदो महान् ॥ २७ ॥
तेन वित्रासिताः सर्वे मृगपक्षिगणा वने ।
अशक्नुवन्तः पतितुं शिखरेषु व्यशेरत ॥ २८ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
आवृत्य गगनं तस्थुर्द्रष्टुकामास्तदद्भुतं ॥ २९ ॥

# सुन्दरकाण्डं

ऋषयः पितरो यक्षाः राजर्षिगरुडोरगाः ।
आजग्मुः प्रेक्षितुं सेतुं बध्यमानं महार्णवे ॥ ३० ॥
अविदूराच्च रामस्य सर्वे वियति विष्ठिताः ।
राघवं पूजयां चक्रुरूचुश्च मधुरा गिरः ॥ ३१ ॥
चकार न पुरा कश्चिन्न च कर्ता करिष्यति ।
उपादाय सुरान् सेन्द्रानिदमन्यत्र राघवात् ॥ ३२ ॥
ये राममेवं द्रक्ष्यन्ति समुत्पादितपौरुषं ।
कारयन्तमिमं सेतुं समुद्रे सरितां पतौ ॥ ३३ ॥
तेषां पुत्रा भविष्यन्ति वीर्यवन्तो यशस्विनः ।
आहर्तारः परार्ध्यस्य रत्नस्य द्रविणस्य च ॥ ३४ ॥
यावत् समुद्रस्तावच्च सेतुरेवं धरिष्यति ।
यावच्च सागरे कीर्त्तिस्तावद्रामे भविष्यति ॥ ३५ ॥
कः समुद्रस्य बध्नाति सेतुमित्येव चारणाः ।
विद्याधराश्च मुदिताः पप्रच्छुस्तूर्णमाययुः ॥ ३६ ॥
रामः सेतुं समुद्रस्य बध्नातीति दिशो दश ।
जगाम शब्दस्तुमुलः पृथिव्यामपि शुश्रुवे ॥ ३७ ॥
आन्तांस्तु न तपेत् सूर्यः कथञ्चिद्वानरानपि ।
अभ्राणि जज्ञिरे दिग्भ्यश्छादयित्वा रवेः प्रभां ॥ ३८ ॥
प्रववर्ष च पर्जन्यो मारुतश्च शिवो ववौ ।
वृक्षेभ्यश्च तदा जज्ञे कपिभक्ष्योपमं मधु ॥ ३९ ॥

समुद्रवरदानाच्च संविधानाच्च कर्मणां ।
सेतुः स्वल्पेन कालेन निष्ठां प्राप्तोऽभवत् तदा ॥ ४० ॥
कूले तूत्तर आरब्धो लङ्काकूले प्रतिष्ठितः ।
सागरस्यैष सीमन्तश्चित्ररूपो व्यदृश्यत ॥ ४१ ॥
विशालः सुकृतः श्रीमान् सर्वभूतसमाहितः ।
अशोभत ततः सेतुः सीमन्त इव सागरे ॥ ४२ ॥
ददृशुः सर्वभूतानि सागरे सेतुबन्धनं ।
तानि कोटीसहस्राणि वानराणां महात्मनां ॥ ४३ ॥
बन्धनादेव सेतोस्तु जग्मुर्मासेन सागरं ।
निष्पाद्य हरयः सेतुं प्रतीताः सस्रुरर्णवं ॥ ४४ ॥
आश्वास्य च तदा सर्वे स्वेषु सैन्येषु रेमिरे ।
पारे तस्य समुद्रस्य गदापाणिर्विभीषणः ।
परेषां प्रतिघातार्थमातिष्ठत् सह बान्धवैः ॥ ४५ ॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम् सुन्दरकाण्डे
सेतुबन्धनं नाम पञ्चनवतितमः सर्गः ॥

सुन्दरकाण्डं समाप्तं ॥

# सर्गसंग्रहपत्रं

## सुन्दरकाण्डं

सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

# सर्गसंग्रहपत्रं

सर्गसंग्रहपत्रं

# रामायणं

# RAMAYANA

## युद्धकाण्डं

# VALMIKI RAMAYANA

## YUDDHAKANDAM

## युद्धकाण्डं

EDITED BY

Prof. GASPARE GORRESIO

1982
Indian Heritage Trust
Madras, India

# RAMAYANA

POEMA INDIANO

# DI VALMICI

TESTO SANSCRITO SECONDO I CODICI MANOSCRITTI

DELLA SCUOLA GAUDANA

PER

GASPARE GORRESIO

SOCIO DELLA REALE ACCADEMIA DELLE SCIENZE DI TORINO

CAVALIERE DELL' ORDINE DEL MERITO CIVILE DI SAVOJA

OFFICIALE DELLA LEGION D' ONORE DI FRANCIA

ECC.

---

VOLUME QUINTO ED ULTIMO DEL TESTO




PARIGI

DALLA STAMPERIA NAZIONALE

PER AUTORIZZAZIONE DEL GOVERNO

---

M DCCC L



Kodanda Rama
from Kolanupaka

# PREFACE

The previous volume—Sundarakandam—was the first to be published by the Indian Heritage Trust inaugurating the publication of this edition of Valmiki Ramayana on Sri Rama Navami, March 25, 1980. Devout persons all over India hold Sundarakandam in great reverence and consider its recital auspicious. It augured well for the Trust and the publication of this rare edition has now been completed in a 7-volume set. We trust this edition will be widely read and it will stimulate research.

We quote Swami Vivekananda:

> Learning everything about Sita from Hanuman, Rama collected an army, and with it marched towards the southernmost point of India. There Rama's monkeys built a huge bridge, called Setu-Bandha, connecting India with Ceylon. In very low water even now it is possible to cross from India to Ceylon over the sand-banks there.
>
> The monkeys removed whole hills, placed them in the sea and covered them with stones and trees, thus making a huge embankment. A little squirrel, so it is said, was there rolling himself in the sand and running backwards and forwards on to the bridge and shaking himself. Thus in his small way he was working for the bridge of Rama by putting in sand. The monkeys laughed for they were bringing whole mountains, whole forests, huge

loads of sand for the bridge — so they laughed at the little squirrel rolling in the sand and then shaking himself. But Rama saw it and remarked: "Blessed be the little squirrel; he is doing his work to the best of his ability and he is therefore quite as great as the greatest of you." Then he gently stroked the squirrel on the back, and the marks of Rama's fingers, running lengthways, are seen on the squirrel's back to this day.

September 19, 1982 V. SADANAND

# अथ
# श्रीरामायणे वाल्मीकीये
# युद्धकाण्डं

## I.

ससैन्ये सागरं तीर्णे रामे दशरथात्मजे ।
अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १ ॥
समुद्रं दुस्तरं तीर्णं समग्रं वानरं बलं ।
अभूतपूर्वो रामेण सेतुर्बद्धश्च सागरे ॥ २ ॥
न दृष्टं न श्रुतं चापि सागरे सेतुबन्धनं ।
नूनमस्मद्विनाशाय विधिना दोः प्रसारितः ॥ ३ ॥
अश्रद्धेयमिदं कर्म कृतं रामेण सारण ।
सागरे सेतुबन्धेन संक्षुब्धमिव मे मनः ॥ ४ ॥
अवश्यमभिसंख्येयं तन्मया वानरं बलं ।
ततः पश्चाद्विधास्यामि तस्य श्रुत्वा प्रतिक्रियां ॥ ५ ॥

अतो भवन्तौ तत् सैन्यं प्रविश्यानुपलक्षितौ ।
वानरीं तनुमास्थाय परिसंख्यातुमर्हतः ॥ ६ ॥
बलं यात्राविधानं च योधानां च विनिश्चयं ।
परिमाणं तु वीर्यं च ये च मुख्याः प्लवङ्गमाः ॥ ७ ॥
मन्त्रिणो ये च रामस्य ये च सुग्रीवमन्त्रिणः ।
ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ८ ॥
स च सेतुर्यथा बद्धः सागरे मकरालये ।
निवेशश्च यथा तेषां वानराणां वनौकसां ॥ ९ ॥
कश्च सेनापतिस्तेषां वानराणां गतायुषां ।
रामस्य व्यवसायं च वीर्यं प्रहरणानि च ॥ १० ॥
लक्ष्मणस्य च सौमित्रेस्तत्त्वतो ज्ञातुमर्हथः ।
राघवस्य च सौमित्रेर्वानराणां तथैव च ॥ ११ ॥
बलं ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ।
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ॥ १२ ॥
तथेति प्रतिपद्याशु जग्मतुर्यत्र तद्बलं ।
तौ गत्वा माययाच्छन्नौ राक्षसेन्द्रस्य मन्त्रिणौ ॥ १३ ॥
हरिरूपधरौ भूत्वा प्रविश्यानुपलक्षितौ ।
ततस्तौ वानरं सैन्यमचिन्त्यं रोमहर्षणं ॥ १४ ॥
संख्यातुमभिसंवृत्तौ यत्नतः शुकसारणौ ।
आसीनं पर्वताग्रेषु निर्झरेषु गुहासु च ॥ १५ ॥

# युद्धकाण्डं

समुद्रस्य च तीरेषु पुष्पितेषु वनेषु च ।
ददृशाते महासैन्यं धावमानं सहस्रशः ॥ १६ ॥
तदक्षयमपर्यन्तं दुर्जयं वानरं बलं ।
सारणश्च शुकश्चैव संख्यातुं नावजग्मतुः ॥ १७ ॥
एकार्णवं महारण्यं ततं तैर्हरिभिस्तदा ।
राक्षसौ तौ महावीर्यौ संख्यातुं नैव शेकतुः ॥ १८ ॥
तरमाणं च तीर्णं च प्रयातं चैव सर्वशः ।
निविष्टं निविशन्तं च भीममक्षोभ्यमव्ययं ॥ १९ ॥
तौ ददर्श महात्मानौ प्रतिच्छन्नौ विभीषणः ।
लङ्कायाः समनुप्राप्तौ चरौ परपुरंजयः ॥ २० ॥
ग्राहयित्वा महातेजा वानरैर्भीमविक्रमैः ।
आचचक्षे च रामाय तावुभौ शुकसारणौ ॥ २१ ॥
लङ्कायाः समनुप्राप्तौ विद्धि चाराविमाविति ।
तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा ॥ २२ ॥
कृताञ्जलिपुटौ भीताविदं वचनमूचतुः ।
आवामिहागतौ वीर रावणप्रहिताावुभौ ॥ २३ ॥
परिज्ञातुं बलं कृत्स्नं तवेदं रघुनन्दन ।
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः ॥ २४ ॥
अब्रवीत् प्रहसन् वाक्यं सर्वभूतहिते रतः ।
यदि दृष्टं बलं सर्वं वयं च समवेक्षिताः ॥ २५ ॥

# रामायणं

यथोक्तं वा कृतं सर्वमिष्टतः प्रतिगम्यतां ।
संख्याय च पुरीं लङ्कां यथेष्टं गन्तुमर्हथः ॥ २६ ॥
अभयं च प्रदास्यामि क्षणेऽस्मिन् रजनीचरौ ।
अथ किञ्चिददृष्टं हि भूयस्तद्द्रष्टुमर्हथः ॥ २७ ॥
विभीषणो वां कार्त्स्न्येन पुनः संदर्शयिष्यति ।
न युवां ग्रहणं प्राप्तौ जीविताद्धेतुमर्हथः ॥ २८ ॥
न्यस्तशस्त्रौ गृहीतौ वा न मत्तो बधमर्हथः ।
आच्छाद्येमौ विमुञ्च त्वं चरौ रात्रिचरावुभौ ॥ २९ ॥
शत्रुपक्षस्य सततं विभीषण विभीषणं ।
बलं सर्वमिदं दृष्ट्वा हरिसैन्यमनावृतं ॥ ३० ॥
संख्याय च पुरीं लङ्कामिष्टतः प्रतिगम्यतां ।
बधार्हौ वां विमुञ्चामि क्षमया रजनीचरौ ॥ ३१ ॥
प्रविश्य तु पुरीं लङ्कां भवद्भ्यां धनदानुजः ।
वक्तव्यो राक्षसेन्द्रोऽसौ यथोक्तं वचनं मम ॥ ३२ ॥
यद्बलं त्वमुपाश्रित्य सीतामाहृतवान् पुरा ।
तद्दर्शय यथाशक्ति ससैन्यः सह बान्धवैः ॥ ३३ ॥
श्वो भूते नगरीं लङ्कां सप्राकारां सतोरणां ।
सराक्षसबलां पश्य मया विध्वंसितां शरैः ॥ ३४ ॥
घोरं कोपं विमोक्ष्यामि ससैन्ये त्वयि रावण ।
संक्रुद्धो वज्रभृद्वज्रं दानवेष्विव वासवः ॥ ३५ ॥

वैरस्यान्तं गमिष्यामि हत्वा त्वां दुःखभागहं ।
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ॥ ३६ ॥
आगत्य नगरीं लङ्कामब्रूतां राक्षसेश्वरं ।
विभीषणगृहीतौ नौ बधार्हौ राक्षसेश्वर ॥ ३७ ॥
दृष्ट्वा महात्मना मुक्तौ रामेणामिततेजसा ।
एकस्थानगता यत्र चत्वारस्त महाबलाः ॥ ३८ ॥
लोकपालसमा वीराः कृतास्त्रा दृढविक्रमाः ।
रामो दाशरथिः श्रीमान् लक्ष्मणश्च महाबलः ॥ ३९ ॥
सुग्रीवश्च महातेजास्तव भ्राता विभीषणः ।
एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणां ॥ ४० ॥
उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ।
रामस्य यादृशं रूपं वीर्यं प्रहरणानि च ॥ ४१ ॥
हनिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ।
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ॥ ४२ ॥
न भेत्तुं सहसा शक्या सेन्द्रैरपि सुरासुरैः ।
व्यक्तः सेतुस्तथाबन्धो दशयोजनविस्तरः ॥ ४३ ॥
शतयोजनमायामस्तीर्णा सेना च सागरं ।
निविष्टा दक्षिणे तीरे समुद्रस्य नदीपतेः ॥ ४४ ॥
लङ्कामिमां दुराधर्षां प्राप्ता वानरपुङ्गवाः ।
तीर्णस्य तरमाणस्य बलस्यान्तो न विद्यते ।

राजन् गुप्तस्य रामेण लोकपालसमेन च ॥४५॥

प्रकृष्टयोधा ध्वजिनी वनौकसां
महात्मनां संप्रतियोद्धुमिच्छतां ।
अलं विवादेन समो विधीयतां
प्रदीयतां दाशरथाय मैथिली ॥४६॥

इत्यार्षे रामायणे युद्धकाण्डे चारविधिर्नाम
प्रथमः सर्गः ॥

# युद्धकाण्डं

## II.

तद्वचः पथ्यमक्लीबं सारणेन सुभाषितं ।
निशम्य रावणो राजा प्रत्यभाषत सारणं ॥ १ ॥
यदि मामभियुञ्जीरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रयच्छेयं सर्वलोकभयादपि ॥ २ ॥
त्वं तु सौम्य परित्रस्तो दृष्ट्वा तां हरिवाहिनीं ।
प्रतिप्रदानं सीताया मन्यसे सत्त्ववर्जितः ॥ ३ ॥
को हि नाम समर्थो मां समरे जेतुमर्हति ।
स्थातुं क्षणं ह्यपि किमु समर्थो जेतुमुद्यतः ॥ ४ ॥
इत्युक्त्वा परमक्रुद्ध उत्थाय परमासनात् ।
उत्पत्य च नभो नीलं द्वितीय इव भास्करः ॥ ५ ॥
आरुरोह ततः शीघ्रं प्रासादं हिमपाण्डरं ।
बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ६ ॥
दीप्यमानः स्ववपुषा वसुधामभिलोकयन् ।
चराभ्यां सहितस्ताभ्यां स ददर्श बलं महत् ॥ ७ ॥
पर्वतांश्च समुद्रं च संवृतान् वानरर्षभैः ।
ददर्श पृथिवीदेशान् सुसंपूर्णान् प्लवङ्गमैः ॥ ८ ॥
तदपारमसंख्येयं वानराणां महद्बलं ।
निरीक्ष्य रावणो राजा पर्यपृच्छत सारणं ॥ ९ ॥

एषां के वानराः शूराः के मुख्याः के महाबलाः ।
के पूर्वमभिवर्तन्ते के महोत्साहविक्रमाः ॥१०॥
देवान्वयाश्च के चात्र के मानुषबले स्थिताः ।
केषां शृणोति सुग्रीवः के च यूथपयूथपाः ॥११॥
सारण शीघ्रमाचक्ष्व ये प्रधानाः प्लवङ्गमाः ।
तच्छ्रुत्वा राक्षसेन्द्रस्य वचनं परिपृच्छतः ॥१२॥
आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तत्र वनौकसः ।
य एषोऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ॥१३॥
यूथपानां सहस्रेण शतानां परिवारितः ।
यस्य घोषेण महता सप्राकारा सतोरणा ॥१४॥
लङ्का प्रकम्पते वीर सशैलवनकानना ।
सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः ॥१५॥
बलाग्रे तिष्ठते वीरो नलो नामैष यूथपः ।
एतेन सेतुर्बद्धोऽयं विश्वकर्मसुतेन वै ॥१६॥
समुद्रेण स्तुतश्चैव महात्मा वानरर्षभः ।
बाहू प्रगृह्य यः पद्भ्यां महीं लिखति वीर्यवान् ॥१७॥
गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसंनिभः ।
लङ्कामभिमुखः कोपादभीक्ष्णं योऽभिजृम्भते ॥१८॥
स्फोटयत्यतिसंक्रुद्धो लाङ्गूलं च पदे पदे ।
यस्य लाङ्गूलशब्देन स्वनन्तीव दिशो दश ॥१९॥

एष वानरराजेन सुग्रीवेणाभिषेचितः ।
वीरः पद्मसहस्रेण वृतः शङ्कुशतेन च ॥ २० ॥
युवराजोऽङ्गदो नाम त्वामाह्वयति संयुगे ।
ये तु विष्टभ्य गात्राणि क्ष्वेलन्ति च हसन्ति च ॥ २१ ॥
उत्थाय च विजृम्भन्ते क्रोधेन हरियूथपाः ।
एते दुष्प्रसहा घोराश्चण्डाश्चन्दनवानराः ॥ २२ ॥
अष्टौ शतसहस्राणि दशकोटिशतानि च ।
यमेते परिसर्पन्ति वीराः प्रवरवानराः ॥ २३ ॥
सुतनुर्नाम यूथेशः सर्ववानरयूथपः ।
उत्सहत्येष ते लङ्कां स्वेनानीकेन मर्दितुं ॥ २४ ॥
श्वेतो रजतसंकाशः स्वेनानीकेन यूथपः ।
बुद्धिमान् वानरः श्रीमांस्त्रिषु लोकेषु विश्रुतः ॥ २५ ॥
सुग्रीवेण समागम्य पुनर्गच्छति वानरः ।
विभजन् वानरीं सेनामनीकानि प्रहर्षयन् ॥ २६ ॥
यो नदीं गौतमीं रम्यां गिरिं पर्येति चार्बुदं ।
नाम्ना संकोचनो नाम नानाद्रिजयुतो गिरिः ॥ २७ ॥
तत्र राज्यं प्रशास्त्येष कुमुदो नाम वानरः ।
योऽसौ शतसहस्राणि सहस्रं परिकर्षति ॥ २८ ॥
नाम्ना नीलो महावीर्यो यूथपानां हि यूथपः ।
मन्त्री वानरराजस्य सुग्रीवस्य महात्मनः ॥ २९ ॥

यस्य केशा बहुव्यामा दीर्घलाङ्गूलमाश्रिताः ।
सिंहस्येव प्रभान्त्येते प्रकीर्णा घोरदर्शनाः ॥३०॥
अतीव रोषणश्चण्डः संग्राममभिलाषकः ।
वेगवान् नाम लङ्केश सुग्रीवस्य यथाबली ॥३१॥
कोटीशतसहस्राणां सहस्रेणाभिसंवृतः ।
एष चाशंसते लङ्कां स्वेनानीकेन मर्दितुं ॥३२॥
यस्त्वेष सिंहसंकाशः कपिलो दीर्घकेशरः ।
निभृतः प्रेक्षते लङ्कामभिगर्जन् पुनः पुनः ॥३३॥
विन्ध्यं कृष्णगिरिं सह्यं पर्वतं चारुदर्शनं ।
गर्जन् सततमध्यास्ते पर्वतो नाम यूथपः ॥३४॥
त्रिंशच्छतसहस्राणि वानराणां महौजसां ।
परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥३५॥
यस्तु कर्णौ विवृणुते यश्चापि च विजृम्भते ।
न च संहरते दृष्टिं न च यूथान्निवर्तते ॥३६॥
महाभयेऽतीतभयो वसते चन्द्रपर्वते ।
वानरश्चैष नृपते शरभो नाम यूथपः ॥३७॥
एतस्य बलिनः सर्वे वानराः सहचारिणः ।
राजन् शतसहस्राणि चत्वारिंशच्छतानि च ॥३८॥
एष चाशंसते लङ्कां स्वेनानीकेन मर्दितुं ।
यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति ॥३९॥

मध्ये वानरसिंहानां सुराणामिव वासवः ।
भेरीणामिव संनादो यत्रैष श्रूयते महान् ॥ ४० ॥
घोषः शाखामृगेन्द्राणामेष संग्रामकाङ्क्षिणां ।
एष पर्वतसंकाशश्चपलः क्रोधनो हरिः ॥ ४१ ॥
तं महीधरमध्यास्ते पारिपात्रमनुत्तमं ।
युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः ॥ ४२ ॥
शतं शतसहस्राणामुपास्ते यं प्लवङ्गमं ।
यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः ॥ ४३ ॥
यस्तु भीमवरां सेनां वानराणां प्रकर्षति ।
स्थितस्तीरे समुद्रस्य द्वितीय इव सागरः ॥ ४४ ॥
एष दर्दुरमध्यास्ते विनतो नाम यूथपः ।
नदीं पिबति पर्णाशां कोटिभिर्दशभिर्वृतः ॥ ४५ ॥
यस्त्वसौ रविताम्रास्यो हरिः संरक्तलोचनः ।
षष्टिं शतसहस्राणि बलमस्य वनौकसां ॥ ४६ ॥
एष प्रगृह्य महतीं शिलां नीलाभ्रसंनिभां ।
युद्धायाह्वयते त्वां हि क्रथनो नाम वानरः ॥ ४७ ॥
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः ।
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते ॥ ४८ ॥
दशकोटिसहस्राणि दशकोटिशतानि च ।
उपासते यं हरीणां चपलानां महौजसां ।

त्वामुत्सहति संग्रामे जेतुं परपुरंजय ॥४९॥

इमे महाराज महापराक्रमाः
कपिप्रवीरास्तव येऽनुकीर्त्तिताः ।
विवृद्धदर्पा बलिनः सुदुर्जया
रणे समग्रैरपि देवदानवैः ॥५०॥

तद्वानरं सैन्यमुदारसत्त्वं
बलं च वीर्यं च समीक्ष्य तेषां ।
श्रुत्वा तु संख्यां कथितां स राजा
विवर्णरूपोऽभवदल्पबुद्धिः ॥५१॥

इत्यार्षे रामायणे युद्धकाण्डे वानरानीकदर्शनं
नाम द्वितीयः सर्गः ॥

# युद्धकाण्डं

## III.

हन्त ते संप्रवक्ष्यामि पुनरन्यान् वनौकसः ।
राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितं ॥ १ ॥
यस्यैते हेमकपिलाः केशा दीप्ताग्निसंनिभाः ।
य एष दूरतो भाति शालिकूट इवोच्छ्रितः ॥ २ ॥
यस्य रोमाणि शोभन्ते सूर्यस्येव गभस्तयः ।
श्यालो वानरराजस्य सुग्रीवस्य महात्मनः ॥ ३ ॥
पृथिव्यां विश्रुतः शूरो दधिवक्त्रोऽतिविश्रुतः ।
यं पृष्ठतोऽनुगच्छन्ति शतशो हरियूथपाः ॥ ४ ॥
एष कोटीसहस्रेण वानराणां महौजसां ।
त्वामुत्सहति संग्रामे जेतुं परपुरंजय ॥ ५ ॥
नीलानिव महामेघान् यानेताननुपश्यसि ।
असिताञ्जनसंकाशान् युधि सत्यपराक्रमान् ॥ ६ ॥
नखदन्तायुधान् वीरांस्तीव्रकोपान् भयावहान् ।
असंख्येयाननिर्देश्यांस्तीरस्थान् लवणाम्भसः ॥ ७ ॥
पर्वतेष्वथ वृक्षेषु नदीषु च कृतालयाः ।
एते त्वामभिगच्छन्ति राजन् युधि सुदुर्जयाः ॥ ८ ॥
एषां मध्ये स्थितो राजा धूम्राक्षो भीमदर्शनः ।
पर्जन्य इव जीमूतैः समन्तात् परिवारितः ॥ ९ ॥

ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् ।
सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ १० ॥
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमं ।
भ्रात्रा समानं रूपेण विशिष्टं तु पराक्रमे ॥ ११ ॥
उभावेतौ महावीर्यौ बलिनौ कामरूपिणौ ।
वानरौ युद्धकुशलौ महत् कर्म करिष्यतः ॥ १२ ॥
एताभ्यां सुमहत् कर्म कृतं शक्रस्य वै पुरा ।
युध्यतः सह देवेन्द्रैः संग्रामे तारकामये ॥ १३ ॥
देवासुरे जाम्बवतासुराश्च बहवो हताः ।
आरुह्य पर्वताग्राणि क्षिपन्ति विपुलाः शिलाः ॥ १४ ॥
वृक्षांश्च विविधाकारान् न मृत्योरुद्विजन्ति च ।
राक्षसानां च सदृशाः पिशाचानां च सैनिकाः ॥ १५ ॥
अनीकाग्रेषु तिष्ठन्ति बलिनो भीमविक्रमाः ।
एताभ्यां निहता वीरा बहवः कामरूपिणः ॥ १६ ॥
यस्मान्न परमं भूतं वानरेष्विह विद्यते ।
यं त्वेनमभिसंरब्धं प्लवमानमवस्थितं ॥ १७ ॥
प्रेक्षन्ते वानराः सर्वे सालतालशिलायुधाः ।
एष कोटिसहस्रेण हरीणां परिवारितः ॥ १८ ॥
बलेन बलसंपन्नो नाम्ना पद्म इति स्मृतः ।
यमेनमम्बुदाकारं गर्जन्तमिव तोयदं ॥ १९ ॥

सैन्यं निवेशमानं च जृम्भन्तं च प्रपश्यसि ।
एष वानरमुख्यानां पद्मकोटीं प्रकर्षति ॥ २० ॥
इन्द्रजानुरिति ख्यातश्चण्डः परमदारुणः ।
यः स्थितो योजनं शैले गच्छन् पार्श्वेन सेवते ॥ २१ ॥
ऊर्ध्वं तथैव कायेन गतः प्राप्तस्त्रियोजनं ।
यस्मान्न परमं भूतं वानरेष्विह विद्यते ॥ २२ ॥
श्रुतः संनादनो नाम वानराणां पितामहः ।
येन युद्धं महद्दत्तं चतुर्दन्तस्य हस्तिनः ॥ २३ ॥
पराजयश्च न प्राप्तः स एष यूथपो महान् ।
यो राजा पर्वते द्रोणे बहुकिन्नरसेविते ॥ २४ ॥
यस्य विक्रममाणस्य शक्रस्येव पराक्रमः ।
एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मना ॥ २५ ॥
पुरा देवासुरे युद्धे सहायार्थं त्रिदिवौकसां ।
यस्य वैश्रवणो राजा जम्बूमुपरितिष्ठते ॥ २६ ॥
विहारशीलो धर्मात्मा भ्राता ते नैरृताधिप ।
एष हैमवतो राजा बलवान् वानरर्षभः ॥ २७ ॥
युद्धेष्वाकत्थनो नित्यं क्रथनो नाम यूथपः ।
वृतः कोटीसहस्रेण हरीणां वातरंहसां ॥ २८ ॥
एकोऽप्याशंसते लङ्कां स्वेनानीकेन मर्दितुं ।
यो गङ्गामनुपर्येति त्रासयन् हस्तियूथपान् ॥ २९ ॥

हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ।
ऋक्षाणां वानराणां च पर्वते गन्धमादने ॥ ३० ॥
एष यूथपतिर्नेता राजन् गिरिगुहाशयः ।
हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु ॥ ३१ ॥
उशीरवीजमासाद्य पर्वतं मन्दरोपमं ।
रमते वानरश्रेष्ठो दिवि शक्र इव स्वयं ॥ ३२ ॥
राजन् शतसहस्राणां सहस्रैः परिवारितः ।
एष दुर्मर्षणो युद्धे प्रमाथी नाम यूथपः ॥ ३३ ॥
वातेनेवोद्धूतान् मेघान् यानेताननुपश्यसि ।
निवर्तमानं बहुशो यत्रैतद्बहुलं रजः ॥ ३४ ॥
एते कालमुखा नाम गोलाङ्गूला महाबलाः ।
शतं शतसहस्राणां कोठिकोठिशतं तथा ॥ ३५ ॥
गोलाङ्गूला महाराज गवाक्षं नाम यूथपं ।
परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥ ३६ ॥
भ्रमरैः सेविता यत्र सर्वकामफलद्रुमाः ।
यः सूर्यतुल्यवर्णाभमनुपर्येति पर्वतं ॥ ३७ ॥
यस्य भाभिः सदा भान्ति सौवर्णा इव पक्षिणः ।
यं नित्यं देवगन्धर्वा न त्यजन्ति सचारणाः ॥ ३८ ॥
तत्रैष राजा रमते रम्ये काञ्चनपर्वते ।
मुख्यो वानरमुख्यानां केशरी नाम वानरः ॥ ३९ ॥

षष्टिर्गिरिसहस्राणि रम्याः काञ्चनपर्वताः ।
तेषां मध्ये गिरिश्रेष्ठस्त्वमिवानघ रक्षसां ॥ ४० ॥
तत्रैते कपिलाः श्वेतास्ताम्रास्या हरिपिङ्गलाः ।
निवसन्ति गिरिश्रेष्ठे तीक्ष्णदन्तनखायुधाः ॥ ४१ ॥
सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ।
आशीविषसमस्पर्शा घोररूपाः प्लवङ्गमाः ॥ ४२ ॥
सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गविक्रमाः ।
तत्रैव नित्यमचले भास्करं ह्युपतिष्ठते ॥ ४३ ॥
महापर्वतसंकाशा महाजीमूतसंनिभाः ।
यो विषाणमुपागृह्णात् संग्रामे हस्तिवानरे ॥ ४४ ॥
तारया जनको वीरः सुषेणो नाम वीर्यवान् ।
निखर्वेण वृतः श्रीमान् हरीणां वातरंहसां ॥ ४५ ॥
कामरूपी महावीर्यः स एष समरोद्यतः ।
राजन् पृथिव्यां विख्यातो नाम्ना शतबलिर्हरिः ॥ ४६ ॥
वृतः कोटीसहस्रेण लङ्कां प्रार्थयते ह्यसौ ।
गयो गवाक्षो गवयो नलो नीलश्च वानरः ॥ ४७ ॥
उल्कामुखश्च दुर्धर्षः शरभो गन्धमादनः ।
एकैक एषां योधानां कोटिभिर्दशभिर्वृतः ॥ ४८ ॥
तथान्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ।
न शक्यन्ते बहुत्वात् तु संख्यातुं लघुविक्रमाः ॥ ४९ ॥

एते महाराज महाप्रभावा
    महाबलाश्चाप्रतिमाश्च युद्धे ।
शाखामृगाः पर्वतसंनिकाशाः
    प्रकीर्तिता मुख्यतमाः पृथिव्यां ॥५०॥
सर्वे महाराज महाप्रभावाः
    सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन
    कर्तुं परिध्वस्तविशीर्णशैलां ॥५१॥

इत्यार्षे रामायणे युद्धकाण्डे सारणवाक्यं
नाम तृतीयः सर्गः ॥

# युद्धकाण्डं

## IV.

सारणस्यान्तरं दृष्ट्वा राक्षसस्य महात्मनः ।
बलमालोकयन् सर्वं शुको रावणमब्रवीत् ॥ १ ॥
स्थितान् पश्यसि यानेतान् मत्तानिव महाद्विपान् ।
न्यग्रोधानिव गाङ्गेयान् सालान् हैमवतानिव ॥ २ ॥
एते दुष्प्रसहा राजन् बलिनः कामरूपिणः ।
दैत्यदानवसंकाशा युद्धे देवासुरोपमाः ॥ ३ ॥
एषां कोटीसहस्राणि नव पञ्च च सप्त च ।
तथा शतसहस्राणि दशार्बुदशतानि च ॥ ४ ॥
एते सुग्रीवसहिताः किष्किन्ध्यानिलयाः सदा ।
हरयो देवगन्धर्वैरुत्पन्ना दानवैस्तथा ॥ ५ ॥
यौ तु पश्यसि तिष्ठन्तौ कुमारौ देवरूपिणौ ।
मैन्दश्च द्विविदश्चैव न समोऽस्त्यनयोर्युधि ॥ ६ ॥
ब्रह्मणा समनुज्ञातावमृतप्राशनावुभौ ।
आशंसेते पुरीं लङ्कामेतौ मर्दितुमोजसा ॥ ७ ॥
यावेतावनयोः पार्श्वे स्थितौ पर्वतसंनिभौ ।
सुमुखो दुर्मुखश्चैव मृत्युपुत्रौ पितुः समौ ॥ ८ ॥
प्रेक्षन्तौ नगरीं लङ्कां कोटिभिर्दशभिर्वृतौ ।
आशंसेतां पुरीं लङ्कामेतौ मर्दितुमोजसा ॥ ९ ॥

यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरं ।
यो बलात् क्षोभयेत् क्रुद्धः समुद्रमपि तेजसा ॥१०॥
एष धर्षितवान् पूर्वं लङ्कां सीतां च दृष्टवान् ।
एनं पश्य पुरा दृष्टं कपिं प्रत्यागतं पुनः ॥११॥
ज्येष्ठः केशरिणः पुत्रो वातात्मज इति श्रुतः ।
हनूमानिति विख्यातो लङ्घितो येन सागरः ॥१२॥
कामरूपी हरिश्रेष्ठो बलवीर्यसमन्वितः ।
अनिवार्यगतिश्चैव यथानिलगतिस्तथा ॥१३॥
उद्यन्तं भास्करं बालो दृष्ट्वैवाभिगतः किल ।
त्रियोजनसहस्रान्तमध्वानं समतीत्य यः ॥१४॥
आदित्यमाहरिष्यामि न ममोपरि यास्यति ।
इति निश्चित्य मनसा पुरैव बलदर्पितः ॥१५॥
अनाधृष्यतमं देवमपि देवर्षिदानवैः ।
अनासाद्यैव पतितो भास्करोदयने गिरौ ॥१६॥
पतितस्य कपेरस्य हनुरेका शिलातले ।
किञ्चिद्भग्ना दृढतनोर्हनूमानेष तेन वै ॥१७॥
इत्येवागमयुक्तेन मयैष विदितो हरिः ।
नास्य शक्यं बलं रूपं प्रभावं वापि वर्णितुं ॥१८॥
आशंसत्येष एको वै लङ्कां मर्दितुमोजसा ।
यस्त्वेषोऽनन्तरः श्यामः शूरः पद्मदलेक्षणः ॥१९॥

इक्ष्वाकूणामतिरथो लोके विश्रुतपौरुषः ।
यस्मान्न चलते धर्मो यो धर्मं नातिवर्तते ॥ २० ॥
यो दिव्यमस्त्रं ब्राह्मं वै वेत्ति वेदविदां वरः ।
अस्त्रग्रामः ससंहारो यस्मिन् वीरे प्रतिष्ठितः ॥ २१ ॥
यो भिन्द्याद्गगनं बाणैर्वसुधां चावदारयेत् ।
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ॥ २२ ॥
यस्य भार्या जनस्थानादानीता प्राक् त्वयाश्रमात् ।
सोऽयं दाशरथी रामस्त्वां योद्धुमभिवर्तते ॥ २३ ॥
यश्चैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः ।
विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्द्धजः ॥ २४ ॥
एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमोऽरिहा ।
नये युद्धे च कुशलः सर्वास्त्रविधिपारगः ॥ २५ ॥
अमर्षी दुर्जयो जेता विक्रान्तः समरे बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २६ ॥
नित्यं संग्रामशीलश्च नित्यमुद्यतकार्मुकः ।
न ह्येष राघवस्यार्थे जीवितं परिरक्षति ॥ २७ ॥
एष चाशंसते युद्धे निहन्तुं सर्वराक्षसं ।
यस्तु पार्श्वमसौ सव्यं रामस्याक्रम्य तिष्ठति ॥ २८ ॥
रक्षोगणवृतो भ्राता तवैष स विभीषणः ।
श्रीमता राजराजेन लङ्कायामभिषेचितः ॥ २९ ॥

# रामायणं

त्वामेव प्रतिसंरब्धो रामसाचिव्यमागतः ।
अत्रैव च मया प्राप्त आगमो वानरेषु वै ॥३०॥
प्रजापतेः किल पुरा वाताविद्धं रजस्तदा ।
वामाक्षिप्रसृतं तेन स्पृष्ट्वा रजसि वैकृतं ॥३१॥
वामेनादाय हस्तेन क्षिप्तं दूरे पपात च ।
मनसा चिन्तितं तेन किमस्मात् प्रभविष्यति ॥३२॥
तत्रापि तरला भासा फेनबुद्बुदसप्रभा ।
उत्थिता विग्रहवती नारी कमललोचना ॥३३॥
चन्द्रबिम्बानना बाला विद्युत्तरललोचना ।
नैव देवी न गन्धर्वी नासुरी न च पन्नगी ॥३४॥
नेदृग्रूपवती दृष्टा स्वयमेव स्वयम्भुवा ।
लोकपालास्तु तां दृष्ट्वा तं देशं समुपागताः ॥३५॥
रविस्तत्राब्रवीद्वाक्यमुपसृत्य प्रजापतिं ।
कस्यैषा केन कार्येण संप्राप्तेह शुभानना ॥३६॥
पुरीं भोगवतीं त्यक्त्वा नागकन्या किमागता ।
सिद्धिर्वृद्धिस्तथा लक्ष्मीः प्रभा तुष्टिः प्रभाकरी ॥३७॥
आसां रूपमवष्टभ्य उत्थिता जगतीतलात् ।
प्रजापतिस्तदा तत्र रवेरश्रावयत् कथां ॥३८॥
ततोऽक्षिरजसो जातां स्निग्धां स्निग्धेन चक्षुषा ।
भास्करो भास्कराभां तामुपगुह्य गतस्ततः ॥३९॥

कदाचिदथ तां कन्यां रूपयौवनदर्पितां ।
स्नातां मन्दरपृष्ठे तु रविर्वचनमब्रवीत् ॥ ४० ॥
मत्तेजसा महावीर्यस्त्वप्रधृष्यो महारणे ।
देवदानवयक्षाणां पन्नगानां च रक्षसां ॥ ४१ ॥
अबध्यस्त्रिदशानां च तव पुत्रो भविष्यति ।
वरेण छन्दयित्वा तामगमत् सह्य एव तु ॥ ४२ ॥
रविणा बालभावाच्च बालेति परिकीर्त्तिता ।
अथ काले तदा श्रीमान् शक्रः सुरगणार्च्चितः ॥ ४३ ॥
विचरन् मन्मथाविष्टः सर्वर्तुकुसुमाकरे ।
स दृष्ट्वा चारुसर्वाङ्गीं परं विस्मयमागतः ॥ ४४ ॥
का त्वं भवसि यक्षाणां पन्नगानां च रक्षसां ।
मनो हरसि मे भीरु कान्ते कान्ततरा ह्यसि ॥ ४५ ॥
स तु भावेन दिव्येन पाणिना सुमनोहरां ।
पस्पर्श जलशीतेन वचनं चेदमब्रवीत् ॥ ४६ ॥
वानरौ दिव्यरूपौ ते सर्वज्ञौ कामरूपिणौ ।
उत्पत्स्येते महाभागे मा विषादं गमिष्यसि ॥ ४७ ॥
यमजौ तौ महाभागौ बाली सुग्रीव एव च ।
किष्किन्ध्या नाम पुण्या तु दिव्यपुष्पफलैर्युता ॥ ४८ ॥
तत्र राज्यं करिष्येते सर्ववानरपुङ्गवैः ।
इक्ष्वाकुकुलसंभूतो रामो नाम महायशाः ॥ ४९ ॥

विष्णुर्मानुषरूपोऽसौ तस्यैकः सख्यमेष्यति ।
यं तु पश्यसि तिष्ठन्तं लक्ष्मणात् समनन्तरं ॥५०॥
सर्वशाखामृगेन्द्राणां भर्तारमपराजितं ।
तेजसा यशसा बुद्ध्या बलेनाभिजनेन च ॥५१॥
यः कपीनभिसंधत्ते हिमवानिव पर्वतान् ।
किष्किन्ध्यां यः समध्यास्ते गुहां वानरसंकुलां ॥५२॥
दुर्गां पर्वतमध्यस्थां प्रधानैः सह यूथपैः ।
यस्यैषा काञ्चनी माला शोभते शतपुष्करा ॥५३॥
कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ।
एतां मालां च तारां च कपिराज्यं च शाश्वतं ॥५४॥
सुग्रीवे बालिनं हत्वा रामेण प्रतिपादितं ।
स एषोऽवस्थितो युद्धे बहुभिः किं प्रयोजनं ॥५५॥
शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ।
शतं कोटिसहस्राणां शङ्ख इत्यभिधीयते ॥५६॥
शतं शङ्खसहस्राणां वृन्दमाहुर्मनीषिणः ।
शतं वृन्दसहस्राणां महावृन्दमिति स्मृतं ॥५७॥
महावृन्दसहस्राणां शतं पद्मं परिश्रुतं ।
शतं पद्मसहस्राणां महापद्मं विभाव्यते ॥५८॥
महापद्मसहस्राणां तथा खर्बमिहोच्यते ।
एष कोटीसहस्रेण तथा शङ्खशतेन च ॥५९॥

एष वृन्दसहस्रेण महावृन्दशतेन च ।
एष पद्मसहस्रेण महापद्मशतेन च ॥ ६० ॥
तथा खर्वसहस्रेण समग्रेण च वानरः ।
सुग्रीवो वानरेन्द्रस्त्वां संप्रहारार्थमुद्यतः ।
यदत्रानन्तरं कार्यं तद्भवान् कर्तुमर्हति ॥ ६१ ॥

इमां महाराज समीक्ष्य वाहिनीं
समुद्यतां प्रज्वलितग्रहोपमां ।
तथा प्रयत्नः परमो विधीयतां
यथा जयः स्यान्न रणे पराजयः ॥ ६२ ॥

इत्यार्षे रामायणे युद्धकाण्डे बलसंख्यानं
नाम चतुर्थः सर्गः ॥

# रामायणं

## V.

शुकेन तु समाख्याते दृष्ट्वा तां हरिवाहिनीं ।
समीपस्थं च रामस्य भ्रातरं स्वं विभीषणं ॥ १ ॥
लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणं ।
सर्ववानरराजं च सुग्रीवं च महाबलं ॥ २ ॥
किञ्चिदागतसंत्रासो जातक्रोधश्च रावणः ।
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ३ ॥
रोषगद्गदया वाचा संरब्धस्तर्जयन्निव ।
न तावत् सदृशं ह्येतत् सचिवैरुपजीविभिः ॥ ४ ॥
विप्रियं नृपतेर्वक्तुं निग्रहानुग्रहे प्रभोः ।
रिपूणां प्रतिकूलानां युद्धार्थमभिवर्ततां ॥ ५ ॥
उभयोः सदृशं वाक्यं युक्तमप्रस्तुतं तु वां ।
आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः ॥ ६ ॥
सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ।
गृहीतं वा न विज्ञातं भावः शास्त्रस्य वां वृथा ॥ ७ ॥
ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या ध्रिये ह्यहं ।
किं वां मृत्युभयं नास्ति मामुक्त्वा परुषं वचः ॥ ८ ॥
यस्य मे शासने जिह्वा प्रयच्छति शुभाशुभं ।
अप्येव दहनं प्राप्य वने तिष्ठन्ति पादपाः ॥ ९ ॥

# युद्धकाण्डं

राजरोषपरामृष्टा न तिष्ठन्त्यपराधिनः ।
बधेयं खल्विमौ पापौ शत्रुपक्षप्रशंसकौ ॥ १० ॥
यदि पूर्वोपकारैर्मे न क्रोधो मृदुतां व्रजेत् ।
अद्य वैवस्वतं देवं पश्येतां प्रेषितौ मया ॥ ११ ॥
गच्छतां लघु दुर्वृत्तौ संनिकर्षादितो मम ।
उभौ न द्रष्टुमिच्छामि युवामप्रियवादिनौ ॥ १२ ॥
न युवां हन्तुमिच्छामि स्मरन्नुपकृतानि वै ।
उभावेतौ कृतघ्नौ तौ मम स्नेहपराङ्मुखौ ॥ १३ ॥
दुराचारौ परं मूढौ रिपुपक्षप्रशंसकौ ।
एवमुक्तौ तु सव्रीडावुभौ तौ शुकसारणौ ॥ १४ ॥
रावणं जयशब्देन प्रतिनन्द्य विनिर्गतौ ।
अथाब्रवीत् दशग्रीवः समीपस्थं महोदरं ॥ १५ ॥
उपस्थापय मे शीघ्रं चरमुख्यान् निशाचरान् ।
ततश्चराः सत्वरिताः प्राप्ताः पार्थिवशासनात् ॥ १६ ॥
उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा ।
तानब्रवीत् ततो वाक्यं रावणो राक्षसाधिपः ॥ १७ ॥
चरान् प्रत्ययिनः शूरान् भक्तान् विगतसाध्वसान् ।
यूयं गच्छत रामस्य व्यवसायं परीक्षितुं ॥ १८ ॥
मन्त्रेष्वभ्यन्तराः के स्युः प्रीतिं के च समागताः ।
क्व वत्स्यति निशामद्य कतमेनेष्यते पथा ॥ १९ ॥

विज्ञाय सर्वं नैपुण्यादागच्छत कृतत्वराः ।
चारेण निकृतः शत्रुः पण्डितैर्वसुधाधिपैः ॥ २० ॥
युद्धे स्वल्पप्रयत्नेन समासाद्य निरस्यते ।
चरास्तु ते तथेत्युक्त्वा शार्दूलाद्या दशाननं ॥ २१ ॥
कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ।
ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ ॥ २२ ॥
प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ।
प्रच्छन्नांस्तु चरांस्तांश्च ददर्श स विभीषणः ॥ २३ ॥
अवज्ञाय विधिं तेषां स चक्रे राक्षसेश्वरः ।
विभीषणेन तत्रस्था निगृहीता यदृच्छया ॥ २४ ॥
वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः ।
पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २५ ॥

इत्यार्षे रामायणे युद्धकाण्डे चारविधिर्
नाम पञ्चमः सर्गः ॥

# युद्धकाण्डं

## VI.

वीक्षमाणो विवर्णं तु शार्दूलं शोककर्षितं ।
भयाज्जडीकृतैरङ्गैः श्वसन्तमिव पन्नगं ॥ १ ॥
उवाच प्रहसन्नेव रावणो भीमविक्रमः ।
अयथावच्च ते वर्णो दीनश्चासि निशाचर ॥ २ ॥
नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ।
इति तेनानुशिष्टस्तु वचो मन्दमुदीरयन् ॥ ३ ॥
उवाच प्रहसन्तं तु रावणं लोकरावणं ।
न ते चारयितुं शक्या राजन् वानरपुङ्गवाः ॥ ४ ॥
विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ।
नाभिभावयितुं शक्याः संप्रश्नोऽत्र न विद्यते ॥ ५ ॥
सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः ।
प्रविष्टमात्रो ज्ञातोऽहं बले तस्मिन्नवारिते ॥ ६ ॥
बलाद्गृहीतो बलिभिर्बहुधास्मि विकर्षितः ।
जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चापि हतो भृशं ॥ ७ ॥
परिभूतोऽस्मि हरिभिर्बलवद्भिरमर्षणैः ।
परिभूय च सर्वत्र नीतोऽहं रामसंसदि ॥ ८ ॥
रुधिरदिग्धसर्वाङ्गो विह्वलश्चलितेन्द्रियः ।
हरिभिर्बध्यमानश्च याचमानः कृताञ्जलिः ॥ ९ ॥

राघवेण परित्रातो जीवाम्येष यदृच्छया ।
एष शैलशिलासंघैः पूरयित्वा महार्णवं ॥ १० ॥
द्वारमावृत्य लङ्काया रामस्तिष्ठति सायुधः ।
गारुडं व्यूहमास्थाय सर्वतो हरिभिर्वृतः ॥ ११ ॥
मां विसृज्य महातेजा लङ्कामेवोपसर्पति ।
पुरीप्राकारमायातः क्षिप्रमेकतरं कुरु ॥ १२ ॥
सीतां वा संप्रयच्छाशु युद्धं वाशु प्रदीयतां ।
मनसा चोत्पपातेव तच्छ्रुत्वा राक्षसेश्वरः ॥ १३ ॥
शार्दूलस्य महद्वाक्यमथोवाच स रावणः ।
यदि मां प्रतियोत्स्यन्ति देवगन्धर्वदानवाः ॥ १४ ॥
नाहं सीतां प्रदास्यामि सर्वलोकभयादपि ।
एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् ॥ १५ ॥
चरिता भवता केऽत्र शूराः केऽत्र प्लवङ्गमाः ।
कीदृशाः कति वा सैन्ये वानरा ये दुरासदाः ॥ १६ ॥
एतत् सर्वं समासेन तत्त्वतो वक्तुमर्हसि ।
तदात्र प्रतिपत्स्यामो ज्ञात्वा तेषां बलाबलं ॥ १७ ॥
अवश्यं बलसंख्यानं कर्तव्यं युद्धवृद्धये ।
अथैवमुक्तः शार्दूलो रावणेन दुरात्मना ॥ १८ ॥
इदं वचनमारेभे वक्तुं रावणसंसदि ।
ऋक्षराजस्य पुत्रोऽत्र महाप्राज्ञः सुदुर्जयः ॥ १९ ॥

# युद्धकाण्डं

पितामहसुतश्चात्र जाम्बवानिति विश्रुतः ।
बालिनश्च सुतो वीरः शत्रूणां सुदुरासदः ॥ २० ॥
अङ्गदो युवराजश्च तारेयोऽत्र महाबलः ।
केशरी चापि बलवानागतः स्वबलेन वै ॥ २१ ॥
कदनं कृतमेकेन यस्य पुत्रेण रक्षसां ॥।
सुषेणो नाम धर्मात्मा पुत्रो धन्वन्तरेर्बली ॥ २२ ॥
सौम्यः सोमात्मजश्चात्र नाम्ना दधिमुखो हरिः ।
सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः ॥ २३ ॥
मृत्युर्वानररूपेण स्वयं सृष्टः स्वयम्भुवा ।
मैन्दश्च द्विविदश्चैव द्वौ वीरावश्विनोः सुतौ ॥ २४ ॥
पुत्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः ।
गयो गवाक्षो गवयः शरभो गन्धमादनः ॥ २५ ॥
श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसंभवः ।
वरुणस्य च पुत्रोऽत्र हेमकूटः प्रतापवान् ॥ २६ ॥
सर्ववानरमुख्यश्च सुग्रीवः प्लवगर्षभः ।
दश वानरकोट्योऽत्र शूराणां युद्धकाङ्क्षिणां ॥ २७ ॥
श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ।
पुत्रो दशरथस्यात्र सिंहसंहननो युवा ॥ २८ ॥
दूषणो निहतो येन खरोऽथ त्रिशिरास्तथा ।
नास्ति रामेण सदृशो विक्रमे भुवि कश्चन ॥ २९ ॥

विराधो निहतो येन कबन्धश्चामरोपमः ।
सेतुर्बद्धश्च रामेण को रामसदृशो भुवि ॥३०॥
लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः ।
यस्य वाणपथं प्राप्य न जीवेदपि वासवः ॥३१॥
राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः ।
प्रतिगृह्य पुरीं लङ्कां राघवस्य हिते स्थितः ॥३२॥
इति सर्वं समाख्यातं तव वै शात्रवं बलं ।
सुवेलेऽधिष्ठितं शैले शेषे कार्ये भवान् गतिः ॥३३॥

इत्यार्षे रामायाणे युद्धकाण्डे शार्दूलवाक्यं
नाम षष्ठः सर्गः ॥

# युद्धकाण्डं

## VII.

चारेभ्यो रावणः श्रुत्वा प्राप्तं रामं च लक्ष्मणं ।
ज्ञातायासोऽभवत् किञ्चित् सचिवानपि चाह्वयत् ॥ १ ॥
तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागता द्रुतं ।
शिरसाभिप्रणम्यास्य तस्थुः प्राञ्जलयोऽग्रतः ॥ २ ॥
एष दाशरथी रामः सबलस्तु समीपतः ।
अप्रमत्तैश्च वो भाव्यं प्रभात इह चेष्यति ॥ ३ ॥
संचिन्तयित्वा निपुणं निश्चित्य च बलाबलं ।
विसृज्य सचिवांश्चैव प्रविवेश स्वमालयं ॥ ४ ॥
ततो राक्षसमाहूय विद्युज्जिह्वं महाबलं ।
मायाविनं महाकायं प्राविशद्यत्र मैथिली ॥ ५ ॥
तमागतं महामायमब्रवीद्राक्षसाधिपः ।
मोहयिष्याम्यहं सीतां मायया जनकात्मजां ॥ ६ ॥
शिरो मायामयं कृत्वा मुहूर्त्तेन निशाचर ।
मां त्वं समुपतिष्ठेथा महच्च सशरं धनुः ॥ ७ ॥
एवमुक्तस्तथेत्युक्त्वा विद्युज्जिह्वो निशाचरः ।
दर्शयामास तां मायां सुप्रयुक्तां स रावणे ॥ ८ ॥
तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणं ।
संप्रविष्टो विवेशाथ अशोकवनिकां शुभां ॥ ९ ॥

ततो दीनामनर्हां तां ददर्श जनकात्मजां ।
ध्यायन्तीं तत्र भर्तारमशोकवनिकां गतां ॥१०॥
उपास्यमानां घोराभी राक्षसीभिरदूरतः ।
उपासर्पत् ततः सीतां प्रहृष्टो धनदानुजः ॥११॥
दुष्टात्मा वचनं चेदमुवाच जनकात्मजां ।
अधोमुखमुखीं बालामुपविष्टां पराङ्मुखीं ॥१२॥
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥१३॥
संनियच्छाम्यहं सीते त्वयि क्रोधं समुत्थितं ।
द्रवतो दुर्गमासाद्य हयानिव सुसारथिः ॥१४॥
सान्त्वमाना मया भद्रे यमाश्रित्य प्रजल्पसि ।
खरहन्ता स ते भर्ता राघवः समरे हतः ॥१५॥
छिन्नं ते सर्वथा मूलं दर्पस्ते निहतो मया ।
व्यसनेनात्मनः सीते मम भार्या भविष्यसि ॥१६॥
विसृज्य विमतिं बाले किं मृतेन करिष्यसि ।
भव स्वभार्या भार्याणां सर्वासामीश्वरी भव ॥१७॥
मन्दभाग्ये निरानन्दे मूढे पण्डितमानिनि ।
शृणु भर्तृबधं घोरं सीते वृत्रबधं यथा ॥१८॥
उपायातः समुद्रान्तं मां हन्तुं किल राघवः ।
वानरेन्द्रप्रणीतेन बलेन महता वृतः ॥१९॥

# युद्धकाण्डं

संनिविष्टः समुद्रस्य तीरमासाद्य दक्षिणं ।
बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ २० ॥
अथाध्वनि परिश्रान्तमर्द्धरात्रे स्थितं बलं ।
सुखसुप्तं समासाद्य चरितं प्रथमं चरैः ॥ २१ ॥
तत् प्रहस्तप्रणीतेन बलेन महता मम ।
बलमस्याहतं रात्रौ यत्र रामः सलक्ष्मणः ॥ २२ ॥
पट्टिशाः परिघाश्चैव गदा दण्डास्तथायसाः ।
बाणजालानि शूलानि भास्वराः कूटमुद्गराः ॥ २३ ॥
क्षेपण्यस्तोमराश्चोग्राश्चक्राणि मुषलानि च ।
कम्पना अङ्कुशा भल्लाः कालचक्रा गदास्तथा ॥ २४ ॥
उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ।
अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ॥ २५ ॥
असकृद्दृढहस्तेन शिरश्छिन्नं महासिना ।
उत्पतंस्ताडितः पृष्ठे निगृहीतो यदृच्छया ॥ २६ ॥
दिशं प्रधावितः पूर्वं लक्ष्मणः प्लवगैः सह ।
विभीषणश्च निहतो राक्षसेन्द्रो महाबलः ॥ २७ ॥
सुग्रीवो ग्रीवया शेते भग्नया प्लवगाधिपः ।
निरस्तो भग्नदंष्ट्रश्च हनूमान् विहनुः कृतः ॥ २८ ॥
इन्द्रजानुस्तु जानुभ्यामुत्पतन् निहतो भुवि ।
पट्टिशैर्बहुभिश्छिन्नः पतितः पादपो यथा ॥ २९ ॥

मैन्दश्च द्विविदश्चोभौ निहतौ वानरर्षभौ ।
निपतन्तौ नदन्तौ च रुधिरौघपरिप्लुतौ ॥३०॥
युधि विक्रम्य पुत्रेण मम शत्रुजिता किल ।
असिनाभ्याहतश्छिन्नो विकीर्णः सुमहाबलः ॥३१॥
सद्यः पपात मेदिन्यां पनसोऽथ द्रुमो यथा ।
नाराचैर्बहुभिश्छिन्नः शेते उर्व्यां दधीमुखः ॥३२॥
कुमुदस्तु महातेजा निष्पिष्टः पद्ममालिना ।
अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः ॥३३॥
शातितो रुधिरोद्गारी भूमौ निपतितोऽङ्गदः ।
हयैरन्ये तथा नागैरथ चक्रैस्तथापरे ॥३४॥
शेरते मृदितास्तत्र प्रचारो गोगणैरिव ।
प्रसृताश्चापरे त्रस्ता हन्यमाना जघन्यतः ॥३५॥
अनुप्रणुन्ना रक्षोभिः सिंहैरिव महाद्विपाः ।
सागरे पतिताः केचित् केचिद्गगनमाश्रिताः ॥३६॥
ऋक्षा वृक्षान् समारूढा वानराः कुञ्जमाश्रिताः ।
सागरस्य च तीरेषु पर्वतेषु गुहासु च ॥३७॥
पिङ्गाक्षास्ते विरूपाक्षैर्बहुभिर्बहवो हताः ।
एवं ते निहतो भर्ता ससैन्यो मम सेनया ॥३८॥
क्षतजाक्तं रजोध्वस्तमिदं तस्याहृतं शिरः ।
ततः परमसंहृष्टो रावणो राक्षसाधिपः ॥३९॥

# युद्धकाण्डं

सीतायास्तत्र शृण्वन्त्या राक्षसीमिदमब्रवीत् ।
राक्षसं क्रूरकर्माणं विद्युज्जिह्वं प्रवेशय ॥ ४० ॥
येन तद्राघवशिरः संग्रामात् स्वयमाहृतं ।
एवमुक्ता तु तं गत्वा राक्षसी राक्षसं द्रुतं ॥ ४१ ॥
प्रावेशयत संभ्रान्ता महामायं निशाचरं ।
विद्युज्जिह्वो गृहीत्वाथ शिरस्तच्च शरासनं ॥ ४२ ॥
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ।
तमब्रवीत् ततो राजा रावणो राक्षसं स्थितं ॥ ४३ ॥
विद्युज्जिह्वं महाघोरं समीपपरिवर्तिनं ।
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ॥ ४४ ॥
अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ।
एवमुक्तः स दुष्टात्मा चच्छिरः प्रियदर्शनं ॥ ४५ ॥
पुरो निक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ।
रावणश्च विचिक्षेप भास्वरं कार्मुकं महत् ॥ ४६ ॥
त्रिषु लोकेषु विख्यातं रामस्यैतदिति ब्रुवन् ।
एतत् तदिति रामस्य कार्मुकं ज्यासमाहितं ।
प्रहस्तेन इहानीतं हत्वा तं मानुषं निशि ॥ ४७ ॥
स रावणस्तां रुदतीं पतिव्रतां निरीक्ष्य भर्तुर्व्यसनेन कर्षितां ।
उवाच सीतां किमवेक्ष्यमस्ति ते भव स्वभार्या मम मत्तकाशिनि ।४८।

# रामायणं

## VIII.

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमं ।
सुग्रीवं सुनसं सुभ्रु व्यायतास्यं मनोरमं ॥ १ ॥
नयने मुखवर्णं च भर्तुश्च सदृशं मुखं ।
केशान् केशान्तदेशं च तं च चूडामणिं शुभं ॥ २ ॥
एतैः सर्वैरभिज्ञानैः परिज्ञाय सुदुःखिता ।
विजगर्हेऽथ कैकेयीं क्रोशन्ती कुररी यथा ॥ ३ ॥
सकामा भव कैकेयि हतोऽयं कुलनन्दनः ।
कुलमुत्सादितं सर्वं यथा कलहशीलया ॥ ४ ॥
आर्येण किन्नु कैकेय्याः कृतं रामेण विप्रियं ।
यो गृहाच्चीरवसनस्तया वै प्रेषितो वनं ॥ ५ ॥
एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी ।
पपात भूमौ दुःखार्त्ता छिन्नेव कदली वने ॥ ६ ॥
सा मुहूर्त्तं समाश्वास्य प्रतिलभ्य च चेतनां ।
तच्छिरः समुपाघ्राय विललापाकुलेक्षणा ॥ ७ ॥
हा हतास्मि महाबाहो पतिव्रतमनुव्रता ।
इयं ते पश्चिमावस्था हतास्मि विधवा कृता ॥ ८ ॥
प्रथमं शरणं नार्याः पत्युः पुण्यमिहोच्यते ।
इमां ते पश्चिमावस्थां या पश्यामि धिगस्तु मां ॥ ९ ॥

मयि कस्मादवृत्तायां कालेनासि निपातितः ।
दुःखाद्दुःखं प्रपन्नायां मग्नायां शोकसागरे ॥१०॥
यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ।
राक्षसैः सह संगम्य हतोऽसि मम कारणात् ॥११॥
सा श्वश्रूर्मम कौशल्या त्वया वत्सेन राघव ।
वत्सेन हि यथा धेनुर्विवत्सा वत्सला कृता ॥१२॥
आदिष्टं दीर्घमायुस्ते यैरचिन्त्यपराक्रम ।
अनृतं वचनं तेषामल्पायुरसि राघव ॥१३॥
अदृष्टं मृत्युमापन्नः कस्मात् त्वं नयशास्त्रवित् ।
व्यसनानामुपायज्ञः कुशलः परिवर्जने ॥१४॥
अथवा नश्यति प्रज्ञा प्राज्ञस्यापि नरस्य हि ।
प्रतिकूले गते दैवे विनाशे समुपस्थिते ॥१५॥
पचत्येव यथा कालो भूतानि विभुरव्ययः ।
कथं त्वं मां परित्यज्य रौद्रया सुनृशंसया ॥१६॥
कालरात्र्या समाच्छिद्य नीतः कमललोचन ।
उपशेषे महाबाहो मां विहाय सुदुःखितां ॥१७॥
प्रियामिव शुभां नारीं पृथिवीं पृथिवीश्वर ।
सुखोचितं शरीरं तु सुरूपं तव राघव ॥१८॥
अर्चितं सततं यत् ते गन्धमाल्यैर्मया पुरा ।
तदिदं ते धनूरत्नं विनिकीर्णं महीतले ॥१९॥

पित्रा दशरथेन त्वं श्वशुरेण ममानघ ।
पूर्वैश्च पितृभिः सार्द्धं नूनं स्वर्गे समागतः ॥ २० ॥
दिवि नक्षत्रभूतं तु महाक्रतुकृतक्रियं ।
पुण्यं राजर्षिवंशं त्वमात्मनः समवेक्षसे ॥ २१ ॥
किं मां न प्रेक्षसे राम किं च मां नाभिभाषसे ।
बालां बालस्य संप्राप्तां भार्यां मां सहचारिणीं ॥ २२ ॥
संश्रुतं गृह्णता पाणिं भजिष्यामीति यत् त्वया ।
स्मर तन्मम काकुत्स्थ नय मामपि दुःखितां ॥ २३ ॥
कस्मात् त्वं मां विहायैकां गतो मतिमतां वर ।
अस्माल्लोकात् परं लोकं त्यक्त्वा मां मन्दभागिनीं ॥ २४
चन्दनागुरुदिग्धाङ्गं परिषक्तं मया पुरा ।
राक्षसैस्तच्छरीरं ते नूनं वै परिकृष्यते ॥ २५ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
अग्निहोत्रेण संस्कारमर्हस्त्वं न च लप्स्यसे ॥ २६ ॥
प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतं ।
परिप्रक्ष्यति कौशल्या लक्ष्मणं शोकलालसा ॥ २७ ॥
स तस्याः परिपृच्छन्त्या हननं मम रक्षसा ।
तव चाख्यास्यते वीर सौप्तिके राक्षसैर्बधं ॥ २८ ॥
पुत्रं श्रुत्वा हतं सुप्तं मां तथा राक्षसाहृतां ।
हृदयेन विदीर्णेन नूनं त्यक्ष्यति जीवितं ॥ २९ ॥

साधु घातय मां शीघ्रं रामस्योपरि रावण ।
समानय पतिं पत्न्या कुरु कल्याणमुत्तमं ॥ ३० ॥
शिरस्यस्मिन् शिरो देहि काये कायं निवेशय ।
रामस्यानुगमिष्यामि गतिं भर्तुर्महात्मनः ॥ ३१ ॥
मुहूर्त्तमपि नेच्छामि जीवितुं पतिना विना ।
पत्न्या समानय त्वं मां कुरु कल्याणमुत्तमं ॥ ३२ ॥
श्रुतं मया वेदविदां ब्राह्मणानां पितुर्गृहे ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ ३३ ॥
क्षमा यस्मिन् दमस्त्यागः सत्यं धर्मः कृतज्ञता ।
अहिंसा चैव भूतानां तमृते का गतिर्मम ॥ ३४ ॥
इति सा दुःखसंतप्ता विललापाकुलेक्षणा ।
भर्तुः शिरो धनुश्चैव संप्रेक्ष्य जनकात्मजा ॥ ३५ ॥
एवं विलपमानायां सीतायां तत्र रावणं ।
उपचक्राम भर्तारं बलाध्यक्षः कृताञ्जलिः ॥ ३६ ॥
एतस्मिन्नन्तरे द्वाःस्थो रावणाय न्यवेदयत् ।
कार्यमात्ययिकं घोरं संज्ञया भ्रान्तचेतनः ॥ ३७ ॥
विजयस्वार्यपुत्रेति सोऽभिवाद्य प्रणम्य च ।
आचचक्षे तदा कार्यं राक्षसेन्द्राय विस्मितः ॥ ३८ ॥
अमात्यैः सहितः सर्वैः प्रहस्तः समुपस्थितः ।
किञ्चिदात्ययिकं कार्यं प्राप्तमाख्यातुमिच्छति ॥ ३९ ॥

एवमुक्तस्तु तरसा निर्जगाम महाबलः ।
प्रहस्तं च महामात्यं ददर्शादूरतः स्थितं ॥ ४० ॥
उद्भ्रान्तश्च विनिष्क्रम्य विदधे कार्यमात्मनः ।
सर्वैः समेत्य रक्षोभिर्मन्त्रिभिः कृतनिश्चयः ॥ ४१ ॥
सभां प्रविश्य विदधे विदित्वा रामविक्रमं ।
अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमं ॥ ४२ ॥
जगाम राक्षसे तस्मिन् निष्क्रान्ते समनन्तरं ।
राक्षसेन्द्रस्तु भवनान्निष्क्रम्य सचिवैर्वृतः ॥ ४३ ॥
स मन्त्रयामास तदा मन्त्रिभिर्मन्त्रमुत्तमं ।
अविदूरे स्थितांस्तत्र बलाध्यक्षान् हितैषिणः ॥ ४४ ॥
अब्रवीत् तान् निशम्यैव रावणो राक्षसाधिपः ।
शीघ्रं भेरीनिनादेन स्फुटकोलाहलेन मे ।
समानयध्वं सैन्यानि न कालोऽस्ति विलम्बने ॥ ४५ ॥

इत्यार्षे रामायणे युद्धकाण्डे मायाशिरोदर्शनं नाम
सप्तमः सर्गः — सीताविलापो नाम
अष्टमः सर्गः ॥

# युद्धकाण्डं

IX.

सीतां तु मोहितां ज्ञात्वा सरमा नाम राक्षसी ।
आससादाथ वैदेहीं प्रियां सानुनया सखीं ॥ १ ॥
सा हि तस्याभवन्मित्रं सीतायाः प्रियवादिनी ।
राक्षसी रावणोद्दिष्टा सानुक्रोशा दृढव्रता ॥ २ ॥
सा ददर्श तदा सीतां शोकेनाविष्टचेतनां ।
उपविष्टां रजोधस्तां बडवामिव पांशुभिः ॥ ३ ॥
तदवस्थां तु तां दृष्ट्वा सरमा वाक्यमब्रवीत् ।
स्नेहविक्लवया वाचा शान्त्वयित्वा प्रियां सखीं ॥ ४ ॥
मा विषादं विशालाक्षि कुरुष्व जनकात्मजे ।
उक्ता यद्रावणेन त्वं प्रत्युक्तोऽयं त्वयापि च ॥ ५ ॥
सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतं ।
निलीय गहने शून्ये भयमुत्सृज्य रावणात् ॥ ६ ॥
त्वां तु दृष्ट्वा विशालाक्षि दुःखसागरसंप्लुतां ।
न हि मे जीवितेनार्थो न धनेन न बन्धुभिः ॥ ७ ॥
तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियं ।
संभ्रान्तश्चैव निष्क्रान्तो यदितो राक्षसाधिपः ॥ ८ ॥
तच्च मे विदितं सर्वमाख्यास्यामि च मैथिलि ।
न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः ॥ ९ ॥
बधश्च पुरुषव्याघ्रे तस्मिन् नैवोपपद्यते ।

ते च शूरा न बध्यन्ते वानराः पादपायुधाः ॥ १० ॥
सुरा देवेश्वरेणव रामेण परिपालिताः ।
दीर्घवृत्तभुजः श्रीमान् महोरस्कः प्रतापवान् ॥ ११ ॥
धन्वी संहतवृत्तोरुर्भर्ता ते भुवि विश्रुतः ।
विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च ॥ १२ ॥
लक्ष्मणेन सह भ्रात्रा कुशली देवि राघवः ।
हन्ता परबलौघानामचिन्त्यबलपौरुषः ॥ १३ ॥
न हतो राघवः सीते श्रीमान् शत्रुनिवर्हणः ।
धर्मबुद्धिविहीनेन सर्वभूतविरोधिना ॥ १४ ॥
इयं प्रयुक्ता रौद्रेण माया मायाविना त्वयि ।
शोकस्ते विगतः सीते कल्याणं ते भविष्यति ॥ १५ ॥
ध्रुवं त्वां भजते लक्ष्मीः प्रियं प्रीतिकरं शृणु ।
संतीर्णः सागरं रामः सह वानरसेनया ॥ १६ ॥
संनिविष्टः समुद्रस्य तीरमासाद्य दक्षिणं ।
संहृष्टः परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः ॥ १७ ॥
निविष्टः सागरान्तेषु राक्षसैरुपलक्षितः ।
प्रेषिता मध्यमे गुल्मे राक्षसा लघुविक्रमाः ॥ १८ ॥
प्रवृत्तिस्तैरिहाख्याता श्वोऽभिसारः पुरस्य नः ।
एवं श्रुत्वा पृथुश्रोणि प्रवृत्तिं राक्षसाधिपः ॥ १९ ॥
एष मन्त्रयते सर्वैः सचिवैः सह राक्षसैः ।

इति ब्रुवाणा सरमा सीतया सह राक्षसी ॥ २० ॥
समुद्योगेन सैन्यानां शब्दं शुश्राव भैरवं ।
दण्डेनाभिहतायाश्च भेर्या विज्ञाय निःस्वनं ॥ २१ ॥
उवाच सरमा सीतामिदं मधुरभाषिणी ।
संनाहजननी तेषां भैरवी भीरुभेदिनी ॥ २२ ॥
भेरी नदति गम्भीरं शृणु तोयदनिस्वना ।
कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः ॥ २३ ॥
तत्र तत्र च संनद्धाः संपतन्ति पदातयः ।
अनीकैः पूर्यते सर्वो राजमार्गः समन्ततः ॥ २४ ॥
वेगवद्भिर्महावेगैर्महौघैरिव सागरः ।
शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा ॥ २५ ॥
प्रभां परिसृतां पश्य नानावर्णसमुत्थितां ।
वनानि दहतो घर्मे यथारूपं विभावसोः ॥ २६ ॥
घण्टानां शृणु निर्घोषं रथानां शृणु निस्वनं ।
हयानां हेषितं चैव शृणु तूर्यस्वनं तथा ॥ २७ ॥
उद्यतायुधशस्त्राणां राक्षसेन्द्रानुयायिनां ।
संभ्रमो रक्षसामेष तुमुलो लोमहर्षणः ॥ २८ ॥
श्रीस्त्वां भजतु शोकघ्नी रक्षसामेष संभ्रमः ।
रामात् कमलपत्राक्षि दैत्यानामिव वज्रिणः ॥ २९ ॥
अवजेतुं जितक्रोधस्त्वामचिन्त्यपराक्रमः ।

रावणं समरे हत्वा भर्ता तेऽधिगमिष्यति ॥३०॥
विक्रमिष्यति रक्षःसु भर्ता ते सहलक्ष्मणः ।
यथा शत्रुषु विक्रान्तो विष्णुना सह वासवः ॥३१॥
आगतस्येह रामस्य क्षिप्रमङ्कगतां सतीं ।
अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥३२॥
अश्रूण्यानन्दजानि त्वं वर्तयिष्यसि शोभने ।
समागम्य परिष्वक्ता तस्योरसि महौजसः ॥३३॥
अचिरान्मोक्ष्यसे सीते विपुलं जघनं गता ।
धृतामेतान् बहून् मासान् वेणीं रामः शुभानने ॥३४॥
मोक्षयिष्यति ते भर्ता रामः शत्रुभयावहः ।
तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितं ॥३५॥
मोक्ष्यसे शोकजं दुःखं निर्मोकमिव पन्नगी ।
समागता त्वं न चिराद्राघवेण भविष्यसि ॥३६॥
सम्यक् संजातशस्येव प्रावृट्काले वसुंधरा ।
रावणं समरे हत्वा न चिरादेव मैथिलि ॥३७॥
त्वया समग्रं प्रियया सुखार्हो लप्स्यते सुखं ।
समागता त्वं रामेण शोभिष्यसि वरानने ।
अवर्षतप्तेव मही पुनर्वर्षेण मैथिलि ॥३८॥
गिरिवरमभितो हि वर्तमानो हय इव मण्डलमाशु यः करोति ।
तमिह शरणमभ्युपेहि सीते दिवसकरं त्वभयकरं प्रजानां ॥३९॥

# युद्धकाण्डं

## X.

अथ तां ज्ञातसंतापां तेन वाक्येन मोहितां ।
सरमा ह्लादयां चक्रे पृथिवीं द्यौरिवाम्भसा ॥ १ ॥
ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखी वचः ।
उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २ ॥
उत्सहेयमहं गत्वा तद्वाक्यमसितेक्षणे ।
निवेद्य सकलं रामे प्रतिच्छन्ना निवर्तितुं ॥ ३ ॥
न हि मे क्रममाणाया निरालम्बे विहायसि ।
समर्थो गतिमन्वेतुं वायुरप्यतिशीघ्रगः ॥ ४ ॥
एवं ब्रुवाणां तां सीता सरमामब्रवीद्वचः ।
मधुरं श्लक्ष्णया वाचा पूर्वशोकविपन्नया ॥ ५ ॥
समर्था गगनं गन्तुमपि वा त्वं रसातलं ।
अवगच्छाद्य यत् कार्यं कर्तव्यं ते मदन्तिके ॥ ६ ॥
स्निग्धा त्वमनुरक्ता च भगिनीव सहोदरा ।
अप्रमत्ता मम हिते संशयो मे न विद्यते ॥ ७ ॥
मत्प्रियं यदि कर्तव्यं यदि मैत्री स्थिता त्वयि ।
ज्ञातुमर्हसि गत्वा त्वं किं करोतीति रावणः ॥ ८ ॥
स हि मायाबलः क्रूरो रावणो लोकरावणः ।
संमोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ९ ॥

संतापयति मां नित्यं भर्त्सयत्यपि चासकृत् ।
राक्षसीभिः सुघोराभिर्यो मां रक्षति नित्यशः ॥१०॥
उद्विग्ना शङ्किता चास्मि न च सुस्थं मनो मम ।
तद्भयादेव रुद्धाहमशोकवनिकां गता ॥११॥
यं यं पश्याम्यहं कश्चित् तं तं पश्यामि रावणं ।
एतदिच्छाम्यहं त्वत्तो वरं सत्यप्रतिश्रवे ॥१२॥
लब्धुं यद्रावणस्याहं विद्यां सर्वं विचेष्टितं ।
याश्च रामकथास्तस्य निश्चितं चापि यद्भवेत् ॥१३॥
निवेदयेथास्तत् सर्वं परो मे स्यादनुग्रहः ।
तस्यास्तद्वचनं श्रुत्वा सरमा बाष्पविक्लवा ॥१४॥
उवाच मधुराभाषा सीतां वाक्यमनुत्तमं ।
एष ते यद्यभिप्रायस्तस्माद्गच्छामि जानकि ॥१५॥
शत्रोर्गृहीत्वाभिप्रायमभ्येमि न चिरादिव ।
एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः ॥१६॥
शुश्राव मन्त्रितं सर्वं रावणस्य समन्त्रिणः ।
सा श्रुत्वा निश्चयं तस्य रावणस्य दुरात्मनः ॥१७॥
पुनरेवागमत् क्षिप्रमशोकवनिकां शुभां ।
सा प्रविष्टा ततस्तत्र ददर्श जनकात्मजां ॥१८॥
प्रतीक्षमाणां तामेव भ्रष्टपद्मामिव श्रियं ।
सा तु सीता पुनः प्राप्तां सरमां प्रियवादिनीं ॥१९॥

पर्यष्वजत सुस्निग्धं ददौ च स्वयमासनं ।
अब्रवीच्च ततो वाक्यं सरमां प्रियवादिनीं ॥ २० ॥
इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः ।
क्रूरस्य निश्चयं तस्य रावणस्य समन्त्रिणः ॥ २१ ॥
न हि नाम महाभागे मम पुण्यविपर्यये ।
अनुरज्येत मामार्ये त्वदृते वरवर्णिनि ॥ २२ ॥
समस्तो वत लोकोऽयं भजते कारणादनु ।
त्वं तु निष्कारणादेव प्रीयसे वरवर्णिनि ॥ २३ ॥
किन्तु शुक्लाभिजातीया शुक्लाचारा च सर्वदा ।
स्थिता त्वं राक्षसावासे गङ्गेव जनपावनी ॥ २४ ॥
का हि गच्छेद्द्रुतं चान्या वृत्तान्तं प्राप्य सर्वतः ।
त्वदृते निर्भयाभ्येति तस्मादाख्यातुमर्हसि ॥ २५ ॥
एवमुक्ता तु सरमा सीतया तस्य संमतं ।
अशेषतः समाचष्ट रावणस्य समन्त्रिणः ॥ २६ ॥
मैथिलि श्रूयतां तस्य रावणस्य विनिश्चयः ।
जनन्या राक्षसेन्द्रोऽद्य मोक्षार्थे तव याचितः ॥ २७ ॥
सुचिरेण च वैदेहि मन्त्रिवृद्धेन बोधितः ।
दीयतामद्य सत्कृत्य कोशलेन्द्राय मैथिली ॥ २८ ॥
निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतं ।
लङ्घनं च समुद्रस्य दर्शनं च स्वरूपिणः ॥ २९ ॥

बधं च रक्षसां युद्धे कः कुर्यान्मानुषो भुवि ।
एवं स मन्त्रिवृद्धेन मात्रा च बहुभाषितः ।। ३० ।।
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ।
नोत्सहेत स वै मोक्तुं त्वामयुद्धेन जानकि ।। ३१ ।।
सामात्यराक्षसेशस्य निश्चयोऽयं समुत्थितः ।
एषा तस्य स्थिरा बुद्धिर्मृत्युभावादवस्थिता ।। ३२ ।।
नान्येन शक्या त्वं मोक्तुं रामेणापि न संयुगे ।
वैदेहि मा कृथाश्चिन्तां सर्वथा राघवः शरैः ।। ३३ ।।
निहत्य रावणं सीते त्वां प्रियामुपलप्स्यते ।
प्रतिनेष्यति ते भर्ता पुरीं त्वामसितेक्षणे ।। ३४ ।।
एतस्मिन्नन्तरे शब्दो भेरीशङ्खविमिश्रितः ।
राघवस्याभवत् सैन्ये येन शैलाः प्रकम्पिताः ।। ३५ ।।
श्रुत्वा तु तद्वानरसैन्यनादं लङ्कां गता राक्षसराजभृत्याः ।
भ्रष्टौजसो दैन्यपरीतचित्ताः शेषं न पश्यन्ति नृपस्य दोषैः ।। ३६ ।।
ततो महावातसमीरितेन घोरेण शब्देन समुत्थितेन ।
अगाद्विषादं सकला महापुरी वनौकसां शब्दममृष्यमाणा ।। ३७ ।।

इत्यार्षे रामायणे युद्धकाण्डे सरमावाक्यं नाम
नवमः सर्गः — सीताश्वासनं
नाम दशमः सर्गः ।।

# युद्धकाण्डं

## XI.

तेन वानरसैन्यस्य नादेनाशु स रावणः ।
संबोधितः सुघोरेण जगति क्षोभकारिणा ॥ १ ॥
संत्रास आविशच्चैनं किंचिद्दीनश्च चिन्तयन् ।
मुहूर्त्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २ ॥
अथ तान् सचिवान् प्रेक्ष्य सर्वानाभाष्य रावणः ।
जगत् संतापयन् सर्वमित्युवाच महाबलः ॥ ३ ॥
तरणं सागरस्यास्य विक्रमं बलसंचयं ।
यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतं ॥ ४ ॥
तरतां सागरं रामः सेतुना वानरैः सह ।
अमर्षी सगणः सोऽयं सामात्यो न भविष्यति ॥ ५ ॥
निर्यात राक्षसाः सर्वे निशातायुधपाणयः ।
निहन्तुं वानरबलं तौ चोभौ रामलक्ष्मणौ ॥ ६ ॥
युक्तं न मे परं स्तोतुं विग्रहे समुपस्थिते ।
भवतां चाप्यहं वेद युद्धे सर्वपराक्रमान् ॥ ७ ॥
ते तु तद्वचनं श्रुत्वा रावणस्य निशाचराः ।
तूष्णीमन्योन्यमैक्षन्त विदित्वा रामविक्रमं ॥ ८ ॥
ततस्तु सुमहाप्राज्ञो माल्यवान् नाम राक्षसः ।
रावणस्य वचः श्रुत्वा वृद्धो मातामहोऽब्रवीत् ॥ ९ ॥

# रामायणं

विद्यास्वभिविनीतो यो राजा राजनयानुगः ।
स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ॥१०॥
संदधानो हि कालेषु विगृह्णंश्चारिभिः सह ।
स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते ॥११॥
हीयमानेन संधिर्हि पर्येष्टव्यः समेन च ।
न शत्रुमवमन्येत बलवानपि भूमिपः ॥१२॥
तन्मह्यं रोचते संधी रामेण सह रावण ।
यदर्थमभियुक्ताः स्म सास्मै सीता प्रदीयतां ॥१३॥
यस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः ।
विरोधं मा कृथास्तेन संधिस्ते तेन रोचतां ॥१४॥
असृजद्भगवान् पक्षौ द्वावेव हि पितामहः ।
सुराणामसुराणां च धर्माधर्मौ च तच्छृणु ॥१५॥
धर्मो हि ग्रसते पक्षमसुराणां दुरात्मनां ।
तथैव रक्षसां पक्षं सुराणामेष निर्णयः ॥१६॥
धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगं ।
अधर्मो ग्रसते धर्मं ततस्त्रेता प्रवर्तते ॥१७॥
तत् त्वया चरता लोके धर्मो विनिकृतो महान् ।
अधर्मः प्रगृहीतश्च तेन स्म तमसावृताः ॥१८॥
अप्रमादाद्विवृद्धश्च धर्मो रामव्यपाश्रयः ।
स प्रमादादधर्मस्ते विवृद्धो ग्रसते पुरं ॥१९॥

विवर्धयति पक्षं च सुराणां सुरतापन ।
विषयेषु प्रसक्तेन यत् किंचित् कारितं त्वया ॥ २० ॥
ऋषीणामग्निकल्पानां संत्रासो जनितो महान् ।
ते संप्रति दुराधर्षाः प्रदीप्ता इव पावकाः ॥ २१ ॥
तपसा भावितात्मानो धर्मस्यानुग्रहे स्थिताः ।
अविघ्नेन यजन्तेऽद्य यज्ञैस्तैस्तैर्द्विजातयः ॥ २२ ॥
जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते ।
अभिभूय च रक्षांसि ब्रह्मघोषो विनादयन् ॥ २३ ॥
आविवेश दिशः सर्वाः स्तनयित्नोरिवोष्णगे ।
ऋषीणामाहिताग्नीनामग्निहोत्रात् समुत्थितः ॥ २४ ॥
आदत्ते रक्षसां तेजो धूमोऽग्नेर्व्याप्तवान् जगत् ।
तेषु तेषु च देशेषु संस्थितैर्ब्रह्मवादिभिः ॥ २५ ॥
चीयमानं तपस्तीव्रं संतापयति राक्षसान् ।
उत्पातांश्चोत्थितान् दृष्ट्वा घोरान् बहुविधान् बहून् ॥ २६ ॥
विनाशमनुपश्यामि सर्वेषां रक्षसामहं ।
खरातिस्तनिता मेघा घोराः प्रतिभयंकराः ॥ २७ ॥
शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ।
प्रतिमाश्च प्रकम्पन्ते खिद्यन्ति च हसन्ति च ॥ २८ ॥
उदपानानि गर्जन्ति तडागाश्च वृषा इव ।
प्रयुक्ताश्चाप्रवर्तन्ते रथा युद्धाभिनन्दिनः ॥ २९ ॥

चरतां वाहनानां च निपतन्त्यश्रुविन्दवः ।
ध्वजा ध्वस्ता विशीर्णाश्च न विभान्ति यथा पुरा ॥ ३० ॥
नष्टश्रीकमहं मन्ये सैन्यं ते राक्षसाधिप ।
अल्पे भुक्ते शकृच्चैव प्रभूतमिह दृश्यते ॥ ३१ ॥
रक्षसां वाहनानां च त्वत्पराभवलक्षणं ।
विष्णुं राममहं मन्ये मानुषं छद्मरूपिणं ॥ ३२ ॥
न हि मानुषमात्रोऽसौ राघवो दृढविक्रमः ।
येन बद्धः समुद्रेऽस्मिन् स सेतुः परमाद्भुतः ॥ ३३ ॥
कुरुष्व नरराजेन संधिं रामेण रावण ।
सीताकृते महाप्राज्ञ महद्भयमुपस्थितं ॥ ३४ ॥
यस्यां प्रतिनिविष्टोऽसि यस्यां युक्तो निशाचर ।
तस्याः कृते महाप्राज्ञ महद्भयमुपस्थितं ॥ ३५ ॥
यथेमानि निमित्तानि लक्षये राक्षसेश्वर ।
काका गोमायवो गृध्रा रासन्ति च सुभैरवं ॥ ३६ ॥
प्रविश्य लङ्कां सहसा समवायांश्च कुर्वते ।
कृष्णा स्त्री पाण्डरैर्दन्तैः प्रहसत्यग्रतः स्थिता ॥ ३७ ॥
रथ्यासु बालकैर्नित्यं बहुशः परिगीयते ।
स्वप्ने च मुक्तकेशा स्त्री गृहाणि परिधावति ॥ ३८ ॥
गृहेषु बलिकर्माणि प्रेताः प्रत्युपभुञ्जते ।
खरा गोषु प्रसूयन्ते मूषिका नकुलेषु च ॥ ३९ ॥

मार्जारा द्वीपिभिः सार्द्धं शूकराश्च श्वभिः सह ।
किन्नर्यो राक्षसैश्चैव समीयुर्मानुषैः सह ॥ ४० ॥
पाण्डरा रक्तपादाश्च विहगाः कालचोदिताः ।
राक्षसानां विनाशाय उत्पातान् व्याहरन्ति च ॥ ४१ ॥
चिचीकुचीति रासन्ते सारिका वेश्मसु स्थिताः ।
पतन्ति व्यथिताश्चैव कलहैरिव पक्षिणः ॥ ४२ ॥
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
कालो गृहाणि सर्वाणि काले काले ऽन्ववेक्षते ॥ ४३ ॥
तीक्ष्णः पटुर्दिनकरः करैस्तापयते जगत् ।
प्रतिलोमश्च ते वायुस्त्वत्पराभवलक्षणं ॥ ४४ ॥
अत्युग्रमिह पश्यन्ति युद्धमानन्दिनो द्विजाः ।
क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनां ॥ ४५ ॥

इदं वचस्तत्र निवेद्य माल्यवान्
सुधीश्च रक्षो ऽधिपतेः स्थितो ऽग्रतः ।
अनुत्तमेषूत्तमपौरुषो बली
बभूव तूष्णीं समवेक्ष्य रावणं ॥ ४६ ॥

इत्यार्षे रामायणे युद्धकाण्डे माल्यवद्वाक्यं नाम
एकादशः सर्गः ॥

# रामायणं

## XII.

तत् तु माल्यवतो वाक्यं हितयुक्तं दशाननः ।
नामर्षयत दुर्बुद्धिः कालस्य वशमागतः ॥ १ ॥
स बद्ध्वा भ्रूकुटीं वक्त्रे क्रोधस्य प्रतिलक्षणं ।
अमर्षात् परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २ ॥
हितबुद्ध्या यदहितं वचः परुषमुच्यते ।
परपक्षं प्रविश्यैव न तच्छ्रोत्रगतं मम ॥ ३ ॥
मानुषं कृपणं राममेकं शाखामृगाश्रयं ।
समर्थं मन्यसे केन त्यक्तं पित्रा वनाश्रयं ॥ ४ ॥
रक्षसामीश्वरं मां च देवतानां भयंकरं ।
हीनं मां मन्यसे कस्मादहीनं सत्त्वविक्रमैः ॥ ५ ॥
वीर द्वेषेण वा शङ्के पक्षपातेन वा रिपोः ।
त्वयाहं परुषाण्युक्तः परप्रोत्साहितेन वा ॥ ६ ॥
प्रभवन्तं पदस्थं च परुषं कोऽभिधास्यति ।
पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥ ७ ॥
आदाय च बलात् सीतां पद्महीनामिव श्रियं ।
किमर्थं प्रतिदास्यामि राघवस्य भयादिव ॥ ८ ॥
वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणं ।
पश्य कैश्चिदहोभिस्त्वं निहतं राघवं मया ॥ ९ ॥

## युद्धकाण्डं

द्वन्द्वे यस्य न तिष्ठन्ति देवगन्धर्वदानवाः
रावणो मानुषं प्राप्य भयमाहारयेत् कथं ॥ १० ॥
द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् ।
एष मे सहजो दोषो गुणो वा दुरतिक्रमः ॥ ११ ॥
यदि राम इह प्राप्तो वानरैर्दुर्बलैः सह ।
तेन ते विस्मयः कोऽत्र येन ते भयमुत्थितं ॥ १२ ॥
यदि चेदागतो रामः सह वानरसेनया ।
प्रतिजानामि ते सत्यं न जीवन् प्रतियास्यति ॥ १३ ॥
एवं ब्रुवाणं संक्रुद्धं स तु विज्ञाय रावणं ।
व्रीडितो माल्यवांस्तूष्णीं नोत्तरं प्रत्यपद्यत ॥ १४ ॥
जयाशिषा च राजानं वर्धयित्वा यथोचितं ।
माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनं ॥ १५ ॥
रावणस्तु सहामात्यैर्मन्त्रयित्वा विमृष्य च ।
लङ्कायामुत्तमां गुप्तिं कारयामास राक्षसः ॥ १६ ॥
व्यादिदेशाथ पूर्वस्यां प्रहस्तं द्वारि राक्षसं ।
दक्षिणस्यां दिशि तथा महापार्श्वमहोदरौ ॥ १७ ॥
पश्चिमायां पुरद्वारि पुत्रमिन्द्रजितं तथा ।
व्यादिदेश महामायं राक्षसैर्बहुभिर्वृतं ॥ १८ ॥
उत्तरस्यां दिशि तथा व्यादिष्टौ शुकसारणौ ।
स्वयं चात्र भविष्यामि मन्त्रिणस्तानुवाच सः ॥ १९ ॥

राक्षसं तु विरूपाक्षं महावीर्यपराक्रमं ।
मध्यमेऽस्थापयद्गुल्मे बहुभिः सह राक्षसैः ॥२०॥
एवं विधानं लङ्कायां कृत्वा राक्षसपुङ्गवः ।
मेने कृतार्थमात्मानं कृतान्तबलमोहितः ॥२१॥
विसर्जयामास ततः स मन्त्रिणो
विधानमाज्ञाप्य पुरस्य पुष्कलं ।
जयाशिषा मन्त्रिगणेन पूजितो
विवेश सोऽन्तःपुरमूर्जितस्तदा ॥२२॥

इत्यार्षे रामायणे युद्धकाण्डे पुरविधानं नाम
द्वादशः सर्गः ॥

# युद्धकाण्डं

## XIII.

नरवानरराजौ तु स च वायुसुतः कपिः ।
जाम्बवानृक्षराजश्च राक्षसश्च विभीषणः ॥ १ ॥
अङ्गदो लक्ष्मणो मैन्दो द्विविदो हरियूथपः ।
कुमुदः शरभश्चैव ऋषभो गन्धमादनः ॥ २ ॥
धीमान् दधिमुखश्चैव सुषेणस्तार एव च ।
गयो गवाक्षो गवयो नलो नीलश्च वानरः ॥ ३ ॥
अमित्रविषयं प्राप्ताः समवेतास्त्वमन्त्रयन् ।
एषा सा दृश्यते लङ्का पुरी रावणपालिता ॥ ४ ॥
मानुषासुरगन्धर्वैः सुरैरपि सुदुर्जया ।
नित्यं संनिहितो यत्र रावणो द्रावयन् प्रजाः ॥ ५ ॥
कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णयं ।
तथा तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् ॥ ६ ॥
रामस्य च हितं वाक्यमहितं रावणस्य च ।
मन्त्रार्थकुशलो नित्यं धर्मात्मा बुद्धिपण्डितः ॥ ७ ॥
वाक्यं हेत्वर्थसंयुक्तं पुष्कलार्थं विभीषणः ।
अनलश्च हरश्चैव सम्पातिः प्रघसस्तथा ॥ ८ ॥
निमेषान्तरमात्रेण माययामितविक्रमाः ।
लङ्कां गत्वा ममाभ्यासे पुरीं पुनरिहागताः ॥ ९ ॥

भूत्वा शकुनयः सर्वे प्रविष्टा वैरिणः पुरीं ।
विधानं विहितं यच्च दृष्ट्वा तत् समुपस्थिताः ॥१०॥
संविधानं तदाहुस्ते रावणस्य दुरात्मनः ।
राम तद्ब्रुवतः सत्यं यथातथ्येन मे शृणु ॥११॥
पूर्वं प्रहस्तो बलवान् द्वारमावृत्य तिष्ठति ।
दक्षिणं तु महावीर्यौ महापार्श्वमहोदरौ ॥१२॥
इन्द्रजित् पश्चिमं द्वारं राक्षसैर्बहुभिर्वृतः ।
पट्टिशासिधनुष्पाणिरास्थितो रावणात्मजः ॥१३॥
राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः ।
उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥१४॥
विरूपाक्षस्तु महता शूलशतनिधनुष्मता ।
बलेन राक्षसैः सार्द्धं मध्यमं गुल्ममास्थितः ॥१५॥
एतामेवंविधां गुप्तिं लङ्कायाः समवेक्ष्य च ।
मामकाः सचिवाः सर्वे ज्ञात्वा पुनरिहागताः ॥१६॥
गजेन्द्राणां सहस्रं तु हयानामयुतं परं ।
रथानां प्रयुतं चात्र साग्रकोटी च रक्षसां ॥१७॥
विक्रान्ता बलवन्तश्च संग्रामेष्वनिवर्तिनः ।
इष्टा राक्षसराजस्य नित्यमेव निशाचराः ॥१८॥
एकैकस्य तु युद्धार्थं राक्षसस्य विशाम्पते ।
परिवारसहस्राणां सहस्रमुपतिष्ठति ॥१९॥

# युद्धकाण्डं

एतां प्रवृत्तिं लङ्कायास्तत्र प्रोच्य विभीषणः ।
रामं कमलपत्राक्षमिदं पुनरुवाच ह ॥ २० ॥
कुबेरं तु यदा राम रावणः प्रत्ययुध्यत ।
षष्टिः शतसहस्राणि तदा निर्यान्ति राक्षसां ॥ २१ ॥
पराक्रमेण शौर्येण तेजसा सत्त्वगौरवात् ।
सदृशानि स्म सर्वाणि रावणस्य दुरात्मनः ॥ २२ ॥
अत्र मन्युर्न कर्तव्यो रोषये त्वां न भीषये ।
समर्थो ह्यसि वीर्येण सुराणामपि नाशने ॥ २३ ॥
तद्भवान् हरिवीराणां बलेन महता वृतः ।
विक्षोभ्य राक्षसीं सेनां निहनिष्यति रावणं ॥ २४ ॥
रावणावरजाद्वाक्यमेतच्छ्रुत्वा स राघवः ।
शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ॥ २५ ॥
कपीनामुग्रवीर्याणां सहस्रैर्बहुभिर्वृतः ।
नीलः प्रहस्तं प्लवगो राक्षसं प्रतिधावतु ॥ २६ ॥
अङ्गदो बालिनः पुत्रो बलेन महता वृतः ।
दक्षिणे धावतां द्वारि महापार्श्वमहोदरौ ॥ २७ ॥
पश्चिमं नगरद्वारं निपीड्य पवनात्मजः ।
निविशत्वप्रमेयात्मा कपिभिर्बहुभिर्वृतः ॥ २८ ॥
दैत्यदानवसंघानामृषीणां च महात्मनां ।
विप्रकारप्रियः क्षुद्रो वरदानाद्बलान्वितः ॥ २९ ॥

परिक्रामति यः सर्वान् लोकान् संत्रासयन् बलात् ।
तस्याहं राक्षसेन्द्रस्य रावणस्य बधे स्थितः ॥३०॥
उत्तरं नगरद्वारमहं सौमित्रिणा सह ।
निपीड्य परिवेक्ष्यामि सबलो यत्र रावणः ॥३१॥
वानरेन्द्रस्तु सुग्रीवो जाम्बवांश्च तथर्क्षराट् ।
राक्षसेन्द्रानुजश्चापि गुल्मे भवतु मध्यमे ॥३२॥
न चैव मानुषं रूपं कार्यं कपिभिराहवे ।
न च नश्येत वै युद्धे संज्ञा स्वे वानरे बले ॥३३॥
वानरो ह्येष नश्चिह्नं स्वजनेषु भविष्यति ।
वयं तु रक्षसां मध्ये सप्त योत्स्यामहे जनाः ॥३४॥
अहमेव सह भ्रात्रा लक्ष्मणेनामितौजसा ।
आत्मना पञ्चमश्चायं सहायो मे विभीषणः ॥३५॥
स रामः कार्यसिद्ध्यर्थमेवमुक्त्वा विभीषणं ।
सुवेलारोहणे बुद्धिं चकार मतिमांस्तदा ॥३६॥

इत्यार्षे रामायणे युद्धकाण्डे चारप्रवेशो नाम
त्रयोदशः सर्गः ॥

# युद्धकाण्डं

## XIV.

स तु कृत्वा सुवेलस्य बुद्धिमारोहणं प्रति ।
लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १ ॥
विभीषणं च धर्मज्ञमनुरक्तं निशाचरं ।
मन्त्रज्ञं च कृतज्ञं च श्लक्ष्णया परया गिरा ॥ २ ॥
सुवेलमथ शैलेन्द्रमिमं धातुशतैश्चितं ।
अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमां ॥ ३ ॥
दुर्गमं चैव यत् किञ्चित् कारितं तेन रक्षसा ।
राक्षसं तं च द्रक्ष्यामः कथञ्चिद्यदि रावणं ॥ ४ ॥
लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः ।
येन मे मर्तुकामेन हृता भार्या यशस्विनी ॥ ५ ॥
येन धर्मो न विज्ञातो न वृत्तं न कुलं तथा ।
राक्षस्या जिह्मया बुद्ध्या येनैतद्गर्हितं कृतं ॥ ६ ॥
तन्मे विवर्धते रोषः पापं संस्मृत्य राक्षसं ।
यस्यापराधान्नीचस्य सर्वान् धक्ष्यामि राक्षसान् ॥ ७ ॥
वाणैर्वज्ञानलप्रख्यैरसुरानिव वासवः ।
एको हि कुरुते पापं कालपाशवशं गतः ॥ ८ ॥
नीचस्यास्यापराधेन कुलं पश्य विनंक्ष्यति ।
एवं संमन्त्रयन्नेव सक्रोधो रावणं प्रति ॥ ९ ॥

रामः सुवेलं वासाय चित्रसानुमुपागमत् ।
पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत् समाहितः ॥१०॥
सशरं चापमुद्यम्य सुमहद्भीमविक्रमः ।
अन्वारोहच्च सुग्रीवः सामात्यः सविभीषणः ॥११॥
हनुमानङ्गदो मैन्दो नीलो द्विविद एव च ।
गयो गवाक्षो गवयः शरभो गन्धमादनः ॥१२॥
पनसः कुमुदो धूम्रो नलश्चैव तु यूथपः ।
जाम्बवांश्च सुषेणश्च केशरी सुमहाबलः ॥१३॥
दुर्मुखश्च महावीर्यस्तथा शतबलिः कपिः ।
एते चान्ये च बहवो वानराः शीघ्रगामिनः ॥१४॥
अध्यारोहन् जवोदग्राः शातयन्तो महाशिलाः ।
ततः सुवेलमारुह्य रामस्तैर्हरिभिः सह ॥१५॥
निषसाद गिरेस्तस्य शृङ्गे समशिलातले ।
ततः कपिगणाः सर्वे समावृत्य त्रियोजनं ॥१६॥
आरोहन्त सुवेलं तु प्लवन्तो दक्षिणामुखाः ।
ते वायुवेगाः प्लवगास्तं गिरिं गिरिचारिणः ॥१७॥
अध्यारोहन्त शतशः सुवेलं यत्र राघवः ।
ते त्वदीर्घेण कालेन गिरिमासाद्य सर्वतः ॥१८॥
ददृशुः शिखरे तस्य विषक्तामिव खे पुरीं ।
तां सुरूपां महाद्वारां प्राकारैरुपशोभितां ॥१९॥

लङ्कां राक्षससंपूर्णां पताकाध्वजमालिनीं ।
सञ्जयत्नोपकरणां समुच्छ्रितध्वजाकुलां ॥ २० ॥
सिताभ्रचयसंकाशां कैलासशिखरोपमां ।
नानारूपैर्महावीर्यैर्घोरै रक्षोभिरावृतां ॥ २१ ॥
प्राकारवडभीसंस्थैस्तमोनीलैर्निशाचरैः ।
ददृशुस्ते महावीर्याः प्राकारमपरं कृतं ॥ २२ ॥
ते दृष्ट्वा वानराः सर्वे राक्षसान् युद्धकाङ्क्षिणः ।
समृजुर्विपुलान् नादान् मेघान् दृष्ट्वेव बर्हिणः ॥ २३ ॥
ततोऽस्तमगमत् सूर्यः संध्यया प्रतिरञ्जितः ।
पूर्णचन्द्रप्रदीपा च यामिनी समवर्तत ॥ २४ ॥
सचन्द्रग्रहनक्षत्रं नभोऽदृश्यत सागरे ।
द्वितीयमिव चाकाशं सचन्द्रग्रहतारकं ॥ २५ ॥

इत्यार्षे रामायणे युद्धकाण्डे सुवेलारोहणं नाम
चतुर्दशः सर्गः ॥

# रामायणं

## XV.

ते रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः ।
लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ॥ १ ॥
सरांसि च सपद्मानि विशालायतनानि च ।
दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २ ॥
चम्पकाशोकवकुलसालतालसमाकुला ।
तमालवनसंछन्ना नक्तमालसमाचिता ॥ ३ ॥
हिन्तालैरर्जुनैः सर्ज्जैः सप्तपर्णैश्च पुष्पितैः ।
तिलकैः कर्णिकारैश्च पाटलाभिश्च सर्वतः ॥ ४ ॥
शुशुभे पुष्पिताग्रैश्च लतापरिगतैर्द्रुमैः ।
विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः ॥ ५ ॥
लङ्का काननजैः फुल्लैर्यथेन्द्रस्यामरावती ।
शाद्वलानि च नीलानि चित्राश्च वनराजयः ॥ ६ ॥
पुष्पितानि सुगन्धीनि पुष्पाणि च फलानि च ।
जालकं मञ्जरीणां च फलं किशलयानि च ॥ ७ ॥
धारयन्ति द्रुमास्तत्र नरा इव विभूषणं ।
तच्चैत्ररथसंकाशं मनोज्ञं नन्दनोपमं ॥ ८ ॥
वनं सर्वर्तुकं रम्यं शुशुभे षट्पदाकुलं ।
कोयष्टिकैः सदात्यूहैर्विनदद्भिश्च बर्हिणैः ॥ ९ ॥

रुतैः परभृतानां च शुशुभे तद्वनं महत् ।
नित्यमत्तविहङ्गानि भ्रमराचरितानि च ॥ १० ॥
कोकिलाकुलषण्डानि सारसाभिरुतानि च ।
भृङ्गराजाभिगीतानि कुररैः सेवितानि च ॥ ११ ॥
कोलाहलविघुष्टानि दात्यूहाभिरुतानि च ।
विविशुस्ते ततस्तानि वनान्युपवनानि च ॥ १२ ॥
प्रहृष्टा मुदिता वीरा हरयः कामरूपिणः ।
तेषां निविशमानानां वानराणां महात्मनां ॥ १३ ॥
पुष्पसंसर्गसुरभिर्ववौ घ्राणसुखोऽनिलः ।
तेषां निवेशस्तत्रासीत् प्रविभागैरनेकशः ॥ १४ ॥
अकम्पयंश्च लङ्कां ते नादैः स्वैर्नदतां वराः ।
सर्पद्भिश्च महायूथैर्मही चरणपीडिता ॥ १५ ॥
उत्थितं वै रजश्चोर्द्ध्वं जगामारुणसंनिभं ।
अन्ये तु हरिवीराणां विक्रान्ता हरियूथपाः ॥ १६ ॥
सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीं ।
वित्रासयन्तो विहगान् पातयन्तो महीरुहान् ॥ १७ ॥
आस्फोटयन्तो वल्गन्तः सर्वे रणसमुत्सुकाः ।
कम्पयन्तश्च लङ्कायां वनान्युपवनानि च ॥ १८ ॥
ऋक्षाः सिंहा वराहाश्च महिषाः शूकरास्तथा ।
तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥ १९ ॥

शिखरं तु त्रिकूटस्य प्रांशु चैव नभःस्पृशत् ।
समन्ताद्द्रुमसंछन्नं महाभ्रचयसंनिभं ॥ २० ॥
अधश्चोर्द्ध्वं च विस्तीर्णं विमलादर्शसंनिभं ।
शृङ्गं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ २१ ॥
मनसापि दुरारोहं निर्मितं विश्वकर्मणा ।
निविष्टा शिखरे तस्य लङ्का रावणपालिता ॥ २२ ॥
सा पुरी गोपुरैरुच्चैः पाण्डराम्बुदसंनिभैः ।
द्वारेण काञ्चनेनैव राजतेन च शोभिता ॥ २३ ॥
प्रासादैश्च विमानैश्च लङ्का परमशोभिता ।
घनैरिवातपापाये मध्यमं वैष्णवं पदं ॥ २४ ॥
यस्यां स्तम्भसहस्रेण प्रासादः समलङ्कृतः ।
कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २५ ॥
एतस्य राक्षसेन्द्रस्य रावणस्य दुरात्मनः ।
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥ २६ ॥
ददृशुस्ते तदा लङ्कां विहसन्तो ह्यलङ्कृतां ।
पश्चिमां श्रियमापन्नां नारीमिव मुमूर्षतीं ॥ २७ ॥
तां समृद्धोऽथ लक्ष्मीवान् राघवो लक्ष्मणाग्रजः ।
रावणस्य पुरीं लङ्कां ददर्श सह वानरैः ॥ २८ ॥

इत्यार्षे रामायणे युद्धकाण्डे लङ्कादर्शनं नाम
पञ्चदशः सर्गः ॥

# युद्धकाण्डं

## XVI.

अथ तत्र निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ।
लक्ष्मणं वै समाभाष्य वचोऽवददतन्द्रितः ॥ १ ॥
प्रविगाह्योदकं तीर्णा वनानि फलवन्ति च ।
बलं च प्रविभज्येदं व्युदतिष्ठाम लक्ष्मण ॥ २ ॥
लोकक्षयकरं भीमं भयं पश्याभ्युपस्थितं ।
निवर्हणं प्रवीराणामृक्षवानररक्षसां ॥ ३ ॥
वाताश्च परुषा वान्ति कम्पते च वसुंधरा ।
पर्वताग्राणि वेपन्ते नर्दन्ति धरणीधराः ॥ ४ ॥
मेघाः क्रव्यात्प्रतीकाशाः परुषाः परुषस्वनाः ।
आदित्यपथमाविश्य जनयन्तो महद्भयं ॥ ५ ॥
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं रुधिरविन्दुभिः ।
रक्तचन्दनसंकाशाः संध्याः परमदारुणाः ॥ ६ ॥
ज्वलच्च निपतत्येतदादित्यादग्निमण्डलं ।
दीना दीनस्वरा घोरास्त्वप्रशस्ता मृगद्विजाः ॥ ७ ॥
रजन्यामप्रशस्तश्च संतापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्यन्तो यथा लोकस्य पर्यये ॥ ८ ॥
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेशः सलोहितः ।
आदित्यमण्डले लीनः पश्य लक्ष्मण दृश्यते ॥ ९ ॥

चन्द्रमा न यथावृद्धि नक्षत्राण्यभिपद्यते ।
युगान्त इव लोकानां पश्य लक्ष्मण दृश्यते ॥ १० ॥
कङ्काः श्येनास्तथा गृध्रा नीचैः परिचरन्ति च ।
शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः ॥ ११ ॥
शरैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १२ ॥
तूर्णमद्य दुराधर्षां पुरीं रावणपालितां ।
अभियामो जवेनैव सर्वतो हरिभिर्वृताः ॥ १३ ॥
इत्येवं प्रवदन् वीरो रामो वै लक्ष्मणाग्रजः ।
तस्मादवतताराशु पर्वताग्रान्महाबलः ॥ १४ ॥
अवतीर्य तु धर्मात्मा तस्माच्छैलाच्च राघवः ।
परैरधृष्यमक्षोभ्यं ददर्श बलमात्मनः ॥ १५ ॥
ततस्तद्व्यूह्य सुग्रीवः कपिराजो बलं महत् ।
कालज्ञो राघवो वीरः संयुगायाभ्यचोदयत् ॥ १६ ॥
ततः काले महाबाहुर्बलेन महता वृतः ।
प्रतस्थे पुरतो रामो लङ्कामभिमुखः पुरीं ॥ १७ ॥
तं विभीषणसुग्रीवौ जाम्बवान् हनुमान् नलः ।
ऋक्षराजोऽङ्गदो नीलो लक्ष्मणश्चान्वयुस्तदा ॥ १८ ॥
ततः पश्चात् सुमहती पृतना काननौकसां ।
प्रच्छाद्य महतीं भूमिं प्रतस्थे येन राघवः ॥ १९ ॥

# युद्धकाण्डं

शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २० ॥
तौ त्वदीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ ।
रावणस्य पुरीं लङ्कामापेदतुररिन्दमौ ॥ २१ ॥
पताकामालिनीं रम्यामुच्छ्रितध्वजतोरणां ।
विचित्रवप्रां यत्नाढ्यामूर्द्ध्वप्राकारतोरणां ॥ २२ ॥
तां सुरैरपि दुर्धर्षां दृष्ट्वा रामप्रचोदिताः ।
यथा निवेशं संपाद्य न्यविशन्त वनौकसः ॥ २३ ॥
दशयोजनमाक्रम्य मण्डलं वानरं बलं ।
परिक्षिप्य तदा लङ्कां युद्धायाभिससार ह ॥ २४ ॥
लङ्कायास्तूत्तरं द्वारं मेरोः शृङ्गमिवोच्छ्रितं ।
रामः सहानुजो धन्वी रुरोध च जुगोप च ॥ २५ ॥
लङ्कामुपनिविष्टे च रामे दशरथात्मजे ।
जक्षुर्देवगन्धर्वा विव्यथुश्च निशाचराः ॥ २६ ॥
लक्ष्मणानुचरे वीरे व्यथिताः सर्वराक्षसाः ।
अभवन् निर्विशङ्काश्च वानरर्क्षगणाधिपाः ॥ २७ ॥
नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुं ।
रावणाधिष्ठितं तद्धि वरुणेनेव सागरः ॥ २८ ॥
राक्षसैः सायुधैरुग्रैरभिगुप्तं समन्ततः ।
लघूनां त्रासजननं पातालमिव दानवैः ॥ २९ ॥

राक्षसैर्विविधाकारैः शुशुभे सा भयावहैः ।
समन्ताद्बहुभिर्गुप्ता सर्पैर्भोगवती यथा ॥ ३० ॥
विन्यस्तानि च योधानां बहूनि विविधानि च ।
ददर्शायुधजालानि कवचानि महान्ति च ॥ ३१ ॥
पूर्वद्वारमथोऽरक्षन्नीलो हरिचमूपतिः ।
मैन्दश्च द्विविदश्चोभौ श्वेतं गिरिमिवोरगौ ॥ ३२ ॥
अङ्गदो दक्षिणद्वारमरक्षत् प्लवगेश्वरः ।
ऋषभेण गवाक्षेण गयेन पनसेन च ॥ ३३ ॥
हनूमान् पश्चिमं द्वारं ररक्ष बलवान् कपिः ।
प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च संवृतः ॥ ३४ ॥
मध्यमे तु स्वयं गुल्मे सुग्रीवः समतिष्ठत ।
सह सर्वैः कपिश्रेष्ठैः सुपर्णश्वसनोपमैः ॥ ३५ ॥
वानराणां तु षट् त्रिंशत् कोट्यः प्रख्यातविक्रमाः ।
निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ॥ ३६ ॥
शासनेन तु रामस्य सुग्रीवः सविभीषणः ।
द्वारि द्वारि प्लवङ्गानां कोटिं कोटिं न्यवेशयत् ॥ ३७ ॥
पश्चिमेन तु रामस्य सुषेणः सहजाम्बवान् ।
अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ ३८ ॥
ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ।
गृहीत्वा द्रुमशैलाग्रान् हृष्टा योद्धुमुपस्थिताः ॥ ३९ ॥

सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रनखायुधाः ।
सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ४० ॥
सर्वे चैव कृतोत्साहाः सर्वे देवपराक्रमाः ।
दशनागबलाः केचित् केचिद्दशगुणोत्तराः ॥ ४१ ॥
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ।
सन्ति चौघबलाः केचित् केचिद्वायुबलोपमाः ॥ ४२ ॥
अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ।
अद्भुतश्च विचित्रश्च तेषामासीत् समागमः ॥ ४३ ॥
तत्र वानरसैन्यानां शलभानामिवोद्गमः ।
परिपूर्णमिवाकाशं प्रच्छन्नेव च मेदिनी ॥ ४४ ॥
लङ्कामुपनिविष्टैश्च संपतद्भिश्च वानरैः ।
शतं शतसहस्राणां वानराणां पृथक् पृथक् ॥ ४५ ॥
लङ्काद्वाराण्युपाजग्मुः सर्वाणि तु समन्ततः ।
अन्ये त्वन्येषु देशेषु संन्यस्ताश्च महाबलाः ॥ ४६ ॥
संछन्ना नगरी लङ्का तैः समस्तैः प्लवङ्गमैः ।
अयुतानां सहस्रं तु लङ्कां तामभ्यवर्तत ॥ ४७ ॥
वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः ।
सर्वतः संवृता लङ्का दुष्प्रवेशापि वायुना ॥ ४८ ॥
महान् शब्दोऽभवत् तत्र बलौघस्याभिवर्धतः ।
सागरस्य हि भिन्नस्य यथा स्यात् सलिलस्वनः ॥ ४९ ॥

राक्षसा विस्मयं जग्मुः सहसाभिनिपीडिताः ।
वानरैर्मेघसंकाशैः शक्रवीर्यपराक्रमैः ॥५०॥
सहस्रैर्बहुभिश्चापि नीलमेघौघसंनिभैः ।
गिरिकूटप्रमाणैश्च वानरैरावृता दिशः ॥५१॥
निर्घात इव संजज्ञे स बलौघस्वनो महान् ।
स यथा श्रूयते शब्दो मथ्यमानस्य तोयधेः ॥५२॥
तेन शब्देन महता सप्राकारा सतोरणा ।
लङ्का प्रचलिता सर्वा सशैलवनकानना ॥५३॥
राक्षसा विस्मयं जग्मुः प्राकाराट्टालकास्थिताः ।
तादृशान् कपिलान् दृष्ट्वा वानरानभितः स्थितान् ॥५४॥
कोटीशतसहस्रैस्तु अयुतैरर्बुदैस्तथा ।
शङ्कुभिश्च हरीन्द्राणां रामोऽथ रुरुधे पुरीं ॥५५॥
नीहार इव संजज्ञे सन्यानामभियायिनां ।
रजसा संवृतः सूर्यस्तमसेव तदाभवत् ॥५६॥
प्रचचाल पुरी लङ्का सप्राकारा सतोरणा ।
गुहाश्च नेदुः शैलानां गर्जद्भिर्हरियूथपैः ॥५७॥
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ।
बभूव दुर्धर्षतरा सेन्द्रैरपि सुरासुरैः ॥५८॥
रामस्तु बहुभिर्हृष्टैः प्रणदद्भिः प्लवङ्गमैः ।
संमन्त्र्य मन्त्रिभिः काले निश्चित्य च पुनः पुनः ॥५९॥

आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ।
विभीषणस्यानुमते राजधर्ममनुस्मरन् ॥ ६० ॥
अङ्गदं बालितनयं समाहूयेदमब्रवीत् ।
गच्छ सौम्य दशग्रीवं ब्रूहि मद्वचनादिदं ॥ ६१ ॥
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ।
भ्रष्टश्रीकं गतैश्वर्यं मुमूर्षुं नष्टचेतनं ॥ ६२ ॥
देवतानामृषीणां च गन्धर्वाप्सरसां तथा ।
नागानामथ यक्षाणां राज्ञां च रजनीचर ॥ ६३ ॥
यत् त्वयापकृतं मोहादवलिप्तेन रक्षसा ।
तेन ते जनितो दर्पो वरदानात् स्वयम्भुवः ॥ ६४ ॥
तस्य दण्डधरस्तेऽहं दाराहरणरोषितः ।
दण्डं धारयितुं शक्तो लङ्काद्वारि व्यवस्थितः ॥ ६५ ॥
पदवीं देवतानां च महर्षीणां च राक्षस ।
राजर्षीणां च सर्वेषां गमिष्यामि युधि स्थितः ॥ ६६ ॥
बलेन येन वै सीतां मायया राक्षसाधिप ।
मामतिक्रामयित्वा त्वं हृतवांस्तद्विदर्शय ॥ ६७ ॥
अराक्षसमिमं लोकं करोमि निशितैः शरैः ।
न चेच्छरणमभ्येषि मामुपादाय मैथिलीं ॥ ६८ ॥
लङ्कैश्वर्यं परित्यज्य कृतराज्यो कृतासनः ।
रक्षस्व जीवितं मूढ मम निर्यात्य मैथिलीं ॥ ६९ ॥

धर्मात्मा रक्षसां श्रेष्ठः संप्राप्तोऽयं विभीषणः ।
लङ्कैश्वर्यं महद्धीमान् मद्गुप्तः पालयिष्यति ॥ ७० ॥
न हि राज्यमधर्मेण भोक्तुं चिरमिह त्वया ।
शक्यं मूर्खसहायेन दुष्टेनाविजितात्मना ॥ ७१ ॥
युध्यस्वार्यां मतिं कृत्वा शौर्यमालम्ब्य राक्षस ।
मच्छरैस्त्वं ततः शान्तो हतः पूतो भविष्यसि ॥ ७२ ॥
यद्याविशसि लोकांस्त्रीन् पक्षी भूत्वा मनोजवः ।
मम चक्षुःपथं प्राप्य नैव जीवन् गमिष्यसि । ७३ ॥
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदेहिकं ।
सुदृष्टा क्रियतां लङ्का जीवितं ते सुदुर्लभं ॥ ७४ ॥
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ।
जगामाकाशमाविश्य मूर्त्तिमानिव पावकः ॥ ७५ ॥
सोऽभिपत्य मुहूर्त्तेन श्रीमान् रावणमन्दिरं ।
ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७६ ॥
ततस्तस्याविदूरेऽसौ निपत्य हरियूथपः ।
तस्थौ दीप्तहुताशाभः सोऽङ्गदः कनकाङ्गदः ॥ ७७ ॥
स तद्रामवचः सर्वमन्यूनाधिकमुत्तमं ।
सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७८ ॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
बालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७९ ॥

आह त्वां राघवो रामः कौशल्यानन्दिवर्धनः ।
निष्पत्य युधि युध्यस्व नृशंस पुरुषो भव ॥ ८० ॥
अहं हत्वा सहामात्यं सपुत्रभ्रातृबान्धवं ।
निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥ ८१ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसां ।
त्वां शत्रुमुद्धरिष्यामि सायकैरनलप्रभैः ॥ ८२ ॥
न चेत् सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ।
विभीषणाय हत्वा त्वां राज्यं दास्यामि रावण ॥ ८३ ॥
अथैनं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे ।
क्रोधेन महताविष्टो रावणो लोकरावणः ॥ ८४ ॥
अतिरोषातिताम्राक्षः शशास सचिवांस्तदा ।
गृह्यतामेष दुर्मेधाः शास्यतामिति चासकृत् ॥ ८५ ॥
रावणस्य वचः श्रुत्वा दीप्ताग्निसमतेजसः ।
जगृहुस्तं तदा घोराश्चत्वारो रजनीचराः ॥ ८६ ॥
ग्राहयामास तारेयः स्वयमात्मानमात्मना ।
बलं दर्शयितुं वीरो यातुधानबले तदा ॥ ८७ ॥
स तान् बाहुद्वये सक्तानादाय पतगानिव ।
प्रासादं शैलसंकाशमुत्पपात तदाङ्गदः ॥ ८८ ॥
अन्तरीक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः ।
भूमौ निपतिताः सर्वे विसंज्ञा नष्टचेतसः ॥ ८९ ॥

प्रासादशिखरं श्रीमानङ्गदस्तु पदाहनत् ।
न्यपतत् तत् पदाक्रान्तं दशग्रीवस्य पश्यतः ॥ १० ॥
भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः ।
राज्ञा जयति सुग्रीवो वानराधिपतिर्बली ॥ ११ ॥
तथा दाशरथी रामो लक्ष्मणश्च महाबलः ।
विभीषणश्च धर्मात्मा राज्ञा राक्षसपुङ्गवः ॥ १२ ॥
लङ्कैश्वर्यं महत् प्राप्ता त्वां हत्वा रावणं रणे ।
आस्फोटयत् तदा हृष्टः पुनरापुप्लुवे ततः ॥ १३ ॥
सकाशं कोशलेन्द्रस्य रामस्य च महात्मनः ।
सुग्रीवस्य च तत् सर्वं समागम्य न्यवेदयत् ॥ १४ ॥
श्रुत्वा रामस्तु तद्वाक्यमङ्गदस्य मुखाच्युतं ।
विस्मयं परमं प्राप युद्धाय च मनो दधे ॥ १५ ॥
रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् ।
विनाशं चात्मनः पश्यन् निःश्वासपरमोऽभवत् ॥ १६ ॥
रामस्तु बहुभिर्हृष्टैर्विनदद्भिः प्लवङ्गमैः ।
वृतो रिपुबधाकाङ्क्षी युद्धायैवाभ्यवर्तत ॥ १७ ॥
सुषेणस्तु महावीर्यो गिरिकूटोपमो बली ।
बहुभिः संवृतस्तत्र हरिभिः कामरूपिभिः ॥ १८ ॥
द्वाराण्यालोक्य सर्वाणि सुग्रीववचनात् कपिः ।
रामं पर्येति संहृष्टो हर्षयंस्तां महाचमूं ॥ १९ ॥

# युद्धकाण्डं

अक्षौहिणीशतं तेषां समवेक्ष्य वनौकसां ।
लङ्कामुपनिविष्टानां सागरं चातिवर्तिनां ॥ १०० ॥
राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथापरे ।
अपरे समरोद्धूता हर्षं चैवाभिपेदिरे ॥ १०१ ॥
तां तु सेनां निरीक्ष्यैव कपीनां युद्धकाङ्क्षिणां ।
लङ्कामुपनिविष्टानां समहृष्यन्त राक्षसाः ॥ १०२ ॥
कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरं ।
ददृशू राक्षसा दीनाः प्राकारधरणीगताः ॥ १०३ ॥
कृत्स्ना हि कपिभिर्व्याप्ता लङ्का रावणपालिता ।
तिमिरा चाप्रहृष्टा च निशेवासीद्दुरासदा ॥ १०४ ॥

तस्मिन् महाभीषणके प्रवृत्ते
कोलाहले राक्षसराजधान्यां ।
प्रगृह्य रक्षांसि महायुधानि
युगान्तवाता इव संप्रचेरुः ॥ १०५ ॥

इत्यार्षे रामायणे युद्धकाण्डे दूताङ्गदप्रवेशो नाम
षोडशः सर्गः ॥

## XVII.

ततस्ते राक्षसास्त्रस्ता गत्वा रावणमन्दिरं ।
न्यवेदयन् पुरीं रुद्धां रामेण सह वानरैः ॥ १ ॥
संरुद्धां नगरीं श्रुत्वा जातक्रोधो निशाचरः ।
विधानं द्विगुणं कृत्वा प्रासादं समरोहत ॥ २ ॥
स ददर्श ततो लङ्कां सशैलवनकाननां ।
असंख्येयैर्हरिवरैः संरुद्धां युद्धकाङ्क्षिभिः ॥ ३ ॥
स दृष्ट्वा वानरैः सर्वं काननं कपिलीकृतं ।
कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४ ॥
सुचिरं चिन्तयित्वा तु धैर्यमालम्ब्य रावणः ।
राघवौ हरियूथांश्च ददर्शायतलोचनः ॥ ५ ॥
पश्यतो राक्षसेन्द्रस्य तान्यनीकानि भागशः ।
राघवप्रियकामानि लङ्कामारुरुहुस्तदा ॥ ६ ॥
ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः ।
लङ्कामेवाभ्यधावन्त सालतालशिलायुधाः ॥ ७ ॥
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च महाबलाः ।
प्राकाराग्राण्यशक्यानि ममन्थुस्तोरणानि च ॥ ८ ॥
परिखाः पूरयन्तश्च प्रसन्नसलिलोदकाः ।
पांशुभिः पर्वताग्रैश्च समयुध्यन्त वानराः ॥ ९ ॥

# युद्धकाण्डं

एवं सहस्रयूथाश्च शतयूथाश्च वानराः ।
कोटीशतगुणाश्चान्ये लङ्कामारुरुहुस्तदा ॥१०॥
काञ्चनानि प्रमृद्नन्तस्तोरणानि प्लवङ्गमाः ।
कैलासशिखराभानि गोपुराणि प्रमथ्य च ॥११॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
लङ्कामेवाभ्यधावन्त महापर्वतसंनिभाः ॥१२॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥१३॥
इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥१४॥
वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ।
एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनं ॥१५॥
पूर्वद्वारं तु कुमुदः कोटिभिर्दशभिर्वृतः ।
आवृत्य बलवांस्तस्थौ वानराणां महात्मनां ॥१६॥
दक्षिणं द्वारमाश्रित्य वीरः शतबलिः कपिः ।
आवृत्य बलवांस्तस्थौ कोटिभिर्दशभिर्वृतः ॥१७॥
सुषेणः पश्चिमं द्वारं गत्वा तारापिता हरिः ।
आवृत्य बलवांस्तस्थौ षड्भिः कोटिभिरावृतः ॥१८॥
उत्तरं द्वारमासाद्य रामः सौमित्रिणा सह ।
आवृत्य बलवांस्तस्थौ सुग्रीवश्च महाबलः ॥१९॥

गोलाङ्गूलो महाराजो गवाक्षो भीमदर्शनः ।
वृतः कोटीसहस्रेण तस्थौ रामस्य पार्श्वतः ॥ २० ॥
ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिवर्हणः ।
तस्थौ रामसमीपे तु कोटिभिर्दशभिर्वृतः ॥ २१ ॥
गयो गवाक्षो गवयः शरभो गन्धमादनः ।
भीमो दधिमुखो वीरः केशरी पनसस्तथा ॥ २२ ॥
एते हरिवराश्चक्रुः स्कन्धावारस्य रक्षणं ।
संनद्धस्तु महाबाहुर्गदापाणिर्विभीषणः ॥ २३ ॥
आज्ञाप्रतीक्षो रामस्य तस्थौ पार्श्वे स किङ्करः ।
ततः क्रोधपरीतात्मा रावणो राक्षसाधिपः ॥ ३४ ॥
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत् तदा ।
शूरास्ततो विनिष्पेतुर्हृष्टा रावणचोदिताः ॥ २५ ॥
सर्वद्वारैरविच्छिन्ना वेगा इव महोदधेः ।
एतस्मिन्नन्तरे घोरः संग्रामः समपद्यत ॥ २६ ॥
रक्षसां वानराणां च यथा देवासुरस्तथा ।
ते गदाभिः प्रदीप्ताभिः शूलशक्तिपरश्वधैः ॥ २७ ॥
निजघ्नुर्वानरान् घोराः कथयन्तः स्वकान् गुणान् ।
तथा वृक्षैर्महाकायैः पर्वताग्रैश्च सर्वतः ॥ २८ ॥
निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वानराः ।
राक्षसास्त्वपरे भीमाः प्राकारस्था महीगतान् ॥ २९ ॥

वानरान् भिन्दिपालैश्च शक्तिभिश्च व्यदारयन् ।
वानराश्चापि संक्रुद्धा राक्षसांस्तान् महाबलाः ॥ ३० ॥
प्राकारात् पातयामासुस्तरसाप्लुत्य मुष्टिभिः ।
स संप्रहारस्तुमुलो मांसशोणितकर्दमः ।
रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥ ३१ ॥

वनौकसां तत्र तु संनिनादो
लङ्कागतानां च निशाचराणां ।
प्रक्ष्वेडितास्फोटितनर्दितैश्च
द्वाभ्यां महद्भ्यामिव सागराभ्यां ॥ ३२ ॥

इत्यार्षे रामायणे युद्धकाण्डे युद्धारम्भो नाम
सप्तदशः सर्गः ॥

# रामायणं

## XVIII.

युध्यतां तु तदा तेषां वानराणां महात्मनां ।
राक्षसानां च सुमहान् विमर्दः समजायत ॥ १ ॥
ते हयैः काञ्चनापीडैर्ध्वजैश्चाग्निशिखोपमैः ।
रथैरादित्यसंकाशैः कवचैश्च महाप्रभैः ॥ २ ॥
प्रभिन्नकरटैर्घोरैर्वानरेन्द्रप्रहारिभिः ।
अलंकृतैर्बद्धतूणैर्वृहद्घण्टाविभूषितैः ॥ ३ ॥
नानाशस्त्रधरा घोरा मेघा इव सविद्युतः ।
निर्ययुः समरं सर्वे दारयन्तो महीतलं ॥ ४ ॥
सुमहद्भिर्महानादैः पूरयन्तो नभस्तलं ।
राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ५ ॥
निर्यातं राक्षसानीकं संप्रेक्ष्य तु दुरासदं ।
वानराणामपि चमूर्महती जयमिच्छतां ॥ ६ ॥
अभ्यधावत तत् सैन्यं गर्जमानं महास्वनं ।
एतस्मिन्नन्तरे तेषामन्योन्यमभिधावतां ॥ ७ ॥
रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ।
अङ्गदेनेन्द्रजित् सार्द्धं बालिपुत्रेण राक्षसः ॥ ८ ॥
अयुध्यत महातेजा पितुस्तुल्यपराक्रमः ।
प्रजङ्घेन च सम्पातिर्नित्यं दुर्धर्षणो रणे ॥ ९ ॥
जम्बुमालिनमारब्धो हनूमानपि वीर्यवान् ।

संगतः सुमहाक्रोधाद्राक्षसो रावणानुजः ॥ १० ॥
समरे तीक्ष्णवेगेन मित्रघ्नेन विभीषणः ।
तपनेन नलः सार्द्धं राक्षसेन महाबलः ॥ ११ ॥
सुकर्णेन महातेजा नीलोऽपि समयुध्यत ।
सुग्रीवो वानरेन्द्रस्तु प्रघसेन समागतः ॥ १२ ॥
संगतः समरे धीमान् विरूपाक्षेण लक्ष्मणः ।
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ॥ १३ ॥
सुप्तघ्नो यज्ञकेतुश्च रणे रामेण संगताः ।
वज्रमुष्टिस्तु मैन्देन द्विविदेनाशनिप्रभः ॥ १४ ॥
राक्षसौ हरिमुख्याभ्यां समराय समीयतुः ।
गयेनादित्यसंकाशो वीरः प्रतपनस्तथा ॥ १५ ॥
विद्युन्माली सुषेणेन समरे तु समीयिवान् ।
अयुध्यत महातेजाः शक्रेण नमुचिर्यथा ॥ १६ ॥
जाम्बवान् मकराक्षेण धूम्रः कुम्भेन संगतः ।
नरान्तकेन पनसः संसक्तो रक्षसा हरिः ॥ १७ ॥
देवान्तको गवाक्षेण त्रिशिराः शरभेण च ।
रक्षसा कम्पनेनाजौ युयुत्सुः कुमुदो हरिः ॥ १८ ॥
ऋषभो वानरश्रेष्ठः सारणेन समागतः ।
अतिकायेन विनतो रम्भश्चैव समागतः ॥ १९ ॥
धूम्राक्षेण समायुक्तः केशरी हनुमत्पिता ।

वेगदर्शी शुकेनाजौ संप्रहारमथाकरोत् ॥ २० ॥
संक्रुद्धं तु महापार्श्वं युयुधे गन्धमादनः ।
वीरः शतबली रक्षो विद्युज्जिह्वमयोधयत् ॥ २१ ॥
वानराश्चापरे योधा राक्षसैरपरैः सह ।
द्वन्द्वं समीयुर्बहवो युद्धार्थं बहुभिः सह ॥ २२ ॥
तत्रासीत् सुमहद्युद्धं तुमुलं लोमहर्षणं ।
रक्षसां वानराणां च वीराणां जयमिच्छतां ॥ २३ ॥
हरिराक्षसदेहेभ्यः प्रवृत्ताः केशशैवलाः ।
शरीरसंघातवहाः प्रसस्रुः शोणितापगाः ॥ २४ ॥
तस्मिन् प्रवृत्ते संग्रामे रौद्रे भीरुभयावहे ।
हरिराक्षसयोर्युद्धं तुमुलं समपद्यत ॥ २५ ॥
आजघानेन्द्रजित् क्रुद्धो वज्रेणेव शतक्रतुः ।
अङ्गदं गदया वीरः परसैन्यविदारणः ॥ २६ ॥
तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिं ।
जघान समरे श्रीमानङ्गदो विननाद च ॥ २७ ॥
प्रजङ्घेन तु सम्पातिस्त्रिभिर्बाणैर्विदारितः ।
निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २८ ॥
अतिकायोऽतिबलवान् देवदानवदर्पहा ।
रम्भं च विनतं चैव ताडयामास मार्गणैः ॥ २९ ॥
पतन्तं तपनो घोरमभ्यधावन्नलं हरिं ।

तलेन तु नलस्तस्य पीडयामास चक्षुषी ॥ ३० ॥
भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा ।
निजघानाङ्किसारेण तपनं मुष्टिना नलः ॥ ३१ ॥
जम्बुमाली रथस्थस्तु तथा शक्त्या महाबलः ।
बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ ३२ ॥
स तस्य रथमारुह्य हनूमान् मारुतात्मजः ।
प्रममाथ तलेनैव गिरिशृङ्गोपमं शिरः ॥ ३३ ॥
भिन्नगात्रः शरैस्तीक्ष्णैर्मित्रघ्नेन विभीषणः ।
मित्रघ्नं गदया क्रुद्धो निजघान विभीषणः ॥ ३४ ॥
ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः ।
सुग्रीवः सप्तपर्णेन जघान च ननाद च ॥ ३५ ॥
सृजन्तं शरवर्षाणि राक्षसं भीमदर्शनं ।
निजघान विरूपाक्षं शरेणैकेन लक्ष्मणः ॥ ३६ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ।
सुप्तघ्नो यज्ञकेतुश्च रामं निर्बिभिदुः शरैः ॥ ३७ ॥
तेषां चतुर्णां रामस्तु शिरांसि समरे शरैः ।
क्रुद्धश्चतुर्भिश्चिच्छेद तान्युत्प्लुत्य क्षितिं ययुः ॥ ३८ ॥
वज्रमुष्टिस्तु मैन्देन मुष्टिनाभिहतो रणे ।
पपात सरथस्तूर्णं पुराढ् इव भूतले ॥ ३९ ॥
सुकर्णः समरे नीलं नीलाञ्जनचयोपमं ।

निर्बिभेद शरैस्तीक्ष्णैर्मेघं सूर्य इवांशुभिः ॥४०॥
पुनः शरशतेनैव क्षिप्रहस्तो निशाचरः ।
बिभेद समरे नीलं सुकर्णः प्रजहास च ॥४१॥
तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे ।
शिरश्चिच्छेद बलवान् स निकृत्तोऽपतद्भुवि ॥४२॥
द्विविदं वानरेन्द्रं तु द्रुमपाणिं महाहवे ।
शरैरशनिसंकाशैः स विव्याधाशनिप्रभः ॥४३॥
शरैरतिविभिन्नाङ्गो द्विविदः क्रोधमूर्च्छितः ।
सालेन सरथं साश्वं निजघानाशनिप्रभं ॥४४॥
विद्युन्माली रथस्थस्तु शरैः कनकभूषणैः ।
सुषेणं ताडयामास ननाद च मुहुर्मुहुः ॥४५॥
तस्यान्तरमथो दृष्ट्वा सुषेणो हरिपुङ्गवः ।
गिरिशृङ्गेण महता रथमाशु व्यपोथयत् ॥४६॥
लाघवेन सुसंयुक्तो विद्युन्माली निशाचरः ।
अवप्लुत्य रथात् तूर्णं गदापाणिः स्थितः क्षितौ ॥४७॥
ततः क्रोधसमाविष्टः सुषेणो वानराधिपः ।
शिलामादाय महतीं निशाचरमथाद्रवत् ॥४८॥
तं चापतन्तं गदया विद्युन्माली निशाचरः ।
वक्षस्यभिजघानाशु सुषेणं कपियूथपं ॥४९॥
गदाप्रहारं तं घोरमविचिन्त्य प्लवङ्गमः ।

शिलां संपातयामास तस्योरसि महामृधे ॥५०॥
शिलाप्रहाराभिहतो विद्युन्माली निशाचरः ।
निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ॥५१॥
एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः ।
द्वन्द्वे विनिहताः सर्वे दैत्या इव सुरोत्तमैः ॥५२॥
तथा खड्गैर्गदाभिश्च शक्तितोमरसायकैः ।
अपविद्धैश्च भग्नैश्च रथैः सांग्रामिकैर्भुवि ॥५३॥
निहतैः कुञ्जरैर्मत्तैस्तुरगैश्च समन्ततः ।
चक्राक्षयुगसंघैश्च भग्नैर्धरणिसंश्रितैः ॥५४॥
तोमरैरङ्कुशैः शस्त्रैः कुठारैः सपरश्वधैः ।
तत्र तत्रापविद्धैश्च कवचैस्तैर्हिरण्मयैः ॥५५॥
बभूवायोधनं घोरं गोमायुगणसंकुलं ।
कबन्धाश्च समुत्पेतुर्ऋक्षवानररक्षसां ॥५६॥
राक्षसा भयसंविग्ना रुधिरौघपरिप्लुताः ।
भीतिं चैव विशन्त्यत्र कातरा मोहपीडिताः ॥५७॥
राक्षसानां सुघोराणां हतानां रणमूर्द्धनि ।
बभूव तद्घोरतरं तेषामायोधनं महत् ।
गृध्रगोमायुसंघानां मोदनं रौद्रदर्शनं ॥५८॥
विदार्यमाणा हरियूथपैस्तदा निशाचराः शोणितगन्धमोहिताः।
पुनः सुसंरब्धतरा व्यवस्थितास्तथैव वीराः समराभिकाङ्क्षिणः ।५९।

## XIX.

युध्यतामेव तेषां तु तदा वानररक्षसां ।
रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १ ॥
अन्योन्यबद्धवैराणां शूराणां जयमिच्छतां ।
संप्रवृत्तं निशायुद्धं तदा परमदारुणं ॥ २ ॥
राक्षसोऽसीति हरयो वानरोऽसीति राक्षसाः ।
अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३ ॥
भिन्धि दारय देहीति कर्ष विद्रावयेति च ।
इत्येवं तुमुलः शब्दस्तस्मिंस्तमसि शुश्रुवे ॥ ४ ॥
कालाः काञ्चनसंनाहास्तस्मिंस्तमसि राक्षसाः ।
समदृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५ ॥
ऋक्षास्तिमिरसंकाशास्तस्मिंस्तमसि दारुणे ।
परिपेतुः सुसंरब्धा भक्षयन्तो निशाचरान् ॥ ६ ॥
तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्च्छिताः ।
परिपेतुर्महावीर्या भक्षयन्तः प्लवङ्गमान् ॥ ७ ॥
निन्युर्यमक्षयं क्रुद्धा मुष्टिभिर्दशनैस्तथा ।
उत्पतन्तश्च हरयो निपतन्तश्च राक्षसान् ॥ ८ ॥
ते हयान् काञ्चनापीडान् ध्वजांश्चाग्निशिखोपमान् ।
आप्लुत्याप्लुत्य दशनैस्तीव्रकोपा व्यदारयन् ॥ ९ ॥

कुञ्जरान् कुञ्जरारोहान् पदातीन् रथिनो रथान् ।
आप्लुत्याप्लुत्य दशनैर्नखैश्च विचकर्त्तिरे ॥१०॥
रामश्च लक्ष्मणश्चैव शरैरग्निशिखोपमैः ।
आदिश्यादिश्य रक्षांसि प्रवराणि निजघ्नतुः ॥११॥
तुरङ्गखुरविध्वस्तं रथनेमिसमुद्धतं ।
छादयामास सैन्यानि दिशश्च बहुलं रजः ॥१२॥
वर्तमाने तथा घोरे संग्रामे लोमहर्षणे ।
लोहितोदा महावेगा नद्योघाः संप्रसुस्रुवुः ॥१३॥
ततो भेरीमृदङ्गानां पटहानां च निस्वनः ।
शङ्खवेणुस्वनोन्मिश्रो घोराणां कामरूपिणां ॥१४॥
हतानां स्तनमानानां राक्षसानां च निस्वनः ।
शस्त्राणां वाहनानां च संबभूवातिदारुणः ॥१५॥
शस्त्रपुष्पोपहारा सा तत्रासीद्युद्धमेदिनी ।
दुष्प्रेक्ष्या दुर्विशा चैव मांसशोणितकर्दमा ॥१६॥
हतैर्वानरमुख्यैश्च शक्तिशूलपरश्वधैः ।
निहतैः पर्वताकारै राक्षसैः कामरूपिभिः ॥१७॥
सा बभूव निशा घोरा हरिराक्षसघातिनी ।
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ॥१८॥
ततस्ते राक्षसाः सर्वे तस्मिंस्तमसि दारुणे ।
राममेवाभ्यवर्तन्त प्रहृष्टाः शरवृष्टिभिः ॥१९॥

# रामायणं

तेषामापततां शब्दः क्रुद्धानामभिगर्जतां ।
समुद्धर्तितवेगानां सागराणामिवाभवत् ॥ २० ॥
रक्षांसि निशितैर्बाणैः षड्भिरेव रघूत्तमः ।
निमेषान्तरमात्रेण निर्बिभेद षडेव हि ॥ २१ ॥
यज्ञशत्रुश्च दुर्धर्षौ महापार्श्वमहोदरौ ।
वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ॥ २२ ॥
रामं समभ्यधावन्त नानाप्रहरणायुधाः ।
एते रामेण निशितैर्बाणैर्मर्मसु ताडिताः ॥ २३ ॥
ततः कनकचित्राङ्गैः शरैराशीविषोपमैः ।
दिशः प्राच्छादयामास प्रदिशश्च महाबलः ॥ २४ ॥
ये त्वन्ये राक्षसा वीरा रामस्याभिमुखे स्थिताः ।
ते विनष्टाः समासाद्य पतङ्गा इव पावकं ॥ २५ ॥
ततः काञ्चनचित्राङ्गैः शरैराशीविषोपमैः ।
तत् तमो रात्रिजं रामः किञ्चित् समुदसारयत् ॥ २६ ॥
तमन्धकारमुत्सार्य बाणैर्बाणपथं प्रभुः ।
चक्षुर्विषयमासाद्य शरौघान् समवर्तयत् ॥ २७ ॥
सुवर्णपुङ्खैर्विशिखैः संपतद्भिः समन्ततः ।
शुशुभे रजनी तत्र खद्योतैरिव शारदी ॥ २८ ॥
राक्षसानां महानादैर्वानराणां च गर्जितैः ।
सा बभूव निशा घोरा भूयो घोरतरा तदा ॥ २९ ॥

# युद्धकाण्डं

तेन शब्देन महता प्रवृद्धेन समन्ततः ।
त्रिकूटः कन्दरमुखैः प्रव्याहरदिवाचलः ॥ ३० ॥
अन्याश्चापि महाकायास्तमसस्तुल्यवर्चसः ।
संपरिष्वज्य बाहुभ्यामदशन् रजनीचरान् ॥ ३१ ॥
ततः क्रोधसमाविष्टः शरवर्षेण रावणिः ।
अङ्गदस्य चमूं कोपान्नाशयामास सर्वतः ॥ ३२ ॥
ततः कोपपरीतात्मा युवराजोऽङ्गदो बली ।
शिलामुत्पाटयामास बाहुभ्यां प्रणदन् मुहुः ॥ ३३ ॥
स तामुत्क्षिप्य सहसा छाद्यमानः शरोर्मिभिः ।
रथं बभञ्ज वेगेन शिलया कपिकुञ्जरः ॥ ३४ ॥
इन्द्रजित् तु रथं त्यक्त्वा हताश्वो हतसारथिः ।
अङ्गदेन महामायस्तत्रैवान्तरधीयत ॥ ३५ ॥
तत् कर्म बालिपुत्रस्य सर्वे देवा महर्षिभिः ।
तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ ३६ ॥
ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः ।
साधु साध्विति ते नेदुर्दृष्ट्वा रक्षः पराजितं ॥ ३७ ॥
इन्द्रजित् तु ततस्तेन संयुगेऽद्भुतकारिणा ।
निर्जितो बालिपुत्रेण क्रोधं चक्रे सुदारुणं ॥ ३८ ॥
सोऽन्तर्धानगतः पापो रावणी रणकर्कशः ।
निकुम्भिलायां विधिवत् पावकं जुहुवेऽस्त्रवित् ॥ ३९ ॥

जुह्वतस्तस्य तत्राग्नौ रक्तोष्णीषाम्बरस्रजः ।
आजह्रुस्तत्र संभ्रान्ता राक्षसा यत्र रावणिः ॥४०॥
शस्त्राणि शितधाराणि समिधोऽथ विभीतकान् ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं ततः ॥४१॥
सर्वतोऽग्निं समास्तीर्य शरैः सप्रासतोमरैः ।
छागलस्यापि कृष्णस्य कण्ठादादाय जीवतः ॥४२॥
शोणितं तेन विधिवत् स जुहाव रणोत्सुकः ।
सकृदेव समिद्धस्य विधूमस्य महार्चिषः ॥४३॥
बभूवुः संनिमित्तानि विजयं यान्यवेदयन् ।
प्रदक्षिणावर्त्तशिखस्तप्तहाटकसंनिभः ॥४४॥
हविस्तत् प्रतिजग्राह पावकः स्वयमुत्थितः ।
ततोऽग्निमध्यादुत्तस्थौ काञ्चनः स्यन्दनोत्तमः ॥४५॥
चतुर्भिः काञ्चनापीडैरश्वैर्युक्तः प्रभद्रकैः ।
अन्तर्धानगतः श्रीमान् दीप्तपावकसप्रभः ॥४६॥
हुताग्निं तर्पयित्वा च दैत्यदानवराक्षसान् ।
वाचयित्वा ततः स्वस्ति प्रयुक्ताशीर्द्विजातिभिः ॥४७॥
आरुरोह रथं श्रेष्ठमन्तर्धानचरं शुभं ।
स्ववश्यैर्वाजिभिर्युक्तं शस्त्रैश्च विविधैर्युतं ॥४८॥
समारोपितनेपथ्यं रथशक्तिसमन्वितं ।
जाज्वल्यमानं वपुषा तप्तहाटकसंनिभं ॥४९॥

भल्लैश्चैवार्धचन्द्रैश्च सर्वतः समलंकृतं ।
जाम्बूनदमयो नागस्तरुणादित्यसंनिभः ॥५०॥
बभूवेन्द्रजितः केतुर्वैडूर्यसमलंकृतः ।
हुत्वाग्निं राक्षसैर्मन्त्रैस्ततो वचनमब्रवीत् ॥५१॥
अद्य हत्वा बधार्हौ तौ मिथ्या प्रव्रजितौ रणे ।
जयं पित्रे प्रदास्यामि रावणाय मनःप्रियं ॥५२॥
अद्य निर्वानरामुर्वीं हतराघवलक्ष्मणां ।
करिष्यामि निःसुग्रीवां ततस्त्वन्तरधीयत ॥५३॥
स ददर्श महावीर्यौ भ्रातरौ रामलक्ष्मणौ ।
सृजन्तौ शरजालानि कपिमध्ये व्यवस्थितौ ॥५४॥
स तु वैहायसं प्राप्य रथं तौ रामलक्ष्मणौ ।
अचक्षुर्विषये तिष्ठन् विव्याध निशितैः शरैः ॥५५॥
तौ तस्य शरवेगेन परीतौ भ्रातरावुभौ ।
गृहीत्वा धनुषी व्योम्नि घोरान् मुमुचतुः शरान् ॥५६॥
प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ ।
तं महासुरसंकाशं न च पस्पृशतुः शरैः ॥५७॥
स विधायान्धकाराणि मायाबलसमन्वितः ।
दिशश्चान्तर्दधे वीरो नीहारतमसावृताः ॥५८॥
नैव ज्यातलनिर्घोषो नैव नेमिरथस्वनः ।
शुश्रुवे चरतस्तस्य न च रूपं व्यदृश्यत ॥५९॥

घनान्धकारे तिमिरे शिलावर्षमिवाद्भुतं ।
स ववर्ष महाबाहुर्नाराचशरसंहतिं ॥ ६० ॥
राघवौ सूर्यसंकाशैर्घोरैर्दत्तवरैः शरैः ।
बिभेद समरे क्रुद्धः सर्वगात्रेषु रावणिः ॥ ६१ ॥
तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ ।
हेमपुङ्खान् नरव्याघ्रौ तीक्ष्णान् मुमुचतुः शरान् ॥ ६२ ॥
अन्तरीक्षे त्वनासाद्य ते रिपुं कङ्कवाससः ।
निपेतुर्विततताः पृथ्व्यां शराः शतसहस्रशः ॥ ६३ ॥
अन्तर्हितस्तु मायावी रावणिः प्रहसन् रणे ।
अतिमात्रं शरौघेन पीडयामास राघवौ ॥ ६४ ॥
तानिषून् पतितान् भल्लैरनेकैर्निचकर्ततुः ।
राघवौ परमायस्तौ ज्वलद्भिर्ज्वलनोपमैः ॥ ६५ ॥
यतो यतो ददृशतुः शितानापततः शरान् ।
ततस्ततो बाणवर्षं राघवौ विससर्जतुः ॥ ६६ ॥
इन्द्रजित् तु दिशः सर्वा रथेन विचरन् बली ।
विव्याध तौ दाशरथी लघुहस्तः शितैः शरैः ॥ ६७ ॥
तौ तु विद्धौ महात्मानौ रुक्मपुङ्खैरजिह्मगैः ।
बभूवतुर्दाशरथी बन्धुजीवस्रजोपमौ ॥ ६८ ॥
नास्य वेद गतिं कश्चिन्न रूपं न धनुःस्वनं ।
न चास्य लक्षणं किञ्चित् सूर्यस्येवाभ्रसंप्लवे ॥ ६९ ॥

तेन विद्धाश्च हरयो निहताश्च गतासवः ।
राघवार्थे पराक्रान्ता धरण्यामुपशेरते ॥ ७० ॥
लक्ष्मणोऽथ सुसंक्रुद्धः क्रोधाद्भ्रातरमब्रवीत् ।
ब्राह्ममस्त्रं प्रयोक्ष्यामि बधार्थं सर्वरक्षसां ॥ ७१ ॥
तमुवाच ततो रामो लक्ष्मणं शुभलक्षणं ।
एकस्य रक्षसो हेतोः पृथिव्यां सर्वराक्षसान् ॥ ७२ ॥
अयुध्यमानान् प्रच्छन्नान् प्राञ्जलीन् समुपस्थितान् ।
पलायमानान् सुप्तांश्च न त्वं तान् हन्तुमर्हसि ॥ ७३ ॥
तस्यैव तु बधे यत्नं करिष्यामि नरर्षभ ।
आदेक्ष्यावो महावेगान् कामगान् हरियूथपान् ॥ ७४ ॥
एते वै माययाच्छन्नं क्षुद्रमन्तर्हितं भृशं ।
राक्षसं निहनिष्यन्ति प्रेक्ष्य वानरयूथपाः ॥ ७५ ॥

प्रकाशरूपः स यदा न शक्तस्
तौ बाधितुं राक्षसराजपुत्रः ।
प्रयुज्य मायां स तु मेघनादो
बबन्ध तौ राजसुतौ दुरात्मा ॥ ७६ ॥

इत्यार्षे रामायणे युद्धकाण्डे द्वन्द्वयुद्धं
नाम अष्टादशः सर्गः—शरबन्धोद्यमो नाम
नवदशः सर्गः ॥

# रामायणं

## XX.

स तस्य गतिमन्विच्छन् राजपुत्रः प्रतापवान् ।
ददर्शातिबलो रामो दश वानरयूथपान् ॥ १ ॥
द्वौ सुषेणस्य दायादौ नीलं च प्लवगर्षभं ।
अङ्गदं च महाबाहुं शरभं च तरस्विनं ॥ २ ॥
द्विविदं हनुमन्तं च प्रस्थं वीरं महाबलं ।
ऋषभं ऋषभस्कन्धमादिदेश रिपुं प्रति ॥ ३ ॥
ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् ।
आकाशं विविशुः सर्वे मार्गमाणास्तु रावणिं ॥ ४ ॥
तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः ।
अस्त्रवित् परमास्त्रेण वारयामास रावणिः ॥ ५ ॥
ते भीमवेगा हरयो नाराचैर्भृशताडिताः ।
अन्धकारेण ददृशुर्मेघैः सूर्यमिवावृतं ॥ ६ ॥
ते तु वानरशार्दूला राक्षसेन विपश्चिता ।
निर्धूताः शरवेगेन न्यपतन्त महीतले ॥ ७ ॥
स रामलक्ष्मणावेव वेगवद्भिः शितैः शरैः ।
भृशमाविव्यधामास रावणिः समितिञ्जयः ॥ ८ ॥
निरन्तरशरीरौ च कृतौ तौ सायकैस्तदा ।
क्रुद्धेनेन्द्रजिता युद्धे पन्नगैः शरतां गतैः ॥ ९ ॥

तयोः क्षतजमङ्गेभ्यः सुस्राव बहुधा बहु ।
तावुभौ स्म प्रकाशेते पुष्पिताविव किंशुकौ ॥ १० ॥
ततः पर्यन्तरक्ताक्षो नीलाञ्जनचयोपमः ।
रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ ११ ॥
युध्यमानमलक्ष्यं मां शक्रोऽपि त्रिदशेश्वरः ।
द्रष्टुमासादितुं वापि न शक्तः किं पुनर्युवां ॥ १२ ॥
एवमुक्त्वा तु धर्मज्ञौ भ्रातरौ रामलक्ष्मणौ ।
निर्बिभेद शितैर्बाणैः प्रहर्षाद्विननाद च ॥ १३ ॥
उवाच शरसंदीप्तौ भ्रातरौ तौ निशाचरः ।
एष वां रोषसंरब्धो नयामि यमसादनं ॥ १४ ॥
भिन्नाञ्जनचयश्यामो विस्फार्य विपुलं धनुः ।
भूय एव शरान् घोरान् विससर्ज तयोर्मृधे ॥ १५ ॥
तयोर्मर्मसु मर्मज्ञो मज्जयन्निव तान् शरान् ।
रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १६ ॥
प्रावृताविषुजालेन तावुभौ रामलक्ष्मणौ ।
आह रोषपरीतात्मा नयामि यमसादनं ॥ १७ ॥
बद्धौ तु शरबन्धेन भ्रातरौ रणमूर्द्धनि ।
निमेषान्तरमात्रेण न शेकतुरुदीक्षितुं ॥ १८ ॥
ततो निर्भिन्नसर्वाङ्गौ शरशल्यचितावुभौ ।
ध्वजाविव महेन्द्रस्य रज्जुयुक्तावचेष्टतां ॥ १९ ॥

तौ तु प्रज्वलितैर्वाणैरर्दितौ मर्मभेदिभिः ।
निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ २० ॥
तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ ।
शरावेष्टितसर्वाङ्गौ भ्रातरौ परिपीडितौ ॥ २१ ॥
न ह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरं ।
नानिर्भिन्नं न चाध्वस्तमपि सूक्ष्ममजिह्मगैः ॥ २२ ॥
शराचितशरीरौ तौ क्षितौ निपतितावुभौ ।
अदृश्येतां महाबाहू छादितौ शलभैर्यथा ॥ २३ ॥
तौ तु वीरेण विद्धाङ्गौ रक्षसा कामरूपिणा ।
स्रवतो रुधिरं तीव्रं जलं प्रस्रवणाविव ॥ २४ ॥
पपात प्रथमं रामः पूर्वं विद्धः शितैः शरैः ।
क्रोधादिन्द्रजिता येन पुरा शक्रोऽपि निर्जितः ॥ २५ ॥
रुक्मपुङ्खैरजिह्माग्रैरधोगतिभिराशुगैः ।
नालीकैर्बङ्कुनाराचैर्भल्लैरथ विकर्णिभिः ॥ २६ ॥
विपाठैर्वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ।
निहतो लक्ष्मणः शेते दिव्यमादाय कार्मुकं ॥ २७ ॥
भिन्नमुष्टिपरिधस्तं त्रिणतं रुक्मरञ्जितं ।
वाणपातान्तरे रामः पतितं पुरुषर्षभं ।
शयानं लक्ष्मणं दृष्ट्वा निराशो जीवितेऽभवत् ॥ २८ ॥

इति युद्धकाण्डे शरबन्धो नाम विंशः सर्गः ॥

# युद्धकाण्डं

## XXI.

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः ।
ददृशुः संततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १ ॥
दृष्ट्वैवोपरते मेघे कृतकर्मणि राक्षसे ।
उत्पपाताथ तं देशं सुग्रीवः सविभीषणः ॥ २ ॥
नीलद्विविदमैन्दाश्च सुषेणकुमुदाङ्गदाः ।
तूर्णं हनुमता सार्द्धमागच्छन् यत्र राघवौ ॥ ३ ॥
निश्चेष्टौ मन्दनिःश्वासौ शोणितेन परिप्लुतौ ।
शरजालावृतौ स्तब्धौ शयानौ शरतल्पयोः ॥ ४ ॥
निःश्वसन्तौ यथा नागौ निश्चेष्टौ नष्टविक्रमौ ।
रुधिरस्रुतिदिग्धाङ्गौ तापनीयाविव ध्वजौ ॥ ५ ॥
तौ वीरशयने वीरौ शयानौ नष्टचेतनौ ।
यूथपैः संपरिवृतौ वास्पव्याकुललोचनौ ॥ ६ ॥
राघवौ पतितौ दृष्ट्वा बाणजालसमावृतौ ।
बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७ ॥
अन्तरीक्षं च पश्यन्तो दिशः सर्वाश्च वानराः ।
न च ते माययाच्छन्नं पश्यन्तीन्द्रजितं रणे ॥ ८ ॥
तं तु मायाप्रतिच्छन्नं माययैव विभीषणः ।
वीक्षमाणो ददर्शाथ भ्रातुः पुत्रमवस्थितं ॥ ९ ॥

तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ।
ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः ।। १० ।।
इन्द्रजित् तु महामायः कृत्वा कर्म सुदुष्करं ।
उवाच परमप्रीतो हर्षयन् सर्वराक्षसान् ।। ११ ।।
दूषणस्य च हन्तारौ खरस्य च महाहवे ।
सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ।। १२ ।।
नेमौ मोचयितुं शक्यावेतस्मादिषुबन्धनात् ।
सर्वैरपि समासाद्य सर्षिसंघैः सुरासुरैः ।। १३ ।।
कृते चिन्तयतो यस्य शोकार्त्तस्य पितुर्मम ।
अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति जाग्रतः ।। १४ ।।
कृत्स्नेयं यत्कृते लङ्का नदीवर्षास्विवाकुला ।
सोऽयं मूलहरोऽनर्थः सर्वेषां निहतो मया ।। १५ ।।
रामोऽयं लक्ष्मणश्चैव सर्वे चैव वनौकसः ।
शरैः कृता निरुद्योगा यथा शरदि तोयदाः ।। १६ ।।
एवमुक्त्वा तु तान् सर्वान् राक्षसान् पारिपार्श्विकान् ।
यूथपानपि तान् सर्वानर्दयामास रावणिः ।। १७ ।।
मर्मज्ञः सर्वगात्रेषु घोरैर्दत्तवरैः शरैः ।
मोहयन् शरबन्धेन पातयामास भूतले ।। १८ ।।
तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ।
प्रजहास महाहासो वचनं चेदमब्रवीत् ।। १९ ।।

शरबन्धेन घोरेण मया बद्धौ चमूमुखे ।
सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥ २० ॥
एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः ।
परं विस्मयमाजग्मुः कर्मणा तेन तोषिताः ॥ २१ ॥
विनेदुश्च महानादान् सर्वे ते जलदा इव ।
हतो राम इति ज्ञात्वा रावणिं तेऽभ्यपूजयन् ॥ २२ ॥
निष्कम्पौ तु कृतौ दृष्ट्वा तावुभौ रामलक्ष्मणौ ।
वसुधायां निरुत्साहौ हताविति तदा विदुः ॥ २३ ॥
ततः शीघ्रं पुरीं लङ्कामिन्द्रजित् समितिञ्जयः ।
प्रविवेश दुराधर्षो हर्षयन् सर्वनैर्ऋतान् ॥ २४ ॥
रामलक्ष्मणयोर्दृष्ट्वा शरीरं सायकैश्चितं ।
वानरेन्द्रस्य संजातं सुग्रीवस्य महद्भयं ॥ २५ ॥
भयशोकसमाविष्टो रुरोद च महाकपिः ।
तमुवाच परित्रस्तं सुग्रीवं तु विभीषणः ॥ २६ ॥
सवास्पवदनं दीनं वास्पव्याकुललोचनं ।
अलं त्रासेन सुग्रीव वास्पवेगो निगृह्यतां ॥ २७ ॥
एवंप्रायानि युद्धानि विजयो नास्ति नैष्ठिकः ।
सशेषं भाग्यमस्माकं यदि वीर भविष्यति ॥ २८ ॥
मोहमेतौ प्रहास्येते भ्रातरौ रामलक्ष्मणौ ।
पर्यवस्थापयात्मानं मामनाथं च वानर ॥ २९ ॥

सत्यधर्मानुरक्तानां नास्ति मृत्युकृतं भयं ।
मोहसंतापसंयुक्तं रामं प्रति महाकपे ॥ ३० ॥
विमुच्यतामयं त्रासः शूराणामेष निर्णयः ।
एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना ॥ ३१ ॥
सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ।
प्रमृज्य वदनं तस्य कपिराजस्य राक्षसः ॥ ३२ ॥
अब्रवीत् कालसंप्राप्तमसंभ्रान्तो विभीषणः ।
न कालः कपिराजेन्द्र वैक्लव्यस्य कथञ्चन ॥ ३३ ॥
अतिस्नेहो ह्यकाले च व्यसनायोपपद्यते ।
तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनं ॥ ३४ ॥
हितं रामपुरोगाणां सैन्यानामनुचिन्तय ।
रक्ष्येतामथ वै तौ हि यावन्मोहविपर्ययात् ॥ ३५ ॥
लब्धसंज्ञौ तु काकुत्स्थौ भयं ते व्यपनेष्यतः ।
न पापमस्ति रामस्य न च मृत्युभयं क्वचित् ॥ ३६ ॥
न ह्येनं च त्यजेल्लक्ष्मीर्दुर्लभा या गतायुषां ।
तस्मादाश्वासयात्मानं मां समाज्ञापयस्व च ॥ ३७ ॥
यावत् सर्वाण्यनीकानि पुनः संस्थापयाम्यहं ।
एते ह्युत्फुल्लनयनास्त्रासादागतसाध्वसाः ॥ ३८ ॥
कर्णाकर्णि हि कपयः कथयन्ति हरीश्वर ।
मां तु दृष्ट्वा प्रधावन्तमनीकेषु प्रहर्षिताः ॥ ३९ ॥

त्यजन्ति हृदयस्त्रासं सर्पा जीर्णामिव त्वचं ।
एवमुक्त्वा तु सुग्रीवं स्निग्धं रामे विभीषणः ॥ ४० ॥
चतुर्भिः सचिवैः सार्द्धमनुसंस्थापयद्बलं ।
न भेतव्यं न भेतव्यं धैर्यमालम्ब्य तिष्ठत ॥ ४१ ॥
सुग्रीवः कुशली चैव राघवः सहलक्ष्मणः ।
इन्द्रजित् तु महामायः सर्वसैन्यसमन्वितः ॥ ४२ ॥
प्रविवेश पुरीं लङ्कां जीमूतमिव भास्करः ।
तत्र रावणमासाद्य सोऽभिवाद्य कृताञ्जलिः ॥ ४३ ॥
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ।
उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे ॥ ४४ ॥
रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ।
मूर्द्ध्नि चैनमुपाजिघ्रत् परितुष्टेन चेतसा ।
पृच्छते तु ततस्तस्मै पित्रे सर्वं न्यवेदयत् ॥ ४५ ॥

स हर्षवेगानुगतान्तरात्मा
श्रुत्वा गिरं तस्य महारथस्य ।
जहौ ज्वरं दाशरथेः समुत्थं
प्रहृष्टवद्याभिननन्द पुत्रं ॥ ४६ ॥

इत्यार्षे रामायणे युद्धकाण्डे शरबन्धनिवेदनं
नाम एकविंशः सर्गः ॥

## XXII.

ततः प्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे ।
ररक्षुः परिवार्याथ राघवौ प्लवगर्षभाः ॥ १ ॥
हनूमानङ्गदो नीलः सुषेणः कुमुदो हरिः ।
गयो गवाक्षः पनसः सानुप्रस्थो नलस्तथा ॥ २ ॥
जाम्बवानृषभश्चैव रम्भः शतबलिः पृथुः ।
क्रथनश्च महातेजाः सम्पातिश्च महाबलः ॥ ३ ॥
एते सर्वे महात्मानो वानरा भीमविक्रमाः ।
व्यूह्यानीकानि सर्वाणि द्रुमानादाय साश्मनः ॥ ४ ॥
वीक्षमाणा दिशः सर्वास्तिर्यगूर्द्ध्वं च सर्वतः ।
तृणेष्वपि विचेष्टत्सु राक्षसानेव मेनिरे ॥ ५ ॥
रावणस्त्वथ संहृष्टो विसृज्येन्द्रजितं सुतं ।
प्रीत्या परमया युक्तः कृतकर्माणमुत्तमं ॥ ६ ॥
गते तस्मिन् महामाये रावणस्य सुते तदा ।
स्वगृहे चिन्तयामास रावणो लोकरावणः ॥ ७ ॥
कृतमिन्द्रजिता कर्म दुष्करं यत् सुरैरपि ।
सीता श्रुत्वा भृशं तत्र दीना त्यक्ष्यति जीवितं ॥ ८ ॥
अथवा स्त्रीस्वभावेन चापल्यवशमोहिता ।
यथाकामं ममाद्यापि विवशा वशमेष्यति ॥ ९ ॥

# युद्धकाण्डं

अत्रोपायो यथावत् तु मया संपरिचिन्तितः ।
यं श्रुत्वा ताश्च राक्षस्यः सीतायाः परिरक्षणे ॥ १० ॥
व्यापृता या ममादेशे सततं मे वशानुगाः ।
हर्षेण महता युक्ता भविष्यन्ति विशेषतः ॥ ११ ॥
अथ वृद्धां परां भक्तां सर्वभावार्थसाधिनीं ।
आह्वयामास तां राजा राक्षसीनां महत्तरां ॥ १२ ॥
रावणस्त्रिजटां नाम शासनात् समुपस्थितां ।
तामुवाच ततो दृष्ट्वा राक्षसीं राक्षसेश्वरः ॥ १३ ॥
हताविन्द्रजिताख्याहि वैदेह्या रामलक्ष्मणौ ।
पुष्पकं तु समारोप्य दर्शयास्या हतौ रणे ॥ १४ ॥
यमाश्रयमवष्टभ्य सीता मां नोपतिष्ठति ।
सोऽस्या भर्ता सह भ्रात्रा निहतो रणमूर्द्धनि ॥ १५ ॥
निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली ।
मामुपस्थास्यति व्यक्तं सर्वाभरणभूषिता ॥ १६ ॥
अद्य कालवतीमाशां निवृत्तां रामसंभवां ।
समवेक्ष्य च सा सीता मामुपस्थास्यते ध्रुवं ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः ।
राक्षस्यस्त्रिजटाद्यास्ताः प्रजग्मुर्यत्र पुष्पकं ॥ १८ ॥
ततः पुष्पकमादाय राक्षस्यस्त्वरितास्तदा ।
अशोकवनिकासंस्थां मैथिलीं समुपागमन् ॥ १९ ॥

तामानयित्वा राक्षस्यो भर्तृशोकपरायणां ।
सीतामारोपयामासुर्विमानं पुष्पकं तदा ॥ २० ॥
ततः पुष्पकमारोप्य सीतां त्रिजटया सह ।
रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीं ॥ २१ ॥
घोषयामास संहृष्टो लङ्कायां राक्षसेश्वरः ।
रामश्च लक्ष्मणश्चैव हताविन्द्रजितेति ह ॥ २२ ॥
विमानेन तु सा सीता तदा त्रिजटया सह ।
ददर्श हरिवीराणां सैन्यैर्व्याप्तां वसुंधरां ॥ २३ ।
प्रहृष्टमनसश्चैव राक्षसान् भीमदर्शनान् ।
वानरांश्चापि दुःखार्त्तान् रामलक्ष्मणपार्श्वतः ॥ २४ ॥
ततः सीता ददर्शोभौ शयानौ शरतल्पयोः ।
रामं रामानुजं चैव विसंज्ञौ शरपीडितौ ॥ २५ ॥
विध्वस्तकवचौ वीरौ प्रविध्वस्तशरासनौ ।
शरवेष्टितसर्वाङ्गौ शयानौ धरणीतले ॥ २६ ॥
तौ दृष्ट्वा भ्रातरौ तत्र शोकवाष्पसमाकुला ।
वेपन्ती दुःखिता सीता करुणं विललाप ह ॥ २७ ॥

इत्यार्षे रामायणे युद्धकाण्डे रामलक्ष्मणदर्शनं
नाम द्वाविंशः सर्गः ॥

# युद्धकाण्डं

## XXIII.

भर्तारं पतितं दृष्ट्वा लक्ष्मणं च महाबलं ।
विललाप भृशं सीता करुणं जनकात्मजा ॥ १ ॥
अश्रुपूर्णमुखी दीना तौ दृष्ट्वा रामलक्ष्मणौ ।
हार्यपुत्रेति रुदती बहुशो विललाप सा ॥ २ ॥
निष्पिषन्ती स्वचरणौ क्रोशन्ती मधुरस्वरा ।
इदमन्ते विलापस्य सीता वचनमब्रवीत् ॥ ३ ॥
ऊचुर्लाक्षणिका ये मां पुत्रिण्यविधवेति च ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ४ ॥
वीरपार्थिवपत्नी त्वं ये धन्येति च मां विदुः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५ ॥
यज्वानो महिषीं ये मां प्रोचुः सततशास्त्रिणः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ६ ॥
ऊचुः संश्रवणे ये मां द्विजाः कल्याणिकां शुभां ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ७ ॥
भवन्ति यासां पद्मानि योषितां किल पादयोः ।
अधिराज्येऽभिषिच्यन्ते नरेन्द्रैर्भर्तृभिः सह ॥ ८ ॥
वैधव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्बलाः ।
तान्यहं नानुपश्यामि पश्यन्ती हतलक्षणा ॥ ९ ॥

सत्यानि किल चोक्तानि स्त्रीणां वाक्यानि लक्षणे ।
तान्यद्य निहते रामे वितथानि भवन्ति मे ॥१०॥
केशाः सूक्ष्माः समा नीला भ्रुवौ चासङ्गते मम ।
वृत्ते चालोमशे जङ्घे दन्ताश्चाविरला मम ॥११॥
समावेतौ करौ पादौ गुल्फौ चावनतौ मम ।
अनुवृत्ता नखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥१२॥
स्तनौ च विरलौ पीनौ समौ मे मग्नचूचुकौ ।
मग्ना चोत्सङ्गिनी नाभिः पार्श्वौ स्कन्धौ च मे समौ ॥१३॥
मम वर्णो मृदुः स्निग्धो मृदून्यङ्गरुहाणि च ।
अविरूढा च मे वाणी नित्यं मधुरभाषिणी ॥१४॥
शुचिस्मिताविरूपा च नित्यं चाहमविक्लवा ।
प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणैः ॥१५॥
समग्रं चैवमच्छिद्रं पाणिपादं च मे समं ।
अनाकुलाविक्लवा च सुसंभ्रान्ता च मे गतिः ॥१६॥
मन्दस्मितेत्येव च मां कन्यालाक्षणिकोऽब्रवीत् ।
अधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह ॥१७॥
कृतान्तकुशलैरुक्तो नूनं तेऽनृतवादिनः ।
एतौ हित्वा जनस्थानं प्रवृत्तिं चोपलभ्य च ॥१८॥
तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ।
ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च ॥१९॥

अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यतां ।
अदृश्यमानेन रणे मायया वासवोपमौ ॥ २० ॥
मम नाथावनाथाया निहतौ रामलक्ष्मणौ ।
न हि दृष्टिपथं प्राप्य राघवाभ्यां रणे रिपुः ॥ २१ ॥
जीवन् प्रतिनिवर्तेत यद्यपि स्यान्मनोजवः ।
न कालस्यातिभावोऽस्ति कृतान्तः खलु दुर्जयः ॥ २२ ॥
यत्र रामः सह भ्रात्रा शेते रिपुविनिर्जितः ।
नाहं शोचामि भर्तारं निहतं न च लक्ष्मणं ॥ २३ ॥
नात्मानं जननीं वापि यथा श्वश्रूं तपस्विनीं ।
सा चिन्तयति नूनं हि समाप्तव्रतमात्मजं ॥ २४ ॥
कदा द्रक्ष्यामि काकुत्स्थं ससीतं सहलक्ष्मणं ।
परिदेवयमानां तां राक्षसी त्रिजटाब्रवीत् ॥ २५ ॥
मा विषादं कृथा देवि भर्ता हि तव जीवति ।
दृश्यन्ते हि निमित्तानि पुरुषाणां विपर्यये ॥ २६ ॥
कारणानि च वक्ष्यामि महान्ति सदृशानि च ।
यथा जीवति काकुत्स्थो लक्ष्मणश्च महाबलः ॥ २७ ॥
न हि कोपपरीतानि हर्षवीर्योत्सुकानि च ।
भवन्ति अधियोधानां मुखानि निहते पतौ ॥ २८ ॥
इदं विमानं वैदेहि पुष्पकं नाम नामतः ।
नैव त्वां धारयेत् सीते यदि रामो हतो भवेत् ॥ २९ ॥

हतप्रवीरा विध्वस्ता निरुत्साहा निरुद्यमा ।
सेना भवति संग्रामे हतकर्णेव नौर्जले ॥३०॥
इयं पुनरसंभ्रान्ता सुस्थयूथा तरस्विनी ।
सेना रक्षति काकुत्स्थं शयानं बलमूर्द्धनि ॥३१॥
सा त्वमेवं सुविस्पष्टैरनुमानैः सुखावहैः ।
न हतौ विद्धि काकुत्स्थावेतत् सत्यं ब्रवीमि ते ॥३२॥
अनृतं नोक्तपूर्वं मे न च वक्ष्यामि मैथिलि ।
चारित्र्यदुःखशीलत्वात् प्रविष्टासि च मे मनः ॥३३॥
नैतौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः ।
तादृशं लक्षणं दृष्ट्वा मया चावेदितं तव ॥३४॥
इदं च सुमहच्चिह्नं समवेक्षस्व मैथिलि ।
निःसंज्ञौ चाप्युभावेतौ लक्ष्मीर्नैव व्यमुञ्चत ॥३५॥
प्रायेण गतसत्वानां पुरुषाणां गतायुषां ।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतं ॥३६॥
त्यज शोकं च दुःखं च मानसं जनकात्मजे ।
रामलक्ष्मणयोरर्थे नैतौ वीरौ विजीवितौ ॥३७॥
श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा ।
कृताञ्जलिरुवाचेदमेवमस्त्विति दुःखिता ॥३८॥
विमानं पुष्पकं तत् तु संनिवर्त्य मनोजवं ।
दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥३९॥

ततस्त्रिजटया सार्द्धं पुष्पकादवरुह्य सा ।
अशोकवनिकामेव राक्षसीभिः प्रवेशिता ।। ४० ।।

तस्मिन् वने सा मनुजेन्द्रपत्नी
तौ राजपुत्रौ पतितौ स्मरन्ती ।
न शर्म लेभे हृदि ताडितेव
दिग्धेन बाणेन मृगीव बाला ।। ४१ ।।

इत्यार्षे रामायणे युद्धकाण्डे सीताविलापो नाम
त्रयोविंश सर्गः ।।

# रामायणं

## XXIV.

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ ।
निश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १ ॥
सर्वे ते वानरश्रेष्ठाः ससुग्रीवा महाबलाः ।
परिवार्य महात्मानौ तस्थुः शोकाभिपीडिताः ॥ २ ॥
अथ दीर्घेण कालेन संज्ञां लेभे रघूत्तमः ।
स्थिरत्वात् सत्त्वयोगाच्च शरैः संताडितोऽपि सः ॥ ३ ॥
प्रत्यवैक्षत चात्मानं शोणितेन परिप्लुतं ।
विललाप ततो रामो मन्दमश्रूणि वर्तयन् ॥ ४ ॥
लक्ष्मणं पतितं दृष्ट्वा शोकदुःखसमन्वितः ।
स दीनो दीनया वाचा मातृगोत्रमुदाहरत् ॥ ५ ॥
बभाषे च स्वरभ्रष्टो हरिभिः परिवारितः ।
किन्नु मे सीतया कार्यं लङ्कया जीवितेन वा ॥ ६ ॥
शयानं योऽद्य पश्यामि लक्ष्मणं शुभलक्षणं ।
यत्र क्वचिद्भवेद्भार्या पुत्रोऽन्येऽपि च बान्धवाः ॥ ७ ॥
तं तु देशं न पश्यामि यत्र सोदर्यमाप्नुयां ।
पर्जन्यो वर्षते सर्वमितीयं वैदिकी श्रुतिः ॥ ८ ॥
प्रवादश्चापि सत्योऽयं मातृजातं न वर्षति ।
सा ममाम्बा सुमित्रा च कौशल्या जननी च मे ॥ ९ ॥

नानयोरन्तरं किञ्चिन्मातृगौरवकारितं ।
अप्येव हि मही दीर्येत् प्रपतेद्वा दिवाकरः ॥१०॥
सागरः संक्षयं गच्छेदनलश्चापि शीततां ।
आपो रसत्वं त्यजेयुर्वायुश्चागतिमान् भवेत् ॥११॥
अम्बाया न सुमित्राया यदि स्नेहो भवेन्मयि ।
सुमित्रां किन्नु वक्ष्यामि पुत्रदर्शनलालसां ॥१२॥
विवत्सां विलपन्तीं च क्रोशन्तीं कुररीमिव ।
कथमाश्वासयिष्यामि सुमित्रां लक्ष्मणं विना ॥१३॥
उपालम्भं न शक्ष्यामि सोढुं तस्या मुखच्युतं ।
किं नु वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनं ॥१४॥
सहयेन वनं यातो विना तं पुनरागतः ।
लक्ष्मणश्चापि परया भक्त्या मामनुगच्छति ॥१५॥
पतन्तमपि पाताले नैव नानुपतेदयं ।
शक्या सीतासमा नारी प्राप्तुमन्या विचिन्वता ॥१६॥
न लक्ष्मणसमो भ्राता सचिवः साम्परायिकः ।
धारयेयं कथमहं प्राणान् सौमित्रिणा विना ॥१७॥
भारार्त्त इव तीव्रेण दुःखेन समभिप्लुतः ।
इहैव देहं त्यक्ष्यामि नाहं जीवितुमुत्सहे ॥१८॥
धिङ्मां दुष्कृतकर्माणमनार्यं यत्कृते ह्ययं ।
लक्ष्मणः पतितः शेते शरतल्पे गतासुवत् ॥१९॥

यो हि नित्यं विषण्णं मां पर्याश्वसन्महाबलः ।
स परासुर्न शक्नोति मामार्त्तमुपसर्पितुं ॥ २० ॥
येनाद्य बहवो युद्धे राक्षसाः शायिता भुवि ।
सोऽयमेवं क्षितौ वीरः शेते विनिहतः शरैः ॥ २१ ॥
शयानः शरतल्पेऽस्मिन् स्वशोणितपरिप्लुतः ।
शरजालावृतो भाति भास्करोऽस्तमिव व्रजन् ॥ २२ ॥
बाणैरर्दितसर्वाङ्गो नैव शक्नोति चेष्टितुं ।
रुजास्य बाधते कष्टा दृष्टी रागेण रुध्यते ॥ २३ ॥
यथैव मां वनं यान्तमनुयातो महाद्युतिः ।
तथाहमनुयास्यामि सहानेन यमक्षयं ॥ २४ ॥
इष्टबन्धुजनो नित्यं नित्यं मां समनुव्रतः ।
इमामवस्थां गमितो ममानार्यस्य दुर्णयैः ॥ २५ ॥
क्रुद्धेनापि हि वीरेण लक्ष्मणेन न संस्मरे ।
परुषं विप्रियं वापि श्रावितं विजने वने ॥ २६ ॥
लक्ष्मणेन जनः पूर्वं जीवनार्हेण जीवता ।
न विसंवादितः कश्चिदुक्तं न निष्ठुरं वचः ॥ २७ ॥
विसृजत्येकवेगेन पञ्च बाणशतानि यः ।
इष्वस्त्रेऽप्यधिको राज्ञः कार्त्तवीर्यस्य लक्ष्मणः ॥ २८ ॥
अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः ।
सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः ॥ २९ ॥

इदं मिथ्या प्रलपितं भविष्यति न संशयः ।
यन्मया न कृतो राजा राक्षसानां विभीषणः ॥ ३० ॥
अस्मिन् मुहूर्त्ते सुग्रीव प्रतिगन्तुं त्वमर्हसि ।
स च त्वां हि महाराजो रावणोऽभिद्रविष्यति ॥ ३१ ॥
अङ्गदं तु पुरस्कृत्य ससैन्यः ससुहृज्जनः ।
सागरं तर सुग्रीव पुनस्तेनैव सेतुना ॥ ३२ ॥
विजयो मेऽपि सुग्रीव लक्ष्मणे निधनं गते ।
अन्धस्येवोदितश्चन्द्रः कां प्रीतिं जनयिष्यति ॥ ३३ ॥
कृतं तत् तु महत् कर्म यदन्यैर्दुष्करं रणे ।
बलविक्रमसंपन्ना राक्षसाः संप्रमर्दिताः ॥ ३४ ॥
ऋक्षराजेन तु तथा गोलाङ्गूलाधिपेन च ।
अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च ॥ ३५ ॥
सुषेणेन च सुग्रीव नीलेन च नलेन च ।
युद्धं केशरिणा संख्ये घोरं सम्पातिना कृतं ॥ ३६ ॥
शरभेण गवाक्षेण गयेन पनसेन च ।
अन्यैश्च हरिभिर्युद्धं मदर्थे त्यक्तजीवितैः ॥ ३७ ॥
न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ।
यस्य ते संभ्रमो नास्ति रावणं प्रतियुध्यतः ॥ ३८ ॥
यत् तु कार्यं वयस्येन सुहृदा वा परंतप ।
कृतं तन्नास्ति संदेहो भवता गम्यतां गृहं ॥ ३९ ॥

मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ॥४०॥
शुश्रुवुश्चापि ये तस्य वानराः परिदेवितं ।
वर्तयां चक्रुरश्रूणि ते नेत्रैः कृष्णतारकैः ॥४१॥
ततः सर्वाण्यनीकानि स्थापयित्वा समन्ततः ।
आजगाम गदापाणिः कृतकर्मा विभीषणः ॥४२॥
तं दृष्ट्वा द्रुतमायान्तं नीलाञ्जनचयप्रभं ।
वानरा विद्रुताः सर्वे मन्यमानास्तु रावणिं ॥४३॥

इत्यार्षे रामायणे युद्धकाण्डे रामविलापो नाम
चतुर्विंशः सर्गः ॥

# युद्धकाण्डं

## XXV.

अथोवाच महातेजाः सुग्रीवो बालिनः सुतं ।
किमियं व्यथते सेना भिन्ना नौरिव सागरे ॥ १ ॥
सुग्रीवस्य वचः श्रुत्वा बालिपुत्रोऽङ्गदोऽब्रवीत् ।
किं न पश्यसि रामं त्वं लक्ष्मणं च महाबलं ॥ २ ॥
शरजालावृतौ वीरावुभौ परमदुःखितौ ।
शरतल्पे महेष्वासौ शयानौ रुधिरोक्षितौ ॥ ३ ॥
तदियं दीर्यते सेना हीनानेन महात्मना ।
स्वभावचपलां जातिं किं न जानासि वानरीं ॥ ४ ॥
अब्रवीद्वानरेन्द्रस्तु सुग्रीवस्तमथाङ्गदं ।
नानिमित्तं भयं मन्ये भाव्यं वाकारणेन तु ॥ ५ ॥
विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः ।
वानराः प्रपलायन्ते त्रासादुत्फुल्ललोचनाः ॥ ६ ॥
अन्योन्यं च न लज्जन्ते निरीक्षन्ति च पृष्ठतः ।
प्रपोथयन्ति चान्योन्यं पतितान् लङ्घयन्ति च ॥ ७ ॥
एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः ।
सुग्रीवं वर्धयामास राघवौ च निरैक्षत ॥ ८ ॥
विभीषणं तु सुग्रीवो दृष्ट्वा वानरभीषणं ।
ऋक्षराजं समीपस्थं धूम्रं वचनमब्रवीत् ॥ ९ ॥

विभीषणोऽयं संप्राप्तो यं दृष्ट्वा वनचारिणः ।
द्रवन्त्यागतसंत्रासा रावणात्मजशङ्कया ॥ १० ॥
शीघ्रमेतांस्तु संभ्रान्तान् बहुधा संप्रधावितान् ।
समवस्थापयाध्यक्ष विभीषणमिहागतं ॥ ११ ॥
सुग्रीवेणैवमुक्तस्तु धूम्रो ऋक्षपतिस्तदा ।
वानरान् सान्त्वयामास निवर्तध्वं प्रधाविताः ॥ १२ ॥
ते निवृत्तास्ततः सर्वे वानरास्त्यक्तसंभ्रमाः ।
ऋक्षराजवचः श्रुत्वा तं च दृष्ट्वा विभीषणं ॥ १३ ॥
विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितं ।
लक्ष्मणस्य च धर्मात्मा बभूव व्यथितस्तदा ॥ १४ ॥
जलक्लिन्नेन हस्तेन तयोर्गात्रं प्रमृज्य च ।
शोकसंपीडितमना रुरोद विललाप च ॥ १५ ॥
इमौ तौ सत्त्वसंपन्नौ विक्रान्तौ प्रियदर्शनौ ।
इमामवस्थां गमितौ रक्षसा कूटयोधिना ॥ १६ ॥
भ्रातुः पुत्रेण चैतेन दुष्पुत्रेण दुरात्मना ।
राक्षस्या जिह्मया बुद्ध्या छलितावृजुयोधिनौ ॥ १७ ॥
शरैरविरलं विद्धौ रुधिरौघपरिप्लुतौ ।
वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव ॥ १८ ॥
ययोर्विक्रममासाद्य प्रतिष्ठा काङ्क्षिता मया ।
ताविमौ मम नाशाय प्रसुप्तौ पुरुषर्षभौ ॥ १९ ॥

जीवनद्य विपन्नोऽस्मि नष्टराज्यमनोरथः ।
पूर्णप्रतिज्ञश्च रिपुः सकामो रावणः कृतः ॥ २० ॥
एवं विलपमानं तं परिष्वज्य विभीषणं ।
सुग्रीवः सान्त्वयामास वचनं चेदमब्रवीत् ॥ २१ ॥
विभीषण किमार्त्तस्त्वं किं च मां न विभाषसे ।
पर्यवस्थापयात्मानमेवं मा भूस्त्वमीश्वर ॥ २२ ॥
राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः ।
रावणः सह पुत्रेण सकामो न भविष्यति ॥ २३ ॥
तमेवं पर्यवस्थाप्य राक्षसं वानराधिपः ।
अब्रवीद्वानरेन्द्रस्तु सुषेणं श्वशुरं तदा ॥ २४ ॥
सह सैन्यैर्हरिगणैर्विसंज्ञौ विक्लवावुभौ ।
सुषेण प्रापय क्षिप्रं किष्किन्ध्यां रामलक्ष्मणौ ॥ २५ ॥
अहं तु रावणं हत्वा ससुतं सहबान्धवं ।
मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियं ॥ २६ ॥
सर्वे गच्छत विश्रब्धा वर्जयित्वा तु मारुतिं ।
अनेनाहं सहायेन हनिष्ये राक्षसाधिपं ॥ २७ ॥
रावणं सगणं हत्वा तोषयिष्यामि राघवं ।
एक एव पुरीं लङ्कां भस्मीकुर्यां सराक्षसां ॥ २८ ॥
हरिसैन्येन महता किमहं पुनरागतः ।
अद्य कोपमहं मोक्ष्ये सगणे रावणे दृढं ॥ २९ ॥

सपुत्रबान्धवजने रुषितः कालसंभृते ।
अद्य वीर्यं च तेजश्च सौहार्दं सत्त्वगौरवं ॥३०॥
द्रक्ष्यन्ति सर्वभूतानि रामे च दृढभक्तितां ।
अद्य चन्दनसाराणां केयूराभरणस्य च ॥३१॥
परिषङ्गस्य नारीणां स्पर्शस्य विविधस्य च ।
तथा स्पर्शस्य माल्यानां सूक्ष्माणां चैव वाससां ॥३२॥
अनुरूपाविमौ बाहू मित्रकार्यं करिष्यतः ।
अद्य लङ्कां पुरीं रोषात् सप्राकारां सतोरणां ॥३३॥
नीलजीमूतसंकाशैः राक्षसैर्बहुभिर्वृतां ।
दिशो विद्रावयिष्यामि वायुर्मेघानिवोत्थितान् ॥३४॥
स्वबाहुबलवीर्येण पश्यतां सर्वरक्षसां ।
रावणं प्रमथिष्यामि वैनतेय इवोरगं ॥३५॥
अद्य रोषं च शोकं च दुःखं चेक्ष्वाकुनन्दनः ।
त्यक्ष्यत्येकपदे रामः सूदिते युधि रावणे ॥३६॥
यमशक्रकुवेराणामद्य वारीश्वरस्य च ।
वीर्येण रावणस्तुल्यो न मे जीवन् विमोक्ष्यते ॥३७॥
मुहूर्त्तादेव पश्यध्वं कृतकर्माणमाहवे ।
निर्जित्य सीतां दास्यामि राघवाय महात्मने ॥३८॥
कर्मणानेन महता तोषयिष्यामि राघवं ।
कृतकृत्यो भविष्यामि यशः प्राप्स्यामि चोत्तमं ॥३९॥

प्रतिज्ञातं यदार्येण राघवेण महात्मना ।
विभीषणाय दास्यामि राज्यं निहतकण्टकं ॥४०॥

स क्रोधाद्विपुलयशा महानुभावो
वाक्यैस्तैरतिबलविक्रमोपपन्नैः ।
उत्साहं पुनरधिकं च वानराणां
चक्रे वै दिवसकरात्मजः कपीन्द्रः ॥४१॥

इत्यार्षे रामायणे युद्धकाण्डे सुग्रीवगर्जनं नाम
पञ्चविंशः सर्गः ॥

XXVI.

श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् ।
देवासुरं महद्युद्धमनुभूतं पुरातनं ॥ १ ॥
तत्र स्म दानवैर्देवाः शरैर्भिन्नाः सहस्रशः ।
विव्यथुः पीडिता बाणैर्भृशं ते दैत्यदानवैः ॥ २ ॥
तानार्त्तान् नष्टसंज्ञांश्च परासूंश्च बृहस्पतिः ।
दिव्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ ३ ॥
तामोषधीमानयितुं क्षीरोदं यान्तु सागरं ।
जवेन वानराः शीघ्रं सम्पातिपनसादयः ॥ ४ ॥
ओषधीं तां विजानन्ति पार्वतीया वनौकसः ।
संजीवकरणीं दिव्यां विशल्यां देवनिर्मितां ॥ ५ ॥
यत्र द्रोणश्च चन्द्रश्च पर्वतौ क्षीरतोयधौ ।
अमृतं यत्र मथितं तत्र सा परमौषधिः ॥ ६ ॥
तौ तत्र निहतौ देवैः पर्वतौ द्वौ महोदधौ ।
अयं वायुसुतो धीमान् हनूमांस्तत्र गच्छतु ॥ ७ ॥
अथैनमुपसंगम्य वायुः कर्णे वचोऽब्रवीत् ।
राम राम महाबाहो आत्मानं स्मर वै हृदा ॥ ८ ॥
नारायणस्त्वं भगवान् राक्षसार्थेऽवतारितः ।
स्मर सर्पभुजं देवं वैनतेयं महाबलं ॥ ९ ॥

स सर्पबन्धाद्घोरात् तु युवां संमोचयिष्यति ।
स तस्य वचनं श्रुत्वा राघवो रघुनन्दनः ॥१०॥
सस्मार गरुडं देवं भुजगानां भयावहं ।
एतस्मिन्नन्तरे वायुर्मेघाश्चासन् सविद्युतः ॥११॥
पर्यस्तं सागरे तोयं प्राकम्पन्त च पर्वताः ।
महता पक्षवातेन सर्वे तीररुहा द्रुमाः ॥१२॥
बहुधा पतिता भग्नाः समूला लवणाम्भसि ।
अभवन् पन्नगास्त्रस्ता भोगिनस्तोयवासिनः ॥१३॥
शीघ्रंस्रोतांसि यान्यासन् मन्दं जग्मुर्भयात् तदा ।
भयात् सर्वाणि यादांसि जग्मुश्च लवणाम्भसि ॥१४॥
दानवाश्च महाकायाः पातालतलवासिनः ।
ततो मुहूर्त्ताद्गगने वैनतेयं महाबलं ॥१५॥
वानरा ददृशुः सर्वे ज्वलन्तमिव पावकं ।
तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ॥१६॥
शररूपास्तदा सर्वे नागा जग्मुर्महीतलं ।
यैस्तौ सत्पुरुषौ बद्धौ शरीरस्थैर्महाबलौ ॥१७॥
ततः सुपर्णः काकुत्स्थौ दृष्ट्वा प्रत्यभिनन्द्य च ।
प्रममार्ज च पाणिभ्यां मुखे चन्द्रप्रभे तयोः ॥१८॥
वैनतेयेन संस्पृष्टाः सर्वे ते रुरुहुर्व्रणाः ।
समवर्णाश्च तेऽभूवंस्तयोर्गात्रे क्षणेन ह ॥१९॥

तौ चापि समुपाघ्राय सुपर्णः कनकप्रभः ।
बलं वीर्यं च तेजश्च तथैवोत्साह एव च ॥ २० ॥
प्रदर्शनं च बुद्धिश्च तदासीद्द्विगुणं तयोः ।
तावुत्थाय महावीर्यौ गरुडं वासवोपमौ ॥ २१ ॥
उभौ सस्वजतुर्हृष्टौ रामश्चेदमुवाच ह ।
तव प्रसादाद्व्यसनं रावणिप्रभवं महत् ॥ २२ ॥
आवां शीघ्रमतिक्रान्तौ क्षिप्रं च सुस्थतामितौ ।
शरबन्धाद्विनिर्मुक्तौ प्राप्तौ च परमं बलं ॥ २३ ॥
यथा दशरथं तातं यथा च प्रपितामहं ।
तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥ २४ ॥
को भवान् रूपसंपन्नो दिव्यस्रगनुलेपनः ।
दिव्यवस्त्रधरः श्रीमान् दिव्याभरणभूषितः ॥ २५ ॥
इत्युक्तः प्रसृतं वाक्यं राघवेण महात्मना ।
उवाच गरुडो वाक्यं मध्ये तेषां वनौकसां ॥ २६ ॥
परिषज्य च हृष्टात्मा वाष्पपर्याकुलेक्षणः ।
हसन्नुवाच काकुत्स्थं सुपर्णः पतगेश्वरः ॥ २७ ॥
अहं सखा ते काकुत्स्थ प्राणो वाह्य इवापरः ।
औरसः कश्यपसुतो विनतायाः सुतो ह्यहं ॥ २८ ॥
गरुत्मानिह संप्राप्तो युवयोः सख्यकारणात् ।
असुरा वा महावीर्या दानवा वा महाबलाः ॥ २९ ॥

देवता वा सगन्धर्वाः पुरस्कृत्य शतक्रतुं ।
नेमं मोचयितुं शक्ताः शरबन्धं सुदारुणं ।। ३० ।।
मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ।
एते हि नैर्ऋता नागा युक्तास्तीक्ष्णा महाविषाः ।। ३१ ।।
रक्षोमायाप्रभावेन शरा भूत्वा त्वदाश्रिताः ।
भाग्यवानसि धर्मज्ञ राम सत्यपराक्रम ।। ३२ ।।
लक्ष्मणेन सह भ्रात्रा संख्येऽस्मिन् न हतो यतः ।
इदं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः ।। ३३ ।।
सहसैव तव स्नेहात् सखित्वमनुपालयन् ।
कारणं चैव सख्यस्य न प्रष्टव्योऽस्मि राघव ।। ३४ ।।
निहते रावणे सर्वं सखित्वं ज्ञास्यसे मम ।
मोक्षितौ च महाघोरादेतस्मादिषुबन्धनात् ।। ३५ ।।
अप्रमादश्च संग्रामे कर्तव्यो रघुनन्दन ।
प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः ।। ३६ ।।
शूराणां मृदुभावानां भवतामार्जवं बलं ।
तन्न विश्वसितव्यं वै राक्षसानां रणाजिरे ।। ३७ ।।
आत्मौपम्येन धर्मज्ञ नित्यं जिह्मा हि राक्षसाः ।
कूटयोधाश्च ते सर्वे क्षुद्राश्चैवापि सर्वशः ।। ३८ ।।
एवमुक्त्वा ततो रामं सुपर्णः पतगेश्वरः ।
परिष्वज्य च सुस्निग्धमाप्रष्टुमुपचक्रमे ।। ३९ ।।

सखे राघव धर्मज्ञ रिपूणामपि वत्सल ।
अभ्यनुज्ञातमिच्छामि गमिष्यामि यथागतं ॥ ४० ॥
न च कौतूहलं कार्यं सखित्वं प्रति राघव ।
कृतकर्मा स्वयं वीर सखित्वमपि वेत्स्यसि ॥ ४१ ॥
बालवृद्धावशेषां च कृत्वा लङ्कां शरोर्मिभिः ।
रावणं च रणे हत्वा सीतां समुपलप्स्यसे ॥ ४२ ॥
इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः ।
रामं प्रदक्षिणं कृत्वा मध्ये तेषां वनौकसां ॥ ४३ ॥
जगामाकाशमाविश्य गरुडः पवनोपमः ।
नीरुजौ राघवौ दृष्ट्वा तच्चाश्चर्यं प्लवङ्गमाः ॥ ४४ ॥
प्रहृष्टाः ससृजुर्नादं राक्षसानां भयावहं ।
ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाभ्यवादयन् ॥ ४५ ॥
दध्मुः शङ्खांश्च संहृष्टाः क्ष्वेलन्त्यपि यथापुरं ।
ते वानरा भीमबलाः प्रहर्षात् सस्मिताननाः ॥ ४६ ॥
चक्रुः किलकिलाशब्दं ववल्गुश्च तथापरे ।
द्रुमशाखा दधुश्चैव चिक्षिपुश्च समन्ततः ॥ ४७ ॥
अपरे चापि विक्रान्ताः प्रहर्षात् काशितैर्मुखैः ।
द्रुमानुत्पाट्य सहसा तस्थुर्युद्धाभिकाङ्क्षिणः ॥ ४८ ॥
विनदन्तो महानादान् त्रासयन्तो निशाचरान् ।
लङ्काद्वारमुपाजग्मुर्योद्धुकामाः प्लवङ्गमाः ॥ ४९ ॥

# युद्धकाण्डं

## XXVII.

तेषां तु तुमुलं शब्दं वानराणां तरस्विनां ।
नदतां राक्षसैः सार्द्धमथ शुश्राव रावणः ॥ १ ॥
स्निग्धगम्भीरनिर्घोषं श्रुत्वा तेषां वनौकसां ।
सचिवा राक्षसेन्द्रं तमिदं वचनमब्रुवन् ॥ २ ॥
यथायं संप्रहृष्टानां वानराणां समुत्थितः ।
बहूनां सुमहान् नादो मेघानामिव गर्ज्जतां ॥ ३ ॥
व्यक्तं सुमहती प्रीतिरेतेषां समुपस्थिता ।
यथा हि विपुलैर्न्नादैः क्षोभयन्तीव सागरं ॥ ४ ॥
तौ च बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ ।
अयं च सुमहान् नादः शङ्कां जनयतीव नः ॥ ५ ॥
एतत् तु वचनं श्रुत्वा मन्त्रिणां राक्षसाधिपः ।
उवाच राक्षसांस्तत्र समीपपरिवर्त्तिनः ॥ ६ ॥
ज्ञायतां तूर्णमेतेषां सांप्रतं वनचारिणां ।
शोककाले समुत्पन्ने हर्षकारणमुत्थितं ॥ ७ ॥
तथोक्तास्तेन संभ्रान्ताः प्राकारमधिरुह्य च ।
ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥ ८ ॥
तौ च मुक्तौ महात्मानौ राघवौ शरबन्धनात् ।
समुत्थितौ महाभागौ विषण्णास्तत्र राक्षसाः ॥ ९ ॥

संत्रस्तमनसश्चैव प्राकारादवरुह्य च ।
विषण्णवदना दीना राक्षसेन्द्रमुपस्थिताः ॥ १० ॥
तदप्रियं दीनमुखा रावणस्य निशाचराः ।
न्यवेदयन् यथातथ्यं सर्वे वाक्यविशारदाः ॥ ११ ॥
यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ ।
संयतौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ॥ १२ ॥
विमुक्तौ शरबन्धात् तावुत्थितौ रणमूर्धनि ।
पाशानिव गजौ छित्त्वा गजेन्द्रसमविक्रमौ ॥ १३ ॥
तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः ।
चिन्ताशोकपरीतात्मा विषण्णवदनोऽब्रवीत् ॥ १४ ॥
घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः ।
अमोघैः सूर्यसंकाशैः प्रमथ्येन्द्रजिता रणे ॥ १५ ॥
तमस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम ।
संशयस्थमिदं सर्वमनुपश्यामि मे बलं ॥ १६ ॥
निष्फलाः खलु संवृत्ताः शरा वासुकितेजसः ।
आदत्तं यैस्तु संग्रामे रिपूणां मम जीवितं ॥ १७ ॥
एवमुक्त्वा सुसंरब्धो निःश्वसन्नुरगो यथा ।
अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसं ॥ १८ ॥
बलेन महता युक्तो रक्षसां भीमकर्मणां ।
त्वं युद्धायाभिनिर्याहि रामस्य सवनौकसः ॥ १९ ॥

एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता ।
कृत्वा प्रणामं संहृष्टो निर्जगाम नृपालयात् ॥ २० ॥
अभिनिष्क्रम्य च द्वाराद्बलाध्यक्षमुवाच ह ।
त्वरयस्व बलं शीघ्रं किं चिरेण युयुत्सतः ॥ २१ ॥
धूम्राक्षस्य वचः श्रुत्वा बलाध्यक्षो महाबलः ।
बलमुद्योजयामास रावणस्याज्ञया त्वरन् ॥ २२ ॥
ते बद्धघण्टा बलिनो घोररूपा निशाचराः ।
विनर्दन्तः सुसंहृष्टा धूम्राक्षं पर्यवारयन् ॥ २३ ॥
विविधायुधहस्तास्ते शूलमुद्गरपाणयः ।
गदाभिः पट्टिशैश्चैव परिघैश्च समुद्गरैः ॥ २४ ॥
मुषलैर्भिन्दिपालैश्च भल्लखड्गपरश्वधैः ।
निर्ययू राक्षसा दिग्भ्यो नदन्तो युद्धलालसाः ॥ २५ ॥
रथैः कवचिनश्चान्ये ध्वजैश्च समलङ्कृतैः ।
सुवर्णजालसंयुक्तैः खरैश्च विकृताननैः ॥ २६ ॥
हयैः परमशीघ्रैश्च गजैश्चैव महोत्कटैः ।
निर्ययू राक्षसव्याघ्रा व्याघ्रा इव दुरासदाः ॥ २७ ॥
वृकसिंहमुखैर्युक्तं खरैः काञ्चनभूषणैः ।
आरुरोह रथं दिव्यं धूम्राक्षः खरनिस्वनः ॥ २८ ॥
स निर्ययौ महातेजा धूम्राक्षो राक्षसैर्वृतः ।
प्रहसन् पश्चिमं द्वारं हनूमान् यत्र वानरः ॥ २९ ॥

तं प्रयान्तं महावीर्यं राक्षसं भीमविक्रमं ।
भीषणानि निमित्तानि समुत्तस्थुः पुनः पुनः ॥३०॥
रथशीर्षे महाभीमो गृध्रो वै निपपात ह ।
ध्वजाग्रे ग्रथिताश्चास्य निपेतुः कृष्णपेचकाः ॥३१॥
रुधिरार्द्रो महान् श्वेतः कबन्धो न्यपतद्भुवि ।
भैरवं चोत्सृजन्नादं धूम्राक्षस्य समीपतः ॥३२॥
ववर्ष रुधिरं देवः प्रचचाल च मेदिनी ।
प्रतिलोमाकुलो वायुर्निर्घातसमनिः स्वनः ॥३३॥
तिमिरौघसमाक्रान्ता न दिशः प्रचकाशिरे ।
गृध्राः काकाः खगाः श्येना ये चान्ये रुधिराशनाः ॥३४॥
विस्वराः ससृजुर्वाणीर्धूम्राक्षस्य समीपतः ।
उत्पातांस्तादृशान् दृष्ट्वा रक्षोगणभयावहान् ।
प्रादुर्भूतान् महाघोरान् धूम्राक्षो व्यथितोऽभवत् ॥३५॥

इत्यार्षे रामायणे युद्धकाण्डे शरबन्धमोक्षणं नाम
षड्विंशः सर्गः—धूम्राक्षनिर्याणं
नाम सप्तविंशः सर्गः ॥

# युद्धकाण्डं

## XXVIII.

निर्यान्तं प्रेक्ष्य धूम्राक्षं राक्षसं क्षतजेक्षणं ।
विनेदुर्वानराः सर्वे हृष्टा युद्धाभिकाङ्क्षिणः ॥ १ ॥
तेषां तु तुमुलं युद्धं संजज्ञे कपिरक्षसां ।
अन्योन्यं मुषलैर्घोरैर्निकृत्ताः पेतुराहवे ॥ २ ॥
वानरा राक्षसैर्भीमैर्महाकायैर्महाबलैः ।
राक्षसा वानरैश्चापि द्रुमैर्भूमौ निपातिताः ॥ ३ ॥
राक्षसाश्चापि संक्रुद्धा वानरान् निशितैः शरैः ।
विव्यधुर्घोररूपास्ते कङ्कपत्रैरजिह्मगैः ॥ ४ ॥
ते गदाभिश्च भीमाभिः पट्टिशैः सपरश्वधैः ।
सुघोरैः परिघैश्चापि त्रिशूलैरसिभिस्तथा ॥ ५ ॥
विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः ।
अमर्षिततरा भूयश्चक्रुः कर्माण्यभीतवत् ॥ ६ ॥
शरनिर्भिन्नगात्रास्तु शूलनिर्भिन्नमस्तकाः ।
जगृहुस्ते शिला गुर्वीः पादपांश्च प्लवङ्गमाः ॥ ७ ॥
ते भीमवेगा हरयो नर्दमानास्ततस्ततः ।
ममन्थुस्तानि रक्षांसि हर्षयन्तः स्ववाहिनीं ॥ ८ ॥
पुनः सुतुमुलस्तेषां संग्रामः समपद्यत ।
शिलाभिर्विपुलाभिश्च बहुशाखैश्च पादपैः ॥ ९ ॥

शिलाप्रहारैर्निहता वानरैर्जितकाशिभिः ।
वमन्तो रुधिरं केचित् पेतुः क्षतजभोजनाः ॥१०॥
पार्श्वे विदारिताः केचित् केचिच्चूर्णीकृता द्रुमैः ।
शिलाभिश्चूर्णिताः केचित् केचिद्दन्तैर्विदारिताः ॥११॥
ध्वजैर्विमथितैर्भग्नैः खड्गैश्च विनिपातितैः ।
रथैर्विध्वंसितैः केचिन्मथिता रजनीचराः ॥१२॥
विध्वस्तैः सह विध्वस्ता अन्यैरन्ये महीतले ।
गजेन्द्रैः पर्वताकारैः रथैरन्ये निपातिताः ॥१३॥
मथिता वाजिभिश्चान्ये सारोहा वसुधातले ।
वानरैर्भीमविक्रान्तैराप्लुत्याप्लुत्य जघ्निरे ॥१४॥
राक्षसाः करजैस्तीक्ष्णैर्मुखेषु च विकर्षिताः ।
विरूपवदना भूयो विप्रकीर्णशिरोरुहाः ॥१५॥
मत्ताः शोणितगन्धेन निपेतुर्धरणीतले ।
अन्ये तु परमक्रुद्धा राक्षसा भीमविक्रमाः ॥१६॥
अभ्यघ्नंश्च तलैरेव वज्रस्पर्शसमैर्हरीन् ।
वानरैरापतन्तश्च राक्षसा वेगवत्तरैः ॥१७॥
मुष्टिभिश्चरणैश्चैव पोथिताः समरे द्रुतं ।
वानरैर्हन्यमानास्तु राक्षसा भयकातराः ॥१८॥
दिशोऽगमन् यथा विद्धा मृगाः कोकैरिवार्दिताः ।
सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः ॥१९॥

क्रोधेन कदनं चक्रे वानराणां युयुत्सतां ।
प्रासैः प्रमथिताः केचिद्धूम्राक्षेण प्लवङ्गमाः ॥ २० ॥
मुद्गरैराहताः केचित् पतिता धरणीतले ।
परिघैर्निहताः केचिद्भिन्दिपालैर्विदारिताः ॥ २१ ॥
पट्टिशैर्निहताः केचित् केचिच्च विदलीकृताः ।
केचित् तु निहता भूमौ रुधिरार्द्रा वनौकसः ॥ २२ ॥
केचिद्विद्राविता नष्टाः संक्रुद्धै राक्षसैर्युधि ।
विभिन्नहृदयाः केचित् केचित् पार्श्वे विदारिताः ॥ २३ ॥
विदारितास्त्रिशूलैश्च केचिद्दंष्ट्राभिकर्षिताः ।
तत् सुभीमं महद्युद्धं हरिराक्षससंकुलं ॥ २४ ॥
प्रचण्डं शस्त्रबहुलं शिलापादपसंकुलं ।
विभक्तं व्याकुलं चैव प्रच्छन्नं च बभूव ह ॥ २५ ॥
धनुर्ज्यातन्त्रिबहुलं हिक्कातालसमन्वितं ।
मन्दस्तनितगीताढ्यं युद्धगान्धर्वमाबभौ ॥ २६ ॥
धूम्राक्षस्तु धनुष्पाणिर्वानरान् रणमूर्धनि ।
हसन् विद्रावयामास दिशः सायकवृष्टिभिः ॥ २७ ॥
धूम्राक्षेणार्दितं सैन्यं ततः संप्रेक्ष्य मारुतिः ।
अभ्यवर्तत संक्रुद्धः प्रगृह्य महतीं शिलां ॥ २८ ॥
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः ।
शिलां तां पातयामास धूम्राक्षस्य रथोपरि ॥ २९ ॥

आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् ।
रथादाप्लुत्य वेगेन वसुधायां व्यवस्थितः ॥३०॥
सा प्रमृद्य रथं तस्य निपपात शिला भुवि ।
सचक्रकूबररथं सध्वजं सशरासनं ॥३१॥
भित्वा तु स रथं तस्य हनूमान् मारुतात्मजः ।
रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ॥३२॥
प्रभिन्नशिरसो भग्ना राक्षसा रुधिरोक्षिताः ।
द्रुमैः प्रमथितास्तेन निपेतुर्धरणीतले ॥३३॥
विद्राव्य राक्षसानीकं हनूमान् मारुतात्मजः ।
गिरेः शिखरमादाय धूम्राक्षं समभिद्रवत् ॥३४॥
तमापतन्तं धूम्राक्षो गदामुद्यम्य संभ्रमात् ।
विनर्दमानं संग्रामे हनूमन्तमुपाद्रवत् ॥३५॥
तस्य क्रुद्धस्य वेगेन गदां तां बहुकण्टकां ।
पातयामास धूम्राक्षः स्तनदेशे हनूमतः ॥३६॥
ताडितः स तया तेन गदया घोररूपया ।
स्तनदेशे महावीर्यो मारुतिर्नैव विव्यथे ॥३७॥
कपिः स मारुतबलस्तं प्रहारमचिन्तयन् ।
धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् ॥३८॥
स विह्वलितसर्वाङ्गो गिरिशृङ्गेण पोथितः ।
पपात सहसा भूमौ विकीर्ण इव पर्वतः ॥३९॥

धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ।
त्रस्ताः प्रविविशुर्लङ्कां बध्यमानाः प्लवङ्गमैः ॥ ४० ॥

स भग्नजानुर्मथितोरुवक्षाः
सुविह्वलो रक्तविलोहिताक्षः ।
अवाक्शिरा रक्तमथोद्वमंस्तु
पपात भूमावथ नष्टचेताः ॥ ४१ ॥

विनिहतरजनीचरां निशम्य
क्षतजनिरन्तरकर्दमां महीं तां ।
रिपुबधजनितश्रमः प्रहृष्टः
पवनसुतः स सुहृद्भिरावृतश्च ॥ ४२ ॥

इत्यार्षे रामायणे युद्धकाण्डे धूम्राक्षबधो नाम
अष्टाविंशः सर्गः ॥

# रामायणं

## XXIX.

धूम्राक्षं निहतं श्रुत्वा रावणः क्रोधमूर्च्छितः ।
बलाध्यक्षमुवाचेदं कृताञ्जलिमुपस्थितं ॥ १ ॥
शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा घोरदर्शनाः ।
अकम्पनं पुरस्कृत्य सर्वे युद्धविशारदाः ॥ २ ॥
एष शास्ता च गोप्ता च युधि बुद्धिमतां वरः ।
भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥ ३ ॥
न च कम्पयितुं शक्यः सेन्द्रैरपि सुरासुरैः ।
अकम्प्योऽकम्पनः श्रीमानादित्य इव तेजसा ॥ ४ ॥
एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलं ।
वानरांश्चापरान् घोरान् विधमिष्यति राक्षसः ॥ ५ ॥
प्रतिगृह्य स तामाज्ञां रावणस्य महाबलः ।
बलं संत्वरयामास तदा लघुपराक्रमः ॥ ६ ॥
ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः ।
निर्ययू राक्षसा मुख्या बलाध्यक्षप्रचोदिताः ॥ ७ ॥
रथमास्थाय तु श्रीमांस्तप्तकाञ्चनकुण्डलः ।
अकम्पनो वृतो भीमै राक्षसैरभिनिर्ययौ ॥ ८ ॥
तस्य निर्धावतस्तूर्णमकस्माद्रथवाजिनः ।
जघनैः सहसा पेतुर्भयविक्लवचेतसः ॥ ९ ॥

आस्पन्दतेक्षणं चास्य बाहुश्चैवाप्यदक्षिणः ।
बिभिदे मुखवर्णश्च गद्गदश्चाभवत् स्वरः ॥ १० ॥
आकुलं गगनं चासीद्दुर्दिनं रूक्षमारुतं ।
उच्चुक्रुशुर्मृगाश्चैव वाचः क्रूरा भयावहाः ॥ ११ ॥
मत्तसिंहाश्चितस्कन्धः शार्दूलसमविक्रमः ।
तानुत्पातानधः कृत्वा निर्जगाम महाबलः ॥ १२ ॥
तस्य निष्पततस्तत्र राक्षसैः सह रक्षसः ।
बभूव सुमहान् नादः क्षोभयन्निव सागरं ॥ १३ ॥
तेन शब्देन महता वानराणां महाचमूः ।
द्रुमशैलप्रहरणा युद्धायैव व्यतिष्ठत ॥ १४ ॥
तेषां युद्धं महाघोरं संजज्ञे कपिरक्षसां ।
रामरावणयोरर्थे संपरित्यक्तजीवितं ॥ १५ ॥
सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसंनिभाः ।
हरयो राक्षसाश्चैव परस्परजिघांसवः ॥ १६ ॥
तेषां विनदतां शब्दः संयुगेऽतितरस्विनां ।
शुश्रुवे सुमहाक्रोधादन्योन्यमभिगर्जतां ॥ १७ ॥
रजश्चारुणवर्णाभं सुभीममतुलं भुवि ।
उद्धृतं हरिरक्षोभिः संरुरोध दिशो दश ॥ १८ ॥
अन्योन्यं रजसा तेन कौषेयारुणपाण्डुना ।
संवृतं धूम्रवर्णेन ददृशुर्न रणाजिरे ॥ १९ ॥

न ध्वजो न पताका वा चर्म वा तुरगोऽपि वा ।
आयुधं स्यन्दनं वापि ददृशुस्तेन रेणुना ॥ २० ॥
शब्दश्च तुमुलस्तेषां नर्दतामभिधावतां ।
शुश्रुवे तुमुले युद्धे न रूपाणि चकाशिरे ॥ २१ ॥
हरीनेव च संक्रुद्धा हरयो जघ्नुराहवे ।
राक्षसाश्चापि रक्षांसि निजघ्नुः समरे तदा ॥ २२ ॥
ते परांश्च विनिघ्नन्तः स्वांश्च वानरराक्षसाः ।
रुधिरार्द्रां रणे चक्रुर्महीं शोणितकर्दमां ॥ २३ ॥
ततस्तु रुधिरौघेन सिक्तं विमृदितं रजः ।
शरीरशतसंकीर्णा बभूव च वसुन्धरा ॥ २४ ॥
द्रुमशक्तिशिलाप्रासैर्गदापरिघतोमरैः ।
राक्षसा हरयश्चैव जघ्नुरन्योन्यमोजसा ॥ २५ ॥
बाहुभिः परिघाकारैरस्यन्तः पर्वतोपमान् ।
हरयो भीमकर्माणो राक्षसान् जघ्नुराहवे ॥ २६ ॥
राक्षसा अपि संक्रुद्धाः प्रासमुद्गरपाणयः ।
व्यादारयन् कपींस्तत्र शस्त्रैः परमदुर्जयैः ॥ २७ ॥
एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ।
मैन्दश्च द्विविदश्चैव चक्रुर्युद्धमनुत्तमं ॥ २८ ॥
ते मुष्टिभिर्महावेगा राक्षसानां चमूमुखे ।
कदनं सुमहच्चक्रुर्लीलया हरियूथपाः ॥ २९ ॥

# युद्धकाण्डं

## XXX.

रक्षसां वानरैर्दृष्ट्वा कदनं सुमहत् कृतं ।
क्रोधमाहारयत् तीव्रं रणे तस्मिन्नकम्पनः ॥ १ ॥
क्रोधमूर्च्छितरूपस्तु प्रगृह्य सशरं धनुः ।
रिपूणां च बलं प्रेक्ष्य सारथिं त्वरितोऽब्रवीत् ॥ २ ॥
मयि तिष्ठति शत्रुघ्ने नामी वानरपुङ्गवाः ।
प्रसभं कर्तयिष्यन्ति सैन्यं मम सुदुःसहे ॥ ३ ॥
अत्रैव तावत् त्वरितः सारथे नय मे रथं ।
एते हि हरयो घ्नन्ति सुबहून् रजनीचरान् ॥ ४ ॥
एतान् निहन्तुमिच्छामि समरश्लाघिनो रणे ।
एतैर्हि राक्षसानीके सुमहत् कदनं कृतं ॥ ५ ॥
ततः प्रजविताश्वेन रथेन रथिनां वरः ।
हरीनभ्यपतत् क्रोधाद्बलवांस्तानकम्पनः ॥ ६ ॥
न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे ।
अकम्पनशरैर्भग्नाः सर्व एव प्रदुद्रुवुः ॥ ७ ॥
तान् मृत्युवशमापन्नानकम्पनवशानुगान् ।
समीक्ष्य हनुमान् ज्ञातीन् संप्रतस्थे महाबलः ॥ ८ ॥
तं महाप्लवगं दृष्ट्वा सर्वे प्लवगसत्तमाः ।
समेत्य समरे वीरं सर्वतः पर्यवारयन् ॥ ९ ॥

हनूमन्तं तु ते दृष्ट्वा युद्धाय समुपस्थितं ।
विश्वस्ता बलिनः सर्वे बलवन्तमुपाश्रिताः ॥ १० ॥
अकम्पनस्तु शैलाभं हनूमन्तमवस्थितं ।
महेन्द्र इव धाराभिः शरवर्षैरवाकिरत् ॥ ११ ॥
अचिन्तयित्वा वाणांस्तान् शरीरे पतितान् बहून् ।
अकम्पनबधार्थाय मनो दधे महाबलः ॥ १२ ॥
स प्रहस्य महातेजा हनूमान् पवनात्मजः ।
अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीं ॥ १३ ॥
तस्याथ नर्दमानस्य दीप्यमानस्य तेजसा ।
बभूव रूपं दुर्धर्षं शक्रस्येवोद्यताशनेः ॥ १४ ॥
आत्मानं चाप्रहरणं बुद्ध्वा कोपसमन्वितः ।
सालमुत्पाटयामास गिरिशृङ्गमिवोच्छ्रितं ॥ १५ ॥
तं गृहीत्वा महासालं पाणिनैकेन वीर्यवान् ।
विनद्य सुमहानादं त्रासयामास राक्षसान् ॥ १६ ॥
ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनं ।
निहन्तुं नमुचिं क्रुद्धो यथा वज्री महाहवे ॥ १७ ॥
अकम्पनस्तु तं दृष्ट्वा महासालं समुद्यतं ।
दूरादेव महावाणैरर्द्धचन्द्रैश्चकर्त सः ॥ १८ ॥
तं महासालमाकाशे राक्षसेन्द्रेण दारितं ।
विकीर्णं पतितं दृष्ट्वा हनूमान् विस्मितोऽभवत् ॥ १९ ॥

भूयोऽपि तद्वधार्थाय तिग्मतेजा महाबलः ।
सोऽश्वकर्णं महावेगान्महान्तमुदपाटयत् ॥ २० ॥
तं गृहीत्वा महाकायमश्वकर्णं महाद्युतिः ।
प्रहस्य परया प्रीत्या भ्रामयामास संयुगे ॥ २१ ॥
प्रधावन्नुरुवेगेन भञ्जयन्नपरानिव ।
हनूमान् परमक्रुद्धश्चरणैर्दारयन् महीं ॥ २२ ॥
स गजान् सगजारोहान् सरथान् रथवाजिनः ।
जघान समरे क्रुद्धो राक्षसांश्च पदातिनः ॥ २३ ॥
तमन्तकमिव क्रुद्धं समरे प्राणहारिणं ।
हनूमन्तमभिप्रेक्ष्य राक्षसा दुद्रुवुः पुनः ॥ २४ ॥
तमापतन्तं संक्रुद्धं राक्षसानां भयावहं ।
ददर्शाकम्पनो वीरश्चुक्रोध च महाबलः ॥ २५ ॥
स चतुर्दशभिर्बाणैर्निशितैर्मर्मभेदिभिः ।
निर्बिभेद महावीर्यो हनूमन्तं स्तनान्तरे ॥ २६ ॥
स तथा तेन विद्धस्तु शरैरग्निशिखोपमैः ।
हनूमान् ददृशे वीरो रुधिरेण समुक्षितः ॥ २७ ॥
अथोद्यम्य स तं वृक्षं कृत्वा वेगमनुत्तमं ।
शिरस्यभिजघानाशु निशाचरमकम्पनं ॥ २८ ॥
स वृक्षं शिरसा घोरं प्रगृह्य प्लवगेरितं ।
राक्षसः सहसा भूमौ पपात च ममार च ॥ २९ ॥

तं दृष्ट्वा पतितं भूमौ कम्पमानमकम्पनं ।
व्यथिता राक्षसाः सर्वे क्षितिकम्पे यथा नगाः ॥ ३० ॥
त्यक्तप्रहरणाः सर्वे राक्षसास्ते महाबलाः ।
लङ्कामभिमुखा जग्मुर्वानरैरभिपीडिताः ॥ ३१ ॥
ते मुक्तकेशाः संभ्रान्ता भग्नमानाः पराजिताः ।
भयाद्विवर्णवदनाः श्वसन्तो नष्टचेतसः ॥ ३२ ॥
अन्योन्यं च प्रमथ्नन्तो विविशुर्नगरीं तदा ।
पृष्ठतस्त्राससंमूढाः प्रेक्षमाणा मुहुर्मुहुः ॥ ३३ ॥
तेषां संजहृतां संख्यं विशतां च पुरीं भयात् ।
राक्षसानां जवं दृष्ट्वा विनेदुस्ते वनौकसः ॥ ३४ ॥
तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः ।
समेत्य हरयः सर्वे हनूमन्तमपूजयन् ॥ ३५ ॥
सोऽपि प्रहृष्टस्तान् सर्वान् वानरान् प्रत्यपूजयत् ।
हनूमान् सत्त्वसंपन्नो यथार्हमभिपूजितः ॥ ३६ ॥
एवं संपूज्य स हरीन् कृत्वा कर्म सुदुष्करं ।
आजगाम महाबाहुर्यत्र रामः सलक्ष्मणः ॥ ३७ ॥
स वीरशोभामतुलां महाकपिर्जगाम रक्षांसि निहत्य मारुतिः ।
महासुरान् शत्रुगणान् प्रमथ्य यथैव शक्रो विनिहत्य दानवान् ।३८
अपूजयन् देवगणास्तदा कपिं स्वयं च रामोऽतिबलश्च लक्ष्मणः ।
तथैव सुग्रीवमुखाः प्लवङ्गमा विभीषणश्चापि महामतिस्तदा ॥ ३९ ।

# युद्धकाण्डं

## XXXI.

ततस्तु रावणः क्रुद्धः श्रुत्वा हतमकम्पनं ।
किञ्चिद्दीनमनाश्चिन्तां प्रतिपेदे स राक्षसः ॥ १ ॥
स निर्ध्याय मुहूर्त्तं तु मन्त्रिभिः सह राक्षसैः ।
वेश्मनः समतिक्रम्य क्रोधादुष्णं विनिश्वसन् ॥ २ ॥
ततः स रावणः सर्वैः सचिवै राक्षसाधिपः ।
पुरीं परिययौ लङ्कां सर्वगुल्मानवेक्षितुं ॥ ३ ॥
तां राक्षसगणैर्गुप्तां गुल्मैश्च बहुभिर्वृतां ।
ददर्श नगरीं राजा बहुध्वजपताकिनीं ॥ ४ ॥
रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः ।
उवाचामर्षितः काले प्रहस्तं युद्धकोविदं ॥ ५ ॥
पुरस्योपनिरुद्धस्य सहसा पीडितस्य च ।
निष्क्रम्य युधि युध्यस्व परसैन्यं विमर्दयन् ॥ ६ ॥
नान्यं समर्थं पश्यामि युद्धे युद्धविशारद ।
अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ॥ ७ ॥
इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशं ।
स त्वं बलमिदं शीघ्रमादाय परिगृह्य च ॥ ८ ॥
विजयाय विनिर्याहि जहि सर्वान् वनौकसः ।
निर्याणादेव ते वीर चपला हरिवाहिनी ॥ ९ ॥

नदतां राक्षसानां च श्रुत्वा नादं द्रविष्यति ।
चपला ह्यविनीताश्च चलचित्ताश्च वानराः ॥१०॥
घोषं ते न सहिष्यन्ति सिंहनादमिव द्विपाः ।
द्रवतां वानरेन्द्राणां रामः सौमित्रिणा सह ॥११॥
अवशस्ते निरालम्बः प्रहस्त वशमेष्यति ।
आपत् संशयिता श्रेयो न तु निःसंशयं कृतं ॥१२॥
प्रतिलोमानुलोमं च यथा वा मन्यसे हितं ।
रावणेनैवमुक्तस्तु प्रहस्तो रक्षसां वरः ॥१३॥
राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना ।
राजन् संमन्त्रितं पूर्वं मन्त्रिभिः कुशलैः सह ॥१४॥
विवादश्चापि संवृत्तः समुपेत्य परस्परं ।
प्रदानेन तु सीतायाः श्रेयो व्यवसितं मम ॥१५॥
अप्रदाने पुनर्युद्धं दृष्टमेतत् तथैव च ।
सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया ॥१६॥
सान्त्वैश्च विविधै राजन् किं न कुर्यां तव प्रियं ।
मद्बाणाशनिवेगेन हतानां तु रणाजिरे ॥१७॥
अद्य तृप्यन्तु मांसेन पक्षिणः काननौकसां ।
न हि मे जीवितं रक्ष्यं पुत्रदारधनानि च ॥१८॥
संपश्य मां जुहूषन्तं त्वदर्थे जीवितं युधि ।
एवमुक्त्वा तु भर्तारं रावणं वाहिनीपतिः ॥१९॥

उवाचेदं बलाध्यक्षं प्रहस्तः पुरतः स्थितं ।
समानयस्व मे क्षिप्रं राक्षसानां महद्बलं ॥ २० ॥
अद्य तां निहनिष्यामि वेगेन महतीं चमूं ।
एवमुक्तः प्रहस्तेन बलाध्यक्षः कृतत्वरः ॥ २१ ॥
बलमुद्योजयामास तस्मिन् राक्षसमन्दिरे ।
सा बभूव मुहूर्त्तेन तिग्मनानाविधायुधैः ॥ २२ ॥
लङ्का राक्षसवीरैस्तैर्गजैरिव समाकुला ।
हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यतां ॥ २३ ॥
हव्यगन्धं प्रतिवहन् सुरभिर्मारुतो ववौ ।
तर्पयित्वा तु ते हव्यैर्विधिवज्जातवेदसं ॥ २४ ॥
ब्राह्मणान् स्वस्तिवाच्याग्रे संग्रामाभिमुखाः स्थिताः ।
ते स्रजो विविधाकाराः शिरोभिरभिमन्त्रिताः ॥ २५ ॥
संग्रामसज्जाः संहृष्टाः धारयन्तो महाबलाः ।
धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य राक्षसाः ॥ २६ ॥
रावणं प्रेक्ष्य राजानं प्रहस्तं पर्यवारयन् ।
अथामन्त्र्यैव राजानं भेरीमाहत्य भैरवीं ॥ २७ ॥
आरुरोह रथं दिव्यं प्रहस्तः सज्यकार्मुकः ।
सर्वायुधजयोपेतं किङ्किनीशतनादितं ॥ २८ ॥
हयैर्मनोजवैर्युक्तं सम्यक् सूतप्रचोदितं ।
महाजलदनिर्घोषं दीप्तचन्द्रार्कवर्चसं ॥ २९ ॥

उद्यग्रध्वजं दुर्धर्षं सुवरूथं परिष्कृतं ।
सुवर्णजालसंछन्नं प्रज्वलन्तमिव श्रिया ॥ ३० ॥
स तु तं रथमास्थाय रावणार्पितशासनः ।
लङ्कायाः निर्ययौ तूर्णं बलेन महतावृतः ॥ ३१ ॥
ततो दुन्दुभिनिर्घोषः पर्जन्यनिनदोपमः ।
शुश्रुवे शङ्खशब्दश्च प्रयाते वाहिनीपतौ ॥ ३२ ॥
व्यूहेनैवाथ घोरेण पूर्वद्वारेण निर्ययौ ।
गजयूथनिकाशेन बलेन महतावृतः ॥ ३३ ॥
विनदन्तः स्वरान् घोरान् राक्षसा जग्मुरग्रतः ।
भीमरूपा महाकायाः प्रहस्तस्य पुरः सराः ॥ ३४ ॥
तस्य निर्याणघोषेण राक्षसानां च गर्जितैः ।
लङ्कायां सर्वभूतानि विनेदुर्विकृतैः स्वरैः ॥ ३५ ॥
व्यभ्रमाकाशमावृत्य घोररूपः खरस्वनः ।
ववर्ष रुधिरं देवः प्रहस्तस्य रथोपरि ॥ ३६ ॥
ध्वजमूर्धनि गृध्रोऽस्य निलीनो दक्षिणामुखः ।
वमन्त्यः पावकज्वालाः शिवा घोरा ववाशिरे ॥ ३७ ॥
अन्तरीक्षात् पपातोल्का वायुश्च परुषो ववौ ।
अन्योन्यमभिसंरुद्धा ग्रहाश्च न चकाशिरे ॥ ३८ ॥
प्रयातस्यास्य संग्रामं छाया च विगताभवत् ।
सारथेर्बहुशश्चास्य पतनामुपगाहतः ॥ ३९ ॥

प्रतोदो न्यपतद्भूमौ हस्तात् तस्याश्वसादिनः ।
निर्याणे श्रीश्च तस्यासीद्भास्वरी या सुदुर्लभा ॥ ४० ॥
सा ननाश मुहूर्त्तेन संग्राममभियायिनः ।
अश्रुपूर्णमुखाश्चास्य समे च स्खलिता हयाः ॥ ४१ ॥
तान् समीक्ष्य महोत्पातान् प्रहस्तो भृशदारुणान् ।
आत्मवीर्यं विवृण्वानो राक्षसानित्युवाच ह ॥ ४२ ॥
कालो भवेयं कालस्य दहेयमपि पावकं ।
मृत्युं मरणधर्म्मेण संयोजयितुमुत्सहे ॥ ४३ ॥
तस्य तद्वचनं श्रुत्वा प्रहस्तस्य रणाजिरे ।
सुसंरब्धतरा जग्मू राक्षसा युद्धकाङ्क्षिणः ॥ ४४ ॥
ततस्तमभिनिर्यान्तं प्रख्यातबलपौरुषं ।
नानाप्रहरणा संख्ये कपिसेनाभ्यवर्तत ॥ ४५ ॥
अथ घोषः सुतुमुलो हरीणां समजायत ।
वृक्षानारुजतां चैव गुर्वीश्च गृह्णतां शिलाः ॥ ४६ ॥
उभे प्रमुदिते सेने रक्षोगणवनौकसां ।
वेगितानां समर्थानामन्योन्यबधकाङ्क्षिणां ॥ ४७ ॥

इत्यार्षे रामायणे युद्धकाण्डे अकम्पननिर्याणं नाम
नवविंशः सर्गः — अकम्पनबधो नाम
त्रिंशः सर्गः — प्रहस्तनिर्याणं
नाम एकत्रिंशः सर्गः ॥

# रामायणं

## XXXII.

ततः प्रहस्तं निर्यान्तं भीमं भीमपराक्रमं ।
गर्जन्तं सुमहाकायं राक्षसैरभिसंवृतं ॥ १ ॥
ददर्श महती सेना वानराणां बलीयसां ।
अभिसंजातहर्षाणां प्रहस्तमभिनर्दतां ॥ २ ॥
खड्गशक्त्यृष्टिवाणाश्च शूलानि मुषलानि च ।
गदाश्च परिघाश्चैव विविधाश्च परश्वधाः ॥ ३ ॥
धनूंषि च विचित्राणि राक्षसानां जयैषिणां ।
प्रगृहीतान्यशोभन्त वानरानभिधावतां ॥ ४ ॥
जगृहुः पादपांश्चैव पुष्पितान् वानरर्षभाः ।
शिलाश्च विविधाकारा योद्धुकामाः प्लवङ्गमाः ॥ ५ ॥
तेषामन्योन्यमासाद्य संग्रामः सुमहानभूत् ।
बहूनामश्मवृष्टिं च शरवृष्टिं च वर्षतां ॥ ६ ॥
बहवो राक्षसा युद्धे बहून् वानरयूथपान् ।
वानराश्चापि रक्षांसि निजघ्नुर्बहवो बहून् ॥ ७ ॥
शूलैः प्रमथिताः केचिदसृग् वेमुः प्लवङ्गमाः ।
परिघैराहताः केचित् केचिच्छिन्नाः परश्वधैः ॥ ८ ॥
निरुच्छ्वासाः पुनः केचिन्निपेतुर्धरणीतले ।
विच्छिन्नशिरसः केचित् केचिदिषुभिरर्दिताः ॥ ९ ॥

केचिद्द्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि ।
वानरा राक्षसैः शूलैः पार्श्वतश्च विदारिताः ॥ १० ॥
वानरैश्चापि सक्रोधैः राक्षसौघाः समन्ततः ।
पादपैर्गिरिशृङ्गैश्च संपिष्टा धरणीतले ॥ ११ ॥
वज्रस्पर्शैस्तलैश्चान्ये मुष्टिभिश्च हता भृशं ।
वेमुः शोणितमास्येभ्यो विकीर्णदशनाः क्षितौ ॥ १२ ॥
आर्त्तस्वरं विनदतां सिंहनादांश्च कुर्वतां ।
बभूव तुमुलः शब्दो हरीणां रक्षसां तथा ॥ १३ ॥
वानरा राक्षसाश्चैव वीरमार्गमनुव्रताः ।
विवृत्तनयनाः क्रुद्धाश्चक्रुः कर्माण्यभीतवत् ॥ १४ ॥
एतस्मिन्नन्तरे शूराः प्रहस्तस्य वशानुगाः ।
धुरंधरः कुम्भहनुर्महानादः समुन्नदः ॥ १५ ॥
एते प्रहस्तसचिवाः सर्वे जघ्नुर्वनौकसः ।
तेषामापततां शीघ्रं निघ्नतां चैव वानरान् ॥ १६ ॥
द्विविदो गिरिशृङ्गेण जघानैकं धुरंधरं ।
दुर्मुखः पुनरादाय कपिः सुविपुलं द्रुमं ॥ १७ ॥
अपरोक्तं प्रहस्तस्य समुन्नदमपोथयत् ।
जाम्बवांस्तु सुसंक्रुद्ध उत्पाद्य महतीं शिलां ॥ १८ ॥
न्यपातयन्महावीर्यो महानादस्य वक्षसि ।
अथ कुम्भहनोस्तारस्तरसा संयुगे बली ॥ १९ ॥

वृक्षेण महतास्लुत्य प्राणानादत्त संयुगे ।
अमृष्यमाणस्ततू कर्म प्रहस्तो रथमास्थितः ॥ २० ॥
चकार कदनं घोरं धनुष्पाणिर्वनौकसां ।
आवर्त्त इव संजज्ञे बलस्य महतो महान् ॥ २१ ॥
क्षुभितस्याप्रमेयस्य सागरस्येव संप्लवे ।
महता हि शरौघेन प्रहस्तो युधि दुर्मदः ॥ २२ ॥
अर्दयामास संक्रुद्धो वानरान् परमाहवे ।
वानराणां शरीरैस्तु राक्षसानां च मेदिनी ॥ २३ ॥
बभूव निचिता घोरैः पतितैरिव पर्वतैः ।
सा मही रुधिरौघेन संछन्ना स्म प्रकाशते ॥ २४ ॥
संछन्ना माधवे मासि पुष्पितैरिव किंशुकैः ।
ततः सृजन्तं वाणौघान् प्रहस्तं स्यन्दने स्थितं ॥ २५ ॥
ददर्श तरसा नीलो विनिघ्नन्तं प्लवङ्गमान् ।
स तं परमदुर्धर्षमापतन्तं महाकपिः ॥ २६ ॥
प्रहस्तं ताडयामास वृक्षमुत्पाट्य वीर्यवान् ।
स तेनाभिहतः क्रुद्धो नदन् राक्षसपुङ्गवः ॥ २७ ॥
ववर्ष शरवर्षाणि प्लवङ्गमचमूपतौ ।
तद्यथा गोवृषो वर्षं शारदं शीघ्रमागतं ॥ २८ ॥
अपारयन् वारयितुं प्रत्यगृह्णान्निमीलितः ।
एवमेव प्रहस्तस्य शरवेगं प्लवङ्गमः ॥ २९ ॥

निमीलिताक्षः सहसा नीलोऽसहत दारुणं ।
रोषितः शरवर्षेण सालमुत्पाट्य वीर्यवान् ॥३०॥
निजघान हयान् नीलः प्रहस्तस्य महाजवान् ।
स हस्ताद्बाणमुत्सृज्य प्रहस्तः सशरासनं ॥३१॥
प्रगृह्य मुषलं घोरं स्यन्दनादवपुप्लुवे ।
तावुभावपि संरब्धौ जातवेगौ तरस्विनौ ॥३२॥
बहुक्षतजसिक्ताङ्गौ पुष्पिताविव किंशुकौ ।
उल्लिखन्तौ सुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरं ॥३३॥
सिंहशार्दूलसदृशौ व्याघ्रकेशरिविक्रमौ ।
विक्रान्तौ विजये वीरौ संयुगेष्वनिवर्तिनौ ॥३४॥
आकाङ्क्षन्तौ यशो मुख्यं वृत्रवज्रधराविव ।
आजघान ततो नीलं ललाटे मुषलेन सः ॥३५॥
प्रहस्तः परमायस्तस्तस्य सुस्राव शोणितं ।
ततः शोणितसंसिक्तः प्रगृह्य च महातरुं ॥३६॥
प्रहस्तस्योरसि क्रुद्धो विससर्ज महाकपिः ।
तमचिन्त्य प्रहारं तु प्रगृह्य मुषलं पुनः ॥३७॥
अभिदुद्राव बलिनं बली नीलं प्लवङ्गमं ।
तमुग्रवेगं संरब्धमापतन्तं महाकपिः ॥३८॥
नीलः संप्रेक्ष्य जग्राह महाकायो महाशिलां ।
तस्य क्रोधाभिभूतस्य मृधे मुषलयोधिनः ॥३९॥

प्रहस्तस्य शिलां नीलस्तूर्णं मूर्धन्यपातयत् ।
सा तेन कपिसिंहेन विमुक्ता महती शिला ।। ४० ।।
बिभेद् बहुधा घोरा प्रहस्तस्य शिरस्तदा ।
स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः ।। ४१ ।।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ।
विभिन्नशिरसस्तस्य बहु सुस्राव शोणितं ।। ४२ ।।
शरीरादभिसंबद्धं जलं प्रस्रवणादिव ।
हते प्रहस्ते नीलेन वानरेण महात्मना ।। ४३ ।।
राक्षसा भयवित्रस्ता लङ्कां समभिधाविताः ।
न शक्ताः समरे स्थातुं निहते वाहिनीपतौ ।। ४४ ।।
सेतुं भग्नं समासाद्य विकीर्णं सलिलं यथा ।
हते तस्मिंश्चमूमुख्ये न कश्चित् पुरुषोऽभवत् ।
तदा रक्षोगणबले प्रहस्तवशमागते ।। ४५ ।।

इत्यार्षे रामायणे युद्धकाण्डे प्रहस्तबधो नाम
द्वात्रिंशः सर्गः ।।

# युद्धकाण्डं

## XXXIII.

प्रहस्तस्य बधं श्रुत्वा रावणो भ्रान्तमानसः ।
राक्षसानादिदेशाशु राक्षसेन्द्रो महाबलः ॥ १ ॥
कार्या शत्रुषु नावज्ञा यैरिन्द्रबलसूदनः ।
सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ २ ॥
रथैर्हयैर्गजैश्चैव यातुधानैश्च सर्वशः ।
सोऽहं रिपुविनाशाय विजयस्य च वृद्धये ॥ ३ ॥
रामलक्ष्मणयोर्वैरं स्वयं निर्यातयामि वै ।
स्वयमेव गमिष्यामि रणशीर्षमभित्वरन् ॥ ४ ॥
अहं तु वानरानीकं सरामं सहलक्ष्मणं ।
विधक्ष्यामि पृषत्कौघैः शुष्कं वनमिवानलः ॥ ५ ॥
स्वयं संतर्पयिष्यामि पृथिवीं कपिशोणितैः ।
रामं च लक्ष्मणं चैव प्रेषयिष्ये यमक्षयं ॥ ६ ॥
एवमुक्त्वा महातेजा रावणो लोकरावणः ।
अगच्छत् सहसा क्रुद्धः सर्वसैन्येन संवृतः ॥ ७ ॥
संग्राममभिकाङ्क्षन्तं रावणं श्रुत्य भाविनी ।
तदोत्थाय ययौ देवी नाम्ना मन्दोदरी शुभा ॥ ८ ॥
माल्यवन्तं करे गृह्य यूपाक्षसहिता तदा ।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैस्तथान्यैर्मन्त्रिसत्तमैः ॥ ९ ॥

राक्षसैरावृता सर्वैर्वेत्रझर्झरपाणिभिः ।
योषिद्भिश्चैव वृद्धाभिस्तथा कन्याभिरावृता ॥ १० ॥
आयुधव्यग्रहस्तैश्च राक्षसैश्च समन्ततः ।
सभां तु प्रस्थिता देवी यत्रास्ते राक्षसेश्वरः ॥ ११ ॥
छत्रेण ध्रियमाणेन अतिकायपुरः सरः ।
चामरैरप्सरामाभिर्वीज्यमानः स्वलङ्कृतैः ॥ १२ ॥
गव्यूतिमात्रविपुलां ध्वजमालोपशोभितां ।
उत्सारणं प्रकुर्वद्भिर्वेत्रझर्झरपाणिभिः ॥ १३ ॥
प्राविशच्च सभां दिव्यां प्रभयोद्योतमानया ।
द्रष्टुं वै रावणं सा तु मयस्य दुहिता तदा ॥ १४ ॥
प्राप्तां देवीं ततो राजा प्रियां मन्दोदरीं शुभां ।
दृष्ट्वा ससंभ्रमं तूर्णं परिषज्य दशाननः ॥ १५ ॥
यथावच्चाभिनन्द्याथ तदासनगतोऽभवत् ।
प्रहस्तबधसंतप्तो अकम्पनबधार्दितः ॥ १६ ॥
लङ्कायाश्चावमर्देन कषायीकृतलोचनः ।
संग्राममभिकाङ्क्षन् स व्याकुलेनान्तरात्मना ॥ १७ ॥
अब्रवीद्विधिवत् सोऽथ महागम्भीरनिस्वनः ।
किमागमनकृत्यं ते देवि शीघ्रं तदुच्यतां ॥ १८ ॥
तूर्णं मम समीपं तु किमर्थं त्वमिहागता ।
मन्त्रिभिः सहिता किन्नु ब्रूहि साधि यथातथं ॥ १९ ॥

एवमुक्ते तु वचने देवी वचनमब्रवीत् ।
विज्ञाप्यं शृणु राजेन्द्र याचे त्वाहं कृताञ्जलिः ॥ २० ॥
नापराधश्च कर्तव्यो वदन्त्या मम मानद ।
श्रुता मे नगरी रुद्धा श्रुता मे राक्षसा हताः ॥ २१ ॥
धूम्राक्षसहिता वीराः प्रहस्तेन सहैव च ।
भवन्तं योद्धुकामं च निर्गतं कृतनिश्चयं ॥ २२ ॥
इति संचिन्त्य राजेन्द्र ममागमनकारणं ।
न च युक्तं प्रमुखतः स्थातुं तस्य महात्मनः ॥ २३ ॥
रामस्य सुमहाभाग यस्य भार्या त्वया हृता ।
लक्ष्मणस्य च सौमित्रेर्यस्य नास्ति समो युधि ॥ २४ ॥
न च मानुषमात्रोऽसौ रामो दशरथात्मजः ।
एकेन येन वै पूर्वं बहवो राक्षसा हताः ॥ २५ ॥
चतुर्दशसहस्राणि जनस्थाननिवासिनां ।
खरश्च निहतः संख्ये तदा रामो न मानुषः ॥ २६ ॥
त्रिशिराश्च कबन्धश्च विराधो दण्डके हतः ।
शरेणैकेन बाली च तदा रामो न मानुषः ॥ २७ ॥
शङ्के चैनं महाराज मारीचमथनादहं ।
पितुश्च वचनाद्रामः प्रविष्टो दण्डकं वनं ॥ २८ ॥
ब्रह्मचर्यव्रते युक्तः सह भ्रात्रा वने चरः ।
तस्य भार्या जनस्थानात् किमानीता पतिव्रता ॥ २९ ॥

अकारणकृतं यत् ते दोषाय समुपस्थितं ।
पतिव्रतापराधस्तु दोषमावहते महत् ॥३०॥
न शक्यं रोचते बुद्ध्या एतेषां मन्त्रिणां तथा ।
रामभार्या सती सा तु रामाय प्रतिदीयतां ॥३१॥
विभीषणेन चैवोक्तं पूर्वमेव महात्मना ।
गतस्तत्रैव चासौ त्वां त्यक्त्वा राज्यं करिष्यति ॥३२॥
वरवस्त्राणि रत्नानि प्रेषयाम रघूत्तमे ।
सीतां चैव महाराज सुवर्णं वाहनानि च ॥३३॥
मणिमुक्ताप्रबालं च तथा रजतमेव च ।
माल्यवानाशु संयातु यूपाक्षश्च तथैव च ॥३४॥
अतिकायस्तथा चायं कार्याकार्यविशारदः ।
विभीषणो गतः पूर्वमेभिस्तत्र गतैर्ध्रुवं ॥३५॥
संधिं करिष्यति व्यक्त राघवं प्रणिपत्य च ।
संमान्य मैथिलीं चास्मै प्रदास्यति विभीषणः ॥३६॥
माल्यवानतिकायश्च राक्षसानां हिते रताः ।
राघवं याच्य शिरसा संधिं कुर्वन्तु रावण ॥३७॥
स्वजनस्य क्षयं कृत्वा पुत्रभ्रातृबधं तथा ।
संशयं परमं गत्वा किं जितेन करिष्यसि ॥३८॥
चञ्चला युद्धसिद्धिस्तु हन्ति वा हन्यतेऽपि वा ।
तस्माद्युद्धं न रोचेत संधिं कुरु दशानन ॥३९॥

प्रणिपत्य महाबाहो राघवं प्रीतिनन्दन ।
दीयतामस्य सीताद्य संधिस्ते तेन रोचतां ॥ ४० ॥
साम्प्रतं संशयो राजन् पुरं स्वं च सबान्धवं ।
मुञ्च त्वं राक्षसश्रेष्ठ वर्तते नात्र संशयः ॥ ४१ ॥
तस्मादेतद्ब्रवीम्येषा पुरस्यास्य कुलस्य च ।
रक्षणीयास्त्वयार्थां वै सर्वमात्मन्यधिष्ठितं ॥ ४२ ॥
क्षमाशीलस्तथा रामः सत्यवादी दृढव्रतः ।
धर्मनिष्ठो महाराज शरणागतवत्सलः ॥ ४३ ॥
कुरुते मुदितः संधिं रामो दशरथात्मजः ।
लक्ष्मणश्च महाबाहुर्नित्यं भ्रातृहिते रतः ॥ ४४ ॥
प्रहस्तेन कृतं किन्नु युध्यता वानरे बले ।
धूम्राक्षेण च राजेन्द्र नित्यं समरबुद्धिना ॥ ४५ ॥
वज्रदंष्ट्रेण च तथा महामायेन रक्षसा ।
अकम्पनेन वीरेण युध्यता राक्षसेश्वर ॥ ४६ ॥
तथान्यैर्युध्यमानैश्च किं कृतं वानरे बले ।
न हतो यूथपः कश्चित् बलोद्देशोऽपि वानरः ॥ ४७ ॥
येषां वीर्याद्बिभेतीन्द्रः कुबेरवरुणावपि ।
यमो वैवस्वतो येषां तथान्ये देवदानवाः ॥ ४८ ॥
येषां नास्ति समो वीर्ये ते हता वानरैर्युधि ।
न चापि वानराः शक्या हन्तुं पादपयोधिनः ॥ ४९ ॥

राक्षसानां तु रामेण सुग्रीवेण च पालिताः ।
तत्र ते रोचतां संधिः सह रामेण रावण ॥५०॥
मा कृथाः पुरनाशं तु मा कृथाः कुलसंक्षयं ।
हितं सर्वं ब्रवीम्येषा कुरुष्व वचनं मम ॥५१॥

इत्यार्षे रामायणे युद्धकाण्डे मन्दोदरीवाक्यं
नाम त्रयस्त्रिंशः सर्गः ॥

## युद्धकाण्डं

### XXXIV.

तस्यास्तद्वचनं श्रुत्वा प्रियाया राक्षसेश्वरः ।
दीर्घमुष्णं च निश्वस्य निरीक्ष्य च सभासदः ॥१॥
हस्ते मन्दोदरीं गृह्य वाक्यमेतदुवाच ह ।
त्वयाहं हितकाङ्क्षिण्या वचो यदभिभाषितः ॥२॥
न तन्मनसि मे देवि प्रविवेशाप्रियं प्रिये ।
देवान् जित्वा रणे पूर्वमसुरोरगदानवान् ॥३॥
प्रणमे मानुषं कस्माद्वानरं यः समाश्रितः ।
प्रणम्य रामं काकुत्स्थं किं नु वक्ष्यन्ति देवताः ॥४॥
कीदृशं वा भवेन्मह्यं जीवितं हततेजसे ।
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सुदारुणं ॥५॥
राक्षसान् घातयित्वा तु लङ्कां संपीड्य सर्वतः ।
राघवं प्रणमे कस्माद्धीनवीर्य इवाबलः ॥६॥
[जानामि सीतां जनकप्रसूतां
जानामि रामं मधुसूदनं च ।
एतद्धि जानाम्यहमस्य बध्यम्
तथापि संधिं न करोम्यनेन ॥७॥]
राघवं प्रणमन् वाहं कथं जीवितुमुत्सहे ।
एष मे सहजो भावो नित्यं मनसि निष्ठितः ॥८॥

अपि भक्ष्ये तदा देवि न नमेयं तु कस्यचित् ।
त्रैलोक्ये स पुमान् नास्ति यो मया न जितो रणे ॥ ९ ॥
देवानां च बलं हत्वा देवराजो मया जितः ।
राघवं प्रणमे कस्मान्मूर्ध्नि स्थित्वा तु देहिनां ॥ १० ॥
मा कृथा हृदि संतापं संज्ञयिष्ये शुचिस्मिते ।
हनिष्ये राघवं चैव लक्ष्मणं वानरांश्च तान् ॥ ११ ॥
सुग्रीवं च बधिष्यामि हनूमन्तं च वानरं ।
न तु संधिं करिष्यामि राघवेण सहैव तु ॥ १२ ॥
वैदेहीं नार्पयिष्यामि राघवस्य भयादहं ।
साम्प्रतं च न संधिं तु करिष्यति स राघवः ॥ १३ ॥
सागरं सुमहद्बद्ध्वा रुद्ध्वा लङ्कां सकाननां ।
राक्षसप्रवरान् हत्वा संधिं कुर्यात् कथं प्रिये ॥ १४ ॥
न त्वहं संधिमिच्छामि कदाचिदपि भाविनि ।
गच्छ त्वं भव विश्रब्धा सर्वमेतत् सुखोदयं ॥ १५ ॥
मा कृथा हृदि संतापमहं यास्ये रणाजिरं ।
अद्य सर्वान् हनिष्यामि शत्रून् समरमूर्द्धनि ॥ १६ ॥
पुत्राश्च ते महावीर्या मेघनादपुरोगमाः ।
न तेषां मुच्यते कश्चिदपि मृत्युर्वरानने ॥ १७ ॥
अन्तःपुराय गच्छ त्वं सुखिनी भव सस्नुषा ।
एवमुक्त्वा परिष्वज्य भार्यां प्रीतिमना इव ॥ १८ ॥

प्रविवेश तदा देवी स्वयं च भवनं शुभं ।
चिन्तयामास तद्घोरं विग्रहं समुपस्थितं ॥ १९ ॥
रावणस्तु ततो वाक्यं राक्षसानिदमब्रवीत् ।
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां ततः ॥ २० ॥
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदये शयं ।
देवासुरे यथा पूर्वं देवता निहता युधि ॥ २१ ॥
मया वीर्येण महता देवराजश्च निर्जितः ।
चिरकालस्थितं ह्येतद्युद्धं मे राघवेण च ॥ २२ ॥
अद्य तूणीशया बाणा निर्मुक्ता इव पन्नगाः ।
रामं समभिधावन्तु विषाग्निप्रतिमाः शिताः ॥ २३ ॥
सुतेजिते रुक्मपुङ्खैस्तैलधौतैर्हिरण्मयैः ।
शरीरं दीपयिष्येऽहमुल्काभिरिव कुञ्जरं ॥ २४ ॥

इत्यार्षे रामायणे युद्धकाण्डे रावणवाक्यं नाम
चतुस्त्रिंशः सर्गः ॥

## XXXV.

स एवमुक्त्वा ज्वलनप्रकाशं
    रथं तुरङ्गोत्तमराजयुक्तं ।
प्रकाशमानं वपुषा वरेण
    समारुरोहामरराजशत्रुः ॥ १ ॥
स शङ्खभेरीपटहप्रणादैर्
    आच्वेडितास्फोटितसिंहनादैः ।
पुण्यैः स्तवैश्चाप्यभिपूज्यमानस्
    तदाययौ राक्षसराजमुख्यः ॥ २ ॥
स शैलजीमूतनिकाशकायैर्
    मांसाशनैः पावकदीप्तनेत्रैः ।
बभौ वृतो राक्षसयोधमुख्यैर्
    भूतैर्वृतो रुद्र इवामरेशः ॥ ३ ॥
ततो नगर्याः सहसा महौजा
    निष्क्रम्य तद्वानरसैन्यमुग्रं ।
समुद्यतं पादपशैलहस्तं
    महार्णवाम्भःस्तनितं ददर्श ॥ ४ ॥
तद्राक्षसानीकमतिप्रचण्डम्
    आलोक्य रामोऽमरतुल्यरूपः ।

## युद्धकाण्डं

विभीषणं शस्त्रभृतां वरिष्ठम्
उवाच शैलाग्रगतो महात्मा ॥५॥
नानापताकाध्वजशस्त्रजुष्टं
प्रासासिशूलाशनिचक्रजुष्टं ।
कस्येदमक्षोभ्यमभीरुसैन्यं
नागेन्द्रराजोपमनागजुष्टं ॥६॥
ततः स रामस्य वचो निशम्य
विभीषणः शक्रसमानवीर्यः ।
शशंस रामाय बलप्रवीरान्
दुरासदान् राक्षसपुङ्गवांस्तान् ॥७॥
योऽसौ गजस्कन्धगतो महात्मा
नवोदितार्कोपमताम्रचक्षुः ।
प्रकम्पयन् नागशिरोऽभ्युपैति
प्रवीरबाहुं तमवेहि राजन् ॥८॥
योऽसौ रथस्थो मृगराजकेतुर्
धुन्वन् धनुः शक्रधनुःप्रकाशं ।
करीव भात्युग्रविवृत्तदंष्ट्रः
स इन्द्रजिद्राक्षसराजपुत्रः ॥९॥
यश्चैष विन्यस्त इवेन्द्रकल्पो
धन्वी रथस्थोऽतिरथोऽतिवीरः ।

विस्फारयन् वै धनुरुग्रनादम्
 एषोऽतिकायोऽतिविवृद्धकायः ॥१०॥
योऽसौ नवार्कोपमताम्रचक्षुर्
 आरुह्य घण्टानिनदप्रणादं ।
खरं खरं गर्जति वै दुरात्मा
 महोदरो नाम स एष वीरः ॥११॥
योऽसौ हयं काञ्चनचित्रभाण्डम्
 आरुह्य सन्ध्याभ्रघनप्रकाशं ।
प्रासं समुद्यम्य मरीचिनद्धं
 पिशाच एषोऽशनितुल्यवेगः ॥१२॥
यश्चैष कालानलतुल्यवेगः
 खड्गी धनुष्मान् कवची किरीटी ।
गजेन्द्रमास्थाय गिरिप्रकाशं
 खरात्मजोऽयं मकराक्षनामा ॥१३॥
यश्चैष चापासिशरौघजुष्टं
 पताकिनं पावकतुल्यरूपं ।
रथं समास्थाय विभात्युदग्रो
 नरान्तकोऽयं नगशृङ्गयोधी ॥१४॥
यश्चैष नानाविधघोररूपैर्
 व्याघ्रोष्ट्रनागेन्द्रमृगेन्द्रवक्त्रैः ।

भूतैर्वृतोऽभ्येति विवृत्तनेत्रैः
  सोऽयं सुदंष्ट्रो विजितारिसूनुः ॥ १५ ॥
यश्चैष घोरं बहुवज्रजुष्टं
  सकाञ्चनं पावकतुल्यरूपं ।
शूलं समुद्यम्य विभाति वेगाद्
  देवान्तकोऽसौ नरसिंह योधी ॥ १६ ॥
यश्चैष शूलं निशितं प्रगृह्य
  विद्युत्प्रभं किङ्किणिवज्रजुष्टं ।
नागेन्द्रमास्थाय गिरिप्रकाशम्
  आयाति सोऽयं त्रिशिरास्तरस्वी ॥ १७ ॥
अयं तु जीमूतनिकाशरूपः
  कुम्भः प्रतिव्यूढसुजातवक्षाः ।
समाहितः पन्नगराजकेतुर्
  विस्फारयन् भाति धनुर्धनुष्मान् ॥ १८ ॥
यश्चैष जाम्बूनदवज्रजुष्टं
  दीप्तं सुघोरं परिघं प्रगृह्य ।
आयाति रक्षोबलकेतुभूतो
  निकुम्भ एषोऽद्भुतघोरकर्मा ॥ १९ ॥
यत्रैतदिन्दुप्रतिमं विभाति
  छत्रं सितं रुक्मशलाकमग्र्यं ।

अत्रैष रक्षोऽधिपतिर्महात्मा
भूतैर्वृतो रुद्र इवाभ्युपैति ॥२०॥
योऽसौ किरीटी ज्वलनो ज्वलास्यो
महेन्द्रविन्ध्योपमभीमरूपः।
महेन्द्रवैवस्वतदर्पहन्ता
रक्षोऽधिपः सोऽयमुपैति हृष्टः ॥२१॥

इत्यार्षे रामायणे युद्धकाण्डे रावणानीकदर्शनं
नाम पञ्चत्रिंशः सर्गः ॥

# युद्धकाण्डं

## XXXVI.

विभीषणवचः श्रुत्वा रावणं प्रति भाषितं ।
प्रत्युवाच ततो रामो विभीषणमिदं वचः ॥ १ ॥
अहो दीप्तो महातेजा रावणो राक्षसाधिपः ।
आदित्य इव दुष्प्रेक्ष्यो रश्मिभिर्भाति वीर्यवान् ॥ २ ॥
न व्यक्तं लक्ष्यते चास्य रूपं तेजःसमन्वितं ।
दैत्यदानववीराणां वपुरेवंविधं किल ॥ ३ ॥
यादृशं राक्षसेन्द्रस्य वपुरेतद्विराजते ।
तथैवास्यानुगास्तुल्याः पुत्राः पौत्रास्तथानुजाः ॥ ४ ॥
सर्वे पर्वतसंकाशाः सर्वे विक्रान्तयोधिनः ।
सर्वे दीप्तायुधधरा योधाश्चास्य महौजसः ॥ ५ ॥
भाति राक्षसराजोऽयं प्रदीप्तैर्भीमविक्रमैः ।
योधैः परिवृतो भूतैर्देहवद्भिरिवान्तकः ॥ ६ ॥
एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान् ।
लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमान् ॥ ७ ॥
ततः स रक्षोऽधिपतिर्महात्मा
रक्षांसि तान्याह महाबलानि ।
द्वारेषु पुर्या गृहगोपुरेषु
सुनिर्वृतास्तिष्ठत निर्विशङ्काः ॥ ८ ॥

स एवमुक्त्वा त्रिदशेन्द्रशत्रुर्
  उद्भ्राम्य चापं सशरं प्रदीप्तं ।
व्यदारयद्वानरसागरौघं
  महाकषः पूर्णमिवार्णवौघं ॥ ९ ॥
तमापतन्तं सहसा निरीक्ष्य
  दीप्तेषुचापं युधि राक्षसेन्द्रं ।
ततो हरीशः समुपाजगाम
  तं रावणं योद्धुमतिप्रचण्डः ॥ १० ॥
बलात् समुत्पाट्य महीधराग्रं
  दुद्राव रक्षोऽधिपतिं हरीशः ।
तं शैलमग्रं बहुवृक्षसानुं
  प्रगृह्य चिक्षेप स रावणाय ॥ ११ ॥
तमापतन्तं प्रसमीक्ष्य राजा
  बिभेद बाणैर्यमदण्डकल्पैः ।
तस्मिन् प्रवृद्धोत्तमशृङ्गवृक्षे
  शैले विदीर्णे बहुचित्रसानौ ॥ १२ ॥
महाहिकल्पं शरमुग्रवेगं
  समाददे राक्षससैन्यनाथः ।
स तं गृहीत्वानिलतुल्यवेगं
  सविस्फुलिङ्गं ज्वलनप्रकाशं ॥ १३ ॥

वाणं महेन्द्राशनितुल्यवेगं
चिक्षेप राजा हरियूथपाय ।
स सायको रावणबाहुमुक्तः
शक्राशनिप्रख्यवपुः शिताग्रः ॥१४॥

सुग्रीवमासाद्य बिभेद वेगाद्
गुहेरिता क्रौञ्चमिवोग्रशक्तिः ।
स सायकार्त्तो विपरीतचेताः
कूजन् व्यथार्त्तो निपपात भूमौ ॥१५॥

तं प्रेक्ष्य भूमौ पतितं विसंज्ञं
नेदुः प्रहृष्टा युधि यातुधानाः ।
ततो गवाक्षो गवयः सुदंष्ट्रो
मैन्दो नलो ज्योतिर्मुखोऽङ्गदश्च ॥१६॥

शिलाः समुत्पाट्य विवृद्धकायाः
प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रं ।
तेषां प्रहारान् स चकार मोघान्
रक्षोऽधिपो वाणशतैः शिताग्रैः ॥१७॥

तान् वानरेन्द्रानपि वाणजालैर्
बिभेद जाम्बूनदचित्रपुङ्खैः ।
ते वानरेन्द्रास्त्रिदशारिवाणैर्
भिन्ना निपेतुर्भुवि भीमरूपाः ॥१८॥

ततस्तु तद्वानरसैन्यमुग्रं
संताडयामास स बाणजालैः ।
ते बध्यमानाश्च कृतार्त्तनादा
भयेन शोकेन च विह्वलाङ्गाः ॥ १९ ॥
शाखामृगा रावणसायकार्त्ता
जग्मुः शरण्यं शरणं स्म रामं ।
ततो महात्मा स धनुर्धनुष्मान्
आदाय रामः सहसा जगाम ॥ २० ॥
तं लक्ष्मणः प्राञ्जलिरभ्युपेत्य
प्रोवाच वाक्यं परमार्थयुक्तं ।
अहमार्य सुपर्याप्तो बधायास्य दुरात्मनः ।
बधिष्याम्यहमेवैनमनुजानीहि मां विभो ॥ २१ ॥
मम शक्ररिपोश्चैव संविमर्दो भवत्वयं ।
अद्य पश्यन्तु भूतानि परिभूतं मया रिपुं ॥ २२ ॥
ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ।
गच्छ त्वं वचनं चेदं निबोध मम लक्ष्मण ॥ २३ ॥
रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः ।
त्रैलोक्येनापि संक्रुद्धो दुष्प्रधृष्यो न संशयः ॥ २४ ॥
तस्य छिद्राणि मार्गस्व स्वच्छिद्राण्यभिरक्ष च ।
चक्षुषा धनुषा चैव रक्षात्मानं समाहितः ॥ २५ ॥

राघवस्य वचः श्रुत्वा संप्रहृष्टतनूरुहः ।
अभिवाद्य ततो रामं ययौ सौमित्रिराहवं ॥ २६ ॥

स रावणं वारणहस्तबाहुं
दर्दर्श दीप्तोद्यतभीमचापं ।
प्रच्छादयन्तं शरवृष्टिजालैस्
तान् वानरान् बाणविभिन्नदेहान् ॥ २७ ॥

तमालोक्य महातेजा हनूमान् मारुतात्मजः ।
भ्रंशयन् शरजालानि प्रत्यगच्छत् स रावणं ॥ २८ ॥
रथं तस्य समासाद्य बाहुमुद्यम्य दक्षिणं ।
त्रासयन् रावणं धीमान् हनूमान् वाक्यमब्रवीत् ॥ २९ ॥
देवदानवगन्धर्वा यक्षाश्च सह पन्नगैः ।
अबध्यत्वात् त्वया भग्ना वानरेभ्यश्च ते भयं ॥ ३० ॥
तदद्य देवाः पश्यन्तु सयक्षोरगपन्नगाः ।
त्वामद्य भग्नं निहतं वानरैर्भीमविक्रमैः ॥ ३१ ॥
एष मे दक्षिणो बाहुः पञ्चशाखः समुद्यतः ।
निर्हरिष्यति ते देहाद्भूतात्मानं चिरोषितं ॥ ३२ ॥
श्रुत्वा हनूमतो वाक्यं रावणो भीमविक्रमः ।
संरक्तनयनः कोपादिदं वचनमब्रवीत् ॥ ३३ ॥
क्षिप्रं प्रहर निःशङ्कं स्थिरां कीर्त्तिमवाप्नुहि ।
विक्रमं च विदित्वा ते नाशयिष्यामि जीवितं ॥ ३४ ॥

रावणस्य वचः श्रुत्वा वायुसूनुरभाषत ।
प्रहृतं ते मया पूर्वमक्षं स्मर सुतं तव ॥ ३५ ॥
एवमुक्तो महातेजा रावणो राक्षसाधिपः ।
आजघानानिलसुतं तलेनोरसि वीर्यवान् ॥ ३६ ॥
स तदा निहतस्तेन मुहूर्त्तं व्यचलत् कपिः ।
आजघान च संक्रुद्धस्तलेनैवामरद्विषं ॥ ३७ ॥
तथा स तेनाभिहतो वानरेण तरस्विना ।
दशग्रीवः समुद्धूतो यथा भूमिचलेऽचलः ॥ ३८ ॥
संग्रामे तु तदा दृष्ट्वा रावणं तलताडितं ।
ऋषयश्चारणाः सिद्धा नेदुर्देवाश्च सासुराः ॥ ३९ ॥
अथाश्वस्य महातेजा रावणो वाक्यमब्रवीत् ।
साधु वानर वीर्यं ते श्लाघनीयोऽसि मे रिपुः ॥ ४० ॥
रावणेनैवमुक्तस्तु हनूमान् वाक्यमब्रवीत् ।
मम वीर्यं धिगस्त्वेतद्यत् त्वं जीवसि रावण ॥ ४१ ॥
सकृत् तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे ।
ततस्त्वां मामको मुष्टिर्नयिष्यति यमालयं ॥ ४२ ॥
तेन वानरवाक्येन क्रोधस्तस्य व्यवर्धत ।
स क्रोधाग्निपरीतात्मा प्रजज्वालेव रावणः ॥ ४३ ॥
संरक्तनयनोऽत्यर्थं मुष्टिमुद्यम्य दारुणं ।
पातयामास वेगेन वानरोरसि वीर्यवान् ॥ ४४ ॥

मुष्टिना तेन विद्धस्तु विसंज्ञो विह्वलोऽभवत् ।
हनूमान् वक्षसि व्यूढे संचचाल महाकपिः ॥ ४५ ॥
विसंज्ञं तु ततो दृष्ट्वा हनूमन्तं स रावणः ।
रथेनातिरथः शीघ्रं नीलं प्रति समाद्रवत् ॥ ४६ ॥
सोऽन्तकप्रतिमैर्बाणैः परमर्मविभेदिभिः ।
छादयामास नीलं तं मृधे हरिचमूपतिं ॥ ४७ ॥
स शरौघसमायस्तो नीलो हरिचमूपतिः ।
गिरिशृङ्गं समुत्पाट्य रक्षोऽधिपतयेऽसृजत् ॥ ४८ ॥
हनूमानपि तेजस्वी समाश्वस्तो महाबलः ।
नीलेन सह संयुक्तं रावणं प्रेक्ष्य वीर्यवान् ॥ ४९ ॥
स रावणवधार्थं तु न चकार मतिं तदा ।
निरीक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत् ॥ ५० ॥
अन्यायत इदं युद्धं क्षत्रधर्मविदा कृतं ।
मामपास्य यदन्येन युद्धं युद्धविशारद ॥ ५१ ॥
तदनादृत्य वचनं राक्षसाधिपतिर्बली ।
व्यदारयद्गिरेः शृङ्गं नीलास्तं सप्तधा शरैः ॥ ५२ ॥
तद्विकीर्णं गिरेः शृङ्गं दृष्ट्वा हरिचमूपतिः ।
नीलोऽग्निरिव जज्वाल स वीरः परवीरहा ॥ ५३ ॥
सोऽश्वकर्णान् धवान् सालान् सप्तपर्णांश्च पुष्पितान् ।
अन्यांश्च विविधान् वृक्षान् नीलश्चिक्षेप संयुगे ॥ ५४ ॥

स तानापततः शीघ्रं वृक्षांश्चिच्छेद रावणः ।
नीलं चाभिजघानाशु दर्शयन् हस्तलाघवं ॥५५॥
सोऽभिवृष्टः शरौघेन वेगेन च महाबलः ।
ह्रस्वं कृत्वात्मनो देहं ध्वजाग्रे निपपात ह ॥५६॥
पावकात्मजमालोक्य ध्वजाग्रे पर्यवस्थितं ।
जज्वाल रावणः क्रोधात् ततो नीलो ननाद ह ॥५७॥
ध्वजाग्रे धनुषश्चाग्रे किरीटाग्रे च तं हरिं ।
ससुग्रीवः ससौमित्रिर्दृष्ट्वा रामोऽपि विस्मितः ॥५८॥
रावणोऽपि महासत्त्वः कपिलाघवविस्मितः ।
संभ्रमाविष्टहृदयो न किञ्चित् प्रत्यपद्यत ॥५९॥
तत उच्चुक्रुशुर्हृष्टा लब्धलक्ष्याः प्लवङ्गमाः ।
नीललाघवसंभ्रान्तं दृष्ट्वा रावणमाहवे ॥६०॥
वानराणां प्रणादेन संक्रुद्धो रावणस्तदा ।
अस्त्रमाहारयामास दीप्तमाग्नेयमुत्तमं ॥६१॥
आग्नेयेनाथ संयुक्तं गृहीत्वा रावणः शरं ।
ध्वजमूर्ध्नि स्थितं नीलमुदैक्षत निशाचरः ॥६२॥
ततोऽब्रवीन्महातेजा रावणो राक्षसाधिपः ।
कपे लाघवयुक्तोऽसि मायया परया युतः ॥६३॥
यदि त्वं रक्षसि प्राणान् मायया वानराधम ।
तानि तान्यनुरूपाणि विसृजन् बहुशो रणे ॥६४॥

तथाप्ययं मया क्षिप्तः सायकोऽस्त्राभिमन्त्रितः ।
जीवितं परिरक्षन्तं जीविताद्भ्रंशयिष्यति ॥ ६५ ॥
एवमुक्त्वा महाबाहू रावणो राक्षसाधिपः ।
संधाय बाणं धनुषि चमूपतिमताडयत् ॥ ६६ ॥
सोऽस्त्रयुक्तेन बाणेन नीलो वक्षसि ताडितः ।
निर्दह्यमानः सहसा निपपात महीतले ॥ ६७ ॥
पितुर्माहात्म्ययोगेन आत्मनश्चैव तेजसा ।
जानुभ्यामगमद्भूमौ न च प्राणैर्व्ययुज्यत ॥ ६८ ॥
विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः ।
रथेन मेघनादेन सौमित्रिं समुपाद्रवत् ॥ ६९ ॥

तमाह सौमित्रिरदीनसत्त्वो
विस्फारयन्तं धनुरप्रमेयं ।
आगच्छ मां योधय राक्षसेन्द्र
न वानरांस्त्वं प्रतियोद्धुमर्हसि ॥ ७० ॥
स तस्य वाक्यं परिपूर्णघोषं
ज्याशब्दमुग्रं च निशम्य रक्षः ।
तथेति सौमित्रिमथाभिभाष्य
चुकोप कोपादपि चेदमाह ॥ ७१ ॥
दिष्ट्यासि मे राघव चक्षुषोऽग्रं
प्राप्तोऽन्तगामी विपरीतबुद्धिः ।

अस्मिन् क्षणे यास्यसि मृत्युलोकं
　　संछाद्यमानो मम बाणजालैः ॥ ७२ ॥
तमाह सौमित्रिरविस्मयेन
　　गर्जन्तमुग्रं शरचापपाणिं ।
रणे न गर्जन्ति वृथा हि शूराः
　　किं कत्थसे प्राकृतवत् त्वमद्य ॥ ७३ ॥
जानामि वीर्यं तव राक्षसेन्द्र
　　तेजश्च शक्तिं च पराक्रमं च ।
अयं स्थितोऽहं शरचापपाणिर्
　　आगच्छ किं मोघविकत्थनेन ॥ ७४ ॥
स एवमुक्तः कुपितः ससर्ज
　　रक्षोऽधिपः सप्तशरान् सुपुङ्खान् ।
तान् लक्ष्मणः काञ्चनचित्रपुङ्खैश्
　　चिच्छेद बाणैर्निशितैः सुपत्रैः ॥ ७५ ॥
तान् प्रेक्ष्य बाणान् सहसा निकृत्तान्
　　निकृत्तभोगानिव पन्नगेन्द्रान् ।
लङ्केश्वरः क्रोधवशं जगाम
　　ससर्ज चान्यान् निशितान् पृषत्कान् ॥ ७६ ॥
स बाणवर्षं तु ववर्ष तीव्रं
　　रामानुजे कार्मुकसंप्रमुक्तं ।

क्षुरार्द्धचन्द्रोपमकर्णिभल्लैः
　　शरांश्च चिच्छेद न चुक्षुभे सः ॥७७॥
स बाणजालान्यथ तानि तानि
　　मोघानि पश्यंस्त्रिदशारिराजा ।
विसिस्मिये लक्ष्मणलाघवेन
　　पुनश्च बाणान् निशितान् मुमोच ॥७८॥
स लक्ष्मणश्चापि शरान् शिताग्रान्
　　महेन्द्रवज्राशनितुल्यवेगान् ।
संधाय चापे ज्वलनप्रकाशान्
　　ससर्ज रक्षोऽधिपतेर्बधाय ॥७९॥
स तान् प्रचिच्छेद निशाचरेन्द्रस्
　　छित्वा ततो लक्ष्मणमाजघान ।
शरेण कालाग्निसमप्रभेन
　　स्वयम्भुदत्तेन ललाटदेश ॥८०॥
स लक्ष्मणो रावणसायकार्त्तस्
　　चचाल चापं शिथिलं प्रगृह्य ।
पुनश्च संज्ञां प्रतिलभ्य कृच्छ्राच्
　　चिच्छेद चापं त्रिदशेन्द्रशत्रोः ॥८१॥
तं कृत्तचापं त्रिभिराजघान
　　बाणैस्तदा दाशरथिः शिताग्रैः ।

स सायकार्त्तो विचचाल राजा
कृच्छ्राच्च संज्ञां पुनराससाद ॥ ८२॥
स कृत्तचापः शरपीडिताङ्गः
स्वेदार्द्रगात्रो रुधिरावसिक्तः ।
जग्राह शक्तिं समरप्रचण्डां
स्वयम्भुदत्तामथ देवशत्रुः ॥ ८३॥
स तां विधूमानलसंनिकाशां
वित्रासनीं वानरयूथपानां ।
चिक्षेप शक्तिं तरसा ज्वलन्तीं
सौमित्रये राक्षसराष्ट्रनाथः ॥ ८४॥
तां दीप्यमानां रघुनन्दनस्तदा
जघान बाणैरनलप्रकाशैः ।
तथापि सा तस्य विवेश शक्तिर्
भुजान्तरं दाशरथेर्विशाला ॥ ८५॥
शक्त्या तया तु सौमित्रिस्ताडितः स स्तनान्तरे ।
विष्णोरचिन्त्यं स्वं भागमात्मनः प्रतिसंस्मरन् ॥ ८६॥
विसंज्ञं पतितं दृष्ट्वा सौमित्रिं राक्षसेश्वरः ।
अवतीर्य रथात् तूर्णमभिदुद्राव लक्ष्मणं ॥ ८७॥
ततो दानवदर्पघ्नः सौमित्रिं देवकण्टकः ।
विष्णोरचिन्त्यो यो भागो मानुषं देहमास्थितः ॥ ८८॥

संपीडयित्वा बाहुभ्यामप्रभुर्लङ्घने ऽभवत् ।
तं गृहीत्वा स बाहुभ्यां चिन्तयामास रावणः ॥ ८९ ॥
हिमवान् मन्दरो मेरुः कैलासो वा महागिरिः ।
शक्यो भुजाभ्यामुद्धोतुं न त्वयं राघवानुजः ॥ ९० ॥
लक्ष्मणं तु ततः श्रीमान् जिघृक्षन्तं स मारुतिः ।
आजघानोरसि व्यूढे वज्रकल्पेन मुष्टिना ॥ ९१ ॥
तेन मुष्टिप्रहारेण रावणो भीमविक्रमः ।
जानुभ्यामगमद्भूमिं मुमोह च चचाल च ॥ ९२ ॥
विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमं ।
ऋषयो दानवाश्चैव नेदुर्देवाश्च हर्षिताः ॥ ९३ ॥
हनूमानपि तेजस्वी लक्ष्मणं शुभलक्षणं ।
आनयद्राघवाभ्यासे बाहुभ्यां परिगृह्य वै ॥ ९४ ॥
वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः ।
शत्रूणामप्रकम्प्यो ऽपि लघुत्वमगमत् कपेः ॥ ९५ ॥
तं समुत्सृज्य सा शक्तिः सौमित्रिं युद्धदुर्मदं ।
रावणस्य रथे तस्मिन् स्वस्थानं प्रत्यपद्यत ॥ ९६ ॥
रावणो ऽपि महातेजाः प्राप्य संज्ञां महाहवे ।
आददे निशितान् बाणान् जग्राह च महद्धनुः ॥ ९७ ॥
आश्वास्य च महात्मा च लक्ष्मणः शत्रुसूदनः ।
विष्णोर्भागमचिन्त्यं स स्मृत्वा सुस्थतरो ऽभवत् ॥ ९८ ॥

एतस्मिन्नन्तरे वीरो दृष्ट्वा रावणविक्रमं ।
लक्ष्मणं च समाश्वस्तं सैन्यं च मुदितं पुनः ॥ ९९ ॥
निपातितमहावीरां वानराणां महाचमूं ।
दृष्ट्वा रामो रणे तस्मिन्नभिदुद्राव रावणं ॥ १०० ॥
अथैनमुपसंगम्य हनूमान् वाक्यमब्रवीत् ।
मम पृष्ठं समारुह्य जहीमं दुष्टरावणं ॥ १०१ ॥
एवमुक्तस्तथेत्युक्त्वा समारूढः प्लवङ्गमं ।
राघवः समरामर्षी हन्तुकामो निशाचरं ॥ १०२ ॥
ऐरावतमिवेन्द्रः स हनूमन्तं समास्थितः ।
रथस्थं रावणं संख्ये ददर्श मनुजाधिपः ॥ १०३ ॥
तमालोक्य महातेजाः प्रदुद्रावाथ राघवः ।
विरोचनमिव क्रुद्धो विष्णुरभ्युद्यतायुधः ॥ १०४ ॥
ज्याशब्दमथ कुर्वंश्च वज्रनिष्पेषनिःस्वनं ।
गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह ॥ १०५ ॥
तिष्ठ तिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशं ।
कुत्र राक्षसशार्दूल गतो मोक्षमवाप्स्यसि ॥ १०६ ॥

यदीन्द्रवैवस्वतभास्करान् वा
स्वयंभुवैश्वानरशङ्करान् वा ।
गमिष्यसि त्वं दश वा दिशो वा
तथापि मे नाद्य विमोक्ष्यसे त्वं ॥ १०७ ॥

यश्चैष शक्त्या निहतस्त्वयाद्य
कृच्छ्राद्विषादं सहसाभ्युपेतः ।
स एव रक्षोगणमृत्युभूतः
प्रधक्ष्यते वै तव सैन्यकक्षं ॥ १०८ ॥
राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाकपिं ।
वायुपुत्रं महात्मानं वहन्तं राघवं रणे ॥ १०९ ॥
रोषेण महताविष्टः पूर्ववैरमनुस्मरन् ।
आजघान शरैस्तीक्ष्णैः कालानलशिखोपमैः ॥ ११० ॥
राघवं वहतस्तस्य ताडितस्यापि सायकैः ।
स्वभावतेजोयुक्तस्य भूयस्तेजो व्यवर्धत ॥ १११ ॥
ततो रामो महातेजा रावणेन कृतव्रणं ।
दृष्ट्वा प्लवगशार्दूलं क्रोधस्य वशमभ्यगात् ॥ ११२ ॥
तस्याभिसंगम्य रथं सचक्रं
साश्वं ध्वजं चाथ महापताकं ।
छत्त्रं सितं तस्य सरुक्मदण्डं
रामः प्रचिच्छेद शरैः शिताग्रैः ॥ ११३ ॥
अथेन्द्रशत्रुं तरसा जघान
बाणेन वज्राशनिसंनिभेन ।
भुजान्तरे व्यूढसुजातरूपे
वज्री यथेन्द्रो युधि दानवेन्द्रं ॥ ११४ ॥

यो वज्रपाताशनिसंनिपातैर्
न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो व्यथार्त्तश्
चचाल चापं च मुमोच दीनः ॥११५॥

स विह्वलं तं च समीक्ष्य रामः
समाददे दीप्तमथार्द्धचन्द्रं ।
तेनार्कवर्णं सहसा किरीटं
चिच्छेद रक्षोऽधिपतेर्महात्मा ॥११६॥

तं निर्विषाशीविषसंनिकाशं
शान्तार्चिषं सूर्यमिवाप्रकाशं ।
गतश्रियं कृत्तकिरीटमौलिं
प्रत्याह रामो युधि राक्षसेन्द्रं ॥११७॥

कृतं त्वया कर्म महत् सुदुष्करं
हतप्रवीरश्च कृतस्त्वयाहं ।
तस्मात् परिश्रान्तमिव प्रपश्यन्
न त्वां शरैर्मृत्युपथं नयामि ॥११८॥

स एवमुक्तो हतमानदर्पो
निकृत्तचापो निहताश्वसूतः ।
शोकार्दितः कृत्तमहाकिरीटो
विवेश लङ्कां सहसा गतश्रीः ॥११९॥

तस्मिन् प्रविष्टे रजनीचरेशे
 महाबले दानवदेवशत्रौ ।
हरीन् विशल्यान् सह लक्ष्मणेन
 चकार रामः परमाहवाग्रे ॥१२०॥

तस्मिन् प्रभग्ने त्रिदशेन्द्रशत्रौ
 सुरासुरा भूतगणा दिशश्च ।
ससागराः सर्षिमहोरगाश्च
 ननन्दिरे देवगणाश्च सर्वे ॥१२१॥

इत्यार्षे रामायणे युद्धकाण्डे रावणभङ्गो नाम
षट्त्रिंशः सर्गः ॥

## XXXVII.

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः ।
भग्नदर्पस्ततो राजा बभूव व्यथितेन्द्रियः ॥ १ ॥
मातङ्ग इव सिंहेन गरुडेनेव पन्नगः ।
अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ २ ॥
ब्रह्मदण्डप्रकाशानां विद्युत्सदृशवर्चसां ।
स्मरन् राघवबाणानां विव्यथे राक्षसाधिपः ॥ ३ ॥
स काञ्चनमयं दिव्यमाश्रित्य परमासनं ।
निरीक्षमाणः सचिवान् रावणो वाक्यमब्रवीत् ॥ ४ ॥
सर्वं तत् खलु मोघं मे यत् कृतं परमं तपः ।
यद्देवेन्द्रसमानोऽहं मानुषेण पराजितः ॥ ५ ॥
पुराणं ब्रह्मण इदं वचनं समुपस्थितं ।
मानुषेभ्यो विजानीहि भयमित्येव तत् तथा ॥ ६ ॥
देवदानवगन्धर्वयक्षराक्षसपन्नगैः ।
अबध्यत्वं मया प्राप्तं परिभूतास्तु मानुषाः ॥ ७ ॥
यच्चापि हिमवच्छृङ्गे क्रुद्धो नन्दिरभाषत ।
तस्यैव तुल्यवदनैरुपरुद्धा हि मे पुरी ॥ ८ ॥
तयोर्महात्मनोर्वाक्यं नान्यथा याति साम्प्रतं ।
सत्यं विभीषणेनोक्तं यच्च वाक्यं महात्मना ॥ ९ ॥

तदिदं मामनुप्राप्तं विभीषणवचः शुभं ।
तस्य प्रयुक्तवाक्यस्य नान्यथा याति साम्प्रतं ॥१०॥
मया दर्पबलोत्सेकादन्यथा चिन्तितं तदा ।
तदन्यथा परिगतं मम दौरात्म्यचेष्टितैः ॥११॥
नातिभारोऽस्ति दैवस्य पौरुषे नियता मतिः ।
दैवपौरुषसंयोगात् सिद्धिर्नित्यमवाप्यते ॥१२॥
सन्नद्धा भवन्तो रक्षन्तु नगरीं वै समन्ततः ।
राक्षसाश्चापि तिष्ठन्तु वप्रगोपुरमूर्द्धसु ॥१३॥
स चाप्रतिमसत्त्वोऽद्य देवदानवदर्पहा ।
ब्रह्मशापाभिभूतश्च कुम्भकर्णः प्रबोध्यतां ॥१४॥
समरे जितमात्मानं प्रहस्तं च तथा हतं ।
ज्ञात्वा रक्षोबलं भीममादिदेश महाबलः ॥१५॥
द्वारेषु यत्नः क्रियतां प्राकारश्चाभिरुह्यतां ।
निद्रावशसमाविष्टः कुम्भकर्णः प्रबोध्यतां ॥१६॥
स हि संख्ये महाबाहुः ककुदं सर्वरक्षसां ।
वानरान् राजपुत्रौ च क्षिप्रमेव हनिष्यति ॥१७॥
रामबाणनिरस्तानां संग्रामेऽस्मिन् सुदारुणे ।
अपनेष्यति नः क्षिप्रं कुम्भकर्णो महद्भयं ॥१८॥
नव सप्त दशाष्टौ च मासान् स्वपिति राक्षसः ।
तं विबोधयत क्षिप्रं कुम्भकर्णं महाबलं ॥१९॥

कुम्भकर्णः सदा शेते मूढो ग्राम्यसुखे रतः ।
किं करिष्याम्यहं तेन शक्रतुल्यबलेन वै ॥ २० ॥
ईदृशे संभ्रमे घोरे यो न साह्याय कल्पते ।
तस्य तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः ॥ २१ ॥
जग्मुः परमसंभ्रान्ताः कुम्भकर्णनिवेशनं ।
ते तथा तु समादिष्टा राक्षसा भीमविक्रमाः ॥ २२ ॥
गन्धं माल्यं तथा पानं भक्ष्यं चादाय सत्वराः ।
आसाद्य भवनं तस्य विविशुस्ते नृपाज्ञया ॥ २३ ॥
ते प्रविश्य महाद्वारं सर्वतो योजनायतं ।
कुम्भकर्णगृहं रम्यं पुण्यगन्धवहं शुचि ॥ २४ ॥
बिबोधयिषवः सर्वे तस्थुस्तस्य महागृहे ।
तस्य निःश्वासवातेन कुम्भकर्णस्य रक्षसः ॥ २५ ॥
राक्षसा बलवन्तस्ते स्थातुं नाशक्नुवंस्तदा ।
कुम्भकर्णस्य निःश्वासादवधूता महाबलाः ॥ २६ ॥
यतमानास्तु कृच्छ्रेण पुनस्ते विविशुर्गृहं ।
ते प्रविश्य तदा रम्यं गृहं काञ्चनकुट्टिमं ॥ २७ ॥
ददृशुर्नैर्ऋतव्याघ्रं शयानं भीमदर्शनं ।
ऊर्द्ध्वरोमाञ्चिततनुं श्वसन्तमिव पन्नगं ॥ २८ ॥
वित्रासयन्तं निःश्वासैः शयानं पिशिताशनं ।
भीमप्राणबलं भीमं पातालविपुलाननं ॥ २९ ॥

ते तु तं विपुलं दृष्ट्वा विकीर्णमिव पर्वतं ।
कुम्भकर्णं महानिद्रं प्रसुप्तं बोधयिष्णवः ॥ ३० ॥
ततः परिहिता गाढं राक्षसा भीमविक्रमाः ।
नीलाञ्जनचयाकारकुम्भकर्णसमीपगाः ॥ ३१ ॥
तेऽथ चक्रुर्महात्मानः कुम्भकर्णाग्रतः स्थिताः ।
भक्ष्याणां मेरुसंकाशं राशिं परमतर्पणं ॥ ३२ ॥
मृगाणां महिषाणां च वराहाणां च संचयान् ।
चक्रुर्नैर्ऋतशार्दूला राशिमन्नस्य चाद्भुतं ॥ ३३ ॥
ततः शोणितकुम्भांश्च मद्यानि विविधानि च ।
पुरस्तात् कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः ॥ ३४ ॥
लिलिपुश्च परार्ध्येन चन्दनेन सुगन्धिना ।
वस्त्रैः प्रच्छादयामासुर्माल्यैर्गन्धैः सुगन्धिभिः ॥ ३५ ॥
धूपं सुगन्धं ससृजुस्तुष्टुवुश्च परंतपं ।
कुम्भकर्णं महानिद्रं बोधनायोपचक्रमुः ॥ ३६ ॥
जलदा इव ते नेदुर्यातुधानास्ततस्ततः ।
विव्यधुश्चास्य गात्राणि घ्नन्तोऽभिव्यनदंस्तदा ॥ ३७ ॥
अथ खिन्ना न शेकुस्ते तत्प्रबोधाय राक्षसाः ।
ततो गुरुतरं यत्नं चक्रुस्ते प्रतिबोधने ॥ ३८ ॥
शङ्खांश्च पूरयामासुः शशाङ्कसदृशप्रभान् ।
तुमुलं युगपच्चापि नेदुर्भृशममर्षिताः ॥ ३९ ॥

ते तदास्फोटयामासुः क्ष्वेलन्तश्च समन्ततः ।
कुम्भकर्णविबोधार्थं चक्रुश्च विपुलं स्वनं ॥ ४० ॥

उष्ट्रान् हयान् खरान् नागान् जघ्नुर्दण्डकशाङ्कुशैः ।
भेरीशङ्खमृदङ्गांश्च सर्वप्राणैरवादयन् ॥ ४१ ॥

निजघ्नुश्चास्य गात्राणि महद्भिः कूटमुद्गरैः ।
पट्टिशैर्मुषलैश्चैव सर्वप्राणसमुद्यतैः ॥ ४२ ॥

तं शङ्खभेरीपटहप्रणादम्
आक्ष्वेडितास्फोटितसिंहनादं ।
दिशो द्रवन्तं त्रिदिवं भ्रमन्तं
श्रुत्वा विहङ्गाः सहसा निपेतुः ॥ ४३ ॥

यदा तु तैः संनिनदैर्महात्मा
न कुम्भकर्णो बुबुधे प्रसुप्तः ।
तदा भुशुण्डीर्मुषलानि शूलान्
रक्षोगणास्ते जगृहुर्गदाश्च ॥ ४४ ॥

तं शैलशृङ्गैर्मुषलैर्गदाभिर्
वृक्षैस्तलैर्मुद्गरमुष्टिभिश्च ।
सुखप्रसुप्तं भुवि कुम्भकर्णं
रक्षांस्युदग्राणि ततो निजघ्नुः ॥ ४५ ॥

तेन शब्देन महता लङ्का सा परिपूरिता ।
सपर्वतवना सर्वा न च स प्रत्यबुध्यत ॥ ४६ ॥

ततः सहस्रं भेरीणां युगपत् समवादयन् ।
मृष्टकाञ्चनकोशानां समासक्तं समन्ततः ॥४७॥
एवमप्यतिनिद्रस्तु यदा नैव व्यबुध्यत ।
शापवश्यस्तत्र सुप्तस्तदा क्रुद्धा निशाचराः ॥४८॥
ते तु क्रोधसमाविष्टाः सर्वे भीमपराक्रमाः ।
तद्रक्षो बोधयिष्यन्तश्चक्रुरन्यं पराक्रमं ॥४९॥
अन्ये भेरीः समाजघ्नुरन्ये चक्रुर्महास्वनं ।
केशान् लुलुञ्चुरन्ये च कर्णावन्ये दशन्ति च ॥५०॥
अन्ये तु बलिनस्तस्य महतः कूटमुद्गरान् ।
मूर्ध्नि वक्षसि गात्रेषु निर्दयाः समपातयन् ॥५१॥
मृदङ्गभेरीपणवान् शङ्खान् कुम्भमुखांस्तथा ।
दश राक्षससाहस्रा जघ्नुर्भीमपराक्रमाः ॥५२॥
राक्षसानां सहस्रं तु शरीरे पर्यधावत ।
कुम्भकर्णः प्रसुप्तोऽसौ न तदापि व्यबुध्यत ॥५३॥
रज्जुजालावनद्धाभिर्घातनीभिश्च सर्वतः ।
बध्यमानो महाकायो न प्राबुध्यत राक्षसः ॥५४॥
ततो गजसहस्रं तु शरीरे संप्रधावति ।
स मृद्यमानोऽपि तथा न चाबुध्यत राक्षसः ॥५५॥
ते राक्षसास्ततः खिन्नाश्चक्रुरन्यं पराक्रमं ।
प्रमदाश्चाह्वयामासुः सुमृष्टमणिकुण्डलाः ॥५६॥

नागराक्षसकन्याश्च तथा गन्धर्वयोषितः ।
मनुजानां दुहितरः किन्नराणां तथैव च ॥५७॥
प्रविष्टा भवनं मुख्यं तप्तकाञ्चनकुट्टिमं ।
ताः स्त्रियो गीतवादित्रैः कुम्भकर्णाग्रतः स्थिताः ॥५८॥
दिव्या दिव्यैरलङ्कारैर्दिव्यधूपेन धूपिताः ।
दिव्यगन्धाः सुगन्धाश्च क्रीडन्ति भवनोत्तमे ॥५९॥
ताश्च सर्वा विशालाक्ष्यः सर्वाः काञ्चनसुप्रभाः ।
सर्वा रूपगुणोपेताः सर्वा भूषणभूषिताः ॥६०॥
सर्वा विस्तीर्णजघनाः सर्वाः पीनपयोधराः ।
सर्वाः कमलपत्राक्ष्यो नीलकुञ्चितमूर्द्धजाः ॥६१॥
तासां नूपुरशब्देन मेखलानां रवेण च ।
गीतवादित्रशब्देन स्वरेण मधुरेण च ॥६२॥
दिव्येन चैव गन्धेन स्पर्शेन विविधेन च ।
कुम्भकर्णस्तदा बुद्धः स्पर्शं परममन्यत ॥६३॥

महाभुजौ वासुकितक्षकाभौ
निक्षिप्य वृत्तौ गिरिशृङ्गसारौ ।
विवृत्य वक्त्रं बडवामुखाभं
निशाचरेन्द्रो विकृतं व्यजृम्भत् ॥६४॥

विजृम्भमाणोऽतिबलः प्रत्यबुध्यत राक्षसः ।
निःश्वासश्चास्य संजज्ञे संवर्त्त इव मारुतः ॥६५॥

तस्य विजृम्भमाणस्य वक्त्रं पातालसंनिभं ।
ददृशे मेरुशृङ्गाग्रे दिवाकर इवोदितः ॥ ६६ ॥
दीप्तताम्रास्यजिह्वस्य विद्युत्समप्रकाशिनी ।
भीमे ददृशतुर्नेत्रे दीप्ताविव महाग्रहौ ॥ ६७ ॥
रूपमुत्तिष्ठतस्तस्य कुम्भकर्णस्य संबभौ ।
तपान्ते सबलाकस्य मेघस्येव विवर्षिषोः ॥ ६८ ॥
तद्विनिद्रं ततो रक्षः कषायीकृतलोचनं ।
वितरत् सर्वतो दृष्टिं तानुवाच निशाचरान् ॥ ६९ ॥
किं निमित्तमहं सुप्तो भवद्भिः प्रतिबोधितः ।
कच्चिद्राक्षसराजस्य न खल्वागतमप्रियं ॥ ७० ॥
न ह्यल्पकारणे सुप्तं बोधयिष्यति मादृशं ।
तदिहाख्यात तत्त्वेन मत्प्रबोधनकारणं ॥ ७१ ॥
ते तमुत्थाप्य भीमाक्षं भीमरूपपराक्रमं ।
राक्षसास्त्वरिता जग्मुर्दशग्रीवनिवेशनं ॥ ७२ ॥
ऊचुर्बद्धाञ्जलिपुटाः सर्व एव निशाचराः ।
प्रबुद्धः कुम्भकर्णोऽसौ भ्राता ते राक्षसाधिप ॥ ७३ ॥
किंवा तेनैव निर्यातु द्रक्ष्यस्येनमथागतं ।
रावणस्त्वब्रवीद्धृष्टो राक्षसांस्तानुपागतान् ॥ ७४ ॥
द्रष्टुमेनमिहेच्छामि यथान्यायं च पूजितं ।
तथेत्युक्त्वा तु ते सर्वे पुनरागत्य राक्षसाः ॥ ७५ ॥

कुम्भकर्णमिदं वाक्यमूचू रावणचोदिताः ।
द्रष्टुमिच्छति त्वां राजा सर्वराक्षसपुङ्गवः ॥ ७६ ॥
गमने क्रियतां बुद्धिर्भ्रातरं स्वं प्रहर्षय ।
कुम्भकर्णस्तु दुर्धर्षो भ्रातुराज्ञाय शासनं ॥ ७७ ॥
तथेत्युक्त्वा महावीर्यः शयनादुत्पपात ह ।
प्रक्षाल्य वदनं हृष्टः स्नातः परमभूषितः ॥ ७८ ॥
पिपासुस्त्वरयामास पानं बलसमीरणं ।
ततस्तु त्वरितास्तत्र राक्षसा रावणाज्ञया ॥ ७९ ॥
मद्यं भक्ष्यांश्च विविधान् क्षिप्रं ते समुपानयन् ।
प्रहर्षणार्थं मनसो दीप्तास्यो दीप्तलोचनः ॥ ८० ॥
महिषाणां वराहाणां मांसं मद्यं च संस्कृतं ।
आददे क्षुधितः क्षिप्रं शोणितं तृषितोऽपिवत् ॥ ८१ ॥
मेदः कुम्भांश्च मद्यं च पपौ शक्ररिपुस्तदा ।
भुक्त्वा चान्नं बहुविधं किञ्चिद्हृष्टमना भवत् ॥ ८२ ॥
ततस्तृप्त इति ज्ञात्वा समीयुस्ते निशाचराः ।
शिरोभिश्च प्रणम्यैनं सर्वतः पर्यवारयन् ॥ ८३ ॥
स सर्वान् सान्त्वयामास नैर्ऋतान् नैर्ऋतर्षभः ।
बोधनाद्विस्मितश्चापि राक्षसानिदमब्रवीत् ॥ ८४ ॥
किमर्थमहमागम्य भवद्भिः प्रतिबोधितः ।
कच्चिच्च कुशलं राज्ञो भयं वो नेह विद्यत ॥ ८५ ॥

अथवा ध्रुवमन्येभ्यो भयं परमुपस्थितं ।
यदर्थं त्वरितैः सर्वैर्भवद्भिः प्रतिबोधितः ॥ ८६ ॥
अद्य राक्षसराजस्य भयमुत्पाटयाम्यहं ।
घातयिष्ये महेन्द्रं वै शातयिष्यामि वा यमं ॥ ८७ ॥
एवं ब्रुवाणं संक्रुद्धं कुम्भकर्णमरिंदमं ।
यूपाक्षः सचिवो राज्ञः कृताञ्जलिरभाषत ॥ ८८ ॥
न नो देवकृतं किंचिद्भयमस्ति निशाचर ।
मानुषाद्धि भयं राज्ञस्तुमुलं समुपस्थितं ॥ ८९ ॥
न दैत्यदानवेभ्यो वा भयमस्ति हि तादृशं ।
यादृशं मानुषाद्राज्ञो भयं घोरं समुत्थितं ॥ ९० ॥
वानरैः पर्वताकारैर्लङ्का संपरिवारिता ।
सीताहरणसंतप्ताद्रामान्नः सुमहद्भयं ॥ ९१ ॥
एकेन वानरेणेयं पूर्वं दग्धा महापुरी ।
अक्षः कुमारो निहतो मन्त्रिपुत्राः सकिङ्कराः ॥ ९२ ॥
स्वयं रक्षोऽधिपश्चासौ पौलस्त्यो देवकण्टकः ।
मृतकल्पो रणे मुक्तो रामेणामिततेजसा ॥ ९३ ॥
यन्न देवैः कृतं राज्ञो न दैत्यैर्न च दानवैः ।
कृतं तदिह रामेण विमुक्तः प्राणसंशयात् ॥ ९४ ॥
स यूपाक्षवचः श्रुत्वा भ्रातुश्च भयमागतं ।
कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥ ९५ ॥

सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणं ।
राघवं च रणे हत्वा पश्चाद्द्रक्ष्यामि रावणं ॥ ९६ ॥
राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः ।
रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितं ॥ ९७ ॥
तस्याथ वाक्यं ब्रुवतो निशम्य
सगर्वितं रोषविवृद्धघोषं ।
महोदरो रावणयोधमुख्यः
कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ९८ ॥
पश्चादपि महेष्वास शत्रून् युधि विजेष्यसि ।
त्वद्दर्शनपरं तावद्भ्रातरं द्रष्टुमर्हसि ॥ ९९ ॥
महोदरवचः श्रुत्वा राक्षसैः परिवारितः ।
कुम्भकर्णो महातेजाः संप्रतस्थे महाबलः ॥ १०० ॥
सरोषश्चोत्कटो मत्तः सोऽतिकायश्च राक्षसः ।
व्यक्रामत् तु पदन्यासैः कम्पयन्निव मेदिनीं ॥ १०१ ॥
तमद्रिशृङ्गप्रतिमं किरीटिनं
स्पृशन्तमादित्यमिवात्मतेजसा ।
वनौकसः प्रेक्ष्य विवृद्धमद्भुतं
भयार्दिता दुद्रुविरे समन्ततः ॥ १०२ ॥
इत्यार्षे रामायणे युद्धकाण्डे कुम्भकर्णप्रबोधो नाम
सप्तत्रिंशः सर्गः ॥

# युद्धकाण्डं

## XXXVIII.

ततो रामो महातेजा धनुरादाय वीर्यवान् ।
किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ १ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं पर्वताकारदर्शनं ।
क्रममाणमिवाकाशं पुरा नारायणं प्रभुं ॥ २ ॥
शूलहस्तं महारौद्रं तीक्ष्णदंष्ट्रं भयावहं ।
मेघस्तनितनिर्घोषं दीप्तजिह्वं महाभुजं ॥ ३ ॥
यं दृष्ट्वा वानराः सर्वे विद्रवन्ति दिशो दश ।
सविस्मितमिदं रामो विभीषणमुवाच ह ॥ ४ ॥
कोऽसौ पर्वतसंकाशः किरीटी हरिलोचनः ।
लङ्कायां दृश्यते वीरः सविद्युदिव तोयदः ॥ ५ ॥
पृथिव्यां केतुभूतोऽसौ महामेघ इवोत्थितः ।
यं दृष्ट्वा वानराः सर्वे विद्रवन्ति भयार्दिताः ॥ ६ ॥
आचक्ष्व मे महान् कोऽसौ राक्षसो यदिवासुरः ।
न मयैवंविधं भूतं दृष्टपूर्वं कदाचन ॥ ७ ॥
स पृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा ।
विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत् ॥ ८ ॥
येन वैवस्वतो युद्धे वासवश्च पराजितः ।
एष विश्रवसः पुत्रः कुम्भकर्णो निशाचरः ॥ ९ ॥

अनेन देवा युधि दानवाश्च
यक्षा भुजङ्गाः पिशिताशनाश्च ।
गन्धर्वविद्याधरगुह्यकाश्च
सहस्रशो राघव संप्रभग्नाः ॥ १० ॥

शूलपाणिनमायान्तं कुम्भकर्णं महाबलं ।
हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः ॥ ११ ॥

प्रकृत्या राम तेजस्वी कुम्भकर्णो महाबलः ।
अन्येषां राक्षसेन्द्राणां वरदानकृतं बलं ॥ १२ ॥

अस्यैव तु महाबाहो निजमेवौरसं बलं ।
एतेन जातमात्रेण क्षुधितेन महात्मना ॥ १३ ॥

संभक्षिताश्चाप्सरसो महेन्द्रानुचरा दश ।
भक्षितानि सहस्राणि सत्त्वानां सुबहून्यपि ॥ १४ ॥

सततं भक्ष्यमाणास्तु प्रजा भयनिपीडिताः ।
यान्ति स्म शरणं शक्रं तं चाप्यर्थं न्यवेदयन् ॥ १५ ॥

स कुम्भकर्णं कुपितो महात्मा
जघान वज्रेण शितेन शक्रः ।
स शक्रवज्राभिहतो महात्मा
चचाल कोपाच्च भृशं ननाद ॥ १६ ॥

तस्य नानद्यमानस्य कुम्भकर्णस्य रक्षसः ।
श्रुत्वा स्वभाववित्रस्ताः प्रजा भूयोऽपि तत्रसुः ॥ १७ ॥

ततः कोपाद्विवृत्तास्यः कुम्भकर्णः सुदुर्जयः ।
निकृष्यैरावताद्दन्तं जघानोरसि वासवं ॥ १८ ॥
कुम्भकर्णप्रहारार्त्तः स विह्वलित वासवः ।
ततो विषेदुः सहसा देवा ब्रह्मर्षिसत्तमाः ॥ १९ ॥
प्रजाभिः सह शक्रस्तु ययौ स्थानं स्वयम्भुवः ।
कुम्भकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः ॥ २० ॥
प्रजानां भक्षणं चैव देवानां धर्षणं तथा ।
आश्रमध्वंसनं चापि परस्त्रीहरणानि च ॥ २१ ॥
एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः ।
अचिरेणैव कालेन शून्या भूमिर्भविष्यति ॥ २२ ॥
वासवस्य वचः श्रुत्वा सर्वलोकपितामहः ।
राक्षसं चाह्वयामास कुम्भकर्णं ददर्श च ॥ २३ ॥
अथासौ तं समीक्ष्यैव विस्मितोऽभूत् प्रजापतिः ।
कुम्भकर्णं महावीर्यं स्वयम्भूरिदमब्रवीत् ॥ २४ ॥
ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः ।
यस्मात् त्वमीदृशः शूरो लोकं हिंसितुमुद्यतः ॥ २५ ॥
तस्मात् त्वमद्यप्रभृति मृतकल्पः शयिष्यसि ।
ब्रह्मशापाभिभूतश्च निपपात स राक्षसः ॥ २६ ॥
भ्रातरं पतितं दृष्ट्वा निद्रया समभिप्लुतं ।
ततः परमसंभ्रान्तो रावणो वाक्यमब्रवीत् ॥ २७ ॥

न कृत्वा काञ्चनो वृक्षः फलकाले निपात्यते ।
न नप्तारं स्वयं न्याय्यं शप्तुमेवं प्रजापते ॥ २८ ॥
न त्वार्यवचनं मिथ्या स्वप्स्यत्येष न संशयः ।
कालश्च क्रियतामस्य स्वप्ने जागरणे तथा ॥ २९ ॥
रावणस्य वचः श्रुत्वा स्वयम्भूरिदमब्रवीत् ।
स्वप्स्यत्येष हि षण् मासानेकाहं जागरिष्यति ॥ ३० ॥
स एष वीर एकाहं क्षुधितो विचरन् भुवि ।
आत्मतुल्यं महत् कर्म आहारं च करिष्यति ॥ ३१ ॥
व्यसनस्थेन तेनायं कुम्भकर्णः प्रबोधितः ।
त्वत्पराक्रमभीतश्च राज्ञा संप्रति रावणः ॥ ३२ ॥
स एष क्षुधितो वीरो निर्गमिष्यत्यसंशयं ।
वानरान् भृशसंक्रुद्धो भक्षयिष्यति वीर्यवान् ॥ ३३ ॥
कुम्भकर्णं समीक्ष्यैव हरयो विप्रदुद्रुवुः ।
कथमेनं रणे क्रुद्धं वारयिष्यन्ति वानराः ॥ ३४ ॥
उच्यन्तां वानराः सर्वे यन्त्रमेतत् समुत्थितं ।
इति विज्ञाय हरयो भविष्यन्तीह निर्भयाः ॥ ३५ ॥
विभीषणस्य तच्छ्रुत्वा हेतुमद्वाहकं वचः ।
उवाच राघवो वाक्यं नीलं सेनापतिं तदा ॥ ३६ ॥
गच्छ सैन्यानि सर्वाणि व्यूह्य तिष्ठस्व पावके ।
द्वाराणि संक्रमांश्चैव लङ्काया यूथपैः सह ॥ ३७ ॥

शैलशृङ्गाणि वृक्षांश्च शिलाश्चादाय सर्वशः ।
भवन्तु सायुधाः सर्वे वानराः शैलयोधिनः ॥ ३८ ॥
राघवेण समादिष्टो नीलो हरिचमूपतिः ।
शशास वानरानीकं यथावत् कपिकुञ्जरः ॥ ३९ ॥
ऋषभः शरभो नीलो हनूमानङ्गदो नलः ।
शैलशृङ्गाणि शैलाभा गृहीत्वा द्वारमभ्ययुः ॥ ४० ॥

ततो हरीणां तदनीकमुग्रं
रराज भीमोद्यतवृक्षशैलं ।
गिरेः समीपानुगतं यथैव
महास्वनं तोयदजालमुग्रं ॥ ४१ ॥

इत्यार्षे रामायणे युद्धकाण्डे कुम्भकर्णदर्शनं नाम
अष्टात्रिंशः सर्गः ॥

XXXIX.

स तु राक्षसशार्दूलो निद्रामदसमाकुलः ।
राजमार्गं श्रिया जुष्टं ययौ विपुलविक्रमः ॥ १ ॥
राक्षसानां सहस्रैस्तु वृतः परपुरंजयः ।
गृहेभ्यः पुष्पवर्षैस्तु कीर्यमाणस्तदा ययौ ॥ २ ॥
स हेमजालविततं भानुभास्करदर्शनं ।
ददर्श विपुलं रम्यं राक्षसेन्द्रनिवेशनं ॥ ३ ॥
अभिगम्य गृहं भ्रातुः कक्ष्यामपि विगाह्य च ।
ददर्शासीनमुद्विग्नं विमाने पुष्पके गुरुं ॥ ४ ॥
अथ दृष्ट्वा दशग्रीवः कुम्भकर्णमुपस्थितं ।
किञ्चिदुत्थाय संहृष्टः संनिकर्षमुपानयत् ॥ ५ ॥
अथासीनस्य पर्यङ्के कुम्भकर्णो महाबलः ।
संजग्राह तदा भ्रातुः पादौ राक्षसपुङ्गवः ॥ ६ ॥
उत्थाय चैनं मुदितो रावणः परिषस्वजे ।
स भ्रात्रा संपरिष्वक्तो यथावच्चाभिपूजितः ॥ ७ ॥
कुम्भकर्णस्ततो दिव्यं प्रपेदे परमासनं ।
स तदासनमास्थाय कुम्भकर्णो महाबलः ॥ ८ ॥
संरक्तनयनः कोपाद्रावणं वाक्यमब्रवीत् ।
किमर्थमहमादृत्य त्वया राजन् प्रबोधितः ॥ ९ ॥

शंस कस्माद्भयं तेऽस्ति कोऽद्य प्रेतो भविष्यति ।
यदीन्द्रात् ते भयं राजन् यदिवा सलिलेशतः ॥ १० ॥
शतक्रतुं विजेष्यामि पास्यामि वरुणालयं ।
पर्वतांश्चूर्णयिष्यामि दारयिष्यामि मेदिनीं ॥ ११ ॥
देवान् विद्रावयिष्यामि त्रैलोक्ये पार्थिवो भव ।
दीर्घकालं प्रसुप्तस्य कुम्भकर्णस्य विक्रमं ॥ १२ ॥
अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्वशः ।
न त्विदं त्रिदिवं सर्वमाहारे पूर्यते मम ॥ १३ ॥
सोऽद्य तृप्तो भविष्यामि भक्षयित्वा सुरासुरान् ।
कुम्भकर्णवचः श्रुत्वा जहृषे रावणस्तदा ॥ १४ ॥
पुनर्जातमिवात्मानं मेने स रजनीचरः ।
कुम्भकर्णबलाभिज्ञो ज्ञात्वा तस्य पराक्रमं ॥ १५ ॥
बभूव मुदितो राजा शशाङ्क इव विग्रहः ।
तमीषत् परिवृत्ताभ्यां नेत्राभ्यां कुपितोऽब्रवीत् ॥ १६ ॥
भ्रातरं रावणः प्रेक्ष्य कुम्भकर्णमुपस्थितं ।
अद्य ते सुमहान् कालः शयानस्य निशाचर ॥ १७ ॥
सुखी त्वं हि न जानीषे मम रामकृतं भयं ।
न देवासुरदैत्येभ्यो गन्धर्वेभ्यः कदाचन ॥ १८ ॥
भूतपूर्वं भयं तादृग् यादृशं मानुषाद्भयं ।
पुरा त्वं नाभिजानीषे यथा सीता मया हृता ॥ १९ ॥

सीताहरणसंतप्ताद्रामान्नः सुमहद्भयं ।
एष दाशरथी रामः सुग्रीवसहितो बली ॥ २० ॥
समुद्रं सबलस्तीर्त्वा मूलं नःपरिकृन्तति ।
हत्वावेत्तस्व लङ्कायां द्वारोपवनमेव च ॥ २१ ॥
सेतुना समुपागम्य वानरैः कपिलीकृतं ।
ये च मे राक्षसा मुख्या हतास्ते युधि वानरैः ॥ २२ ॥
वानराणां क्षयं युद्धे न पश्यामि कदाचन ।
नगरं शत्रुणा रुद्धं हतो युद्धे सुहृज्जनः ॥ २३ ॥
कोषश्च क्षयितः सर्वः सत्वमभ्युपपद्यतां ।
यदेतद्भयमुत्पन्नं त्रासनं च महाबल ॥ २४ ॥
तस्माद्भयविनाशार्थं मया संबोधितो भवान् ।
त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषितां ॥ २५ ॥
भ्रातुरर्थे महाबाहो कुरु साहाय्यमुत्तमं ।
मयवं नोक्तपूर्वं हि कश्चिद्भ्रातः परंतप ॥ २६ ॥
त्वय्यस्ति तु मम स्नेहः परा संभावना च मे ।
देवासुरविमर्देषु बहुशो राक्षसर्षभ ॥ २७ ॥
त्वया देवाः प्रतिव्यूढा निर्जिताश्चासुरा युधि
तव देवैरनाधृष्यं वीर्यं भीमपराक्रम ॥ २८ ॥
न हि ते सर्वभूतेषु सदृशो विद्यते भुवि ।
स त्वं मया समादिष्टो वीर भीमपराक्रम ॥ २९ ॥

निर्गच्छ शूलमादाय पाशहस्त इवान्तकः ।
वानरान् राजपुत्रौ च भक्षयस्व प्रमर्द च ॥ ३० ॥
समालोक्यैव ते रूपं विद्रविष्यन्ति वानराः ।
रामलक्ष्मणयोश्चापि हृदयं विस्फुटिष्यति ॥ ३१ ॥

अतिबल महतो भयाद्विमुक्तो
भवतु जनः सुखितो ममाद्य सर्वः ।
तव भुजबलसाहसाभिगुप्तस्
त्रिदशरिपो जहि राघवं ससैन्यं ॥ ३२ ॥
कुरुष्व मे प्रियहितमेतदुत्तमं
यशस्करं प्रियकरं बान्धवप्रियं ।
स्वतेजसा विधम मृधेऽरिवाहिनीं
शरद्घनं पवन इवोद्धतं दिवि ॥ ३३ ॥

इत्यार्षे रामायणे युद्धकाण्डे कुम्भकर्णसमादेशो
नाम नवत्रिंशः सर्गः ॥

XL.

तस्य राक्षसराजस्य निशम्य परिदेवितं ।
कुम्भकर्णो बभाषेदं वचनं प्रजहास च ॥ १ ॥
दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिश्चये ।
हितेष्वनभियुक्तेन सोऽयमासादितस्त्वया ॥ २ ॥
इदं खलु फलं प्राप्तं शीघ्रं पापस्य कर्मणः ।
पतनं निरये घोरे यथा दुष्कृतकर्मणः ॥ ३ ॥
प्रथमं ते महाराज कृत्यमेतन्न चिन्तितं ।
केवलं वीर्यमत्तेन नानुबन्धो विचारितः ॥ ४ ॥
यः पश्चात् पूर्वकार्याणि कुर्यादैश्वर्यमोहितः ।
पूर्वं चैवानुकार्याणि न स वेद नयानयौ ॥ ५ ॥
देशकालविहीनानि कर्माणि विपरीतवत् ।
क्रियमाणानि दुष्यन्ति हविरप्रयतैरिव ॥ ६ ॥
त्रयाणां पञ्चधा योगं कर्मणां यःप्रपश्यति ।
सचिवैः समयं कृत्वा स सम्यग् वर्तते पथि ॥ ७ ॥
याथातथ्येन यो राजा समयं विजिगीषति ।
बुध्यते स शुचिर्बुद्ध्या सुहृदश्चानुपश्यति ॥ ८ ॥
धर्ममर्थं च कामं च सर्वं च राक्षसाधिप ।
भजते पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥ ९ ॥

त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते ।
राजा वा राजपुत्रो वा तस्य श्रुतमनर्थकं ॥ १० ॥
ततः प्रदानं सान्त्वं च भेदं काले च विक्रमं ।
योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ ॥ ११ ॥
काले धर्मार्थकामान् यः समर्थः सचिवैः सह ।
निषेवेदात्मवाँल्लोके नासौ व्यसनमाश्रयेत् ॥ १२ ॥
हितानुबन्धमालोक्य कार्याकार्यमिहात्मनः ।
मन्त्रिभिर्बुद्धिसंपन्नैर्विज्ञाय तदुपक्रमेत् ॥ १३ ॥
अनभिज्ञा हि शास्त्राणां बहवः पशुबुद्धयः ।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥ १४ ॥
अशास्त्रविदुषां तेषां न कार्यमहितं वचः ।
अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छतां ॥ १५ ॥
अहितं हि हिताकारं धार्ष्ट्याज्जल्पन्ति ये नराः ।
अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्या मन्त्रदूषकाः ॥ १६ ॥
विनाशयन्ति भर्तारं भेदिताः शत्रुभिर्बुधैः ।
विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ १७ ॥
तान् भर्ता मित्रसंकाशान् मित्रान् मन्त्रविनिर्णये ।
व्यवहारे विजानीयात् सचिवान् परमाहितान् ॥ १८ ॥
चपलस्य च कृत्यानि सहसानुप्रधावतः ।
छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ १९ ॥

शक्तो व्यवसितः शत्रुः स्वेन वार्येन तुष्यति ।
सर्वं तस्मै प्रदातव्यमिति बुद्धिमतां नयः ॥ २० ॥
यो हि शत्रुमवज्ञाय नात्मानं परिरक्षति ।
अवाप्नोतीह सोऽनर्थान् स्थानाच्चैवावरोप्यते ॥ २१ ॥
स तु श्रुत्वा महाराजः कुम्भकर्णस्य भाषितं ।
भ्रुकुटीं चैव संचक्रे क्रुद्धश्चेदमुवाच ह ॥ २२ ॥
मान्यो गुरुरिवाचार्यः किं भवाननुशास्ति मां ।
अलं ते वाक्श्रमं श्रुत्वा कालयुक्तं विधीयतां ॥ २३ ॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्योच्छ्रयेण वा ।
अभिपन्नमिदानीं यद्वृथा तस्य पुनः कथा ॥ २४ ॥
अस्मिन् काले हि यद्युक्तं तदिदानीं विधीयतां ।
समापनय मद्दोषं विक्रमेण समीकुरु ॥ २५ ॥
यदि खल्वस्ति ते स्नेहो भ्रातृत्वं चावगच्छसि ।
यदिवा कार्यमेतत् ते हृदि कार्यतमं मतं ॥ २६ ॥
स सुहृद्यो विपन्नार्थं दीनमभ्युपपद्यते ।
स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥ २७ ॥
तमथैनं ब्रुवाणं तु वचनं वीरदारुणं ।
क्रुद्धोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह ॥ २८ ॥
अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियं ।
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥ २९ ॥

शृणु राजन्नवहितो मम वाक्यमरिन्दम ।
यदर्थं तु पुरा सौम्य नारदाच्छ्रुतवानहं ॥ ३० ॥
षण्मासादहमुत्थाय अशित्वा भक्ष्यमुत्तमं ।
न च तृप्तोऽस्मि राजेन्द्र ततोऽहं प्रस्थितो वनं ॥ ३१ ॥
बहूनि भक्षयित्वाहं सत्वानि विविधानि च ।
तुष्टः प्रणयनं कृत्वा शिलातलमुपाविशं ॥ ३२ ॥
शिलातलस्थोऽपश्यं तं नारदं संशितव्रतं ।
आकाशे न द्रुतं यान्तं मां दृष्ट्वा स त्वतिष्ठत ॥ ३३ ॥
अवतीर्णश्च सहसा मया चैवाभिवादितः ।
उपविष्टः शिलायां तु ततोऽहं तमथाब्रुवं ॥ ३४ ॥
कुत आगम्यते ब्रह्मन् कुतो वा प्रतिगम्यते ।
एवमुक्तो मया राजन् नारदो मामुवाच ह ॥ ३५ ॥
देवानामालयं मेरुं गतोऽहं देवसंसदि ।
युष्मत्तो भयभीतानां समाजस्तत्र संमतः ॥ ३६ ॥
तत्र ब्रह्मा च रुद्रश्च विष्णुश्च जयतां वरः ।
देवराजो महेन्द्रश्च लोकसाक्षी च पावकः ॥ ३७ ॥
मारुतो वसवश्चैव चन्द्रादित्यौ ग्रहास्तथा ।
गन्धर्वा गुह्यकाश्चैव ऋषयो गरुडोरगाः ॥ ३८ ॥
मन्त्रं ममन्त्रिरे तत्र बधं रक्षःकुलस्य ते ।
देवराजो निबद्धस्तु यमः संख्ये पराजितः ॥ ३९ ॥

जितौ तु सबलौ संख्ये कुबेरवरुणावपि ।
चन्द्रादित्यौ वशे नीतौ त्रैलोक्यं सचराचरं ॥ ४० ॥
यज्ञा विध्वंसिताः सर्वे धर्मिष्ठाश्च हता नृपाः ।
देवोद्यानानि भग्नानि स्त्रियो नीता यथेष्टतः ॥ ४१ ॥
रक्षसा तेन रौद्रेण रावणेन बलीयसा ।
ब्रह्मणो वरदानेन गर्वितेन सुरोत्तमाः ॥ ४२ ॥
इत्युवाच ततो देवान् सर्वान् देवपुरोहितः ।
चिन्तयध्वं बधोपायं रावणस्य दुरात्मनः ॥ ४३ ॥
एवमुक्ते तु वचने ब्रह्मा देवानुवाच ह ।
अबध्यत्वं मया दत्तं देवदैत्यैश्च राक्षसैः ॥ ४४ ॥
मानुषेभ्यो भयं तस्य वानरेभ्यश्च देवताः ।
सुरासुरसमूहेऽपि बधस्तस्य न विद्यते ॥ ४५ ॥
तस्मादेष हरिर्देवः पद्मनाभस्त्रिविक्रमः ।
पुत्रो दशरथस्यास्तु चतुर्बाहुः सनातनः ॥ ४६ ॥
भवन्तो वसुधां गत्वा विष्णोरस्य महात्मनः ।
वानराणां तनुं कृत्वा सहायत्वं करिष्यथः ॥ ४७ ॥
एवमुक्त्वा ततो ब्रह्मा तत्रैवान्तरधीयत ।
देवा अपि यथान्यायं जग्मुर्वै यत्र वासवः ॥ ४८ ॥
एतदाख्यातवान् मह्यं नारदो भगवानृषिः ।
यथातत्त्वमशेषेण ततो यातः सुरालयं ॥ ४९ ॥

सोऽयं विष्णुः सुरैः सार्द्धं मानुषत्वमुपागतः ।
रामाभिधानो रक्षेन्द्र युष्मान् हन्तुमुपागतः ॥५०॥
तन्मह्यं रोचते सीता रामाय प्रतिदीयतां ।
कुरु मा विग्रहं तेन संधिस्तेनाद्य रोचतां ॥५१॥
त्रैलोक्यं नमते यस्य पूज्यं च सततं विभुं ।
नमस्व रामं राजेन्द्र रक्षस्वात्मानमात्मना ॥५२॥
योग्यश्च राघवो मित्रं संधिस्ते चोत्तमो भवेत् ।
सकामा न च वै देवा भविष्यन्ति निरुद्यमाः ॥५३॥

इत्यार्षे रामायणे युद्धकाण्डे कुम्भकर्णपुरावृत्तकथनं
नाम चत्वारिंशः सर्गः ॥

## XLI.

कुम्भकर्णवचः श्रुत्वा रावणो राक्षसाधिपः ।
तूष्णीं भूतश्चिन्तयित्वा ततो वचनमब्रवीत् ॥ १ ॥
कुम्भकर्ण महाप्राज्ञ शृणुष्व वचनं मम ।
कोऽसौ विष्णुरिति ख्यातो यस्य त्वं तात बिभ्यसे ॥ २ ॥
देवत्वे न नमस्येतं तथान्यान् देवदानवान् ।
मानुषत्वं गते तस्मिन् किं भयं त्वामुपस्थितं ॥ ३ ॥
नित्यं समरभीतास्तु मानुषाः सुमहाबल ।
खादयित्वा तु तान् पूर्वं कथं पश्चान्नमाम्यहं ॥ ४ ॥
प्रणम्य मानुषं रामं सीतां दत्वा तु तस्य वै ।
हास्यभूतस्तु लोकानामनुयास्यामि पृष्ठतः ॥ ५ ॥
राघवं तं महाबाहो दीनरूपोऽथ दासवत् ।
ऋद्धिं च पश्यमानोऽस्य कथं शक्ष्यामि जीवितुं ॥ ६ ॥
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सुदारुणं ।
प्रणमेद्रावणो राममेष ते बुद्धिनिर्णयः ॥ ७ ॥
यदि रामः स्वयं विष्णुर्लक्ष्मणोऽपि शतक्रतुः ।
सुग्रीवस् त्र्यम्बकः साक्षात् स्वयं ब्रह्मा तु जाम्बवान् ॥ ८ ॥
अहो शास्त्राण्यधीतानि यस्य ते बुद्धिरीदृशी ।
अतीताश्रमिणं रामं यो नमस्कर्तुमिच्छसि ॥ ९ ॥

देवत्वं यः परित्यज्य मानुषीं योनिमाश्रितः ।
अस्मान् हन्तुं किलायातः स संधेयः कथं मया ॥ १० ॥
यदिवा राघवो विष्णुर्व्यक्तं ते श्रोत्रमागतः ।
देवतानां हितार्थं तु प्रविष्टो मानुषीं तनुं ॥ ११ ॥
स वानराणां राजानं सुग्रीवं शरणं गतः ।
अहोऽस्य सदृशं सख्यं तिर्यग्योनिगतैः सह ॥ १२ ॥
वीर्यहीनस्तु किं विष्णुर्यः श्रितो ऋक्षवानरान् ।
अथवा वीर्यहीनोऽसौ येन पूर्वं महासुरः ॥ १३ ॥
वामनं रूपमास्थाय याचितस्त्रिपदः पदं ।
बलिस्तु दीक्षितो यज्ञे तेन त्वं सख्यमिच्छसि ॥ १४ ॥
येन दत्ता मही सर्वा ससागरवनार्णवा ।
उपचारकृता पूर्वं स बद्धो यज्ञदीक्षितः ॥ १५ ॥
उपकारी हतस्तेन सोऽस्मान् रक्षति वैरिणः ।
यदा मे निर्जिता देवाः स्वर्गं गत्वा त्वया सह ॥ १६ ॥
तदा किं नास्ति विष्णुत्वं तस्य देवस्य राक्षस ।
सांप्रतं कुत आयातः स विष्णुर्यस्य बिभ्यसे ॥ १७ ॥
शरीररक्षणार्थाय ब्रूषे त्वं वाक्यमीदृशं ।
नायं जीवयितुं कालः कालो योद्धुं निशाचर ॥ १८ ॥
स्वाम्यं पितामहात् प्राप्तं त्रैलोक्यं वशगं कृतं ।
राघवं प्रणमे कस्माद्धीनवीर्यपराक्रमं ॥ १९ ॥

तद्गच्छ शयनीयं त्वं पिब त्वं विगतज्वरः ।
शयमानं न हन्यात् त्वां राघवो लक्ष्मणस्तथा ॥ २० ॥
अहं रामं बधिष्यामि सुग्रीवं च सलक्ष्मणं ।
वानरांश्च हनिष्यामि ततो देवान् महारणे ॥ २१ ॥
विष्णुं चैव बधिष्यामि ये च विष्णुनुयायिनः ।
गच्छ गच्छस्व तत् क्षेत्रं चिरं जीव सुखी भव ॥ २२ ॥
भ्रातरं त्वेवमुक्त्वासौ रावणः कालचोदितः ।
सावलेपं सगर्वं च पुनर्वचनमब्रवीत् ॥ २३ ॥

जानामि सीतां धरणीप्रसूतां
जानामि रामं मधुसूदनं च ।
एतद्धि जाने त्वहमस्य बध्यस्
तेनाहृता मे जनकात्मजैषा ॥ २४ ॥

न कामाच्चैव न क्रोधाद्धरामि जनकात्मजां ।
निहतो गन्तुमिच्छामि तद्विष्णोः परमं पदं ॥ २५ ॥

इत्यार्षे रामायणे युद्धकाण्डे रावणवाक्यं नाम
एकचत्वारिंशः सर्गः ॥

# युद्धकाण्डं

## XLII.

रावणस्य वचः श्रुत्वा क्रुद्धस्य परिदेवितं ।
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥ १ ॥
अलं राक्षसशार्दूल संतापमुपगम्य च ।
रोषायासौ परित्यज्य सुस्थो भवितुमर्हसि ॥ २ ॥
नैवमर्हसि वक्तुं त्वं मयि तिष्ठति पार्थिव ।
तमहं नाशयिष्यामि यत्कृते परितप्यसे ॥ ३ ॥
अवश्यं तु हितं वाच्यं सर्वावस्थासु ते मया ।
बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥ ४ ॥
सदृशं यत् तु कालेऽस्मिन् कर्तुं स्निग्धेन बन्धुना ।
शत्रूणां कदनं पश्य क्रियमाणं मया युधि ॥ ५ ॥
अद्य पश्य महाबाहो मया समरमूर्द्धनि ।
हते रामे सह भ्रात्रा द्रवन्तीं हरिवाहिनीं ॥ ६ ॥
अद्य रामस्य दृष्ट्वा त्वं मयानीतं रणाच्छिरः ।
सुखी भव महाबाहो सीता भवतु दुःखिता ॥ ७ ॥
अद्य रामस्य निधनं पश्यन्तु सुमहत् प्रियं ।
लङ्कायां राक्षसाः सर्वे ये ये निहतबान्धवाः ॥ ८ ॥
अद्य शोकपरीतानां स्वबन्धुमनुशोचिनां ।
शत्रोर्युधि प्रणाशेन करोम्यश्रुप्रमार्जनं ॥ ९ ॥

अद्य पर्वतकूटाभं सूर्यपुत्रं प्लवङ्गमं ।
विकीर्णं पश्य समरे सुग्रीवं वानरेश्वरं ॥१०॥
अहमेकोऽद्य यास्यामि युद्धं युद्धविशारदः ।
असाधारणमिच्छामि तव दातुमहं जयं ॥११॥
नापरः प्रेषणीयस्ते युद्धायातुलविक्रम ।
कथं त्वं राक्षसैरेभिर्मया च परिरक्षितः ॥१२॥
जिघांसुभिर्दाशरथिं व्यथसे राक्षसाधिप ।
मयि पूर्वं निपतिते यदि त्वां हन्ति राघवः ॥१३॥
नाहमात्मनि संतापं गच्छेयं राक्षसाधिप ।
कामं नान्यमिदानीं त्वमादिशस्व परंतप ॥१४॥
अहं तु शातयिष्यामि शत्रुं तव रिपुंजय ।
यदि शक्रो यदि यमो यदि पावकमारुतौ ॥१५॥
तानहं योधयिष्यामि कुबेरवरुणावपि ।
गिरिमात्रप्रमाणस्य शितशूलधरस्य मे ॥१६॥
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाद्देवराडपि ।
अथवा त्यक्तशस्त्रस्य मृद्नतस्तरसा रिपून् ॥१७॥
पवनस्येव वेगेन भञ्जतस्तरसा द्रुमान् ।
न मे प्रतिमुखे स्थातुं कश्चिच्छक्तो जिजीविषुः ॥१८॥
नैव शक्त्या न गदया नासिना नेषुभिः शितैः ।
वारयेन्मां हि संरब्धं साक्षादपि पुरंदरः ॥१९॥

हस्ताभ्यामेव संरब्धो वधेयमपि वज्रिणं ।
यदि मे मुष्टिवेगं च राघवो विसहिष्यति ॥२०॥
ततः पास्यन्ति बाणौघा रुधिरं राघवस्य मे ।
चिन्तया दह्यसे राजन् किमर्थ मयि तिष्ठति ॥२१॥
सोऽहं शत्रुविनाशाय तव निर्यातुमुद्यतः ।
अद्य रामं ससौमित्रिं ससुग्रीवं समारुतिं ।
सर्वानेकपदे हन्मि प्रतिज्ञाने तवाग्रतः ॥२२॥
रमस्व कामं पिव चाद्य वारुणीं
कुरुष्व कृत्यानि विनीयतां ज्वरः ।
तवाद्य रामे गमिते यमक्षयं
चिराय सीता वशगा भविष्यति ॥२३॥

इत्यार्षे रामायणे युद्धकाण्डे कुम्भकर्णगर्जनं नाम
द्विचत्वारिंशः सर्गः ॥

# रामायणं

## XLIII.

एवं विकत्थमानस्य धन्विनो बलशालिनः ।
कुम्भकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १ ॥
कुम्भकर्ण कुले जातो यथा प्राकृतदर्शनः ।
अवलिप्तो न जानीषे कृत्यं सर्वत्र वेदितुं ॥ २ ॥
अयं राजा न जानीते कुम्भकर्ण नयानयौ ।
त्वं तु कैशोरया बुद्ध्या केवलं वक्तुमर्हसि ॥ ३ ॥
स्थानं वृद्धिं च हानिं च देशकालविभागवित् ।
आत्मनश्च परेषां च बुध्यते राक्षसर्षभ ॥ ४ ॥
यत् तु शक्यं बलवता वक्तुं प्राकृतबुद्धिना ।
अनुपासितवृद्धेन तदेतद्गदितं त्वया ॥ ५ ॥
यत् तु धर्मार्थकामानां ब्रवीषि पृथगाश्रयान् ।
अत्र पश्य स्वया बुद्ध्या न हि लक्षणमस्ति ते ॥ ६ ॥
काम एव हि सर्वेषां कार्याणां तु प्रयोजनं ।
श्रेयः पापीयसां चात्र संभवेच्चैव कर्मणां ॥ ७ ॥
निःश्रेयसफलावेव धर्मार्थावितरावपि ।
अधर्मानर्थयोः प्राप्तिः फलं वै प्रत्यवायिकं ॥ ८ ॥
ऐहलौकिकपावित्र्यं कर्म पुम्भिर्निषेव्यते ।
अकर्मणा न कल्याणं लभते काममाश्रितः ॥ ९ ॥

उत्प्रकृष्टतमं राज्ञो हृदि कार्यतमं महत् ।
शत्रोर्युधि विनाशेन किमिवात्रापनीयते ॥१०॥
एकस्यैवाभियाने तु हेतुर्यः प्रकृतस्त्वया ।
अत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥११॥
येन पूर्वं जनस्थाने राक्षसा बहवो हताः ।
बलिनं राघवं तं तु कथमेको हनिष्यसि ॥१२॥
ये पुरा निर्जितास्तेन जनस्थाने महौजसः ।
राक्षसांस्तान् पुरे सर्वान् भीतानद्यापि पश्यसि ॥१३॥
येऽपि चान्ये महात्मानो राक्षसाः शूरसंमताः ।
रामं पश्यन्ति भीतास्ते स्वप्नेऽपि नरसत्तमं ॥१४॥
तं सिंहमिव संक्रुद्धं रामं दशरथात्मजं ।
सर्पं सुप्तमिवाबुद्धे प्रबोधयितुमिच्छसि ॥१५॥
ज्वलन्तं तेजसा युक्तं क्रोधेन च दुरासदं ।
कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥१६॥
संशयस्थमनाचीर्णं शत्रोःप्रतिसमापने ।
एकस्य गमनं तत्र न हि मे रोचते तव ॥१७॥
हीनार्थस्तु समृद्धार्थं को रिपुं प्राकृतो यथा ।
निश्चितं जीवितत्यागे वशमानेतुमर्हति ॥१८॥
यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम ।
कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥१९॥

एवमुक्त्वा तु संरब्धं कुम्भकर्णं महोदरः ।
उवाच रक्षसां मध्ये रावणं राक्षसाधिपं ॥ २० ॥
लब्धोपपन्ना वैदेही किं वृथैव विकल्पितैः ।
त्वं यदीच्छसि वैदेहीं वशगां तु शृणु प्रभो ॥ २१ ॥
दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः ।
रुचितश्चैव मे बुद्ध्या राक्षसेश्वर मे शृणु ॥ २२ ॥
अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः ।
पञ्च रामबधायैते निर्यान्त्विति विघोषय ॥ २३ ॥
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः ।
जेष्यामो यदि ते शत्रुं नोपायैः कार्यमस्ति ते ॥ २४ ॥
अथ जीवति ते शत्रुर्वयं च कृतसंयुगाः ।
ततः समुपपत्स्यामो मनसा यत् समीक्षितं ॥ २५ ॥
वयं युद्धादिहैष्यामो रुधिरेण समुक्षिताः ।
विदार्य स्वां तनुं राजन् रामनामाङ्कितैः शरैः ॥ २६ ॥
हतं तद्वानरं सैन्यं ससुग्रीवं न संशयः ।
निहतो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः ॥ २७ ॥
तव पादौ गृहीष्यामस्त्वं नः प्रीत्या परिष्वजेः ।
ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव ॥ २८ ॥
हतो रामः सह भ्रात्रा ससैन्य इति हृष्टवत् ।
प्रीतो भूत्वा च भृत्यानां यथाकामं ददस्व च ॥ २९ ॥

भोगांश्च परिवारांश्च काम्यं वसु च दापयेः ।
ततो माल्यानि वासांसि वरान्नमनुलेपनं ॥ ३० ॥
पेयं च बहु योधेभ्यः स्वयं च मुदितः पिब ।
अथास्मिन् बहुलीकृते कौलीने सर्वतो गते ॥ ३१ ॥
प्रविश्याश्वास्य चैव त्वं सीतां रहसि पार्थिव ।
धनधान्यैश्च रत्नैश्च कामैश्चैनां प्रलोभयेः ॥ ३२ ॥
अनयोर्बधतो राजन् भयशोकाच्च विह्वला ।
अकामा त्वद्वशे सीता नष्टनाथा भविष्यति ॥ ३३ ॥
रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा ।
नैराश्यात् स्त्रीस्वभावाच्च त्वद्वशं प्रतियास्यति ॥ ३४ ॥
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्षिता ।
त्वदधीनं सुखं ज्ञात्वा सर्वथोपनमिष्यति ॥ ३५ ॥
एतत् सुनीतं मम दर्शनेन रामं हि दृष्ट्वैव भवेदनर्थः ।
इहैव तत् सेत्स्यति नोत्सुको भूर्महानयुद्धेन सुखस्य लाभः । ३६ ।
अदृष्टसेनो ह्यनवाप्तसंशयो रिपूनयुद्धेन जयस्व सर्वथा ।
यशश्च पुण्यं च महीं च भूपते श्रियं च कीर्त्तिं च समवाप्नुहि त्वं । ३७ ।

इत्यार्षे रामायणे युद्धकाण्डे महोदरवाक्यं नाम
त्रिचत्वारिंशः सर्गः ॥

# रामायणं

## XLIV.

स तथोक्तो विनिर्भर्त्स्य कुम्भकर्णो महोदरं ।
आददे निशितं शूलं वेगाच्छत्रुनिवर्हणं ॥ १ ॥
सर्वकालायसं दीप्तं तप्तकाञ्चनभूषणं ।
इन्द्राशनिसमं घोरं वज्रप्रतिमगौरवं ॥ २ ॥
देवदानवदर्पघ्नं यक्षगन्धर्वसूदनं ।
आदाय निशितं शूलं शत्रुशोणितरञ्जितं ॥ ३ ॥
कुम्भकर्णो महातेजा रावणं वाक्यमब्रवीत् ।
गमिष्याम्यहमेवैकस्तिष्ठत्विह बलं तव ॥ ४ ॥
अहं तेऽद्य भयं घोरं बधात् तस्य दुरात्मनः ।
राक्षसेश्वर नेष्यामि निर्वैरस्त्वं सुखी भव ॥ ५ ॥
गर्ज्जन्ति न वृथा शूरा निर्ज्जला इव तोयदाः ।
पश्य संपद्यमानं मे गर्ज्जितं युधि कर्मणा ॥ ६ ॥
नामर्षयति यो नित्यमप्रगल्भं स भाषते ।
अमर्षभावाः शूरास्तु कर्म कुर्वन्ति दुष्करं ॥ ७ ॥
विक्लवानामबुद्धीनां राज्ञां पण्डितमानिनां ।
रोचते त्वद्वचो नित्यं कथ्यमानं महोदर ॥ ८ ॥
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः ।
राजानमनुवर्तद्भिः कृत्यमेतद्विनाशितं ॥ ९ ॥

कृच्छ्रावस्था कृता लङ्का क्षीणः कोषो बलं हतं ।
राजानमिममासाद्य राक्षसानां व्यपत्रपाः ॥१०॥
एष निर्याम्यहं युद्धमुद्यतः शत्रुनिग्रहे ।
दुर्नयं भवतामद्य समीकर्तुं पराक्रमैः ॥११॥
कुम्भकर्णवचः श्रुत्वा जहर्षे राक्षसाधिपः ।
पुनर्जातमिवात्मानं मेने स धनदानुजः ॥१२॥
तत उक्तवतो वाक्यं कुम्भकर्णस्य धीमतः ।
संवर्धयितुमुत्साहमिदं वचनमब्रवीत् ॥१३॥
महोदरोऽयं रामाद्धि परित्रस्तो न संशयः ।
न हि रोचयते भीतो युद्धं युद्धविशारद ॥१४॥
न कश्चित् त्वत्समो मेऽस्ति सौहार्देन बलेन च ।
गच्छ शत्रुवधाय त्वं कुम्भकर्ण जयाय च ॥१५॥
सैन्यैः परिवृतो वीर कर्तव्यं च वचो मम ।
असहायस्य गमनं मम बुद्ध्या न रोचते ॥१६॥
वानरा हि महात्मानः शीघ्राश्च व्यवसायिनः ।
एकाकिनं प्रमत्तं च गमयेयुर्हि संशयं ॥१७॥
तस्मात् परमदुर्धर्ष सैन्यैः परिवृतो व्रज ।
जहि तं राक्षसैः सार्द्धं शत्रुपक्षं निसूदय ॥१८॥
अथासनात् समुत्पत्य मणिं सूर्यसमप्रभं ।
आबबन्ध महातेजाः कुम्भकर्णस्य रावणः ॥१९॥

अङ्गदानङ्गुलीवेष्टान् कवचं च महाधनं ।
हारं च शशिसंकाशं स बबन्ध महात्मनः ॥ २० ॥
दिव्यानि गन्धमाल्यानि रत्नान्याभरणानि च ।
गात्रेषु योजयामास कुण्डले च महाधने ॥ २१ ॥
काञ्चनाङ्गदकेयूरनिष्कप्रवरभूषितः ।
कुम्भकर्णो महाबाहुः संस्कृतोऽग्निरिवाबभौ ॥ २२ ॥
श्रोणीसूत्रेण महता काञ्चनेन विराजता ।
अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २३ ॥
सर्वाभरणचित्राङ्गः शूलपाणिः स राक्षसः ।
विक्रमे तु कृतोत्साहो नारायण इवाबभौ ॥ २४ ॥
स रावणं परिष्वज्य कृत्वा चापि प्रदक्षिणं ।
प्रणम्य शिरसा चैव संप्रतस्थे महाबलः ॥ २५ ॥
तस्य सूतो रथं दिव्यं पञ्चनल्वप्रमाणतः ।
युक्तं खरशतेनाथ युद्धध्वजविभूषितं ॥ २६ ॥
महाजलदनिर्घोषं कैलासशिखरोपमं ।
अष्टचक्रसमायुक्तमुपनीय महारथं ॥ २७ ॥
जयाशिषा वर्धयित्वा विनीतः प्राञ्जलिः स्थितः ।
स तं समारुह्य ययौ मेघगम्भीरनिस्वनं ॥ २८ ॥
तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः ।
शङ्खदुन्दुभिनिर्घोषै राक्षसाश्च वरायुधाः ॥ २९ ॥

तं गजैश्च तुरङ्गैश्च स्यन्दनैश्चाम्बुदस्वनैः ।
अनुजग्मुर्महात्मानं गच्छन्तं रथिनां वरं ॥३०॥
स पुष्पवर्षैरवकीर्यमाणो धृतातपत्रः शितशूलपाणिः ।
मदोत्कटः शोणितपानमत्तो विनिर्ययौ राक्षसयोधमुख्यः ॥३१॥
पदातयश्च बहवो निष्पतन्तं महाबलं ।
अन्वयू राक्षसा घोरा भीमाक्षं शस्त्रपाणयः ॥३२॥
रक्ताक्षाः सुमहाकाया नीलाञ्जनचयोपमाः ।
शूलानुद्यम्य खड्गांश्च पट्टिशासिपरश्वधान् ॥३३॥
बहुव्यामांश्च परिघान् गदाश्च मुषलानि च ।
सालस्कन्धांश्च विविधान् शतघ्नीश्च दुरासदाः ॥३४॥
स पुरद्वारमागम्य दारुणो लोमहर्षणः ।
निष्पपात महातेजाः कुम्भकर्णः प्रतापवान् ॥३५॥
धनुःशतपरीणाहः षड्व्यायामशतोच्छ्रितः ।
रौद्रः शकटचक्राक्षो गिरिकूटोपमो महान् ॥३६॥
स च निष्पत्य रक्षांसि दग्धशैलोपमो बली ।
कुम्भकर्णो महाबाहुः प्रहसन् वाक्यमब्रवीत् ॥३७॥
अद्य वानरमुख्यानां तानि यूथानि भागशः ।
निर्दहिष्यामि संक्रुद्धः शलभानिव पावकः ॥३८॥
नापराध्यन्ति मे कामं वानरा वनचारिणः ।
जातिरेवंविधानां तु पुरोद्यानविदूषणी ॥३९॥

पुरोपरोधमूलं तु राघवः सहलक्ष्मणः ।
हते तस्मिन् हतं सर्वं तं हनिष्यामि संयुगे ॥४०॥
एवं तस्य ब्रुवाणस्य कुम्भकर्णस्य रक्षसः ।
बभूवुर्घोररूपाणि निमित्तानि समन्ततः ॥४१॥
शुष्काशनियुता मेघा विनेदुर्दारुणस्वराः ।
ससागरवना चैव वसुधा समकम्पत ॥४२॥
घोररूपाः शिवा नेदुः सज्वालकवलैर्मुखैः ।
मण्डलान्यपसव्यानि बबन्धुश्च विहङ्गमाः ॥४३॥
निपपात च गृध्रोऽस्य रथस्योपरि गच्छतः ।
प्रास्फुरन्नयनं सव्यं सव्यो बाहुरकम्पत ॥४४॥
तथा प्रावेपताङ्घ्रिश्च रोमहर्षश्च जायते ।
अभिद्यत स्वरश्चैव रणभूमिं विगाहतः ॥४५॥
गगनान्निष्पपातोल्का ज्वलन्ती भीमनिस्वना ।
आदित्यो निष्प्रभश्चासीत् प्रववौ न च मारुतः ॥४६॥
अचिन्तयन् महोत्पातानुत्थितान् जीवितान्तकान् ।
निर्ययौ कुम्भकर्णश्च कृतान्तबलमोहितः ॥४७॥
स निर्गम्य पुरद्वाराद्बृहत्पर्वतसंनिभः ।
ददर्शाथ घनप्रख्यं वानरानीकमद्भुतं ॥४८॥

इत्यार्षे रामायणे युद्धकाण्डे कुम्भकर्णनिर्याणं
नाम चतुश्चत्वारिंशः सर्गः ॥

# युद्धकाण्डं

## XLV.

स पुरद्वारनिर्यातः कुम्भकर्णो महाबलः ।
राक्षसैर्बहुभिः क्रुद्धैर्नर्दमानैः पुरस्कृतः ॥ १ ॥
संननाद महानादं समुद्रमभिनादयन् ।
जनयन्निव निर्घातं कम्पयन्निव पर्वतान् ॥ २ ॥
तमवध्यं मघवता यमेन वरुणेन च ।
प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ ३ ॥
तांस्तु विद्रवतो दृष्ट्वा बालिपुत्रोऽङ्गदोऽब्रवीत् ।
गवाक्षं शरभं नीलं कुमुदं च महाबलं ॥ ४ ॥
आत्मानमिव विस्मृत्य वीर्याण्यभिजनानि च ।
क्व गच्छत परित्रस्ता हरयः प्राकृता इव ॥ ५ ॥
आगच्छत निवर्तध्वं किं प्राणान् परिरक्षथ ।
क्व गतानां न मृत्युर्वो भविता वानरर्षभाः ॥ ६ ॥
मर्तव्ये सति संग्रामे वरं मृत्युर्भवादृशां ।
जीवितं चापि मृत्युर्वो नास्त्यात्मवशकारितं ॥ ७ ॥
योधधर्मं पुरस्कृत्य युध्यध्वं वानरोत्तमाः ।
नैतद्युद्धाय वै रक्षो महतीयं विभीषिका ॥ ८ ॥
महतीमुत्थितामेतां वानराणां विभीषिकां ।
विक्रम्य विधमिष्यामो निवर्तध्वं प्लवङ्गमाः ॥ ९ ॥

कृच्छ्रेण च समाश्वस्ताः संस्तभ्य च परस्परं ।
शिलापादपहस्तास्ते तस्थुः संग्राममूर्द्धनि ॥ १० ॥
ते प्रहृष्टा निवर्त्तित्वा समदा इव कुञ्जराः ।
निजघ्नुः परमक्रुद्धाः कुम्भकर्णं वनौकसः ॥ ११ ॥
प्रांशुभिर्गिरिशृङ्गैश्च शिलाभिश्च समन्ततः ।
पादपैः पुष्पिताग्रैश्च बध्यमानो न चुक्षुभे ॥ १२ ॥
ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः ।
दुद्राव ज्वलनाकारो राक्षसं भीमविक्रमः ॥ १३ ॥
स तं महामेघनिभं चिक्षेप सुमहाबलः ।
तमप्राप्य महाकायं तस्य सैन्यमपोथयत् ॥ १४ ॥
तस्य गात्रेषु पतिता व्यशीर्यन्त महाशिलाः ।
पादपाः पुष्पिताग्राश्च भग्नाः पेतुर्महीतले ॥ १५ ॥
स तु सैन्यानि संक्रुद्धो वानराणां महौजसां ।
ममन्थ परमायस्तो वनान्यग्निरिवोत्थितः ॥ १६ ॥
वानरास्तु सुसंक्रुद्धा गिरिशृङ्गैर्महाबलाः ।
राक्षसानामनीकानि निजघ्नुश्च सहस्रशः ॥ १७ ॥
तच्छैलशृङ्गाभिहतं हताश्वरथवाहनं ।
रक्षोरुधिरसंक्लेदं बभूवायोधनं महत् ॥ १८ ॥
रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः ।
शिरांसि सहसा जघ्नुर्नदन्तो युद्धलालसाः ॥ १९ ॥

वानराश्च महात्मानः समुत्पाट्य महाद्रुमान् ।
रथानश्वान् गजानुष्ट्रान् राक्षसांश्चाप्यमर्दयन् ॥ २० ॥
लोहितार्द्राश्च बहवः शेरते वानरर्षभाः ।
निरस्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः ॥ २१ ॥
वानरा बध्यमानास्ते राक्षसेन जघन्यतः ।
सागरं येन संतीर्णाः पथा तेनैव दुद्रुवुः ॥ २२ ॥
ते स्थलानि च निम्नानि विषण्णवदना भयात् ।
लङ्घयन्तः प्रधावन्तो वानरा न व्यलोकयन् ॥ २३ ॥
केचित् समुद्रं संतेरुर्गगनं केचिदाश्रिताः ।
केचिद्वृक्षान् समारूढा ममज्जुः केचिदर्णवे ॥ २४ ॥
केचिद्गिरीनारुरुहुर्गुहाः केचित् समाश्रिताः ।
निपेतुर्वानराः केचित् केचिन्न व्यवतस्थिरे ॥ २५ ॥
तानवेक्ष्याङ्गदो भग्नान् वानरानिदमब्रवीत् ।
अवतिष्ठत युध्यामो वानराः किं गतेन वः ॥ २६ ॥
भग्नानां वो न पश्यामि परिक्रम्य महीमिमां ।
स्थानं सर्वे निवर्तध्वं युध्यध्वं वानरोत्तमाः ॥ २७ ॥
तिष्ठन्तो मर्त्यधर्मेऽस्मिन् गता मृत्योः क्व मोक्ष्यथ ।
निरायुधानां द्रवतामसंज्ञानां गतायुषां ॥ २८ ॥
स्त्रीणामौपयिकस्त्रासः सर्वेषां वो जघन्यतः ।
कुलेषु जाताः सर्वे स्म विस्तीर्णेषु महत्सु च ॥ २९ ॥

अनार्यं खलु यद्भीतास्त्यक्त्वा धैर्यं पलायथ ।
विकत्थनानि वो यानि युद्धार्थं जनसंसदि ॥ ३० ॥
तानि वः क्व नु यातानि सोदग्राणि महान्ति च ।
भीरुप्रवादोपहता यदि जीवथ धिक्कृताः ॥ ३१ ॥
मार्गं सत्पुरुषैर्जुष्टं सेवध्वं त्यज्यतां भयं ।
शयामोऽपीह वा युद्धे पृथिव्यां त्यक्तजीविताः ॥ ३२ ॥
अवाप्नुयाम वा कीर्त्तिं हत्वा शत्रुं महाहवे ।
दुष्प्रापं ब्रह्मलोकं तु प्राप्नुयाम निसूदिताः ॥ ३३ ॥
न कुम्भकर्णः काकुत्स्थं दृष्ट्वा जीवन् गमिष्यति ।
दीप्यमानं समासाद्य पतङ्गो ज्वलनं यथा ॥ ३४ ॥
पलायनेन स्वान् प्राणान् यदि रक्षामहे वयं ।
एकेन बहवो भग्ना यशो नो युधि नंक्ष्यति ॥ ३५ ॥
एवं ब्रुवाणं तं शूरमङ्गदं वानरा भयात् ।
विद्रवन्तस्तदा वाक्यमूचुः शूरविगर्हितं ॥ ३६ ॥
कृतं नः कदनं घोरं कुम्भकर्णेन रक्षसा ।
न स्थानकालो गच्छामो दयितं जीवितं हि नः ॥ ३७ ॥
एतावदुक्त्वा प्लवगाः सर्वे ते भेजिरे दिशः ।
भीमं भीमाक्षमायान्तं दृष्ट्वा राक्षसमाहवे ॥ ३८ ॥
द्रवमाणास्तु ते त्रासादङ्गदेन बलीयसा ।
सान्त्वैश्चाप्यभिमानैश्च सर्व एव निवर्त्तिताः ॥ ३९ ॥

# युद्धकाण्डं

## XLVI.

ते निवृत्ता महाकायाः श्रुत्वाङ्गदवचस्तदा ।
नैष्ठिकीं बुद्धिमास्थाय तस्थुः संग्रामकाङ्क्षिणः ॥ १ ॥
समुदीरितवीर्यास्ते समारोपितविक्रमाः ।
पर्यवस्थापिता वाक्यैरङ्गदेन बलीमुखाः ॥ २ ॥
चक्रुर्युद्धं सुतुमुलं वानरास्त्यक्तजीविताः ।
प्रहर्षादागतोत्साहा मरणे कृतनिश्चयाः ॥ ३ ॥
अथ वृक्षान् महाकायान् सानूनि सुमहान्ति च ।
वानरास्तूर्णमुत्पाट्य कुम्भकर्णमुपाद्रवन् ॥ ४ ॥
तान् समापततो दृष्ट्वा कुम्भकर्णः प्रतापवान् ।
व्यद्रावयत् सुसंरब्धो मेघानिव सदागतिः ॥ ५ ॥
ततस्तु तं महावीर्यं नव वानरयूथपाः ।
शिलाश्चोद्यम्य विपुलाः कुम्भकर्णमुपाद्रवन् ॥ ६ ॥
अङ्गदः कुमुदो नीलो गवाक्षश्चन्दनो हरिः ।
मैन्दोऽथ द्विविदश्चैव जाम्बवान् विनतस्तथा ॥ ७ ॥
युगपत् प्राहरन् सर्वे कुम्भकर्णे महाबले ।
तस्य गात्रे विनिर्भग्नाः शिलाः शैलनिभास्तथा ॥ ८ ॥
ध्वजं रथं खरांश्चैव सूतं चैव व्यपोथयन् ।
सोऽवप्लुत्य रथाद्वीरः शूलमुद्यम्य सत्वरः ॥ ९ ॥

वेगेनाभ्युत्पपाताथ पक्षवानिव पर्वतः ।
कुम्भकर्णः सुसंक्रुद्धः शूलमुद्यम्य संभ्रमात् ॥ १० ॥
आर्दयत् स महावेगः समन्ताद्विक्षिपन् रिपून् ।
शतानि सप्त चाष्टौ च सहस्राणि च वानराः ॥ ११ ॥
विकीर्णाः शेरते भूमौ कुम्भकर्णनिपातिताः ।
षोडशाष्टौ च दश च त्रिंशतं विंशतिं तथा ॥ १२ ॥
स संगृह्य तु बाहुभ्यां निष्पिपेष च राक्षसः ।
यथा नलवनं नागः प्रभिन्नकरटो बली ॥ १३ ॥
तथा वानरसैन्यानि स मृद्नन् पर्यधावत ।
हनूमान् शैलशृङ्गाणि वृक्षांश्च विविधान् बहून् ॥ १४ ॥
ववर्ष कुम्भकर्णस्य शरीरे वानरर्षभः ।
तानि पर्वतशृङ्गाणि शूलेन तु बिभेद सः ॥ १५ ॥
बभञ्ज वृक्षवर्षं च कुम्भकर्णो मदोत्कटः ।

ततो हरीणां तदनीकमुग्रं
दुद्राव शूलं निशितं प्रगृह्य ।
तस्थौ तु तस्यापततः पुरस्तान्
महीधराग्रं हनुमान् गृहीत्वा ॥ १६ ॥
स कुम्भकर्णं कुपितो जघान
शैलेन तेन प्लवगप्रवीरः ।
स चापि तेनाभिहतस्तरस्वी

न चुक्षुभे कालसमप्रभावः ॥१७॥

स शूलमाविध्य तडित्प्रकाशं
गिरिं यथा प्रज्वलिताग्रशृङ्गं ।
बाह्वन्तरे मारुतिमाजघान
गुहोऽचलं क्रौञ्चमिवोग्रशक्त्या ॥१८॥

स शूलनिर्भिन्नमहाभुजान्तरः
सुविह्वलः शोणितमुद्गिरन् मुखात् ।
ननाद भीमं हनुमान् महाहवे
तपान्तमेघस्तनितोपमस्वरः ॥१९॥

ततो विनेदुः सहसा प्रहृष्टा
रक्षोगणास्तं व्यथितं निशम्य ।
प्लवङ्गमाश्चापि तदा भयार्त्ताः
प्रदुद्रुवुस्ते सहसैव भीताः ॥२०॥

नीलश्चिक्षेप शैलाग्रं कुम्भकर्णाय संयुगे ।
तमापतन्तं संप्रेक्ष्य मुष्टिनाभिजघान सः ॥२१॥
मुष्टिप्रहाराभिहतं शैलाग्रं तद्व्यशीर्यत ।
सविस्फुलिङ्गं सज्वालं पपात च महीतले ॥२२॥
तद्दृष्ट्वा कुम्भकर्णस्य कर्म दारुणमाहवे ।
ऋषभः शरभो नीलो गवाक्षो गन्धमादनः ॥२३॥
पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् ।

शैलैर्वृक्षैस्तलैश्चैव मुष्टिभिश्च महाबलाः ॥२४॥
कुम्भकर्णं महाकायं ते सर्वेऽभ्यहनन् भृशं ।
स्पर्शानिव प्रहारांस्तान् मन्यमानो न विव्यथे ॥२५॥
ऋषभं च महावीर्यं बाहुभ्यां परिषस्वजे ।
कुम्भकर्णभुजाभ्यां तु पीडितो वानरोत्तमः ॥२६॥
स पपात ततो भूमौ मुखाच्छोणितमुद्वमन् ।
मुष्टिना शरभं चापि जानुना नीलमाहवे ॥२७॥
आजघान गवाक्षं च तलेनेन्द्ररिपुस्तथा ।
प्रहारैर्व्यथितास्ते ते मुमुहुः शोणितोक्षिताः ॥२८॥
निपेतुश्चापि मेदिन्यां निकृत्ता इव किंशुकाः ।
तेषु वानरमुख्येषु पतितेषु महात्मसु ॥२९॥
वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ।
ते शैलमिव शैलाभाः समारुरुहुरुत्थिताः ॥३०॥
तं नखैर्दशनैश्चैव जानुभिर्मुष्टिभिस्तलैः ।
कुम्भकर्णं महाकायमभिजघ्नुः परस्परं ॥३१॥
तैश्च वानरसाहस्रैः परिक्षिप्तः समन्ततः ।
रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥३२॥
बाहुभ्यां वानरान् सर्वानाकृष्य स महाबलः ।
भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥३३॥
प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसंनिभे ।

नासापुटाभ्यां निष्पेतुः कर्णाभ्यां चैव वानराः ॥३४॥
मांसशोणितसंक्लेदां कुर्वन् भूमिं स राक्षसः ।
चचार हरिसैन्येषु कालाग्निरिव मूर्च्छितः ॥३५॥
वज्रहस्तो यथा शक्रः पाशहस्तो यथा यमः ।
शूलहस्तो बभौ तद्वत् कुम्भकर्णो महामृधे ॥३६॥
यथा शुष्काण्यरण्यानि ग्रीष्मे दहति पावकः ।
तथा वानरसैन्यानि स ददाह महाबलः ॥३७॥
ततस्ते हन्यमानास्तु हतयूथा विनायकाः ।
वानरा भयसंविग्ना विनेदुर्विकृतस्वराः ॥३८॥
ततो निपीड्यमानास्ते कुम्भकर्णेन वानराः ।
राघवाभ्यां समाजग्मुर्व्यथार्त्ता नष्टचेतसः ॥३९॥
तमापतन्तं संप्रेक्ष्य कुम्भकर्णं महाबलं ।
उत्पपात ततो वीरः सुग्रीवो वानराधिपः ॥४०॥
स सालवृक्षं सहसा संप्रगृह्य महाकपिः ।
अभिदुद्राव वेगेन कुम्भकर्णं महाहवे ॥४१॥
कपिशोणितदिग्धाङ्गं भक्षयन्तं प्लवङ्गमान् ।
कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥४२॥
निहता मे त्वया वीराः कृतं कर्म सुदुष्करं ।
त्रासितानि च सैन्यानि प्राप्तं ते परमं यशः ॥४३॥
त्यक्त्वैतान् वानरान् सर्वान् किमेभिस्त्वं करिष्यसि ।

सहस्वैकं निपातं मे सालवृक्षस्य राक्षस ॥ ४४ ॥
तद्वाक्यं हरिराजस्य सत्त्वधैर्यसमन्वितं ।
श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥ ४५ ॥
प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजः सुतः ।
जातस्त्वं तस्य च क्षेत्रे भास्करेण महात्मना ॥ ४६ ॥
श्रुतपौरुषसंपन्नः कस्माद्गर्जसि वानर ।
कर्मणा दर्शयात्मानं यावत् त्वां प्रमथाम्यहं ॥ ४७ ॥

स कुम्भकर्णस्य वचो निशम्य
व्याविध्य सालं सहसा मुमोच ।
तेनाजघानोरसि कुम्भकर्णं
वृक्षेण कालानलसंनिभेन ॥ ४८ ॥
स सालवृक्षः सहसा च भग्नो
भुजान्तरे तस्य तदा निमग्नः ।
ततो विषेदुः सहसा प्लवङ्गा
रक्षोगणाश्चापि मुदा विनेदुः ॥ ४९ ॥
स सालवृक्षाभिहतश्चुकोप
जहास चैवाथ विवृत्य वक्त्रं ।
व्याविध्य शूलं च तडित्प्रकाशं
चिक्षेप हर्यृक्षपतेर्बधाय ॥ ५० ॥
तत् कुम्भकर्णस्य भुजप्रसृष्टं

शूलं शितं काञ्चनवज्रजुष्टं ।
क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां
बभञ्ज वीरस्तरसा बलेन ॥५१॥
कृतं भारसहस्रेण शूलं कार्ष्णायसं दृढं ।
बभञ्ज जानुमारोप्य प्रहृष्टः प्लवगर्षभः ॥५२॥
स तं तदा भग्नमवेक्ष्य शूलं
चुकोप रक्षोऽधिपतिर्महात्मा ।
उत्पाट्य शृङ्गं सहसाचलस्य
जघान सुग्रीवमुत्पत्य तेन ॥५३॥
स शैलशृङ्गाभिहतो विसंज्ञः
पपात भूमौ युधि वानरेन्द्रः ।
तं प्रेक्ष्य भूमौ पतितं विसंज्ञं
नेदुः प्रहृष्टा युधि यातुधानाः ॥५४॥
तमभ्युपेत्याद्भुतघोरवीर्यः
स कुम्भकर्णो युधि वानरेन्द्रं ।
जहार सुग्रीवमभिप्रगृह्य
यथानिलो मेघमतिप्रचण्डः ॥५५॥
स तं समुत्पाट्य जगाम वीरः
संस्तूयमानो युधि राक्षसौघैः ।
शृण्वन् निनादं त्रिदिवालयानां

प्लवङ्गराजग्रहविस्मितानां ॥५६॥
ततस्तमादाय तदा स मेने
हरीन्द्रमिन्द्रोपमतुल्यवीर्यः ।
अस्मिन् हृते सर्वमिदं विपन्नं
सराघवं सैन्यमितीन्द्रशत्रुः ॥५७॥
विद्रुतां वाहिनीं दृष्ट्वा वानराणां ततस्ततः ।
कुम्भकर्णेन सुग्रीवं गृहीतं च हरीश्वरं ॥५८॥
हनूमांश्चिन्तयामास मतिमान् पवनात्मजः ।
एवं गृहीते सुग्रीवे किं कार्यं वै मया भवेत् ॥५९॥
यत् तु न्याय्यं मया कर्तुं तत् करिष्यामि सर्वथा ।
महापर्वतसंकाशं नाशयिष्यामि राक्षसं ॥६०॥
मया हते संप्रति कुम्भकर्णे
महाबले मुष्टिनिपातभग्ने ।
विमोक्षिते वानरपार्थिवे च
भवन्तु तुष्टाः प्लवगाः समस्ताः ॥६१॥
अथवा स्वयमेवैष आत्मानं मोक्षयिष्यति ।
गृहीतो यद्यपि भवेत् त्रिदशैर्वानराधिपः ॥६२॥
मन्ये न तावदात्मानं बुध्यते वानराधिपः ।
शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥६३॥
अयं मुहूर्त्तात् सुग्रीवो लब्धसंज्ञो महाबलः ।

आत्मनो वानराणां च यत् पथ्यं तत् करिष्यति ॥ ६४॥
मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः ।
अप्रीतिश्च भवेत् कष्टा कीर्त्तिनाशश्च शाश्वतः ॥ ६५॥
तस्मान्मुहूर्त्तं काङ्क्षिष्ये विक्रमं पार्थिवस्य तु ।
भिन्नं च वानरानीकं यावदाश्वासयाम्यहं ॥ ६६॥
इत्येवं चिन्तयित्वा स हनूमान् मारुतात्मजः ।
भूयः संस्तम्भयामास वानराणां महाचमूं ॥ ६७॥
कृच्छ्रेण च समाश्वास्य संगम्य च ततस्ततः ।
वृक्षाद्रिहस्ता हरयस्तस्थुः संग्राममूर्धनि ॥ ६८॥

स कुम्भकर्णोऽथ विवेश लङ्कां
स्फुरन्तमादाय महाहरीशं ।
विमानचर्यागृहगोपुरस्थैर्
माल्योपवर्षैरवकीर्यमाणः ॥ ६९॥
ततः स संज्ञां प्रतिलभ्य कृच्छ्राद्
बलीयसस्तस्य भुजान्तरस्थः ।
अवेक्षमाणः पुरराजमार्गं
विचिन्तयामास मुहुर्महात्मा ॥ ७०॥
एवं गृहीतेन कथं तु नाम
शक्यं मया संप्रतिकर्तुमद्य ।
तथा करिष्यामि यथा हरीणां

भविष्यतोष्टं मम चापि पथ्यं ॥ ७१ ॥

ततः कराग्रैः सहसोर्ध्वमेत्य
राजा हरीणाममरेन्द्रशत्रोः ।
चकर्त कर्णौ दशनैश्च नासां
ददार पार्श्वेषु च कुम्भकर्णं ॥ ७२ ॥

स कुम्भकर्णो हृतकर्णनासो
भृशं नदन् वेदनयार्दितश्च ।
रोषाभिभूतो रुधिरोक्षितश्च
सुग्रीवमाविध्य पिपेष भूमौ ॥ ७३ ॥

स भूतले न्यस्तः कपिप्रवीरः
सुरारिभिस्तैरभिहन्यमानः ।
जगाम वेगाद्वियदभ्युपेत्य
पुनश्च रामं सहसा जगाम ॥ ७४ ॥

कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः ।
रराज शोणितोत्सेकैर्गिरिप्रस्रवणैरिव ॥ ७५ ॥

ततः स पुर्याः सहसा महात्मा
निष्क्रम्य तद्वानरसैन्यमुग्रं ।
अभक्षयत् क्रोधविवृत्तनेत्रः
प्रजा युगान्तेऽग्निरिव प्रदीप्तः ॥ ७६ ॥

बुभुक्षितः शोणितमांसगृध्नुः

प्रविश्य तद्वानरसैन्यमाशु ।
चखाद रक्षांसि हरींश्च रक्ष
ऋक्षांश्च मोहाद्युधि कुम्भकर्णः ॥ ७७ ॥
एकं द्वौ त्रीन् बहूंश्चापि वानरान् राक्षसैः सह ।
समादायैकहस्तेन मुखे प्रक्षिपति स्म सः ॥ ७८ ॥
मुखप्रसृतमेदोऽसृग् घोररूपः स राक्षसः ।
वर्धमानो नगेन्द्राभो भक्षयामास वानरान् ॥ ७९ ॥
ते बध्यमाना हरयो रामं जग्मुस्तदा गतिं ।
राघवश्च समुत्पत्य धनूरत्नं समाददे ॥ ८० ॥
स चापमादाय भुजङ्गकल्पं
दृढज्यमुग्रं तपनीयपृष्ठं ।
हरीन् समाश्वास्य समुत्पपात
रामो निबद्धोत्तमबाणतूणः ॥ ८१ ॥
स वानरगणैस्तैस्तु वृतः परपुरंजयः ।
लक्ष्मणानुचरो रामः संप्रतस्थे महाधनुः ॥ ८२ ॥
स ददर्श महात्मानं किरीटिनमवस्थितं ।
शोणितप्लुतसर्वाङ्गं कुम्भकर्णं महाबलं ॥ ८३ ॥
सर्वान् समभिधावन्तं यथा दुष्टं महागजं ।
मार्गमाणं हरीन् क्रुद्धं राक्षसैः परिवारितं ॥ ८४ ॥
विन्ध्यमन्दरसंकाशं काञ्चनाङ्गदभूषणं ।

स्रवन्तं रुधिरं गात्रान्महामोहसमन्वितं ॥ ८५ ॥
लेलिहानमसृग् वक्त्राज्जिह्वया शोणितोक्षितं ।
मर्दन्तं वानरान् संख्ये कालान्तकयमोपमं ॥ ८६ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तमिव तेजसा ।
रामो विस्फारयामास कार्मुकं पुरुषर्षभः ॥ ८७ ॥
स तस्य धनुर्निर्घोषं श्रुत्वा च नैरृतर्षभः ।
अमृष्यमाणस्तं घोषमभिदुद्राव राघवं ॥ ८८ ॥
तस्मिन् काले सुमित्रायाः पुत्रः परबलार्दनः ।
प्रादुश्चक्रे महाघोरमस्त्रमस्त्रविशारदः ॥ ८९ ॥
स कुम्भकर्णस्य शरान् शरीरे सप्त वीर्यवान् ।
निचखानाददे चान्यान् विससर्ज च लक्ष्मणः ॥ ९० ॥
अतिक्रम्य तु सौमित्रिं कुम्भकर्णो महाबलः ।
राममेवाभिदुद्राव नादयन्निव मेदिनीं ॥ ९१ ॥

ततस्तु वातोद्धुतमेघकल्पं
भुजङ्गराजोत्तमभोगबाहुं ।
तमापतन्तं धरणीधराभम्
उवाच रामो युधि कुम्भकर्णं ॥ ९२ ॥
आगच्छ रक्षोऽधिप मत्समीपम्
अयं स्थितोऽहं शरचापपाणिः ।
अवेहि मां मृत्युमुपस्थितं त्वं

प्रेतो मुहूर्त्ताद्भवितासि पाप ॥ ९३ ॥

रामोऽयमिति विज्ञाय जहास विपुलस्वनं ।
पाटयन्निव सर्वेषां हृदयानि वनौकसां ॥ ९४ ॥
प्रहस्य विकृतं भीमं स मेघस्तनितोपमं ।
कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् ॥ ९५ ॥
नाहं विराधो विज्ञेयो न खरो न च दूषणः ।
न मारीचो न बाली च कुम्भकर्णमवेहि मां ॥ ९६ ॥
पश्य मे मुद्गरं घोरं सर्वकालायसं दृढं ।
अनेन निर्जिता देवा दानवाश्च मया पुरा ॥ ९७ ॥
कर्णनासाविहीनोऽयमवज्ञामिति मा कृथाः ।
अल्पापि हि न मे पीडा कर्णनासाविकर्त्तने ॥ ९८ ॥
दर्शयेक्ष्वाकुशार्दूल वीर्यं गात्रेषु मे लघु ।
ततस्त्वां भक्षयिष्यामि दृष्ट्वा पौरुषविक्रमं ॥ ९९ ॥

स कुम्भकर्णस्य वचो निशम्य
शरान् सुपुङ्खान् विससर्ज रामः ।
तैराहतो वज्रसमानवेगैर्
न चुक्षुभे संयति कुम्भकर्णः ॥ १०० ॥
यैः सायकैस्तालवरा निकृत्ता
बाली हतो राक्षसपुङ्गवाश्च ।
ते कुम्भकर्णस्य शराः शरीरे

वज्रोपमा न व्यथयां बभूवुः ॥१०१॥
स वारिधारा इव सायकांस्तान्
पिबन् शरीरेण महेन्द्रशत्रुः ।
जघान रामस्य शरप्रवेगं
व्याविध्य तं मुद्गरमुग्रवेगं ॥१०२॥
स शत्रुगात्रक्षतजानुलिप्तं
वित्रासनं देवमहाचमूनां ।
व्याविध्य तं मुद्गरमुग्रवेगं
वित्रासयामास रघुप्रवीरं ॥१०३॥
अथाशु समरे रामो दिव्यमस्त्रमुदीरयन् ।
कुम्भकर्णस्य हृदये निचखान शरोत्तमान् ॥१०४॥
तस्य रामेण विद्धस्य सहसाभिप्रधावतः ।
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ॥१०५॥
तस्योरसि निमग्नास्ते शरा बर्हिणपत्रिणः ।
हृदयं पीडयामासुः क्रोधमुक्ता महात्मना ॥१०६॥
हस्ताच्चास्य पपातोर्व्यां विह्वलस्य महायुधं ।
स निरायुधमात्मानं यदा मेने महाबलः ॥१०७॥
मुष्टिभ्यां चरणाभ्यां च चकार कदनं महत् ।
स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ॥१०८॥
रुधिरं परिसुस्राव गिरिः प्रस्रवणैरिव ।

स तीव्रेण च कोपेन रुधिरेण समुक्षितः ॥१०९॥
वानरान् राक्षसांश्चैव खादन् वै परिधावति ।
तस्मिन् काले तु धर्मात्मा लक्ष्मणो वाक्यमब्रवीत् ॥११०॥
कुम्भकर्णबधे युक्तो योगान् परिमृशन् बहून् ।
नैवायं वानरान् खादन् नैव जानाति राक्षसान् ॥१११॥
मत्तः शोणितगन्धेन स्वान् परांश्चैव खादति ।
सर्वे तमभिरोहन्तु सर्वतो वानरर्षभाः ॥११२॥
यूथपाश्च यथा मुख्यास्तिष्ठन्त्वस्य समीपतः ।
अथायं दुर्मतिः पापो गुरुभारप्रपीडितः ॥११३॥
निपतेद्राक्षसो भूमौ नान्यान् हन्यात् प्लवङ्गमान् ।
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ॥११४॥
गयो गवाक्षो गवयः शरभो गन्धमादनः ।
नीलश्च कुमुदश्चैव सुबाहुरङ्गदस्तथा ॥११५॥
ते समारुरुहुर्हृष्टाः कुम्भकर्णं प्लवङ्गमाः ।
कुम्भकर्णस्तु संक्रुद्धः समारूढैः प्लवङ्गमैः ॥११६॥
व्याधूनयत् तान् वेगेन दुष्टहस्तीव हस्तिपान् ।
स तान् दृष्ट्वा विनिर्धूतान् रामो वानरयूथपान् ॥११७॥
महाप्रभावं ज्ञात्वा तं दिव्यान्यस्त्राणि संदधे ।
वायव्यमाहूय ततो महास्त्रं
रामः प्रचिक्षेप निशाचराय ।

समुद्गरं तेन जहार बाहुं
स कृत्तबाहुस्तुमुलं ननाद ॥११८॥
स तस्य बाहुर्गिरिशृङ्गकल्पः
समुद्गरो राघवबाणकृत्तः ।
पपात तस्मिन् हरिसैन्यमध्ये
जघान तां वानरवाहिनीं च ॥११९॥
ते वानरा भग्नबलावशेषाः
पर्यन्तमाश्रित्य भयावसन्नाः ।
प्रवेपिताङ्गा ददृशुः सुघोरं
नरेन्द्ररक्षोऽधिपसंनिपातं ॥१२०॥
स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्
निकृत्तपक्षश्च इवाचलेन्द्रः ।
उत्पाटयामास करेण सालं
ततोऽभिदुद्राव रणे नरेन्द्रं ॥१२१॥
स तस्य बाहुं सहसालवृक्षं
समुद्यतं पन्नगभोगकल्पं ।
इन्द्रास्त्रयुक्तेन जहार रामो
बाणेन वज्राशनिसंनिभेन ॥१२२॥
स कुम्भकर्णस्य भुजो निकृत्तः
पतन्निवाद्रिः पतगेन्द्रमुक्तः ।

विचेष्टमानोऽभिजघान तत्र
　　शिला द्रुमान् राक्षसवानरांश्च ॥१२३॥
तं कृत्तबाहुं प्रसमीक्ष्य रामः
　　समापतन्तं सहसोन्नदन्तं ।
द्वावर्द्धचन्द्रौ निशितौ गृहीत्वा ।
　　चिच्छेद पादौ युधि राक्षसस्य ॥१२४॥
स कृत्तबाहुर्विनिकृत्तपादो
　　विवर्त्य वक्त्रं बडवामुखाभं ।
दुद्राव रामं सहसाभिगर्जन्
　　राहुर्यथा चन्द्रमिवान्तरीक्षे ॥१२५॥
अपूरयत् तस्य मुखं शिताग्रै
　　रामः शरैर्हेमपिनद्धपुङ्खैः ।
स पूर्णवक्त्रो न शशाक वक्तुं
　　चुकूज कृच्छ्रेण मुमोह चापि ॥१२६॥
अथाददे सूर्यमरीचिकल्पं
　　स ब्रह्मदण्डान्तककालतुल्यं
अरिघ्नमैन्द्रं निशितं सुपुङ्खं
　　रामः शरं मारुततुल्यवेगं ॥१२७॥
अवारणीयं विशिखं वीर्यवन्तं सुदारुणं ।
भयंकरममित्राणां ज्ञातीनां नन्दिवर्धनं ॥१२८॥

तं कार्मुके समाधाय विकृष्य च महाबलः ।
ससर्ज कुम्भकर्णस्य बधाय शरमुत्तमं ॥१२९॥
दिव्यं मघवता दत्तं ज्वलन्तमिव तेजसा ।
स विसृष्टो बलवता रामेण निशितः शरः ॥१३०॥
कुम्भकर्णस्य हृदयं भित्त्वा धरणिमाविशत् ।
अथाददे शरं चान्यं दिव्यं नित्याभिरक्षितं ॥१३१॥
पूजितं त्रिदशैः सेन्द्रैः कालदण्डमिवापरं ।

तं वज्रजाम्बूनदचित्रपुङ्खं
प्रदीप्तसूर्यज्वलनप्रकाशं ।
महेन्द्रवज्राशनितुल्यवेगं
बाणं प्रचिक्षेप निशाचराय ॥१३२॥

स सायको राघवबाहुविच्युतो
दिशः स्वभासा दश संप्रकाशयन् ।
विधूमवैश्वानरतुल्यदर्शनो
जगाम शक्राशनितुल्यविक्रमः ॥१३३॥

स तन्महापर्वतकूटसंनिभं
विवृत्तदंष्ट्रोज्ज्वलचारुकुण्डलं ।
चकर्त रक्षोऽधिपतेस्तदा शिरो
यथैव वृत्रस्य पुरा पुरंदरः ॥१३४॥

विनद्य सुमहानादं न्यपतद्राक्षसो हतः ।

वानराणां सहस्रे द्वे कायेनाथ न्यपोथयत् ॥१३५॥
संप्राकम्पन्त लङ्कायाः प्राकारास्तोरणानि च ।
तस्मिन् निपतिते भूमौ चुक्षुभे च महोदधिः ॥१३६॥
तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणं ।
बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥१३७॥
ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः ।
विनेदुरुच्चैर्बहवो राक्षसा विकृतैः स्वरैः ॥१३८॥

स कुम्भकर्णं सुरशत्रुमुत्तमं
महत्सु युद्धेष्वजितं कदाचन ।
ननन्द हत्वा भरताग्रजो रणे
महासुरं वृत्रमिवामराधिपः ॥१३९॥
प्रहर्षयुक्ता बहवश्च वानराः
प्रबुद्धपद्मप्रतिमैरथाननैः ।
अपूजयन् राघवमिष्टभागिनं
हते रिपौ भीमबले निशाचरे ॥१४०॥
ततस्तु देवर्षिमहर्षिगुह्यकाः
सुरासुरा भूतसुपर्णपन्नगाः ।
सयक्षगन्धर्वसदैत्यदानवाः
प्रहर्षिता रामपराक्रमात् तदा ॥१४१॥

## XLVII.

कुम्भकर्णं हतं श्रुत्वा राघवेण महात्मना ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १ ॥
स श्रुत्वा निहतं संख्ये कुम्भकर्णं महाबलं ।
रावणः शोकसंतप्तो मुमोह च पपात च ॥ २ ॥
पितृव्यं पतितं श्रुत्वा देवान्तकनरान्तकौ ।
त्रिशिराश्चातिकायश्च बभूवुः शोकपीडिताः ॥ ३ ॥
भ्रातरं निहतं श्रुत्वा रामेणाक्लिष्टकर्मणा ।
महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः ॥ ४ ॥
ततः कृच्छ्रात् समासाद्य संज्ञां राक्षसपुङ्गवः ।
कुम्भकर्णबधाद्दीनो विललापाथ रावणः ॥ ५ ॥
हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल ।
त्वं मां विहाय वै दैवाद्यातोऽसि यमसादनं ॥ ६ ॥
इदानीं खल्वहं नास्मि यस्य मे पतितो भुजः ।
दक्षिणो यं समाश्रित्य न बिभेमि दिवौकसां ॥ ७ ॥
कथमेवंविधो नाम देवदानवदर्पहा ।
कालाग्निप्रतिमः संख्ये राघवेण निपातितः ॥ ८ ॥
ननु ते वज्रनिष्पेषा यस्य कुर्वन्ति न व्यथां ।
स कथं रामबाणार्त्तः प्रसुप्तोऽसि महीतले ॥ ९ ॥
एते देवगणाः सर्वे ऋषयो गगने स्थिताः ।

निहतं त्वां रणे दृष्ट्वा विनन्दन्ति प्रहर्षिताः ॥ १० ॥
ध्रुवमद्यैव संहृष्टा लब्धलक्ष्याः प्लवङ्गमाः ।
समारोक्ष्यन्ति दुर्गाणि लङ्काद्वाराणि सर्वतः ॥ ११ ॥
राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया ।
कुम्भकर्णविहीनस्य जीविते नास्ति मे स्पृहा ॥ १२ ॥
यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवं ।
ततो मे मरणं श्रेयो न विदं व्यर्थजीवितं ॥ १३ ॥
अद्यैव तं गमिष्यामि देशं यत्रानुजो मम ।
न हि भ्रातृपरित्यक्तः सुखं जीवितुमुत्सहे ॥ १४ ॥
देवा मां प्रहसिष्यन्ति हृष्टाः पूर्वापकारिणं ।
कथमिन्द्रं विजेष्यामि कुम्भकर्ण हते त्वयि ॥ १५ ॥
कथं वैवस्वतं देवं वरुणं च महाबलं ।
तदिदं मामनुप्राप्तं विभीषणवचः शुभं ॥ १६ ॥
यदज्ञानान्मया तस्य न गृहीतं महात्मनः ।
विभीषणाभिशापोऽयं कुम्भकर्णप्रहस्तयोः ॥ १७ ॥
विनाशो वै समुत्पन्नो मां पीडयति दारुणः ।
तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ।
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः ॥ १८ ॥
इति रजनिचराधिपस्तदा पितृप[illegible]ष्ट्रगतं निशम्य तं ।
अनुजमनुशुशोच नैकधा मरणमप[illegible]वात्मनस्तदा ॥ १९ ॥

## XLVIII.

एवं विलपमानस्य रावणस्य महात्मनः ।
श्रुत्वा शोकाभिसंतप्तस्त्रिशिरा वाक्यमब्रवीत् ॥ १ ॥
एवमेतन्महासत्त्व न श्रुतं यद्विभीषणात् ।
न तु सत्पुरुषा ह्येवं विलपन्ति यथा भवान् ॥ २ ॥
ननु त्रिभुवनस्यापि पर्याप्तस्त्वं विनिग्रहे ।
स कस्मात् प्राकृतो यद्वच्छोचस्यात्मानमीश्वर ॥ ३ ॥
ब्रह्मदत्तास्ति ते शक्तिः कवचं सायुधं धनुः ।
सहस्रखरयुक्तश्च रथो मेघसमस्वनः ॥ ४ ॥
यदा त्वया विशस्त्रेण विशस्ता देवदानवाः ।
स सर्वायुधसंपन्नो राघवं हन्तुमर्हसि ॥ ५ ॥
कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणे ।
उद्धरिष्यामि शत्रुं ते गरुडः पन्नगं यथा ॥ ६ ॥
सम्बरो देवराजेन तारको विष्णुना यथा ।
तथाद्य सर्वे पश्यन्तु तं मया युधि निर्जितं । ॥ ७ ॥
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः ।
पुनर्जातमिवात्मानं मेने तस्य सुभाषितैः ॥ ८ ॥
श्रुत्वा तस्य तु तद्वाक्यं देवान्तकनरान्तकौ ।
अतिकायश्च तेजस्वी बभूवुर्युद्धकाङ्क्षिणः ॥ ९ ॥

ततो हर्षसमाविष्टा नगर्युस्ते निशाचराः ।
रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ॥१०॥
अन्तरीक्षचराः सर्वे सर्वे मायाविशारदाः ।
सर्वे त्रिदशदर्पघ्नाः सर्वे संग्रामकाङ्क्षिणः ॥११॥
सर्वेऽस्त्रबलसंपन्नाः सर्वे विपुलकीर्त्तयः ।
सर्वे समरमासाद्य न श्रूयन्ते स्म निर्जिताः ॥१२॥
स तैस्तदा भास्करतुल्यदीप्तिभिः
सुतैर्वृतः शत्रुबलप्रमर्दनैः ।
रराज राजा मघवानिवामरैर्
वृतो महादानवदर्पनाशनैः ॥१३॥

इत्यार्षे रामायणे युद्धकाण्डे वानराश्वासनं नाम
पंचचत्वारिंशः सर्गः — कुम्भकर्णबधो
नाम षट्चत्वारिंशः सर्गः — रावणविलापो नाम
सप्तचत्वारिंशः सर्गः — त्रिशिरोगर्जनं नाम
अष्टचत्वारिंशः सर्गः ॥

## XLIX.

स पुत्रान् संपरिष्वज्य भूषयित्वा विभूषणैः ।
आशीर्भिः सुप्रशस्ताभिः प्रेषयामास संयुगं ॥ १ ॥
महोदरमहापार्श्वौ भ्रातरावुग्रविक्रमौ ।
रक्षणार्थं कुमाराणां प्रेषयामास रावणः ॥ २ ॥
तेऽभिवाद्य महात्मानं रावणं राक्षसेश्वरं ।
कृत्वा प्रदक्षिणं चैव महाकायाः प्रतस्थिरे ॥ ३ ॥
सर्वौषधीभिर्गन्धैश्च समालब्धा महाबलाः ।
निर्जग्मुर्नैर्ऋतव्याघ्राः षडेते युद्धकाङ्क्षिणः ॥ ४ ॥
ततः सुदर्शनं नागं नीलजीमूतसंनिभं ।
ऐरावतकुले जातमारुरोह महोदरः ॥ ५ ॥
सर्वायुधसमायुक्तं तूणतोमरसंकुलं ।
रराज गजमास्थाय सवितेवास्तमूर्द्धनि ॥ ६ ॥
हयोत्तमसमायुक्तं सर्वायुधसमन्वितं ।
आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ॥ ७ ॥
पुष्पैर्माल्यैर्ध्वजैश्चित्रैः काञ्चनैश्च विराजितं ।
किङ्किणीशतनिर्घोषं सुवरूथं घनस्वनं ॥ ८ ॥
त्रिशिरा रथमास्थाय विरराज धनुर्धरः ।
सविद्युदुल्कः सज्वालः सेन्द्रचाप इवाम्बुदः ॥ ९ ॥

त्रिभिः किरीटैस्त्रिशिराः शुशुभे च रथोत्तमे ।
हिमवानिव शैलेन्द्रस्त्रिभिः शृङ्गैर्हिरण्मयैः ॥१०॥
अतिकायोऽतितेजस्वी राक्षसेन्द्रसुतस्तदा ।
आरुरोह रथश्रेष्ठं श्रेष्ठः सर्वधनुष्मतां ॥११॥
सुचक्राक्षं सुसंयुक्तं सानुकर्षं सकूवरं ।
तूणमार्गणसंयुक्तं सप्रासपरिघायुधं ॥१२॥
काञ्चनेन विचित्रेण किरीटेन विराजता ।
भूषणैश्च बभौ वीरः प्रभाभिरिव भास्करः ॥१३॥
विरराज रथे तस्मिन् राजसूनुर्महाबलः ।
वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ॥१४॥
हयमुच्चैःश्रवःप्रख्यं श्वेतं काञ्चनभूषणं ।
मनोजवं महाकायमारुरोह नरान्तकः ॥१५॥
प्रासमुल्कानिभं गृह्य विरराज नरान्तकः ।
शक्तिमादाय तेजस्वी हौताशनिरिवाहवे ॥१६॥
देवान्तकः समादाय परिघं वज्रभूषितं ।
भुजैर्मन्दरमुत्पाट्य बभौ विष्णुरिवाहवे ॥१७॥
गदामादाय विपुलां महापार्श्वो महाबलः ।
विरराज गदापाणिः कुवेर इव संयुगे ॥१८॥
ते प्रतस्थुर्महात्मानो राक्षसाः प्रवरायुधाः ।
सुरा इवामरावत्यां बभूवुर्युद्धदर्पिताः ॥१९॥

तान् गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिस्वनैः ।
अनुजग्मुर्महावीर्या राक्षसा विविधायुधाः ॥ २० ॥
ते विरेजुर्महात्मानः कुमाराः सूर्यतेजसः ।
किरीटिनः श्रिया युक्ताः सप्तर्षय इवाम्बरे ॥ २१ ॥
प्रगृहीता बभौ तेषां छत्राणामावली सिता ।
शारदाभ्रप्रतीकाशा हंसानामावली यथा ॥ २२ ॥
मरणं ते विनिश्चित्य शत्रूणां वा पराजयं ।
इति कृत्वा मतिं वीरा निर्ययुर्युद्धदुर्मदाः ॥ २३ ॥
जगर्जुश्च प्रणेदुश्च चुक्रुशुश्चापि राक्षसाः ।
जहृषुश्च महात्मानो निर्यान्तो युद्धकाङ्क्षिणः ॥ २४ ॥
ततो भेरीः समाजघ्नुः शङ्खान् दध्मुश्च हृष्टवत् ।
पटहान् डिण्डिमांश्चैव तथा वाद्यान्यवादयन् ॥ २५ ॥
उत्क्रुष्टास्फोटितैर्नादैः संचचालेव मेदिनी ।
रक्षसां सिंहनादैश्च पुस्फोटेव नभस्तलं ॥ २६ ॥
तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः ।
ददृशुर्वानरानीकं समुद्यतशिलायुधं ॥ २७ ॥
हरयोऽपि महात्मानो ददृशुर्नैर्ऋतं बलं ।
हस्त्यश्वरथसंबाधं किङ्किणीशतनादितं ॥ २८ ॥
नीलजीमूतसंकाशैः समुच्छ्रितमहायुधैः ।
दीप्तानलरविप्रख्यैर्नैर्ऋतैः सर्वतो वृतं ॥ २९ ॥

तं दृष्ट्वा बलमायान्तं लब्धलक्ष्याः प्लवङ्गमाः ।
समुद्यतमहाशैलाः प्रणेदुस्ते मुहुर्मुहुः ॥३०॥

ततः समुत्कृष्टरवं निशम्य
रक्षोगणा वानरयूथपानां ।
अमृष्यमाणाः परहर्षमुग्रं
महाबला भीमतरं विनेदुः ॥३१॥

तद्राक्षसबलं घोरं प्रविश्य हरिपुङ्गवाः ।
विचेरुरुद्यतैः शृङ्गैर्नगाः शिखरिणो यथा ॥३२॥

केचिदाकाशमाविश्य केचिदुर्व्यां प्लवङ्गमाः ।
रक्षःसैन्येषु संक्रुद्धाश्चेरुर्द्रुमशिलायुधाः ॥३३॥

निजघ्नुः शैलशृङ्गाग्रैर्बिभिदुश्च परस्परं ।
सिंहनादान् विनेदुश्च रणे राक्षसवानराः ॥३४॥

ते पादपशिलाशैलैश्चक्रुर्वृष्टिमनुत्तमां ।
बाणौघैर्वार्यमाणापि हरयो भीमविक्रमाः ॥३५॥

शिखरैः शिखराभास्ते यातुधानान् प्लवङ्गमाः ।
निजघ्नुः संयुगे क्रुद्धाः कालान्तकयमोपमाः ॥३६॥

केचिद्रथगतान् वीरान् गजवाजिगतानपि ।
निजघ्नुः सहसाप्लुत्य यातुधानान् बलीमुखाः ॥३७॥

शैलशृङ्गनिभास्ते तु मुष्टिभिर्भ्रान्तलोचनाः ।
चेलुः पेतुश्च नेदुश्च तत्र राक्षसपुङ्गवाः ॥३८॥

राक्षसास्तु शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान् ।
ततः शैलैश्च वृक्षैश्च विसृष्टैर्हरिराक्षसैः ॥३९॥
शूलमुद्गरखड्गैश्च निशितैः शरवृष्टिभिः ।
मुहूर्त्तेनावृता भूमिरभवच्छोणितोत्प्लुता ॥४०॥
विकीर्णैः पर्वताकारै रक्षोभिरुपमर्दितैः ।
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः ॥४१॥
आक्षिप्याक्षिप्यमाणाश्च यातुधानाश्च वानराः ।
अन्योन्यं शातयामासुः परस्परजिघांसया ॥४२॥
रिपुशोणितदिग्धाङ्गैस्तत्र वानरकुञ्जरैः ।
प्राणांश्चापरिरक्षद्भिरकारि कदनं महत् ॥४३॥
वानरान् वानरैरेव जघ्नुर्घोरा हि राक्षसाः ।
राक्षसान् राक्षसैरेव पिपिषुर्वानरा युधि ॥४४॥
आच्छिद्य च शिलास्तेषां निजघ्नू राक्षसा हरीन् ।
ते समाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः ॥४५॥
आजघ्नुः शैलशिखरैर्बिभिदुश्च परस्परं ।
सिंहनादान् विनेदुश्च रणे वानरराक्षसाः ॥४६॥
भिन्नवर्मधनुर्ज्या वै राक्षसा वानरैर्हताः ।
रुधिरं ववमुस्तत्र रससारमिव द्रुमाः ॥४७॥
रथेन रथिनं चापि वारणं वारणेन च ।
हयेन च हयं केचित् पिपिषुर्वानरा रणे ॥४८॥

क्षुराग्रैरर्धचन्द्रैश्च भल्लैश्च निशितैः शरैः ।
वैतस्तिकैः सुनिशितैः शक्तितोमरमुद्गरैः ॥४९॥
राक्षसा वानरेन्द्राणां कदनं चक्रुराहवे ।
शिलाशैलगदाखड्गैर्घोरैश्च मुषलैरपि ॥५०॥
विकीर्णैः पर्वताग्रैस्तु द्रुमैश्छिन्नैश्च संयुगे ।
हतैश्च कपिरक्षोभिर्धरणी दुर्गमाभवत् ॥५१॥

तस्मिन् प्रवृत्ते तुमुले विमर्दे
प्रहृष्यमाणे च बले कपीनां ।
निपात्यमानेषु च राक्षसेषु
महर्षयो देवगणाश्च नेदुः ॥५२॥
ते चापि सर्वे हरयः प्रहृष्टा
विनेदुराहवेडितसिंहनादान् ।
ततो हयं मारुततुल्यवेगम्
आरुह्य शक्तिं निशितां प्रगृह्य ॥५३॥
नरान्तको वानरराजसैन्यं
विवेश सिन्धुस्तु यथार्णवौघं ।
स वानरान् सप्तदशातिवीरः
प्रासेन दीप्तेन विनिर्बिभेद ॥५४॥
एकक्षणेनेन्द्ररिपुर्महात्मा
जघान सैन्यं हरिपुङ्गवानां ।

ददृशुश्च महात्मानं हयपृष्ठे प्रतिष्ठितं ।
चरन्तं हरिसैन्येषु भूतविद्याधरर्षयः ॥५५॥
स तस्य ददृशे मार्गो मांसशोणितकर्दमः ।
पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥५६॥
यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुङ्गवाः ।
तावदेतानतिक्रम्य निर्बिभेद नरान्तकः ॥५७॥
सर्वासु दिक्षु बलवान् विचचार नरान्तकः ।
कर्षन् वानरसैन्यानि महाभ्राणीव मारुतः ॥५८॥
यतो यतः स ददृशे प्रासपाणिर्नरान्तकः ।
ततस्ततोऽभ्यमन्यन्त कालोऽयमिति वानराः ॥५९॥
यावदुत्पाटयामासुः शैलान् वृक्षांश्च वानराः ।
तावत् प्रासहताः पेतुर्वज्रकृत्ता इवाचलाः ॥६०॥
न शेकुर्द्रवितुं वीरा न स्थातुं स्यन्दितुं न च ।
स्थितं चोत्प्रपतन्तं च प्रासाग्रेण स विव्यधे ॥६१॥
एकेनान्तककल्पेन प्रासेनादित्यवर्चसा ।
भिन्नानि हरिसैन्यानि निपेतुर्धरणीतले ॥६२॥
वज्रनिष्पेषनिनदं प्रासस्य विनिपातनं ।
न शेकुर्वानराः सोढुं स्पर्शमग्नेरिव प्रजाः ॥६३॥
पततां हरिवीराणां रूपाणि प्रचकाशिरे ।
वज्रभग्नाग्रकूटानां शैलानां पततामिव ॥६४॥

ये न पूर्वं महात्मानः कुम्भकर्णेन पातिताः ।
नरान्तकेन ते सर्वे द्राविता निहता युधि ।। ६५ ।।
निरीक्षमाणः सुग्रीवो ददर्श हरिवाहिनीं ।
नरान्तकभयत्रस्तां विद्रवन्तीं ततस्ततः ।। ६६ ।।
विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकं ।
प्रासपाणिनमायान्तं हयपृष्ठेन दर्पितं ।। ६७ ।।
अथोवाच महातेजाः सुग्रीवो हरिपुङ्गवः ।
कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमं ।। ६८ ।।
गच्छैतं राक्षसं वीरं घोरं तुरगमास्थितं ।
क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय ।। ६९ ।।
स तु भर्तुर्वचः श्रुत्वा निष्पपाताङ्गदस्तदा ।
अनीकान्मेघसंकाशान्मेघानीकादिवांशुमान् ।। ७० ।।
निरायुधो महातेजाः केवलं नखदंष्ट्रवान् ।
नरान्तकमुपव्रज्य बालिसूनुरभाषत ।। ७१ ।।
तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि ।
युध्यस्वाद्य मया सार्द्धं रणे सत्पुरुषो भव ।। ७२ ।।
अस्मिन् वज्रसमस्पर्शे प्रासं मे क्षिप वक्षसि ।
अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः ।
संपीड्य दशनैरोष्ठौ निःश्वस्य च पुनः पुनः ।। ७३ ।।
स प्रासमाविध्य तदाङ्गदाय

ज्वलन्तमुग्रं सहसा ससर्ज ।
स बालिपुत्रोरसि वज्रकल्पे
बभूव भग्नो न्यपतच्च भूमौ ॥ ७४ ॥
तं प्रासमालोक्य तदा च भग्नं
सुपर्णकृत्तोत्तमभोगकल्पं ।
मुष्टिं समुद्यम्य स बालिपुत्रस्
तुरङ्गमं तस्य जघान मूर्ध्नि ॥ ७५ ॥
स तस्य वाजी निपपात भूमौ
तेन प्रहारेण विकीर्णमूर्द्धा ।
निमग्नतालुः स्फुटिताक्षितारो
निर्वान्तजिह्वोऽचलसंनिकाशः ॥ ७६ ॥
नरान्तकः क्रोधवशं जगाम
हतं तुरङ्गं पतितं समीक्ष्य ।
स मुष्टिमुद्यम्य महाप्रभावो
जघान शीर्षे युधि बालिपुत्रं ॥ ७७ ॥
अथाङ्गदो मुष्टिनिपिष्टमूर्द्धा
सुस्राव तीव्रं रुधिरं तु शीर्षात् ।
मुहुः प्रजज्वाल मुमोह चापि
संज्ञां समासाद्य च विस्मितोऽभूत् ॥ ७८ ॥
अथाङ्गदो वज्रसमानवेगः

संबध्य मुष्टिं गिरिशृङ्गकल्पं ।
निपातयामास तदा महात्मा
नरान्तकस्योरसि बालिसूनुः ॥ ७९ ॥
स मुष्टिनिष्पिष्टविभिन्नवक्षा
मुखाद्वमच्छोणितदिग्धगात्रः ।
नरान्तको भूमितले पपात
यथाचलो वज्रनिपातभग्नः ॥ ८० ॥
अथान्तरीक्षे त्रिदशोत्तमानां
वनौकसां चापि महान् निनादः ।
बभूव तस्मिन् निहतेऽतिवीर्ये
नरान्तके बालिसुतेन संख्ये ॥ ८१ ॥
अथाङ्गदो राममनः प्रहर्षयन्
सुदुष्करं तं कृतवान् हि विक्रमं ।
विसिस्मिये नाति स भीमविक्रमः
पुनश्च युद्धाय मनो दधे तदा ॥ ८२ ॥

इत्यार्षे रामायणे युद्धकाण्डे नरान्तकवधो नाम
नवचत्वारिंशः सर्गः ॥

## L.

नरान्तकं हतं श्रुत्वा चुक्रुधे नैर्ऋतर्षभः ।
देवान्तकस्त्रिमूर्द्धा च पौलस्त्यश्च महोदरः ॥ १ ॥
आरूढो मेघसंकाशं वारणेन्द्रं महोदरः ।
बालिपुत्रं महावीर्यमभिदुद्राव वीर्यवान् ॥ २ ॥
भ्रातुर्मरणसंतप्तस्तथा देवान्तको बली ।
आदाय परिघं घोरमङ्गदं संप्रदुद्रुवे ॥ ३ ॥
रथमादित्यसंकाशं युक्तं परमवाजिभिः ।
आस्थाय त्रिशिराश्चापि बालिपुत्रमुपाद्रवत् ॥ ४ ॥
स त्रिभिर्देवदर्पघ्नैर्नैर्ऋतेन्द्रैरभिद्रुतः ।
वृक्षमुत्पाटयामास महाविटपमङ्गदः ॥ ५ ॥
देवान्तकाय तं वीरश्चिक्षेप बलिने बली ।
महावृक्षं महाशैले शक्रो दीप्तामिवाशनिं ॥ ६ ॥
त्रिशिरास्तं तु चिच्छेद शरैराशीविषोपमैः ।
वृक्षं निकृत्तमालोक्य समुत्पत्य तदाङ्गदः ॥ ७ ॥
पुनः ससर्ज वृक्षांश्च शिलाश्च कपिकुञ्जरः ।
तांश्चिच्छेद च संक्रुद्धस्त्रिशिरा निशितैः शरैः ॥ ८ ॥
शिलाश्च परिघाग्रेण बभञ्ज विबुधान्तकः ।
त्रिशिरास्त्वङ्गदं वीरमभिदुद्राव सायकैः ॥ ९ ॥

गजेन समभिद्रुत्य वालिपुत्रं महोदरः ।
आजघानोरसि व्यूढे तोमरैर्वज्रसंनिभैः ॥१०॥
देवान्तकस्तु संक्रुद्धः परिघेण तदाङ्गदं ।
उपगम्याभिहत्यैनं मुहुर्मुहुरुपाक्रमत् ॥११॥
स त्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत् समभिद्रुतः ।
न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥१२॥
तलेन भृशमुत्पत्य जघान गजमङ्गदः ।
पेततुस्तस्य नेत्रे च ननादाथ स वारणः ॥१३॥
विषाणं चास्य निष्कृष्य वालिपुत्रो महाबलः ।
देवान्तकमभिद्रुत्य जघान च तथोरसि ॥१४॥
स विह्वलितसर्वाङ्गो वातोद्धूत इव द्रुमः ।
लाक्षारससवर्णं च सुस्राव रुधिरं मुखात् ॥१५॥
अथाश्वास्य महातेजाः क्षणाद्देवान्तको बली ।
आविध्य परिघं गाढमाजघान तदाङ्गदं ॥१६॥
परिघेण हतः सोऽपि वानरेन्द्रात्मजस्तदा ।
जानुभ्यां पतितो भूमौ पुनरभ्युत्पपात च ॥१७॥
तमुत्पतन्तं त्रिशिराः शरैराशीविषोपमैः ।
घोरैर्हरिपतेः पुत्रं ललाटे त्रिभिराहनत् ॥१८॥
ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुङ्गवैः ।
हनूमानपि विज्ञाय नीलश्चापि प्रतस्थतुः ॥१९॥

ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा ।
तं रावणसुतो धीमान् बिभेद निशितैः शरैः ॥ २० ॥
तद्बाणशतनिर्भिन्नं विदारितशिलातलं ।
सविस्फुलिङ्गं सज्वालं निपपात गिरेः शिरः ॥ २१ ॥
तत् तु भग्नं समालोक्य हर्षाद्देवान्तकस्तदा ।
परिघेणाभिदुद्राव मारुतात्मजमाहवे ॥ २२ ॥
तमापतन्तमालोक्य हनुमान् कपिकुञ्जरः ।
आजघान ततो मूर्द्ध्नि वज्रवेगेन मुष्टिना ॥ २३ ॥

स मुष्टिनिष्पिष्टविकीर्णमूर्द्धा
विशीर्णदन्ताक्षिविलम्बजिह्वः ।
देवान्तको राक्षसराजसूनुर्
गतासुरुर्व्यां सहसा पपात ॥ २४ ॥
तस्मिन् हते राक्षसयोधमुख्ये
महाबले संयति देवशत्रौ ।
महोदरः क्रोधवशाच्छरौघैर्
ववर्ष नीलाशनिमाहवाग्रे ॥ २५ ॥
स तैः शरौघैरभिहन्यमानो
विभिन्नगात्रः कपिसैन्यपालः ।
विष्टब्धगात्रोऽपि बभूव नीलो
विष्टम्भितस्तेन महाबलेन ॥ २६ ॥

ततस्तु नीलः प्रतिलभ्य संज्ञां
स शैलमुत्पाट्य सवृक्षषण्डं ।
सुदूरमुत्पत्य महोग्रवेगो
महोदरं तेन जघान मूर्ध्नि ॥ २७ ॥

ततः स शैलाग्रनिपातभग्नो
महोदरस्तेन सह द्विपेन ।
निसूदितो भूमितले गतासुः
पपात वज्राभिहतो यथाद्रिः ॥ २८ ॥

पितृव्यं निहतं दृष्ट्वा त्रिशिराः क्रोधमूर्च्छितः ।
हनूमन्तं सुसंक्रुद्धो विव्याध निशितैः शरैः ॥ २९ ॥

स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः ।
त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ ३० ॥

तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं महाबलः ।
विससर्ज ततो वीरो रावणस्य सुतं प्रति ॥ ३१ ॥

तामापतन्तीं सहसा द्रुमवृष्टिं प्रतापवान् ।
त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ ३२ ॥

हनूमांस्तु समुत्पत्य हयांस्त्रिशिरसस्तदा ।
विददार नखैः क्रुद्धो गजेन्द्रं मृगराडिव ॥ ३३ ॥

ततः शक्तिं समादाय कालरात्रिमिवान्तकः ।
हनूमति प्रचिक्षेप त्रिशिरा रावणात्मजः ॥ ३४ ॥

दिवि दीप्तामिवोल्कां तां शक्तिं क्षिप्तां स्वशक्तिना ।
गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥ ३५ ॥
तां दृष्ट्वा वज्रसंकाशां शक्तिं भग्नां हनूमता ।
विनेदुर्वानराः सर्वे प्रहृष्टा जलदा इव ॥ ३६ ॥
ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः ।
निचखान तदा शूरो वानरेन्द्रस्य वक्षसि ॥ ३७ ॥
खड्गप्रहाराभिहतो हनूमान् प्लवगोत्तमः ।
आजघान त्रिशिरसं तलेनोरसि वीर्यवान् ॥ ३८ ॥
स तथाभिहतस्तेन स्रस्तहस्तायुधो भुवि ।
निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ३९ ॥
पततस्तस्य खड्गं तु समाक्षिप्य महाकपिः ।
ननाद गिरिसंकाशस्त्रासयन् सर्वनैर्ऋतान् ॥ ४० ॥
अमृष्यमाणस्तं घोषं त्रिशिराः क्षिप्रमुत्थितः ।
उत्पत्य च हनूमन्तं मुष्टिनाभिजघान ह ॥ ४१ ॥
तेन मुष्टिप्रहारेण संचचाल महाकपिः ।
कुपितश्चापि जग्राह किरीटे राक्षसर्षभं ॥ ४२ ॥
स तस्य खड्गेन महाशिरांसि
कपिः समस्तानि सुकुण्डलानि ।
क्रुद्धः प्रचिच्छेद तदा हनूमांस्
त्वष्ट्रात्मजस्येव शिरांसि शक्रः ॥ ४३ ॥

तान्यायताक्षाण्यगसंनिभानि
प्रदीप्तवैश्वानरभास्वराणि ।
पेतुः शिरांसीन्द्ररिपोर्धरण्यां
ज्योतींषि मुक्तानि यथार्कमार्गात् ॥४४॥
तस्मिन् हते देवरिपौ त्रिशीर्षे
हनूमता शक्रपराक्रमेण ।
नेदुः प्लवङ्गाः प्रचचाल भूमी
रक्षांसि सर्वाणि विदुद्रुवुश्च ॥४५॥
हतं त्रिशिरसं दृष्ट्वा तथैव च महोदरं ।
हतौ च प्रेक्ष्य तेजस्वी देवान्तकनरान्तकौ ॥४६॥
चुकोप सुमहातेजा महापार्श्वो महाबलः ।
जग्राहार्चिष्मतीं चापि गदां सर्वायसीं तदा ॥४७॥
हेमपट्टशतैर्नद्धां मांसमेदोऽनुलेपनां ।
रोचमानां सुविपुलां शत्रुशोणितरञ्जितां ॥४८॥
तेजसा संप्रदीप्ताग्रां रक्तमाल्यविभूषितां ।
ऐरावतकराकारां सर्वभूतभयावहां ॥४९॥
गदामादाय संक्रुद्धो महापार्श्वो महाबलः ।
हरीन् समभिदुद्राव युगान्ताग्निरिव प्रजाः ॥५०॥
अथर्षभः समुत्पत्य वानरो वरुणात्मजः ।
महापार्श्वमुपागम्य तस्थौ तस्याग्रतो हरिः ॥५१॥

तं पुरस्तात् स्थितं दृष्ट्वा वानरं पर्वतोपमं ।
आजघानोरसि क्रुद्धो गदया राक्षसर्षभः ॥५२॥
स तथाभिहतस्तेन गदया वानरर्षभः ।
भिन्नवक्षाः समाधूतः सुस्राव रुधिरं मुहुः ॥५३॥
स संप्राप्य चिरात् संज्ञामृषभो वानरर्षभः ।
क्रुद्धो विस्फुरमाणोष्ठो महापार्श्वं निरैक्षत ॥५४॥
ततः सोऽथ महात्मा च गदामादाय तां बलात् ।
तमभिप्लुत्य वेगेन जघान रणमूर्द्धनि ॥५५॥
स भीमगदया भिन्नो निर्धूतदशनेक्षणः ।
निपपात महापार्श्वो वज्राहत इवाचलः ॥५६॥

तस्मिन् हते भ्रातरि रावणस्य
तन्नैर्ऋतानां बलमर्णवाभं ।
त्यक्तायुधं केवलजीवितार्थि
दुद्राव भीतं निहतप्रवीरं ॥५७॥

इत्यार्षे रामायणे युद्धकाण्डे त्रिशिरोमहापार्श्व-
बधो नाम पञ्चाशः सर्गः ॥

# युद्धकाण्डं

## LI.

स्वबलं निहतं दृष्ट्वा तुमुले लोमहर्षणे ।
भ्रातृंश्च निहतान् संख्ये शक्रतुल्यपराक्रमान् ॥ १ ॥
पितृव्यौ चापि संप्रेक्ष्य समरे विनिसूदितौ ।
महोदरमहापार्श्वौ भ्रातरौ राक्षसर्षभौ ॥ २ ॥
चुकोप सुमहातेजा ब्रह्मदत्तवरो विभुः ।
अतिकायो महावीर्यो देवदानवदर्पहा ॥ ३ ॥
स भास्करसहस्रस्य संघातमिव भास्वरं ।
रथमास्थाय शक्रारिर्दुद्राव हरियूथपान् ॥ ४ ॥
स विस्फार्य महच्चापं किरीटी मृष्टकुण्डलः ।
नाम विश्रावयामास ननाद च महास्वनं ॥ ५ ॥
तेन सिंहप्रणादेन नामविश्रावणेन च ।
ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६ ॥
ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे ।
भयार्त्ता वानरास्तत्र निलिल्युश्च परस्परं ॥ ७ ॥
तेऽतिकायं समासाद्य वानरास्त्रस्तचेतसः ।
शरण्यं शरणं जग्मू रामं पुरुषपुङ्गवं ॥ ८ ॥
ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमं ।
ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥ ९ ॥

स तं दृष्ट्वा महाघोरं राघवो विस्मितोऽभवत् ।
वानरान् सान्त्वयित्वा तु विभीषणमभाषत ॥१०॥
कोऽयं पर्वतसंकाशो धनुष्मान् हरिलोचनः ।
युक्ते चाश्वसहस्रेण विशाले स्यन्दने स्थितः ॥११॥
यः शरैर्निशितैः शूलैर्मुषलैः प्रासतोमरैः ।
अर्चिष्मद्भिर्वृतो भाति विद्युद्भिरिव तोयदः ॥१२॥
धनूंषि चास्य सज्यानि हेमपृष्ठानि सर्वतः ।
शोभयन्ति रथश्रेष्ठं शक्रचापमिवाम्बरं ॥१३॥
क एष रक्षःशार्दूलो रणभूमिं विराजयन् ।
अभ्येति रथिनां श्रेष्ठो रथेनादित्यवर्चसा ॥१४॥
ध्वजशृङ्गप्रतिष्ठेन राहुणाभिविराजते ।
अर्करश्म्युपमैर्बाणैर्दिशो दश विराजयन् ॥१५॥
त्रिरायतं त्रिप्रणतं हेमपृष्ठमलङ्कृतं ।
शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥१६॥
सध्वजः सपताकश्च सानुकर्षो महारथः ।
सर्वायुधसमायुक्तो मेघस्तनितनिस्वनः ॥१७॥
विंशतिर्दश च द्वे च तूणा रथवरे स्थिताः ।
कार्मुकाणि च भीमानि गदाश्चोग्रप्रदर्शनाः ॥१८॥
द्वौ च खड्गौ रथगतौ पार्श्वस्थौ पार्श्वशोभिनौ ।
चतुर्हस्तत्सरू दिव्यौ दशहस्तौ तथायतौ ॥१९॥

रक्तमाल्याम्बरधरो महापर्वतसंनिभः ।
कालः कालमहावक्त्रो मेघवर्णमिवाम्बरं ॥ २० ॥
काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभते ।
शृङ्गाभ्यामिव दीप्ताभ्यां हिमवान् पर्वतोत्तमः ॥ २१ ॥
कुण्डलाभ्यां च यस्येदं भाति वक्त्रं शुभेक्षणं ।
पुनर्वस्वन्तरस्थो हि परिपूर्णो यथा शशी ॥ २२ ॥
आचक्ष्व मे महाबाहो कोऽयं राक्षसपुङ्गवः ।
यं दृष्ट्वा वानराः सर्वे भयार्त्ता विप्रदुद्रुवुः ॥ २३ ॥
स पृष्टो राजपुत्रेण रामेणामिततेजसा ।
आचचक्षे महातेजा राघवाय विभीषणः ॥ २४ ॥
दशग्रीवो महातेजा राजा वैश्रवणानुजः ।
भीमकर्मा महोत्साहो रावणो राक्षसाधिपः ॥ २५ ॥
तस्य पुत्रो ह्यसौ वीरो रावणप्रतिमो रणे ।
वृद्धसेवी श्रुतिधरः सर्वशास्त्रविशारदः ॥ २६ ॥
अश्वपृष्ठे गजस्कन्धे रथे धनुषि चोत्तमः ।
भेदसान्त्वप्रदानेषु नये मन्त्रे च संमतः ॥ २७ ॥
अस्य प्रभावः सुमहान् कथ्यते देवदानवैः ।
तनयो धन्यमालिन्या ह्यतिकाय इति श्रुतः ॥ २८ ॥
एतेनाराधितो ब्रह्मा तपसा भावितात्मना ।
अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः ॥ २९ ॥

सुरासुरेभ्योऽबध्यत्वं दत्तमस्य स्वयम्भुवा ।
एतच्च कवचं दिव्यं रथश्चैष हिरण्मयः ॥ ३० ॥
एतेन शतशो देवा दानवाश्च पराजिताः ।
रक्षितानि च रक्षांसि यक्षाश्च युधि सूदिताः ॥ ३१ ॥
वज्रं विष्टम्भितं बाणै रणे चेन्द्रस्य धीमतः ।
पाशः सलिलराजस्य युद्धे प्रतिहतः पुरा ॥ ३२ ॥
एषोऽतिकायो बलवान् राक्षसानां महारथः ।
रावणस्य सुतो वीरो देवदानवदर्पहा ॥ ३३ ॥
एतस्मिन् क्रियतां यत्नः क्षिप्रं पुरुषपुङ्गव ।
एष वानरसैन्यानि क्षयं नेष्यति सायकैः ॥ ३४ ॥
ततोऽतिकायो बलवान् प्रविश्य हरिवाहिनीं ।
विस्फारयामास धनुर्ननाद च मुहुर्मुहुः ॥ ३५ ॥
तं भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरं ।
अभिपेतुर्महात्मानो ये प्रधानाः प्लवङ्गमाः ॥ ३६ ॥
अङ्गदः कुमुदो मैन्दो नीलः शरभ एव च ।
पादपैर्गिरिशृङ्गैश्च युगपत् समुपाद्रवन् ॥ ३७ ॥
तेषां वृक्षान् शिलाश्चैव शरैः कनकभूषणैः ।
अतिकायोऽतितेजस्वी चिच्छेदास्त्रविदां वरः ॥ ३८ ॥
तांश्चैव तु हरीन् सर्वान् शरैः सर्वायसैर्बली ।
विव्याधाभिमुखान् संख्ये भीमकर्मा निशाचरः ॥ ३९ ॥

तेऽर्दिताः शरवर्षेण भिन्नगात्राः प्लवङ्गमाः ।
न शेकुरतिकायस्य पुरतः स्थातुमाहवे ॥ ४० ॥
तत् सैन्यं हरिवीराणां त्रासयामास राक्षसः ।
मृगयूथमिव क्रुद्धः केशरी बलदर्पितः ॥ ४१ ॥
स राक्षसेन्द्रो हरिसैन्यमध्ये
नायुध्यमानान् निजघान कांश्चित् ।
समेत्य रामं सहसा धनुष्मान्
स गर्वितं वाक्यमिदं बभाषे ॥ ४२ ॥
एष स्थितोऽहं शरचापपाणिर्
न प्राकृतं कञ्चन योधयामि ।
यस्यास्ति शक्तिर्व्यवसाययुक्ता
ददातु मे युद्धमिहाद्य शीघ्रं ॥ ४३ ॥
तत् तस्य वाक्यं ब्रुवतो निशम्य
चुकोप सौमित्रिरमित्रहन्ता ।
अमृष्यमाणश्च समुत्पपात
जग्राह चापं च ततोऽर्थसिद्धौ ॥ ४४ ॥
पुरस्ताच्चातिकायस्य विचकर्ष महद्धनुः ।
पूरयित्वा महाशैलान् घोषेण सागरं दिशः ॥ ४५ ॥
सौमित्रेर्धनुषो घोषं श्रुत्वा प्रतिभयं तदा ।
विसिस्मिये महातेजा राक्षसेन्द्रसुतो बली ॥ ४६ ॥

ततोऽतिकायः कुपितो दृष्ट्वा लक्ष्मणमुद्यतं ।
आदाय निशितं बाणमिदं वचनमब्रवीत् ॥४७॥
बालस्त्वमसि सौमित्रे अज्ञातबलविक्रमः ।
गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥४८॥
न हि मद्बाहुसृष्टानां शराणां नतपर्वणां ।
सोढुमुत्सहते वेगमन्तरीक्षचरोऽपि वै ॥४९॥
सुखप्रसुप्तं कालाग्निं न बोधयितुमर्हसि ।
न्यस्य चापं निवर्तस्व मा प्राणांस्त्वं परित्यज ॥५०॥
अथवा त्वं प्रतिष्टम्भान्न निवर्तितुमिच्छसि ।
तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयं ॥५१॥
पश्य मे निशितान् बाणान् रिपुदर्पविनाशनान् ।
ऐश्वरायुधसंकाशांस्तप्तकाञ्चनभूषणान् ॥५२॥
एष ते सर्पसदृशो बाणः पास्यति शोणितं ।
निदाघे रश्मिभिस्तीक्ष्णैरादित्यः सलिलं यथा ॥५३॥
यद्यपि त्वां हनिष्यामि का मे कीर्त्तिर्भविष्यति ।
अज्ञातवीर्यं बालं च ख्यातस्य त्रिदिवालये ॥५४॥
कामस्तु यदि ते मोहान्मां योधयितुमाहवे ।
त्यज सर्वात्मना बाणांस्ततस्त्यक्ष्यसि जीवितं ॥५५॥

श्रुत्वातिकायस्य वचः सुघोरं
सगर्वितं संयति राजपुत्रः ।

न चैव चुक्रोध बले धृतात्मा
प्रोवाच चैनं स ततो महात्मा ॥ ५६ ॥
न वाक्यमात्रेण भवन्ति शूरा
न कत्थनाः सत्पुरुषा भवन्ति ।
मयि स्थिते धन्विनि बाणपाणौ
विदर्शयस्वात्मबलं दुरात्मन् ॥ ५७ ॥
कर्मणा दर्शयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण हि यो युक्तः स शूर इति संज्ञितः ॥ ५८ ॥
सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः ।
शरैर्वा यदिवाप्यस्त्रैर्दर्शय स्वपराक्रमं ॥ ५९ ॥
ततः शिरस्ते निशितैः पातयिष्यामि मार्गणैः ।
मारुतः कालसंपक्वं वृन्तात् तालफलं यथा ॥ ६० ॥
अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः ।
पास्यन्ति रुधिरं देहादमृतं विबुधा इव ॥ ६१ ॥
बालोऽयमिति विज्ञाय नावज्ञां कर्तुमर्हसि ।
बालं वा यदिवा वृद्धं मृत्युं जानीहि मां रणे ॥ ६२ ॥
लक्ष्मणस्य वचः श्रुत्वा हेतुमत् परमार्थवत् ।
अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ॥ ६३ ॥
तमापतन्तं सौमित्रिस्त्रिधा चिच्छेद सायकैः ।
रावणिः परमामर्षी शरैरेनमुपाद्रवत् ॥ ६४ ॥

ततः शरसहस्रेण संछाद्य रघुनन्दनं ।
विभीषणं च सामात्यं यूथपांश्चापि दुद्रुवे ॥ ६५ ॥
संत्रास्य वानरीं सेनां शरवर्षैर्महाभुजः ।
सौमित्रिमभिदुद्राव पुनरेव महामृधे ॥ ६६ ॥
तमापतन्तं सहसा प्रतिगृह्णन् महाभुजः ।
लक्ष्मणो राक्षसश्रेष्ठं शरैश्चाग्निसमप्रभैः ॥ ६७ ॥
ततो विद्याधरा यक्षा देवा देवर्षयस्तथा ।
गुह्यकाश्च महात्मानस्तद्युद्धं ददृशुस्तदा ॥ ६८ ॥
ततोऽतिकायः कुपितश्चापे संधाय सायकं ।
उद्दिश्य लक्ष्मणं चैव ससर्ज रजनीचरः ॥ ६९ ॥
तमापतन्तं निशितं शरमाशीविषोपमं ।
अर्द्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ७० ॥
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगं ।
अतिकायो भृशं क्रुद्धः पञ्चबाणान् समाददे ॥ ७१ ॥
तान् शरान् संप्रचिक्षेप लक्ष्मणाय स राक्षसः ।
तानप्राप्तान् शरैस्तीक्ष्णैश्चिच्छेद युधि लक्ष्मणः ॥ ७२ ॥
स तांश्छित्त्वा शरांस्तीक्ष्णान् लक्ष्मणः पुरुषर्षभः ।
आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥ ७३ ॥
तमादाय धनुःश्रेष्ठे योजयामास लक्ष्मणः ।
विचकर्ष च वेगेन विससर्ज च सायकं ॥ ७४ ॥

कर्णायतविसृष्टेन शरेणानतपर्वणा ।
ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ॥ ७५ ॥
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः ।
ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाह्वे ॥ ७६ ॥
राक्षसः प्रचकम्पे च लक्ष्मणेषुप्रचालितः ।
रुद्रबाणाहतं घोरं यथा त्रिपुरगोपुरं ॥ ७७ ॥
चिन्तयामास चाश्वस्य विश्रम्य च महाबलः ।
साधु बाणनिपातस्ते श्लाघनीयोऽसि मे रिपुः ॥ ७८ ॥
विचार्यैवं बलं चास्य नियम्य च भुजावुभौ ।
रथोपस्थं समास्थाय रथेन प्रचचार ह ॥ ७९ ॥
त्रीनेकं पञ्च सप्तेति सायकान् राक्षसः पुनः ।
आददे संदधे चैव निचकर्षोत्ससर्ज च ॥ ८० ॥
ते बाणाः कालसंकाशा राक्षसेन्द्रधनुश्च्युताः ।
हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरं ॥ ८१ ॥
ततस्तान् राक्षसोत्सृष्टान् शरौघान् राघवानुजः ।
असंभ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥ ८२ ॥
तान् शरान् रिपुणा दृष्ट्वा निकृत्तान् रावणात्मजः ।
चुकोपाति सुरेन्द्रारिर्जग्राह निशितं शरं ॥ ८३ ॥
स संधाय महातेजास्तं बाणं नैर्ऋतोऽसृजत् ।
येन सौमित्रिरुरसि चकम्पेऽभिहतस्तदा ॥ ८४ ॥

अतीव तेन सौमित्रिस्ताडितो युधि वक्षसि ।
सुस्राव रुधिरं तीव्रं मदमत्तो यथा द्विपः ॥ ८५ ॥
स चकार तदात्मानं विशल्यं सहसा विभुः ।
जग्राह च शरं तीक्ष्णं तमस्त्रेण च संदधे ॥ ८६ ॥
आग्नेयेन ततोऽस्त्रेण योजयामास सायकं ।
स जज्वाल महाबाणो धनुश्चास्य महात्मनः ॥ ८७ ॥
अतिकायोऽपि तेजस्वी सौरमस्त्रं समाददे ।
तेन बाणं भुजङ्गाभमयोजयत राक्षसः ॥ ८८ ॥
ततस्तु ज्वलनादीप्तं लक्ष्मणः शरमुत्तमं ।
अतिकायाय चिक्षेप कालदण्डमिवापरं ॥ ८९ ॥
आग्नेयास्त्राभिसंयुक्तं दृष्ट्वा बाणं स राक्षसः ।
उत्ससर्ज ततो बाणं दीप्तं सूर्यास्त्रयोजितं ॥ ९० ॥
तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः ।
तेजसा संप्रदीप्ताग्रौ क्रुद्धाविव भुजङ्गमौ ॥ ९१ ॥
तावन्योन्यं विनिर्भिद्य पेततुर्धरणीतले ।
निरर्चिषौ भस्मभूतौ रेजतुर्न शरोत्तमौ ॥ ९२ ॥
ततोऽतिकायस्त्वैषीकमुत्ससर्जास्त्रमुत्तमं ।
तं प्रचिच्छेद सौमित्रिरस्त्रेणैन्द्रेण वीर्यवान् ॥ ९३ ॥
ऐषीकं निहतं दृष्ट्वा कुमारो रावणात्मजः ।
याम्येनास्त्रेण संक्रुद्धो योजयामास सायकं ॥ ९४ ॥

ततस्तदस्त्रं चिक्षेप लक्ष्मणाय स राक्षसः ।
वायव्येन तदस्त्रेण निजघानाथ लक्ष्मणः ॥ ९५ ॥
अथैनं शरधाराभिर्धाराभिरिव तोयदः ।
प्रववर्ष सुसंक्रुद्धो लक्ष्मणं रावणात्मजः ॥ ९६ ॥
तथैव च शरान् क्रुद्धो राक्षसाय रघूत्तमः ।
मुमोचाशीविषाकारान् बधार्थं त्वरितस्तदा ॥ ९७ ॥
तेऽतिकायस्य संप्राप्य कवचं वज्रभूषितं ।
भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥ ९८ ॥
स तान् मोघानभिप्रेक्ष्य लक्ष्मणः परवीरहा ।
अभ्यवर्षत् ततो बाणान् राक्षसे बलवान् मुहुः ॥ ९९ ॥
स ताड्यमानो बाणौघैरतिकायो महाबलः ।
अभेद्यकवचानद्धो राक्षसो नैव विव्यथे ॥ १०० ॥
न शशाक यदा तस्य रुजां कर्तुं महाशरैः ।
तदैनमभ्युपागम्य वायुः कर्णे वचोऽब्रवीत् ॥ १०१ ॥
ब्रह्मदत्तवरो ह्येष चाभेद्यकवचावृतः ।
ब्राह्मेमं ब्रह्मणोऽस्त्रेण वासवो नमुचिं यथा ॥ १०२ ॥

ततस्तु वाक्यं स निशम्य वायोः
सौमित्रिरिन्द्रप्रतिमानवीर्यः ।
समाददे बाणममोघवेगं
तं ब्रह्मणोऽस्त्रेण ततो युयोज ॥ १०३ ॥

तस्मिन् वरास्त्रे विनियुज्यमाने
सौमित्रिणा बाणवरे शिताग्रे ।
दिशः सचन्द्रार्कनभोग्रहाश्च
त्रस्ता भवंश्चापि चचाल चोर्वी ॥ १०४ ॥

तं ब्रह्मणोऽस्त्रेण नियोज्य वीरः
शितं सुपुङ्खं यमदण्डकल्पं ।
सौमित्रिरिन्द्रारिसुतस्य संख्ये
ससर्ज बाणं युधि वज्रकल्पं ॥ १०५ ॥

तं लक्ष्मणोत्सृष्टममोघवेगं
समापतन्तं ज्वलनप्रकाशं ।
सुवर्णवज्रोत्तमचित्रपुङ्खं
ततोऽतिकायः समरे ददर्श ॥ १०६ ॥

तं प्रेक्ष्य बाणं सहसा पतन्तं
जघान बाणैर्निशितैरनेकैः ।
स सायकस्तस्य सुवर्णपुङ्खस्
तथापि वेगेन जगाम पार्श्वं ॥ १०७ ॥

तमागतं प्रेक्ष्य तदातिकायो
बाणं प्रदीप्तानलतुल्यवेगं ।
जघान शक्तीभिर्विनिष्टचेताः
शूलैः कुठारैर्मुषलैः शरैश्च ॥ १०८ ॥

तान्यायुधान्यद्भुतविक्रमाणि
मोघानि कृत्वा स शरोऽग्निकल्पः ।
प्रसह्य तद्भानुकिरीटजुष्टं
तदातिकायस्य शिरो जहार ॥ १०९ ॥

तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रवेपितं ।
पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ ११० ॥

ततो हतान् राक्षसपुङ्गवांस्तु
नरान्तदेवान्तमहोदरादीन् ।
सहातिकायान् निहतावशेषास्
ते रावणाय त्वरिताः शशंसुः ॥ १११ ॥

इत्यार्षे रामायणे युद्धकाण्डे अतिकायवधो नाम
एकपञ्चाशः सर्गः ॥

## LII.

श्रुत्वा तु वचनं तेषां रावणः शोकविह्वलः ।
न किञ्चिदप्युवाचार्त्तो बन्धुनाशविचेतनः ॥ १ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं मन्युनाभिपरिप्लुतं ।
न किञ्चित् कश्चिदप्याह सर्वश्चिन्तापरोऽभवत् ॥ २ ॥
ततस्तु राजानमुदीक्ष्य दीनं
शोकार्णवौघे विनिमज्जमानं ।
रथर्षभो राक्षसराजसूनुर्
अथेन्द्रजिद्वाक्यमिदं बभाषे ॥ ३ ॥
न तात मोहप्रतिपत्तिकालो
यदिन्द्रजिज्जीवति नैर्ऋतेन्द्र ।
नेन्द्रारिबाणाभिहतो हि कश्चित्
प्राणान् रणे धारयितुं समर्थः ॥ ४ ॥
पश्याद्य रामं सह लक्ष्मणेन
मद्बाणनिर्भिन्नविकीर्णदेहं ।
गतायुषं भूमितले शयानं
शरैः शितैराचितसर्वगात्रं ॥ ५ ॥
इमां प्रतिज्ञां शृणु चेन्द्रशत्रोः
सुनिश्चितां पौरुषदैवयुक्तां ।

यथाद्य रामं सह लक्ष्मणेन
संतापयिष्यामि शरैरमोघैः ॥ ६ ॥
रुद्रेन्द्रवैवस्वतविष्णुमित्राः
साध्याश्च वैश्वानरचन्द्रसूर्याः ।
द्रक्ष्यन्ति मे विक्रममप्रमेयं
यथा पुरा विक्रममेव विष्णोः ॥ ७ ॥
स एवमुक्त्वा त्रिदशेन्द्रशत्रुर्
आपृच्छ्य राजानमदीनसत्त्वः ।
समारुरोहानिलतुल्यवेगं
रथं सुचित्रं हयश्रेष्ठयुक्तं ॥ ८ ॥
तमास्थाय महातेजा रथं हरिरथोपमं ।
जगाम सत्वरं तत्र यत्र युद्धमरिन्दमः ॥ ९ ॥
तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः ।
संस्पर्धमाना बहवो धनुःप्राशासिपाणयः ॥ १० ॥
गजस्कन्धगताः केचित् केचिद्वाजिगतास्तथा ।
प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधराः ॥ ११ ॥
स शङ्खनिनदैर्घोरैर्भेरीणां च महास्वनैः ।
जगाम त्रिदशेन्द्रारिः स्तूयमानः सपत्नजित् ॥ १२ ॥
स शङ्खशशिवर्णेन छत्रेण रिपुसूदनः ।
रराज परिपूर्णेन नभश्चन्द्रमसा यथा ॥ १३ ॥

ततस्तं विवीजुर्भीमं हेमाभरणभूषणं ।
चारुचामरमुख्यैश्च मुख्यं सर्वधनुष्मतां ॥ १४ ॥
ततस्त्विन्द्रजिता लङ्का सूर्यप्रतिमतेजसा ।
रराजामितवीर्येण द्यौरिवार्केण भास्वता ॥ १५ ॥
स तु दृष्ट्वा विनिर्यान्तं बलेन महता वृतं ।
राक्षसाधिपतिः श्रीमान् रावणः पुत्रमब्रवीत् ॥ १६ ॥
त्वमप्रतिरथः पुत्र जितस्ते युधि वासवः ।
किं पुनर्मानुषं दीनं त्वं बधिष्यसि राघवं ॥ १७ ॥
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य जयाशिषः ।
रथेनाश्वयुजा वीरः शीघ्रं गत्वा निकुम्भिलां ॥ १८ ॥
स संप्राप्य महातेजा यज्ञभूमिमरिन्दमः ।
स्थापयामास रक्षांसि रथं प्रति समन्ततः ॥ १९ ॥
ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः ।
जुहोद्राक्षसश्रेष्ठो मङ्गलैर्विधिवत् तदा ॥ २० ॥
जुह्वतस्तस्य तत्राग्निं रक्तोष्णीषधरास्त्वयः ।
आजग्मुरथ संभ्रान्ता राक्षसा यत्र रावणिः ॥ २१ ॥
शस्त्राणि शितधाराणि समिधश्च विभीतकान् ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ २२ ॥
सर्वतोऽग्निं परिस्तीर्य शरैः सह सतोमरैः ।
असृक् कृष्णस्य छागस्य कण्ठादादाय जीवतः ॥ २३ ॥

जुहाव पावकं तत्र रक्ताक्ताः समिधस्तथा ।
ततः समिद्धिरिद्धस्य विधूमस्य महार्चिषः ॥ २४ ॥
बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ।
प्रदक्षिणावर्तशिखस्तप्तहाटकसंनिभः ॥ २५ ॥
हविस्तत् प्रतिजग्राह पावकः स्वयमुत्थितः ।
स समावाहयामास ब्राह्ममस्त्रमरिन्दमः ॥ २६ ॥
धनुः शरान् रथं चैव सर्वं तत्राभ्यमन्त्रयत् ।
तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके ॥ २७ ॥
सार्केन्दुग्रहनक्षत्रं वितत्रास नभस्तलं ।
इन्द्रजित् त्वथ संहृष्टो राक्षसेन्द्रसुतस्तदा ॥ २८ ॥
हुत्वाग्निं तर्पयित्वा च दैत्यदानवराक्षसान् ।
आरुरोह रथं दिव्यमन्तर्धानचरं शुभं ॥ २९ ॥
तेन चादित्यकल्पेन ब्रह्मणोऽस्त्रेण पालितः ।
बभूव दुर्धर्षतरो रावणिः समितिञ्जयः ॥ ३० ॥

स सैन्यमुत्सृज्य सचापबाणो
रणे तदा वानरवाहिनीषु ।
अदृश्यमानः शरजालवर्षं
ववर्ष नीलाम्बुधरो यथाम्भः ॥ ३१ ॥
ते शक्रजिद्बाणविकीर्णदेहा
मायाहता विस्वरमुन्नदन्तः ।

रणे निपेतुर्हरयः सुघोरा
　　यथेन्द्रवज्राभिहता नगेन्द्राः ॥ ३२ ॥
ते केवलं तान् ददृशुः सुघोरान्
　　बाणान् घ्नतो वानरवाहिनीषु ।
मायानिगूढं तु सुरेन्द्रशत्रुं
　　न तत्र ते तं ददृशुः सपत्नं ॥ ३३ ॥
ततः स रक्षोऽधिपतिर्महात्मा
　　सर्वासु दिक्षु प्रतिवर्षमाणः ।
प्रच्छादयामास रविप्रभां च
　　विभीषयामास च वानरेन्द्रान् ॥ ३४ ॥
स शूलनिस्त्रिंशपरश्वधानि
　　व्याविध्य तेजोबलसंभृतानि ।
सविस्फुलिङ्गानलसप्रभानि
　　समुत्ससर्ज प्लवगेन्द्रसैन्ये ॥ ३५ ॥
तैस्तैर्ज्वलनसंकाशैः शरैर्वानरयूथपाः ।
ताडिताः पृथिवीं जग्मुर्निकृत्ता इव पादपाः ॥ ३६ ॥
तेऽन्योन्यमभिसर्पन्तो विनदन्तश्च सुस्वरं ।
राक्षसास्त्रविनिर्भिन्ना निपेतुर्वानरर्षभाः ॥ ३७ ॥
निरीक्षमाणा गगनं केचिन्नेत्रे सुताडिताः ।
शरैर्विविशुरन्योन्यं पेतुश्च पृथिवीतले ॥ ३८ ॥

सुग्रीवमङ्गदं नीलं हनूमन्तं महाबलं ।
जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ ३९ ॥
गन्धमादनमैन्दं च गवाक्षगयगोमुखान् ।
केशरिं पनशं चैव तथा सम्पातिमेव च ॥ ४० ॥
सूर्याननं ज्योतिर्मुखं तथा दधिमुखं हरिं ।
ऋषभं चन्दनं चैव कुमुदं चैव वानरं ॥ ४१ ॥
पावकाक्षं नलं चैव तारं च हरियूथपं ।
धूम्रं शतबलिं चैव द्विविदं चापरान् परान् ॥ ४२ ॥
बाणैः शूलैः शितैः प्रासैरिन्द्रजित् तत्र संयुगे ।
विव्याध कपिशार्दूलान् सर्वांस्तान् राक्षसोत्तमः ॥ ४३ ॥

स तांस्तदा वानरराजवीरान्
निर्भिद्य बाणैस्तपनीयपुङ्खैः ।
ववर्ष रामं शरवृष्टिजालैः
सलक्ष्मणं वज्रसमानवेगैः ॥ ४४ ॥

स बाणवर्षैरभिवृष्यमाणो
धारानिपातैरिव पर्वतेन्द्रः ।
निरीक्षमाणः परमाद्भुतश्री
रामस्तदा लक्ष्मणमित्युवाच ॥ ४५ ॥

असौ पुनर्लक्ष्मण राक्षसेन्द्रो
ब्रह्मास्त्रमासाद्य सुरेन्द्रशत्रुः

निसूदयन् वानरवीरसैन्यं
मायां रथस्थो विवृणोति वीरः ॥४६॥
कथं नु शक्यो युधि नष्टदेहो
निहन्तुमद्येन्द्रजिदस्त्रपाणिः ।
मन्ये स्वयम्भूर्भगवानचिन्त्यो
यस्यैतदस्त्रं प्रभवत्यमोघं ॥४७॥
बाणाभिपातांस्त्वमिहाद्य धीमान्
मया सहाव्यग्रमनाः सहस्व ।
प्रच्छादयत्येष हि राक्षसेन्द्रः
सर्वा दिशः सायकवृष्टिजालैः ॥४८॥
एतच्च सर्वं पतिताग्र्यशूरं
प्रमथ्यते वानरराजसैन्यं ।
आवां तु दृष्ट्वा पतितौ विसंज्ञौ
निवृत्तयुद्धौ युधि भीमवेगौ ॥४९॥
ध्रुवं परित्यज्य सुरारिरावाम्
असौ समादाय रणाग्रलक्ष्मीं ।
प्रदास्यते राक्षसपुङ्गवाय
सुहृत्कृतः शक्रसुरारिरद्य ॥५०॥
ततस्तु ताविन्द्रजितोऽस्त्रजालैर्
बभूवतुस्तत्र तदा विशस्तौ ।

स राघवौ तौ बलिनौ विषाद्य
ननाद हर्षाद्युधि राक्षसेन्द्रः ॥५१॥
स तत् तदा वानरराजसैन्यं
सरामसौमित्रिकमप्रमेयं ।
विषाद्य सद्यः सहसा विवेश
पुरीं दशग्रीवभुजाभिगुप्तां ॥५२॥
ततो रावणमासीनमभिवाद्य कृताञ्जलिः ।
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥५३॥
स हर्षवेगानुगतान्तरात्मा
श्रुत्वा गिरस्तस्य महारथस्य ।
जहौ ज्वरं दाशरथेः समुत्थं
प्रतीतचित्तश्च ननन्द पुत्रं ॥५४॥

इत्यार्षे रामायणे युद्धकाण्डे इन्द्रजिद्युद्धं नाम
द्विपञ्चाशः सर्गः ॥

# रामायणं

## LIII.

ततस्तयोः सादितयो रणाग्रे
 मुमोह सैन्यं हरियूथपानां ।
सर्वे विषण्णा विगतप्रभावा
 न चापि किञ्चित् प्रतिपेदिरे स्म ॥ १ ॥
ततो विषण्णं समवेक्ष्य सैन्यं
 विभीषणो बुद्धिमतां वरिष्ठः ।
उवाच शाखामृगराजवीरान्
 आश्वासयन् वाग्भिरदीनसत्त्वः ॥ २ ॥
मा भैष्ट नास्त्यत्र विषादकालो
 यदार्यपुत्त्रौ पतितौ विसंज्ञौ ।
स्वयम्भुवोऽस्त्रं प्रतिमानयन्तौ
 प्रच्छादिताविन्द्रजितास्त्रजालैः ॥ ३ ॥
तस्मै हि दत्तं परमास्त्रमेतत्
 स्वयम्भुवा ब्राह्ममोघवीर्यं ।
तन्मानयन्तौ यदि राजपुत्त्रौ
 विषादितौ कोऽत्र विषादकालः ॥ ४ ॥
ब्राह्ममस्त्रं तु तद्धीमान् मानयित्वा तु मारुतिः ।
विभीषणवचः श्रुत्वा हनूमानिदमब्रवीत् ॥ ५ ॥

अस्मिन्नस्त्रहते सैन्ये वानराणां तरस्विनां ।
यो यो धारयते प्राणांस्तं तमाश्वासयामहे ॥ ६ ॥
तावुभौ युगपद्वीरौ वायुपुत्रविभीषणौ ।
उल्काहस्तौ तदा रात्रौ रणमूर्द्धि विचेरतुः ॥ ७ ॥
छिन्नलाङ्गूलहस्तोरुपादाङ्गुष्ठशिरोरुहैः ।
स्रवद्भिः क्षतजं चापि वानरेन्द्रैः समन्ततः ॥ ८ ॥
पतितैः पर्वताकारैर्वानरैरभिसंकुलां ।
अस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुन्धरां ॥ ९ ॥
सुग्रीवमङ्गदं नीलं शरभं गन्धमादनं ।
जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ १० ॥
मैन्दं ज्योतिर्मुखं चैव द्विविदं केशरिं हरिं ।
ऋषभं पनसं चैव सम्पातिं प्रघसं तथा ॥ ११ ॥
गवाक्षं चन्दनं चैव तथा दधिमुखं हरिं ।
रम्भं च विनतं चैव तारं च नलमेव च ॥ १२ ॥
एतांश्चान्यांश्च सुबहून् वानरेन्द्रान् महाबलान् ।
विभीषणहनूमन्तौ ददृशाते हतान् रणे ॥ १३ ॥
चतुःषष्टिर्हताः कोट्यो वानराणां तरस्विनां ।
दिवसस्याष्टमे भागे राक्षसेन निपातिताः ॥ १४ ॥
सागरोर्मिनिभं दृष्ट्वा भीममुत्पादितं बलं ।
विभीषणहनूमन्तौ जाम्बवन्तमपश्यतां ॥ १५ ॥

स्वभावजरया युक्तं वृद्धं शरशतैश्चितं ।
रुजा परिगतं वीरं शाम्यन्तमिव पावकं ॥ १६ ॥
दृष्ट्वा तमुपगम्याथ पौलस्त्यो वाक्यमब्रवीत् ।
कच्चिदार्य शरैस्तीक्ष्णैर्न प्राणा ध्वंसितास्तव ॥ १७ ॥
कच्चिज्जीवसि ऋक्षेन्द्र कच्चित् ते विपुलं बलं ।
विभीषणवचः श्रुत्वा जाम्बवानृक्षपार्थिवः ॥ १८ ॥
कृच्छ्रादभ्युद्गिरन् वाक्यमिदं वचनमब्रवीत् ।
नैर्ऋतेन्द्र महाबाहो स्वरेण त्वाभिलक्षये ॥ १९ ॥
पीड्यमानः शरौघेन न त्वां पश्यामि दुःखितः ।
अञ्जना सुप्रजा येन मातरिश्वा च नैर्ऋत ॥ २० ॥
हनूमान् वानरश्रेष्ठः प्राणान् धारयते रणे ।
श्रुत्वा जाम्बवतो वाक्यमब्रवीत् तं विभीषणः ॥२१॥
स्वभावं तस्य जिज्ञासुः प्रज्ञां च प्राज्ञसेविनः ।
क्लिश्यामहे यत्कृते स्म यन्मूलं चैव नो बलं ॥ २२ ॥
आर्यपुत्रावतिक्रम्य कस्मात् पृच्छसि मारुतिं ।
नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे ॥ २३ ॥
आर्येण दर्शितः स्नेहो यथा वायुसुते हरौ ।
विभीषणवचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत् ॥ २४ ॥
शृणु नैर्ऋतशार्दूल यस्मात् पृच्छामि मारुतिं ।
तस्मिन् जीवति दुर्धर्षे हतमप्यहतं बलं ॥ २५ ॥

हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयं ।
एतच्छ्रुत्वा शुभं वाक्यं प्रत्युवाच विभीषणः ॥ २६ ॥
ध्रियते मारुतिस्तात मारुतप्रतिमो जवे ।
वैश्वानरसमं तेजो धारयन् प्लवगर्षभः ॥ २७ ॥
त्वामेव मार्गन्नायातो मयैवाद्य इह प्रभो ।
ततो वृद्धमुपागम्य विनयेनाभिवाद्य च ॥ २८ ॥
जग्राह चात्मनो नाम हनूमान् पवनात्मजः ।
श्रुत्वा हनुमतो वाक्यं तदा स व्यथितेन्द्रियः ॥ २९ ॥
पुनर्जातमिवात्मानं मेने प्लवगपुङ्गवः ।
ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान् ॥ ३० ॥
आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि ।
नान्यो विक्रमसंपन्नस्त्वदृते कपिसत्तम ॥ ३१ ॥
त्वत्पराक्रमकालोऽयं नान्यं पश्यामि कश्चन ।
ऋक्षवानरवीराणामनीकानि प्रहर्षय ॥ ३२ ॥
विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ।
गत्वा परममध्वानमुपर्युपरि सागरं ॥ ३३ ॥
हिमवन्तं नगश्रेष्ठं हनूमन् गन्तुमर्हसि ।
ततः काञ्चनमत्युग्रमृषभं नाम पर्वतं ॥ ३४ ॥
कैलासशिखरं चैव द्रक्ष्यस्यद्भुतविक्रम ।
तयोः शिखरयोर्मध्ये विचित्रं ह्यतुलप्रभं ॥ ३५ ॥

सर्वौषधियुतं वीर हृन्यस्योषधिपर्वतं ।
तस्य वानरशार्दूल चतस्रो मूर्द्धि संस्थिताः ॥ ३६ ॥
त्वं हृन्यस्योषधीर्दीप्ता दीपयन्तीर्दिशो दश ।
मृतसंजीवनीमेकां विशल्यकरणीं तथा ॥ ३७ ॥
स्ववर्णकरणीं चैव संधानीं च महौषधीं ।
सर्वाः संगृह्य हनुमन् शीघ्रमागन्तुमर्हसि ॥ ३८ ॥
योजयाद्य हरीन् सर्वान् प्राणैर्गन्धवहात्मज ।
श्रुत्वा जाम्बवतो वाक्यं हनूमान् हरिपुङ्गवः ॥ ३९ ॥
आपूर्यत बलौघेन तोयवेगैरिवार्णवः ।
स पर्वतशिरोऽग्रस्थः पीडयन् पर्वतोत्तमं ॥ ४० ॥
रराज मारुतिर्वीरो द्वितीय इव पर्वतः ।
हरिपादविनिर्भिन्नो विषसाद स पर्वतः ॥ ४१ ॥
न शशाकाथ तं सोढुमात्मना कपिपीडितः ।
निपपात तदा भूमौ विशीर्णशिखरद्रुमः ॥ ४२ ॥
तस्मिन् प्रपीड्यमाने तु भग्नद्रुमशिलातले ।
ददृशू राक्षसाः सर्वे घूर्णमानं नगोत्तमं ॥ ४३ ॥
आघूर्णितपुरद्वारा प्रभग्नगृहगोपुरा ।
लङ्का त्रासाकुला रात्रौ प्रवृत्ते प्राद्रवत् तदा ॥ ४४ ॥
पद्भ्यां तं शैलमाक्रम्य बडवामुखवन्मुखं ।
विवृत्योग्रं ननादोच्चैस्त्रासयन् सर्वराक्षसान् ॥ ४५ ॥

तस्य नानद्यमानस्य श्रुत्वा निनदमद्भुतं ।
लङ्कास्था राक्षसव्याघ्रा न शेकुः स्पन्दितुं भयात् ॥ ४६ ॥
नमस्कृत्य स देवेभ्यो मारुतिर्भीमविक्रमः ।
राघवार्थे परं कर्म समीहत परंतपः ॥ ४७ ॥

स पुच्छमुद्यम्य भुजङ्गकल्पं
विनम्य पृष्ठं श्रवणौ विकुञ्च्य ।
विवृत्य वक्त्रं बडवामुखाभं
खमुत्पपाताद्भुतचण्डवेगः ॥ ४८ ॥
स तौ प्रसार्योरगभोगकल्पौ
भुजौ भुजङ्गारिनिकाशवीर्यः ।
जगाम मेरुं नगराजमग्र्यं
दिशः प्रकर्षन्निव वायुसूनुः ॥ ४९ ॥
स सागरं पूर्णतरङ्गमीनम्
अतीत्य संत्रासितसर्वसत्त्वः ।
अवेक्षमाणः सहसा जगाम
चक्रं यथा विष्णुकरप्रमुक्तं ॥ ५० ॥
स पर्वतान् वृक्षगणान् सरांसि
नदीस्तडागानि पुरोत्तमानि ।
स्फीतान् जनांस्तानपि संप्रपश्यन्
जगाम वेगात् पितृतुल्यवेगः ॥ ५१ ॥

आदित्यपथमाश्रित्य जगाम स ततोऽम्बरे ।
ददर्श सहसा चैव हिमवन्तं महाकपिः ॥५२॥
नानाप्रस्रवणोपेतं बहुकन्दरनिर्झरं ।
श्वेताभ्रचयसंकाशैः शिखरैश्चारुदर्शनैः ॥५३॥

स तं समासाद्य महानगेन्द्रम्
अतिप्रवृद्धोत्तमघोरशृङ्गं ।
ददर्श पुण्यानि तपोवनानि
महर्षिसंघोत्तमसेवितानि ॥५४॥

सब्रह्मघोषं च जनालयं च
शक्रालयं रुद्रसदः प्रमोदं ।
हयाननं ब्रह्मसरश्च दीप्तं
ददर्श वैवस्वतकिङ्करांश्च ॥५५॥

वज्राकरं वैश्रवणालयं च
सूर्यप्रभं सूर्यनिबन्धनं च ।
ब्रह्मासनं शङ्करकार्मुकं च
ददर्श देशांश्च वसुन्धरायाः ॥५६॥

कैलासमुग्रं हिमवच्छिलां च
तं चर्षभं काञ्चनशैलमग्र्यं ।
दिव्यं च सर्वौषधिसंप्रदीप्तं
ददर्श तत्रौषधिपर्वतं च ॥५७॥

स योजनसहस्राणि समतीत्य महाकपिः ।
अधिगम्य महाशैलं व्यचिनोत् स महौषधीः ॥५८॥
ततस्ताः कामरूपिण्यो महौषध्यो महाकपिं ।
विज्ञायार्थिनमायान्तं तदा जग्मुरदर्शनं ॥५९॥

स तास्त्वपश्यन् हनुमांश्चुकोप
ननाद कोपाच्च विवृत्य वक्त्रं ।
अमृष्यमाणोऽथ निमील्य चक्षुस्
तं शैलराजं स उवाच वाक्यं ॥६०॥

किमेतदेवं सुविनिश्चितं ते
यद्राघवे नास्ति तवानुकम्पा ।
पश्याद्य मद्बाहुबलाभिभूतं
विकीर्णमात्मानमिहाद्रिराज ॥६१॥

स तस्य शृङ्गं सहसा सनागं
सकाञ्चनं धातुसहस्रजुष्टं ।
विकीर्णकूटं ज्वलितं महात्मा
प्रसह्य वेगात् सहसोन्ममाथ ॥६२॥

स तं समुत्पाट्य खमुत्पपात
वित्रास्य लोकान् ससुरासुरेन्द्रान् ।
संस्तूयमानः सुरसिद्धसंघैर्
जगाम वेगादतिचण्डवेगः ॥६३॥

स तेन शैलेन भृशं रराज
शैलोपमो गन्धवहस्य सूनुः ।
सहस्रधारेण सपावकेन
चक्रेण खे विष्णुरिवार्पितेन ॥ ६४ ॥

तं वानराः प्रेक्ष्य मुदा विनेदुः
स चापि तान् प्रेक्ष्य मुदा ननाद ।
तेषां समुत्कृष्टरवं निशम्य
लङ्कालया भीमतरं विनेदुः ॥ ६५ ॥

स तं गृहीत्वा निपपात तस्मिन्
शैलशृङ्गं वानरसैन्यमध्ये ।
हर्युत्तमैस्तैरभिपश्यमानो
विभीषणेनापि च शंस्यमानः ॥ ६६ ॥

तावप्युभौ राघवराजपुत्रौ
तं गन्धमाघ्राय महौषधीनां ।
बभूवतुस्तत्र तदा विशल्यौ
सर्वव्रणैश्चापि विमुक्तदेहौ ॥ ६७ ॥

ते चापि सर्वे हरयस्तदानीं
सुप्ता निशान्तादिव संप्रबुद्धाः ।
विनर्दमानाः सहसोदतिष्ठन्
अभिष्टुवन्तः पवनात्मजं तं ॥ ६८ ॥

# युद्धकाण्डं

## LIV.

ततोऽब्रवीन्महातेजाः सुग्रीवो वानराधिपः ।
अर्थं विज्ञापयन्नेव हनूमन्तमिदं वचः ॥ १ ॥
यतो हतः कुम्भकर्णः कुमाराश्च सहानुगाः ।
वयं च निहताः सर्वे रणाय पुनरुत्थिताः ॥ २ ॥
इदानीमुपसंहारं रावणे दातुमर्हसि ।
प्रतियातस्य नः कालो न च शक्यश्चिरायितुं ॥ ३ ॥
तथ्ये महाबलाः सन्ति वीर्यवन्तः प्लवङ्गमाः ।
ते लङ्कामभिरोहन्तु प्रगृह्योल्काः समन्ततः ॥ ४ ॥
ततस्तेऽस्तं गते सूर्ये रौद्रे तस्मिन् निशामुखे ।
लङ्कामभिमुखाः सोल्का जग्मुर्वानरयूथपाः ॥ ५ ॥
उल्काहस्तैर्हरिगणैः सर्वतः समभिद्रुताः ।
आरक्षास्था विरूपाक्षा राक्षसा विप्रदुद्रुवुः ॥ ६ ॥
गोपुरेषु प्रतोलीषु हर्म्येषु विविधेषु च ।
प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनं ॥ ७ ॥
तेषां गृहसहस्राणि ददाह हुतभुक् तदा ।
राक्षसानां समादीप्तः सर्वेषां रणगर्जिनां ॥ ८ ॥
हेमचित्रतनुत्राणां स्रग्दामायुधधारिणां ।
शीधुव्याकुलिताक्षाणां मदविह्वलगामिनां ॥ ९ ॥

कान्तालम्बितहस्तानां शत्रुसंघातभेदिनां ।
गदासिशूलहस्तानां खादतां दशतामपि ॥१०॥
शयनेषु परार्ध्येषु स्वपतां चैव रक्षसां ।
आर्त्तानां सह कान्ताभिर्हाहाकारं विमुञ्चतां ॥११॥
तेषां दशसहस्राणि रक्षसां पुरवासिनां ।
ददाह पावकस्तत्र जज्वाल च पुनः पुनः ॥१२॥
श्रूयते निनदस्तत्र तदा राक्षसयोषितां ।
लङ्कायां दह्यमानायां पुत्रभ्रातृप्रियैषिणां ॥१३॥
त्रस्तानां गच्छतां चापि पुत्रानादाय सर्वशः ।
धनुःशूलासिहस्तानां धावतां नदतामपि ॥१४॥
तेषां कोटिसहस्राणां रक्षसां तत्र वासिनां ।
संबभूव महानादो मेघानामिव गर्जतां ॥१५॥
दह्यन्ते स्म गृहाण्यत्र महान्ति च वृहन्ति च ।
शिखराणीव शैलानां घर्मकाले समन्ततः ॥१६॥
अदहत् पावकस्तत्र जज्वाल च पुनः पुनः ।
सारवन्ति महार्हाणि तपनीयप्रभानि च ॥१७॥
रत्नचित्रगवाक्षाणि साधिष्ठानानि सर्वशः ।
मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरं ॥१८॥
क्रौञ्चबर्हिणनारीणां भूषणानां च निःस्वनैः ।
नादितान्याकुलानि स्म वेश्मान्यग्निर्ददाह सः ॥१९॥

ज्वलनेन प्रदीप्तानि तोरणानि चकाशिरे ।
विद्युद्भिरिव नद्धानि घनजालानि घर्मगे ॥ २० ॥
विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गनाः ।
त्रस्ताः पतीन् समालिङ्ग्य हाहेत्युच्चैर्विचुक्रुशुः ॥ २१ ॥
तत्र चाग्निप्रदीप्तानि निपेतुर्भवनान्यपि ।
वज्रिवज्रहतानीव शिखराणि महागिरेः ॥ २२ ॥
तानि निर्दह्यमानानि दूरतः प्रचकाशिरे ।
हिमवच्छिखराणीव दह्यमानानि सर्वशः ॥ २३ ॥
हर्म्याग्रैर्दह्यमानैश्च तलैः प्रज्वलितैस्तथा ।
रात्रौ सा शुशुभे लङ्का पुष्पितैरिव किंशुकैः ॥ २४ ॥
उष्ट्रैर्मुक्तैर्गजैर्मुक्तैर्मुक्तैश्च तुरगैरपि ।
बभूव लङ्का लोकान्ते भ्रान्तग्राह इवार्णवः ॥ २५ ॥
अश्वं मुक्तं गजो दृष्ट्वा क्वचिद्भ्द्राव वेगितः ।
भीतः सोऽपि गजं दृष्ट्वा क्वचिदश्वो न्यवर्तत ॥ २६ ॥
सा बभूव मुहूर्त्तेन हरिभिर्दीपिता पुरी ।
लोकस्यास्य क्षये रौद्रे प्रदीप्तेव वसुन्धरा ॥ २७ ॥
स्त्रीपुंसोश्च निनादेन संभूतो वदनाच्युतः ।
नादस्तोयदनिर्घोषः शुश्रुवे दशयोजनं ॥ २८ ॥
प्रदग्धकायान् समरे निर्गतान् राक्षसान् बहिः ।
सहसा दृष्ट्वा भीमास्तु चुक्रुशुर्हरयो भृशं ॥ २९ ॥

उत्क्रुष्टं वानराणां च राक्षसानां च निस्वनः ।
दिशो दश समुद्रं च पृथिवीं च व्यनादयत् ॥ ३० ॥
हनुमत्प्रमुखैः सर्वैर्बहुभिर्भीमविक्रमैः ।
निश्चक्रमतुरायान्तौ राघवौ दीप्ततेजसौ ॥ ३१ ॥
विगाह्य च महात्मानौ तावुभौ रामलक्ष्मणौ ।
जगृहाते तदा वीरौ धनुषी धन्विनां वरौ ॥ ३२ ॥
ततो विस्फारयामास रामस्तद्धनुरुत्तमं ।
भगवानिव संक्रुद्धो भवः क्रतुजिघांसया ॥ ३३ ॥
ततो द्यां गां च वाणौघैस्ततान पुरुषर्षभः ।
राघवः परमायस्तः पर्जन्य इव वृष्टिभिः ॥ ३४ ॥
राक्षसोत्क्रुष्टघोषश्च वानराणां च निस्वनः ।
ज्याघोषश्चापि रामस्य ततो व्यापुर्दिशो दश ॥ ३५ ॥
तस्य कार्मुकनिर्मुक्तैः शरैस्तत् पुरगोपुरं ।
पावकेन च निर्दग्धं विशीर्णमपतद्भुवि ॥ ३६ ॥
ततो रामशरान् दृष्ट्वा विमानेषु गृहेषु च ।
संनादो राक्षसेन्द्राणां तुमुलः समपद्यत ॥ ३७ ॥
हन्यमानास्ततश्चैव दह्यमानाश्च वह्निना ।
बभ्रमुश्च मुहुर्नेदुः समुत्पेतुर्निशाचराः ॥ ३८ ॥
तेषां संदह्यमानानां सिंहनादांश्च कुर्वतां ।
सर्वेषां राक्षसेन्द्राणां शर्वरीतुमुलोऽभवत् ॥ ३९ ॥

आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ।
आसेदुर्द्वारमाश्रित्य प्लवगा युद्धकाङ्क्षिणः ॥४०॥
यश्च नो वितथं कुर्याद्युद्धरात्रावुपस्थिते ।
स हन्तव्योऽभिसंप्रेत्य राजशासनदूषकः ॥४१॥
तेषु वानरमुख्येषु सुग्रीववशवर्तिषु ।
स्थितेषु द्वारमाश्रित्य रावणं क्रोध आविशत् ॥४२॥
तस्य हृत्स्थितविक्षेपादमर्षादाकुलात्मनः ।
रूपवानिव रौद्रस्य मन्युर्गात्रेष्वदृश्यत ॥४३॥
स निकुम्भं च कुम्भं च कुम्भकर्णात्मजावुभौ ।
विद्युन्मालिनं दुर्धर्षमुल्काजिह्वं च राक्षसं ॥४४॥
विरूपाक्षं च विख्यातं शतदंष्ट्रं दुरासदं ।
प्रेषयामास संक्रुद्धः संग्रामं राक्षसाधिपः ॥४५॥
शशास चैव सर्वांस्तान् राक्षसान् सुमहाबलान् ।
त्वरितं गच्छतेत्येवं क्रुद्धः सिंह इवोन्नदन् ॥४६॥
ततस्ते चोदिताः सर्वे तदा प्रज्वलितायुधाः ।
लङ्काया निर्ययुः क्रुद्धा नर्दन्तो युद्धदुर्मदाः ॥४७॥
पताकध्वजसंयुक्तं राक्षसानां तु तद्बलं ।
ददृशे ज्वलितप्रायं किङ्किणीशतनादितं ॥४८॥
भीमाश्वखरमातङ्गरथवाहनसंकुलं ।
दीप्तशूलगदाखड्गप्रासमुद्गरधारि च ॥४९॥

व्याघूर्णितमहाशस्त्रं बाणसंयुक्तकार्मुकं ।
घोरं भूरजनाकीर्णं महदम्बुदनिस्वनं ॥५०॥
तं दृष्ट्वा बलमायान्तं राक्षसानामलङ्कृतं ।
संचचाल कपीनां च बलमुच्चैर्ननाद च ॥५१॥
प्रगृहीतमहावृक्षं समुत्क्षिप्तमहाशिलं ।
समतिष्ठत दुर्धर्षं परस्परकृतोद्यमं ॥५२॥
जवेनाप्लुत्य तु पुनस्तद्बलं रक्षसां महत् ।
अभ्ययात् प्रत्यरिबलं पतङ्गा इव पावकं ॥५३॥
तेषां भुजपरामर्षाद्विसृष्टाशनयः शरैः ।
वानराणां बलश्रेष्ठे न्यपतंश्च सहस्रशः ॥५४॥
ततो वेगात् समुत्पेतुर्हरयो वै युयुत्सवः ।
तरुश्रेष्ठैस्तलश्रेष्ठैरुग्रैस्तैर्मुष्टिभिस्तथा ॥५५॥
आपतन्तस्तथैवाशु कपयो भीमविक्रमाः ।
प्रवीरानभिसंजघ्नू राक्षसांस्ते तरस्विनः ॥५६॥
मुष्टिभिर्वज्रनिष्पेषैर्निष्पिष्टा राक्षसर्षभाः ।
निपेतुर्वायुमथिता भग्ना इव महाद्रुमाः ॥५७॥
घ्नन्तमन्यं जघानान्यः पातयन्तमपातयत् ।
जिघृक्षुमन्यो जगृहे दशन्तमदशत् तथा ॥५८॥
प्रदीप्तास्यास्तथा चान्ये प्रहारेण प्रपीडिताः ।
क्लिश्यमानास्तथा चान्ये क्लेशयन्तः पृथक् पृथक् ॥५९

समुद्यतमहाप्रासमुष्टिशूलासिसंकुलं ।
प्रावर्तत महारौद्रं युद्धं वानररक्षसां ॥ ६० ॥
देहीत्यन्यो ददामीति प्रतीच्छेति पुनः पुनः ।
किं क्लेशयति तिष्ठेति तत्रान्योन्यमभाषत ॥ ६१ ॥
वानरान् दशसप्तेति राक्षसा अभ्यपातयन् ।
राक्षसान् दशसप्तेति वानरास्ते न्यपातयन् ॥ ६२ ॥
विप्रलम्बितवस्त्रांश्च विमुक्तकवचायुधान् ।
केचिद्राक्षसानासाद्य वानराः पर्यवारयन् ॥ ६३ ॥
वानरान् राक्षसाश्चैव वारयन्तः परस्परं ।
आविष्टा इव क्रुद्धास्ते चक्रुस्तुमुलमुत्तमं ॥ ६४ ॥

इत्यार्षे रामायणे युद्धकाण्डे ओषध्यानयनं नाम
त्रिपञ्चाशः सर्गः — संकुलयुद्धं नाम
चतुःपञ्चाशः सर्गः ॥

LV.

प्रवृत्ते संकुले युद्धे तस्मिन् वीरवरक्षये ।
अङ्गदो वज्रकण्ठेन संगतो रणमूर्धनि ॥ १ ॥
समाह्वयाङ्गदं कोपात् ताडयामास राक्षसः ।
गदया चाङ्गदः पूर्वं संचचाल हतस्तदा ॥ २ ॥
स संज्ञां प्रतिलभ्यैव चिक्षेप शिखरं गिरेः ।
अर्दितोऽद्रिप्रहारेण वज्रकण्ठोऽपतद्भुवि ॥ ३ ॥
वज्रकण्ठे हते तस्मिन्नङ्गदेन महात्मना ।
ततस्तं पतितं दृष्ट्वा भ्रातरं निहतं रणे ॥ ४ ॥
रथेनाभ्यपतत् तूर्णमथ संकम्पनस्तदा ।
व्यधमत् तान्यनीकानि वानराणां तरस्विनां ॥ ५ ॥
पुनश्च संप्रहारार्थमभ्यधावत सत्वरः ।
रथेनाभ्यपतत् क्षिप्रमथ संकम्पनस्तदा ॥ ६ ॥
सोऽङ्गदं बहुभिर्बाणैस्तदा विव्याध वेगवान् ।
कर्णिशल्यविपाठैश्च बहुभिर्निशितैः शरैः ॥ ७ ॥
अङ्गदः प्रतिविद्धाङ्गो बालिपुत्रः प्रतापवान् ।
रथमश्वान् धनुश्चैव ममर्द तरसा रणे ॥ ८ ॥
ततः संकम्पनः शीघ्रं त्यक्त्वा तद्रथमुत्तमं ।
असिचर्मधरः श्रीमानाप्लुत्य तरसा रणे ॥ ९ ॥

उत्पपात दिवं चैव वेगवानविचारयन् ।
तं क्षिप्रं तरसाप्लुत्य भुजाभ्यां गृह्य चाङ्गदः ॥१०॥
करात् तस्य ततः खड्गं समाच्छिद्य ननाद सः ।
तस्याथ गलके खड्गं निचखान ततोऽङ्गदः ॥११॥
गदां सर्वायसीं वीरः समागृह्य महाबलः ।
शोणिताक्षस्तमेवाजावाजघान हसन्निव ॥१२॥
प्रजङ्घस्तु तदा वीरो यूपाक्षसचिवो बली ।
रथेनाभिययौ क्रुद्धो बालिपुत्रं महाबलं ॥१३॥
तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजङ्घयोः ।
विशाखयोर्मध्यगतो बभौ पूर्णो यथा शशी ॥१४॥
अङ्गदोऽथ प्रजङ्घस्य न्यपातयत् क्षितावसिं ।
तं दृष्ट्वा पतितं भूमौ खड्गं वैदूर्यसंनिभं ॥१५॥
मुष्टिं संकल्पयामास वज्रकल्पं महाबलः ।
स ललाटे महावीर्यमङ्गदं वानरर्षभं ॥१६॥
आजघान महातेजाः संमुमोह चचाल च ।
स संज्ञां प्रतिलभ्यैव बालिपुत्रः प्रतापवान् ॥१७॥
प्रजङ्घस्य शिरः कोपाद्दारयामास मुष्टिना ।
तं यूपाक्षोऽश्रुपूर्णाक्षः पितृव्यं वीक्ष्य सूदितं ॥१८॥
अवतीर्य रथात् क्षिप्रं क्षणेषु खड्गमाददे ।
तमापतन्तं संप्रेक्ष्य यूपाक्षं प्लवगोत्तमः ॥१९॥

आजघानोरसि क्रुद्धो जग्राह च महाबलः ।
गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलः ।। २० ।।
आजघान महातेजा वक्षसि द्विविदं तथा ।
स तथाभिहतस्तेन चचाल च मुहुर्मुहुः ।। २१ ।।
उद्यतां च पुनस्तस्य जहार द्विविदो गदां ।
तौ शोणिताक्षयूपाक्षौ प्लवगाभ्यां तरस्विनौ ।। २२ ।।
चक्रतुः समरं तीक्ष्णमाकर्षोत्पाटनैर्भृशं ।
द्विविदः शोणिताक्षं तु विददार नखैर्भृशं ।। २३ ।।
निष्पिपेष च रोषेण मैन्दो द्विविद एव च ।
अभ्यासस्थौ तु तौ तत्र परस्परजिघांसया ।। २४ ।।
अथोदीर्णान् महाकायान् प्रतीयुस्तान् महाबलान् ।
राक्षसा वानरश्रेष्ठान् बाणखड्गगदाधराः ।। २५ ।।
त्रयाणां वानरेन्द्राणां त्रिभिस्तैः क्षणदाचरैः ।
संसक्तानां बभौ युद्धमेकीभावगतात्मनां ।। २६ ।।
ते तु वृक्षान् समादाय चिक्षिपुः सुमहाबलाः ।
खड्गेन तान् प्रचिच्छेद प्रजङ्घोऽथ महाबलः ।। २७ ।।
शिलाः शैलान् द्रुमांश्चैव ते प्रचिक्षिपुराहवे ।
तान् यूपाक्षः प्रचिच्छेद शरैः कनकभूषणैः ।। २८ ।।
सृष्टां द्विविदमैन्दाभ्यां द्रुमवृष्टिं समन्ततः ।
बभञ्ज गदया तूर्णं शोणिताक्षः प्रतापवान् ।। २९ ।।

उद्यम्य विपुलं खड्गं परमर्मनिकृन्तनं ।
प्रजङ्घो बालिनः पुत्रमभिदुद्राव वेगितः ॥३०॥
तमभ्यासगतं दृष्ट्वा वानरेन्द्रं महाबलं ।
चिक्षेप तरसा खड्गं बलेनातिबलस्तदा ॥३१॥
तस्य बाहुं सनिस्त्रिंशमाजघान स मुष्टिना ।
निपातयामास तदा क्षितौ व्याविध्य वीर्यवान् ॥३२॥
यूपाक्षं च सुसंक्रुद्धो मैन्दो वानरयूथपः ।
पीडयामास बाहुभ्यां स पपात हतः क्षितौ ॥३३॥
हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तदा ।
जगामाभिमुखीभूता कुम्भकर्णसुतो यतः ॥३४॥
आपतन्तीं च वेगेन दृष्ट्वा कुम्भः स्वकां चमूं ।
शान्त्वयामास वचसा विक्रमे कृतनिश्चयः ॥३५॥
उत्पपात तु वेगेन कुम्भकर्णसुतस्तदा ।
कुम्भश्चक्रे च तेजस्वी रणे कर्म सुदुष्करं ॥३६॥
स धनुर्धन्विनां श्रेष्ठो विकृष्य सुसमाहितः ।
मुमोचाशीविषप्रख्यान् शरान् देहविदारणान् ॥३७॥
तत्र क्रोधसमाविष्टो मैन्दो वानरयूथपः ।
ववर्ष शिलावर्षाणि तस्मिन् संग्राममूर्द्धनि ॥३८॥
मैन्दस्तु शिलावर्षेण शरवर्षेण राक्षसः ।
अन्योन्यं समरे तस्मिन् प्रवृष्टौ तोयदाविव ॥३९॥

तत् तस्य शुशुभे तत्र सशरं धनुरुत्तमं ।
विद्युद्भिरावृतं व्योम्नि शक्रचापमिवापरं ॥४०॥
तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ।
आकर्णाकृष्टमुक्तेन मैन्दं विव्याध राक्षसः ॥४१॥
स तथाभिहतस्तेन वियुक्ताङ्गस्तदा स्फुरन् ।
निपपाताद्रिकूटाभो विह्वलो गाढवेदनः ॥४२॥
द्विविदो भ्रातरं दृष्ट्वा भग्नगात्रं महाहवे ।
अभिदुद्राव वेगेन प्रगृह्य महतीं शिलां ॥४३॥
तां शिलां ज्वलिताकारां तस्मिंश्चिक्षेप राक्षसे ।
बिभेद तां ततः कुम्भः प्रहसन् सप्तभिः शरैः ॥४४॥
संधायान्यं सुपुङ्खं च शरमाशीविषोपमं ।
स जघान महातेजा वक्षसि द्विविदं तदा ॥४५॥
स तु तेन प्रहारेण द्विविदः कपियूथपः ।
मर्मण्यभिहतस्तेन पपात भुवि मूर्च्छितः ॥४६॥
अङ्गदो मातुलं दृष्ट्वा पतितं च महीतले ।
अभिदुद्राव वेगेन स कुम्भं कुपितस्तदा ॥४७॥
समुद्यतशिलं क्रुद्धमापतन्तं सुवेगितं ।
स तं विव्याध वाणाभ्यामुल्काभ्यामिव कुञ्जरं ॥४८॥
अङ्गदः पाणिना नेत्रे विमृज्य रुधिरप्लुते ।
सालमाभान्तमेकान्ते परिजग्राह पाणिना ॥४९॥

तमिन्द्रकेतुप्रतिमं समादाय ततो बली ।
उत्ससर्जाङ्गदो वेगात् तं दूरादन्ववैक्षत ॥५०॥
स चिच्छेद शितैर्बाणैः सप्तभिः कायभेदिभिः ।
कुम्भकर्णात्मजो वृक्षं बालिपुत्रप्रवेरितं ॥५१॥
ततः स बालिपुत्रस्य शरानग्निशिखोपमान् ।
अङ्गदस्य महावेगान् मुमोचोरसि वेगवान् ॥५२॥
स वज्राशनिसंस्पर्शैः शरैः काञ्चनभूषणैः ।
विक्षतः शरवेगार्त्तः पपात च मुमोह च ॥५३॥
अङ्गदं पतितं दृष्ट्वा सीदन्तमिव कुञ्जरं ।
अभिपेतुर्हरिश्रेष्ठाः कुम्भमुद्यतकार्मुकं ॥५४॥
ररक्षुस्ते निपतितं राजपुत्रं रणाजिरे ।
जाम्बवांस्तु सुषेणश्च वेगदर्शी च वानरः ॥५५॥
कुम्भकर्णात्मजं वीरं क्रुद्धाः समभिदुद्रुवुः ।
समीक्ष्यापततस्तांस्तु वानरेन्द्रांस्तरस्विनः ॥५६॥
अवारयत् स बाणौघैर्वायुर्घोरानिवाम्बुदान् ।
तस्य बाणपथं प्राप्य न शेकुरभिवर्तितुं ॥५७॥
वानरेन्द्रा महात्मानो वेलामिव महोर्मयः ।
तांस्तु दृष्ट्वा हरीन् सर्वान् शरवृष्टिनिवारितान् ॥५८॥
अङ्गदं पृष्ठतः कृत्वा भ्रातृव्यं स महाहवे ।
अभिदुद्राव सुग्रीवः कुम्भकर्णात्मजं रणे ॥५९॥

शैलसानुचरं नागं वेगवानिव केशरी ।
उत्पाट्य विविधान् वृक्षांश्चिक्षेपाथ स राक्षसे ॥ ६० ॥
तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदां ।
कुम्भकर्णसुतश्चित्रैः शरैश्चिच्छेद नैकधा ॥ ६१ ॥
अभिलक्ष्येण शीघ्रेण कुम्भेन निशितैः शरैः ।
आचितास्ते द्रुमा रेजुर्यथा घोराः शतघ्नयः ॥ ६२ ॥
द्रुमवर्षं ततश्छिन्नं दृष्ट्वा कुम्भेन धीमता ।
वानराधिपतिः श्रीमान् महासत्त्वो न विव्यथे ॥ ६३ ॥
निर्भिद्यमानः सहसा सहमानश्च तान् शरान् ।
कुम्भस्य धनुराच्छिद्य बभञ्जेन्द्रायुधोपमं ॥ ६४ ॥
अवप्लुत्य ततः शीघ्रं कृत्वा कर्म सुदुष्करं ।
अब्रवीत् कुपितः कुम्भं भग्नशृङ्गमिव द्विपं ॥ ६५ ॥
निकुम्भाग्रजवीर्यं ते बलं च महदद्भुतं ।
शक्तिश्चेन्द्रजितस्तुल्या प्रभावो रावणस्य वा ॥ ६६ ॥
प्रभावबलदर्पघ्नो मायावीर्यविशारदः ।
एकस्त्वमसि जातो वै पितुः सुबलवत्तरः ॥ ६७ ॥
त्वमेव हि महावीर्यः शरहस्तो विमर्दनः ।
त्रिदशानपि संक्रुद्धो विजेता रणमूर्द्धनि ॥ ६८ ॥
वरदानात् पितृव्यस्ते बाधते देवदानवान् ।
कुम्भकर्णः स्ववीर्येण बाधते स्म सुरासुरान् ॥ ६९ ॥

कुम्भकर्णस्य वीर्येण सदृशस्त्वं महाबलः ।
धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च ॥ ७० ॥
त्वमेको रक्षसां मध्ये श्रेष्ठोऽस्यतुलविक्रमः ।
यो मे प्रमुखतो वीर युद्धे च कृतनिश्चयः ॥ ७१ ॥
महाविमर्दं समरे समेतस्य मम त्वया ।
पश्यन्तु सर्वभूतानि शक्रसम्बरयोरिव ॥ ७२ ॥
त्वया हि विविधैरस्त्रैर्दर्शितं ह्यस्त्रलाघवं ।
पातिताश्च प्रवीरा मे बलिनो भीमविक्रमाः ॥ ७३ ॥
उपालम्भभयाच्चापि नासि वीर मया हतः ।
कृतकर्मा परिश्रान्तो विश्रान्तः पश्य मे बलं ॥ ७४ ॥
तेन सुग्रीववाक्येन साभिमानेन धर्षितः ।
अग्नेराज्याहुतस्येव तेजस्तस्य व्यवर्धत ॥ ७५ ॥
युद्धायाभिमुखश्चैनमभ्ययाद्राक्षसर्षभः ।
सुग्रीवकुम्भौ स्म तदा समाजग्मतुराहवे ॥ ७६ ॥
गजाविव महामत्तौ निःश्वसन्तौ पुनः पुनः ।
अन्योन्यं बाहुग्रथितौ कर्षन्तावितरेतरं ॥ ७७ ॥
सधूमां मुखतो ज्वालां विमुञ्चन्तावुभौ श्रमात् ।
तयोः पादावगाढा च निमग्नेवाभवन्मही ॥ ७८ ॥
व्याघूर्णिततरङ्गश्च चुक्षुभे मकरालयः ।
तत्र कुम्भं समाक्षिप्य सुग्रीवो लवणाम्भसि ॥ ७९ ॥

पातयामास वेगेन दर्शयन्नुदधेस्तलं ।
ततः कुम्भनिपातेन जलराशिः समुत्थितः ॥ ८० ॥
विन्ध्यमन्दरसंकाशो विससर्प समन्ततः ।
ततः कुम्भः समुत्पत्य सुग्रीवमभिपद्य च ॥ ८१ ॥
आजघानोरसि क्रुद्धो वज्रवेगेन मुष्टिना ।
स्फुटितान्चर्मणस्तस्य सुस्राव बहु शोणितं ॥ ८२ ॥
स च मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डलं ।
तस्य वेगेन तत्रासीत् तेजः प्रज्वलितं बहु ॥ ८३ ॥
वज्रनिष्पेषसंजाता ज्वाला मेरौ यथा गिरौ ।
स तथाभिहतस्तेन सुग्रीवो वानराधिपः ॥ ८४ ॥
मुष्टिं संवर्तयामास वज्रवेगं महाबलः ।
तमर्चिर्ज्वालाविकटं रविमण्डलसंनिभं ॥ ८५ ॥
मुष्टिं संपातयामास कुम्भस्योरसि वानरः ।
स तु तेन प्रहारेण विह्वलो भृशपीडितः ॥ ८६ ॥
निपपात रणे कुम्भो निर्वमन् पावकार्चिषः ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ८७ ॥
कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना ।
ईश्वरेणाभिपन्नस्य रूपं पशुपतेरिव ॥ ८८ ॥
ततो हते तेन महाक्रमे तु प्लवङ्गमानामृषभेण युद्धे ।
मही सशैला विचचाल सापगा भयं च रक्षांस्यधिकं समाविशत् ॥ ८९ ॥

## युद्धकाण्डं

### LVI.

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण हतं रणे ।
प्रदहन्निव कोपेन द्रुतमश्वानचोदयत् ॥ १ ॥
ततः स्रग्दामसंपन्नं दत्तपञ्चाङ्गुलं शुभं ।
आददे परिघं वीरो गिरीन्द्रशिखरोपमं ॥ २ ॥
निबद्धमायसैः पाशैर्हेममालिनमायसं ।
यमदण्डोपमं घोरं रक्षसां भयनाशनं ॥ ३ ॥
तमाविध्य महातेजा वेगेन महता तदा ।
विननाद विवृत्तास्यो निकुम्भो भैरवं रवं ॥ ४ ॥
उरोगतेन निष्केण भुजस्थैरपि चाङ्गदैः ।
कुण्डलाभ्यां च मृष्टाभ्यां मालया च सुचित्रया ॥ ५ ॥
निकुम्भो भूषणैर्भाति परिघेणायतेन च ।
यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुवान् ॥ ६ ॥
पुस्फोट परिघाग्रेण वातग्रन्थिर्महात्मनः ।
स जज्वाल निकुम्भोऽपि सज्वाल इव पावकः ॥ ७ ॥
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् ।
हनूमांस्तु विवृत्तोरुस्तस्थौ प्रमुखतो बली ॥ ८ ॥
परिघोपमबाहुः स परिघं भास्वरं महत् ।
बली बलवतस्तस्य पातयामास वक्षसि ॥ ९ ॥

कपेस्तस्योरसि व्यूढे परिघः शतधा गतः ।
विकीर्यमाणो विबभावुल्काशतमिवाम्बरे ॥१०॥
स तु तेन प्रहारेण चचाल च महाकपिः ।
परिघेण समुद्भूतो यथा भूमिचलेऽचलः ॥११॥
स तथाभिहतस्तेन हनूमान् प्लवगर्षभः ।
मुष्टिं संवर्तयामास वज्रवेगोपमं बली ॥१२॥
तमुद्यम्य महातेजा निकुम्भोरसि वीर्यवान् ।
अवचिक्षेप वेगेन वज्रमिन्द्र इवाचले ॥१३॥
प्रपुस्फोट च चर्मास्य प्रावर्तत च शोणितं ।
मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ॥१४॥
स तु तेन प्रहारेण व्याजृम्भत मुहुर्मुहुः ।
आश्वस्तस्तु निजग्राह हनूमन्तं स राक्षसः ॥१५॥
उच्चुक्रुशुस्ततः सर्वे भीमं लङ्कानिवासिनः ।
निकुम्भेनोद्धृतं दृष्ट्वा हनूमन्तं जयैषिणः ॥१६॥
अपरे त्वब्रुवंस्तत्र दृष्ट्वा तं राक्षसाङ्गनाः ।
आदीपिको गृहीतोऽयं निकुम्भेन बलीयसा ॥१७॥
स तथा ह्रियमाणोऽपि कुम्भकर्णसुतेन वै ।
आजघानानिलसुतो वज्रवेगेन मुष्टिना ॥१८॥
ददंश हनुमान् पार्श्वे निकुम्भं निष्पिपेष च ।
स मोचयित्वा चात्मानं क्षितावभ्युपपत्य च ॥१९॥

हनुमानुन्ममाथाशु निकुम्भं मारुतात्मजः ।
उत्प्लुत्य चास्य वेगेन पपातोरसि वीर्यवान् ॥ २० ॥
परिगृह्य स बाहुभ्यामावृत्य च शिरोधरं ।
उत्पाटयत् तस्य शिरो भैरवं नदतः स्वनं ॥ २१ ॥
अथ नदति निपातिते निकुम्भे
पवनसुतेन तदा रणस्य मध्ये ।
दशरथसुतवाहिनी समग्रा
परममगात् सकला तदा प्रहर्षं ॥ २२ ॥

इत्यार्षे रामायणे युद्धकाण्डे कुम्भबधो नाम
पञ्चपञ्चाशः सर्गः — निकुम्भबधो
नाम षट्पञ्चाशः सर्गः ॥

## LVII.

निकुम्भं निहतं श्रुत्वा कुम्भं च विनिपातितं ।
रावणः परमामर्षात् प्रजज्वालानलप्रभः ॥ १ ॥
नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्च्छितः ।
अथ संचिन्त्य मनसा दशग्रीवश्चिरात् स्वयं ॥ २ ॥
खरपुत्रं विशालाक्षं मकराक्षमवोचत ।
गच्छ पुत्र मयाज्ञप्तो बलेन महता वृतः ॥ ३ ॥
राघवं लक्ष्मणं चैव जहि तांश्च वनौकसः ।
शत्रुमुद्धर मे क्षिप्रं स्वपौरुषमुपाश्रितः ॥ ४ ॥
अयं ते शक्रजिद्वीरः पृष्ठतोऽनुगमिष्यति ।
खरस्य सदृशो वीर्ये त्वमप्यमितविक्रमः ॥ ५ ॥
त्वं च दिव्यास्त्रविच्छूरो मायाशतविशारदः ।
एवमुक्त्वा स तं वीरं समुत्थायासनाद्द्रुतं ॥ ६ ॥
स्वयं गन्धैश्च माल्यैश्च वासोभिश्च समार्चयत् ।
रावणस्य वचः श्रुत्वा शूरमानी खरात्मजः ॥ ७ ॥
वाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरः ।
सोऽभिवाद्य दशग्रीवं कृत्वा चाभिप्रदक्षिणं ॥ ८ ॥
निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया शनैः ।
आदिशच्च बलाध्यक्षं खरपुत्रो महाबलः ॥ ९ ॥

रथमानीयतां शीघ्रं सैन्यमाहूयतामिति ।
तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः ॥१०॥
स्यन्दनं च बलं चैव समीपं समुपानयत् ।
प्रदक्षिणं रथं कृत्वा आरुरोह निशाचरः ॥११॥
सूतं संचोदयामास शीघ्रं मामभिवाहय ।
अथ तान् राक्षसान् सर्वान् मकराक्षोऽब्रवीदिदं ॥१२॥
आगच्छत प्रयास्यामः पुरस्तान्मम राक्षसाः ।
अहं राक्षसराजेन रावणेन महात्मना ॥१३॥
आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ।
अद्य रामं बधिष्यामि लक्ष्मणं च निशाचराः ॥१४॥
शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ।
अद्य शूलनिपातेन वानराणां महाचमूं ॥१५॥
संप्रधक्ष्यामि संप्राप्तः शुष्केन्धनमिवानलः ।
मकराक्षवचः श्रुत्वा ततस्ते वै निशाचराः ॥१६॥
सर्वे नानायुधोपेता बलवन्तं समाश्रिताः ।
ते कामरूपिणः शूरा दंष्ट्रिणः पिङ्गलेक्षणाः ॥१७॥
मातङ्गा इव नर्दन्तो ध्वस्तकेशा भयावहाः ।
परिवार्य महाकाया मकराक्षं खरात्मजं ॥१८॥
अभिजग्मुस्तदा हृष्टाश्चालयन्तो वसुंधरां ।
शङ्खभेरीसहस्राणामाहतानां समन्ततः ॥१९॥

क्ष्वेडितास्फोटितानां च तत्र शब्दो महानभूत् ।
समारूढो रथं दिव्यं दीप्तानलसमप्रभं ॥ २० ॥
रणोपकरणैः सर्वैः कीर्णं हेमपरिष्कृतं ।
युक्तं वृहद्भिस्तुरगैर्जाम्बूनदसमप्रभैः ॥ २१ ॥
दंशितः सशरी खड्गी कवची रुक्मकुण्डलः ।
शुशुभे राक्षसश्रेष्ठः सूर्यश्लिष्ट इवाम्बुदः ॥ २२ ॥
स वृतो बलिभिर्वीरै राक्षसैर्घोरदर्शनैः ।
विनिर्ययौ रणश्लाघी यियासुर्यमसादनं ॥ २३ ॥
प्रभ्रष्टोऽथ करात् तस्य प्रतोदः सारथेस्तदा ।
पपात सहसा चैव राक्षसस्य रथध्वजः ॥ २४ ॥
तस्य ये ते रथे युक्ता हया विक्रमवर्जिताः ।
चरणैराकुलैर्गत्या साश्रुपातमुखा ययुः ॥ २५ ॥
प्रववौ मारुतस्तस्मिन् सपांशुः खरनिस्वनः ।
निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ २६ ॥
तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यसंमताः ।
अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥ २७ ॥

इत्यार्षे रामायणे युद्धकाण्डे मकराक्षनिर्याणं नाम
सप्तपञ्चाशः सर्गः ॥

# युद्धकाण्डं

## LVIII.

निर्गतं मकराक्षं तु दृष्ट्वा वानरपुङ्गवाः ।
आप्लुत्याप्लुत्य वेगेन योद्धुकामा व्यवस्थिताः ॥ १ ॥
ततः प्रवृत्तं तद्युद्धं तुमुलं लोमहर्षणं ।
निशाचरप्लवङ्गानां देवानां दानवैरिव ॥ २ ॥
वृक्षशूलनिपातैश्च शिलापरिघपातनैः ।
अन्योन्यं पोथयन्ति स्म तदा कपिनिशाचराः ॥ ३ ॥
शक्तिशूलगदाखड्गैस्तोमरैः सपरश्वधैः ।
पट्टिशैर्भिन्दिपालैश्च बाणपातैः समन्ततः ॥ ४ ॥
प्रासमुद्गरदण्डैश्च निर्घातैरायसैस्तथा ।
कदनं कपियूथानां चक्रुस्ते रजनीचराः ॥ ५ ॥
शरौघैर्भिन्दिपालैश्च खरपुत्रेण वानराः ।
संभ्रान्तमनसः सर्वे दुद्रुवुर्भृशपीडिताः ॥ ६ ॥
तान् दृष्ट्वा राक्षसाः सर्वे द्रवतश्च वनौकसः ।
नेदुस्ते सिंहवद्धृष्टा युध्यन्तो जितकाशिनः ॥ ७ ॥
विद्रवत्सु तदा तेषु वानरेषु समन्ततः ।
रामस्तान् वारयामास शरवर्षेण राक्षसान् ॥ ८ ॥
वारितान् राक्षसान् दृष्ट्वा मकराक्षो महाबलः ।
क्रोधानलसमाविष्ट इदं वचनमब्रवीत् ॥ ९ ॥

क्वासौ रामः सुदुर्बुद्धिर्येन मे निहतः पिता ।
जनस्थानगतः पूर्वं सानुगः सपरिच्छदः ॥१०॥
अद्य गन्तास्मि तस्यान्तं वैरस्य च निशाचराः ।
सुहृदां चैव सर्वेषां निहतानां रणाजिरे ॥११॥
हत्वा रामं च दुर्बुद्धिं लक्ष्मणं च नराधमं ।
तयोः शोणितविस्यन्दैः करिष्ये सलिलक्रियाः ॥१२॥
एवमुक्त्वा महाबाहुर्युद्धेप्सू रजनीचरः ।
आलोकयत तत् सर्वं बलं रामदिदृक्षया ॥१३॥
आहूयमानो बलिभिर्वानरैर्वीर्यशालिभिः ।
युद्धाय स महातेजा रामान्नान्यमरोचयत् ॥१४॥
मार्गमाणस्तदा रामं बलवान् रजनीचरः ।
रथेनाम्बुदघोषेण व्यचरत् तामनीकिनीं ॥१५॥
दृष्ट्वा राममदूरस्थं लक्ष्मणं च महाबलं ।
सेषुणा पाणिनाहूय ततो वचनमब्रवीत् ॥१६॥
तिष्ठ राम मया सार्द्धं द्वन्द्वयुद्धं प्रयच्छ मे ।
त्याजयिष्यामि ते प्राणान् धनुर्मुक्तैः शितैः शरैः ॥१७॥
यत् तदा दण्डकारण्ये पितरं हतवानसि ।
अनागसं स्वकर्मस्थं स्मृत्वा कोपोऽतिवर्धते ॥१८॥
दह्यन्तेऽद्यापि चाङ्गानि दुरात्मन् मम राघव ।
यन्मया न हि दृष्टस्त्वं तस्मिन् काले महावने ॥१९॥

दिष्ट्या संदर्शनं प्राप्तो मम राम रणाजिरे ।
काङ्क्षितस्त्वं क्षुधार्त्तस्य सिंहस्येवेतरो मृगः ॥ २० ॥
अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः ।
ये त्वया निहताः शूरास्तैः सहाद्यैव शेष्यसि ॥ २१ ॥
बहुनापि किमुक्तेन शृणु राम वचो मम ।
पश्यन्तु लोकाः सकलास्त्वां च मां च रणाजिरे ॥ २२ ॥
अस्त्रैर्वा गदया वापि बाहुभ्यां वा महाहवे ।
अभ्यस्तं येन ते राम वर्ततां तेन मे युधि ॥ २३ ॥
तेन संप्रतियुध्यस्व यदि जातोऽसि सत्कुले ।
अद्य मद्बाणनिर्भिन्नं स्रस्ताङ्गं क्षतजोक्षितं ॥ २४ ॥
क्रव्यादास्त्वां विकर्षन्तु रणरेणुसमुक्षितं ।
मद्बाणगोचरगतः सांप्रतं न भविष्यसि ॥ २५ ॥
मकराक्षवचः श्रुत्वा रामो दशरथात्मजः ।
अब्रवीत् प्रहसन् वाक्यमुत्तरोत्तरवादिनं ॥ २६ ॥
चतुर्दशसहस्राणि रक्षसां त्वत्पिता च सः ।
त्रिशिरा दूषणश्चैव हता मे दण्डके वने ॥ २७ ॥
यद्येवं वेत्सि दुर्बुद्धे गर्जसि त्वं किमद्य वै ।
त्वामद्यापि हनिष्यामि यदि तिष्ठसि संयुगे ॥ २८ ॥
स्वादुना तव मांसेन गृध्रगोमायुवायसाः ।
भविष्यन्त्यद्य वै तृप्तास्तीक्ष्णतुण्डनखाङ्कुशाः ॥ २९ ॥

रुधिरार्द्रमुखा दृष्टा रक्तपत्नाण्डजाश्च ह ।
खे गता वसुधां चैव भविष्यन्ति समन्ततः ॥३०॥
कत्थसे किं वृथा मूढ बहून्यसदृशानि तु ।
न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ॥३१॥
एवमुक्तस्तु रामेण खरपुत्रो निशाचरः ।
बाणौघान् मुमुचे तस्मै राघवाय रणाजिरे ॥३२॥
तान् शरान् शरवर्षेण रामश्चिच्छेद नैकधा ।
पेतुस्ते भुवि विच्छिन्ना रुक्मपुङ्खाः सहस्रशः ॥३३॥
तद्युद्धमभवद्घोरं समेत्यान्योन्यमोजसा ।
राक्षसस्य च पुत्रस्य सूनोर्दशरथस्य च ॥३४॥
जीमूतयोरिवाकाशे शब्दो ज्यातलयोस्तदा ।
धनुर्मुक्तशरोत्क्रुष्टः श्रूयते हि रणाजिरे ॥३५॥
देवदानवगन्धर्वाः किन्नराः समहोरगाः ।
अन्तरीक्षगतास्तस्थुर्द्रष्टुकामास्तदद्भुतं ॥३६॥
विद्धमन्योन्यगात्रेषु द्विगुणं वर्तते पुनः ।
कृतप्रतिकृतेऽन्योन्यं कुर्वाते तौ रणाजिरे ॥३७॥
शरौघसंतताः सर्वा दिशश्च विदिशस्तथा ।
संछन्ना वसुधा चैव समन्ताच्च प्रकाशते ॥३८॥
राममुक्तान् शरान् घोरान् राक्षसोऽथाच्छिनच्छरैः ।
रक्षोमुक्तान् शरान् रामो नैकधा प्राच्छिनच्छरैः ॥३९॥

ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद सायकैः ।
अष्टाभिरथ नाराचैः सूतं विव्याध राघवः ॥ ४० ॥
छित्त्वा शरै रथं रामो रथादश्वान् व्ययोजयत् ।
विरथोऽथ स भूमिष्ठो मकराक्षो निशाचरः ॥ ४१ ॥
अधिकं क्रोधसंरक्तः शूलं जग्राह पाणिना ।
त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभं ॥ ४२ ॥
प्रविभ्राम्याथ तं शूलं प्रज्वलन्तं निशाचरः ।
क्रोधात् स प्राहिणोत् तस्मै राघवाय महाहवे ॥ ४३ ॥
दृष्ट्वा शूलं ज्वलन्तं तु खरपुत्रकराच्युतं ।
बाणैस्तं त्रिभिराकाशे शूलं चिच्छेद राघवः ॥ ४४ ॥
स छिन्नो बहुधा शूलो दिव्यहाटकभूषितः ।
व्यशीर्यत महोल्केव रामबाणार्दितो भृशं ॥ ४५ ॥
तं शूलं निहतं दृष्ट्वा रामेणाद्भुतकर्मणा ।
साधु साध्विति देवाश्च व्याहरन्ति विहायसि ॥ ४६ ॥
तं दृष्ट्वा विफलं शूलं मकराक्षो निशाचरः ।
मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ४७ ॥
स तं दृष्ट्वापतन्तं तु प्रहस्य रघुनन्दनः ।
पावकास्त्रं ततो रामः संदधे स्वे शरासने ॥ ४८ ॥
तेनास्त्रेणाहतं रक्षः काकुत्स्थेन महात्मना ।
संछिन्नहृदयस्तत्र पपात च ममार च ॥ ४९ ॥

## LIX.

निहतं मकराक्षं तु श्रुत्वा रामेण संयुगे ।
इन्द्रजित् सुमहाक्रुद्धो विवेश रणसङ्कटं ॥ १ ॥
ततः प्रवृत्तः सुमहान् रक्षसां वानरैः सह ।
संग्रामस्तुमुलस्तत्र जयमन्योन्यमिच्छतां ॥ २ ॥
ततस्ते राक्षसा वीराः शूलपट्टिशमुद्गरैः ।
शक्तिखड्गभुषुण्डीभिर्भिन्दिपालपरश्वधैः ॥ ३ ॥
गदापरिघनिस्त्रिंशैः शरैश्च बहुभिः शितैः ।
तोमरैर्मुषलैश्चैव वानरान् जघ्नुराहवे ॥ ४ ॥
प्रहराहर भिन्धीति जहि विद्रावयेति च ।
तयोस्तदभवद्युद्धं सेनयोर्हरिरक्षसां ॥ ५ ॥
एकः समेति चैकेन द्वाभ्यां द्वौ चैव राक्षसौ ।
न्यपातयन् रणे तस्मिंस्त्रयस्त्रीन् बहवो बहून् ॥ ६ ॥
रावणिस्त्वब्रवीत् क्रुद्धस्तान् निरीक्ष्य निशाचरान् ।
हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥ ७ ॥
ततस्ते राक्षसाः सर्वे नर्दन्तो जयकाङ्क्षिणः ।
अभ्यवर्षन् सुघोराभिर्वानरान् शरवृष्टिभिः ॥ ८ ॥
ते बध्यमानाः समरे वानराः पादपायुधाः ।
अभ्यधावन्त सहसा राक्षसान् भीमविक्रमान् ॥ ९ ॥

केचिच्छृङ्गाणि संगृह्य मुष्टिमुद्यम्य चापरे ।
वानराः समरे तस्मिन् राक्षसांश्च निजघ्निरे ॥१०॥
जानुभ्यामाहताः केचिद्वानरैस्ते निशाचराः ।
बभ्रमुर्नष्टसंज्ञा वै मत्ताः पानवशादिव ॥११॥
भग्नजङ्घोरुपृष्ठाश्च केचिच्च निहता भुवि ।
सुषुपुर्वसुधायां ते स्तनमाना निशाचराः ॥१२॥
निरस्तहनुकर्णाश्च राक्षसा भिन्नमस्तकाः ।
सुस्रुवू रुधिरं भूरि नगा गैरिकधातुवत् ॥१३॥
तैर्हतैर्हन्यमानैश्च प्रपतद्भिश्च राक्षसैः ।
अधिकं निष्टनद्भिश्च घोरमायोधनं बभौ ॥१४॥
राक्षसा बहवस्तत्र निहता वानरैर्युधि ।
प्राधावन्नाजिरं त्यक्त्वा लङ्कामेव निशाचराः ॥१५॥
तेषां प्रद्रवतां लङ्का प्रचकम्पे समन्ततः ।
इन्द्रजित् तु ततः क्रुद्धो महातेजा महाबलः ॥१६॥
वानराणां शरीराणि व्यधमन्निशितैः शरैः ।
शरेणैकेन स हरीन् नव सप्त च पञ्च च ॥१७॥
बिभेद समरे क्रुद्धो राक्षसान् संप्रहर्षयन् ।
स शरैः सूर्यसंकाशैः शातकुम्भविभूषितैः ॥१८॥
वानरान् समरे वीरः प्रममाथ सुदुर्जयः ।
ततोऽष्टादशभिर्बाणैः स विद्ध्वा गन्धमादनं ॥१९॥

विव्याध नवभिर्वाणैर्नलं दूरादवस्थितं ।
सप्तभिश्च महावीर्यो नीलं मर्मविदारणैः ॥२०॥
पञ्चभिर्विशिखैश्चैव गयं विव्याध संयुगे ।
अपरान् च पृथग्वाणैर्वानरान् प्रत्यविध्यत ॥२१॥
ततस्ते वानराः शूरा भिन्नदेहा विचेतसः ।
व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥२२॥
केचिदार्त्तस्वरं चक्रुर्निर्भिन्ना वानरा रणे ।
रक्षोवाणहताः केचिन्निपेतुश्च गतासवः ॥२३॥
ते हन्यमाना वाणौघैस्तेनामित्रेण संयुगे ।
शलभा इव संपेतुर्वानराः सर्वतो दिशः ॥२४॥
केचिदारुरुहुर्वृक्षान् केचिच्च धरणीधरान् ।
केचिदाप्लुत्य सहसा वानरास्तु वनं गताः ॥२५॥

इत्यार्षे रामायणे युद्धकाण्डे मकराक्षवधो नाम
अष्टापञ्चाशः सर्गः — इन्द्रजिद्युद्धं नाम
नवपञ्चाशः सर्गः ॥

# युद्धकाण्डं

## LX.

विद्राव्य वानरानीकमिन्द्रजित् समितिञ्जयः ।
संनिवृत्याहवात् तस्मात् प्रविवेश पुरीं ततः ॥ १ ॥
सोऽनुस्मृत्य बधं वीरो राक्षसानां पुनः पुनः ।
क्रोधेन महताविष्टो निर्यातुमुपचक्रमे ॥ २ ॥
स पश्चिमेन द्वारेण निर्यायाशु महाबलः ।
मायां व्यवसितः कर्तुं मोहनार्थं वनौकसां ॥ ३ ॥
कृत्वा क्रूरो रथस्थां तु सीतां मायामयीं ततः ।
वानराभिमुखोऽगच्छद्रणे रणविशारदः ॥ ४ ॥
दृष्ट्वा तमभिगच्छन्तं नगराद्वानरास्तदा ।
उत्पेतुरभिसंक्रुद्धाः शिलाहस्ता युयुत्सवः ॥ ५ ॥
हनुमान् पुरतस्तेषां जगाम हरियूथपः ।
उद्यम्य सुमहच्छृङ्गं पर्वतस्य दुरावहं ॥ ६ ॥
स ददर्श निरानन्दां स्थितामिन्द्रजितो रथे ।
एकवेणीधरां सीतामुपवासोपकर्षितां ॥ ७ ॥
तां दीनां मलदिग्धाङ्गीं रथस्थां प्रेक्ष्य मैथिलीं ।
स वाष्पव्याकुलमुखो हनुमान् व्यथितोऽभवत् ॥ ८ ॥
अप्रतीतां च शोकार्त्तां निरानन्दां तपस्विनीं ।
दृष्ट्वा सीतां रथे तस्य रावणेः स दुरात्मनः ॥ ९ ॥

किं चिकीर्षितमस्येति चिन्तयन् स महाकपिः ।
सह तैर्वानरश्रेष्ठैरभ्यधावत रावणिं ॥१०॥
तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्च्छितः ।
कृत्वा विकोषं निस्त्रिंशं प्रजहास महास्वनं ॥११॥
क्रोशन्तीं राम रामेति सीतां मायामयीं तदा ।
खड्गरत्नं स संगृह्य केशपक्षे परामृशत् ॥१२॥
गृहीतां तां तदा दृष्ट्वा हनुमान् दैन्यमागतः ।
दुःखजं वारि नेत्राभ्यामुत्सृजन् पवनात्मजः ॥१३॥
अब्रवीत् परमक्रुद्धो रावणिं परिभर्त्सयन् ।
नृशंसानार्य दुर्बुद्धे क्षुद्र पापविनिश्चय ॥१४॥
अनार्य नार्हसे कर्तुमीदृशं त्वं विगर्हितं ।
च्युतां गृहाच्च राज्याच्च रामहस्ताच्च मैथिलीं ॥१५॥
अनपराधामवशां कथमेतां जिघांससि ।
किं तवैषापराध्नोति मादनां हन्तुमर्हसि ॥१६॥
सीतां हत्वा च न चिराज्जीवितं मोक्ष्यसि प्रियं ।
बधार्हकर्मणानेन मम हस्तगतो ह्यसि ॥१७॥
ये च स्त्रीघातिनां लोका ये चैवाबध्यघातिनां ।
इह जीवितमुत्सृज्य प्रेत्य तानुपभोक्ष्यसे ॥१८॥
इति ब्रुवाणो हनुमान् संयुगे हरिभिर्वृतः ।
अभ्यधावत संक्रुद्धो राक्षसेन्द्रसुतं प्रति ॥१९॥

आपतन्तं च तं भीमं तदनीकं वनौकसां ।
राक्षसो भीमकर्मा स समरे प्रत्यवारयत् ॥ २० ॥
तां तु बाणसहस्रेण विक्षोभ्य हरिवाहिनीं ।
हनूमन्तं हरिश्रेष्ठमिन्द्रजित् प्रत्यभाषत ॥ २१ ॥
सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः ।
तां हनिष्यामि वैदेहीमेषोऽद्य तव पश्यतः ॥ २२ ॥
इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर ।
सुग्रीवं च बधिष्यामि तं चानार्यं विभीषणं ॥ २३ ॥
न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम ।
पीडाकरममित्राणां यत् स्यात् कर्तव्यमेव तत् ॥ २४ ॥
तमेवमुक्त्वा रुदतीं सीतां मायामयीं ततः ।
शितधारेण खड्गेन तां जघानेन्द्रजित् स्वयं ॥ २५ ॥
यज्ञोपवीतवत् सा तु छिन्ना तेन तपस्विनी ।
पृथिव्यां पृथुसुश्रोणी पपात प्रियदर्शना ॥ २६ ॥
तामिन्द्रजित् स्वयं हत्वा हनूमन्तमुवाच ह ।
मया रामस्य पश्येमां कपे पत्नीं विनाशितां ॥ २७ ॥
एवं सीतां तदा हत्वा शक्रजिद्रावणात्मजः ।
प्रहृष्टो रथमास्थाय विननाद महास्वनं ॥ २८ ॥
ततस्तं विकृतं नादं सर्वप्राणिभयावहं ।
वानराः शुश्रुवुः शब्दमाहवप्रेप्सवः स्थिताः ॥ २९ ॥

# रामायणं

## LXI.

श्रुत्वा तं भीमनिर्ह्रादं तत्र शक्राशनिस्वनं ।
वीक्षमाणा दिशः सर्वा दुद्रुवुर्वानरर्षभाः ॥ १ ॥
तानुवाच हरीन् सर्वान् हनूमान् पवनात्मजः ।
विषण्णवदनान् भीतांस्त्रासाद्विद्रवतः पृथक् ॥ २ ॥
किं विषण्णमुखा दीना विद्रवध्वं प्लवङ्गमाः ।
त्यक्त्वा युद्धसमुत्साहं शूरत्वं तत् क्व वो गतं ॥ ३ ॥
पृष्ठतोऽनुव्रजध्वं मामग्रतो यान्तमाहवे ।
शूरैरभिजनोत्पन्नैर्न युक्तं हि पलायितुं ॥ ४ ॥
इत्येवमुक्ता हरयः समारोपितविक्रमाः ।
शैलशृङ्गाणि जगृहुर्द्रुमांश्च विविधान् बहून् ॥ ५ ॥
अभिपेतुश्च नर्दन्तो राक्षसान् वानरर्षभाः ।
परिवार्य हनूमन्तमन्वयुश्च महाहवे ॥ ६ ॥
स तैर्वानरमुख्यैश्च हनूमान् सर्वतो वृतः ।
हुताशन इवार्चिष्मानदहच्छत्रुवाहिनीं ॥ ७ ॥
रक्षसां कदनं तत्र चकार स महाबलः ।
वृतो वानरसैन्येन कालान्तकयमोपमः ॥ ८ ॥
स तु कोपेन चाविष्टः शोकेन च महाकपिः ।
हनूमान् रावणिरथे शिलां गुर्वीमपातयत् ॥ ९ ॥

तामापतन्तीं दृष्ट्वा तु रथः सारथिना तदा ।
विधेयाश्वसमायुक्तः सुदूरमपवाहितः ॥ १० ॥
इन्द्रजितमसंप्राप्य सरथं साश्वसारथिं ।
विवेश धरणीं भित्त्वा सा शिला व्यर्थतां गता ॥ ११ ॥
पतितायां शिलायां तु राक्षसी व्यथिता चमूः ।
तामभ्यधावन् शतशो नदन्तः काननौकसः ॥ १२ ॥
ते द्रुमांश्च महाकाया गिरिशृङ्गाणि चाहवे ।
चिक्षिपुर्द्विषतां मध्ये वानरा भीमविक्रमाः ॥ १३ ॥
वानरैस्तैर्महाकायैर्भीमरूपा निशाचराः ।
वीर्यादभिहता वृक्षैर्व्यचेष्टन्त महीतले ॥ १४ ॥
स्वसैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् ।
प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ ॥ १५ ॥
स शरौघानभिसृजन् स्वसैन्येनाभिसंवृतः ।
जघान कपिशार्दूलान् सुबहून् रावणात्मजः ॥ १६ ॥
शूलैरशनिकल्पैश्च पट्टिशैः कूटमुद्गरैः ।
ये चाप्यनुचरास्तस्य वानरान् जघ्नुराहवे ॥ १७ ॥
वानराश्चापि संक्रुद्धाः शिलाभिः पर्वतैस्तथा ।
वृक्षैश्च सुमहाकायान् राक्षसान् समुपाद्रवन् ॥ १८ ॥
राक्षसैर्वानराः सार्द्धं वानरैरपि राक्षसाः ।
अयुध्यन्त महावेगा विबुधा दानवैरिव ॥ १९ ॥

सस्कन्धविटपैः सालैः शिलाभिश्च महाबलः ।
हनूमान् कदनं चक्रे रक्षसां भीमविक्रमः ॥ २० ॥
तेन ते राक्षसा युद्धे निहता भीमकर्मणा ।
विद्रुताः समरात् सर्वे शतशो जीवितैषिणः ॥ २१ ॥
स निवार्य परानीकं वानरानिदमब्रवीत् ।
सन्नवन्तो निवर्तध्वं न नो नश्यत्विदं बलं ॥ २२ ॥
त्यक्त्वा प्राणान् वयं सर्वे रामप्रियचिकीर्षया ।
यन्निमित्तं हि युध्यामो हता सा जनकात्मजा ॥ २३ ॥
निवेदयाम एतस्या रामसुग्रीवयोर्वधं ।
तौ यत् प्रतिविधास्येते तत् करिष्यामहे पुनः ॥ २४ ॥
इत्युक्त्वा वानरश्रेष्ठान् वारयन् राक्षसान् रणे ।
शनैः शनैरसंभ्रान्तः सबलः संन्यवर्तत ॥ २५ ॥
ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवौ ।
क्षतविक्षतगात्रास्ते यातुधाना व्युपारमन् ॥ २६ ॥
रावणिश्चापि संहृष्टः प्रयाते मारुतात्मजे ।
निकुम्भिलामथासाद्य जुहावाग्निमथेन्द्रजित् ॥ २७ ॥
यज्ञभूमौ तु विधिना पावकस्तेन रक्षसा ।
हूयमानः प्रजज्वाल जपहोमवषट्कृतः ॥ २८ ॥
सोऽर्चिष्मान् ददृशे चाग्र जयाशंसी विभावसुः ।
संध्यागत इवादित्यः परिवेशसमन्वितः ॥ २९ ॥

# युद्धकाण्डं

## LXII.

राघवश्चापि तत्कालं तद्राक्षसवनौकसां ।
श्रुत्वा संग्रामनिर्घोषं जाम्बवन्तमुवाच ह ॥ १ ॥
सौम्य नूनं हनुमता संग्रामः क्रियते महान् ।
श्रूयते हि महाभीमः सुमहानायुधस्वनः ॥ २ ॥
तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः ।
क्षिप्रमृक्षपते तस्य सहायो भव युध्यतः ॥ ३ ॥
ऋक्षराजस्तथोक्तस्तु स्वेनानीकेन संवृतः ।
आगच्छत् पश्चिमं द्वारं हनूमान् यत्र वानरः ॥ ४ ॥
अथायान्तं हनूमन्तं ददर्शर्क्षपतिः पथि ।
वानरैः कृतसंग्रामैः श्वसद्भिः परिवारितं ॥ ५ ॥
दृष्ट्वा पथि हनूमांस्तु तमृक्षपतिमुद्यतं ।
नीलमेघसमाकारं स समेत्य न्यवर्तयत् ॥ ६ ॥
स तेन सह सैन्येन संनिकर्षं महात्मनः ।
शीघ्रमागत्य रामस्य दुःखितो वाक्यमब्रवीत् ॥ ७ ॥
प्रयत्नाद्युध्यमानानामस्मिना पश्यतां च नः ।
जघान रुदतीं सीतां रावणी रघुनन्दन ॥ ८ ॥
उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिन्दम ।
तमसा महताच्छन्नो विज्ञापयितुमागतः ॥ ९ ॥

तस्य तद्वचनं श्रुत्वा रामो दुःखेन मूर्च्छितः ।
निपपात तदा भूमौ मूढो विह्वलमानसः ॥ १० ॥
तं दृष्ट्वा देवसंकाशं पतितं राघवं तदा ।
जग्राह लक्ष्मणः शीघ्रमभिपत्य सुदुःखितः ॥ ११ ॥
जाम्बवान् हनुमान् मैन्दो नलो नीलश्च वानरः ।
अभिपेतुः समुत्पत्य सर्वतः कपिकुञ्जराः ॥ १२ ॥
सिषिचुः सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः ।
दह्यमानं महादुःखैर्महाकक्षमिवाग्निभिः ॥ १३ ॥
लक्ष्मणोऽप्यथ बाहुभ्यां तं परिष्वज्य दुःखितं ।
उवाच राममव्यग्रं वाक्यं हेत्वर्थसंहितं ॥ १४ ॥
शुचौ वर्त्मनि तिष्ठन्तं त्वामार्य विजितेन्द्रियं ।
अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥ १५ ॥
भूतानां स्थावराणां च जङ्गमानां च दर्शनं ।
यथास्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥ १६ ॥
यदि धर्मो भवेत् सत्यो रावणो निरयं व्रजेत् ।
भवांश्च धर्मसंयुक्तो नेदं व्यसनमाप्नुयात् ॥ १७ ॥
तस्य च व्यसनाभावाद्व्यसनैश्चावृते त्वयि ।
धर्मेणोपलभेऽधर्ममधर्मेणापि धर्मतां ॥ १८ ॥
यदि धर्मेण युज्येरन् ये हि धर्मपरा नराः ।
अधार्मिका ह्यधर्मेण फलं स्यादेवमेतयोः ॥ १९ ॥

यस्मादर्थैर्विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ।
अनर्थैर्येषु धर्मश्च तस्माद्धर्मो निरर्थकः ॥ २० ॥
बध्यन्ते पुण्यकर्माणो यद्यधर्मेण राघव ।
अधर्मेण हतो धर्मः स हतः किं करिष्यति ॥ २१ ॥
अथवा विहितेनायं हन्यते हन्ति चापरं ।
विधाता लिप्यते तेन यथा पापेन कर्मणा ॥ २२ ॥
अदृष्टः प्रतिसंहारो यदि पापस्य कर्मणः ।
कथं शक्यं परं प्राप्तुं धर्मेणारिनिसूदन ॥ २३ ॥
यदि सत् स्यात् सतां मध्ये नासत् स्यात् तत्र किञ्चन ।
त्वयेदमीदृशं प्राप्तं तस्मात् सन्नोपपद्यते ॥ २४ ॥
अथ चेद्दुर्बलं त्यक्त्वा बलं धर्मोऽनुवर्तते ।
दुर्बलो हतमर्यादो न सेव्य इति मे मतिः ॥ २५ ॥
बलस्य यदिवा धर्मो गुणभूतः स मानद ।
धर्ममुत्सृज्य वर्तस्व यथा धर्मस्तथा बलं ॥ २६ ॥
अथ चेत् सत्यवचनं धर्मः किल परो मतः ।
अनृतत्वस्य करणे किन्न बद्धः पिता त्वया ॥ २७ ॥
अथ चैतन्मतं दानं धर्मोऽयमिति राघव ।
धर्ममूलं हि संछिन्नं राज्यमुत्सृजता त्वया ॥ २८ ॥
अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ २९ ॥

अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
प्रच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ३० ॥
पुरुषोऽर्थपरित्यक्तः सुखकामः सुदुःखितः ।
पापमारभते कर्तुं क्रियाद्वेषो हि जायते ॥ ३१ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ ३२ ॥
यस्यार्थाः स कुलश्रेष्ठो यस्यार्थाः स गुणान्वितः ।
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् ॥ ३३ ॥
यस्यार्थाः स च विद्वान् हि यस्यार्थाः स च संमतः ।
यस्यार्थास्तस्य कामार्थास्तस्य सर्वं प्रदक्षिणं ॥ ३४ ॥
अधनेनार्थकामेन नार्थाः शक्याः समीहितुं ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ ३५ ॥
अर्थस्यैते परित्यागाद्दोषाः प्रव्याहृता मया ।
राज्यमुत्सृजता वीर न तद्बुद्धं तदा त्वया ॥ ३६ ॥
धर्मः कामश्च दर्पश्च हर्षः क्रोधः सुखं वयः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते न संशयः ॥ ३७ ॥
येनार्थेन तु लोकोऽयं चरते धर्मकारणं ।
ते नार्थास्त्वयि दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥ ३८ ॥
धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
विशेषं नाधिगच्छामि निर्धनस्य मृतस्य च ॥ ३९ ॥

चण्डालश्च दरिद्रश्च द्वावेव सदृशौ मम ।
चण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥४०॥
त्वयि प्रव्रजिते वीर पितर्युपरते तथा ।
रक्षसापहृता सीता प्राणेभ्योऽपि गरीयसी ॥४१॥
तवासह्यमिदं दुःखं घोरमिन्द्रजिता कृतं ।
कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥४२॥
उत्तिष्ठ शतपत्राक्ष दीर्घबाहो दृढव्रत ।
किमात्मानं महात्मानं कृतात्मानं न बुध्यसे ॥४३॥

अयमद्य विभो तव च प्रियार्थं
जनकसुतानिधनं च संनिरीक्ष्य ।
सहयमजरथां सराक्षसेन्द्रां
भृशमिषुभिः खलु पातयामि लङ्कां ॥४४॥

इत्यार्षे रामायणे युद्धकाण्डे मायासीताबधो नाम
षष्टितमः सर्गः—वानरापसर्पणं नाम
एकषष्टितमः सर्गः—लक्ष्मणवाक्यं नाम
द्विषष्टितमः सर्गः ॥

## LXIII.

रामम् आश्वासयाने तु लक्ष्मणे भ्रातृवत्सले ।
निक्षिप्य गुल्मान् संस्थाप्य संप्राप्तोऽथ विभीषणः ॥१॥
नानाप्रहरणैर्वीरैर् राक्षसैरभिसंवृतः ।
महामेघनिकाशैश्च मातङ्गैरिव यूथपः ॥२॥
सोऽभिगम्य महावीर्यो राघवस्य समीपतः ।
ददर्श वानरान् दीनान् ससुग्रीवान् सलक्ष्मणान् ॥३॥
राघवं च महावीर्यमिक्ष्वाकुकुलनन्दनं ।
ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमाश्रितं ॥४॥
क्लान्तं शोकाभिसंतप्तं रामं प्रेक्ष्य विभीषणः ।
अन्तर्दुःखेन दीनात्मा किमेतदिति सोऽब्रवीत् ॥५॥
तं विषण्णमुखं दृष्ट्वा ध्यानयुक्तं विभीषणं ।
उवाच लक्ष्मणो वाक्यमिदमश्रुपरिप्लुतः ॥६॥
हतामिन्द्रजिता सीतामद्य श्रुत्वा तु राघवः ।
हनूमद्वचनाद्वीर ततो मोहमुपागतः ॥७॥
कथयन्तं तु सौमित्रिं संनिवार्य विभीषणः ।
पुष्कलार्थमिदं वाक्यं ससंज्ञं राममब्रवीत् ॥८॥
मनुजेन्द्रार्त्तरूपेण यदुक्तस्त्वं हनूमता ।
तदयुक्तमहं मन्ये सागरस्येव संक्षयं ॥९॥

अभिप्रायं विजानामि रावणस्य दुरात्मनः ।
सीतां प्रति महाबाहो न स तां घातयिष्यति ॥१०॥
उच्यमानो हितार्थं हि बान्धवैर्धर्मसंहितं ।
वैदेहीमुत्सृजस्वेति न च तत् कृतवान् वचः ॥११॥
नैव दानेन मानेन न भेदेन कुतोऽन्यथा ।
शक्या सा द्रष्टुमन्येन राक्षसेन नरर्षभ ॥१२॥
यदा तु खलु संग्राममुपायाति स रावणिः ।
चैत्यो निकुम्भिला नाम तत्र गत्वा प्रतिष्ठते ॥१३॥
कृतवानग्निहोत्रं वै देवैरपि सवासवैः ।
भवत्यजेयः संग्रामे बलवान् रावणात्मजः ॥१४॥
तेन हव्यनिमित्तं तु नूनं माया प्रवर्तिता ।
विघ्नमनिच्छता तत्र वानराणां पराक्रमे ॥१५॥
निकुम्भिलायां काकुत्स्थ स जुहोति न संशयः ।
सबलास्तत्र गच्छामो यावत् तन्न समाप्यते ॥१६॥
त्यजेमं नरशार्दूल मिथ्या संतापमागतं ।
मुह्येरन् हि बलं सर्वं त्वां दृष्ट्वा शोककर्षितं ॥१७॥
इह त्वं सुस्थहृदयस्तिष्ठस्वारिनिसूदन ।
लक्ष्मणं प्रेषयास्माभिः सह सैन्यानुकर्षिभिः ॥१८॥
एष तं नरशार्दूल रावणिं निशितैः शरैः ।
त्याजयिष्यति सत्कर्मा प्राणानिष्टांश्च संयुगे ॥१९॥

तस्य ते निशितास्तीक्ष्णाः सपत्राः कङ्कवाससः ।
पतत्रिण इवासौम्याः शराः पास्यन्ति शोणितं ॥ २० ॥
तदादिश महाबाहो लक्ष्मणं शुभलक्षणं ।
बधाय रावणेस्तस्य सहास्माभिररिन्दम ॥ २१ ॥

मनुजवर न कालविप्रकर्षो
रिपुनिधनं प्रति यत् क्षमं नः ।
तदभिसृज रिपोर्बधाय वाणीम्
असुरवरोन्मथनाय यथा महेन्द्रः ॥ २२ ॥
समाप्तकर्मा हि स रावणात्मजो
भवेदधृष्यः समरे सुदुर्जयः ।
युयुत्सता तेन समाप्तकर्मणा
भवेत् सुराणामपि संशयो महान् ॥ २३ ॥

इत्यार्षे रामायणे युद्धकाण्डे विभीषणवाक्य नाम
त्रिषष्टितमः सर्गः ॥

# युद्धकाण्डं

## LXIV.

तस्य तद्वचनं श्रुत्वा चिन्ताशोकपरिप्लुतः ।
नावधारितवान् पूर्वं यदुक्तं तेन रक्षसा ॥ १ ॥
अथाब्रवीन्मन्दमन्दं विभीषणमिदं वचः ।
नैर्ऋताधिपते वाक्यं यत् त्वयोक्तं महाद्युते ॥ २ ॥
व्याकुलत्वाद्धि चित्तस्य न श्रुतं ते वचो मया ।
भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यन्मे समीरितं ॥ ३ ॥
राघवस्य वचः श्रुत्वा सुदीनवदुदाहृतं ।
यत्नात् पुनरिदं वाक्यं बभाषे स विभीषणः ॥ ४ ॥
यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनं ।
तन्मया हि कृतं वीर त्वद्वाक्यसमनन्तरं ॥ ५ ॥
सेनानीकानि सर्वाणि विभक्तानि समन्ततः ।
विन्यस्ता यूथपश्रेष्ठा यथान्यायं विभागशः ॥ ६ ॥
भूयस्तन्मम विज्ञाप्यं त्वमिदं श्रोतुमर्हसि ।
त्वय्यकारणतप्ते हि संतप्तहृदयो ह्यहं ॥ ७ ॥
त्यज राजन्निमं शोकं मिथ्या श्रुतिमुपागतं ।
मायया तत् कृतं तेन यत् ते ह्यनुमतः श्रुतं ॥ ८ ॥
तदियं त्यज्यतां चिन्ता शत्रुहर्षप्रदायिका ।
उद्यमः क्रियतां वीर हर्षः समुपसेव्यतां ॥ ९ ॥

प्राप्तव्या यदि ते सीता हन्तव्यो यदि ते रिपुः ।
रोचतां ते महाबाहो मद्वाक्यमिदमूर्जितं ॥ १० ॥
साध्वयं यातु सौमित्रिः सहास्माभिर्नरोत्तम ।
निकुम्भिलां महेष्वासो निहन्तुं रावणात्मजं ॥ ११ ॥
रक्षसा तपसा तेन वरदानात् स्वयम्भुवः ।
अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च हयोत्तमाः ॥ १२ ॥
स एष विदधे तस्य भगवान् लोककृत् प्रभुः ।
तेजसातिप्रतप्तस्य बधं वै तेजसोऽधिकात् ॥ १३ ॥
इत्येवं तस्य विहितो बधोपायो दुरात्मनः ।
त्वरयस्व बधाय त्वं प्राज्ञयस्येव देवराट् ॥ १४ ॥
बधस्येन्द्रजितो राम हेतुर्भवितुमर्हसि ।
हते तस्मिन् हतं विद्धि रावणं ससुहृज्जनं ॥ १५ ॥
विभीषणवचः श्रुत्वा रामो लक्ष्मणमब्रवीत् ।
जानामि तस्य रौद्रस्य मायामेतां दुरात्मनः ॥ १६ ॥
स हि दिव्यास्त्रवित् तात राक्षसापसदो महान् ।
करोत्यसंज्ञान् संग्रामे देवानपि सवासवान् ॥ १७ ॥
तस्यान्तरीक्षे चरतः सरथस्य परंतप ।
न गतिर्वेदितुं शक्या सूर्यस्येवाभ्रमण्डले ॥ १८ ॥
तमायोगमसंप्राप्तं महावीर्यमरिन्दम ।
जहि वाणैरिदं कर्म कुरु सत्यपराक्रम ॥ १९ ॥

यदृक्षराजस्य बलं तेन सर्वेण संवृतः ।
राज्ञा जाम्बवता सार्द्धमनेन च हनूमता ॥ २० ॥
गच्छ त्वं राक्षसेन्द्रस्य तनूजं जहि लक्ष्मण ।
जेतारं वज्रहस्तस्य समरेषु सुदुर्मदं ॥ २१ ॥
अयं च सचिवैः सार्द्धं महात्मा रावणानुजः ।
अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ॥ २२ ॥
स रामस्य वचः श्रुत्वा लक्ष्मणः परवीरहा ।
जग्राह कार्मुकश्रेष्ठं भीमं भीमपराक्रमः ॥ २३ ॥
स संनद्धः शरी खड्गी कवची हेमजालवान् ।
रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥ २४ ॥
अद्य मत्कार्मुकोत्सृष्टाः शराः संभिद्य रावणिं ।
लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ॥ २५ ॥
अद्य विध्वंसयिष्यन्ति मम बाणा धनुश्च्युताः ।
शरीरं तस्य रौद्रस्य तृणराशिमिवानलः ॥ २६ ॥
इत्येवमुक्त्वा वचनं हृष्टो भ्रातरमग्रतः ।
जिघांसू रावणिं युद्धे लक्ष्मणो निर्जगाम ह ॥ २७ ॥
वानराणां सहस्रैस्तु बहुभिर्हनुमान् वृतः ।
विभीषणश्च सामात्यो रामभ्रातरमन्वयात् ॥ २८ ॥
स गत्वा दूरमध्वानं लक्ष्मणः परवीरहा ।
राक्षसेन्द्रबलं दूरादपश्यद्व्यूहमास्थितं ॥ २९ ॥

## LXV.

अथ तत्र महाबाहुं लक्ष्मणं रावणानुजः ।
परेषामहितं वाक्यं स्वार्थसाधकमब्रवीत् ॥ १ ॥
अस्यानीकस्य सौमित्रे भेदने यत्नवान् भव ।
राक्षसेन्द्रसुतो ह्यत्र भिन्ने दृश्यो भविष्यति ॥ २ ॥
शीघ्रमिन्द्राशनिप्रख्यैः शतशो विकिरन् शरैः ।
अभिद्रव स्वयं ह्यत्र यावत् कर्म न सिध्यति ॥ ३ ॥
विभीषणवचः श्रुत्वा संप्रहृष्टः स लक्ष्मणः ।
राक्षसेषु महाभीमं शरवर्षमपातयत् ॥ ४ ॥
ऋक्षाः शाखामृगाश्चैव वृक्षशैलशिलायुधाः ।
अभ्यधावन्त संहृष्टास्तदनीकमवस्थितं ॥ ५ ॥
राक्षसाश्च शितैः शूलैरसिभिः पट्टिशैः शरैः ।
उद्यतास्त्वरिताः शश्वत् कपीनभिजिघांसवः ॥ ६ ॥
स संवृद्धस्तु तुमुलः संग्रामः कपिरक्षसां ।
शब्देन नादयन् लङ्कां जलदप्रतिमस्वनः ॥ ७ ॥
अस्त्रैश्च पादपैश्चैव नानाप्रहरणैस्तथा ।
उद्यतैः पर्वताग्रैश्च घोरमाकाशमाबभौ ॥ ८ ॥
राक्षसा वानरेन्द्रेषु निकृत्ताननबाहुषु ।
निपातयन्तः शस्त्राणि चक्रुः सुमहतो व्रणान् ॥ ९ ॥

केचिद्दन्तैः सविटपैर्बलवन्तो वनौकसः ।
अभिजघ्नुस्ततो हृष्टाः समरे राक्षसर्षभान् ॥ १० ॥
ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः ।
रक्षसां बध्यमानानां महद्भयमजायत ॥ ११ ॥
स्वमनीकं विषण्णं तु दृष्ट्वा शत्रुभिरर्दितं ।
उत्तस्थाविन्द्रजिच्छीघ्रमसमाप्यैव कर्म तत् ॥ १२ ॥
स तु कर्मण्यनिर्वृत्ते मन्युशल्यं समुद्वहन् ।
परित्रातुं बलं दीर्णमभिचक्राम रावणिः ॥ १३ ॥
वृक्षान्धकारान्निष्क्रम्य पूर्वं यत्नात् स वीर्यवान् ।
आरुरोह रथं दिव्यं वाजिभिर्हेमसंनिभैः ॥ १४ ॥
स भीमकार्मुकधरो नीलाञ्जनचयोपमः ।
रक्तास्यनयनः क्रुद्धो बभौ मृत्युरिवापरः ॥ १५ ॥
दृष्ट्वैव तु रथस्थं तमभ्यधावत तद्बलं ।
वानराणां सुभीमानां युद्धाय रिपुमाहवे ॥ १६ ॥
तस्मिन् काले च हनुमानारुह्य सुमहत्तरं ।
धरणीधरसंकाशं महावृक्षं महाबलः ॥ १७ ॥
राक्षसानामनीकानि दावाग्निरिव निर्दहन् ।
चकार सोऽभितो मार्गं राक्षसेषु महाकपिः ॥ १८ ॥
विध्वंसयन्तं तरसा शत्रुं तं मारुतात्मजं ।
परिवव्रुः सहस्राणि राक्षसानां समन्ततः ॥ १९ ॥

शितशूलधरा वीराः शक्तिभिः प्रासपट्टिशैः ।
घोरैः परशुभिस्तीक्ष्णैर्भिन्दिपालैश्च राक्षसाः ॥ २० ॥
परश्वधैर्धनुर्भिश्च गदाभिर्मार्गणैरपि ।
शतशश्च शतघ्नीभिरायसैश्चापि मुद्गरैः ॥ २१ ॥
मुष्टिभिर्वज्रकल्पैश्च तलैश्च जलदस्वनैः ।
नखैर्दन्तैश्च वीराणां संयुगे जयमिच्छतां ॥ २२ ॥
अभिजघ्नुः समासाद्य समन्तात् पर्वतोपम ।
तेषामपि सुसंक्रुद्धश्चकार कदनं कपिः ॥ २३ ॥
उद्यम्य चैव वृक्षांश्च शिखरांश्च सुदारुणान् ।
जघान पञ्च षट् सप्त दश चाष्टौ तथैव च ॥ २४ ॥
विंशतिं त्रिंशतं चैव दण्डहस्त इवान्तकः ।
तमपश्यत् कपिश्रेष्ठमनिलात्मजमिन्द्रजित् ॥ २५ ॥
सूदयन्तममित्रघ्नममित्रान् भीमविक्रमं ।
स सारथिमुवाचेदमभियाहि महाकपिं ॥ २६ ॥
क्षयमेष हि नः कुर्याद्राक्षसानामुपेक्षितः ।
इत्युक्तः सारथिस्तेन रथेनाभिययौ कपिं ॥ २७ ॥
वहन् परमदुर्धर्षं स्थितमिन्द्रजितं रणे ।
सोऽभ्युपेत्य शरान् घोरान् पट्टिशासिपरश्वधान् ॥ २८ ॥
अपातयत दुर्धर्षो रावणिः कपिमूर्द्धनि ।
तानि चास्त्राणि घोराणि परिगृह्य स मारुतिः ॥ २९ ॥

रोषेण परमाविष्टो वाक्यमेतदुवाच ह ।
युध्यस्व यदि शूरोऽसि रावणात्मज दुर्मते ॥ ३० ॥
वायुपुत्रं समासाद्य न जीवन् प्रतियास्यसि ।
बाहुभ्यां संप्रयुध्यस्व यदि योद्धुं त्वमागतः ॥ ३१ ॥
वेगं सहस्व दुर्बुद्धे ततस्त्वं रक्षसां वरः ।
हनूमन्तं जिघांसन्तं समुद्यतशरासनं ॥ ३२ ॥
आक्षेपोद्धतसर्वाङ्गं भ्रूकुटीकुटिलाननं ।
रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३३ ॥
योऽसौ वासवनिर्जेता रावणस्यात्मसंभवः ।
स एष रथमास्थाय हनूमन्तं जिघांसति ॥ ३४ ॥
तमप्रतिमकर्माणं निशितैः शत्रुसूदनैः ।
सौमित्रे जीवितच्छिद्भिरभिवर्ष शरोत्तमैः ॥ ३५ ॥

इत्यार्षे रामायणे युद्धकाण्डे लक्ष्मणनिर्याणं नाम
चतुःषष्टितमः सर्गः — इन्द्रजिध्वजध्वंसनं
नाम पञ्चषष्टितमः सर्गः ॥

## LXVI.

स एवमुक्त्वा सौमित्रिं त्वरमाणो विभीषणः ।
धनुष्पाणिं समादाय लक्ष्मणं रावणानुजः ॥ १ ॥
अतिद्रुतं ततो गत्वा प्रविश्य च महद्बलं ।
दर्शयामास तद्गत्वा लक्ष्मणाय विभीषणः ॥ २ ॥
नीलजीमूतसंकाशं न्यग्रोधद्वारसंस्थितं ।
तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३ ॥
इहोपहारं भूतानां बलवान् रावणात्मजः ।
उपहृत्य ततः पश्चात् संग्राममभिवर्तते ॥ ४ ॥
अदृश्यः सर्वभूतानां ततो भवति राक्षसः ।
निहन्ति च रणे शत्रून् बध्नाति च शरोत्तमैः ॥ ५ ॥
तमप्रविष्टं न्यग्रोधमिमं त्वं रावणात्मजं ।
विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिं ॥ ६ ॥
इति व्युक्तो महातेजाः सुमित्रानन्दिवर्धनः ।
बभूवावस्थितस्तत्र समारोपितकार्मुकः ॥ ७ ॥
स रथेनाग्निवर्णेन बलवान् रावणात्मजः ।
इन्द्रजित् कवची खड्गी सध्वजः प्रत्यदृश्यत ॥ ८ ॥
लक्ष्मणस्तमुवाचाथ रावणिं युद्धदुर्मदं ।
समाह्वये त्वां समरे सौम्य युद्धं प्रयच्छ मे ॥ ९ ॥

एवमुक्तो महातेजाः समरे रावणात्मजः ।
अब्रवीत् परुषं वाक्यं दृष्ट्वा तत्र विभीषणं ॥१०॥
इह त्वं जातवृद्धोऽसि साक्षाद्भ्राता पितुर्मम ।
कथं द्रुह्यसि पुत्राय पितृव्यः सन् निशाचर ॥११॥
न ज्ञातित्वं न भ्रातृत्वं न जातिस्तव दुर्मते ।
प्रमाणं न च सौहार्दं न धर्मो धर्मदूषक ॥१२॥
शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥१३॥
नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरं ।
क्व च स्वजनसंवासः क्व च नीच पराश्रयः ॥१४॥
गुणवान् वा परजनः स्वजनो निर्गुणोऽपि वा ।
निर्गुणः स्वजनः श्रेयान् यः परः पर एव सः ॥१५॥
निरनुक्रोशता चेयं यादृशी ते निशाचर ।
स्वजने न त्वया शक्या प्रतिष्ठा वा सुखानि वा ॥१६॥
यदि त्वं परुषाण्युक्तः पित्रा मम निशाचर ।
गौरवात् प्रणयाद्वापि तथैव परिशान्त्वितः ॥१७॥
यथैव प्रणयाद्वापि गुरुर्वदति विप्रियं ।
तथैव स पुनर्मूढ लालयत्यविचारयन् ॥१८॥
गुणवन्मित्रनाशार्थममित्रमुपचीयते ।
शालिस्तम्बसमीपस्थं श्यामाकमिव तं त्यजेत् ॥१९॥

नूनं निर्वासितो लङ्कां पश्यन्नेव विशीर्यसे ।
कामयन् पुरुषः कान्तां शूरस्याङ्कगतामिव ॥ २० ॥
क्रुद्धेनेन्द्रजिता वाक्यं परुषं रावणानुजः ।
उक्तः पितृव्यः पुत्रेण प्रत्युवाच विभीषणः ॥ २१ ॥
अजानन्निव मच्छीलं किं त्वमेवं ब्रवीषि मां ।
राक्षसेन्द्रसुतानार्य परुषं त्यक्तगौरवः ॥ २२ ॥
अयुक्तरूपं वचनं पौलस्त्यकुलपांसन ।
अधर्मेण हृतज्ञानो न त्वं वेत्सि गुणागुणं ॥ २३ ॥
कुले यद्यपि जातोऽहं रक्षसां पापकर्मणां ।
गुणो यः प्रथमो नृणां तन्मे शीलमराक्षसं ॥ २४ ॥
न रमे दारुणेनाहं राज्येन पापकर्मणा ।
भ्रात्रा विषमशीलेन न च रंस्ये दुरात्मना ॥ २५ ॥
हरणं च परस्वानां परदाराभिमर्षणं ।
सुहृदामभिशङ्का च त्रयो दोषाः क्षयावहाः ॥ २६ ॥
महर्षीणां बधो घोरः सर्वदेवैश्च विग्रहः ।
क्रोधश्चैवाभिमानश्च वैरत्वं प्रतिकूलता ॥ २७ ॥
एते दोषास्तव पितुर्जीवितैश्वर्यनाशनाः ।
गुणान् प्रच्छादयन्त्यस्य पर्वतानिव नीरदाः ॥ २८ ॥
एतैर्दोषैः परित्यक्तो मया भ्राता पिता तव ।
नैवास्तीयं पुरी लङ्का नैव त्वं न च ते पिता ॥ २९ ॥

अभिमानी च धृष्टश्च दुर्विनीतश्च राक्षस ।
बद्धस्त्वं कालपाशेन ब्रूहि त्वं यद्यदिच्छसि ।। ३० ।।
प्रवेष्टुं न त्वया शक्यो न्यग्रोधो राक्षसाधम ।
धर्षयित्वा तु काकुत्स्थं न शक्यं जीवितुं त्वया ।। ३१ ।।
युध्यस्व नरदेवेन लक्ष्मणेन रणे सह ।
न च प्रवेक्ष्यसे लङ्कां कुतो न्यग्रोधमद्य हि ।। ३२ ।।

विदर्शय त्वं स्वबलं समुद्यतः
कुरुष्व सर्वायुधसायकक्षयं ।
न लक्ष्मणस्याद्य हि बाणगोचरं
त्वं प्राप्य जीवन् सबलो गमिष्यसि ।। ३३ ।।

इत्यार्षे रामायणे युद्धकाण्डे विभीषणवाक्यं
नाम षट्षष्टितमः सर्गः ।।

LXVII.

विभीषणवचः श्रुत्वा रावणिः क्रोधमूर्च्छितः ।
अब्रवीत् परुषं वाक्यं वेगेनाभिचचाल ह ॥ १ ॥
उद्यतायुधनिस्त्रिंशे रथे च समलङ्कृते ।
कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥ २ ॥
महाप्रमाणमुद्यम्य विपुलं वेगवद्दृढं ।
धनुर्भीमबलो भीमं शरांश्चाशीविषोपमान् ॥ ३ ॥
सर्वान् प्रेक्ष्य महाबाहू रावणस्यात्मजो बली ।
उवाच परमक्रुद्धः सौमित्रिं सविभीषणं ॥ ४ ॥
तांश्च वानरमुख्यांश्च वीक्षध्वं मे पराक्रमं ।
अद्य मे कार्मुकोत्सृष्टं शरवर्षं सुदुःसहं ॥ ५ ॥
मुक्तं वर्षमिवाकाशे धारयिष्यथ संयुगे ।
सृजतः शरजालानि क्षिप्रहस्तस्य संयुगे ॥ ६ ॥
जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः ।
अद्य वो मामका वाणा महाकार्मुकनिःसृताः ॥ ७ ॥
गात्राणि विधमिष्यन्ति तृणराशिमिवानलः ।
तीक्ष्णसायकनिर्भिन्नान् भिन्दिपालासिपट्टिशैः ॥ ८ ॥
अद्य वो गमयिष्यामि सर्वानेव यमक्षयं ।
तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं लक्ष्मणस्तदा ॥ ९ ॥

अभीतवदसंक्रुद्धो रावणिं वाक्यमब्रवीत् ।
न वाचा दुर्गमः पारः कार्याणां राक्षसाधम ॥१०॥
कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ।
स त्वमर्थस्य हीनार्थो दुराचारस्य कस्यचित् ॥११॥
वाचं व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मतिः ।
अन्तर्धानगतेनावां यत् त्वया छलितौ रणे ॥१२॥
तस्कराचरितो मार्गो नैव शूरनिषेवितः ।
यदि वाणपथं प्राप्य युध्यसे राक्षसाधम ॥१३॥
द्रक्ष्यामः समरे वीर्यं वाचा किं त्वं विकत्थसे ।
अब्रुवाणस्तु परुषं किंचिदप्यनधिक्षिपन् ॥१४॥
अविकत्थ्य हनिष्यामि पश्य मे पौरुषान्तरं ।
अब्रुवाणो दहत्यग्निस्तथा तपति भास्करः ॥१५॥
वायुश्चोन्मथते वृक्षान् न च किंचिद्विकत्थते ।
एवमुक्तो धनुर्भीमं परामृश्य महाबलः ॥१६॥
ससर्ज निशितान् वाणानिन्द्रजित् समितिंजयः ।
तेनोत्सृष्टा बलवता शराः सर्पविषोपमाः ॥१७॥
संप्राप्य लक्ष्मणं पेतुः श्वसन्त इव पन्नगाः ।
शरैरेतैर्महावेगैर्वेगवान् राक्षसोत्तमः ॥१८॥
सौमित्रिमिन्द्रजित् क्रुद्धो विव्याध शुभलक्षणं ।
शरौघेन स विद्धाङ्गो रुधिरेण समुक्षितः ॥१९॥

शुशुभे लक्ष्मणः श्रीमान् विधूम इव पावकः ।
इन्द्रजिच्चात्मनः कर्म प्रसमीक्ष्याभिगर्ज्य च ॥ २० ॥
विनद्य सुमहानादमिदं वचनमब्रवीत् ।
अद्य मे कार्मुकोत्सृष्टाः शरास्तीक्ष्णाः सुपत्रिणः ॥ २१ ॥
आदास्यन्ते शरीरात् ते जीवितं जीवितच्छिदः ।
अद्य गोमायुसंघाश्च श्येनसंघाश्च लक्ष्मण ॥ २२ ॥
गृध्राश्चापि पतन्तु त्वां गतासुं निहतं मया ।
क्षत्रबन्धुः स चानार्यो रामः परमदुर्मतिः ॥ २३ ॥
भक्तं भ्रातरमद्य त्वां द्रक्ष्यतीह मया हतं ।
विस्रस्तकवचो भूमौ व्यपविद्धशरासनः ॥ २४ ॥
कृत्तोत्तमाङ्गो व्यथितः स्वप्स्यसि त्वं मया हतः ।
इति ब्रुवाणं परुषमम‍र्षाद्रावणात्मजं ॥ २५ ॥
हेतुमद्वाक्यमन्वर्थं लक्ष्मणः प्रत्युवाच ह ।
अकृत्वा कत्थसे तावत् किमर्थमिह राक्षस ॥ २६ ॥
कुरु तत् कर्म येनाहं श्रद्दध्यां तव कत्थितं ।
अनुक्त्वा परुषं वाक्यं किञ्चिदप्यनधिक्षिपन् ॥ २७ ॥
अविकत्थ्य हनिष्यामि त्वामद्य राक्षसाधम ।
इत्युक्त्वा पञ्चपर्वाणमाकर्णपूरितं शरं ॥ २८ ॥
निचखान महावेगो लक्ष्मणो रावणात्मजे ।
स शरेणाहतस्तेन सरोषो रावणात्मजः ॥ २९ ॥

सुप्रमुक्तैस्त्रिभिर्बाणैः प्रतिविव्याध लक्ष्मणं ।
स बभूव महाभीमो नरराक्षससिंहयोः ॥ ३० ॥
विमर्दस्तुमुलो युद्धे परस्परबधैषिणोः ।
उभौ हि बलसंपन्नावुभौ विक्रमशालिनौ ॥ ३१ ॥
उभौ परमदुर्धर्षावुभौ परमतेजसौ ।
युयुधाते महावीरौ व्याघ्रकेशरिणाविव ॥ ३२ ॥
शितानवसृजन्तौ हि मार्गणौघानवस्थितौ ।
नरराक्षससिंहौ तौ संप्रहृष्टावयुध्यतां ॥ ३३ ॥

इत्यार्षे रामायणे युद्धकाण्डे आक्षेपयुद्धं नाम
सप्तषष्टितमः सर्गः ॥

## LXVIII.

ततः शरं दाशरथिः संधायामित्रकर्षणः ।
ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ॥ १ ॥
तस्य ज्यातलनिर्घोषमसकृन् रावणात्मजः ।
विवर्णवदनो भूत्वा समुदैक्षत लक्ष्मणं ॥ २ ॥
तं विषण्णमुखं दृष्ट्वा राक्षसं रावणानुजः ।
सौमित्रिं क्रोधसंयुक्तमित्युवाच विभीषणः ॥ ३ ॥
इङ्गितान्यनुपश्यामि यान्यस्मिन् रावणात्मजे ।
युध्यस्व नरशार्दूल भग्न एष निशाचरः ॥ ४ ॥
ततः संधाय सौमित्रिः शरानाशीविषोपमान् ।
मुमोच निशितांस्तस्मै सर्पानिव महाविषान् ॥ ५ ॥
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः ।
मुहूर्त्तमभवन्मूढः शक्रजित् क्षुभितेन्द्रियः ॥ ६ ॥
उपलभ्य मुहूर्त्तेन संज्ञां प्रत्यागतेन्द्रियः ।
ददर्शावस्थितं वीरमाजौ दशरथात्मजं ॥ ७ ॥
सोऽभिचक्राम सौमित्रिं क्रोधसंरक्तलोचनः ।
अब्रवीच्चैनमासाद्य पुनः स परुषं वचः ॥ ८ ॥
किं न स्मरसि दुर्बुद्धे प्रथमे मत्पराक्रमं ।
निरस्तस्त्वं सह भ्रात्रा यथा पांशुष्वचेष्टथाः ॥ ९ ॥

युवां खलु तदा युद्धे शक्राशनिसमैः शरैः ।
शायितौ स्थो मया भूमौ विसंज्ञौ सपुरःसरौ ॥ १० ॥
स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनं ।
गन्तुमिच्छसि येन त्वं मां योधयितुमिच्छसि ॥ ११ ॥
यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः ।
अद्य त्वां दर्शयिष्यामि तिष्ठेदानीं ममाग्रतः ॥ १२ ॥
इत्युक्त्वा सप्तभिर्बाणैररिं विव्याध लक्ष्मणं ।
दशभिश्च हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ १३ ॥
ततः शरशतेनैव क्षिप्रहस्तो निशाचरः ।
क्रोधाद्द्विगुणरक्ताक्षो निर्बिभेद विभीषणं ॥ १४ ॥
तद्दृष्ट्वेन्द्रजिता कर्म कृतं रामानुजस्तदा ।
अचिन्तयित्वा व्यहसन्नैतत् किञ्चिदिति ब्रुवन् ॥ १५ ॥
अब्रवीच्च शरान् घोरानुद्धृत्य रघुपुङ्गवः ।
अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि ॥ १६ ॥
नैवं रणगताः शूराः प्रहरन्ति निशाचर ।
लघवश्चाल्पवीर्याश्च शरा हीमे यथा तव ॥ १७ ॥
एवं शूराश्च युध्यन्ते रणे विजयकाङ्क्षिणः ।
एवमुक्त्वा ततो वीरः शरैर्भृशमताडयत् ॥ १८ ॥
तस्य तद्बाणविध्वस्तं कवचं काञ्चनं महत् ।
व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरे ॥ १९ ॥

विधूतवर्मा नाराचैः स बभूव कृतव्रणः ।
इन्द्रजित् समरे वीरः प्रफुल्ल इव किंशुकः ॥२०॥
अभीक्ष्णं निःश्वसन्तौ तौ प्रायुध्येतां महाबलौ ।
शरैः संवृतसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥२१॥
बभूव रूपं सृजतोर्मार्गणान् भीमकर्मणोः ।
प्रविष्टयोर्यथा काले नीलयोःकालमेघयोः ॥२२॥
अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ परस्परं ।
सुदीर्घकालं तौ वीरौ युध्यमानौ विचेरतुः ॥२३॥
बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ ।
तौ शरौघैस्तदाकीर्णौ निकृत्तकवचध्वजौ ॥२४॥
प्रसुस्रुवाते रुधिरं जलं प्रस्रवणाविव ।
शरानुच्चावचाकारानन्तरीक्षे निजघ्नतुः ॥२५॥
व्यपेतदोषमन्योन्यं लघु चित्रं च सुष्ठु च ।
दर्शयन्तौ बलं भीमं संग्रामे नरराक्षसौ ॥२६॥
तयोःपृथक् पृथग्भीमः शुश्रुवे तलनिःस्वनः ।
प्रकम्पजननो भीमो निर्घात इव दारुणः ॥२७॥
बभ्राजे स तयोः शब्दस्तदा समरमत्तयोः ।
सुघोरयोर्निष्टनतोर्गगने मेघयोरिव ॥२८॥
तयोस्तु मुक्ता गात्रेषु रुक्मपुङ्खाः शरा युधि ।
असृग्दिग्धा विनिष्पत्य विविशुर्धरणीतलं ॥२९॥

अन्योन्यं मिश्रितैः शस्त्रैराकाशं संजघट्टिरे ।
बभञ्जुश्चिच्छिदुश्चैव तयोर्बाणाः सहस्रशः ॥३०॥
तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः ।
पुष्पिताविव निष्पत्रौ यथा शाल्मलिकिंशुकौ ॥३१॥
तयोर्गात्रेषु संलग्ना भान्ति नाराचपङ्क्तयः ।
नक्षत्रपङ्क्त्यो व्योम्नि विमले वै यथोदिताः ॥३२॥
उभौ हि परमेष्वासावुभौ शस्त्रविशारदौ ।
विचक्रतुस्तौ तुमुलं संनिपातं मुहुर्मुहुः ॥३३॥
लक्ष्मणो रावणिं क्रुद्धो रावणिश्चापि लक्ष्मणं ।
अन्योन्यं तावभिघ्नन्तौ न श्रमं समुपेयतुः ॥३४॥
बाणजालैः शरीरस्थैरवगाढैस्तरस्विनौ ।
शुशुभाते महावीर्यौ प्ररूढाविव पर्वतौ ॥३५॥
तयोः शोणितसिक्तानि संवृतानि शरैर्भृशं ।
विरेजुः सर्वगात्राणि ज्वलिता इव पावकाः ॥३६॥
तयोरेव महान् कालो व्यतीतो युध्यतो रणे ।
न च तौ युद्धवैमुख्यं श्रमं वाप्युपजग्मतुः ॥३७॥

इत्यार्षे रामायणे युद्धकाण्डे संयुक्तयुद्धं नाम
अष्टषष्टितमः सर्गः ॥

## LXIX.

युध्यमानौ तु तौ दृष्ट्वा प्रसक्तौ नरराक्षसौ ।
प्रभिन्नाविव मातङ्गौ परस्परबधैषिणौ ॥ १ ॥
तौ द्रष्टुकामः संग्रामे वरचापधरो बली ।
शूरः स रावणभ्राता तस्थौ संग्राममूर्द्धनि ॥ २ ॥
ततो विस्फारयामास महद्धनुरवस्थितः ।
उत्ससर्ज च तीक्ष्णाग्रान् शरान् वर्हिणवाससः ॥ ३ ॥
ते शराः शिखिसंस्पर्शा निपतन्तः समाहिताः ।
राक्षसान् दारयामासुर्वृक्षानशनयो यथा ॥ ४ ॥
विभीषणस्यानुचरास्तेऽपि शूलासिपट्टिशैः ।
चिच्छिदुः समरे वीरा राक्षसान् राक्षसोत्तमाः ॥ ५ ॥
राक्षसैस्तैः परिवृतः स तदा तु विभीषणः ।
बभौ मध्येषु यूथानां करभाणामिव द्विपः ॥ ६ ॥
संचोदयन् सवृक्षान् स वानरान् रणगर्वितान् ।
उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७ ॥
एकोऽयं राक्षसेन्द्रस्य परायणमवस्थितः ।
एतच्छेषं बलं तस्य तिष्ठधं च वनौकसः ॥ ८ ॥
अस्मिन् विनिहते पापे राक्षसे रणमूर्द्धनि ।
रावणो वै निहन्तव्यः स हि तस्य बलं महत् ॥ ९ ॥

प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः ।
कुम्भकर्णो मकराक्षो धूम्राक्षश्चैव राक्षसः ॥ १० ॥
जम्बुमाली महापार्श्वस्तीक्ष्णवेगोऽशनिप्रभः ।
सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११ ॥
संह्रादी विकटश्चैव तपनः काल एत च ।
प्रघसः प्रहसश्चैव प्रजङ्घो जङ्घ एव च ॥ १२ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् ।
विद्युज्जिह्वो द्विजिह्वश्च सूर्यचक्षुश्च राक्षसः ॥ १३ ॥
अकम्पनः सुपार्श्वश्च चक्रमौलिश्च राक्षसः ।
तथा परौ सत्त्ववन्तौ देवान्तकनरान्तकौ ॥ १४ ॥
अतिकायो महावीर्यस्त्रिशिराश्चातिकोपनः ।
एतान् निहत्य संग्रामे बहून् राक्षसपुङ्गवान् ॥ १५ ॥
बाहुभ्यां सागरं तीर्त्वा लङ्घितुं गोष्पदं लघु ।
एतावदेव शेषं वो जेतव्यमिति वानराः ॥ १६ ॥
अयुक्तं निधने कामं पुत्रस्य यतितुं मया ।
न तु मे रामतुष्ट्यर्थमकार्यं भुवि विद्यते ॥ १७ ॥
बधोपायो बधश्चैव तुल्यदोषमिदं द्वयं ।
तत् पापमुपतिष्ठेयं रामसिद्धिं प्रयोजयन् ॥ १८ ॥
घृणामपास्य रामार्थे हनिष्ये भ्रातुरात्मजं ।
प्रहर्तुकामस्य तु मे वैक्लव्यं जायते महत् ॥ १९ ॥

तदेनं वै महाबाहुर्लक्ष्मणः शमयिष्यति ।
वानरा घ्नन्तु संभूय भृत्यानस्य समीपगान् ॥ २० ॥
इति तेनातियशसा राक्षसेनाभिचोदिताः ।
वानरेन्द्रा जहृषिरे समारोपितविक्रमाः ॥ २१ ॥
ततस्ते कपिशार्दूलाः प्रेक्ष्य युद्धे विभीषणं ।
भूयो जहृषिरे कामं लाङ्गूलानि विचिक्षिपुः ॥ २२ ॥
जाम्बवानपि तैर्ऋक्षैः स्वयूथैरभिसंवृतः ।
अश्मभिस्ताडयामास नखैर्दन्तैश्च राक्षसान् ॥ २३ ॥
निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः ।
परिवव्रुर्भयं त्यक्त्वा तमनेकविधायुधाः ॥ २४ ॥
घोरैः परशुभिस्तीक्ष्णैर्भिन्दिपालैश्च राक्षसाः ।
जाम्बवन्तं रणे जघ्नुर्निघ्नन्तं राक्षसीं चमूं ॥ २५ ॥
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसां ।
देवासुराणां क्रुद्धानां यथा भीमः पुराभवत् ॥ २६ ॥
हनूमांश्चैव संक्रुद्धः सालमुत्पाट्य पर्वतात् ।
रक्षसां कदनं चक्रे संग्रामे लोमहर्षणं ॥ २७ ॥
विभीषणाश्च संक्रुद्धो धनुष्पाणिर्महाबलः ।
सामात्यस्तत्र संग्रामे जघ्ने रक्षोगणांस्तथा ॥ २८ ॥
दत्वाथ तुमुलं युद्धं पितृव्यस्येन्द्रजित् तदा ।
लक्ष्मणं परवीरघ्नं पुनरेवाभ्यधावत ॥ २९ ॥

तौ प्रसक्तौ पुनर्वीरौ मृधे राक्षसलक्ष्मणौ ।
शरौघानभिवर्षन्तौ जघ्नतुश्च परस्परं ॥ ३० ॥
अभीक्ष्णमन्तर्दधतुः शरजालैर्महाबलौ ।
चन्द्रादित्याविवोष्णान्ते महामेघैः समावृतौ ॥ ३१ ॥
न ह्यादाने न संधाने धनुषोर्न परिग्रहे ।
न विमोक्षे च बाणानां न विकर्षे न संग्रहे ॥ ३२ ॥
न मुष्टिप्रतिसंधाने न लक्ष्यप्रतिपादने ।
अदृश्यत तयोः शैघ्र्याद्युध्यतोर्हस्तलाघवं ॥ ३३ ॥
चापवेगप्रमुक्तैस्तु बाणजालैः समन्ततः ।
अन्तरीक्षे प्रतिच्छन्ने न रूपाणि चकाशिरे ॥ ३४ ॥
तमसा संवृतं सर्वमासीद्भीमतरं नभः ।
न तदा प्रववौ वायुर्न च जज्वाल पावकः ॥ ३५ ॥
स्वस्त्यस्तु लक्ष्मणायेति जजल्पुः परमर्षयः ।
संपेतुश्चापि संतुष्टा गन्धर्वाः सह चारणैः ॥ ३६ ॥
लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणं ।
अव्यवस्थाभवच्चोग्रा ताभ्यामन्योन्यविग्रहे ॥ ३७ ॥
अथ राक्षससिंहस्य कृष्णान् काञ्चनभूषणान् ।
शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् ॥ ३८ ॥
ततः प्रसन्नं सौमित्रिर्नाराचमभिलक्षितं ।
शत्रुप्रमथनं वीरः क्रुद्धः सर्पमिवाददे ॥ ३९ ॥

स तेन बाणाशनिना लब्धलक्ष्यानुनादिना ।
धनुर्मेघप्रयुक्तेन यन्तुर्जीवितमाददे ॥४०॥
स यन्तरि महातेजा निहते रावणात्मजः ।
प्रजहौ समरोत्कर्षं विषण्णश्च बभूव ह ॥४१॥
विषण्णवदनं दृष्ट्वा रावणिं हरियूथपाः ।
हर्षं परममापन्नास्तत्स्यन्दनमधर्षयन् ॥४२॥
ततः प्रमाथी क्रथनः शरभो गन्धमादनः ।
अमृष्यमाणाश्चत्वारश्चक्रुर्वेगमनुत्तमं ॥४३॥
ते तस्य हयमुख्येषु तूर्णमुत्पत्य वानराः ।
चतुर्षु सुमहावीर्या निपेतुः सहिता बलात् ॥४४॥
तेषामधिष्ठितानां तु वानरैः पर्वतोपमैः ।
मुखेभ्यो रुधिरं तीव्रं हयानां संप्रवर्तत ॥४५॥
ते निहत्य हयांस्तस्य निर्मथ्येशां रथस्य च ।
पुनराप्लुत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः ॥४६॥
स हताश्वादवप्लुत्य रथात् पतितसारथेः ।
शरवर्षेण सौमित्रिमभ्यवर्षत रावणिः ॥४७॥

ततो महेन्द्रप्रतिमः स लक्ष्मणः
पदातिनं तं युधि सूदिताश्वं ।
सृजन्तमाजौ निशितान् शरोत्तमान्
भृशं तदा बाणशतैर्न्यवारयत् ॥४८॥

## LXX.

स हताश्वो हतरथो भूमौ तिष्ठन् निशाचरः ।
इन्द्रजित् परमक्रुद्धः प्रजज्वाल च तेजसा ॥ १ ॥
तौ धन्विनौ जिघांसन्तावन्योन्यमभितः स्थितौ ।
शुशुभाते मदोन्मत्तौ वने गजवृषाविव ॥ २ ॥
विगर्हयन्तावन्योन्यं तौ राक्षसवनौकसां ।
भर्तारौ जघ्नतुर्युद्धे संपतन्तौ ततस्ततः ॥ ३ ॥
स क्रोधाच्च पितृव्यस्य क्रुद्धश्चापि हतैर्हयैः ।
प्रतिगृह्यार्दयच्चापं शरैर्लक्ष्मणमिन्द्रजित् ॥ ४ ॥
मुक्तमिन्द्रजिता तत् तु शरजालमरिन्दमः ।
अवारयदसंभ्रान्तो महत् परमदुःसहं ॥ ५ ॥
लक्ष्मणेन्द्रजितौ वीरौ महाबलपराक्रमौ ।
अन्योन्यं निशितैर्बाणैर्जघ्नतुर्भीमविक्रमौ ॥ ६ ॥
परस्परबधे वीरौ निविष्टौ तौ महाबलौ ।
चक्रतुर्घोरमन्योन्यं शरजालाकुलं रणं ॥ ७ ॥
ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित् ।
अभेद्यकवचं भित्त्वा विव्याध लघुहस्तवत् ॥ ८ ॥
अर्दितश्चैव बाणैश्च तदामित्रेण लक्ष्मणः ।
उद्ववाह शरान् घोरान् रावणस्य सुतं प्रति ॥ ९ ॥

तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः ।
विक्रम्येन्द्रजितं क्रुद्धे वदने रुक्मकुण्डले ॥१०॥
ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ ।
समरे रेजतुर्वीरौ पुष्पिताविव किंशुकौ ॥११॥
तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ ।
घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये ॥१२॥
ततः परमकोपेन संक्रुद्धो रावणात्मजः ।
विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे ॥१३॥
चठकामुखैस्तीक्ष्णाग्रैर्विद्ध्वा रक्षो विभीषणं ।
एकैकेनाभिविव्याध तान् सर्वान् हरियूथपान् ॥१४॥
तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः ।
वज्रसंस्पर्शसमांस्त्रीन् विससर्ज शितान् शरान् ॥१५॥
ते तस्य कायं निर्भिद्य रुक्मपुङ्खा अजिह्मगाः ।
निष्पेतुर्लोहितादिग्धा रक्ता इव महोरगाः ॥१६॥
स पितृव्यस्य संक्रुद्धः पावकास्त्रं तु संदधे ।
रौद्रं विभीषणश्चापि व्यसृजत् समनन्तरं ॥१७॥
तौ समेत्य शरौ घोरौ वियत्यादित्यसंनिभौ ।
परस्परं समाहत्य महोल्के इव पेततुः ॥१८॥
अस्त्रं विदारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः ।
दिव्यं शक्राशनिप्रख्यं ज्वलन्तमिव पावकं ॥१९॥

उत्तमं राक्षसश्रेष्ठो यमदण्डं महारणे ।
उद्ववाह महातेजाः परकायविदारणं ॥ २० ॥
तं समीक्ष्य महावाणं राक्षसेन्द्रेण मन्त्रितं ।
आददे लक्ष्मणो वाणमन्यं भीमतरं भुवि ॥ २१ ॥
कुवेरेण स्वयं स्वप्ने यद्दत्तममितात्मना ।
दुर्जयं दुःसहं चैव सेन्द्रैरपि सुरासुरैः ॥ २२ ॥
उभाभ्यां धनुषी श्रेष्ठे पीडिते सशरे तदा ।
विकृष्यमाणे सहसा क्रौञ्चा इव विनेदतुः ॥ २३ ॥
तौ भासयन्तावन्योन्यं धनुर्ज्याविच्युतौ शरौ ।
मुखेन मुखमाहत्य संनिपेततुरोजसा ॥ २४ ॥
सुमहाग्रहसंकाशावन्योन्यमभिहत्य च ।
निपेततुर्महेषू तावन्योन्यं शतधाकृतौ ॥ २५ ॥
शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्द्धनि ।
व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितावुभौ ॥ २६ ॥
सौमित्रिरथ संक्रुद्धः संदधेऽस्त्रं सुदारुणं ।
असुरास्त्रमसौ युद्धे रावणिर्व्यसृजत् तदा ॥ २७ ॥
तयोः सुतुमुले तत्र संग्रामे लोमहर्षणे ।
गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ २८ ॥
भैरवाभिरुते युद्धे भीमे वानररक्षसां ।
भूतैर्बहुभिराकाशं विस्मितैश्चावृतं बभौ ॥ २९ ॥

ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ३० ॥
अथान्यं मार्गणं श्रेष्ठं संदधे राघवानुजः ।
हुताशनसमस्पर्शं सुपर्वाणं सुसंस्थितं ॥ ३१ ॥
दुराधर्षं दुर्विषहं शरीरान्तकरं भृशं ।
आशीविषसमस्पर्शं दिव्यं संपन्नमर्चिषा ॥ ३२ ॥
येन शक्रः प्रयुक्तोऽभूद्दानवान्तकरः प्रभुः ।
पुरा देवासुरे युद्धे वीर्यवान् हरिवाहनः ॥ ३३ ॥
तमिन्द्रदत्तं सौमित्रिः संयुगेष्वपराजितं ।
शरश्रेष्ठं धनुःश्रेष्ठे नरश्रेष्ठोऽभिसंदधे ॥ ३४ ॥
संधायामित्रदमनं विचकर्ष शरासनं ।
संजिहीर्षुर्दुराधर्षं कालो लोकक्षये यथा ॥ ३५ ॥
संधाय च धनुःश्रेष्ठे विकर्षन्निदमब्रवीत् ।
लक्ष्मीवाँल्लक्ष्मणो वाक्यमर्थसाधकमात्मनः ॥ ३६
धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यथा ।
पौरुषे चाप्रतिद्वन्द्वस्तथेमं जहि राक्षसं ॥ ३७ ॥
पितृभक्तो देववरो वीरव्यूहरणे रतः ।
भक्तानुकम्पी भूतानां तथेमं जहि राक्षसं ॥ ३८ ॥
इत्युक्त्वा वाणमाकर्णाद्विकृष्य तमजिह्मगं ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥ ३९ ॥

स शिरः सशिरस्त्राणं भीमं ज्वलितकुण्डलं ।
प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ॥ ४० ॥
तद्रावणतनूजस्य छिन्नं स्कन्धात् शिरो महत् ।
तपनीयनिभं भूमौ ददृशे रुधिरोक्षितं ॥ ४१ ॥
ततस्तु निपपाताशु धरण्यां रावणात्मजः ।
व्यपविद्धशिरस्त्राणः सशरः सशरासनः ॥ ४२ ॥
चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः ।
प्रहर्षान्निहते तस्मिन् देवा वृत्रबधे यथा ॥ ४३ ॥
अथान्तरीक्षे भूतानामृषीणां च महात्मनां ।
संजज्ञे तलसंपातो गन्धर्वाप्सरसामपि ॥ ४४ ॥
निहतं तमथ ज्ञात्वा राक्षसानां महाचमूः ।
बध्यमाना दिशो भेजे वानरैर्जितकाशिभिः ॥ ४५ ॥
ते बध्यमानाः कपिभिः शस्त्राण्युत्सृज्य राक्षसाः ।
लङ्कामभिमुखाः सस्रुर्नदन्तो नष्टचेतसः ॥ ४६ ॥
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः ।
समुद्रे पतिताः केचित् केचिच्छैलान् समाश्रिताः ॥ ४७ ॥
हतमिन्द्रजितं दृष्ट्वा शयानं समरक्षितौ ।
राक्षसानां सहस्रेषु न कश्चिद्व्यवतिष्ठत ॥ ४८ ॥
यथास्तं गत आदित्ये न तिष्ठन्तीह रश्मयः ।
तथा तस्मिन् निपतिते जग्मुस्ते राक्षसा दिशः ॥ ४९ ॥

शान्तरश्मिरिवादित्यो निर्वाण इव पावकः ।
बभूव स महाबाहुः समरे गतजीवितः ॥५०॥
प्रशान्तः परुषो वायुर्नष्टानिष्टः प्रहृष्टवान् ।
बभूव लोकः पतिते राक्षसेन्द्रसुते तदा ॥५१॥
जहर्ष शक्रो भगवान् सह सर्वैः सुरर्षभैः ।
तदा विनिहते तस्मिन् राक्षसे पापकर्मणि ॥५२॥
शुद्धाश्चापो नभश्चैव जहृषुर्दैवदानवाः ।
जग्मुश्च पतिते तस्मिन् सर्वलोकभयावहे ॥५३॥
ऊचुश्च सहिता हृष्टा देवगन्धर्वदानवाः ।
विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥५४॥
ततोऽभ्यनन्दन् संहृष्टाः समरे हरियूथपाः ।
तमप्रतिबलं दृष्ट्वा हतं राक्षसपुङ्गवं ॥५५॥
विभीषणो हनूमांश्च जाम्बवानृक्षयूथपः ।
विजयेनाभ्यनन्दन्त तुष्टुवुश्चैव लक्ष्मणं ॥५६॥
खेलन्तश्च नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
लब्धलक्षं रघुसुतं परिवार्योपतस्थिरे ॥५७॥
लाङ्गूलानि प्रधुन्वन्तः स्फोटयन्तश्च वानराः ।
लक्ष्मणो जयतीत्येवं वाचो व्यश्रावयंस्तदा ॥५८॥
अन्योन्यं च समाश्लिष्य कपयो हृष्टमानसाः ।
चक्रुरुच्चावचगुणा राघवानुजगाः कथाः ॥५९॥

# युद्धकाण्डं

## LXXI.

रुधिरक्लिन्नगात्रस्तु राघवस्यानुजो बली ।
बभूव विक्षततनुः समरे तेन रक्षसा ॥ १ ॥
लक्ष्मणो जाम्बवन्तं च हनूमन्तं च वीर्यवान् ।
संनिवर्त्य महातेजाः सह सर्वैः प्लवङ्गमैः ॥ २ ॥
आजगाम प्रहृष्टात्मा यत्र सुग्रीवराघवौ ।
विभीषणमवष्टभ्य हनूमन्तं च वानरं ॥ ३ ॥
ततः स राममासाद्य सौमित्रिरभिवाद्य च ।
तस्थावदूरतो भ्रातुरिन्द्रस्येव वृहस्पतिः ॥ ४ ॥
पप्रच्छ भ्रातरं रामः किं वृत्तमिति लक्ष्मणं ।
अनिष्टमिव चागम्य राघवाय महात्मने ॥ ५ ॥
नाचचक्षे तदा वीरः स्वयमिन्द्रजितो बधं ।
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ॥ ६ ॥
इत्येवं कथयामास तदा हृष्टो विभीषणः ।
श्रुत्वैवैतन्महावीर्यो वीरेणेन्द्रजितं हतं ॥ ७ ॥
प्रहर्षमतुलं लेभे वाक्यमेतदुवाच ह ।
साधु लक्ष्मण तुष्टोऽस्मि कर्म ते सुकृतं कृतं ॥ ८ ॥
रावणोऽस्य विनाशेन हत इत्यवधारय ।
पीडितं शायकैर्दृष्ट्वा दुःखितो राघवस्तदा ॥ ९ ॥
दुःखहर्षयुतस्तत्र संमूर्च्छित इवाभवत् ।

स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनं ॥१०॥
लज्जमानं बलात् स्नेहादङ्कमध्ये न्यवेशयत् ।
उपवेश्य तमुत्सङ्गे परिष्वज्य च राघवः ॥११॥
भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत ।
मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य चातुरं ॥१२॥
उवाच लक्ष्मणं वाचं राघवः पुरुषर्षभः ।
कृतं परमकल्याणं कर्मेदं दुष्करं त्वया ॥१३॥
अद्य मन्ये हतं पापं रावणं राक्षसाधिपं ।
अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि ॥१४॥
रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे ।
छिन्नोऽस्य दक्षिणो बाहुः स हि तस्य व्यपाश्रयः ॥१५॥
हतमित्रः कृतो ह्यद्य स निर्यास्यति रावणः ।
बलव्यूहेन महता पुत्रं श्रुत्वा निपातितं ॥१६॥
तं पुत्रबधसंतप्तं निर्यान्तं राक्षसाधिपं ।
बलेनाहं समासाद्य हनिष्यामि रिपुं रणे ॥१७॥
त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे ।
न दुष्प्राप्या हतो यस्माच्छक्रजित् सुमहाबलः ॥१८॥
स तं भ्रातरमाश्वास्य परिष्वज्य च पीडितं ।
रामः सुषेणं पार्श्वस्थं संभाष्येदमथाब्रवीत् ॥१९॥
सशल्योऽयं महाप्राज्ञ सौमित्रिर्मित्रनन्दनः ।

यथा भवति वै सुस्थस्तथा त्वं कर्तुमर्हसि ॥ २० ॥
विशल्यः क्रियतां क्षिप्रं सौमित्रिः सविभीषणः ।
ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनां ॥ २१ ॥
ये चान्ये व्रणितास्तत्र संग्रामे वानरर्षभाः ।
तेऽपि सर्वे प्रयत्नेन क्रियन्तां सुखिनस्तथा ॥ २२ ॥
एवमुक्तस्तु रामेण सुषेणो वानराधिपः ।
विशल्यकरणीं नाम तदा हैमवतीं शुभां ॥ २३ ॥
लक्ष्मणाय ददौ नस्यं सुषेणः परमौषधीं ।
स तस्या गन्धमाघ्राय विशल्यः समपद्यत ॥ २४ ॥
तदा निर्वेदनश्चैव संरूढव्रण एव च ।
विभिषणमुखानां च सुहृदां राघवाज्ञया ॥ २५ ॥
ऋक्षवानरमुख्यानां चिकित्सामकरोत् तदा ।
ततः प्रकृतिमापन्नो हृतशल्यो गतक्लमः ॥ २६ ॥
गतज्वरः क्षणे तस्मिन् सौमित्रिर्मित्रनन्दनः ।
ते च शाखामृगाः सर्वे लक्ष्मणे विगतज्वरे ॥ २७ ॥
बभूवुर्मुदितास्तत्र प्राप्यामृतमिवामराः ।
उत्साहं द्विगुणं प्राप्तास्तथा वीर्यपराक्रमाः ॥ २८ ॥

इत्यार्षे रामायणे युद्धकाण्डे इन्द्रजिद्व्यथावमर्दनं नवषष्टितमः सर्गः — इन्द्रजिद्वधः सप्ततितमः सर्गः — जयाख्यापनं एकसप्ततितमः सर्गः ।

## LXXII.

ते प्रविश्य पुरीं लङ्कां हतशेषा निशाचराः ।
निकृत्तकवचा दीनाः प्रहारजनितश्रमाः ॥ १ ॥
तेऽपि सर्वे विमनसो गत्वा तं रावणिं तदा ।
लक्ष्मणेन हतं संख्ये रावणायाचचक्षिरे ॥ २ ॥
युद्धे हतो महाराज लक्ष्मणेन सुतस्तव ।
विभीषणसहायेन मिषतां सर्वरक्षसां ॥ ३ ॥
शूरः संगम्य शूरेण संयुगेष्वपराङ्मुखः ।
लक्ष्मणेन हतः शूर पुत्रस्ते विबुधेन्द्रजित् ॥ ४ ॥
गतः स परमान् लोकान् शरैः संतर्प्य लक्ष्मणं ।
स तं बधं भीमतरं श्रुत्वा पुत्रस्य रावणः ॥ ५ ॥
घोरमिन्द्रजितः संख्ये कश्मलं समुपागमत् ।
स पुत्रबधसंतप्तः क्रूरः क्रोधवशं गतः ॥ ६ ॥
जहौ संज्ञां महाबाहुर्मुमोह च मुमूर्च्छ च ।
उपलभ्य चिरात् संज्ञां राजा राक्षसपुङ्गवः ॥ ७ ॥
पुत्रशोकार्दितो दीनो विललापाकुलेन्द्रियः ।
हा राक्षसचमूमुख्य मम वत्स महाबल ॥ ८ ॥
इन्द्रजित् कथमद्य त्वं लक्ष्मणस्य वशं गतः ।
ननु त्वमिषुभिः क्रुद्धो भिन्द्याः कालान्तकोपमैः ॥ ९ ॥

मन्दरस्यापि शिखरं किं पुनर्लक्ष्मणं युधि ।
अद्य वैवस्वतो देवो भूयो बहुमतो मम ॥ १० ॥
येन त्वं योजितस्तात महता कालकर्मणा ।
एष पन्थाः सुयोधानां सर्वामरगणेष्वपि ॥ ११ ॥
यः कृते हन्यते भर्तुः स पुमान् स्वर्गमृच्छति ।
अद्य देवगणाः सर्वे लोकपालाः सहर्षिभिः ॥ १२ ॥
निहतं त्वां रणे दृष्ट्वा सुखं स्वप्स्यन्ति निर्भयाः ।
अद्य लोकास्त्रयः कृत्स्नाः पृथिवी च सकानना ॥ १३ ॥
एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ।
अद्य नैर्ऋतकन्याना श्रोष्याम्यन्तःपुरे रवं ॥ १४ ॥
करेणुसघस्य यथा नदतो गिरिगह्वरे ।
यौवराज्यं च लङ्कां च राक्षसैश्वर्यमेव च ॥ १५ ॥
मातरं मां च भार्यां च क्व गतोऽसि विहाय नः ।
मम नाम त्वया वीर गतस्य यमसादनं ॥ १६ ॥
प्रेतकार्याणि कार्याणि विपरीतं हि वर्तते ।
स त्वं जीवति सुग्रीवे लक्ष्मणे च सराघवे ॥ १७ ॥
मम शल्यमनुद्धृत्य कस्मात् त्यक्ष्यसि जीवितं ।
एवं स विलपन्नेव साश्रुनेत्रो मुमोह वै ॥ १८ ॥
तं मोहगतमासीनं रावणं राक्षसाधिपं ।
आविवेश महान् कोपः पुत्रव्यसनसंभवः ॥ १९ ॥

घोरं प्रकृत्या रूपं तु तस्य क्रोधाग्निरुत्थितः।
चकार रूपं क्रुद्धस्य रुद्रस्येव दुरासदं ॥२०॥
तस्य प्रकृत्या ते नेत्रे रक्ते क्रोधाग्निना पुनः।
रावणस्य महाघोरे रक्ते नेत्रे बभूवतुः ॥२१॥
तस्य क्रुद्धस्य नेत्रेभ्यः प्रापतन्नश्रुविन्दवः।
दीप्तेभ्य इव दीपेभ्यः सार्चिषस्तैलविन्दवः ॥२२॥
कोपाद्विजृम्भमाणस्य वक्राद्व्यक्तमभिज्वलन्।
निष्पपात सधूमोऽग्निर्वृत्रस्य वदनादिव ॥२३॥
दन्तान् संदशतस्तस्य शुश्रुवे दन्तनिस्वनः।
यन्त्रस्य चेष्टमानस्य महतो दानवैरिव ॥२४॥
स काल इव संक्रुद्धो यां यां दिशमवैक्षत।
तस्यां तस्यां भयत्रस्ता राक्षसाः संनिलिल्यिरे ॥२५॥
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः।
अब्रवीन्नैर्ऋतान् सर्वान् संस्तम्भयितुमाहवे ॥२६॥
मया वर्षसहस्राणि चरितं दुश्चरं तपः।
तेषु तेष्ववकाशेषु स्वयम्भूश्च प्रसादितः ॥२७॥
तस्यैव तपसो व्युष्ट्या प्रसादाच्च स्वयम्भुवः।
नासुरेभ्यो न देवेभ्यो भयं मम कदाचन ॥२८॥
कवचं ब्रह्मदत्तं मे यत् तदम्बुदसंनिभं।
देवासुरविमर्देषु न च्छिन्नं वज्रमुष्टिना ॥२९॥

तेन मामद्य संनद्धं रथस्थमिह संयुगे ।
कः प्रतीयाद्धि मामद्य साक्षादपि पुरंदरः ॥ ३० ॥
यत् तदातिप्रसादाच्च सशरं कार्मुकं महत् ।
देवासुरविमर्देषु मम दत्तं स्वयम्भुवा ॥ ३१ ॥
अद्य तूर्यशतैर्भीमं धनुः प्रस्थाप्यतां महत् ।
रामलक्ष्मणयोरेव बधाय परमाहवे ॥ ३२ ॥
स पुत्रबधसंतप्तः शूरः शोकवशं गतः ।
समीक्ष्य रावणो बुद्ध्या सीतां हन्तुमवस्थितः ॥ ३३ ॥
प्रत्यवेक्ष्य च ताम्राक्षः सुघोरं घोरदर्शनः ।
दीनाद्दीनमनाः सर्वांस्तानुवाच निशाचरान् ॥ ३४ ॥
मायया मम वत्सेन वञ्चनार्थं वनौकसां ।
प्रतिमां सदृशीं कृत्वा सीतेयमिति दर्शिता ॥ ३५ ॥
तदिदं सत्यमेवाहं करिष्ये प्रियमात्मनः ।
वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रतां ॥ ३६ ॥
इत्येवमुक्त्वा सचिवान् खड्गं राक्षसपुङ्गवः ।
उद्धृत्य गुणसंपन्नं विमलाम्बरदर्शनं ॥ ३७ ॥
निष्पपाताशु वेगेन सभायाः सचिवैः सह ।
रावणः पुत्रशोकेन भृशमाकुलमानसः ॥ ३८ ॥
संक्रुद्धं खड्गहस्तं तं व्रजन्तं यत्र मैथिली ।
सहसा राक्षसं प्रेक्ष्य सिंहनादमथानदन् ॥ ३९ ॥

ऊचुश्चान्योन्यमालिङ्ग्य तं क्रुद्धं प्रेक्ष्य राक्षसाः ।
अद्य तौ राघवौ राजा संयुगे प्रमथिष्यति ॥ ४० ॥
लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः ।
बहवः शत्रवश्चान्ये संयुगेषु निपातिताः ॥ ४१ ॥
तेषां संजल्पतामेवमशोकवनिकागतां ।
अभिदुद्राव वैदेहीं रावणः क्रोधमूर्च्छितः ॥ ४२ ॥
वार्यमाणोऽपि बहुभिः सुहृद्भिः साधुबुद्धिभिः ।
अभ्यधावत संक्रुद्धः खे ग्रहो रोहिणीमिव ॥ ४३ ॥
कम्पयन् वसुधां क्रोधात् पादन्यासैर्द्रुतं व्रजन् ।
पुत्रशोकसमाक्रान्तः स्त्रीबधे कृतनिश्चयः ॥ ४४ ॥
मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता ।
ददर्श रावणं क्रुद्धं निस्त्रिंशवरधारिणं ॥ ४५ ॥
त निशम्य सनिस्त्रिंशं दुःखिता जनकात्मजा ।
निवार्यमाणं सचिवैर्मनसैवमचिन्तयत् ॥ ४६ ॥
यथायमतिसंक्रुद्धः समभिद्रवति स्वयं ।
हन्तुमिच्छति दुष्टात्मा सनाथां मामनाथवत् ॥ ४७ ॥
बहुशोऽचोदयन्मां हि भर्तारं समनुव्रतां ।
भव त्वं मम भार्येति निरस्तश्च ततो मया ॥ ४८ ॥
सोऽयं ममानुपस्थानाद्व्यक्तं नैराश्यमागतः ।
कामक्रोधसमाविष्टो हन्तुं मामुपसर्पति ॥ ४९ ॥

अथवा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ ।
मन्निमित्तमनार्येण समरे विनिपातितौ ॥५०॥
इदानीमिव लङ्कायां रक्षसां तुमुलः स्वनः ।
बहूनामिव हृष्टानां मया विक्रोशतां श्रुतः ॥५१॥
अथवेन्द्रजितं श्रुत्वा लक्ष्मणेन हतं रणे ।
पीडितः पुत्रशोकेन मां हन्तुमुपसर्पति ॥५२॥
अहो धिङ्मन्निमित्तोऽयं विनाशो राजपुत्रयोः ।
हनूमतो हि तद्वाक्यं न कृतं क्षुद्रया मया ॥५३॥
यद्यहं तस्य पृष्ठेन तदा यायां निमन्त्रिता ।
नाद्याहमनुशोचेयं भर्तुरङ्कगता सती ॥५४॥
मन्ये हि हृदयं तस्याः श्वश्र्वा मे प्रस्फुटिष्यति ।
एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥५५॥
सा हि जन्म च बाल्यं च यौवनं च महात्मनः ।
धर्मकर्माणि रूपं च रुदती चिन्तयिष्यति ॥५६॥
निराशा निहतं पुत्रं श्रुत्वा श्वश्रूरचेतना ।
अग्निमारोक्ष्यते नूनं प्रायं वोपगमिष्यति ॥५७॥
धिगस्तु कुब्जामसतीं मन्थरां पापदर्शनां ।
यन्निमित्तमिदं दुःखं कौशल्या प्रतिपत्स्यते ॥५८॥
इत्येवं मैथिली तत्र विलपन्ती तपस्विनी ।
रोहिणी इव चन्द्रेण विना ग्रहवशं गता ॥५९॥

एतस्मिन्नन्तरे तत्र अमात्यो बुद्धिमान् शुचिः ।
अविन्ध्यो ज्ञानसंपन्नो रावणं राक्षसेश्वरं ॥ ६० ॥
निवार्यमाणं सचिवैरिदं वचनमब्रवीत् ।
कथं नाम दशग्रीव साक्षाद्विश्रवसः सुतः ॥ ६१ ॥
हन्तुमर्हसि वैदेहीं क्रोधाद्धर्ममनुस्मरन् ।
वेदविद्याव्रतस्नातस्त्वं धर्मनिरतः सदा ॥ ६२ ॥
स्त्रियाः कस्माद्वधं घोरं कर्तुमिच्छसि रावण ।
इष्टयज्ञस्य भवतः कुले जातस्य चोत्तमे ॥ ६३ ॥
स्त्रीबधो नानुरूपो वै विशेषेण मनस्विनः ।
वैदेहीं रूपसंपन्नां प्रत्यवेक्ष्य सुदर्शनां ॥ ६४ ॥
तस्मिन्नेव रणे दीप्तं राघवे क्रोधमुत्सृज ।
अभ्युत्थानं च युद्धार्थे कृष्णपक्षचतुर्दशीं ॥ ६५ ॥
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ।
निःसंशयं शरी धन्वी रणे स्यन्दनमास्थितः ॥ ६६ ॥
हत्वा दाशरथिं रामं पुनः प्राप्स्यसि मैथिलीं ।
एवमुक्ता तु तद्रक्षो बलात् संगृह्य वीर्यवान् ॥ ६७ ॥
अपाकर्षत वैदेह्याः सकाशाद्राक्षसेश्वरं ।
समवेक्ष्य च वैदेह्या रूपं सर्वगुणान्वितं ॥ ६८ ॥
ननाशैकपदे रोषो रावणस्य दुरात्मनः ।
गृहं गत्वाथ स पुनः सभां प्राप सुहृद्वृतः ॥ ६९ ॥

# युद्धकाण्डं

## LXXIII.

स प्रविश्य सभां राजा दीनः परमदुर्मतिः ।
विषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १ ॥
अब्रवीच्च तदा सर्वान् बलमुख्यानुपस्थितान् ।
रावणः प्राञ्जलिर्वाक्यमिन्द्रजिद्वधकर्षितः ॥ २ ॥
सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः ।
निर्यान्तु रथसंघैश्च पादातैश्चोपशोभिताः ॥ ३ ॥
सर्वतः सर्वयत्नेन रणकर्मणि पण्डिताः ।
वाणवर्षाणि मुञ्चन्तु प्रवृद्धा इव तोयदाः ॥ ४ ॥
पश्चादहं शरैस्तीक्ष्णैर्भिन्दन् शत्रुं महारणे ।
पत्रिभिर्मथयिष्यामि रामं लोकस्य पश्यतः ॥ ५ ॥
इत्येतद्वाक्यमाज्ञाय राक्षसेन्द्रस्य राक्षसाः ।
निर्ययुस्ते रथैः शीघ्रं नानानीकैश्च संहताः ॥ ६ ॥
शूराः शूलगदाहस्तास्तोमरासिपरश्वधैः ।
निर्ययू राक्षसव्याघ्राः सिंहा इव मदोत्कटाः ॥ ७ ॥
स संग्रामोऽभवद्भीमः सूर्यस्योदयनं प्रति ।
रक्षसां वानराणां च तुमुलो लोमहर्षणः ॥ ८ ॥
ते गदाभिर्विचित्राभिः प्रासखड्गपरश्वधैः ।
वानरान् समरे जघ्नुर्विनदन्तो महाबलाः ॥ ९ ॥

वानरा राक्षसान् वृक्षैर्मुष्टिभिर्दशनैस्तथा ।
गिरिशृङ्गैः शिलाभिश्च प्रापयन् यमसादनं ॥ १० ॥
हतानां युधि वीराणां तत्र वानररक्षसां ।
संख्या न शक्यते कर्तुं बहुत्वाच्च ततस्तदा ॥ ११ ॥
मातङ्गरथकूर्माश्च शरमत्स्या ध्वजद्रुमाः ।
शरीरसंघातवहाः सुस्रुवुः शोणितापगाः ॥ १२ ॥
ध्वजचर्मरथानश्वान् नानाप्रहरणानि च ।
आप्लुत्याप्लुत्य वेगेन वानरेन्द्रा बभञ्जिरे ॥ १३ ॥
केशान् कर्णांस्तथाक्षीणि नासिकां च प्लवङ्गमाः ।
रक्षसां दशनैस्तीक्ष्णैर्नखैश्च विचकर्तिरे ॥ १४ ॥
एकैकं राक्षसं संख्ये शतं वानरपुङ्गवाः ।
अभ्यधावन्त बलिनो वृक्षं शकुनयो यथा ॥ १५ ॥
ते गदाभिश्च गुर्वीभिः पट्टिशैः परिघैरपि ।
निजघ्नुर्वानरान् संख्ये राक्षसाः पर्वतोपमाः ॥ १६ ॥
ततो रामो महातेजा धनुरादाय वीर्यवान् ।
प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष सः ॥ १७ ॥
प्रविष्टं राक्षसं सैन्यं घनैः सूर्यमिवावृतं ।
नाभिजग्मुस्तदा रामं निर्दहन्तं शरार्चिषा ॥ १८ ॥
कृतान्येव सुघोराणि रामेण रजनीचराः ।
रणे चित्राणि ददृशुः कर्माण्यसुकराणि ते ॥ १९ ॥

चाल्मन्तमनीकानि विधमन्तं महारथान् ।
न ते ददृशिरे रामं वायुं व्योमगतं यथा ॥२०॥
छिन्नं भिन्नं विपर्यस्तं प्रभग्नं शरपीडितं ।
बलं रामेण ददृशुर्न रामं संप्रहारिणं ॥२१॥
प्रहरन्तं शरीरेषु न पश्यन्ति स्म राघवं ।
इन्द्रियेषु प्रवर्तन्तं भूतात्मानमिव प्रजाः ॥२२॥
एष हन्ति गजानीकमेष हन्ति महारथान् ।
एष हन्ति शरैस्तीक्ष्णैः पदातीन् वाजिभिः सह ॥२३॥
एष रामो महातेजा युध्यतामेव रक्षसां ।
प्रजां व्यपाहरत् तत्र मोहनास्त्रबलेन च ॥२४॥
ते मूढाश्च विसंज्ञाश्च रामभूतमिदं जगत् ।
ददृशू राक्षसास्तत्र ततो जघ्नुः परस्परं ॥२५॥
अन्योन्यं कुपिता जघ्नुः शक्तिशूलपरश्वधैः ।
राक्षसाः समरे शूराः सदृशा राघवस्य च ॥२६॥
न पश्यन्ति स्म ते रामं निघ्नन्तं युधि वाहिनीं ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥२७॥
ततो रामसहस्राणि रणेऽपश्यन् निशाचराः ।
पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥२८॥
भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः ।
अलातचक्रप्रतिमां ददृशुस्ते निशाचराः ॥२९॥

सूर्यमण्डलसंभूतं रश्मिजालमिवाम्बरे ।
शरजालं ददृशिरे राघवस्य धनुश्च्युतं ॥ ३० ॥
शररश्मिसहस्राढ्यं मध्याह्नादित्यसंनिभं ।
चरन्तं दिक्षु सर्वासु न शेकुस्तमुदीक्षितुं ॥ ३१ ॥
शरार्चिषं दिव्यनाभिं सुतारं दिव्यकार्मुकं ।
ज्याघोषतलनिर्घोषं तेजोविद्युद्गुणप्रभं ॥ ३२ ॥
दिव्यास्त्रगुणसंपन्नं निघ्नन्तं युधि राक्षसान् ।
रामचक्रं प्रवर्तन्तं कालचक्रमिवापरं ॥ ३३ ॥
अनीकं दशसाहस्रं रथानां वातरंहसां ।
अष्टादश सहस्राणि सारोहाणां च वाजिनां ॥ ३४ ॥
पूर्णे शतसहस्रे द्वे पदातीनां च रक्षसां ।
दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः ॥ ३५ ॥
हतान्येकेन रामेण रक्षसां कामरूपिणां ।
ते हताश्वा हतरथाः श्रान्ता विगलितध्वजाः ॥ ३६ ॥
अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ।
हतैरश्वैः पदातैश्च तद्बभूव रणाजिरं ॥ ३७ ॥
आक्रीड इव रुद्रस्य क्रुद्धस्य निघ्नतः पशून् ।
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ ३८ ॥
साधु साध्विति रामस्य तत्कर्म समपूजयन् ।
अब्रवीच्च तदा रामः सुग्रीवं तदनन्तरं ॥ ३९ ॥

एतदस्त्रबलं सौम्य मम वा त्र्यम्बकस्य वा ।
तृतीयस्य कपिश्रेष्ठ लोके नान्यस्य कस्यचित् ॥४०॥

इत्यार्षे रामायणे युद्धकाण्डे सीताबधनिवारणं नाम
द्विसप्ततितमः सर्गः—गान्धर्वास्त्रयुद्धं
नाम त्रिसप्ततितमः सर्गः ॥

## LXXIV.

तानि नागसहस्राणि सारोहाणां च वाजिनां ।
रथानां चाग्निवर्णानां सध्वजानां वरूथिनां ॥ १ ॥
राक्षसानां सहस्राणि गदापरिघयोधिनां ।
काञ्चनध्वजवर्माणां शूराणां कामरूपिणां ॥ २ ॥
निहतानि शरैस्तीक्ष्णैस्तप्तकाञ्चनभूषणैः ।
रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३ ॥
द्विजिह्वो निहतो वीरः संह्रादी च निशाचरः ।
विमर्दनः कुम्भहनुः खरकेतुश्च राक्षसः ॥ ४ ॥
विडालाक्षो हयग्रीवः शङ्कुकर्णः प्रतर्दनः ।
हस्तिकर्णो महावीरो दशैते नायका हताः ॥ ५ ॥
दृष्ट्वा श्रुत्वा च संभ्रान्ता हतशेषा निशाचराः ।
राक्षस्यश्च समागम्य दीनाश्चिन्तापरायणाः ॥ ६ ॥
विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः ।
राक्षसैः सह दुःखार्त्ताः संगताः पर्यदेवयन् ॥ ७ ॥
कथं शूर्पणखा वृद्धा कराला निर्णतोदरी ।
आससाद वने रामं कन्दर्पशरपीडिता ॥ ८ ॥
सुकुमारं महासत्त्वं सर्वभूतहिते रतं ।
तं दृष्ट्वा लोकपालाभं कथं राममकामयत् ॥ ९ ॥

कथं सर्वगुणैर्हीना गुणवन्तं महौजसं ।
सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥१०॥
जनस्यास्याल्पभाग्यत्वान्मलिना श्वेतमूर्द्धजा ।
अकार्यमवहास्यं च सर्वलोकविगर्हितं ॥११॥
राक्षसानां विनाशाय दूषणस्य खरस्य च ।
चकाराप्रतिरूपा सा राघवस्य प्रधर्षणं ॥१२॥
तन्निमित्तमिदं वैरं रावणस्य क्षयावहं ।
बधाय च हृता सीता रावणेन दुरात्मना ॥१३॥
न च सीता दशग्रीवं मनसापि हि कामयत् ।
बद्धं बलवता वैरमक्षयं रावणेन तु ॥१४॥
वैदेहीं प्रार्थयन्तं तु विराधं वीक्ष्य सूदितं ।
हतं क्रुद्धेन रामेण पर्याप्तं तन्निदर्शनं ॥१५॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणां ।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥१६॥
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।
शरैराशीविषाकारैः पर्याप्तं तन्निदर्शनं ॥१७॥
हतो योजनबाहुश्च कबन्धो रुधिराशनः ।
क्रौञ्चारण्ये राघवेण पर्याप्तं तन्निदर्शनं ॥१८॥
बालिनं बलिनं हत्वा सहस्राक्षात्मजं भुवि ।
राजानं हरिमुख्यानां महावीर्यं महौजसं ॥१९॥

ऋष्यमूके वसन् शैले दीनो भग्नमनोरथः ।
सुग्रीवः प्रापितो राज्यं पर्याप्तं तन्निदर्शनं ॥ २० ॥
धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितं ।
युक्तं विभीषणेनोक्तं नास्य मोहादरोचयत् ॥ २१ ॥
विभीषणवचः कुर्याद्यद्येष धनदानुजः ।
श्मशानभूता दुःखार्त्ता नेयं लङ्का पुरी भवेत् ॥ २२ ॥
कुम्भकर्ण हतं श्रुत्वा राघवेण महात्मना ।
प्रियं चेन्द्रजितं पुत्रं शोचतेऽद्य न रावणः ॥ २३ ॥
ततः संरक्तनयनाः संतताश्रुनिपातनात् ।
अभूतपूर्वव्यसना राक्षस्यः पर्यदेवयन् ॥ २४ ॥
मम पुत्रो मम भ्राता मम भर्ता हतो रणे ।
इत्येवं श्रूयते शब्दो राक्षसानां गृहे गृहे ॥ २५ ॥
रथाः साश्वाश्च नागाश्च हताः शतसहस्रशः ।
रणे रामेण शूरेण राक्षसाश्च पदातयः ॥ २६ ॥
रुद्रो वा यदिवा विष्णुर्महेन्द्रो वा शतक्रतुः ।
हन्ति नो रामरूपेण कालो वा सुदुरासदः ॥ २७ ॥
हतप्रवीरा बहवो निराशा जीविते वयं ।
व्यसनान्तमपश्यन्तो ह्यनाथा विलपामहे ॥ २८ ॥
ब्रह्मणो हि दशग्रीवः शूरो लब्धवरो महान् ।
इदं महद्भयं घोरं समुत्पन्नं न बुध्यते ॥ २९ ॥

तं न देवा न गन्धर्वा नासुरा न च राक्षसाः ।
उपसृष्टं परित्रातुं शक्ता रामेण रावणं ॥३०॥
निमित्तानि हि दृश्यन्ते राक्षसानां रणे रणे ।
फलिष्यन्ति ध्रुवं तानि रावणस्य निवर्हणात् ॥३१॥
देवदानवयक्षेभ्यो ददौ ब्रह्माभियाचितः ।
रावणस्याभयं युद्धे मानुषेभ्यो न याचितः ॥३२॥
तदिदं मानुषादद्य भयं घोरमुपस्थितं ।
जीवितान्तकरं युद्धे रक्षसां रावणस्य च ॥३३॥
पीड्यमानास्तु बलिना वरदत्तेन रक्षसा ।
दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ॥३४॥
देवतानां हितार्थं तु महातेजा महाबलः ।
उवाच वचनं ब्रह्मा तत्र लोकपितामहः ॥३५॥
शृण्वन्तु देवताः सर्वा मयोक्तं सुमहद्वचः ।
अद्यप्रभृति लोकेषु ये भूता भयवर्जिताः ॥३६॥
भयार्त्तास्ते पुनरिह विचरिष्यन्ति राक्षसाः ।
अथ देवैः समागम्य सर्वैः शक्रपुरोगमैः ॥३७॥
वृषकेतुस्त्रिपुरहा महादेवः प्रसादितः ।
प्रसन्नस्तु महातेजा रुद्रो देवानुवाच ह ॥३८॥
उत्पत्स्यत्यभयार्थं वो नारी रक्षःक्षयावहा ।
सैषा देवप्रसृष्टा तु क्षुधिता जनकात्मजा ॥३९॥

भन्नयिष्यति नः सीता रावणं राक्षसैः सह ।
रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः ॥ ४० ॥
अयं निष्ठानको घोरः शोको नः समुपागतः ।
तं न पश्यामहे लोके यो नः शरणदो भवेत् ।
राघवेणोपसृष्टानां कालेनेव युगक्षये ॥ ४१ ॥

इतीव सर्वा रजनीचरस्त्रियः
परस्परं संपरिरभ्य बाहुभिः ।
भृशं विनेदुर्भयशोककर्षिता
जजल्पुरुच्चैश्च वचः सुदारुणं ॥ ४२ ॥

इत्यार्षे रामायणे युद्धकाण्डे स्त्रीविलापो नाम
चतुःसप्ततितमः सर्गः ॥

# युद्धकाण्डं

## LXXV.

आर्त्तानां राक्षसीनां च रक्षसां च गृहे गृहे ।
रावणः करुणं सर्वं शुश्राव परिदेवितं ॥ १ ॥
स्वबलं क्षयितं दृष्ट्वा समग्रं ससुहृद्गणं ।
सुतांश्च तान् विनिहतान् शक्रतुल्यपराक्रमान् ॥ २ ॥
दीर्घमुष्णं च निःश्वस्य मुहूर्त्तं ध्यानमास्थितः ।
बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ ३ ॥
संदश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः ।
राक्षसैरपि दुष्प्रेक्ष्यः कालाग्निरिव मूर्च्छितः ॥ ४ ॥
उवाच च समीपस्थान् राक्षसान् राक्षसेश्वरः ।
भयासक्तानिदं तत्र निर्दहन्निव चक्षुषा ॥ ५ ॥
मत्तोन्मत्तौ महावीर्यौ विरूपाक्षं च राक्षसं ।
शीघ्रं वदत रक्षांसि निर्यातेति ममाज्ञया ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः ।
देशयामासुरव्यग्रा राक्षसांस्तान् नृपाज्ञया ॥ ७ ॥
ते तु सर्वे तथेत्युक्त्वा राक्षसा घोरदर्शनाः ।
कृतस्वस्त्ययनाः सर्वे रावणाभिमुखा ययुः ॥ ८ ॥
प्रतिपूज्य यथान्यायं रावणं ते महारथाः ।
तस्थुः प्राञ्जलयः सर्वे भर्तुर्विजयकाङ्क्षिणः ॥ ९ ॥

अथोवाच महातेजा रावणः क्रोधमूर्च्छितः ।
मत्तोन्मत्तौ महावीर्यौ विरूपाक्षं च राक्षसं ॥ १० ॥
शीघ्रमापूर्य वाद्यानि निर्गच्छन्तु ममाज्ञया ।
रामलक्ष्मणसुग्रीवान् हत्वा प्रतिनिवर्तथ ॥ ११ ॥
अद्य बाणैर्धनुर्मुक्तैर्युगान्ताग्निसमप्रभैः ।
राघवं लक्ष्मणं चैव नयिष्ये यमसादनं ॥ १२ ॥
खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा ।
करिष्यामि प्रतीकारमद्य शत्रुबधादहं ॥ १३ ॥
नैवान्तरीक्षं न दिशो न नद्यो न च सागरः ।
प्रकाशा हि भविष्यन्ति मम बाणव्रजैर्वृताः ॥ १४ ॥
अद्य वानरमुख्यानां तानि यूथानि भागशः ।
धनुःसमुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १५ ॥
व्याकोषपद्मवक्त्राणां पद्मकिञ्जल्कवर्चसां ।
अद्य व्यूहतडागानि विगाहिष्ये गजेन्द्रवत् ॥ १६ ॥
अद्य युद्धप्रचण्डानां हरीणां द्रुमयोधिनां ।
मुक्तेनैकेषुणा युद्धे निर्भेत्स्यामि शतं शतं ॥ १७ ॥
हतो भ्राता हतो भर्ता यासां च तनयो हतः ।
बधेनाद्य रिपोस्तासां करिष्येऽश्रुप्रमार्जनं ॥ १८ ॥
अद्य मद्बाणनिर्भिन्नैः प्रकीर्णैर्गतचेतनैः ।
करिष्ये वानरैर्युद्धे परिच्छन्नां महीमिमां ॥ १९ ॥

अद्य गोमायुगृध्राश्च ये च मांसाशिनोऽपरे ।
सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शरार्दितैः ॥ २० ॥
कल्प्यतां मे रथः शीघ्रं योधाः सन्नीभवन्तु मे ।
अनुयान्तु च मां युद्धे ये च शिष्टा निशाचराः ॥ २१ ॥
तस्य तद्वचनं श्रुत्वा विरूपाक्षोऽब्रवीद्वचः ।
बलाध्यक्षं स्थितं तत्र बलं संत्वर्यतामिति ॥ २२ ॥
त्वरितस्तु बलाध्यक्षो राक्षसांस्तान् गृहे गृहे ।
संचोदयन् परिययौ लङ्कां लघुपराक्रमः ॥ २३ ॥
ततो मुहूर्त्तान्निष्पेतू राक्षसा भीमविक्रमाः ।
नर्दन्तो विनदन्तश्च नानाप्रहरणायुधाः ॥ २४ ॥
असिभिः पट्टिशैः शूलैर्गदाभिर्मुषलैरपि ।
शक्तिभिः सायकैश्चैव बहुभिः कूटमुद्गरैः ॥ २५ ॥
भिन्दिपालैः शतघ्नीभिरन्यैरपि तथायुधैः ।
आनयच्च बलाध्यक्षो राक्षसान् रावणाज्ञया ॥ २६ ॥
द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथं ।
सुवर्णवेदिकायुक्तं रत्नैश्च समलंकृतं ॥ २७ ॥
युक्तं वैदूर्यनालैश्च पताकाभिश्च शोभितं ।
केतुना नरशीर्षेण काञ्चनेन विराजितं ॥ २८ ॥
आरुरोह रथं दीप्तं दीप्यमानः स्वतेजसा ।
रावणः सत्त्वगाम्भीर्यान्नमयन्निव मेदिनीं ॥ २९ ॥

रावणेनाभ्यनुज्ञातौ मत्तोन्मत्तौ निशाचरौ ।
विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ॥३०॥
ते तु हृष्टा विनर्दन्तो भिन्दन्त इव मेदिनीं ।
निर्ययुः सहिता वीराः सर्वे संत्यक्तजीविताः ॥३१॥
ततो युद्धाय तेजस्वी रक्षोगणसमावृतः ।
निर्ययावुद्यतधनुः कालान्तकयमोपमः ॥३२॥
अथ प्रजविताश्वेन रथेन स महारथः ।
द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥३३॥
ततो नष्टप्रभः सूर्यो दिशश्च तिमिरावृताः ।
घोरं विनेदुर्मेघाश्च संचचाल च मेदिनी ॥३४॥
ववर्ष रुधिरं देवः प्रास्खलंस्तुरगाः पथि ।
ध्वजेऽस्य न्यपतद्गृध्रो विनेदुश्चाशिवं शिवाः ॥३५॥
नयनं प्रास्फुरद्वामं सव्यो बाहुश्च कम्पितः ।
विवर्णवदनश्चासीत् किञ्चिच्चाभ्रश्यत स्वरः ॥३६॥
तस्य निष्पततो युद्धे दशग्रीवस्य रक्षसः ।
रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ॥३७॥
अन्तरीक्षात् पपातोल्का निर्घातघोरनिस्वना ।
विनेदुश्चक्रवाकाश्च वायसैरनुमिश्रिताः ॥३८॥
गृध्रचक्रं च बभ्राम तस्योपरि महात्मनः ।
अश्रूणि चास्य मुमुचुर्वाजिनो रथसंसदि ॥३९॥

# युद्धकाण्डं

एतानचिन्तयन्नेव उत्पातानतिदारुणान् ।
निर्ययौ रावणो मोहाद्वधार्थं कालचोदितः ॥ ४० ॥
तेषां तु रथशब्देन रक्षसां युद्धकाङ्क्षिणां ।
वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ॥ ४१ ॥
तेषां सुतुमुलः शब्दो बभूव कपिरक्षसां ।
अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छतां ॥ ४२ ॥
ततस्ते वानरा घोरा राक्षसांस्तान् रणाजिरे ।
जघ्नुः शैलैर्द्रुमैश्चैव रावणस्य प्रपश्यतः ॥ ४३ ॥
रावणस्तु ततः क्रुद्धस्तान् शशास निशाचरान् ।
हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥ ४४ ॥
ततस्ते राक्षसाः सर्वे नर्दन्तो जयकाङ्क्षिणः ।
अभ्यवर्षन्त तान् सर्वान् वानरान् शरवृष्टिभिः ॥ ४५ ॥
मुद्गरैः शक्तिभिः शूलैर्गदामुषलतोमरैः ।
परिघैरङ्कुशैर्बाणैर्वानरान् जघ्नुराहवे ॥ ४६ ॥
रावणश्चापि नाराचैर्वत्सदन्तैरजामुखैः ।
विकर्णिभिः क्षुराग्रैश्च वानरान् पर्यवर्षत ॥ ४७ ॥
ते बध्यमानाः समरे वानराः पादपायुधाः ।
अभ्यधावन्त सहिता रावणं घोरविक्रमं ॥ ४८ ॥
रावणस्तु ततः क्रुद्धो महाबलपराक्रमः ।
वानराणां शरीराणि व्यधमच्छरवृष्टिभिः ॥ ४९ ॥

शरैरेकैकेन स हरीन् नव पञ्च च सप्त च ।
बिभेद समरे वीरो राक्षसान् संप्रहर्षयन् ॥५०॥
स शरैरग्निसंकाशैः शातकुम्भविभूषितैः ।
वानरान् समरे वीरः प्रममाथ सुदुर्जयः ॥५१॥
ते भिन्नगात्राः समरे वानराः शरपीडिताः ।
पेतुर्मथितसर्वाङ्गाः सुरैरिव महासुराः ॥५२॥
संपतन् वै यथादित्यो घोरैर्बाणगभस्तिभिः ।
अभ्यधावत संक्रुद्धः संयुगे वानरर्षभान् ॥५३॥
ततस्तु वानराः सर्वे भिन्नदेहा विचेतसः ।
व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥५४॥
रामस्यार्थे पराक्रान्ता वानरास्त्यक्तजीविताः ।
नदन्तो विनिवृत्ताश्च समरे सशिलायुधाः ॥५५॥
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः ।
अभ्यद्रवन्त समरे रावणं पर्यवस्थितं ॥५६॥
द्रुमाणां तु शिलानां च वर्षं प्राणहरं महत् ।
व्यपोहत महातेजा रावणः पर्यवस्थितः ॥५७॥
ततः पावकसंकाशैर्बाणैराशीविषोपमैः ।
वानराणामनीकानि बिभेद समरे प्रभुः ॥५८॥
अष्टभिर्दशभिश्चैव स विद्ध्वा गन्धमादनं ।
विव्याध दशभिश्चैव नलं दूरादवस्थितं ॥५९॥

सप्तभिश्च महाकायं मैन्दं भित्त्वा सुदारुणैः ।
पञ्चभिश्चैव विव्याध गयं समरमूर्द्धनि ॥ ६० ॥
विंशत्या तु हनूमन्तं नीलं च दशभिः शरैः ।
गवाक्षं पञ्चविंशत्या शक्रजानुं च पञ्चभिः ॥ ६१ ॥
द्विविदं षड्भिराहत्य पनसं दशभिः शरैः ।
कुमुदं पञ्चदशभिर्जाम्बवन्तं च सप्तभिः ॥ ६२ ॥
अशीत्या बालिनः पुत्रमङ्गदं बिभिदे शरैः ।
शरभं च महातेजाः शरेणोरस्यताडयत् ॥ ६३ ॥
तारं चैव त्रिभिर्बाणैरष्टभिर्विनतं तथा ।
क्रथनं च त्रिभिर्बाणैर्ललाटे प्रत्यविध्यत ॥ ६४ ॥
स पुनः सूर्यसंकाशैरिषुभिर्मर्मभेदिभिः ।
वानराणामनीकानि विममर्द महाहवे ॥ ६५ ॥
विभिन्नशिरसः केचिन्निष्टनन्तो महीं गताः ।
निरुच्छ्वासा हताः केचित् केचित् पार्श्वे विदारिताः ॥ ६६ ॥
निर्बाहवः कृताः केचित् केचिच्चक्षुर्विवर्जिताः ।
भिन्नगात्राः शरैः केचिद्रावणेन बलीयसा ॥ ६७ ॥
आकुलां वानरीं सेनां शरजालेन मोहितां ।
रावणः परया प्रीत्या ददर्श क्षतजोक्षितां ॥ ६८ ॥

इत्यार्षे रामायणे युद्धकाण्डे रावणनिर्याणं नाम
पञ्चसप्ततितमः सर्गः ॥

## LXXVI.

तथा विक्षतगात्रैस्तु दशग्रीवेण संयुगे ।
वसुधा ववृते तत्र प्रकीर्णैर्हरिभिर्वृता ॥ १ ॥
ममन्थ च मह्काकायान् वानरान् राक्षसाधिपः ।
युगान्तवातः सह्सा प्रवृद्धः क्षितिजानिव ॥ २ ॥
रावणस्याप्रसह्यं तं शरसंपातमेव च ।
सोढुं न शेकुः कपयः पतङ्गा इव पावकं ॥ ३ ॥
तेऽर्दिता निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः ।
पावकार्चिः समाविष्टा यथा नागा मह्कावने ॥ ४ ॥
प्लवगानामनीकानि मह्काभ्राणीव मारुतः ।
स ययौ समरे तस्मिन् विधमन् रावणः शरैः ॥ ५ ॥
कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसां ।
आससादयिषू रामं त्वरमाणस्तदा ययौ ॥ ६ ॥
सुग्रीवस्तान् हरीन् दृष्ट्वा भग्नान् विद्रवतो रणे ।
गुल्मे सुषेणं निर्दिश्य युद्धे चक्रे ततो मनः ॥ ७ ॥
आत्मनः सदृशं वीरं स तं निक्षिप्य वानरं ।
सुग्रीवोऽभिमुखः शत्रुं प्रतस्थे पादपायुधः ॥ ८ ॥
पार्श्वतः पृष्ठतश्चास्य सर्वे यूथाधिपाभवन् ।
संप्रगृह्य मह्काशैलान् विविधांश्च मह्काद्रुमान् ॥ ९ ॥

सोऽनदद्युधि सुग्रीवः स्वरेण महता महान् ।
पातयन् विधमंश्चान्यान् जघानोत्तमराक्षसान् ॥१०॥
क्रोधसंरक्तनयनः प्रवृद्धः स्वेन तेजसा ।
प्रममाथ महाकायो राक्षसान् वानरेश्वरः ॥११॥
राक्षसानामनीकेषु शिलावर्षं ववर्ष सः ।
अश्मवर्षं यथा मेघः पक्षिसंघेषु कानने ॥१२॥
कपिराजप्रमुक्तैस्तैः शिलावर्षैश्च राक्षसाः ।
विभिन्नशिरसः पेतुः प्रकीर्णा इव पर्वताः ॥१३॥
अथ संक्षीयमाणेषु राक्षसेषु समन्ततः ।
सुग्रीवेण प्रभग्नेषु प्रपतत्सु नदत्सु च ॥१४॥
विरूपाक्षः स्वकं नाम धन्वी विश्राव्य राक्षसः ।
रथेनासाद्य सुग्रीवं ववर्ष शरवृष्टिभिः ॥१५॥
तस्य तानशनिप्रख्यान् शरान् दृढधनुश्च्युतान् ।
अचिन्तयित्वा सुग्रीवः समरेऽभिमुखो वसन् ॥१६॥
सोऽभिसृत्य महावेगो हरिरिन्द्रपराक्रमः ।
आक्रमत् स्यन्दनं तस्य धुरि पादेन पश्यतः ॥१७॥
वानरेन्द्रसमाक्रान्ताद्रथात् पेतुर्हता भुवि ।
विनिष्पतितनेत्रास्ते भग्नग्रीवास्तुरङ्गमाः ॥१८॥
आक्रम्य स रथं वीरो वृक्षदण्डेन वानरः ।
सारथिं निजघानाशु विरूपाक्षस्त्वपाक्रमत् ॥१९॥

अपक्रान्ते विद्रूपाक्षे सुग्रीवसचिवा रथं ।
बभञ्जुस्तरसा वीरा हरयो वातरंहसः ॥ २० ॥
विद्रूपाक्षो हतरथो धन्वी तूणी तनुत्रवान् ।
बहुभिस्ताडयामास नाराचैः प्लवगेश्वरं ॥ २१ ॥
रावणेन प्रयुक्तं तु विद्रूपाक्षो महागजं ।
शीघ्रमारुरुहे वीरो बहुशस्त्रोपकल्पितं ॥ २२ ॥
स तं द्विरदमाक्रम्य विद्रूपाक्षो महाबलः ।
व्यनदद्भीमनिर्ह्रादो वानरांश्चाभ्यधावत ॥ २३ ॥
सुग्रीवेऽथ शरान् घोरान् विससर्ज निशाचरः ।
छादयामास सर्वांस्तान् राक्षसान् संप्रहर्षयन् ॥ २४ ॥
सुग्रीवं तु विद्रूपाक्षः शरैराशीविषोपमैः ।
बहुशस्ताडयामास संग्रामेष्वरिमर्दनः ॥ २५ ॥
सोऽतिविद्धः शितैर्बाणैः कपीन्द्रस्तेन रक्षसा ।
चुक्रोध च महाक्रोधो बधे चास्य मनो दधे ॥ २६ ॥
ततो मुष्टिं समुद्यम्य वज्रनिष्पेषगौरवं ।
अभिपद्य जघानाशु प्रमुखे तं महागजं ॥ २७ ॥
मुष्टिप्रहाराभिहतो हरीन्द्रेण महागजः ।
अपसृत्य धनुर्मात्रं निपपात निनादयन् ॥ २८ ॥
गजात् प्रपततस्तूर्णमाप्लुत्य स महाबलः ।
अभेद्यं चर्म खड्गं च प्रागृह्णाद्रजनीचरः ॥ २९ ॥

तथैव च महाखड्गं चर्म चापतितं भुवि ।
जग्राह हरिशार्दूलः सुग्रीवो वानरर्षभः ॥ ३० ॥
ततस्तौ रोषसंतप्तौ नर्दन्तावभ्यधावतां ।
उद्यतासिधरौ वीरौ युद्धे युद्धविशारदौ ॥ ३१ ॥
दक्षिणं मण्डलं चोभौ त्वरया संपरीयतुः ।
अन्योन्यमभिसंरब्धौ परस्परजयैषिणौ ॥ ३२ ॥
जघ्नतुश्च तदान्योन्यं पेततुश्च महीतले ।
उत्पेततुस्तदा तूर्णं जघ्नतुश्च परस्परं ॥ ३३ ॥
ततः परमसंक्रुद्धः प्रगृह्य महतीं शिलां ।
विरूपाक्षाय चिक्षेप सुग्रीवो जलदोपमां ॥ ३४ ॥
तामापतन्तीं वेगेन दृष्ट्वा राक्षसपुङ्गवः ।
अपक्रम्याशु विक्रान्तः खड्गेन प्राहरत् तदा ॥ ३५ ॥
तेन मोक्षेण संक्रुद्धः सुग्रीवोऽथ चमूमुखे ।
कवचं पाटयामास तं चैवापातयद्भुवि ॥ ३६ ॥
स समुत्थाय पतितः कपेस्तस्य व्यसर्जयत् ।
तलप्रहारमशनेः सदृशं भीमनिस्वनं ॥ ३७ ॥
समवाप्य प्रहारं तं राक्षसात् स हरीश्वरः ।
तलेनैव महावेगो विरूपाक्षमुपाद्रवत् ॥ ३८ ॥
तलप्रहारं तं रक्षः सुग्रीवेण समुद्यतं ।
नैपुण्यान्मोक्षयित्वा तु मुष्टिनोरस्यताडयत् ॥ ३९ ॥

ततस्तु संक्रुद्धतरः सुग्रीवोऽभवदाहवे ।
शिक्षया मोक्षितं दृष्ट्वा प्रहारं तेन रक्षसा ॥४०॥
स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ।
ततोऽस्य पातयामास शङ्खदेशे महातलं ॥४१॥
महेन्द्राशनिकल्पेन तलेनाभिहतः क्षितौ ।
पपात रुधिरं वेगात् श्रोतोभिः स विनिर्वमन् ॥४२॥
विवृत्तनयनं मोहाद्वानरा रुधिरप्लुतं ।
ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतं ॥४३॥
स्फुरन्तं परिवर्तन्तं धरण्यां रुधिरोक्षितं ।
करुणं निष्टनन्तं च ददृशुः कपयो भृशं ॥४४॥

इत्यार्षे रामायणे युद्धकाण्डे विरूपाक्षबधो नाम
षट्सप्ततितमः सर्गः ॥

# युद्धकाण्डं

## LXXVII.

हन्यमाने बले तूर्णमन्योन्यं ते पृथक् पृथक् ।
सरसीव महाघर्मे क्षीणतोये बभूवतुः ॥ १ ॥
स्वबलस्य तु घातेन विरूपाक्षबधेन च ।
बभूव द्विगुणक्रोधो रावणो राक्षसेश्वरः ॥ २ ॥
क्षीयमाणं बलं दृष्ट्वा बध्यमानं च वानरैः ।
बभूवास्य व्यथा युद्धे प्रेक्ष्य दैवविपर्ययं ॥ ३ ॥
उवाच च समीपस्थं स तु मत्तमनन्तरं ।
अस्मिन् काले महाबाहो जयाशा मे त्वयि स्थिता ॥ ४ ॥
जहि शत्रुचमूं वीर दर्शयाद्य पराक्रमं ।
भर्तृपिण्डस्य कालोऽयं निर्णेतुं साधुबुद्धिभिः ॥ ५ ॥
स तु मत्तस्तथेत्युक्त्वा राक्षसेन्द्रं महाद्युतिं ।
प्रविवेश रिपोः सैन्यं मकरः सागरं यथा ॥ ६ ॥
ततः स सूदनं चक्रे वानराणां महाबलः ।
भर्तुर्वाक्येन तेजस्वी तेजसा च प्रचोदितः ॥ ७ ॥
प्रभग्नां समरे दृष्ट्वा वानराणां महाचमूं ।
अभिदुद्राव सुग्रीवस्तदा मत्तमनन्तरं ॥ ८ ॥
प्रगृह्य विपुलां घोरां महीधरसमां शिलां ।
चिक्षेप स महातेजास्तद्बधाय महाकपिः ॥ ९ ॥

तामापतन्तीं सहसा शिलां राक्षसपुङ्गवः ।
असंप्राप्तां शितैर्बाणैर्बिभेद स दुरासदां ॥१०॥
रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रशः ।
निपपात शिला भूमौ गृध्रसंघ इवाम्बरात् ॥११॥
तां तु दृष्ट्वा शिलां मोघां सुग्रीवः क्रोधमूर्च्छितः ।
सालमुत्पाट्य चिक्षेप स तं चिच्छेद नैकधा ॥१२॥
शरैश्च विददारैनं राक्षसः प्लवगाधिपं ।
स ददर्शाथ सुग्रीवः परिघं पतितं भुवि ॥१३॥
तं प्रगृह्य ततः शीघ्रं व्यधमत् तस्य मार्गणान् ।
जघान चोग्रवेगेन ततोऽस्य रथवाजिनः ॥१४॥
तस्माद्धतहयो वीरः समाप्लुत्य महारथात् ।
गदां जग्राह संक्रुद्धो राक्षसोऽथ महाबलः ॥१५॥
गदापरिघहस्तौ तौ युधि वीरौ समीयतुः ।
नदन्तौ गोवृषप्रख्यौ सवज्राविव तोयदौ ॥१६॥
ततः क्रुद्धो गदां तस्य चिक्षेप रजनीचरः ।
ज्वलन्तीं भास्कराभासां सुग्रीवस्य महारणे ॥१७॥
आजघान गदां तस्य परिघेन हरीश्वरः ।
अथास्य गदया भिन्नः परिघः पतितो भुवि ॥१८॥
ततो जग्राह दुर्धर्षः कपीन्द्रो वसुधातलात् ।
आयसं मुषलं घोरं सर्वतः स्वर्णभूषितं ॥१९॥

स तमुद्यम्य चिक्षेप राक्षसोऽप्यपरां गदां ।
भिन्ने अन्योन्यमासाद्य पेततुस्ते महीतले ॥ २० ॥
ततो भग्नप्रहरणौ मुष्टिभिस्तौ समीयतुः ।
तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥ २१ ॥
जघ्नतुस्तौ तदान्योन्यं नेदतुश्च पुनः पुनः ।
तलैरन्योन्यमाहत्य पेततुर्धरणीतले ॥ २२ ॥
उत्थाय च पुनस्तूर्णं जघ्नतुस्तौ परस्परं ।
भुजौ चिक्षिपतुर्वीरावन्योन्यबधकाङ्क्षया ॥ २३ ॥
जग्राहाथ ततः खड्गमदूरपरिवर्तिनं ।
राक्षसश्चर्मणा सार्द्धं महावेगो महाबलः ॥ २४ ॥
सोऽसिं च चर्मणा सार्द्धं जग्राह पतितं भुवि ।
तौ च रोषपरीताङ्गौ नदन्तावभ्यधावतां ॥ २५ ॥
उद्यतासिधरौ वीरौ युधि युद्धविशारदौ ।
दक्षिणं मण्डलमुभौ तौ तूर्णं संपरीयतुः ॥ २६ ॥
अन्योन्यमभिसंरब्धौ जयाय प्रहिताबुभौ ।
उभौ विक्रमसंपन्नौ परस्परजिघांसिनौ ॥ २७ ॥
स तु मत्तो महावेगो वीर्यश्लाघी महाबलः ।
महाचर्मणि तं खड्गं पातयामास दुर्मतिः ॥ २८ ॥
लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः ।
जहार स शिरस्तस्य मुकुटोपचितं शुभं ॥ २९ ॥

निकृत्तशिरसस्तस्य पतितस्य महीतले ।
तद्बलं राक्षसेन्द्रस्य प्रदुद्राव दिशो दश ॥३०॥
तं हत्वा वानरैः सार्द्धं ननाद मुदितो हरिः ।
चुक्रोध च दशग्रीवो रामो हृष्टो बभूव ह ॥३१॥

इत्यार्षे रामायणे युद्धकाण्डे मत्तबधो नाम
सप्तसप्ततितमः सर्गः ॥

# युद्धकाण्डं

## LXXVIII.

तस्मिन् विनिहते मत्ते उन्मत्तो रजनीचरः ।
अङ्गदस्य चमूं भीमां क्षोभयामास सायकैः ॥ १ ॥
स वानराणां मुख्यानामुत्तमाङ्गानि राक्षसः ।
पातयामास कोपेन फलानीव सदागतिः ॥ २ ॥
उवाच वचनं चापि राक्षसान् संप्रहर्षयन् ।
मयि जीवति शत्रुघ्ने नामी वानरपुङ्गवाः ॥ ३ ॥
प्रभग्ना वर्तयिष्यन्ति सैन्ये मम सुदुःसहे ।
केषाश्चित् स तु चिच्छेद बाहूंश्चैवाथ सायकैः ॥ ४ ॥
वानराणां सुसंक्रुद्धः पार्श्वं केषाश्चिदाक्षिपत् ।
तेऽर्दिता बाणवर्षेण उन्मत्तेन तु वानराः ॥ ५ ॥
विषण्णा विमुखाः सर्वे बभूवुर्गतचेतसः ।
निशाम्य बलमुद्विग्नमङ्गदो राक्षसार्दितं ॥ ६ ॥
वेगं चक्रे महावेगः समुद्र इव पर्वणि ।
गृहीत्वा चायसं वीरः सूर्यरश्मिसमप्रभं ॥ ७ ॥
परिघं वानरश्रेष्ठ उन्मत्ते स न्यपातयत् ।
स तु तेन प्रहारेण उन्मत्तो नष्टचेतनः ॥ ८ ॥
ससूतः स्यन्दनात् तस्माद्विसंज्ञो न्यपतद्भुवि ।
तस्यर्क्षराजस्तेजस्वी नीलाञ्जनचयोपमः ॥ ९ ॥

निपत्य सुमहावीर्यः स्वाद्यूथान्मेघसंनिभात् ।
प्रगृह्य गिरिशृङ्गाग्रां संक्रुद्धो विपुलां शिलां ॥ १० ॥
अश्वान् जघान तरसा स्यन्दनं च बभञ्ज तत् ।
मुहूर्त्ताल्लब्धसंज्ञस्तु उन्मत्तो राक्षसर्षभः ॥ ११ ॥
अङ्गदं पञ्चभिर्बाणैराजघान स्तनान्तरे ।
जाम्बवन्तं त्रिभिर्बाणैर्भुजयोः प्रत्यविध्यत ॥ १२ ॥
ऋक्षराजं गवाक्षं च विव्याध बहुभिः शरैः ।
गवाक्षं जाम्बवन्तं च स दृष्ट्वा शरपीडितौ ॥ १३ ॥
जग्राह परिघं घोरमङ्गदः क्रोधमूर्च्छितः ।
तस्याङ्गदः प्रकुपितो विससर्ज तमायसं ॥ १४ ॥
दूरस्थितस्य परिघं वज्रसंपातमुत्तमं ।
द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवान् ॥ १५ ॥
स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः ।
धनुश्च सशरं हृत्वा शिरस्त्राणमपातयत् ॥ १६ ॥
स तमासाद्य वेगेन बालिपुत्रः प्रतापवान् ।
तलेन च जघानाशु कर्णमूले सकुण्डले ॥ १७ ॥
ततः क्रुद्धः स उन्मत्तो महावेगो महोद्यमः ।
करेणैकेन जग्राह सुमहान्तं परश्वधं ॥ १८ ॥
तत् तैलधौतं विमलं गिरिसारमयं महत् ।
शस्त्रं परमसंक्रुद्धो बालिपुत्रे न्यपातयत् ॥ १९ ॥

स तमासाद्य वेगेन भृशं क्रोधान्निपातितः ।
अङ्गदं मोहयामास स मुहूर्त्तं परश्वधः ॥ २० ॥
स वीरो वज्रसकाशमङ्गदो मुष्टिमात्मनः ।
आवर्तयत संक्रुद्धः पितुस्तुल्यपराक्रमः ॥ २१ ॥
राक्षसस्य स्तनाभ्यासे मर्मज्ञो हृदयं प्रति ।
इन्द्राशनिसमस्पर्शं तस्य मुष्टिमपातयत् ॥ २२ ॥
तेन मुष्टिनिपातेन राक्षसस्य महामृधे ।
पफाल हृदयं भिन्नं स पपात हतो भुवि ॥ २३ ॥
तस्मिन् निपतिते भूमौ तत् सैन्यं संप्रचुक्षुभे ।
आविवेश महान् क्रोधः समरे चापि रावणं ॥ २४ ॥

इत्यार्षे रामायणे युद्धकाण्डे उन्मत्तवधो नाम
अष्टसप्ततितमः सर्गः ॥

## LXXIX.

मत्तोन्मत्तौ तु संप्रेक्ष्य निहतौ परमद्युती ।
विरूपाक्षं च दुर्धर्षं ससैन्यं रणमूर्धनि ॥ १ ॥
चुकोपाथ महातेजा ब्रह्मदत्तवरो विभुः ।
दशग्रीवो महावीर्यो देवदानवदर्पहा ॥ २ ॥
स भास्करसहस्रस्य तेजो बिभ्रन् महाद्युतिः ।
सूतं संचोदयामास वाक्यं चेदमुवाच ह ॥ ३ ॥
निहतानाममात्यानां रुद्धस्य नगरस्य च ।
अन्तमद्य गमिष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ४ ॥
कर्मणोऽस्य हि तौ मूलं भ्रातरौ रामलक्ष्मणौ ।
तयोः प्रशाखाः सुग्रीवो हरयोऽन्ये च यूथपाः ॥ ५ ॥
मूले हते हतं सर्वं तौ हनिष्यामि संयुगे ।
रावणस्य वचः श्रुत्वा सूतो हर्षसमन्वितः ॥ ६ ॥
संवाहयामास रथं कपीनां भयमादधन् ।
स दिशो रथघोषेण महतातिरथो भृशं ॥ ७ ॥
नादयन् प्रययौ तूर्णं राघवं प्रति रावणः ।
पूरिता तेन शब्देन सनदीगिरिकानना ॥ ८ ॥
विचचाल मही सर्वा त्रस्ताश्चैव मृगद्विजाः ।
स विस्फार्य महच्चापं किरीटी मृष्टकुण्डलः ॥ ९ ॥

नाम संश्रावयामास जगर्ज च ननाद च ।
तेन सिंहप्रणादेन नामसंकीर्तनेन च ॥१०॥
स्यन्दनस्य च नादेन पूरयामास रोदसी ।
त्रिविक्रमे यथा विष्णोः सर्वदैत्यबधे पुरा ॥११॥
ते राक्षसेन्द्रं दृष्ट्वा वै वानरास्त्रस्तचेतसः ।
शरण्यं शरणं जग्मुर्मनसा पुरुषोत्तमं ॥१२॥
चरन्तं रावणं दृष्ट्वा रथस्थं पर्वतोपमं ।
विधुन्वानं धनुर्घोरं गर्जन्तं कालमेघवत् ॥१३॥
स तं दृष्ट्वा तदा रौद्रं रामो राजीवलोचनः ।
जग्राह कार्मुकश्रेष्ठं वाक्यं चेदमुवाच ह ॥१४॥
दिष्ट्या मे दर्शनं प्राप्तो नैर्ऋतेन्द्रः सुदुर्मतिः ।
बधेनास्य हि संगम्य तुष्टिमेष्यामि संयुगे ॥१५॥
इत्युक्त्वा वाणमाकर्णात् पूरयित्वा ससर्ज ह ।
तं राक्षसेन्द्रश्चिच्छेद त्रिभिर्भल्लैरमर्षणः ॥१६॥
निकृत्तं सायकं दृष्ट्वा सौमित्रिः कुपितो भृशं ।
त्रासयामास रक्षांसि ज्याघोषेण महाबलः ॥१७॥
सौमित्रेर्धनुषो घोषं श्रुत्वा प्रतिभयं तदा ।
विसिस्मिये महातेजा राक्षसेन्द्रो भृशं बली ॥१८॥
स रावणोऽथ कुपितो दृष्ट्वा लक्ष्मणमग्रतः ।
आदाय निशितं वाणमिदं वचनमब्रवीत् ॥१९॥

तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयं ।
पश्य मे निशितान् वाणान् रिपुदर्पविनाशनान् ॥ २० ॥
शितामलाश्चातितीक्ष्णा मुक्ता रजतभूषणाः ।
एते ते सर्पसंकाशा वाणाः पास्यन्ति शोणितं ॥ २१ ॥
मृगराडिव संक्रुद्धो नागराजस्य शोणितं ।
त्यज सर्वात्मना वाणांस्ततस्त्यक्ष्यसि जीवितं ॥ २२ ॥

तत: स रक्षोवचनं निशम्य
सगर्वितं संयति राजपुत्रः ।
न चैव चुक्रोध रणे धृतात्मा
प्रोवाच चेदं वचनं महात्मा ॥ २३ ॥

कर्मणा दर्शयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण हि यो युक्तो न विकत्थितुमर्हति ॥ २४ ॥
सर्वायुधसमायुक्तो धन्वी रथवरे स्थितः ।
शरैर्वा यदिवाप्यस्त्रैर्दर्शय स्वपराक्रमं ॥ २५ ॥
ततः शिरांसि ते वाणैः पातयिष्याम्यहं रणे ।
मारुतः कालपक्वानि फलानीव वनस्पतेः ॥ २६ ॥
अद्य ते मामका वाणास्तप्तकाञ्चनभूषणाः ।
पास्यन्ति रुधिरं देहात् सुरामृतमिवोत्थितं ॥ २७ ॥
लक्ष्मणस्य वचः श्रुत्वा हेतूत्साहसमन्वितं ।
रावणः परमक्रुद्धो वाणमुत्तममाददे ॥ २८ ॥

तमापतन्तं सौमित्रिस्त्रिधा चिच्छेद सायकैः ।
रावणः परमामर्षी शरवर्षेण चाभ्ययात् ॥ २९ ॥
ततः शरसहस्रेण संछाद्य युधि लक्ष्मणं ।
विभीषणं ससुग्रीवं वानरांश्चाभिदुद्रुवे ॥ ३० ॥
संत्रास्य वानरानीकं शरवर्षैर्महाभुजः ।
राममेवाभिदुद्राव शरैरग्निशिखोपमैः ॥ ३१ ॥
तमापतन्तं सहसा प्रत्यगृह्णान्महाभुजः ।
रामोऽपि राक्षसश्रेष्ठं शरैरग्निशिखोपमैः ॥ ३२ ॥
ततः प्रववृते युद्धं रामरावणयोर्महत् ।
जीवितान्तकरं घोरं परस्परजयैषिणोः ॥ ३३ ॥
लाघवं शरमोक्षं च शरव्याघातमेव च ।
आत्मनः प्रतिघातं च दृष्ट्वा रक्षो न विव्यथे ॥ ३४ ॥
ततः शरशतैस्तीक्ष्णैर्व्यवच्छेदप्रवेपितैः ।
राघवःसमरामर्षी विव्याध सुमहाबलः ॥ ३५ ॥
संचचाल दशग्रीवः क्रुद्धश्चैव महाबलः ।
तामसं सुमहाघोरं मुमोचास्त्रं सुदारुणं ॥ ३६ ॥
ददाह च कपींस्तेन प्रयुक्तेन समन्ततः ।
उत्पपात रजो भूमौ भग्नैस्तत्र प्रधावितैः ॥ ३७ ॥
सोढुं नैव च तच्छेकुर्ब्रह्मणा निर्मितं स्वयं ।
तान्यनीकानि सर्वाणि रावणस्य शरोत्करैः ॥ ३८ ॥

दृष्ट्वा भग्नानि शतशो राघवः पर्य्यवर्त्तत ।
स ददर्श ततो रामं रावणः पर्य्यवस्थितं ॥ ३९ ॥
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ।
आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ॥ ४० ॥
स तु तं प्रेक्ष्य काकुत्स्थं राघवं रावणो युधि ।
रथेनाभ्यद्रवत् तूर्णं जघान च कपीन् बहून् ॥ ४१ ॥
वानरांश्च रणे भग्नानापतन्तं च राक्षसं ।
समीक्ष्य रामः संहृष्टो मध्ये जग्राह कार्मुकं ॥ ४२ ॥
विस्फार्य्य च महच्चापं ततः स रिपुमाह्वयत् ।
महावेगं महानादं भिन्दन्तमिव रोदसी ॥ ४३ ॥
रावणस्य च बाणानां रामविस्फारितस्य च ।
शब्देन राक्षसास्तेन न्यपतन्त सहस्रशः ॥ ४४ ॥
तयोः शरपथं प्राप्य रावणो राजपुत्रयोः ।
स बभूव यथा राहुः समीपे चन्द्रसूर्य्ययोः ॥ ४५ ॥
तमिच्छन् प्रथमं वेद्धुं लक्ष्मणो निशितैः शरैः ।
मुमोच धनुरानम्य शरानग्निशिखोपमान् ॥ ४६ ॥
तान् मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता ।
बाणान् बाणैर्महातेजा रावणः प्रत्यवारयत् ॥ ४७ ॥
एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश ।
लक्ष्मणस्य स चिच्छेद दर्शयन् पाणिलाघवं ॥ ४८ ॥

अथातिक्रम्य सौमित्रिं रावणः समितिंजयः ।
आससाद ततो रामं स्थितं शैलमिवाचलं ॥४९॥
स संख्ये राममासाद्य क्रोधसंरक्तलोचनः ।
असृजच्छरवर्षाणि राघवे राक्षसेश्वरः ॥५०॥
शरव्रातांस्तथा रामो रावणेष्वासनिःसृतान् ।
दृष्ट्वैवापततः शीघ्रं भल्लान् जग्राह राघवः ॥५१॥
तान् शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ।
दीप्यमानान् महेष्वासो घोरानाशीविषोपमान् ॥५२॥
राघवो रावणं वाणै रावणश्चापि राघवं ।
अन्योन्यं समरे वीरौ शरैरभिववर्षतुः ॥५३॥
चेरतुश्चरितं चित्रं मण्डलैः सव्यदक्षिणैः ।
वाणवेगं समीक्षन्तावन्योन्यमपराजितौ ॥५४॥
तयोर्भूतानि वित्रेसुर्युगपत् संप्रवृत्तयोः ।
रौद्रयोः शरसंपाते यमान्तकसमानयोः ॥५५॥
संततं विविधैर्वाणैर्बभूव गगनं शितैः ।
मेघैरिवातपापाये विद्युज्ज्वालासमाकुलं ॥५६॥
शरान्धकारं तौ भीमं चक्रतुः समरे तदा ।
गतेऽस्तं तपने देवे गर्जन्मेघाविवोदितौ ॥५७॥
तयोर्युद्धं महाभीममन्योन्यबधकाङ्क्षिणोः ।
बभूवोग्रमचिन्त्यं च वृत्रवासवयोरिव ॥५८॥

उभौ तौ परमेष्वासावुभौ युद्धविशारदौ ।
उभौ चास्त्रविदां मुख्यावुभौ युद्धं विचेरतुः ॥५९॥
उभौ हि येन व्रजतो बभुस्तेन शरोर्मयः ।
ऊर्मयः श्वसनाविद्धा भीमाः सागरयोरिव ॥६०॥
अथ संसक्तहस्तस्तु रावणो लोकरावणः ।
नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥६१॥
रौद्रचापप्रमुक्तां तां नीलोत्पलमयीमिव ।
शिरसा धारयन् रामो न व्यथां प्रत्यपद्यत ॥६२॥
ततस्त्वभिजपन् मन्त्रं रौद्रमस्त्रमुदीरयन् ।
शरांश्चैव समाधत्त रामः क्रोधसमन्वितः ॥६३॥
मुमोच च महातेजाश्चापमाकृष्य वीर्यवान् ।
रावणस्य रणे रामः शरानग्निशिखोपमान् ॥६४॥
राघवेण विनिर्मुक्ताः कवचे पतिताः शराः ।
अभेद्ये राक्षसेन्द्रस्य न व्यथां चक्रिरे तदा ॥६५॥
पुनरेवाथ तं रामो रथस्थं राक्षसेश्वरं ।
अताडयत् परास्त्रेण गान्धर्वेण महाबलः ॥६६॥
ते छित्वा शररूपाणि पञ्चशीर्षा इवोरगाः ।
श्वसन्तो विविशुर्भूमिं रावणेन निवारिताः ॥६७॥
निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्च्छितः ।
आसुरं सुमहाघोरमन्यदस्त्रं समाददे ॥६८॥

व्याघ्रसिंहमुखान् वाणान् काककङ्कमुखानपि ।
गृध्रदीप्ताननांश्चापि शृगालवदनांस्तथा ॥ ६९ ॥
ईहामृगमुखांश्चान्यान् व्यादितास्यान् भयानकान् ।
पञ्चास्यान् लेलिहानांश्च वराहवदनांस्तथा ॥ ७० ॥
एतांश्चान्यांश्च मायाभिः ससर्ज निशितान् शरान् ।
रामं प्रति महातेजाः क्रुद्धः सर्प इव श्वसन् ॥ ७१ ॥
आसुरेण समाविष्टः सोऽस्त्रेण युधि राघवः ।
ससर्जास्त्रं महोत्साहः पावकं दिव्यमुत्तमं ॥ ७२ ॥
अग्निदीप्तमुखान् वाणान् वज्रसूर्यसमांस्तथा ।
चन्द्रार्द्धचन्द्रवक्त्रांश्च धूमकेतुनिभानपि ॥ ७३ ॥
ग्रहनक्षत्रवक्त्रांश्च महोल्कामुखसंस्थितान् ।
विद्युज्जिह्वांस्तथैवान्यान् ससर्ज विविधान् शरान् ॥ ७४ ॥
ते रावणशरा घोरा राघवास्त्रेण मोहिताः ।
विलयं जग्मुराकाशे तदा चैव सहस्रशः ॥ ७५ ॥
तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ।
हृष्टा नेदुस्ततः सर्वे हरयः कामरूपिणः ॥ ७६ ॥

इत्यार्षे रामायणे युद्धकाण्डे रामरावणयोरस्त्रयुद्धं नाम
नवसप्ततितमः सर्गः ॥

## LXXX.

अस्त्रेणास्त्रं प्रतिहतं दृष्ट्वा रामेण रावणः ।
क्रोधं स द्विगुणं चक्रे क्रोधाच्च तदनन्तरं ॥ १ ॥
मयेन मायाविहितं रौद्रमस्त्रं महाबलः ।
उत्स्रष्टुं रावणो घोरं राघवायोपचक्रमे ॥ २ ॥
ततः प्रासाश्च निष्पेतुर्गदाश्च मुषलानि च ।
कार्मुकाद्दीप्यमानानि वज्रधाराणि सर्वशः ॥ ३ ॥
मुद्गराः कूटखड्गाश्च दीप्ताश्चाशनयस्तथा ।
निष्पेतुर्विविधास्तीव्रा वाता इव हिमात्यये ॥ ४ ॥
ततस्तद्राघवः शीघ्रमस्त्रमस्त्रविदां वरः ।
जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५ ॥
तदस्त्रं निहतं दृष्ट्वा राघवेण महात्मना ।
पैशाचं सुमहातेजाः सोऽन्यदस्त्रमुदीरयत् ॥ ६ ॥
ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च ।
कार्मुकाद्भीमवेगानि दशग्रीवस्य रक्षसः ॥ ७ ॥
तैरासीद्गगनं व्याप्तं संपतद्भिस्तमोनुदैः ।
पतद्भिः स्वर्गलोकेभ्यश्चन्द्रादित्यग्रहैरिव ॥ ८ ॥
तानि चिच्छेद चक्राणि रक्षःसृष्टानि राघवः ।
आयुधानि विचित्राणि रावणस्य चमूमुखे ॥ ९ ॥

तदस्त्रं निहतं दृष्ट्वा रावणो राक्षसेश्वरः ।
विव्याध दशभिर्बाणै राघवं सर्वमर्मसु ॥१०॥
सोऽतिविद्धः शितैर्बाणै रामः सर्वेषु मर्मसु ।
रावणेन महातेजा न मनागप्यकम्पत ॥११॥
ततो विव्याध गात्रेषु सर्वेषु समितिञ्जयः ।
रामः सुसंरब्धतरो रावणं निशितैः शरैः ॥१२॥
यथा प्रावृषि मेघो वै धारावर्षं विमुञ्चति ।
एवं रामो महाबाहुर्बाणवर्षं व्यमुञ्चत ॥१३॥
एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली ।
लक्ष्मणः सायकान् सप्त जग्राह परवीरहा ॥१४॥
सायकैस्तैर्महावेगै रावणस्य महाद्युतेः ।
ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद वीर्यवान् ॥१५॥
सारथेश्चैव बाणेन शिरो ज्वलितकुण्डलं ।
जहार लक्ष्मणः श्रीमान् रथात् तस्य महात्मनः ॥१६॥
नाम्यमानं च चिच्छेद धनुर्गजकरोपमं ।
लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिः पञ्चभिः शरैः ॥१७॥
कालमेघनिभांश्चैव सदश्वान् पर्वतोपमान् ।
जघान गदया तत्र रथे भ्रातुर्विभीषणः ॥१८॥
हताश्वो वेगवान् वेगादाप्लुत्य स महारथात् ।
क्रोधमाहारयत् तीव्रं रावणो भ्रातरं प्रति ॥१९॥

ततस्तु स महाशक्तिं दीप्तामग्निशिखामिव ।
विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥ २० ॥
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद राघवः ।
सा पपात त्रिधा भिन्ना शक्तिः काञ्चनमालिनी ॥ २१ ॥
तां दृष्ट्वा निहतां शक्तिं राघवेण महात्मना ।
उदतिष्ठन्महान् नादो वानराणां महारणे ॥ २२ ॥
ततः संभावितत्तरां कालेनापि दुरासदां ।
जग्राह विमलां शक्तिं दीप्यमानां स्वतेजसा ॥ २३ ॥
सा तोलिता बलवता रावणेन महात्मना ।
जज्वाल सुमहावेगा व्योम्नि सौदामिनी यथा ॥ २४ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणं ।
प्राणसंशयमापन्नं तूर्णमभ्युपपद्यत ॥ २५ ॥
तं मुमोचयिषुं वीरश्चापमाकृष्य लक्ष्मणः ।
रावणं शक्तिहस्तं तं शरवर्षैरवाकिरत् ॥ २६ ॥
कीर्यमाणः शरौघेन विसृष्टेन महात्मना ।
न प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २७ ॥
मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २८ ॥
मोक्षितस्ते बलश्लाघी यस्मादेष विभीषणः ।
विमुच्य राक्षसं तस्मात् त्वयि शक्तिः पतिष्यति ॥ २९ ॥

एषा ते हृदयं भित्त्वा शक्तिर्वर्हिणलक्षणा ।
मद्बाहुपरिघोत्सृष्टा प्राणानादास्यते तव ॥ ३० ॥
स्मर त्वं मातापितरौ भार्यां च सुहृदस्तथा ।
अस्माल्लोकादमुं लोकमचिराद्धि गमिष्यसि ॥ ३१ ॥
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनां ।
मयेन मायाविहिताममोघां शत्रुनाशिनीं ॥ ३२ ॥
लक्ष्मणं च समुद्दिश्य ज्वलन्तीं स्वेन तेजसा ।
रावणः परमक्रुद्धश्चिक्षेप च ननाद च ॥ ३३ ॥
सा क्षिप्ता भीमवेगेन शक्राशनिसमप्रभा ।
शक्तिरभ्यपतद्वेगाल्लक्ष्मणे रणमूर्द्धनि ॥ ३४ ॥
तामनुव्याहरच्छक्तिमापतन्तीं स राघवः ।
स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ॥ ३५ ॥
इत्येवं ध्यायतस्तस्य राघवस्य महात्मनः ।
न्यपतत् सा महावेगा लक्ष्मणस्य महोरसि ॥ ३६ ॥
जिह्वेवोरगराजस्य दीप्यमाना महाप्रभा ।
ततो रावणवेगेन सुदूरमवगाढया ॥ ३७ ॥
शक्त्या निर्भिन्नहृदयः पपात भुवि लक्ष्मणः ।
तदवस्थं समीपस्थो लक्ष्मणं प्रक्ष्य राघवः ॥ ३८ ॥
भ्रातृस्नेहेन महता विषण्णहृदयोऽभवत् ।
स मुहूर्त्तमिव ध्यात्वा वाष्पव्याकुललोचनः ॥ ३९ ॥

बभूव संरब्धतरो युगान्ताग्निरिव ज्वलन् ।
न विषादस्य कालोऽयमिति संचिन्त्य राघवः ॥४०॥
ततः सुनिशितैर्बाणैर्वैरी दशरथात्मजः ।
चक्रे सुतुमुलं युद्धं रावणस्य बधोद्यतः ॥४१॥

स तं ममन्थाशु महाधनुर्धरो
दशाननं बाणगणेन राघवः ।
प्रपूरयामास नभश्च संयुगे
शरार्दितश्चापि मुमोह रावणः ॥४२॥

इत्यार्षे रामायणे युद्धकाण्डे शक्तिनिर्भेदो नाम
अशीतितमः सर्गः ॥

# युद्धकाण्डं

## LXXXI.

तं ददर्श ततो रामः शक्त्या निर्भिन्नमाहवे ।
लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलं ॥ १ ॥
तामस्य प्रहितां शक्तिं रावणेन बलीयसा ।
सुग्रीवोऽथाङ्गदश्चैव तथा हनुमदादयः ॥ २ ॥
यत्नैनैते हरिश्रेष्ठा न शेकुरपकर्षितुं ।
अर्दिताश्चैव वाणौघैः क्षिप्रहस्तेन रक्षसा ॥ ३ ॥
तां कराभ्यां परामृष्य रामः शक्तिं भयावहां ।
बभञ्ज बलवान् क्रुद्धो निश्चकर्ष च वीर्यवान् ॥ ४ ॥
तस्य निष्कर्षतः शक्तिं नाराचान् दीप्ततेजसः ।
निचखान दशग्रीवः सर्वगात्रेषु वीर्यवान् ॥ ५ ॥
अचिन्तयित्वा तान् वाणान् समुत्थाप्य च लक्ष्मणं ।
अब्रवीद्धनुमन्तं च सुग्रीवं चाथ वीर्यवान् ॥ ६ ॥
लक्ष्मणं परिवार्येह तिष्ठत प्लवगर्षभाः ।
परिवृत्याप्रमादेन रक्षितव्यो महाबलः ॥ ७ ॥
पराक्रमस्य कालोऽयं संप्राप्तः सुचिरेप्सितः ।
अयं स रावणः पापः पापी पापविनिश्चयः ॥ ८ ॥
अग्रतो मे स्थितो युद्धे घर्मान्ते मेघवन्नदन् ।
स्तोकका इव मेघानामुदीक्षध्वं समागमं ॥ ९ ॥

अस्मिन् मुहूर्त्ते न चिरात् सत्यं प्रतिशृणोमि वः ।
अरावणमरामं वा जगद्द्रक्ष्यथ यूथपाः ॥ १० ॥
एवमुक्तास्तु रामेण सर्वे ते हरियूथपाः ।
लक्ष्मणं परिवार्याथ व्यतिष्ठन्त महाबलाः ॥ ११ ॥
अर्दिताः शरवर्षेण रावणान प्लवङ्गमाः ।
विहाय लक्ष्मणं सर्वे विसस्रुर्हरियूथपाः ॥ १२ ॥
हनुमानङ्गदश्चैव सुग्रीवश्चाप्यतिष्ठत ।
नीलः सेनापतिश्चैव जाम्बवांश्चैव यूथपः ॥ १३ ॥
तानुवाच महाप्राज्ञो न भेतव्यं परंतपाः ।
शृणुध्वं सत्यवचनं सत्यं प्रतिशृणोमि वः ॥ १४ ॥
राज्यभ्रंशं वने वासं दण्डके परिसर्पणं ।
वैदेह्याश्च परामर्षं रक्षोभिश्च समागमं ॥ १५ ॥
एतद्दुःखं महाघोरं क्लेशं च निरयोपमं ।
त्यक्ष्यामि सर्वमेवाहं हत्वेमं राक्षसं रणे ॥ १६ ॥
यदर्थं वानरं सैन्यं समानीतमिदं मया ।
सुग्रीवश्च कृतो राजा तं हनिष्यामि रावणं ॥ १७ ॥
यदर्थं सागरः क्रान्तः सेतुर्बद्धश्च सागरे ।
सोऽयमद्य रणे पापश्चक्षुर्विषयमागतः ॥ १८ ॥
चक्षुर्विषयमागत्य नायं जीवितुमर्हति ।
दृष्टिं दृष्टिविषस्येव सर्पस्य समुपागतः ॥ १९ ॥

सुखं पश्यन्तु दुर्धर्षा युद्धं वानरयूथपाः ।
आसीनाः पर्वतस्याग्रे ममेदं रावणस्य च ॥ २० ॥
अद्य रामस्य रामत्वं संपश्यन्त्वत्र संयुगे ।
त्रयो लोकाः सगन्धर्वाः समहेन्द्राः सचारणाः ॥ २१ ॥
अद्य कर्म करिष्यामि यल्लोकाः सचराचराः ।
सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥ २२ ॥
एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः ।
आजघान रणे रामो दशग्रीवं समाहितैः ॥ २३ ॥
अथ प्रदीप्तैर्नाराचैर्मुषलैश्च स रावणः ।
अभ्यवर्षत् तदा रामं धाराभिरिव तोयदः ॥ २४ ॥
रामरावणमुक्तानामन्योन्यमभिनिघ्नतां ।
शराणां च शराणां च बभूव तुमुलः स्वनः ॥ २५ ॥
ते विशीर्णा विकीर्णाश्च रामरावणयोः शराः ।
अन्तरीक्षात् प्रदीप्ताग्रा निपेतुर्वसुधातले ॥ २६ ॥
तयोर्ज्यातलनिर्घोषो रामरावणयोर्युधि ।
त्रासनः सर्वभूतानां स बभूवाद्भुतोपमः ॥ २७ ॥

इत्यार्षे रामायणे युद्धकाण्डे रामरावणद्वन्द्वयुद्धं नाम
एकाशीतितमः सर्गः ॥

LXXXII.

स दत्वा सुमहद्युद्धं राघवाय निशाचरः ।
द्वन्द्वयुद्धपरिश्रान्तस्ततोऽपक्रम्य वै स्थितः ॥ १ ॥
रणात् तस्मादपक्रान्ते किञ्चित् तत्र निशाचरे ।
विश्रमान्तरमासाद्य सुग्रीवं राघवोऽब्रवीत् ॥ २ ॥
एष शक्तिप्रहारेण लक्ष्मणः पतितो भुवि ।
सर्पवच्चेष्टते वीरो मम शोकमुपानयन् ॥ ३ ॥
शोणितार्द्रमिमं वीरं प्राणैरिष्टतरं मम ।
पश्यतो मेऽद्य का शक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४ ॥
अयं हि समरश्लाघी भ्राता मे शुभलक्षणः ।
यदि पञ्चत्वमापन्नः किं मे प्राणैर्जयेन वा ॥ ५ ॥
मज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ।
परिषीदन्ति मे प्राणा दृष्टिर्बाष्पवशं गता ॥ ६ ॥
चिन्ता मे वर्तते तीव्रा मुमूर्षा चोपजायते ।
भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणमूर्द्धनि ॥ ७ ॥
तन्न युद्धेन मे कार्यं न प्राणैर्नापि सीतया ।
लक्ष्मणं निहतं दृष्ट्वा भ्रातरं पांशुगुण्ठितं ॥ ८ ॥
किं मे युद्धेन किं प्राणैर्युद्धकार्यं न विद्यते ।
यत्रायं निहतः शेते लक्ष्मणो मत्समीपतः ॥ ९ ॥

अद्य चैतत् परित्यक्ष्ये जीवितं प्रियमात्मनः ।
लक्ष्मणस्य शिरः क्रोडे संस्थाप्यैव तु राघवः ॥१०॥
रुरोद करुणं दुःखी लक्ष्मणं शुभलक्षणं ।
हा भ्रातर्दयितात्यक्तं हा भ्रातर्मम जीवितं ॥११॥
सर्वान् भोगान् परित्यज्य मया सह वनं गतः ।
वनेऽपि व्यसनं प्राप्तं सीताहरणादुःखितं ॥१२॥
मामाश्वासयसे नित्यं भ्रातृस्नेहेन पीडितः ।
राक्षसेन्द्रं विनिर्जित्य मैथिलीमानयामि ते ॥१३॥
क्व गच्छसि महाबाहो सौमित्रे भ्रातृवत्सल ।
नैव युद्धेन मे कार्यं न प्राणैर्न च सीतया ॥१४॥
पश्यतो मोहितं शक्त्या यदद्य त्वां तु रक्षसा ।
वक्ष्यामि मातरं किन्नु सुमित्रां पुत्रवत्सलां ॥१५॥
त्वया सह गतः पुत्रो लक्ष्मणो मे न दृश्यते ।
एकाकी त्वमनुप्राप्तः क्व गतः स सुतो मम ॥१६॥
क्व गच्छसि महाबाहो सौमित्रे भ्रातृवत्सल ।
विचेष्टमानं मां पश्य उच्छ्वसन्तं पुनः पुनः ॥१७॥
प्ररुदन्तं ततो दृष्ट्वा राघवं सुमहाबलं ।
विषण्णवदनाः सर्वे वानरास्ते महाबलाः ॥१८॥
सुग्रीवोऽथाङ्गदश्चैव कुमुदः केशरी तथा ।
नीलो नलः सुषेणश्च सुमाली गन्धमादनः ॥१९॥

वीरबाहुः सुबाहुश्च गवाक्षः शरभस्तथा ।
विभीषणपुरोगाश्च सर्वे ध्यानमुपागताः ॥ २० ॥
ततो वानरराजः स सुग्रीवः प्राञ्जलिर्वचः ।
आबभाषे महाप्राज्ञो रामं शोकपरिप्लुतं ॥ २१ ॥
मा विषादं महाबाहो सौमित्र्यर्थे समुद्वह ।
त्यज शोकं महाबाहो मा च विक्लवतां व्रज ॥ २२ ॥
वैद्यो ह्यस्ति महाराज सुषेणो नाम नामतः ।
प्रत्यवेक्षतु सौमित्रिं भ्रातरं ते महाप्रियं ॥ २३ ॥
सुग्रीवस्य वचः श्रुत्वा रामो वाक्यमुवाच ह ।
शीघ्रमानीयतां वैद्यः सुषेणः कार्यसिद्धये ॥ २४ ॥
ततः सुषेण आगत्य प्राञ्जलिर्वाक्यमब्रवीत् ।
किं करोमि महाबाहो किमाज्ञापयसि प्रभो ॥ २५ ॥
राघवेण समाज्ञप्तं लक्ष्मणः प्रत्यवेक्ष्यतां ।
यदि जीवति सौमित्रिर्गमिष्यामि पुरीं पितुः ॥ २६ ॥
लक्ष्मणस्य विनाशेन विनशिष्यामि नान्यथा ।
स परीक्षितुमारब्धः सुषेणो लक्ष्मणं तदा ॥ २७ ॥
नेत्रे च वदनं चैव दन्तानि च नखानि च ।
पादौ हस्तौ तथा ग्रीवां हृदयं च परीक्ष्य तु ॥ २८ ॥
ततः सर्वेषु गात्रेषु सहान्तः करणेषु च ।
सुषेणो लक्ष्मणं दृष्ट्वा राघवं वाक्यमब्रवीत् ॥ २९ ॥

त्यजैतां नरशार्दूल बुद्धिं वैक्लव्यकारिकां ।
शोकसंजननीं चिन्तां तुल्यां बाणैश्चमूमुखे ॥३०॥
नैष पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ।
न ह्यस्य विकृतं वर्णं न च श्यामत्वमागतं ॥३१॥
सुप्रभं च प्रसन्नं च मुखमस्य निरीक्ष्यतां ।
पद्मरक्ततलौ हस्तौ सुप्रसन्ने च लोचने ॥३२॥
नेदृशं दृश्यते रूपं गतासूनां विशाम्पते ।
विषादं मा कृथा वीर सप्राणोऽयमरिन्दम ॥३३॥
पश्य चास्य प्रसुप्तस्य सुस्थगात्रस्य भूतले ।
सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः ॥३४॥
पञ्चभूतानि नाद्यापि विमुञ्चन्तीह लक्ष्मणं ।
त्यज शोकं महाबाहो लक्ष्मणं प्रति राघव ॥३५॥
सन्ति चान्यानि लिङ्गानि पुरुषस्य गतायुषः ।
सोच्छ्वासं सुस्थगात्रं च विद्धोनं सुप्तवद्यथा ॥३६॥
ओषध्यानयने युक्तिः क्रियतां गन्धमादने ।
उत्तरेऽस्मिन् दिशो भागे महत्यध्वनि संस्थिता ॥३७॥
पुण्यदेशे महाबाहो यत्रासौ परमौषधी ।
तस्मिन् देशे महाबाहो पर्वते गन्धमादने ॥३८॥
जाता महौषधी दिव्या विशल्यकरणी शुभा ।
विभूत्यै प्राणिनां सृष्टा रोगाणां चैव नाशिनी ॥३९॥

यस्या दर्शनमात्रेण विशल्यो जायते पुमान् ।
तदर्थं शीघ्रमुत्पत्य गच्छन्तु हरयो द्रुतं ॥ ४० ॥
सुषेणस्य वचः श्रुत्वा राघवो वाक्यमब्रवीत् ।
सुग्रीव प्रेषयस्वैनं हनूमन्तं महाबलं ॥ ४१ ॥
गच्छ वीर महाप्राज्ञ पर्वतं गन्धमादनं ।
न हि पश्यामि तं कश्चिच्छक्तमानयितुं नरं ॥ ४२ ॥
त्वं सुहृच्च प्रियश्चैव त्वं प्राणधनदोऽनघ ।
त्वयेयमुह्यते वीर रणधूर्नो गरीयसी ॥ ४३ ॥
स सुहृद्यो विपन्नेषु मित्रसाहाय्यतत्परः ।
महीयसि महोत्सेधान्मित्राणां तु सतामिह ॥ ४४ ॥
प्रयोजनवतीं प्रीतिं लोकः समनुवर्त्तते ।
त्वं तु वानरशार्दूल निष्प्रयोजनबान्धवः ॥ ४५ ॥
इति तस्य वचः श्रुत्वा हनूमान् पवनात्मजः ।
राघवं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ ४६ ॥
जीवितेन मदीयेन यदि जीवति लक्ष्मणः ।
तदप्यस्योत्सहे दातुं किं पुनर्गन्तुमोजसा ॥ ४७ ॥
ब्रुवत्येवं कपिश्रेष्ठे सुग्रीवो वाक्यमब्रवीत् ।
गच्छ वीर महाप्राज्ञ उपर्युपरि सागरं ॥ ४८ ॥
तस्मिन् देशे महावीर्य पर्वते गन्धमादने ।
जाता यत्रौषधी वीर विशल्यकरणी शुभा ॥ ४९ ॥

तत्र गन्धर्वराजौ तौ हाहाहूहू च नामतः ।
तिस्रः कोट्यश्च योधानां गन्धर्वाणां महौजसां ॥५०॥
वसन्ति पर्वते रम्ये नानाद्रुमलतावृते ।
तैः सार्द्धं विग्रहो भीमो भविष्यति न संशयः ॥५१॥
स त्वं वीर महाबाहो राममामन्त्र्य द्रुतं ।
विभीषणं च धर्मज्ञं जाम्बवन्तं तथाङ्गदं ॥५२॥
वीरबाहुं सुबाहुं च केशरिं गन्धमादनं ।
सुषेणं कुमुदं चैव पनसं च महाबलं ॥५३॥
नलं नीलं गवाक्षं च सिंहनादं च वानरं ।
सर्वानेतानुपागम्य सोऽभिवाद्य यथाक्रमं ॥५४॥
दत्ताभ्यनुज्ञो रामेण सुग्रीवेण च धीमता ।
गच्छ त्वं वानरश्रेष्ठ द्रुतमोषधिमानय ॥५५॥
एवमस्त्विति कृत्वा स प्रययौ वायुनन्दनः ।
ततो यान्तं समालोक्य सुषेणो वाक्यमब्रवीत् ॥५६॥
बहूनि विघ्नरूपाणि करिष्यन्ति च राक्षसाः ।
स त्वयात्मा प्रयत्नेन रक्षितव्यो महात्मना ॥५७॥
शीघ्रं गच्छ महावीर्य यावद्रात्रिर्न हीयते ।
आकाशेन तु यातव्यं वायुमार्गेण वीर्यवान् ॥५८॥
गत्वा तु पर्वतं रम्यं गृहीत्वा परमौषधिं ।
विलम्बना न कर्तव्या शीघ्रमागन्तुमर्हसि ॥५९॥

ओषध्या यानि चिह्नानि दर्शयामि च तानि ते ।
पीतकानि तु पत्राणि फलानि हरितानि च ॥ ६० ॥
ओषध्या या लता दिव्या रक्तचन्दनसंनिभा ।
पुष्पाणि ताम्रवर्णानि चिह्नान्येतानि वै विभो ॥ ६१ ॥
गच्छ तेऽस्तु शिवः पन्थाः शीघ्रमागमनं कुरु ।
स तेषामञ्जलिं कृत्वा प्रयातो वायुनन्दनः ॥ ६२ ॥
पश्चिमेन तु मार्गेण स गतो हरिपुङ्गवः ।
हनुमांस्तत्र वै वीरो लङ्कामुपरि निर्भयः ॥ ६३ ॥
गच्छन्तं मारुतिं दृष्ट्वा रावणो वाक्यमब्रवीत् ।
कालनेमिं दुराधर्षं रक्षःपरमदुर्जयं ॥ ६४ ॥
चतुर्मुखं चतुर्बाहुमष्टनेत्रं भयावहं ।
श्रूयतां मम वाक्यञ्च वाक्यमद्य निशाचर ॥ ६५ ॥
एष गच्छति वै वीरो हनुमान् गन्धमादनं ।
यत्रासावोषधी ज्ञाता विशल्यकरणी शुभा ॥ ६६ ॥
तदर्थं यात्ययं वीरो हनूमान् पवनात्मजः ।
कर्तव्यं विघ्नमेतस्य त्वया राक्षसपुङ्गव ॥ ६७ ॥
यदि विघ्नं करोष्यस्य राज्यस्यार्द्धं ददामि ते ।
ऋषिरूपधरो भूत्वा कुर्या मायामयाश्रमं ॥ ६८ ॥
नानावृक्षफलैर्दिव्यैर्लताभिश्च विभूषितं ।
शुभं तमाश्रमं कृत्वा चीरवल्कलसंवृतः ॥ ६९ ॥

सुखागतमिति ब्रूया हनूमन्तमुपागतं ।
पर्वतस्य समीपे तु कर्तव्योऽसौ त्वयाश्रमः ॥ ७० ॥
अदूरे तस्य हि गिरेः सरो नल्वप्रमाणतः ।
बहुपुष्करसंछन्नं सोत्पलैः कुमुदैर्वृतं ॥ ७१ ॥
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितं ।
बलाकावकसंछन्नं टिट्टिभैश्च समावृतं ॥ ७२ ॥
यत्र सा वसति ग्राही सर्वप्राणापहारिणी ।
यथा तत्रावतरति तथा त्वं कर्तुमर्हसि ॥ ७३ ॥
ततो ग्रहिष्यति ग्राही हनूमन्तं प्लवङ्गमं ।
गृह्णाति यं च सा ग्राही न स जीवति कर्हिचित् ॥ ७४ ॥
गृहीतश्च मृतश्चैव भविष्यति न संशयः ।
चखाद देवगन्धर्वान् किं पुनर्मारुतात्मजं ॥ ७५ ॥
ईदृशं योगमास्थाय हन्तव्यो वानराधिपः ।
हनूमतो विनाशेन लक्ष्मणो न भविष्यति ॥ ७६ ॥
लक्ष्मणस्य विनाशेन रामोऽपि न भविष्यति ।
रामस्यापि विनाशेन सुग्रीवो न भविष्यति ॥ ७७ ॥
सुग्रीवस्य विनाशे तु पुरीं यास्यन्ति वानराः ।
एवं मम जयो वीर भविष्यति न संशयः ॥ ७८ ॥
एवमर्थं तु संचिन्त्य गच्छ शीघ्रं महाबल ।
एवमस्त्विति राजानं कालनेमिर्निशाचरः ॥ ७९ ॥

जयेन वर्धयित्वा तु वाक्यमेतदुवाच ह ।
का शङ्का मे हनुमता वानरेन्द्रेण वा स्वयं ॥ ८० ॥
इत्युक्त्वा प्रययौ रक्षः पर्वतं गन्धमादनं ।
ततो मायाप्रभावेन निमेषेण महाबलः ॥ ८१ ॥
चक्रे तत्राश्रमं रम्यं गत्वासौ रजनीचरः ।
अग्निहोत्रैस्तथा दीप्तैः समिद्भिर्वल्कलैस्तथा ॥ ८२ ॥
जटाभारेण दिव्येन तल्लक्षणाच्चीरसंवृतः ।
दीर्घश्मश्रुनखो भूत्वा सोपवासकृशोदरः ॥ ८३ ॥
प्रगृह्यीत्वाक्षमालां तु जपं तत्रैव संस्थितः ।
छद्मना कृतलिङ्गस्थो हनुमद्गमनं प्रति ॥ ८४ ॥
हनूमानपि मेधावी प्रयाति सुमहाबलः ।
आनयितुं स सौमित्रेरायुरौषधन्नपि तत् ॥ ८५ ॥
आकाशेन महाबाहुर्बाहू विस्तार्य चाम्बरे ।
गच्छति त्वरितं वीरो ह्युपर्युपरि सागरं ॥ ८६ ॥
वैनतेय इवाकाशे ह्यमृताहरणोद्यतः ।
तं दृष्ट्वा राघवो मेने सिद्धं लक्ष्मणजीवितं ॥ ८७ ॥
सोऽपि सागरमुत्सृज्य किष्किन्ध्यां पर्वतं प्रति ।
दण्डकं सजनस्थानमतीत्यानिलनन्दनः ॥ ८८ ॥
मध्यदेशं च ककुदं कोशलाविषयं प्रति ।
मध्येन राघवपुरीं यातश्चाम्बरभूषितः ॥ ८९ ॥

# युद्धकाण्डं

अयोध्यां नगरीं रम्यामुपर्यम्बरमास्थितः ।
नन्दिग्रामं स दृष्ट्वा तु मनसा भरतं ययौ ॥ १० ॥
नन्दिग्रामस्थितो दृष्ट्वा भरतः कैकयीसुतः ।
हनूमन्तं तदायान्तं पक्षिराजमिवापरं ॥ ११ ॥
सोऽचिन्तयच्च मनसा किमिदं भूतमद्भुतं ।
गत्या चातिशयन् याति मनोवायुखगाधिपान् ॥ १२ ॥
अथ स धनुरायम्य बाणमादाय भास्वरं ।
खाद्भूमिं पातयेयं हि चक्रे चैवं मनस्तदा ॥ १३ ॥
संधाय च शरं तूर्णं तदा धनुषि राघवः ।
मोक्तुं कामं वायुसुतः प्रतिषेद्धुं व्यचिन्तयत् ॥ १४ ॥
रामानुजोऽयं भरतो रामेण सदृशो हि सः ।
तमिह त्वनुनेष्यामि न मे विघ्नो भवेदिति ॥ १५ ॥
कृताञ्जलिरुवाचेदं भरतं वायुनन्दनः ।
भो भो रामानुज शरं संहरस्व महाभुज ॥ १६ ॥
प्रेष्यस्तवाग्रजस्याहं सुग्रीवसचिवः कपिः ।
प्रयातो लक्ष्मणस्यार्थे हनूमन्तमवेहि मां ॥ १७ ॥
रावणेन रणे वीरः शक्त्या सौमित्रिराहतः ।
तस्याहमोषधिकृते मास्य विघ्न इहास्तु मे ॥ १८ ॥
एवमुक्तो हनुमता भरतो राघवानुजः ।
शक्त्येव भिन्नहृदयः पप्रच्छ कार्यमन्तमं ॥ १९ ॥

किमर्थं रावणेनेह वैरं रामस्य वानर ।
वानराणां नराणां च कथमासीत् समागमः ॥१००॥
एतत् प्रब्रूहि निःशेषं श्रोतुमिच्छाम्यहं कपे ।
तेन पृष्टस्तु हनुमानाख्यातुमुपचक्रमे ॥१०१॥
पितुः कृत्वा क्रियां याते त्वयि रामानुशासनात् ।
चित्रकूटस्थितो रामः प्रविष्टो दण्डकं वनं ॥१०२॥
पञ्चवटीसंस्थिते च मुनित्राणार्थमुद्यते ।
हतः शूर्पणखीहेतोः खरश्च सहदूषणः ॥१०३॥
जनस्थाने बधं श्रुत्वा राक्षसानां ततो रणे ।
शूर्पणख्याः सकाशात् तु दशग्रीवेण रक्षसा ॥१०४॥
मायामृगेण संयोज्य राघवं सहलक्ष्मणं ।
रक्षसापहृता सीता रावणेन दुरात्मना ॥१०५॥
रामोऽपहृतभार्यश्च लक्ष्मणेन सह भ्रमन् ।
पम्पातीरे स विलपन्नृष्यमूकगिरिं ययौ ॥१०६॥
सुग्रीवश्च सहास्माभिस्तस्मिन् गिरिवरे स्थितः ।
बालिनाहृतराज्यश्च हृतभार्यश्च वानरः ॥१०७॥
हृतभार्यस्तु रामोऽपि दुःखसंमूढचेतनः ।
अग्निसाक्षिकपूर्वं च सख्यं तेन सहाकरोत् ॥१०८॥
हत्वा तु बालिनं राज्ये सुग्रीवः स्थापितः प्रभुः ।
रामेण तेन सीतायाः कृतमन्वेषणं ततः ॥१०९॥

# युद्धकाण्डं

अन्विष्य च ततः सेतुः समुद्रे वानरैः कृतः ।
विभीषणश्च धर्मात्मा भ्राता लङ्केश्वरस्य च ॥११०॥
विमानितो निराशः सन् राघवं शरणं गतः ।
राघवेण सहास्माभिः सह राज्ञा नयेन तु ॥१११॥
पुत्राश्च भ्रातरश्चैव  रावणस्य निपातिताः ।
रावणेन रणे द्वन्द्वे शक्त्या त्वदनुजः हतः ॥११२॥
सुषेणेन च वैद्येन सुग्रीवश्वशुरेण तु ।
विशल्यकरणी नाम ह्युपदिष्टा महौषधी ॥११३॥
तस्याः कृतेऽहमादिष्टो यामि राघव सत्वरः ।
सुखमस्तु च भद्रं ते साधयामि यथेप्सितं ॥११४॥
एतच्छ्रुत्वा वचो घोरं वज्रपातसुदुःसहं ।
छिन्नस्तरुरिवारण्ये पपात भरतो भुवि ॥११५॥
हा राम तात लक्ष्मण हा सीते जनकात्मजे ।
त्रिपिष्टपकृतावास हा तात अजनन्दन ॥११६॥
धिङ्माता मम कैकेयी यया पापमिदं कृतं ।
धिङ्मां यस्य कृते रामः संशयं प्राप्तवानिमं ॥११७॥
धिग्राजानं स्त्रीविधेयं धिङ्मां कुजननीसुतं ।
धिगमात्यं येन कुलं संशयस्थमिदं कृतं ॥११८॥
यद्येतच्छृणुयात् पापं कौशल्या पुत्रवत्सला ।
नात्मानं धारयेद्व्यक्तं धिङ्मां दुष्करकारिणं ॥११९॥

मारुते नय मां शीघ्रमोषध्या किं प्रयोजन ।
आत्मानं घातयिष्यामि दृष्ट्वा तौ रामलक्ष्मणौ ॥१२०॥
कैकेयीपापदुष्टस्य प्रायश्चित्तं हितं मम ।
रामं प्रव्रजयन्त्या च घ्नत्या च पितरं मम ॥१२१॥
अहो धिगयशो मूर्ध्नि कैकेय्या पातितं मम ।
किं करोमि क्व गच्छामि किं कृत्वा सुकृतं भवेत् ॥१२२॥
हनुमन् किं करिष्यामीत्युपदेष्टुमिहार्हसि ।
एवं लालप्यमानं तु भरतं राघवानुजं ॥१२३॥
आश्वासयामास तदा हनूमान् वनरोत्तमः ।
उत्तिष्ठ रघुशार्दूल भद्रं ते राघवानुज ॥१२४॥
न चिराद्द्रक्ष्यसे रामं निहतामित्रमागतं ।
लक्ष्मणानुगतं वीरं सीतया सह भार्यया ॥१२५॥
कोशलेन्द्रपुरीं प्राप्तं ससुग्रीवविभीषणं ।
धन्योऽद्य राघवो यस्य भ्राता त्वं सज्जनप्रियः ॥१२६॥
रामाद्धन्यतरस्त्वं हि यस्य रामोऽग्रजस्तव ।
राघवानुज भद्रं ते भद्रं ते लक्ष्मणाग्रज ॥१२७॥
यस्त्वं द्रक्ष्यसि सिद्धार्थं स्वपुरं राममागतं ।
एवमाश्वासयति तं हनूमति महात्मनि ॥१२८॥
मन्त्रिणः सचिवाश्चैव तथैवाश्वासयन्ति तं ।
एवमाश्वासितस्तस्तु भरतो भ्रातृवत्सलः ॥१२९॥

समुत्थाय ततः प्रह्वः पर्यस्वजत मारुतिं ।
परिष्वक्तश्च हनुमान् सप्रश्रयमिदं वचः ॥१३०॥
उवाच भरतं प्रह्वः स तदा गमनोत्सुकः ।
यास्यामि कैकेयीमातर्लक्ष्मणस्यार्थसिद्धये ॥१३१॥
विशल्यानयने वीर मामनुज्ञातुमर्हसि ।
एवमुक्तो हनुमता भरतो दीनवत्सलः ॥१३२॥
जगाम मनसा राममुवाच चैव मारुतिं ।
कामं मद्वचनाद्गत्वा विज्ञाप्यो राघवस्त्वया ॥१३३॥
अभिवादनपूर्वं हि स्मरेथा मम राघव ।
त्वदनुस्मरणाद्राम कूर्माणामिव बालकाः ॥१३४॥
सान्त्वयन्ति मम प्राणा देहे देहभृतां वर ।
गच्छ शीघ्रं महाबाहो लक्ष्मणार्थे महाजव ॥१३५॥
विशल्यामानय क्षिप्रमेतत् कार्यं हितं मम ।
अवश्यमेव चाप्नोति रामः पुण्यसुखोदयं ॥१३६॥
न तत्र रक्षितं किञ्चिद्यत्र सन्ति भवादृशाः ।
एवमुक्तस्त्वनुज्ञातो भरतेनानिलात्मजः ॥१३७॥
जगाम भरतं कृत्वा प्रदक्षिणमरिन्दमः ।
भरतोऽपि महाबाहुर्गते वानरसत्तमे ॥१३८॥
अनन्तरं समुद्योगं कर्तुमारभत प्रभुः ।
दूतान् प्रस्थापयामास काशेयाय स धीमते ॥१३९॥

दूतान् स प्रेषयत् क्षिप्रं जनकाय महात्मने ।
कैकेयेषु च दूतान् स मातुलाय प्रयच्छति ।। १४० ।।
अन्येषामपि राज्ञां च दूतान् प्रास्थापयत् तदा ।
रामस्य विजयार्थाय रावणस्य बधाय च ।। १४१ ।।
अथ वीरो महाबाहुर्हनुमानरिसूदनः ।
वायुवेगेन संप्राप्तः पर्वतं गन्धमादनं ।। १४२ ।।
अपश्यच्चाश्रमं दिव्यं नानावृक्षसमावृतं ।
दृष्ट्वा प्राप्तं हनूमन्तमृषिः प्रत्युत्थितस्तदा ।। १४३ ।।
स्वागतं कपिशार्दूल स्वागतं हरिपुङ्गव ।
इदमर्घ्यं च पाद्यं च आसनं चेदमास्यतां ।। १४४ ।।
विश्रम त्वं कपिश्रेष्ठ आश्रमे मे यथासुखं ।
तस्य तद्वचनं श्रुत्वा हनुमान् वाक्यमब्रवीत् ।। १४५ ।।
श्रूयतामभिधास्यामि यद्वाक्यमृषिपुङ्गव ।
किष्किन्धा यदि ते तात श्रुता सर्वगुणान्विता ।। १४६ ।।
वानराधिपतिर्यत्र सुग्रीवो नाम वीर्यवान् ।
तस्य वानरसिंहस्य महाबाहुर्महाबलः ।। १४७ ।।
लोके राम इति ख्यातो मित्रत्वं समुपागतः ।
भार्याहरणदुःखात् स रावणस्य पुरीं गतः ।। १४८ ।।
प्राप्तं तत्र तयोर्युद्धं रामरावणयोर्महत् ।
रामभ्राता महावीरो लक्ष्मणो नाम तत्र च ।। १४९ ।।

रावणेन नृशंसेन शक्त्या चोरसि ताडितः ।
तस्यौषधिनिमित्तं च पर्वतं गन्धमादनं ॥ १५० ॥
विशल्यकरणी नाम तत्र जाता महौषधी ।
तामहं नेतुमायातो भिषग्दिष्टां महौषधीं ॥ १५१ ॥
विलम्बना न कर्तव्या त्वरमाणोऽहमागतः ।
अहं वानरराजस्य भृत्यो बहुमतो गुणैः ॥ १५२ ॥
जातः केशरिणः क्षेत्रे वायुना जगदात्मना ।
हनूमतो वचः श्रुत्वा मुनिवेशधरोऽब्रवीत् ॥ १५३ ॥
यद्यप्येवं महाभाग मुहूर्त्तं तावदास्यतां ।
अतिथिस्त्वमनुप्राप्तो वीर पूजां गृहाण मे ॥ १५४ ॥
इदं मम सरो दिव्यं तपसोग्रेण चार्जितं ।
पीतमात्रे तु पानीये न मां संबाधते क्षुधा ॥ १५५ ॥
तस्य तद्वचनं श्रुत्वा हनूमान् वायुविक्रमः ।
अवतीर्य सरो दिव्यमुत्पलैः कुमुदैश्चितं ॥ १५६ ॥
सोऽपिवत् तत्र पानीयं ग्राही चैव तमग्रहीत् ।
स गृहीतस्तया ग्राह्या हनूमान् हरिपुङ्गवः ॥ १५७ ॥
वेगेन सुमहातेजास्तोलयामास तां स्थलं ।
तोलयित्वा च तां ग्राहीं नखैरेव व्यदारयत् ॥ १५८ ॥
ततोऽसावप्सरोरूपस्था ग्राही वचनमब्रवीत् ।
श्रूयतां कपिशार्दूल हनूमन् वायुनन्दन ॥ १५९ ॥

जानीहि मामप्सरसं गन्धकालीं तु नामतः ।
आकाशेन तु गच्छन्ती कुवेरभवनं पुरा ॥१६०॥
विमानेनार्कवर्णेन तप्तकाञ्चनवर्चसा ।
नापश्यं तत्र वेगेन तपस्यन्तं महामुनिं ॥१६१॥
यज्ञो नाम महातेजा मुनिः शापायुधस्तदा ।
अवधूतो मया चासौ विमानेन हरीश्वर ॥१६२॥
अब्रवीत् स महातेजा मुनिरुग्रतपास्तदा ।
उत्तरस्यां दिशि गिरिर्यो नाम्ना गन्धमादनः ॥१६३॥
दक्षिणे तस्य पार्श्वे तु समीपे यत् सरो महत् ।
ग्राही तत्र भवित्री त्वं सर्वप्राण्यपहारिणी ॥१६४॥
ततोऽहं शापनिर्दग्धा पतितास्मि महीतले ।
शापान्तायानुनीतश्च मामसौ मुनिरब्रवीत् ॥१६५॥
यदा यास्यति वीरस्तु हनूमान् गन्धमादने ।
तदा शापाद्विमोक्षस्ते भविष्यति न संशयः ॥१६६॥
एतत् ते कथितं सर्वं विज्ञातोऽसि मयानघ ।
मोक्षिताहं त्वया वीर यामि वैश्रवणालयं ॥१६७॥
स्वस्ति तेऽस्तु महाबाहो कृतकृत्यो गमिष्यसि ।
वर्त्मनो विघ्नकारीणि सत्त्वान्यत्र हनिष्यसि ॥१६८॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् वाक्यमब्रवीत् ।
सुविश्रब्धाप्सरो याहि मया दिष्ट्यासि मोक्षिता ॥१६९॥

मोक्षयित्वा तु तां ग्राहीं हनूमान् वायुनन्दनः ।
तदाश्रमपदं दिव्यं ययौ यत्र स राक्षसः ॥ १७० ॥
प्राप्तं दृष्ट्वा स तु हरिमृषिरूपी निशाचरः ।
गृहीत्वा फलमूलानि भक्षयस्वेत्युवाच ह ॥ १७१ ॥
अथापश्यत् स तद्रूपं हनुमान् प्लवगर्षभः ।
मुहूर्त्तमभवत् तत्र ध्यानचिन्ताभिसंप्लुतः ॥ १७२ ॥
ऋषीणां नेदृशं रूपं सपश्यामीह यादृशं ।
कारणेनात्र भाव्यं वै चेष्टा ह्यस्य सुदारुणा ॥ १७३ ॥
रक्षसः सदृशाकारो विकारश्चास्य दृश्यते ।
मायाधिकानि रक्षांसि विचरन्ति यदृच्छया ॥ १७४ ॥
व्यक्तं राक्षसराजेन प्रेषितो मद्वधाय वै ।
तद्धनिष्ये दुरात्मानं राक्षसं बधकाङ्क्षिणं ॥ १७५ ॥
तिष्ठ पाप दुराचार विज्ञातोऽसि मयाधुना ।
श्रुत्वा हनुमतो वाक्यं कालनेमिर्निशाचरः ॥ १७६ ॥
स्वरूपं दर्शयामास विकृतं घोरदर्शनं ।
मारुतिं त्रासयामास क्व गमिष्यसि वानर ॥ १७७ ॥
जिघांसार्थं समादिष्टो रावणेन महात्मना ।
बहुमायाबलश्चाहं कालनेमिरिति श्रुतः ॥ १७८ ॥
अद्याहं तव मांसेन तृप्तिं यास्यामि वानर ।
हनूमानपि तच्छ्रुत्वा द्विगुणीकृतविक्रमः ॥ १७९ ॥

स बद्ध्वा भ्रुकुटीं वक्रे राक्षसं तं समाह्वयत् ।
बाहुयुद्धं तयोस्तत्र संजज्ञे कपिरक्षसोः ॥ १८० ॥
समुष्टिबाहुघातैश्च पार्ष्णिलाङ्गूलताडनैः ।
उभौ महाबलौ तत्र भीमौ भीमपराक्रमौ ॥ १८१ ॥
अवृक्षमशिलं चैव तं देशं संप्रचक्रतुः ।
ततो वायुसुतेनासौ बाहुपाशेन यन्त्रितः ॥ १८२ ॥
विगतासुर्गतश्रीको न्यपतद्भुवि राक्षसः ।
महानादं ततः कृत्वा गतो वैवस्वतक्षयं ॥ १८३ ॥
तेन राक्षसनादेन गन्धर्वास्ते महाबलाः ।
बभूवुर्भयसंत्रस्तास्तिस्रः कोट्यो महीयसां ॥ १८४ ॥

इत्यार्षे रामायणे युद्धकाण्डे कालनेमिबधो नाम
द्व्यशीतितमः सर्गः ॥

# युद्धकाण्डं

## LXXXIII.

स हत्वा हनुमान् वीरः कालनेमिं दुरासदं ।
आरुरोह नगं दिव्यं नानाधातुविभूषितं ॥ १ ॥
आरूढं तु तं दृष्ट्वा गन्धर्वा वाक्यमब्रुवन् ।
कस्त्वं वानररूपेण संप्राप्तो गन्धमादनं ॥ २ ॥
गन्धर्वाणां वचः श्रुत्वा हनुमान् वाक्यमब्रवीत् ।
किष्किन्धा नाम नगरी उद्यानवनशोभिता ॥ ३ ॥
वानराधिपतिर्यत्र सुग्रीवो नाम विश्रुतः ।
तस्य वानरसिंहस्य महाबाहुर्महाबलः ॥ ४ ॥
लोके राम इति ख्यातो मित्रत्वं समुपागतः ।
भार्याहरणदुःखात् स रावणस्य पुरीं गतः ॥ ५ ॥
प्राप्तं तत्र तयोर्युद्धं रामरावणयोर्महत् ।
रामभ्राता महावीरो लक्ष्मणो नाम नामतः ॥ ६ ॥
रावणेन नृशंसेन शक्त्योरस्यभिताडितः ।
तस्यार्थे नेतुमायातः पर्वतं गन्धमादनं ॥ ७ ॥
विशल्यकरणीं नाम ज्ञातामिह महौषधिं ।
अहं वानरराजस्य भृत्यो बहुमतो गुणैः ॥ ८ ॥
ज्येष्ठः केशरिणः पुत्रो हनुमानिति विश्रुतः ।
न जाने चौषधिं तां तु विशल्यकरणीं शुभां ॥ ९ ॥

इच्छामि कथितां वीराः प्रसादं कर्तुमर्हथ ।
नरराजस्य विषये रामस्यामिततेजसः ॥ १० ॥
भवद्भिः सर्वथा कार्यं राज्ञः प्रियमनोऽनुगं ।
तत्प्रियार्थं हि रामस्य सुग्रीवस्य तथैव च ॥ ११ ॥
विशल्यकरणीं मह्यं वीरा आख्यातुमर्हथ ।
तस्य तद्वचनं श्रुत्वा गन्धर्वास्ते महाबलाः ॥ १२ ॥
ऊचुः कस्य स्म विषये कस्य वा किङ्करा वयं ।
वर्जयित्वा महात्मानौ गन्धर्वौ तु हाहाहूहू ॥ १३ ॥
तदयं बध्यतां शीघ्रं वानरापसदः स्वयं ।
इत्युक्त्वा परिवार्याथ गन्धर्वास्ते महाबलाः ॥ १४ ॥
प्राहरंस्तं सुसंरब्धा गदामुष्टितलासिभिः ।
हन्यमानस्ततस्तैस्तु गन्धर्वैर्बलदर्पितैः ॥ १५ ॥
प्रहारांस्तानसंचिन्त्य हनूमान् क्रोधमाहरत् ।
स तानह्नोभयच्चैव संवर्तक इवानलः ॥ १६ ॥
ततः समभवद्युद्धं गन्धर्वाणां महाकपेः ।
नखैर्विदारिताः केचित् केचिद्दंष्ट्राभिरर्दिताः ॥ १७ ॥
पार्ष्णिप्रहारविद्धाश्च जजराङ्गा महीं गताः ।
लाङ्गूलताडिताः केचिन्नदन्तो भैरवान् रवान् ॥ १८ ॥
निमेषेण हताः सर्वे तिस्रः कोट्यो महाबलाः ।
हत्वा वायुसुतः संख्ये गन्धर्वांस्तान् महाबलान् ॥ १९ ॥

ततो द्रुमलताकीर्णं सिंहव्याघ्रनिषेवितं ।
संचचार नगं दिव्यमोषधिं प्रति वानरः ॥ २० ॥
मार्गमाणः सुसंक्रुद्धस्तामपश्यन्न चौषधिं ।
तस्य बुद्धिरियं जाता मारुतेर्मारुतौजसः ॥ २१ ॥
अहमेतं न याम्यस्य दक्षिणं शिखरं गिरेः ।
अस्मिंस्तु शिखरे जातामोषधिं तां सुखावहां ॥ २२ ॥
प्रतर्केणावगच्छामि सुषेणो हि यथाब्रवीत् ।
यद्यनादाय गच्छामि विशल्यकरणीमहं ॥ २३ ॥
कालात्यये हि दोषः स्याद्वैक्लव्यं च महद्भवेत् ।
चिन्तयित्वेति हनुमानवतीर्य महीतलं ॥ २४ ॥
गिरिं नानाद्रुमलतं नानापुष्पोपशोभितं ।
कन्दरैः प्रस्रवन्तं च क्वचिन्मणिनिभं जलं ॥ २५ ॥
प्रडीनोद्भ्रान्तविहगं लीनविद्याधरोरगं ।
मृगसिंहसमाकीर्णं व्याघ्रकुञ्जरसेवितं ॥ २६ ॥
फुल्लनानातरुगणं नानाधातुविभूषितं ।
अनेकपक्षिसंजुष्टं किन्नरैरुपशोभितं ॥ २७ ॥
पञ्चयोजनविस्तीर्णं सप्तयोजनमायतं ।
दशयोजनमुत्सेधं तमकम्प्यं गिरिस्तटं ॥ २८ ॥
लीलया हरिमुख्योऽसौ बाहुभ्यामुदपाटयत् ।
उत्पाट्यमाने शृङ्गाणि निपतन्ति स्म पर्वते ॥ २९ ॥

चक्रन्द स गिरिस्तत्र धातुप्रस्रुतलोचनः ।
उत्पाट्यमानः सहसा विभुना वायुसूनुना ॥ ३० ॥
नानासत्त्ववरैर्घुष्टं गिरिमादाय सत्वरः ।
उत्पपाताशु वेगेन हनूमान् वायुविक्रमः ॥ ३१ ॥
ततो देवाः सगन्धर्वाः सविद्याधरपन्नगाः ।
अब्रुवन् विस्मिता दृष्ट्वा हनूमन्तं विहायसि ॥ ३२ ॥
त्रैलोक्ये तु न पश्यामो महदाश्चर्यमीदृशं ।
यो हि कुर्यादिदं कर्म गन्धर्वाणां बधं रणे ॥ ३३ ॥
पर्वतोत्पाटनं चैव कोऽन्यः कुर्याद्धनूमतः ।
साधु वीर महाबाहो यस्यायं ते पराक्रमः ॥ ३४ ॥
मोक्षिता गन्धकाली च शापाद्रक्षस्त्वया हतं ।
उत्पाट्य च गिरिं यासि बाहुभ्यां परिगृह्य च ॥ ३५ ॥
देवानां सदृशं कर्म त्वयेदं कृतमद्य वै ।
हनूमानपि संप्राप्तो ह्यचिरेण महाबलः ॥ ३६ ॥
प्रगृह्य शिखरं रम्यं लङ्कामथ महाभुजः ।
संभ्रान्ता राक्षसास्तत्र लङ्कापुरनिवासिनः ॥ ३७ ॥
अद्रिहस्तं कपिं दृष्ट्वा दुद्रुवुर्भयविह्वलाः ।
ततोऽसौ हनुमांस्तत्र विक्रान्तः पवनात्मजः ॥ ३८ ॥
अभ्यासे न्यपतच्छृङ्गं तदादाय गिरेर्महत् ।
ततस्तु हनुमान् वीरो वायुतुल्यपराक्रमः ॥ ३९ ॥

निक्षिप्य पर्वतं रम्यं नानाधातुविचित्रितं ।
विनीतः प्राञ्जलिर्भूत्वा चोपसृत्य समाहितः ॥ ४० ॥
व्यज्ञापयत सुग्रीवं रामं च सविभीषणं ।
नाध्यगच्छमहं तस्मिन्नोषधीं गन्धमादने ॥ ४१ ॥
ततोऽयं शिखरः कृत्स्नो गिरेस्तस्य मयाहृतः ।
प्रभूतानि च विघ्नानि निहतानि मया रणे ॥ ४२ ॥
ऋषिरूपधरस्तत्र कालनेमिर्निशाचरः ।
निहतः स महाकायो गन्धकाली च मोहिता ॥ ४३ ॥
गन्धर्वाणां सहस्राणि निहतानि बहूनि च ।
विलम्बो मेऽभवत् तत्र तेन न त्वरयागतः ॥ ४४ ॥
कालात्यये कृते चैव प्रसादं कर्तुमर्हथ ।
ओषध्या यानि चिह्नानि तानि नष्टानि संभ्रमात् ॥ ४५ ॥
अत्र सर्वे विचिनुध्वं मयानीतो ह्ययं गिरिः ।
तस्य तद्वचनं श्रुत्वा साधु साध्विति मारुतिं ॥ ४६ ॥
प्राशंसद्राघवस्तत्र हनूमन्तं महाबलं ।
देवानां सदृशं कर्म यत् कृतं हरिपुङ्गव ॥ ४७ ॥
पुनरेव हि नेतव्यो यत आनीत एष हि ।
क्रीडास्थानं हि देवानां सदा पर्वणि पर्वणि ॥ ४८ ॥
अथ प्रीतो महातेजाः सुग्रीवो वाक्यमब्रवीत् ।
साधु वीर महाभाग यस्य ते बलमीदृशं ॥ ४९ ॥

सुषेणं चाब्रवीत् तत्र सुग्रीवः स महायशाः ।
देहि शीघ्रं महाभाग लक्ष्मणस्य महौषधीं ॥५०॥
सुग्रीवस्य वचः श्रुत्वा सुषेणस्त्वरितो ययौ ।
विस्मितः स गिरिं दृष्ट्वा फलमूलोपशोभितं ॥५१॥
नानाद्रुमलताकीर्णं नानागुल्मसमाकुलं ।
आरुरोह गिरिं दिव्यं नानाधातुविभूषितं ॥५२॥
आरुह्य तस्य शिखरे सोऽपश्यत् परमौषधीं ।
दृष्ट्वा चोत्पाटयामास विशल्यकरणीं शुभां ॥५३॥
गृहीत्वा तरसा चैव सोऽवतीर्णो महीतले ।
शिलायां जर्जरीकृत्य सुषेणो वैद्यसत्तमः ॥५४॥
लक्ष्मणाय ददौ नस्यं सुषेणः सुसमाहितः ।
तां विशल्यां समाघ्राय लक्ष्मणः परवीरहा ॥५५॥
विशल्यो नीरुजः शीघ्रमुदतिष्ठन्महीतलात् ।
विशल्यं लक्ष्मणं दृष्ट्वा रामो हर्षमुपागतः ॥५६॥
एह्येहीत्यब्रवीच्चैव लक्ष्मणं राघवस्तदा ।
सस्वजे स्नेहगाढं च बाष्पव्याकुललोचनः ॥५७॥
अजिघ्रच्चास्य मूर्द्धानं हर्षादश्रूण्यपातयत् ।
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा ॥५८॥
दिष्ट्या त्वां वीर पश्यामि मरणात् पुनरागतं ।
समुत्थितं तु हरयो भूतलाद्वीक्ष्य लक्ष्मणं ॥५९॥

साधु साधिति संहृष्टाः सुषेणं प्रत्यपूजयन् ।
प्रशशंस च सुग्रीवः सुषेणं वैद्यसत्तमं ॥ ६० ॥
काकुत्स्थश्च महातेजाः प्रहस्येदमुवाच ह ।
त्वत्प्रसादेन पश्यामि लक्ष्मणं भ्रातरं प्रियं ॥ ६१ ॥

इत्यार्षे रामायणे युद्धकाण्डे विशल्यकरणं
नाम त्र्यशीतितमः सर्गः ॥

## LXXXIV.

उत्थितं लक्ष्मणं दृष्ट्वा विशल्यं निरुपद्रवं ।
सिंहनादान् व्यमुञ्चन्त वानरास्ते समन्ततः ॥ १ ॥
अपूर्वं पर्वतं दृष्ट्वा कौतूहलसमन्विताः ।
सर्वे प्राञ्जलयो भूत्वा सुग्रीवं समुपस्थिताः ॥ २ ॥
कौतूहलसमुत्पन्नाः पर्वतारोहणं प्रति ।
अनुज्ञातास्ततस्तेन सुग्रीवेण महात्मना ॥ ३ ॥
आरूढास्तत्र पश्यन्ति पर्वते गन्धमादने ।
ऋषिकुण्डानि दिव्यानि फलानि विविधानि च ॥ ४ ॥
स्नान्ति स्म गिरिकुण्डेषु भक्षयन्ति फलानि च ।
क्षणेन वानरैस्तत्र फलमूलं च भक्षितं ॥ ५ ॥
भक्षयित्वा तु मूलानि फलानि विविधानि च ।
पीत्वा च शीतलं तोयमवतेरुः प्लवङ्गमाः ॥ ६ ॥
अवतीर्णान् कपीन् दृष्ट्वा रामः सुग्रीवमब्रवीत् ।
उच्यतां हनुमान् वीरः पर्वतो नीयतामिति ॥ ७ ॥
यस्माच्चैवोद्धृतः स्थानात् तत्रैवायं निवेश्यतां ।
सुग्रीवो रामवचनाद्धनुमन्तं तथोक्तवान् ॥ ८ ॥
हनूमानेवमुक्तस्तु सुग्रीवेण महात्मना ।
प्रणम्य वाहिनीमुख्यान् महाबलपराक्रमः ॥ ९ ॥

बाहुभ्यामुद्धरंस्तत्र शिलोच्चयमनुत्तमं ।
उत्पपाताथ वेगेन व्योम मारुतनन्दनः ॥१०॥
अपश्यद्रावणस्तं च नीयमानं शिलोच्चयं ।
दृष्ट्वा चैवाब्रवीत् तत्र राक्षसान् बलदर्पितान् ॥११॥
तालजङ्घं महाघोरं सिंहवक्त्रं घटोदरं ।
उल्कामुखं महावीर्यं चन्द्रलेखं च राक्षसं ॥१२॥
हस्तिकर्णं महाबाहुं कङ्कतुण्डं तथैव च ।
शीघ्रं मायाप्रभावेन गृह्यतां हनुमान् कपिः ॥१३॥
युष्मभ्यं राक्षसश्रेष्ठाः पूजां दास्याम्यनुत्तमां ।
रावणस्य वचः श्रुत्वा राक्षसास्ते महाबलाः ॥१४॥
कवचावृतसर्वाङ्गा नानाप्रहरणास्तथा ।
ततः सर्वे समुत्पेतुराकाशं रजनीचराः ॥१५॥
गच्छन्तं मारुतिं दृष्ट्वा नगहस्तं दुरासदं ।
राक्षसा बलिनः सर्वे वाक्यं तदिदमब्रुवन् ॥१६॥
कस्त्वं वानररूपेण गिरिमादाय गच्छसि ।
न बिभेषि च देवानां दैत्यानां च न रक्षसां ॥१७॥
अद्य कस्ते गृहीतस्य परित्राता भविष्यति ।
ब्रह्मा महेश्वरो विष्णुर्यमो वैश्रवणस्तथा ॥१८॥
शक्रश्च सुमहातेजाः संप्राप्तास्त्वां जिघांसया ।
तेषां तद्वचनं श्रुत्वा प्रत्युवाच स मारुतिः ॥१९॥

यदि लोकास्त्रयः प्राप्ताः ससुरासुरपन्नगाः ।
सर्वांस्तान् निहनिष्यामि स्वबाहुबलमाश्रितः ॥ २० ॥
इत्युक्त्वा तानसौ तत्र राक्षसान् रावणाश्रयान् ।
विदित्वा चेष्टितैर्वीरो हनूमांस्तैरयुध्यत ॥ २१ ॥
स गृहीतगिरिर्दोर्भ्यां पद्भ्यामेव महाबलः ।
युध्यमानो जघानाथ राक्षसांस्तान् महाबलान् ॥ २२ ॥
निष्पिपेषोरसा कांश्चित् कांश्चित् पद्भ्यां महाबलः ।
कांश्चिदेव च दंष्ट्राभिरपरानपि जानुना ॥ २३ ॥
आकाशे नगहस्तस्य वानरस्य महात्मनः ।
अन्ये लाङ्गूलपाशेन बद्धास्तत्र ललम्बिरे ॥ २४ ॥
लम्बमाना विभान्ति स्म राक्षसास्ते महाबलाः ।
सुवर्णसूत्रग्रथिता महानीलोपला इव ॥ २५ ॥
कथञ्चिन्महतो यत्नाल्लाङ्गूलेन निवेष्टितः ।
आत्मानमथ उन्मुच्य तालजङ्घो विदुद्रुवे ॥ २६ ॥
स हत्वा राक्षसांस्तांस्तु हनूमान् मारुतात्मजः ।
जगामादाय तं शैलं विराजन् खे महाबलः ॥ २७ ॥
ततो देवाः सगन्धर्वाः सविद्याधरचारणाः ।
अब्रुवन् साधु हनुमन् यस्य तेऽयं पराक्रमः ॥ २८ ॥
अत्युग्रमीदृशं कर्म त्वत्तः कुर्वीत कोऽपरः ।
आकाशे गिरिमादाय सूदितास्ते निशाचराः ॥ २९ ॥

इति संस्तूयमानोऽसौ संप्राप्तो गन्धमादनं ।
यतश्चोत्पाटितस्तत्र तं गिरिं संन्यवेशयत् ॥३०॥
तालजङ्घोऽपि संत्रस्तः प्रपलाय्य निशाचरः ।
न्यवेदयत् सुसंभ्रान्तो रावणस्य महात्मनः ॥३१॥
शृणु राजन् यथा तेन राक्षसास्ते हता विभो ।
तं शैलमपरित्यज्य नगहस्तेन धीमता ॥३२॥
लाङ्गूलेन हताः केचित् केचिद्दंष्ट्राभिरर्दिताः ।
कथञ्चिदहमेकस्तु जीवन् प्राप्तस्तवान्तिकं ॥३३॥
श्रुत्वैतत् तालजङ्घात् स हनुमत्कर्म दुष्करं ।
चिन्तापरोऽभवद्राजा राक्षसानां महाबलः ॥३४॥
राक्षसा ये विशिष्टा हि मायावन्तो महाबलाः ।
हनूमता हतास्तेऽपि निष्प्रधानाः कृता वयं ॥३५॥
अपरे मन्त्रयन्ति स्म बुद्धिमन्तो निशाचराः ।
अहो बलमिदं तस्य वानरस्य दुरात्मनः ॥३६॥

इत्यार्षे रामायणे युद्धकाण्डे तालजङ्घादिवधो
नाम चतुरशीतितमः सर्गः ॥

## LXXXV.

ततो निवेश्य तं शैलं हनुमान् मारुतात्मजः ।
समुत्पत्य महातेजा आकाशं हरिपुङ्गवः ॥ १ ॥
स्तूयमानः सुरैः सिद्धैर्गन्धर्वैः सह चारणैः ।
अप्सरोभिश्च मुदितैर्न्यवर्तत महायशाः ॥ २ ॥
उपर्येव स लङ्कायां हनूमान् मारुतात्मजः ।
संप्राप्तो यत्र सुग्रीवो राघवश्च सलक्ष्मणः ॥ ३ ॥
दृष्ट्वा प्राप्तं हनूमन्तं रामो हर्षमुपागतः ।
स्वागतं ते हरिश्रेष्ठ सुखागतमरिन्दम ॥ ४ ॥
दिष्ट्या क्षेमेण संप्राप्तो गत्वा त्वं वानरोत्तम ।
पश्यामि भवतो वीर्याल्लक्ष्मणं शुभलक्षणं ॥ ५ ॥
पञ्चत्वं यद्ययं यातो मारुते लक्ष्मणो मम ।
नैव मे विजयेनार्थो न मैथिल्या न चात्मना ॥ ६ ॥
इत्येवं वदतस्तस्य राघवस्य महात्मनः ।
श्रुत्वा शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ७ ॥
तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम ।
लघुः कश्चिदिवातेजा नैवं त्वं वक्तुमर्हसि ॥ ८ ॥
न हि प्रतिज्ञां कुर्वन्ति साधवो वितथां नृप ।
लक्ष्मणं तु महत्त्वस्य प्रतिज्ञापरिपालनं ॥ ९ ॥

तदलं मत्कृतेनैव नैराश्यमुपगम्य वै ।
बधेन रावणस्याद्य प्रतिज्ञां परिपालय ॥१०॥
न जीवन् यास्यते पापस्तव बाणपथं गतः ।
नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥११॥
अहं तु बधमिच्छामि शीघ्रं तस्य दुरात्मनः ।
यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥१२॥

तम इव किरणैः सहस्ररश्मिः
शरकिरणैर्जहि रावणं सुतीक्ष्णैः ।
रणशिरसि निपातितस्य वक्त्रं
मुदितमनाः समुदीक्षितुं त्वरामि ॥१३॥

इत्यार्षे रामायणे युद्धकाण्डे शैलनिवेशनं नाम
पञ्चाशीतितमः सर्गः ॥

## LXXXVI.

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा तु राघवः ।
रावणस्य बधे धीमान् महात्मा मतिमादधे ॥ १ ॥
दशग्रीवस्त्वपक्रम्य मायया राक्षसर्षभः ।
कल्पयामास रुचिरं रथं पावकसंनिभं ॥ २ ॥
युक्तं मनुष्यवदनैर्हयैः परमशीघ्रगैः ।
सर्वशस्त्रायुधोपेतं कालान्तयमदर्शनं ॥ ३ ॥
मनः संकल्पगं स्वक्षं सुचक्रं सुवरूथिनं ।
प्रासमूतयुतं श्रीमत् सर्वहेमविभूषितं ॥ ४ ॥
दशग्रीवस्तमारुह्य रथं वज्रोपमैः शरैः ।
अभ्यद्रवद्रणे रामं महाघोरैः समाहितः ॥ ५ ॥
भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः ।
न समं युद्धमित्याहुर्देवगन्धर्वदानवाः ॥ ६ ॥
देवतानां वचः श्रुत्वा शतक्रतुरनन्तरं ।
प्रेषयामास रामाय रथं मातलिसारथिं ॥ ७ ॥
ततः कनकचित्राङ्गः किङ्किणीशतभूषितः ।
तरुणादित्यसंकाशो वैदूर्यसमकूवरः ॥ ८ ॥
सदश्वैः काञ्चनापीडैर्युक्तश्वेतप्रकीर्णकैः ।
हरिभिः सूर्यसंकाशैर्हेमजालविभूषितैः ॥ ९ ॥

वज्रदण्डध्वजः श्रीमान् देवराजरथो वरः ।
अभ्यवर्तत काकुत्स्थमवतीर्य त्रिपिष्टपात् ॥ १० ॥
रामलक्ष्मणसुग्रीवा हनूमान् सविभीषणः ।
अवतीर्णं रथं दृष्ट्वा सर्वे विस्मयमागताः ॥ ११ ॥
विस्मिताश्च ततश्चैते रामसुग्रीवलक्ष्मणाः ।
अङ्गदो जाम्बवांश्चैव केशरी पनसस्तथा ॥ १२ ॥
मन्त्रयन्ति स्म तेऽन्योन्यं कारणं हि भविष्यति ।
उपायेनेदृशेनायं छलितुं नूनमिच्छति ॥ १३ ॥
बहुमायाधरः क्रूरो रावणो राक्षसाधिपः ।
तेषां तद्वचनं श्रुत्वा सुग्रीवो वाक्यमब्रवीत् ॥ १४ ॥
वयं सर्वे परीक्षामो रथमश्वं ससारथिं ।
अश्वांश्च संस्थितान् भूमौ युद्धसज्जान् मनोजवान् ॥ १५ ॥
विभीषणो महाप्राज्ञो दृष्ट्वा वचनमब्रवीत् ।
सुविश्रब्धं रथं वीर आरोह त्वमशङ्कितः ॥ १६ ॥
अहं सर्वां विजानामि मायां वै राक्षसामिह ।
नैवंविधा राक्षसेन्द्रे रथा विद्यन्ति शत्रुहन् ॥ १७ ॥
निमित्तानीह पश्यामि यानि सिद्धिकराणि वै ।
अभिगम्य च काकुत्स्थं दशग्रीवस्य पश्यतः ॥ १८ ॥
अथाब्रवीत् तदा रामं सप्रतोदो रथे स्थितः ।
प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥ १९ ॥

सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय वै ।
प्रेषितस्ते महेन्द्रेण श्रीमान् शत्रुनिवर्हणः ॥ २० ॥
एतच्चैन्द्रं महच्चापं कवचं चाग्निसंनिभं ।
शराश्चादित्यसंकाशाः शक्तयश्चामलाः शिताः ॥ २१ ॥
आरुह्येमं रथं राम रावणं जहि राक्षसं ।
मया सारथिना वीर महेन्द्र इव दानवान् ॥ २२ ॥
इत्युक्तः स परिक्रम्य संप्रहृष्टतनूरुहः ।
रथं प्रदक्षिणीकृत्य मातलिं प्रतिपूज्य च ॥ २३ ॥
ततो विचिन्त्य तं देवं देवान् संपरिपूज्य सः ।
आरुरोह रथं दिव्यं जयाय परमास्त्रवित् ॥ २४ ॥
कवचं च समाबध्य माहेन्द्रं राघवस्तदा ।
श्रियाभिरुरुचे रामो लोकरक्षाधिराजवत् ॥ २५ ॥
संनियम्य तु तानश्वान् मातलिर्वरसारथिः ।
मनसा चोदयामास यथेप्सितमरिन्दमं ॥ २६ ॥
अथाभूदद्भुतं युद्धं द्वैरथं लोमहर्षणं ।
रामस्य च महाबाहोर्बलिनो रावणस्य च ॥ २७ ॥
गान्धर्वेण तु गान्धर्वं दैवं दैवेन राघवः ।
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ २८ ॥
अस्त्रं तु परमं घोरं नागानां राक्षसाधिपः ।
ससर्ज परमक्रुद्धः पुनरेव स राघवे ॥ २९ ॥

ते रावणधनुर्मुक्ताः शराः काञ्चनभूषणाः ।
अभ्यवर्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः ॥ ३० ॥
ते दीप्तवदना घोरा वमन्तो ज्वलनं मुखैः ।
राममेवाभ्यधावन्त व्यादितास्या भयावहाः ॥ ३१ ॥
तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः ।
दिशश्च संतताः सर्वाः प्रदिशश्च समावृताः ॥ ३२ ॥
रामः संपततो दृष्ट्वा पन्नगांस्तान् समन्ततः ।
अस्त्रं स गारुडं घोरं प्रादुश्चक्रे भयावहं ॥ ३३ ॥
रामेण तु शरा मुक्ता रुक्मपुङ्खाः शिखिप्रभाः ।
गारुडास्ते शरा जघ्नुः सर्परूपान् शरान् रिपोः ॥ ३४ ॥
अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः ।
अभ्यवर्षत् तदा रामं घोराभिः शरवृष्टिभिः ॥ ३५ ॥
ततः शरसहस्रेण राममक्लिष्टकारिणं ।
पूरयित्वा शरौघेन मातलिं प्रत्यविध्यत ॥ ३६ ॥
ताडयित्वा रथोपस्थे रथकेतुं च काञ्चनं ।
ऐन्द्रानश्वानभ्यहनद्धर्षवेगेन रावणः ॥ ३७ ॥
विषेदुर्देवगन्धर्वा दानवाश्चारणैः सह ।
राममार्त्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः ॥ ३८ ॥
व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः ।
रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा ॥ ३९ ॥

प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियां ।
समाक्रम्य बुधस्तस्थौ प्रजानामहिते रतः ॥ ४० ॥
सधूमः परिवृत्तोर्मिः प्रज्वलन्निव सागरः ।
उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरं ॥ ४१ ॥
ताम्रवर्णश्च परुषो मन्दरश्मिर्दिवाकरः ।
अदृश्यत कलङ्काङ्कः संसक्तो धूमकेतुना ॥ ४२ ॥
कौशलानां च नक्षत्रं ज्येष्ठामैत्राग्निदैवतं ।
आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ॥ ४३ ॥
दशग्रीवो विंशभुजः प्रगृहीतशरासनः ।
अदृश्यत तदाकम्प्यो मैनाक इव पर्वतः ॥ ४४ ॥
निरस्यमानो रामस्तु दशग्रीवेण रक्षसा ।
अशक्नुवन् वारयितुं सायकान् रणमूर्द्धनि ॥ ४५ ॥
स कृत्वा भ्रूकुटीं वक्त्रे रोषसंरक्तलोचनः ।
जगाम सुमहाक्रोधं निर्दहन्निव राक्षसं ॥ ४६ ॥

इत्यार्षे रामायणे युद्धकाण्डे द्वैरथो नाम
षडशीतितमः सर्गः ।

# युद्धकाण्डं

## LXXXVII.

तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः ।
सर्वभूतानि वित्रेसुः प्राकम्पत मही तथा ॥ १ ॥
सिंहशार्दूलवान् शैलः संचचाल च सद्रुमः ।
बभूव चापि क्षुभितः सागरः सरितां पतिः ॥ २ ॥
खराश्च खरनिर्घोषा गगने परुषा घनाः ।
औत्पातिका विनर्दन्तः समन्तात् परिचक्रमुः ॥ ३ ॥
रामं च वीक्ष्य संरब्धमुत्पातांश्च सुदारुणान् ।
त्रस्तानि सर्वभूतानि रावणे चाविशद्भयं ॥ ४ ॥
विमानस्थास्ततो देवाः सगन्धर्वा महोरगाः ।
तथा दानवदैत्याश्च मरुत्वन्तश्च खे चराः ॥ ५ ॥
ददृशुस्ते ततो युद्धं लोकसंवर्त्तकोपमं ।
नानाप्रहरणैर्भीमं शूरयोः संप्रयुध्यतोः ॥ ६ ॥
ऊचुस्तदासुराः सर्वे सुरैर्विग्रहमागताः ।
प्रेक्षमाणा महोत्पातानिदमुच्चैः समाहिताः ॥ ७ ॥
दशग्रीवं जयेत्याहुरसुराः समवस्थिताः ।
देवाश्च राममूचुस्ते त्वं जयेति पुनः पुनः ॥ ८ ॥
एतस्मिन्नन्तरे क्रुद्धो राघवाय स रावणः ।
प्रहर्तुकामो दुष्टात्मा स्पृशन् प्रहरणं महत् ॥ ९ ॥

वज्रधारं महानाभं सर्वशत्रुनिबर्हणं ।
अनौपम्यमनाधृष्यं कालेनापि दुरासदं ॥१०॥
त्रासनं सर्वभूतानां दारुणं चान्तकोपमं ।
प्रदीप्त इव रोषेण शूलं जग्राह रावणः ॥११॥
तच्छूलं परमक्रुद्धः प्रगृह्य युधि वीर्यवान् ।
अनेकैः समरे शूरै राक्षसैः परिवारितः ॥१२॥
समुद्यम्य महानादं ननाद युधि भैरवं ।
पृथिवीमन्तरीक्षं च दिशोऽथ विदिशस्तथा ॥१३॥
प्राकम्पयत् तदा शब्दो राक्षसेन्द्रस्य दारुणः ।
अतिनादेन तेनास्य घोरेणात्युग्रकर्मणः ॥१४॥
सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ।
स्वस्त्यस्तु लोकेभ्य इति तत्रोचुः परमर्षयः ॥१५॥
स गृहीत्वा महावीर्यः शूलं तद्रावणो महत् ।
विनद्य सुमहानादं रामं परुषमब्रवीत् ॥१६॥
शूलोऽयं वज्रधारस्ते राम रोषान्मयोद्यतः ।
तव भ्रातृसहायस्य सद्यः प्राणान् हरिष्यति ॥१७॥
रक्षसामद्य शूराणां निहतानां चमूमुखे ।
त्वां निहत्य रणश्लाघिन् करिष्येऽश्रुप्रमार्जनं ॥१८॥
तिष्ठेदानीं निहन्मि त्वां शूलेनानेन राघव ।
एवमुक्त्वा स चिक्षेप तं शूलं राक्षसाधिपः ॥१९॥

तं चापि राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनं ।
ससर्ज निशितान् बाणान् चापमुद्यम्य वीर्यवान् ॥ २० ॥
आपतन्तं शरौघैस्तैर्जघान युधि राघवः ।
उत्पतन्तं युगान्ताग्निं जलौघैरिव सागरः ॥ २१ ॥
निर्ददाह स तान् बाणान् रामकार्मुकनिःसृतान् ।
रावणस्य महाशूलः पतङ्गानिव पावकः ॥ २२ ॥
दृष्ट्वा तान् भस्मसाद्भूतान् शूलस्पर्शविचूर्णितान् ।
सायकानन्तरीक्षस्थान् राघवं क्रोध आविशत् ॥ २३ ॥
स तां मातलिना नीतां शक्तिं वासवसंमतां ।
जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥ २४ ॥
सा तोलिता बलवता शक्तिर्घण्टानिनादिनी ।
नभः प्रज्वालयामास युगान्तोल्केव दीप्यती ॥ २५ ॥
क्षिप्ता सा राक्षसेन्द्रस्य शूले शक्तिः पपात ह ।
प्रभिन्नो बहुधा शूलो निपपात गतद्युतिः ॥ २६ ॥
निर्बिभेद ततो बाणैर्हयानस्य मनोजवान् ।
रामस्तीक्ष्णैर्महावेगैर्वज्रस्पर्शसमैः शितैः ॥ २७ ॥
निर्बिभेदोरसि च तं रावणं निशितैस्त्रिभिः ।
राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ २८ ॥
स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः ।
राक्षसेन्द्रः समूहस्थः फुल्लाशोक इवाबभौ ॥ २९ ॥

## LXXXVIII.

स तु तेन महायुद्धे राघवेण प्रधर्षितः ।
रावणः परमामर्षी भृशं क्रोधमुपागमत् ॥ १ ॥
स दीप्तनयनः कोपाच्चापमादाय वीर्यवान् ।
प्रत्यर्दयत संक्रुद्धो राघवं पुनराहवे ॥ २ ॥
बाणधारासहस्रैस्तु स तोयद इवाम्बरे ।
राघवं रावणो वीरस्तडागमिव पूरयत् ॥ ३ ॥
पूरितः शरजालेन धनुर्मुक्तेन संयुगे ।
महागिरिरिवाकम्प्यो राघवो न व्यकम्पत ॥ ४ ॥
शरांस्तान् नरशार्दूलो रामः परमदारुणान् ।
गभस्तीनिव चार्कस्य प्रतिजग्राह वीर्यवान् ॥ ५ ॥
ततः शरसहस्रं हि क्षिप्रहस्तो निशाचरः ।
निचखानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६ ॥
स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः ।
बभौ फुल्ल इवारण्ये सुमहान् किंशुकद्रुमः ॥ ७ ॥
शराभिघातसंक्रुद्धः सोऽपि जग्राह सायकान् ।
काकुत्स्थः सुमहावेगो युगान्ताग्निसमप्रभान् ॥ ८ ॥
ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ ।
शरान्धकारे समरे नोपलक्षयतां तदा ॥ ९ ॥

# युद्धकाण्डं

अथ क्रोधसमाविष्टो रामो दशरथात्मजः ।
उवाच रावणं वीरः प्रहस्य परुषं वचः ॥१०॥
मम भार्या जनस्थानादिह ते राक्षसाधम ।
आनीता विवशा यस्मात् तस्मात् त्वं न भविष्यसि ॥११॥
मया विरहितां दीनां वर्तमानां महावने ।
वैदेहीं विवशां हृत्वा शूरोऽहमिति मन्यसे ॥१२॥
स्त्रीषु शौर्यमनाथासु परदारप्रधर्षक ।
कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे ॥१३॥
भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित ।
दर्पान्मृत्युमिवादाय शूरोऽहमिति मन्यसे ॥१४॥
शूरेण धनदभ्रात्रा बलेन मुदितेन च ।
श्लाघनीयं यशस्यं च कृतं कर्म महत् त्वया ॥१५॥
अनार्यैः सुविभीतैश्च पूज्यमानोऽथ राक्षसैः ।
उत्सेकाच्चैव दर्पाच्च शूरोऽहमिति मन्यसे ॥१६॥
मायया मृगरूपेण मद्भार्यापहृता त्वया ।
सर्वथा दर्शितं वीर्यं कृतं कर्म सुदुष्करं ॥१७॥
धिक्कृतश्चाप्यनार्यश्च गर्हितश्चैव कर्मणा ।
श्लाघसे त्वं कथं नाम यस्य ते वृत्तमीदृशं ॥१८॥
स्वपे नाहं दिवारात्रौ रौद्रकर्म निशाचर ।
न रावण लभे शान्तिं त्वामनुत्पाट्य मूलतः ॥१९॥

अत्यक्राममिमान् मासांस्त्वद्बधं परिचिन्तयन् ।
बधार्हस्य बधार्थं ते मृत्युद्वारमपावृतं ॥ २० ॥
उत्सेकादभिमानस्य गर्व्वितादृर्व्वितस्य च ।
कर्म्मणः प्राप्नुहीदानीं तस्याद्य सुमहत् फलं ॥ २१ ॥
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते ।
नास्ति लज्जा च ते सीतां चौरवद्यपकर्षतः ॥ २२ ॥
यदि मत्संनिधौ सीतापहृता स्यात् त्वया बलात् ।
खरं त्वं भ्रातरं पश्येस्तदा मत्सायकैर्हतः ॥ २३ ॥
दिष्ट्यासि मम दुर्बुद्धे चक्षुर्विषयमागतः ।
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनं ॥ २४ ॥
अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलं ।
क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांशुभिः ॥ २५ ॥
निपत्योरसि ते गृध्राः क्षितौ क्षिप्तस्य रावण ।
पिबन्तु रुधिरं हृष्टा वाणशल्यान्तरोत्थितं ॥ २६ ॥
अद्य मद्बाणभिन्नस्य गतासोः पतितस्य च ।
कर्षन्त्वन्त्राणि विहगा गरुत्मानिव पन्नगान् ॥ २७ ॥
इत्युक्त्वा तु तदा वीरो रामः शत्रुनिवर्हणः ।
राक्षसेन्द्रं समूहस्थं शरवर्षैरवाकिरत् ॥ २८ ॥
क्रुद्धस्य तस्य समरे रामस्याक्लिष्टकर्म्मणः ।
बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे ॥ २९ ॥

रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ।
प्रादुर्बभूवुश्चास्त्राणि सर्वाणि विदितात्मनः ॥ ३० ॥
प्रहरंश्च महातेजा लघुहस्ततरोऽभवत् ।
सुदृढप्रहारश्चैव दूरपातस्तथैव च ॥ ३१ ॥
शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः ।
भूय एवार्दयद्रामो रावणं राक्षसाधिपं ॥ ३२ ॥
रामेण शरवर्षैश्च वानरैश्चाश्मवृष्टिभिः ।
बध्यमानो दशग्रीवो विभ्रान्तहृदयोऽभवत् ॥ ३३ ॥
यथावन्नास्त्रमारेभे न व्यकर्षच्छरासनं ।
नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना ॥ ३४ ॥
क्षिप्ता ह्यपि शरास्तेन शस्त्राणि विविधानि च ।
नाकल्पन्त रणार्थाय मृत्युकालाभिवर्तिनः ॥ ३५ ॥
सूतस्तु रथनेतास्य तदवस्थं निशम्य तं ।
शनैर्युद्धात् स संभ्रान्तो रथं तस्यापवाहयत् ॥ ३६ ॥

इत्यार्षे रामायणे युद्धकाण्डे रावणधर्षणं नाम
सप्ताशीतितमः सर्गः — द्वैरथयुद्धं नाम
अष्टाशीतितमः सर्गः ॥

## LXXXIX.

स तु मोहात् सुसंरब्धः कृतान्तबलमोहितः ।
क्रोधेन महताविष्टो रावणः सूतमब्रवीत् ॥ १ ॥
हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितं ।
भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २ ॥
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ।
भवता शत्रुमध्यान्मे रथोऽयमपवाहितः ॥ ३ ॥
त्वयाद्य हि ममानार्य चिरकालसमर्जितं ।
यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥ ४ ॥
शत्रोर्विख्यातवीर्यस्य वञ्चनीयस्य विक्रमैः ।
पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ५ ॥
यस्त्वं रथमिमं युद्धान्नयस्यन्यत्र दुर्मते ।
सुव्यक्तोऽयं प्रतर्को मे परेण त्वं पुरस्कृतः ॥ ६ ॥
न हीदं विद्यते कर्म सुहृदः शुभकाङ्क्षिणः ।
रिपूणां सदृशं ह्येतद्यत् त्वया समनुष्ठितं ॥ ७ ॥
निवर्तय रथं शीघ्रं यावन्नापैति मे रिपुः ।
यदि न व्युत्थितो वासि स्मर्यन्ते यदिवा गुणाः ॥ ८ ॥
एवमुक्तः स परुषं हितबुद्धिरबुद्धिना ।
अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥ ९ ॥

न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुणा ।
न प्रमत्तो न निःस्नेहो विस्मृता न च ते गुणाः ॥१०॥
मया त्वद्धितकामेन यशश्च परिरक्षता ।
स्वस्नेहेन च भक्त्या च प्रियमित्यप्रियं कृतं ॥११॥
नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतं ।
किञ्चिल्लघुमिवानार्यं दोषतो गन्तुमर्हसि ॥१२॥
श्रूयतां चाभिधास्यामि यन्निमित्तं मया रथः ।
नदीवेग इवाम्भोधेः संयुगाद्विनिवर्तितः ॥१३॥
श्रमं तवावगच्छामि महता रणकर्मणा ।
न हि ते वीर सौमुख्यं प्रहर्षं चोपलक्षये ॥१४॥
भारोद्वहनस्विन्नाश्च तथेमे रथवाजिनः ।
दीना घर्मपरिश्रान्ताः कुवर्षाभिहता इव ॥१५॥
निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति मे ।
न तेष्विह निमित्तेषु तर्कयामि प्रदक्षिणं ॥१६॥
देशकालौ च विज्ञेयौ निमित्तानीङ्गितानि च ।
दैन्यं हर्षश्च खेदश्च रथिनश्च बलाबलं ॥१७॥
स्थूलनिम्नानि भूमौ च विषमाणि समानि च ।
युद्धकालश्च विज्ञेयः परस्यान्तरदर्शिना ॥१८॥
उपयानापयाने च स्थानं प्रत्यपसर्पणं ।
सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥१९॥

तव विश्रामहेतोर्हि तथैव रथवाजिनां ।
परस्परविघातार्थं क्षमं कृतमिदं मया ॥२०॥
न मया स्वेच्छया राजन् रथोऽयमपवाहितः ।
भर्तृस्नेहपरीतेन मयैतत् त्वत्कृते कृतं ॥२१॥
आज्ञापयस्व मां वीर यत् त्वं वक्ष्यसि मानद ।
तत् करिष्याम्यहं सर्वं गतानृण्येन चेतसा ॥२२॥
स तुष्टस्तेन वाक्येन रावणस्तस्य सारथेः ।
प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदं ॥२३॥
शीघ्रं रथमिमं सूत राघवाभिमुखं कुरु ।
नाहत्वा समरे शत्रुं निवर्तिष्यति रावणः ॥२४॥
ततो द्रुतं रावणवाक्यचोदितः
प्रचोदयामास रथं स सारथिः ।
निशाचरेन्द्रस्य ततो महारथः
क्षणेन रामस्य रथाग्रतोऽभूत् ॥२५॥

इत्यार्षे रामायणे युद्धकाण्डे सूतोपालम्भो नाम
नवाशीतितमः सर्गः ॥

## XC.

तमापतन्तं सहसा वेगवन्तं महास्वनं ।
रथं राक्षसराजस्य नरराजो ददर्श ह ॥१॥
कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा ।
उह्यमानमिवाकाशे विमानं सजलैर्घनैः ॥२॥
तं दृष्ट्वा मेघसंकाशमापतन्तं रथं रिपोः ।
अब्रवीन्मातलिं रामो महेन्द्ररथसारथिं ॥३॥
मातले पश्य संरब्धमापतन्तं रथं रिपोः ।
गिरेर्वज्रविभिन्नस्य दीर्यतः सदृशस्वनं ॥४॥
यथापसृत्यापतितो वेगेन महता पुनः ।
समरे हन्तुमात्मानमनेन तु कृता मतिः ॥५॥
तदप्रमादमातिष्ठ प्रत्युद्गम्य रथं रिपोः ।
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितं ॥६॥
अविक्लवमसंभ्रान्तमव्यग्रहृदयेक्षणं ।
रश्मिसंचारनियतं प्रचोदय रथं द्रुतं ॥७॥
कामं न त्वं समाधेयः पुरंदररथोचितः ।
युयुत्सुस्त्वहमेकाग्रः स्मारये त्वां न शिक्षये ॥८॥
परितुष्टस्तु रामस्य तेन वाक्येन मातलिः ।
प्रचोदयामास रथं ततः सारथिसत्तमः ॥९॥

अपसव्यं ततः कुर्वन् रावणस्य महारथं ।
चक्रोत्क्षिप्तेन रजसा रावणं स व्यधूनयत् ॥ १० ॥
ततः क्रुद्धो दशग्रीवस्ताम्रविस्फुरितेक्षणः ।
रथे प्रतिमुखं रामं सायकैस्तं व्यधूनयत् ॥ ११ ॥
धर्षणामर्षितो रामो धैर्यं रोषेण लङ्घयन् ।
जग्राह सुमहावीर्यमैन्द्रं युधि शरासनं ॥ १२ ॥
शरांश्च सुमहावेगान् सूर्यरश्मिनिभान् शितान् ।
जग्राह समरे रामः सर्पानिव महाविषान् ॥ १३ ॥
तद्बभूव महायुद्धमन्योन्यबधकाङ्क्षिणोः ।
परस्पराभिमुखयोर्मत्तयोर्द्विपयोरिव ॥ १४ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
समीयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ॥ १५ ॥
तयोः समभवद्युद्धं लघुचित्रं च सुष्ठु च ।
विजयाकाङ्क्षिणौ शूरावन्योन्यं तौ ततक्षतुः ॥ १६ ॥
अस्त्रैरस्त्राणि निघ्नन्तौ दर्शयन्तौ च लाघवं ।
शरैराशीविषाकारैरन्तरीक्षं रुरुन्धतुः ॥ १७ ॥
समुत्पेतुरथोत्पाता दारुणा लोमहर्षणाः ।
रावणस्य विनाशाय रामस्य विजयाय च ॥ १८ ॥
ववर्ष रुधिरं देवो रावणस्य रथोपरि ।
वाता मण्डलिनश्चैनमपसव्यं प्रचक्रमुः ॥ १९ ॥

महद्गृध्रकुलं चास्य भ्रममाणं नभस्तले ।
येन येन रथो याति तेन तेन प्रधावति ॥ २० ॥
संध्यया चावृता लङ्का जवापुष्पप्रकाशया ।
दृश्यते संप्रदीप्तेव दिवारात्रं प्रवृत्तया ॥ २१ ॥
सनिर्घाता महोल्काश्च समुत्पेतुर्महास्वनाः ।
रावणश्चाभवत् त्रस्तः प्रचचाल वसुन्धरा ॥ २२ ॥
राक्षसानां प्रहरतां गृहीता इव बाहवः ।
ताम्राः पीताः सिता रक्ताः प्रकीर्णाः सूर्यरश्मयः ॥ २३ ॥
दृश्यन्ते रावणस्याङ्गे पर्वतस्येव धातवः ।
गृध्रैरनुसृताश्चैव वमन्त्यो ज्वलनं मुखैः ॥ २४ ॥
प्रणेदुर्मुखमीक्षन्त्यः संरब्धमशिवं शिवाः ।
गृध्रा बलाकाः कङ्काश्च कुर्वन्तो दृष्टिरोधनं ॥ २५ ॥
अनिष्टं भैरवं नेदुः प्रहृष्टा विकृतैः स्वरैः ।
प्रतिकूलं ववौ वायुरुत्किरंश्च रजो महत् ॥ २६ ॥
तस्य रावणसैन्यस्य कुर्वन् दृष्टिविलोपनं ।
निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः ॥ २७ ॥
दुर्विषह्यस्वना घोरा विना जलधरैस्तथा ।
दिशश्च विदिशश्चैव बभूवुस्तमसावृताः ॥ २८ ॥
पांशुवर्षेण पतता दुर्दिनं च नभोऽभवत् ।
कुर्वन्तः कलहं घोरं पक्षिणोऽस्य रथाग्रतः ॥ २९ ॥

निपेतुः शतशस्तत्र दारुणा दारुणस्वनाः ।
गात्रेभ्यो विस्फुलिङ्गाश्च नेत्रेभ्यश्चाश्रुविन्दवः ॥३०॥
मुमुचुस्तस्य तुरगास्तुल्यमग्निं च वारि च ।
ईदृशा बहवस्तत्र समुत्पाता भयावहाः ॥३१॥
रावणस्य विनाशाय दारुणाः संप्रजज्ञिरे ।
रामस्यापि निमित्तानि सौम्यानि च शुभानि च ।
जयाशंसीनि दृश्यन्ते प्रादुर्भूतानि सर्वतः ॥३२॥

ततो निशम्याथ शुभानि राघवो
रणे निमित्तानि निमित्तकोविदः ।
जगाम हर्षं च परां च निर्वृतिं
चकार युद्धेऽभ्यधिकं च विक्रमं ॥३३॥

इत्यार्षे रामायणे युद्धकाण्डे निमित्तदर्शनं नाम
नवतितमः सर्गः ॥

# युद्धकाण्डं

## XCI.

ततः प्रवृत्तमत्यर्थं रामरावणयोस्तदा ।
महत् तद्द्वैरथं युद्धं सर्वलोकभयंकरं ॥ १ ॥
ततो राक्षससैन्यं च हरीणां च महद्बलं ।
प्रगृहीतप्रहरणं निश्चेष्टं व्यवतिष्ठत ॥ २ ॥
संप्रयुद्धौ हि तौ दृष्ट्वा बलिनौ रामरावणौ ।
व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः ॥ ३ ॥
नानाप्रहरणव्यग्रैर्भुजैर्विस्मितबुद्धयः ।
तस्थुः संप्रेक्षमाणास्ते जिघांसन्तौ परस्परं ॥ ४ ॥
रक्षसां राक्षसेन्द्रं च वानराणां च राघवं ।
पश्यतां विस्मिताक्षाणां सैन्यं चित्रमिवाबभौ ॥ ५ ॥
तौ तु तत्र निमित्तानि दृष्ट्वा राघवरावणौ ।
कृतबुद्धी स्थिरामर्षौ चक्रतुर्युद्धमुत्तमं ॥ ६ ॥
जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः ।
उभौ तौ वीर्यसर्वस्वं युद्धेऽदर्शयतां परं ॥ ७ ॥
ततः क्रोधाद्दशग्रीवः शरान् संधाय वीर्यवान् ।
मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितं ॥ ८ ॥
ते शरास्तमनासाद्य पुरन्दररथध्वजं ।
रथशक्तिं परामृष्य निपेतुर्धरणीतले ॥ ९ ॥

ततो रामोऽतिसंक्रुद्धश्चापमाकृष्य वीर्यवान् ।
कृतप्रतिकृतं कर्तुं मनसा संप्रचक्रमे ॥ १० ॥
रावणध्वजमुद्दिश्य मुमोच स तु सायकं ।
महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा ॥ ११ ॥
दशग्रीवध्वजं छित्त्वा जगाम स महीं शरः ।
स निकृत्तोऽपतद्भूमौ रावणस्य रथध्वजः ॥ १२ ॥
शक्रवज्राभिनिहतः पर्वतात् तृणराडिव ।
ध्वजस्योन्मथनं दृष्ट्वा रावणः स महाबलः ॥ १३ ॥
क्रोधजेनाग्निना संख्ये प्रदीप्त इव चाभवत् ।
स रोषवशमापन्नः शरवर्षं मुमोच ह ॥ १४ ॥
रामस्य तुरगांश्चैव शरैर्विव्याध दारुणैः ।
ते हता हरयस्तस्य नास्खलन् नापि विव्यथुः ॥ १५ ।
बभूवुः सुस्थहृदयाः पद्मनालैरिवाहताः ।
तेषामसंभ्रमं दृष्ट्वा वाजिनां रावणस्तदा ॥ १६ ॥
भूय एव सुसंरब्धः शरवर्षमवासृजत् ।
गदाश्च परिघांश्चैव चक्राणि मुषलानि च ॥ १७ ॥
तोमरानर्धचन्द्रांश्च तथा शूलपरश्वधान् ।
मुद्गरानङ्कुशान् भल्लान् भुशुण्डीः कुणपांस्तथा ॥ १८ ॥
मायाविहितमेतत् तु शरवर्षमवासृजत् ।
त्रासनं सर्वभूतानां भीमं भीमप्रतिस्वनं ॥ १९ ॥

तद्वर्षमपतद्युद्धे नैकशस्त्रमयं महत् ।
विमुच्य राघवरथं समन्ताद्वानरे बले ॥ २० ॥
तान् दृष्ट्वा निस्फलांस्तत्र रावणो राक्षसाधिपः ।
राघवस्य बधार्थाय शरानाशीविषोपमान् ॥ २१ ॥
सहस्रशस्ततश्चान्यानश्रान्तहृदयोद्यतः ।
मुमोच स दशग्रीवो निःशङ्कनान्तरात्मना ॥ २२ ॥
रथे ध्वजे शरीरे च शीघ्रहस्तो निशाचरः ।
व्यायच्छमानं तं दृष्ट्वा तत्परं रावणं रणे ॥ २३ ॥
प्रहसन्निव काकुत्स्थः संदधे सायकान् शितान् ।
स मुमोच ततो वाणान् रणे शतसहस्रशः ॥ २४ ॥
सायकैरन्तरीक्षं च स चकार निरन्तरं ।
ततस्ताभ्यां प्रमुक्तेन शरवर्षेण भास्वता ॥ २५ ॥
शरभूतमिवाभाति द्वितीयं भास्वराम्बरं ।
नानिमित्तोऽभवद्बाणो न निर्भेद्यो न निष्फलः ॥ २६ ॥
तथा विसृजतोर्वाणान् रामरावणयोर्मृधे ।
रावणस्य हयान् रामो हयान् रामस्य रावणः ॥ २७ ॥
जघ्नतुस्तौ तदान्योन्यं कृतानुकृतकारिणौ ।
परस्परबधे वीरौ यतमानौ परंतपौ ॥ २८ ॥

इत्यार्षे रामायणे युद्धकाण्डे ध्वजोन्मथनं नाम
एकनवतितमः सर्गः ॥

## XCII.

तौ तथा युध्यमानौ तु समरे रामरावणौ ।
ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥ १ ॥
अर्दयन्तौ हि समरे संस्थितौ रथयोस्तदा ।
परस्परमतिक्रुद्धौ क्रूररूपौ बभूवतुः ॥ २ ॥
मण्डलानि च वीथीश्च जिह्माः सर्पगतीस्तथा ।
दर्शयन्तौ बहुविधान् सूतसामर्थ्यजान् गुणान् ॥ ३ ॥
अर्दयन् रावणं रामो राघवं चापि रावणः ।
गतीर्दश समापन्नौ प्रवर्तननिवर्तनैः ॥ ४ ॥
क्षिपन्तौ शरजालानि तावुभौ तु रथे स्थितौ ।
चेरतुस्तौ रणगतौ संरब्धौ जलदाविव ॥ ५ ॥
दर्शयित्वा ततस्तौ तु गतीर्बहुविधा रणे ।
अन्योन्यं चाप्यभिमुखौ पुनरेव व्यतिष्ठतां ॥ ६ ॥
धूर्यं धूर्येण रथयोर्वक्त्रैर्वक्त्राणि वाजिनां ।
पताकाश्च पताकाभिः समीयुः स्थितयोस्तयोः ॥ ७ ॥
रावणस्य ततो रामो धनुर्मुक्तैः शितैः शरैः ।
चतुर्भिश्चतुरो दीप्तैः प्रत्यपासर्पयद्धयान् ॥ ८ ॥
स क्रोधवशमापन्नो हयानामपसर्पणात् ।
मुमोच निशितान् बाणान् राघवाय निशाचरः ॥ ९ ॥

सोऽतिविद्धो बलवता दशग्रीवेण राघवः ।
जगाम न विकारं च न चापि व्यथितोऽभवत् ॥१०॥
चिक्षेपाथ पुनर्बाणान् वज्रपातसमस्वरान् ।
सारथिं वज्रपाणेस्तु समुद्दिश्य निशाचरः ॥११॥
मातलेस्ते महावेगाः शरीरे पतिताः शराः ।
न सूक्ष्ममपि संमोहं व्यथां वा चक्रुराहवे ॥१२॥
तया धर्षणया क्रुद्धो मातलेश्च तथात्मनः ।
अग्नेराज्याहुतस्येव तस्य कोपो व्यजायत ॥१३॥
प्रगृह्य राघवश्चाशु विकृष्य बलवद्धनुः ।
क्षुरेण पृथुधारेण चकर्तास्य शरासनं ॥१४॥
द्वितीयेनास्य बाणेन हस्तावापं न्यपातयत् ।
ततोऽस्य कवचं बाणैर्बिभेद बहुधा दृढैः ॥१५॥
स छिन्नधन्वा पौलस्त्यो रथादादाय कार्मुकं ।
ववर्ष शरवर्षेण सरथं राघवं पुनः ॥१६॥
गदानां मुषलानां च परिघाणां च निस्वनः ।
बभूव तस्मिन् समरे पततां राघवं प्रति ॥१७॥
राघवश्चापि दुर्धर्षं घोरं शस्त्रमयं महत् ।
शरवर्षं तु मेधावी प्रत्यवारयदायुधैः ॥१८॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
चिन्तामभ्यगमन् सर्वे समं युद्धं निरीक्ष्य तं ॥१९॥

स्वस्त्यस्तु ब्राह्मणेभ्यश्च लोकास्तिष्ठन्तु शाश्वतः ।
जयतां राघवः संख्ये रावणं राक्षसेश्वरं ॥ २० ॥
एवमूचुर्हि पश्यन्तस्तद्युद्धं रामरक्षसोः ।
ततः संधाय रामस्तु क्षुरमाशीविषोपमं ॥ २१ ॥
रावणस्य शिरः कायाच्चिच्छेद परमास्त्रवित् ।
तच्छिन्नं पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥ २२ ॥
तथैव सदृशं चान्यद्रावणस्योत्थितं शिरः ।
तत् क्षिप्तं क्षिप्रहस्तेन राघवेण महात्मना ॥ २३ ॥
द्वितीयं रावणशिरश्छिन्नमेव हि लक्ष्यते ।
छिन्नमात्रं शिरस्तच्च पुनरन्यदलक्षयत् ॥ २४ ॥
तदप्यशनिसंकाशैश्छिन्नं रामेण लक्ष्यते ।
छिद्यते जायते चैव रावणस्य पुनः पुनः ॥ २५ ॥
रामेण समरे रोषाद्राक्षसस्य दुरात्मनः ।
एवमेव रणे तस्य रामो लेभे न हि क्षयं ॥ २६ ॥
शतमेकोत्तरं छिन्नं शिरसां तुल्यवर्चसां ।
न चैव राक्षसेन्द्रस्य दृश्यते जीवितक्षयः ॥ २७ ॥
ततः सर्वास्त्रविच्छूरः कौशल्यानन्दिवर्धनः ।
विमर्षैर्बहुभिर्युक्तश्चिन्तयामास राघवः ॥ २८ ॥
मारीचो निहतो येन खरो येन च दूषणः ।
वाली च समरामर्षो विराधो दण्डके वने ॥ २९ ॥

इमे ते सायकाः सर्वे युद्धे प्रत्ययिता मम ।
किन्नु तत् कारणं येन रावणे मन्दतेजसः ॥ ३० ॥
इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे ।
ववर्ष शरवर्षं च राघवो राक्षसोपरि ॥ ३१ ॥
रावणस्तु ततः क्रुद्धो रथस्थो राक्षसेश्वरः ।
तदा मार्गणवर्षेण रामं प्रत्यर्दयद्रणे ॥ ३२ ॥
तत् प्रवृत्तं महद्युद्धं तुमुलं लोमहर्षणं ।
अन्तरीक्षे च भूमौ च पुनश्च गिरिमूर्द्धनि ॥ ३३ ॥
देवदानवयक्षाणां पिशाचोरगरक्षसां ।
पश्यतां तन्महद्युद्धं सप्तरात्रमवर्तत ॥ ३४ ॥
नैव रात्रिं न दिवसं न मुहूर्त्तं न च क्षणं ।
रामरावणयोर्युद्धं विश्राममगमत् तदा ॥ ३५ ॥
अथ संस्मारयामास राघवं मातलिस्तदा ।
अजानन्निव किं वीर त्वमेवमनुवर्तसे ॥ ३६ ॥
अद्य जन्म यथार्थं ते भविष्यति महाबल ।
राक्षसेन्द्रं दुरात्मानं हत्वैनं रावणं रणे ॥ ३७ ॥
अद्य वीर सुयुद्धं ते दृष्ट्वा दिव्येन चक्षुषा ।
वृतो देवर्षिभिः श्रीमान् सुप्रीतोऽस्तु पितामहः ॥ ३८ ॥
अद्य देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
निर्भया विचरिष्यन्ति त्वत्कृतेन नरोत्तम ॥ ३९ ॥

विसृजास्मै बधाय त्वमस्त्रं पैतामहं प्रभो ।
विनाशो निर्मितो ह्यस्य स्वयमेव स्वयम्भुवा ॥ ४० ॥
उत्तमाङ्गं न चैतस्य छेत्तव्यं राघव त्वया ।
नैष मूर्द्ध्नि प्रभो बध्यो बध्य एष हि मर्मसु ॥ ४१ ॥
ततः संस्मारितो रामस्तेन वाक्येन मातलेः ।
जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगं ॥ ४२ ॥
यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।
ब्रह्मदत्तं स तं वाणं जग्राह युधि तद्बधे ॥ ४३ ॥
ब्रह्मणा निर्मितं पूर्वमिन्द्रस्यार्थेऽमितौजसा ।
दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ४४ ॥
पवनो यत्र पुङ्खे तु फले पावकभास्करौ ।
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ४५ ॥
पर्वस्वपि च विन्यस्ता ये भवन्ति भयावहाः ।
धनदो वरुणो वज्री पाशहस्तस्तथान्तकः ॥ ४६ ॥
ज्वाल्वल्यमानं वपुषा सुपुङ्खं हेमभूषितं ।
तेजसा सर्वभूतानां कृतं भास्करवर्चसा ॥ ४७ ॥
सधूममिव कालाग्निं दीप्यमानं रविं यथा ।
नरनागाश्ववृन्दानां भेदनं क्षिप्रकारिणं ॥ ४८ ॥
नानारुधिरदिग्धाङ्गं मेदः सिक्तं सुदारुणं ।
सर्ववित्रासनं भीमं लेलिहानमिवोरगं ॥ ४९ ॥

काकगृध्रबलाकानां गोमायुमृगरक्षसां ।
नित्यं भक्ष्यप्रदं युद्धे यमरूपं भयावहं ॥५०॥
तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनं ।
द्विषतां कीर्त्तिहरणं प्रहर्षकरमात्मनः ॥५१॥
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ।
वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥५२॥
तस्मिन् संधीयमाने तु राघवेण शरोत्तमे ।
वित्रेसुः सर्वभूतानि प्रचचाल वसुन्धरा ॥५३॥
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकं ।
चिक्षेप परमामर्षी तं शरं मर्मघातिनं ॥५४॥
स शक्रधनुषा युक्तो हन्तुं शत्रुं महात्मना ।
संहितः परमास्त्रेण नियोज्य निःसृतः शरः ॥५५॥
धूमपूर्वं प्रजज्वाल प्राप्य वायुपथं महत् ।
स वज्र इव दुर्धर्षो वज्रपाणिविसर्जितः ॥५६॥
कृतान्त इव चावार्यो न्यपतद्राक्षसोपरि ।
बिभेद हृदयं चैव रावणस्य दुरात्मनः ॥५७॥
रुधिरार्द्रः स वेगेन जीवितान्तकरः शरः ।
रावणस्याहरत् प्राणान् भित्त्वा चैव क्षितिं गतः ॥५८॥
स शरो रावणं हत्वा रुधिरार्द्रकृतच्छविः ।
कृतकर्मा निवृत्ताशु स्वतूणं पुनराविशत् ॥५९॥

तस्य हस्तोद्धृतं चाशु कार्मुकं तत् ससायकं ।
प्राभ्रश्यत सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ ६० ॥
गतासुर्गतवेगोऽसौ राक्षसेन्द्रो गतद्युतिः ।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ ६१ ॥
दशनल्वसुविस्तीर्णो रथोऽप्यस्य व्यशीर्यत ।
रावणस्य शरीरं तु पञ्चनल्वानुविस्तृतं ॥ ६२ ॥
तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः ।
हतनाथा भयत्रस्ताः सर्वतो विप्रदुद्रुवुः ॥ ६३ ॥
तेऽर्दिता वानरैर्हृष्टैर्लङ्कामभ्यपतन् भयात् ।
हताश्रयत्वात् करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ ६४ ॥
ततो विनेदुः संहृष्टा वानरा जितकाशिनः ।
वदन्तो रामविजयं रावणस्य बधं तथा ॥ ६५ ॥
अथान्तरीक्षे व्यनदद्भृशं त्रिदशदुन्दुभिः ।
निहते राक्षसे तस्मिन् रावणे लोककण्टके ॥ ६६ ॥
जयेति सुमहान् नाद आकाशे समजायत ।
दिव्यगन्धवहश्चैव मारुतः सुसुखो ववौ ॥ ६७ ॥
निपपातान्तरीक्षाच्च पुष्पवृष्टिस्तदा भुवि ।
किरन्ती राघवरथं दिव्यैः पुष्पैः सुगन्धिभिः ॥ ६८ ॥
राघवस्तुतिसंयुक्ता गगने च विचुक्रुशुः ।
साधु साध्विति हृष्टानां देवानां शोभना गिरः ॥ ६९ ॥

नारदस्तुम्बुरुर्गार्ग्यः सुदामाथ हाहा हूहूः ।
एते गन्धर्वराजानो राघवस्याग्रतो जगुः ॥ ७० ॥
उर्वशी मेनका रम्भा पञ्चचूडा तिलोत्तमा ।
उपानृत्यंस्तु काकुत्स्थं प्रहृष्टा रक्षसो बधात् ॥ ७१ ॥
आविवेश महान् हर्षो देवानां सह चारणैः ।
रावणे निहते घोरे सर्वलोकभयावहे ॥ ७२ ॥
ततः सकामं सुग्रीवमङ्गदं सुहृदं तथा ।
प्रीत्या परमया युक्तो हत्वा राक्षसपुङ्गवं ॥ ७३ ॥
ऋक्षवानरगोपुच्छान् लक्ष्मणं सविभीषणं ।
उवाचेदं तदा सर्वान् राघवो मधुरं वचः ॥ ७४ ॥
भवतां बाहुवीर्येण विक्रमेण बलेन च ।
हतो राक्षसराजोऽयं रावणो लोकरावणः ॥ ७५ ॥
अत्यद्भुतमिदं कर्म भवतां कीर्त्तिवर्धनं ।
कथयिष्यन्ति पुरुषा यावद्भूमिर्धरिष्यति ॥ ७६ ॥
एतदन्यच्च विविधं युक्तमर्थ्यमनुष्ठितं ।
पुनः पुनरुवाचैनान् रामः संहर्षयन् गिरा ॥ ७७ ॥
एवमुक्ताश्च ते तेन हृष्टा राघवमब्रुवन् ।
तवैव तेजसा दग्धः पापोऽयं सपुरःसरः ॥ ७८ ॥
अस्माकमल्पवीर्याणां शक्तिः का रघुनन्दन ।
कर्तुमेतद्रणे कर्म यत् त्वया सुमहत् कृतं ॥ ७९ ॥

एवं तैः पृथिवीपालः पूज्यमानः समन्ततः ।
महद्भिः शुशुभे श्रीमान् देवैरिव शतक्रतुः ॥ ८० ॥

ततो जगाम प्रशमं च मारुतो
दिशः प्रसेदुर्विमलं नभोऽभवत् ।
स्थिता महेन्द्रप्रमुखाश्च देवताः
स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ८१ ॥

ततस्तु सुग्रीवविभीषणादयः
सुहृद्विशेषाः सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं
रणेऽभ्यनन्दन् विधिवत् चपूजयन् ॥ ८२ ॥

स तु निहतरिपुः स्थिरप्रतिज्ञः
स्वबलाभिवृतो रणे व्यराजत ।
दशरथकुलनन्दनो महौजास्
त्रिदशगणैरभिसंवृतो यथेन्द्रः ॥ ८३ ॥

इत्यार्षे रामायणे युद्धकाण्डे रावणबधो नाम
द्विनवतितमः सर्गः ॥

# युद्धकाण्डं

## XCIII.

रावणं पतितं दृष्ट्वाससारथिपुरोगमं ।
रामस्य भयवित्रस्ता दिशो दश तु विद्रुताः ॥ १ ॥
सागरान्तर्गताः केचित् केचित् पर्वतमाश्रिताः ।
याता रसातलं केचित् केचिद्वनमपाश्रिताः ॥ २ ॥
समुद्रं पतिताः केचिद्राक्षसा विद्रुता रणे ।
प्रविष्टाश्चापरे लङ्कां पुत्रस्नेहेन राक्षसाः ॥ ३ ॥
हाहाभूता तदा सर्वा बालवृद्धजनाकुला ।
लङ्का प्रचलिता सर्वा राक्षसानां च विद्रवे ॥ ४ ॥
वानराश्च महात्मानो लङ्कां गच्छन्ति चापरे ।
प्रविशन्ति ततो गत्वा वानराः सिंहविक्रमाः ॥ ५ ॥
पश्यन्तो हर्षिताः सर्वे सर्वरत्नोपशोभितां ।
द्वारो मणिमयाश्चैव तपनीयेन रञ्जिताः ॥ ६ ॥
दशयोजनविस्तीर्णां त्रिंशद्योजनमायतां ।
अष्टद्वारां पुरीं लङ्कामष्टप्राकारवेष्टितां ॥ ७ ॥
शारदाभ्रप्रतीकाशां निर्मितां विश्वकर्मणा ।
सुवर्णरचितां दिव्यामुद्यानैरुपशोभितां ॥ ८ ॥
मणिमुक्ताप्रबालैश्च पताकाभिश्च शोभितां ।
दृष्ट्वा विभूषितां लङ्कां वानरा विस्मयं गताः ॥ ९ ॥

भ्रातरं तु हतं दृष्ट्वा रावणं रामसायकैः ।
शोकवेगपरीतात्मा विललाप विभीषणः ॥१०॥
वीर विक्रान्त विख्यात युद्धे सर्वास्त्रकोविद ।
महार्हशयनोपेत किं शेषे हा हतो भुवि ॥११॥
निःक्षिप्य दीर्घौ निश्चेष्टौ भुजौ चन्दनभूषितौ ।
मुकुटेनापवृत्तेन भास्कराकारवर्चसा ॥१२॥
तदिदं वीर संप्राप्तं यन्मया पूर्वमीरितं ।
काममोहपरीतस्य तद्धि न रुचितं वचः ॥१३॥
यद्दर्पान्न प्रहस्तो वा नेन्द्रजिद्वापरे जनाः ।
मद्वाक्यमन्ववर्तन्त तस्योदर्कोऽयमागतः ॥१४॥
गतः सत्यस्य संक्षेपः प्रसवानां गतिर्गता ।
आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः ॥१५॥
चित्रभानुः प्रशान्तार्चिः सिक्तो घटशतैरिव ।
रावणाग्निः प्रशान्तोऽद्य राममेघशराम्बुभिः ॥१६॥
अस्मिन् निपतिते भूमौ वीरे शस्त्रभृतां वरे ।
किं शेषमिह लोकस्य हतवीरस्य साम्प्रतं ॥१७॥

धृतिप्रबालः प्रसवाभिपुष्पस्
तपःफलः शौर्यनिबद्धमूलः ।
रणे महान् राक्षसराजवृक्षः
संवर्तितो राघवमारुतेन ॥१८॥

तेजोविषाणः कुलवंशकोपो
मदप्रसेकाकुलचण्डहस्तः ।
इक्ष्वाकुसिंहावगृहीतदेहः
सुप्तः क्षितौ रावणगन्धहस्ती ॥ १९ ॥

ततस्तद्धेतुमद्वाक्यं परिदृष्टार्थनिश्चयः ।
रामः शोकसमाविष्टं प्रत्युवाच विभीषणं ॥ २० ॥
नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः ।
अनिवृत्तमहोत्साहः पतितोऽयमशङ्कितः ॥ २१ ॥
नैवं विनष्टं शोचन्ति क्षत्रधर्मव्यवस्थिताः ।
बुद्धिमन्तोऽभिघाताय निपतन्ति रणाजिरे ॥ २२ ॥
येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता ।
तस्मिन् कालसमायुक्ते न कालः परिशोचितुं ॥ २३ ॥
नैकान्तविजयं युद्धं भूतपूर्वं कदाचन ।
परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे ॥ २४ ॥
इयं हि पूर्वनिर्दिष्टा गतिः क्षत्रियशाश्वती ।
क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥ २५ ॥
तदेवं निश्चयं ज्ञात्वा सत्वमास्थाय विज्वरः ।
यदिहानन्तरं कार्यं तदिदानीं विचिन्तय ॥ २६ ॥
तमुक्तवन्तं विक्रान्तं राजपुत्रं विभीषणः ।
उवाच शोकसंतप्तो भ्रातुर्हितमनन्तरं ॥ २७ ॥

योऽयं विमर्देषु न भग्नपूर्वः
समेत्य देवैः सह वासवेन ।
भवन्तमासाद्य रणे स भग्नो
वेलां समासाद्य यथा समुद्रः ॥ २८ ॥

एतेन मित्राणि सुरक्षितानि
भुक्ताश्च भोगाः सुभृताश्च भृत्याः ।
धनानि मित्रेषु समर्पितानि
वैराण्यमित्रेषु च पातितानि ॥ २९ ॥

अभ्याहितश्चैव महातपाश्च
वेदान्तगः कर्मसु चाग्र्यवीरः ।
एतस्य यत् प्रेतगतस्य कृत्यं
क्रियेत तद्राम तव प्रसादात् ॥ ३० ॥

स तेन वाक्यैः करुणैर्महात्मा
संबोधितः साधु विभीषणेन ।
आज्ञापयामास नरेन्द्रसूनुः
स्वयं समाधानमदीनसत्त्वः ॥ ३१ ॥

विजयान्तानि वैराणि निवृत्ते शान्तिरिष्यते ।
क्रियतामस्य सत्कारो ममाप्येष यथा तव ॥ ३२ ॥

इत्यार्षे रामायणे युद्धकाण्डे विभीषणविलापो नाम
त्रिनवतितमः सर्गः ॥

# युद्धकाण्डं

## XCIV.

रावणं निहतं श्रुत्वा राघवेण महात्मना ।
अन्तःपुराद्विनिष्पेतू राक्षस्यः शोकमूर्च्छिताः ॥ १ ॥
बहुशश्चेष्टमानाश्च संबद्धाः क्षितिपांशुभिः ।
विमुक्तकेश्यो दुःखार्त्ता गावो नष्टर्षभा इव ॥ २ ॥
उरः शिरांसि निघ्नन्त्यो बाहुभिः कनकोज्ज्वलैः ।
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः ॥ ३ ॥
प्रविश्यायोधनं घोरं विचिन्वन्ति हतं पतिं ।
हार्यपुत्रेति वादिन्यो हा नाथेति च सर्वशः ॥ ४ ॥
परिपेतुः कबन्धाङ्कां क्षितिं शोणितकर्दमां ।
गृध्रगोमायुसंकीर्णां कङ्कवायसनादितां ॥ ५ ॥
ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपरायणाः ।
करेणु इव क्रन्दन्त्यो न रेजुर्हतयूथपाः ॥ ६ ॥
ददृशुस्तं महाकायं वीर्यवन्तं महाद्युतिं ।
रावणं पतितं भूमौ नीलाञ्जनचयोपमं ॥ ७ ॥
ताः पतिं पतितं दृष्ट्वा शयानं रणपांशुषु ।
निपेतुस्तस्य गात्रेषु छिन्ना वनलता इव ॥ ८ ॥
बहुमानात् परिष्वज्य काचिदेवं रुरोद ह ।
चरणौ काचिदालिङ्ग्य काचित् कण्ठे विषस्वजे ॥ ९ ॥

उत्क्षिप्य च भुजौ काचिद्भूमौ वै परिवर्त्तते ।
हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागता ॥ १० ॥
काचिदङ्के शिरः कृत्वा रुरोद भृशदुःखिता ।
स्नपयन्ती मुखं वाष्पैस्तुषारैरिव पङ्कजं ॥ ११ ॥
एवमार्त्ताः पतिं दृष्ट्वा रावणं निहतं रणे ।
चक्रुर्बहुविधं शोकं भूयश्च पर्य्यदेवयन् ॥ १२ ॥
येन विद्रावितः शक्रो येन विद्रावितो यमः ।
येन वैश्रवणो भ्राता पुष्पकेण वियोजितः ॥ १३ ॥
गन्धर्व्वाणामृषीणां च सुराणामपि चासकृत् ।
भयं येन महद्दत्तं सोऽयं शेते रणे हतः ॥ १४ ॥
असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा ।
भयं यो नाभिजानाति तस्येदं मानुषाद्भयं ॥ १५ ॥
अबध्यो देवतानां च तथा दानवरक्षसां ।
हतः सोऽयं रणे शेते मानुषेणाल्पतेजसा ॥ १६ ॥
यो न शक्यः सुरैर्जेतुं न यक्षैर्नासुरैस्तथा ।
सोऽयं कश्चिदिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥ १७ ॥
एवं वदन्त्यो बहुशो रुरुदुस्तस्य योषितः ।
भूय एव च दुःखार्त्ता विलेपुश्च ततस्ततः ॥ १८ ॥
अशृण्वता ते सुहृदां सततं हितवादिनां ।
ऐश्वर्य्यमदमत्तेन वयमात्मा च पातिताः ॥ १९ ॥

ब्रुवाणो हि हितं वाक्यं स्निग्धं भ्राता विभीषणः ।
धृष्टं परुषितो मोहात् त्वयात्मवधकाङ्क्षिणा ॥ २० ॥
यदि निर्यातिता सीता भवेद्रामस्य मैथिली ।
नैवं स्याद्व्यसनं घोरमिदं मूलहरं हि नः ॥ २१ ॥
कृतकामो भवेद्भ्राता रामो मित्रकुलं भवेत् ।
वयं चाविधवाः सर्वाः सकामा न च शत्रवः ॥ २२ ॥
त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् ।
राक्षसा वयमात्मा च युगपद्विनिपातिताः ॥ २३ ॥
कामं न कामकारोऽस्ति तव राक्षसपुङ्गव ।
दैवं चेष्टयते सर्वं कृतं दैवेन हन्यते ॥ २४ ॥
वानराणां च नाशोऽयं राक्षसानां च संयुगे ।
तव चैव महाबाहो दैवयोगादुपस्थितः ॥ २५ ॥
नैवार्थेन न सान्त्वेन विक्रमेण न चाज्ञया ।
शक्या दैवगतिर्लोके निवर्तयितुमोजसा ॥ २६ ॥
विलेपुरेवं दीनास्ता राक्षसाधिपतेः स्त्रियः ।
कुरर्य इव दुःखार्त्ता बाष्पव्याकुलितेक्षणाः ॥ २७ ॥
तासां रुदितशब्देन राक्षसाधिपयोषितां ।
प्रगीतेव पुरी लङ्का बभूव च रणाजिरे ॥ २८ ॥

इत्यार्षे रामायणे युद्धकाण्डे अन्तःपुरस्त्रीविलापो नाम
चतुर्नवतितमः सर्गः ॥

## XCV.

तासां विलपमानानां तत्र राक्षसयोषितां ।
ज्येष्ठा पत्नी प्रिया दीना भर्तारं समुदैक्षत ॥ १ ॥
दशग्रीवं हतं दृष्ट्वा रामेणाद्भुतकर्मणा ।
पतिं मन्दोदरी तत्र कृपणं पर्यदेवयत् ॥ २ ॥
ननु नाम महाबाहो तव वैश्रवणानुज ।
क्रुद्धस्य प्रमुखे स्थातुं न समर्थः शतक्रतुः ॥ ३ ॥
ऋषयश्चापि देवाश्च गन्धर्वाश्च यशस्विनः ।
यक्षाश्चैव तवोद्विग्नाश्चारणाश्च दिशो गताः ॥ ४ ॥
स त्वं मानुषमात्रेण युधि रामेण पातितः ।
न व्यपत्रपसे स्वप्तुं किमिदं राक्षसाधिप ॥ ५ ॥
कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितं ।
अविषह्यं जघान त्वां मानुषो वानरानुगः ॥ ६ ॥
मानुषाणामविषये चरतः कामरूपिणः ।
विनाशस्तव रामेण संयुगे नोपलभ्यते ॥ ७ ॥
न चैतत् कर्म रामस्य श्रद्दधामि चमूमुखे ।
सर्वतः समुदीर्णस्य तव तेनाभिमर्दनं ॥ ८ ॥
अथवा रामरूपेण विष्णुश्च स्वयमागतः ।
तव नाशाय मायाभिः प्रविश्यानुपलक्षितः ॥ ९ ॥

यदैव हि जनस्थाने राक्षसैर्बहुभिर्वृतः ।
खरस्तव हतो भ्राता तदैवासौ न मानुषः ॥१०॥
यदैव हि वने बाली त्वत्तः शतगुणो बले ।
रामेण निहतः संख्ये तदैवासौ न मानुषः ॥११॥
यदैव नगरीं लङ्कां दुष्प्रधर्षां सुरैरपि ।
प्रविष्टो हनुमान् वीरस्तदैव व्यथिता वयं ॥१२॥
यदैव वानरैर्बद्धः सेतुर्घोरमहार्णवे ।
तदैव हृदयेनाहं शङ्के राममानुषं ॥१३॥
क्रियतामविरोधस्तु राघवेणेति यन्मया ।
उच्यमानो न गृह्णीषे तस्येयं व्युष्टिरागता ॥१४॥
अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव ।
ऐश्वर्यस्य विनाशाय शरीरस्य ममैव हि ॥१५॥
सन्त्यस्याः प्रमदास्तुल्या रूपेणाभ्यधिकास्तु याः ।
अनङ्गवशमापन्नस्त्वं तु तन्नावबुध्यसे ॥१६॥
न कुलेन न रूपेण न दाक्षिण्येन मैथिली ।
ममाधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे ॥१७॥
साग्रं तु स्त्रीसहस्रं वै रूपयौवनशालि च ।
न तेऽभिरुचितं वीर कालेन हृतचेतसः ॥१८॥
सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः ।
तव त्वयं रणे मृत्युर्मैथिलीकृतलक्षणः ॥१९॥

मैथिली मह रामेण विशोका विचरिष्यति ।
अल्पपुण्या त्वहं घोरे पतिता शोकसागरे ॥ २० ॥
कैलासे नन्दने मेरौ तथा चैत्ररथे वने ।
देवोद्यानेषु रम्येषु विहृत्य सहिता त्वया ॥ २१ ॥
विमानेनार्कवर्णेन प्रयाता विपुलश्रिया ।
पश्यन्ती विविधान् देशांस्तांस्तांश्चित्रस्रगम्बरा ॥ २२ ॥
साद्यप्रभृति कामिभ्यः स्पृहयिष्यामि दुःखिता ।
भ्रंशिता कामभोगेभ्यः साध्वी वीर बधात् तव ॥ २३ ॥
हा राजन् सुकुमारं ते सुभ्रुसुव्यक्तलोचनं ।
किरीटकूटैर्ज्वलितं भृङ्गारं दीप्तकुण्डलं ॥ २४ ॥
मदव्याकुललोलाक्षं चारु वल्गुस्मितं शुभं ।
तदेवाद्य शरीरान्ते वक्त्रं न भ्राजते प्रभो ॥ २५ ॥
रामसायकनिर्भिन्नं पतितं रणभूमिषु ।
विकीर्णमेदोमस्तिस्कं रूक्षं स्यन्दनरेणुभिः ॥ २६ ॥
हा पश्चिमा मे संवृत्ता वैधव्यकरणी निशा ।
यामयासीन्न संबुद्धा कदाचिदपि मन्दया ॥ २७ ॥
पिता दानवराजो मे भर्ता मे राक्षसेश्वरः ।
पुत्रो मे शत्रुनिर्जेता इत्यहं गर्विताभवं ॥ २८ ॥
सेदानीं बन्धुभिर्हीना हीना नाथेन च त्वया ।
विहीना कामभोगैश्च शोचिष्ये शाश्वतीः समाः ॥ २९ ॥

सत्यं तच्च महाभागो देवरो मे यदब्रवीत् ।
सर्वराक्षसमुख्यानां विनाशं समुपस्थितं ॥ ३० ॥
कामक्रोधसमुत्थेन व्यसनेन विसर्पिणा ।
त्वया कृतमिदं सर्वमनाथं राक्षसं कुलं ॥ ३१ ॥
नापि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः ।
स्त्रीस्वभावात् तु मे बुद्धिः कारुण्ये परिवर्तते ॥ ३२ ॥
सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः ।
आत्मानमनुशोचामि त्वद्वियोगात् सुदुःखिता ॥ ३३ ॥
अप्रहृष्टा नदन्त्येताः पत्न्यस्ते रजनीचर ।
सर्वास्तव वियोगेन पतिताः शोकसागरे ॥ ३४ ॥
नीलजीमूतसंकाशः पीताम्बरसुसंवृतः ।
सर्वगात्राणि विक्षिप्य किं शेषे रजनीचर ॥ ३५ ॥
प्रसुप्त इव शोकार्त्तां किं मां न प्रतिभाषसे ।
दानवेन्द्रस्य दौहित्रीं मयस्य तनयां विभो ॥ ३६ ॥
उत्तिष्ठ राजन् किं शेषे किं च मां नाभिभाषसे ।
प्रियां पत्नीं महाबाहो भज मां पुत्रमातरं ॥ ३७ ॥
येन सूदयसे शत्रून् समरे सूर्यतेजसा ।
वज्रं वज्रधरस्येव सोऽयं शूलोऽवमर्दितः ॥ ३८ ॥
परिघो विप्रकीर्णस्ते बाणैश्छिन्नः समन्ततः ।
येन त्वं शोभसे वीर परिघेण महौजसा ॥ ३९ ॥

धिगस्तु हृदयस्यास्य मम यन्न सहस्रधा ।
त्वयि पञ्चत्वमापन्ने स्फोटति शोकपीडितं ॥ ४० ॥
इत्येवं विलपन्त्येव वास्पव्याकुललोचना ।
स्नेहावस्कन्नहृदया देवी मोहमुपागमत् ॥ ४१ ॥
अथादाय तदा सर्वाः सपत्न्यस्तादृशातुरां ।
पर्यवस्थापयामासू रुदन्त्यो भृशमातुराः ॥ ४२ ॥
न तेन विदिता देवि लोकानां गतिरध्रुवा ।
दशाभिरापदायाति राज्ञां धिक् चञ्चलां श्रियं ॥ ४३ ॥
इत्युच्यमाना सा ताभिः संशब्दं प्ररुरोद ह ।
अधोमुखी स्नपयन्ती स्तनौ द्वावश्रुविन्दुभिः ॥ ४४ ॥
एतस्मिन्नन्तरे रामो विभीषणमुवाच ह ।
सत्कारः क्रियतां भ्रातुः स्त्रीगणः परिशान्त्व्यतां ॥ ४५ ॥
तमुवाच ततो रामं सत्यवाक्यो विभीषणः ।
विमृष्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः ॥ ४६ ॥
त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतुं तथा ।
नाहमर्हामि सत्कर्तुं परदाराभिमर्षणं ॥ ४७ ॥
भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः ।
रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात् ॥ ४८ ॥
नृशंस इति मां कामं वक्ष्यन्ति भुवि राक्षसाः ।
इतरे सर्वलोका मां वदन्ति गुणवानिति ॥ ४९ ॥

दग्धं ह्ययशसा लोके नैनं धक्ष्यति पावकः ।
तच्छ्रुत्वा परमप्रीतो रामो वाक्यं विभीषणात् ॥५०॥
विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदं ।
उच्छ्रितश्चापि दीनश्च शत्रुश्च रणमूर्द्धनि ॥५१॥
गुरुरेव गुरुर्वीरि विग्रहान्ते विधीयते ।
यदायं विजितः शेते तव भ्राता विभीषण ॥५२॥
विजिते त्यज्यतां दोषो विजयान्ता हि विग्रहाः ।
अथवा यत् समुचितं यथावाप्यनुमन्यसे ॥५३॥
तथास्तु न परोक्षं ते धर्मं पश्यामि बुद्धितः ।
तवापि मे प्रियं कार्यं त्वत्प्रसादाद्धि मे जयः ॥५४॥
हेतुमात्रं तु रामो वै जयमूलं विभीषणः ।
अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसोत्तम ॥५५॥
अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः ।
तेजस्वी बलवान् शूरः संग्रामेषु च सर्वदा ॥५६॥
शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ।
महात्मा बलसंपन्नो रावणो लोकरावणः ॥५७॥
त्वत्प्रसादान्महाबाहो सत्कारं विधिपूर्वकं ।
एष त्वर्हति धर्मज्ञ त्वं यशः प्रथयिष्यसि ॥५८॥
इत्युक्तो रामवचनाद्विधिदृष्टेन कर्मणा ।
प्रेतकार्याणि सर्वाणि ज्ञातीनां समचोदयत् ॥५९॥

विभीषणस्त्वविन्ध्यादीन् वृद्धामात्यान् बहुश्रुतान् ।
आज्ञापयामास तदा राज्ञा सत्क्रियतामिति ॥ ९० ॥
भ्रातृदाराश्च ताः सर्वाः शान्त्वयित्वा स कालवित् ।
चक्रे स सलिलं भ्रातुर्ज्ञातीनां चानुपूर्वशः ॥ ९१ ॥
रामवाक्येन विधिवत् सर्वशास्त्रोपवृंहितं ।
स्त्रियः प्रवेशयामास शान्त्वयित्वा पुनः पुनः ॥ ९२ ॥
प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः ।
रामपार्श्वमुपागम्य समतिष्ठद्विनीतवत् ॥ ९३ ॥
रामोऽपि सह सैन्येन ससुग्रीवः सलक्ष्मणः ।
हर्षं भेजे रिपुं हत्वा वृत्रं वज्रधरो यथा ॥ ९४ ॥

ततो विमुच्य सशरं शरासनं
महेन्द्रदत्तं कवचं च काञ्चनं ।
विमुच्य रोषं रिपुनिग्रहे तदा
शशीव सौम्यत्वमुपागमच्छनैः ॥ ९५ ॥

इत्यार्षे रामायणे युद्धकाण्डे मन्दोदरीविलापो नाम
पञ्चनवतितमः सर्गः ॥

# युद्धकाण्डं

## XCVI.

स्वर्गीयमथ तेषां तु तस्य कार्यं चिकीर्षतां ।
बन्धूनां मतमालक्ष्य रामो तत्कार्यमादिशत् ॥ १ ॥
ततः सुग्रीवसंदिष्टा वानरा भीमविक्रमाः ।
चन्दनागुरुकाष्ठानि समाजह्रुरितस्ततः ॥ २ ॥

पत्रं मृणालं च सपारिजातं
प्रियङ्गुकालीयकनागपुष्पं ।
रसालनागाह्वयशस्यकं च
मनःशिलाचन्दनधावनं च ॥ ३ ॥
कुम्भांश्चतुर्भ्यश्च महोदधिभ्यो
जलस्य पूर्णान् सहसा च जह्रुः ।
सप्तस्वथान्येषु महीधरेषु
ते वानरेन्द्राः कुसुमानि जह्रुः ॥ ४ ॥
पवित्रदर्भान् दधिदुग्धसर्पिः
स्रुवं प्रणीताश्च तथेध्मजालं ।
तस्याग्निहोत्रं च गृहादहीनं
निर्यातयामास विभीषणस्तु ॥ ५ ॥
विधिप्रणीतं करणं क्रियाक्रमं
यथा हि धर्मेष्वुपकारयोजितं ।

चकार यावद्यदहीनयोजितं
यदक्षयं पुण्यतमं सुपूजितं ॥ ६ ॥

रावणं प्रयते देशे निक्षिप्य परिचारकाः ।
चितां चन्दनकाष्ठाढ्यां नागकेशरसंयुतां ॥ ७ ॥

उदारागुरुसंयुक्तां तुङ्गकालीयकाधिकां ।
महतीं सर्वगन्धानां चितां कृत्वा समुच्छ्रितां ॥ ८ ॥

तस्यां तु राक्षसेन्द्रं तमारोप्य क्षौमवाससं ।
प्रह्वाः संवेशयां चक्रू राक्षसास्तरणान्वितं ॥ ९ ॥

ततस्ते वेदविद्वांसस्तां राज्ञः पश्चिमां क्रियां ।
चक्रिरे राक्षसेन्द्रस्य प्रेतमेधमनुत्तमं ॥ १० ॥

वेदीं च दक्षिणप्राच्यां यथास्थानं च पावकं ।
विभीषणस्तु संप्राप्य तूष्णीं समसृजच्छ्रुवं ॥ ११ ॥

पृषदाज्यस्य संपूर्णान् ध्रुवान् सर्वान् यथाविधि ।
रावणस्य तदा सर्वे वास्पपूर्णमुखा द्विजाः ॥ १२ ॥

पादयोः शकटं चक्रुरन्तरोरावुदूखलं ।
वानस्पत्यानि चान्यानि अन्तरेऽपि व्यधापयन् ॥ १३ ॥

दत्वा तु मुषलं चैव यथास्थानं महात्मनः ।
शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ १४ ॥

ततः पश्चात् पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ।
अथास्तरणिकं सर्वं घृताक्तं समवेशयन् ॥ १५ ॥

गन्धैर्माल्यैस्तथान्यैश्च रावणं दीनमानसाः ।
लाजैरवकिरन्ति स्म वाष्पपूर्णमुखास्तथा ॥ १६ ॥
ददौ च पावकं तस्य विधिदृष्टं विभीषणः ।
ततोऽग्निः संप्रजज्वाल दशग्रीवनिबर्हणः ॥ १७ ॥

इत्यार्षे रामायणे युद्धकाण्डे रावणसंस्कारो
नाम षण्णवतितमः सर्गः ॥

## XCVII.

तद्रावणबधाद्धृष्टा देवगन्धर्वदानवाः ।
जग्मुः स्वैः स्वैर्विमानैस्ते कथयन्तः कथाः शुभाः ॥ १ ॥
रावणस्य बधं घोरं रामस्य च पराक्रमं ।
सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितं ॥ २ ॥
अनुरागं च वीर्यं च सौमित्रेर्लक्ष्मणस्य च ।
पतिव्रतात्वं सीताया हनूमति पराक्रमं ॥ ३ ॥
राघवस्तु रथं दिव्यमिन्द्रदत्तं रविप्रभं ।
अनुज्ञाय महाप्राज्ञो मातलिं प्रत्यपूजयत् ॥ ४ ॥
दर्शिता महती शक्तिः कृतं मे प्रियमुत्तमं ।
गच्छेदानीमनुज्ञातो मया त्वं त्रिदशालयं ॥ ५ ॥
इति रामाभ्यनुज्ञातो मातलिः शक्रसारथिः ।
दिव्यं तु रथमास्थाय दिवमेवारुरोह सः ॥ ६ ॥
तस्मिंस्तु वियदारूढे सारथौ जयतां वरः ।
संभाष्य चैव तान् सर्वान् हरियूथपयूथपान् ॥ ७ ॥
राघवः परमप्रीतो हरीन्द्रमिदमब्रवीत् ।
दिष्ट्या तव प्रसादेन प्राप्तं हि मनसेप्सितं ॥ ८ ॥
प्रतिज्ञाया गतः पारं हत्वा वै देवकण्टकं ।
शेषमद्यापरं मन्ये मनस्तुष्टिकरं परं ॥ ९ ॥

लङ्कायां यत् तु पश्येयमभिषिक्तं विभीषणं ।
वृतस्ततो हरिश्रेष्ठैराजगाम सहानुगः ॥१०॥
अथोवाच स काकुत्स्थः समीपपरिवर्तिनं ।
सौमित्रिं सत्त्वसंपन्नं लक्ष्मणं शुभलक्षणं ॥११॥
विभीषणमिमं सौम्य लङ्कायामभिषेचय ।
अनुरक्तं च भक्तं च मम चैवोपकारिणं ॥१२॥
एष मे परमः कामो यदहं रावणानुजं ।
लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणं ॥१३॥
एवमुक्तस्तु सौमित्री राघवेण महात्मना ।
तथेत्युक्त्वा च संहृष्टः सौवर्णं घटमाददे ॥१४॥
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणं ।
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥१५॥
विधिना शास्त्रदृष्टेन सुहृद्गणसमन्वितः ।
अभ्यषिञ्चत् स धर्मात्मा धर्मात्मानं विभीषणं ॥१६॥
तस्य मित्राणि तुतुषुर्भक्ता ये चास्य राक्षसाः ।
दृष्ट्वाभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणं ॥१७॥
स तद्राज्यं महत् प्राप्य रामदत्तं विभीषणः ।
प्रकृतीः सान्त्वयित्वा तु ततो राममुपागमत् ॥१८॥
अक्षतान् मोदकाँल्लाजान् दिव्याः सुमनसस्तथा ।
आजह्रुस्ते तदा हृष्टाः पौरास्तत्र निशाचराः ॥१९॥

तद्गृहीत्वा तु दुर्धर्षो राघवाय न्यवेदयत् ।
मङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् ॥ २० ॥
कृतकार्यं स सिद्धार्थं दृष्ट्वा रामो विभीषणं ।
प्रतिजग्राह तत् सर्वं तस्यैव प्रियकाम्यया ॥ २१ ॥
महाशैलोपमं वीरं प्राञ्जलिं समुपस्थितं ।
अब्रवीच्च वचो रामो हनूमन्तं प्लवङ्गमं ॥ २२ ॥
अनुमान्य महाराजमिमं सौम्य विभीषणं ।
प्रविश्य नगरीं लङ्कां कुशलं ब्रूहि मैथिलीं ॥ २३ ॥
वैदेह्या मां कुशलिनं ससुग्रीवं सलक्ष्मणं ।
आख्याहि जयतां श्रेष्ठ रावणं निहतं रणे ॥ २४ ॥
प्रियमेतदिहाख्याहि वैदेह्यास्त्वं हरीश्वर ।
प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि ॥ २५ ॥

इत्यार्षे रामायणे युद्धकाण्डे विभीषणाभिषेको नाम
सप्तनवतितमः सर्गः ॥

# युद्धकाण्डं

## XCVIII.

इति प्रतिसमादिष्टो हनूमान् मारुतात्मजः ।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १ ॥
प्रविश्य च महातेजा रावणालयमृद्धिमत् ।
ददर्श पूजया हीनां रामपत्नीमनिन्दितां ॥ २ ॥
निभृतः प्रणतः प्रह्वः सोऽभिवाद्य च मैथिलीं ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ३ ॥
मैथिलि कुशली रामः ससुग्रीवः सलक्ष्मणः ।
कुशलं त्वाह सिद्धार्थो हतशत्रुररिन्दमः ॥ ४ ॥
विभीषणसहायेन रामेण हरिभिः सह ।
निहतो रावणो देवि लक्ष्मणेन मयैव च ॥ ५ ॥
प्रियमाख्यामि ते देवि राघवस्य महाजयं ।
धर्मज्ञे वर्धसे दिष्ट्या जयोऽयं प्रतिगृह्यतां ॥ ६ ॥
लब्धो मे विजयः सीते सुस्था भव गतज्वरा ।
रावणोऽयं हतः शत्रुर्लङ्का येन वशीकृता ॥ ७ ॥
मया ह्यलब्धनिद्रेण धृता या तव निर्जये ।
प्रतिज्ञेयं मया तीर्णा तीर्णश्च वरुणालयः ॥ ८ ॥
संभ्रमश्च न कर्तव्यो वर्तन्त्या राक्षसालये ।
विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतं ॥ ९ ॥

तदाश्वसिहि विश्रब्धं स्वगृहे परिवर्तसे ।
अहं चाभ्येमि संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥ १० ॥
एवमुक्ता समुत्पत्य सीता शशिनिभानना ।
प्रहर्षेणातिसंरुद्धा व्याजहार न किञ्चन ॥ ११ ॥
ततोऽब्रवीद्धरिश्रेष्ठः सीतामप्रतिजल्पतीं ।
किं त्वं चिन्तयसे देवि किं च मां नाभिभाषसे ॥ १२ ॥
एवमुक्ता हनुमता सीता धर्मपथे स्थिता ।
अब्रवीत् परमप्रीता हर्षगद्गदया गिरा ॥ १३ ॥
प्रियमेतदुपश्रुत्य भर्तुर्विजयमुत्तमं ।
प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणात् कृता ॥ १४ ॥
न हि पश्यामि तत् सौम्य पृथिव्यामपि किञ्चन ।
सदृशं त्वत्प्रियाख्याने सत्यमेतद्ब्रवीमि ते ॥ १५ ॥
न हिरण्यं न वासांसि न रत्नानि प्लवङ्गम ।
ततोऽहं हर्षमापन्ना पुनर्मूकत्वमागता ॥ १६ ॥
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ।
कृताञ्जलिपुटो हर्षात् सीतायाः प्रमुखे स्थितः ॥ १७ ॥
भर्तुः प्रियहिते युक्ते भर्तुर्विजयनन्दिनि ।
स्निग्धमेव हि तद्वाक्यं त्वमेवार्हसि भाषितुं ॥ १८ ॥
तवैतद्वचनं देवि सारवद्धितमेव च ।
रत्नौघवरदानेन देवराज्येन वा समं ॥ १९ ॥

अर्थतश्च मया प्राप्ता देवि राज्यादयो गुणाः ।
हतशत्रुं विजयिनं रामं पश्यामि यत् स्थितं ॥ २० ॥
अहं त्वेकं वरं देवि त्वत्तो याचे प्रियं महत् ।
तन्मे प्रीत्या प्रयच्छ त्वं रामश्चाप्यनुदिश्यतां ॥ २१ ॥
इमाः श्रुता मया पूर्वं राक्षस्यो विकृताननाः ।
असकृत् परुषं वाक्यं वदन्त्यो रावणाज्ञया ॥ २२ ॥
इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ।
घोराः क्रूरसमाचारा वरमेतं प्रयच्छ मे ॥ २३ ॥
मुष्टिभिः पार्ष्णिघातैश्च बाहुघातैश्च शोभने ।
घोरैर्जानुप्रहारैश्च नयनाञ्जनपीडनैः ॥ २४ ॥
छेदनैः कर्णनासानां केशानां चावलुञ्चनैः ।
भृशं शुष्कनखानां च ताडनैर्घट्टनैस्तथा ॥ २५ ॥
एवंप्रकारैर्बहुभिः संप्रहारैर्यशस्विनि ।
योजयेयमनर्थैश्च याभिस्त्वं तर्जिता पुरा ॥ २६ ॥
एवमुक्ता हनुमता वैदेही जनकात्मजा ।
प्रत्युवाच हनूमन्तं चिन्तयित्वा प्रहस्य च ॥ २७ ॥
राजसंश्रयवश्यानां वर्ततीनां पराज्ञया ।
विधेयानां च दासीनां न क्रुध्येत् प्लवगर्षभः ॥ २८ ॥
भाग्यवैषम्यदोषेण पुरस्ताद्दुष्कृतेन च ।
प्राप्तमेतन्मया सर्वं स्वकृतं ह्युपभुज्यते ॥ २९ ॥

प्राप्तव्योऽयं दशायोगो मया स मतिनिश्चयः ।
दासीनां रावणस्याहं मर्षयामि न दुर्बला ॥ ३० ॥
आज्ञप्ता रावणेनेमा राक्षस्यस्तर्जयन्ति मां ।
हते तस्मिन्निमा हन्याः कथं त्वं मारुतात्मज ॥ ३१ ॥
इमं व्याघ्रसकाशे तु पुराणं धर्मसंहितं ।
ऋक्षेण गीतो यः श्लोकस्तं निबोध प्लवङ्गम ॥ ३२ ॥
नापरः पापमादत्ते परेषां पापकारिणां ।
समयो रक्षितव्यस्ते स हि चारित्र्यलक्षणः ॥ ३३ ॥
पापानां वाशुभानां वा बधार्हाणामथापि वा ।
कार्यकारणकर्तृत्वे न कश्चिदपराध्यति ॥ ३४ ॥
लोकहिंसाविहाराणां रक्षसां पापकर्मणां ।
कुर्वतामपि पापानि नैव कार्यमशोभनं ॥ ३५ ॥
एवमुक्तस्तु हनुमान् सीतया वाक्यकोविदः ।
प्रत्युवाच ततः सीतां रामपत्नीं यशस्विनीं ॥ ३६ ॥
युक्तं रामस्य महिषी सीता प्रोवाच यद्वचः ।
प्रतिसंदिश मां देवि गमिष्ये यत्र राघवः ॥ ३७ ॥
एवमुक्ता हनुमता वैदेही जनकात्मजा ।
अब्रवीद्द्रष्टुमिच्छामि भर्तारं वानरर्षभ ॥ ३८ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् प्लवगोत्तमः ।
हर्षयन् मैथिलीं वाक्यमिदमाह स मारुतिः ॥ ३९ ॥

पूर्णचन्द्रमुखं रामं ह्रन्यस्यार्ये सलक्ष्मणं ।
स्थिरमित्रं हतामित्रं शचीवेन्द्रं सुरेश्वरं ॥४०॥
तामेवमुक्का भ्राजन्तीं सीतां स्फीतामिव श्रियं ।
भ्राजगाम महाभागो हनूमान् यत्र राघवः ॥४१॥

इत्यार्षे रामायणे युद्धकाण्डे सीताप्रमोदो नाम
अष्टनवतितमः सर्गः ॥

# रामायणं

## XCIX.

तमुवाच महाप्राज्ञः सोऽभिगम्य प्लवङ्गमः ।
रामं वचनमहुद्रं वरं सर्वधनुष्मतां ॥ १ ॥
यन्निमित्तं समारम्भः कर्मणां च फलोदयः ।
तां साध्वीं शोकसंतप्तां मैथिलीं द्रष्टुमर्हसि ॥ २ ॥
सा हि शोकसमाविष्टा वास्पपर्याकुलेक्षणा ।
मैथिली विजयं श्रुत्वा त्वां द्रष्टुमभिकाङ्क्षति ॥ ३ ॥
एवमुक्तो हनुमता रामो धर्मभृतां वरः ।
आगच्छत् सहसा ध्यानमीषद्वास्पपरिप्लुतः ॥ ४ ॥
दीर्घमुष्णं च निःश्वस्य जगतीमवलोकयन् ।
उवाच स ततो रामो राक्षसेन्द्रं विभीषणं ॥ ५ ॥
मम सीतां शिरःस्नातामुपस्थापय मैथिलीं ।
दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषितां ॥ ६ ॥
एवमुक्तस्तु रामेण त्वरमाणो विभीषणः ।
प्रविश्यान्तःपुरं सीतां प्राञ्जलिः प्रत्युवाच तां ॥ ७ ॥
शिरःस्नाता तु वैदेहि दिव्याभरणभूषिता ।
यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ ८ ॥
एवमुक्ता तु वैदेही प्रत्युवाच विभीषणं ।
अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ॥ ९ ॥

तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः ।
यथाह भर्ता ते देवि तथा त्वं कर्तुमर्हसि ॥१०॥
इत्युक्ता सा ततो देवी मैथिली पतिदेवता ।
भक्तिशक्तिपरा साध्वी तथेति प्रत्युवाच ह ॥११॥
ततः सीतां शिरःस्नातां युवतीभिरलङ्कृतां ।
महार्हाभरणोपेतां महार्हाम्बरधारिणीं ॥१२॥
आरोप्य शिविकां दिव्यां परार्ध्यास्तरणावृतां ।
राक्षसैर्बहुभिर्युक्तामाजगाम विभीषणः ॥१३॥
ततो वानरमुख्यास्ते कौतूहलसमन्विताः ।
वैदेहीं द्रष्टुमिच्छन्तस्तस्थुः शतसहस्रशः ॥१४॥
कथंरूपा नु वैदेही स्त्रीरत्नं कीदृशं नु तत् ।
यस्या वानरलोकोऽयं कृते संशयमागतः ॥१५॥
यस्या हेतोर्हतो राजा रावणो राक्षसाधिपः ।
सेतुश्च योजनशतं जले बद्धो महोदधेः ॥१६॥
इति तेषां गिरः श्रुत्वा समन्ताद्राक्षसेश्वरः ।
शिविकां तां पुरस्कृत्य राममेवाधिगच्छति ॥१७॥
सोऽभिगम्य महात्मानं ज्ञात्वापि ध्यानमागतं ।
प्रणतश्च प्रहृष्टश्च प्राप्तितेति न्यवेदयत् ॥१८॥
तामागतां परिश्रुत्य रक्षोगृहचिरोषितां ।
रोषो हर्षश्च दैन्यश्च त्रयं राममथाविशत् ॥१९॥

कृत्वा पार्श्वगतां दृष्टिं सविमर्षं विचारयन् ।
विभीषणमिदं वाक्यं प्रविष्टं राघवोऽब्रवीत् ॥२०॥
राक्षसाधिपते सौम्य नित्यं मद्विजये रत ।
वैदेही संनिकर्षं मे शीघ्रं समुपगच्छतु ॥२१॥
श्रुत्वा तु वचनं तस्य राघवस्य विभीषणः ।
तूर्णमुत्सारणं तत्र कारयामास सर्वतः ॥२२॥
कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः ।
उत्सारयन्तः सहसा समन्तात् परिचक्रमुः ॥२३॥
वानराणां च ऋक्षाणां राक्षसानां च सर्वतः ।
वृन्दान्युत्सार्यमाणानि सम्तुर्दूरतरं ततः ॥२४॥
तेषामुत्सार्यमाणानां निस्वनः सुमहानभूत् ।
वायुना पूर्यमाणानां सागराणामिव स्वनः ॥२५॥
उत्सार्यमाणांस्तान् दृष्ट्वा समन्ताज्जातसभ्रमान् ।
दाक्षिण्यात्तानुरागाच्च वारयामास राघवः ॥२६॥
संरब्धश्चाब्रवीद्रामश्चक्षुषा निर्दहन्निव ।
विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥२७॥
किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः ।
उद्वेगं मा कृथा ह्येषां जनोऽयं स्वजनो मम ॥२८॥
सीता त्वन्तर्गतं रोषं तथा विप्रकृता सती ।
धारयामास दुर्वारं भर्तृवाक्यसमाहिता ॥२९॥

ततो राघवमालोक्य विमृष्य जनकात्मजा ।
हर्षमन्तर्गतं कृत्वा निजग्राह वराङ्गना ॥ ३० ॥
ततः स्वरेण महता महामेघौघनादिना ।
उवाच राघवो धीमान् विभीषणमिदं वचः ॥ ३१ ॥
पुत्रपत्ने प्रजा राज्ञस्तवापि विदितं ध्रुवं ।
पश्यन्तु मातरं तस्मादिमे कौतूहलान्विताः ॥ ३२ ॥
न गृहाणि न वस्त्राणि न प्राकारा न सत्क्रियाः ।
न चान्यो राजसत्कारः शीलमावरणं स्त्रियाः ॥ ३३ ॥
व्यसनेषु विवाहेषु कन्यानां च स्वयम्वरे ।
क्रतौ संसत्सु च स्त्रीणां दर्शनं सार्वलौकिकं ॥ ३४ ॥
सैषा युद्धगता चैव कृच्छ्रे च महति स्थिता ।
दर्शने नास्ति दोषोऽस्या मत्समीपे विशेषतः ॥ ३५ ॥
विसृज्य शिविकां तस्मात् पद्भ्यामेव समानय ।
समीपं मम वैदेहीं पश्यन्त्वेनां वनौकसः ॥ ३६ ॥
एवमुक्तस्तु रामेण सविमर्षो विभीषणः ।
रामस्योपानयत् सीतां संनिकर्षं महात्मनः ॥ ३७ ॥
राघवस्य वचःश्रुत्वा सीतां प्रति वनौकसः ।
विभीषणपुरोगाश्च सर्वाः प्रकृतयस्तथा ॥ ३८ ॥
वीक्षां चक्रुस्तदान्योन्यं किं नु रामः करिष्यति ।
दृश्यतेऽन्तर्हितो ह्यस्य क्रोधो दृष्या विभाव्यते ॥ ३९ ॥

इति ते विव्यथुः सर्वे दृष्ट्वा रामस्य चेष्टितं ।
अपूर्वाकारवित्रस्ता जातशङ्कास्तदाभवन् ॥ ४० ॥
लक्ष्मणोऽथ ससुग्रीवः स च बालिसुतोऽङ्गदः ।
आसंश्च व्रीडिताः सर्वे मृतकल्पाश्च चिन्तया ॥ ४१ ॥
कलत्रनिरपेक्षैश्च चेष्टितैरस्य दारुणैः ।
मेनिरे तां परित्यक्तामपविद्धामिव स्रजं ॥ ४२ ॥
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली ।
विभीषणेनानुगता भर्तारं चाभ्यवर्तत ॥ ४३ ॥
ते तां ददृशुरायान्तीं श्रियं देहवतीमिव ।
देवतामिव लङ्कायाः प्रभां वैवस्वतीमिव ॥ ४४ ॥
दृष्ट्वा ते हरयः सर्वे सीतां परमयोषितं ।
विस्मयं परमं जग्मुस्तस्या रूपश्रियौजसा ॥ ४५ ॥
सा वास्पसंरुद्धमुखी लज्जया जनसंसदि ।
तस्थौ भर्तारमासाद्य श्रीर्विष्णुमिव रूपिणी ॥ ४६ ॥
राघवश्चापि तां दृष्ट्वा दिव्यरूपवपुर्धरां ।
जातशङ्केन मनसा सवास्पो नाभ्यभाषत ॥ ४७ ॥
विवर्णवदनो रामः स्नेहक्रोधाब्धिमध्यगः ।
बभूवाधिकताम्राक्षो वास्पनिग्रहणे रतः ॥ ४८ ॥
तामग्रतः स्थितां देवीं व्रीडोपहतचेतनां ।
समालोक्य सुदुःखार्त्तां चिन्तयन्तीमनाथवत् ॥ ४९ ॥

रक्षसापहृतां बालां बलात् संरोधकर्षितां ।
कथञ्चिदपि जीवन्तीं मृत्युलोकादिवागतां ॥५०॥
बलादपहृतां शून्यादाश्रमाच्छुद्धचेतसं ।
अपापां निरवद्यां तां नाभ्यभाषत राघवः ॥५१॥
इत्येवं बाष्परुद्धाक्षी लज्जया जनसंसदि ।
रुरोदासाद्य भर्तारं ह्यार्यपुत्रेति भाषती ॥५२॥
तस्या विलपितं श्रुत्वा सर्वे ते हरियूथपाः ।
रुरुदुर्जातसंतापा बाष्पव्याकुललोचनाः ॥५३॥
मुखं वस्त्रेण संछाद्य सौमित्रिर्जातसंभ्रमः ।
बाष्पनिग्रहणे यत्नमकरोद्धैर्यसंस्थितः ॥५४॥
ततः सीता वरारोहा भर्तुर्वैकारिकं महत् ।
व्रीडामुत्सृज्य तं दृष्ट्वा तस्थौ तस्य तदाग्रतः ॥५५॥
शोकमुत्सृज्य वैदेही सत्त्वमालम्ब्य भाविनी ।
निगृह्य मनसा बाष्पं विशुद्धेनान्तरात्मना ॥५६॥
विस्मयाच्च प्रहर्षाच्च स्नेहात् क्रोधात् क्षमादपि ।
बहुरूपेण ददृशे भर्तुर्वदनमीक्षती ॥५७॥

इत्यार्षे रामायणे युद्धकाण्डे सीतासहागमो नाम
नवनवतितमः सर्गः ॥

C.

तां तु देवीं तथा दृष्ट्वा रामः शङ्कासमन्वितः ।
हृदयान्तर्गतं भावं व्याहर्तुमुपचक्रमे ॥ १ ॥
एषासि विजिता भद्रे शत्रुहस्तान्मया रणे ।
पौरुषाद्यदनुष्ठेयं तदेतदुपपादितं ॥ २ ॥
गतोऽस्म्यन्तममर्षस्य धर्षणा प्रतिमार्जिता ।
अपमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥ ३ ॥
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।
अद्य तीर्णप्रतिज्ञोऽहं प्रभवामीह चात्मनः ॥ ४ ॥
यत् त्वं विरहितानीता हलरूपेण रक्षसा ।
दैवादापतितो दोषः पौरुषात् स समीकृतः ॥ ५ ॥
संप्राप्तमवमानं यस्तेजसा न प्रमार्जति ।
कस्तस्य पौरुषेणार्थो महताप्यल्पचेतसः ॥ ६ ॥
लङ्घनं च समुद्रस्य लङ्कायाश्चाभिमर्दनं ।
सफलं सर्वमेवाद्य महत् कर्म हनूमतः ॥ ७ ॥
युद्धे विक्रमतश्चैव हितं मन्त्रयतश्च नः ।
सुग्रीवस्य ससैन्यस्य कृतोऽद्य सफलः श्रमः ॥ ८ ॥
विगुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः ।
विभीषणस्य च तथा सफलोऽद्य परिश्रमः ॥ ९ ॥

इत्येवं ब्रुवतस्तस्य सीता रामस्य तद्वचः ।
मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १० ॥
पश्यतस्तां तु रामस्य भूयः क्रोधो व्यवर्धत ।
स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेरितलोचनः ॥ ११ ॥
अब्रवीत् परुषं सीतां मध्ये वानररक्षसां ।
यत् कर्तव्यं मनुष्येण धर्षणां प्रतिमार्जता ॥ १२ ॥
तत् कृतं त्वां विनिर्जित्य मयैतन्मानरक्षणं ।
विदितं चास्तु ते भद्रे योऽयं रणपरिश्रमः ॥ १३ ॥
तीर्णः ससुहृदामर्षान्न त्वदर्थे कृतो मया ।
रक्षता तु मया वृत्तमपवादं च सर्वशः ॥ १४ ॥
प्रख्यातस्यात्मवंशस्य निन्दां च परिमार्जता ।
निर्जितासि मया भद्रे शत्रुहस्तादमर्षिणा ॥ १५ ॥
अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ।
प्राप्तचारित्र्यसंदेहा मम प्रतिमुखे स्थिता ॥ १६ ॥
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढं ।
तद्गच्छाभ्यनुजाने त्वां यथेष्टं जनकात्मजे ॥ १७ ॥
एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ।
कः पुमान् हि कुले जातः स्त्रियं परगृहोषितां ॥ १८ ॥
तेजस्वी पुनरादद्यात् सकृल्लोभेन चेतसा ।
रावणाङ्कपरिक्लिष्टां दृष्टां दुष्टेन चक्षुषा ॥ १९ ॥

कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ।
यदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया ॥ २० ॥
नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति ।
इत्यभिव्याहृतं भद्रे मयैतत् कृतबुद्धिना ॥ २१ ॥
लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथासुखं ।
सुग्रीवे वानरेन्द्रे वा राक्षसे वा विभीषणे ॥ २२ ॥
निवेशय मनः सीते यथासुखमथात्मनः ।
न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमां ।
मर्षयेत् तरुणीं सीते वर्तमानां स्वके गृहे ॥ २३ ॥

इत्यार्षे रामायणे युद्धकाण्डे सीतापरित्यागो नाम
शततमः सर्गः ॥

# युद्धकाण्डं

CI.

एवमुक्ता तु वैदेही परुषं लोमहर्षणं ।
राघवेण सरोषेण भृशं प्रव्यथिताभवत् ॥ १ ॥
सा तदश्रुतपूर्वं हि जने महति मैथिली ।
श्रुत्वा भर्तुर्वचो घोरं लज्जयावनताभवत् ॥ २ ॥
प्रविशन्तीव गात्राणि स्वानि सा जनकात्मजा ।
वाक्शल्यैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ॥ ३ ॥
ततो वास्पपरिक्लिन्नं प्रमार्जन्ती स्वमाननं ।
शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥ ४ ॥
कुले महति जातां च दत्तां चैव महाकुले ।
शैलूषीमिव राजेन्द्र परेभ्यो दातुमिच्छसि ॥ ५ ॥
किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणं ।
रूक्षं श्रावयसे वीर प्राकृतामिव योषितं ॥ ६ ॥
न तथास्मि महाबाहो यथा मामवगच्छसि ।
प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥ ७ ॥
विशङ्क्यास्तु स्त्रियो राम स्थाने च परिशङ्कसे ।
परित्यजैनां शङ्कां तु यद्यहं ते परीक्षिता ॥ ८ ॥
यदहं गात्रसंस्पर्शं तव शत्रोर्गता विभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ९ ॥

मदधीनं तु हृदयं तच्च मे त्वयि वर्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥१०॥
त्वामहं न व्यतिचरे मनसापि कदाचन ।
तेन सत्येन मे देवा दिशन्त्वभयमीश्वराः ॥११॥
मनसा शुद्धभावेन संसर्गेण च मानद ।
यद्यहं ते न विज्ञाता हृता तेनास्मि शाश्वतं ॥१२॥
प्रेषितस्ते यदा वीर हनूमानवलोककः ।
लङ्कायां मयि तिष्ठन्त्यां किं तदा नास्मि वर्जिता ॥१३॥
प्रत्यक्षं वानरेन्द्रस्य तद्वाक्यं समनन्तरं ।
त्वया संत्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥१४॥
न वृथा ते श्रमोऽयं स्यात् संशयश्च हि जीविते ।
सुहृज्जनपरिक्लेशो न चायं निष्फलो भवेत् ॥१५॥
त्वया तु नरशार्दूल क्रोधमेवानुवर्तता ।
लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतं ॥१६॥
व्यपदेशेन जनकादुत्पत्तिर्वसुधातलात् ।
मम वृत्तं च शीलं च सर्वं ते न समर्थितं ॥१७॥
न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
मम शीलं च भक्तिश्च सर्वं ते पृष्ठतः कृतं ॥१८॥
एवं ब्रुवाणा रुदती बास्पगद्गदभाषिणी ।
अब्रवील्लक्ष्मणं सीता दीना ध्यानपरायणा ॥१९॥

चिंतां मे कुरु सौमित्रे व्यसनस्यास्य भेषजं ।
मिथ्योपघाताभिहता नाहं जीवितुमुत्सहे ॥ २० ॥
सुप्रीतस्य गुणैर्भर्तुस्त्यक्ताहं जनसंसदि ।
या क्षमा मे गतिर्गन्तुं गमिष्ये हव्यवाहनं ॥ २१ ॥
एवमुक्तस्तु मैथिल्या लक्ष्मणः परवीरहा ।
विमर्षवशमापन्नो रामाननमुदैक्षत ॥ २२ ॥
स विज्ञाय मतं तत् तु रामस्याकारसूचितं ।
चिंतां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥ २३ ॥
न हि रामं तदा कश्चित् क्रोधशोकवशं गतं ।
अनुनेतुमथो वक्तुं द्रष्टुं वाप्यथ शक्नुवन् ॥ २४ ॥
अधोमुखं स्थितं रामं ततः कृत्वा प्रदक्षिणं ।
उपासर्पत वैदेही दीप्यमानं हुताशनं ॥ २५ ॥
प्रणम्य देवताभ्यः सा ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा देवमुवाचाग्निं समीपतः ॥ २६ ॥
यथाहं कर्मणा वाचा शरीरेण च राघवं ।
सततं नातिवर्तेयं प्रकाशं वा रहःसु वा ॥ २७ ॥
यथा मे हृदयं नित्यं नातिवर्तति राघवात् ।
तथायं लोकसाक्षी मां सर्वतः पातु पावकः ॥ २८ ॥
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनं ।
प्रवेष्टुकामा ज्वलनं वाक्यं चैवेदमब्रवीत् ॥ २९ ॥

त्वमग्ने सर्वभूतानां शरीरान्तरगोचरः ।
त्वं साक्षी मम देहस्थस्त्राहि मां देवसत्तम ॥ ३० ॥
तस्यास्तद्वचनं श्रुत्वा सर्वे ते हरियूथपाः ।
बाष्परुद्धमुखाश्चासन् रुरुदुश्च शनैर्भृशं ॥ ३१ ॥
ततः सा राघवं सीता नमस्कृत्यायतेक्षणा ।
विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥ ३२ ॥
जनस्तु सुमहांस्तत्र बालवृद्धः समागतः ।
ददर्श मैथिलीं दीनां प्रविशन्तीं हुताशनं ॥ ३३ ॥
तस्यामग्निं विशन्त्यां तु हा हेति विपुलःस्वनः ।
रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥ ३४ ॥
सा तप्तवरहेमाभा तप्तकाञ्चनभूषिता ।
पपात ज्वलने दीप्ते हुताहुतिरिवाध्वरे ॥ ३५ ॥

इत्यार्षे रामायणे युद्धकाण्डे सीताग्निप्रवेशो नाम
एकशततमः सर्गः ॥

# युद्धकाण्डं

## CII.

ततस्तु दुर्मना रामः श्रुत्वैवं वदतां गिरः ।
तस्थौ मुहूर्त्तं धर्मात्मा वास्पव्याकुललोचनः ॥ १ ॥
ततो वैश्रवणो राजा यमश्च पितृभिः सह ।
सहस्राक्षश्च देवेशो वरुणश्चाम्भसां पतिः ॥ २ ॥
स च त्रिनयनः श्रीमान् महादेवो वृषध्वजः ।
कर्ता सर्वस्य लोकस्य ब्रह्मा च भगवान् प्रभुः ॥ ३ ॥
स च राजा दशरथो विमानेनान्तरीक्षगः ।
अभ्याजगाम तं देशं देवराजसमद्युतिः ॥ ४ ॥
एते सर्वे समागम्य विमानैः सूर्यसंनिभैः ।
आगत्य च पुरीं लङ्कामभिजग्मुस्तु राघवं ॥ ५ ॥
ततः स हस्ताभरणं प्रगृह्य विपुलं भुजं ।
अब्रवीत् त्रिदशश्रेष्ठो राघवं प्राञ्जलिं स्थितं ॥ ६ ॥
कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥ ७ ॥
कथं देववरश्रेष्ठ आत्मानं नावबुध्यसे ।
शङ्कसे चैव वैदेहीमदुष्टां प्राकृतो यथा ॥ ८ ॥
इत्युक्तो देवराजेन स्वामी लोकस्य राघवः ।
अब्रवीत् त्रिदशश्रेष्ठं राघवः प्राञ्जलिः स्थितः ॥ ९ ॥

आत्मानं मानुषं मन्ये रामं दशरथात्मजं ।
योऽहं देव यतश्चाहं तद्भवान् वक्तुमर्हति ॥१०॥
इति ब्रुवाणं काकुत्स्थं स्वयम्भूरमितद्युतिः ।
अब्रवीत् शृणु काकुत्स्थ सत्यं सत्यपराक्रम ॥११॥
भवान् नारायणः श्रीमान् देवश्चक्रायुधः प्रभुः ।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ॥१२॥
अजितः शङ्खभृद्विष्णुः कृष्णश्चैव सनातनः ।
एकशृङ्गो वराहस्त्वं भूतो भव्यः सपत्नजित् ॥१३॥
अक्षरं ब्रह्मसत्यं ते मध्ये चान्ते च राघव ।
लोकानां त्वं परो धर्मो विश्वक्सेनश्चतुर्भुजः ॥१४॥
सेनानीर्ग्रामणीश्च त्वं बुद्धिश्चित्ता क्षमा दमः ।
प्रभवश्चाव्ययश्च त्वं उपेन्द्रो मधुसूदनः ॥१५॥
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ।
शरण्यं शरणं च त्वामाहुर्देवर्षयो बुधाः ॥१६॥
ऋक्सामशृङ्गो वेदात्मा शतजिह्वोमहर्षणः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परंतप ॥१७॥
ऋतधामा वसुः पूर्वो वसूनां त्वं प्रजापतिः ।
त्वं त्रयाणां हि लोकानामादिकर्ता स्वयम्भुवः ॥१८॥
रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः ।
अश्विनौ चापि ते कर्णौ चन्द्रादित्यौ च चक्षुषी ॥१९॥

अन्ते चादौ च लोकानां दृश्यसे त्वं परंतप ।
प्रभवं निधनं चापि न विदुः को भवानिति ॥ २० ॥
दृश्यसे सर्वभूतेषु गोषु च ब्राह्मणेषु च ।
गगने दिक्षु सर्वासु सागरेषु नगेषु च ॥ २१ ॥
सहस्रचरणः श्रीमान् शतशीर्षः सहस्रदृक् ।
त्वं धारयसि भूतानि वसुधां च सपर्वतां ॥ २२ ॥
अन्तः पृथिव्यां सलिले दृश्यसे त्वं महोरगः ।
त्रीन् लोकान् धारयन् राम देवमानुषपन्नगान् ॥ २३ ॥
अहं ते हृदयं राम जिह्वा देवी सरस्वती ।
देवा रोमाणि गात्रेषु निर्मितानि स्वमायया ॥ २४ ॥
निमिषस्ते स्मृता रात्रिरुन्मेषो दिवसस्तथा ।
संस्कारे तेऽभवन् देवा न तदस्ति त्वया विना ॥ २५ ॥
जगत् सर्वं शरीरं ते स्थैर्यं ते वसुधातलं ।
अग्निः कोपः प्रसादस्ते सोमः श्रीवत्स लक्षणः ॥ २६ ॥
त्वया लोकास्त्रयः क्रान्ताः पुरा वै विक्रमैस्त्रिभिः ।
महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरं ॥ २७ ॥
यत् परं श्रूयते ज्योतिर्यत् परं श्रूयते तमः ।
यत् परं परतश्चैव परमात्मेति कथ्यसे ॥ २८ ॥
परमाख्यं परं यच्च त्वमेव परिगीयसे ।
स्थित्युत्पत्तिविनाशानां त्वामाहुः परमां गतिं ॥ २९ ॥

सीता लक्ष्मीर्भवान् विष्णुर्देवश्चक्रायुधः प्रभुः ।
बधार्थं रावणस्येह प्रविष्टो मानुषीं तनुं ॥ ३० ॥
तदिदं नस्त्वया कार्यं कृतं धर्मभृतां वर ।
निहतो रावणः पापः प्रहृष्टः पुरमाव्रज ॥ ३१ ॥
अमोघं बलवीर्यं ते न ते मोघः पराक्रमः ।
अमोघं दर्शनं राम न च मानुषरूपधृक् ॥ ३२ ॥
अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि ।
ये त्वां स्तुवन्ति त्वद्भक्ताः पुराणं पुरुषोत्तमं ॥ ३३ ॥
इममार्षं स्तवं दिव्यमितिहासं पुरातनं ।
ये नराः प्रवदिष्यन्ति नास्ति तेषां पराभवः ॥ ३४ ॥

इत्यार्षे रामायणे युद्धकाण्डे महापुरुषस्तवो नाम
द्विशततमः सर्गः ॥

# युद्धकाण्डं

## CIII.

तच्छ्रुत्वा तु शुभं वाक्यं पितामहसमीरितं ।
दध्यौ मुहूर्त्तं धर्मात्मा वाष्पव्याकुललोचनः ॥ १ ॥
विधूमाग्निश्रिताख्यां तु जानकीमन्वरक्षत ।
उत्तस्थौ मुर्त्तिमानाशु गृहीत्वा जनकात्मजां ॥ २ ॥
तरुणादित्यसंकाशां तप्तकाञ्चनभूषितां ।
रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजां ॥ ३ ॥
अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीं ।
ददौ रामाय वैदेहीमङ्केनाङ्के विभावसुः ॥ ४ ॥
अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ।
एषा ते राम महिषी पापमस्यां न विद्यत ॥ ५ ॥
नैव वाचा न मनसा नैव बुद्ध्या न चक्षुषा ।
सुवृत्ता वृत्तसंपन्ना न त्वामतिचरत्यसौ ॥ ६ ॥
रावणेनोपनीतैषा वीर्योत्सिक्तेन रक्षसा ।
त्वया विरहिता वीर विवशा निर्जनाद्वनात् ॥ ७ ॥
रुद्धा चान्तःपुरे दीना त्वच्चित्ता त्वत्परायणा ।
रक्षिता राक्षसीभिश्च विकृताभिः समन्ततः ॥ ८ ॥
प्रलोभ्यमाना विविधं भर्त्स्यमाना च मैथिली ।
न चाप्यचिन्तयद्रक्षस्त्वद्गतेनान्तरात्मना ॥ ९ ॥

विशुद्धां विरजस्कां च प्रतिगृह्णीष्व राघव ।
न किञ्चिदस्या वृजिनमहमाज्ञापयामि ते ॥१०॥
प्रच्छन्नं वा प्रकाशं वा सर्वमग्निरुदीक्षते ।
तस्मान्मे विदिता सीता प्रत्यक्षमनुपश्यतः ॥११॥
एवमुक्तो महातेजा धृतिमान् दृढविक्रमः ।
अब्रवीत् त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ॥१२॥
अवश्यं देव लोकेषु सीता पावनमर्हति ।
दीर्घकालोषिता ह्यीयं रावणान्तःपुरे शुभा ॥१३॥
बालिशः खलु कामात्मा रामो दशरथात्मजः।
इति वक्ष्यन्ति मां लोका जानकीमविशोध्य वै ॥१४॥
सीतायाश्चाप्युपक्रोशश्चारित्र्यं प्रतिगर्हितं ।
आत्मनश्चायशो लोके युगपत् संप्रमार्जितं ॥१५॥
अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीं ।
अहमप्यवगच्छामि मैथिलीं जनकात्मजां ॥१६॥
प्रत्ययार्थं तु लोकानां त्रयाणां लोकसंसदि ।
हुताशनं मया सीता प्रविशन्ती न वारिता ॥१७॥
इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा ।
रावणो नातिवर्तेत वेलामिव महोदधिः ॥१८॥
न हि शक्तः स दुष्टात्मा मनसापि च मैथिलीं ।
संधर्षयितुमप्राप्यां दीप्तामग्निशिखामिव ॥१९॥

नेयमर्हति दौश्वर्यं रावणान्तःपुरे शुभा ।
अनन्यहृदया सीता भास्करस्य यथा प्रभा ॥ २० ॥
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा ।
न विहातुं मया शक्या कीर्त्तिरात्मवता यथा ॥ २१ ॥
अवश्यं च मया कार्यं सर्वेषां भवतां वचः ।
स्निग्धानां लोकपालानामेवं हि ब्रुवतां हितं ॥ २२ ॥

इत्येवमुक्त्वा विजयी महाबलः
प्रशस्यमानः स्वकृतेन कर्मणा ।
समेत्य रामः प्रियया महायशाः
सुखी सुखार्हः स बभूव राघवः ॥ २३ ॥

इत्यार्षे रामायणे युद्धकाण्डे सीताविशुद्धिर्नाम
त्रिशततमः सर्गः ॥

## CIV.

एतच्छ्रुत्वा शुभं वाक्यं राघवस्य महात्मनः ।
ततो रामं प्रियं वाक्यं व्याजहार पितामहः ॥ १ ॥
संस्कृतं मधुरं श्लक्ष्णमर्थवद्धर्मसंहितं ।
स्वयम्भूरिति भगवान् प्रहृष्टेनान्तरात्मना ॥ २ ॥
पुस्कराक्ष महाबाहो शृणु वाक्यं परंतप ।
दिष्ट्या कृतमिदं कर्म त्वया धर्मभृतां वर ॥ ३ ॥
दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः ।
समुद्धृतं त्वया संख्ये राम रावणजं महत् ॥ ४ ॥
आश्वास्य भरतं दीनं कौशल्यां च तपस्विनीं ।
कैकेयीं च सुमित्रां च देवीं लक्ष्मणमातरं ॥ ५ ॥
प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनं ।
इक्ष्वाकूणां कुले वंशं स्थापयित्वा महात्मनां ॥ ६ ॥
इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः ।
ब्राह्मणेभ्यो धनं दत्वा त्रिदिवं गन्तुमर्हसि ॥ ७ ॥
एष राजा विमानस्थः पिता दशरथस्तव ।
काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥ ८ ॥
इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः ।
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ ९ ॥

पितामहवचः श्रुत्वा काकुत्स्थः सहलक्ष्मणः ।
विमानशिखरस्थस्य पितुः पादौ समस्पृशत् ॥ १० ॥
दीप्यमानं स्वया लक्ष्म्या विरजोऽम्बरधारिणं ।
लक्ष्मणेन सह भ्रात्रा ददर्श पितरं तदा ॥ ११ ॥
हर्षेण महताविष्टो विमानस्थो महीपतिः ।
प्राणैः प्रियतरौ पुत्रौ दृष्ट्वा दशरथस्तदा ॥ १२ ॥
स्नुषां सीतां च संपश्यन् प्रहर्षं परमं गतः ।
नात्युच्चैः स्थित आकाशे भूमिमावृत्य पार्थिवः ॥ १३ ॥
पुत्रं दशरथो राजा शान्त्वयन्निदमब्रवीत् ।
न मे बहुमतः स्वर्गः संवासो वा सुरर्षिभिः ॥ १४ ॥
त्वया राम विहीनस्य सत्यं मे वचनं शृणु ।
कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर ॥ १५ ॥
तव प्रव्रजनार्थं वै स्थितानि हृदये मम ।
त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य च राघवं ॥ १६ ॥
अद्य दुःखाद्विमुक्तोऽहं नीहारादिव भास्करः ।
तारितोऽहं त्वया पुत्र सत्पुत्रेण महात्मना ॥ १७ ॥
अष्टावक्रेण धर्मात्मन् पिता वै तारितो यथा ।
इदानीं चैव जानामि यथा सौम्य सुरेश्वरैः ॥ १८ ॥
बधार्थं रावणस्य त्वं वनवासाय दीक्षितः ।
सिद्धार्था खलु कौशल्या या त्वां राम गृहागतं ॥ १९ ॥

व्रताद्विमुक्तं संहृष्टा द्रक्ष्यते शत्रुसूदनं ।
सिद्धार्थाः खलु ते राम नरा ये त्वां पुरं गतं ॥ २० ॥
राज्ये चैवाभिषिक्तं वै द्रक्ष्यन्ति वसुधाधिपं ।
धन्योऽयं लक्ष्मणो भ्राता तव धर्मपरायणः ॥ २१ ॥
यस्य कीर्त्तिर्दिवं याता मह्रीं चावृत्य तिष्ठति ।
अपापा पुत्र वैदेही धर्मज्ञा धर्मदर्शिनी ॥ २२ ॥
देवाः सर्वस्य लोकस्य कुशलाकुशलं विदुः ।
अहं च त्वां वदाम्येष पिता दशरथः स्वयं ॥ २३ ॥
विशङ्को गतसंदेहः प्रतिगृह्णीष्व जानकीं ।
अनुरक्तेन विदुषा शुचिना धर्मचारिणा ॥ २४ ॥
इच्छेयं त्वामहं द्रष्टुं भरतेन समागतं ।
कुमारः पालनीयस्ते शत्रुघ्नो दयितो मम ॥ २५ ॥
यथा पिता तथा भ्राता ज्येष्ठो भवति धर्मतः ।
चतुर्दश समा वीर वने निर्यातितास्त्वया ॥ २६ ॥
वसता सीतया सार्द्धं मत्प्रीत्या लक्ष्मणेन च ।
विमुक्तवनवासोऽसि प्रतिज्ञा पूरिता त्वया ॥ २७ ॥
सत्यवादी त्वया पुत्र सत्पुत्रेण कृतोऽस्म्यहं ।
रावणं च रणे हत्वा देवास्ते परितोषिताः ॥ २८ ॥
कृतं कर्म यशःश्लाघ्यमनुरक्ता वयं गुणैः ।
भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥ २९ ॥

ईदृशो हि सुतो यस्य कीर्त्तिमानमितद्युतिः ।
मृतोऽपि जीवति व्यक्तं यथाहं तारितस्त्वया ॥ ३० ॥
इति ब्रुवाणं नृपतिं रामः प्राञ्जलिरब्रवीत् ।
ततोऽनुसंगृहीतोऽस्मि यत् प्रीतो मे भवान् गुरुः ॥ ३१॥
इदमिच्छाम्यहं त्वेकं भवत्प्रीत्या हितं वरं ।
कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ॥ ३२ ॥
सपुत्रां त्वां त्यजामीति यदुक्ता कैकयी त्वया ।
स शापः कैकयीं घोरः सपुत्रां न स्पृशेत् प्रभो ॥ ३३ ॥
तथेत्येवं पिता पुत्रं रामं दशरथोऽब्रवीत् ।
किमन्यत् करवाणीति प्रीतिमांश्चेदमब्रवीत् ॥ ३४ ॥
तमुवाच ततो रामः शिवेनेक्षस्व मामिति ।
ततो लक्ष्मणमामन्त्र्य पिता दशरथोऽब्रवीत् ॥ ३५ ॥
धर्मं प्राप्स्यसि धर्मज्ञ यशश्च विपुलं भुवि ।
रामे प्रसन्ने स्वर्गं च महिमानं तथोत्तमं ॥ ३६ ॥
रामं शुश्रूष भद्रं ते सुमित्रानन्दिवर्धन ।
रामो हि सर्वलोकस्य हिते प्रतिरतः सदा ॥ ३७ ॥
एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः ।
अभिवाद्य महात्मानमर्चन्ति पुरुषोत्तमं ॥ ३८ ॥
एतावदुक्तमव्यक्तमक्षरं ब्रह्म शाश्वतं ।
देवानां हृदयं सौम्य गुह्यं रामः परंतपः ॥ ३९ ॥

अवाप्तं धर्ममखिलं यशश्च विपुलं त्वया ।
सौभ्रात्रमेतल्लोकेषु कथयिष्यन्ति मानवाः ॥४०॥
इत्युक्त्वा लक्ष्मणं राजा स्नुषां बद्धाञ्जलिस्थितां ।
पुत्रीत्याभाष्य मधुरं शनैरेनामुवाच ह ॥४१॥
कर्तव्यो न तु वैदेहि मन्युस्त्यागसमाश्रितः ।
श्रीरामेण विशुद्ध्यर्थं कृतं वै तद्धितैषिणा ॥४२॥
सुदुष्करमिदं पुत्रि तव चारित्रलक्षणं ।
कृतं यत् तेऽद्य नारीणां यशो ह्यभिभविष्यति ॥४३॥
न त्वं कामं समाधेया भर्तुः शुश्रूषणे रता ।
अवश्यं तु मया वाच्यमेष ते दैवतं परं ॥४४॥
इति प्रतिसमादिश्य पुत्रौ सीतां च राघवः ।
इन्द्रलोकं विमानेन ययौ दशरथो ज्वलन् ॥४५॥

स गतिमनुसरन् सुराभिजुष्टाम्
असुरनिकामरवद्विराजमानः ।
क्षितितलमवलोकयन् प्रयातः
सुतवदनं शशिवन्निरीक्षमाणः ॥४६॥

इत्यार्षे रामायणे युद्धकाण्डे दशरथदर्शनं नाम
चतुःशततमः सर्गः ॥

# युद्धकाण्डं

## CV.

प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः ।
अब्रवीत् परमप्रीतो राघवं प्राञ्जलिस्थितं ॥ १ ॥
अमोघं दर्शनं राम अस्माकं पुरुषर्षभ ।
परितुष्टाःस्म तेन त्वं ब्रूहि यन्मनसेच्छसि ॥ २ ॥
एवमुक्तो महेन्द्रेण प्रसन्नेन महात्मना ।
सुप्रसन्नमना हृष्टो वचनं प्राह राघवः ॥ ३ ॥
यदि प्रीतोऽसि मे देव सर्वामरजगत्पते ।
वक्ष्यामि हि वरं किञ्चित् तन्मे त्वं दातुमर्हसि ॥ ४ ॥
मम हेतोः पराक्रान्ता ये गता यमसादनं ।
ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ५ ॥
विक्रान्ताश्चापि शूरास्ते मृत्युं न गणयन्ति च ।
कृत्वा कर्म विपन्नाश्च जीवेयुस्तेऽमराधिप ॥ ६ ॥
मत्कृते निहताः शूरा मत्प्रिये सततं स्थिताः ।
तव प्रसादाज्जीवन्तु वरमेतमहं वृणे ॥ ७ ॥
नीरुजो निर्व्रणांश्चैव संपन्नबलपौरुषान् ।
गोलाङ्गुलांस्तथैवर्क्षान् द्रष्टुमिच्छामि मानद ॥ ८ ॥
अकाले चापि पुष्पाणि मूलानि च फलानि च ।
नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥ ९ ॥

श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः ।
महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिसंयुतं ॥१०॥
त्वयुक्तमनुरूपं च कौशल्यानन्दिवर्धन ।
यत् त्वं कृतोपकाराणां सुहृदां हितमिच्छसि ॥११॥
महांस्त्वयं वरस्तात यस्त्वयोक्तो रघूत्तम ।
सामरेष्वपि लोकेषु नैतदन्यः करिष्यति ॥१२॥
ऋते वै त्वां महाबाहो हतानां दर्शनं पुनः ।
यन्मयोक्तं वचः पूर्वं तस्मादेवं भविष्यति ॥१३॥
समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा ।
गोलाङ्गुलास्तथर्क्षाश्च वानराः सह यूथपैः ॥१४॥
संपूर्णबलवीर्यास्ते रूढव्रणशरीरिणः ।
रणाजिरे हता ये तु सर्वे प्राप्स्यन्ति जीवितं ॥१५॥
सुहृद्भिः सह मित्रैश्च बान्धवैः स्वजनेन च ।
सर्व एव भविष्यन्ति युक्ताः परमया मुदा ॥१६॥
अकाले पुष्पवन्तश्च फलवन्तश्च पादपाः ।
भविष्यन्ति महेष्वास नद्यश्च सलिलैर्युताः ॥१७॥
एवमुक्त्वा स शक्रस्तु देवराजो महायशाः ।
वर्षेणामृतयुक्तेन ववर्षायोधनं प्रति ॥१८॥
ततस्तेऽमृतसंस्पर्शात् तत्क्षणाल्लब्धजीविताः ।
समुत्तस्थुर्महात्मानः सर्वे स्वप्नक्षयादिव ॥१९॥

ते वीरशयने वीराः समुत्थाय सहस्रशः ।
अन्योन्यं संपरिष्वज्य राघवं चाभ्यवादयन् ॥ २० ॥
सव्रणैः पातिता गात्रैर्निर्व्रणाः पुनरुत्थिताः ।
बभूवुर्वानराः सर्वे विस्मयोत्फुल्ललोचनाः ॥ २१ ॥
काकुत्स्थं परिपूर्णार्थं दृष्ट्वा रामं सुरोत्तमाः ।
अब्रुवन् परमप्रीताः स्तुत्वा रामं सलक्ष्मणं ॥ २२ ॥
गच्छायोध्यामितो वीर विसर्जय च वानरान् ।
मैथिलीं सान्त्वयस्वैनामनुरक्तां यशस्विनीं ॥ २३ ॥
भ्रातरं भरतं पश्य त्वदर्थं व्रतकर्षितं ।
अभिषेचय चात्मानं पौरान् गत्वा प्रहर्षय ॥ २४ ॥
एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह ।
विमानैः सूर्यसंकाशैर्ययौ हृष्टः सुरेश्वरः ॥ २५ ॥
अभिवाद्य च काकुत्स्थः सर्वांस्तान् सुरसत्तमान् ।
लक्ष्मणेन सह भ्रात्रा सर्वमाज्ञापयत् तदा ॥ २६ ॥

इत्यार्षे रामायणे युद्धकाण्डे वानरजीवनं नाम
पञ्चशततमः सर्गः ॥

## CVI.

तां रात्रिमुषितं रामं सुखासीनमरिन्दमं ।
अब्रवीत् प्राञ्जलिर्वाक्यं वाक्यज्ञः स विभीषणः ॥ १ ॥
स्नानानि चाङ्गरागांश्च माल्यानि विविधानि च ।
चन्दनानि च मुख्यानि वासांस्याभरणानि च ॥ २ ॥
अलङ्कारविधौ युक्तास्तान्यादाय वरस्त्रियः ।
उपस्थितास्त्वां विधिना स्नापयिष्यन्ति राघव ॥ ३ ॥
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणं ।
स तपस्वी तपोयुक्तो मम हेतोः सुदुःखितः ॥ ४ ॥
सुकुमारो महाबाहुर्भरतः सत्यसंगरः ।
तं विना कैकयीपुत्रं भरतं धर्मचारिणं ॥ ५ ॥
न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ।
एतत् पश्य यथा क्षिप्रं प्रतिगच्छाम्यहं पुरीं ॥ ६ ॥
अयोध्यागामिको ह्येष पन्थाः परमदुर्गमः ।
एवमुक्तस्तु रामेण प्रत्युवाच विभीषणः ॥ ७ ॥
अहं त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज ।
पुष्पकं नाम भद्रं ते विमानं सूर्यसंनिभं ॥ ८ ॥
मम भ्रातुः कुवेरस्य रावणेन बलीयसा ।
हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमं ॥ ९ ॥

तदिदं सूर्यसंकाशं विमानमिह तिष्ठति ।
येन यास्यसि यानेन त्वमयोध्यां गतज्वरः ॥१०॥
यदि तेऽहमनुग्राह्यो यदि स्मरसि मे गुणान् ।
वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदं ॥११॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या भार्यया सह ।
अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि ॥१२॥
प्रीतियुक्तस्य मे राम ससैन्यः ससुहृज्जनः ।
सत्क्रियां विधिवत् तावत् प्रतिगृह्णीष्व राघव ॥१३॥
प्रणयाद्बहुमानाच्च सौहार्देन च राघव ।
प्रसादयामि भृत्योऽहं न खल्वाज्ञापयामि ते ॥१४॥
एवमुक्तस्ततो रामः प्रत्युवाच विभीषणं ।
रक्षसां वानराणां च सर्वेषामेव शृण्वतां ॥१५॥
पूजितोऽस्मि त्वया वीर साचिव्येन परेण च ।
न खल्वेतन्न कुर्यां च वचनं राक्षसेश्वर ॥१६॥
तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ।
मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ॥१७॥
शिरसा याचमानस्य न कृतं वचनं मया ।
कौशल्यां च सुमित्रां च कैकेयीं चैव मातरं ॥१८॥
गुरुं च सुहृदं चैव द्रष्टुमिच्छति मे मनः ।
अनुजानीहि मां सौम्य पूजितोऽस्मि विभीषण ॥१९॥

मन्युर्न खलु कर्तव्यः सखे त्वां चानुमानये ।
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर ॥ २० ॥
कृतकार्यस्य मे वासः कथं स्यादिह संमतः ।
एवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः ॥ २१ ॥
विमानं सूर्यसंकाशमाजुहाव त्वरान्वितः ।
दिव्यं काञ्चनचित्राङ्गं वैडूर्यमणिवेदिकं ॥ २२ ॥
पाण्डराभिः पताकाभिर्ध्वजैश्च बहुभिर्युतं ।
शोभितं हेमकक्ष्यैश्च हेमपट्टविभूषितं ॥ २३ ॥
घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनं ।
दान्तस्फाटिकचित्राङ्गैर्वैडूर्यप्रवरासनैः ॥ २४ ॥
तन्मेरुशिखराकारं निर्मितं विश्वकर्मणा ।
कामगं रुचिरं दिव्यं मनोऽभिप्रेतमव्ययं ॥ २५ ॥
उपस्थितमनाधृष्यं तद्विमानं मनोजवं ।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ २६ ॥

इत्यार्षे रामायणे युद्धकाण्डे पुष्पकोपस्थानं नाम
षट्शततमः सर्गः ॥

# युद्धकाण्डं

## CVII.

उपस्थितं तु तं दृष्ट्वा विमानं पुष्पकं ततः ।
उवाच राक्षसश्रेष्ठः किं करोमीति राघवं ॥ १ ॥
तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः ।
विमृष्य राघवो वाक्यमिदं स्नेहपुरस्कृतं ॥ २ ॥
इमे च कृतकर्माणः सर्व एव वनौकसः ।
रत्नैरर्थैश्च विविधैः संपूज्यन्तां विभीषण ॥ ३ ॥
सहामीभिस्त्वया लङ्का निर्जिता राक्षसेश्वर ।
दूरे प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिनः ॥ ४ ॥
एवं संभाविताश्चैव मानार्हा मानितास्त्वया ।
भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ५ ॥
त्यागिनं संगृहीतारं सानुक्रोशं मनस्विनं ।
यतस्त्वामधिगच्छामि ततस्त्वां प्रब्रवीम्यहं ॥ ६ ॥
धर्मार्थविदुषं वीरमपि दातारमूर्जितं ।
योधा भजन्ति राजानमेतद्भूमिपतेर्व्रतं ॥ ७ ॥
एवमुक्तस्तु रामेण वानरांस्तान् विभीषणः ।
धनरत्नप्रदानेन सर्वानेवाभ्यपूजयत् ॥ ८ ॥
ततस्तान् वानरान् दृष्ट्वा धनरत्नैश्च पूजितान् ।
आरुरोह तदा रामस्तद्विमानं मनोजवं ॥ ९ ॥

अङ्कनादाय वैदेहीं लज्जमानां यशस्विनीं ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ १० ॥
अब्रवीच्च विमानस्थो राघवः सर्व्ववानरान् ।
सुग्रीवं च महावीर्यं राक्षसं च विभीषणं ॥ ११ ॥
मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ॥ १२ ॥
यत् तु कार्यं वयस्येन स्निग्धेन च हितेन च ।
कृतं सुग्रीव तत् सर्वं भवता धर्मचारिणा ॥ १३ ॥
किष्किन्ध्यां गच्छ सुग्रीव स्वराज्यमनुपालय ।
विभीषण महाबाहो क्षत्रधर्मभृतां वर ॥ १४ ॥
स्वराज्यं ते मया दत्तं लङ्कायां राक्षसेश्वर ।
न च त्वां धर्षयिष्यन्ति सेन्द्रा अपि दिवौकसः ॥ १५ ॥
अयोध्यामधिगच्छामि राजधानीं पितुर्मम ।
अभ्यनुज्ञातमिच्छामि सर्वानामन्त्रयामि वः ॥ १६ ॥
एवमुक्तास्तु रामेण हरीन्द्रो हरियूथपाः ।
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ॥ १७ ॥
अयोध्यां नगरीं गन्तुमिच्छामः सहितास्त्वया ।
तवाभिषेकमिच्छामो द्रष्टुं हृदयकाङ्क्षितं ॥ १८ ॥
दृष्ट्वा तवाभिषेकं च कौशल्यामभिवाद्य च ।
न चिरादागमिष्यामः स्वगृहान् नृपसत्तम ॥ १९ ॥

एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः ।
अब्रवीद्वानरश्रेष्ठान् ससुग्रीवविभीषणान् ॥ २० ॥
प्रियात् प्रियतमं लब्धं मया यदि गमिष्यथ ।
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ २१ ॥
क्षिप्रमारोह सुग्रीव विमानं सह यूथपैः ।
त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥ २२ ॥
ततः स पुष्पकं दिव्यं सुग्रीवः सह यूथपैः ।
आरुरोह मुदा युक्तः सामात्यश्च विभीषणः ॥ २३ ॥
तेष्वारूढेषु सर्वेषु कौवेरं यानमुत्तमं ।
राघवेणाभ्यनुज्ञातं दिवमेवोत्पपात ह ॥ २४ ॥
खे चरेण विमानेन कामगेन विराजता ।
प्रतीतश्च प्रहृष्टश्च ययौ रामः कुबेरवत् ॥ २५ ॥

इत्यार्षे रामायणे युद्धकाण्डे पुष्पकारोहणं नाम
सप्तशततमः सर्गः ॥

## CVIII.

अनुज्ञातं तु रामेण तद्विमानं मनोजवं ।
उत्पपात महामेघः श्वसनेनोद्धतो यथा ॥ १ ॥
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननां ॥ २ ॥
कैलाशशिखराकारे त्रिकूटशिखरे स्थितां ।
पश्य लङ्कां तु वैदेहि निर्मितां विश्वकर्मणा ॥ ३ ॥
एतदायोधनं पश्य मांसशोणितकर्दमं ।
हरीणां राक्षसानां च सीते विशसनं महत् ॥ ४ ॥
कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः ।
अत्रेन्द्रजिन्महावीरो लक्ष्मणेन निपातितः ॥ ५ ॥
तव हेतोर्विशालाक्षि निकुम्भश्च हतो रणे ।
विरूपाक्षश्च दुर्धर्षो महापार्श्वमहोदरौ ॥ ६ ॥
अतिकायश्च तेजस्वी देवान्तकनरान्तकौ ।
अकम्पनश्च निहतो धूम्राक्षश्च महाबलः ॥ ७ ॥
विद्युज्जिह्वः ससम्पाती मकराक्षश्च दुर्जयः ।
अन्ये च बहवः शूरा राक्षसेन्द्रपदानुगाः ॥ ८ ॥
अत्रावां मेघनादेन बद्धौ मैथिलि मायया ।
निराशा वानराश्चैव ससुग्रीवविभीषणाः ॥ ९ ॥

रुरुदुर्वानराः सर्वे रामे निधनमागते ।
वैनतेयान्मुहूर्त्ताच्च विमुक्तौ शरबन्धनात् ॥१०॥
अत्र लब्धवरः शेते प्रमाथी राक्षसाधिपः ।
तव हेतोर्विशालाक्षि रावणो निहतो मया ॥११॥
अत्र मन्दोदरी नाम करुणं पर्यदेवयत् ।
पत्नी राक्षसराजस्य रावणस्य दुरात्मनः ॥१२॥
एषोऽसौ दृश्यते देवि समुद्रः सरितां पतिः ।
पौर्विको ज्ञातिरस्माकं येन सख्यं कृतं मम ॥१३॥
एतत् तु दृश्यते पृष्ठं सुवेलस्य वरानने ।
यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयं ॥१४॥
एष सेतुर्मया बद्धः सागरे मकरालये ।
तव हेतोर्विशालाक्षि कीर्त्तिरेषा भविष्यति ॥१५॥
यावन् स्थास्यन्ति गिरयो यावत् स्थास्यति सागरः ।
नलसेतुरिति ख्यातस्तावच्च स्थास्यति ध्रुवं ॥१६॥
पश्य सागरमक्षोभ्यं वैदेहि वरुणालयं ।
अपारमिव गर्ज्जन्तं शङ्खमीनसमाकुलं ॥१७॥
सुरसा नाम तत्रास्य दूतस्य तव मैथिलि ।
विघ्नं हनूमतश्चक्रे क्रमतो मारुतेः किल ॥१८॥
हिरण्यनाभं शैलं तं काञ्चनं पश्य मैथिलि ।
विश्रामार्थं हनूमतो भित्त्वा सागरमुत्थितं ॥१९॥

एतद्धेलावनं देवि तमालवनशोभितं ।
हिन्तालतालगहनं नक्तमालसमाकुलं ॥ २० ॥
एष तीरे समुद्रस्य स्कन्धावारो यशस्विनि ।
यत्र राक्षसराजोऽयमाजगाम विभीषणः ॥ २१ ॥
अत्राहं शयितो देवि कुशास्तीर्णे महीतले ।
दर्शनार्थं समुद्रस्य त्रिरात्रं नररूपिणः ॥ २२ ॥
दर्दुरश्चापि शैलोऽयं महामेघौघसंनिभः ।
मलयस्य गिरेः पादो यत्र क्रान्तं हनूमता ॥ २३ ॥
एषा सा दृश्यते सीते किष्किन्धा चित्रकानना ।
सुग्रीवनगरी रम्या यत्र बाली हतो मया ॥ २४ ॥
एतन्माल्यवतः शृङ्गं किष्किन्ध्याद्वारि भास्वरं ।
चत्वारो वार्षिका मासा यत्र देव्युषिता मया ॥ २५ ॥
त्वया विना विशालाक्षि यत्र दुःखं धृतं मया ।
निहत्य बालिनं घोरं सुग्रीवमभिषिच्य च ॥ २६ ॥
वीक्षस्व सुमहान् सीते सविद्युदिव तोयदः ।
ऋष्यमूको गिरिवारो धातुभिर्बहुभिर्वृतः ॥ २७ ॥
यत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ।
समयश्च कृतः सीत बधार्थं बालिनो मया ॥ २८ ॥
एषा सा दृश्यते पम्पा नलिनी चित्रकानना ।
त्वया विहीनो यत्राहं तनू तद्धरु विलप्तवान् ॥ २९ ॥

अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ।
अत्र योजनबाहुश्च कबन्धो निहतो मया ॥ ३० ॥
एष देशः स यत्रास्ते गृध्रराजो महाबलः ।
जटायुस्त्वां परित्राता रावणेन निपातितः ॥ ३१ ॥
दृश्यतेऽसौ जनस्थाने सीते श्रीमान् वनस्पतिः ।
अत्र युद्धं महद्वृत्तं तव हेतोर्विलासिनि ॥ ३२ ॥
खरश्च निहतः सख्ये दूषणस्त्रिशिरास्तथा ।
रक्षसां च सहस्राणि निहतानि चतुर्दश ॥ ३३ ॥
एषा सा पर्णशाला च दृश्यते चारुदर्शने ।
यतस्त्वं राक्षसेन्द्रेण रावणेन हृता बलात् ॥ ३४ ॥
अत्र शूर्पणखा रौद्री राक्षसी मामुपस्थिता ।
यस्याः कर्णौ च नासां च छिन्नवान् देवि लक्ष्मणः ॥ ३५ ॥
एषा गोदावरी रम्या प्रसन्नसलिला शुभा ।
अगस्त्यस्याश्रमश्चैव दृश्यते कदलीवृतः ॥ ३६ ॥
दृश्यते चैष वैदेहि शरभङ्गाश्रमो महान् ।
उपयातः सहस्राक्षो यत्र देवः पुरंदरः ॥ ३७ ॥
एते तु तापसावासा दृश्यन्ते तनुमध्यमे ।
अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरप्रभः ॥ ३८ ॥
अस्मिन् देशे महाकायो विराधो निहतो मया ।
अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी ॥ ३९ ॥

दृश्यते चैष वैदेहि मुनेरत्रेर्महाश्रमः ।
यस्यासीदङ्गरागस्ते दत्तः पत्न्यानसूयया ॥ ४० ॥
दृश्यतेऽयं च वैदेहि चित्रकूटः शिलोच्चयः ।
यत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥ ४१ ॥
एषा मन्दाकिनी पुण्या नदी सुविमलोदका ।
पितुर्निर्वपणं यत्र मया मूलफलैः कृतं ॥ ४२ ॥
एषा च यमुना रम्या दृश्यते चित्रकानना ।
भरद्वाजाश्रमश्चैष प्रयागमभितः शिवः ॥ ४३ ॥
इयं च दृश्यते सीते गङ्गा त्रिपथगामिनी ।
शृङ्गवेरपुरं चैव गुहो यत्र सखा मम ॥ ४४ ॥
इङ्गुदीमूलमेतच्च दृश्यते तनुमध्यमे ।
एकरात्रोषिता यत्र तीर्त्वा भागीरथीं वयं ॥ ४५ ॥
एषा सा दृश्यते सीते राजधानी पितुर्मम ।
अयोध्या कुरु वैदेहि प्रणामं पुनरागता ॥ ४६ ॥
ततस्ते वानराः सर्वे ससुग्रीवविभीषणाः ।
उत्पत्योत्पत्य संहृष्टाः पुरीं तां ददृशुस्तदा ॥ ४७ ॥

इत्यार्षे रामायणे युद्धकाण्डे रामप्रत्यागमनं नाम
अष्टशततमः सर्गः ॥

# युद्धकाण्डं

## CIX.

अथैवं कथयन्नेव सीतायै रघुनन्दनः ।
भरद्वाजस्य संप्रापदाश्रमं सुमहामुनेः ॥ १ ॥
पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः ।
भरद्वाजमुपागम्य प्रणम्योवाच राघवः ॥ २ ॥
श्रुतं भगवता कच्चित् सुसुभिक्षमनामयं ।
कच्चिच्च भरतो युक्तो जीवन्त्यपि च मातरः ॥ ३ ॥
एवमुक्तो भरद्वाजो राघवं प्रत्यभाषत ।
शृणु वत्स यथातत्त्वं भरतस्य विचेष्टितं ॥ ४ ॥
जटिलो मलदिग्धाङ्गो भरतस्त्वामुदीक्षते ।
पादुके च पुरस्कृत्य सर्वत्र कुशलं गृहे ॥ ५ ॥
यत् पुरा चीरवसनं त्वां दृष्ट्वा वनवासिनं ।
कारुण्यमभवद्भूयो ममेह समितिञ्जय ॥ ६ ॥
तत् संप्रति समृद्धार्थं समिद्धमिव पावकं ।
समीक्ष्य विजितारिं त्वां मम प्रीतिरनुत्तमा ॥ ७ ॥
सर्वं हि सुखदुःखं ते विदितं मम राघव ।
यत् त्वया विपुलं प्राप्तं जनस्थानबधाद्यशः ॥ ८ ॥
ब्राह्मणार्थे नियुक्तेन रक्षता सर्वतापसान् ।
मारीचदर्शनं चैव सीतापहरणं तथा ॥ ९ ॥

कबन्धदर्शनं चैव पम्पाया दर्शनं तथा ।
सुग्रीवेण च ते सख्यं यच्च बाली हतस्त्वया ॥ १० ॥
मार्गणं चापि वैदेह्याः कर्म वातात्मजस्य च ।
विदितायां तु वैदेह्यां नलसेतुर्यथा कृतः ॥ ११ ॥
यथा च दीपिता लङ्का प्रहृष्टैर्हरियूथपैः ।
यथा च निहते तस्मिन् रावणे लोककण्टके ॥ १२ ॥
विभीषणाभिषेकश्च सत्कारो रावणस्य च ।
समागमश्च त्रिदशैर्यथा दत्तवराश्च ते ॥ १३ ॥
अहमप्यद्य ते राम ददामि वरमीप्सितं ।
वसार्घ्यं प्रतिगृह्णोह श्वस्त्वयोध्यां गमिष्यसि ॥ १४ ॥
तस्य तच्छिरसा वाक्यं प्रतिगृह्य तु राघवः ।
वाढमित्येव संहृष्ट इमं वरमयाचत ॥ १५ ॥
अकाले फलिता वृक्षाः सर्वतश्च मधुच्युतः ।
भवन्तु भगवन् नित्यं वानराणां कृते मम ॥ १६ ॥
निष्फलाः सन्तु फलदा अपुष्पाः पुष्पशोभिताः ।
शुष्काश्चैव सपत्राः स्युर्विस्रवेयुर्मधूनि च ॥ १७ ॥
रामेणोदाहृतं श्रुत्वा भरद्वाजो महातपाः ।
एवमस्त्विति चोवाच वरस्ते भुवि दुर्लभः ॥ १८ ॥
मत्प्रसादाद्रघुश्रेष्ठ भविष्यति न सशयः ।
वरं लब्धा तु सुप्रीतो निशां तां सुखमावसत् ॥ १९ ॥

तस्यां निशि प्रभातायां सूर्यस्योदयनं प्रति ।
चिन्तयित्वा ततो दृष्टिं वानरेषु न्यपातयत् ॥ २० ॥
प्रियकामं परं रामस्ततस्त्वरितविक्रमं ।
मतिमन्तं हनूमन्तमिदं वचनमब्रवीत् ॥ २१ ॥
एहि मे प्रहितो याहि त्वमयोध्यां वने चर ।
कुशलं भरतं ब्रूहि राजपुत्रं यशस्विनं ॥ २२ ॥
जानीहि कुशलं कच्चिदिक्ष्वाकुकुलमन्दिरे ।
शृङ्गवेरपुरं प्राप्य गुहं गहनचारिणं ॥ २३ ॥
ब्रूया निषादाधिपतिं कुशलं वचनान्मम ।
श्रुत्वा हि मां कुशलिनमरोगं विगतज्वरं ॥ २४ ॥
भविष्यति गुहः प्रीतः स मे प्राणसमः सखा ।
पश्यन् हितमयोध्यायां प्रवृत्तिं भरतस्य च ॥ २५ ॥
निवेदयिष्यसि प्रीतो वाच्यश्च भरतस्त्वया ।
कुशली सर्वसिद्धार्थः सभार्यः सहलक्ष्मणः ॥ २६ ॥
सह राक्षसराजेन हरीणामीश्वरेण च ।
जित्वा शत्रुगणं रामः प्राप्य चानुत्तमं यशः ॥ २७ ॥
उपायातः समृद्धार्थो राघवः सुमहाबलः ।
हरणं चापि वैदेह्या रावणेन बलीयसा ॥ २८ ॥
सुग्रीवसमवायं च बालिनश्च रणे बधं ।
सीताया मार्गणं चैव यथा चाधिगता त्वया ॥ २९ ॥

लङ्घयित्वा महातोयमापगाधिपतिं तदा ।
उपायनं समुद्रस्य सागरस्य च लङ्घनं ।। ३० ।।
यथा तत्र कृतः सेतू रावणश्च रणे हतः ।
वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च ।। ३१ ।।
वैवस्वतप्रसादं च पित्रा मम च संगमं ।
एतच्छ्रुत्वा समाचारं भरतो यद्वदेत् त्वयि ।। ३२ ।।
तच्च वेदयितव्यं ते मम प्रति महायशाः ।
ज्ञेयाः सर्वे च वृत्तान्ता भरतस्येङ्गितानि च ।। ३३ ।।
सान्त्वेन मुखवर्णेन दृष्ट्या चाभाषितेन च ।
सर्वकामसमृद्धं हि हस्त्यश्वरथसंकुलं ।। ३४ ।।
पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः ।
संगत्या भरतः श्रीमान् राज्येनार्थी भवेद्यदि ।। ३५ ।।
प्रशास्तु वसुधां सर्वां चिराय रघुनन्दनः ।
तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर ।। ३६ ।।
यावन्न दूरं याताः स्म क्षिप्रमागन्तुमर्हसि ।
न तस्यैवंविधं चित्तं भूतपूर्वं कदाचन ।। ३७ ।।
प्रकृतिर्नीतिशास्त्राणां येनैवं क्रियते मया ।
कामं न स नरव्याघ्रः कृतां संस्थामतिक्रमेत् ।। ३८ ।।
न स मार्गात् तु विचलेद्धर्मो मानुषविग्रहः ।
हृदयेनाभिजानामि भरतस्य तु हृद्गतं ।। ३९ ।।

मन्निमित्तमपि प्राणांस्त्यजेन्नास्त्यत्र संशयः ।
न चास्ति स्वकृते दोषो दोषो दोषगवेषणे ॥४०॥
इति प्रतिसमादिष्टो हनूमान् मारुतात्मजः ।
गङ्गायमुनयोः सङ्गं नमस्कृत्य महाबलः ॥४१॥
लङ्घयित्वा त्रिपथगां भुजगेन्द्रालयां शुभां ।
मानुषं धारयन् रूपं शृङ्गवेरपुरं ययौ ॥४२॥
शृङ्गवेरपुरं प्राप्य गुहमासाद्य वीर्यवान् ।
स वाचा शुभया हृष्टो हनूमानिदमब्रवीत् ॥४३॥
सखा वै तव काकुत्स्थो रामः सत्यपराक्रमः ।
अब्रवीत् कुशलं वीरः ससीतः सहलक्ष्मणः ॥४४॥
गुहस्तु वचनं तस्य श्रुत्वा परमहर्षितः ।
हर्षगद्गदया वाचा पप्रच्छागतसंभ्रमः ॥४५॥
क्व नु रामः क्व वैदेही धृतिमान् क्व च लक्ष्मणः ।
ह्लादितोऽस्मि त्वयात्यर्थं जलौघेनेव मेदिनी ॥४६॥
ततः स हनुमांस्तस्य यथातत्त्वं न्यवेदयत् ।
स इमां रजनीमद्य ह्युषित्वा वचनान्मुनेः ॥४७॥
भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवं ।
एवमुक्त्वा महातेजा हनूमान् मारुतात्मजः ॥४८॥
अथोत्पपात वेगेन वेगवानविचारयन् ।
सोऽपश्यद्रामतीर्थं च नदीं शाल्वकिनीं तथा ॥४९।

जारूथीं गोमतीं चैव भीमं सालवनं तथा ।
स गत्वा दीर्घमध्वानं महात्मा कपिकुञ्जरः ॥५०॥
आससाद द्रुमान् फुल्लान् नन्दिग्रामसमीपजान् ।
क्रोशमात्रे त्वयोध्याया वीरः कृष्णाजिनाम्बरं ॥५१॥
ददर्श भरतं दीनं कृशमाश्रमवासिनं ।
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्षितं ॥५२॥
पादुके ते पुरस्कृत्य पालयन्तं वसुन्धरां ।
चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ॥५३॥
उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः ।
बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः ॥५४॥
न हि ते राजपुत्रं तु काषायाम्बरधारिणं ।
परित्यक्तुं व्यवस्यन्ति पौरा वै पौरवत्सलं ॥५५॥
तं धर्ममिव धर्मज्ञं देहवन्तमिवामरं ।
रामचिन्तापरिद्यूनं पितृदुःखसमाकुलं ॥५६॥
उपगम्य हनूमांस्तु भरतं धर्मचारिणं ।
अब्रवीत् प्राञ्जलिर्वाक्यमिदं प्लवगसत्तमः ॥५७॥
वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरं ।
अनुशोचसि काकुत्स्थं स त्वां कौशल्यमब्रवीत् ॥५८॥
निहत्य रावणं रामः प्रतिलभ्य च मैथिलीं ।
उपायातः स सिद्धार्थः सह मित्रैर्महाबलः ॥५९॥

लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ।
नन्दिष्यसि महाबाहो सुवृष्टेनेव कर्षकः ॥ ६० ॥
क्षिप्रमुत्तिष्ठ भद्रं ते पश्य भ्रातरमागतं ।
विजित्य लोकांस्त्रीन् विष्णुः सहस्राक्षमिवागतं ॥ ६१ ॥
एतत् तु दृश्यते दूराद्धंसयुक्तं मनोजवं ।
तरुणादित्यसंकाशं विमानं रामवाहनं ॥ ६२ ॥
एवमुक्तो हनुमता भरतः केकयीसुतः ।
उत्पपात तदा हृष्टो हर्षान्मोहं जगाम च ॥ ६३ ॥
ततो मुहूर्त्तादुत्थाय भरतो भ्रातृवत्सलः ।
प्रत्युवाच हनूमन्तं भरतः प्रियवादिनं ॥ ६४ ॥
अशोकजैः प्रीतिमयैः प्रियावेदनसंभवैः ।
सिषेच कपिमुख्यस्य गात्रमेवाश्रुबिन्दुभिः ॥ ६५ ॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ।
प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतो वरं ॥ ६६ ॥
गवां शतसहस्राणि ग्रामाणां च शतानि ते ।
सत्कुलाः सुशुभाचारा भार्याः कन्याश्च षोडश ॥ ६७ ॥
दासीशतपरीवाराः शशिसौम्याननाः स्त्रियः ।
सर्वलक्षणसंपन्नाः संपन्नाः कुलजातिभिः ॥ ६८ ॥
सुवर्णस्य सहस्रे द्वे दासीनां च शतं तथा ।
यच्चान्यन्मार्गसे सौम्य तच्च सर्वं ददामि ते ॥ ६९ ॥

## CX.

बहूनामपि वर्षाणामिदं श्रुतिरसायनं ।
शृणोम्यहं प्रीतिकरं यन्नाथस्याद्य दर्शनं ॥ १ ॥
अद्य श्रुतिप्रीतिकरं मम नाथस्य कीर्त्तनं ।
पौराणी चैव गाथेयं लौकिकी प्रतिभाति मे ॥ २ ॥
एति जीवन्तमानन्दो नरं वर्षशतादपि ।
एवमुक्ताथ भरतो हनुमन्तं महाबलं ॥ ३ ॥
अपृच्छद्रामवृत्तान्तं ममाचक्ष्व प्लवङ्गम ।
यद्यपि श्रुतवानस्मि विग्रहं रावणं प्रति ॥ ४ ॥
चारेण सुप्रयुक्तेन कृतोद्योगो रणं प्रति ।
त्वयि मे प्रत्ययस्तात यस्त्वं रामादुपागतः ॥ ५ ॥
स पृष्टो राजपुत्रेण तुष्ट्या समुपसेवितः ।
आचचक्षे तदा सर्वं रामस्य चरितं महत् ॥ ६ ॥
यथा प्रव्रजितो रामो मातुर्दत्ते वरे तव ।
यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ७ ॥
यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात् प्रभो ।
त्वयायोध्यां प्रविष्टेन यथा राज्यं च नेप्सितं ॥ ८ ॥
चित्रकूटगिरिं गत्वा राज्येनामित्रकर्षणः ।
निमन्त्रितस्त्वया भ्राता धर्ममाचरता सतां ॥ ९ ॥

स्थितेन च वने राज्ञा तेन ते न वचः कृतं ।
तत्पादुके त्वमादाय यथा च पुनरागतः ॥१०॥
सर्वमेतन्महाबाहो यथावद्विदितं तव ।
त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥११॥
संप्रयाते त्वयि तदा राघवः सहलक्ष्मणः ।
निर्जनं व्यालसंपन्नं प्राविशद्दण्डकं वनं ॥१२॥
तेषां पुरस्ताद्बलवान् गच्छतां गहने वने ।
राक्षसः सुमहावीर्यो विराधः प्रत्यदृश्यत ॥१३॥
तं निहत्य महाकायमूर्द्ध्वपादमधोमुखं ।
अवटे प्राक्षिपद्रामो नदन्तमिव कुञ्जरं ॥१४॥
तत् कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ ।
सायाह्ने शरभङ्गस्य संप्राप्तौ रम्यमाश्रमं ॥१५॥
शरभङ्गे दिवं याते रामः सत्यपराक्रमः ।
तापसानर्चयित्वा तु जनस्थानमुपागमत् ॥१६॥
अगस्त्यमभिवाद्याथ परमर्षिमरिन्दमः ।
ततः पञ्चवटीं यातौ सीतया सह राघवौ ॥१७॥
ततः शूर्पणखा नाम भ्रातरौ रामलक्ष्मणौ ।
आत्मप्रदानलोभेन न्यमन्त्रयत राघवौ ॥१८॥
सुस्मितं तावुभौ कृत्वा तां न्यषेधयतां तदा ।
कर्णनासां ततश्छित्वा ततः सा विकृतानना ॥१९॥

खरं भ्रातरमासाद्य कथयामास राघवौ ।
चतुर्दशसहस्राणि जनस्थाननिवासिनां ॥ २० ॥
हतानि रक्षसां तत्र हतौ च खरदूषणौ ।
शूर्पणख्या तदा गत्वा रावणे लोकरावणे ॥ २१ ॥
बधस्तेषां समाख्यातः सीता चाप्रतिमा भुवि ।
श्रुत्वा तदप्रियं घोरं रक्षस्त्रैलोक्यदारुणं ॥ २२ ॥
मारीचमगमच्छीघ्रं राक्षसं भीमविक्रमं ।
कथं सीतामहं रामात् प्राप्नुयां सुहृदां वर ॥ २३ ॥
त्वयि संभावना मेऽस्ति सर्वकार्येषु राक्षस ।
स त्वमद्यैव गच्छस्व मृगरूपी भवाग्रतः ॥ २४ ॥
सीतायाः काञ्चनो भूत्वा रूप्यबिन्दुचितश्चरन् ।
लोभिता सा त्वया व्यक्तं रामं वक्ष्यति भाविनी ॥ २५ ॥
अहोऽद्भुतमिदं रूपं मृगस्य भुवि दुर्लभं ।
प्राप्नुयामपि चर्मास्य चित्ररूपं मनोरमं ॥ २६ ॥
सीतायास्तद्वचः श्रुत्वा रामस्त्वाभिद्रविष्यति ।
ततोऽपवाहिते रामे लक्ष्मणे चापवाहिते ॥ २७ ॥
सुखं सीतां हरिष्यामि एवं प्रतिकृतं भवेत् ।
बलज्ञश्चापि रामस्य मारीचस्तत् तथाकरोत् ॥ २८ ॥
अपनीते तथा रामे लक्ष्मणे च महाबले ।
आदाय रावणः सीतामुत्पपात ततो नभः ॥ २९ ॥

रोरूयमाणामसकृद्राम रामेति वादिनीं ।
लक्ष्मणेति च क्रोशन्तीं गृध्रराजो ददर्श तां ॥ ३० ॥
पितुस्ते स सखित्वं च पालयन् गृध्रराट् तदा ।
साहाय्यमकरोत् तस्याः सीतायाः सुमहाबलः ॥ ३१ ॥
अभयं च स दत्वास्यै युयुधे तेन रक्षसा ।
युद्धं च सुमहद्दत्वा परिश्रान्तो बभूव ह ॥ ३२ ॥
उच्छ्वसन्तं समालक्ष्य रावणो लोकरावणः ।
त्वरमाणो दशग्रीवो हत्वा गृध्रं जटायुषं ॥ ३३ ॥
वृक्षगुल्मेषु धावन्तीमनाथां नाथमीक्षतीं ।
जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ॥ ३४ ॥
ततस्तां नवहेमाभां स्थितां पर्वतमूर्द्धनि ।
प्रावेशयत् तदा लङ्कां रावणो राक्षसाधिपः ॥ ३५ ॥
तां सुवर्णपरिक्षिप्ते शुभे महति वेश्मनि ।
प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास निष्फलं ॥ ३६ ॥
रावणेन हृतां सीतां स श्रुत्वा रक्षितां बलात् ।
निवर्तमानः काकुत्स्थो विव्यथे गृध्रराजतः ॥ ३७ ॥
गृध्रराजं स सत्कृत्य पितुः प्रियसखं हतं ।
मन्दाकिनीमन्वतरद्वनोद्देशांश्च पुष्पितान् ॥ ३८ ॥
ततस्तौ सुमहावीरौ भ्रातरौ रामलक्ष्मणौ ।
आसेदतुर्महारण्ये कबन्धं लोमहर्षणं ॥ ३९ ॥

तं हृत्वा चैव खड्गाभ्यां महाबलपराक्रमौ ।
ततः कबन्धवचनाद्रामः सत्यपराक्रमः ॥ ४० ॥
ऋष्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ।
ततस्तेन समागम्य सुग्रीवेण महात्मना ॥ ४१ ॥
इतरेतरमब्रूतां कुरुष्व करवाणि किं ।
तं रामो बाहुवीर्येण स्वराज्यं प्रत्यपादयत् ॥ ४२ ॥
बालिनं समरे हत्वा महाकायं महाबलं ।
ततोऽभिषिक्तः सुग्रीवो वानरेन्द्रो महाबलः ॥ ४३ ॥
रामाय प्रत्यजानीत राजपुत्र्याः स मार्गणं ।
आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ॥ ४४ ॥
दश कोट्यः प्लवङ्गानां दिशः सर्वाः प्रतस्थिरे ।
अस्माकं चोपविष्टानां विन्ध्ये पर्वतसत्तमे ॥ ४५ ॥
भृशं शोकाभितप्तानां पर्यदेवयदङ्गदः ।
भ्राता च गृध्रराजस्य सम्पातिर्नाम वीर्यवान् ॥ ४६ ॥
सीतामाचष्ट सर्वेषां वसन्तीं रावणालये ।
सोऽहं दुःखपरीतानां ज्ञातीनां दुःखमुद्वहन् ॥ ४७ ॥
आत्मवीर्यं समाश्रित्य प्लुतवान् शतयोजनं ।
तत्राहमेकामद्राक्षमशोकवनिकागतां ॥ ४८ ॥
कौशेयवस्त्रां मलिनां निरानन्दां धृतव्रतां ।
अभिज्ञानमणिं गृह्य चरितार्थोऽहमागतः ॥ ४९ ॥

# युद्धकाण्डं

हत्वा रक्षांसि घोराणि कृत्वा च कदनं महत्।
दग्धा चाशेषतो लङ्कां ततोऽहं पुनरागतः ॥५०॥
मया तत् पुनरागत्य रामस्याक्लिष्टकर्मणः।
अभिज्ञानं महद्दत्तमर्चिष्मान् स महामणिः ॥५१॥
श्रुत्वा तु मैथिलीं दृष्टां मया संहृष्टमानसः।
जीविताशामनुप्राप्तः पीत्वामृतमिवातुरः ॥५२॥
उद्योजयन् बलोद्योगं दधौ लङ्काबधे मनः।
जिघांसुरिव लोकान्ते लोकानिव विभावसुः ॥५३॥
ततः समुद्रमासाद्य नलसेतुमकारयत्।
सा मुहूर्त्तेन संतीर्णा वाहिनी तेन सेतुना ॥५४॥
प्रहस्तमबधीन्नीलः कुम्भकर्णं च राघवः।
लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणं ॥५५॥
स शक्रेण समागम्य यमेन वरुणेन च।
सुरर्षिभिश्च काकुत्स्थो वरं लेभे ततस्तु नः ॥५६॥
ततो दत्तवरः पित्रा मुनिभिश्च परंतपः।
पुष्पकेण विमानेन किष्किन्ध्यां समुपागमत् ॥५७॥
स गङ्गां क्षिप्रमासाद्य न्यवसन्मुनिसंनिधौ।
अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥५८॥

## CXI.

स श्रुत्वा परमानन्दं भरतः सत्यसङ्गरः ।
हृष्ट आज्ञापयामास शत्रुघ्नं परवीरहा ॥१॥
दैवतानि च सर्वाणि देवता नगरस्य च ।
वादित्रैर्गन्धमाल्यैश्च तेऽर्च्यन्तां शुचिभिर्जनैः ॥२।
सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा ।
ब्राह्मणा वेदविद्वांसश्चाभिगच्छन्तु राघवं ॥३॥
कुशलाः सर्ववाद्यैश्च गणिकाश्चैव सर्वशः ।
समीक्रियन्तां निम्नानि विषमाणि समानि च ॥४॥
स्थलानि चैव सर्वाणि नन्दिग्रामादितः परं ।
ततोऽभ्यवकिरन्त्वन्ये पुष्पैर्लाजैः समन्ततः ॥५॥
समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ।
शोभयन्तु स्म वेश्मानि सूर्यस्योदयनं प्रति ॥६॥
अपरे युक्तपुष्पैस्तु सुगन्धैः पञ्चवर्णकैः ।
राजमार्गमसंबाधं किरन्तु शतशो नराः ॥७॥
राजदारास्तथामात्याः सैन्याः श्रेण्यस्तथा गणाः ।
अभिक्रामन्तु रामस्य द्रष्टुं शशिनिभं मुखं ॥८॥
भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ।
सर्वं तत् कारयामास विशेषेण नरोत्तमः ॥९॥

अथ नागसहस्रैश्च शातकुम्भविभूषितैः ।
अपरे हेमकक्ष्याभिः सघण्टाभिः करेणुभिः ॥ १० ॥
निर्ययुस्त्वरया युक्ता रथैश्च सुमहारथाः ।
तुरगाणां सहस्रैश्च मन्त्रिभिर्भरतो वृतः ॥ ११ ॥
शक्त्यृष्टिपाशहस्तानां मनुजानां महायशाः ।
पदातीनां सहस्रैश्च वीरः परिवृतस्तदा ॥ १२ ॥
द्विजातिमुख्यैर्धार्मिकैः श्रेणीमुख्यैः शनैः शनैः ।
माल्यमोदकहस्तैश्च नागरैर्भरतो वृतः ॥ १३ ॥
शङ्खभेरीनिनादेन वन्दिभिश्चाभिनन्दितः ।
पादुके द्वे गृहीत्वा च शिरसा धर्मकोविदः ॥ १४ ॥
पाण्डरं छत्त्रमादाय शुक्लमाल्यविभूषितं ।
शुक्ले च बालव्यजने महार्हे हेमभूषिते ॥ १५ ॥
प्रत्युद्ययौ तदा रामं महात्मा मन्त्रिभिः सह ।
ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः ॥ १६ ॥
कौशल्यां प्रमुखे कृत्वा सुमित्रां चैव निर्ययुः ।
अश्वानां खुरशब्देन रथनेमिस्वनेन च ॥ १७ ॥
शङ्खदुन्दुभिनादेन संचचाल च मेदिनी ।
कृत्स्नं हि नगरं तत्र नन्दिग्राममुपागमत् ॥ १८ ॥
समीक्ष्य भरतो वाक्यमुवाच कपिकुञ्जरं ।
कच्चिन्नु खलु कापेयी सेव ते चलचित्तता ॥ १९ ॥

न हि पश्यामि काकुत्स्थं राममार्यं परंतपं ।
अथैवमुक्तो वचनं हनूमानिदमब्रवीत् ॥ २० ॥
सदाफलान् कुसुमितान् पश्य वृक्षान् मधुच्युतः ।
मुनेः प्रसादात् सिद्धस्य भरद्वाजस्य धीमतः ॥ २१ ॥
तेन ह्येष वरो दत्तो वने येन परंतप ।
आतिथ्यं ते ससैन्यस्य कृतं सर्वगुणान्वितं ॥ २२ ॥
निस्वनः श्रूयते चासौ हृष्टानां च वनौकसां ।
मन्ये वानरसेना सा नदीं तरति गोमतीं ॥ २३ ॥
रजोवर्षं समुद्भूतं पश्य मन्दाकिनीं प्रति ।
मन्ये सालवनं रम्यं लोलयन्ति प्लवङ्गमाः ॥ २४ ॥
तदेतदाकाशतले भाति चन्द्र इवोदितः ।
विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितं ॥ २५ ॥
रावणं बान्धवैः सार्द्धं हत्वा लब्धं महात्मना ।
धनदस्य प्रसादेन दिव्यमेतन्मनोजवं ॥ २६ ॥
एतस्मिन् भ्रातरौ वीरौ वैदेह्या सह राघवौ ।
सुग्रीवश्च महातेजा ऋक्षवानरसंवृतः ॥ २७ ॥
रावणस्यानुजो वीरो राजा चैव विभीषणः ।
तं दृष्ट्वा तूर्णमायान्तं द्वितीयमिव भास्करं ॥ २८ ॥
हर्षेणातिसमुत्क्रुष्टो निस्वनो दिवमाविशत् ।
बालस्त्रीवृद्धसंघानां रामोऽयमिति शंसतां ॥ २९ ॥

रथकुञ्जरवाजिभ्यस्तेऽवतीर्य मह्नीं गताः ।
ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे ॥ ३० ॥
प्राञ्जलिर्भरतो भूत्वा हृष्टो राममुपस्थितः ।
स्वागतेन यथार्ह्येण तदा राममपूजयत् ॥ ३१ ॥
मनसा ब्रह्मणा सृष्टे विमाने लक्ष्मणाग्रजः ।
रराज पृथुताम्राक्षो वज्रपाणिरिवापरः ॥ ३२ ॥
ततो विमानाग्रगतं भरतो भ्रातरं मुदा ।
ववन्दे प्रणतो भूत्वा मेरुस्थमिव भास्करं ॥ ३३ ॥
आरोपितो विमानं तु भरतः सत्यसङ्गरः ।
राममासाद्य मुदितो भूय एवाभ्यवादयत् ॥ ३४ ॥
तं समुत्थाप्य काकुत्स्थश्चिरस्याक्षिपथं गतं ।
अङ्के भरतमारोप्य मुदितः परिषस्वजे ॥ ३५ ॥
न्यायतश्च समासाद्य भरतेन महात्मना ।
वन्दितौ चरणौ देव्याः सीतायाः संयतात्मना ॥ ३६ ॥
सुग्रीवं केकयीपुत्रो जाम्बवन्तं तथाङ्गदं ।
मैन्दं द्विविदनीलौ च ऋषभं चैव सस्वजे ॥ ३७ ॥
ते कृत्वा मानुषं रूपं वानराः कामरूपिणः ।
कुशलं परिपप्रच्छुर्भरतं हृष्टवत् तदा ॥ ३८ ॥
विभीषणं च भरतः सान्त्वं वचनमब्रवीत् ।
दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करं ॥ ३९ ॥

शत्रुघ्नश्च तदा राममभिवाद्य च लक्ष्मणं ।
सीतायाश्चरणौ पश्चाद्विनयेनाभ्यवादयत् ॥ ४० ॥
अथ वास्पपरीताक्षीं कृशां नियममास्थितां ।
रामो मातरमासाद्य विवर्णां शोककर्षितां ॥ ४१ ॥
जग्राह प्रणतः पादौ मनो मातुः प्रहर्षयन् ।
अभिवाद्य सुमित्रां च केकयीं च यशस्विनीं ॥ ४२ ॥
अभिगम्य ततो रामो वशिष्ठं सचिवैर्वृतं ।
तमभ्यवादयन्मूर्द्ध्ना ब्रह्माणमिव शाश्वतं ॥ ४३ ॥
ददृशुस्तं तदा पौराः संघशः समुपस्थिताः ।
धरणीस्था विमानस्थमुद्यन्तमिव भास्करं ॥ ४४ ॥
स्वागतं ते महाबाहो कौशल्यानन्दिवर्धन ।
इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् ॥ ४५ ॥
तान्यञ्जलिसहस्राणि समानीतानि नागरैः ।
अकोषाणीव पद्मानि ददर्श भरताग्रजः ॥ ४६ ॥
ततो रामाभ्यनुज्ञातं तद्विमानं मनोजवं ।
हंसयुक्तं महावेगं निपपात महीतले ॥ ४७ ॥
पादुके ते तु रामस्य गृहीत्वा भरतः स्वयं ।
चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥ ४८ ॥
अब्रवीच्च तदा रामं भरतः संहताञ्जलिः ।
दिष्ट्यास्मान् स्मरसे नित्यमनाथान् नाथ सर्वदा ॥ ४९ ॥

भवद्भयान्नियोगाच्च न गृहीतं फलार्थिना ।
एतत् ते सकलं राज्यं न्यासो निर्यातितो मया ॥५०॥
अद्य जन्म यथार्थं मे संवृत्तश्च मनोरथः ।
यस्त्वां पश्यामि राजानमयोध्यां पुनरागतं ॥५१॥
अवेक्षतां भवान् भोगं कोषागारं बलं पुरं ।
भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥५२॥
तथा ब्रुवाणं दृष्ट्वा तं भरतं भ्रातृवत्सलं ।
मुमुचुर्वानरा वास्पं राक्षसश्च विभीषणः ॥५३॥
ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः ।
ययौ तेन विमानेन ससैन्यो भरताश्रमं ॥५४॥
भरताश्रममासाद्य ससैन्यो भरताग्रजः ।
अवतीर्य विमानाग्रात् ततस्तस्थौ महीतले ॥५५॥
अब्रवीच्च तदा रामस्तद्विमानं मनोजवं ।
गच्छ वैश्रवणं देवमहमाज्ञापयामि ते ॥५६॥
अथ रामाभ्यनुज्ञातं तद्विमानं मनोजवं ।
उत्तरां दिशमास्थाय जगाम धनदालयं ॥५७॥
तत् तु वैश्रवणो दृष्ट्वा स्वं विमानमुवाच ह ।
राममेव वहस्व त्वमुपतिष्ठ च मां स्मृतः ॥५८॥
तत् तु वैश्रवणाज्ञप्तमुपातिष्ठत राघवं ।
उपलभ्य च वृत्तान्तं पूजयामास राघवः ॥५९॥

## CXII.

सुषेणं जाम्बवन्तं च केशरिं च महाबलं ।
अभिवाद्य च सुग्रीवं विनयेन परंतपः ॥ १ ॥
अथाब्रवीद्राजपुत्रः सुग्रीवं प्लवगेश्वरं ।
परिष्वज्य महातेजा भरतो धर्मवत्सलः ॥ २ ॥
त्वमस्माकं चतुर्णां च भ्राता सुग्रीव पञ्चमः ।
सौहार्दाज्जायते मित्रमुपकारविलक्षणं ॥ ३ ॥
शिरस्यञ्जलिमाधाय कैकेय्या नन्दिवर्धनः ।
बभाषे भ्रातरं ज्येष्ठं रामं सत्यपराक्रमं ॥ ४ ॥
पूजिता मामकी माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा मह्यं भवान् ददौ ॥ ५ ॥
धुरमेकाकिना न्यस्तामृषभेण बलीयसा ।
कुगौरिव गुरुं भारं न वोढुमहमुत्सहे ॥ ६ ॥
वारिवेगेन महता भिन्नः सेतुरिव क्षरन् ।
सुदुर्वहमहं मन्ये राज्यं छिद्रसमन्वितं ॥ ७ ॥
गतिं खर इवाश्वस्य हंसस्येव च वायसः ।
नान्वेतुमुत्सहे देव तव मार्गमरिन्दम ॥ ८ ॥
यथा च रोपितो वृक्षो जातश्चान्तर्निवेशने ।
महांश्चैव दुरारोहो महास्कन्धः प्रशाखवान् ॥ ९ ॥

यश्चापि पुष्पितो भूत्वा फलानि न प्रदर्शयेत् ।
तस्य नानुभवेदर्थं यस्य हेतोः स रोप्यते ॥१०॥
एषोपमा महाराज त्वदर्थं संज्ञिता मया ।
यदस्मान् नृपभाग् भूत्वा भर्ता भृत्यान् न पोषयेः ॥११॥
अद्य त्वामनुपश्यन्तु अभिषिक्तं नराधिपाः ।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसं ॥१२॥
तूर्यसंघातनिर्घोषैः काञ्चीनूपुरनिस्वनैः ।
मधुरैर्गीतिशब्दैश्च प्रबुध्यस्व च शेष्व च ॥१३॥
यावदावर्तते चक्रं तावती ते वसुन्धरा ।
तस्यास्त्वमपि सर्वस्याः स्वामित्वमनुवर्तय ॥१४॥
भरतस्य वचः श्रुत्वा रामः सत्यपराक्रमः ।
तथेति संप्रतिश्रुत्य आसने समुपाविशत् ॥१५॥
ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः ।
सुखहस्ताश्च शीघ्राश्च राघवं पर्युपाविशन् ॥१६॥
पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले ।
सुग्रीवे वानरेन्द्रे च राक्षसे च विभीषणे ॥१७॥
विशोधितजटः स्नातः शुक्लमाल्यानुलेपनः ।
दिव्याभरणदीप्ताङ्गः श्रीमदुज्ज्वलकुण्डलः ॥१८॥
महार्हवसनो रामस्तस्थौ देवश्रिया ज्वलन् ।
नन्दिग्रामे जटां छित्त्वा भ्रातृभिः सह राघवः ॥१९॥

प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः ।
आत्मनैव ततश्चक्रुर्मनस्विन्या मनोरमं ॥ २० ॥
ततो राघवपत्नीनां सर्वासामुपशोभनं ।
चकार यत्नात् कौशल्या प्रहृष्टेनान्तरात्मना ॥ २१ ॥
ततः शत्रुघ्नवचनात् सुमन्त्रो नाम सारथिः ।
योजयित्वाभिचक्राम रथं सर्वाङ्गभूषितं ॥ २२ ॥
अर्कमण्डलसंकाशं दिव्यं दृष्ट्वा रथोत्तम ।
आरुरोह महाबाहू रामः सत्यपराक्रमः ॥ २३ ॥
लक्ष्मणादीन् स्थितान् दृष्ट्वा रथे वै रथिनां वरः ।
प्रययौ तैः समास्थाय राघवो ज्वलितः श्रिया ॥ २४ ॥
जग्राह भरतो रश्मीन् शत्रुघ्नश् छत्रमाददे ।
लक्ष्मणो व्यजनं गृह्य राघवं पर्यवीजयत् ॥ २५ ॥
ऋषिसंघैस्तदाकाशे देवैश्च समरुद्गणैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ २६ ॥
पश्चाच्छत्रुञ्जयं नाम कुञ्जरं पर्वतोपमं ।
आरुरोह महातेजाः सुग्रीवः प्लवगोत्तमः ॥ २७ ॥
नागश्रेष्ठसहस्राणि ययुरास्थाय वानराः ।
मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ॥ २८ ॥
शङ्खभेरीनिनादैश्च दुन्दुभीनां च निस्वनैः ।
प्रययौ पुरुषव्याघ्रः स्वां पुरीं परिहर्षयन् ॥ २९ ॥

# युद्धकाण्डं

अयोध्यायां तु सचिवा राज्ञो दशरथस्य ये ।
आयान्तं राघवं श्रुत्वा पुरोहितमथाब्रुवन् ॥ ३० ॥
भवन्तो रामवृद्ध्यर्थं वृद्ध्यर्थं नगरस्य च ।
यथावद्द्रव्यसंभारं विधिदृष्टमशेषतः ॥ ३१ ॥
सर्वमेवाभिषेकार्थे राज्यार्हस्य महात्मनः ।
कर्तुमर्हथ रामस्य सर्वमङ्गलपूर्वकं ॥ ३२ ॥
इति ते मन्त्रिणः सर्वे संदिश्यार्यं पुरोहितं ।
नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ ३३ ॥
ददृशुस्ते तदायान्तं राघवं सपुरःसरं ।
विराजमानं वपुषा ज्वलन्तमिव पावकं ॥ ३४ ॥
ते वर्धयित्वा राजानं रामेण प्रतिनन्दिताः ।
अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितं ॥ ३५ ॥
अमात्यैर्ब्राह्मणैर्वैद्यैर्ज्ञातिभिः स्वजनैस्तथा ।
पूजितो रुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥ ३६ ॥
आशीर्भिर्मधुराभिश्च तथा स्वस्तिकपाणिभिः ।
प्रत्याहरद्भिर्मुदितैर्मङ्गलार्थमभिष्टुतः ॥ ३७ ॥
अक्षता जातरूपं च गावः कन्यास्तथा द्विजाः ।
नरा मोदकहस्ताश्च रामस्य पुरतः स्थिताः ॥ ३८ ॥
रामः सख्यं च सुग्रीवे प्रभावं च हनूमतः ।
वानराणां च तत् कर्म व्याचचक्षे च मन्त्रिणां ॥ ३९ ॥

श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ।
वानराणां च तत् कर्म राक्षसानां च तद्बलं ॥ ४० ॥
एवं संकथयन्नेव रामो वानरसंवृतः ।
हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ॥ ४१ ॥
पताकमालाभरणां सिक्तरथ्यान्तरापणां ।
पुष्पचित्रपथां रम्यां बालवृद्धनिरन्तरां ॥ ४२ ॥
हर्म्यप्रासादविवृतामुद्यानवनशोभितां ।
ऊचुस्तदागतं राममिदमभ्यन्तराः स्त्रियः ॥ ४३ ॥
सभ्रातृणां सपुत्राणां तव दर्शनकाङ्क्षिणां ।
दिष्ट्या राजन् कृतो देवैः प्रसादः पुरवासिनां ॥ ४४ ॥
भृशं काकुत्स्थ कौशल्या त्वदर्थमत्यतप्यत ।
निर्विशिषं तथा सर्वे पुरे च पुरवासिनः ॥ ४५ ॥
असूर्यमिव खं राम हृतरत्न इवोदधिः ।
त्वया पुरमिदं हीनं विचन्द्रा शर्वरी यथा ॥ ४६ ॥
अद्यायोध्या महाबाहो अयोध्या प्रतिभाति नः ।
परेषां प्रार्थमानानां त्वयि संनिहिते हिते ॥ ४७ ॥
चतुर्दश समाश्चेमाः शतानीव चतुर्दश ।
वसतां नो व्यतिक्रान्तास्त्वयि राम वनं गते ॥ ४८ ॥
ईदृशीर्मधुराः स्निग्धाः पथि शुश्राव राघवः ।
नरनारीप्रयुक्तास्ता वाचः प्रीतिनिदर्शनाः ॥ ४९ ॥

इक्ष्वाकुव्युषितां रम्यां प्रयाते मनुजर्षभे ।
पितुर्भवनमासाद्य प्रविवेश महायशाः ।।५०।।
मूर्द्धन्याघ्राय कौशल्या तावुभौ रामलक्ष्मणौ ।
अङ्के सीतामथारोप्य शोकमात्मगतं जहौ ।।५१।।
अथाब्रवीद्राजपुत्रं भरतं धर्मचारिणं ।
अर्थसंहितया वाचा धर्मज्ञैर्वर्यर्थयुक्तया ।।५२।।
यच्च तद्भवनश्रेष्ठमशोकवनिकं महत् ।
वैदूर्यकनकास्तीर्णं सुग्रीवस्तत्र मोदतु ।।५३।।
यच्च तत् सुमहद्दिव्यमुपस्थानगृहं शुभं ।
विभीषणाय तत् सौम्य दीयतां सुविभूषितं ।।५४।।
तथैव वानरेन्द्राणां यथाक्रमविहारिणां ।
दीयन्तां क्षिप्रमावासा यथेप्सितमरिन्दम ।।५५।।
तस्य तद्वचनं श्रुत्वा भरतः सत्यविक्रमः ।
पाणौ गृहीत्वा सुग्रीवं प्रविवेश महद्गृहं ।।५६।।
विभीषणं तथा वीरो वानरानपरांस्तथा ।
ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च ।।५७।।
गृहीत्वा प्राविशन् शीघ्राः शत्रुघ्नेन प्रचोदिताः ।
तमुवाच ततो धीमान् सुग्रीवं राघवानुजः ।।५८।।
अभिषेकार्थं देवस्य दूतानाज्ञापय प्रभो ।
प्रभाते पुष्ययोगेन राघवः सोऽभिषेक्ष्यते ।।५९।।

ततः स वानरश्रेष्ठः सौवर्णांश्चतुरो घटान् ।
चतुर्णां कपिमुख्यानां ददौ रत्नविभूषितान् ॥ ६० ॥
यथा प्रत्यूषसमये चतुर्णां सागराम्भसां ।
पूर्णैर्घटैरनुदिते शीघ्रमागम्यतामिति ॥ ६१ ॥
एवमुक्ता महात्मानो वानराः पर्वतोपमाः ।
उत्पेतुर्गगनं शीघ्रं पवना इव वेगिताः ॥ ६२ ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋषभश्च महाबाहुश्चवारोऽपि वनौकसः ॥ ६३ ॥
नदीपतीनां सर्वेषां जलं कुम्भैरुपाहरन् ।
ते वीरा यूथपश्रेष्ठा वानरेन्द्रप्रचोदिताः ॥ ६४ ॥
ऋषभो दक्षिणात् तूर्णं समुद्राज्जलमानयत् ।
रक्तचन्दनशाखाभिः संवृते काञ्चने घटे ॥ ६५ ॥
जाम्बवान् पश्चिमात् तोयमाजहार स सागरात् ।
रत्नकुम्भेन महतागुरुपल्लवशोभिना ॥ ६६ ॥
वेगदर्शी परिक्रान्त उत्तरादुदधेर्जलं ।
शोभितं फुल्लशाखाभिरचिरादानयच्छिवं ॥ ६७ ॥
सुषेणोऽङ्गदकेयूरैर्मण्डितं कलसं तथा ।
पानीयमानयत् तत्र समुद्रादितरात् त्वरन् ॥ ६८ ॥
एवमाभिषेचनिकं शत्रुघ्नः सचिवैर्वृतः ।
पुरोहिताय श्रेष्ठाय गुरवे संन्यवेदयत् ॥ ६९ ॥

ततः प्रभाते विमले मुहूर्त्तेऽभिजिति प्रभुः ।
वशिष्ठः पुष्ययोगेन ब्राह्मणैः परिवारितः ॥ ७० ॥
रामं रत्नमये पीठे प्राङ्मुखं सह सीतया ।
उपवेश्य महात्मानं महर्षिविहितेन तु ॥ ७१ ॥
शास्त्रदृष्टेन विधिना स तदा विधिवद्द्विजः ।
राघवस्याभिषेकार्थं स द्विजेभ्यो न्यवेदयत् ॥ ७२ ॥
वशिष्ठो वामदेवश्च जावालिर्विजयस्तथा ।
काश्यपो गोतमश्चापि तथा कात्यायनो द्विजः ॥ ७३ ॥
विश्वामित्रश्च तेजस्वी तथान्ये द्विजपुङ्गवाः ।
अभ्यषिञ्चन् नरवरं प्रसन्नेन सुगन्धिना ॥ ७४ ॥
सलिलेन सहस्राक्षं वसवो वासवं यथा ।
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिश्च यथाक्रमं ॥ ७५ ॥
बलमुख्यैः प्रहृष्टैश्च त्वभिषिक्तः सनैगमैः ।
सर्वौषधिरसैश्चैव दैवतैर्नभसि स्थितैः ॥ ७६ ॥
अभिषिक्तो रराजाथ श्रिया परमया युतः ।
छत्त्रं तस्य तु जग्राह शत्रुघ्नः पाण्डरं शुभं ॥ ७७ ॥
शुक्लं च बालव्यजनं सुग्रीवो वानरेश्वरः ।
अपरं चन्द्रसंकाशं बालव्यजनमुत्तमं ॥ ७८ ॥
हृष्टो रामस्य जग्राह राक्षसेन्द्रो विभीषणः ।
मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्करां ॥ ७९ ॥

राघवाय ददौ वायुर्वासवेन प्रदेशितः ।
यज्ञाध्यक्षः समागम्य मणिरत्नसमायुतं ॥ ८० ॥
मुक्ताहारं च रामाय ददौ शक्रप्रदेशितः ।
ऋषयस्तुष्टुवुश्चैनं वर्धयन्तो जयाशिषा ॥ ८१ ॥
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ।
प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ८२ ॥
अभिषेके प्रवृत्ते तु तदा रामस्य धीमतः ।
मही सस्यवती चैव रसवन्ति फलानि च ॥ ८३ ॥
गन्धवन्ति च माल्यानि तदा रामाभिषेचने ।
ददौ सहस्रं धेनूनां सहस्रगुणितं तथा ॥ ८४ ॥
शतं शतगुणं चैव वृषाणां ब्राह्मणेषु च ।
त्रिंशत् कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ॥ ८५ ॥
यानाभरणवस्त्राणि शयनान्यासनानि च ।
ब्राह्मणेभ्यो ददौ हृष्टो ग्रामांश्च बहुशो बहून् ॥ ८६ ॥
अर्करश्मिप्रतीकाशां काञ्चनीं मणिभूषितां ।
सुग्रीवाय ददौ दिव्यां स्रजं स च महारथः ॥ ८७ ॥
वैदूर्यमणिचित्रे च वज्रचित्रपरिष्कृते ।
प्रायच्छद्वालिपुत्राय सोऽङ्गदायाङ्गदे शुभे ॥ ८८ ॥
मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमं ।
ददौ रामः स वैदेह्याश्चन्द्ररश्मिसमप्रभं ॥ ८९ ॥

वासांसि चैव मुख्यानि शुभान्याभरणानि च ।
अवेक्ष्य मैथिली चैव हनूमन्तं प्लवङ्गमं ॥ १० ॥
अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ।
ऐक्षिष्ट वानरान् सर्वान् भर्तारं च मुहुर्मुहुः ॥ ११ ॥
तानीङ्गितानि संप्रेक्ष्य बभाषे राघवः प्रियां ।
प्रयच्छ सुभगे हारं यस्य तुष्टासि मैथिलि ॥ १२ ॥
पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि सर्वदा ।
ददौ सा वायुपुत्राय तं हारमसितेक्षणा ॥ १३ ॥
हनूमांस्तेन हारेण शुशुभे वानरर्षभः ।
चन्द्रांशुराशिगौरेण श्वेताभ्रेण यथाचलः ॥ १४ ॥
ततो द्विविदनीलाभ्यां मैन्दाय पनसाय च ।
सर्वकामगुणान् देयान् प्रददौ वसुधाधिपः ॥ १५ ॥
सर्ववानरवृद्धेभ्यो ये चान्ये वानरेश्वराः ।
स तेभ्यः प्रददौ रामो भूषणानि यथार्हतः ॥ १६ ॥
एवं ते पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः ।
उषित्वा वानरा वासं राक्षसर्क्षास्तथैव च ॥ १७ ॥
साम्ना पुरस्कृताश्चैव मानार्थैश्चानुमानिताः ।
वियोगाकुलितैः सर्वे चेतोभिः संप्रतस्थिरे ॥ १८ ॥
प्रस्थितं तु हनूमन्तमुवाच रघुनन्दनः ।
हनूमंस्त्वं मया नातिसत्कृतो हरिपुङ्गव ॥ १९ ॥

तस्माद्वरं वृणीष्वाद्य मद्धृते कर्म कृतं त्वया ।
एवमुक्तोऽब्रवीद्रामं हर्षवास्याकुलेक्षणः ॥ १०० ॥
यावद्रामकथा देव पृथिव्यां प्रचरिष्यति ।
तावद्देहे मम प्राणास्तिष्ठन्तु वरदोऽसि चेत् ॥ १०१ ॥
एवं तस्य वचः श्रुत्वा रामो वचनमब्रवीत् ।
एवं भवतु भद्रं ते यावद्भूमिर्धरिष्यति ॥ १०२ ॥
पर्वताश्च समुद्राश्च तावदायुरवाप्नुहि ।
बलवान् नीरुजश्चैव तरुणो न जरान्वितः ॥ १०३ ॥
मैथिल्यपि तदा चैनमुवाच वरमुत्तमं ।
उपस्थास्यन्ति भोगास्त्वां स्वयमेवेह मारुते ॥ १०४ ॥
देवदानवगन्धर्वास्तथैवाप्सरसां गणाः ।
यत्र तिष्ठसि तत्र त्वां सेविष्यन्ते यथामरं ॥ १०५ ॥
फलान्यमृतकल्पानि तोयानि विमलानि च ।
उत्पत्स्यन्ति यथाकामं स्मरणेन तवानघ ॥ १०६ ॥
एवमस्त्विति चोक्त्वा स प्रययौ साश्रुलोचनः ।
ततो यथागताः सर्वे यथावासं ययुस्तथा ॥ १०७ ॥
रामानुरागाद्रम्याश्च कथयन्तः कथाः शुभाः ।
ततस्तेषु प्रयातेषु वानरेष्वरिसूदनः ।
नित्यानुरक्तं धर्मज्ञं लक्ष्मणं वाक्यमब्रवीत् ॥ १०८ ॥
आतिष्ठ धर्मज्ञ मया सहेमां

गां पूर्वराजाध्युषितां कुलेन ।
तुल्यां पुरस्तात् पितृभिर्धृतां च
त्वं यौवराज्ये धुरमुद्वहस्व ॥१०९॥
सर्वात्मना पर्यनुनीयमानो
यदा न सौमित्रिरियाय योगं ।
नियुज्यमानो भुवि यौवराज्ये
ततोऽभ्यषिञ्चद्भरतं महात्मा ॥११०॥

इत्यार्षे रामायणे युद्धकाण्डे भरतविशोककरणं नाम
नवशततमः सर्गः — भरतप्रहर्षणं नाम
दशशततमः सर्गः — भरतसमागमो
नाम एकादशशततमः सर्गः — रामाभिषेको नाम
द्वादशशततमः सर्गः ॥

## CXIII.

अहन्यहनि रामस्तु कार्याणि स्वयमेव हि ।
प्रत्यवैक्षत धर्मात्मा सह भ्रातृभिरच्युतः ॥ १ ॥
धर्मेण रक्षतस्तस्य हृष्टपुष्टजनाकुला ।
बभूव पृथिवी सर्वा धनधान्यसमृद्धिनी ॥ २ ॥
निर्दस्युरभवल्लोको नानर्थः कश्चिदस्पृशत् ।
न चापि वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ ३ ॥
सर्वं प्रमुदितं चासीत् सर्वो धर्मपरो जनः ।
दृष्ट्वा धर्मपरं रामं न चाहिंसत् परस्परं ॥ ४ ॥
आसीद्वर्षशतायुश्च तथा पुत्रसहस्रवान् ।
निरामयो विशोकश्च रामे राज्यं प्रशासति ॥ ५ ॥
नित्यपुष्पा नित्यफलास्तरवस्तत्र निर्व्रणाः ।
काले वर्षति पर्जन्यः सुखस्पर्शश्च मारुतः ॥ ६ ॥
स्वधर्मेषु प्रवृत्ताश्च वर्णाः स्वैरेव कर्मभिः ।
आसन् प्रजा धर्मपरा रामे राज्यं प्रशासति ॥ ७ ॥
सर्वलक्षणसंपन्नः सर्वधर्मपरायणः ।
एवं गुणसमायुक्तो रामो राज्यमकारयत् ॥ ८ ॥
स राज्यमखिलं प्राप्य निहतारिर्महायशाः ।
ईजे बहुविधैर्यज्ञैर्महद्भिश्चाप्तदक्षिणैः ॥ ९ ॥

# युद्धकाण्डं

दशाश्वमेधानाजह्रे जारुत्थ्यान् भूरिदक्षिणान् ।
पुण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् ॥ १० ॥
आजानुबाहुः सुमुखो महास्कन्धः प्रतापवान् ।
लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥ ११ ॥
धन्यं यशस्यमायुष्यं राज्ञां च विजयावहं ।
आदिकाव्यं महत् त्वेतत् पुरा वाल्मीकिना कृतं ॥ १२ ॥
इदं तु चरितं चित्रं रामस्याक्लिष्टकर्मणः ।
शृणुयाद्यः सदा लोके स विमुच्येत किल्विषात् ॥ १३ ॥
पुत्रकामश्च पुत्रान् वै धनकामो धनानि च ।
लभन्ते मनुजा लोके श्रुत्वा रामस्य चेष्टितं ॥ १४ ॥
लभते पतिकामा हि पतिं कन्या मनोरमं ।
समागमं प्रोषितैश्च लभते बन्धुभिः प्रियैः ॥ १५ ॥
शृण्वन्ति लोके य इदं काव्यं वाल्मीकिना कृतं ।
प्रार्थितांश्च वरान् सर्वान् प्राप्नुवन्ति यथेप्सितान् ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायां युद्धकाण्डं समाप्तं ॥

रामायणं समाप्तं ॥

# सर्गसंग्रहपत्रं

## युद्धकाण्डं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

# VALMIKI RAMAYANA

## UTTARAKANDAM

## उत्तरकाण्डं

EDITED BY
Prof. GASPARE GORRESIO

1982
Indian Heritage Trust
Madras, India

# UTTARAKANDA

TESTO CON NOTE

SECONDO

CODICI DELLA RECENSIONE GAUDANA

PER


GASPARE GORRESIO

SOCIO E SEGRETARIO DELLA REALE ACCADEMIA DELLE SCIENZE DI TORINO
MEMBRO CORRISPONDENTE DELL' IMPERIALE INSTITUTO DI FRANCIA
DELLA REALE ACCADEMIA DELLA CRUSCA, ECC.





PARIGI

DALLA STAMPERIA IMPERIALE

M DCCC LXVII



Rama
from Roopala Sangameswaram

Courtesy Director of Archaeology and Museums, Andhra Pradesh, Hyderabad

# PREFACE

The Indian Heritage Trust is glad to publish this the concluding volume of VALMIKI RAMAYANA edited by Professor Gaspare Gorresio.

The Indian reprint of this magnificent edition has been hailed in India and abroad. A solemn ceremony was held by Regione Piemonte in Italy towards the end of May 1982 to commemorate Professor Gaspare Gorresio and to give prominence to this new edition of Valmiki Ramayana. Professor Oscar Botto, the present successor of Prof. Gorresio in the Sanskrit Chair at the University of Turin, observes in a recent letter "The ceremony to give prominence to your splendid reprint of Gorresio's edition has met with the greatest success: Professors R.N. Dandekar, K.V. Sarma, Satyavrat Shastri, L.P. Mishra, Jean Filliozat, C. Caillat, H. Bechert, S. Lienhard and a lot of distinguished scholars were delighted at it, and your name has been repeated many times!". The Trustees share their joy on this occasion with all the donors and readers.

We cherish the memory of the late Dr. V. Raghavan on this occasion. Further we wish to thank Biblioteca Nazionale di Torino for lending the original edition to us and Prof. Oscar Botto for his help in this regard.

The Trust intends to publish an additional volume bringing together the English Translations of Prof. Gorresio's Introductions and Notes, in furtherance of the scholarly value of the reprint. Prof. Oscar Botto

expects to complete the English translation soon and we hope to publish the same without delay.

We wish to take this opportunity to thank all those who have extended their generous help in this task and to express our gratitude to the staff and management of All India Press for their wholehearted co-operation in undertaking this great work and completing it so superbly.

September 30, 1982 V. SADANAND

# अथ श्रीरामायणे
## उत्तरकाण्डं

### I.

प्राप्तराजस्य रामस्य राक्षसानां बधे कृते ।
आजग्मुर्ऋषयस्तत्र राघवं प्रतिनन्दितुं ॥ १ ॥
कौशिकोऽथ यवक्रीतो वैद्यश्च्यवन एव च ।
कण्वो मेधातिथेः पुत्रः पूर्वां ये संश्रिता दिशं ॥ २ ॥
स्वस्त्यात्रेयोऽथ भगवान् मुमुचुः प्रमुचुस्तथा ।
आजग्मुस्ते महात्मानो ये श्रिता दक्षिणां दिशं ॥ ३ ॥
उषद्गुः कमठो धौम्यो रौद्राश्वश्च महातपाः ।
तेऽप्याजग्मुः सशिष्या वै प्रतीचीं ये श्रिता दिशं ॥ ४ ॥
वशिष्ठः काश्यपोऽत्रिश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाजस्तथा सप्तर्षयोऽमलाः ॥ ५ ॥
उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः ।
प्राप्य ते तु महात्मानो राघवस्य निवेशनं ॥ ६ ॥

विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः ।
वेदवेदाङ्गविदुषो नानाशास्त्रविशारदाः ॥ ७॥
द्वास्थं प्रोवाच धर्मात्मा अगस्त्यो मुनिसत्तमः ।
निवेद्यतां दाशरथेर्ऋषयो वयमागताः ॥ ८॥
प्रतिहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतं ।
समीपं राघवस्याथ प्रविवेश महात्मनः ॥ ९ ॥
स रामं प्रेक्ष्य सहसा पूर्णचन्द्रसमद्युतिं ।
अगस्त्यं कथयामास संप्राप्तमृषिभिः सह ॥ १०॥
श्रुत्वा प्राप्तान् मुनींस्तांस्तु बालसूर्यसमप्रभान् ।
तत्रोवाच नृपो द्वास्थं प्रवेशय यथा सुखं ॥ ११ ॥
पूजिता विविशुर्वेश्म नानारत्नविभूषितं ।
दृष्ट्वा प्राप्तान् मुनींस्तांस्तु प्रत्युत्थाय कृताञ्जलिः ॥ १२॥
रामोऽभिवाद्य प्रणत आसनान्यादिदेश ह ।
तेषु काञ्चनचित्रेषु स्वास्तीर्णेषु सुखेषु च ॥ १३॥
कुशोत्तरेष्वथासीना आसनेष्वृषिपुङ्गवाः ।
पाद्यमाचमनीयं च दत्त्वा चार्घ्यपुरोगमं ॥ १४॥
रामेण कुशलं पृष्टाः सशिष्याः सपुरोगमाः ।
महर्षयो वेदविदो रामं वचनमब्रुवन् ॥ १५॥
कुशलं नो महाबाहो सर्वत्र रघुनन्दन ।
त्वां तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवं ॥ १६॥

न हि भारः स ते राम रावणो राक्षसेश्वरः ।
सधनुस्त्वं हि लोकांस्त्रीन् विजयेथा न संशयः ॥१७॥
दिष्ट्या च ते हतो राम रावणः पुत्रपौत्रवान् ।
दिष्ट्या विजयिनं त्वाद्य पश्यामः सह सीतया ॥१८॥
लक्ष्मणेन च धर्मात्मन् भ्रात्रा ते हितकारिणा ।
मातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप ॥१९॥
दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदरः ।
अकम्पनश्च दुर्बुद्धिर्निहतास्ते निशाचराः ॥२०॥
यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते ।
दिष्ट्या स समरे राम कुम्भकर्णस्त्वया हतः ॥२१॥
दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागतः ।
देवानामप्यवध्येन विजयं प्राप्तवानसि ॥२२॥
शक्यं तव महाबाहो रावणस्य निवर्हणं ।
द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः ॥२३॥
दिष्ट्यातिकायो बलवान् यज्ञकोपश्च राक्षसः।
युद्धोन्मत्तश्च मत्तश्च हताः कालान्तकोपमाः ॥२४॥
कुम्भो निकुम्भो बलवान् जम्बुमाली घटोदरः ।
कुर्वन्तः कदनं वीर त्वया युधि निपातिताः ॥२५॥
अन्तकप्रतिमौ चापि देवान्तकनरान्तकौ ।
अन्तकप्रतिमैर्बाणैर्दिष्ट्या युद्धे निपातितौ ॥२६॥

एते चान्ये च बहवो राक्षसा रावणोपमाः ।
दिष्ट्या त्वया हता राम मुनीनां भयवर्धनाः ॥ २७ ॥
विस्मयश्चैव नः सौम्य संश्रुत्येन्द्रजितं हतं ।
अबध्यं सर्वभूतानां महामायाधरं युधि ॥ २८ ॥
दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः ।
बधः सुररिपोर्वीर प्राप्तश्च विजयस्त्वया ॥ २९ ॥
दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणां ।
काकुत्स्थ वर्धसे दिष्ट्या जयेनामितविक्रम ॥ ३० ॥
श्रुत्वा तु वचनं तेषामृषीणां भावितात्मनां ।
विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ ३१ ॥
महाबलं कुम्भकर्णं रावणं च निशाचरं ।
अतिक्रम्य महावीर्यं किं प्रशंसथ रावणिं ॥ ३२ ॥
कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः ।
केन वा कारणेनैष रावणादतिरिच्यते ॥ ३३ ॥
शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः ।
यदि गुह्यं न चैतद्वः श्रोतुमिच्छामि तत्त्वतः ॥ ३४ ॥
केन चास्मै वरो दत्तो बालायैव महामुने ।
कथं शक्रो जितस्तेन कथं लब्धवरश्च सः ॥ ३५ ॥

इत्युत्तरकाण्डे ऋषिसमागमो नाम प्रथमः सर्गः ॥

# उत्तरकाण्डं

II.

एतत् तु वचनं श्रुत्वा राघवस्य महात्मनः ।
कुम्भयोनिर्महातेजा वाक्यमेतदुवाच ह ॥ १ ॥
शृणु राजन् यथावृत्तं तस्य तेजो बलं महत् ।
जघान च रिपून् येन यथावध्यश्च शत्रुभिः ॥ २ ॥
अहं तु रावणस्येदं कुलं जन्म च राघव ।
वरप्रदानं च यथा तथा सर्वं ब्रवीमि ते ॥ ३ ॥
पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः ।
पुलस्त्यो नाम विप्रर्षिः साक्षादिव हुताशनः ॥ ४ ॥
नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा ।
प्रजापतेः पुत्र इति शक्यं ज्ञातुं गुणैर्हि सः ॥ ५ ॥
स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः ।
तृणबिन्द्वाश्रमं गत्वा न्यवसन्मुनिपुङ्गवः ॥ ६ ॥
कुर्वतस्तस्य हि तपः स्वाध्यायनिरतात्मनः ।
गत्वाश्रमपदं रम्यं विघ्नं कन्याः प्रकुर्वते ॥ ७ ॥
देवपन्नगकन्याश्च राजर्षितनयास्तथा ।
क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे ॥ ८ ॥
नित्यशस्तं प्रदेशं तु गत्वा क्रीडन्ति कन्यकाः ।
देशस्य रमणीयत्वात् पुलस्त्यो यत्र स द्विजः ॥ ९ ॥

गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ।
मुनेस्तापस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः ॥ १० ॥
अथ क्रुद्धो महातेजा व्याजहार महामुनिः ।
या मे दर्शनमागच्छेत् सा गर्भं धारयेदिति ॥ ११ ॥
तास्तु सर्वाः प्रतिगताः श्रुत्वा वाक्यं महामुनेः ।
ब्रह्मशापभयाद्भीता न तं देशं सिषेविरे ॥ १२ ॥
तृणविन्दोस्तु राजर्षेर्दुहिता न तदाशृणोत् ।
गत्वाश्रमपदं तस्य सा चचार तु निर्भया ॥ १३ ॥
तस्मिन्नेव तु काले स प्राजापत्यो महामुनिः ।
स्वाध्यायमकरोत् तत्र तपसा द्योतितप्रभः ॥ १४ ॥
तस्य वेदध्वनिं श्रुत्वा दृष्ट्वा तं च तपोधनं ।
अभवत् पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥ १५ ॥
बभूव च समुद्विग्ना दृष्ट्वा तद्रूपमात्मनः ।
इदं मे किं त्विति ज्ञात्वा पितुर्गत्वाश्रमं स्थिता ॥ १६ ॥
तां तु दृष्ट्वा तथाभूतां तृणविन्दुरथाब्रवीत् ।
किं त्वमेतदसदृशं धारयस्यात्मनो वपुः ॥ १७ ॥
साथ कृताञ्जलिर्दीना कन्योवाच तपोधनं ।
न जाने कारणं तात येन मे रूपमीदृशं ॥ १८ ॥
किं तु पूर्वं गतास्म्येका महर्षेर्भावितात्मनः ।
पुलस्त्यस्याश्रमपदमन्वेष्टुं स्वसखीजनं ॥ १९ ॥

न च पश्याम्यहं तत्र काञ्चिदभ्यागतां सखीं ।
रूपस्य तु विपर्यासं लब्ध्वैवाहमिहागता ॥ २० ॥
तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः ।
ध्यानं विवेश तच्चापि ददर्श मुनिशापजं ॥ २१ ॥
स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः ।
तनयासहितो गत्वा पुलस्त्यमिदमब्रवीत् ॥ २२ ॥
भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषितां ।
भिक्षां प्रतिगृहाणेमां महर्षे स्वयमुद्यतां ॥ २३ ॥
तपश्चरणयुक्तस्य श्राम्यमाणेन्द्रियस्य ते ।
शुश्रूषातत्परा नित्यं भविष्यति न संशयः ॥ २४ ॥
एवं ब्रुवाणं तं वाक्यं महर्षिं धार्मिकं तदा ।
प्रतिगृह्याब्रवीत् कन्यां बाढमित्येव स द्विजः ॥ २५ ॥
दत्वाथ स गतः कन्यां स्वमाश्रमपदं नृपः ।
सापि तत्रावसत् साध्वी तोषयन्ती पतिं गुणैः ॥ २६ ॥
तस्याश्च शीलवृत्ताभ्यां तुतोष मुनिपुङ्गवः ।
प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥ २७ ॥
परितुष्टोऽस्मि ते भद्रे गुणानां सम्पदा भृशं ।
तुष्टश्च वितराम्यद्य पुत्रमात्मसमं तव ॥ २८ ॥
उभयोर्वंशकर्तारं पौलस्त्यमिति विश्रुतं ।
यस्मात् तु विश्रुतो वेदस्त्वयेहाध्ययतो मम ॥ २९ ॥

तस्मात् स विश्रवा नाम भविष्यति न संशयः ।
एवमुक्ता तु सा कन्या प्रहृष्टेनान्तरात्मना ॥३०॥
अचिरेणैव कालेन सूता विश्रवसं सुतं ।
स तु लोकत्रयज्ञातः शौचधर्मव्यवस्थितः ॥३१॥
द्युतिमान् समदर्शी च व्रताचाररतस्तथा ।
पितेव तपसा युक्तो विश्रवा मुनिपुङ्गवः ॥३२॥

इत्युत्तरकाण्डे विश्रवस उत्पत्तिर्नाम
द्वितीयः सर्गः ॥

# उत्तरकाण्डं

III.

अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः ।
अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥
सत्यवाक् शीलवान् दक्षः स्वाध्यायनिरतः शुचिः ।
सर्वभूतेषु संसक्तो नित्यं धर्मपरायणः ॥ २ ॥
ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः ।
ददौ विश्रवसे भार्यां स्वां सुतां वरवर्णिनीं ॥ ३ ॥
प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा ।
मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः ॥ ४ ॥
स तस्यां वीर्यसंपन्नमपत्यं परमाद्भुतं ।
जनयामास धर्मज्ञः सर्वैरार्यगुणैर्युतं ॥ ५ ॥
तस्मिन् जाते तु संतुष्टः स बभूव पितामहः ।
नाम चास्याकरोत् प्रीतः सार्द्धं देवर्षिभिस्तदा ॥ ६ ॥
यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव ।
तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ७ ॥
स तु वैश्रवणस्तस्य तपोवनगतस्तथा ।
व्यवर्धत महातेजा हुताहुतिरिवानलः ॥ ८ ॥
तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः ।
चरिष्ये नियतो धर्मं धर्मो हि परमा गतिः ॥ ९ ॥

ततो वर्षसहस्राणि तपस्तेपे महावने ।
पूर्णे पूर्णे सहस्रे तु तां तां वृत्तिमवर्तत ॥ १० ॥
जलाशी मारुताहारो निराहारस्तथैव च ।
एवं वर्षसहस्राणि गतान्यस्यैकवर्षवत् ॥ ११ ॥
अथ प्रीतो महातेजाः सेन्द्रैर्देवगणैः सह ।
गत्वाश्रमपदं तस्य ब्रह्मेदं वाक्यमब्रवीत् ॥ १२ ॥
परितुष्टोऽस्मि ते वत्स कर्मणानेन सुव्रत ।
वरं वृणीष्व भद्रं ते वरार्हस्त्वं हि मे मतः ॥ १३ ॥
अथाब्रवीद्वैश्रवणः पितामहमुपस्थितं ।
भगवँल् लोकपालत्वमिच्छेयं धनरक्षणं ॥ १४ ॥
ततोऽब्रवीद्वैश्रवणं परितुष्टेन चेतसा ।
ब्रह्मा सह सुरैः सर्वैर्बाढमित्येव हृष्टवत् ॥ १५ ॥
अहं हि लोकपालानां चतुर्थं स्रष्टुमुद्यतः ।
यमेन्द्रवरुणानां वै पदं यत् तव चेप्सितं ॥ १६ ॥
तत् कृतं गच्छ धर्मज्ञ धनेशत्वमवाप्नुहि ।
यमेन्द्रवरुणानां त्वं चतुर्थोऽद्य भविष्यसि ॥ १७ ॥
एतच्च पुष्पकं नाम विमानं सूर्यसंनिभं ।
प्रतिगृह्णीष्व यानार्थे त्रिदशैः समतां व्रज ॥ १८ ॥
स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतं ।
कृतकृत्या वयं तात तव दत्त्वा महावरं ॥ १९ ॥

इत्युक्त्वा स ययौ ब्रह्मा सह देवैर्नभस्तलं ।
गतेषु ब्रह्मपूर्वेषु देवेष्वथ महात्मसु ॥ २० ॥
धनेशः पितरं प्रोचे विनयात् प्रणतो वचः ।
भगवँल् लब्धवानस्मि वरं कमलयोनितः ॥ २१ ॥
निवासं न तु मे देवो विदधे स प्रजापतिः ।
तत् पश्य भगवन् कञ्चिद्देशं वासाय मे प्रभो ॥ २२ ॥
न च पीडा भवेद्यत्र प्राणिनो यस्य कस्यचित् ।
एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः ॥ २३ ॥
विचिन्त्य तत्र धर्मज्ञः श्रूयतामित्यथाब्रवीत् ।
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ २४ ॥
तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा ।
लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा ॥ २५ ॥
राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ।
तत्र त्वं वस भद्रं ते रंस्यसि तत्र नित्यशः ॥ २६ ॥
रमणीया पुरी सा हि रुक्मवैडूर्यतोरणा ।
राक्षसैः सा तु संत्यक्ता पुरा विष्णुभयार्दितैः ॥ २७ ॥
शून्या रक्षोगणैः सर्वै रसातलतलं गतैः ।
शून्या संप्रति लङ्का सा प्रभुस्तस्या न विद्यते ॥ २८ ॥
स त्वं तत्र निवासाय गच्छ पुत्र यथासुखं ।
निर्दोषस्तत्र ते वासो न बाधस्तत्र कस्यचित् ॥ २९ ॥

एतच्छ्रुत्वा तु धर्मात्मा धर्मिष्ठं वचनं पितुः ।
निवेशयामास तदा लङ्कां पर्वतमूर्द्धनि ॥ ३० ॥
नैर्ऋतानां सहस्रैस्तु मुदितैर्बहुभिस्तदा ।
अचिरेणैव कालेन संपूर्णा तस्य शासनात् ॥ ३१ ॥
स तु तत्रावसत् प्रीतो धर्मात्मा नैर्ऋतर्षभः ।
समुद्रपरिखायां हि लङ्कायां विश्रवः सुतः ॥ ३२ ॥
काले काले स तु तदा पुष्पकेण धनेश्वरः ।
अभ्यगच्छद्विनीतात्मा पितरं मातरं च हि ॥ ३३ ॥
स देवगन्धर्वगणैरभिष्टुतस्
तथाप्सरोनृत्यविभूषितालयः ।
गभस्तिभिः सूर्य इवौजसा वृतः
पितुः समीपं प्रययौ धनाधिपः ॥ ३४ ॥

इत्युत्तरकाण्डे वैश्रवणवरप्रदानं नाम
तृतीयः सर्गः ॥

# उत्तरकाण्डं

## IV.

श्रुत्वागस्त्येरितं वाक्यं रामो विस्मयमागतः ।
लङ्केति पूर्वमप्यासीद्राक्षसानामियं पुरी ॥ १ ॥
ततः शिरः कम्पयित्वा रामोऽग्निसमविग्रहः ।
अगस्त्यं स मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २ ॥
भगवन् पूर्वमेवैषा लङ्काभूत् पिशिताशिनां ।
इतीदं भवतः श्रुत्वा जातो मे विस्मयः परः ॥ ३ ॥
पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतं ।
इदानीमन्यतश्चापि संभवः कीर्त्तितस्त्वया ॥ ४ ॥
रावणात् कुम्भकर्णाच्च प्रहस्ताद्विकटादपि ।
रावणस्य च पुत्रेभ्यः किन्नु ते बलवत्तराः ॥ ५ ॥
क एषां पूर्वको ब्रह्मन् किंनामा किंबलाश्च ते ।
अपराधं च कं प्राप्य विष्णुना द्राविताः कथं ॥ ६ ॥
एतद्विस्तरतः सर्वं कथयस्व ममानघ ।
कौतूहलमिदं त्वं मे नुद भानुर्यथा तमः ॥ ७ ॥
राघवस्य वचः श्रुत्वा संस्कारालंकृतं शुभं ।
ईषद्विस्मयमानस्तु तमगस्त्योऽभ्यभाषत ॥ ८ ॥
प्रजापतिः पुरा सृष्ट्वा आपो राघवनन्दन ।
तासां गोपायने सत्वानसृजत् पद्मसंभवः ॥ ९ ॥

ते सत्वाः सत्वकर्तारं विनीतवदुपस्थिताः ।
किं कुर्म इत्यभाषन्त क्षुत्पिपासाभयार्दिताः ॥ १० ॥
प्रजापतिस्तु तान् प्राह सर्वांश्च प्रहसन्निव ।
आभाष्याप: प्रयत्नेन रक्षधमिति मानदाः ॥ ११ ॥
रक्षाम इति तत्रान्यैः क्षिणुमश्चेत्यथापरैः ।
क्षुधिताक्षुधितैरुक्तस्ततस्तान् प्राह भूतकृत् ॥ १२ ॥
क्षिणुम इति यैरुक्तं ते तु यक्षा भवन्तु वः ।
रक्षाम इति यैरुक्तं राक्षसास्ते भवन्तु वः ॥ १३ ॥
तत्र हेतिः प्रहेतिश्च राक्षसौ भ्रातरावुभौ ।
मधुकैटभसंकाशौ बभूवतुररिन्दमौ ॥ १४ ॥
प्रहेतिर्धार्मिकस्तत्र न दारानभिकांक्षति ।
हेतिर्दारक्रियार्थं तु यत्नं परमथाकरोत् ॥ १५ ॥
स कालभगिनीं पत्नीं भयां नाम भयावहां ।
उदावहदमेयात्मा स्वयमेव महामतिः ॥ १६ ॥
स तस्यां जनयामास हेती राक्षसपुङ्गवः ।
पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केशमिति श्रुतं ॥ १७ ॥
स हेतिपुत्रो विक्रान्तः प्रदीप्ताग्निसमप्रभः ।
व्यवर्धत महातेजास्तोयमध्ये यथाम्बुजः ॥ १८ ॥
स यदा यौवनं भद्रमनुप्राप्तो निशाचरः ।
ततो दारक्रियां तस्य कर्तुं व्यवसितः पिता ॥ १९ ॥

संध्यादुहितरं सोऽथ नाम्ना सालंकटंकटां ।
वरयामास पुत्रार्थे हेती राक्षसपुङ्गवः ॥ २० ॥
अवश्यमेव दातव्या वरायैषेति संध्यया ।
चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ॥ २१ ॥
संध्यायास्तनयां लब्ध्वा विद्युत्केशो महाबलः ।
रेमे स वै तया सार्धं पौलोम्या मघवानिव ॥ २२ ॥
केनचित् त्वथ कालेन राम सालंकटंकटा ।
विद्युत्केशाद्गर्भमाप मेघराजिरिवार्णवात् ॥ २३ ॥
ततः सा राक्षसी गर्भं मेघगर्भसमप्रभं ।
प्रसूता मन्दरं गत्वा गङ्गागर्भमिवाग्निजं ॥ २४ ॥
समुत्सृज्य तु सा गर्भं विद्युत्केशाद्रतार्थिनी ।
रेमे पत्या तु सा सार्धं विस्मृत्य सुतमात्मनः ॥ २५ ॥
तत्रोत्सृष्टः स तु शिशुः प्रदीप्ताग्निसमद्युतिः ।
आस्ये पाणिं सन्निधाय मेघवद्विरुराव ह ॥ २६ ॥
अथोपरिष्टादागच्छन् वृषभस्थो महेश्वरः ।
अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजं ॥ २७ ॥
कारुण्यादथ पार्वत्या भवस्त्रिपुरसूदनः ।
तं राक्षसात्मजं चक्रे पितुरेव वयः समं ॥ २८ ॥
अमरं चैव तं कृत्वा महादेवोऽक्षयाव्ययं ।
पुरमाकाशगं प्रादात् पार्वत्याः प्रियकाम्यया ॥ २९ ॥

उमयापि वरो दत्तो राक्षसीनां नृपात्मज ।
गर्भोपलब्धिः सद्यश्च प्रसूतिः सद्य एव च ।
सद्य एव च जातस्य वयः प्राप्तिश्च कामतः ॥ ३० ॥

ततः सुकेशो वरदानगर्वितः
श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः ।
चचार सर्वत्र महामतिः क्षणात्
खगं पुरं प्राप्य पुरंदरो यथा ॥ ३१ ॥

इत्युत्तरकाण्डे सुकेशवरप्रदानं नाम
चतुर्थः सर्गः ॥

# उत्तरकाण्डं

V.

सुकेशं धार्मिकं ज्ञात्वा वरलब्धं च राक्षसं ।
ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १ ॥
तस्य देववती नाम द्वितीया श्रीरिवात्मजा ।
तां तस्मै स ददौ प्रीतः कृष्णायेवोदधिः श्रियं ॥ २ ॥
वरदानकृतैश्वर्यं सा तं प्राप्य पतिं प्रियं ।
आसीद्देववती हृष्टा धनं प्राप्येव दुर्गतः ॥ ३ ॥
स तया सह सुप्रीतो रेमेऽथ रजनीचरः ।
अञ्जनादभिनिष्क्रान्तो गजो वासितयेव ह ॥ ४ ॥
देववत्यां सुकेशस्तु जनयामास राघव ।
त्रींस्त्रिनेत्रसमान् पुत्रान् राक्षसान् राक्षसाधिपः ॥ ५ ॥
माल्यवन्तं सुमालिं च मालिनं च महाबलं ।
त्रयो लोका इवाव्यग्रा दीप्तास्त्रय इवाग्नयः ॥ ६ ॥
त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवाहयः ।
त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः ॥ ७ ॥
विवृद्धिमगमंस्तत्र व्याधयः प्रबला इव ।
वरप्राप्त्या ततस्ते तु ज्ञात्वैश्वर्यं पितुर्महत् ॥ ८ ॥
तपस्तप्तुं गता मेरुं भ्रातरः कृतनिश्चयाः ।
प्रगृह्य नियमान् घोरान् राक्षसा नृपसत्तम ॥ ९ ॥

चेरुस्तत्र तपो घोरं सर्वभूतभयावहं ।
सत्यार्जवदमोद्भूतः स तु तेषां तपोऽनलः ॥ १० ॥
निर्दहन्निव लोकांस्त्रीन् सदेवासुरमानुषान् ।
ततो देवश्चतुर्वक्त्रो विमानवरमास्थितः ॥ ११ ॥
सुकेशपुत्रानामन्त्र्य वरदोऽस्मीत्यभाषत ।
ब्रह्माणं वरदं ज्ञात्वा दृष्ट्वावन्द्य च राक्षसाः ॥ १२ ॥
ऊचुः प्राञ्जलयः सर्वे वेपमाना द्रुमा इव ।
तपसाराधितो देव ददासि यदि नो वरान् ॥ १३ ॥
अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः ।
प्रभविष्णो भविष्यामः परस्परमनुव्रताः ॥ १४ ॥
एवं भविष्यथेत्युक्त्वा सुकेशतनयांस्तदा ।
स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १५ ॥
वरं लब्ध्वा तु ते सर्वे राम रात्रिञ्चरेश्वराः ।
सुरासुरान् प्रबाधन्ते वरदानात् सुनिर्भयाः ॥ १६ ॥
तैर्बध्यमानास्त्रिदशा ऋषिसंघाः सचारणाः ।
त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥ १७ ॥
अथ ते विश्वकर्माणं शिल्पिनां प्रभुमव्ययं ।
प्रोचुरागम्य सहिता राक्षसा रघुनन्दन ॥ १८ ॥
ओजस्तेजो बलं बुद्ध्वा महता चात्मतेजसा ।
गृहकर्त्ता भवान् नित्यं देवानां हृदयेप्सितान् ॥ १९ ॥

अस्माकमपि देव त्वं गृहान् कर्तुमिहार्हसि ।
हिमवन्तं समाश्रित्य मेरुं मन्दरमेव वा ॥ २० ॥
सुरेश्वरगृहप्रख्यान् गृहान् नः कुरु विश्वकृत् ।
विश्वकर्मा ततस्तेषां राक्षसानां महात्मनां ॥ २१ ॥
निवासं कथयामास शक्रावासोपमं तदा ।
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ २२ ॥
सुवेल इति चाप्यन्यो द्वितीयो राक्षसर्षभाः ।
शिखरे तस्य शैलस्य मध्यमेऽम्बुदसंनिभे ॥ २३ ॥
शकुनैरपि दुष्प्रापे टङ्कच्छिन्ने चतुर्दिशि ।
त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥ २४ ॥
तत्र लङ्केति नगरी मया शक्राज्ञया कृता ।
तस्यां वसत दुर्धर्षाः पुर्यां राक्षसपुङ्गवाः ॥ २५ ॥
अमरावतीमासाद्य सेन्द्रा इव दिवौकसः ।
लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः ॥ २६ ॥
भविष्यथ सुदुर्धर्षाः शत्रुभिः शत्रुसूदनाः ।
विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः ॥ २७ ॥
सहस्रानुचरा भूत्वा पुरीं तामवसंस्तदा ।
दृढप्राकारपरिखां हैमैर्गृहशतैर्वृतां ॥ २८ ॥
लङ्कामवाप्य ते हृष्टा न्यवसन् रजनीचराः ।
एतस्मिन्नेव काले तु यथाकाममचरानघ ॥ २९ ॥

नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ।
तस्याः कन्यात्रयं ह्यासीत् ह्रीश्रीकान्तिसमद्युति ॥३०॥
ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी ।
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभानना: ॥३१॥
त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ।
दत्ता मात्रा महाभागा नक्षत्रे भगदैवते ॥३२॥
कृतदारास्तु ते राम सुकेशतनयास्तदा ।
चिक्रीडुः सह भार्याभिरप्सरोभिरिवामराः ॥३३॥
तत्र माल्यवतो भार्या सुन्दरी नाम सुन्दरी ।
स तस्यां जनयामास यदपत्यं निबोध तत् ॥३४॥
वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चापि राक्षसः ।
सुप्तघ्नो यज्ञकेतुश्च मत्तोन्मत्तौ तथैव च ॥३५॥
सुवेला चाभवत् कन्या सुन्दर्यां राम सुन्दरी ।
सुमालिनोऽपि भार्यासीत् पूर्णचन्द्रनिभानना ॥३६॥
नाम्ना केतुमती राम प्राणेभ्योऽपि गरीयसी ।
सुमाली जनयामास यदपत्यं निशाचरः ॥३७॥
केतुमत्यां महाराज तन्निबोधानुपूर्वशः ।
प्रहस्तोऽकम्पनश्चैव विकटः कालिकामुखः ॥३८॥
धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महामतिः ।
संह्रादी प्रघसश्चैव भासकर्णश्च राक्षसः ॥३९॥

राकापुष्पोत्कटा चैव नैकसी च शुचिस्मिता ।
कुम्भीनसी तथेत्येते सुमालिप्रसवाः स्मृताः ॥ ४० ॥
मालिनो वसुदा नाम गन्धर्वी रूपशालिनी ।
भार्यासीत् पद्मपत्राक्षी मुख्या पद्मसमानना ॥ ४१ ॥
सुमालिनोऽनुजस्तस्यां जनयामास यत् प्रभो ।
अपत्यं कथ्यमानं तन्निबोध मम राघव ॥ ४२ ॥
अनिलश्चानलश्चैव भीमः सम्पातिरेव च ।
एते विभीषणामात्या मालेयास्ते निशाचराः ॥ ४३ ॥

ततस्तु ते राक्षसपुङ्गवास्त्रयो
निशाचरैः पुत्रशतैश्च संवृताः ।
सुरान् सहेन्द्रानृषिनागदानवान्
बबाधिरे तेऽतिबलातिगर्विताः ॥ ४४ ॥
जगद्भ्रमन्तोऽनिलवद्दुरासदा
रणे प्रचण्डाः शतशः सदोद्धताः ।
वरप्रदानादभिवर्द्धिता भृशं
क्रतुक्रियाणां प्रशमं प्रचक्रिरे ॥ ४५ ॥

इत्युत्तरकाण्डे राक्षसोत्पत्तिर्नाम पञ्चमः सर्गः ॥

# उत्तरकाण्डं

## VI.

तैर्बाध्यमाना देवाश्च ऋषयश्च तपोधनाः ।
भयार्त्ताः शरणं जग्मुर्देवदेवं महेश्वरं ॥ १ ॥
ते समेत्य नमस्कृत्य त्रिपुरारिं त्रिलोचनं ।
ऊचुः प्राञ्जलयो देवा भयाद्गद्गदभाषिणः ॥ २ ॥
सुकेशपुत्रैर्भगवन् पितामहवरोद्धतैः ।
प्रजाध्यक्ष प्रजाः सर्वा बाध्यन्ते रिपुबाधन ॥ ३ ॥
अशरण्याः क्रियन्ते वै शरण्याः सर्व आश्रमाः ।
स्वर्गाच्च देवान् प्रच्याव्य स्वर्गे क्रीडन्ति देववत् ॥ ४ ॥
अहं विष्णुरहं रुद्रो ब्रह्माहं देवराडहं ।
अहं यमोऽहं वरुणश्चन्द्रोऽहं रविरप्यहं ॥ ५ ॥
इति ते राक्षसा देव वरदानेन दर्पिताः ।
भाषन्ते समरोत्कर्षास्तेषां ये च पुरःसराः ॥ ६ ॥
तन्नो देव भयार्त्तानामभयं दातुमर्हसि ।
अशिवं वपुरास्थाय जहि तान् देव कण्टकान् ॥ ७ ॥
इत्युक्तः स सुरैः सर्वैः कपर्दी नीललोहितः ।
सुकेशं प्रति सापेक्षः प्राह देवगणान् प्रभुः ॥ ८ ॥
नाहं तान् निहनिष्यामि ममावध्या हि ते सुराः ।
किं तु मन्त्रं प्रवक्ष्यामि यो वै तान् निहनिष्यति ॥ ९ ॥

## उत्तरकाण्डं

एवमेव समुद्योगं पुरस्कृत्य सुरर्षयः ।
गच्छध्वं शरणं विष्णुं हनिष्यति स तान् प्रभुः ॥ १० ॥
ततस्ते जयशब्देन वन्दित्वा वै महेश्वरं ।
विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ ११ ॥
शङ्खचक्रधरं ते तु प्रणम्य बहुमान्य च ।
ऊचुः संभ्रान्तवद्वाक्यं सुकेशतनयान् प्रति ॥ १२ ॥
सुकेशतनयैर्देव त्रिभिस्त्रेताग्निसन्निभैः ।
आक्रम्य वरदानेन वश्यास्तैस्तु कृता वयं ॥ १३ ॥
लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता ।
तत्र स्थिताः प्रबाधन्ते सर्वान् नः क्षणदाचराः ॥ १४ ॥
स त्वमस्मत्प्रियार्थं वै जहि तान् मधुसूदन ।
चक्रकृत्तानुग्रबलान् निवेदय यमाय वै ॥ १५ ॥
भयेष्वभयदोऽस्माकं नान्योऽस्ति भवता समः ।
नुद त्वं नो भयं देव नीहारमिव भास्करः ॥ १६ ॥
इत्येवं तैः सुरैरुक्तो देवदेवो जनार्दनः ।
अभयं भयभीतानां दत्त्वा देवानुवाच ह ॥ १७ ॥
सुकेशं राक्षसं जाने ईशानवरगर्वितं ।
त्रीनस्य तनयान् जाने येषां ज्येष्ठः स माल्यवान् ॥ १८ ॥
तानहं समतिक्रान्तमर्यादान् पुरुषाधमान् ।
सूदयिष्यामि संग्रामे सुरा भवत विज्वराः ॥ १९ ॥

इत्युक्तास्तेऽमराः सर्वे विष्णुना प्रभविष्णुना ।
यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्दनं ॥ २० ॥
विबुधानां समुद्योगं माल्यवान् स निशाचरः ।
श्रुत्वा तौ भ्रातरौ ज्येष्ठ इदं वचनमब्रवीत् ॥ २१ ॥
अमरा ऋषयश्चैव समेत्य किल शङ्करं ।
अस्मद्वधं परीप्सन्त इदमूचुस्त्रिलोचनं ॥ २२ ॥
सुकेशतनया देव वरदानबलोद्धताः ।
बाधन्तेऽस्मान् समुद्युक्ता घोररूपाः पदे पदे ॥ २३ ॥
राक्षसैरभिभूतास्तु न शक्ताः स्म उमापते ।
स्वेषु धर्मेषु संस्थातुं भयात् तेषां दुरात्मनां ॥ २४ ॥
तदस्माकं हितार्थाय जहि तांस्तु त्रिलोचन ।
राक्षसान् हुंकृतेनैव दह प्रदहताम्वर ॥ २५ ॥
इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः ।
शिरः करं च धुन्वान इदं वचनमब्रवीत् ॥ २६ ॥
अबध्या मम ते देवाः सुकेशतनया रणे ।
मन्त्रं तु वः प्रवक्ष्यामि यस्तु तान् निहनिष्यति ॥ २७ ॥
योऽसौ चक्रगदापाणिः पीनवासा जनार्दनः ।
हरिर्नारायणः श्रीमान् शरणं स प्रपद्यतां ॥ २८ ॥
रुद्रादवाप्य ते मन्त्रं कामारिमभिवाद्य च ।
नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन् ॥ २९ ॥

ते तु नारायणेनोक्ता देवा इन्द्रपुरोगमाः ।
सुरारींस्तान् हनिष्यामि सुरा भवत विज्वराः ॥३०॥
देवानां भयभीतानां हरिणा राक्षसर्षभौ ।
प्रतिज्ञातो बधोऽस्माकं चिन्त्यतां यदिह क्षमं ॥३१॥
हिरण्यकशिपोर्मृत्युरन्येषां च सुरद्विषां ।
नमुचिः कालनेमिश्च संह्रादो वीरसत्तमः ॥३२॥
राधेयो बहुमायी च लोकपालोऽथ धार्मिकः ।
यमलार्जुनौ च हार्दिक्यः शुम्भश्चैव निशुम्भकः ॥३३॥
असुरा दानवाश्चैव सत्ववन्तो महाबलाः ।
सर्वे समरमासाद्य श्रूयन्ते च पराजिताः ॥३४॥
सर्वैः क्रतुशतैरिष्टं सर्वे मायाविदस्तथा ।
सर्वे सर्वास्त्रकुशलाः सर्वे शत्रुभयंकराः ॥३५॥
नारायणेन निहताः शतशोऽथ सहस्रशः ।
एतज् ज्ञात्वा तु सर्वेषां क्षमं कर्तुमिहार्हथ ॥३६॥
दुःखं नारायणं जेतुं यो नो हन्तुमिहेच्छति ।
ततः सुमाली माली च श्रुत्वा माल्यवतो वचः ॥३७॥
ऊचतुर्भ्रातरं ज्येष्ठमश्विनाविव वासवं ।
अधीतं दत्तमिष्टं च ऐश्वर्यं परिपालितं ॥३८॥
आयुर्निरामयं प्राप्तं धर्मश्चापि कुलोचितः ।
देवसागरमक्षोभ्यं शस्त्रौघैः परिगाह्य च ॥३९॥

जिता द्विषो ह्यप्रतिमा न नो मृत्युकृतं भयं ।
नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा ॥ ४० ॥
अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा ।
विष्णोर्दोषश्च नास्त्यत्र कारणं त्रिदशेश्वराः ॥ ४१ ॥
देवानामेव दोषेण विष्णोः प्रचलितं मनः ।
तस्माद्वयैव सहिताः सर्वसैन्यसमावृताः ॥ ४२ ॥
देवानेव जिघांसामो येभ्यो दोषः समुत्थितः ।
इति ते राम संमन्त्र्य सर्वोद्योगेन राक्षसाः ॥ ४३ ॥
युद्धाय निर्ययुः क्रुद्धा महाकाया महाबलाः ।
स्यन्दनैर्वारणैश्चैव हयैश्च करिसन्निभैः ॥ ४४ ॥
खरैर्गोभिरथोष्ट्रैश्च शिशुमारैर्भुजङ्गमैः ।
मकरैः कच्छपैर्मीनैर्विहङ्गैर्गरुडोपमैः ॥ ४५ ॥
सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि ।
त्यक्त्वा लङ्कां ततः सर्वे राक्षसा बलगर्विताः ॥ ४६ ॥
प्रयाता देवलोकाय निस्त्रिंशा देवशत्रवः ।
लङ्काविपर्ययं दृष्ट्वा यानि लङ्कालयान्यथ ॥ ४७ ॥
रक्षसामेव मार्गेण दैवतान्यपचक्रमुः ।
रथोत्तमैरुह्यमानाः शतशोऽथ सहस्रशः ॥ ४८ ॥
प्रयाता राक्षसास्तूर्णं देवलोकं प्रयत्नतः ।
भौमाश्चैवान्तरीक्षाश्च कालाज्ञप्ता भयावहाः ॥ ४९ ॥

# उत्तरकाण्डं

उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः ।
अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च ॥५०॥
वेला समुद्रादुत्क्रान्ता चेलुश्चाप्यथ भूधराः ।
अट्टहासान् विमुञ्चन्तो घननादसमस्वनाः ॥५१॥
भूताश्च परिनृत्यन्ति उच्यन्तस्ते सहस्रशः ।
गृध्रचक्रसहस्राणि प्रज्वालोद्गारिभिर्मुखैः ॥५२॥
रक्षोगणस्योपरिष्टाद्भ्रमन्ते कालचक्रवत् ।
कपोता रक्तपादाश्च सारिका विद्रुता ययुः ॥५३॥
काका वाश्यन्ति तत्रैव विडाला वै द्विपादिकाः ।
वाश्यन्त्यश्च शिवास्तत्र दारुणं घोरदर्शनाः ॥५४॥
उत्पातांस्ताननादृत्य राक्षसा बलगर्विताः ।
यान्त्येव न निवर्तन्ति मृत्युपाशावपाशिताः ॥५५॥
माल्यवांश्च सुमाली च माली च रजनीचराः ।
पुरःसरा राक्षसानां क्रतूनामिव पावकाः ॥५६॥
माल्यवन्तं तु ते सर्वे माल्यवन्तमिवाचलं ।
निशाचरा आश्रयन्ति धातारमिव देहिनः ॥५७॥
तद्बलं राक्षसेन्द्राणां महाभ्रघननादिनां ।
जयेप्सया देवलोकं ययौ मालिवशे स्थितं ॥५८॥
राक्षसानां समुद्योगं तं तु नारायणः प्रभुः ।
देवदूतादुपश्रुत्य चक्रे युद्धे तदा मनः ॥५९॥

स सज्जायुधतूणीरो वैनतेयोपरि स्थितः ।
राक्षसानामभावाय ययौ तूर्णतरं प्रभुः ॥ ६० ॥
सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः ।
काञ्चनस्य गिरेः शृङ्गे सतडित्तोयदो यथा ॥ ६१ ॥

स देवसिद्धर्षिमहोरगैश्च
गन्धर्वगीतैरुपगीयमानः ।
समाससादामरशत्रुसैन्यं
चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥ ६२ ॥

सुपर्णपक्षानिलधूतवस्त्रं
भ्रमत्पताकं प्रविकीर्णशस्त्रं ।
चचाल तद्राक्षसराजसैन्यं
दृष्ट्वा हरिं सान्द्रपयोदनीलं ॥ ६३ ॥

ततः शितैः शोणितमांसदूषितैर्
युगान्तवैश्वानरतुल्यविग्रहैः ।
निशाचराः संपरिवार्य माधवं
वरायुधैर्निर्बिभिदुः सहस्रशः ॥ ६४ ॥

इत्युत्तरकाण्डे माल्यवदादिराक्षसनिर्याणं नाम
षष्ठः सर्गः ॥

# उत्तरकाण्डं

## VII.

नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः ।
बाणवर्षेण सिषिचुर्वर्षेणेवाद्रिमम्बुदाः ॥ १ ॥
श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तंचरेश्वरैः ।
रेजेऽञ्जनगिरिः श्रीमान् वर्षद्भिरिव तोयदैः ॥ २ ॥
शलभा इव केदारं मशका इव पर्वतं ।
यथामृतघटं दंशा मकरा इव चार्णवं ॥ ३ ॥
तथा रक्षोधनुर्मुक्ता वज्रानिलमनोजवाः ।
हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४ ॥
स्यन्दनैः स्यन्दनगता गजैर्गजधुरं गताः ।
अश्वारोहास्तथाश्वैश्च पदाताश्च पदातिभिः ॥ ५ ॥
राक्षसेन्द्रा गिरिनिभाः शरशक्त्यृष्टितोमरैः ।
निरुच्छ्वासं हरिं चक्रुः प्राणायामा इव द्विजं ॥ ६ ॥
निशाचरैस्तुद्यमानो मीनैरिव महातिमिः ।
शार्ङ्गमानम्य गात्राणि राक्षसानां महाहवे ॥ ७ ॥
शरैः कर्णायतोत्सृष्टैर्वज्रवक्त्रैर्मनोजवैः ।
चिच्छेद तिलशो विष्णुः शतशोऽथ सहस्रशः ॥ ८ ॥
विद्राव्य शरवर्षं तु वर्षं वायुरिवोत्थितः ।
पाञ्चजन्यं महाशङ्खं दध्मौ स पुरुषोत्तमः ॥ ९ ॥

सोऽम्बुजो हरिणा ध्मातः सर्वप्राणेन शङ्खराट् ।
ननाद भीमनिर्ह्रादं युगान्ते जलदो यथा ॥ १० ॥
शङ्खराजरवः सोऽथ त्रासयामास राक्षसान् ।
मृगराजरवोऽरण्ये समदानिव कुञ्जरान् ॥ ११ ॥
न शेकुरश्वाः संस्थातुं विमदाः करिणोऽभवन् ।
स्यन्दनेभ्योऽपतन् योधाः शङ्खशब्देन मोहिताः ॥ १२ ॥
शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः ।
विदार्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिं ॥ १३ ॥
भिद्यमानाः शरैश्चान्ये नारायणधनुश्च्युतैः ।
निपेतू राक्षसा भीताः शैला वज्रहता इव ॥ १४ ॥
व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि हि ।
असृक् क्षरन्ति धाराभिः सूर्मैरिसमिवाचलाः ॥ १५ ॥
शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा ।
ग्रसन्ते वैष्णवा बाणास्तेषां धनवतामसून् ॥ १६ ॥
तेषां करान् शरान् चैव शिरोधजधनूंषि च ।
रथान् पताकास्तूणीरान् चिच्छेद स हरिः शरैः ॥ १७ ॥
सूर्यादिव मयूखौघाः सागरादिव चोर्मयः ।
पातालादिव नागेन्द्रा वार्योघा इव चाम्बुदात् ॥ १८ ॥
तथा गाढविनिर्मुक्ताः शार्ङ्गान्नारायणेरिताः ।
निर्धावन्ति शरव्राताः शतशोऽथ सहस्रशः ॥ १९ ॥

शरभेण यथा सिंहाः सिंहेन द्विरदा यथा ।
द्विरदेन यथा व्याघ्राः शार्दूलेनेव द्वीपिनः ॥ २० ॥
द्वीपिना च यथा श्वानः शुना मार्जारका यथा ।
मार्जारेण यथा सर्पाः सर्पेण च यथा खगाः ॥ २१ ॥
तथा ते राक्षसा युद्धे विष्णुना प्रभविष्णुना ।
द्राविता विदिशश्चैव शायिताश्च महीतले ॥ २२ ॥
राक्षसानां सहस्राणि निहत्य मधुसूदनः ।
वारिजं ध्मापयामास खे वायुरिव तोयदं ॥ २३ ॥
नारायणशरध्वस्तं शङ्खनादप्रविह्वलं ।
ययौ तल्लङ्काभिमुखं प्रभग्नं राक्षसं बलं ॥ २४ ॥
प्रभग्ने राक्षसबले नारायणशराहते ।
सुमाली शरजालेन आववार रणे हरिं ॥ २५ ॥
स तु तं छादयामास नीहारमिव भास्करं ।
राक्षसाः सत्त्वसंपन्नाः पुनर्धैर्यं समादधुः ॥ २६ ॥
अथ सोऽभ्यपतद्रोषाद्राक्षसो बलदर्पितः ।
महानादं प्रकुर्वाणो राक्षसान् जीवयन्निव ॥ २७ ॥
उत्क्षिप्य स्वर्णाभरणं करं करमिव द्विपः ।
रुराव राक्षसो हर्षात् सतडित् तोयदो यथा ॥ २८ ॥
तस्य नानर्दतस्तूच्चैः शिरो ज्वलितकुण्डलं ।
चिच्छेद यन्तुरश्वाश्च प्रोद्भ्रान्तास्तस्य रक्षसः ॥ २९ ॥

अश्वैरुद्भ्राम्यते भ्रान्तैस्तैः सुमाली निशाचरः ।
इन्द्रियार्थैः परिभ्रान्तैर्धृतिहीनः पुमानिव ॥ ३० ॥
स तु तान् संनियम्याश्वान् इन्द्रियार्थान् यथा यतिः ।
स्थितोऽभूदचलो भूत्वा स्थापयित्वाग्रतो रथं ॥ ३१ ॥
ततो हरिं महाबाहुं प्रपतन्तं रणाजिरे ।
माली ह्यभ्यद्रवद्वीरः प्रगृह्य सशरं धनुः ॥ ३२ ॥
मालिचापच्युता बाणाः कार्तस्वरविभूषिताः ।
विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव ॥ ३३ ॥
अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः ।
चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः ॥ ३४ ॥
अथ मौर्वीस्वनं कृत्वा भगवान् भूतभावनः ।
मालिनं प्रति बाणौघान् ससर्जासिगदाधरः ॥ ३५ ॥
मालिनो देहमासाद्य वज्रविद्युत्प्रभाः शराः ।
बहु रक्तं पपुस्तस्य नागा इव पुरामृतं ॥ ३६ ॥
मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः ।
शितैः शरैर्ध्वजं चापं वाजिनश्चाप्यपातयत् ॥ ३७ ॥
गदामादाय विरथस्ततो माली निशाचरः ।
आपुप्लुवे गदापाणिर्गिर्यग्रादिव केशरी ॥ ३८ ॥
स तदा गरुडं संख्ये ईशानं वै यथान्धकः ।
जघान शिरसि क्रुद्धो वज्रेणेन्द्र इवाचलं ॥ ३९ ॥

गदयाभिहतस्तेन मालिना गरुडो भृशं ।
रणात् पराङ्मुखं देवं कृतवान् वेदनातुरः ॥ ४० ॥
पराङ्मुखे कृते देवे गरुडेन पतत्रिणा ।
बभूव रक्षसां नादः सिंहानामिव गर्जतां ॥ ४१ ॥
रक्षसां नदतां नादं श्रुत्वा हरिहयानुजः ।
पराङ्मुखोऽप्युत्ससर्ज चक्रं मालिजिघांसया ॥ ४२ ॥
तत् सूर्यमण्डलाभासं स्वभासा भासयन् नभः ।
कालचक्रनिभं चक्रं मालिशीर्षमपाहरत् ॥ ४३ ॥
तच्छिरो राक्षसेन्द्रस्य चक्रोत्कृत्तं विभीषणं ।
पपात रुधिरोद्गारि पुरा राहुशिरो यथा ॥ ४४ ॥
ततः सुरैः सुसंहृष्टैः सर्वप्राणसमीरितः ।
सिंहनादरवो मुक्तः साधु देवेति वादिभिः ॥ ४५ ॥
मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि ।
सबलौ शोकसंतप्तौ लङ्कां प्रति विधाविती ॥ ४६ ॥
गरुडस्तु समाश्वस्तः संनिवृत्य यथानिलः ।
राक्षसान् पातयामास पक्षवातेन कोपितः ॥ ४७ ॥

नारायणोऽप्याशु वरेषुभिः प्रभुर्
विदारयामास धनुर्विमुक्तैः ।
नक्तञ्चरान् मुक्तविधूतकेशान्
यथाशनिभिस्तु नगान् महेन्द्रः ॥ ४८ ॥

भिन्नातपत्रं प्रतिविद्धशस्त्रं
    शरैः समन्तादभिभिन्नदेहं ।
विनिर्गतास्त्रं भयलोलनेत्रं
    बलं तदुन्मत्तनिभं बभूव ॥४९॥

सिंहार्दितानामिव कुञ्जराणां
    निशाचराणां सहकुञ्जराणां ।
रवश्च वेगश्च समं बभूव
    पुरा नृसिंहेन भयार्दितानां ॥५०॥

संमर्दिता वै हरिबाणजालैस्
    ते बाणजालानि समुत्सृजन्तः ।
धावन्ति नक्तञ्चरकालमेघा
    वायुप्रणुन्ना इव कालमेघाः ॥५१॥

चक्रप्रहारैर्विनिकृत्तशीर्षाः
    संचूर्णिताङ्गाश्च गदाप्रहारैः ।
असिप्रहारैर्विविधैर्विभिन्नाः
    पतन्ति शैला इव राक्षसेन्द्राः ॥५२॥

चक्रोत्कृत्तास्यकमला गदासंचूर्णितोरसः ।
लाङ्गलाकर्षितग्रीवा मुषलैर्भिन्नमस्तकाः ॥५३॥
केचिच्चैवासिना छिन्नास्तथान्ये शरपीडिताः ।
निपेतुरम्बरात् तूर्णं राक्षसाः सागराम्भसि ॥५४॥

ततोऽम्बरात् प्रच्युतहारकुण्डलैर्
निशाचरैर्नीलबलाहकोपमैः ।
निपात्यमानैर्ददृशे निरन्तरं
विशीर्यमाणैरिव नीलपर्वतैः ॥५५॥

इत्युत्तरकाण्डे मालिवधो नाम
सप्तमः सर्गः ॥

# उत्तरकाण्डं

## VIII.

हन्यमाने बले तस्मिन् पद्मनाभेन पृष्ठतः ।
माल्यवान् संनिवृत्याथ वेलातिग इवार्णवः ॥ १ ॥
संरक्तनयनः कोपाच्चलन्मौलिर्निशाचरः ।
पद्मनाभमिदं प्राह वचनं परुषं तदा ॥ २ ॥
नारायण न जानीषे क्षत्रधर्मं सनातनं ।
अयुद्धमनसो यन्नो भग्नान् हंसि यथेतरः ॥ ३ ॥
पराङ्मुखबधं पापं यः करोति स हीतरः ।
न हन्ता न हतः स्वर्गं लभते तेन कर्मणा ॥ ४ ॥
युद्धश्रद्धाथवा तेऽस्ति चक्रशार्ङ्गगदाधर ।
अहं स्थितोऽस्मि पश्यामि बलं दर्शय यत् तव ॥ ५ ॥
माल्यवन्तं स्थितं दृष्ट्वा माल्यवन्तमिवाचलं ।
उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६ ॥
युष्मत्तो भयभीतानां देवानामभयं मया ।
राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७ ॥
प्राणैरपि प्रियं कार्यं देवतानां सदा मया ।
सोऽहं वो निहनिष्यामि रसातलगतानपि ॥ ८ ॥
विष्णुमेवं ब्रुवाणं तु स तदा पुरुषोत्तमं ।
शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो ननाद च ॥ ९ ॥

माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना ।
हरेरुरसि बभ्राज मेघस्थेव शतह्रदा ॥ १० ॥
ततस्तामेव निष्कृष्य शक्तिं शक्तिधरप्रियः ।
माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११ ॥
स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिःसृता ।
काङ्क्षन्ती राक्षसं प्रायात् महोल्केवाञ्जनाचलं ॥ १२ ॥
सा तस्योरसि विस्तीर्णे हारभाभिः प्रभासिते ।
अपतद्राक्षसेन्द्रस्य गिरिकूटे यथाशनिः ॥ १३ ॥
तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः ।
माल्यवान् पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४ ॥
ततः कार्ष्णायसं शूलं कण्टकैर्बहुभिश्चितं ।
प्रगृह्य न्यबधीद्देवं स्तनयोरन्तरे दृढं ॥ १५ ॥
तथैव रणरक्तस्तु मुष्टिना सोऽरुणानुजं ।
ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६ ॥
ततोऽम्बरे महान् शब्दः साधु साध्विति चोत्थितः ।
आहत्य राक्षसो विष्णुं गरुडं चाप्यताडयत् ॥ १७ ॥
वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसं ।
व्युवाह बलवान् वायुः शुष्कपर्णचयं यथा ॥ १८ ॥
द्विजेशपक्षवातेन वीक्ष्य द्रावितमग्रजं ।
सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९ ॥

पक्षवातसमुद्भूतो माल्यवानपि राक्षसः ।
स्वबलेन समागम्य ययौ लङ्कां ह्रियावृतः ॥ २० ॥
एवं ते राक्षसा राम हरिणा हरिणेक्षण ।
बहुशः समरे भग्ना हतप्रवरनायकाः ॥ २१ ॥
अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं भयार्दिताः ।
त्यक्त्वा लङ्कां गता वस्तुं पातालं पन्नगालयं ॥ २२ ॥
सुमालिनं समासाद्य राक्षसं रघुनन्दन ।
स्थिताः प्रख्यातवीर्यो वै वंशः शालकटङ्कटः ॥ २३ ॥
कथिता राक्षसा राम एते शालकटङ्कटाः ।
ये त्वया निहतास्ते वै पौलस्त्या नाम राक्षसाः ॥ २४ ॥
सुमाली माल्यवान् माली ये च तेषां पुरःसराः ।
सर्वे ह्येते महाभागा रावणाद्बलवत्तराः ॥ २५ ॥
न चान्यो रक्षसां हन्ता सुरेष्वस्ति रिपुञ्जय ।
ऋते नारायणाद्देवाच्चक्रशार्ङ्गगदाधरात् ॥ २६ ॥
भवान् नारायणो देवश्चतुर्मूर्त्तिः सनातनः ।
राक्षसान् हन्तुमुत्पन्नो ह्यजेयः प्रभुरव्ययः ॥ २७ ॥
नष्टधर्मव्यवस्थाता काले काले प्रजाकरः ।
नित्योद्यतो दस्युवधे शरणागतवत्सलः ॥ २८ ॥

एषा मया तव नराधिप राक्षसानाम्
उत्पत्तिरद्य कथिता सकला यथावत् ।

भूयो निबोध रघुनन्दन रावणस्य
जन्म प्रभावमतुलं ससुतस्य सर्वं ॥ २९ ॥
चिरात् सुमाली व्यचरद्रसातले
स राक्षसो विष्णुभयार्दितस्तदा ।
पुत्रैश्च पौत्रैश्च समन्वितो बली
ततस्तु लङ्कामविशद्धनेश्वरः ॥ ३० ॥

इत्युत्तरकाण्डे प्रकृत्याख्यानं नाम
अष्टमः सर्गः ॥

# उत्तरकाण्डं

## IX.

कस्यचित् त्वथ कालस्य सुमाली स तु राक्षसः ।
रसातलान्मर्त्यलोकं सर्वं वै विचचार ह ॥ १ ॥
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः ।
सुतामादाय कल्याणीं विना पद्ममिव श्रियं ॥ २ ॥
राक्षसेन्द्रः स तु तदा विचरन् वै महीतले ।
गच्छन्तं गगणेऽपश्यत् पुष्पकेण धनेश्वरं ॥ ३ ॥
पितरं द्रष्टुकामः स मातरं च रघूद्वह ।
तं दृष्ट्वा सुरसंकाशं विमाने पावकोपमं ॥ ४ ॥
हितार्थं चिन्तयामास राक्षसानां निशाचरः ।
किं नु कृत्वा भवेच्छ्रेयो वर्धेमहि कथं वयं ॥ ५ ॥
सुतां वैश्रवणे दद्यां राक्षसीं वरवर्णिनीं ।
स तु राक्षसशार्दूलः शार्दूलसमविक्रमः ॥ ६ ॥
अथाब्रवीत् सुतां तत्र नैकसीं नाम नामतः ।
पुत्रि प्रदानकालस्ते यौवनं चातिवर्तते ॥ ७ ॥
त्वत्कृते च वयं सर्वे यन्त्रिता धर्मबुद्धयः ।
त्वयि पुत्रि समायुक्तं कर्म संपत्स्यते चिरात् ॥ ८ ॥
त्वं हि सर्वगुणोपेता श्रीः सपद्मेव नः कुले ।
प्रत्याख्यानाच्च भीतैस्त्वं नासुरैर्व्रियसे शुभे ॥ ९ ॥

कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणां ।
न ज्ञायते वरः पुत्रि कन्यानां चारुदर्शने ॥१०॥
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं सदा कन्या संशयस्थं करोति हि ॥११॥
सा त्वं मुनिवरश्रेष्ठं प्रजापतिकुलोद्भवं ।
गच्छ विश्रवसं पुत्रि पौलस्त्यं वरय स्वयं ॥१२॥
ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः ।
तेजसा भास्करोदग्रा यादृशोऽयं धनेश्वरः ॥१३॥
सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात् ।
गत्वाश्रमपदं तस्थौ यत्रास्ते स तु विश्रवाः ॥१४॥
एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः ।
अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥१५॥
सा तु तं दारुणां कालमबुद्ध्वा पितृगौरवात् ।
उपसृत्याग्रतस्तस्य चरणेऽधोमुखी स्थिता ॥१६॥
स तु तां वीक्ष्य धर्मात्मा पूर्णचन्द्रनिभाननां ।
अब्रवीत् परमोदारो दीप्यमान इवौजसा ॥१७॥
भद्रे कस्यासि दुहिता कुतो वा त्वमिहागता ।
किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि तच्छुभे ॥१८॥
एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् ।
राक्षसीं विद्धि मां ब्रह्मन् शासनात् पितुरागतां ॥१९॥

नैकसीमिति नाम्ना वै शेषं त्वं ज्ञातुमर्हसि ।
तपः प्रभावेन मुने यदर्थमहमागता ॥ २० ॥
ततो गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह ।
विज्ञातं ते मया भद्रे कारणं यन्मनोगतं ॥ २१ ॥
सुताभिलासो मत्तस्ते मत्तमातङ्गगामिनि ।
दारुणायां तु वेलायां यस्मात् त्वं मामुपस्थिता ॥ २२ ॥
शृणु तस्मात् सुतान् भद्रे यादृशान् जनयिष्यसि ।
दारुणान् दारुणाचारान् दारुणाभिजनप्रियान् ॥ २३ ॥
जनयिष्यसि सुश्रोणि राक्षसान् क्रूरकर्मणः ।
सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः ॥ २४ ॥
भगवन्नीदृशान् पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः ।
नेच्छामि सुदुराचारान् प्रसादं कर्तुमर्हसि ॥ २५ ॥
स कन्ययैवमुक्तस्तु विश्रवा मुनिपुङ्गवः ।
उवाच नैकसीं भूयः पूर्णेन्दुरिव रोहिणीं ॥ २६ ॥
पश्चिमो यस्तव सुतो भविष्यति शुभानने ।
मम वंशानुरूपः स धर्माचारो न संशयः ॥ २७ ॥
एवमुक्ता तु सा कन्या राम कालेन केनचित् ।
जनयामास बीभत्सं रक्षोरूपं सुदारुणं ॥ २८ ॥
दशशीर्षं महादंष्ट्रं नीलाञ्जनचयोपमं ।
ताम्रौष्ठं विंशतिभुजं महास्यं दीप्तमूर्द्धजं ॥ २९ ॥

जातमात्रे ततस्तस्मिन् सज्वालकवलाः शिवाः ।
क्रव्यादाश्चापसव्यानि मण्डलानि विचक्रमुः ॥ ३० ॥
ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः ।
प्रबभौ न च वै सूर्यो महोल्काश्चापतन् भुवि ॥ ३१ ॥
चकम्पे जगती चैव ववुर्वाताश्च दारुणाः ।
अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः ॥ ३२ ॥
अथ नामाकरोत् तस्य पितामहसमः पिता ।
दशशीर्षः प्रसूतोऽयं दशग्रीवो भवत्विति ॥ ३३ ॥
तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः ।
प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते ॥ ३४ ॥
ततः शूर्पणखा नाम संजज्ञे विकृतानना ।
विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः ॥ ३५ ॥
तस्मिन् जाते महासत्त्वे पुष्पवर्षं पपात ह ।
नभः स्थाने दुन्दुभयो देवानां प्राणदंस्तथा ॥ ३६ ॥
तौ तु तत्र महारण्ये ववृधाते महौजसौ ।
कुम्भकर्णदशग्रीवौ लोकोद्वेगकरौ तदा ॥ ३७ ॥
कुम्भकर्णः प्रमत्तस्तु महर्षीन् धर्मवत्सलान् ।
त्रैलोक्ये नित्यशः क्रुद्धो भक्षयन् विचचार ह ॥ ३८ ॥
विभीषणश्च धर्मात्मा नित्यं धर्मे व्यवस्थितः ।
स्वाध्यायी नियताहार उपवासजितेन्द्रियः ॥ ३९ ॥

अथ वैश्रवणो देवस्तत्र कालेन केनचित् ।
आयातः पितरं द्रष्टुं पुष्पकेण महौजसं ॥ ४० ॥
तं दृष्ट्वा नैकसी तत्र ज्वलन्तमिव तेजसा ।
आगम्य राक्षसीं बुद्धिं दशग्रीवमुवाच ह ॥ ४१ ॥
पुत्र वैश्रवणं पश्य भ्रातरं तेजसा वृतं ।
भ्रातृभावे समे चापि पश्यात्मानं त्वमीदृशं ॥ ४२ ॥
दशग्रीव तथा यत्नं कुरुष्वामितविक्रम ।
यथा त्वमपि मे पुत्र भवेर्वैश्रवणोपमः ॥ ४३ ॥
मातुस्तद्वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।
अमर्षमतुलं लेभे प्रतिज्ञां चाकरोत् तदा ॥ ४४ ॥
सत्यं ते प्रतिजानामि भ्रातुस्तुल्योऽधिकोऽपि वा ।
भविष्याम्योजसा चैव संतापं त्यज हृद्गतं ॥ ४५ ॥
ततः क्रोधेन तेनैव दशग्रीवः सहानुजः ।
चिकीर्षुर्दुष्करं कर्म तपसे धृतमानसः ॥ ४६ ॥
प्राप्स्यामि तपसा काममिति कृत्वाध्यवस्य च ।
अगच्छदात्मसिद्ध्यर्थं गोकर्णस्याश्रमं शुभं ॥ ४७ ॥
स राक्षसस्तत्र सहानुजस्तदा तपश्चचारातुलमुग्रविक्रमः ।
अतोषयच्चापि पितामहं विभुं ददौ स तुष्टश्च वरान् जयावहान् ॥ ४८

इत्युत्तरकाण्डे रावणोत्पत्तिर्नाम नवमः सर्गः ॥

# उत्तरकाण्डं

X.

अथाब्रवीद्द्विजं रामस्तं गत्वाश्रममण्डलं ।
आचक्ष्व कीदृशं ब्रह्मंस्तपस्तेपुर्महौजसः ॥ १ ॥
अगस्त्यस्त्वब्रवीद्रामं भूयः प्रयतमानसः ।
तांस्तान् धर्मविधींस्तत्र भ्रातरस्ते समाश्रिताः ॥ २ ॥
कुम्भकर्णस्तदात्यर्थं सत्यधर्मपरायणः ।
अतप्यद्ग्रीष्मकाले वै सोऽग्निभिः सूर्यपञ्चमैः ॥ ३ ॥
मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत ।
नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः ॥ ४ ॥
एवं वर्षसहस्राणि दश तस्य तदा ययुः ।
सत्ये धर्मे च रक्तस्य सत्पथाधिष्ठितस्य च ॥ ५ ॥
विभीषणस्तु धर्मात्मा नित्यं धर्मव्रतः शुचिः ।
पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ६ ॥
समाप्ते नियमे तस्मिन् ननृतुश्चाप्सरोगणाः ।
पपात पुष्पवर्षं च तुष्टुवुश्चैव देवताः ॥ ७ ॥
पञ्चवर्षसहस्राणि सूर्यमेवानुवर्तयन् ।
तस्थावूर्ध्वशिरोबाहुः स्वाध्यायासक्तचेतनः ॥ ८ ॥
एवं विभीषणस्यापि गतानि सुमहात्मनः ।
दश वर्षसहस्राणि स्वर्गस्थस्येव नन्दने ॥ ९ ॥

दिव्यं वर्षसहस्रं तु निराहारो दशाननः ।
पूर्णे वर्षसहस्रे तु शीर्षमग्नौ जुहाव सः ॥ १० ॥
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ।
शिरांसि नव चाप्यस्य प्रविष्टानि हुताशने ॥ ११ ॥
अथ वर्षसहस्रान्ते दशमे दशमं शिरः ।
छेत्तुकामस्य धर्मात्मा प्राप्तस्तत्र प्रजापतिः ॥ १२ ॥
पितामहस्तु सुप्रीतः सह देवैरुपस्थितः ।
वत्स वत्स दशग्रीव प्रीतस्तेऽस्मीत्यभाषत ॥ १३ ॥
शीघ्रं वृणीष्व धर्मज्ञ वरो यस्तेऽभिकांक्षितः ।
तं तं कामं करोम्यद्य न वृथा ते परिश्रमः ॥ १४ ॥
ततोऽब्रवीद्दशग्रीवः प्रहृष्टेनान्तरात्मना ।
प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥ १५ ॥
भगवन् प्राणिनां नित्यं नान्यत्र मरणाद्भयं ।
न च मृत्युसमः शत्रुरमरत्वमतो वृणे ॥ १६ ॥
एवमुक्तस्ततो ब्रह्मा दशग्रीवमुवाच ह ।
नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व वै ॥ १७ ॥
एवमुक्तस्तदा राम ब्रह्मणा लोककर्तृणा ।
दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥ १८ ॥
सुपर्णयक्षनागानां दैत्यदानवरक्षसां ।
अवध्यः स्यां प्रजाध्यक्ष देवतानां च सर्वशः ॥ १९ ॥

न हि चिन्ता ममान्येषु प्राणिषु प्रपितामह ।
तृणभूता हि ते सर्वे प्राणिनो मानुषादयः ॥ २० ॥
एवमुक्तस्तु ब्रह्मासौ दशग्रीवेण रक्षसा ।
उवाच वचनं राम सह देवैः पितामहः ॥ २१ ॥
भविष्यत्येतदेवं वै तव राक्षसपुङ्गव ।
शृणु चापि वचो भूयः प्रीतस्येह हितं मम ॥ २२ ॥
हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयानघ ।
अक्षयानि भविष्यन्ति तथैव तव सर्वशः ॥ २३ ॥
वितरामि च ते सौम्य वरमन्यं सुदुर्लभं ।
छन्दतो विन्द भद्रं ते रूपमन्यद्यदिच्छसि ॥ २४ ॥
एवं पितामहोक्तस्य दशग्रीवस्य रक्षसः ।
अग्नौ हुतानि शीर्षाणि यानि तान्युत्थितानि वै ॥ २५ ॥
एवमुक्त्वा तु तं राम दशग्रीवं प्रजापतिः ।
विभीषणमथोवाच वाक्यं लोकपितामहः ॥ २६ ॥
विभीषण त्वया वत्स धर्मसंहितबुद्धिना ।
आराधितोऽस्मि धर्मज्ञ वरं वरय सुव्रत ॥ २७ ॥
विभीषणस्तु धर्मात्मा प्राञ्जलिर्वाक्यमब्रवीत् ।
वृतः सर्वैर्गुणैर्नित्यं चन्द्रमा रश्मिभिर्यथा ॥ २८ ॥
भगवन् कृतमेतावद्यन्मे लोकेश्वरः प्रभुः ।
प्रीतो मे यदि दातव्यो वरो यं शृणु सुव्रत ॥ २९ ॥

परमापद्गतस्यापि धर्म एव धृतिर्भवेत् ।
अशिक्षितं च भगवन् ब्रह्मास्त्रं प्रतिभातु मे ॥ ३० ॥
या या जायेत मे बुद्धिस्तेषु तेष्वाश्रमेषु च ।
सा सा भवतु धर्मिष्ठा तं तं धर्मं भजेत च ॥ ३१ ॥
एष मे परमो देव वरः परमको मतः ।
न हि धर्मानुरक्तानां किञ्चिल्लोकेऽस्ति दुर्लभं ॥ ३२ ॥
अथ प्रजापतिः प्रीतो वाक्यमेतदुवाच ह ।
धर्मिष्ठस्त्वं यथा वत्स तथैतत् ते भविष्यति ॥ ३३ ॥
यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्षण ।
नाधर्मे वर्तते बुद्धिरमरत्वं ददामि ते ॥ ३४ ॥
एष एव च ते कामो भविष्यति निशाचर ।
अशिक्षितं च ब्रह्मास्त्रं यथावत् प्रतिपत्स्यसे ॥ ३५ ॥
कुम्भकर्णाय तु वरं दातुकाममरिन्दम ।
प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् ॥ ३६ ॥
न तावत् कुम्भकर्णाय प्रदातव्यो वरस्त्वया ।
जानासि हि यथा लोकांस्त्रासयत्येष राक्षसः ॥ ३७ ॥
नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश ।
अनेन भक्षिता ब्रह्मन् ऋषयो मानुषास्तथा ॥ ३८ ॥
तच्छापो वरनामास्मै दीयताममितप्रभ ।
लोकेभ्यः स्वस्ति चैवं स्याद्भवेत् तस्य च संमतिः ॥ ३९ ॥

एवमुक्तः सुरैर्ब्रह्माचिन्तयत् पद्मसंभवः ।
देवीं सरस्वतीं देवः पद्माक्षीं पद्मसंभवां ॥ ४० ॥
त्रैलोक्ये सर्वभूतेषु जिह्वा बुद्धिर्धृतिः स्मृतिः ।
चिन्तिता चोपतस्थे सा पार्श्वे देवी सरस्वती ॥ ४१ ॥
प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती ।
इयमस्म्यागता देव किं कार्यं करवाणि ते ॥ ४२ ॥
प्रजापतिस्तु संप्राप्तां प्राह देवीं सरस्वतीं ।
वाणी त्वं राक्षसस्यास्य भव वाग्देवतेप्सिता ॥ ४३ ॥
इत्युक्ता सा प्रणम्याथ तं विवेश निशाचरं ।
ततो राघव तद्रक्षो ब्रह्मा वचनमब्रवीत् ॥ ४४ ॥
कुम्भकर्ण महाबाहो वरं वरय यो मतः ।
कुम्भकर्णस्ततो हृष्टः श्रुत्वा वाक्यमुवाच ह ॥ ४५ ॥
स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितं ।
षण्मासोऽन्ते भवेद्देव दिनमेकं तु भोजनं ॥ ४६ ॥
एवमस्त्विति चोक्त्वा तं सह देवैः पितामहः ।
देवी सरस्वती चापि मुक्त्वा तं प्रययौ दिवं ॥ ४७ ॥
गतेषु ब्रह्मपूर्वेषु दैवतेषु नभः स्थलं ।
विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां पुनरागमत् ॥ ४८ ॥
कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः ।
ईदृशं किमिदं वाक्यं वदनान्मम निःसृतं ॥ ४९ ॥

अनभिप्रेतपूर्वं हि संमोहादिव भाषितं ।
भक्षयामीति वदता स्वप्स्यामीत्युदितं मया ॥५०॥
संतप्यमानो दुःखार्त्तो विधून्वन् चरणौ करौ ।
आत्मानमेव बहुशः श्वसन् निन्दन् पपात ह ॥५१॥
एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः ।
श्लेष्मातकं वनं गत्वा तत्र ते न्यवसंश्चिरं ॥५२॥

इत्युत्तरकाण्डे रावणादिवरदानं नाम
दशमः सर्गः ॥

# उत्तरकाण्डं

## XI.

सुमाली वरलब्धांस्तु ज्ञात्वा तान् वै निशाचरान् ।
उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥ १ ॥
माल्यवांश्च प्रहस्तश्च विरूपाक्षो महोदरः ।
सचिवाः परिवार्यैनमुदतिष्ठन् सुमालिनं ॥ २ ॥
प्रस्थितः स च तैः सर्वैर्वृतो राक्षसपुङ्गवैः ।
अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३ ॥
दिष्ट्या ते पुत्र संप्राप्तश्चिन्तितोऽयं मनोरथः ।
यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान् वरमीप्सितं ॥ ४ ॥
यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलं ।
तद्गतं नो महाबाहो दिष्ट्या विष्णुकृतं भयं ॥ ५ ॥
असकृत् तेन भग्ना हि परित्यज्य स्वमालयं ।
विद्रुताः सहिताः सर्वे प्रविष्टाः स्मो रसातलं ॥ ६ ॥
अस्मदीया च लङ्केयं नगरी राक्षसोषिता ।
निवेशिता तव भ्रात्रा धनाध्यक्षेण धीमता ॥ ७ ॥
यदि नामात्र शक्यं स्यात् साम्ना दानेन चानघ ।
तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥ ८ ॥
त्वं तु लङ्केश्वरस्तात भविष्यसि न संशयः ।
सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल ॥ ९ ॥

# उत्तरकाण्डं

अथाब्रवीद्दशग्रीवो मातामहमुपस्थितं ।
वित्तेशो गुरुरस्माकं नार्हस्येवं प्रभाषितुं ॥ १० ॥
इत्येवमुक्तः स तदा सुमाली रावणेन ह ।
नोवाच किञ्चित् तत्रैव न्यवसच्च सुहृद्वृतः ॥ ११ ॥
केनचित् त्वथ कालेन वसन्तं तत्र रावणं ।
प्रहस्तः प्रसृतं वाक्यमिदं राक्षसमब्रवीत् ॥ १२ ॥
दशग्रीव महाबाहो यत् पुरा प्रोक्तवानसि ।
वित्तेशो गुरुरस्माकमिति तच्च निबोध मे ॥ १३ ॥
ननु वीर महाबाहो नार्हस्त्वं वक्तुमीदृशं ।
सौभ्रात्रं नास्ति शूराणां शृणु भूयो वचश्च मे ॥ १४ ॥
अदितिश्च दितिश्चैव द्वे भगिन्यौ बभूवतुः ।
भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥ १५ ॥
अदित्यां जज्ञिरे देवास्तदा त्रिभुवनेश्वराः ।
दितिस्त्वजनयद्दैत्यान् कश्यपादात्मसंभवान् ॥ १६ ॥
दैत्यानां किल धर्मज्ञ पुरेयं सवनार्णवा ।
आसीत् सपर्वता भूमिस्तेऽभवन् प्रभविष्णवः ॥ १७ ॥
ततस्ते निहताः सर्वे विष्णुना प्रभविष्णुना ।
देवानां च वशं नीतं त्रैलोक्यमिदमव्ययं ॥ १८ ॥
तथा वैरमपर्यन्तं गरुडस्योरगैः सह ।
भ्रातृभिः संप्रसक्तं हि संहारो यस्य नाभवत् ॥ १९ ॥

नैतदेको भवानद्य करिष्यति विपर्ययं ।
सुरैराचरितं पूर्वं कुरुष्वैतद्वचो मम ॥ २० ॥
एवमुक्तो दशग्रीवः प्रहस्तेन दुरात्मना ।
चिन्तयित्वा मुहूर्त्तं वै बाढमित्येव सोऽब्रवीत् ॥ २१ ॥
स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् ।
लङ्कां यातो दशग्रीवः सह तैः क्षणदाचरैः ॥ २२ ॥
त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः ।
प्रेषयामास दौत्येन प्रहस्तं वाक्यकोविदं ॥ २३ ॥
प्रहस्त शीघ्रं गच्छ त्वं ब्रूहि राक्षसपुङ्गव ।
वचनान्मम वित्तेशं सामपूर्वमिदं वचः ॥ २४ ॥
इयं लङ्का पुरी नाम राक्षसानां महात्मनां ।
निवासो देव विहितः सर्वलोकपरिश्रुतः ॥ २५ ॥
किञ्चित् कारणमुद्दिश्य त्यक्तासीद्राक्षसैरियं ।
ते पुनः कालसमये स्वं निवासमुपागताः ॥ २६ ॥
त्वया निवेशिता चेयं तत् ते न सदृशं कृतं ।
तद्भवान् यदि नामैतां दद्यादतुलविक्रमः ॥ २७ ॥
कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः ।
इत्युक्तः स तदा गत्वा प्रहस्तो वाक्यकोविदः ॥ २८ ॥
दशग्रीववचः सर्वं वित्तेशाय न्यवेदयत् ।
प्रहस्तादभिसंश्रुत्य सर्वं वैश्रवणो वचः ॥ २९ ॥

उवाच वाक्यं वाक्यज्ञः प्रहस्तं स निशाचरं ।
सर्वं कर्त्तास्मि भद्रं ते राक्षसेशवचोऽचिरात् ॥ ३० ॥
किं तु तावत् प्रतीक्षस्व पितुर्यावन्निवेदये ।
एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकं ॥ ३१ ॥
अभिवाद्याब्रवीत् तं च रावणस्य यदीप्सितं ।
एष तात दशग्रीवो दूतं प्रेषितवान् मम ॥ ३२ ॥
ममेयं दीयतां लङ्का पूर्वं रक्षोगणोषिता ।
तन्मया यदनुष्ठेयं तदाचक्ष्व ममानघ ॥ ३३ ॥
धनदेनैवमुक्तस्तु विश्रवा मुनिपुङ्गवः ।
सोऽब्रवीद्वचनं तत्र शृणु पुत्र वचो मम ॥ ३४ ॥
दशग्रीवो ममाप्येतदुक्तवान् मुनिसंनिधौ ।
मया निर्भर्त्सितश्चापि बहु चोक्तः स दुर्मतिः ॥ ३५ ॥
सक्रोधेन पुनश्चोक्तो ध्वंस ध्वंसेति वै पुनः ।
तच्छृणु त्वं वचः पुत्र मम धर्मार्थसंयुतं ॥ ३६ ॥
वरप्रदानात् संमूढो मान्यामान्यं न वेत्ति सः ।
न बिभेति च मे शापात् प्रकृतिं दारुणां गतः ॥ ३७ ॥
तस्मात् प्रयाहि भद्रं ते कैलासं धरणीधरं ।
निवेशय निकेतार्थं त्यज लङ्कां सहानुगः ॥ ३८ ॥
तत्र मन्दाकिनी नाम नदीनां प्रवरा नदी ।
काञ्चनैः सूर्यसंकाशैः पङ्कजैर्मण्डितोदका ॥ ३९ ॥

तत्र देवाः सगन्धर्वाः साप्सरोगणकिन्नराः ।
विहारशीलाः सततं रमन्ते धरणीधरे ॥ ४० ॥
रमस्व पुत्र त्वमपि रम्ये तस्मिन् शिलोच्चये ।
न हि क्षमं तवानेन वैरं धनद रक्षसा ॥ ४१ ॥
जानीषे च यथा तेन लब्धः परमको वरः ।
तथेत्युक्त्वा स पितरमभिवाद्य धनेश्वरः ॥ ४२ ॥
ययौ लङ्कां पुनस्तूर्णं प्रहस्तं चेदमब्रवीत् ।
ब्रूहि गच्छ दशग्रीवं पुरीं राज्यं च यन्मम ॥ ४३ ॥
तवाप्येतन्महाबाहो भुङ्क्ष्व चैतदकण्टकं ।
अविभक्तं त्वया सार्धं राज्यं यच्चास्ति मे वसु ॥ ४४ ॥
अहं गच्छामि कैलासं निवासाय महागिरिं ।
लङ्कामावस भद्रं ते स्वधर्मं तत्र पालय ॥ ४५ ॥
एवमुक्त्वा धनाध्यक्षो बलेन महता वृतः ।
सपौरदारः सामात्यः सवाहनधनो गतः ॥ ४६ ॥
प्रहस्तोऽथ दशग्रीवं गत्वा वचनमब्रवीत् ।
प्रहृष्टात्मा महात्मानं सहामात्यं सहानुजं ॥ ४७ ॥
शून्या सा नगरी लङ्का त्यक्त्वैनां धनदो गतः ।
प्रविश त्वं महाबाहो स्वधर्मं तत्र पालय ॥ ४८ ॥
एवमुक्तः प्रहस्तेन दशग्रीवो निशाचरः ।
निवेशयामास पुरीं सभ्राता सबलानुगः ।

धनदेन परित्यक्तां सुविभक्तमहापथां ॥ ४९ ॥

स चाभिषिक्तः क्षणदाचरैस्तदा
निवेशयामास पुरीं दशाननः ।
निकामपूर्णा च बभूव सा पुरी
निशाचरैर्नीलबलाहकोपमैः ॥ ५० ॥

धनेश्वरोऽप्यथ पितृवाक्यगौरवात्
न्यवेशयच्छशिविमले गिरौ पुरीं ।
स्वलङ्कृतैर्भवनवरैर्विभूषितां
पुरन्दरः स्वपुरमिवामरावतीं ॥ ५१ ॥

इत्युत्तरकाण्डे लङ्काध्यासो नाम एकादशः सर्गः ॥

# उत्तरकाण्डं

## XII.

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभिः सहितस्तदा ।
ततः प्रदानं राक्षस्या भगिन्याः सोऽभ्यरोचयत् ॥ १ ॥
स्वसारं कालकेयाय दानवेन्द्राय राक्षसीं ।
ददौ सूर्पणखां राजा विद्युज्जिह्वाय नामतः ॥ २ ॥
अथ दत्वा स्वसारं तां मृगयां पर्यटन् नृपः ।
अपश्यत् स वने राम मयं नाम दितेः सुतं ॥ ३ ॥
कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः ।
अपृच्छत् को भवानत्र निर्मनुष्यमृगे वने ॥ ४ ॥
मयस्त्वथाब्रवीद्राम पृच्छन्तं तं निशाचरं ।
श्रूयतां सर्वमाख्यास्ये यथावृत्तमिदं मम ॥ ५ ॥
हेमा नामाप्सराः सुभ्रूः श्रुतपूर्वा यदि त्वया ।
दैवैर्मह्यमसौ दत्ता पौलोमीव विडौजसे ॥ ६ ॥
तस्यां सक्तमनाश्चासं दश वर्षशतान्यहं ।
सा च दैवतकार्येण गता वर्षत्रयोदशे ॥ ७ ॥
तस्याः कृते च हेमाया हैमाः प्रासादपङ्क्तयः ।
वज्रवैदूर्यवर्णाश्च निर्मिता मायया मया ॥ ८ ॥
तत्राहं न रतिं विन्दंस्तया हीनः सुदुःखितः ।
भवनात् स्वां दुहितरं गृहीत्वा वनमागतः ॥ ९ ॥

इयं ममात्मजा राजंस्तस्याः कुक्षिसमुद्भवा ।
भर्तारमस्याः सदृशं प्राप्तवानस्मि मार्गितुं ॥ १० ॥
कन्यापितृत्वं दुःखं हि नराणां मानकाङ्क्षिणां ।
द्वे कुले संशये कृत्वा नित्यं कन्या हि तिष्ठति ॥ ११ ॥
पुत्रद्वयं ममाप्यस्यां भार्यायां संबभूव ह ।
मायावी प्रथमस्तत्र दुन्दुभिस्तदनन्तरं ॥ १२ ॥
एतत् ते सर्वमाख्यातं याथातथ्येन पृच्छतः ।
त्वामिदानीं कथं तात जानीयां को भवानिति ॥ १३ ॥
एवमुक्तो राक्षसेन्द्रो विनीतमिदमब्रवीत् ।
अहं पौलस्त्यतनयो दशग्रीवश्च नामतः ॥ १४ ॥
राजा राक्षसमुख्यानां मृगयामस्मि निर्गतः ।
एवमुक्तस्तदा राम राक्षसेन्द्रेण दानवः ॥ १५ ॥
ब्रह्मर्षेस्तं सुतं ज्ञात्वा मयो दैत्याधिपस्ततः ।
प्रदानं दुहितुस्तस्मै रोचयामास वै तदा ॥ १६ ॥
करेणादाय कन्यां स मयस्तममितौजसं ।
प्रहसन्निव दैत्येन्द्रो राक्षसेन्द्रमभाषत ॥ १७ ॥
इयं ममात्मजा राजन् हेमायाः पयसा भृता ।
कन्या मन्दोदरी नाम भार्यार्थे प्रतिगृह्यतां ॥ १८ ॥
वाढमित्येव तं राम दशग्रीवोऽब्रवीद्वचः ।
प्रज्वाल्य च वने वह्निं पाणिं जग्राह धर्मतः ॥ १९ ॥

न हि तस्य भयो राजन् शापं जानाति दुर्मतिः ।
विदित्वा तस्य सा दत्ता तेन पैतामहं कुलं ॥ २० ॥
अमोघां तस्य शक्तिं च प्रददौ परमाद्भुतां ।
परेण तपसा लब्धां जघ्निवान् लक्ष्मणं यया ॥ २१ ॥
एवं स कृतदारो हि लब्धा पत्नीं मयात् तदा ।
गत्वा स्वां नगरीं भार्ये भ्रातृभ्यामुदवाहयत् ॥ २२ ॥
वैरोचनस्य दौहित्री विद्युज्ज्वालेति विश्रुता ।
तां भार्यां कुम्भकर्णस्य दशग्रीवो व्यवाहयत् ॥ २३ ॥
गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः ।
सरमां नाम धर्मज्ञो लेभे भार्यां विभीषणः ॥ २४ ॥
तीरे वै सरसः सा हि मानसस्य व्यजायत ।
मानसं च सरस्तद्धि ववृधे जलदागमे ॥ २५ ॥
मात्रा तस्यास्तु कन्यायाः पुरा स्नेहात् तया वचः ।
उक्तं सरो मा वर्धेति ततः सा सरमाभवत् ॥ २६ ॥
एवं ते कृतदारा वै रेमिरे तत्र राक्षसाः ।
स्वां स्वां भार्यामुपादाय गन्धर्वा इव कानने ॥ २७ ॥
ततो मन्दोदरी पुत्रं मेघनादमजीजनत् ।
य एष राम युष्माभिरिन्द्रजित् समभिश्रुतः ॥ २८ ॥
जातमात्रेण हि पुरा तेन राक्षससूनुना ।
रुदता संप्रमुक्तोऽभून्नादो जलभृतां यथा ॥ २९ ॥

सर्वा सा नगरी तेन सशैलवनकानना ।
जडीकृताभून्नदता साट्टालगृहगोपुरा ॥ ३० ॥
जडीकृतायां लङ्कायां तेन नादेन तस्य वै ।
पिता तस्याकरोन्नाम मेघनाद इति प्रभो ॥ ३१ ॥
सोऽवर्धत तदा राम रावणान्तःपुरे शिशुः ।
रक्ष्यमाणः प्रयत्नेन छन्नः काष्ठैरिवानलः ॥ ३२ ॥

इत्युत्तरकाण्डे इन्द्रजिज्जन्म नाम
द्वादशः सर्गः ॥

# उत्तरकाण्डं

## XIII.

अथ लोकेश्वरोत्सृष्टा तत्र कालेन केनचित् ।
निद्रा समभवत् तीव्रा कुम्भकर्णस्य रूपिणी ॥ १ ॥
ततो भ्रातरमासीनं कुम्भकर्णोऽब्रवीदिदं ।
निद्रा मां बाधते राजन् कारयस्व ममालयं ॥ २ ॥
विनियुक्तास्ततो राज्ञा शिल्पिनो विश्वकर्मवत् ।
अकुर्वन् कुम्भकर्णस्य कैलासाकारमालयं ॥ ३ ॥
द्विकिष्कुशतविस्तीर्णं ततः षड्गुणमायतं ।
शयनीयं गुहाकारं कुम्भकर्णस्य चक्रिरे ॥ ४ ॥
काञ्चनैः स्फाटिकैश्चैव स्तम्भैः सर्वत्र शोभितं ।
वैदूर्यकृतसोपानं किङ्किणीजालशोभितं ॥ ५ ॥
दान्ततोरणविन्यस्तं वज्रग्रथितवेदिकं ।
सर्वर्तुसुखदं नित्यं मेरोः प्राग्र्यां गुहामिव ॥ ६ ॥
तत्र निद्रासमाक्रान्तः कुम्भकर्णो निशाचरः ।
बहून्यब्दसहस्राणि प्रसुप्तो न विबुध्यते ॥ ७ ॥
निद्राभिभूते तु तदा कुम्भकर्णे दशाननः ।
देवर्षियक्षगन्धर्वानबाधत निशाचरः ॥ ८ ॥
उद्यानानि विचित्राणि नन्दनानि च यानि च ।
तानि गत्वा सुसंक्रुद्धो भिनत्ति स्म दशाननः ॥ ९ ॥

नदीर्गज इवाक्रीडन् वृक्षान् वायुरिवाक्षिपन् ।
अद्रीन् वज्र इवाक्षिप्तो व्यध्वंसयत नित्यशः ॥ १० ॥
तथावृत्तं तु विज्ञाय दशग्रीवं धनेश्वरः ।
कुलानुरूपं धर्मज्ञो वृत्तमन्वीक्ष्य चात्मनः ॥ ११ ॥
सौभ्रात्रं दर्शयंश्चैव दूतं वैश्रवणो नृपः ।
लङ्कां संप्रेषयामास दशग्रीवहिताय वै ॥ १२ ॥
स गत्वा नगरीं लङ्कामाससाद विभीषणं ।
मानितस्तेन धर्मेण पृष्टश्चागमनं प्रति ॥ १३ ॥
स पृष्ट्वा कुशलं राज्ञो ज्ञातीनां चैव सर्वशः ।
सभायां दर्शयामास तस्यासीनं दशाननं ॥ १४ ॥
स दृष्ट्वा तत्र राजानं दीप्यमानमिव श्रिया ।
जयेन चाभिनन्द्यैनं तूष्णीमासीन्मुहूर्त्तकं ॥ १५ ॥
तस्योपनीतः पर्यङ्कः स्वास्तीर्णो रावणादनु ।
तत्रोपविश्य राजानं दूतो वचनमब्रवीत् ॥ १६ ॥
राजन् वक्ष्यामि ते सर्वं भ्रातृसंदेशमर्पितं ।
उभयोः सदृशं सम्यग्वृत्तस्य च कुलस्य च ॥ १७ ॥
साधु पर्याप्तमेतावत् कृतं चामित्रकर्षणं ।
साधु धर्मे व्यवस्थानं क्रियतां यदि शक्यते ॥ १८ ॥
दृष्टं मे नन्दनं भग्नं ऋषयो निहताः श्रुताः ।
देवतानां समुद्वेगस्त्वत्तो राजन् श्रुतश्च मे ॥ १९ ॥

निवारितस्त्वं भूयो हि मया भूयो निवार्यसे ।
अपराधाच्च बालत्वाद्रक्षणीयो हि बान्धवः ॥ २० ॥
अहं हि हिमवत्पृष्ठं गतो धर्ममुपासितुं ।
रौद्रं व्रतमुपास्थाय नियमेनोषितं मया ॥ २१ ॥
तत्र देवो मया रुद्रो दृष्टो देव्या सह प्रभुः ।
सव्यं चक्षुर्मया चैव तत्र देव्यां निपातितं ॥ २२ ॥
केयं विति महाराज न खल्वन्येन हेतुना ।
रूपं ह्यनुपमं कृत्वा तत्राक्रीडत पार्वती ॥ २३ ॥
तच्च देव्याः प्रभावेण दग्धं सव्यं ममेक्षणं ।
रेणुध्वस्तमिव ज्योतिः पिङ्गलत्वमुपागतं ॥ २४ ॥
ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटं ।
अष्टौ वर्षशतान्युग्रं तप्तवान् सुमहत् तपः ॥ २५ ॥
समाप्ते नियमे तस्मिंस्तदा देवो महेश्वरः ।
प्रीतः प्रीतेन मनसा वाक्यमेतदुवाच ह ॥ २६ ॥
प्रीतोऽहमस्मि धर्मज्ञ यदेतत् ते तपः कृतं ।
मया चैतद्व्रतं चीर्णं त्वया चानुपमं महत् ॥ २७ ॥
तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशं ।
व्रतं सुदुश्चरं हीदं मयैवोत्पादितं पुरा ॥ २८ ॥
सखित्वं तन्मया सार्धं रोचयस्व धनेश्वर ।
तपसा निर्जितत्वाद्धि सखा मम भवान् मतः ॥ २९ ॥

देव्या दग्धं प्रभावाच्च तव यत् सव्यमीक्षणं ।
एकपिङ्गेक्षण इति नाम ते स्थास्यति ध्रुवं ॥ ३० ॥
गत्वा एवं सखित्वं हि रुद्रेण सह धीमता ।
आगतेन मयैतच्च श्रुतं ते पापचेष्टितं ॥ ३१ ॥
तदधर्मिष्ठसंयोगाद्विनिवर्तस्व किल्बिषात् ।
चिन्त्यते हि बधोपायः सर्षिसंघैः सुरैस्तव ॥ ३२ ॥
एवमुक्तो राक्षसेन्द्रः क्रुद्धः संरक्तलोचनः ।
हस्तान् दन्तांश्च संपीड्य वाक्यमेतदुवाच ह ॥ ३३ ॥
विज्ञातं ते मया वाक्यं दूत यत् त्वं प्रभाषसे ।
नैव त्वमपि नैवासौ येन त्वं प्रहितो मम ॥ ३४ ॥
हितमेतन्न मे वाक्यमुक्तवान् धनरक्षिता ।
महेश्वरसखित्वं हि मां श्रावयति विस्मितः ॥ ३५ ॥
यच्च दूत मया काल एतावांस्तस्य मर्षितः ।
भ्राता किल गुरुर्ज्येष्ठो ममायमिति जानता । ३६ ॥
तस्य त्विदानीं वाक्येन वरोन्मत्तस्य रोषितः ।
त्रीन् लोकानपि जेष्यामि बाहुवीर्यसमाश्रितः ॥ ३७ ॥
तस्मिन् मुहूर्त्त एकस्य कृते तस्याहमेष वै ।
चतुरो लोकपालांस्तान् नयामि यमसादनं ॥ ३८ ॥
छित्वा स रोषताम्राक्षो दूत खड्गेन राक्षसः ।
ददौ भक्षयितुं तत्र राक्षसेभ्यो निशाचरः ॥ ३९ ॥

तत उत्थाय संक्रुद्धो मन्त्रिणस्तान् समागतान् ।
आज्ञापयामास तदा निर्यातेति निशाचरः ॥४०॥
ततः कृतस्वस्त्ययनो रथमारुह्य रावणः ।
त्रैलोक्यविजयाकाङ्क्षी ययौ यत्र धनेश्वरः ॥४१॥

इत्युत्तरकाण्डे धनदं प्रति यात्रा नाम
त्रयोदशः सर्गः ॥

# उत्तरकाण्डं

## XIV.

ततः स सचिवैः सार्धं षड्भिः क्रूरैर्बलोत्कटैः ।
महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ॥ १ ॥
धूम्राक्षेण च वीरेण नित्यं समरसेविना ।
वृतः संप्रययौ धीमान् क्रोधाल्लोकान् दहन्निव ॥ २ ॥
स पुराणि नदीः शैलान् वनान्युपवनानि च ।
अतिक्रम्य मुहूर्तेन कैलासं गिरिमागमत् ॥ ३ ॥
संनिविष्टं गिरौ तस्मिन् राक्षसेन्द्रं निशम्य तु ।
युद्धेऽत्यर्थं कृतोत्साहं दुरात्मानं समन्त्रिणं ॥ ४ ॥
यक्षा न शेकुः संस्थातुं प्रमुखे तस्य रक्षसः ।
राज्ञो भ्रातेति विज्ञाय गता यत्र धनेश्वरः ॥ ५ ॥
ते गत्वा सर्वमाख्याय भ्रातुस्तस्य चिकीर्षितं ।
अनुज्ञाता ययुर्हृष्टा युद्धाय धनदेन ते ॥ ६ ॥
ततो बलानां संक्षोभो ववृधे तोयधेरिव ।
तस्य नैर्ऋतराजस्य शैलं संचालयन्निव ॥ ७ ॥
ततो युद्धं समभवद्यक्षराक्षससंकुलं ।
व्यथिताश्चाभवंस्तत्र सचिवा राक्षसस्य ते ॥ ८ ॥
स दृष्ट्वा तादृशं सैन्यं दशग्रीवो निशाचरः ।
हर्षान्नादान् बहून् कृत्वा स क्रोधादभ्यधावत ॥ ९ ॥

ये तु ते राक्षसेन्द्रस्य सचिवा घोरविक्रमाः ।
तेषां सहस्रमेकैको यक्षाणां समयोधयत् ॥ १० ॥
ततो गदाभिर्मुसलैरसिभिः शक्तितोमरैः ।
बध्यमानो दशग्रीवस्तत् सैन्यं समगाहत ॥ ११ ॥
निरुच्छ्वासोऽभवत् तत्र व्यथमानो दशाननः ।
वर्षद्भिरिव जीमूतैः स निरुद्धो महाबलः ॥ १२ ॥
न चकार व्यथां चैव यक्षशस्त्रैः समाहतः ।
महीधर इवाम्भोदैर्धाराशतसमुक्षितः ॥ १३ ॥
स महात्मा समुद्यम्य कालदण्डोपमां गदां ।
प्रविवेश ततः सैन्यं नयन् यक्षान् यमक्षयं ॥ १४ ॥
स कक्षमिव विस्तीर्णं शुष्केन्धनसमाकुलं ।
वातेनाग्निरिवादीप्तो यक्षसैन्यं ददाह तत् ॥ १५ ॥
तैस्तु तत्र महामात्यैर्महोदरशुकादिभिः ।
अल्पावशेषास्ते यक्षा हता वातैरिवाम्बुदाः ॥ १६ ॥
केचित् समागमे भग्नाः पतिताः समरे क्षितौ ।
ओष्ठान् स्वदशनैस्तीक्ष्णैरदशन् कुपिता रणे ॥ १७ ॥
श्रान्तास्त्वन्योन्यमालोक्य भ्रष्टशस्त्रा रणाजिरे ।
सीदन्ति स्म तत्र यक्षाः कूलानीव जलेन ह ॥ १८ ॥
हतानां गच्छतां स्वर्गं युध्यतामथ धावतां ।
पश्यतामृषिसंघानां बभूव हि तदद्भुतं ॥ १९ ॥

भग्नांस्तु तान् समालक्ष्य यक्षेन्द्रान् सुमहाबलान् ।
धनाध्यक्षो महाबाहुः प्रेषयामास नायकान् ॥ २० ॥
एतस्मिन्नन्तरे राम विस्तीर्णबलवाहनः ।
प्रेषितोऽभ्यापतद्यक्षो नाम्ना यो गण्डविल्वकः ॥ २१ ॥
तेन चक्रेण मारीचो विष्णुनेव रणे हतः ।
पतितः पृथिवीपृष्ठे क्षीणपुण्य इव ग्रहः ॥ २२ ॥
ससंज्ञस्तु मुहूर्तेन स विश्रम्य निशाचरः ।
तं यक्षं योधयामास स च भग्नः प्रदुद्रुवे ॥ २३ ॥
ततः काञ्चनचित्राङ्गं वैदूर्यरजतोक्षितं ।
मर्यादां प्रतिहाराणां तोरणं स समाविशत् ॥ २४ ॥
ततो राजन् दशग्रीवं प्रविशन्तं निशाचरं ।
सूर्यभानुरिति ख्यातो द्वारपालो न्यवारयत् ॥ २५ ॥
स वार्यमाणो यक्षेण प्रविवेश निशाचरः ।
यदा तु वारितो राम न व्यतिष्ठत् स राक्षसः ॥ २६ ॥
ततस्तोरणमुत्पाट्य तेन यक्षेण ताडितः ।
रुधिरं स स्रवन् भाति शैलो धातुस्रवैरिव ॥ २७ ॥
स शैलशिखराभेन तोरणेन समाहतः ।
जगाम न क्षितिं वीरो वरदानात् स्वयम्भुवः ॥ २८ ॥
तेनैव तोरणेनाथ यक्षस्तेनाभिताडितः ।
नादृश्यत तदा यक्षो भस्मीभूततनुस्तदा ॥ २९ ॥

ततः प्रदुद्रुवुः सर्वे दृष्ट्वा यक्षाः पराक्रमं ।
नभो नदीर्गुहाश्चैव विविशुर्भयपीडिताः ।
त्यक्तप्रहरणाः श्रान्ता विवर्णवदनास्तथा ॥ ३० ॥

इत्युत्तरकाण्डे कैलासयुद्धं नाम
चतुर्दशः सर्गः ॥

# उत्तरकाण्डं

## XV.

तान् समालक्ष्य वित्रस्तान् यक्षेन्द्रान् शतसंघशः ।
धनाध्यक्षो महायक्षं माणिभद्रमथाब्रवीत् ॥ १ ॥
रावणं जहि यक्षेन्द्र दुर्वृत्तं पापचेतसं ।
शरणं भव वीराणां यक्षाणां युद्धशालिनां ॥ २ ॥
एवमुक्तो महाबाहुर्माणिभद्रः सुदुर्जयः ।
वृतो यक्षसहस्रैः स चतुर्भिः समयोधयत् ॥ ३ ॥
ते गदामुषलप्रासैः शक्तितोमरमुद्गरैः ।
अभिघ्नन्तस्तदा यक्षा राक्षसान् समुपाद्रवन् ॥ ४ ॥
कुर्वन्तस्तुमुलं युद्धं चरन्तः श्येनवल्लघु ।
बाढं प्रयच्छ नेच्छामि दीयतामिति भाषिणः ॥ ५ ॥
ततो देवाः सगन्धर्वा ऋषयो ब्रह्मवादिनः ।
दृष्ट्वा तत् तुमुलं युद्धं परं विस्मयमागमन् ॥ ६ ॥
यक्षाणां तु प्रहस्तेन सहस्रं निहतं रणे ।
महोदरेण गदया सहस्रमपरं हतं ॥ ७ ॥
धूम्राक्षेण च क्रुद्धेन यक्षाणां समरे युधि ।
क्रुद्धेन च तदा राजन् मारीचेन युयुत्सता ॥ ८ ॥
निमेषान्तरमात्रेण द्वे सहस्रे निपातिते ।
क्व चार्जवं यक्षयुद्धं क्व च मायाबलाश्रयं ॥ ९ ॥

राक्षसाः पुरुषव्याघ्र तेन तेऽभ्यधिका युधि ।
धूम्राक्षेण समागम्य माणिभद्रो महारणे ॥ १० ॥
मुसलेनोरसि क्रोधात् ताडितो न चकम्प ह ।
ततो गदां समाविध्य माणिभद्रेण राक्षसः ॥ ११ ॥
धूम्राक्षस्ताडितो मूर्ध्नि विह्वलः स पपात ह ।
धूम्राक्षं ताडितं दृष्ट्वा पतितं शोणितोक्षितं ॥ १२ ॥
अभ्यधावत संग्रामे माणिभद्रं दशाननः ।
तं क्रुद्धमभिधावन्तं माणिभद्रो दशाननं ॥ १३ ॥
शक्तिभिस्ताडयामास तिसृभिर्यक्षपुङ्गवः ।
सोऽपि राक्षसराजेन ताडितो गदया रणे ॥ १४ ॥
तस्य तेन प्रहारेण मुकुटः पार्श्वमागमत् ।
ततः प्रभृति यक्षोऽसौ पार्श्वमौलिरभूत् किल ॥ १५ ॥
तस्मिंस्तु विमुखीभूते माणिभद्रे महात्मनि ।
संनादः सुमहान् राजंस्तस्मिन् शैले व्यवर्धत ॥ १६ ॥
ततो दूरात् स ददृशे धनाध्यक्षो गदाधरः ।
शुक्रप्रोष्ठपदाभ्यां च पद्मशङ्खसमावृतः ॥ १७ ॥
स दृष्ट्वा भ्रातरं संख्ये पापाद्विभ्रष्टगौरवं ।
उवाच वचनं धीमान् युक्तं पैतामहे कुले ॥ १८ ॥
यन्मया वार्यमाणस्त्वं नावगच्छसि दुर्मते ।
पश्चादस्य फलं प्राप्य ज्ञास्यसे निरयं गतः ॥ १९ ॥

यो हि मोहाद्विषं पीत्वा नावगच्छति दुर्मतिः ।
स तस्य परिणामान्ते जानीते कर्मणः फलं ॥ २० ॥
दैवतानि न नन्दन्ति धर्मयुक्तेन केनचित् ।
येन त्वमीदृशं भावं नीतस्तच्च न बुध्यसे ॥ २१ ॥
मातरं पितरं विप्रमाचार्यं योऽवमन्यते ।
स पश्यति फलं तस्य प्रेतराजवशं गतः ॥ २२ ॥
अध्रुवे हि शरीरे यो न करोति तपोऽर्जनं ।
स पश्चात् तप्यते मूढो मृतो गत्वात्मनो गतिं ॥ २३ ॥
कस्यचिन्न हि दुर्बुद्धे छन्दतः क्षीयते मतिः ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ २४ ॥
बुद्धिं रूपं बलं पुत्रान् शौर्यं शौटीर्यमेव च ।
प्राप्नुवन्ति नरा लोके निर्जितं पुण्यकर्मभिः ॥ २५ ॥
एवं निरयगामी त्वं यस्य ते मतिरीदृशी ।
न त्वां समभिभाषिष्ये सद्वृत्तेष्वेष निर्णयः ॥ २६ ॥
दृष्ट्वाथ धनदं राम राक्षसाः सुमहाबलाः ।
मारीचप्रमुखाः सर्वे विमुखा विप्रदुद्रुवुः ॥ २७ ॥
ततस्तेन दशग्रीवो यक्षेन्द्रेण महात्मना ।
गदयाभिहतो मूर्ध्नि नास्थाभूच्चास्य रक्षसः ॥ २८ ॥
ततस्तौ राम निघ्नन्तौ तदान्योन्यं महामृधे ।
न व्यह्वलेतां न श्रान्तौ तावुभौ यक्षराक्षसौ ॥ २९ ॥

आग्नेयमस्त्रं तस्मै च मुमोच धनदस्तदा ।
राक्षसेन्द्रो रावणोऽसौ तदस्त्रं पर्यवारयत् ॥ ३० ॥
ततो मायां प्रविष्टोऽसौ राक्षसो राक्षसीं तदा ।
रूपाणां शतसाहस्रं स चकार ननाद च ॥ ३१ ॥
व्याघ्रो वराहो जीमूतः पर्वतः सागरो द्रुमः ।
यक्षैर्दैत्यस्वरूपी च सोऽदृश्यत दशाननः ॥ ३२ ॥
प्रतिगृह्य ततो राम महदस्त्रं दशाननः ।
जघान मूर्ध्नि धनदं व्याविध्य महतीं गदां ॥ ३३ ॥
एवं स तेनाभिहतो विह्वलः शोणितोक्षितः ।
कृत्तमूल इवाशोको निपपात धनाधिपः ॥ ३४ ॥
ततः पद्मादिभिस्तत्र निधिभिः स तदावृतः ।
आश्वासितो धनपतिर्वनमानीय नन्दनं ॥ ३५ ॥
निर्जित्य राक्षसेन्द्रस्तु धनदं हृष्टमानसः ।
पुष्पकं तस्य जग्राह विमानं जयलक्षणं ॥ ३६ ॥
काञ्चनस्तम्भसंवीतं वैडूर्यमणितोरणं ।
मुक्ताजालप्रतिच्छन्नं सर्वकामफलप्रदं ॥ ३७ ॥
मनोजवं कामगमं कामरूपं विहङ्गमं ।
मणिकाञ्चनसोपानं तप्तकाञ्चनवेदिकं ॥ ३८ ॥
देवोपवाह्यमक्षुब्धं सदा दृष्टिमनः सुखं ।
बह्वाश्चर्यं भक्तिचित्रं ब्रह्मणा परिनिर्मितं ॥ ३९ ॥

निर्मितं सर्वकामैस्तु मनोरममनुत्तमं ।
न च शीतं न चैवोष्णं सर्वर्तुसुखदं शुभं ॥४०॥
स तं राजा समारुह्य कामगं वीर्यनिर्जितं ।
जितं त्रिभुवनं मेने दर्पोत्सेकात् सुदुर्मतिः ।
जित्वा वैश्रवणं देवं कैलासात् समवातरत् ॥४१॥
स तेजसा विपुलमवाप्य तं जयं
प्रतापवान् विमलकिरीतवर्मभृत् ।
रराज वै परमविमानमास्थितो
निशाचरः सदसि गतो यथानलः ॥४२॥

इत्युत्तरकाण्डे वैश्रवणविजयो नाम
पञ्चदशः सर्गः ॥

# उत्तरकाण्डं

## XVI.

तं जित्वा भ्रातरं राम धनदं राक्षसाधिपः ।
महासेनप्रसूतिं स ययौ शरवणं ततः ॥ १ ॥
अथापश्यद्दशग्रीवो रौक्मं शरवणं महत् ।
गभस्तिजालसंवीतं द्वितीयमिव भास्करं ॥ २ ॥
स पर्वतं समासाद्य किञ्चिद्रौक्मवनात् तदा ।
अपश्यत् पुष्पकं राम तत्र विष्टम्भितं स्थितं ॥ ३ ॥
विष्टब्धं पुष्पकं दृष्ट्वा कामगं ह्यगमं कृतं ।
अचिन्तद्राक्षसेन्द्रस्तु सचिवैस्तैः समावृतः ॥ ४ ॥
किमिदं यन्निमित्तं तु नेदं गच्छति पुष्पकं ।
पर्वतस्योपरिष्टाच्च कस्येदं कर्म वै भवेत् ॥ ५ ॥
तमब्रवीन् ततो राम मारीचो बुद्धिसत्तमः ।
नैतन्निष्कारणं राजन् विमानं यन्न गच्छति ॥ ६ ॥
इदं हि पुष्पकं नाम धनदान्नान्यवाहि वै ।
तेनेदं विष्ठितं व्योम्नि नान्यदस्तीह कारणं ॥ ७ ॥
एवं मन्त्रयतां तेषां राक्षसानां नराधिप ।
ततः पार्श्वमुपागम्य भवस्यानुचरस्तदा ॥ ८ ॥
दशाननमुवाचेदं राक्षसेन्द्रमशङ्कितः ।
निवर्तस्व दशग्रीव शैले क्रीडति शङ्करः ॥ ९ ॥

सर्वेषां तेन भूतानां दुर्गमः पर्वतः कृतः ।
सुपर्णनागयक्षाणां दैत्यदानवरक्षसां ॥ १० ॥
तन्निवर्तस्व दुर्बुद्धे मा विनाशमवाप्स्यसि ।
स रोषताम्रनयनस्त्ववरुह्याथ पुष्पकात् ॥ ११ ॥
कोऽयं शङ्कर इत्युक्त्वा शैलमूलमुपागमत् ।
नन्दिनं स तदापश्यदविदूरे स्थितं प्रभुं ॥ १२ ॥
शूलं दीप्तमवष्टभ्य द्वितीयमिव शङ्करं ।
दृष्ट्वा तं वानरमुखमवज्ञाय स राक्षसः ॥ १३ ॥
प्रहासं मुमुचे तत्र सतोय इव तोयदः ।
स क्रुद्धो भगवान् नन्दी शङ्करस्यापरा तनुः ॥ १४ ॥
अब्रवीद्राक्षसेन्द्रं च दशग्रीवमुपस्थितं ।
यस्माद्वानरमूर्त्तिं मां दृष्ट्वा राक्षसदुर्मते ॥ १५ ॥
मोहादिह न जानीषे प्रहासं चैव मुञ्चसि ।
तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः ॥ १६ ॥
उत्पत्स्यन्ते बधार्थं ते कुलस्य भुवि वानराः ।
नखदंष्ट्रायुधाः शूरा मनःपवनरंहसः ॥ १७ ॥
युद्धोन्मत्ता बलोदग्राः शैला इव विसर्पिणः ।
ते राक्षसबलं दर्पमुत्सेधं च पृथग्विधं ॥ १८ ॥
व्यपनेष्यन्ति संभूय सहामात्यसुतस्य ते ।
किं त्विदानीं मया शक्यं कर्तुं यन्न मया भवान् ॥ १९ ॥

कृतवान्स कृत एव त्वं पूर्वमेव स्वकर्मभिः ।
अचिन्तयित्वा स तदा नन्दिवाक्यं महामनाः ॥ २० ॥
तच्छापाग्निना निर्दग्धो वाक्यमेतदुवाच ह ।
पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः ॥ २१ ॥
करिष्याम्यहमप्यस्य प्रतिकारं सुदारुणं ।
तदेष शैलमुन्मूलं करोमि तव गोपते ॥ २२ ॥
केन प्रभावेण भवान् क्रीडत्यत्र स लीलया ।
आपीड्येतां ततस्तस्य शैलस्तम्भोपमौ भुजौ ॥ २३ ॥
विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः ।
रक्षसा तेन रोषाच्च भुजानामवपीडनात् ॥ २४ ॥
मुक्तो विरावः सुमहांस्त्रैलोक्यं येन कम्पितं ।
मेनिरे वज्रनिष्पेषं मर्त्या दैत्या युगक्षये ॥ २५ ॥
आसनेभ्यश्च चलिता देवाः शक्रपुरोगमाः ।
यक्षा विद्याधराः सिद्धाः किमेतदिति चाब्रुवन् ॥ २६ ॥
तोषयस्व महादेवं नीलकण्ठमुमापतिं ।
तमृते शरणं नान्यं पश्यामोऽत्र दशानन ॥ २७ ॥
स्तुतिभिः प्रणतो भूत्वा तमेव शरणं व्रज ।
कृपालुः शङ्करस्तुष्टः प्रसादं ते विधास्यति ॥ २८ ॥
एवमुक्तस्तदामात्यैस्तुष्टाव वृषभध्वजं ।
नामभिर्विविधैः स्तोत्रैः प्रणम्य स दशाननः ॥ २९ ॥

ततः प्रीतो महादेवः शैलाग्रे विष्ठितः प्रभुः ।
मुक्त्वा तस्य भुजौ राजन्नुवाचेदं दशाननं ॥३०॥
प्रीतोऽस्मि तव वीर्याच्च शौटीर्याच्च निशाचर ।
अराक्षसः स्वभावस्ते स्वर एष सुदारुणः ॥३१॥
यस्माल्लोकत्रयं त्वेतद्रावितं भयमागतं ।
तस्मात् त्वं रावणो नाम्ना ख्यातिं राजन् गमिष्यसि ॥३२॥
भवन्तं मानुषा दैत्या गन्धर्वाः सह दैवतैः ।
सर्व एवाभिधास्यन्ति रावणं लोकरावणं ॥३३॥
गच्छ पौलस्त्य विश्रब्धं पथा येन त्वमिच्छसि ।
मया त्वमभ्यनुज्ञातो राक्षसाधिप गम्यतां ॥३४॥
साक्षान्महेश्वरेणैवं कृतनामा स रावणः ।
अभिवाद्य महादेवमारोहत् पुष्पकं पुनः ॥३५॥
ततो महीतलं राम पर्यक्रामत् स रावणः ।
क्षत्रियान् सुमहाभागान् बाधमानस्ततस्ततः ॥३६॥
केचित् तेजस्विनः शूराः क्षत्रिया युद्धदुर्मदाः ।
तच्छासनमकुर्वन्तो विनेशुः सपरिच्छदाः ॥३७॥
अपरे दुर्जयं रक्षो जानन्तः प्राज्ञसंमताः ।
जिताः स्म इत्यभाषन्त राक्षसं बलदर्पितं ॥३८॥
एवं दर्पबलोत्सिक्तो रावणो लोकरावणः ।
प्रतापवान् वशीकुर्वल्लोँकांस्तु विचचार ह ॥३९॥

# उत्तरकाण्डं

## XVII.

अथ राजन् महाबाहुर्विचरन् वसुधातले ।
हिमवद्वनमालोक्य परिचक्राम रावणः ॥ १ ॥
तत्रापश्यच्च कन्यां स कृष्णाजिनजटाधरां ।
आर्षेण विधिना युक्तां दीप्यन्तीं देवतामिव ॥ २ ॥
प्रत्यक्षमिव सावित्रीं ज्वलन्तीं देवमातरं ।
प्रभामिव रवेर्दीप्तामेकां मूर्त्तिमतीमिव ॥ ३ ॥
स दृष्ट्वा रूपसंपन्नां तां कन्यां सुमहाव्रतां ।
काममोहपरीतात्मा हसन् पप्रच्छ रावणः ॥ ४ ॥
किमिदं वर्तते भीरु विरुद्धं यौवनस्य ते ।
न हि युक्ता तवैतस्य रूपस्येयं प्रतिक्रिया ॥ ५ ॥
रूपं तेऽनुपम भद्रे कामोन्मादकरं नृणां ।
न युक्तं तप आस्थातुं वृद्धानामेष निश्चयः ॥ ६ ॥
कस्यासि दुहिता भद्रे को वा भर्ता तवानघे ।
पृच्छतः शंस मे शीघ्रं को वा हेतुस्तपोऽर्जने ॥ ७ ॥
एवमुक्ता तु सा कन्या तेनानार्येण रक्षसा ।
अब्रवीद्विधिवत् कृत्वा तस्यातिथ्यं तपोधना ॥ ८ ॥
कुशध्वजो नाम पिता ब्रह्मर्षिर्मे सुधार्मिकः ।
बृहस्पतिसुतः श्रीमान् बुद्ध्या तुल्यो बृहस्पतेः ॥ ९ ॥

तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः ।
संभूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता ॥ १० ॥
ततो देवाः सगन्धर्वा यक्षराक्षसदानवाः ।
ममाभिगम्य पितरं वरणं मेऽभ्यरोचयन् ॥ ११ ॥
न च मां स पिता तेभ्यो दत्तवान् राक्षसेश्वर ।
कारणं तद्वदिष्यामि निशामय महाभुज ॥ १२ ॥
पितुस्तु मम जामाता योऽभिप्रेतः पुरा विभुः ।
श्रुतो मया यथा रक्षो विष्णुः किल सुरोत्तमः ॥ १३ ॥
शम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् ।
तेन रात्रौ प्रसुप्तो मे पिता पापेन हिंसितः ॥ १४ ॥
ततो जनित्री मम या सा शरीरं पितुर्मम ।
परिगृह्य महाभागा प्रविष्टा हव्यवाहनं ॥ १५ ॥
ततो मनोरथं श्रुत्वा पितुर्नारायणं प्रति ।
मृतं च पितरं दृष्ट्वा मिथ्याकामं महाव्रतं ॥ १६ ॥
अहं प्रेतगतस्यापि कुर्वती काङ्क्षितं पितुः ।
इति प्रतिज्ञामारुह्य धर्ममेतं समाश्रिता ॥ १७ ॥
इत्येतत् सर्वमाख्यातं तव राक्षसपुङ्गव ।
नारायणः पतिर्मेऽस्तु न चान्यो मानुषोत्तमः ॥ १८ ॥
आश्रितां चापि मां विद्धि नारायणपरायणां ।
विज्ञातस्त्वं मया राजन् पौलस्त्यकुलसंभवः ॥ १९ ॥

ज्ञानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्तते ।
सोऽब्रवीद्रावणस्तत्र तां कन्यां सुमहाव्रतां ॥ २० ॥
अवतीर्य विमानाग्रात् कन्दर्पशरपीडितः ।
अवलिप्तासि सुश्रोणि यस्यास्ते मतिरीदृशी ॥ २१ ॥
वृद्धानां मृगशावाक्षि भ्राजते पुण्यसंचयः ।
त्वं तु सर्वगुणोपेता नेदृशं कर्तुमर्हसि ॥ २२ ॥
त्रैलोक्यसुन्दरी भूत्वा यौवने वार्धकं विधिं ।
कश्च तावदसौ यस्त्वं विष्णुरित्यभिभाषसे ॥ २३ ॥
एकेनापि न तुल्योऽसौ भुजेन मम वीर्यतः ।
मामैवमिति सा कान्या तमुवाच निशाचरं ॥ २४ ॥
मूर्धजेषु च तां रक्षः करेणोपसमस्पृशत् ।
स्त्रीभावमनयच्चापि विस्फुरन्तीं बलाद् बली ॥ २५ ॥
ततो वेदवती क्रुद्धा श्वसन्ती ज्वलितानना ।
उवाचाग्निं समाधाय दहन्तीव निशाचरं ॥ २६ ॥
धर्षितायास्त्वयानार्य नेदानीं मम जीवितं ।
क्षमं तस्मात् प्रवेक्ष्यामि पश्यतस्ते हुताशनं ॥ २७ ॥
यस्मात् तु धर्षिता तेऽहमेकेत्यवमता वने ।
तस्मात् तव वधार्थाय समुत्पत्स्याम्यहं पुनः ॥ २८ ॥
न हि स्त्रिया पुमान् शक्यो हन्तुं त्वं तु विशेषतः ।
शपामि न च पाप त्वां तपसः किं व्ययेन मे ॥ २९ ॥

यदि त्वस्ति मया किंचित् कृतं दत्तं हुतं तथा ।
तेन ह्ययोनिजा साध्वी भवेयं धर्मिणः सुता ॥ ३० ॥
एवमुक्त्वा प्रविष्टा सा प्रज्वलन्तं हुताशनं ।
खात् प्रपेतुस्ततो दिव्याः समन्तात् पुष्पवृष्टयः ॥ ३१ ॥
पुनरेव हि संभूता पद्मे पद्मसमप्रभा ।
तस्मादपि पुनः प्राप्ता पर्यन्तेन च रक्षसा ॥ ३२ ॥
कन्यां पङ्कजगर्भाभां प्रगृह्य स्वगृहं ययौ ।
प्रविश्य रावणश्चैनां दर्शयामास मन्त्रिणे ॥ ३३ ॥
लक्षणज्ञो निरीक्ष्य तामिदमाह दशाननं ।
गृहस्थो नार्हति श्रोणीं त्वमेतां त्यक्तुमर्हसि ॥ ३४ ॥
एतच्छ्रुत्वार्णवे राम सोऽक्षिपद्राक्षसस्तदा ।
सा क्षितोर्मिभिरानाप्य यज्ञोपवनमन्तिके ॥ ३५ ॥
राज्ञो हलमुखग्रस्ता पुनरप्युद्धृता सती ।
सैषा जनकराजस्य प्रसूता तनया प्रभो ॥ ३६ ॥
तव भार्या महाबाहो त्वं हि विष्णुः सनातनः ।
पूर्वं क्रोधहतः शत्रुरनया यो हतस्त्वया ॥ ३७ ॥
समुपाश्रित्य शैलाभं तव वीर्यममानुषं ।
एवमेषा महाभागा पुनर्मर्त्येष्वजायत ॥ ३८ ॥
क्षेत्रे हलमुखोत्कृष्टे वेदीसंस्थानसंस्थिते ।
सैषा वेदवती नाम पूर्वमासीत् कृते युगे ॥ ३९ ॥

सीतोत्पन्नेति सीता सा मानवैः पुनरुच्यते ।
कृते युगे तु निर्वृत्ते ह्येतत् परपुरंजय ।
त्रेतायुगमिदं प्राप्य तव भार्या कृता च सा ।।४०।।

इत्युत्तरकाण्डे कैलासोद्धरणं नाम षोडशः
सर्गः — सीतोत्पत्तिर्नाम
सप्तदशः सर्गः ।।

# उत्तरकाण्डं

## XVIII.

प्रविष्टायां हुताशं तु वेदवत्यां स रावणः ।
पुष्पकं तु तमारुह्य परिबभ्राम मेदिनीं ॥ १ ॥
ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः ।
उशीरवीजमासाद्य शैलमैक्षत रावणः ॥ २ ॥
सम्वर्त्तो नाम विप्रर्षिर्वृहस्पतिकुलोद्भवः ।
याजयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्युतः ॥ ३ ॥
दृष्ट्वा देवास्तु तद्रक्षो वरदानात् सुदुर्जयं ।
तां तां योनिं समाविष्टास्तस्य धर्षणभीरवः ॥ ४ ॥
इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः ।
कृकलासो धनाध्यक्षो हंसो वै वरुणोऽभवत् ॥ ५ ॥
अन्ययोनिगतेष्वेवं सुरेष्वरिनिषूदन ।
रावणः प्राविशद्युद्धं सारमेय इवाशुचिः ॥ ६ ॥
तं च राजानमासाद्य रावणो राक्षसाधिपः ।
प्राह युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद ॥ ७ ॥
ततो मरुत्तो नृपतिः को भवानित्यभाषत ।
अवहासं ततो मुक्त्वा रक्षो वचनमब्रवीत् ॥ ८ ॥
स कुतूहलभावेन प्रीतोऽस्मि तव पार्थिव ।
भ्रातरं धनदस्येह वेत्सि मां यन्न रावणं ॥ ९ ॥

को हि नाम त्रिलोकेषु यो न जानाति मे बलं।
धनदं येन निर्जित्य विमानमेतदाहृतं ॥१०॥
ततो मरुत्तो नृपती रावणं प्रत्युवाच ह।
धन्यः खलु भवान् येन ज्येष्ठो भ्राता रणे जितः ॥११॥
नाधर्मसहितं श्लाघ्यं न च लोके विगर्हितं।
त्वं तु दौरात्म्यतः कृत्वा श्लाघसे भ्रातृनिर्जयं ॥१२॥
किं त्वं प्राक् केवलो धात्रा निर्मितः क्रूरकर्मकृत्।
श्रुतपूर्वं हि न मया यादृशं भाषसे स्वयं ॥१३॥
तिष्ठेदानीं न मे जीवन् प्रतियास्यसि दुर्मते।
अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयं ॥१४॥
इत्युक्त्वा धनुरादाय शायकांश्च स पार्थिवः।
निर्जगाम ततस्तस्य सम्वर्त्तो मार्गमावृणोत् ॥१५॥
सोऽब्रवीत् स्नेहसंक्लिष्टस्तं मरुत्तं महानृषिः।
श्रोतव्यं यदि मद्वाक्यं संप्रहारो न ते क्षमः ॥१६॥
माहेश्वरो हि यज्ञोऽयमसमाप्तः कुलं दहेत्।
दीक्षितस्य कुतो युद्धं क्रूरत्वं दीक्षिते कुतः ॥१७॥
संशयश्च रणे नित्यं राक्षसश्चैष दुर्जयः।
स निवृत्तो गुरोर्वाक्यान्मरुत्तः पृथिवीपतिः ॥१८॥
विसृज्य सशरं चापं सुस्थो मखमुखः स्थितः।
ततस्तं निर्जितं मत्वा घोषयामास वै शुकः ॥१९॥

रावणो जयतीत्येवं हर्षगद्गदया गिरा ।
स भक्षयित्वा तत्रस्थान् ब्रह्मर्षीन् यज्ञसंस्थितान् ॥ २० ॥
वितृप्तो रुधिरैस्तेषां पुनः संप्रययौ महीं ।
जितकाशिनो निवृत्तस्य रावणस्याथ ते सुराः ॥ २१ ॥
पुनः स्वां योनिमास्थाय तानि सत्वानि तेऽब्रुवन् ।
हर्षादथाब्रवीदिन्द्रो मयूरं नीलबर्हिणं ॥ २२ ॥
प्रीतोऽस्मि तव धर्मज्ञ भुजङ्गारे विहङ्गम ।
मम नेत्रसहस्रं यत् तत् ते बर्हे भविष्यति ॥ २३ ॥
मयि वर्षति हर्षं च परं त्वमुपयास्यसि ।
एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः ॥ २४ ॥
नीलाः किल पुरा बर्हा मयूराणां नराधिप ।
सुराधिपाद्वरं प्राप्य गताः सर्वे विचित्रतां ॥ २५ ॥
वरुणस्त्वब्रवीद्धंसं गङ्गातोयविचारिणं ।
श्रूयतां मे प्रसन्नस्य वचः पत्ररथेश्वर ॥ २६ ॥
वर्णो मनोहरः सौम्यश्चन्द्रमण्डलनिर्मलः ।
भविष्यति तवोदग्रः शुक्लफेणसमप्रभः ॥ २७ ॥
मच्छरीरं समासाद्य जलं जलचरेश्वर ।
लप्स्यसे चातुलां प्रीतिमेतत् ते प्रीतिलक्षणं ॥ २८ ॥
हंसानां हि पुरा राजन् न वर्णः सर्वपाण्डुरः ।
पक्षा नीलाग्रसंवीताः क्रोडपृष्ठं च पाण्डुरं ॥ २९ ॥

अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितं ।
हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहं ॥ ३० ॥
सद्रव्यं च शिरो नित्यं भविष्यति तवाक्षयं ।
एष चाञ्जनको वर्णस्तवेह न भविष्यति ॥ ३१ ॥
रूपमन्यत् प्रयच्छामि तप्तचामीकरप्रभं ।
यमस्त्वथाब्रवीद्राम प्राग्वंशे वायसं स्थितं ॥ ३२ ॥
पक्षिंस्तवास्मि सुप्रीतः प्रीतस्य शृणु मे वचः ।
मृत्युतस्ते भयं नास्ति मत्तस्तव विहङ्गम ॥ ३३ ॥
यावत् त्वां न हनिष्यन्ति परे तावद्धरिष्यसे ।
यथान्ये विविधै रोगैः पीड्यन्ते प्राणिनस्तथा ॥ ३४ ॥
न त्वामभिभविष्यन्ति मयि प्रीते तु वायस ।
यश्च मद्विषयस्थानां मानवो निर्वपिष्यति ॥ ३५ ॥
त्वयि भुक्ते तु तृप्तास्ते भविष्यन्त्यन्यलोकगाः ।
एवं दत्त्वा वरांस्तेषां तस्मिन् यज्ञोत्तमे सुराः ।
निवृत्ते यज्ञसमये पुनः स्वभवनं गताः ॥ ३६ ॥

इत्युत्तरकाण्डे मरुत्तसमागमो नाम
अष्टादशः सर्गः ॥

# उत्तरकाण्डं

## XIX.

अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः ।
नरोत्तमान् परांस्तांस्तान् युद्धकाङ्क्षी दुरात्मवान् ॥ १ ॥
स समासाद्य नृपतीन् महेन्द्रवरुणोपमान् ।
अब्रवीद्राक्षसः क्रूरो युद्धं मे दीयतामिति ॥ २ ॥
जिताः स्म इति वा ब्रूत मवैतन्मम निश्चयं ।
अन्यथा कुर्वतां वस्तु नास्ति मोक्षोऽद्य जीवितात् ॥ ३ ॥
ततः सुबहवः प्राज्ञाः पार्थिवा धर्मविष्ठिताः ।
जिताः स्म इत्यभाषन्त ज्ञात्वा परं बलं रिपोः ॥ ४ ॥
दुष्मन्तः सुरथो गाधिर्गयो राजा पुरूरवाः ।
एते सर्वेऽब्रुवन् राजन् जिताः स्म इति रावणं ॥ ५ ॥
अथायोध्यां समासाद्य रावणो राक्षसाधिपः ।
सुगुप्तामनरण्येन शक्रेणेवामरावतीं ॥ ६ ॥
तमुवाच स राजानं युद्धं मे संप्रदीयतां ।
निर्जितोऽस्मीति वा ब्रूहि मम ह्येष विनिश्चयः ॥ ७ ॥
अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ।
दीयतां द्वन्द्वयुद्धं मे राक्षसाधिपते त्वया ॥ ८ ॥
अथ पूर्वं श्रुतार्थेन निश्चितं सुमहद्बलं ।
निश्चक्राम नरेन्द्रस्य राक्षसेन्द्रबधे द्रुतं ॥ ९ ॥

नागानां बहुसाहस्रं वाजिनामयुतान्वितं ।
महीं संछाद्य निर्यातं सपदातिरथं क्षणात् ॥१०॥
ततः प्रवृत्तं सुमहद्युद्धं युद्धविशारद ।
अनरण्यनरेन्द्रस्य राक्षसेन्द्रस्य चाद्भुतं ॥११॥
तद्रावणबलं प्राप्य बलं तस्य महीपतेः ।
प्राणश्यत तदा राजन् हव्यं हुतमिवानले ॥१२॥
स नश्यदथ संप्रेक्ष्य नरेन्द्रस्तद्बलं महत् ।
महार्णवं समासाद्य सलिलं सरितामिव ॥१३॥
अनरण्येन तेऽमात्या मारीचशुकशारणाः ।
प्रहस्तसहिता भग्ना विद्रवन्ति मृगा इव ॥१४॥
ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन् स्वयं ।
आससाद नरेन्द्रस्तं राक्षसेन्द्रं महाबलं ॥१५॥
तस्य बाणमयं वर्षं पातयामास मूर्धनि ।
तदा राक्षसराजस्य सोऽनरण्यो नराधिपः ॥१६॥
ततो बाणाभिपातास्ते नाकुर्वन् राक्षसं क्षतं ।
वारिधारा इवाभ्रेभ्यः पतन्त्यो नगमूर्धनि ॥१७॥
राक्षसेन्द्रेण सहसा क्रुद्धेन वसुधाधिपः ।
तलेनाभिहतो मूर्ध्नि स पपात रथात् स्वकात् ॥१८॥
स राजा पतितो भूमौ विह्वलाङ्गः प्रवेपितः ।
वज्रवेगाद्धत इव शालवृक्षो महावने ॥१९॥

तं प्रहस्याब्रवीद्रत्नो ह्यनरण्यं महीपतिं ।
किमिदानीं त्वया प्राप्तं मया सह युयुत्सता ॥ २० ॥
त्रैलोक्ये नास्ति मे द्वन्द्वं प्रतितिष्ठेत कोऽपि यः ।
शङ्के प्रमत्तो भोगेषु न विज्ञानासि मे बलं ॥ २१ ॥
तस्यैवं ब्रुवतो राजा मन्दांशुर्वाक्यमब्रवीत् ।
सुरारे गर्वितोऽसि त्वं मां निहत्य विकत्थसे ॥ २२ ॥
न ह्येवं भाषते शूरो दौष्कुलेयोऽसि राक्षस ।
किं तु शक्यं मया कर्तुं यत्कालो दुरतिक्रमः ॥ २३ ॥
नाहं विनिर्जितो रक्षस्त्वयेहात्माभिमानिना ।
कालेनैव विपन्नोऽस्मि हेतुभूतो हि मे भवान् ॥ २४ ॥
किं त्विदानीं मया शक्यं कर्तुं प्राणपरीक्षये ।
वाचा त्वां संप्रवक्ष्यामि इक्ष्वाकुपरिभाविनं ॥ २५ ॥
कालपाशस्य हि यथा मध्ये तिष्ठन्ति मानवाः ।
एवं वाक्यान्तरे शत्रुं मम तिष्ठसि रावण ॥ २६ ॥
यदि दत्तं यदि हुतं यदि मे सुकृतं कृतं ।
यदि गुप्ताः प्रजाः सम्यक् तथा सत्यं वचोऽस्तु मे ॥ २७ ॥
उत्पत्स्यते कुलेऽस्माकमिक्ष्वाकूणां महात्मनां ।
राजा परमतेजस्वी स ते प्राणान् हरिष्यति ॥ २८ ॥
ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः ।
तस्मिन्नुदाहृते शापे पुष्पवृष्टिः पपात ह ॥ २९ ॥

एवं दत्त्वा तु शापं स पञ्चत्वमगमन्नृपः ।
स्वर्गते तु नृपे राम राक्षसः संन्यवर्तत ॥३०॥

इत्युत्तरकाण्डेऽनरण्यवधो नाम
एकोनविंशः सर्गः ॥

# उत्तरकाण्डं

## XX.

ततो रामो महातेजाः श्रुत्वेदं परवीरहा ।
उवाच प्रहसन् वाक्यमगस्त्यमृषिसत्तमं ॥ १ ॥
भगवन् किं तदा लोकाः शून्या आसन् द्विजोत्तम ।
धर्षणां यत्र न प्राप्तो रावणो राक्षसाधिपः ॥ २ ॥
उताहो हीनवीर्यास्ते बभूवुः पृथिवीक्षितः ।
बहिष्कृता वास्त्रवरैर्येऽवोचन् निर्जिता इति ॥ ३ ॥
राघवस्य वचः श्रुत्वा अगस्त्यो भगवानृषिः ।
उवाच रामं प्रहसन् पितामह इवेश्वरं ॥ ४ ॥
शृणु राघव भद्रं ते यत्रासौ राक्षसेश्वरः ।
धर्षणामभिसंप्राप्तो यथा प्राकृतपुरुषः ॥ ५ ॥
स एवं बाधमानस्तु पार्थिवान् पार्थिवेश्वर ।
चचार रावणो राम पृथिवीं पर्यटन् बली ॥ ६ ॥
ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीमिव ।
संप्राप्तो यत्र सान्निध्यं परमं वसुरेतसः ॥ ७ ॥
तुल्य आसीन्नृपस्तत्र प्रभावाद्वसुरेतसः ।
अर्जुनो नाम यस्याग्निः शरकाण्डाश्रयः सदा ॥ ८ ॥
तमेव दिवसं सोऽथ हैहयाधिपतिर्बली ।
अर्जुनो नर्मदां यातः क्रीडार्थं स्त्रीभिरावृतः ॥ ९ ॥

रावणो राक्षसेन्द्रस्तु तस्यामात्यानपृच्छत ।
क्वार्जुनो वै नृपः सोऽद्य शीघ्रमाख्यातुमर्हथ ॥१०॥
रावणोऽहमनुप्राप्तो युद्धार्थं नृवरेण वः ।
समागमनमव्यग्रैस्तस्य वै संनिवेद्यतां ॥११॥
इत्येवं रावणोक्तास्ते तस्यामात्या विपश्चितः ।
अभीताः कथयामासुर्नर्मदां नृपतिं गतं ॥१२॥
श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतं ।
अपसृत्याश्रितो विन्ध्यं हिमवद्गिरिसंनिभं ॥१३॥
स तमभ्रगणाकीर्णमुद्भ्रान्तमृगपक्षिणं ।
अपश्यद्रावणो विन्ध्यमाह्वयन्तमिवाचलं ॥१४॥
सहस्रशिखरोपेतं सिंहाध्युषितकन्दरं ।
प्रपातपतितैः शीतैः साट्टहासमिवाम्बुभिः ॥१५॥
देवदानवगन्धर्वैः साप्सरोगणकिन्नरैः ।
क्रीडमानैः सह स्त्रीभिः स्वर्गभूतं महोच्छ्रयं ॥१६॥
नदीभिः स्यन्दमानाभिः स्फटिकप्रतिमं जलं ।
स्फटाभिश्चलजिह्वाभिरनन्तमिव चेष्टितं ॥१७॥
गुहावन्तं दरीवन्तं हिमवच्छिखरोपमं ।
वीक्षमाणस्तदा विन्ध्यं रावणो नर्मदां ययौ ॥१८॥
चलोपलजलां पुण्यां पश्चिमोदधिगामिनीं ।
महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः ॥१९॥

उत्साभितैस्तृषितैः संक्षोभितजलाशयां ।
चक्रवाकैः सकादम्बैः सहंसजलकुक्कुभैः ॥ २० ॥
सारसैश्च सदा मत्तैः कूजद्भिर्विविधा गिरः ।
फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीं ॥ २१ ॥
विस्तीर्णपुलिनश्रोणीं हंसावलिसुमेखलां ।
पुष्परेण्वनुलिप्ताङ्गीं जलफेनामलांशुकां ॥ २२ ॥
सुशीतजलसंस्पर्शां फुल्लोत्पलशुभेक्षणां ।
पुष्पकादवरुह्याथ नर्मदां सरितां वरां ॥ २३ ॥
इष्टामिव वरां नारीं सोऽभ्यगाहत रावणः ।
स तस्याः पुलिने चित्रे नानाकुसुमचित्रिते ॥ २४ ॥
सुखोपविष्टः सचिवैः सह राक्षसपुङ्गवः ।
नदीदर्शनजं हर्षं प्राप्तवान् राक्षसेश्वरः ॥ २५ ॥
ततः सलीलं प्रहसन् रावणो राक्षसाधिपः ।
उवाच सचिवांस्तत्र मारीचशुकसारणान् ॥ २६ ॥
एष रश्मिसहस्रेण जगत् कृत्वेव काञ्चनं ।
तीक्ष्णतापकरः सूर्यो नभसो मध्यमास्थितः ॥ २७ ॥
मां चासीनं विदित्वेह मन्दं याति दिवाकरः ।
नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः ॥ २८ ॥
मद्भयादनिलोऽप्येष प्रवातीह शनैः शनैः ।
इयं चापि सरिच्छ्रेष्ठा नर्मदा शर्मवर्धनी ॥ २९ ॥

# उत्तरकाण्डं

लीनमीनविहङ्गोर्मिः सभयेवाङ्गना स्थिता ।
तद्वक्षः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि ॥ ३० ॥
चन्दनस्य रसेनेव रुधिरेण समुक्षिताः ।
ते यूयमवगाहध्वं नर्मदां शर्मदां नृणां ॥ ३१ ॥
महापद्ममुखा मत्ता गङ्गामिव महागजाः ।
श्रममस्यां महानद्यामपनीय निशाचराः ॥ ३२ ॥
विचरध्वं महोत्साहाः पुष्पाहरणकारणात् ।
अहमप्यत्र पुलिने नद्याश्चन्द्रसमप्रभे ॥ ३३ ॥
प्रयच्छाम्यद्य कुसुमैरुपहारमुमापतेः ।
रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः ॥ ३४ ॥
समहोदरधूम्राक्षा नर्मदां विजगाहिरे ।
राक्षसेन्द्रगजेन्द्रैस्तु साक्षोभ्यत महानदी ॥ ३५ ॥
वामनाञ्जनपद्माद्यैर्गङ्गेव हि महागजैः ।
ततस्ते राक्षसाः स्नाता नर्मदायाः शुभे जले ॥ ३६ ॥
उत्तीर्य पुष्पाण्याजह्रुः क्रीडार्थं रावणस्य तु ।
नर्मदापुलिने रम्ये शुभ्राभ्रसदृशप्रभे ॥ ३७ ॥
राक्षसेन्द्रैर्मुहूर्तेन कृतः पुष्पमयो गिरिः ।
पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः ॥ ३८ ॥
अवातरन्नदीं स्नातुं गङ्गामिव महागजः ।
तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमं ॥ ३९ ॥

नर्मदासलिलात् तस्मादुत्ततार स रावणः ।
रावणं प्राञ्जलिं यान्तमन्वयुः सप्त राक्षसाः ॥४०॥
महाबलं सुरपतिं मूर्त्तिमन्त इवानिलाः ।
महोदरमहापार्श्वमारीचशुकसारणाः ॥४१॥
धूम्राक्षश्च प्रहस्तश्च नित्यं प्रयतमानसाः ।
यत्र यत्र हि याति स्म रावणो राक्षसाधिपः ॥४२॥
जाम्बुनदमयं लिङ्गं तत्र तत्र हि नीयते ।
बालुकावेदिकामध्ये लिङ्गं संस्थाप्य रावणः ।
अर्चयामास पुष्पैश्च गन्धैश्चामृतगन्धिभिः ॥४३॥

ततः स तं मूर्त्तिधरं वरं हरं
वरप्रदं चन्द्रकिरीटभूषणं ।
तमर्चयित्वा निशाचरो जगौ
प्रसार्य हस्तांश्च ननर्त सोऽग्रतः ॥४४॥

इत्युत्तरकाण्डे नर्मदावगाहो नाम विंशः सर्गः ॥

# उत्तरकाण्डं

## XXI.

नर्मदापुलिने यत्र राक्षसेन्द्रः स रावणः ।
पुष्पोपहारं कृतवांस्तस्माद्देशाददूरतः ॥ १ ॥
अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः ।
चिक्रीड सह नारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥
तासां मध्यगतो राजा रराज स तदार्जुनः ।
करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३ ॥
जिज्ञासन् स तु बाहूनां सहस्रस्योत्तमं बलं ।
रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४ ॥
कार्त्तवीर्यभुजैः सेतुं तज्जलं प्राप्य निर्मलं ।
कूलापहारं कुर्वाणं प्रतिस्रोतः प्रधावितं ॥ ५ ॥
समीननक्रमकरः सपुष्पकुशसंस्तरः ।
स नर्मदाम्भसो वेगः प्रावृट्काल इवाभवत् ॥ ६ ॥
स वेगः कार्त्तवीर्येण संप्रेरित इवाम्भसः ।
पुष्पोपहारं तं सर्वं रावणस्य जहार ह ॥ ७ ॥
रावणोऽप्यसमाप्तं तमुत्सृज्य नियमं तदा ।
अपश्यन्नर्मदां राम प्रतिकूलां यथा प्रियां ॥ ८ ॥
पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसंनिभं ।
विवृद्धमम्भसो वेगं दिशं पूर्वामवैक्षत ॥ ९ ॥

तत्रानुद्भ्रान्तशकुलां स्वभावे परमे स्थितां ।
निर्विकाराङ्गनाभाषामपश्यद्रावणो नदीं ॥१०॥
सव्ये तव कराङ्गुल्या ग्रशब्दं च दशाननः ।
वेगप्रभवमन्वेष्टुमदिशच्छुकसारणौ ॥११॥
तौ तु रावणसंदिष्टौ भ्रातरौ शुकसारणौ ।
व्योमान्तरचरौ वीरौ प्रस्थितौ पश्चिमामुखौ ॥१२॥
ग्रर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ ।
ग्रपश्यतां नरं तोये क्रीडन्तं स्त्रीभिरावृतं ॥१३॥
वृहच्छालप्रतीकाशं तोयव्याकुलमूर्धजं ।
मदरक्तान्तनयनं मदनाकारवर्चसं ॥१४॥
नदीं बाहुसहस्रेण रुन्धानमरिमर्दनं ।
गिरिं पादपसहस्रेण रुन्धन्तमिव मेदिनीं ॥१५॥
बालानां वरनारीणां सहस्रेण समावृतं ।
समदानां करेणूनां सहस्रेणेव कुञ्जरं ॥१६॥
तदद्भुतं महद्दृष्ट्वा राक्षसौ शुकसारणौ ।
संनिवृत्तावुपागम्य रावणं तमथोचतुः ॥१७॥
वृहच्छालप्रतीकाशः कोऽप्यसौ राक्षसेश्वर ।
बाहुभिर्नर्मदां रुद्ध्वा संक्रीडयति योषितः ॥१८॥
तेन बाहुसहस्रेण संनिरुद्धा जला नदी ।
सागरोद्गारसंकाशानुद्गारान् सृजते मुहुः ॥१९॥

इत्येवं भाषमाणौ तौ निशम्य शुकसारणौ ।
रावणोऽर्जुन इत्युक्ता उत्तस्थौ युद्धलालसः ॥ २० ॥
अर्जुनाभिमुखे तस्मिन् प्रस्थिते राक्षसेश्वरे ।
सकृदेव कृतो नादः संवृत्तः क्षुभितो यथा ॥ २१ ॥
महोदरमहापार्श्वधूम्राक्षशुकसारणैः ।
संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र सोऽर्जुनः ॥ २२ ॥
नातिदीर्घेण कालेन स ततो राक्षसो बली ।
तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः ॥ २३ ॥
स ततः स्त्रीपरिवृतं वासिताभिरिव द्विपं ।
अपश्यत् तत्र तं राजा राक्षसानां तदार्जुनं ॥ २४ ॥
स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः ।
अभाषतार्जुनामात्यान् नातिगम्भीरया गिरा ॥ २५ ॥
अमात्याः क्षिप्रमाख्यात हैहयस्य नृपस्य ह ।
युद्धार्थिनमनुप्राप्तं रावणं नाम नामतः ॥ २६ ॥
रावणस्य वचः श्रुत्वा मन्त्रिणोऽथार्जुनस्य ते ।
उत्तस्थुः सायुधास्तं च रावणं वाक्यमब्रुवन् ॥ २७ ॥
रणस्य कालो विज्ञातः साधु भोः सुष्ठु रावण ।
यः क्षीबं स्त्रीवृतं चैव योद्धुमिच्छसि नो नृपं ॥ २८ ॥
स्त्रीसमक्षं कथं वा त्वं योद्धुमुत्सहसेऽर्जुनं ।
वासितामध्यगं मत्तं शार्दूल इव कुञ्जरं ॥ २९ ॥

हनमस्वाद्य दशग्रीव हृष्य मा संयुगं प्रति ।
युद्धश्रद्धां विनेता ते श्वस्तात समरे ऽर्जुनः ॥३०॥
यदिवातितरां श्रुत्वा युद्धतृष्णा समाश्रिता ।
विनिज्ज्त्यास्मांस्ततो युद्धमर्जुनेनोपयास्यसि ॥३१॥
ततस्ते रावणामात्यैरमात्याः पार्थिवस्य ते ।
शतशो हाविता युद्धे भक्षिताश्च बुभुक्षितैः ॥३२॥
ततो हलहलाशब्दो नर्मदातीरमाश्रितः ।
अर्जुनस्यानुयात्राणां रावणस्य च मन्त्रिणां ॥३३॥
इषुभिस्तोमरैः पाशैस्त्रिशूलैर्वज्रकल्पकैः ।
आर्दयंस्ते रणे सर्वानर्जुनानुचरांस्तदा ॥३४॥
रावणेनार्दितानां तु समन्ताद्बलिनां ततः ।
हैहयाधिपयोधानां वेग आसीत् सुदारुणः ॥३५॥
सनक्रमकरस्येव समीनस्य महोदधेः ।
अथ ते रावणामात्याः प्रहस्तशुकसारणाः ॥३६॥
कार्त्तवीर्यबलं क्रुद्धा निजघ्नुस्ते महौजसः ।
अर्जुनाय च तत् कर्म रावणस्य समन्त्रिणः ॥३७॥
क्रीडते कथितं तस्मै पुरुषैर्नाररक्षिभिः ।
उक्ता न भेतव्यमिति स्त्रीजनं स ततोऽर्जुनः ॥३८॥
उत्ततार जलात् तस्माद्गङ्गातोयादिवाञ्जनः ।
क्रोधदूषितनेत्रस्तु स ततोऽर्जुनपावकः ॥३९॥

प्रजज्वाल यथा घोरो युगान्तेऽर्णवपावकः ।
स तूर्णतरमादाय वरहेमाङ्गदां गदां ॥ ४० ॥
अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ।
बाहुविक्षेपकरणः समुद्यतमहागदः ॥ ४१ ॥
गारुडं वेगमास्थाय उत्पपाताय सोऽर्जुनः ।
तस्य मार्गं समावृत्य विन्ध्योऽर्कस्येव पर्वतः ॥ ४२ ॥
स्थितो विन्ध्य इवाकम्प्य प्रहस्तो मुषलायुधः ।
ततः तस्य मुषलं घोरं लोहबद्धं महोत्कटं ॥ ४३ ॥
प्रहस्तः प्रेषयन् क्रोधान्ननाद च यथाम्बुदः ।
तस्याग्रे मुषलस्याग्निरशोकापीडसन्निभः ॥ ४४ ॥
बभूव करमुक्तस्य कुर्वाणो विमला दिशः ।
आपतन्तं च मुषलं कार्त्तवीर्यस्तदार्जुनः ॥ ४५ ॥
लाघवाद्वञ्चयामास गदया गजविक्रमः ।
ततस्तमभिदुद्राव प्रहस्तं हैहयाधिपः ॥ ४६ ॥
भ्रामयन् वै गदां गुर्वीं पञ्चबाहुशतोच्छ्रितां ।
तेनाहतोऽतिवेगेन प्रहस्तो गदया तदा ॥ ४७ ॥
निपपातार्दितः शैलो वज्रिवज्राहतो यथा ।
प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः ॥ ४८ ॥
समहोदरधूम्राक्षा अपयाता रणाजिरात् ।
अपक्रान्तेष्वमात्येषु प्रहस्ते च निपातिते ॥ ४९ ॥

रावणोऽभ्यद्रवत् तूर्णमर्जुनं नृपसत्तमं ।
सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणं ॥५०॥
नृपराक्षसयोस्तत्र संरब्धं लोमहर्षणं ।
सागराविव संक्षुब्धौ चलमूलाविवाचलौ ॥५१॥
तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ ।
बलोद्धतौ यथा नागौ वासितार्थे यथा वृषौ ॥५२॥
मेघाविव विनर्दन्तौ सिंहाविव मदोत्कटौ ।
रुद्रकालाविवाक्रान्तौ तौ तथार्जुनरावणौ ॥५३॥
परस्परं गदापातैस्ताडयामासतुर्भृशं ।
गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ ॥५४॥
वज्रप्रहारानचलौ यथैव हि सुदुःसहान् ।
यथाशनिरवेभ्यस्तु जायते वै प्रतिस्वनः ॥५५॥
तथा ताभ्यां गदापातैर्दिशः सर्वाः प्रसस्वनुः ।
अर्जुनेन गदा सा तु क्षिप्यमाना महोरसि ॥५६॥
काञ्चनाभं नभश्चक्रे विद्युत् सौदामिनी यथा ।
तथैव रावणेनापि पात्यमाना मुहुर्मुहुः ॥५७॥
अर्जुनोरसि भाति स्म गदोल्केव महागिरौ ।
नार्जुनः खेदमायातः स च रक्षोगणेश्वरः ॥५८॥
सममासीत् तयोर्युद्धं यथा बलिमहेन्द्रयोः ।
दन्तैरिव महानागौ शृङ्गैरिव महावृषौ ॥५९॥

जघ्नतुस्तौ रणे घोरौ तदा राक्षसपार्थिवौ ।
ततोऽर्जुनेन क्रुद्धेन सर्वप्राणेन सा गदा ॥ ६० ॥
स्तनयोरन्तरे मुक्ता रावणस्य महाहवे ।
वरदानकृतत्राणे सा गदा रावणोरसि ॥ ६१ ॥
दुर्बलेव तदा सेना द्विधाभूतापतत् क्षितौ ।
स त्वर्जुनप्रमुक्तेन गदापातेन पीडितः ॥ ६२ ॥
अपसृत्य धनुर्मात्रं विषसाद सनिस्वनः ।
तं विह्वलितमालोक्य दशग्रीवं ततोऽर्जुनः ॥ ६३ ॥
सहसाप्लुत्य जग्राह गरुत्मानिव पन्नगं ।
स तं बाहुसहस्रेण बलादादाय रावणं ॥ ६४ ॥
बबन्ध बलवान् राजा बलिं नारायणो यथा ।
बध्यमाने दशग्रीवे सिद्धचारणदेवताः ॥ ६५ ॥
साध्विति वादिनः पुष्पैरकिरन्नर्जुनं तदा ।
व्याघ्रो मृगमिवादाय सिंहो वा गजयूथपं ॥ ६६ ॥
ननाद हैहयो राजा हर्षादम्बुदवन्मुहुः ।
प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननं ॥ ६७ ॥
सहितै राक्षसैः सर्वैरभिदुद्राव पार्थिवं ।
नक्तंचराणां वेगस्तु तेषामापततां बभौ ॥ ६८ ॥
उद्धतानां युगापाये समुद्राणामिवाद्भुतः ।
मुञ्च मुञ्चेति भाषन्तस्तिष्ठ तिष्ठेति चासकृत् ॥ ६९ ॥

मुषलानि सशूलानि ससृजुस्ते तदार्जुने ।
अप्राप्तान्येव तान्याशु सोऽसंभ्रान्तस्ततोऽर्जुनः ॥७०॥
आयुधान्यमरारीणां जग्राह च ननाद च ।
ततस्तैरेव रक्षांसि शितधारैर्वरायुधैः ॥७१॥
भित्वा विद्रावयामास वायुरम्बुधरानिव ।
राक्षसांस्त्रासयित्वाथ कार्त्तवीर्योऽर्जुनस्तदा ॥७२॥
आदाय रावणं वीरः प्रविवेश पुरीं ततः ।
तेऽपि सर्वे तदामात्या रावणस्य भयार्दिताः ॥७३॥
अतिष्ठन् पुष्पकं गृह्य स्वामिनो मोक्षकांक्षया ।

स कीर्यमाणः कुसुमाक्षतोत्करैर्
द्विजैः सपौरैः पुरुहूतविक्रमः ।
ततोऽर्जुनः स्वां प्रविवेश तां पुरीं
बलिं निगृह्येव सहस्रलोचनः ॥७४॥

इत्युत्तरकाण्डे कार्त्तवीर्यार्जुनेन रावणनिग्रहो नाम
एकाविंशः सर्गः ॥

# उत्तरकाण्डं

## XXII.

ग्रहणं राक्षसेन्द्रस्य तत् तु राहुग्रहोपमं ।
ऋषिः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥ १ ॥
ततः पुत्रसुतस्नेहात् त्वरितः स महामुनिः ।
माहिष्मतीपतिं द्रष्टुमाजगाम महातपाः ॥ २ ॥
स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः ।
पुरीं माहिष्मतीं प्राप्तो मनःसंकल्पविक्रमः ॥ ३ ॥
सोऽमरावतीसंकाशां हृष्टपुष्टजनावृतां ।
प्रविवेश पुरीं ब्रह्मा यथेन्द्रस्यामरावतीं ॥ ४ ॥
पादचारमिवादित्यं प्रविशन्तं सुदुर्भृशं ।
विज्ञाय तमृषिं द्वास्था अर्जुनाय न्यवेदयन् ॥ ५ ॥
श्रुत्वा पुलस्त्यं संप्राप्तमर्जुनः सह मन्त्रिभिः ।
शिरस्यञ्जलिमाधाय ततः प्रत्युद्ययौ मुनिं ॥ ६ ॥
पुरोहितो गृहीत्वार्घ्यं मधुपर्कं तथैव गां ।
पुरस्तात् प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥
ततस्तमृषिमायान्तमुद्यन्तमिव भास्करं ।
अर्जुनो भृशसंभ्रान्तो ववन्देऽर्घपुरःसरः ॥ ८ ॥
स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च ।
पुलस्त्यमब्रवीद्राजा हर्षगद्गदया गिरा ॥ ९ ॥

अद्येयममरावत्या तुल्या माहिष्मती कृता ।
अद्य चाहं मनुष्येन्द्रो यस्त्वां पश्यामि दुर्धृशं ॥१०॥
अद्य मे कुशलं देव अद्य मे कुलमुद्धृतं ।
यत् ते देवशतैर्वन्द्यौ वन्देऽहं चरणाविमौ ॥११॥
इदं राज्यमिमे पुत्रा इमे दारास्तथा वयं ।
ब्रह्मन् किं कुर्महे कार्यमाज्ञापयतु नो भवान् ॥१२॥
तं धर्मेष्वपि राज्ये च पृष्ट्वा कुशलमव्ययं ।
पुलस्त्यः प्राह राजानं हैहयानां तदार्जुनं ॥१३॥
राजन् कमलपत्राक्ष पूर्णचन्द्रनिभानन ।
अतुलं ते बलं येन दशग्रीवस्त्वया जितः ॥१४॥
भयाद्यस्यावतिष्ठेतां निष्पन्दौ सागरानिलौ ।
सोऽयमद्य त्वया बद्धः पुत्रो मेऽतीव दुर्जयः ॥१५॥
तत् पुत्रक यशः स्फीतं लोके विश्रावितं त्वया ।
मद्वाक्यं पालय त्वद्य मुञ्च तात दशाननं ॥१६॥
पुलस्त्याज्ञां गृहीत्वा स न किञ्चिद्वचनोऽर्जुनः ।
अमुञ्चत् पार्थिवेन्द्रस्तं राक्षसेन्द्रं प्रहृष्टवत् ॥१७॥

स तं विमुच्य त्रिदशारिमर्जुनः
प्रपूज्य दिव्याभरणाम्बरैः शुभैः ।
अहिंसया सख्यमुपेत्य साग्निकं
प्रणम्य स ब्रह्मसुतं व्यसर्जयत् ॥१८॥

पुलस्त्येनापि संगम्य राक्षसेन्द्रः स रावणः ।
परिष्वज्य कृतातिथ्यो लज्जमानो विसर्जितः ॥१९॥
पितामहसुतश्चापि पुलस्त्यो मुनिसत्तमः ।
मोक्षयित्वा दशग्रीवं ब्रह्मलोकं जगाम ह ॥२०॥
एवं स रावणः प्राप्तः कार्त्तवीर्यात् तु धर्षणां ।
पुलस्त्यवचनाच्चापि पुनर्मोक्षमवाप्तवान् ॥२१॥
एवं बलिभ्यो बलिनः सन्ति राघवनन्दन ।
नावज्ञा हि परे कार्या यदीच्छेः श्रेय आत्मनः ॥२२॥

ततः स राज्ञा पिशिताशनानां
सहस्रबाहुं समवेक्ष्य मित्रं ।
पुनर्नराणां कदनं चकार
चचार सर्वां पृथिवीं स दर्पात् ॥२३॥

इत्युत्तरकाण्डे रावणमोक्षो नाम द्वाविंशः सर्गः ॥

# उत्तरकाण्ड

## XXIII.

अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः ।
चचार पृथिवीं कृत्स्नामनिर्विण्णस्तथा कृतः ॥ १ ॥
राक्षसं वा मनुष्यं वा श्रुतवान् यं बलाधिकं ।
राक्षसः स समासाद्य युद्धायाह्वयते स्म तं ॥ २ ॥
ततः कदाचित् किष्किन्ध्यां नगरीं बालिपालितां ।
गत्वाह्वयत युद्धाय बालिनं हेममालिनं ॥ ३ ॥
ततस्तं वानरामात्यस्तारस्ताराधिपोपमः ।
उवाच रावणं वाक्यं युद्धप्रेप्सुमुपागतं ॥ ४ ॥
राक्षसेन्द्र गतो बाली यस्तव प्रबलो मृधे ।
नान्यः प्रमुखतः स्थातुं तव शक्तः प्लवङ्गमः ॥ ५ ॥
चतुःष्वपि समुद्रेषु सन्ध्यामन्वास्य रावण ।
इमं मुहूर्तमायाति बाली तिष्ठ मुहूर्तकं ॥ ६ ॥
एतानस्थिचयान् पश्य यत्र ते शङ्खपाण्डुराः ।
युद्धार्थिनामिमे राजन् वानराधिपतेजसा ॥ ७ ॥
अथामृतरसः पीतस्त्वया यद्यपि रावण ।
तथापि बालिनं प्राप्य तदन्तं तव जीवितं ॥ ८ ॥
पश्येदानीं जगच्चित्रमिदं विश्रवसात्मज ।
इमं मुहूर्तं संप्राप्य दुर्लभं ते भविष्यति ॥ ९ ॥

अथवा त्वरसे मर्तुं याहि दक्षिणसागरं ।
बालिनं द्रक्ष्यसे तत्र भूमिष्ठमिव भास्करं ॥१०॥
स तु तारां विनिर्भर्त्स्य रावणो राक्षसेश्वरः ।
ततः पुष्पकमारुह्य प्रययौ दक्षिणार्णवं ॥११॥
तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननं ।
बालिनं रावणोऽपश्यत् सन्ध्योपासनतत्परं ॥१२॥
यदृच्छयोन्मीलयता बालिनापि स रावणः ।
आयातो लक्षितो दूराच्चकार न च संभ्रमं ॥१३॥
सिंहः शशमिवालक्ष्य गरुडो वा भुजङ्गमं ।
नाचिन्तयत् तथा दृष्ट्वा बाली रावणमागतं ॥१४॥
पुष्पकादवरुह्याथ रावणोऽञ्जनसप्रभः ।
ग्रहीतुं बालिनं पश्चादशब्दः पदमद्रवत् ॥१५॥
विज्ञातं बालिना तस्य तच्च पापविचेष्टितं ।
असंभ्रममनाश्चासौ चिन्तयामास राघव ॥१६॥
निगृह्णमाणमह्यैनं रावणं पापचेतसं ।
कक्षावलम्बितं कृत्वा गमिष्ये त्रीन् महार्णवान् ॥१७॥
पश्यन्त्वेनं ममाङ्कस्थं प्रसृतोरुकराम्बरं ।
लम्बमानं दशग्रीवं गरुडस्येव पन्नगं ॥१८॥
इत्येतां मतिमास्थाय बाली नियममास्थितः ।
जपन् वै नैगमं मन्त्रं तस्थौ पर्वतराडिव ॥१९॥

तावन्योन्यं जिघृक्षन्तौ हरिराक्षसपार्थिवौ ।
प्रयत्नवन्तौ तत् कर्म चेरतुर्बलदर्पितौ ॥ २० ॥
हस्तप्राप्तं तु तं दृष्ट्वा पदशब्देन रावणं ।
प्राङ्मुखस्तं निजग्राह बाली सर्पमिवाण्डजः ॥ २१ ॥
ग्रहीतुकाममादाय रक्षसामीश्वरं हरिः ।
खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनं ॥ २२ ॥
अत्यर्थं पीड्यमानस्तु तदा दक्षनखैर्मुक्तः ।
जहार रावणं बाली पवनस्तोयदं यथा ॥ २३ ॥
अथ ते राक्षसामात्या ह्रियमाणं दशाननं ।
मुमोचयिषवो राजन् बालिनं समुपद्रुताः ॥ २४ ॥
अन्वीयमानस्तैर्बाली बभौ नीलनिशाचरैः ।
अन्वीयमानो मेघौघैरम्बरस्थ इवांशुमान् ॥ २५ ॥
नाशक्नुवंश्च संप्राप्तं बालिनं राक्षसास्तदा ।
तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥ २६ ॥
बालिमार्गादपक्रान्ताः पर्वतेन्द्रा इव प्लुताः ।
किं पुनर्जीवितं प्रेप्सुर्बिभ्राणो मांसशोनितं ॥ २७ ॥
यो ह्यक्षिपक्ष्मसंपाताद्वानरेन्द्रो मनोजवः ।
क्रमते सागरान् सर्वान् सन्ध्याकालं च विन्दति ॥ २८ ॥
सभाज्यमानो भूतैस्तु खेचरैः खेचरो हरिः ।
पश्चिमं सागरं बाली आजगाम सरावणः ॥ २९ ॥

तत्र सन्ध्यामुपास्यासौ जप्त्वा जप्यं च वानरः ।
उत्तरं सागरं प्रायाद्वहमानो निशाचरं ॥३०॥
बहुयोजनसाहस्रं तमध्वानं महाकपिः ।
वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥३१॥
उत्तरे सागरे सन्ध्यामुपास्यैव विधानतः ।
प्रययौ वेगवान् वाली पूर्वमम्बुमहानिधिं ॥३२॥
तत्रापि सन्ध्यामन्वास्य वासविः स हरीश्वरः ।
किष्किन्ध्याभिमुखं रक्षो गृहीत्वा पुनरागमत् ॥३३॥
चतुःष्वपि समुद्रेषु सन्ध्यामन्वास्य वानरः ।
रावणोद्वहनश्रान्तः किष्किन्ध्योपवनेऽपतत् ॥३४॥
रावणं च मुमोचाथ कव्यातः कपिसत्तमः ।
कुतस्त्वमिति चोवाच प्रहसन् रावणं पुनः ॥३५॥
विस्मयं तु परं गत्वा श्रमलोलनिरीक्षणः ।
राक्षसेन्द्रो हरीशं तमिदं वचनमब्रवीत् ॥३६॥
वानरेन्द्र महेन्द्राभ राक्षसेन्द्रोऽस्मि रावणः ।
युद्धं प्रेप्सुरिह प्राप्तस्तच्चाप्यासादितं मया ॥३७॥
अहो बलमहो वीर्यमहो गम्भीरता तव ।
येनाहं पशुवद्गृह्य भ्रामितश्चतुरोऽर्णवान् ॥३८॥
एवमश्रान्तवद्वीरमेवं शीघ्रं च वानर ।
मामुद्वहंश्च कोऽध्वानमेतं वीर क्रमिष्यति ॥३९॥

त्रयाणामेव भूतानां गतिरेषा प्लवङ्गम ।
मनोऽनिलसुपर्णानां तव चात्र न संशयः ॥४०॥
तव दृष्टबलः सोऽहमिच्छामि हरिपुङ्गव ।
त्वया सह स्थिरं सख्यं सुस्निग्धं पावकाग्रतः ॥४१॥
दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनं ।
सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर ॥४२॥
एवमुक्तस्तदा तेन रावणेन स वानरः ।
तथास्त्वित्यब्रवीद्धृष्टं तं विभीषणपूर्वजं ॥४३॥
ततः प्रज्वाल्य तावग्निं तत्रोभौ हरिराक्षसौ ।
भ्रातृत्वमुपपन्नौ तौ परिष्वज्य परस्परं ॥४४॥
अन्योन्यलम्बितकरौ ततस्तौ मित्रतां गतौ ।
किष्किन्ध्यां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव ॥४५॥
स तत्र मासमुषितो बालिना सह रावणः ।
अमात्यै रावणो नीतस्त्रैलोक्योच्छादनार्थिभिः ॥४६॥
एवमेतत् पुरा वृत्तं बालिना रावणः प्रभो ।
धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ ॥४७॥
बलमप्रतिमं राम बालिनोऽभवदुत्तमं ।
सोऽपि त्वया विनिर्दग्धः शलभो वह्निना यथा ॥४८॥

इत्युत्तरकाण्डे बालिना रावणसख्यं नाम
त्रयोविंशः सर्गः ॥

# उत्तरकाण्डं

## XXIV.

अथ वित्रासयन् मर्त्यान् पृथिव्यां राक्षसाधिपः ।
आससाद वने पुण्ये महर्षिं नारदं तदा ॥ १ ॥
नारदस्तु महातेजा देवर्षिरमितप्रभः ।
अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितं ॥ २ ॥
राक्षसाधिपते वीर तिष्ठ विश्रवसः सुत ।
प्रीतोऽस्म्यभिजनोपेत विक्रमैरूर्जितैस्तव ॥ ३ ॥
विष्णुना दैत्यमथनैस्तार्क्ष्येणोरगधर्षणैः ।
त्वया समरमर्दैश्च दृढमस्म्यभितोषितः ॥ ४ ॥
किञ्चिद्वक्ष्यामि तावत् त्वां श्रोतव्यं यदि मन्यसे ।
तन्मे निगदतस्तात समाधिं श्रवणे कुरु ॥ ५ ॥
किमयं बध्यते लोकस्त्वयाबध्येन दैवतैः ।
हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ६ ॥
देवदानवदैत्यानां यक्षगन्धर्वरक्षसां ।
अबध्येन त्वया लोकः क्लेष्टुं योग्यो न मानुषः ॥ ७ ॥
नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतं ।
हन्यात् कस्त्वीदृशं लोकं जराव्याधिशतैर्वृतं ॥ ८ ॥
तैस्तैरनिष्टोपगमैरजस्रं यत्र कुत्र कः ।
मतिमान् मानुषे लोके युद्धेन प्रणयी भवेत् ॥ ९ ॥

क्षीयमाणं सदैवेमं क्षुत्पिपासाजरादिभिः ।
विषादशोकसंमूढं मा लोकं क्षयय प्रभो ॥ १० ॥
पश्य तावन्महाबाहो राक्षसेश्वर मानुषं ।
लोकमेतं विचित्रार्थं यस्य न ज्ञायते गतिः ॥ ११ ॥
क्वचिद्वादित्रनृत्यानि सेव्यन्ते मुदितैर्जनैः ।
रुद्यते चापरैरार्त्तैरश्रुविक्लेदिताननैः ॥ १२ ॥
मातापितृसुतस्नेहाद्भार्याबन्धुमनोरथात् ।
न वेत्ति क्लेशमत्यर्थं लोको मोहसमावृतः ॥ १३ ॥
तत् क्लिष्टेन किमेतेन नित्यं क्लेशपरेण ते ।
जित एव त्वया सौम्य मर्त्यलोको न संशयः ॥ १४ ॥
यतो विनाशो भूतानां येनेदं बध्यते जगत् ।
तं निगृह्णीष्व पौलस्त्य यमं परपुरंजय ॥ १५ ॥
तस्मिन् हि विजिते सर्वं जितं भवति धर्मतः ।
एवमुक्तो राक्षसेन्द्रो दीप्यमान इवौजसा ॥ १६ ॥
अब्रवीन्नारदं वाक्यं संप्रहस्याभिवाद्य च ।
महर्षे देवगन्धर्वविहारसमरप्रिय ॥ १७ ॥
अहं खलूद्यतो गन्तुं जयार्थं वसुधातलं ।
ततो लोकत्रयं जित्वा कृत्वा नागान् सुरान् वशे ॥ १८ ॥
समुद्रममृतार्थं वै मथिष्यामि रसालयं ।
अथाब्रवीद्दशग्रीवं नारदो भगवानृषिः ॥ १९ ॥

किमिदानीं विमार्गेण त्वयान्येनेह गम्यते ।
सुदुर्गमः खलु महान् पितृराजपुरं प्रति ॥२०॥
मार्गो गच्छति दुर्धर्षो यमस्यामित्रकर्षण ।
स तु शारदमेघाभं मुक्त्वा हासं दशाननः ॥२१॥
उवाच कृतमित्येवं वचनं चेदमब्रवीत् ।
अनेनैव पथा ब्रह्मन् वैवस्वतवधोद्यतः ॥२२॥
गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृपः ।
मया तु भगवन् क्रोधात् प्रतिज्ञातं रणार्थिना ॥२३॥
अवजेष्यामि चतुरो लोकपालानिति प्रभो ।
तदेव प्रस्थितोऽहं वै धर्मराजपुरं प्रति ॥२४॥
प्रजासंक्लेशकर्तारं योजयिष्यामि मृत्युना ।
एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च ॥२५॥
प्रयातो दक्षिणामाशां प्रहृष्टः सह मन्त्रिभिः ।
नारदस्तु महातेजा मुहूर्तं ध्यानतत्परः ॥२६॥
चिन्तयामास विप्रेन्द्रो विधूम इव पावकः ।
येन लोकास्त्रयः सेन्द्राः क्लिश्यन्ते सचराचराः ॥२७॥
यश्च दण्डकृते साक्षी द्वितीय इव पावकः ।
भयत्रस्ता विचेष्टन्ते यस्माल्लोका महात्मनः ॥२८॥
त्रैलोक्यमपि यस्यैतद्वशे तिष्ठति सर्वदा ।
तं कथं राक्षसेन्द्रोऽयं स्वयमेवाभियोत्स्यते ॥२९॥

यो विधाता च धाता च सुकृते दुष्कृते तथा ।
त्रैलोक्यं विदितं यस्य तं कथं तु हनिष्यति ।। ३० ।।
यमक्षयं तु संप्राप्ते दशग्रीवे निशाचरे ।
अपरं किं तु तत्रायं विधानं संविधास्यति ।। ३१ ।।
द्रष्टुं तदद्भुतं युद्धं रावणस्य यमस्य च ।
कौतूहलं ममात्यर्थं यास्यामि यमसादनं ।। ३२ ।।

इत्युत्तरकाण्डे नारदसमागमो नाम
चतुर्विंशः सर्गः ।।

# उत्तरकाण्डं

## XXV.

एवं संचिन्त्य विप्रेन्द्रो ययौ त्वरितविक्रमः ।
आख्यातुं तद्यथावृत्तं यमस्य सदनं प्रति ॥ १ ॥
अतोऽपश्यद्यमं तत्र देवमग्निपुरस्कृतं ।
विधानमनुतिष्ठन्तं प्राणिनां यस्य यादृशं ॥ २ ॥
स तु दृष्ट्वा यमः प्राप्तं नारदं देवपूजितं ।
अब्रवीत् समुपासीनमर्घ्यमावेद्य धर्मतः ॥ ३ ॥
कच्चित् क्षेमं तु देवर्षे कच्चिद्धर्मो न नश्यति ।
किमागमनकृत्यं ते देवगन्धर्वसेवित ॥ ४ ॥
तमब्रवीत् तथा पृष्टो नारदो भगवानृषिः ।
श्रूयतामभिधास्यामि विधानं च विधीयतां ॥ ५ ॥
एष नाम्ना दशग्रीवः पितृराज निशाचरः ।
उपैति त्वां वशे नेतुं विक्रमेण सुदुर्जयः ॥ ६ ॥
एतत् तु कारणं येन त्वरितोऽस्म्यहमागतः ।
दण्डहस्तस्य ते युद्धं द्रष्टुं तस्य च रक्षसः ॥ ७ ॥
एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितं ।
ददृशुर्दिव्यमायान्तं विमानं तस्य रक्षसः ॥ ८ ॥
स त्वपश्यन्महाबाहुर्दशग्रीवस्ततस्ततः ।
प्राणिनः सुकृतं कर्म भुञ्जानान् दुष्कृतं तथा ॥ ९ ॥

ददर्श बध्यमानान् स कृष्यमाणांश्च देहिनः ।
यमस्य पुरुषैर्घोरैर्नैकरूपैर्भयंकरैः ॥१०॥
तार्यमाणान् वैतरणीं बहुशः शोणितोदकां ।
वालुकायां च तप्तायां कृष्यमाणान् मुहुर्मुहुः ॥११॥
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः ।
क्रोशतश्च महानादांस्तीव्रान् निष्ठनतत्परान् ॥१२॥
श्रोत्रायासकरीर्वाचः शुश्राव नदतां क्वचित् ।
असिपत्रवनेऽपश्यच्छिद्यमानानधार्मिकान् ॥१३॥
रौरवे क्षारनद्यां च क्षुरधारे च दारुणे ।
पानीयं याचमानांश्च तृषितान् क्षुधितान् क्वचित् ॥१४॥
शवभूतान् कृशान् दीनान् विवर्णान् मुक्तमूर्द्धजान् ।
मलपङ्कधरान् रूक्षान् लग्नांश्च परिधावतः ॥१५॥
ददर्श रावणो मर्त्यान् शतशोऽथ सहस्रशः ।
कांश्चिद्गृहेषु पुण्येषु गीतवादित्रनिस्वनैः ॥१६॥
प्रमोदमानानद्राक्षीत् प्राणिनः सुकृतैः स्वकैः ।
गोरसं गोप्रदातॄंश्च अन्नं चैवान्नदायिनः ॥१७॥
तत्र तत्रोपभुञ्जानान् स्वकर्मफलमश्नतः ।
वस्त्रदान् वस्त्रसंछन्नान् गृहदांश्च गृहे स्थितान् ॥१८॥
सुवर्णमणिमुक्तानां प्रदातॄंश्चाभ्यलङ्कृतान् ।
धार्मिकांश्च नरांस्तत्र दीप्यमानान् स्वतेजसा ॥१९॥

क्वचिदन्तर्जलनिभास्तमसा चावृताः क्वचित् ।
क्वचित् सौम्याश्च दिव्याश्च पन्थानो दिव्यदर्शनाः ॥ २० ॥
तं देशं प्रभया तस्य पुष्पकस्य महाबलः ।
कृत्वा वितिमिरं सर्वं समीपमभ्यवर्तत ॥ २१ ॥
ततस्तान् बध्यमानांस्तु प्राणिनः कर्मभिः स्वकैः ।
रावणो मोक्षयामास विक्रमेण महाबलः ॥ २२ ॥
प्राणिनो मोक्षितास्तेन दशग्रीवेण रक्षसा ।
सुखमापुर्मुहूर्त्तं तदतर्कितमचिन्तितं ॥ २३ ॥
प्रेतेषु मुच्यमानेषु राक्षसेन बलीयसा ।
प्रेतगोपाः सुसंरब्धा राक्षसेन्द्रमुपाद्रवन् ॥ २४ ॥
कृतैर्हलहलाशब्दैः सर्वमाविद्धमाबभौ ।
धर्मराजस्य योधानां शूराणां संप्रधावनां ॥ २५ ॥
ते प्रासैः परिघैः शूलैर्मुद्गरैः शक्तितोमरैः ।
पुष्पकं समवर्षन्त शूराः शतसहस्रशः ॥ २६ ॥
असंख्यमासीत् संवृत्तं तस्य सैन्यं महात्मनः ।
शूराणामुग्रवीर्याणां संयुगेष्वनिवर्तिनां ॥ २७ ॥
ततो वृक्षांश्च शैलांश्च प्रासादानासनानि च ।
पुष्पकस्य बभञ्जुस्ते पुष्पाणि मधुपा इव ॥ २८ ॥
देवनिर्माणभूतं तु विमानं पुष्पकं तदा ।
भज्यमानं तथैवाभूदक्षयं ब्रह्मतेजसा ॥ २९ ॥

ततस्ते सचिवास्तस्य यथाकामं यथाबलं ।
अयुध्यन्त महावीरा दशग्रीवस्य रक्षसः ॥ ३० ॥
ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रविशारदाः ।
अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ॥ ३१ ॥
अन्योन्यं ते महावेगा जघ्नुः प्रहरणैर्भृशं ।
यमस्य च महासेना राक्षसस्य च मन्त्रिणः ॥ ३२ ॥
अमात्यांस्तांस्तु संत्यज्य यमस्यानुचरास्तदा ।
तमेव समवर्षन्त शूलवर्षैर्दशाननं ॥ ३३ ॥
ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः ।
फुल्लाशोक इवाभ्राजद्विमाने राक्षसाधिपः ॥ ३४ ॥
स तु शूलान् गदाः प्रासानायसान् विविधान् शितान् ।
मुमोच च शिला वृक्षान् मुमोचास्त्रबलाद्बली ॥ ३५ ॥
तानि सर्वाण्यवक्षिप्य तदस्त्रं व्यवहृत्य च ।
भिन्दिपालैश्च शूलैश्च निरुच्छ्वासं प्रचक्रिरे ॥ ३६ ॥
विमुक्तकवचः क्रुद्धो मत्तः शोणितविस्रवैः ।
संत्यज्य पुष्पकं वीर पृथिव्यामवतिष्ठत ॥ ३७ ॥
तत्रस्थः कार्मुकी बाणी क्रोधसंरक्तलोचनः ।
लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथान्तकः ॥ ३८ ॥
ततः पाशुपतं दिव्यमस्त्रं संधाय कार्मुके ।
इदानीं तिष्ठतेत्युक्त्वा तच्चापं विचकर्ष ह ॥ ३९ ॥

आकर्णात् स विकृष्याथ चापमिन्द्रारिराहवे ।
मुमोच तं शरं क्रुद्धस्त्रिपुरे शङ्करो यथा ॥ ४० ॥
तस्य रूपं शरस्यासीत् सधूमज्वालमण्डलं ।
वनं दिधक्षतः शुष्कमिद्धस्येव विभावसोः ॥ ४१ ॥
ज्वालामाली स तु शरः क्रव्यादानुगतो रणे ।
मुक्तो गुल्मान् द्रुमांश्चैव भस्मीकृत्वाभ्यधावत ॥ ४२ ॥
ते तस्य तेजसा दग्धा योधा वैवस्वतस्य तु ।
बले तस्मिन् निपतिता माहेन्द्रा इव केतवः ॥ ४३ ॥
ततः स सचिवैः सार्धं राक्षसो भीमविक्रमः ।
ननाद सुमहानादं कम्पयन्निव मेदिनीं ॥ ४४ ॥

इत्युत्तरकाण्डे वैवस्वतबलविध्वंसनं नाम
पञ्चविंशः सर्गः ॥

# उत्तरकाण्डं

## XXVI.

स तु तस्य महानादं श्रुत्वा वैवस्वतः प्रभुः ।
शत्रुं विजयिनं मेने स्वबलस्य च संक्षयं ॥ १ ॥
स हि योधान् हतान् मत्वा क्रोधसंरक्तलोचनः ।
अब्रवीत् त्वरितः सूतं रथो मे युज्यतामिति ॥ २ ॥
तस्य सूतस्तदा दिव्यमुपस्थाप्य महारथं ।
स्थितः स च महातेजा अध्यारोहत तं रथं ॥ ३ ॥
प्रासमुद्गरहस्तस्तु मृत्युस्तस्याग्रतः स्थितः ।
येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययं ॥ ४ ॥
कालदण्डस्तु पार्श्वस्थो मूर्त्तिमानस्य चाभवत् ।
यमप्रहरणं दिव्यं तेजसा ज्वलदग्निवत् ॥ ५ ॥
ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः ।
कालं दृष्ट्वा तथा क्रुद्धं सर्वलोकभयावहं ॥ ६ ॥
ततः संचोदयन् सूतस्तान् हयान् रुचिरप्रभान् ।
प्रययौ भीमसंनादो यत्र रक्षःपतिः स्थितः ॥ ७ ॥
मुहूर्त्तेन यमं ते तु हया हरिहयोपमाः ।
प्रापयन् मनसस्तुल्या यत्र तत् प्रस्तुतं बलं ॥ ८ ॥
दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितं ।
सचिवा राक्षसेन्द्रस्य सहसा विप्रदुद्रुवुः ॥ ९ ॥

लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिताः ।
नेह योद्धुं समर्थाः स्म इत्युक्त्वा प्रययुर्दिशः ॥ १० ॥
स तु तं तादृशं दृष्ट्वा रथं लोकभयावहं ।
नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ ११ ॥
स तु रावणमासाद्य विसृजन् शक्तितोमरान् ।
यमो मर्माणि संक्रुद्धो रावणस्य न्यकृन्तत ॥ १२ ॥
रावणस्तु ततः स्वस्थः शरवर्षं मुमोच ह ।
तस्मिन् वैवस्वतरथे तोयवर्षमिवाम्बुदः ॥ १३ ॥
ततो महाशक्तिशतैर्दार्यमाणो महोरसि ।
नाशक्नोत् प्रतिकर्तुं स राक्षसः शल्यपीडितः ॥ १४ ॥
एवं नानाप्रहरणैर्यमेनामित्रकर्षिणा ।
सप्तरात्रं कृतः संख्ये विसंज्ञो विमुखो रिपुः ॥ १५ ॥
तदासीत् तुमुलं युद्धं यमराक्षसयोर्द्वयोः ।
जयमाकांक्षतोर्वीर समरेष्वनिवर्तिनोः ॥ १६ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च समहर्षयः ।
प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरं ॥ १७ ॥
संवर्त्त इव लोकानां युध्यतोरभवत् तदा ।
राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ १८ ॥
राक्षसेन्द्रोऽथ विस्फार्य चापमिन्द्राशनिस्वनं ।
निरन्तरमिवाकाशं कुर्वन् बाणांस्ततोऽसृजत् ॥ १९ ॥

मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरार्दयत् ।
यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ २० ॥
ततः क्रुद्धस्य वदनाद्यमस्य समजायत ।
ज्वालामाली सनिश्वासः सधूमः कोपपावकः ॥ २१ ॥
तदाश्चर्यमथो दृष्ट्वा देवदानवसंनिधौ ।
प्रहर्षितौ सुसंरब्धौ मृत्युकालौ बभूवतुः ॥ २२ ॥
ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत ।
मुञ्च मां समरे यावद्धन्मीमं पापराक्षसं ॥ २३ ॥
न ममैषा भवेदन्या मर्यादा हि निसर्गतः ।
हिरण्यकशिपुः श्रीमान् नमुचिः शम्बरस्तथा ॥ २४ ॥
संह्रादी धूमकेतुश्च बलिर्वैरोचनोऽपि च ।
शम्भुर्दैत्यमहाराजो वृत्रो बाणस्तथैव च ॥ २५ ॥
राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः ।
ऋषयः पन्नगा दैत्या यक्षाश्चाप्सरसां गणाः ॥ २६ ॥
युगान्तपरिवर्त्ते च पृथिवी समहार्णवा ।
क्षयं नीता मया राजन् सपर्वतसरीसृपा ॥ २७ ॥
एते चान्ये च बहवो बलवन्तो दुरासदाः ।
विपन्ना हि मया दृष्टाः किमुतायं निशाचरः ॥ २८ ॥
मुञ्च मां साधु धर्मज्ञ यावदेनं निहन्म्यहं ।
न हि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ २९ ॥

बलं मम न खल्वेतन्मर्यादैषा निसर्गतः ।
हतो यन्न मया कश्चिन्मुहूर्तमपि जीवति ॥ ३० ॥
तस्येदं वचनं श्रुत्वा धर्मराजः प्रतापवान् ।
अब्रवीत् तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहं ॥ ३१ ॥
ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः ।
कालदण्डममोघं तं तोलयामास पाणिना ॥ ३२ ॥
यस्य पार्श्वेषु निहिताः कालपाशाः प्रतिष्ठिताः ।
पावकस्पर्शनिर्यासो मुद्गरो मूर्ध्नि संस्थितः ॥ ३३ ॥
दर्शनादेव यः प्राणान् प्राणिनामपकर्षति ।
किं पुनः स्पृश्यमानस्य पात्यमानस्य वा पुनः ॥ ३४ ॥
स ज्वालापरिवारस्तु निर्दहन्निव राक्षसं ।
करस्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ ३५ ॥
ततः प्रदुद्रुवुः सर्वे दृष्ट्वा दण्डोद्यतं यमं ।
सुराश्च क्षुभिताः सर्वे तदा तस्मिन् रणाजिरे ॥ ३६ ॥
तस्मिन् प्रहर्तुकामे तु तदा दण्डेन रावणं ।
यमं पितामहः साक्षाद्दर्शयित्वेदमब्रवीत् ॥ ३७ ॥
वैवस्वत महाबाहो न खल्वमितविक्रम ।
न हन्तव्यस्त्वयैतेन दण्डेनैष निशाचरः ॥ ३८ ॥
वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव ।
स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ३९ ॥

यो हि मामनृतं कुर्याद्देवो वा मानुषोऽपि वा ।
त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥ ४० ॥
क्रुद्धस्य करमुक्तोऽयं निर्विशेषः प्रियाप्रिये ।
प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४१ ॥
अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः ।
कालदण्डो मया सृष्टः पूर्वं मृत्युपुरःसरः ॥ ४२ ॥
तन्न खल्वेष ते सौम्य पात्यो रावणमूर्धनि ।
न ह्यस्मिन् पतिते कश्चिन्मुहूर्त्तमपि जीवति ॥ ४३ ॥
यदि ह्यस्मिन् निपतिते न म्रियेतैष राक्षसः ।
म्रियते वा दशग्रीवस्तथाप्युभयतोऽनृतं ॥ ४४ ॥
तन्निवर्तय लङ्केशाद्दण्डमेतं समुद्यतं ।
सत्यं च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे ॥ ४५ ॥
एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा ।
एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥ ४६ ॥
किं त्विदानीं मया शक्यं कर्तुं रणगतेन हि ।
न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४७ ॥
एष तस्मात् पलायिष्ये दर्शनादस्य रक्षसः ।
इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ४८ ॥
दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः ।
आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात् ॥ ४९ ॥

स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः ।
जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ।।५०।।

इत्युत्तरकाण्डे यमविजयो नाम
षड्विंशः सर्गः ।।

# उत्तरकाण्डं

## XXVII.

जित्वा तु तं दशग्रीवो यमं त्रिदशपुङ्गवं ।
निष्क्रम्य नगरात् तस्माद्योधांस्तान् ददर्श पुनः ॥ १ ॥
जयेन वर्धयित्वा तं मारीचप्रमुखास्तदा ।
पुष्पकं तं समारूढाः सान्विता रावणेन ते ॥ २ ॥
ततो रसातलं रक्षो विवेश पयसां निधिं ।
दैत्योरगगणैर्जुष्टं वरुणेन सुरक्षितं ॥ ३ ॥
तत्र भोगवतीं जित्वा पुरीं वासुकिपालितां ।
स्थापयित्वा वशे नागान् ययौ मणिवतीं पुरीं ॥ ४ ॥
निवातकवचास्तत्र दैत्या लब्धवराः स्थिताः ।
राक्षसस्तान् समासाद्य युद्धाय स समाह्वयत् ॥ ५ ॥
तेऽपि सर्वे सुविक्रान्ता दैतेया बाहुशालिनः ।
नानाप्रहरणास्तत्र प्रययुर्युद्धदुर्मदाः ॥ ६ ॥
शूलैस्त्रिशूलैः कुलिशैः पट्टिशासिपरश्वधैः ।
अन्योन्यं बिभिदुः क्रुद्धा राक्षसा दानवास्तथा ॥ ७ ॥
तेषां तु युध्यमानानां साग्रः संवत्सरो गतः ।
न चान्यतमयोस्तत्र जयो वासीत् क्षयोऽपि वा ॥ ८ ॥
ततः पितामहो देवस्त्रैलोक्यपतिरव्ययः ।
आजगाम द्रुतं तत्र विमानवरमास्थितः ॥ ९ ॥

निवातकवचानां तु निवार्य रणकर्म तत् ।
वृद्धः पितामहो वाक्यमुवाच विदितात्मवान् ॥ १० ॥
न त्वं रावण संग्रामे जेतुं शक्यः सुरासुरैः ।
न चेमेऽपि क्षयं नेतुं शक्याः सेन्द्रैः सुरासुरैः ॥ ११ ॥
राक्षसस्य सखित्वं वै भवद्भिः सह रोचते ।
अविभक्ता हि सर्वेऽर्थाः सुहृदां नात्र संशयः ॥ १२ ॥
ततोऽग्निसाक्षिकं सख्यं कृत्वा तत्र दशाननः ।
निवातकवचैः सार्धं प्रीतिमानभवत् तदा ॥ १३ ॥
पूजितस्तैर्यथान्यायं संवत्सरसुखोषितः ।
स्वपुरान्निर्विशेषां हि प्रीतिं लेभे दशाननः ॥ १४ ॥
स तु तेभ्यस्तु मायानां शतमेकं समाप्तवान् ।
सलिलेशपुरान्वेषी भ्रमति स्म रसातलं ॥ १५ ॥
ततोऽश्मनगरं नाम दैत्यानां पुरमाविशत् ।
तान् स जित्वा मुहूर्त्तेन हत्वा दैत्यायुतं बली ॥ १६ ॥
ततः पाण्डुरमेघाभं कैलासाकारसंस्थितं ।
वरुणस्यालयं दिव्यमपश्यद्राक्षसाधिपः ॥ १७ ॥
पयः क्षरन्तीं सततं तत्र गां च ददर्श सः ।
यस्याः पयोभिर्विस्यन्दैः क्षीरोदो नाम सागरः ॥ १८ ॥
यतश्चन्द्रः प्रभवति शीतरश्मिः प्रजापतिः ।
यं समाश्रित्य जीवन्ति फेनपाः परमर्षयः ॥ १९ ॥

यस्मादमृतमुत्पन्नं सुधा चापि सुधाशिनां ।
ब्रुवन्ति यां नरा लोके सुरभीमिति नामतः ॥ २० ॥
प्रदक्षिणीं तु तां कृत्वा रावणः परमाद्भुतां ।
प्रविवेश महाघोरैर्गुप्तं यादोगणैः पुरं ॥ २१ ॥
तत्र धाराशताकीर्णं शारदाभ्रनिभं तदा ।
नित्यं प्रहृष्टं ददृशे यत्रास्ते वरुणो गृहे ॥ २२ ॥
ततो हत्वा बलाध्यक्षान् समरे तैश्च ताडितः ।
अब्रवीत् सचिवान् राजा गत्वा शीघ्रं निवेद्यतां ॥ २३ ॥
युद्धार्थी रावणः प्राप्तस्तस्य युद्धं प्रदीयतां ।
वरदानभयं तेऽस्ति निर्जितोऽस्मीति साञ्जलिः ॥ २४ ॥
एतस्मिन्नन्तरे क्रुद्धा वरुणस्य महात्मनः ।
पुत्राः पौत्राश्च निष्क्रान्ता गौरपुष्कररोचिषः ॥ २५ ॥
निष्क्रम्य सुमहावीर्या बलैः परिवृताः स्वकैः ।
युक्त्वा रथान् कामगमान् तुल्यान् पुष्करतेजसा ॥ २६ ॥
ततो युद्धं समभवत् तुमुलं लोमहर्षणं ।
सलिलेन्द्रस्य पुत्राणां रावणस्य च रक्षसः ॥ २७ ॥
अमात्यैस्तु महावीर्यैर्दशग्रीवस्य रक्षसः ।
वारुणं तद्बलं कृत्स्नं क्षणेन विनिपातितं ॥ २८ ॥
समीक्ष्य स्वबलं भग्नं वरुणस्य सुतास्तदा ।
अर्दितास्ते शरौघेन निवृत्ता रणकर्मतः ॥ २९ ॥

अर्दितेष्वथ रक्षःसु तदा वरुणसूनुभिः ।
रावणः क्रोधताम्राक्ष आकाशे समतिष्ठत ॥३०॥
दृष्ट्वाकाशगमं तं तु रावणं गगणे स्थितं ।
आकाशमेव विविशुस्ते रथैः शीघ्रगामिभिः ॥३१॥
तदासीत् तुमुलं युद्धं तुल्यं विजयमिच्छतां ।
तदा सुमहदाकाशे वृत्रवासवयोरिव ॥३२॥
ततस्ते रावणं युद्धे शितैः पावकसंनिभैः ।
विमुखीकृत्य संहृष्टाः शरैर्मर्मसु ताडयन् ॥३३॥
ततो महोदरः क्रुद्धो राजानं वीक्ष्य धर्षितं ।
त्यक्त्वा मृत्युभयं शूरो युद्धाकाङ्क्षी व्यलोकयत् ॥३४॥
तेन तेषां हयाः सर्वे कामगाः पवनोपमाः ।
महोदरेण सहसा हतास्ते पेतुरम्बरात् ॥३५॥
हत्वा रथांश्च योधांश्च वारुणीयान् स राक्षसः ।
मुमोच सुमहानादं विरथान् वीक्ष्य तान् स्थितान् ॥३६॥
ते तु तेषां रथाः साश्वाः सह सारथिभिर्वरैः ।
महोदरेण निहताः पतिताः पृथिवीतले ॥३७॥
ते तु त्यक्त्वा रथान् पुत्रा वरुणस्य महात्मनः ।
आकाशे विष्ठिताः सर्वे स्वप्रभावान्न विव्यथुः ॥३८॥
धनूंषि कृत्वा सज्यानि निवर्त्य च महोदरं ।
रावणं समरे क्रुद्धाः सहिताः समभिद्रुताः ॥३९॥

ते शरैश्चापनिर्मुक्तैर्वज्रकल्पैः सुदारुणैः ।
दारयन्ति दशग्रीवं मेघा इव महागिरिं ॥ ४० ॥
ततः क्रुद्धो दशग्रीवो युगान्ताग्निरिव स्थितः ।
शरवर्षं महावेगं तेषां मर्मस्वताडयत् ॥ ४१ ॥
मुषलानि विचित्राणि ततो भल्लशतानि च ।
पट्टिशांश्चैव शक्तीश्च शतघ्नीर्महतीरपि ॥ ४२ ॥
पातयामास लङ्केशस्तेषामुपरि विष्ठितः ।
ततस्तेनैव सहसा न्यसीदंस्ते पदातयः ॥ ४३ ॥
ततो रक्षो महानादं मुक्त्वा हन्ति स्म वारुणान् ।
नानाप्रहरणैर्घोरैर्धाराभिरिव तोयदः ॥ ४४ ॥
ततस्ते घातिताः सर्वे पतिता धरणीतले ।
युद्धात् स्वैः पुरुषैः शीघ्रं गृहानेव प्रवेशिताः ॥ ४५ ॥
तानब्रवीत् ततो रक्षो वरुणाय निवेद्यतां ।
रावणं त्वब्रवीन्मन्त्री प्रहासो नाम वारुणः ॥ ४६ ॥
गतः खलु महाराजो ब्रह्मलोकं जलेश्वरः ।
गान्धर्वं हि सुरैः सार्धं श्रोष्यते पद्मयोनिना ॥ ४७ ॥
तदलं ते वृथा वीर परिश्रम्य गते नृपे ।
येऽत्र संनिहिता वीराः कुमारास्ते त्वया जिताः ॥ ४८ ॥
एवं श्रुत्वा राक्षसेन्द्रो नाम विश्राव्य चात्मनः ।
हर्षान्नादानवसृज्य निष्क्रान्तो वरुणालयात् ॥ ४९ ॥

मन्दोदरेण संघुष्टं हर्षगद्गदया गिरा ।
द्वितीयं जितवाँल्लोकं वारुणं राक्षसेश्वरः ॥५०॥
येनैव ते गतास्तत्र तेनैवाशु विनिसृताः ।
लङ्कामभिमुखा दृष्टा नभस्तलकृतक्षणाः ॥५१॥

इत्युत्तरकाण्डे रावणस्य रसातलविजयो
नाम सप्तविंशः सर्गः ॥

# उत्तरकाण्डं

## XXVIII.

ततोऽश्मनगरं भूयो विचेरुर्युद्धलालसाः ।
स तु तत्र दशग्रीवो गृहं पश्यति भास्वरं ॥ १ ॥
वैडूर्यतोरणाकीर्णं मुक्ताजालविभूषितं ।
सुवर्णस्तम्भगहनं वेदिकाभिः समन्ततः ॥ २ ॥
वज्रस्फटिकसोपानं किङ्किणीजालशोभितं ।
बह्वासनयुतं रम्यं महेन्द्रभवनोपमं ॥ ३ ॥
तत्र गृहवरं दृष्ट्वा दशग्रीवः प्रतापवान् ।
कस्येदं भवनं रम्यं मेरुमन्दरसंनिभं ॥ ४ ॥
गच्छ प्रहस्त शीघ्रं त्वं जानीष्व भवनोत्तमं ।
एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमं ॥ ५ ॥
स शून्यं प्रेक्ष्य तद्द्वारं पुनः कक्ष्यान्तरं ययौ ।
सप्तकक्ष्यान्तरं गत्वा ततो ज्वालामपश्यत ॥ ६ ॥
ततो दृष्टः पुमांस्तत्र हृष्टो हासं मुमोच सः ।
त्रस्तः स तु महात्मा वै ऊर्द्धरोमाभवत् तदा ॥ ७ ॥
ज्वालामध्ये स्थितस्तत्र हेममाली विमोहनः ।
आदित्य इव दुष्प्रेक्ष्यः साक्षादिव यमः प्रभुः ॥ ८ ॥
तथा दृष्ट्वा तु वृत्तान्तं त्वरमाणो विनिर्गतः ।
विनिर्गम्याब्रवीत् सर्वं रावणाय निशाचरः ॥ ९ ॥

अथ राजा दशग्रीवः पुष्पकादवरुह्य सः ।
प्रवेष्टुकामो वेश्माथ भिन्नाञ्जनचयोपमः ॥१०॥
बद्धमौलिर्वपुष्मांश्च पुरुषोऽस्याग्रतः स्थितः ।
द्वारमावृत्य सहसा ज्वालाजिह्वो भयानकः ॥११॥
रक्ताक्षः श्वेतदशनो बिम्बौष्ठश्चारुदर्शनः ।
महाभीषणनासश्च कम्बुग्रीवो महाहनुः ॥१२॥
दृढश्मश्रुर्निगूढास्थिर्दंष्ट्रालोलो महार्णाः ।
गृहीत्वा लोहमुषलं द्वारं विष्टभ्य तिष्ठति ॥१३॥
अथ संदर्शनात् तस्य ऊर्द्ध्वरोमा बभूव सः ।
हृदयं कम्पते चास्य वेपथुश्चाप्यजायत ॥१४॥
निमित्तान्यमनोज्ञानि दृष्ट्वा राम व्यचिन्तयत् ।
अथ चिन्तयतस्तस्य स एव पुरुषोऽब्रवीत् ॥१५॥
किं त्वं चिन्तयसे रक्षो ब्रूहि विश्रब्धमानसः ।
युद्धातिथ्यमहं वीर करिष्ये रजनीचर ॥१६॥
एवमुक्त्वा स तद्रक्षः पुनर्वचनमब्रवीत् ।
योत्स्यसे बलिना सार्धमथवा मन्यसे कथं ॥१७॥
रावणोऽभिहितो भूय ऊर्द्ध्वरोमा व्यजायत ।
अथ धैर्यं समालम्ब्य रावणो वाक्यमब्रवीत् ॥१८॥
गृहेषु तिष्ठते को हि तद्ब्रूहि वदतां वर ।
तेनैव सार्धं योत्स्यामि यथा वा मन्यते भवान् ॥१९॥

स एनं पुनरप्याह दानवेन्द्रोऽत्र तिष्ठति ।
एष वै परमोदारः शूरः सत्यपराक्रमः ॥ २० ॥
धीरो बहुगुणोपेतः पाशहस्त इवान्तकः ।
बालार्क इव तेजस्वी समरेष्वनिवर्तकः ॥ २१ ॥
अमर्षी दुर्जयो जेता बलवान् गुणसागरः ।
प्रियंवदः संविभागी गुरुप्रियकरः सदा ॥ २२ ॥
कालाकांक्षी महासत्त्वः सत्यवाक् सौम्यदर्शनः ।
दक्षः सर्वगुणोपेतः शूरः स्वाध्यायतत्परः ॥ २३ ॥
एष गच्छति वात्येष ज्वलते तपते तथा ।
देवैश्च भूतसङ्घैश्च पन्नगैः सपतत्रिभिः ॥ २४ ॥
भयं यो नाभिजानाति तेन त्वं योद्धुमिच्छसि ।
बलिना रोचते युद्धं यदि ते राक्षसेश्वर ॥ २५ ॥
प्रविश त्वं महासत्त्व संग्रामं कुरु मा चिरं ।
एवमुक्तो दशग्रीवः प्रविवेश यतो बलिः ॥ २६ ॥
स विलोक्य तु लङ्केशं जहास दहनोपमः ।
आदित्य इव दुष्प्रेक्ष्यः स्थितो दानवसत्तमः ॥ २७ ॥
अथ संदर्शनादेव बलिर्वै विश्वरूपवान् ।
तद्गृहीत्वा करे रक्ष उत्सङ्गे स्थाप्य चाब्रवीत् ॥ २८ ॥
दशग्रीव महाबाहो किं ते कार्यं करोम्यहं ।
किमागमनकृत्यं ते ब्रूहि त्वं राक्षसेश्वर ॥ २९ ॥

एवमुक्तस्तु बलिना रावणो वाक्यमब्रवीत् ।
श्रुतं मया महाभाग बद्धस्त्वं विष्णुना पुरा ॥ ३० ॥
सोऽहं मोचयितुं शक्तो बन्धनात् त्वां न संशयः ।
एवमुक्तस्ततो हासं बलिर्मुक्त्वैनमब्रवीत् ॥ ३१ ॥
श्रूयतामभिधास्यामि यत् त्वं पृच्छसि रावण ।
य एष पुरुषः श्यामो द्वारि तिष्ठति नित्यदा ॥ ३२ ॥
एतेन दानवेन्द्राश्च तथान्ये बलदर्पिणः ।
वशं नीता बलवता पूर्वे पूर्वतराश्च ये ॥ ३३ ॥
बद्धश्चाहमनेनैव कृतान्तो दुरतिक्रमः ।
क एनं पुरुषं लोके वञ्चयिष्यति रावण ॥ ३४ ॥
सर्वभूतापहर्ता च य एष द्वारि तिष्ठति ।
कर्ता कारयिता चैव धाता च भुवनेश्वरः ॥ ३५ ॥
न त्वं वेद न चैवाहं भूतभव्यं च नित्यदा ।
कालश्चैव हि कालेशो लोकरक्षाकरस्तथा ॥ ३६ ॥
लोकत्रयस्य सर्वस्य हन्ता स्रष्टा तथैव च ।
इन्द्राणां च सहस्राणि सुराणामयुतानि च ॥ ३७ ॥
ऋषीणां चैव मुख्यानां शतान्यथ सहस्रशः ।
वशं नीतानि सर्वाणि य एष द्वारि तिष्ठति ॥ ३८ ॥
तस्य तद्वचनं श्रुत्वा रावणोऽथ तमब्रवीत् ।
मया प्रेतेश्वरो दृष्टः कृतान्तः सह मृत्युना ॥ ३९ ॥

पाशहस्तो महाज्वालोऽप्यूर्द्ध्वलोमा भयानकः ।
दंष्ट्रालो विद्युज्जिह्वश्च सर्पवृश्चिकरोषरुट् ॥४०॥
रक्ताक्षो भीमवेगश्च सर्वसत्त्वभयंकरः ।
आदित्य इव दुष्प्रेक्ष्यः समरेष्वनिवर्तकः ॥४१॥
पापानां शासिता चैव स मया युधि निर्जितः ।
न च मे तत्र भीः काचित् व्यथा वा दानवेश्वर ॥४२॥
एतं तु नाभिजानामि तद्भवान् वक्तुमर्हति ।
रावणस्य वचः श्रुत्वा बलिर्वैरोचनोऽब्रवीत् ॥४३॥
एष वै लोकधाता च हरिर्नारायणः प्रभुः ।
अनन्तः कपिलो विष्णुर्नरसिंहो महाद्युतिः ॥४४॥
ऋतधामा सुधामा च पाशहस्तो भयानकः ।
द्वादशादित्यसदृशः पुराणः पुरुषोत्तमः ॥४५॥
नीलजीमूतसंकाशः सुरनाथः सुरोत्तमः ।
ज्वालामाली महानादो योगी भक्तजनप्रियः ॥४६॥
संहरत्येष भूतानि स्थावराणि चराणि च ।
पुनश्च सृजते सर्वमनाद्यन्तमहेश्वरः ॥४७॥
इष्टं चैव हि दत्तं च हुतं चैव निशाचर ।
सर्वस्यैव तु लोकेशो धाता गोप्ता न संशयः ॥४८॥
नैवंविधं महद्भूतं विद्यते भुवनत्रये ।
अहं त्वं चैव राजेन्द्र ये चान्ये पूर्ववत्तराः ॥४९॥

नेता ह्येषां यथा सिंहः पशूनां यमसादनं ।
वृत्रो दनुः शुकः शम्भुर्निशुम्भः शुम्भ एव च ॥५०॥
कालनेमिश्च संह्रादः कूटो वैरोचनो मृदुः ।
यमलार्जुनकंसश्च कैटभो मधुना सह ॥५१॥
एते तपन्ति द्योतन्ति वान्ति वर्षन्ति चैव हि ।
सर्वैस्त्रिदशराज्यानि कारितानि महात्मभिः ॥५२॥
युद्धे सुरगणाः सर्वे निर्जिताश्च सहस्रशः ।
प्रमत्ता भोगसक्ताश्च बालार्कसमतेजसः ॥५३॥
ते च सर्वे क्षयं नीता बलिनः कामरूपिणः ।
समरे च दुराधर्षाः श्रूयन्ते चापराजिताः ॥५४॥
एते सर्वे महद्भूताः कृतान्तबलमोहिताः ।
एष धारयते लोकान् एष वै सृजते प्रभुः ॥५५॥
एष संहरते चैव कालो भूत्वा महाबलः ।
एष यज्वा च याज्यश्च चक्रायुधधरो हरिः ॥५६॥
सर्ववेदमयश्चैष सर्वभूतमयस्तथा ।
सर्वरूपी महारूपी बलदेवो महाभुजः ॥५७॥
वीरहा वीरचक्षुष्मांस्त्रैलोक्यगुरुरव्ययः ।
एनं मुनिगणाः सर्वे चिन्तयन्ति हि मोक्षिणः ॥५८॥
य एनं वेत्ति पुरुषं सर्वपापैः प्रमुच्यते ।
स्मृत्वा श्रुत्वा तथेष्ट्वा च सर्वकामानवाप्नुयात् ॥५९॥

एतच्छ्रुत्वा तु वचनं रावणो निर्ययौ तदा ।
न च तं पुरुषं तत्र पश्यते रजनीचरः ॥ ६० ॥
हर्षान्नादं विमुञ्चन् वै निष्क्रान्तो वरुणालयात् ।
गत एवागतो येन पथा तेन निवृत्य तु ॥ ६१ ॥

इत्युत्तरकाण्डे बलिनिदर्शनं नाम
अष्टाविंशः सर्गः ॥

# उत्तरकाण्डं

## XXIX.

अथ संचिन्त्य लङ्केन्द्रः सोमलोकं जगाम ह ।
मेरुशृङ्गवरे रम्ये रजनीमुष्य वीर्यवान् ॥ १ ॥
अथ स्यन्दनमारूढो दिव्यस्रगनुलेपनः ।
अप्सरोगणमुख्येन सेव्यमानस्तु गच्छति ॥ २ ॥
रतिश्रान्तोऽप्सरोऽङ्केषु चुम्बितः स विबुध्यते ।
दृष्टस्तु पुरुषस्तेन दृष्ट्वा कौतूहलान्वितः ॥ ३ ॥
अथापश्यदृषिं तत्र दृष्ट्वा चैवमुवाच तं ।
स्वागतं तव देवर्षे कालेनेहागतो ह्यसि ॥ ४ ॥
कोऽयं स्यन्दनमारूढो ह्यप्सरोगणसेवितः ।
निर्लज्ज इव संयाति भयस्थानं न विन्दति ॥ ५ ॥
रावणेनैवमुक्तस्तु पर्वतो वाक्यमब्रवीत् ।
शृणु वत्स यथातत्त्वं वक्ष्ये चाहं महाद्युते ॥ ६ ॥
एतेन निर्जिता लोका ब्रह्मा चैवाभितोषितः ।
एष गच्छति मोक्षाय सुसुखं स्थानमुत्तमं ॥ ७ ॥
तपसा निर्जिता यद्वद्भवता राक्षसाधिप ।
प्रयाति पुण्यकृत् तद्वत् सोमं पीत्वा न संशयः ॥ ८ ॥
त्वं तु राक्षसशार्दूल शूरः सत्यपराक्रमः ।
नैवेदृशेषु क्रुध्यन्ति बलिनो धर्मचारिषु ॥ ९ ॥

अथापश्यद्रथवरं महाकायं महौजसं ।
ज्वाल्यमानं वपुषा गीतवादित्रनिःस्वनैः ॥१०॥
कोऽयं गच्छति देवर्षे शोभमानो महाद्युतिः ।
किन्नरैश्च प्रगायद्भिर्नृत्यद्भिश्च मनोरमं ॥११॥
श्रुत्वा चेदमुवाचाथ पर्वतो मुनिसत्तमः ।
एष शूरो रणे योद्धा संग्रामेष्वनिवर्तकः ॥१२॥
युध्यमानस्तथैवैष प्रहारैर्जर्जरीकृतः ।
कृती शूरो रणे जेता स्वाम्यर्थं त्यक्तजीवितः ॥१३॥
संग्रामे निहतोऽमित्रैर्हत्वा च समरे बहून् ।
इन्द्रस्यातिथिरेषो वै अथवा यत्र गच्छति ॥१४॥
नृत्यगीतपरैर्लोकैः सेव्यते नरसत्तमः ।
पप्रच्छ रावणो भूयः कोऽयं यात्यर्कसंनिभः ॥१५॥
रावणस्य वचः श्रुत्वा पर्वतो वाक्यमब्रवीत् ।
य एष दृश्यते राजन् विमाने सर्वकाञ्चने ॥१६॥
अप्सरोगणसंयुक्ते पूर्णेन्दुसदृशाननः ।
सुवर्णदो महाराज विचित्राभरणाम्बरः ॥१७॥
एष गच्छति शीघ्रेण यानेन सुमहाद्युतिः ।
पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥१८॥
एते ये यान्ति राजानो ब्रूहि त्वमृषिसत्तम ।
को ह्येषां याचितो दद्याद्युद्धातिथ्यं ममाद्य वै ॥१९॥

तत् समाख्याह्रि धर्मज्ञ पिता मे त्वं हि धर्मतः ।
एवमुक्तः प्रत्युवाच रावणं पर्वतस्तदा ॥२०॥
शर्मार्थिनो महाराज नैते युद्धार्थिनो नृपाः ।
वक्ष्यामि ते महाभाग यस्ते युद्धं प्रदास्यति ॥२१॥
एष राजा महातेजाः सप्तद्वीपे शूरो महान् ।
मान्धाता योऽभिविख्यातः स ते युद्धं प्रदास्यति ॥२२॥
पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
कुत्रासौ दृश्यते राजा तन्ममाचक्ष्व सुव्रत ॥२३॥
सोऽहं यास्यामि तत्रैव यत्रासौ नरपुङ्गवः ।
रावणस्य वचः श्रुत्वा मुनिर्वचनमब्रवीत् ॥२४॥
युवनाश्वसुतो राजा मान्धाता राजसत्तमः ।
सप्तद्वीपसमुद्रान्तां जिवेहाभ्यागमिष्यति ॥२५॥
अथापश्यन्महाबाहुस्त्रैलोक्ये बलदर्पितः ।
अयोध्यायाः पतिं वीरं मान्धातारं नरोत्तमं ॥२६॥
सप्तद्वीपाधिपं यान्तं स्यन्दनेन विराजता ।
हेमदण्डेन चित्रेण श्वेतच्छत्त्रेण राजितं ॥२७॥
जाज्वल्यमानं रूपेण दिव्यगन्धानुलेपनं ।
तमुवाच दशग्रीवो युद्धं मे दीयतामिति ॥२८॥
एवमुक्तो दशग्रीवं प्रहस्येदमुवाच ह ।
यदि ते जीवितं नेष्टं ततो युध्यस्व राक्षस ॥२९॥

मान्धातुर्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ।
वरुणस्य कुबेरस्य यमस्यापि न विव्यथे ॥ ३० ॥
किं पुनर्मनुषात् त्वत्तो रावणो भयमाविशेत् ।
एवमुक्त्वा राक्षसेन्द्रः क्रोधात् संप्रज्वलन्निव ॥ ३१ ॥
आज्ञापयामास तदा राक्षसान् युद्धदुर्मदान् ।
अथ क्रुद्धास्तु सचिवा रावणस्य दुरात्मनः ॥ ३२ ॥
ववृषुः शरजालानि क्रोधाद्युद्धविशारदाः ।
अथ राज्ञा बलवता कङ्कपत्रैः शिलाशितैः ॥ ३३ ॥
इषुभिस्ताडिताः सर्वे प्रहस्तशुकसारणाः ।
महोदरविरूपाक्षा ह्यकम्पनपुरोगमाः ॥ ३४ ॥
अथ प्रहस्तस्तु नृपं शरवर्षैरवाकिरत् ।
अप्राप्तानेव तान् सर्वान् प्रचिच्छेद नृपोत्तमः ॥ ३५ ॥
भुशुण्डीभिश्च भल्लैश्च भिन्दिपालैः सतोमरैः ।
नरराजेन दह्यन्ते तृणभारा इवाग्निना ॥ ३६ ॥
ततो नृपवरः क्रुद्धः पञ्चभिः प्रबिभेद तं ।
तोमरैः सुमहावेगैः पुनः क्रौञ्चमिवाग्निजः ॥ ३७ ॥
ततो मुहुर्भ्रामयित्वा मुद्गरं यमसंनिभं ।
प्राहरत् सोऽतिवेगेन राक्षसस्य रथं प्रति ॥ ३८ ॥
स पपात महावेगो मुद्गरो वज्रसंनिभः ।
स तूर्णं रावणस्तेन पातितः शक्रकेतुवत् ॥ ३९ ॥

ततो मर्त्यपतिः प्रीत्या हर्षोद्धतबलो बभौ ।
सकलेन्दुकलाः स्पृष्ट्वा यथाम्बु लवणाम्भसः ॥ ४० ॥
ततो रक्षोबलं सर्वं हाहाभूतं विचेतनं ।
परिवार्याथ संतस्थौ राक्षसेन्द्रं समन्ततः ॥ ४१ ॥
ततश्चिरात् समाश्वस्य रावणो लोकरावणः ।
मान्धातुः पीडयामास देहं लङ्केश्वरो भृशं ॥ ४२ ॥
रथं साश्वयुगाक्षं तं बभञ्ज च महाबलः ।
विरथः स रथात् प्राप्य शक्तिं घण्टाट्टहासिनीं ॥ ४३ ॥
मान्धाता प्रतिचिक्षेप तां बलाद्रावणं प्रति ।
मरीचिमिव चार्कस्य चित्रभानोः शिखामिव ॥ ४४ ॥
दीप्यन्तीं रुचिराभाषां मान्धातुः करविच्युतां ।
तामापतन्तीं शूलेन पौलस्त्यो रजनीचरः ॥ ४५ ॥
ददाह शक्तिं रक्षेन्द्रः पतङ्गमिव पावकः ।
यमदत्तं तु नाराचं विकृष्य स दशाननः ॥ ४६ ॥
पातयामास वेगेन स च तेन हतो भृशं ।
मूर्च्छितं तु नृपं दृष्ट्वा प्रहृष्टास्ते निशाचराः ॥ ४७ ॥
चुक्रुशुः सिंहनादांश्च प्रक्ष्वेलन्तो महाबलाः ।
लब्धसंज्ञो मुहूर्त्तेन ह्ययोध्यायाः पतिस्तदा ॥ ४८ ॥
दृष्ट्वा तं मन्त्रिभिः शत्रुं पूज्यमानं मुदान्वितैः ।
जातकोपो दुराधर्षश्चन्द्रार्कसदृशद्युतिः ॥ ४९ ॥

महता शरवर्षेण पीडयद्राक्षसं बलं ।
मान्धातुस्तु निनादेन राक्षसस्य च रवेण ॥५०॥
संचचाल ततः सैन्यमुद्धूत इव सागरः ।
तद्युद्धमभवद्घोरं नरराक्षससंकुलं ॥५१॥
अथाविष्टौ महात्मानौ नरराक्षससत्तमौ ।
कार्मुकासिधरौ वीरौ वीरासनगतौ तदा ॥५२॥
मान्धाता रावणं चैव रावणश्चैव तं नृपं ।
क्रोधेन महताविष्टौ शरवर्षं मुमोचतुः ॥५३॥
तौ परस्परसंक्षोभात् प्रहारैः क्षतविक्षतौ ।
कार्मुकेऽस्त्रं समाधाय रौद्रमस्त्रं मुमुक्षतां ॥५४॥
आग्नेयेन तु मान्धाता तदस्त्रं पर्यवारयत् ।
गान्धर्वेन दशग्रीवो वारुणेन च राजराट् ॥५५॥
गृहीत्वा स तु ब्रह्मास्त्रं सर्वभूतभयावहं ।
चोदयामास मान्धाता दिव्यं पाशुपतं महत् ॥५६॥
तदस्त्रं घोररूपं तु त्रैलोक्यभयवर्धनं ।
दृष्ट्वा त्रस्तानि भूतानि स्थावराणि चराणि च ॥५७॥
वरदानात् तु रुद्रस्य तपसाराधितं महत् ।
ततः संकम्पते सर्वं त्रैलोक्यं सचराचरं ॥५८॥
देवाश्च कम्पिताः सर्वे लयं नागाश्च संगताः ।
अथ तौ मुनिशार्दूलौ ध्यानयोगादपश्यतां ॥५९॥

पुलस्त्यो गालवश्चैव वारयामासतुर्नृपं ।
सोपालम्भैश्च विविधैर्वाक्यै राक्षससत्तमं ।। ६० ।।
तौ तु कृत्वा परां प्रीतिं नरराक्षसयोस्तदा ।
संप्रस्थितौ सुसंहृष्टौ पथा येनैव चागतौ ।। ६१ ।।

इत्युत्तरकाण्डे मान्धातृयुद्धं नाम
नवविंशः सर्गः ।।

# उत्तरकाण्डं

## XXX.

गताभ्यामथ विप्राभ्यां रावणो राक्षसाधिपः ।
दशयोजनसाहस्रं प्रथमं तु मरुत्पथं ॥ १ ॥
यत्र तिष्ठन्ति नित्यस्था हंसाः सर्वगुणान्विताः ।
अत ऊर्द्ध्वं तु गत्वा वै मरुत्पथमनुत्तमं ॥ २ ॥
दशयोजनसाहस्रं तदेव परिगण्यते ।
तत्र संनिहिता मेघास्त्रिविधा नित्यसंस्थिताः ॥ ३ ॥
आग्नेयाः पक्षिणो ब्राह्म्यास्त्रिविधास्तत्र ते स्थिताः ।
अथ गत्वा तृतीयं तु वायोः पन्थानमुत्तमं ॥ ४ ॥
नित्यं यत्र स्थिताः सिद्धाश्चारणाश्च मनस्विनः ।
दशैव तु सहस्राणि योजनानां तथैव च ॥ ५ ॥
चतुर्थं वायुमार्गं तु शीघ्रं गत्वा ततः परं ।
वसन्ति यत्र नित्यस्था भूतास्तु सविनायकाः ॥ ६ ॥
अथ गत्वा स वै शीघ्रं पञ्चमं वायुगोचरं ।
दशैव तु सहस्राणि योजनानां तथैव च ॥ ७ ॥
गङ्गा यत्र सरिच्छ्रेष्ठा नागा वै कुमुदादयः ।
कुञ्जरास्तत्र तिष्ठन्ति ये तु मुञ्चन्ति शीकरं ॥ ८ ॥
गङ्गातोयेषु क्रीडन्ति पुण्यं वर्षन्ति सर्वशः ।
ततो रविकरभ्रष्टं वायुना पेलवीकृतं ॥ ९ ॥

जलं पुण्यं निपतति हिमवर्षं तु राघव ।
ततो जगाम षष्ठं तु वायुमार्गं महाद्युते ॥ १० ॥
योजनानां सहस्राणि दशैव तु स राक्षसः ।
यत्रास्ते गरुडो नित्यं ज्ञातिबान्धवसत्कृतः ॥ ११ ॥
दशैव तु सहस्राणि योजनानां ततोपरि ।
सप्तमं वायुमार्गं च यत्र ते ऋषयः स्थिताः ॥ १२ ॥
अत ऊर्ध्वं तु गत्वा वै सहस्राणि दशैव तु ।
अष्टमं वायुमार्गं तु यत्र गङ्गा प्रतिष्ठिता ॥ १३ ॥
आकाशगङ्गाविख्याता आदित्यपथसंस्थिता ।
वायुना धार्यमाणा सा महावेगा महास्वना ॥ १४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि चन्द्रमा यत्र तिष्ठति ।
अशीतिं तु सहस्राणि योजनानां प्रमाणतः ॥ १५ ॥
चन्द्रमास्तिष्ठते यत्र ग्रहनक्षत्रसंयुतः ।
शतं शतसहस्राणि रश्मयश्चन्द्रमण्डलात् ॥ १६ ॥
प्रकाशयन्ति लोकांस्तु सर्वसत्त्वसुखावहाः ।
ततो दृष्ट्वा दशग्रीवं चन्द्रमा निर्दहन्निव ॥ १७ ॥
स तु शीताग्निना शीघ्रं प्रादहद्रावणं तदा ।
नासहंस्तस्य सचिवा शीताग्निभयपीडिताः ॥ १८ ॥
रावणं जयशब्देन प्रहस्तोऽथैनमब्रवीत् ।
राजन् शीतेन वध्यामो निवर्ताम इतो वयं ॥ १९ ॥

चन्द्ररश्मिप्रतापेन रक्षसां भयमाविशत् ।
स्वभाव एष राजेन्द्र शीतांशुर्दहनात्मकः ॥ २० ॥
एतच्छ्रुत्वा प्रहस्तस्य रावणः क्रोधमूर्छितः ।
विस्फार्य धनुरुद्यम्य नाराचैस्तं प्रपीडयत् ॥ २१ ॥
अथ ब्रह्मा तदागच्छत् सोमलोकं त्वरान्वितः ।
दशग्रीव महाबाहो साक्षाद्विश्रवसः सुत ॥ २२ ॥
गच्छ शीघ्रमितः सौम्य मा चन्द्रं पीडयस्व वै ।
लोकस्य हितकामो वै द्विजराजो महाद्युतिः ॥ २३ ॥
मन्त्रं च संप्रदास्यामि प्राणात्ययगतिर्यदा ।
यस् त्विमं संस्मरेन्मन्त्रं नासौ मृत्युमवाप्नुयात् ॥ २४ ॥
एवमुक्तो दशग्रीवः प्राञ्जलिर्देवमब्रवीत् ।
यदि तुष्टोऽसि मे देव लोकनाथ महाव्रत ॥ २५ ॥
यदि मन्त्रश्च मे देयो दीयतां मम धार्मिक ।
यं जप्त्वाहं महाभाग सर्वदेवेषु निर्भयः ॥ २६ ॥
असुरेषु च सर्वेषु दानवेषु पतत्रिषु ।
त्वत्प्रसादात् तु देवेश स्यामजेयो न संशयः ॥ २७ ॥
एवमुक्तो दशग्रीवं ब्रह्मा वचनमब्रवीत् ।
प्राणात्ययेषु जप्तव्यो न नित्यं राक्षसाधिप ॥ २८ ॥
अक्षसूत्रं गृहीत्वा तु जपेन्मन्त्रमिमं शुभं ।
जप्त्वा तु राक्षसपते त्वमजेयो भविष्यसि ॥ २९ ॥

अजत्वा राक्षसश्रेष्ठ न ते सिद्धिर्भविष्यति ।
शृणु मन्त्रं प्रवक्ष्यामि येन राक्षसपुङ्गव ॥ ३० ॥
मन्त्रस्य कीर्त्तनादेव प्राप्स्यसे समरे जयं ।
नमस्ते देव देवेश सुरासुरनमस्कृत ॥ ३१ ॥
भूतभव्य महादेव हरिपिङ्गललोचन ।
बालस्त्वं वृद्धरूपी च वैयाघ्रवसनच्छद ॥ ३२ ॥
अर्चनीयोऽसि देव त्वं त्रैलोक्यप्रभुरीश्वरः ।
हरो हरितनेमी च युगान्तकरणोऽनलः ॥ ३३ ॥
गणेशो लोकशम्भुश्च लोकपालो महाबलः ।
महाभागो महाशूली महादंष्ट्रो महेश्वरः ॥ ३४ ॥
कालश्च कालरूपी च नीलग्रीवो महोदरः ।
देवान्तकस्तपोऽन्तश्च पशूनां पतिरव्ययः ॥ ३५ ॥
शूलपाणिर्वृषकेतुर्नेता गोप्ता हरो हरिः ।
जटी मौञ्जी शिखण्डी च मुकुटी च महायशाः ॥ ३६ ॥
भूतेश्वरो गणाध्यक्षः सर्वात्मा सर्वभावनः ।
सर्वगः सर्वकारी च स्रष्टा च गुरुरव्ययः ॥ ३७ ॥
कमण्डलुधरो देवः पिनाकी त्रिशरी तथा ।
माननीयश्च ओङ्कारो वरिष्ठो ज्येष्ठसामगः ॥ ३८ ॥
मृत्युश्च मृत्युभूतश्च पारिपात्रश्च सुव्रतः ।
ब्रह्मचारी गुहावासी वीणापणवतूणवान् ॥ ३९ ॥

अमरो दर्शनीयश्च बालसूर्यनिभस्तथा ।
श्मशानचारी भगवान् उमापतिरनिन्दितः ॥४०॥
भगस्याक्षि निपाती च पूष्णो दशननाशनः ।
ज्वरहन्ता पाशहस्तः प्रलयः काल एव च ॥४१॥
उल्कामुखोऽग्निकेतुश्च मुनिसिद्धो विशाम्पतिः ।
उन्मादो वेपनकरश्चतुर्थो लोकसत्तमः ॥४२॥
वामनो वामदेवश्च प्राच्यदक्षिणवामनः ।
भिक्षुश्च भिक्षुरूपी च त्रिदण्डी जटिलः स्वयं ॥४३॥
शत्रुहस्तप्रविष्टम्भी वसूनां स्तम्भनस्तथा ।
ऋतुर्ऋतुकरः कालो मधुर्मधुकरो वरः ॥४४॥
वानस्पत्यो वाजिसेनो नित्यमाश्रमपूजितः ।
जगद्धाता च कर्ता च पुरुषः शाश्वतो ध्रुवः ॥४५॥
धर्माध्यक्षो विरूपाक्षस्त्रिधर्मो भूतभावनः ।
त्रिनेत्रो बह्विरूपश्च सूर्यायुतसमप्रभः ॥४६॥
देवदेवोऽतिदेवश्च चन्द्राङ्कितजटस्तथा ।
नर्तको लासकश्चैव पूर्णेन्दुसदृशाननः ॥४७॥
ब्रह्मण्यश्च वरेण्यश्च सर्ववीजमयस्तथा ।
सर्वभूतविनोदी च सर्वभूतविमोक्षणः ॥४८॥
मोहनो बन्धनश्चैव सर्वदो निधनोऽव्ययः ।
पुष्पदन्तो विभागश्च मुख्यः सर्वहरस्तथा ॥४९॥

हरिश्मश्रुर्धनुर्धारी भीमो भीमपराक्रमः ।
मया प्रोक्तमिदं पुण्यं नामाष्टशतमुत्तमं ।।५०।।
सर्वपापहरं पुण्यं शरण्यं शरणार्थिनां ।
जप्यमेतद्दशग्रीव कुर्याच्छत्रुविनाशनं ।।५१।।

इत्युत्तरकाण्डे ब्रह्मप्रोक्तो महास्तवो
नाम त्रिंशः सर्गः ।।

# उत्तरकाण्डं

## XXXI.

दत्वा तु रावणस्यैवं वरं स कमलोद्भवः ।
पुनरेवागमत् क्षिप्रं ब्रह्मलोकं सनातनं ॥ १ ॥
रावणोऽपि वरं लब्धा पुनरेवागमत् तथा ।
केनचित् त्वथ कालेन रावणो लोकरावणः ॥ २ ॥
पश्चिमार्णवमागच्छत् सचिवैः सह राक्षसः ।
द्वीपस्थो दृश्यते तत्र पुरुषः पावकप्रभः ॥ ३ ॥
महाजाम्बूनदप्रख्य एक एव व्यवस्थितः ।
दृश्यते भीषणाकारो युगान्तानलसंनिभः ॥ ४ ॥
देवानामिव देवेशो ग्रहाणामिव भास्करः ।
मृगाणां तु यथा सिंहो हस्तिष्वैरावतो यथा ॥ ५ ॥
पर्वतानां यथा मेरुः पारिजातश्च शाखिनां ।
तथा तं पुरुषं दृष्ट्वा स्थितं मध्ये महार्णवे ॥ ६ ॥
अब्रवीत् तं दशग्रीवो युद्धं मे दीयतामिति ।
अभवत् तस्य सा दृष्टिर्ग्रहमाला इव द्रुतं ॥ ७ ॥
दन्तान् संदशतः शब्दो यन्त्रस्येवाभिभिद्यतः ।
जगर्ज चोच्चैर्बलवान् सहामात्यो दशाननः ॥ ८ ॥
स गर्जन् विविधैर्नादैर्लम्बहस्तं भयानकं ।
दंष्ट्रालं विकटं चैव कम्बुग्रीवं महोरसं ॥ ९ ॥

मण्डूककुक्षिं सिंहाक्षं कैलासशिखरोपमं ।
पद्मपादतलं भीमं रक्ततालुकराम्बुजं ॥ १० ॥
महानादं महाकायं मनोऽनिलसमं जवे ।
भीममाबद्धतूणीरं सघण्टाबद्धचामरं ॥ ११ ॥
ज्वालामालापरिक्षिप्तं किङ्किणीकृतनिस्वनं ।
मालया स्वर्णपद्मानां कक्षोद्देशावलम्बया ॥ १२ ॥
ऋग्वेदमिव शोभन्तं पद्ममालाविभूषितं ।
सोऽञ्जनाचलसंकाशः काञ्चनाचलसंनिभः ॥ १३ ॥
प्राहरद्राक्षसपतिः शूलशक्त्यृष्टिपट्टिशैः ।
द्वीपिना स सिंह इव शरभेणेव कुञ्जरः ॥ १४ ॥
सुमेरुरिव नागेन्द्रैर्नदीवेगैरिवार्णवः ।
अकम्पमानः पुरुषो राक्षसं वाक्यमब्रवीत् ॥ १५ ॥
युद्धश्रद्धां हि ते रक्षो नाशयिष्यामि दुर्मते ।
रावणस्य च यो वेगः सर्वलोकभयंकरः ॥ १६ ॥
तथावेगसहस्राणि संश्रितानि तमेव हि ।
धर्मस्तस्य तपश्चैव जगतः सिद्धिहेतुकौ ॥ १७ ॥
ऊरू संश्रित्य तस्याते मन्मथः शिश्नमाश्रितः ।
विश्वे देवाः कटीभागे मरुतो वस्तिशीर्षयोः ॥ १८ ॥
मध्येऽष्टौ वसवस्तस्य समुद्राः कुक्षिसंस्थिताः ।
पार्श्वयोश्च दिशः सर्वाः पर्वसंधिषु मारुतः ॥ १९ ॥

पितरश्चाश्रिताः पृष्ठं हृदयं च पितामहः ।
गोदानानि पवित्राणि भूमिदानानि यानि च ॥ २० ॥
सुवर्णधनदानानि ह्यश्वमेधान्यनुगानि वै ।
हिमवान् हेमकूटश्च मन्दरो मेरुरेव च ॥ २१ ॥
नरं तं तु समाश्रित्य चास्थिभूता व्यवस्थिता: ।
पाणिर्वज्रोऽभवत् तस्य शरीरे द्यौरवस्थिता ॥ २२ ॥
कृकाटिकायां सन्ध्या च जलवाहाश्च ये घनाः ।
बाहू धाता विधाता च तथा विद्याधरादयः ॥ २३ ॥
शेषश्च वासुकिश्चैव विशालाक्ष इरावतः ।
कम्बलाश्वतरौ चोभौ कर्कोटकधनञ्जयौ ॥ २४ ॥
स च घोरविषो नागस्तक्षकः सोपतक्षकः ।
करजानाश्रिताश्चैव विषवीर्यं मुमुक्षवः ॥ २५ ॥
अग्निरास्यमभूत् तस्य स्कन्धौ रुद्रैरधिष्ठितौ ।
पक्षमासर्त्तवश्चैव दंष्ट्रयोरुभयोः स्थिताः ॥ २६ ॥
नासे कुहूरमावास्या तच्छिद्रेषु च वायवः ।
ग्रीवा तस्याभवद्देवी वाणी चापि सरस्वती ॥ २७ ॥
नासत्यौ श्रवणौ चोभौ नेत्रे च शशिभास्करौ ।
वेदाङ्गानि च यज्ञाश्च तारारूपाणि यानि च ॥ २८ ॥
सुवृत्तानि च वाक्यानि तेजांसि च तपांसि च ।
एतानि नररूपस्य तस्य देहाश्रितानि वै ॥ २९ ॥

तेन वज्रप्रभावेण लम्बमानेन लीलया ।
पाणिना पीडितं रक्षो निपपात महीतले ॥ ३० ॥
पतितं राक्षसं दृष्ट्वा विद्राव्य स निशाचरान् ।
ऋग्वेदप्रतिमः सोऽथ पद्ममालाविभूषितः ॥ ३१ ॥
प्रविवेश च पातालं निम्नं पर्वतसंनिभः ।
उत्थाय च दशग्रीव आहूय सचिवान् स्वयं ॥ ३२ ॥
क्व गतः सहसा ब्रूत प्रहस्तशुकसारणाः ।
एवमुक्ता रावणेन राक्षसास्तमथाब्रुवन् ॥ ३३ ॥
प्रविष्टः स नरोऽत्रैव देवदानवदर्पहा ।
अथ संगृह्य वेगेन गरुत्मानिव पन्नगं ॥ ३४ ॥
स तु शीघ्रं विलद्वारं प्रविवेश सुदुर्मतिः ।
संप्रविश्य च तद्द्वारं रावणो निर्भयस्ततः ॥ ३५ ॥
अपश्यत् स नरांस्तत्र नीलाञ्जनचयोपमान् ।
केयूरधारिणः शूरान् रक्तमाल्यानुलेपनान् ॥ ३६ ॥
वरहाटकरत्नाद्यैर्विविधैश्च विभूषितान् ।
दृश्यन्ते तत्र नृत्यन्तस्तिस्रः कोट्यो महात्मनां ॥ ३७ ॥
नित्योत्सवा वीतभया विमलाः पावकप्रभाः ।
क्रीडतः पश्यते तांस्तु रावणो भीमविक्रमः ॥ ३८ ॥
द्वारस्थो रावणस्तत्र तिस्रः कोटीर्विनिर्भयः ।
यथा दृष्टः स तु नरस्तुल्यांस्तानपि सर्वशः ॥ ३९ ॥

एकवर्णानेकवेषानेकरूपान् महौजसः ।
चतुर्भुजान् महोत्साहांस्तत्रापश्यत् स राक्षसः ॥४०॥
तान् दृष्ट्वाथ दशग्रीव ऊर्द्ध्वरोमा बभूव ह ।
स्वयम्भुवा दत्तवरस्ततः शीघ्रं विनिर्ययौ ॥४१॥
अथापश्यत् परं तत्र पुरुषं शयने स्थितं ।
पाण्डरेण महार्हेण शयनासनवेश्मना ॥४२॥
शेते स पुरुषस्तत्र पावकेनावगुण्ठितः ।
दिव्यस्रगनुलेपा च दिव्याभरणभूषिता ॥४३॥
दिव्याम्बरधरा साध्वी त्रैलोक्यस्यैव भूषणं ।
बालव्यजनहस्ता च देवी तत्र व्यवस्थिता ॥४४॥
लक्ष्मीरिव सपद्मा वै भ्राजते लोकसुन्दरी ।
प्रविष्टः स तु रक्षेन्द्रो दृष्ट्वा तां चारुहासिनीं ॥४५॥
जिघृक्षुः सहसा साध्वीं सिंहासनसमाश्रितां ।
विना तु सचिवैस्तत्र रावणो दुर्मतिस्तदा ॥४६॥
हस्ते गृहीतुं तां चापि मन्मथेन वशीकृतः ।
सुप्तमाशीविषं यद्वद्रावणः कालचोदितः ॥४७॥
अथ सुप्तो महाबाहुः पावकेनावगुण्ठितः ।
गृहीतुकामं तं ज्ञात्वा व्यपविद्धपटं तदा ॥४८॥
जहासोच्चैर्भृशं देवस्तं दृष्ट्वा राक्षसाधिपं ।
तेजसा सहसा दीप्तो रावणो लोकरावणः ॥४९॥

कृत्तमूलो यथा शाखी निपपात महीतले ।
पतितं राक्षसं दृष्ट्वा वचनं चेदमब्रवीत् ॥५०॥
उत्तिष्ठ राक्षसश्रेष्ठ मृत्युस्ते नाद्य विद्यते ।
प्रजापतिवरो रक्ष्यस्तेन जीवसि राक्षस ॥५१॥
गच्छ रावण विश्रब्धो नाधुना मरणं तव ।
लब्धसंज्ञो मुहूर्त्तेन रावणो भयमाविशत् ॥५२॥
एवमुक्तस्तदोत्थाय रावणो देवकण्टकः ।
लोमहर्षणमापन्नो ह्यब्रवीत् तं महाद्युतिं ॥५३॥
को भवान् शौर्यसंपन्नो युगान्तानलसन्निभः ।
ब्रूहि त्वं को भवान् देव कुतो भूत्वा व्यवस्थितः ॥५४॥
एवमुक्तः स तेनाथ रावणेन दुरात्मना ।
प्रत्युवाच हसन् देवो मेघगम्भीरया गिरा ॥५५॥
किं ते मया दशग्रीव बध्योऽसि न चिरान्मम ।
एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् ॥५६॥
प्रजापतेस्तु वचनान्नाहं मृत्युपथं गतः ।
न स जातो जनिष्यो वा मम तुल्यः सुरेष्वपि ॥५७॥
प्रजापतिवरं यो हि लङ्घयेद्वीर्यमाश्रितः ।
न तत्र परिहारोऽस्ति प्रयत्नश्चापि दुर्बलः ॥५८॥
न तं पश्यामि त्रैलोक्ये यो मे कुर्याद्वरं वृथा ।
अमरोऽहं सुरश्रेष्ठ तेन मां नाविशद्भयं ॥५९॥

अथापि च भवेन्मृत्युस्त्वद्धस्तान्नान्यतः प्रभो ।
यशस्यं श्लाघनीयं च त्वद्धस्तान्मरणं मम ॥ ६० ॥
अथास्य गात्रे संपश्यद्रावणो भीमविक्रमः ।
तस्य देवस्य सकलं त्रैलोक्यं सचराचरं ॥ ६१ ॥
आदित्या मरुतः साध्या वसवोऽथाश्विनावपि ।
रुद्राश्च पितरश्चैव यमो वैश्रवणस्तथा ॥ ६२ ॥
समुद्रा गिरयो नद्यो वेदा विद्यास्त्रयोऽग्नयः ।
ग्रहास्तारागणा व्योम सिद्धगन्धर्वचारणाः ॥ ६३ ॥
महर्षयो वेदविदो गरुडोऽथ भुजङ्गमाः ।
ये चान्ये देवता यक्षाः संस्थिता दैत्यराक्षसाः ॥ ६४ ॥
गात्रेषु शयनस्थस्य दृश्यन्ते सूक्ष्ममूर्त्तयः ।
आह रामोऽथ धर्मात्मा ह्यगस्त्यं मुनिसत्तमं ॥ ६५ ॥
द्वीपस्थः पुरुषः कोऽसौ तिस्रः कोट्यस्तु काश्च ताः ।
शयानः पुरुषः कोऽसौ दैत्यदानवदर्पहा ॥ ६६ ॥
रामस्य वचनं श्रुत्वा अगस्त्यो वाक्यमब्रवीत् ।
श्रूयतामभिधास्यामि देवदेवं सनातनं ॥ ६७ ॥
भगवान् कपिलो नाम द्वीपस्थो नर उच्यते ।
ये तु नृत्यन्ति वै तत्र सुरास्ते तस्य धीमतः ॥ ६८ ॥
तुल्यतेजःप्रभावास्ते कपिलस्य नरस्य वै ।
नासौ क्रुद्धेन दृष्टस्तु राक्षसः पापनिश्चयः ॥ ६९ ॥

न बभूव तदा तेन भस्मसान्नाम रावणः ।
स्विन्नगात्रो नगप्रख्यो रावणः पतितो भुवि ॥ ७० ॥
अथ दीर्घेण कालेन लब्धसंज्ञः स राक्षसः ।
आजगाम महौजाश्च यत्र ते सचिवाः स्थिताः ॥ ७१ ॥

इत्युत्तरकाण्डे महापुरुषदर्शनं नाम
एकात्रिंशः सर्गः ॥

# उत्तरकाण्डं

## XXXII.

निवर्तमानः संहृष्टो रावणः स दुरात्मवान् ।
जह्रे पथि नरेन्द्रर्षिदैत्यगन्धर्वकन्यकाः ॥ १ ॥
दर्शनीयां हि यां कन्यां रक्षः स्त्रीं वाथ पश्यति ।
हत्वा बन्धुजनं तस्या विमाने तां रुरोध सः ॥ २ ॥
एवं पन्नगकन्याश्च राक्षसासुरमानुषीः ।
यक्षदानवकन्याश्च विमाने सोऽध्यरोपयत् ॥ ३ ॥
ता हि सर्वाः समं दुःखान्मुमुचुर्नेत्रजं जलं ।
तुल्यमग्न्यर्चिषां तत्र शोकाग्निभयसंभवं ॥ ४ ॥
ताभिः सर्वानवद्याभिर्नदीभिरिव सागरः ।
आपूरितं विमानं तु शोकजैरश्रुबिन्दुभिः ॥ ५ ॥
नागगन्धर्वकन्याश्च महर्षितनयाश्च याः ।
दैत्यदानवकन्याश्च विमाने शतशोऽरुदन् ॥ ६ ॥
दीर्घकेश्यः सुचार्वङ्ग्यः पूर्णचन्द्रनिभाननाः ।
पीनस्तनतटा मध्ये वज्रवेदिसमप्रभाः ॥ ७ ॥
रथकूबरसंकाशैः श्रोणीदेशैर्मनोहराः ।
स्त्रियः सुराङ्गनाप्रख्यास्तप्तकाञ्चनसप्रभाः ॥ ८ ॥
शोकदुःखभयत्रस्ता विह्वलाश्च सुमध्यमाः ।
तासां निश्वाससवातेन सर्वतः संप्रदीपितं ॥ ९ ॥

अम्बरीषमिवाभाति दीप्तिमत् पुष्पकं तदा ।
दशग्रीववशं प्राप्तास्तास्तु शोकाकुलाः स्त्रियः ॥ १० ॥
दीनवक्त्रेक्षणाः श्यामा मृग्यः सिंहवशा इव ।
काचित् व्यचिन्तयत् तत्र किन्नु मां भक्षयिष्यति ॥ ११ ॥
काचिद्दध्यौ सुदुःखार्त्ता अपि मां मारयेदयं ।
इति मातृः पितृन् स्मृत्वा भर्तॄन् भ्रातृंस्तथैव च ॥ १२ ॥
दुःखशोकसमाविष्टा विलेपुः सहिताः स्त्रियः ।
कथं नु खलु मे पुत्रो भविष्यति मया विना ॥ १३ ॥
कथं माता कथं भ्राता निमग्नाः शोकसागरे ।
हा कथं नु भविष्यामि भर्तुस्तस्मादहं विना ॥ १४ ॥
मृत्यो प्रसादयामि त्वां नय मां दुःखभागिनीं ।
किन्नु तद्दुष्कृतं कर्म पुरा देहान्तरे कृतं ॥ १५ ॥
येन स्मो दुःखिताः सर्वाः पतिताः शोकसागरे ।
न खल्विदानीं पश्यामो दुःखस्यास्यान्तमात्मनः ॥ १६ ॥
अहो धिङ्मानुषं लोकं न खल्वस्त्यपरोऽधमः ।
यद्दुर्बला बलवता बान्धवा रावणेन नः ॥ १७ ॥
सूर्येणोदयता काले नक्षत्राणीव नाशिताः ।
अहो सुबलवद्रक्षो वधोपायेषु रज्यते ॥ १८ ॥
अहो दुर्वृत्तमास्थाय नात्मानं वै जुगुप्सते ।
सर्वथासदृशस्तावद्विक्रमोऽस्य दुरात्मनः ॥ १९ ॥

इदं त्वसदृशं कर्म परदाराभिमर्षणं ।
यस्मादेष परस्त्रीषु रमते राक्षसाधमः ॥ २० ॥
तस्माद्धि स्त्रीकृतेनैव बधं प्राप्स्यति दुर्मतिः ।
शप्तः स्त्रीभिः स तु समं हृतौजा इव निष्प्रभः ॥ २१ ॥
पतिव्रताभिः साध्वीभिर्बभूव विमना इव ।
एवं विलपितं तासां शृण्वन् राक्षसपुङ्गवः ॥ २२ ॥
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ।
एतस्मिन्नन्तरे घोरा राक्षसी कामरूपिणी ॥ २३ ॥
सहसा पतिता भूमौ भगिनी रावणस्य सा ।
तां स्वसारं समुत्थाप्य रावणः परिशान्त्वयन् ॥ २४ ॥
अब्रवीत् किमिदं भद्रे वक्तुकामासि मां द्रुतं ।
सा बाष्पपरिरुद्धाक्षी रक्ताक्षी वाक्यमब्रवीत् ॥ २५ ॥
कृतास्मि विधवा राजंस्त्वया बलवता बलात् ।
ये ते राजंस्त्वया वीर्याद्दैत्या विनिहता रणे ॥ २६ ॥
कालकञ्जा इति ख्याताः शतानि च सहस्रशः ।
प्राणेभ्योऽपि गरीयान् मे तत्र भर्ता महाबलः ॥ २७ ॥
सोऽपि त्वया हतस्तात रिपुणा भ्रातृगन्धिना ।
तत् त्वयास्मि हता राजन् स्वयमेवेह बन्धुना ॥ २८ ॥
राजन् वैधव्यशब्दं च भोक्ष्यामि त्वत्कृते ह्यहं ।
ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि ॥ २९ ॥

स त्वया निहतो युद्धे स्वयमेव न लज्जसे ।
एवमुक्तस्तया रक्षो भगिन्या क्रोशमानया ॥ ३० ॥
अब्रवीत् सान्त्वयित्वा तां सामपूर्वमिदं वचः ।
अलं वत्से रुदित्वा ते न भेतव्यं च सर्वशः ॥ ३१ ॥
दानमानप्रसादैस्त्वां तोषयिष्यामि यत्नतः ।
युद्धे प्रमत्तो व्याक्षिप्तो जयाकाङ्क्षी क्षिपन् शरान् ॥ ३२ ॥
नाहमज्ञासिषं युध्यन् स्वान् परान् वापि संयुगे ।
जामातरं न जाने स्म प्रहरन् युद्धदुर्मदः ॥ ३३ ॥
तेनासौ निहतः संख्ये मया भर्ता तव स्वसः ।
अस्मिन् काले तु यत् प्राप्तं तत् करिष्यामि ते हितं ॥ ३४ ॥
भ्रातुरैश्वर्यसंस्थस्य खरस्य वस पार्श्वतः ।
चतुर्दशानां भ्राता ते सहस्राणां भविष्यति ॥ ३५ ॥
प्रभुः प्रयाणे याने च राक्षसानां महौजसां ।
तत्र मातृष्वसेयस्ते भ्रातायं वै खरः प्रभुः ॥ ३६ ॥
भविष्यति तवादेशं सदा कुर्वन् निशाचरः ।
शीघ्रं गच्छत्वयं शूरो दण्डकं परिरक्षितुं ॥ ३७ ॥
दूषणोऽस्य बलाध्यक्षो भविष्यति महाबलः ।
स हि शप्तो वनोद्देशः क्रुद्धेनोशनसा पुरा ॥ ३८ ॥
राक्षसानामधिवासो भवेति सुमहात्मनां ।
तत्र ते वचनं शूरः करिष्यति सदा खरः ॥ ३९ ॥

रक्षसां कामरूपाणां प्रभुरेष भविष्यति ।
एवमुक्त्वा दशग्रीवः सैन्यमस्यादिदेश ह ॥४०॥
चतुर्दशसहस्राणि रक्षसां वीर्यशालिनां ।
स तैः परिवृतः सर्वै राक्षसैर्भीमविक्रमैः ॥४१॥
समागच्छत् खरः शीघ्रं दण्डकानकुतोभयः ।
स तत्र कारयामास राज्यं निहतकण्टकं ।
सा च शूर्पणखा तत्र न्यवसद्दण्डके वने ॥४२॥

इत्युत्तरकाण्डे स्त्रीपरिदेवितं नाम
द्वात्रिंशः सर्गः ॥

# उत्तरकाण्डं

## XXXIII.

स तु दृष्ट्वा दशग्रीवो बलं घोरं खरस्य तत् ।
भगिनीं च समाश्वास्य हृष्टः स्वस्थतरोऽभवत् ॥ १ ॥
ततो निकुम्भिला नाम लङ्कोपवनमुत्तमं ।
तद्राक्षसेन्द्रो बलवान् प्रविवेश सहानुगः ॥ २ ॥
ततो यूपशताकीर्णः सौम्यचैत्योपशोभितः ।
ददृशे विष्ठितो यज्ञः श्रिया संप्रज्वलन्निव ॥ ३ ॥
ततः कृष्णाम्बरधरं कमण्डलुशिखिध्वजं ।
ददर्श स्वसुतं तत्र मेघनादं भयावहं ॥ ४ ॥
तं समासाद्य लङ्केशः परिष्वज्य च बाहुभिः ।
अब्रवीत् किमिदं वत्स वर्तसे ब्रूहि तत्त्वतः ॥ ५ ॥
उशनास्त्वब्रवीत् तूर्णं गुरुर्यज्ञसमृद्धये ।
रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः ॥ ६ ॥
प्रियं भवतु ते राजन् श्रूयतां वचनं मम ।
यज्ञास्ते सप्तपुत्रेण प्राप्ताः सुबहुविस्तराः ॥ ७ ॥
अग्निष्टोमोऽश्वमेधश्च तथा बहुसुवर्णकः ।
राजसूयस्तथा यज्ञो गोसवो वैष्णवस्तथा ॥ ८ ॥
माहेश्वरे प्रवृत्ते तु यज्ञे पुम्भिः सुदुर्लभे ।
वरांस्ते लब्धवान् पुत्रः साक्षात् पशुपतेरिह ॥ ९ ॥

कामगं स्यन्दनं दिव्यमन्तरीक्षचरं शुभं।
मायां च तामसीं नाम तमसः प्रभवो यतः ॥१०॥
एतया किल संग्रामे मायया राक्षसेश्वर।
प्रयुक्तया गतिः शक्या न हि वेत्तुं सुरासुरैः ॥११॥
अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयं।
अस्त्राणि हि समग्राणि शत्रुविध्वंसनानि च ॥१२॥
एवं सर्वान् वरान् लब्ध्वा पुत्रस्तेऽयं दशानन।
महायज्ञसमाप्तौ च त्वत्प्रतीक्षः स्थितो विभो ॥१३॥
ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतं।
पूजिताः शत्रवो यस्मै द्रव्यैरिन्द्रपुरोगमाः ॥१४॥
एहीदानीं कृतं यत् ते न कर्तव्यमजानता।
आजेहि सौम्य गच्छामः स्वमेव भवनं प्रति ॥१५॥
ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः।
स्त्रियोऽवतारयामास सर्वास्ता बाष्पगद्गदाः ॥१६॥
दैत्योरगानां रत्नानि यान्यथो यक्षरक्षसां।
नानाभरणयुक्तानि भासमानानि तेजसा ॥१७॥
विभीषणोऽथ ता दृष्ट्वा नारीः शोकसमाकुलाः।
तासां तु वचनं श्रुत्वा धर्मात्मा वाक्यमब्रवीत् ॥१८॥
ईदृशैस्ते समाचारैः कुलात्मगुणनाशनैः।
धर्षणां प्रापिता राजन् समं हि विनिपातनं ॥१९॥

परा हि धर्षयित्वेमास्त्वया नीता वराङ्गनाः ।
तव चाक्रम्य मधुना राजन् कुम्भीनसी हृता ॥ २० ॥
रावणस्त्वब्रवीत् तत्र किमिदं नाधिगम्यते ।
को वायं यस्त्वयाख्यातो मधुरित्येव चोच्यते ॥ २१ ।
ततो विभीषणः क्रुद्धो भ्रातरं वाक्यमब्रवीत् ।
श्रूयतामस्य पापस्य कर्मणः फलमागतं ॥ २२ ॥
योऽसौ मातामहोऽस्माकं वृद्धो वै रजनीचरः ।
माल्यवान् नाम विख्यातो ज्येष्ठो भ्राता सुमालिनः ॥ २३ ॥
तातो ज्येष्ठो जनन्या हि योऽसावस्माकमार्यकः ।
तस्य कुम्भीनसी नाम दुहितुर्दुहिताऽभवत् ॥ २४ ॥
मातुःष्वसा हि साऽस्माकं जाता पुष्पोत्कटा यतः ।
भ्रातॄणां धर्मतोऽस्माकं सा शुभा भवति स्वसा ॥ २५ ॥
सा हृता मधुना राजन्नसुरेण दुरात्मना ।
यज्ञप्रवृत्ते ते पुत्रे मयि चान्तर्जलोषिते ॥ २६ ॥
निहत्य राक्षसश्रेष्ठानमात्यान् वल्लभांस्तव ।
धर्षयित्वा हृता राजन् गुप्ताप्यन्तःपुरे तव ॥ २७ ॥
श्रुत्वाप्येतन्मया क्षान्तं पूर्वमेव हतो न सः ।
यस्मादवश्यं दातव्या कन्यान्यस्मै स्वबन्धुभिः ॥ २८ ॥
तदेतत् कर्मणस्तस्य पापस्य फलमागतं ।
अस्मिन्नेव तु संप्राप्तं लोके विदितमस्तु ते ॥ २९ ॥

ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः ।
कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः ॥ ३० ॥
इन्द्रजित् कुम्भकर्णश्च ये च मुख्या निशाचराः ।
नानाप्रहरणाः सर्वे वाहनेष्वधिरोहत ॥ ३१ ॥
अद्य तं समरे हत्वा मधुं रावणनिर्भयं ।
इन्द्रलोकं गमिष्यामि युद्धाकाङ्क्षी सुहृद्वृतः ॥ ३२ ॥
ततो निर्जित्य त्रिदिवं वशं कृत्वा पुरन्दरं ।
निर्वृतो विचरिष्यामि त्रैलोक्यैश्वर्यदर्पितः ॥ ३३ ॥
अक्षौहिणीसहस्राणि तत्र चत्वारि रक्षसां ।
नानायुधानां हृष्टानां प्रययुर्युद्धकाङ्क्षिणां ॥ ३४ ॥
मेघनादस्तु सेनाग्रे सैनिकः प्रययौ तदा ।
रावणपृष्ठतो वीरः कुम्भकर्णश्च राक्षसः ॥ ३५ ॥
विभीषणस्तु धर्मात्मा लङ्कायां धर्ममाचरत् ।
शेषाः सर्वे महावेगा ययुर्मधुवनं प्रति ॥ ३६ ॥
रथैर्नागैर्हयैरुष्ट्रैः खरैश्चैव महारथैः ।
राक्षसाः प्रययुः सर्वे कृत्वाकाशं निरन्तरं ॥ ३७ ॥
दैत्याश्च बहवस्तत्र कृतवैराः सुरैः सह ।
रावणं वीक्ष्य गच्छन्तं ते चाप्यनुसमीयिरे ॥ ३८ ॥
स तु गत्वा मधुपुरं प्रविश्य च दशाननः ।
नापश्यत् तं मधुं तत्र भगिनीमेव चैक्षत ॥ ३९ ॥

सा च प्रह्वाञ्जलिर्भूत्वा शिरसा पादयोर्गता ।
तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा ॥ ४० ॥
तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ।
रावणो राक्षसश्रेष्ठः किं च वै ते करोम्यहं ॥ ४१ ॥
साब्रवीद्यदि मे राजन् प्रसन्नस्त्वं दशानन ।
भर्तारं न ममेहाद्य हन्तुमर्हसि मानद ॥ ४२ ॥
सत्यवाग् भव राजेन्द्र याचमानामवेक्ष्य मां ।
त्वयोक्तास्मि महाबाहो न भेतव्यमिति प्रभो ॥ ४३ ॥
रावणोऽथाब्रवीद्धृष्टः स्वसारमभितः स्थितां ।
क्व ते भर्ता गतो भद्रे तन्मे शीघ्रं निवेदय ॥ ४४ ॥
तेन सार्धं प्रयास्यामि सुराणां विजयाय वै ।
तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात् ॥ ४५ ॥
शयने तं प्रसुप्तं तु समुत्थाप्य तदासुरं ।
अब्रवीत् संप्रहृष्टा सा राक्षसी सुविचक्षणा ॥ ४६ ॥
एष प्राप्तो दशग्रीवो भ्राता मम निशाचरः ।
देवलोकजयाकाङ्क्षी सहायं त्वां वृणोति हि ॥ ४७ ॥
तदस्य त्वं सहायार्थं रक्षः संबन्धिनो व्रज ।
स्निग्धस्य भजमानस्य युक्तमर्थाय कल्पितं ॥ ४८ ॥
तस्यास्तद्वचनं श्रुत्वा तथेत्याह स तां मधुः ।
ददर्श राक्षसश्रेष्ठं यथान्यायमुपेत्य सः ॥ ४९ ॥

पूजयामास धर्मेण रावणं राक्षसेश्वरं ।
प्राप्य पूजां दशग्रीवो मधुवेश्मनि वीर्यवान् ॥५०॥
उषित्वैकां निशां तत्र गमनायोपचक्रमे ।
ततः कैलासमासाद्य शैलं वैश्रवणालयं ।
राक्षसेन्द्रो महेन्द्राभःससैन्यः समुपाविशत् ॥५१॥

इत्युत्तरकाण्डे मधुपुरगमनं नाम
त्रयस्त्रिंशः सर्गः ॥

# उत्तरकाण्डं

## XXXIV.

स तु तत्र दशग्रीवः सह सैन्येन वीर्यवान् ।
अस्तं प्राप्ते दिनकरे निवासं समरोचयत् ॥ १ ॥
उदिते विमले चन्द्रे सवितुस्तुल्यवर्चसि ।
प्रसुप्ते च महासैन्ये नानाप्रहरणायुधे ॥ २ ॥
रावणः सुमहावीर्यो निषण्णः शैलमूर्धनि ।
अपश्यच्च बहून् भावान् प्रदोषे विमले गिरौ ॥ ३ ॥
कर्णिकारवनैर्दिव्यैः कदम्बगहनैस्तथा ।
पद्मिनीभिः सरिद्भिश्च मन्दाकिन्यादिभिर्युते ॥ ४ ॥
प्रववौ च सुखो वायुः पुष्पगन्धवहः शुचिः ।
तस्मिन् गिरिवरे रम्ये चन्द्रपादोपशोभिते ॥ ५ ॥
घण्टानामिव सन्नादः शुश्रुवे मधुरस्वनः ।
गायन्तीनां नृत्यन्तीनां गन्धर्वाप्सरसां प्रभो ॥ ६ ॥
ववृषुः पुष्पवर्षाणि नगाः पवनघूर्णिताः ।
वासयन्तोऽथ शैलं तं मधुमाधवगन्धिनः ॥ ७ ॥
स तु पुष्पसमृद्ध्या च शिशिरस्यानिलस्य च ।
प्रवृत्तायां रजन्यां तु चन्द्रस्योदयनं प्रति ॥ ८ ॥
रावणः सुमहावीर्यः काममोहवशं गतः ।
विनिश्वस्य विनिश्वस्य चन्द्रं मुहुरुदैक्षत ॥ ९ ॥

एतस्मिन्नन्तरे राम दिव्यमाल्यानुलेपना ।
सर्वाप्सरोवरा रम्भा गच्छन्ती तेन लक्षिता ॥ १० ॥
कृतैर्विशेषकैर्गात्रैः सर्वर्तुकुसुमोज्ज्वलैः ।
बिभ्रती कान्तिमद्रूपं कान्ता कान्तिमतीं श्रियं ॥ ११ ॥
नीलतोयदवर्णेन सा पटेनावगुण्ठिता ।
वक्त्रमस्याः शशिप्रख्यं भ्रुवौ चापनिभे शुभे ॥ १२ ॥
ऊरू करिकराकारौ करौ पल्लवकोमलौ ।
गात्रं चामीकरप्रख्यं श्रोणी पुलिनविस्तृता ॥ १३ ॥
पादावप्यरविन्दाभावङ्गुली शुभलक्षणा ।
रुते वीणा गतौ हंसी कुन्दपुष्पनिभा द्विजाः ॥ १४ ॥
ईदृशामप्युत्तमस्त्रीणां स्वर्गेऽपि वरवर्णिनी ।
बभासे श्रीर्द्वितीया सा कृता श्रीरिव रूपिणी ॥ १५ ॥
सैन्यमध्येन सा रम्भा शीघ्रं गङ्गेव गच्छती ।
तां समुत्थाय लङ्केशः कामवाणबलार्दितः ॥ १६ ॥
करे गृहीत्वा सव्रीडां वदनं वीक्ष्य सोऽब्रवीत् ।
क्व गच्छसि वरारोहे कां सिद्धिं भजसे स्वयं ॥ १७ ॥
कस्याभ्युदयकालोऽद्य यस्त्वां समुपभोक्ष्यते ।
मद्विशिष्टतरः कोऽन्य इन्द्रो विष्णुरथाश्विनौ ॥ १८ ॥
गच्छसि त्वमतिक्रम्य यन्मां तत् ते न शोभनं ।
विश्रम त्वं वरारोहे शिलातलमिदं शुभं ॥ १९ ॥

त्रिषु लोकेषु न ह्यस्ति यो मे तुल्यः पराक्रमे ।
तदेव प्राञ्जलिः प्रह्वो याचते त्वां दशाननः ॥ २० ॥
यः प्रभुः संविभक्ता च त्रैलोक्यस्य भजस्व मां ।
एवमुक्ता तु सा रम्भा वेपमानाब्रवीद्वचः ॥ २१ ॥
स्नुषाहं तव मा चैवं भाषिष्ठास्त्वं हि मे गुरुः ।
एवमुक्तो राक्षसेन्द्रः प्रत्युवाच शुभाननां ॥ २२ ॥
किं त्वं सुतस्य मे भार्या येन मे भवसि स्नुषा ।
बाढमित्येव तं रम्भा प्रत्युवाच शुभानना ॥ २३ ॥
धर्मतस्ते सुतस्याहं भार्या राक्षसपुङ्गव ।
पुत्रः प्रियतरः प्राणैर्भ्रातुर्वैश्रवणस्य ते ॥ २४ ॥
ख्यातो यस्त्रिषु लोकेषु नलकूवर इत्युत ।
धर्मतो यो भवेद्विप्रः क्षत्रियो वीर्यतो भवेत् ॥ २५ ॥
क्रोधेन योऽग्निना तुल्यः क्षान्त्या च वसुधोपमः ।
तस्यास्मि कृतसङ्केता लोकपालसुतस्य वै ॥ २६ ॥
तमेव च समुद्दिश्य विभूषणमिदं कृतं ।
यथा तस्माद्विनान्यत्र भावो मे न प्रतिष्ठति ॥ २७ ॥
तेन सत्येन मां राजन् मोक्तुमर्हस्यरिन्दम ।
स सम्प्रति हि धर्मात्मा मत्प्रतीक्षोऽवतिष्ठते ॥ २८ ॥
तन्न विघ्नं सुतस्येह कर्तुमर्हसि मुञ्च मां ।
सद्भिराचरितं मार्गं गच्छ राक्षसपुङ्गव ॥ २९ ॥

त्वं मया माननीयो हि पालनीया त्वयाप्यहं ।
एवंप्रकारान् सुबहून् याचमानां तपस्विनीं ॥३०॥
निर्भर्त्स्य वेपमानां तां प्रगृह्य च बलाद्बली ।
काममोहपरीतात्मा मैथुनायोपचक्रमे ॥३१॥
सा विमुक्ता ततो रम्भा भ्रष्टमाल्यविभूषणा ।
गजेन्द्राक्रीडमथिता वापीवाकुलतां गता ॥३२॥
लुलितालककेशान्ता करवेपितपल्लवा ।
पवनेन विधूतेव लता कुसुमशोभिता ॥३३॥
लज्जया वेपमानाथ रम्भा कृतकराञ्जलिः ।
पतिता शिरसा गत्वा यत्र वैश्रवणात्मजः ॥३४॥
तदवस्थां च तां दृष्ट्वा महात्मा नलकूबरः ।
अब्रवीत् किमिदं भद्रे पादयोः पतितासि मे ॥३५॥
सा तु निश्वसती तत्र वेपमाना कृताञ्जलिः ।
तस्य सर्वं यथावृत्तमाख्यातुमुपचक्रमे ॥३६॥
एष एव दशग्रीवः प्राप्तो गन्तुं त्रिपिष्टपं ।
तेन सैन्यसहायेन निःशेषं परिगम्यते ॥३७॥
आयान्ती तेन दृष्टास्मि त्वत्सकाशमरिन्दम ।
गृहीत्वा चैव पृष्टाहं कस्य त्वमिति रक्षसा ॥३८॥
मया तु सत्यं कथितं पृच्छतो रावणस्य हि ।
काममोहात् तु तत् सर्वं न कृतं तेन मे वचः ॥३९॥

याच्यमानेन च मया स्नुषा तेऽहमिति प्रभो ।
तत् सर्वं पृष्ठतः कृत्वा बलात् तेनास्मि धर्षिता ॥ ४० ॥
एतं त्वमपराधं मे क्षन्तुमर्हसि सुव्रत ।
न हि तुल्यं बलं सौम्य स्त्रियाश्च पुरुषस्य च ॥ ४१ ॥
श्रुत्वा तद्वचनं क्रुद्धस्तदा वैश्रवणात्मजः ।
धर्षणां तां परां श्रुत्वा ध्यानं संप्रविवेश ह ॥ ४२ ॥
गुरोस्तत् कर्म विज्ञाय तदा वैश्रवणात्मजः ।
मुहूर्त्तात् क्रोधताम्राक्षस्तोयं जग्राह पाणिना ॥ ४३ ॥
गृहीत्वा सलिलं दिव्यमुपस्पृश्य यथाविधि ।
सापमुत्सृजते तस्य रावणस्य दुरासदं ॥ ४४ ॥
अकामा तेन यस्मात् त्वं बलाद्भद्रे प्रधर्षिता ।
तस्मात् स युवतीः सर्वा नाकामा धर्षयिष्यति ॥ ४५ ॥
यदा त्वकामां कामार्त्तो धर्षयिष्यति योषितं ।
तदास्य सप्तधा मूर्द्धा स्फुटिष्यति न संशयः ॥ ४६ ॥
तस्मिन् प्रमुक्ते शापे तु ज्वलिताग्निसमप्रभे ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्युता ॥ ४७ ॥
ब्रह्मणा च विमुक्तोऽत्र हासस्तुष्टाश्च देवताः ।
ज्ञात्वा लोकगतीः सर्वास्तस्य मृत्युं च रक्षसः ॥ ४८ ॥
ज्ञात्वा च स दशग्रीवस्तं शापं लोमहर्षणं ।
नारीषु मैथुनीभावं नाकामास्वभ्यवर्तयत् ॥ ४९ ॥

# उत्तरकाण्डं

## XXXV.

कैलासं लङ्घयित्वा तु ससैन्यबलवाहनः ।
आससाद महातेजा इन्द्रलोकं दशाननः ॥ १ ॥
तस्य राक्षससैन्यस्य समन्तादुपयास्यतः ।
देवलोके बभौ शब्दो भिद्यमानार्णवोपमः ॥ २ ॥
श्रुत्वा तु रावणं प्राप्तमिन्द्रश्चलित आसनात् ।
देवानथाब्रवीत् तत्र सर्वानेव समागतान् ॥ ३ ॥
आदित्यांश्च वसून् रुद्रान् साध्यांश्च समरुद्गणान् ।
सज्जीभवत युद्धार्थं रावणस्य दुरात्मनः ॥ ४ ॥
एवमुक्तास्तु शक्रेण देवाः शक्रसमा युधि ।
सन्नह्यन्त महासत्त्वा युद्धश्रद्धासमन्विताः ॥ ५ ॥
स तु दीनः परित्रस्तो महेन्द्रो रावणं प्रति ।
विष्णोः समीपमागत्य वाक्यमेतदुवाच ह ॥ ६ ॥
विष्णो कथं करिष्यामि रावणं राक्षसं प्रति ।
अहोऽतिबलवद्रक्षो युद्धार्थमभिवर्तते ॥ ७ ॥
वरप्रदानाद्बलवान् न खल्वन्येन हेतुना ।
तत् तु सत्यं वचः कार्यं यदुक्तं पद्मयोनिना ॥ ८ ॥
तद्यथा नमुचिर्वृत्रो बलिर्नरकसम्बरौ ।
त्वन्मतं समवष्टभ्य मया दग्धास्तथा कुरु ॥ ९ ॥

न ह्यन्यो देव देवेश वर्तते मधुसूदन ।
गतिः परायणं चापि त्रैलोक्ये सचराचरे ॥ १० ॥
त्वं हि नारायणः श्रीमान् पद्मनाभः सनातनः ।
त्वयेमे स्थापिता लोकाः शक्रश्चाहं सुरेश्वरः ॥ ११ ॥
तदाचक्ष्व यथातत्वं देवदेव मम स्वयं ।
अपि चक्रसहायस्त्वं योत्स्यसे रावणं प्रति ॥ १२ ॥
एवमुक्तः स शक्रेण देवो नारायणः प्रभुः ।
अब्रवीन्न परित्रासः कर्तव्यः श्रूयतां च मे ॥ १३ ॥
न तावदेष दुष्टात्मा शक्यो जेतुं सुरासुरैः ।
हन्तुं वापि समासाद्य वरगुप्तः स्वयम्भुवः ॥ १४ ॥
सर्वथा तु महत् कर्म करिष्यति बलोत्कटः ।
राक्षसः पुत्रसहितो दृष्टमेतन्न संशयः ॥ १५ ॥
यत् तु मां त्वमभाषिष्ठा युध्यस्वेति सुरेश्वर ।
नाद्य तं प्रतियोत्स्येऽहं रावणं राक्षसं युधि ॥ १६ ॥
नाहत्वा समरे शत्रुं विष्णुः प्रतिनिवर्तते ।
दुर्लभश्चैष कामोऽद्य वरगुप्तात् तु रावणात् ॥ १७ ॥
प्रतिजाने तु देवेन्द्र त्वत्समीपे शतक्रतो ।
भवितास्मि यथास्याहं रक्षसो मृत्युकारणं ॥ १८ ॥
अहमेनं निहन्तास्मि रावणं सपुरःसरं ।
देवता नन्दयिष्यामि ज्ञात्वा कालमुपागतं ॥ १९ ॥

एतत् ते कथितं तत्त्वं देवराज शचीपते ।
युध्यस्व विगतत्रासः सुरैः सह महाबल ॥ २० ॥
एतस्मिन्नन्तरे नादः शुश्रुवे रजनीक्षये ।
तस्य रावणसैन्यस्य प्रवृद्धस्य समन्ततः ॥ २१ ॥
ते ते योधा महावीर्या अन्योन्यमभिवीक्ष्य वै ।
संग्राममेवाभिमुखा अभ्यवर्तन्त हृष्टवत् ॥ २२ ॥
ततो दैवतसैन्यानां संक्षोभः समजायत ।
तदक्षयं महासैन्यं दृष्ट्वा समरदुर्जयं ॥ २३ ॥
ततो युद्धं समभवद्देवदानवरक्षसां ।
घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतं ॥ २४ ॥
एतस्मिन्नन्तरे शूरा राक्षसा घोरदर्शनाः ।
युद्धार्थमभ्यवर्तन्त सचिवा रावणस्य ते ॥ २५ ॥
मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ ।
अकम्पनो निकुम्भश्च शुकः सारण एव च ॥ २६ ॥
संह्रादो धूमकेतुश्च महादंष्ट्रो घटोदरः ।
जम्बुमाली महानादो विरूपाक्षश्च राक्षसः ॥ २७ ॥
एतैः सर्वैः परिवृतो महावीर्यैर्महाबलैः ।
रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह ॥ २८ ॥
स दैवतगणान् सर्वान् नानाप्रहरणैः शितैः ।
व्यध्वंसयत् सुसंक्रुद्धो वायुर्जलधरानिव ॥ २९ ॥

एतस्मिन्नन्तरे शूरो वसूनामष्टमो वसुः ।
सावित्र इति विख्यातः प्रविवेश महारणं ॥ ३० ॥
सैन्यैः परिवृतो हृष्टैर्नानाप्रहरणोद्यतैः ।
त्रासयन् शत्रुसैन्यानि प्रविवेश रणाजिरं ॥ ३१ ॥
अथो परौ महावीर्यौ त्वष्टा पूषा च तौ समं ।
निर्भयौ सह सैन्येन तदा प्रविशतां रणे ॥ ३२ ॥
ततो युद्धं समभवत् सुराणां सह राक्षसैः ।
क्रुद्धानां जयकामानां समरेष्वनिवर्तिनां ॥ ३३ ॥
ततस्ते राक्षसाः सर्वे विबुधान् समरे स्थितान् ।
नानाप्रहरणैर्घोरैर्जघ्नुः शतसहस्रशः ॥ ३४ ॥
देवाश्च राक्षसान् घोरान् महावीर्यपराक्रमान् ।
समरे विमलैः शस्त्रैरुपनिन्युर्यमक्षयं ॥ ३५ ॥
एतस्मिन्नन्तरे राम सुमाली नाम राक्षसः ।
नानाप्रहरणैः क्रुद्धस्तत् सैन्यं सोऽभ्यवर्तत ॥ ३६ ॥
स दैवतबलं सर्वं नानाप्रहरणैः शितैः ।
व्यध्वंसयत संक्रुद्धो वायुर्जलधरं यथा ॥ ३७ ॥
ते महाबाणवर्षैश्च शूलप्रासैश्च दारुणैः ।
हन्यमानाः सुराः सर्वे न व्यतिष्ठन्त संहताः ॥ ३८ ॥
ततो विद्राव्यमाणेषु दैवतेषु सुमालिना ।
वसूनामष्टमो भागः सावित्रो वै व्यवस्थितः ॥ ३९ ॥

स वृतः स्वैरथानीकैः प्रहरन्तं निशाचरं ।
विक्रमेण महातेजा वारयामास संयुगे ॥ ४० ॥
ततस्तयोर्महद्युद्धमभवल्लोमहर्षणं ।
सुमालिनो वसोश्चैव समरेष्वनिवर्तिनोः ॥ ४१ ॥
ततस्तस्य महाबाणैर्वसुना सुमहात्मना ।
निहतः पन्नगरथः क्षणेन विनिपातितः ॥ ४२ ॥
हत्वा तु संयुगे तस्य रथं बाणशतैश्चितं ।
गदां तस्य बधार्थाय वसुर्जग्राह पाणिना ॥ ४३ ॥
ततः प्रगृह्य दीप्ताग्रां कालदण्डोपमां गदां ।
तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः ॥ ४४ ॥
सा तस्योपरि चोल्काभा पतन्ती विबभौ गदा ।
इन्द्रप्रमुक्ता गर्जन्ती गिराविव महाशनिः ॥ ४५ ॥
तस्य नैवास्थि न शिरो न मांसं दृश्यते तदा ।
गदया भस्मतां नीतो निहतः स रणाजिरे ॥ ४६ ॥
तं दृष्ट्वा निहतं संख्ये राक्षसास्ते समन्ततः ।
व्यद्रवन् सहिताः सर्वे क्रोशमानाः परस्परं ॥ ४७ ॥

इत्युत्तरकाण्डे नलकूवरशापो नाम चतुस्त्रिंशः सर्गः — सुमालिबधो नाम पञ्चत्रिंशः सर्गः ॥

## XXXVI.

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात्कृतं ।
स्वसैन्यं विद्रुतं चापि लक्षयित्वार्दितं सुरैः ॥१॥
ततः स बलवान् क्रुद्धो रावणस्य सुतस्तदा ।
निवर्त्य राक्षसान् सर्वान् मेघनादो व्यवस्थितः ॥२॥
स रथेन महार्हेण कामगेन महारथः ।
अभिदुद्राव तत् सैन्यमग्निः कक्षमिव ज्वलन् ॥३॥
ततः प्रविशतस्तस्य विविधायुधधारिणः ।
विदुद्रुवुर्दिशः सर्वा दर्शनादेव देवताः ॥४॥
न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे ।
सर्वानाविध्य वित्रस्तांस्ततः शक्रोऽब्रवीद्वचः ॥५॥
न भेतव्यं न गन्तव्यं निवर्तध्वं रणे सुराः ।
एष गच्छति पुत्रो मे युद्धार्थमपराजितः ॥६॥
ततः शक्रसुतो देवो जयन्त इति विश्रुतः ।
रथेनाद्भुतकल्पेन संग्रामं सोऽभ्यवर्तत ॥७॥
ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतं ।
रावणस्य सुतं युद्धे समासाद्य प्रतस्थिरे ॥८॥
तेषां युद्धं समभवद्देवदानवरक्षसां ।
महेन्द्रस्य च पुत्रस्य राक्षसेन्द्रसुतस्य च ॥९॥

ततो मातलिपुत्रे तु गोमुखे स हि रावणिः ।
सारथौ पातयामास शरान् कनकभूषितान् ॥ १० ॥
शचीसुतश्चापि तथा जयन्तस्तस्य सारथिं ।
तं चैव रावणिं क्रुद्धः समरे प्रत्यविध्यत ॥ ११ ॥
स हि क्रोधसमाविष्टो बली विस्फारितेक्षणः ।
रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२ ॥
ततो नानाप्रहरणान् शितधारान् सहस्रशः ।
पातयामास संक्रुद्धः सुरसैन्येषु रावणिः ॥ १३ ॥
शतघ्नीमुषलप्रासगदाखड्गपरश्वधान् ।
महान्ति चाद्रिशृङ्गाणि पातयामास रावणिः ॥ १४ ॥
ततः प्रव्यथिता लोकास्तमश्च समजायत ।
तस्य रावणपुत्रस्य शत्रुसैन्यानि विघ्नतः ॥ १५ ॥
ततस्तद्दैवतबलं समन्तात् शरविक्षतं ।
बहुप्रकारमस्वस्थं तत्र तत्र स्म धावति ॥ १६ ॥
नाभिजघ्नुस्तदान्योन्यं राक्षसा दैवतानि च ।
तत्र तत्र विपर्यासात् समन्तात् परिधावितं ॥ १७ ॥
देवा देवान् निजघ्नुश्च राक्षसा राक्षसान् तथा ।
संमूढास्तमसाछन्ना व्यद्रवन्त परे तथा ॥ १८ ॥
एतस्मिनन्तरे वीरः पुलोमा नाम वीर्यवान् ।
दैत्येन्द्रस्तेन संगृह्य शचीपुत्रोऽपवाहितः ॥ १९ ॥

संगृह्य तं तु नप्तारं प्रविष्टः सागरं तदा ।
आर्यकः स हि तस्यासीत् पौलोमी येन सा शची ॥ २० ॥
ज्ञात्वा प्रणाशं तु तदा जयन्तस्याथ देवताः ।
भग्नदर्पास्ततः सर्वा भयार्त्ताः संप्रदुद्रुवुः ॥ २१ ॥
रावणिस्त्वथ संक्रुद्धो बलैः परिवृतः स्वकैः ।
अभ्यधावत देवांस्तान् मुमोच च महास्वनं ॥ २२ ॥
ज्ञात्वा प्रणाशं पुत्रस्य दैवतेषु च विद्रवं ।
मातलिं प्राह देवेन्द्रो रथः समुपनीयतां ॥ २३ ॥
स तु दिव्यो महाभीमः सज्ज एव महारथः ।
उपस्थितो मातलिना वाह्यमानो महाजवः ॥ २४ ॥
ततो महारथे तस्मिंस्तडिवन्तो बलाहकाः ।
अग्रतो वायुचपला नेदुः परमनिस्वनाः ॥ २५ ॥
नानावाद्यान्यवाद्यन्त गन्धर्वाश्च जगुस्तदा ।
ननृतुश्चाप्सरःसंघा निर्याते त्रिदशेश्वरे ॥ २६ ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्यां समरुद्गणैः ।
वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २७ ॥
निर्गच्छतस्तु शक्रस्य परुषः पवनो ववौ ।
भास्करो निष्प्रभश्चैव महोल्काश्च प्रपेदिरे ॥ २८ ॥
एतस्मिन्नन्तरे शूरो दशग्रीवः प्रतापवान् ।
आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २९ ॥

पन्नगैः सुमहाकायैर्वेष्टितं लोमहर्षणैः ।
येषां निश्वासवातेन प्रदीप्तमिव संयुगं ॥ ३० ॥
दैत्यैर्निशाचरैर्घोरैः स रथः परिवारितः ।
समराभिमुखो दिव्यो महेन्द्रं सोऽभ्यवर्तत ॥ ३१ ॥
पुत्रं तं वारयित्वा तु स्वयमेव व्यवस्थितः ।
सोऽपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ॥ ३२ ॥
ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह ।
शस्त्राभिवर्षणं घोरं मेघानामिव संयुगे ॥ ३३ ॥
कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः ।
नाज्ञायत तदा राजन् युद्धं केनाभ्यपद्यत ॥ ३४ ॥
दन्तैः पादैर्भुजैर्हस्तैः शक्तितोमरमुद्गरैः ।
येन येनैव संक्रुद्धस्ताडयामास देवताः ॥ ३५ ॥
स तु रुद्रैर्महाघोरैः संगम्याथ निशाचरः ।
युयुत्सुस्तैश्च संग्रामे क्षतः शस्त्रैर्निरन्तरं ॥ ३६ ॥
ततस्तद्राक्षसं सैन्यं दैवतैः समरुद्गणैः ।
रणे विद्रावितं सर्वं नानाप्रहरणैस्तदा ॥ ३७ ॥
केचिद्विनिहता भूमौ व्यचेष्टन्त निशाचराः ।
वाहनेष्वथ संसक्ताः स्थिता एवापरे रणे ॥ ३८ ॥
केचिन्नागान् खरानुष्ट्रान् पन्नगांस्तुरगांस्तथा ।
शिशुमारान् वराहांश्च पिशाचवदनानपि ॥ ३९ ॥

आलिङ्ग्यालिङ्ग्य बाहुभ्यां विष्टब्धा एव संस्थिताः ।
देवैस्तु शस्त्रसंभिन्ना मम्रिरे च निशाचराः ॥ ४० ॥
चित्रकर्म इवाभाति तेषां स्म रणविप्लवः ।
निहतानां प्रवृद्धानां राक्षसानां महीतले ॥ ४१ ॥
तोयशोणितविस्यन्दा काकगृध्रसमाकुला ।
प्रवृत्ता संयुगतले शस्त्रग्राहवती नदी ॥ ४२ ॥
एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान् ।
अपश्यद्बलमात्मीयं त्रिदशैर्विनिपातितं ॥ ४३ ॥
स तु तं प्रविगाह्याशु महान्तं सैन्यसागरं ।
देवताः समतिक्रम्य शक्रमेवाभ्यधावत ॥ ४४ ॥
ततः शक्रो महच्चापं व्यस्फारयदनुत्तमं ।
यस्य विस्फारघोषेण स्वनन्ति स्म दिशो दश ॥ ४५ ॥
तद्विकृष्य महच्चापमिन्द्रो रावणवक्षसि ।
निपातयामास तदा शरान् पावकसंनिभान् ॥ ४६ ॥
तथैव च महाबाहुर्दशग्रीवो व्यवस्थितः ।
शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४७ ॥
ततः प्रवृष्टयोस्तत्र शरवर्षैः समन्ततः ।
नाज्ञायत तदा किञ्चित् तमसा सर्वतो वृतं ॥ ४८ ॥

इत्युत्तरकाण्डे इन्द्ररावणयोर्द्वैरथो नाम
षट्त्रिंशः सर्गः ॥

# उत्तरकाण्डं

## XXXVII.

ततस्तस्मिंस्तमोभूते राक्षसास्त्रिदशैः सह ।
प्रमुग्धाः स्वान् परांश्चैव पोथयन्तो विचक्रमुः ॥ १ ॥
तस्मिंस्तमसि दुष्पारे मग्ना दैवतराक्षसाः ।
अन्योन्यं न स्म पश्यन्ति वर्जयित्वा जनत्रयं ॥ २ ॥
इन्द्रं च रावणं चैव रावणिं च महाबलं ।
सर्वं हि तत् तमोभूतं न किञ्चित् प्रत्यदृश्यत ॥ ३ ॥
स तु दृष्ट्वा बलं सर्वं हतं देवैर्दशाननः ।
क्रोधमभ्यगमत् तीव्रं महानादं च मुक्तवान् ॥ ४ ॥
स क्रोधात् सूतमाहेदं स्यन्दनं मम वाहय ।
सुरसैन्यस्य मध्येन यावदन्तं नयस्व मां ॥ ५ ॥
अद्यैव देवताः सर्वाः समरे विक्रमैः स्वयं ।
प्रवर्षन् शरजालानि नयामि यमसादनं ॥ ६ ॥
अहमिन्द्रो भविष्यामि वरुणो धनदो यमः ।
देवता विनिहत्याद्य स्थापयिष्यामि चासुरान् ॥ ७ ॥
विषादो न च कर्तव्यः शीघ्रं वाहय मे रथं ।
द्विः खलु त्वां ब्रवीम्यद्य यावदन्तं नयस्व मां ॥ ८ ॥
अयं हि नन्दनोद्देशो यत्र वर्तामहे वयं ।
नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ ९ ॥

स सूतस्तद्वचः श्रुत्वा तुरगांस्तान् मनोजवान् ।
आदिदेशाथ शत्रूणां मध्येन मिषतां रणे ॥ १० ॥
तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा ।
रथस्थः समरस्थांस्तान् देवान् इदमब्रवीत् ॥ ११ ॥
सुराः शृणुत मे सर्वे मह्यं यदिह रोचते ।
निगृह्यतां साधु जीवन् रावणो राक्षसाधिपः ॥ १२ ॥
एष ह्यतिबलः सैन्ये रथेन पवनौजसा ।
आगमिष्यति वृद्धोर्मिः समुद्र इव पर्वणि ॥ १३ ॥
न ह्येष हन्तुं शक्योऽद्य वरदानेन दर्पितः ।
तद्ग्रहीष्यामहे रक्षः सज्जीभवत मा चिरं ॥ १४ ॥
यथा बलिं निरुध्येह त्रैलोक्यं भुज्यते मया ।
एवमस्याद्य पापस्य निरोधो रोचते हि मे ॥ १५ ॥
ततोऽन्यं देशमास्थाय शक्रस्त्यक्त्वा च रावणं ।
अयुध्यत महाराज राक्षसांस्त्रासयन् रणे ॥ १६ ॥
उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः ।
दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १७ ॥
ततः स योजनशतं प्रविष्टो राक्षसाधिपः ।
देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥ १८ ॥
ततः शक्रो निरीक्ष्याथ प्रणष्टं तत् स्वकं बलं ।
न्यवर्तयदसंभ्रान्तो रुरोध च निशाचरं ॥ १९ ॥

एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः ।
हा मृताः स्म इति ग्रस्तं दृष्ट्वा शक्रेण रावणं ॥ २० ॥
ततो रथं समास्थाय रावणिः क्रोधमूर्च्छितः ।
तत् सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणं ॥ २१ ॥
तां प्रविश्य महामायां प्राप्तां पशुपतेः पुरा ।
प्रविवेश सुसंरब्धस्तत् सैन्यं समभिद्रवन् ॥ २२ ॥
स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत ।
महेन्द्रश्च महातेजा नापश्यत् तं सुतं रिपोः ॥ २३ ॥
विमुक्तकवचस्तत्र बध्यमानोऽपि रावणिः ।
त्रिदशैः सुमहावीर्यैर्न चकार स किञ्चन ॥ २४ ॥
स मातलिं समायान्तं ताडयित्वा शरोत्तमैः ।
महेन्द्रं वाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २५ ॥
ततस्त्यक्त्वा रथं शक्रो विसृज्य च स सारथिं ।
ऐरावतं समारुह्य मृगयामास रावणिं ॥ २६ ॥
स तत्र मायाबलवानदृश्योऽथान्तरीक्षगः ।
इन्द्रं मायापरिक्षिप्तं कृत्वा जह्रे महाबलः ॥ २७ ॥
स तं यदा परिश्रान्तमिन्द्रं जह्रेऽथ रावणिः ।
तदैनं मायया बद्ध्वा स्वसैन्यमभितोऽनयत् ॥ २८ ॥
तं दृष्ट्वाथ बलात् तेन नीयमानं महारणात् ।
महेन्द्रं देवताः सर्वाः किन्नु स्यादित्यचिन्तयन् ॥ २९ ॥

दृश्यते न स मायावी शक्रजित् समितिञ्जयः ।
बद्ध्वा सुरपतिर्येन माययापहृतो बलात् ॥ ३० ॥
एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा ।
रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३१ ॥
रावणस्तु समासाद्य तानादित्यान् वसूंस्तथा ।
न शशाक स संग्रामे योद्धुं शत्रुभिरर्दितः ॥ ३२ ॥
तं तु दृष्ट्वा परिग्लानं प्रहारैर्जर्जरीकृतं ।
रावणिः पितरं युद्धे दर्शनस्थोऽब्रवीदिदं ॥ ३३ ॥
आगच्छ तात गच्छामो निवर्तस्व रणादितः ।
जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः ॥ ३४ ॥
अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः ।
स गृहीतो मया शक्रो भग्नदर्पाः कृताः सुराः ॥ ३५ ॥
यथेष्टं भुङ्क्ष्व लोकांस्त्रीन् निगृह्यारातिमोजसा ।
वृथा किं ते श्रमेणेह युद्धमद्य तु निष्फलं ॥ ३६ ॥
ततस्ते दैवतगणा निवृत्ता रणकर्मतः ।
तच्छ्रुत्वा रावणेर्वाक्यं शक्रहीनाः सुरा गताः ॥ ३७ ॥

अथ स विगतमन्युरुत्तमौजाः
त्रिदशरिपुः प्रथितो निशाचरेशः ।
स्वसुतस्य वचनमतिप्रियं तत्
समनुनिशम्य जगाद चापि सूनुं ॥ ३८ ॥

अतिबल सदृशैः पराक्रमैर्
    मम नयवंशविवर्धनः प्रभो ।
यदयमतुलविक्रमस्त्वया
    त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥३९॥

नय रथमधिरोप्य वासवं
    नगरमितो व्रज सेनया वृतस्त्वं ।
अहमपि तव पृष्ठतो द्रुतं
    सह सचिवैरनुयामि हृष्टवत् ॥४०॥

अथ स बलवृतः सवाहनस्
    त्रिदशपतिं परिगृह्य रावणिः ।
स्वभवनमभिगम्य वीर्यवान्
    कृतसमरान् विससर्ज राक्षसान् ॥४१॥

इत्युत्तरकाण्डे इन्द्रग्रहणं नाम
सप्तत्रिंशः सर्गः ॥

# उत्तरकाण्डं

## XXXVIII.

जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै ।
प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ १ ॥
तत्र रावणमासाद्य पुत्रभ्रातृभिरावृतं ।
अब्रवीद्गगणे तिष्ठन् सामपूर्वं प्रजापतिः ॥ २ ॥
वत्स रावण तुष्टोऽस्मि पुत्रस्य तव संयुगे ।
अहोऽस्य विक्रमौदार्यं तव तुल्योऽधिकोऽपि वा ॥ ३ ॥
जितं हि भवता सर्वं त्रैलोक्यमिदमव्ययं ।
कृता प्रतिज्ञा सफला प्रीतोऽस्मि ससुतस्य ते ॥ ४ ॥
अयं च पुत्रोऽतिबलस्तव रावण रावणिः ।
जगतीन्द्रजिदित्येवं ख्यातो नाम्ना भविष्यति ॥ ५ ॥
बलवान् दुर्जयश्चैव भविष्यत्येष विश्रुतः ।
यं समाश्रित्य ते राजन् स्थापितास्त्रिदशा वशे ॥ ६ ॥
तं मुञ्च त्वं महाबाहो महेन्द्रं पाकशासनं ।
किं च ते मोक्षणायास्य प्रयच्छन्तु दिवौकसः ॥ ७ ॥
अथेन्द्रजिन्महाराज वाक्यमाह प्रजापतिं ।
अमरत्वमहं देव वृणे यद्येष मुच्यते ॥ ८ ॥
अथाब्रवीदिन्द्रजितं सर्वलोकपितामहः ।
नास्ति सर्वामरत्वं हि प्राणिनो यस्य कस्यचित् ॥ ९ ॥

चतुष्पदो वा पक्षी वा यद्वा सत्त्वं महीतले ।
अपि शुष्कस्य वृक्षस्य पर्णपाताद्भयं भवेत् ॥ १० ॥
अथाब्रवीद्विमानस्थमिन्द्रजित् प्रभुमव्ययं ।
श्रूयतां यो भवेत् सन्धिः शतक्रतुविमोक्षणे ॥ ११ ॥
ममेष्टो दहनो नित्यं हव्यैः संपूज्य मन्त्रवत् ।
यं प्रवर्तेयं संग्रामं न च मे स्यात् पराजयः ॥ १२ ॥
तं यदा त्वसमाप्याहं जप्य होमं विभावसौ ।
युध्येयं देवसंग्रामे तदा मे स्यात् पराजयः ॥ १३ ॥
सर्वो हि तपसा देव वृणोत्यमरतां पुमान् ।
विक्रमेणार्जितं चेदममरत्वं मया प्रभो ॥ १४ ॥
एवमस्त्विति तं प्राह वाक्यं देवः प्रजापतिः ।
मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥ १५ ॥
एतस्मिन्नन्तरे राम दीनो भ्रष्टामरद्युतिः ।
इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥ १६ ॥
तं तु दृष्ट्वा तथाभूतं प्राह देवः पितामहः ।
शतक्रतोऽलमुत्कण्ठां कृत्वा च स्मर दुष्कृतं ॥ १७ ॥
पुरा सुरेन्द्र बुद्ध्या हि प्रजाः सृष्टा मया प्रभो ।
एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥ १८ ॥
तासां नास्ति विशेषस्तु दर्शने लक्षणेऽपि वा ।
ततोऽहमेकाग्रमनाश्चिन्तयामास ताः प्रजाः ॥ १९ ॥

सोऽहं तासां विशेषार्थं निर्ममे परमाङ्गनां ।
यद्यत् प्रजानां प्रत्यङ्गं विशिष्टं तत् तदुद्धृतं ॥ २० ॥
ततो मया रूपगुणादतुल्या स्त्री विनिर्मिता ।
अहल्येत्येव च मया तस्या नाम प्रकीर्त्तितं ॥ २१ ॥
निर्मितायां तु देवेन्द्र तस्यां नार्यां सुरर्षभ ।
भविष्यति च कस्यैषेत्येवं चिन्ता ममाभवत् ॥ २२ ॥
त्वं स्म शक्र तदा तां स्त्रीं जानीषे मनसा प्रभो ।
स्थानाधिकतया पत्नी ममैषेति सुरेश्वर ॥ २३ ॥
सा मया न्यासभूता तु गौतमस्य निवेशने ।
न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च सा ॥ २४ ॥
ततस्तस्य परिज्ञाय महास्थैर्यं महामुनेः ।
ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥ २५ ॥
स तया सह धर्मात्मा रमते स्म महामुनिः ।
निराशाश्चाभवन् देवा दत्तायां गौतमाय वै ॥ २६ ॥
त्वं तु क्रुद्धः सकामात्मा गतस्तस्याश्रमं मुनेः ।
दृष्टवांश्च तदाहल्यां दीप्तामग्निशिखामिव ॥ २७ ॥
सा त्वया धर्षिता शक्र कामार्त्तेन तु वै पुरा ।
दृष्टश्चासि तदा तेन गौतमेन महात्मना ॥ २८ ॥
ततः क्रुद्धेन तेनासि शप्तः परमतेजसा ।
विफलश्च कृतो देव मेषाण्डोऽभूः सुरेश्वर ॥ २९ ॥

यस्मात् ते धर्षिता पत्नी मम वासव निर्भयात् ।
तस्मात् त्वं समरे शक्र शत्रुहस्तं गमिष्यसि ॥ ३० ॥
अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः ।
तन्मनुष्यादयो येऽपि तेऽपि यास्यन्त्यसंशयं ॥ ३१ ॥
तत्राधर्मः सुबलवान् यः समुत्पत्स्यते महान् ।
तत्रार्द्धं तस्य यः कर्ता तव चार्द्धं भविष्यति ॥ ३२ ॥
न चैतदचलं स्थानं भविष्यति पुरंदर ।
एतेनाधर्मयोगेन यस्त्वयेह प्रवर्तितः ॥ ३३ ॥
भविष्यतीन्द्रो योऽन्योऽपि ध्रुवः स न भविष्यति ।
एष शापो मया मुक्त इत्यसौ वाक्यमब्रवीत् ॥ ३४ ॥
तां तु भार्यां विनिर्भर्त्स्य सोऽब्रवीत् सुमहातपाः ।
दुर्विनीते व्रज क्षिप्रं ममाश्रमसमीपतः ॥ ३५ ॥
रूपयौवनसंपन्ना यस्मात् त्वमनवस्थिता ।
तस्माद्रूपवती न त्वमेका लोके भविष्यसि ॥ ३६ ॥
दुर्लभं ते रूपमिदं प्रजास्वपि गमिष्यति ।
मामनादृत्य दुर्वृत्ते यदाश्रित्यावमन्यसे ॥ ३७ ॥
तदाप्रभृति भूयस्तु प्रजा रूपगुणान्विताः ।
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपागतं ॥ ३८ ॥
प्रसादयामास च सा महर्षिं गौतमं तदा ।
अजानती धर्षितास्मि त्वद्रूपेण दिवौकसा ॥ ३९ ॥

न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ।
अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः ॥ ४० ॥
उत्पत्स्यते महातेजा इक्ष्वाकूणां महारथः ।
लोके राम इति ख्यातो वनं चापि गमिष्यति ॥ ४१ ॥
ब्राह्मणार्थे महाबाहुर्विष्णुर्मनुजविग्रहः ।
तं द्रक्ष्यसि यदा भद्रे तदा पूता भविष्यसि ॥ ४२ ॥
स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतं ।
समेष्यसि मया सार्धं तदाप्रभृति भाविनि ॥ ४३ ॥
एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमं ।
तपश्चचार सुमहत् सापि तत्र धृतव्रता ॥ ४४ ॥
तत् स्मर त्वं महाबाहो यत् त्वया दुष्कृतं कृतं ।
येन त्वं ग्रहणं शत्रोर्गतो नान्येन वासव ॥ ४५ ॥
तच्छीघ्रं यज यज्ञेन वैष्णवेन समाहितः ।
ततस्त्रिदिवमागच्छ धुतपापो जितेन्द्रियः ॥ ४६ ॥
पुत्रश्च तव देवेन्द्र न विनष्टो महारणे ।
नीतश्च निहितश्चैव आर्यकेण महोदधौ ॥ ४७ ॥
एतच्छ्रुत्वा महेन्द्रस्तु इष्ट्वा यज्ञं स वीर्यवान् ।
ततस्त्रिदिवमाक्रामद्देवांश्चान्वाशिषत् पुनः ॥ ४८ ॥
एतदिन्द्रजितो राम बलं यत् कथितं मया ।
निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः ॥ ४९ ॥

आश्चर्यमिति तद्रामो लक्ष्मणश्चाब्रवीत् तदा ।
अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तथा ॥५०॥
विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ।
आश्चर्यं श्रावितोऽस्म्यद्य यत् तद्वृत्तं पुरातनं ॥५१॥
रामस्त्वापृच्छमानं तु कुम्भयोनिं महामुनिं ।
प्राञ्जलिर्विनयोपेत इदमाह वचोऽर्थवत् ॥५२॥
एतयोरतुलं वीर्यं रावणे रावणस्य च ।
न त्वेतौ हनुमद्वीर्ये समाविति मतिर्मम ॥५३॥
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनं ।
विक्रमश्च प्रतापश्च हनूमति कृतालयाः ॥५४॥
सागरं वीक्ष्य सीदन्तीं पुरैष कपिवाहिनीं ।
समाश्वास्य महाबाहुर्योजनानां शतं प्लुतः ॥५५॥
धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरं तथा ।
दृष्टा संभाषिता चापि सीता प्राश्वासिता तथा ॥५६॥
सेनाग्रगा मन्त्रिसुताः किङ्करा रावणात्मजाः ।
एते हनुमता तत्र एकेनैव निसूदिताः ॥५७॥
भूयो बन्धविमुक्तेन संभाष्य च दशाननं ।
लङ्का भस्मीकृतानेन लाङ्गूलस्थेन वह्निना ॥५८॥
न कालस्य न शक्रस्य न विष्णोर्वित्तदस्य च ।
श्रूयन्ते तानि कर्माणि यानि युद्धे हनूमतः ॥५९॥

एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः ।
प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥ ६० ॥
हनूमान् यदि न स्याच्च वानराधिपतेः सखा ।
प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान् भवेत् ॥ ६१ ॥
तदेवंबलयुक्तेन सुग्रीवप्रियकाम्यया ।
बाली वैरे समुत्पन्ने न दग्धस्तृणवत् कथं ॥ ६२ ॥
न हि विज्ञातवान् मन्ये हनूमानात्मनो बलं ।
ज्ञात्तवान् यत् प्रियं प्राणैः क्लिश्यन्तं वानराधिपं ॥ ६३ ॥
एतन्मे भगवन् सर्वं चरितं वै हनूमतः ।
विस्तरेण यथातत्त्वं कथयामरपूजित ॥ ६४ ॥
राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्तदा ।
हनूमतः समक्षं तं राघवं वाक्यमब्रवीत् ॥ ६५ ॥
सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमतः ।
न बले विद्यते तुल्यो न मतौ न गतौ तथा ॥ ६६ ॥
अमोघशापैः शापस्तु दत्तोऽस्य मुनिभिः पुरा ।
न ज्ञातवानयं येन बलवान् बलमात्मनः ॥ ६७ ॥
बाल्येऽप्यनेन यत् कर्म कृतं राम महात्मना ।
तन्न वर्णयितुं शक्यमश्रद्धेयं पृथग्जनैः ॥ ६८ ॥
यदि तेऽत्रास्त्यभिप्रायस्तच्छ्रोतुं रघुनन्दन ।
ततः समाधाय मनो निशामय ममानघ ॥ ६९ ॥

अस्ति रत्नमयः श्रीमान् सुमेरुर्नाम पर्वतः ।
तत्रास्य केशरी नाम पिता राज्यं प्रशास्ति वै ॥ ७० ॥
तस्य भार्या बभूवेष्टा ह्यञ्जनेति परिश्रुता ।
जनयामास तस्यां च पवनः सुतमुत्तमं ॥ ७१ ॥
शालिशूकचयाभं च प्रसूयेमं तदाञ्जना ।
फलान्याहर्तुकामा सा निष्क्रान्ता गहने वरा ॥ ७२ ॥
एष मातुर्वियोगाच्च क्षुधया च तृषार्दितः ।
रुराव शिशुरत्यर्थं गिरौ करभराडिव ॥ ७३ ॥
तदोद्यन्तं विवस्वन्तं जवापुष्पोत्करोपमं ।
ददर्श फललोभाच्च प्रोत्पपात रविं प्रति ॥ ७४ ॥
बालार्काभिमुखो बालो बालार्क इव मूर्त्तिमान् ।
ग्रहीतुकामो बालार्कं पुप्लुवेऽम्बरमास्थितः ॥ ७५ ॥
एतस्मिन् प्लवमाने तु शिशुभावाद्धनूमति ।
देवदानवसिद्धानां विस्मयः सुमहानभूत् ॥ ७६ ॥
न ह्येवंवेगवान् वायुर्न गरुत्मान् मनोऽथ वा ।
यथायं वायुपुत्रो वै क्रामत्यम्बरमध्यगः ॥ ७७ ॥
अयं तावच्छिशोरस्य ईदृशो हि पराक्रमः ।
यौवने बलमासाद्य कीदृशोऽस्य भविष्यति ॥ ७८ ॥
तं चानुपुप्लुवे वायुः प्लवमानं तदात्मजं ।
सूर्यदाहादरक्षच्च तुषारचयशीतलः ॥ ७९ ॥

बहुयोजनसाहस्रं प्रक्रान्तोऽयं तदाम्बरं ।
पितुर्बलाच्च बाल्याच्च भास्करेणाभिरक्षितः ॥ ८० ॥
शिशुरेष त्वदोषज्ञ इति मत्वा विरोचनः ।
कार्यं चात्र समायत्तमित्येवं न ददाह सः ॥ ८१ ॥
यमेव दिवसं ह्येष ग्रहीतुं भास्करं प्लुतः ।
तमेव दिवसं राहुश्चकार ग्रहणे मतिं ॥ ८२ ॥
अनेन तु परामृष्टे राम सूर्यरथेऽध्वनि ।
अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ॥ ८३ ॥
अथ दृष्ट्वा हनूमन्तं जिघृक्षन्तं तु भास्करं ।
अब्रवीत् सत्वरं गत्वा राहुः शक्रमिदं वचः ॥ ८४ ॥
बुभुक्षापनयं दत्वा चन्द्रार्कौ मम वासव ।
किमिदं यत् त्वया दत्तो वरोऽन्यस्मै सुरेश्वर ॥ ८५ ॥
अद्याहं पर्वकाले तु जिघृक्षुः सूर्यमास्थितः ।
दृष्ट्वा गृहीतमन्येन तमहं त्वामुपागमं ॥ ८६ ॥
स राहोर्वचनं श्रुत्वा वासवः संभ्रमान्वितः ।
उत्पपातासनं हित्वा परार्ध्यास्तरणान्वितं ॥ ८७ ॥
ततः कैलासकूटाभं चतुर्दन्तं मदस्रवं ।
शृङ्गारधारिणं प्रांशुं स्वर्णघण्टाट्टहासिनं ॥ ८८ ॥
इन्द्रः करीन्द्रमारुह्य राहुं कृत्वा पुरःसरं ।
प्रायाद्यत्राभवत् सूर्यः सहानेन हनूमता ॥ ८९ ॥

अथातिरभसेनागाद्राहुरुत्सृज्य वासवं ।
अनेन च स वै दृष्टो ह्याधावत् शैलकूटवत् ॥ १० ॥
ततः सूर्यं समुत्सृज्य राहुं फलमुपेत्य च ।
उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतं ॥ ११ ॥
उत्सृज्यार्कमिमं राम आधावन्तं प्लवङ्गमं ।
दृष्ट्वा राहुः परावृत्तो मुखशेषः पराङ्मुखः ॥ १२ ॥
इन्द्रमाशंसमानस्तु त्रातारं सिंहिकासुतः ।
इन्द्र इन्द्रेति स त्रासाद्विचुक्रोश मुहुर्मुहुः ॥ १३ ॥
ततो विक्रोशतस्तस्य प्रागेवालक्ष्य तं स्वरं ।
मा भैरिति तमाहेन्द्रोऽप्यहमेनं निषूदये ॥ १४ ॥
ऐरावतं ततो दृष्ट्वा महान्तमिदमेव हि ।
फलमित्यभिविज्ञाय तं प्रदुद्राव मारुतिः ॥ १५ ॥
तदस्य धावतो रूपमैरावतजिघृक्षया ।
मुहूर्त्तमभवद्घोरं कालाग्नेरिव राघव ॥ १६ ॥
एवमाधावमानं तु नातिक्रुद्धः शचीपतिः ।
हस्तस्थेन प्रमुक्तेन कुलिशेनाभ्यताडयत् ॥ १७ ॥
ततो गिरौ पपातैष शक्रवज्राभिताडितः ।
कुलिशेन च तेनास्य वामो हनुरभज्यत ॥ १८ ॥
तस्मिंस्तु पतिते बाले वज्रताडनविह्वले ।
चुक्रोधेन्द्राय पवनः प्रजानामशिवाय सः ॥ १९ ॥

प्रवातं स्वं च संहृत्य प्रजास्वन्तर्गतं प्रभुः ।
रुरोध सर्वभूतानि न प्रावात् स तदानिलः ॥१००॥
वायोः प्रकोपाद्भूतानि निरुच्छ्वासानि सर्वशः ।
संधिभिश्चाप्यसंनद्धैः काष्ठभूतानि जज्ञिरे ॥१०१॥
निःस्वधं निर्वषट्कारं निष्क्रियं धर्मवर्जितं ।
वायुप्रकोपात् त्रैलोक्यं निरयस्थमिवाभवत् ॥१०२॥
ततः प्रजाः सगन्धर्वाः सदेवासुरमानुषाः ।
कृच्छ्रात् प्रजापतिं गत्वा प्रोचुरार्त्ता इदं वचः ॥१०३॥
त्वया स्म भगवन् सृष्टाः प्रजाः सर्वाश्चतुर्विधाः ।
त्वया च दत्तः सोऽस्माकमायुषां पवनः पतिः ॥१०४॥
सोऽस्मत्प्राणेश्वरो भूत्वा कस्मादप्यद्य सत्तम ।
रुरोध दुःखं जनयन् किञ्चित् प्राणांश्च कारणः ॥१०५॥
ताः स्म ते शरणं प्राप्ता वायुनोपहता वयं ।
वायुसंरोधजं दुःखं नुद नोऽद्य पितामह ॥१०६॥
इति प्रजानां श्रुत्वा स प्रजानाथः प्रजापतिः ।
कारणादिति चोक्त्वासौ प्रजाः पुनरभाषत ॥१०७॥
यत्र वः कारणे वायुश्चुकोप च रुरोध च ।
प्रजाः शृणुत तत् सर्वं क्रियतां चात्मनः क्षमं ॥१०८॥
पुत्रस्तस्याद्य वज्रेण शक्रेण विनिसूदितः ।
राहोर्वचनमास्थाय तेनासौ कुपितोऽनिलः ॥१०९॥

अशरीरः शरीरेषु वायुश्चरति पालयन् ।
शरीरं हि विना वायुं समतां याति दारुभिः ॥११०॥
वायुः प्राणाः सुखं वायुर्वायुः सर्वमिदं जगत् ।
वायुना संपरित्यक्तं न सुखं विन्दते जगत् ॥१११॥
अद्यैव संपरित्यक्ता वायुना जगदायुषा ।
यूयं सर्वे निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः ॥११२॥
तद्यामस्तत्र यत्रास्ते मारुतः सुखदो हि सः ।
मा विनाशं गमिष्यधमप्रसाद्य दितेः सुतं ॥११३॥

ततः प्रजाभिः सहितः प्रजापतिः
सदेवगन्धर्वभुजङ्गगुह्यकैः ।
जगाम यत्रास्ति स तत्र मारुतः
सुतं तु वज्राभिहतं प्रगृह्य तं ॥११४॥

ततोऽर्कवैश्वानरकाञ्चनप्रभं
शिशुं तमुत्सङ्गगतं सदागतेः ।
चतुर्मुखो वीक्ष्य कृपामथाकरोत्
सदेवगन्धर्वऋषियक्षराक्षसैः ॥११५॥

इत्युत्तरकाण्डे वज्रेण हनुखण्डनं नाम
अष्टात्रिंशः सर्गः ॥

## उत्तरकाण्डं

### XXXIX.

ततः पितामहं दृष्ट्वा वायुः पुत्रबधार्दितः ।
शिशुकं पुत्रमादाय उत्तस्थौ त्वरितस्तदा ॥ १ ॥
चलत्कुण्डलमौलिस्तु तप्तकाञ्चनभूषणः ।
पादयोर्न्यपतन्मूर्द्ध्ना दुःखितः पद्मयोनये ॥ २ ॥
तं तु देवः पदाल्लेऽपि लम्बाभरणशोभिना ।
वायुमुत्थाप्य हस्तेन शिशुं संपरिमृष्टवान् ॥ ३ ॥
स्पृष्टमात्रस्तदाप्येष सलीलं पद्मयोनिना ।
जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान् ॥ ४ ॥
प्राणवन्तमिम दृष्ट्वा पुनर्गन्धवहो मुदा ।
चचार सर्वभूतेषु ह्यविरोधो यथा पुरा ॥ ५ ॥
मारुतक्रोधनिर्मुक्तास्ताः प्रजा मुदिता बभुः ।
शीतवातविनिर्मुक्ताः पद्मिन्य इव सद्विजाः ॥ ६ ॥
ततस्त्रियुग्मस्त्रिककुत् त्रिधामा त्रिदशार्चितः ।
उवाच देवता ब्रह्मा मारुतप्रियकाम्यया ॥ ७ ॥
भो इन्द्रसूर्यवरुणा महेश्वरधनेश्वराः ।
जानतोऽपि हि वः सर्वान् वक्ष्यामि श्रूयतां हितं ॥ ८ ॥
अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति ।
प्रयच्छध्वं वरान् सर्वे मारुतस्यात्मजाय वै ॥ ९ ॥

ततः सहस्रनयनो दिव्यरत्नधरः प्रभुः ।
कुशेशयमयीं मालां समुत्क्षिप्येदमब्रवीत् ॥ १० ॥
मया मुक्तेन वज्रेण यस्मादस्य हतो हनुः ।
तस्मादेष कपिर्नाम हनूमान् वै भविष्यति ॥ ११ ॥
इदं चैवास्य दास्यामि परमं वरमुत्तमं ।
अतः प्रभृति वज्रस्य ममावध्यो भविष्यति ॥ १२ ॥
मार्त्तण्डस्त्वब्रवीत् तत्र भगवांस्तिमिरापहः ।
तेजसोऽस्य मदीयस्य ददामि शतमंशकं ॥ १३ ॥
यदा तु शास्त्रमध्येतुं शक्तिरस्य भविष्यति ।
तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥ १४ ॥
वरुणश्च वरं प्रादान्नास्य मृत्युर्भविष्यति ।
वर्षायुतशतेनापि मत्पाशादुदकात् तथा ॥ १५ ॥
यमो दण्डादवध्यत्वमरोगत्वं च नित्यशः ।
ददावस्य वरं तुष्टो ह्यविषादं च संयुगे ॥ १६ ॥
गदेयं मामिका नैनं संयुगेषु वधिष्यति ।
इत्येवं धनदः प्राह तदा ह्येकाक्षिपिङ्गलः ॥ १७ ॥
मत्तो मदायुधानां च न वध्योऽयं भविष्यति ।
इत्येवं शङ्करेणापि दत्तोऽस्य परमो वरः ॥ १८ ॥
ब्रह्मास्त्रब्रह्मदण्डानामवध्योऽयं भविष्यति ।
दीर्घायुश्च महात्मा च इति ब्रह्माब्रवीद्वचः ॥ १९ ॥

विश्वकर्मा च दृष्ट्वेमं बालसूर्योपमं शिशुं ।
शिल्पिनां प्रवरः प्रादाद्वरमस्मै महामतिः ॥ २० ॥
मन्निर्मितानि देवानामायुधानीह यानि च ।
तेषां संग्रामकाले तु न बध्योऽयं भविष्यति ॥ २१ ॥
एवं वरैः सुराणां तु दृष्ट्वा ह्येनमलंकृतं ।
चतुर्मुखस्तुष्टमना वायुमाह जगद्गुरुः ॥ २२ ॥
मित्राणामभयं कर्ता शत्रूणां च भयंकरः ।
अजेयो भविता पुत्रस्तव मारुत मारुतिः ॥ २३ ॥
रावणोत्सादनार्थानि रामप्रीतिकराणि च ।
दैवतानां च सर्वेषां कर्ता कार्याणि संयुगे ॥ २४ ॥

इत्युत्तरकाण्डे हनूमद्वरप्रदानं नाम
नवत्रिंशः सर्गः ॥

XL.

एवमुक्त्वा तमामन्त्र्य मारुतं तेऽमरैः सह ।
यथागतं ययुः सर्वे पितामहपुरःसराः ॥ १ ॥
सोऽपि गन्धवहः पुत्रं प्रगृह्य गृहमानयत् ।
अञ्जनायास्तमाख्याय वरदत्तं विनिःसृतः ॥ २ ॥
प्राप्य राम वरानेष वरदानबलान्वितः ।
जवेनात्मनि संस्थेन सोऽसौ पूर्ण इवार्णवः ॥ ३ ॥
बलेनापूर्यमाणस्तु वयसा च प्लवङ्गमः ।
आश्रमेषु महर्षीणामपराध्यति नित्यशः ॥ ४ ॥
स्रुग्भाण्डान्यग्निमाल्यं च वल्कलानि च सर्वशः ।
भग्नविध्वस्तच्छिन्नानि करोत्येष प्लवङ्गमः ॥ ५ ॥
सर्वेषां ब्रह्मदण्डानामवध्यो विभुना कृतः ।
इति विज्ञाय मुनयः क्षमन्ते शक्तिहानितः ॥ ६ ॥
यदा केशरिणा त्वेष वायुना स्वजनैः सह ।
प्रतिषिद्धोऽपि मर्यादां लङ्घयत्येष वानरः ॥ ७ ॥
ततो महर्षयः क्रुद्धा भृग्वङ्गिरसवंशजाः ।
शेपुरेनं रघुश्रेष्ठ नातिक्रोधसमन्विताः ॥ ८ ॥
बाधसे यत् समाश्रित्य बलमस्मान् प्लवङ्गम ।
तत् त्वं नात्मबलं वेत्सि किञ्चिच्छापविमोहितः ॥ ९ ॥
स्मारितो मित्रकार्यार्थं स्ववीर्यं वेत्स्यसे पुनः ।

ततस्तु हततेजा हि महर्षिवचनौजसा ॥१०॥
आश्रमानेव तानेष मृदुभावं गतोऽचरत् ।
आसीद्यान्ऋजा नाम वालिसुग्रीवयोः पिता ॥११॥
वानराधिपतिर्वीरस्तेजसा भास्करोपमः ।
स तु राज्यं चिरं कृत्वा वानराणां हरीश्वरः ॥१२॥
श्रीमानऋजा नाम कालधर्ममुपेयिवान् ।
तस्मिन्नस्तमिते वाली मन्त्रिभिर्मल्लकोविदैः ॥१३॥
पित्र्ये पदे कृतः सोऽथ सुग्रीवो वालिनः पदे ।
सुग्रीवेण तदा त्वस्य अद्वैधं छिद्रवर्जितं ॥१४॥
अहार्यं सख्यमभवदनिलस्य यथाग्निना ।
एष शापवशादेव न वेद बलमात्मनः ॥१५॥
वालिसुग्रीवयोर्वैरं यदासीत् समुपस्थितं ।
तज्जानानो हि यद्येष बलमात्मनि मारुतिः ॥१६॥
तदेव विनिहन्यात् तं वालिनं हेममालिनं ।

पराक्रमोत्साहमतिप्रभावैः
सौशीर्यमाधुर्यनयानयैश्च ।
गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्
हनूमतः कोऽप्यधिकोऽस्ति लोके ॥१७॥
अयं पुरा व्याकरणं ग्रहीष्यन्
सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः ।

उद्यद्गिरेरस्तगिरिं जगाम
ग्रन्थं महद्धारयनप्रमेयः ॥ १८ ॥
लोकांश्च पिप्लावयिषोरिवाब्धेः
प्रजा दिधक्षोरिव पावकस्य ।
क्षयं चिकीर्षोरिव चान्तकस्य
हनूमतः कः स्थास्यति पुरस्तात् ॥ १९ ॥
अयं तथान्ये च महाकपीन्द्राः
सुग्रीवमैन्दद्विविदाः सनीलाः ।
सतारतारेयनलाः सरम्भास्
त्वत्कारणे राम सुरैस्तु सृष्टाः ॥ २० ॥
तदेतत् कथितं सर्वं यन्मां पृच्छसि राघव ।
हनूमतः प्रभावं च चरितं शापमेव च ॥ २१ ॥
दृष्टः सभाजितश्चासि गच्छामो राम सांप्रतं ।
एवमुक्त्वा गताः सर्वे मुनयस्ते यथागताः ॥ २२ ॥
आश्चर्यमिति रामश्च तान् संभाष्य ततो मुनीन् ।
विदित्वा चैव तत् सर्वं पूजयामास तान् पुनः ॥ २३ ॥
ततो गतेऽस्तं च रवौ स राघवो
विसर्जयित्वा नरवानरान् प्रभुः ।
उपास्य संध्यां विधिवद्विवेश
ततस्तु सोऽन्तःपुरमूर्जितश्रीः ॥ २४ ॥

# उत्तरकाण्डं

## XLI.

अभिषिक्ते तु काकुत्स्थे धर्मेण विदितात्मनि ।
व्यतीता सा निशा पूर्वं पौराणां हर्षवर्धिनी ॥ १ ॥
तस्यां रजन्यां व्युष्टायां प्रातर्नृपतिबोधकाः ।
वन्दिनः पर्युपासन्ते सौम्या नृपतिवेश्मनि ॥ २ ॥
वीर सौम्य विबुध्यस्व कौशल्याप्रीतिवर्धन ।
जगद्धि सर्वं स्वपिति त्वयि सुप्ते नराधिप ॥ ३ ॥
विक्रमस्ते यथा विष्णो रूपं चैवाश्विनोरिव ।
बुद्ध्या बृहस्पतेस्तुल्यः प्रजापतिसमो ह्यसि ॥ ४ ॥
क्षमा पृथिव्या इव ते तेजस्ते भास्करे यथा ।
वेगस्ते वायुना तुल्यो गाम्भीर्यमुदधेरिव ॥ ५ ॥
नेदृशाः पार्थिवाः पूर्वं भवितारो न चापरे ।
यादृक् त्वमसि दुर्धर्षो धर्मनित्यः प्रजाहितः ॥ ६ ॥
सदा त्वां भजते कीर्त्तिर्लक्ष्मीश्च पुरुषर्षभ ।
श्रीश्च धर्मश्च काकुत्स्थ नित्यं त्वय्येव तिष्ठते ॥ ७ ॥
अप्रकम्प्यो यथा स्थाणुश्चन्द्रः सौम्यतयानघ ।
स्थानं त्वममृतस्येव समत्वं च स्वयम्भुवः ॥ ८ ॥
एताश्चान्याश्च मधुरा वन्दिभिः परिकीर्त्तिताः ।
स्तुतयः स्तुतिशिक्षाज्ञैर्बोधयन्ति स्म राघवं ॥ ९ ॥

स तद्विहाय शयनं पाण्डुरप्रच्छदास्तृतं ।
उत्तस्थौ नागशयनाद्धरिर्नारायणो यथा ॥१०॥
समुत्थितं महाबाहुं प्रह्वाः प्राञ्जलयो नराः ।
सलिलं भाजनैः पूर्णैरुपजह्रुः सहस्रशः ॥११॥
कृतोदकः शुचिर्भूत्वा स्नातो हुतहुताशनः ।
देवीगृहं जगामाथ पुण्यमिक्ष्वाकुसेवितं ॥१२॥
तत्र देवान् पितॄन् विप्रानर्चयित्वा यथाविधि ।
बाह्यकक्षान्तरं रामो निर्जगाम जनैर्वृतः ॥१३॥
सभामेवाभिचक्राम पुण्यामिक्ष्वाकुसेवितां ।
उपास्त च ततो मन्त्रं मन्त्रिभिः सपुरोहितैः ॥१४॥
वशिष्ठप्रमुखैः सर्वैर्दीप्यमानैरिवाग्निभिः ।
क्षत्रियाश्च महात्मानो नानाजनपदेश्वराः ॥१५॥
रामस्योपाविशन् पार्श्वे शक्रस्येवामरा दिवि ।
भरतो लक्ष्मणश्चात्र शत्रुघ्नश्च महायशाः ॥१६॥
उपासां चक्रिरे रामं वेदास्त्रय इवाध्वरं ।
प्रणताः प्राञ्जलिपुटाः किङ्करा मुदिताननाः ॥१७॥
वानराश्च महावीर्या विविशुः कामरूपिणः ।
सुग्रीवमुख्या राजानः सर्वे ते सुमहौजसः ॥१८॥
विभीषणश्च धर्मात्मा चतुर्भिः सचिवैः सह ।
समुपास्त महात्मानं राघवं राक्षसेश्वरः ॥१९॥

तथा निगमवृद्धाश्च कुलज्ञाताश्च मानवाः ।
शिरोभिरभिसंपूज्य समुपासन्त राघवं ॥ २० ॥
तथा परिवृतो वीरः सुमहद्भिर्महायशाः ।
शुशुभे विमलः पूर्णो ग्रहैरिव निशाकरः ॥ २१ ॥
यथा च देवप्रवरो देवर्षिभिरुपास्यते ।
तथोपास्यत रामस्तैः स महात्मा नरेश्वरैः ॥ २२ ॥
तेषां समुपविष्टानां तत् तत् सुमधुरं बहु ।
कथयां चक्रिरे पौराः पुराणं धर्मसंहितं ॥ २३ ॥
स राघवो ह्येवमुपास्यमानो
नरेन्द्रशाखामृगराक्षसाद्यैः ।
चकार कार्याणि समीक्ष्य सम्यक्
शास्त्रेषु राज्ञां विदितानि यानि ॥ २४ ॥

इत्युत्तरकाण्डे ऋषिप्रयाणं नाम चत्वारिंशः
सर्गः — प्रकृतिसमागमो नाम
एकचत्वारिंशः सर्गः ॥

# उत्तरकाण्डं

## XLII.

एवमास्ते महाबाहुरहन्यहनि राघवः ।
पौरजानपदानां च कुर्वन् कार्याणि सर्वदा ॥ १ ॥
ततः कतिपयाहस्सु वैदेहं मिथिलाधिपं ।
राघवः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ २ ॥
भवान् नो गतिरव्यग्रा भवता पालिता वयं ।
भवतस्तेजसा राजन् रावणो निहतो मया ॥ ३ ॥
इक्ष्वाकूणां च सर्वेषां मैथिलानां च सर्वशः ।
अतुलाः प्रीतयो राजन् सम्बन्धकपुरस्कृताः ॥ ४ ॥
तत् पुरं स्वं भवान् यातु रत्नान्यादाय सर्वशः ।
भरतेन सहायेन त्वामेष ह्यनुयास्यति ॥ ५ ॥
तथेत्युक्त्वा स राजर्षिरवोचद्राघवं वचः ।
प्रीतोऽस्मि भवतो राजन् दर्शनेन नयेन च ॥ ६ ॥
यान्येतानि च रत्नानि मदर्थं वर्जितानि वै ।
एतान्यहं प्रयच्छामि तुभ्यमेव नरर्षभ ॥ ७ ॥
ततः प्रयाते जनके कैकेयं मातुलं प्रभुः ।
युधाजितमथो रामः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ८ ॥
इदं राज्यमहं चैव भरतश्च सलक्ष्मणः ।
आयत्तास्त्वं हि नो नाथो गुरुश्च पुरुषर्षभ ॥ ९ ॥

राजापि वृद्धः संतापं त्वदर्थमुपयास्यति ।
तस्माद्गमनमद्यैव रोचते मे तवानघ ॥१०॥
लक्ष्मणश्चैव यान्तं त्वां पृष्ठतोऽनुगमिष्यति ।
धनमादाय विपुलं रत्नानि विविधानि च ॥११॥
युधाजित् तु तथेत्याह गमनं प्रति राघवं ।
रत्नानि च धनं चैव त्वय्येवाक्षयमस्त्विति ॥१२॥
प्रदक्षिणं स राजानं कृत्वा कैकेयनन्दनः ।
रामेण सत्कृतः पूर्वमभिवाद्य ततो ययौ ॥१३॥
गते तस्मिंस्ततो रामो वयस्यमकुतोभयं ।
प्रतर्दनं काशिपतिं परिष्वज्येदमब्रवीत् ॥१४॥
दर्शिता भवता प्रीतिः सौहार्दं दर्शितं परं ।
उद्योगोऽयं त्वया राजन् भरतेन कृतः सह ॥१५॥
तत् त्वमद्यैव काशीश गच्छ वाराणसीं पुरीं ।
रमणीयं त्वया गुप्तामिन्द्रेणेवामरावतीं ॥१६॥
उत्थायैतावदुक्त्वा च काकुत्स्थः परमासनात् ।
पर्यष्वजत धर्मात्मा काशिराजं प्रतर्दनं ॥१७॥
तं विसृज्य महातेजाः सर्वांस्तान् पृथिवीपतीन् ।
प्रहसन् राघवो वाक्यमुवाच मधुरं तदा ॥१८॥
भवन्तो गुणसंपन्ना भवतां वीर्यमद्भुतं ।
धर्मश्च नियतो नित्यं नित्यं च प्रीतिरुत्तमा ॥१९॥

युष्माकं च प्रभावेण तेजसा च महात्मनां ।
हतो मया सुदुर्बुद्धी रावणो राक्षसाधिपः ॥ २० ॥
हेतुमात्रमहं तत्र भवतां तेजसा हतः ।
रावणः सगणो युद्धे सपुत्रः सहबान्धवः ॥ २१ ॥
भवन्तश्च समानीता भरतेन महात्मना ।
श्रुत्वा जनकराजस्य राक्षसापहृतां सुतां ॥ २२ ॥
उत्सुकानां च सर्वेषां भवतां सुमहात्मनां ।
कालो व्यतीतः सुमहान् गमने रोचते मतिः ॥ २३ ॥
तथेत्यूचुर्नृपतयो मुदा परमया युताः ।
दिष्ट्यासि विजयी राम राज्ये चैव प्रतिष्ठितः ॥ २४ ॥
एष नः परमः काम एषा नः प्रीतिरुत्तमा ।
यत् त्वां विजयिनं राम पश्यामो हतकण्टकं ॥ २५ ॥
एतत् त्वय्युपपन्नं च यदस्मांस्त्वं प्रशंससि ।
प्रशंसार्होऽसि राजेन्द्र प्रशंसामस्ततो वयं ॥ २६ ॥
हता हि बाहुवीर्येण राक्षसास्ते नृपोत्तम ।
आमन्त्रयामहे वीर हृदि ते नित्यशो वयं ॥ २७ ॥
वर्तामहे महाबाहो प्रीतिर्ह्यस्माकमुत्तमा ।
भवेच्च ते महाराज प्रीतिरस्मासु नित्यदा ॥ २८ ॥
ते प्रयाता महात्मानः पार्थिवाः सर्वतो दिशः ।
रथवाजिसहस्रौघैः कम्पयन्तो वसुन्धरां ॥ २९ ॥

अक्षौहिण्यो हि तत्रासन् राघवार्थे समुद्यताः ।
भरतस्याज्ञया नैकाः प्रहृष्टनरवाहनाः ॥ ३० ॥
ऊचुस्ते तु महीपाला बलदर्पसमन्विताः ।
न राम रावणं युद्धे पश्यामः पुरतः स्थितं ॥ ३१ ॥
भरतेन वयं वश्याः समानीता निरर्थकं ।
हता हि राक्षसाः क्षिप्रं पार्थिवैः स्युर्न संशयः ॥ ३२ ॥
रामस्य बाहुवीर्येण रक्षिता लक्ष्मणस्य च ।
सुखं पारे समुद्रस्य युध्येम हि गतज्वराः ॥ ३३ ॥
एताश्चान्याश्च राजानः कथास्तत्र सहस्रशः ।
कथयन्तः स्वराष्ट्राणि विविशुस्ते बलैर्वृताः ॥ ३४ ॥
पुराणि स्वानि ते गत्वा रत्नानि विविधान्यथ ।
रामाय प्रीतिकामार्थमुपहारं नृपा ददुः ॥ ३५ ॥
अश्वान् यानानि रत्नानि हस्तिनश्च मदोत्कटान् ।
चन्दनागुरुमुख्यानि दिव्यान्याभरणानि च ॥ ३६ ॥
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महायशाः ।
आदाय तानि रत्नानि तेऽयोध्यामागताः पुनः ॥ ३७ ॥
आगम्य च पुरीं रम्यामयोध्यां पुरुषर्षभाः ।
तानि रत्नानि रामाय विचित्राणि न्यवेदयन् ॥ ३८ ॥
प्रतिगृह्य च तत् सर्वं प्रीतियुक्तः स राघवः ।
सुग्रीवाय ददौ राज्ञे महात्मा कृतकर्मणे ॥ ३९ ॥

विभीषणाय च ददौ तथान्येभ्योऽपि राघवः ।
कपिभ्यो राक्षसेभ्यश्च यैर्वृतो युद्धवांस्तदा ॥ ४० ॥
ते सर्वे रामदत्तानि रत्नानि कपिराक्षसाः ।
शिरोभिर्धारयामासुर्भुजैश्च भुजगोपमैः ॥ ४१ ॥
हनूमन्तं च नृपतिरिक्ष्वाकूणां महारथः ।
अङ्गदं च महाबाहुमङ्कमारोप्य वीर्यवान् ॥ ४२ ॥
रामः कमलपत्राक्षः सुग्रीवमिदमब्रवीत् ।
अङ्गदस्ते सुपुत्रोऽयं सुमन्त्री चानिलात्मजः ॥ ४३ ॥
सुग्रीव मन्त्रिते युक्तौ मम चापि हिते रतौ ।
अर्हतोऽभ्यधिकां पूजां त्वत्कृते वै हरीश्वर ॥ ४४ ॥
इत्युक्त्वा व्यवमुच्याङ्गाद्भूषणानि महायशाः ।
आबबन्ध महार्हाणि तदाङ्गदहनूमतोः ॥ ४५ ॥
आभाष्य च महावीर्यान् राघवो यूथपर्षभान् ।
नलं नीलं केशरिणं कुमुदं गन्धमादनं ॥ ४६ ॥
सुषेणं पनसं वीरं मैन्दं द्विविदमेव च ।
जाम्बवन्तं गवाक्षं च विनतं धूम्रमेव च ॥ ४७ ॥
बलीमुखं प्रजङ्घं च संनादं च महाबलं ।
दरीमुखं दधिमुखमिन्द्रजानुं च यूथपं ॥ ४८ ॥
मधुरं श्लक्ष्णया वाचा नेत्राभ्यां चापिबन्निव ।
सुहृदो हि भवन्तो मे शरीरं भ्रातरस्तथा ॥ ४९ ॥

युष्माभिरुद्धृतश्चाहं व्यसनात् काननौकसः ।
धन्यो राजा च सुग्रीवो भवद्भिः सुहृदां वरैः ॥५०॥
एवमुक्त्वा ददौ तेभ्यो भूषणानि यथार्हतः ।
वस्त्राणि च महार्हाणि सस्वजे च नरर्षभः ॥५१॥
ते पिबन्ति सुगन्धीनि मधूनि मधुपिङ्गलाः ।
मांसानि च सुमृष्टानि मूलानि च फलानि च ॥५२॥
एवं तेषां निवसतां मासः साग्रो ययौ तदा ।
मुहूर्त्तमिव ते सर्वे रामभक्त्या च मेनिरे ॥५३॥
रामोऽपि रेमे तैः सार्धं वानरैः कामरूपिभिः ।
राक्षसैश्च महावीर्यैर्ऋक्षैश्च सुमहाबलैः ॥५४॥
एवं तेषां ययौ मासो द्वितीयः शिशिरः सुखं ।
वानराणां प्रहृष्टानां राक्षसानां च सर्वशः ॥५५॥

इत्युत्तरकाण्डे राजसंप्रेषणं नाम
द्विचत्वारिंशः सर्गः ॥

# उत्तरकाण्डं

## XLIII.

बालोदितार्कवपुषं पीनस्कन्धं महाभुजं ।
राघवस्तु महातेजाः सुग्रीवमिदमब्रवीत् ॥ १ ॥
गम्यतां वीर किष्किन्ध्यां दुराधर्षां सुरैरपि ।
पालयस्व महासत्त्व राज्यं निहतकण्टकं ॥ २ ॥
अङ्गदं च महाबाहुं प्रीत्या परमयान्वितः ।
संपश्य च हनूमन्तं नलं च सुमहाबलं ॥ ३ ॥
सुषेणं श्वशुरं वीरं तारं चानलविक्रमं ।
कुमुदं चैव दुर्धर्षं सुबाहुं चापराजितं ॥ ४ ॥
वीरं शवबलिं चैव मैन्दं द्विविदमेव च ।
गवयं च गवाक्षं च शरभं गन्धमादनं ॥ ५ ॥
ऋक्षराजं च दुर्धर्षं जाम्बवन्तं महाबलं ।
ये चान्ये सुमहात्मानो मदर्थे त्यक्तजीविताः ॥ ६ ॥
पश्य तान् प्रीतिसंयुक्तो मा चैषां विप्रियं कृथाः ।
एवमुक्त्वा स सुग्रीवं प्रशंस्य च पुनः पुनः ॥ ७ ॥
विभीषणमथोवाच राघवो मधुरां गिरं ।
लङ्कां प्रशाधि धर्मेण संमतो ह्यसि पार्थिव ॥ ८ ॥
सुराणां रक्षसां चैव भ्रातुर्वैश्रवणस्य च ।
मा च बुद्धिमधर्मे त्वं कृथा राजन् कदाचन ॥ ९ ॥

बुद्धिमन्तो हि राजानो ध्रुवमश्नन्ति मेदिनीं ।
अहं च नित्यशो राजन् सुग्रीवसहितस्त्वया ॥ १० ॥
स्मर्तव्यः परया प्रीत्या स्नेहस्यैषा परा गतिः ।
रामस्य भाषितं श्रुत्वा ऋक्षवानरराक्षसाः ॥ ११ ॥
साधु साध्विति काकुत्स्थं प्रशशंसुः पुनः पुनः ।
तव बुद्धिर्महाबाहो वीर्यमद्भुतमेव च ॥ १२ ॥
माधुर्यं परमं राम स्वयम्भुव इव ध्रुवं ।
तेषां तु ब्रुवतामेवं ऋक्षवानररक्षसां ॥ १३ ॥
हनूमान् प्रणतो भूत्वा रामं वाक्यमथाब्रवीत् ।
स्नेहो मे परमो राजंस्त्वयि तिष्ठति नित्यशः ॥ १४ ॥
भक्तिश्च नियता नित्यं भावमन्यं न गच्छति ।
यावद्रामकथा वीर चरिष्यति महीतले ॥ १५ ॥
तावच्छरीरे स्थास्यन्ति मम प्राणा न संशयः ।
एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् ॥ १६ ॥
उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह ।
एवमेतत् कपिश्रेष्ठ भविता नात्र संशयः ॥ १७ ॥
लोका हि यावत् स्थास्यन्ति तावत् स्थास्यन्ति मे कथाः ।
भविष्यति यावदेषा लोके च मामका कथा ॥ १८ ॥
तावत् ते भविता कीर्त्तिः शरीरेऽप्यसवस् तथा ।
अङ्गेभ्यस्तु जरा मास्तु यत् त्वयोपहृतं कपे ॥ १९ ॥

तस्य प्रत्युपकाराणामापत्सु लभते फलं ।
ततो हारं तु चन्द्राभं मुक्त्वा कण्ठात् स राघवः ॥ २० ॥
वैदूर्यतरलं कण्ठे बबन्ध च हनूमतः ।
तेनोरसि निबद्धेन हारेण महता कपिः ॥ २१ ॥
रराज काञ्चनः शैलश्चन्द्रेणाक्रान्तमस्तकः ।
श्रुत्वा तु राघवस्यैतदुत्थायोत्थाय वानराः ॥ २२ ॥
प्रणम्य शिरसा पादौ निर्जग्मुस्ते महाबलाः ।
सुग्रीवश्चैव रामेण परिष्वक्तो महाभुजः ॥ २३ ॥
विभीषणश्च धर्मात्मा निरन्तरमुरोगतः ।
सर्वे ते वाष्पकलिलाः साश्रुनेत्रा विचेतसः ॥ २४ ॥
संमूढा इव दुःखेन त्यजन्तो राघवं तदा ।
जग्मुः स्वं स्वं गृहं सर्वे देही देहमिव त्यजन् ॥ २५ ॥

इत्युत्तरकाण्डे वानरर्क्षराक्षससंप्रेषणं
नाम त्रिचत्वारिंशः सर्गः ॥

## XLIV.

विसृज्य तु महाबाहुर्ऋक्षवानरराक्षसान् ।
भ्रातृभिः सहितो रामः प्रमुमोद सुखी सुखं ॥ १ ॥
अथापराह्णसमये भ्रातृभिः सह राघवः ।
शुश्राव मधुरां वाणीमन्तरीक्षगतां प्रभुः ॥ २ ॥
सौम्य राम निरीक्षस्व सौम्येन वदनेन मां ।
कुबेरभवनात् प्राप्तं विद्धि मां पुष्पकं विभो ॥ ३ ॥
तव शासनमाज्ञाय गतोऽस्मि धनदं प्रति ।
उपस्थितं नरश्रेष्ठ स च मां प्रत्यभाषत ॥ ४ ॥
निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना ।
निहत्य युधि दुर्धर्षं रावणं राक्षसाधिपं ॥ ५ ॥
ममापि परमा प्रीतिर्हते तस्मिन् दुरात्मनि ।
रावणे सगणे रौद्रे सपुत्रे सहबान्धवे ॥ ६ ॥
स त्वं रामेण लङ्कायां निर्जितः परमात्मना ।
वह सौम्य तमेव त्वमहमाज्ञापयामि ते ॥ ७ ॥
परमो ह्येष मे कामो यत् त्वं राघवनन्दनं ।
वहेः सुप्रीतिमनसं तस्मात् तत्रैव गम्यतां ॥ ८ ॥
सोऽहं शासनमाज्ञाय धनदस्य महात्मनः ।
त्वत्सकाशमनुप्राप्तो निर्विशङ्कः प्रतीच्छ मां ॥ ९ ॥

अधृष्यश्चैव भूतानां सर्वेषां धनदाज्ञया ।
चराम्यात्मप्रभावेन तवाज्ञां परिपालयन् ॥ १० ॥
एवमुक्तस्तदा रामः पुष्पकेण महाबलः ।
उवाच पुष्पकं दृष्ट्वा विमानं पुनरागतं ॥ ११ ॥
यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक ।
आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत् ॥ १२ ॥
लाजैश्चैव तथा पुष्पैर्धूपैश्चैव सुगन्धिभिः ।
पूजयित्वा महाबाहू राघवः पुष्पकं तदा ॥ १३ ॥
गम्यतामिति चावोचदागच्छेः संस्मृतो मया ।
सिद्धानां च गतिं सौम्य मा विषातेन यूयुजः ॥ १४ ॥
एवमस्त्विति रामेण पूजयित्वा विसर्जितं ।
अभिप्रेतां दिशं तस्मात् प्रायात् तत् पुष्पकं तदा ॥ १५ ॥
एवमन्तर्हिते तस्मिन् पुष्पके विदितात्मनि ।
भरतः प्राञ्जलिर्वाक्यमुवाच रघुनन्दनं ॥ १६ ॥
अत्यद्भुतानि दृश्यन्ते त्वयि वीर प्रशासति ।
अमानुषाणां सत्त्वानां व्याहृतानि मुहुर्मुहुः ॥ १७ ॥
अनामयानां सत्त्वानां साग्रो मासोऽद्य वर्तते ।
जीर्णानामपि सत्त्वानां मृत्युर्नाभ्येति राघव ॥ १८ ॥
प्रसूयन्ते सुतान्नार्यो वपुः पुष्यन्ति मानवाः ।
हर्षश्चाभ्यधिको राजन् जनस्य पुरवासिनः ॥ १९ ॥

काले वर्षति पर्जन्यः पातयन्नमृतं पयः ।
वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः ॥ २० ॥
ईदृशो नश्चिरं राजा भवेदिति नरेश्वरः ।
कथयन्ति पुरे पौरा जना जनपदेषु च ॥ २१ ॥
एता वाचः सुमधुरा भरतेन समीरिताः ।
श्रुत्वा रामो मुदा युक्तो बभूव नृपसत्तमः ॥ २२ ॥

इत्युत्तरकाण्डे पुष्पकप्रत्यागमनं नाम
चतुश्चत्वारिंशः सर्गः ॥

## XLV.

स विसृज्य ततो रामः पुष्पकं हेमभूषितं ।
प्रविवेश महाबाहुरशोकवनिकां शुभां ॥ १ ॥
यत्राशोकः प्रियङ्गुश्च चम्पका नवमालिकाः ।
सुबहूनि सुगन्धीनि माल्यानि विविधानि च ॥ २ ॥
अकालपुष्पास्तरवः शिल्पिभिः परिकल्पिताः ।
ते पुष्पिता बहुविधा बभुर्मायाकृता इव ॥ ३ ॥
संहर्षादिव जातानां वृक्षाणां पुष्पशालिनां ।
प्रस्तराः पुष्पशबला बभुस्तारागणा इव ॥ ४ ॥
यत्रोद्देशाः सुरुचिरा वैडूर्यमणिसंनिभाः ।
शाद्वलैः परमोपेताः सीतार्थमुपकल्पिताः ॥ ५ ॥
चन्दनागुरुपर्णैश्च तुङ्गकालीयकैरपि ।
देवदारुवनैश्चापि समन्तादुपशोभिताः ॥ ६ ॥
चम्पकाशोकपुन्नागैर्मधूकपनसादिभिः ।
वृक्षैर्बहुविधैश्चापि शोभिता हेमसप्रभैः ॥ ७ ॥
लोध्रनीपार्जुनैर्निम्बैः सप्तपर्णातिमुक्तकैः ।
मन्दारकदलीगुल्मलताजालसमावृताः ॥ ८ ॥
प्रियङ्गुभिः कदम्बैश्च तथा च बकुलैरपि ।
जम्बुभिः पाटलाभिश्च कोविदारैश्च शोभिताः ॥ ९ ॥

सर्वर्तुकुसुमैर्दिव्यैः फलवद्भिः सुपुष्पितैः ।
दिव्यगन्धरसोपेतैस्तरुणाङ्कुरकोमलैः ॥ १० ॥
शोभितास्तरुभिर्दिव्यैः शिल्पिभिः परिकल्पितैः ।
चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरकूजितैः ॥ ११ ॥
कोकिलैर्भृङ्गराजैश्च नानावर्णैश्च पक्षिभिः ।
शोभिताः पुष्पपत्रैश्च चूतवृक्षावतंसकैः ॥ १२ ॥
शातकुम्भमयैः केचित् केचिदग्निशिखोपमैः ।
नीलाञ्जननिभैश्चान्यैः शोभिता वरपादपैः ॥ १३ ॥
दीर्घिकास्तत्र रुचिराः पूर्णाश्च परमाम्भसा ।
महार्हमणिसोपानाः स्फटिकान्तरकुट्टिमाः ॥ १४ ॥
फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ।
दात्यूहगणसंघुष्टा हंससारसनादिताः ॥ १५ ॥
तरुभिः पुष्पशबलैस्तीरजैरुपशोभिताः ।
प्रासादैर्विविधाकारैः शोभिताश्च शिलातलैः ॥ १६ ॥
तत्र तत्र वनोद्देशे वैडूर्यमणिसंनिभाः ।
शाड्वलैः परमोपेताः सीतार्थमुपकल्पिताः ॥ १७ ॥
नन्दनं हि यथेन्द्रस्य ब्राह्म्यं चैत्ररथं यथा ।
तथाभूतं हि रामस्य काननं तन्निवेशितं ॥ १८ ॥
बह्वासनगृहोपेतां लतापादपसंवृतां ।
अशोकवनिकां स्फीतां प्रविश्य रघुनन्दनः ॥ १९ ॥

आसने सुशुभाकारे पुष्पप्राकारभूषिते ।
कुथास्तरणसंस्तीर्णे रामः संनिषसाद ह ॥ २० ॥
सीतामादाय बाहुभ्यां मधुमैरेयकं शुचि ।
पाययामास काकुत्स्थः शचीमिन्द्रो यथामृतं ॥ २१ ॥
मांसानि च सुमृष्टानि विविधानि फलानि च ।
रामस्याभ्यवहारार्थं किङ्करास्तूर्णमाहरन् ॥ २२ ॥
अप्सरोगणसंघाश्च नृत्यगीतविशारदाः ।
दक्षिणा रूपवत्यश्च स्त्रियः पानवशं गताः ॥ २३ ॥
उपानृत्यन्त रामस्य सीताया हर्षवर्धनाः ।
एवं रामो मुदा युक्तः सीतां सुरुचिराननां ॥ २४ ॥
रमयामास वैदेहीमहन्यहनि देववत् ।
तथा च रममानस्य तस्याथ शिशिरागमः ॥ २५ ॥
व्यतीतः पुरुषेन्द्रस्य राघवस्य महात्मनः ।
पूर्वाह्णे पौरकार्याणि कृत्वा धर्मेण धर्मवित् ॥ २६ ॥
शेषं दिवसभागार्धमन्तःपुरगतोऽनयत् ।
सीतापि देवकार्याणि कृत्वा पौर्वाह्णिकानि च ॥ २७ ॥
श्वश्रूणामकरोत् पूजां सर्वासामविशेषतः ।
अभ्यगच्छत् ततो रामं विचित्राभरणाम्बरा ॥ २८ ॥
त्रिपिष्टपे सहस्राक्षमुपविष्टं यथा शची ।
दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्वितां ॥ २९ ॥

प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ।
अब्रवीच्च वरारोहां सीतां सुरसुतोपमां ॥ ३० ॥
अपत्यकालो वैदेहि तवायं समुपस्थितः ।
किमिच्छसि वरारोहे कामः कः क्रियतां तव ॥ ३१ ॥
स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् ।
आश्रमाणि पवित्राणि द्रष्टुमिच्छामि राघव ॥ ३२ ॥
गङ्गातीरनिविष्टानि ऋषीणामुग्रतेजसां ।
फलमूलाशिनां देव पादमूलमुपासितुं ॥ ३३ ॥
एष एव हि कामो मे यन्मूलफलभोजिनां ।
अप्येकरात्रिं काकुत्स्थ निवसेयं तपोवने ॥ ३४ ॥
तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा ।
विस्रब्धा भव वैदेहि गमिष्यसि तपोवनं ॥ ३५ ॥
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजां ।
अन्यकक्षान्तरं तस्मान्निर्जगामाथ वेश्मनः ॥ ३६ ॥

इत्युत्तरकाण्डे सीतादोहदो नाम
पञ्चचत्वारिंशः सर्गः ॥

## XLVI.

उपविष्टस्ततो रामः सुहृद्भिः परिवारितः ।
कथानां बहुरूपाणामशृणोत् सारविस्तरं ॥ १ ॥
विजयोऽथ सुमन्त्रश्च कश्यपः पिङ्गलस्तथा ।
सुराजिः कालियो भद्रो दन्तवक्त्रः सुमागधः ॥ २ ॥
उपविष्टा बहुविधाः परिहाससमन्विताः ।
कथयन्ति स्म रामस्य कथास्तत्र महात्मनः ॥ ३ ॥
ततः कथायां कस्यांचिद्राघवस्तानभाषत ।
काः कथा इह वर्तन्ते पुरे जनपदे तथा ॥ ४ ॥
मदाश्रया वा काः प्राह पौरजानपदो जनः ।
किं च सीतां समाश्रित्य भरतं किं च लक्ष्मणं ॥ ५ ॥
शत्रुघ्नं च सुमित्रां च कैकेयीं मातरं च मे ।
कथयन्ति गुणान् यांस्तु दोषान् वा ब्रूत तन्मम ॥ ६ ॥
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् ।
शुभाशुभाः कथा राजन् वर्तन्ते पुरवासिनां ॥ ७ ॥
अयं तु विजयः सौम्य दशग्रीववधाश्रयः ।
भूयिष्ठः स्वपुरे पौरैः कथ्यते पुरुषर्षभ ॥ ८ ॥
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् ।
कथय त्वं यथातत्त्वं सर्वं निरवशेषतः ॥ ९ ॥

शुभाशुभानि वाक्यानि यान्याहुः पुरवासिनः ।
श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभं हि यत् ॥१०॥
कथय त्वं सुविश्रब्धो निर्भयो विगतज्वरः ।
कथयन्ति यथा पौराः पुरे जनपदेषु च ॥११॥
राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः ।
प्रत्युवाच महाबाहुं प्राञ्जलिर्वाक्यकोविदः ॥१२॥
शृणु राजन् यथा पौराः कथयन्ति शुभाशुभं ।
चत्वरायनरथ्यासु वनेषूपवनेषु च ॥१३॥
दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनं ।
अकृतं पूर्वकैः कैश्चित् सेन्द्रैरपि सुरासुरैः ॥१४॥
रावणश्च दुराधर्षो हतः सबलवाहनः ।
वानराश्च वशं नीता ऋक्षाश्च राक्षसैः सह ॥१५।
हत्वा च रावणं युद्धे सीतामाहृत्य राघवः ।
अमर्ष पृष्ठतः कृत्वा स्वं प्रावेशयदालयं ॥१६॥
कीदृशं हृदये तस्य सीतासंगमजं सुखं ।
अङ्कमारोप्य या पूर्वं रावणेन हृता बलात् ॥१७॥
लङ्कां चापि पुरीं नीतामशोकवनिकां गतां ।
कथं रक्षोवशं प्राप्तां रामः कुत्सयते न तां ॥१८॥
अस्माकमपि दाराणां सहनीयं भविष्यति ।
यच्छीलो हि भवेद्राजा तच्छीला च प्रजा भवेत् ॥१९॥

एवं बहुविधा वाचो वदन्ति पुरवासिनः ।
वैदेह्याः कारणे राजन् तथा जानपदो जनः ॥ २० ॥
तस्य श्रुत्वाप्रियं वाक्यं राघवः परमार्त्तवत् ।
उवाच सर्वान् सुहृदः कथमेतदिति प्रभुः ॥ २१ ॥
शिरोभिस्ते ततो राममभिगम्य प्रणम्य च ।
ऊचुर्नरपतिं दीनमेवमेतन्न संशयः ॥ २२ ॥
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वैस्तत् समुदीरितं ।
विसर्जयामास ततः सर्वांस्तान् सुहृदः प्रभुः ॥ २३ ॥

इत्युत्तरकाण्डे भद्रवाक्यं नाम
षट्चत्वारिंशः सर्गः ॥

## XLVII.

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः ।
समीपे द्वास्थमासीनमिदं वचनमब्रवीत् ॥ १ ॥
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणं ।
भरतं च महाबाहुं शत्रुघ्नं चापराजितं ॥ २ ॥
रामस्य भाषितं श्रुत्वा क्षत्ता मूर्ध्नि कृताञ्जलिः ।
लक्ष्मणस्य गृहं गत्वा प्रविवेश विनीतवत् ॥ ३ ॥
तमुवाच महात्मानं वर्धयित्वा कृताञ्जलिः ।
द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरं ॥ ४ ॥
यावद्भरतशत्रुघ्नौ त्वरयामि नृपाज्ञया ।
बाढमित्येव सौमित्रिः श्रुत्वा रामस्य शासनं ॥ ५ ॥
प्रस्थितो रथमारुह्य राघवस्य निवेशनं ।
प्रयाते लक्ष्मणे द्वास्थो भरतं स्वगृहे स्थितं ॥ ६ ॥
उवाच प्राञ्जलिर्वाक्यं राजा त्वां द्रष्टुमिच्छति ।
भरतस्तद्वचः श्रुत्वा क्षत्त्रा यत् समुदीरितं ॥ ७ ॥
उत्पपातासनात् तूर्णं पद्भ्यामेव ययौ च सः ।
दृष्ट्वा प्रयातं भरतं त्वरमाणः कृताञ्जलिः ॥ ८ ॥
शत्रुघ्नभवनं गत्वा शत्रुघ्नं वाक्यमब्रवीत् ।
एह्यागच्छ रघुश्रेष्ठ रामस्त्वां द्रष्टुमिच्छति ॥ ९ ॥

गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः ।
श्रुत्वा तु गदतस्तस्य शत्रुघ्नो रामशासनं ॥ १० ॥
शिरसि प्रतिगृह्याज्ञां ययौ यत्र स राघवः ।
द्वास्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ॥ ११ ॥
निवेदयामास तदा भ्रातॄंस्तान् समुपस्थितान् ।
कुमारानागतान् श्रुत्वा चिन्ताव्याकुलितेन्द्रियः ॥ १२ ॥
अधःशिरा दीनमना द्वास्थं वचनमब्रवीत् ।
प्रवेशय कुमारांस्तान् मत्समीपं त्वरान्वितः ॥ १३ ॥
मम जीवितमेवैते प्राणाश्चैव वहिश्चराः ।
आज्ञप्तास्ते नरेन्द्रेण कुमाराः सूर्यवर्चसः ॥ १४ ॥
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ।
ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ॥ १५ ॥
सन्ध्यागतमिवादित्यमभ्रजालसमावृतं ।
बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ॥ १६ ॥
म्लानपत्रस्य पद्मस्य मुखं च सदृशप्रभं ।
शिरोभिस्ते तदा राममभिवाद्य नृपात्मजाः ॥ १७ ॥
तस्थुः प्राञ्जलयः सर्वे रामोऽप्यश्रूण्यवर्तयत् ।
तान् परिष्वज्य बाहुभ्यां सौहार्दं मनुजाधिपः ॥ १८ ॥
आसनेष्वास्यतामित्युक्त्वा ततो वाक्यं जगाद ह ।
भवन्तो मम सर्वस्वं भवन्तो मम जीवितं ॥ १९ ॥

भवतां च कृते राष्ट्रं पालयामि महाबलाः ।
भवन्तः सर्वशास्त्रज्ञा बुद्धौ च परिनिष्ठिताः ॥ २० ॥
तद्भवद्भिः महार्थोऽयमन्वेष्टव्यो नरर्षभाः ।
तथा ब्रुवति काकुत्स्थे ते च ध्यानपरायणाः ।
उद्विग्नमनसो दध्युः किं नो राजा वदिष्यति ॥ २१ ॥

इत्युत्तरकाण्डे भ्रात्राह्वानं नाम
सप्तचत्वारिंशः सर्गः ॥

## XLVIII.

तेषां समुपविष्टानां सर्वेषां दीनचेतसां ।
अश्रुपूर्णमुखो राम इदं वचनमब्रवीत् ॥ १ ॥
सीतापवादः सुमहान् पौरजानपदैः कृतः ।
चारित्रं प्रति वैदेह्या अज्ञानान्मन्दबुद्धिभिः ॥ २ ॥
अयशः सुमहद्धीराः पुरे जनपदे तथा ।
वर्तते मयि बीभत्सं तन्मे मर्माणि कृन्तति ॥ ३ ॥
अहं किल कुले जात इक्ष्वाकूणां महात्मनां ।
सीतां पापसमाचारामानयेयं पुनः कथं ॥ ४ ॥
जानासि त्वं यथा सौम्य दण्डके विजने वने ।
रावणेन हृता सीता स च विध्वंसितो मया ॥ ५ ॥
प्रत्यक्षं तव सौमित्रे देवानां च हुताशनः ।
अपापां मैथिलीं प्राह वायुश्चाकाशगोचरः ॥ ६ ॥
शशंसतुश्च चन्द्रार्कौ सुराणां सन्निधौ पुरा ।
ऋषीणां चैव सर्वेषामपापां जनकात्मजां ॥ ७ ॥
एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ।
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता ॥ ८ ॥
अन्तरात्मा च मे वेत्ति सीताया गुणविस्तरं ।
अतो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥ ९ ॥

अयं महानधर्मो मे शोकश्च हृदि वर्तते ।
पौरापवादः सुमहांस्तथा जनपदस्य च ॥१०॥
अकीर्त्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ।
निरये पच्यते तेन यावत् सा सौम्य गीयते ॥११॥
अकीर्त्तिरधमा लोके कीर्त्तिर्लोकेषु पूज्यते ।
कीर्त्तिर्धर्मं प्रभवति कीर्त्तिर्लोके प्रशस्यते ॥१२॥
अपि स्वं जीवितं जह्यां युष्मान् वा पुरुषर्षभाः ।
अपवादभयाद्भीतः किं पुनर्जनकात्मजां ॥१३॥
ते मां भवन्तः पश्यन्तु पतितं शोकसागरे ।
न हि पश्याम्यतो भूयः किञ्चिद् दुःखतरं मम ॥१४॥
श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथं ।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥१५॥
गङ्गायास्तु परे पारे वाल्मीकेः सुमहात्मनः ।
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः ॥१६॥
तत्रैनां विजनेऽरण्ये उत्सृज्य रघुनन्दन ।
शीघ्रमागच्छ सौमित्रे कुरुष्व वचनं मम ॥१७॥
न चास्मि प्रतिवक्तव्यः सीतां प्रति कदाचन ।
अप्रीतिर्हि परा मे स्याद्वचनेऽस्मिन् विचारिते ॥१८॥
शापिताश्च मया यूयं भुजाभ्यां जीवितेन च ।
यो मां वाक्यान्तरे ब्रूयाद्वचोऽनुनयसंहितं ॥१९॥

स मे शत्रुरिति ज्ञेयः सत्यमेतद्ब्रवीमि वः ।
यद्यहं प्रभविष्णुर्वो यदि वा मयि गौरवं ॥ २० ॥
नीयतां जानकी शीघ्रं कुरुध्वं वचनं मम ।
पूर्वं हि कामो वैदेह्या गङ्गातीरे यथाश्रमान् ॥ २१ ॥
द्रष्टुमिच्छेयमित्युक्तः स कामः क्रियतां तथा ।
एवमुक्त्वा तु काकुत्स्थो वाष्पेण पिहितेक्षणः ।
प्रविवेश स धर्मात्मा भ्रातृभिः परिवेष्टितः ॥ २२ ॥

इत्युत्तरकाण्डे रामवाक्यं नाम
अष्टाचत्वारिंशः सर्गः ॥

## XLIX.

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनमानसः ।
सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥ १ ॥
सारथे तुरगान् शीघ्रान् वरयस्व रथोत्तमं ।
स्वास्तीर्णं राजभवनात् सीतायाश्चासनं शुभं ॥ २ ॥
सीता हि राजवचनादाश्रमान् पुण्यकर्मणां ।
इतो नेया महर्षीणां शीघ्रमानीयतां रथः ॥ ३ ॥
सुमन्त्रस्तु तथेत्युक्त्वा रथं परमवाजिभिः ।
युक्तं सुरुचिरप्रख्यं स्वास्तीर्णं समुपानयत् ॥ ४ ॥
उवाच च महात्मानं सौमित्रिं मित्रवत्सलं ।
रथोऽयं समनुप्राप्तो यत् कार्यं क्रियतां लघु ॥ ५ ॥
एवमुक्तः सुमन्त्रेण रामवेश्म स लक्ष्मणः ।
प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥ ६ ॥
गङ्गातीरेषु रम्येषु मुनीनामाश्रमान् शुभान् ।
उपनेयासि मे देवि शासनात् पार्थिवस्य हि ॥ ७ ॥
एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ।
प्रहर्षमतुलं लेभे चक्रे च गमने मतिं ॥ ८ ॥
श्वश्रूणां सा तु सर्वासां कृत्वा पादाभिवन्दनं ।
पुनरागमनायेति ताभिश्च प्रतिनन्दिता ॥ ९ ॥

सुबहूनि तु जग्राह दिव्यान्याभरणानि सा ।
वासांसि च महार्हाणि रत्नानि विविधानि च ॥१०॥
गृहीत्वा सा च वैदेही ततो लक्ष्मणमब्रवीत् ।
इमानि ऋषिपत्नीभ्यो दास्याम्याभरणान्यहं ॥११॥
सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीं ।
प्रययौ शीघ्रतुरगो रामस्याज्ञामनुस्मरन् ॥१२॥
गत्वा सुदूरमध्वानं मैथिली जनकात्मजा ।
अशुभानि निमित्तानि ददर्श कमलेक्षणा ॥१३॥
ततोऽब्रवीत् तदा सीता लक्ष्मणं लक्ष्मिवर्धनं ।
अशुभानि बहून्यद्य पश्यामि रघुनन्दन ॥१४॥
दक्षिणं मे स्फुरत्यक्षि गात्रकम्पश्च जायते ।
हृदयं चैव सौमित्रे न सुस्थमुपलक्षये ॥१५॥
अपि स्वस्ति भवेत् सौम्य नृपतेर्भ्रातृभिः सह ।
श्वश्रूणां चैव मे वीर सर्वासामविशेषतः ॥१६॥
पुरे जनपदे चैव कुशलं प्राणिनामपि ।
एवं ब्रुवत्यां सीतायां प्रययौ दिवसः क्षयं ॥१७॥
ततो वासमुपागम्य गोमतीतीर आश्रमे ।
प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् ॥१८॥
योजयस्व हयांस्तूर्णमद्य भागीरथीजलं ।
शिरसा धारयिष्यामि त्र्यम्बकः पतितं यथा ॥१९॥

अश्वांस्तु चारयित्वाशु रथे युक्त्वा मनोजवान् ।
समारोहेति वैदेहीं सूतः प्राञ्जलिरब्रवीत् ॥ २० ॥
सूतस्य वचनात् सा तु आरुरोह रथोत्तमं ।
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता ॥ २१ ॥
अथार्धदिवसं गत्वा प्राप्य भागीरथीं नदीं ।
निरीक्ष्य लक्ष्मणो वीरः प्ररुरोद महात्मवान् ॥ २२ ॥
सीता तु परमत्रस्ता दृष्ट्वा लक्ष्मणमातुरं ।
उवाच वाक्यं धर्मज्ञा किमर्थं रुद्यते त्वया ॥ २३ ॥
जाह्नवीतीरमासाद्य चिराभिलसितं मम ।
हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ॥ २४ ॥
नित्यं त्वं पादयोर्भ्रातुर्वर्तसे पुरुषर्षभ ।
नित्यमेवानुरक्तस्त्वं नित्यं चैव गुणैर्युतः ॥ २५ ॥
सम्भावी त्वं महाबाहो शीलवान् दक्ष एव च ।
कच्चिद्विनाकृतस्तेन यस्मात् तु शोक आगतः ॥ २६ ॥
ममापि दयितो रामो जीवितादपि लक्ष्मण ।
न चाहमेवं शोचामि यथैव बालिशो भवान् ॥ २७ ॥
तारयस्व च मां गङ्गां दर्शयस्व च तापसान् ।
तेभ्यो रत्नानि वासांसि दास्याम्याभरणानि च ॥ २८ ॥
ततः कृत्वा महर्षीणां यथार्हमभिवादनं ।
उषित्वैकां निशां तत्र यास्यामि नगरीं ततः ॥ २९ ॥

ततस्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे ।
मतिं तारयितुं चक्रे लक्ष्मणो मैथिलीं तदा ॥ ३० ॥
अथ नावं प्रविस्तीर्णां नैषादीं राघवानुजः ।
आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीं ॥ ३१ ॥
सुमन्त्रं चापि स्वरथे स्थीयतामिति लक्ष्मणः ।
उवाच शोकसंतप्तः प्रयाहीति च नाविकं ॥ ३२ ॥
नाविकस्तु वचः श्रुत्वा लक्ष्मणस्य महात्मनः ।
वाहयामास तां नावं दक्षिणं कूलमादरात् ॥ ३३ ॥
ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः ।
उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पविह्वलः ॥ ३४ ॥
हृद्गतो मे महांस्तापो यस्मादार्येण धीमता ।
अस्मिन् निमित्ते लोकस्य नीतोऽहं वचनीयतां ॥ ३५ ॥
मरणं हि मम श्रेयो यदन्यद्वान्यतोऽधिकं ।
न त्वस्मिन्नीदृशे कार्ये नियोगो लोकनिन्दिते ॥ ३६ ॥
प्रसीद च न मे रोषं कर्तुमर्हसि मैथिलि ।
इति कृत्वाञ्जलिं भूमौ निपपात स लक्ष्मणः ॥ ३७ ॥
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ।
मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥ ३८ ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण ।
पश्यामि त्वां न हि स्वस्थमपि क्षेमं महीपतेः ॥ ३९ ॥

शापितोऽसि नरेन्द्रेण यदि संतापमात्मनः ।
न ब्रूयाः संनिधौ मह्यमहमाज्ञापयामि ते ॥ ४० ॥
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनमानसः ।
अवाङ्मुखो बाष्पकलं वाक्यमेतदुवाच ह ॥ ४१ ॥
श्रुत्वा परिषदो मध्ये परिवादं सुदारुणं ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ॥ ४२ ॥
न तच्छक्यं कथयितुं मया देवि तवाग्रतः ।
यद्राज्ञा हृदये कृत्वा स्नेहस्ते पृष्ठतः कृतः ॥ ४३ ॥
सा त्वं त्यक्ता नरेन्द्रेण साध्वी कुलसमन्विता ।
लोकापवादभीतेन त्वं त्यक्ता देवि नान्यथा ॥ ४४ ॥
इष्टाश्रमेषु च मया त्यक्तव्या त्वं भविष्यसि ।
राज्ञः शासनमाज्ञाय तथैव किल दौर्हृदं ॥ ४५ ॥
तदेतज्जाह्नवीतीरे महर्षीणां तपोवनं ।
पुण्यं च रमणीयं च विषादं मा कृथाः शुभे ॥ ४६ ॥
राज्ञो दशरथस्यैव पितुर्मे मुनिपुङ्गवः ।
सखा परमको विप्रो वाल्मीकिः सुमहायशाः ॥ ४७ ॥
पादच्छायामुपागम्य सुखमस्य महात्मनः ।
उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥ ४८ ॥
पतिव्रतात्वमास्थाय कृत्वा रामं सदा हृदि ।
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥ ४९ ॥

# उत्तरकाण्डं

L.

श्रुत्वा तु लक्ष्मणस्यैतद्वचनं जनकात्मजा ।
परं विषादमागच्छन्मेदिन्यां निपपात च ॥ १ ॥
सा मुहूर्त्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा ।
लक्ष्मणं जानकी वाक्यमुवाचातीव दुःखिता ॥ २ ॥
किन्नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ ३ ॥
पुराहमाश्रमे वासं निरता रामपादयोः ।
अनुरुध्यामि सौमित्रे दुःखे च परिवर्त्तिनी ॥ ४ ॥
सा कथं त्वाश्रमे सौम्य वत्स्यामि विजनीकृता ।
किमाहारा कथाः काश्च करिष्यामि नृपात्मज ॥ ५ ॥
किं च वक्ष्यामि सिद्धेषु किं मयापकृतं नृपे ।
कस्मिन् वा कारणे त्यक्ता राघवेणेति वादिषु ॥ ६ ॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ७ ॥
यथाज्ञां कुरु सौमित्रे त्यज मां दुःखभागिनीं ।
निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ ८ ॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।
शिरसा वन्दनं कुर्याः सर्वासामेव लक्ष्मण ॥ ९ ॥

वक्तव्यश्चैव नृपतिर्धर्मेण सुसमाहितः ।
यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यशः ॥ १० ॥
एष धर्मो हि परम एषा कीर्त्तिरनुत्तमा ।
यत् त्वं पौरजनं राजन् हर्षपूर्णां प्रशाधि हि ॥ ११ ॥
अहं तु नानुशोचामि स्वशरीरं नरोत्तम ।
यथापवादं पौरेभ्यस्तवैव रघुनन्दन ॥ १२ ॥
तन्न शोके मनः कार्यं मद्विनाशे नराधिप ।
अपवादभयात् त्यक्ता मां न शोकोऽस्तु ते पुनः ॥ १३ ॥
अहं तु खलु नात्मानमनुशोचामि लक्ष्मण ।
यदहं जनवादेन त्यक्ता दोषेण नात्मनः ॥ १४ ॥
पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ।
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः ॥ १५ ॥
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ।
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीं ॥ १६ ॥
एवं तु वादिनीं सीतां लक्ष्मणो दीनमानसः ।
मूर्द्धाभिवाद्य भूमौ वै व्याहर्तुं न शशाक ह ॥ १७ ॥
प्रदक्षिणं तु तां कृत्वा प्ररुदन्नतिनिस्वनं ।
आरुरोह पुनर्नावं नाविकं चाभ्यचोदयत् ॥ १८ ॥
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ।
संमूढ इव दुःखेन रथमारूढवान् पुनः ॥ १९ ॥

मुहुर्मुहुरथावृत्य पश्यन् सीतामनाथवत् ।
चेष्टमानां परे पारे लक्ष्मणः प्रययौ तदा ॥ २० ॥
दूरस्थं च रथं दृष्ट्वा लक्ष्मणं च मुहुर्मुहुः ।
निरीक्षमाणामुद्विग्नां सीतां शोकः समाविशत् ॥ २१ ॥

सा दुःखभारार्तिनिपीडिता सती
यशस्विनी नाथमपश्यती भृशं ।
रुरोद तस्मिन् बहुबर्हिणे वने
महास्वनं वास्पसमाकुलेक्षणा ॥ २२ ॥

इत्युत्तरकाण्डे लक्ष्मणवाक्यं नाम नवचत्वारिंशः
सर्गः = लक्ष्मणोपावर्तनं नाम
पञ्चाशः सर्गः ॥

## LI.

सीतां तु रुदतीं दृष्ट्वा ये तत्र मुनिदारकाः ।
दुद्रुवुस्ते तदा सर्वे वाल्मीकिं मुनिपुङ्गवं ॥ १ ॥
तेऽभिवाद्य ततः पादौ मुनिपुत्रा महर्षये ।
कारुण्यात् कथयामासुस्तां तत्र रुदतीं तदा ॥ २ ॥
अचिन्त्यरूपा भगवन् कस्याप्येका महात्मनः ।
इतो लक्ष्मीरिवापन्ना विरौति भृशमाकुला ॥ ३ ॥
भगवन् साधु पश्यैनां देवतामिव खाच्च्युतां ।
मन्यामहेऽमानुषीं तां सत्क्रियास्याः प्रयुज्यतां ॥ ४ ॥
तेषां तद्वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ।
तपसा दिव्यचक्षुष्मान् प्राद्रवद्यत्र मैथिली ॥ ५ ॥
तं प्रयान्तमभिप्रेक्ष्य शिष्याः सर्वे तदान्वयुः ।
अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् ॥ ६ ॥
ततः सीतां सुदुःखार्त्तां वाल्मीकिर्मुनिपुङ्गवः ।
उवाच मधुरां वाणीं साम्ना प्रह्लादयन्निव ॥ ७ ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ।
जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ॥ ८ ॥
आयान्त्येवासि विज्ञाता मया धर्मसमाधिना ।
कारणं चैव वैदेहि ज्ञातं प्रागेव तन्मया ॥ ९ ॥

अपापां वेद्मि सीते त्वां तपोलब्धेन चक्षुषा ।
विस्रब्धा भव वैदेहि साम्प्रतं मयि वर्तसे ॥१०॥
आश्रमस्याविदूरे तु तापस्यस्तपसि स्थिताः ।
तास्त्वां वत्से यथावच्च पालयिष्यन्ति सर्वशः ॥११॥
सख्यश्च ते समस्तास्ता भविष्यन्ति शुभव्रते ।
इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा ॥१२॥
यथा स्वगृहमभ्येषि तथैतद्वनमाविश ।
श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतं ॥१३॥
वन्दित्वा शिरसा पादौ तथेत्यूचे कृताञ्जलिः ।
अन्वगच्छच्च गच्छन्तं वाल्मीकिमृषिपुङ्गवं ॥१४॥
तं दृष्ट्वा मुनिमायान्तं वैदेह्यानुगतं तदा ।
प्रत्युद्गताः प्राञ्जलयस्तापस्यो वाक्यमब्रुवन् ॥१५॥
स्वागतं ते मुनिश्रेष्ठ चिरस्यागमनं प्रभो ।
अभिवादामहे सर्वा उच्यतां किं च कुर्महे ॥१६॥
तासां तद्भाषितं श्रुत्वा वाल्मीकिरिदमब्रवीत् ।
सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥१७॥
स्नुषा दशरथस्यैषा जनकस्यात्मसंभवा ।
पत्या त्यक्ता ह्यपापेयं परिपाल्या मया सती ॥१८॥
इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि ।
स्त्रीभावाच्च मयोक्तस्य वाक्यस्य च विशेषतः ॥१९॥

मुहुर्मुहुश्च वैदेहीं तासु निक्षिप्य सर्वशः ।
स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥ २० ॥

इति मुनिवचनं निशम्य तत् ताः
प्रतिजगृहुः शिरसा तथेति सीतां ।
स च मुनिरभिशाल्व्य रामपत्नीं
प्रतिगत आश्रममात्मनस्तदा ॥ २१ ॥

इत्युत्तरकाण्डे वाल्मीकिदर्शनं नाम
एकपञ्चाशः सर्गः ॥

# उत्तरकाण्डं

## LII.

दृष्ट्वा तु मैथिलीं द्वारमाश्रमस्य गतां सतीं ।
सौमित्रिः शोकसंतप्तश्चोदयामास सारथिं ॥ १ ॥
सारथे चोदयाश्वांस्तांस्तं च सोऽवाह्यद्रथं ।
गच्छन्नेव तदा धीमान् शीघ्रगेन रथेन तु ॥ २ ॥
संतापमकरोद्घोरं लक्ष्मणो दीनचेतनः ।
अब्रवीच्च महातेजाः सुमन्त्रमथ सारथिं ॥ ३ ॥
सीताविवासजं दुःखं पश्य रामस्य धीमतः ।
अतो दुःखतरं किन्नु राघवस्य भविष्यति ॥ ४ ॥
पत्नीं शुद्धसमाचारां विसृज्य जनकात्मजां ।
व्यक्तं दैवादयं जातो विनाभावो महात्मनः ॥ ५ ॥
धर्मपत्न्या नरेन्द्रस्य दैवं हि दुरतिक्रमं ।
यो हि देवान् सगन्धर्वान् सासुरान् सहराक्षसान् ॥ ६ ॥
निहन्याद्राघवः क्रुद्धः सोऽयं दैववशं गतः ।
पुरा रामः पितुर्वाक्याद्विजने दण्डके वने ॥ ७ ॥
उषितो नव वर्षाणि पञ्च चैव सुदारुणे ।
ततो दुःखतरं भूयः सीताया विप्रवासनं ॥ ८ ॥
पौराणां वचनात् सूत नृशंसं प्रतिभाति मे ।
को नु धर्माशयः सूत कर्मण्यस्मिन् यशोहरे ॥ ९ ॥

मैथिलीं प्रति संप्राप्तः पौरैर्हीनार्यवादिभिः ।
सूत कर्मण्यनार्येऽस्मिन्नधर्मः संश्रयिष्यति ॥१०॥
राजानं लक्ष्मणं चापि पौरान् वा वाक्यदुर्बलान् ।
एता बहुविधा वाचः श्रुत्वा लक्ष्मणभाषिताः ॥११॥
सुमन्त्रः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ।
न संतापस्त्वया कार्यः सौमित्रे मैथिलीं प्रति ॥१२॥
दृष्टमेतत् पुरा विप्रैः पितुस्तव समीपतः ।
भविष्यति चिरं रामः सुखं दुःखमवाप्स्यति ॥१३॥
प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्द्रुतं ।
त्वां चैव मैथिलीं चैव शत्रुघ्नभरतौ तथा ॥१४॥
स त्यजिष्यति धर्मात्मा कालेन महता किल ।
न त्विदं त्वयि सौमित्रे वक्तव्यं भरतेऽपि वा ॥१५॥
पित्रा ते व्याहृते वाक्ये दुर्वासा यदुवाच ह ।
महाराजसमीपे हि मम चैवाग्रतस्तदा ॥१६॥
ऋषिणा व्याहृतं वाक्यं वशिष्ठस्य च संनिधौ ।
ऋषेस्तु वचनं श्रुत्वा मामुवाच स पार्थिवः ॥१७॥
सूत न क्वचिदेतत् ते वक्तव्यमृषिभाषितं ।
तस्याहं लोकनाथस्य वाक्येन सुसमाहितः ॥१८॥
नानृतं तदहं कुर्यामिति मे सौम्यदर्शन ।
सर्वथा त्वेव वक्तव्यं मया सौम्य तवाग्रतः ॥१९॥

यदि ते श्रवणे श्रद्धा श्रूयतां रघुनन्दन ।
यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितः पुरा ॥ २० ॥
तथाप्युदाहरिष्यामि दिवं तस्मिन् नृपे गते ।
सर्वं ते नरशार्दूल रहस्यं यच्छ्रुतं मया ॥ २१ ॥
तच्छ्रुत्वा भाषितं तस्य गम्भीरार्थपदं महत् ।
उवाच कथयस्वेति सुमन्त्रं वाक्यकोविदं ॥ २२ ॥

इत्युत्तरकाण्डे लक्ष्मणसंतापो नाम
द्विपञ्चाशः सर्गः ॥

## LIII.

ततः प्रचोदितः सूतो लक्ष्मणेन महात्मना ।
तद्वाक्यमृषिणा प्रोक्तं व्याहर्तुमुपचक्रमे ॥ १ ॥
दुर्वासा हि पुरा सौम्य अत्रेः पुत्रो महातपाः ।
वशिष्ठस्याश्रमे पुण्ये वर्षारात्रमुपावसत् ॥ २ ॥
तमाश्रमं महाबाहो पिता ते सुमहायशाः ।
पुरोधसं महात्मानं दिदृक्षुरगमत् स्वयं ॥ ३ ॥
स दृष्ट्वा सूर्यसंकाशं ज्वलन्तमिव तेजसा ।
उपविष्टं वशिष्ठस्य सव्ये पार्श्वे महामुनिं ॥ ४ ॥
ततोऽभिवाद्य तमृषिं मित्रावरुणसंभवं ।
तं मुनिं तपसा युक्तमभिगम्याभ्यभाषत ॥ ५ ॥
स ताभ्यां पूजितो राजा स्वागतेनासनेन च ।
पानेन फलमूलैश्च स तत्रोपविवेश ह ॥ ६ ॥
तेषां तत्रोपविष्टानां तास्ताः सुमधुराः कथाः ।
बभूवुः परमोदारास्तदा मध्यगतेऽहनि ॥ ७ ॥
ततः कथायां कस्यांचित् प्राञ्जलिः प्रग्रहो नृपः ।
उवाच तं महात्मानमत्रेः पुत्रमिदं वचः ॥ ८ ॥
भगवन् किंप्रमाणो मे शेषो वंशो भविष्यति ।
किमायुश्च भवेद्रामः पुत्राश्चान्ये किमायुषः ॥ ९ ॥

रामस्य च सुता ये स्युस्तेषामायुश्च किं भवेत् ।
कामं मे भगवन् ब्रूहि वंशस्यास्य गतागतं ॥ १० ॥
त्वत्तः श्रोतुमिदं सर्वमिच्छेयं मुनिसत्तम ।
तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञा दशरथेन तु ॥ ११ ॥
दुर्वासाः सुमहातेजा व्याहर्तुमुपचक्रमे ।
यत् तु पृच्छसि मे सौम्य त्वं वाक्यं ब्रूहि राघव ॥ १२ ॥
शृणु त्वं सावधानेन यदुवाच महामुनिः ।
अयोध्याधिपती रामो दीर्घकालं भविष्यति ॥ १३ ॥
सुखिनश्च समृद्धाश्च भविष्यन्त्यस्य येऽनुगाः ।
कस्मिंश्चित् कारणे त्वां च मैथिलीं च यशस्विनीं ॥ १४ ॥
स त्यजिष्यति धर्मात्मा कालेन महता किल ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ १५ ॥
प्रशास्य राघवो राज्यं ब्रह्मलोकं गमिष्यति ।
समृद्धैर्हयमेधैश्च इष्ट्वा परपुरञ्जयः ॥ १६ ॥
राजवंशं च काकुत्स्थो ध्रुवं संस्थापयिष्यति ।
सर्वमेतत् तदा राज्ञे वंशस्यागामिनीं गतिं ॥ १७ ॥
आख्याय स महातेजास्तूष्णीमासीन्महामुनिः ।
तूष्णीं भूते मुनौ तस्मिन् राजा दशरथस्तदा ॥ १८ ॥
अभिवाद्य महात्मानौ पुनरायात् स्वकं पुरं ।
एतद्वचो मया तत्र मुनिना व्याहृतं पुरा ॥ १९ ॥

श्रुत्वा हृदि च निश्चितं नान्यथा तद्भविष्यति ।
अस्याः पुत्रं च सीताया अभिषेक्ष्यति राघवः ॥ २० ॥
अन्यत्र न त्वयोध्यायां मुनेस्तस्य वचो यथा ।
एवं गते न संतापं कर्तुमर्हसि लक्ष्मण ॥ २१ ॥
सीतार्थं राघवार्थं वा दृढो भव नरोत्तम ।
तच्छ्रुत्वा लक्ष्मणो वाक्यं सूतस्य परमाद्भुतं ॥ २२ ॥
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ।
तयोः संवदतोरेवं सूतलक्ष्मणयोः पथि ।
रविरस्तं गतो रात्रिः कोशल्यां समवर्तत ॥ २३ ॥

इत्युत्तरकाण्डे सूतवाक्यं नाम
त्रिपञ्चाशः सर्गः ॥

## LIV.

उषित्वा तां निशां तत्र कोशल्यां रघुनन्दनः ।
प्रभाते पुनरुत्थाय स्वां पुरीं प्रययावथ ॥ १ ॥
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः ।
अयोध्यां रत्नसंपूर्णां हृष्टपुष्टजनावृतां ॥ २ ॥
सौमित्रिस्तु परं दैन्यमाजगाम परंतपः ।
रामपादौ समासाद्य किं वक्ष्यामीति चिन्तयन् ॥ ३ ॥
तस्य चिन्तयतस्त्वेवं भवनं गिरिसंनिभं ।
रामस्य परमोदारं पुरस्तात् समदृश्यत ॥ ४ ॥
स राजभवनद्वारि रथं संत्यज्य लक्ष्मणः ।
अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ॥ ५ ॥
स दृष्ट्वा राघवं दीनमासीनं परमासने ।
नेत्राभ्यामश्रुपूर्णाभ्यां ददृशमिव मेदिनीं ॥ ६ ॥
जग्राह चरणौ तस्य लक्ष्मणो दीनमानसः ।
उवाच स महातेजाः प्राञ्जलिः सुसमाहितः ॥ ७ ॥
आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजां ।
गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुभे ॥ ८ ॥
तत्र तां सुशुभाचारामाश्रमान्ते यशस्विनीं ।
पुनरभ्यागतो वीर पादमूलमुपासितुं ॥ ९ ॥

मा शुचः पुरुषव्याघ्र कालस्य गतिरीदृशी ।
त्वद्विधा हि न शोचन्ति सत्त्ववन्तो मनस्विनः ॥ १० ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगाश्च वियोगान्ता मरणान्तं च जीवितं ॥ ११ ॥
शक्तस्त्वमात्मनात्मानं नियन्तुं मनसा मनः ।
लोकान् सर्वांश्च काकुत्स्थ किं पुनर्दुःखमात्मनः ॥ १२ ॥
नेदृशेषु विमुह्यन्ति स्थानेषु पुरुषर्षभाः ।
त्वद्विधाः सत्यसंपन्ना राजन्नुत्तमबुद्धयः ॥ १३ ॥
अपवादश्च किल ते पुनरेष्यति राघव ।
यदर्थं मैथिली त्यक्ता ह्यपवादकृते भये ॥ १४ ॥
स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः ।
त्यजेमां दुर्बलां बुद्धिं संतापं मा कृथाः प्रभो ॥ १५ ॥
एवमुक्तस्तु काकुत्स्थो लक्ष्मणेन महात्मना ।
उवाच परया प्रीत्या सौमित्रिं मित्रवत्सलं ॥ १६ ॥
एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण ।
परितुष्टोऽस्मि ते सौम्य वाक्यैरद्भुतदर्शनैः ॥ १७ ॥
निवृत्तिश्चागता वीर संतापश्च निराकृतः ।
त्वद्वाक्यैर्मधुरैरेभिरनुनीतोऽस्मि लक्ष्मण ॥ १८ ॥

इत्युत्तरकाण्डे रामाश्वासनं नाम
चतुःपञ्चाशः सर्गः ॥

# उत्तरकाण्डं

## LV.

लक्ष्मणस्य तु तद्वाक्यं निशम्य परमाद्भुतं ।
प्रीतिमानभवद्रामो वाक्यमेतदुवाच ह ॥ १ ॥
दुर्लभस्त्वीदृशो बन्धुरस्मिन् काले विशेषतः ।
यादृशस्त्वं महाबुद्धिर्मम सौम्य मनोऽनुगः ॥ २ ॥
यच्च मे हृदये किञ्चिद्वर्तते शुभलक्षण ।
तन्निशामय च श्रुत्वा कुरुष्व वचनं मम ॥ ३ ॥
चत्वारो दिवसाः सौम्य मम कार्यानुशासनं ।
अकुर्वाणस्य सौमित्रे तन्मे मर्माणि कृन्तति ॥ ४ ॥
आह्वयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा ।
कार्यार्थिनश्च पुरुषाः स्त्रियो वा पुरुषर्षभ ॥ ५ ॥
पौरकार्याणि यो राजा न करोति दिने दिने ।
स मृतो नरके घोरे पच्यते नात्र संशयः ॥ ६ ॥
श्रूयते हि पुरा राजा नृगो नाम महायशाः ।
बभूव पृथिवीपालो ब्रह्मण्यः सत्यवाक् शुचिः ॥ ७ ॥
स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः ।
नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥ ८ ॥
तत्र सङ्गगता धेनुः सवत्सा कांस्यदोहना ।
ब्राह्मणस्याहिताग्नेस्तु दरिद्रस्योञ्छवृत्तिनः ॥ ९ ॥

स नष्टां गां क्षुधार्त्तोऽथ अन्विच्छंस्तां ततस्ततः ।
नापश्यत् सर्वराष्ट्रेषु संवत्सरगणान् बहून् ॥ १० ॥
ततः कनखलं गत्वा जीर्णवत्सां निराकृतां ।
स ददर्श स्वकां धेनुं ब्राह्मणस्य निवेशने ॥ ११ ॥
तां दृष्ट्वा नामधेयेन स्वेन नाम्नाह्वयद्द्विजः ।
एह्येहि शबलेत्येवं तं सा शुश्राव गौः स्वयं ॥ १२ ॥
तस्य सा स्वरमाज्ञाय क्षुधितस्य द्विजस्य तु ।
अन्वगात् पृष्ठतो धेनुर्गच्छन्तमनलोपमं ॥ १३ ॥
तां ज्ञात्वा ह्रियमाणां गां ब्राह्मणो यस्य सा तु गौः ।
गत्वाथ तमृषिं चष्टे मम गौरिति स व्रजन् ॥ १४ ॥
स्पर्शिता नरदेवेन तस्मिन् काले नृगेण हि ।
तयोस्तु द्विजयोर्वादो महानासीद्विपश्चितोः ॥ १५ ॥
विवदन्तौ तथान्योन्यं दातारमभिजग्मतुः ।
तौ राजभवनद्वारं संप्राप्तौ कार्यगौरवात् ॥ १६ ॥
अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः ।
ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ ॥ १७ ॥
क्रुद्धौ परमसंतप्तौ वाक्यं घोराभिसंहितं ।
अर्थिनां कार्यसिद्ध्यर्थं यस्मात् त्वं नैषि दर्शनं ॥ १८ ॥
तस्माददृश्यो भूतानां कृकलासो भविष्यसि ।
बहून्यब्दसहस्राणि बहून्यब्दशतानि च ॥ १९ ॥

श्वभ्रे त्वं कृकली भूत्वा दीर्घकालं निवत्स्यसि ।
उत्पत्स्यते तु यो लोके यदूनां पुरुषर्षभः ॥ २० ॥
वासुदेव इति ख्यातो विष्णुर्मानुषविग्रहः ।
स ते मोक्षयिता राजंस्तस्माच्छापात् सुदारुणात् ॥ २१ ॥
कृता ह्यनेन कालेन निष्कृतिस्ते भविष्यति ।
एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ ॥ २२ ॥
तां धेनुं दुर्बलां दत्वा ययतुर्ब्राह्मणाय वै ।
एवं स राजा तं शापमुपभुङ्क्ते सुदारुणं ॥ २३ ॥
कार्यार्थिनां विवादो हि राज्ञां दोषाय कल्पते ।
तच्छीघ्रमभिवर्तन्तां मम दर्शनकाङ्क्षिणः ।
सुकृतस्य हि कार्यस्य फलं प्राप्नोति मानवः ॥ २४ ॥

इत्युत्तरकाण्डे नृगशापो नाम
पञ्चपञ्चाशः सर्गः ॥

# उत्तरकाण्डं

## LVI.

ततः कथामेतां श्रुत्वा लक्ष्मणः परमात्मवान् ।
उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसं ॥ १ ॥
अल्पापराधे काकुत्स्थ द्विजाभ्यां शाप ईदृशः ।
महान् नृगस्य राजर्षेर्ब्रह्मदण्ड इवापरः ॥ २ ॥
श्रुत्वा शापसमायुक्तमात्मानं पुरुषर्षभः ।
कृतवान् किं नृगो राजा द्विजौ वा स किमुक्तवान् ॥ ३ ॥
लक्ष्मणेनैवमुक्तस्तु राघवः पुनरब्रवीत् ।
शृणु सौम्य यथाकार्षीत् स राजा शापविक्षतः ॥ ४ ॥
अथ तौ ब्राह्मणौ यातौ विज्ञाय स नृगो नृपः ।
मन्त्रिणो नैगमांश्चैव तथाह्वयत् पुरोहितं ॥ ५ ॥
ते राज्ञः शासनं श्रुत्वा राजवेश्म त्वरान्विताः ।
आजग्मुर्मन्त्रिणस्तस्य पुरोधा नैगमास्तथा ॥ ६ ॥
तानुवाच ततो राजा सर्वाश्च प्रकृतीस्तथा ।
दुःखेन महताविष्टः शृणुतेदं समाहिताः ॥ ७ ॥
नारदप्रतिमावेतौ मम दत्वा महद्भयं ।
उभौ यातौ द्विजश्रेष्ठौ देवभूतौ महामुनी ॥ ८ ॥
कुमारोऽयं वसुर्नाम सोऽद्य राज्येऽभिषिच्यतां ।
श्वभ्राणि चैव रम्याणि क्रियन्तां चैव शिल्पिभिः ॥ ९ ॥

वर्षघ्नं श्वभ्रमेकं तु हिमघ्नमपरं तथा ।
ग्रीष्मघ्नं च सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः ॥१०॥
फलवन्तश्च ये वृक्षाः पुष्पवत्यश्च या लताः ।
छायावन्तश्च ये गुल्मास्ते रोप्यन्तां सहस्रशः ॥११॥
पुष्पाणि च सुगन्धीनि श्वभ्रेष्वेषु समन्ततः ।
परिपाल्या च मध्ये स्यादध्यर्द्धयोजनं तथा ॥१२॥
श्वभ्रेषु रमणीयेषु श्रिया जुष्टेषु सर्वतः ।
सुखदेषु च वत्स्यामि यावत् कालस्य पर्ययः ॥१३॥
एवं कृत्वा विधानं स संदिदेश वसुं तदा ।
धर्मनित्यः प्रजाः पुत्र क्षत्रधर्मेण पालय ॥१४॥
प्रत्यक्षं ते यथा शापो द्विजाभ्यां मयि पातितः ।
नरश्रेष्ठ सरोषाभ्यामपराधेऽपि तादृशे ॥१५॥
मा कृथास्त्वं तु संतापं मत्कृते पुरुषर्षभ ।
कृतान्तो बलवाँल्लोके येनास्म्येवंविधः कृतः ॥१६॥
प्राप्तव्यं लभते सर्वः सुखं दुःखं यथाकृतं ।
पूर्वजाभ्यन्तरस्थोऽपि मा विषादं कुरुष्व ह ॥१७॥
एवमुक्त्वाथ पुत्रं स नृगो राजा महायशाः ।
श्वभ्रं जगाम सुकृतं वासाय पुरुषर्षभः ॥१८॥
एवं प्रविष्टः स नृपः श्वभ्रं रत्नविभूषितं ।
द्विजाज्ञां धारयन्नास्ते वर्षाणि सुबहून्यसौ ॥१९॥

## LVII.

एष ते नृगशापस्य विस्तरोऽभिहितो मया ।
यद्यस्ति श्रवणे श्रद्धा शृणु त्वमपरां कथां ॥ १ ॥
एवमुक्तस्तु रामेण सौमित्रिरिदमब्रवीत् ।
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे प्रभो ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः ।
कथां परमधर्मिष्ठां व्याहर्तुमुपचक्रमे ॥ ३ ॥
आसीद्राजा निमिर्नाम इक्ष्वाकोः सुमहात्मनः ।
द्वादशस्तनयो वीरो धर्मिष्ठः परमात्मवान् ॥ ४ ॥
स राजा वीर्यसम्पन्नः पुरं देवपुरोपमं ।
निवेशयामास तदा गौतमस्याश्रमं प्रति ॥ ५ ॥
पुरस्य कृतवान् नाम वैजयन्तमिति स्वयं ।
निवेशं यत्र राजर्षिर्निमिश्चक्रे महायशाः ॥ ६ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य सुमहापुरीं ।
यजेयं दीर्घयज्ञेन पितुः प्रह्लादयन् मनः ॥ ७ ॥
ततः पितरमामन्त्र्य तमिक्ष्वाकुं मनोः सुतं ।
अत्रिमङ्गिरसं चैव भृगुं चैव तपोधनं ॥ ८ ॥
वशिष्ठं चैव यः पूर्वो ब्रह्मयोनिर्द्विजर्षभः ।
वरयामास वै सर्वान् इक्ष्वाकुकुलनन्दनः ॥ ९ ॥

तमुवाच वशिष्ठस्तु निमिं राजर्षिसत्तमं ।
वृतोऽहं पूर्वमिन्द्रेण प्रतीक्षस्व तदन्तरं ॥ १० ॥
तच्छ्रुत्वाभिहितं वाक्यं स हि राजा महायशाः ।
अनन्तरमथोत्पत्य गौतमं प्रत्यपूजयत् ॥ ११ ॥
वशिष्ठोऽपि महातेजाश्चक्रे यज्ञं शतक्रतोः ।
निमिस्तु राजा तान् विप्रान् समानीय महाद्युतिः ॥ १२ ॥
ईजे स हिमवत्पार्श्वे स्वपुरस्य समीपतः ।
पञ्चवर्षसहस्राणि राजा दीक्षामुपागमत् ॥ १३ ॥
शक्रोऽपि दीक्षामगमत् पञ्च वर्षशतानि वै ।
इन्द्रयज्ञे समाप्ते तु वशिष्ठो भगवानृषिः ॥ १४ ॥
जगाम यजतो यज्ञे होमं कर्तुमनिन्दितः ।
तदन्तरमथापश्यद्गौतमं वृतमृत्विजं ॥ १५ ॥
क्रोधेन महताविष्टो वशिष्ठो द्विजसत्तमः ।
स राज्ञो दर्शनाकाङ्क्षी मुहूर्त्तमुपविष्टवान् ॥ १६ ॥
तस्मिन्नहनि राजापि निद्रामाहृतवान् सुखं ।
ततो मन्युर्वशिष्ठस्य प्रादुरासीन्महात्मनः ॥ १७ ॥
अदर्शनेन राजर्षेर्व्याजहार स च क्रुधा ।
यस्मादाहृत्य मां पूर्वं दर्शनं न प्रयच्छसि ॥ १८ ॥
तस्मात् पापसमाचार विदेहस्त्वं भविष्यसि ।
ततः प्रबुद्धो राजर्षिस्तं शापं श्रुतवांस्तदा ॥ १९ ॥

ब्रह्मयोनिमथोवाच स राजा क्रोधमूर्च्छितः ।
अज्ञानतः शयानस्य क्रोधेन कलुषीकृतः ॥ २० ॥

मुक्तवान् मम यच्छापं ब्रह्मदण्डमिवापरं ।
तस्मात् त्वमपि विप्रर्षे चेतनादेहवर्जितः ।
वायुभूतश्चरन् लोकाननिकेतो भविष्यसि ॥ २१ ॥

इति रोषवशावुभौ तदानीम्
अन्योन्यं शपितौ नृपद्विजेन्द्रौ ।
सहसैव बभूवतुर्विदेहौ
तुल्यव्याधिगतौ महाप्रभावौ ॥ २२ ॥

इत्युत्तरकाण्डे नृगोपाख्यानं नाम षट्पञ्चाशः
सर्गः = निमिवशिष्ठयोरन्योन्यं शापो
नाम सप्तपञ्चाशः सर्गः ॥

# उत्तरकाण्डं

## LVIII.

रामस्य भाषितं श्रुत्वा लक्ष्मणः परवीरहा ।
उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसं ॥ १ ॥
निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ ।
पुनर्देहेन संयोगं जग्मतुर्देवसन्निभौ ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु इक्ष्वाकुकुलनन्दनः ।
प्रत्युवाच महातेजा लक्ष्मणं पुरुषर्षभः ॥ ३ ॥
तौ परस्परशापेन देहावुत्सृज्य धार्मिकौ ।
अभूतां नृपविप्रर्षी वायुभूतौ तपोधनौ ॥ ४ ॥
अशरीरः शरीरस्य कृतेऽन्यस्य महामतिः ।
वशिष्ठोऽप्यथ ब्रह्माणमभ्यगच्छत् पितामहं ॥ ५ ॥
सोऽभिवाद्य ततः पादौ देवदेवस्य धर्मवित् ।
पितामहमथोवाच वायुभूत इदं वचः ॥ ६ ॥
भगवन् निमिशापेन विदेहोऽस्मि कृतः प्रभो ।
देहस्यान्यस्य सद्भावे प्रसादं कर्तुमर्हसि ॥ ७ ॥
तमुवाच ततो ब्रह्मा स्वयम्भूरमितप्रभः ।
मित्रावरुणयोस्तेजः प्रविश त्वं महामुने ॥ ८ ॥
अयोनिजस्त्वं भविता तत्रापि द्विजसत्तम ।
धर्मेण तु समायुक्तः पुनश्चैव भविष्यसि ॥ ९ ॥

एवमुक्तस्तु देवेन सोऽभिवाद्य प्रदक्षिणं ।
कृत्वा पितामहं चैव प्रययौ वरुणालयं ॥ १० ॥
तमेव कालं मित्रोऽपि वरुणत्वमकारयत् ।
क्षीरोदेत्युदधिश्रेष्ठे पूज्यमानः सुरासुरैः ॥ ११ ॥
एतस्मिन्नेव काले तु उर्वशी परमाप्सराः ।
यदृच्छया तमुद्देशमागच्छत् सा सखीवृता ॥ १२ ॥
तां दृष्ट्वा रूपसंपन्नां क्रीडन्तीं वरुणालये ।
आविशत् परमः कामो वरुणं ह्युर्वशीकृते ॥ १३ ॥
तामम्भसां पतिर्वाक्यमुवाच परमाङ्गनां ।
मया सह रमस्वेति बहुवर्षगणान् मुदा ॥ १४ ॥
अथोवाचोर्वशी तत्र वरुणं प्राञ्जलिर्वचः ।
मित्रेणाहं वृता पूर्वं नोत्सहेऽन्यमुपासितुं ॥ १५ ॥
वरुणस्त्वब्रवीद्वाक्यं कन्दर्पशरपीडितः ।
इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन् देवनिर्मिते ॥ १६ ॥
भावमुत्सृज्य सुश्रोणि मयि त्वं वरवर्णिनि ।
कृतकामो भविष्यामि यदि नेच्छसि संगमं ॥ १७ ॥
तस्य तल्लोकपालस्य वरुणस्य सुभाषितं ।
उर्वशी परमप्रीता श्रुत्वा भावं न्यवेशयत् ॥ १८ ॥
कामं देव भवत्वेवं हृदयं मे त्वयि स्थितं ।
वदतो ह्यस्ति मे भावो देहो मित्रस्य तु प्रभो ॥ १९ ॥

इत्युर्वश्या वचस्युक्ते तेजः सुमहदद्भुतं ।
ज्वलदनलसंकाशं कुम्भे तदसृजत् प्रभुः ॥ २० ॥
उत्सृज्य चोर्वशी भावमगमन्मित्रमन्तिकं ।
ततो मित्रः सुसंक्रुद्ध उर्वशीमिदमब्रवीत् ॥ २१ ॥
मया त्वं हि वृता पूर्वं किमर्थमविशङ्किता ।
भावेनान्यं वृतवती पुरुषं दुष्टचारिणी ॥ २२ ॥
अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता ।
मानुषं लोकमासाद्य किञ्चित् कालं निवत्स्यसि ॥ २३ ॥
बुधस्य पुत्रो राजर्षिः काशिराजः पुरूरवाः ।
तं त्वं याहि स ते भर्ता भविष्यति महायशाः ॥ २४ ॥
ततः सा शापदोषेण पुरूरवसमभ्यगात् ।
प्रतिष्ठाने पुरवरे बुधस्यात्मजमौरसं ॥ २५ ॥
तस्य जज्ञे ततः श्रीमानायुः पुत्रो महाबलः ।
नहुषो यस्य पुत्रस्तु बभूवेन्द्रसमद्युतिः ॥ २६ ॥
वज्रमुत्सृज्य वृत्राय श्रान्तेऽथ त्रिदिवेश्वरे ।
शतं वर्षसहस्राणि येनेन्द्रत्वं प्रशासितं ॥ २७ ॥
सा तेन शापेन जगाम भूमिं
तदोर्वशी सा रुदती सुनेत्रा ।
बहूनि वर्षाण्यवसच्च सुभ्रूः
शापक्षयादिन्द्रसदो ययौ च ॥ २८ ॥

# उत्तरकाण्डं

## LIX.

तां श्रुत्वा दिव्यसंकाशां कथामद्भुतदर्शनां ।
लक्ष्मणः परमप्रीतो राघवं पुनरब्रवीत् ॥ १ ॥
निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ ।
पुनर्देहेन संयोगमीयतुर्देवसंमितौ ॥ २ ॥
तस्य तद्भाषितं श्रुत्वा रामः सत्यपराक्रमः ।
तां कथां कथयामास वशिष्ठक्षितिनाथयोः ॥ ३ ॥
यः स कुम्भो नरश्रेष्ठ तेजः पूर्णो महात्मनः ।
तस्मात् तेजोमयौ विप्रौ संभूतावृषिसत्तमौ ॥ ४ ॥
अगस्त्यस्तत्र भगवान् संबभूवाग्रजो मुनिः ।
नाहं पुत्रस्तवेत्युक्त्वा तस्मात् कुम्भाद्व्यपाक्रमत् ॥ ५ ॥
तद्धि तेजस्तु मित्रेण उर्वश्यां पूर्वमाहितं ।
तस्मिन् समभवत् कुम्भे तत्तेजो यत्र वारुणं ॥ ६ ॥
कस्यचित् त्वथ कालस्य मित्रावरुणसंभवः ।
वशिष्ठस्तेजसा युक्तो जज्ञे इक्ष्वाकुदैवतं ॥ ७ ॥
तमिक्ष्वाकुर्महातेजा जातमात्रमनिन्दितं ।
वव्रे पुरोधसं सौम्य वंशस्यास्य सुखावहं ॥ ८ ॥
एवं त्वपूर्वदेहस्य वशिष्ठस्य महात्मनः ।
कथितोऽधिगमः सौम्य निमेः शृणु यथाभवत् ॥ ९ ॥

दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते ।
तं च ते याजयामासुर्यज्ञदीक्षां मनीषिणः ॥१०॥
नरेन्द्रस्याथ तद्देहमरक्षनृषिपुङ्गवाः ।
वरैर्माल्यैश्च गन्धैश्च पूजयन्तो मुहुर्मुहुः ॥११॥
ततो यज्ञसमाप्तौ तु देवास्तत्र समाययुः ।
आगताः परमां तुष्टिं ऋषिभिस्ते समेत्य च ॥१२॥
सुप्रीतास्ते सुराः सर्वे निमेरात्मानमब्रुवन् ।
वरं वृणीष्व राजर्षे क्व ते जन्म विधीयतां ॥१३॥
एवमुक्तः सुरैः सर्वैरुवाचात्मा निमेस्तदा ।
नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ॥१४॥
बाढमित्येव तं देवा निमेरात्मानमब्रुवन् ।
नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि ॥१५॥
निमेषिष्यन्ति चक्षूंषि त्वत्कृतेनैव देहिनः ।
वायुभूतेन चरता विश्रमार्थं मुहुर्मुहुः ॥१६॥
एवमुक्त्वा तु विबुधाः सर्वे जग्मुर्यथागतं ।
ऋषयोऽपि महात्मानो निमिदेहं ममन्थिरे ॥१७॥
अरणिं तस्य देहात् तु मन्थानं चापि चक्रिरे ।
मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा ॥१८॥
अरण्यां मथ्यमानायां प्रादुर्भूतो यतश्च सः ।
अतो मिथिरिति ख्यातो जननाज्जनकोऽभवत् ॥१९॥

विदेहश्चाभवद्यस्मान्महात्मा स महातपाः ।
तस्माद्विदेहाः प्रोच्यन्ते सर्वे तद्वंशजा नृपाः ॥ २० ॥
एवं विदेहराजस्तु पूर्वको जनकोऽभवत् ।
मिथिर्नाम महावीर्यो येन सा मिथिलाभवत् ॥ २१ ॥
इति सर्वमशेषतो मया ते
कथितं संभवकारणं तु सौम्य ।
नृपपुङ्गवशापजं द्विजस्य
द्विजशापाद्यदभूच्च वै नृपस्य ॥ २२ ॥

इत्युत्तरकाण्डे उर्वशीशापो नाम अष्टापञ्चाशः
सर्गः — मिथिसंभवो नाम
नवपञ्चाशः सर्गः ॥

## LX.

एवं ब्रुवति रामे तु लक्ष्मणः परवीरहा ।
पुनरेव महात्मानमुवाचामितविक्रमं ॥ १ ॥
महदद्भुतमेतद्धि विदेहेषु पुरातनं ।
वृत्तं वै राजशार्दूल वशिष्ठस्य निमेश्च ह ॥ २ ॥
निमिस्तु क्षत्रियः शूरो विशेषेण च दीक्षितः ।
न क्षमामकरोत् कस्माद्वशिष्ठस्य महात्मनः ॥ ३ ॥
एवं ब्रुवति वीरे तु लक्ष्मणे पुनरब्रवीत् ।
रामो रमयतां श्रेष्ठो भ्रातरं दीप्ततेजसं ॥ ४ ॥
सौमित्रे दुःसहः क्रोधो यथा क्षान्तो ययातिना ।
सत्त्वानुगं पुरस्कृत्य तन्निबोध समाहितः ॥ ५ ॥
नहुषस्य सुतो राजा ययातिः पौरशासनः ।
तस्य भार्याद्वयं सौम्य रूपेणाप्रतिमं भुवि ॥ ६ ॥
एका तु तस्य राजर्षेर्बहुमानपुरस्कृता ।
शर्मिष्ठा नाम दयिता दुहिता वृषपर्वणः ॥ ७ ॥
सुता उशनसः पत्नी द्वितीया साभवत् प्रभोः ।
न तु सा दयिता राज्ञो देवयानी सुमध्यमा ॥ ८ ॥
देवगर्भोपमं पुत्रं प्रथितं स्वेन तेजसा ।
शर्मिष्ठाजनयत् पुरुं देवयानी यदुं तथा ॥ ९ ॥

पुरुस्तु दयितो राज्ञो गुणैर्मातृकुलेन च ।
ततो दुःखसमाविष्टो यदुर्मातरमब्रवीत् ॥ १० ॥
भार्गवस्य कुले जाता शुक्रस्याक्लिष्टकर्मणः ।
सहस्येवंविधं दुःखमपमानं च दुःसहं ॥ ११ ॥
ते वयं सहिता मातः प्रविशामो हुताशनं ।
राजा तु रमतां सार्धं दैत्यपुत्र्या यथासुखं ॥ १२ ॥
यदि वा सहनीयं ते मामनुज्ञातुमर्हसि ।
क्षम त्वं न क्षमिष्येऽहं मरिष्यामि न संशयः ॥ १३ ॥
पुत्रस्य भाषितं श्रुत्वा आर्त्तस्य रुदतो भृशं ।
देवयानी सुसंक्रुद्धा सस्मार पितरं तदा ॥ १४ ॥
इङ्गितं स तु विज्ञाय दुहितुर्भगवान् मुनिः ।
भार्गवः सोऽगमत् तत्र देवयानी तु यत्र सा ॥ १५ ॥
दृष्ट्वा चाप्रकृतिस्थां तामप्रहृष्टामचेतनां ।
पिता दुहितरं वाक्यं किमेतदिति चाब्रवीत् ॥ १६ ॥
पृच्छन्तमसकृत् तं तु भार्गवं दीप्ततेजसं ।
देवयान्यथ संक्रुद्धा पितरं प्रत्युवाच ह ॥ १७ ॥
अहमग्निं विषं तीक्ष्णमपो वा द्विजसत्तम ।
भक्षयिष्ये प्रवेक्ष्ये वा न तु शक्ष्यामि जीवितुं ॥ १८ ॥
अनुमन्यस्व मां तात दुःखितामपमानितां ।
वृक्षं हि समवज्ञाय बध्यन्ते वृक्षवासिनः ॥ १९ ॥

त्वय्यवज्ञां करोत्येष परं परिभवं तथा ।
यन्मां राजावमानीते न चापि बहुमन्यते ॥ २० ॥
तस्यास्तद्वचनं श्रुत्वा क्रोधेनापि परिप्लुतः ।
उशना नाहुषं वाक्यं व्याहर्तुमुपचक्रमे ॥ २१ ॥
अवजानासि यस्मात् त्वं सुतां मे नहुषात्मज ।
तस्मात् त्वं जरया जीर्णः शैथिल्यमुपयास्यसि ॥ २२ ॥
एवमुक्त्वा स राजानं समाश्वास्य च तां सुतां ।
पुनर्जगाम विप्रर्षिर्भवनं स्वं महायशाः ॥ २३ ॥

इत्युत्तरकाण्डे ययातिशापो नाम
षष्टितमः सर्गः ॥

## LXI.

श्रुत्वा तूशनसं क्रुद्धं तदार्त्तो नहुषात्मजः ।
जरां परमिकां प्राप्य यदुं वचनमब्रवीत् ॥ १ ॥
जरा त्वयेयं धर्मज्ञ मदर्थं परिगृह्यतां ।
त्वयि संक्राम्य दुर्वारां रंस्ये भोगैर्यथासुखं ॥ २ ॥
न तावत् कृतकृत्योऽस्मि विषयेऽस्मिन् नरर्षभ ।
अनुभूय यथाकामं पुनः प्राप्स्याम्यहं जरां ॥ ३ ॥
पितुस्तद्वचनं श्रुत्वा प्रत्युवाच यदुस्तदा ।
पुत्रस्ते दयितः पूरुस्सौ गृह्णात्विमां जरां ॥ ४ ॥
बहिष्कृतोऽहमर्थेषु तव पार्थिवसत्तम ।
प्रतिगृह्णातु ते राजन् यैः सहाश्नासि भोजनं ॥ ५ ॥
एवमुक्तस्तु पुत्रेण यदुना पुरुषर्षभः ।
प्रत्युवाच महातेजाः क्रुद्धोऽत्यर्थं तमात्मजं ॥ ६ ॥
राक्षसस्त्वं मया जातः पुत्ररूपो दुरात्मवान् ।
आज्ञां यन्न करोषि त्वं प्रज्ञया विफलीकृतः ॥ ७ ॥
पुत्रोऽनियोज्यो भूत्वा त्वं यस्मान्मामवमन्यसे ।
राक्षसान् यातुधानांस्त्वं जनयिष्यसि दारुणान् ॥ ८ ॥
तव सोमकुलोद्भूतो वंशो हास्यति दुर्मते ।
भविता न च वंशोऽपि दुर्विनीतश्चिरं तव ॥ ९ ॥

एवमुक्त्वा स राजर्षिर्ययाति पूरुमथाब्रवीत् ।
इयं जरा महाप्राज्ञ मदर्थे प्रतिगृह्यतां ॥ १० ॥
नाहुषेणैवमुक्तस्तु पूरुः प्राञ्जलिरब्रवीत् ।
धन्योऽस्म्यनुगृहीतोऽस्मि शासनेऽस्मिन् स्थितस्तव ॥ ११ ॥
पूरोर्वचनमादाय नाहुषः परया मुदा ।
संमुक्तोऽभूत् प्रहृष्टश्च संक्राम्य तु जरां तदा ॥ १२ ॥
ततः स राजा तरुणो यज्ञान् बहुविधान् बहून् ।
आजहार च धर्मात्मा पालयामास च प्रजाः ॥ १३ ॥
अथ दीर्घस्य कालस्य राजा पूरुमथाब्रवीत् ।
आनयस्व जरां पुत्र न्यासं निर्यातयस्व मे ॥ १४ ॥
न्यासभूता मया पुत्र जरा संक्रामिता त्वयि ।
तस्मात् प्रतिग्रहीष्यामि तामहं नान्यथा कृथाः ॥ १५ ॥
यस्मात् त्वया कृतं वाक्यं ममेदं पितृगौरवात् ।
तस्मात् त्वं यशसा युक्तो राज्यं प्राप्स्यसि शाश्वतं ॥ १६ ॥
एवमुक्त्वा तु राजर्षिः स ययातिर्दिवं ययौ ।
कारयामास धर्मेण राज्यं पूरुश्च धर्मवित् ॥ १७ ॥
प्रतिष्ठाने पुरवरे महेन्द्र इव वीर्यवान् ।
यदुस्तु जनयामास यातुधानान् सहस्रशः ॥ १८ ॥
पुरे क्रौञ्चवरे राज्यं वंशं चैव चकार सः ।
ययातिनैष शापाग्निः सृष्टः काव्येन लक्ष्मण ॥ १९ ॥

धारितः चात्रधर्मेण निमिना तु न धारितः ।
एतत् ते सर्वमाख्यातं सर्वकार्यनिदर्शनं ।
वर्तितव्यं तथा सौम्य यथा दोषो न मे भवेत् ॥ २० ॥

इति कथयति रामे चन्द्रतुल्यानने तु
प्रविरलतरतारं व्योम जज्ञे तदानीं ।
अरुणकिरणरक्ता दिग् बभौ चैव सर्वा
कुसुमरसविरक्तं वस्त्रमागुण्ठितेव ॥ २१ ॥

इत्युत्तरकाण्डे पुरोरभिषेको नाम
एकषष्टितमः सर्गः ॥

## LXII.

तयोः संवदतोरेवं रामलक्ष्मणयोस्तदा ।
वासन्ती सा निशा ज्ञाता न शीता न च घर्मदा ॥ १ ॥
ततः प्रभाते विमले कृत्वा पौर्वाह्लिकीं क्रियां ।
अभ्यारभत काकुत्स्थः पौरकार्याण्यवेक्षितुं ॥ २ ॥
धर्मासनगतो राजा रामो राजीवलोचनः ।
राजधर्मानवेक्ष्य वै ब्राह्मणैर्नैगमैः सह ॥ ३ ॥
पुरोधसा वशिष्ठेन ऋषिणा काश्यपेन च ।
मन्त्रिभिर्व्यवहारज्ञैस्तथान्यैर्धर्मपाठकैः ॥ ४ ॥
नीतिज्ञैरथ सद्भिश्च राजभिः सा सभा वृता ।
सभा इव महेन्द्रस्य यमस्य वरुणस्य वा ॥ ५ ॥
शुशुभे राजसिंहस्य रामस्याक्लिष्टकर्मणः ।
अथ रामोऽब्रवीत् तत्र लक्ष्मणं शुभलक्षणं ॥ ६ ॥
निर्गच्छ त्वं महाबाहो सुमित्रानन्दिवर्धन ।
कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपाक्रम ॥ ७ ॥
रामस्य भाषितं श्रुत्वा लक्ष्मणः शीघ्रविक्रमः ।
द्वारदेशमुपागम्य कार्यिणश्चाह्वयत् स्वयं ॥ ८ ॥
न कश्चिदब्रवीत् तत्र मम कार्यमिहाद्य वै ।
नेतयो व्याधयश्चैव रामे राज्यं प्रशासति ॥ ९ ॥
पक्वशस्या वसुमती सर्वौषधिसमन्विता ।

न बालो म्रियते तत्र न युवा न च मध्यमः ॥१०॥
धर्मेण शासितं सर्वं न च बाधा विधीयते ।
दृश्यते न च कार्यार्थी रामे राज्यं प्रशासति ॥११॥
लक्ष्मणः प्राञ्जलिर्भूत्वा रामायैवं न्यवेदयत् ।
अथ रामः प्रसन्नात्मा सौमित्रिमिदमब्रवीत् ॥१२॥
भूय एव हि गच्छ त्वं कार्यिणः प्रविचारय ।
सम्यक् प्रणिहिते दण्डे नाधर्मो विद्यते क्वचित् ॥१३॥
तस्माद्राजभयात् सर्वे रक्षन्ति स्म परस्परं ।
बाणा इव मया मुक्ता इह रक्षन्ति नः प्रजाः ॥१४॥
तथापि त्वं महाबाहो प्रजा रक्षस्व तत्परः ।
एवमुक्तस्तु सौमित्रिर्निर्जगाम नृपालयात् ॥१५॥
अथापश्यद्द्वारदेशे श्वानं पादद्वयस्थितं ।
तमेवं वीक्षमाणं वै उत्क्रोशन्तं मुहुर्मुहुः ॥१६॥
दृष्ट्वा तु लक्ष्मणस्तं वै पप्रच्छाथ स वीर्यवान् ।
किं ते कार्यं महाबाहो ब्रूहि विश्रब्धमानसः ॥१७॥
लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ।
सर्वभूतशरण्याय रामायाक्लिष्टकर्मणे ॥१८॥
भयेष्वभयदात्रे च तस्मै वक्तुं समुत्सहे ।
एतच्छ्रुत्वा तु वचनं सारमेयस्य लक्ष्मणः ॥१९॥
राघवाय तदाख्यातुं प्रविवेशालयं शुभं ।

निवेद्य रामस्य पुनर्निर्जगाम नृपालयात् ॥ २० ॥
वक्तव्यं यदि ते किञ्चित् तद्वं ब्रूहि नृपाय वै ।
स लक्ष्मणवचः श्रुत्वा सारमेयोऽभ्यभाषत ॥ २१ ॥
देवागारे नृपागारे द्विजवेश्मसु वै तथा ।
नात्र योग्या तु सौमित्रे योनीनामधमा वयं ॥ २२ ॥
प्रवेष्टुं नात्र शक्यामि धर्मो विग्रहवान् हि सः ।
सत्यवादी रणपटुः सर्वभूतहिते रतः ॥ २३ ॥
षड्गुण्यस्य पदं वेत्ति नीतिकर्ता स राघवः ।
सर्वज्ञः सर्वदर्शी च रामो रमयतां वरः ॥ २४ ॥
स सोमः स च मृत्युश्च स धर्मो धनदस्तथा ।
वह्निः शतक्रतुश्चैव सूर्यो वै वरुणस्तथा ॥ २५ ॥
तस्य त्वं ब्रूहि सौमित्रे प्रजापालस्य राघव ।
अनाज्ञप्तस्तु सौमित्रे प्रवेष्टुं नोत्सहाम्यहं ॥ २६ ॥
आनृशंस्यान्महाभागः प्रविवेश महाद्युतिः ।
नृपालयं प्रविष्टस्तु लक्ष्मणो वाक्यमब्रवीत् ॥ २७ ॥
श्रूयतां मम विज्ञाप्यं कौशल्यानन्दिवर्धन ।
यन्मयोक्तं महाबाहो तव शासनजं विभो ॥ २८ ॥
श्वा वै तिष्ठति ते द्वारि कार्यार्थी समुपागतः ।
लक्ष्मणस्य वचः श्रुत्वा रामो वचनमब्रवीत् ।
तं प्रवेशय वै क्षिप्रं कार्यार्थी योऽत्र तिष्ठति ॥ २९ ॥

# उत्तरकाण्डं

## LXIII.

दृष्ट्वा समागतं श्वानं रामो वचनमब्रवीत् ।
विवक्षा या हि ते ब्रूहि सारमेय न ते भयं ॥ १ ॥
अथापश्यत तत्रस्थं रामं श्वा भिन्नमस्तकः ।
ततो दृष्ट्वा स राजानं सारमेयोऽब्रवीद्वचः ॥ २ ॥
राजा कर्ता च भूतानां राजा चैव विनाशकः ।
राजा सुप्तेषु जागर्ति राजा पालयते प्रजाः ॥ ३ ॥
नीत्या सुनीतया राजा धर्मं रक्षति रक्षिता ।
यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥ ४ ॥
राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता ।
राजा कालो युगं चैव राजा सर्वमिदं जगत् ॥ ५ ॥
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरं ॥ ६ ॥
धारणाद्विद्विषां चैव धर्मो रञ्जयते प्रजाः ।
तस्माद्धारणमित्युक्तः स धर्म इति निश्चयः ॥ ७ ॥
एष राम परो धर्मो रक्षणे प्रेत्य चेह च ।
न हि धर्माद्भवेत् किञ्चिद् दुष्प्रापमिति मे मतिः ॥ ८ ॥
दानं दया सतां पूजा व्यवहारेषु चार्जवं ।
एष राजन् परो धर्मः फलवान् प्रेत्य राघव ॥ ९ ॥

त्वं प्रमाणं प्रमाणानामसि राघव सुव्रत ।
विदितश्चैव ते धर्मः सद्भिराचरितश्च वै ॥१०॥
धर्माणां त्वं परं धाम गुणानां सागरोपमः ।
अज्ञानाच्च मया राजन्नुक्तस्त्वं राजसत्तम ॥११॥
प्रसादयामि शिरसा न त्वं क्रोद्धुमिहार्हसि ।
शुनः स वचनं श्रुत्वा राघवो वाक्यमब्रवीत् ॥१२॥
किं ते कार्यं करोम्यद्य ब्रूहि विस्रब्ध मा चिरं ।
रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीदिदं ॥१३॥
धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत् ।
धर्माच्छरण्यतां याति राजा सर्वभयापहः ॥१४॥
इदं विज्ञाय यत् कृत्यं श्रूयतां मम राघव ।
भिक्षुः सर्वार्थसिद्धश्च ब्राह्मणोऽवसथे वसन् ॥१५॥
तेन दत्तः प्रहारो मे निष्कारणमनागसः ।
एतच्छ्रुत्वा तु रामेण द्वास्स्थः प्रेषितस्तदा ॥१६॥
आनीतश्च द्विजस्तेन सर्वशास्त्रार्थकोविदः ।
अथ द्विजः स्थितं तत्र रामं दृष्ट्वा महाद्युतिं ॥१७॥
किं ते राम मया कार्यं तद्ब्रूहि त्वं ममानघ ।
एवमुक्तस्तु विप्रेण रामो वचनमब्रवीत् ॥१८॥
त्वया दत्तः प्रहारोऽयं सारमेयस्य भो द्विज ।
किं तवापकृतं विप्र दण्डेनाभिहतो यतः ॥१९॥

क्रोधः प्राणहरः शत्रुः क्रोधो मित्रमुखो रिपुः ।
क्रोधो ह्यसिर्महातीक्ष्णः सर्वं क्रोधोऽपकर्षति ॥ २० ॥
तपते यजते चैव यच्च दानं प्रयच्छति ।
क्रोधेन सर्वं हरति तस्मात् क्रोधं विवर्जयेत् ॥ २१ ॥
इन्द्रियाणां प्रदुष्टानां हयानामिव धावतां ।
कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरं ॥ २२ ॥
मनसा कर्मणा वाचा चक्षुषा च समाचरेत् ।
श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते ॥ २३ ॥
न तत् कुर्यादसिस्तीक्ष्णः सर्पो वा व्याहतः पदा ।
अरिर्वा भृशसंक्रुद्धो यथात्मा दुरनुष्ठितः ॥ २४ ॥
विनीतविनयस्यापि प्रकृतिर्न विधीयते ।
प्रकृतिं गूहमानस्य निश्चयः प्रकृतिर्ध्रुवा ॥ २५ ॥
एवमुक्तः स विप्रो वै रामेणाक्लिष्टकर्मणा ।
द्विजः सर्वार्थसिद्धस्तु अब्रवीन्नृपसंनिधौ ॥ २६ ॥
मया दत्तः प्रहारोऽयं क्रोधेनाविष्टचेतसा ।
भिक्षार्थमटमानेन काले विगतभैक्षके ॥ २७ ॥
रथ्यास्थितस्त्वयं श्वा वै गच्छ गच्छेति भाषितः ।
अथ स्वैरेण गच्छंस्तु रथ्यान्ते विषमस्थितः ॥ २८ ॥
क्रोधेन क्षुधयाविष्टस्ततो दत्तोऽस्य राघव ।
प्रहारो राजराजेन्द्र शाधि मामपराधिनं ॥ २९ ॥

त्वया शास्तस्य राजेन्द्र नास्ति मे नरकाद्भयं ।
अथ रामेण ते पृष्टाः सर्व एव सभासदः ॥ ३० ॥
किं कार्यमस्य वै ब्रूत दण्डो वै कोऽस्य पात्यतां ।
सम्यक् प्रणिहिते दण्डे प्रजा भवति रक्षिता ॥ ३१ ॥
भृग्वङ्गिरसकुत्साद्या वशिष्ठश्च सकाश्यपः ।
धर्मपाठकमुख्याश्च सचिवा नैगमास्तथा ॥ ३२ ॥
एते चान्ये च बहवः पण्डितास्तत्र संगताः ।
अबध्यो ब्राह्मणो दण्डैरिति शास्त्रविदो विदुः ॥ ३३ ॥
ब्रुवते राघवं सर्वे राजधर्मेषु निष्ठिताः ।
अथ ते मुनयः सर्वे राममेवाब्रुवंस्तदा ॥ ३४ ॥
राजा शास्ता हि सर्वस्य त्वं विशेषेण राघव ।
त्रैलोक्यस्य भवान् शास्ता देवो विष्णुः सनातनः ॥ ३५ ॥
एवमुक्ते तु तैः सर्वैः श्वा वै वचनमब्रवीत् ।
यदि तुष्टोऽसि मे राजन् यदि देयो वरो मम ॥ ३६ ॥
प्रतिज्ञातं त्वया वीर किं करोमीति च श्रुतं ।
प्रयच्छ ब्राह्मणस्यास्य कौलपत्यं नराधिप ॥ ३७ ॥
कालञ्जरे महाराज कौलपत्यं प्रदीयतां ।
एतच्छ्रुत्वा तु रामेण कौलपत्येऽभिषेचितः ॥ ३८ ॥
प्रययौ ब्राह्मणो हृष्टो गजस्कन्देन सोऽर्चितः ।
अथ ते रामसचिवाः स्मयमाना वचोऽब्रुवन् ॥ ३९ ॥

वरोऽयं दत्त एवास्य नायं शापो महाद्युते ।
एवमुक्तस्तु सचिवै रामो वचनमब्रवीत् ॥ ४० ॥
न यूयं गतितत्त्वज्ञाः श्वा वै जानाति कारणं ।
अथ पृष्टस्तु रामेण सारमेयोऽब्रवीदिदं ॥ ४१ ॥
अहं कुलपतिस्तत्र आसंशिष्टान्नभोजनः ।
देवद्विजातिपूजायां दासीदासेषु राघव ॥ ४२ ॥
संविभागी शुभरतिर्देवद्रव्यस्य रक्षिता ।
विनीतः शीलसंपन्नः सर्वसत्त्वहिते रतः ॥ ४३ ॥
सोऽहं प्राप्त इमां घोरामवस्थामधमां गतिं ।
एवं क्रोधान्वितो विप्रस्त्यक्तधर्माऽहिते रतः ॥ ४४ ॥
क्रूरो नृशंसः पुरुषोऽविद्वान् पापी न धार्मिकः ।
कुलानि पातयत्येव सप्त सप्त च राघव ॥ ४५ ॥
तस्मात् सर्वास्ववस्थासु कौलपत्यं न कारयेत् ।
यमिच्छेन्नरकं नेतुं सपुत्रपशुबान्धवं ॥ ४६ ॥
देवेष्वधिकृतं कुर्याद्गोषु तं ब्राह्मणेषु च ।
ब्रह्मस्वं देवद्रव्यं च स्त्रीणां बालधनं च यत् ॥ ४७ ॥
दत्तं हरति यो भूय इष्टैः सह विनश्यति ।
ब्राह्मणद्रव्यमादत्ते देवानां चैव राघव ॥ ४८ ॥
सद्यः पतति घोरे वै नरके वीचिसंज्ञके ।
निरयान्निरयं चैव पतते स नराधमः ॥ ४९ ॥

तच्छ्रुत्वा वचनं रामो विस्मयोत्फुल्ललोचनः ।
आप्यगच्छन्महातेजा यत एवागतस्ततः ॥५०॥
मनस्वी पूर्वजातिज्ञो जातिमात्रोपदूषितः ।
वाराणस्यां महाभागः प्रायं चोपविवेश ह ॥५१॥

इत्युत्तरकाण्डे सारमेयवाक्यं नाम द्विषष्टितमः
सर्गः = सारमेयब्राह्मणसंवादो नाम
त्रिषष्टितमः सर्गः ॥

# उत्तरकाण्डं

## LXIV.

अथ तस्मिन् वनोद्देशे रम्ये पादपशोभिते ।
नदीकीर्णे गिरिवरे कोकिलानेककूजिते ॥ १ ॥
सिंहव्याघ्रसमाकीर्णे नानाद्विजसमावृते ।
वृद्धोलूकः प्रवसते बहून् वर्षगणानपि ॥ २ ॥
अथोलूकस्य भवनं गृध्रः पापविनिश्चयः ।
ममैतदिति कृत्वासौ कलहं तेन चाकरोत् ॥ ३ ॥
राजा सर्वस्य लोकस्य रामो राजीवलोचनः ।
तं प्रपद्यावहे शीघ्रं यस्यैतद्भवनं भवेत् ॥ ४ ॥
इति कृत्वा मतिं तां तु निश्चयार्थं सुनिश्चितां ।
गृध्रोलूकौ प्रपद्येतां जातकोपौ ह्यमर्षिणौ ॥ ५ ॥
रामं प्रपद्य तौ शीघ्रं कलिव्याकुलचेतसौ ।
तौ परस्परविद्वेषात् स्पृशतश्चरणौ तदा ॥ ६ ॥
अथ दृष्ट्वा नरेन्द्रं तं गृध्रो वचनमब्रवीत् ।
सुराणामसुराणां च प्रधानोऽसि मतो मम ॥ ७ ॥
बृहस्पतेश्च शुक्राच्च विशिष्टोऽसि महाद्युते ।
परावरज्ञो लोकानां कान्त्या चन्द्र इवापरः ॥ ८ ॥
दुर्निरीक्ष्यो यथा सूर्यो हिमवानिव गौरवे ।
सागरश्चापि गाम्भीर्याल्लोकपालोपमो ह्यसि ॥ ९ ॥

क्षान्त्या धरण्यास्तुल्योऽसि शीघ्रत्वे ह्यनिलोपमः ।
गुरुस्त्वं सत्त्वसंपन्नः कीर्तियुक्तश्च राघव ॥ १० ॥
अमर्षी दुर्जयो जेता सर्वास्त्रविधिपारगः ।
शृणुष्व मम वै राम विज्ञाप्यं नरपुङ्गव ॥ ११ ॥
ममालयं पूर्वकृतं बाहुवीर्येण राघव ।
उलूको हरते राजंस्तत्र त्वं त्रातुमर्हसि ॥ १२ ॥
एवमुक्ते तु गृध्रेण उलूको वाक्यमब्रवीत् ।
सोमाच्छक्रतोः सूर्याद्धनदाद्वा यमात् तथा ॥ १३ ॥
जायते वै नृपो राम किञ्चिद्भवति मानुषः ।
त्वं तु सर्वमयो देवो नारायण इवापरः ॥ १४ ॥
या च ते सौम्यता राजन् सम्यक् प्रणिहिता विभो ।
सौम्यकारगुणाविष्टस्तेन सोमांशजो भवान् ॥ १५ ॥
क्रोधे दण्डे प्रजानाथ दाने पापभयापहः ।
दाता हर्तासि गोप्तासि तेनेन्द्र इव नो भवान् ॥ १६ ॥
अधृष्यः सर्वभूतानां तेजसा चानलोपमः ।
सुतीक्ष्णस्तपसे पापांस्तेन भास्करसंनिभः ॥ १७ ॥
साक्षाद्वित्तेशतुल्योऽसि अथवा धनदाधिकः ।
वित्तेशस्येव पद्मा श्रीर्नित्यं ते राजसत्तम ॥ १८ ॥
धनदस्य तु कोषेण धनदस्तेन नो भवान् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ १९ ॥

शत्रौ मित्रे च ते दृष्टिः समतां याति राघव ।
धर्मेण शासनं नित्यं व्यवहारविधिक्रमात् ॥ २० ॥
यस्य रुष्यसि वै राम मृत्युस्तस्य हि धावति ।
गीयसे तेन वै राम यम इत्यभिविश्रुतः ॥ २१ ॥
यश्चैष मानुषो भावो भवतो नृपसत्तम ।
आनृशंस्यपरो राजन् सत्त्वेषु क्षमयान्वितः ॥ २२ ॥
दुर्बलस्य त्वनाथस्य राजा भवति वै बलं ।
अचक्षुषो हि त्वं चक्षुरगतेस्त्वं गतिस्तथा ॥ २३ ॥
अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक ।
ममालयं प्रविष्टस्तु गृध्रो वारयते पुनः ॥ २४ ॥
त्वं हि देवमनुष्येषु शास्ता वै नरपुङ्गव ।
एतच्छ्रुत्वा तु वै रामः सचिवानाह्वयत् स्वयं ॥ २५ ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः ।
अशोको धर्मपालश्च सुमन्त्रश्च महाबलः ॥ २६ ॥
एते रामस्य सचिवा राज्ञो दशरथस्य च ।
नीतियुक्ता महात्मानः सर्वशास्त्रविशारदाः ॥ २७ ॥
ह्रीमन्तश्च कुलीनाश्च नये मन्त्रे च कोविदाः ।
तानाहूय स महात्मा पुष्पकादवरुह्य तु ॥ २८ ॥
गृध्रोलूकविवादं तं पृच्छति स्म रघूत्तमः ।
कति वर्षाणि वै गृध्र तवेदं निलयं कृतं ॥ २९ ॥

एतन्मे कारणं ब्रूहि यदि जानासि तत्त्वतः ।
एतच्छ्रुत्वा तु वै गृध्रो भाषते राघवं स तं ॥ ३० ॥
इयं वसुमती राम मनुष्यैः परितो यदा ।
उत्थितैरावृता सर्वा तदाप्रभृति मे गृहं ॥ ३१ ॥
उलूकश्चाब्रवीद्रामं पादपैरुपशोभिता ।
यदेयं पृथिवी राजंस्तदाप्रभृति मे गृहं ॥ ३२ ॥
एतच्छ्रुत्वा तु रामो वै सभासदमुवाच ह ।

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मं ।
नासौ धर्मो यत्र न सत्यमस्ति
सत्यं न तद्यच्छलमभ्युपैति ॥ ३३ ॥

ये तु सभ्याः सदो गत्वा तूष्णीं ध्यायन्त आसते ।
सहस्रं वारुणपाशान् विमुञ्चन्तीह चात्मनि ॥ ३४ ॥
तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते ।
तस्मात् सत्येन वक्तव्यं जानता सत्यमञ्जसा ॥ ३५ ॥
एतच्छ्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा ।
उलूकः शोभते राजन् न तु गृध्रो महामते ॥ ३६ ॥
त्वं प्रमाणं महाराज राजा हि परमा गतिः ।
राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः ॥ ३७ ॥
शास्ता नृणां नृपो येषां ते न गच्छन्ति दुर्गतिं ।

वैवस्वतेन मुक्तास्तु भवन्ति पुरुषोत्तमाः ॥ ३८ ॥
सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत् ।
श्रूयतामभिधास्यामि पुराणे यदुदाहृतं ॥ ३९ ॥
द्यौः सचन्द्रार्कनक्षत्रा सपर्वतमहावना ।
सलिलार्णवसंभूतं त्रैलोक्यं सचराचरं ॥ ४० ॥
एक एव तदा ह्यासीत् सुप्तो मेरुरिवापरः ।
पुनर्भूः सह लक्ष्म्या तु विष्णोर्जठरमाविशत् ॥ ४१ ॥
तां निगृह्य महातेजाः प्रविश्य सलिलार्णवं ।
सुष्वाप देवो भूतात्मा बहून् वर्षगणानपि ॥ ४२ ॥
तस्मिन् सुप्ते तदा ब्रह्मा विवेश जठरं ततः ।
रुद्धस्रोतं तु तं ज्ञात्वा महायोगी समाविशत् ॥ ४३ ॥
नाभ्यां विष्णोः समुत्पन्ने पद्मे हेमविभूषिते ।
स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः ॥ ४४ ॥
सिसृक्षुः पृथिवीं वायुं पर्वतान् समहीरुहान् ।
तदन्तरं प्रजाः सर्वाः समनुष्यसरीसृपाः ॥ ४५ ॥
जरायुजाण्डजाः सर्वाः ससर्ज स महातपाः ।
तस्य गात्रमलोत्पन्नः कैटभो मधुना सह ॥ ४६ ॥
दानवौ तौ महावीर्यौ घोररूपौ दुरासदौ ।
दृष्ट्वा प्रजापतिं तं तु क्रोधाविष्टौ बभूवतुः ॥ ४७ ॥
वेगेन महता तत्र स्वयम्भुवमधावतां ।

दृष्ट्वा स्वयम्भुवा मुक्तो रावो वै विकृतस्तदा ॥४८॥
तेन शब्देन संप्राप्तो हरो वै हरिणा सह ।
अथ चक्रप्रहारेण सूदितौ मधुकैटभौ ॥४९॥
मेदसा प्लाविता सर्वा पृथिवी च समन्ततः ।
भूयो विशोधिता तेन हरिणा लोकधारिणा ॥५०॥
शुद्धां वै मेदिनीं तां तु वृक्षाः सर्वामपूरयन् ।
ओषध्यः सर्वशस्यानि निष्पद्यन्त पृथग्विधाः ॥५१॥
मेधोगन्धात् तु वसुधा मेदिनीत्यभिधीयते ।
तस्मान्न गृध्रस्य गृहमुलूकस्येति मे मतिः ॥५२॥
तस्माद्गृध्रस्तु दण्ड्यो वै पापो हर्ता परालयं ।
पीडां करोति पापात्मा दुर्विनीतो महानयं ॥५३॥
अथाशरीरिणी वाणी त्वन्तरीक्षात् प्रबोधिनी ।
मा बधी राम गृध्रं त्वं पूर्वं दग्धं तपोबलात् ॥५४॥
काले गौतमदग्धोऽयं प्रजानाथो नरेश्वरः ।
ब्रह्मदत्तेति नाम्नैष शूरः सत्यव्रतः शुचिः ॥५५॥
गृहं त्वस्यागतो विप्रो भोजनं प्रत्यमार्गत ।
साग्रं वर्षशतं चैव भुक्तवान् नृपसत्तम ॥५६॥
ब्रह्मदत्तश्च वै तस्य पाद्यमर्घ्यं स्वयं नृपः ।
हार्दं चैवाकरोत् तस्य भोजनार्थं महाद्युतेः ॥५७॥
मांसमत्स्याभवंस्तत्र ह्याहारे तु महात्मनः ।

अथ क्रुद्धेन मुनिना शापो दत्तोऽस्य दारुणः ॥५८॥
गृध्रस्त्वं भव वै राजन्नथैनं व्यथ सोऽब्रवीत् ।
प्रसादं कुरु मे ब्रह्मन्नज्ञानान्मे महाव्रत ॥५९॥
शापस्यान्तं महाभाग क्रियतां वै ममानघ ।
तदज्ञानकृतं मत्वा राजानं मुनिरब्रवीत् ॥ ६०॥
उत्पत्स्यति कुले राज्ञां रामो नाम महायशाः ।
इक्ष्वाकूणां महाभागो राजा राजीवलोचनः ॥ ६१ ॥
तेन स्पृष्टो विशापस्त्वं भविता नरपुङ्गव ।
स्पृष्टो रामेण तच्छ्रुत्वा नरेन्द्रः पृथिवीपतिः ॥ ६२ ॥
गृध्रत्वं त्यज्य राजा वै दिव्यगन्धानुलेपनः ।
पुरुषो दिव्यरूपोऽभूदुवाचेदं च राघवं ॥ ६३ ॥
साधु राघव धर्मज्ञ त्वत्प्रसादादहं विभो ।
विमुक्तो नरकाद्घोराच्छापस्यान्तः कृतस्त्वया ॥ ६४ ॥

इत्युत्तरकाण्डे गृध्रोलूकसंवादो नाम
चतुःषष्टितमः सर्गः ॥

## LXV.

ततो निवेदितं राज्ञे द्वारि तिष्ठन्ति तापसाः ।
भार्गवं च्यवनं नाम पुरस्कृत्य महामुनिं ॥ १ ॥
दर्शनं तव राजेन्द्र काङ्क्षन्ति ते महर्षयः ।
आगतास्त्वरमाणा हि यमुनातीरवासिनः ॥ २ ॥
इति तद्वचनं श्रुत्वा द्वास्थं प्रोवाच राघवः ।
प्रवेशयन्तां महात्मानो भार्गवप्रमुखा द्विजाः ॥ ३ ॥
राज्ञस्त्वाज्ञां पुरस्कृत्य द्वास्थो मूर्ध्नि कृताञ्जलिः ।
प्रवेशयामास ततः समेतांस्तांस्तु तापसान् ॥ ४ ॥
ते तं समधिकं लक्ष्म्या दीप्यमानं स्वतेजसा ।
प्रविश्य राममद्राक्षुस्तापसाः सुसमाहिताः ॥ ५ ॥
ते द्विजाः कलशैस्तोयं नानातीर्थधृतं शुचि ।
गृहीत्वा फलमूलं च रामाय समुपाहरन् ॥ ६ ॥
प्रतिगृह्य तु तत् सर्वं रामः प्रीतिसमाधिना ।
तीर्थोदकानि सर्वाणि मूलानि च फलानि च ॥ ७ ॥
उवाच स महातेजाः सर्वानेव तपोधनान् ।
इमान्यासनमुख्यानि यथार्हमुपविश्यतां ॥ ८ ॥
रामस्य भाषितं श्रुत्वा सर्व एव महर्षयः ।
वृषीषु रुचिराभासु निषेदुः काञ्चनीषु ते ॥ ९ ॥

उपविष्टान् महाभागान् दृष्ट्वा परपुरञ्जयः ।
प्रयतः प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् ॥१०॥
किमागमनकार्यं वः किं करोमि तपोधनाः ।
आज्ञाप्योऽहं तपः सिद्धैः सर्वथा किङ्करः स्वयं ॥११॥
इदं राज्यं च सकलं जीवितं च हृदि स्थितं ।
सर्वमेतद्द्विजार्थं मे सत्यमेतद्ब्रवीमि वः ॥१२॥
तस्य तद्वचनं श्रुत्वा साधुवादो महानभूत् ।
ऋषीणामुग्रतपसां यमुनातीरवासिनां ॥१३॥
ऊचुश्चैव महात्मानः प्रहर्षेण समन्विताः ।
उपपन्नं नरव्याघ्र त्वय्येव भुवि नान्यतः ॥१४॥
बहवः पार्थिवा राजन्नतिक्रान्ता महाबलाः ।
कार्यस्य गौरवं मत्वा प्रतिज्ञां नारुहन्ति ते ॥१५॥

त्वया पुनर्ब्राह्मणगौरवादियं
कृता प्रतिज्ञा ह्यनवेक्ष्य कारणं ।
ततश्च कर्ता ह्यसि नात्र संशयो
महाभयात् त्रातुमृषींस्त्वमर्हसि ॥१६॥

इत्युत्तरकाण्डे ऋषिसमागमो नाम
पञ्चषष्टितमः सर्गः ॥

## LXVI.

ब्रुवत्स्वेवं तदा तेषु काकुत्स्थो वाक्यमब्रवीत् ।
किं कार्यं ब्रूत मुनयो भयं तावदपैतु वः ॥ १ ॥
तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् ।
भयं नः शृणु यन्मूलं देशस्य च नरेश्वर ॥ २ ॥
पूर्वं कृतयुगे राम दैतेयः सुमहानभूत् ।
हिरण्यकशिपोर्नप्ता मधुर्नाम महासुरः ॥ ३ ॥
ब्रह्मण्यश्च वदान्यश्च बुद्ध्या च परिनिष्ठितः ।
सुरैश्च परमोदारैः प्रीतिस्तस्यातुलाभवत् ॥ ४ ॥
स मधुर्वीर्यसंपन्नो धर्मे च सुसमाहितः ।
बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥ ५ ॥
शूलं शूलाद्विनिष्कृष्य महावीर्यं महाबलं ।
ददौ महात्मा सुप्रीतो वाक्यं चेदमुवाच ह ॥ ६ ॥
नवायमतुलो धर्मो मत्प्रसादकरः शुभः ।
येन प्रीतस्तवाविघ्नं दास्याम्यायुधमुत्तमं ॥ ७ ॥
यावत् सुरैश्च विप्रैश्च विरुध्येन्न भवान् भुवि ।
तावच्छूलं तवैतत् स्यादन्यथा नाशमेष्यति ॥ ८ ॥
यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः ।
तं शूलो भस्मसात् कृत्वा पुनरेष्यति ते करं ॥ ९ ॥

एवं शूलवरं लब्ध्वा स्मयमानो महासुरः ।
प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥१०॥
भगवन् मम वंशस्य शूलमेतदनुत्तमं ।
भवेद्धि सततं देव वराणामीश्वरो ह्यसि ॥११॥
तथा ब्रुवाणमसुरं सर्वभूतपतिः शिवः ।
प्रत्युवाच स्वयं साम्ना नैतदेवं भविष्यति ॥१२॥
मा तेऽभूद्विफला वाणी मत्प्रसादात् कृता शुभा ।
भवतः पुत्रमेकं तु शूलमेतद्भविष्यति ॥१३॥
यावच्छूलं करस्थं तु भविष्यति सुतस्य ते ।
अवध्यः सर्वभूतानां तावदेव भविष्यति ॥१४॥
एवं मधुर्वरं लब्ध्वा देवात् सुमहदद्भुतं ।
भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभं ॥१५॥
तस्य पत्नी महाराजन् नाम्ना कुम्भीनसी पुरा ।
दत्ता विश्रवसोऽपत्यं राक्षसी रावणस्वसा ॥१६॥
तस्याः पुत्रो महावीर्यो लवणो नाम दारुणः ।
बाल्यात् प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥१७॥
तं पुत्रं दुर्विनीतं तु दृष्ट्वा दुःखसमन्वितः ।
मधुः शोकं समापेदे न चैनं किञ्चिदब्रवीत् ॥१८॥
स विहाय इमं लोकं प्रविष्टो वरुणालयं ।
शूलं निवेश्य लवणे वरं चास्मै निवेद्य तं ॥१९॥

स प्रभावेण शूलस्य दौरात्म्येन तथात्मनः ।
लोकान् संतापयामास विशेषेण तु तापसान् ॥ २० ॥
एवंप्रभावो लवणः शूलं चापि तथाविधं ।
श्रुत्वा प्रमाणं काकुत्स्थ त्वं हि नः परमा गतिः ॥ २१ ॥
बह्वः पार्थिवा राम भयार्तैर्ऋषिभिः पुरा ।
अभयं याचितास्तेषां न कश्चिदभयं ददौ ॥ २२ ॥
ते वयं रावणं श्रुत्वा हतं ससुतबान्धवं ।
त्रातारं राम विद्मस्त्वां नान्यं भुवि नराधिपं ॥ २३ ॥
इति राम निवेदितं तु ते
भयदं कारणमुत्थितं तु यत् ।
विनिवारयितुं भवान् क्षमः
कुरु तं काममहीनमेव नः ॥ २४ ॥

इत्युत्तरकाण्डे लवणोत्पत्तिर्नाम
षट्षष्टितमः सर्गः ॥

# उत्तरकाण्डं

## LXVII.

रामस्तथोक्तो मुनिभिः प्रत्युवाच कृताञ्जलिः ।
किमाहारः किमाचारो लवणः क्व च वर्तते ॥ १ ॥
राघवस्य वचः श्रुत्वा ऋषयः सर्व एव ते ।
ततो निवेदयामासुर्लवणो यत्र वर्तते ॥ २ ॥
आहारः सर्वसत्त्वानि विशेषेण तु तापसाः ।
आचारो रौद्रता नित्यं वासो मधुवने तथा ॥ ३ ॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगद्विपान् ।
मानुषांश्चैव कुरुते नित्यमाहारमाह्निकं ॥ ४ ॥
ततोऽपराणि सत्त्वानि खादते स महाबलः ।
संहारे समनुप्राप्ते व्यादितास्य इवान्तकः ॥ ५ ॥
तच्छ्रुत्वा राघवो वाक्यं तानुवाच तपस्विनः ।
घातयिष्यामि तद्रक्षो भयं वो नश्यतां द्विजाः ॥ ६ ॥
प्रतिज्ञाय तथा तेषां मुनीनामुग्रतेजसां ।
भ्रातॄन् स्वान् सहितान् सर्वानुवाच रघुनन्दनः ॥ ७ ॥
को हन्ता लवणं वीराः कस्यांशः स विधीयतां ।
भरतस्य महाबाहोः शत्रुघ्नस्य महात्मनः ॥ ८ ॥
राघवेणैवमुक्ते तु भरतो वाक्यमब्रवीत् ।
अहमेनं हनिष्यामि ममांशः स विधीयतां ॥ ९ ॥

भरतस्य वचः श्रुत्वा धैर्यशौर्यसमन्वितं ।
लक्ष्मणानुज उत्तस्थौ हित्वा सौवर्णमासनं ॥ १० ॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपं ।
कृतकर्मा महाबाहुर्मध्यमो रघुनन्दनः ॥ ११ ॥
आर्येण हि पुरा शून्या त्वयोध्या रक्षिता पुरी ।
संतापं हृदये कृत्वा आर्यस्यागमनं प्रति ॥ १२ ॥
अनुभूतानि दुःखानि भरतेन बहूनि च ।
शयानो दुःखशय्यासु नन्दिग्रामे महात्मवान् ॥ १३ ॥
फलमूलाशनो भूत्वा जटाचीरधरस्तथा ।
मयि प्रेष्ये स्थिते ह्येष न भूयः क्लेशमर्हति ॥ १४ ॥
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् ।
एवं भवतु काकुत्स्थ क्रियतां शासनं मम ॥ १५ ॥
राज्ये त्वामभिषेक्ष्यामि मधोस्तु नगरे शुभे ।
निवेशय महाबाहो पुरीं त्वं यद्यवेक्षसे ॥ १६ ॥
शूरस्त्वं कृतविद्यश्च समर्थश्च निवेशने ।
नगरं मधुना जुष्टं तथा जनपदं शुभं ॥ १७ ॥
यो हि वंशं समुत्पाद्य पार्थिवस्य निवेशने ।
न विधत्ते पुरं तत्र नरकं सोऽवगाहते ॥ १८ ॥
स त्वं हत्वा मधुसुतं लवणं पापचेतसं ।
राज्यं प्रशाधि धर्मेण वाक्यं मे यद्यवेक्षसे ॥ १९ ॥

उत्तरं च न वक्तव्यं शूर वाक्यान्तरे मम ।
पूर्वतस्याविचार्याज्ञा कर्तव्या ह्यनुजैः सदा ॥ २० ॥
अभिषेकं च काकुत्स्थ प्रतीच्छ त्वं मयोद्यतं ।
वशिष्ठप्रमुखैर्विप्रैर्मन्त्रैर्युतमनिन्दितं ॥ २१ ॥

इत्युत्तरकाण्डे शत्रुघ्ननियोगो नाम
सप्तषष्टितमः सर्गः ॥

# उत्तरकाण्डं

## LXVIII.

एवमुक्तस्तु रामेण भूत्वा किञ्चिदवाङ्मुखः ।
शत्रुघ्नो वीर्यसम्पन्नो मन्दमन्दमुवाच ह ॥ १ ॥
काकुत्स्थ वेत्सि धर्मं त्वमस्मिँल्लोके नरेश्वर ।
कथं ज्येष्ठेषु तिष्ठत्सु कनीयानभिषिच्यते ॥ २ ॥
अवश्यं करणीयं च शासनं तव पार्थिव ।
स्वयमेव महाबाहो मयेदं ते प्रतिश्रुतं ॥ ३ ॥
उत्तरं यन्मया तुभ्यं दत्तमप्रतिजानता ।
अनार्यं दुर्वचो घोरं तन्मे मर्माणि कृन्तति ॥ ४ ॥
तस्यैवं मे दुरुक्तस्य त्वन्तुमर्हस्यनिन्दित ।
उत्तरं हि न वक्तव्यं ज्येष्ठानां मद्विधैः सदा ॥ ५ ॥
अधर्मसहितं चैव इहामुत्र च गर्हितं ।
तव चैव महाबाहो शासनं दुरतिक्रमं ॥ ६ ॥
सोऽहं द्वितीयं काकुत्स्थ न वक्ष्यामि तवोत्तरं ।
दण्डो द्वितीयो नेदानीं पतेन्मम परंतप ॥ ७ ॥
अहमाज्ञाकरो राजन् तवास्मि पुरुषर्षभ ।
अधर्मं जहि काकुत्स्थ मत्कृते रघुनन्दन ॥ ८ ॥
एवमुक्तस्तु शूरेण शत्रुघ्नेन महात्मना ।
उवाच रामः संहृष्टो लक्ष्मणं भरतं तथा ॥ ९ ॥

अभिषेकस्य संभारानानयन्तु त्वरान्विताः ।
अद्यैव पुरुषव्याघ्रमभिषेक्ष्यामि राघवं ॥ १० ॥
पुरोधसं च सर्वज्ञं नैगमान् ऋत्विजस्तथा ।
मन्त्रिणश्च नरव्याघ्र शीघ्रं सर्वान् समानय ॥ ११ ॥
राज्ञः शासनमाज्ञाय चक्रुस्तूर्णमशेषतः ।
अभिषेकसमारम्भं पुरस्कृत्य पुरोधसं ॥ १२ ॥
ततोऽभिषेको ववृधे शत्रुघ्नस्य महात्मनः ।
संप्रहर्षकरः श्रीमान् भ्रातॄणां च पुरस्य च ॥ १३ ॥
अभिषिक्तस्तु काकुत्स्थो भ्रात्रा ज्येष्ठेन सादरं ।
अभिषिक्तः पुरा स्कन्दः सेन्द्रैरिव दिवौकसैः ॥ १४ ॥
अभिषिक्ते तु काकुत्स्थे रामेणाक्लिष्टकर्मणा ।
पौराः प्रमुदिताः सर्वे ब्राह्मणाश्च बहुश्रुताः ॥ १५ ॥
कौशल्या च सुमित्रा च कैकेयी चैव मङ्गलं ।
चक्रुस्ता राजभवने याश्चान्या राजयोषितः ॥ १६ ॥
ऋषयश्च महात्मानो यमुनातीरवासिनः ।
हतं लवणमाशंसुः शत्रुघ्नस्याभिषेचने ॥ १७ ॥
ततोऽभिषिक्तं शत्रुघ्नमङ्कमारोप्य राघवः ।
उवाच मधुरां वाणीं तेजस्तस्याभिवर्धयन् ॥ १८ ॥
अमोघोऽयं शरो वीर दिव्यः परपुरंजय ।
अनेन लवणं वीर हन्तासि जयतां वर ॥ १९ ॥

सृष्टः शरोऽयं शत्रुघ्न जगत्येकार्णवे पुरा ।
स्वयम्भुवा देवदेवेनाजितेन महात्मना ॥ २० ॥
अधृष्यः सर्वभूतानां तेनायं शर उत्तमः ।
सृष्टः क्रोधाभिभूतेन विनाशाय दुरात्मनोः ॥ २१ ॥
मधुकैटभयोर्वीर विघाते वर्तमानयोः ।
स्रष्टुकामेन लोकांस्त्रींस्तौ चानेन हतौ युधि ॥ २२ ॥
तौ हत्वा जनभोगार्थे कैटभं तु मधुं तथा ।
अनेन शरमुख्येन ततो लोकांश्चकार सः ॥ २३ ॥
नायं शरो मया पूर्वं रावणस्य जिघांसया ।
मुक्तः शत्रुघ्न भूतानां त्रासो माभून्महानिति ॥ २४ ॥

अनेन तं मुनिगणशत्रुमाहवे
हनिष्यसि रघुवर नात्र संशयः ।
निहत्य तं पुरवरमेव च स्वयं
निवेशय त्रिदशपुरोपमं लघु ॥ २५ ॥

इत्युत्तरकाण्डे शत्रुघ्नाभिषेको नाम
अष्टषष्टितमः सर्गः ॥

# उत्तरकाण्डं

## LXIX.

शरं दत्वाथ शत्रुघ्ने राघवः परवीरहा ।
पुनश्चैवमुवाचेदं वचनं वाक्यकोविदः ॥ १ ॥
यत् तु तस्य महच्छूलं त्र्यम्बकेन महात्मना ।
दत्तं शत्रुविनाशाय पितुरायुधमुत्तमं ॥ २ ॥
तत् संनिक्षिप्य भवने पूज्यमानं मुहुर्मुहुः ।
दिशो विलोकयन् सर्वाश्चरत्याहारधर्मतां ॥ ३ ॥
यदा तु युद्धकांक्षी तं क्वचिदाह्वयते रिपुः ।
तदा शूलं गृहीत्वाशु भस्म तं कुरुते युधि ॥ ४ ॥
स त्वं निवर्तमानं तं दृष्ट्वाहारप्रचारतः ।
अप्रविष्टं पुरं पूर्वं द्वारि तिष्ठेर्धृतायुधः ॥ ५ ॥
अगृहीतायुधं चैव युद्धाय पुरुषर्षभ ।
आह्वयेथा महाबाहो ततो हन्तासि राक्षसं ॥ ६ ॥
अन्यथा क्रियमाणे तु अबध्यः स भविष्यति ।
सत्यं चैवं कृते वीर विनाशमुपयास्यति ॥ ७ ॥
एतत् ते सर्वमाख्यातं शूलस्य च विपर्ययः ।
श्रीमतः शितिकण्ठस्य कीर्त्तिर्हि दुरतिक्रमा ॥ ८ ॥

इत्युत्तरकाण्डे शत्रुघ्नशरप्रदानं नाम नवषष्टितमः सर्गः ॥

# उत्तरकाण्डं

## LXX.

एवमुक्त्वाथ शत्रुघ्नं संदिश्य च पुनः पुनः ।
पुनरप्यपरं वाक्यमुवाच रघुनन्दनः ॥ १ ॥
इमान्यश्वसहस्राणि चत्वारि पुरुषर्षभ ।
रथानां द्वे सहस्रे च गजानां शतमुत्तमं ॥ २ ॥
चत्वरापणवीथ्यश्च नानापण्योपशोभिताः ।
अनुगच्छन्तु शत्रुघ्नं तथैव नटनर्तकाः ॥ ३ ॥
हिरण्यस्य सुवर्णस्य नियुतं प्रयुतं तथा ।
गृहीत्वा गच्छ शत्रुघ्न पर्याप्तबलवाहनः ॥ ४ ॥
बलं च सुभृतं वीर हृष्टपुष्टमनिन्दितं ।
वश्यं मानप्रदानाभ्यां कुर्यास्त्वं रघुनन्दन ॥ ५ ॥
न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः ।
सुप्रीतो भृत्यवर्गो न यत्र तिष्ठति राघव ॥ ६ ॥
स त्वं हृष्टजनाकीर्णां प्रस्थाप्य महतीं चमूं ।
एक एव धनुष्पाणिरुपगच्छेर्मधोः सुतं ॥ ७ ॥
यथा च त्वां न जानाति गच्छन्तं युद्धकांक्षिणं ।
लवणः स मधोः पुत्रस्तथा त्वं गच्छ राघव ॥ ८ ॥
न ह्यन्यथा भवेन्मृत्युस्तस्य घोरस्य रक्षसः ।
दर्शनं यो हि तस्येयात् स वध्यो लवणस्य हि ॥ ९ ॥

ग्रीष्मकाले व्यतिक्रान्ते वर्षाकाले समागते ।
हन्यास्त्वं लवणं सौम्य स हि कालोऽस्य दुर्मतेः ॥१०॥
ऋषीनिमान् पुरस्कृत्य गच्छन्तु तव सैनिकाः ।
यथा ग्रीष्मावशेषेण तरेयुर्जाह्नवीजलं ॥११॥
स्थापयित्वा बलं तत्र नद्यास्तीरे समाहितः ।
अग्रतो धनुषा सार्धं यायास्त्वं लघुविक्रमः ॥१२॥
एवमुक्तस्तु रामेण शत्रुघ्नः स महाबलः ।
सेनामुख्यान् समानीय ततो वाक्यमुवाच ह ॥१३॥
इमे ते गणिता वासा यत्र यत्र निवत्स्यथ ।
स्थेयं तेष्वप्रमादेन ममाज्ञां प्रतिकांक्षिभिः ॥१४॥
शीघ्रमद्यैव निर्यात सभृत्यबलवाहनाः ।
पुरस्कृत्य महाभागान् सर्वानेतांस्तपोधनान् ॥१५॥
न च वो विषये कश्चिद्बाधः कार्यः प्रतापनः ।
प्रयातार्थेऽपचारेण राजा दोषेण लिप्यते ॥१६॥
तथा तांस्तु समादिश्य निर्याप्य च महाबलः ।
कौशल्यां च सुमित्रां च कैकेयीं चाभिवाद्य सः ॥१७॥
रामं प्रदक्षिणं कृत्वा शिरसाभिप्रणम्य च ।
रामेण च परिष्वक्तः शत्रुघ्नः शत्रुतापनः ॥१८॥
लक्ष्मणं भरतं चैव प्रणिपत्य कृताञ्जलिः ।
ताभ्यां चैवाभ्यनुज्ञात आघ्रातः शिरसि स्म सः ॥१९॥

पुरोधसं वशिष्ठं च शत्रुघ्नः स प्रतापवान् ।
प्रदक्षिणमथो कृत्वा निर्जगाम महाबलः ॥ २० ॥
निर्याप्य सेनामथ सोऽग्रतस्तदा
गजेन्द्रवाजिप्रवरौघसंकुलां ।
उपोष्य मासं स नरेन्द्रपार्श्वतः
प्रतिप्रयातो रघुवंशवर्धनः ॥ २१ ॥

इत्युत्तरकाण्डे शत्रुघ्नप्रस्थानं नाम
सप्ततितमः सर्गः ॥

## LXXI.

प्रस्थाप्य तद्बलं सर्वं सप्तरात्रमथोषितः ।
एक एव स शत्रुघ्नो जगाम त्वरितस्तदा ॥ १ ॥
त्रिरात्रमन्तरोषित्वा शूरो राघवनन्दनः ।
वाल्मीकिराश्रमं पुण्यं प्रविवेश महामतिः ॥ २ ॥
सोऽभिगम्य महात्मानमभिवाद्य च राघवः ।
कृताञ्जलिपुटो भूत्वा वाक्यमेतदुवाच ह ॥ ३ ॥
भगवन् वस्तुमिच्छामि गुरुकार्यादिहागतः ।
श्वः प्रभाते गमिष्यामि प्रतीचीं वारुणीं दिशं ॥ ४ ॥
शत्रुघ्नस्य वचः श्रुत्वा प्रहसन् मुनिपुङ्गवः ।
प्रत्युवाच महातेजाः स्वागतं तेऽस्त्विह प्रभुः ॥ ५ ॥
स्वमाश्रमपदं ह्येतद्राघवाणां न संशयः ।
आसनं पाद्यमर्घ्यं च निर्विशङ्कः प्रतीच्छ मे ॥ ६ ॥
प्रतिगृह्य स तां पूजां वन्यं च फलभोजनं ।
भक्षयामास काकुत्स्थस्तृप्तिं च परमां ययौ ॥ ७ ॥
स भुक्तवान् महाबाहुर्महर्षिं तमुवाच ह ।
मुने यज्ञविभूतीयं कस्याश्रमसमीपतः ॥ ८ ॥
तस्य तद्भाषितं श्रुत्वा वाल्मीकिर्वाक्यमब्रवीत् ।
शृणु शत्रुघ्न यस्यैतद्बभूवायतनं पुरा ॥ ९ ॥

युष्माकं पूर्वजो राजा सुदासो नाम धर्मवित् ।
तस्य पुत्रो महाभागः सर्वास्त्रज्ञश्च संयुगे ॥ १० ॥
यष्टा दानपतिः शान्तः प्रजानां पालने रतः ।
राजा मित्रसहो नाम सत्ववानतिधार्मिकः ॥ ११ ॥
स बाल एव सौदासो मृगयामुपचक्रमे ।
चंक्रम्यमाणः सोऽपश्यद्राक्षसौ द्वौ महाबलौ ॥ १२ ॥
शार्दूलरूपिणौ घोरौ मृगांस्तौ च सहस्रशः ।
भक्षयन्तावसंतुष्टौ पर्याप्तिं नोपजग्मतुः ॥ १३ ॥
स तु तौ राक्षसौ दृष्ट्वा निर्मृगं च वनं कृतं ।
क्रोधेन महताविष्टो जघानैकं महेषुणा ॥ १४ ॥
विनिपात्य तयोरेकं सौदासः पुरुषर्षभः ।
विज्वरो विगतामर्षो हतं रक्षो ह्युदैक्षत ॥ १५ ॥
सखायं निहतं दृष्ट्वा सहायस्तस्य रक्षसः ।
संतापमकरोद्घोरं सौदासं चेदमब्रवीत् ॥ १६ ॥
यस्मादनपराधं त्वं सहायं मम जघ्निवान् ।
तस्मात् तवापि पापिष्ठां करिष्यामि प्रतिक्रियां ॥ १७ ॥
एवमुक्त्वा वचो रक्षस्तत्रैवान्तरधीयत ।
कालपर्याययोगेन राजा मित्रसहोऽप्यथ ॥ १८ ॥
ईजे च स नृपो धीमानाश्रमस्य समीपतः ।
अश्वमेधं महायज्ञं वशिष्ठेनाभिपालितः ॥ १९ ॥

तदा यज्ञो महांस्तस्य सर्वकामसमन्वितः ।
समृद्धः परया लक्ष्म्या देवयज्ञसमोऽभवत् ॥ २० ॥
अथावसाने यज्ञस्य पूर्ववैरमनुस्मरन् ।
वशिष्ठरूपी राजानमुवाचेदं स राक्षसः ॥ २१ ॥
अस्यावसाने यज्ञस्य सामिषं भोजनं मम ।
दीयतामिति शीघ्रं वै नात्र कार्या विचारणा ॥ २२ ॥
तच्छ्रुत्वा व्याहृतं वाक्यं रक्षसो ब्रह्मरूपिणः ।
भक्षसंस्कारकुशलानुवाच स महीपतिः ॥ २३ ॥
हविष्यमामिषं स्वादु यथा भवति भोजनं ।
तथा कुरुत शीघ्रं वै परितुष्येद्यथा गुरुः ॥ २४ ॥
शासनात पार्थिवेन्द्रस्य सूदाः संभ्रान्तचेतसः ।
तच्च रक्षः पुनः कृत्वा सूदवेशमुपस्थितः ॥ २५ ॥
स मानुषमथो मांसं पार्थिवाय न्यवेदयत् ।
इदं स्वादु हविष्यं च मांसमामिषमाहृतं ॥ २६ ॥
भोजनं स तु विप्राय पत्न्या सार्धमुपाहरत् ।
मदयन्त्या नरश्रेष्ठ रक्षसाहृतमामिषं ॥ २७ ॥
ज्ञात्वा तदामिषं विप्रो मानुषं भोजनाहितं ।
क्रोधेन महताविष्टो व्याहर्तुमुपचक्रमे ॥ २८ ॥
यस्मात् त्वं मानुषं मांसं ममेदं दातुमिच्छसि ।
तस्माद्भोजनमेतत्ते भविष्यति न संशयः ॥ २९ ॥

सभार्यः स तु राजा तं प्रणिपत्य मुहुर्मुहुः ।
पुनर्वशिष्ठं प्रोवाच यदुक्तं ब्रह्मरूपिणा ॥ ३० ॥
तच्छ्रुत्वा पार्थिवेन्द्रस्य रक्षसोपाधिना कृतं ।
पुनः प्रोवाच राजानं वशिष्ठो द्विजसत्तमः ॥ ३१ ॥
मया रोषपरीतेन यदिदं व्याहृतं वचः ।
न तच्छक्यं मृषा कर्तुं प्रदास्यामि च ते वरं ॥ ३२ ॥
कालो द्वादशवर्षाणि शापस्यास्य भविष्यति ।
मत्प्रसादाच्च राजेन्द्र अतीतं न स्मरिष्यसि ॥ ३३ ॥
ततः क्रुद्धः स सौदासस्तोयं जग्राह पाणिना ।
वशिष्ठं शप्तुकामश्च भार्या चैनं न्यवारयत् ॥ ३४ ॥
अस्माकं प्रभवत्येव वशिष्ठो भगवानृषिः ।
प्रतिशप्तुमयुक्तं ते देवभूतं पुरोधसं ॥ ३५ ॥
स तु क्रोधमयं तोयं तेजोबलसमन्वितं ।
विससर्ज स धर्मात्मा स्वस्य पादौ सिषेच ह ॥ ३६ ॥
तेनास्य राज्ञस्तौ पादौ दग्धौ कल्माषतां गतौ ।
तदाप्रभृति राजासौ सौदासः सुमहाबलः ॥ ३७ ॥
कल्माषपाद नामेति ख्यायते च तथा नृपः ।
पुनर्लेभे तदा राज्यं प्रजाश्चैवाभ्यपालयत् ॥ ३८ ॥
तस्येदं राजसिंहस्य यज्ञायतनमुत्तमं ।
आश्रमस्य समीपे हि यत् त्वं पृच्छसि राघव ॥ ३९ ॥

स तु तां पार्थिवेन्द्रस्य कथां श्रुत्वा सुदारुणां ।
विवेश पर्णशालां तां महर्षिमभिवाद्य च ।। ४० ।।

इत्युत्तरकाण्डे सौदासोपाख्यानं नाम
एकसप्ततितमः सर्गः ।।

## उत्तरकाण्डं

### LXXII.

यामेव रात्रिं शत्रुघ्नः पर्णशालामुपाविशत् ।
तामेव रात्रिं सीतापि प्रसूता दारकद्वयं ॥ १ ॥
ततोऽर्धरात्रसमये बालका मुनिदारकाः ।
वाल्मीकिः प्रियमाचख्युः सीतायाः प्रसवं शुभं ॥ २ ॥
भगवन् रामपत्नी सा प्रसूता दारकद्वयं ।
तयो रक्षां प्रयत्नेन कुरु भूतविनाशिनीं ॥ ३ ॥
तेषां तद्भाषितं श्रुत्वा मुनिर्विस्मयमागतः ।
भूतघ्नीं चाकरोत् ताभ्यां रक्षां रक्षोविनाशिनीं ॥ ४ ॥
कुशमुष्टिमुपादाय लवणं चाभिरक्षिणं ।
वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीं ॥ ५ ॥
यस्तयोः पूर्वजातस्तु स कुशैर्मन्त्रसंस्कृतैः ।
निर्मार्जनीयो नाम्ना हि भविता कुश इत्यसौ ॥ ६ ॥
तयोरवरजो यः स्याल्लवणेनैव चैव हि ।
निर्मार्जनीयो वृद्धाभिर्नाम्ना स भविता लवः ॥ ७ ॥
एवं कुशलवौ नाम्ना तावुभौ यमजातकौ ।
मत्कृताभ्यां तु नामभ्यां लोके ख्यातिं गमिष्यतः ॥ ८ ॥
तां रक्षां प्रतिगृह्याथ मुनेर्हस्तात् समाहिताः ।
अकुर्वन्त तदा रक्षां तापस्यो गतकल्मषाः ॥ ९ ॥

मङ्गलं क्रियमाणं तु दिष्ट्या दिष्ट्येति चासकृत् ।
संकीर्त्यमानं रामस्य सीतायाः प्रसवं तथा ॥ १० ॥
अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत् प्रियं ।
पर्णशालां गतो रात्रौ दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ ११ ॥
तथा तस्य प्रहृष्टस्य शत्रुघ्नस्य महात्मनः ।
व्यतीता वार्षिकी रात्रिः श्रावणी लघुविक्रमा ॥ १२ ॥
प्रभाते तु महावीर्यः कृत्वा पौर्वाह्णिकां क्रियां ।
ययौ प्राञ्जलिरामन्त्र्य मुनिं तेन विसर्जितः ॥ १३ ॥
स गत्वा यमुनातीरं सप्तरात्रोषितः पथि ।
ऋषीणां पुण्यकीर्त्तीनामकरोद्वासमाश्रमे ॥ १४ ॥
स तत्र मुनिभिः सार्धं भार्गवप्रमुखैर्नृपः ।
कथाभिर्बहुरूपाभिर्वासं चक्रे महायशाः ॥ १५ ॥

इत्युत्तरकाण्डे कुशलवजन्म नाम
द्विसप्ततितमः सर्गः ॥

# उत्तरकाण्डं

## LXXIII.

अथ रात्र्यां व्यतीतायां शत्रुघ्नो रघुनन्दनः ।
उवाच मधुरां वाणीं लवणं प्रति राघवः ॥ १ ॥
भगवन् श्रोतुमिच्छामि लवणस्य बलाबलं ।
शूलस्य च बलं ब्रह्मन् के च पूर्वं निपातिताः ॥ २ ॥
अनेन शूलमुख्येन द्वन्द्वयुद्धे महामुने ।
तस्य तद्भाषितं श्रुत्वा शत्रुघ्नस्य महात्मनः ॥ ३ ॥
प्रत्युवाच महातेजा भार्गवो रघुनन्दनं ।
असंख्येयानि कर्माणि पापस्य तस्य राघव ॥ ४ ॥
इक्ष्वाकुवंशे यद्वृत्तं तच्छृणुष्व नराधिप ।
अयोध्यायां पुरा राजा युवनाश्वसुतो बली ॥ ५ ॥
मान्धाता इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ।
स कृत्वा पृथिवीं कृत्स्नां शासने पृथिवीपतिः ॥ ६ ॥
सुरलोकं वशे कर्तुमुद्योगमकरोन्नृपः ।
इन्द्रस्य च भयं तीव्रं सुराणां चाभवन्महत् ॥ ७ ॥
मान्धातरि कृतोद्योगे देवलोकजिगीषया ।
सोऽर्धासनेन शक्रस्य राज्यार्धेन च पार्थिवः ॥ ८ ॥
हन्यमानः सुरगणैः प्रतिज्ञां नाभिचक्रमे ।
तस्य पापमभिप्रायं विदित्वा पाकशासनः ॥ ९ ॥

सान्त्वपूर्वमिदं वाक्यमुवाच युवनाश्वजं ।
राजा त्वं मानुषे लोके न तावत् पुरुषर्षभ ॥ १० ॥
अकृत्वा पृथिवीं वश्यां देवराज्यं न ते क्षमं ।
यदि वीर समग्रा ते मेदिनी निखिला वशे ॥ ११ ॥
देवराज्यं कुरुष्वेह सभृत्यबलवाहनः ।
ब्रुवाणमेवमिन्द्रं तु मान्धाता वाक्यमब्रवीत् ॥ १२ ॥
क्व मे प्रतिहतं शक्र शासनं पृथिवीतले ।
तमुवाच सहस्राक्षो लवणो नाम राक्षसः ॥ १३ ॥
मधुपुत्रो मधुवने नाज्ञां स कुरुते तव ।
तच्छ्रुत्वा विप्रियं घोरं सहस्राक्षेण भाषितं ॥ १४ ॥
व्रीडितोऽधोमुखो राजा व्याहर्तुं न शशाक ह ।
आमन्त्र्य तु सहस्राक्षं ह्रिया किञ्चिदवाङ्मुखः ॥ १५ ॥
पुनरेवागमच्छ्रीमानिमं लोकं नरेश्वरः ।
स कृत्वा हृदयेऽमर्षं सभृत्यबलवाहनः ॥ १६ ॥
आजगाम मधोः पुत्रं वशे कर्तुमनिर्जितः ।
स काङ्क्षमाणो लवणं युद्धाय पुरुषर्षभः ॥ १७ ॥
दूतं संप्रेषयामास सकाशं लवणस्य तु ।
स गत्वा विप्रियाण्याह सुबहूनि मधोः सुतं ॥ १८ ॥
वदन्तमेवं तं दूतं भक्षयामास राक्षसः ।
चिरायमाणे दूते तु स राजा क्रोधमूर्छितः ॥ १९ ॥

आह्वयामास तद्दन्तो गत्वा सर्वास्त्रविक्रमैः ।
ततः प्रहस्य लवणः शूलमादाय दारुणं ॥ २० ॥
बधाय सानुबन्धस्य तस्य राज्ञो मुमोच ह ।
तच्छूलं दीप्यमानं तु सभृत्यबलवाहनं ॥ २१ ॥
भस्मीकृत्वा नृपं भूयो लवणस्यागमत् करं ।
एवं स राजा सुमहान् हतः सबलवाहनः ॥ २२ ॥
शूलस्यैतद्बलं राजन्नप्रमेयमनुत्तमं ।
श्वः प्रभाते तु लवणं त्वं हत्वा नात्र संशयः ॥ २३ ॥
अगृहीतायुधं वीरं ध्रुवो हि विजयस्तव ।
लोकानां स्वस्ति चैवं स्यात् कृते कर्मणि च त्वया ॥ २४ ॥

इत्युत्तरकाण्डे मान्धातुरुपाख्यानं नाम
त्रिसप्ततितमः सर्गः ॥

## LXXIV.

ततस्तच्छृण्वतस्तस्य जयं चाकांक्षतः शुभं ।
व्यतीता रजनी शीघ्रं शत्रुघ्नस्य महात्मनः ॥ १ ॥
ततः प्रभाते विमले तस्मिन् काले स राक्षसः ।
निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥ २ ॥
एतस्मिन्नन्तरे वीरः शत्रुघ्नो यमुनां नदीं ।
तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥ ३ ॥
ततोऽर्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः ।
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥ ४ ॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधं ।
तमुवाच ततो रक्षः किमनेन करिष्यसि ॥ ५ ॥
ईदृशानां सहस्राणि सायुधानां नराधम ।
भक्षितानि मया रोषात् कालेनानुगतो ह्यसि ॥ ६ ॥
आहारश्चाप्यसंपूर्णो ममायं पुरुषाधम ।
स्वयं प्रविष्टोऽद्य मुखं कथमासाद्य दुर्मते ॥ ७ ॥
तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः ।
शत्रुघ्नो वीर्यसंपन्नो रोषादश्रूण्यवासृजत् ॥ ८ ॥
तस्य रोषाभिभूतस्य शत्रुघ्नस्य महात्मनः ।
दीप्तिमन्तो विनिश्चेरुर्नेत्राभ्यां पावकार्चिषः ॥ ९ ॥

उवाच च सुसंक्रुद्धः शत्रुघ्नः पुरुषादकं ।
योद्धुमिच्छामि दुर्बुद्धे द्वन्द्वयुद्धं त्वया सह ।। १० ।।
पुत्रो दशरथस्याहं भ्राता रामस्य धीमतः ।
शत्रुघ्नो नाम दुर्बुद्धे बधाकांक्षी तवागतः ।। ११ ।।
अद्य मे योद्धुकामस्य द्वन्द्वयुद्धं प्रदीयतां ।
शत्रुस्त्वं सर्वभूतानां न मे जीवन् गमिष्यसि ।। १२ ।।
तथा तस्य ब्रुवाणस्य राक्षसः प्रहसन् वचः ।
प्रत्युवाच नरव्याघ्रं दिष्ट्या प्राप्तोऽसि दुर्मते ।। १३ ।।
मम मातुः स्वको भ्राता दशग्रीवो महाबलः ।
हतो रामेण दुर्बुद्धे स्त्रीहेतोः पुरुषाधम ।। १४ ।।
तच्च मे मर्षितं सर्वं रावणस्य कुलक्षयं ।
अवज्ञापूर्वकं तन्मां हत्यप्रतिकारिणं ।। १५ ।।
इक्ष्वाकवो मया सर्वे परिभूता यथा तृणं ।
भूताश्चैव भविष्याश्च यूयं च पुरुषाधमाः ।। १६ ।।
तस्य ते युद्धकामस्य युद्धं दास्यामि दुर्मते ।
ईप्सितं यादृशं तुभ्यं सज्जये यावदायुधं ।। १७ ।।
तमुवाच स शत्रुघ्नो न मे जीवन् गमिष्यसि ।
संगतो दर्शनं शत्रुर्न मोक्तव्यः कृतात्मभिः ।। १८ ।।
यो हि विक्लवया बुद्ध्या ददाति प्रसरं रिपोः ।
स हतो मन्दबुद्धित्वात् स लोके पुरुषाधमः ।। १९ ।।

एवमेव हि शत्रूणां वर्तितव्यं यथा तथा ।
तस्मात् त्वां निहनिष्यामि शरेणानतपर्वणा ॥ २० ॥

इत्युत्तरकाण्डे लवणाक्षेपो नाम
चतुःसप्ततितमः सर्गः ॥

## LXXV.

तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य महात्मनः ।
रोषमाहारयत् तीव्रं रक्षस्तिष्ठेति चाब्रवीत् ॥ १ ॥
निपीड्य पाणिना पाणिं दन्तैर्दन्तांस्तथा पिषन् ।
लवणो रघुशार्दूलमाह्वयामास चासकृत् ॥ २ ॥
तं ब्रुवाणं तदा वाक्यं लवणं भीमविक्रमं ।
शत्रुघ्नो देवशत्रुं तु इदं वचनमब्रवीत् ॥ ३ ॥
शत्रुघ्नो न तदा जातो यदान्ये निर्जितास्त्वया ।
ममाद्य बाणाभिहतो व्रज त्वं यमसादनं ॥ ४ ॥
ऋषयस्त्वद्य पश्यन्तु पापात्मानं रणे हतं ।
मदीयशरविद्धाङ्गं त्रिदशा इव रावणं ॥ ५ ॥
त्वयि मद्बाणनिर्दग्धे पतितेऽद्य निशाचर ।
पुरे जनपदे चापि क्षेममेव भविष्यति ॥ ६ ॥
अद्य मच्चापनिर्मुक्तः शरो वज्रनिभाननः ।
प्रवेक्ष्यते ते हृदयं पद्ममंशुरिवार्कजः ॥ ७ ॥
स उत्पाट्य महच्छालं लवणः क्रोधमूर्छितः ।
शत्रुघ्नोरसि चिक्षेप तं शूरः शतधाच्छिनत् ॥ ८ ॥
तद् दृष्ट्वा विफलं कर्म राक्षसः पुनरेव हि ।
वृक्षान् महत उत्पाट्य शत्रुघ्नायाक्षिपद्बली ॥ ९ ॥

शत्रुघ्नश्चापि तेजस्वी वृक्षानापततो बहून् ।
चिच्छेद शायकैर्दीप्तैरेकैकं त्रिभिः शतधा ॥१०॥
ततो बाणमयं वर्षं व्यसृजद्राक्षसोपरि ।
शत्रुघ्नो वीर्यसंपन्नः क्षोभो नाभूच्च रक्षसः ॥११॥
ततः प्रहस्य लवणो वृक्षमुत्पाट्य वीर्यवान् ।
भृशं जघान शिरसि स्रस्ताङ्गः स मुमोह वै ॥१२॥
तस्मिन् निपतिते शूरे हाहाकारो महानभूत् ।
ऋषीणां सिद्धसंघानां गन्धर्वाप्सरसां तथा ॥१३॥
तमवज्ञाय तु हतं शत्रुघ्नं पतितं भुवि ।
रक्षो लब्धान्तरमपि न विवेश स्वमालयं ॥१४॥
नापि जग्राह तच्छूलं दैवोपहतचेतसः ।
ततो हत इति ज्ञात्वा तं भक्षं समुपाहरत् ॥१५॥
मुहूर्ताल्लब्धसंज्ञस्तु शत्रुघ्नः पुनरुत्थितः ।
अतिष्ठद्राक्षसद्वारि पूजितः परमर्षिभिः ॥१६॥
ततो दिव्यममोघं स जग्राह शरमुत्तमं ।
ज्वलन्तं तेजसा घोरं भासयन्तं दिशो दश ॥१७॥
वज्राननं वज्रवेगं संयुगेष्वपराजितं ।
दानवेन्द्रनरेन्द्राणां शूराणां चैव दारुणं ॥१८॥
धनुष्याधीयमाने च तेनास्मिंस्तु शरोत्तमे ।
प्राज्वलत नभस्युल्का निर्घाताश्च प्रपेदिरे ॥१९॥

तं दीप्तमिव कालाग्निं युगान्ते समुपस्थितं ।
दृष्ट्वा सर्वाणि भूतानि परं त्रासमुपागमन् ॥ २० ॥
ततो देवर्षिगन्धर्वं सहसिद्धाप्सरोगणं ।
जगत् सर्वमथास्वस्थं पितामहमुपाद्रवत् ॥ २१ ॥
ऊचुश्च देवदेवेशं वरदं प्रपितामहं ।
कच्चिल्लोकक्षयो देव संप्राप्तोऽयं भयावहः ॥ २२ ॥
नेदृशं दृष्टपूर्वं तु श्रुतं वापि पितामह ।
तेषां तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ॥ २३ ॥
उवाच मधुरां वाणीं शृणुध्वं त्रिदिवौकसः ।
बधाय लवणस्याजौ शरः शत्रुघ्नधारितः ॥ २४ ॥
तेजसा यस्य संमूढाः सर्वे स्म सुरसत्तमाः ।
विष्णोरेवं हि देवस्य लोककर्तुर्महात्मनः ॥ २५ ॥
शरस्तेजोमयो भीमो भयं वो यत्कृते महत् ।
एष वै कैटभस्यार्थे मधोश्चैव महाशरः ॥ २६ ॥
सृष्टो महात्मना तेन बधार्थं रक्षसोर्द्वयोः ।
एष एकः प्रजानां हि विष्णोस्तेजोमयः शरः ॥ २७ ॥
एष वै स शरः पूर्वं विष्णोस्तस्य महात्मनः ।
तस्माद्गच्छत पश्यध्वं बध्यमानं महात्मना ॥ २८ ॥
रामानुजेन वीरेण लवणं राक्षसोत्तमं ।
तस्य ते देवदेवस्य निशम्य मधुरां गिरं ॥ २९ ॥

आजग्मुर्यत्र युध्येते शत्रुघ्नलवणावुभौ ।
तं शरं सूर्यसंकाशं शत्रुघ्नकरधारितं ॥ ३० ॥
ददृशुः सर्वभूतानि युगान्ताग्निमिवोत्थितं ।
आकाशमावृतं दृष्ट्वा देवैर्हि रघुनन्दनः ॥ ३१ ॥
सिंहनादं भृशं कृत्वा पुनर्लवणमाह्वयत् ।
आहूतश्च पुनस्तेन शत्रुघ्नेन महात्मना ॥ ३२ ॥
लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः ।
आकर्णात् स विकृष्याथ तद्धनुर्धनुषां वरं ॥ ३३ ॥
मुमोच तं महाबाणं शत्रुघ्नो लवणोरसि ।
उरस्तस्य स निर्भिद्य प्रविवेश रसातलं ॥ ३४ ॥
गत्वा रसातलं चैव शरो विबुधपूजितः ।
पुनरेवागमत् तूर्णं शत्रुघ्नस्य महाकरं ॥ ३५ ॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ।
पपात सहसा भूमौ वज्राहत इवाचलः ॥ ३६ ॥
तच्च शूलं महद्दिव्यं लवणे निहते युधि ।
पश्यतां सर्वभूतानां रुद्रस्य वशमन्वगात् ॥ ३७ ॥

अथर्षयो देवगणाःससिद्धा
अपूजयन्नप्सरसश्च वीरं ।
दिष्ट्या जयो दाशरथे तवाद्य
दिष्ट्या च लोकाः सकलाः प्रसन्नाः ॥ ३८ ॥

एकेषुणा चैव विहृत्य शत्रुं
    लोकत्रयस्यापि रघुप्रवीरः ।
विनिर्बभावुद्यतचापपाणिस्
    तमः प्रणुद्येव सहस्ररश्मिः ॥३१॥

इत्युत्तरकाण्डे लवणबधो नाम
पञ्चसप्ततितमः सर्गः ॥

# उत्तरकाण्डं

## LXXVI.

हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः ।
ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुतापनं ॥ १ ॥
दिष्ट्या ते विजयो वीर दिष्ट्या ते राक्षसो हतः ।
प्रीताः स्मो नरशार्दूल वरं वरय राघव ॥ २ ॥
वरदाः स्मो महाबाहो सर्व एव समागताः ।
विजयाकांक्षिणस्तुभ्यममोघं दर्शनं च नः ॥ ३ ॥
देवानां भाषितं श्रुत्वा शूरो मूर्ध्नि कृताञ्जलिः ।
प्रत्युवाच महातेजाः शत्रुघ्नः प्रयतात्मवान् ॥ ४ ॥
इयं मधुपुरी रम्या मधुना पूर्वनिर्मिता ।
निवेशं प्राप्नुयाच्छीघ्रमेष मे कांक्षितो वरः ॥ ५ ॥
तं देवा वाढमित्येवं प्रीताः शत्रुघ्नमब्रुवन् ।
भविष्यतीयं नगरी मधुरेत्यभिशब्दिता ॥ ६ ॥
पूजिता सर्वलोकस्य यथा लोकपुरी दिवि ।
इत्युक्त्वा देवताः सर्वा विमानैः शतशो नभः ॥ ७ ॥
कृत्वा वितिमिरं सर्वं प्रतियाता यथागतं ।
गतेषु देवसंघेषु शत्रुघ्नो रघुनन्दनः ॥ ८ ॥
तां सेनामानयामास यां हित्वा पूर्वमागतः ।
सा सेना शीघ्रमागच्छत् श्रुत्वा शत्रुघ्नशासनं ॥ ९ ॥

निवेशनं च शत्रुघ्नः श्रवणान तदाकरोत् ।
सा पुरी दिव्यसंकाशा वर्षे वै द्वादशे तदा ॥ १० ॥
निविष्टा विषयश्चास्याः शूरसेनस्ततोऽभवत् ।
क्षेत्राणि शस्यवन्त्यस्यां काले देवः प्रवर्षति ॥ ११ ॥
अरोगा वीरपुरुषाः शत्रुघ्नभुजपालिताः ।
अर्धचन्द्रप्रतीकाशा यमुनातीरमाश्रिता ॥ १२ ॥
यच्च तेन पुरा शुभ्रं लवणेन कृतं महत् ।
शोभयामास तद्वीरो नानापण्यसमृद्धिभिः ॥ १३ ॥
आरामैश्च विहारैश्च तडागैश्च समन्ततः ।
शोभितां शोभमानैश्च तथान्यैर्देवपुरुषैः ॥ १४ ॥
तां पुरीं दिव्यसंकाशां नानापुण्योपशोभितां ।
निरीक्ष्य परमप्रीतो हर्षं शत्रुघ्न आविशत् ॥ १५ ॥
तस्य चिन्ता समुत्पन्ना निविश्य मथुरां पुरीं ।
रामपादौ निरीक्षेऽहं वर्षेऽस्मिन् द्वादशे चिरात् ॥ १६ ॥

इत्युत्तरकाण्डे मथुरानिवेशो नाम
षट्सप्ततितमः सर्गः ॥

# उत्तरकाण्डं

## LXXVII.

ततो द्वादशमे वर्षे शत्रुघ्नः शत्रुकर्षणः ।
चक्रेऽयोध्यां मतिं गन्तुमल्पभृत्यबलानुगः ॥१॥
ततो बलप्रधानांश्च मन्त्रिमुख्यान् निवर्त्त्य च ।
जगाम रथमुख्येन हयानां च शतेन वै ॥२॥
स गत्वा दिवसैः कैश्चित् संहृष्टो रघुनन्दनः ।
वाल्मीकाश्रममासाद्य वासं चक्रे महायशाः ॥३॥
सोऽभिवाद्य ततः पादौ वाल्मीकेः पुरुषर्षभः ।
पाद्यमर्घ्यमथातिथ्यं जग्राह विधिवन्नृपः ॥४॥
मधुरा बहुरूपाश्च कथास्तत्र सहस्रशः ।
कथयामास वाल्मीकिः शत्रुघ्नस्य महात्मनः ॥५॥
उवाच च मुनिर्वाक्यं लवणस्य बधाश्रितं ।
सुदुष्करं कृतं कर्म लवणं निघ्नता त्वया ॥६॥
बहवः पार्थिवाः सौम्य हताः सबलवाहनाः ।
लवणेन महात्मानो युध्यमाना दुरात्मना ॥७॥
त्वया तु निहतः पापो लीलया पुरुषर्षभ ।
जगतश्च भयं घोरं प्रशान्तं तव तेजसा ॥८॥
रावणस्य बधो घोरो यत्नेन महता कृतः ।
इदं तु सुमहत् कर्म कृतवान् त्वमयत्नतः ॥९॥

प्रीतिश्चैव परा जाता देवानां लवणे हते ।
भूतानां चैव सर्वेषां जगतश्च प्रियं कृतं ॥ १० ॥
युद्धं च तद्यथावृत्तं श्रुतमेव मयानघ ।
सभायामुपविष्टेन वासवस्य महर्षिभिः ॥ ११ ॥
ममापि परमा प्रीतिर्हृदि शत्रुघ्न वर्तते ।
उपाघ्रास्यामि मूर्ध्नि त्वां स्नेहस्यैषा परा गतिः ॥ १२ ॥
इत्युक्त्वा मूर्ध्नि शत्रुघ्नमुपाघ्राय महामुनिः ।
आतिथ्यमकरोत् तस्य ससैन्यस्य महायशाः ॥ १३ ॥
स भुक्तवान् नरश्रेष्ठो गीतं मधुरमुत्तमं ।
शुश्राव रामचरितं विविधं विधिसंहितं ॥ १४ ॥
तान्यक्षराणि पद्यानि यथावृत्तानि पूर्वशः ।
श्रुत्वा पुरुषशार्दूलो विसंज्ञः साश्रुलोचनः ॥ १५ ॥
स मुहूर्त्तमिवासंज्ञो निःश्वस्याथ पुनः पुनः ।
तस्मिन् गीते यथावृत्तं वर्तमानमिवाशृणोत् ॥ १६ ॥
पदानुगाश्च ये राज्ञः श्रुत्वा ते गीतसम्पदं ।
बभूवुर्दीनमनस आश्चर्यमिति चाब्रुवन् ॥ १७ ॥
परस्परं च ते सर्वे समभाषन्त सैनिकाः ।
किमिदं क्व च तिष्ठामो मायेदं स्वप्नदर्शनं ॥ १८ ॥
नेदं श्रुतमिहास्माभिराश्रमेऽन्यत्र कुत्रचित् ।
यदद्य शृणुमः साधु गीतमाश्चर्यमुत्तमं ॥ १९ ॥

विस्मयं ते परं गत्वा शत्रुघ्नमिदमब्रुवन् ।
साधु पृच्छ नरव्याघ्र वाल्मीकिमृषिसत्तमं ॥ २० ॥
शत्रुघ्नस्त्वब्रवीत् सर्वान् कौतूहलसमन्वितान् ।
सैनिकानक्षमं प्रष्टुमिदमस्माभिरीदृशं ॥ २१ ॥
आश्चर्याणि बहूनीह वाल्मीकेराश्रमे शुभे ।
अस्माभिश्च न तत् सर्वमन्वेष्टव्यं कुतूहलात् ॥ २२ ॥
एवमुक्त्वा ततो वाक्यं सैनिकान् रघुनन्दनः ।
अभिवाद्य महर्षिं च संविवेश निशां तदा ॥ २३ ॥

इत्युत्तरकाण्डे गीतश्रवणं नाम
सप्तसप्ततितमः सर्गः ॥

# उत्तरकाण्डं

## LXXVIII.

तं शयानं नरव्याघ्रं निद्रा नैति स्म राघवं ।
चिन्तयन्तमथैकाग्रं रामगीतमनुत्तमं ॥ १ ॥
श्रुत्वा शब्दं सुमधुरं तन्त्रीलयसमन्वितं ।
तत्र रात्रिर्जगामाशु शत्रुघ्नस्य महात्मनः ॥ २ ॥
तस्यां निशायां व्युष्टायां कृत्वा पौर्वाह्णिकीं क्रियां ।
उवाच प्राञ्जलिर्वाक्यं शत्रुघ्नो मुनिसत्तमं ॥ ३ ॥
भगवन् द्रष्टुमिच्छामि राघवं रघुनन्दनं ।
त्वयानुज्ञातमिच्छामि गमनं वै महानुगः ॥ ४ ॥
इत्येवं वादिनं तत्र शत्रुघ्नं शत्रुसूदनं ।
वाल्मीकिः संपरिष्वज्य विससर्ज महामुनिः ॥ ५ ॥
सोऽभिवाद्य मुनिश्रेष्ठं रथमारुह्य पार्थिवः ।
अयोध्यामगमत् तूर्णं राघवं द्रष्टुमुत्सुकः ॥ ६ ॥
स प्रविश्य पुरीं रम्यां श्रीमानिक्ष्वाकुनन्दनः ।
प्रविवेश महाबाहुर्यत्र रामो महाद्युतिः ॥ ७ ॥
स रामं मन्त्रिमध्यस्थं पूर्णचन्द्रनिभाननं ।
अपश्यद्देवमध्यस्थं सहस्रनयनं यथा ॥ ८ ॥
ततोऽभिवाद्य राजानं शिरसा च प्रणम्य च ।
उवाच प्राञ्जलिर्भूत्वा रामं सत्यपराक्रमं ॥ ९ ॥

यदाज्ञप्तं महाराज सर्वं तत् कृतवानहं ।
हतः स लवणः पापः पुरी सा च निवेशिता ॥ १० ॥
द्वादशं च गतं वर्षं वसतस्तत्र मे प्रभो ।
नोत्सहेयं पुनर्वस्तुं त्वया विरहितो नृप ॥ ११ ॥
मम प्रसादं काकुत्स्थ कुरुष्व वदतां वर ।
मातृहीनो यथा वत्सस्त्वां विना न वसाम्यहं ॥ १२ ॥
एवं ब्रुवाणं काकुत्स्थः परिष्वज्येदमब्रवीत् ।
मा विषादं कृथा वीर नैतत् क्षत्रियचेष्टितं ॥ १३ ॥
न विषीदन्ति राजानो विप्रवासेन राघव ।
राज्यं स्वं परिरक्ष त्वं राजवृत्तमनुस्मरन् ॥ १४ ॥
काले काले तु मां वीर अयोध्यामवलोकितुं ।
समागच्छेर्नरश्रेष्ठ गन्ताहमपि च स्वयं ॥ १५ ॥
ममापि त्वं सुदयितः प्राणेभ्योऽपि विशेषतः ।
अवश्यं करणीयं च राज्यस्य परिपालनं ॥ १६ ॥
तस्माद्वसेह काकुत्स्थ पञ्चरात्रं मया सह ।
ऊर्ध्वं गन्तासि स्वपुरीं सभृत्यबलवाहनः ॥ १७ ॥
रामस्यैवंविधैर्वाक्यैर्धर्मयुक्तैः सुभाषितैः ।
शत्रुघ्नो दीनया वाचा बाढमित्येव सोऽब्रवीत् ॥ १८ ॥
स पञ्चरात्रं काकुत्स्थो रामस्याज्ञाचिकीर्षया ।
उषित्वा परमेष्वासो गमनायोपचक्रमे ॥ १९ ॥

आमन्त्र्य तु महात्मानं रामं सत्यपराक्रमं ।
भरतं लक्ष्मणं चैव मातरश्चैव सर्वशः ॥ २० ॥
प्रणम्य विधिवद्वीरस्ताभिश्चैवाभिनन्दितः ।
आरुरोह रथं श्रीमान् नानारत्नविभूषितं ॥ २१ ॥
स दूरानुगतो वीरो लक्ष्मणेन महात्मना ।
भरतेन च शत्रुघ्नो जगाम मधुरां पुरीं ॥ २२ ॥

इत्युत्तरकाण्डे शत्रुघ्नगमनं नाम
अष्टसप्ततितमः सर्गः ॥

# उत्तरकाण्डं

## LXXIX.

प्रस्थाप्य स तु शत्रुघ्नं भ्रातृभ्यां सह राघवः ।
प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १ ॥
ततः कतिपयाहःसु वृद्धो जानपदो द्विजः ।
बालं शवमुपादाय राजद्वारमुपागमत् ॥ २ ॥
रुदन् बहुविधा वाचः स्नेहाक्षरसमन्विताः ।
असकृत् पुत्र पुत्रेति वाक्यमेतदुवाच ह ॥ ३ ॥
किन्नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतं ।
यदहं पुत्रमेकं त्वां पश्यामि निधनं गतं ॥ ४ ॥
अप्राप्तयौवनं बालं पञ्चवर्षकमेव च ।
अकाले कालमापन्नं मम दुःखाय पुत्रक ॥ ५ ॥
अल्पैरहोभिर्निधनं गमिष्यामि न संशयः ।
अहं च जननी चैव तव शोकेन पुत्रक ॥ ६ ॥
न स्मराम्यनृतं किञ्चिन्न च हिंसां कथञ्चन ।
सर्वेषां प्राणिनां चापि पीडां नैव स्मराम्यहं ॥ ७ ॥
केनायं दुष्कृतेनाद्य बाल एव ममात्मजः ।
अकृत्वा पितृकार्याणि नीतो वैवस्वतक्षयं ॥ ८ ॥
नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनं ।
मृत्युरप्राप्तकालानां रामस्य विषये यथा ॥ ९ ॥

रामस्य दुष्कृतं किञ्चिन्महदस्ति न संशयः ।
तथा हि विषयस्थानां बालानां मृत्युरागतः ॥ १० ॥
राज्ञो वै दुष्कृतेनैवमकाले म्रियते जनः ।
दुर्भिक्षं वा सुभिक्षं वा राज्ञः कर्म विपाकजं ॥ ११ ॥
न राजा जीवयेदेनं बालं मृत्युवशं गतं ।
राजद्वारि मरिष्येऽहं पत्न्या सार्धमनाथवत् ॥ १२ ॥
ब्रह्महत्यां ततो रामः समुपेत्य सुखी भवेत् ।
भ्रातृभिः सहितो राजा दीर्घमायुमवाप्नुयात् ॥ १३ ॥
उषिताः स्म सुखं राज्ये राज्ञो दशरथस्य ह ।
रामस्य विषयस्थानां नास्त्यल्पमपि नः सुखं ॥ १४ ॥
संप्रत्यनाथो विषय इक्ष्वाकूणां महात्मनां ।
रामं नाथमनुप्राप्य बालान्तकरणं नृपं ॥ १५ ॥
राजदोषैर्विपद्यन्ते प्रजाः सम्यगपालिताः ।
असद्वृत्ते हि नृपतावकाले म्रियते जनः ॥ १६ ॥
यदा पुरेष्वयुक्तानि जना जनपदेषु च ।
कुर्वते न च रक्षास्ति तदा मृत्युकृतं भयं ॥ १७ ॥
सुव्यक्तं राजदोषो हि भविष्यति न संशयः ।
पुरे जनपदे वापि तथा बालबधो ह्ययं ॥ १८ ॥
एवं बहुविधैर्वाक्यैर्निन्दन्नथ मुहुर्मुहुः ।
स द्विजो दुःखसंतप्तः सुतं तमुपगूहति ॥ १९ ॥

ब्राह्मण्या ब्राह्मणः सार्धं पुत्रं क्रोडेन धारयन् ।
तत्रैवोपरिशङ्कुमौ राजद्वारि सुदुःखितः ॥ २० ॥

इत्युत्तरकाण्डे ब्राह्मणपरिदेवनं नाम
नवसप्ततितमः सर्गः ॥

## LXXX.

तथातिकरुणं तस्य द्विजस्य परिदेवितं ।
शुश्राव राघवः सर्वं दुःखशोकसमन्वितं ॥ १ ॥
स दुःखेन च संतप्तो मन्त्रिणस्तानुपाह्वयत् ।
पुरोधसमुपाध्यायं ज्ञातींश्च सह नैगमैः ॥ २ ॥
ततो द्विजा वशिष्ठेन सार्धमष्टौ प्रवेशिताः ।
राजानं देवसंकाशं वर्धस्वेति ततोऽब्रुवन् ॥ ३ ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः ।
कात्यायनोऽथ जाबालिर्गौतमो नारदस्तथा ॥ ४ ॥
एते द्विजर्षभाः सर्वे आसनेषूपवेशिताः ।
मन्त्रिणो नैगमाश्चैव यथार्हमनुकूलिताः ॥ ५ ॥
तेषां समुपविष्टानां सर्वेषां दीप्ततेजसां ।
राघवः सर्वमाचष्टे ब्राह्मणस्य प्ररोदनं ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः ।
प्रत्युवाच शुभं वाक्यमृषीणां संनिधौ तदा ॥ ७ ॥
शृणु राम यथाकाले प्राप्तोऽयं बालसंक्षयः ।
श्रुत्वा चैव प्रतीकारं कुरुष्व रघुनन्दन ॥ ८ ॥
पुरा कृतयुगे राम ब्रह्म सर्वमनुत्तमं ।
अब्राह्मणो न वै कश्चिदतपाश्च न विद्यते ॥ ९ ॥
तस्मिन् युगे प्रज्वलिते ब्रह्मभूते ह्यनापदि ।

अमृत्यवो द्विजाः सर्वे जायन्ते विगतामयाः ॥ १० ॥
ततस्त्रेतायुगं नाम मानवानां वपुष्मतां ।
क्षत्रियास्तत्र जायन्ते तीव्रेण तपसान्विताः ॥ ११ ॥
वीर्येण तपसा चैव तेऽधिकाः पूर्वजन्मनः ।
मानवा ये महात्मानस्तस्मिंस्त्रेतायुगेऽभवन् ॥ १२ ॥
ब्रह्मक्षत्रं तु तत् सर्वं यत् पूर्वमपरं च यत् ।
युगयोरुभयोरासीत् समवीर्यसमन्वितं ॥ १३ ॥
अपश्यन्तो हि वीर्येण विशेषमधिकं तथा ।
स्थापनं चक्रिरे सर्वे चातुर्वर्ण्यस्य राघव ॥ १४ ॥
तस्मिन् युगे प्रज्वलिते धर्मभूते ह्यनावृते ।
अधर्मः पादमेकं तु पातयत् पृथिवीतले ॥ १५ ॥
अधर्मेण तु संयुक्तास्तेजोमन्दास्तदा हि ते ।
शुभान्येवाचरन् लोकाः सत्यधर्मपुरस्कृताः ॥ १६ ॥
त्रेतायुगे पुनर्वृत्ते ब्रह्मक्षत्रमनुत्तमं ।
तपस्तेपे महाभाग शुश्रूषां चेतरो जनः ॥ १७ ॥
अधर्मः परमस्तेषां वैश्यशूद्रमथाविशत् ।
यत् पूर्वं सर्ववर्णेषु ब्रह्मक्षत्रमजायत ॥ १८ ॥
एवं निरन्तरे तेषामद्भुतं तदभूत् पुरा ।
ततः प्रभृति संतापमाजहार नरर्षभ ॥ १९ ॥
पादं तस्मादधर्मस्य द्वितीयं समपद्यत ।

अथान्यं द्वापरं नाम ततो युगमजायत ॥ २० ॥
तस्मिन् द्वापरसंज्ञे तु वर्तमाने युगे नृप ।
अधर्मश्चानृतं चैव ववृधे पुरुषर्षभ ॥ २१ ॥
ततो द्वापरमध्येऽस्मिंस्तपो वैश्यानुपाविशत् ।
युगे तृतीये त्रैवर्ण्यं धर्मे संप्रतिवर्तते ॥ २२ ॥
न शूद्रो लभते धर्मं कर्तुमस्मिन् महीपते ।
हीनवर्णो नरश्रेष्ठ तप्यते न हि वै तपः ॥ २३ ॥
भाविनी शूद्रयोन्यां तु तपश्चर्या कलौ युगे ।
अधर्मश्च महाराजंस्तदा संपश्यते महान् ॥ २४ ॥
स वै विषयपर्यन्ते राजन्नुग्रतरं तपः ।
शूद्रस्तप्यति दुर्बुद्धिस्तेन बालबधो नृप ॥ २५ ॥
यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य वै ।
कुरुते राजशार्दूल पुरे वा दुर्मतिर्नरः ॥ २६ ॥
क्षिप्रं स नरकं याति स च राजा न संशयः ।
चतुर्थं ह्येव पापस्य भागमश्नाति पार्थिवः ॥ २७ ॥
स त्वं पुरुषशार्दूल विषयं स्वं परिभ्रम ।
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ॥ २८ ॥
एवं च धर्मवृद्धिश्च बालायुर्वर्धनं तथा ।
भविष्यति नरव्याघ्र बालस्यास्य च जीवितं ॥ २९ ॥
इत्युत्तरकाण्डे नारदवाक्यं नाम अशीतितमः सर्गः ॥

## LXXXI.

नारदस्य तु तद्वाक्यं श्रुत्वामृतमयं यथा ।
प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत् ॥ १ ॥
गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय लक्ष्मण ।
बालस्य च शरीरं तु तैलद्रोण्यां निवेशय ॥ २ ॥
गन्धैश्च परमोदारैस्तैलैश्च सुसुगन्धिभिः ।
यथा न क्षीयते बालस्तथा सौम्य विधीयतां ॥ ३ ॥
यथा शरीरं गुप्तं स्याद्बालस्याक्लिष्टकर्मणः ।
विपत्तिः परिभेदो वा न भवेच्च तथा कुरु ॥ ४ ॥
इति संदिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणं ।
मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ५ ॥
इङ्गितं तस्य विज्ञाय पुष्पको हेमभूषितः ।
आजगाम मुहूर्त्तेन समीपं राघवस्य ह ॥ ६ ॥
सोऽब्रवीत् प्रणतो भूत्वा अयमस्मि नराधिप ।
ध्यातस्त्वया महाबाहो ततोऽहं समुपागतः ॥ ७ ॥
भाषितं रुचिरं श्रुत्वा पुष्पकस्य नराधिपः ।
अभिवाद्य महर्षींस्तान् विमानं सोऽध्यरोहत ॥ ८ ॥
धनुर्गृहीत्वा तूणी च खड्गं च रुचिरप्रभं ।
निक्षिप्य नगरे वीरौ सौमित्रिभरतावुभौ ॥ ९ ॥
यातः प्रतीचीं स दिशं विचेतुं रघुनन्दनः ।

नापश्यत् तत्र धर्मात्मा स्वल्पमप्यथ दुष्कृतं ॥१०॥
उत्तरामगमच्चापि दिशं हिमवतावृतां ।
नापश्यत् सोऽथ तत्रापि स्वल्पमपि च दुष्कृतं ॥११॥
पूर्वां स परिचक्राम दिशं शत्रुनिवर्हणः ।
पूर्वामपि दिशं कृत्स्नां स त्वपश्यत् ततो नृपः ॥१२॥
सर्वां शुद्धसमाचारामादर्शतलनिर्मलां ।
दक्षिणां दिशमाक्रामत् ततो राघवनन्दनः ॥१३॥
शैवालस्योत्तरे पार्श्वे ददर्श सुमहत् सरः ।
तस्मिन् सरसि तप्यन्तं तापसं सुमहत् तपः ॥१४॥
ददर्श राघवो भीमं लम्बमानमधोमुखं ।
अथैनं समुपागम्य तप्यन्तं तप उत्तमं ॥१५॥
उवाच नृवरो वाक्यं धन्यस्त्वमसि तापस ।
कस्यां योनौ तपोवृद्ध वर्तसे दृढनिश्चय ॥१६॥
अहं दाशरथी रामः पृच्छामि त्वां कुतूहलात् ।
कस्तवार्थो व्यवसितो देवलोके वराश्रयः ॥१७॥
तपस्तप्यसि यस्यार्थे श्रोतुमिच्छामि तत्त्वतः ।
किं ब्राह्मणोऽसि भद्रं ते क्षत्रियो वासि दुर्जयः ॥१८॥
वैश्यो वाप्यथ शूद्रस्त्वं सत्यं कथय सुव्रत ।
कुलं ज्ञातिं कथयतः सम्यग् भवति ते फलं ॥१९॥
इत्युत्तरकाण्डे शूद्रदर्शनं नाम एकाशीतितमः सर्गः ॥

# उत्तरकाण्डं

## LXXXII.

तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः ।
अवाक्शिरास्तथा भूतः स वाक्यमिदमब्रवीत् ॥ १ ॥
शूद्रयोन्यां प्रसूतोऽहं तप उग्रं समास्थितः ।
देवत्वं प्रार्थये राम सशरीरो महायशः ॥ २ ॥
न मिथ्याहं वदे राम देवलोकजिगीषया ।
शूद्रं मां विद्धि काकुत्स्थ शम्बकं नाम नामतः ॥ ३ ॥
भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभं ।
निष्कृष्य कोषाद्विमलं शिरश्चिच्छेद राघवः ॥ ४ ॥
तस्मिन् शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः ।
साधु साध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥ ५ ॥
पुष्पवृष्टिश्च महती दिव्यानां सुसुगन्धिनां ।
पुष्पाणां वारियुक्तानां सर्वतः प्रपपात ह ॥ ६ ॥
सुप्रीताश्चाब्रुवन् देवा रामं सत्यपराक्रमं ।
सुरकार्यमिदं देव सुकृतं ते महामते ॥ ७ ॥
वृणीष्व च वरं सौम्य यं त्वमिच्छसि राघव ।
त्वत्कृते न हि शूद्रोऽयं सशरीरेण नाकभाक् ॥ ८ ॥
देवानां भाषितं श्रुत्वा राघवः सुसमाहितः ।
उवाच प्राञ्जलिर्भूत्वा सहस्राक्षं पुरन्दरं ॥ ९ ॥
यदि देवाः प्रसन्ना मे द्विजपुत्राय जीवितं ।

दीयतां वरमेतद्धि कांक्षितं सुरसत्तमाः ॥ १० ॥
ममापराधाद्बालोऽसौ ब्राह्मणस्यैकपुत्रकः ।
अप्राप्तकालः कालेन नीतो वैवस्वतक्षयं ॥ ११ ॥
तं जीवयथ भद्रं वो नानृतं कर्तुमर्हथ ।
द्विजस्य संश्रुतो योऽर्थो जीवयिष्यामि ते सुतं ॥ १२ ॥
राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः ।
प्रत्यूचुस्तं महात्मानं प्रीताः प्रीतिसमाधिना ॥ १३ ॥
निवृत्तो भव काकुत्स्थ ब्राह्मणस्यैकपुत्रकः ।
जीवितं प्राप्तवान् भूयः संगतश्चापि बन्धुभिः ॥ १४ ॥
यस्मिन् मुहूर्त्ते काकुत्स्थ शूद्रोऽयं विनिपातितः ।
तस्मिन्नेव स जीवेन बालकः समयुज्यत ॥ १५ ॥
स्वस्ति प्राप्नुहि भद्रं ते साधु याम परन्तप ।
अगस्त्यस्याश्रमपदं द्रष्टुकामा नरेश्वर ॥ १६ ॥
तस्य दीक्षासमाप्तिर्हि महर्षेः सुमहात्मनः ।
द्वादशं तु गतं वर्षं जलशय्यां समासतः ॥ १७ ॥
काकुत्स्थ तद्गमिष्यामो ह्यगस्त्यमभिनन्दितुं ।
त्वं चापि गच्छ भद्रं ते वर्धयस्व महामुनिं ॥ १८ ॥
स तथेति प्रतिज्ञाय देवानां रघुनन्दनः ।
आरुरोह विमानं तु पुष्पकं हेमभूषितं ॥ १९ ॥
इत्युत्तरकाण्डे शम्बूकबधो नाम द्व्यशीतितमः सर्गः ॥

# उत्तरकाण्डं

## LXXXIII.

ततो देवाः प्रयातास्तैर्विमानैर्बहुविस्तरैः ।
रामोऽप्यनुजगामाशु कुम्भयोनेस्तपोवनं ॥ १ ॥
दृष्ट्वा देवांस्तु संप्राप्तान् अगस्त्यः सुसमाहितः ।
पूजयामास धर्मात्मा सर्वांस्तानविशेषतः ॥ २ ॥
प्रतिगृह्य ततः पूजां संभाष्य च महामुनिं ।
जग्मुस्ते त्रिदशा हृष्टा नाकपृष्ठं सहानुगाः ॥ ३ ॥
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च ।
प्रह्वोऽभिवादनं चक्रे सोऽगस्त्याय महात्मने ॥ ४ ॥
अभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ।
आतिथ्यं परमं प्राप्य विषसाद नराधिपः ॥ ५ ॥
तमुवाच महातेजाः कुम्भयोनिर्नरेश्वरं ।
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ॥ ६ ॥
त्वं मे बहुमतो राम गुणैर्बहुभिरुत्तमैः ।
अतिथिः पूजनीयश्च मम नित्यं हृदि स्थितः ॥ ७ ॥
सुरा हि कथयन्ति त्वामागतं शूद्रघातिनं ।
ब्राह्मणार्थे पराक्रान्तं स च बालोऽपि जीवितः ॥ ८ ॥
उष्यतां चेह रजनीमावासे मम राघव ।
प्रभाते पुष्पकेण त्वं गन्तासि पुनरेव हि ॥ ९ ॥

इदं चाभरणं सौम्य सुकृतं विश्वकर्मणा ।
दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ॥ १० ॥
प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव ।
दत्तस्य हि पुनर्दानं सुमहत् फलमुच्यते ॥ ११ ॥
तारणे हि भवान् शक्तः सेन्द्राणां मरुतामपि ।
तस्मात् प्रदास्ये विधिवत् प्रतीच्छ त्वं नरर्षभ ॥ १२ ॥
अथोवाच महातेजा इक्ष्वाकूणां महारथः ।
रामो मतिमतां श्रेष्ठः क्षत्रधर्ममनुस्मरन् ॥ १३ ॥
भगवन् प्रतिग्रहो नित्यं ब्राह्मणस्यापि गर्हितः ।
क्षत्रियेण कथं विप्र प्रतिग्राह्यं भवेत् ततः ॥ १४ ॥
प्रतिग्रहो हि विप्रेन्द्र क्षत्रियाणां सुगर्हितः ।
ब्राह्मणेन विशेषेण दत्तं तद्वक्तुमर्हसि ॥ १५ ॥
एवमुक्तस्तु रामेण प्रत्युवाच महानृषिः ।
आसन् कृतयुगे राम ब्रह्मभूते पुरा युगे ॥ १६ ॥
अपार्थिवाः प्रजाः सर्वाः सुराणां तु शतक्रतुः ।
ताः प्रजाश्चैव राजार्थं ब्रह्माणमुपतस्थिरे ॥ १७ ॥
सुराणां स्थापितो राजा त्वया देव शतक्रतुः ।
प्रयच्छास्मासु लोकेश पार्थिवं सुरपुङ्गव ॥ १८ ॥
यस्मै पूजां प्रयुञ्जाना धूतपापाश्चरेमहि ।
न वसेम विना राज्ञा एष नो निश्चयः परः ॥ १९ ॥

ततो ब्रह्मा सुरश्रेष्ठो लोकपालान् सवासवान् ।
समाहूयाब्रवीत् सर्वांस्तेजोभागान् प्रयच्छत ॥ २० ॥
ततो ददुर्लोकपालाः सर्वे भागान् स्वतेजसः ।
अक्षुपश्च ततो ब्रह्मा यतो जातः क्षुपो नृपः ॥ २१ ॥
तं ब्रह्मा लोकपालानां समांशैः समयोजयत् ।
ततो ददौ नृपं तासां प्रजानामीश्वरं क्षुपं ॥ २२ ॥
तत्रैन्द्रेण तु भागेन महीमाज्ञापयन्नृपः ।
वारुणेन तु भागेन वपुः पुष्यति पार्थिवः ॥ २३ ॥
कौवेरेण च भागेन वित्तमासां ददौ तदा ।
यस्तु याम्योऽभवद्भागस्तेन शास्ति स्म स प्रजाः ॥ २४ ॥
तत्रैन्द्रेण नरश्रेष्ठ भागेन रघुनन्दन ।
प्रतिगृह्णीष्व नृपते तारणार्थं मम प्रभो ॥ २५ ॥
तद्रामः प्रतिजग्राह मुनेस्तस्य महात्मनः ।
दिव्यमाभरणं चित्रं दीप्यमानमिवांशुभिः ॥ २६ ॥
प्रतिगृह्य ततोऽगस्त्याद्रामस्तमृषिसत्तमं ।
आगमं तस्य द्रव्यस्य प्रष्टुं समुपचक्रमे ॥ २७ ॥
अत्यद्भुतमिदं ब्रह्मन् वपुर्बिभ्रदनुत्तमं ।
कथं भगवता प्राप्तं कुतो वा केन वा हृतं ॥ २८ ॥
कौतूहलतया ब्रह्मन् पृच्छामि त्वां महामुने ।
आश्चर्याणां बहूनां वै निधिर्हि परमो भवान् ॥ २९ ॥

एवं ब्रुवति काकुत्स्थे मुनिर्वाक्यमुदाह्‌रत् ।
शृणु राम यथा वृत्तं पुरा त्रेतायुगे युगे ॥३०॥

इत्युत्तरकाण्डे अगस्त्याभरणालम्भो नाम
त्र्यशीतितमः सर्गः ॥

## उत्तरकाण्डं

### LXXXIV.

पुरा त्रेतायुगेऽरण्यं बभूव बहुविस्तरं ।
समन्ताद्योजनशतं मृगपक्षिविवर्जितं ॥ १ ॥
तस्मिन् निर्मानुषेऽरण्ये कुर्वाणस्तप उत्तमं ।
अहमाक्रमितुं सौम्य तदरण्यमुपागमं ॥ २ ॥
तस्य रूपमरण्यस्य निर्देष्टुं नाशकं तदा ।
फलमूलैः सुखास्वादैर्बहुरूपैश्च काननैः ॥ ३ ॥
तस्यारण्यस्य मध्ये तु सरो योजनमायतं ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितं ॥ ४ ॥
तदाश्चर्यमिवात्यर्थं निःसत्त्वं वनमुत्तमं ।
सरश्चाक्षोभ्यसलिलं नैकपक्षिगणावृतं ॥ ५ ॥
समीपे तस्य सरसो ददृशेऽहमथाश्रमं ।
पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितं ॥ ६ ॥
तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ।
प्रभाते कल्यमुत्थाय सरस्तीरमुपागमं ॥ ७ ॥
अथापश्यं शवं तत्र सुपुष्टमरजः क्वचित् ।
विष्ठितं परया लक्ष्म्या समीपे सरसस्तदा ॥ ८ ॥
तदर्थं चिन्तयानोऽहं मुहूर्तं तत्र राघव ।
विष्ठितोऽस्मि सरस्तीरे किं विदं स्यादिति प्रभो ॥ ९ ॥

अथापश्यं मुहूर्त्तेन दिव्यमद्भुतदर्शनं ।
विमानं परमोदारं हंसयुक्तं मनोजवं ॥ १० ॥
अत्यर्थं स्वर्गिणं तत्र विमाने रघुनन्दन ।
उपास्तेऽप्सरसां वीर सहस्रं दिव्यभूषणं ॥ ११ ॥
गायन्ति दिव्यगेयानि वादयन्ति स्म चापराः ।
मृदङ्गवीणापणवा नृत्यन्ति च तथापराः ॥ १२ ॥
पश्यतो मे तदा राम विमानादवरुह्य च ।
तं शवं भक्षयामास स स्वर्गी रघुनन्दन ॥ १३ ॥
ततो भुङ्क्त्वा यथाकामं मांसं बहु सुपीवरं ।
अवतीर्य सरः स्वर्गी उपस्प्रष्टुं प्रचक्रमे ॥ १४ ॥
उपस्पृश्य यथान्यायं स स्वर्गी रघुनन्दन ।
आरोढुमुपचक्राम विमानवरमुत्तमं ॥ १५ ॥
तमहं देवसंकाशमारोहन्तमुदीक्ष्य वै ।
कथय श्रोतुमिच्छामीत्यवोचं पुरुषर्षभं ॥ १६ ॥
को भवान् देवसंकाश आहारश्च विगर्हितः ।
त्वयायं भक्ष्यते सौम्य किमर्थं क्व च वर्तसे ॥ १७ ॥
कस्यायमीदृशो भावो भास्वरो देवनिर्मितः ।
आहारो गर्हितश्चापि श्रोतुमिच्छामि तत्त्वतः ॥ १८ ॥

इत्येवमुक्तः स नरेन्द्र नाकी
कौतूहलात् प्रश्रितया गिरा च ।

उत्तरकाण्डं

श्रुत्वा तु वाक्यं मम सर्वमेतत्
सर्वं तदा कथितवान् ममेति ॥ ११ ॥

इत्युत्तरकाण्डे अगस्त्यवाक्यं नाम
चतुरशीतितमः सर्गः ॥

# उत्तरकाण्डं

## LXXXV.

श्रुत्वा तु भाषितं वाक्यं मम राम शुभाक्षरं ।
प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी विस्तरेण हि ॥ १ ॥
शृणु ब्रह्मन् यथावृत्तं ममेदं सुखदुःखजं ।
दुरतिक्रममेतन्मे यत् पृच्छसि महामुने ॥ २ ॥
पुरा वैदर्भको राजा पिता मम महायशाः ।
सुदेव इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ३ ॥
तस्य पुत्रद्वयं ब्रह्मन् द्वाभ्यां स्त्रीभ्यामजायत ।
अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत् ॥ ४ ॥
दिवं यातेऽथ पितरि पौरा मामभ्यषेचयन् ।
तत्राहं कृतवान् राज्यं धर्मेण सुसमाहितः ॥ ५ ॥
एवं वर्षसहस्राणि बहूनि समतीयिरे ।
राज्यं कारयतो ब्रह्मन् सम्यक् पालयतः प्रजाः ॥ ६ ॥
सोऽहं निमित्ते कस्मिंश्चित् ज्ञात्वा चायुर्द्विजोत्तम ।
मृत्युं कृत्वा च मनसि तपोवनमुपागतः ॥ ७ ॥
सोऽहं वनमिदं दुर्गं मृगपक्षिविवर्जितं ।
प्रविष्टस्तप आस्थातुं सरसोऽस्य समीपतः ॥ ८ ॥
भ्रातरं सुरथं राज्ये स्थापयित्वा नराधिपं ।
इदं सरः समाश्रित्य तपस्तेपे सुदारुणं ॥ ९ ॥

# उत्तरकाण्डं

सोऽहं वर्षसहस्राणि त्रीणि तप्त्वा महावने ।
शुभं त्रिपिष्टपं प्राप्तो ब्रह्मलोकमनुत्तमं ॥ १० ॥
तस्य मे स्वर्गसंस्थस्य क्षुत्पिपासे द्विजोत्तम ।
अबाधितां भृशमहमभवं व्यथितेन्द्रियः ॥ ११ ॥
ततस्त्रिभुवनश्रेष्ठमवोचं वै पितामहं ।
भगवन् स्वर्गलोकोऽयं क्षुत्पिपासाविवर्जितः ॥ १२ ॥
कस्येयं कर्मणः प्राप्तिः क्षुत्पिपासे यदाप्तवान् ।
आहारः कश्च मे देव ब्रूहि तत् प्रपितामह ॥ १३ ॥
पितामहः समावोचदाहारस्तव कल्पितः ।
स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ॥ १४ ॥
स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमं ।
नादत्तं भवति श्वेत नापि दत्तं विनङ्क्ष्यति ॥ १५ ॥
न हि दत्तं त्वयेन्द्राभ कस्यचित् तप्यता तपः ।
तेन स्वर्गगतस्यापि क्षुत्पिपासे तवानुगे ॥ १६ ॥
न च दत्तं वने शून्ये निर्जने पक्षिवर्जिते ।
अतिथिर्न च वै तत्र कश्चित् संपूजितस्त्वया ॥ १७ ॥
सर्वकामफलैर्नित्यं पूज्यन्ते सर्वसाधवः ।
नोपयुक्तानि सततं फलान्यतिथिभिः सह ॥ १८ ॥
पाद्येनार्घ्येण भोज्येन स्वागतेनासनेन च ।
वने नैव द्विजातीनां सत्क्रिया क्रियते त्वया ॥ १९ ॥

बुभुक्षितं परिश्रान्तमतिथिं गृहमागतं ।
योऽभ्यर्चयति विप्रेशं तस्य यज्ञफलं भवेत् ॥ २० ॥
स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमं ।
भक्षयस्वामृतरसं तेन तृप्तिर्भविष्यति ॥ २१ ॥
यदा तु तद्वनं श्वेत अगस्त्यः सुमहानृषिः ।
आगमिष्यति दुर्धर्षः स ते कृच्छ्राद्विमोक्ष्यते ॥ २२ ॥
स हि तारयितुं शक्तः सेन्द्रानपि सुरासुरान् ।
किं पुनस्त्वां महाबाहो क्षुत्पिपासावशं गतं ॥ २३ ॥
सोऽहं भगवतः श्रुत्वा देवदेवस्य भाषितं ।
भुञ्जे बीभत्समाहारं स्वशरीरं द्विजोत्तम ॥ २४ ॥
बहून् वर्षगणान् ब्रह्मन् भुज्यमानमिदं मया ।
क्षयं न चैतदायाति तृप्तिश्चाभून्ममोत्तमा ॥ २५ ॥
तन्मुने कृच्छ्रमापन्नं कृच्छ्रादस्माद्विमोचय ।
अन्यस्य हि गतिर्नास्ति त्वामृते द्विजपुङ्गव ॥ २६ ॥
इदमाभरणं दिव्यं तारणार्थं मयोद्यतं ।
प्रतिगृह्णीष्व विप्रर्षे प्रसादं कर्तुमर्हसि ॥ २७ ॥
इदं तावत् सुवर्णं च धनं वस्त्राणि च द्विज ।
भक्ष्यं भोज्यं च ब्रह्मर्षे ददाम्याभरणानि च ॥ २८ ॥
सर्वान् कामान् प्रयच्छामि भोगांश्च मुनिपुङ्गव ।
तारणे भगवन् मह्यं प्रसादं कर्तुमर्हसि ॥ २९ ॥

अहं तु स्वर्गिणो वाक्यं श्रुत्वा भक्तिसमन्वितं ।
तारणार्थाय जग्राह तदाभरणमुत्तमं ॥ ३० ॥
प्रतिगृहीते तु मया तस्मिन्नाभरणे शुभे ।
मानुषः पूर्वको देहो राजर्षेः स व्यनश्यत ॥ ३१ ॥
प्रणष्टे तु शरीरे स राजर्षिः परया मुदा ।
हृष्टः प्रमुदितो राम जगाम त्रिदिवं पुनः ॥ ३२ ॥
तेनेदं शक्रतुल्येन दिव्यमाभरणं मम ।
तस्मिन् निमित्ते काकुत्स्थ दत्तमद्भुतदर्शनं ॥ ३३ ॥

इत्युत्तरकाण्डे श्वेतोपाख्यानं नाम
पञ्चाशीतितमः सर्गः ॥

## LXXXVI.

तदद्भुतमिदं वाक्यं श्रुत्वागस्त्यस्य राघवः ।
गौरवाद्विस्मयाच्चैव भूयः प्रष्टुं प्रचक्रमे ॥ १ ॥
भगवंस्तद्वनं घोरं यत्रासौ तप्तवांस्तपः ।
श्वेतो वैदर्भको राजा तदभूदाश्रमं कथं ॥ २ ॥
निःसत्त्वं च कथं राजा शून्यं मनुजवर्जितं ।
प्रविष्टस्तप आस्थातुं श्रोतुमिच्छामि तन्मुने ॥ ३ ॥
रामस्य भाषितं श्रुत्वा कौतूहलसमन्वितं ।
मुनिः परमतेजस्वी वक्तुं समुपचक्रमे ॥ ४ ॥
पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः ।
तस्य पुत्रो महानासीदिक्ष्वाकुरमितप्रभः ॥ ५ ॥
तं पुत्रं पूर्वकं राज्ये स्थापयित्वा सुसंमतं ।
पृथिव्यां राजवंशानां भव कर्तेत्युवाच ह ॥ ६ ॥
तथेति च प्रतिज्ञाते मनुपुत्रेण राघव ।
ततः परमसंहृष्टो मनुः पुनरथाब्रवीत् ॥ ७ ॥
प्रीतोऽस्मि परमोदार कर्ता चासि न संशयः ।
दण्डेन हि प्रजा रक्ष्याः स च पात्यः कृतागसि ॥ ८ ॥
अपराधिषु यो दण्डः पात्यते मानवेषु वै ।
स दण्डो विधिना मुक्तः स्वर्गं नयति पार्थिवं ॥ ९ ॥

तस्माद्दण्डे महाबाहो यत्नवान् भव पुत्रक ।
धर्मो हि परमो लोके कुर्वतस्ते भविष्यति ॥ १० ॥
इति संदिश्य बहुधा मनुः पुत्रं समाधिना ।
जगाम त्रिदिवं हृष्टो ब्रह्मलोकं सनातनं ॥ ११ ॥
तस्मिन् प्रयाते त्रिदिवमिक्ष्वाकुरमितप्रभः ।
जनयिष्ये कथं पुत्रानिति चिन्तामगात् प्रभुः ॥ १२ ॥
कर्मभिर्बहुरूपैस्तु तैस्तैर्मनुसुतस्तदा ।
जनयामास धर्मात्मा सुतान् देवसुतोपमान् ॥ १३ ॥
सर्वेषामभवत् तेषां कनीयान् रघुनन्दन ।
मूढश्चाकृतविद्यश्चाशुश्रूषुश्चैव पूर्वजान् ॥ १४ ॥
चक्रे नाम पिता तस्य कुबुद्धेर्दण्ड इत्युत ।
अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति ॥ १५ ॥
पश्यन् व्यथ स तं दण्डं घोरं पुत्रं तु राघव ।
विन्ध्यशैवलयोर्मध्ये राज्यमस्मै ददौ पिता ॥ १६ ॥
स दण्डस्तत्र राजाभूद्रम्ये पर्वतरोधसि ।
पुरं चाप्रतिमं राम न्यवेशयदनुत्तमं ॥ १७ ॥
नाम तस्य च चक्रे स मधुमन्त इति स्वयं ।
वव्रे चोशनसं विप्रं पुरोधसमनुत्तमं ॥ १८ ॥
एवं स राजा तद्राज्यं चकार सुसमाहितः ।
प्रहृष्टमनुजाकीर्णं देवराजो यथा दिवि ॥ १९ ॥

ततः स राजा मनुजेन्द्रपुत्रः
    सार्धं हि तेनोशनसा तदानीं ।
चकार राज्यं सुमहन्महात्मा
    शक्रो दिवीवाङ्गिरसा समेतः ॥२०॥

इत्युत्तरकाण्डे मधुमत्पुरनिवेशो नाम
षडशीतितमः सर्गः ॥

# उत्तरकाण्डं

## LXXXVII.

एतदाख्याय रामस्य महर्षिः कुम्भसंभवः ।
पुनरेवापरं वाक्यं व्याहर्तुमुपचक्रमे ॥ १ ॥
ततः स दण्डः काकुत्स्थ बहुवर्षगणायुतं ।
अकरोत् तत्र मन्दात्मा राज्यं निहतकण्टकं ॥ २ ॥
कस्यचित् त्वथ कालस्य भार्गवस्याश्रमं शुभं ।
रमणीयमुपाक्रामन्मासे चैत्रे मनोरमे ॥ ३ ॥
तत्र भार्गवकन्यां स रूपेणाप्रतिमां भुवि ।
विचरन्तीं वनोद्देशे दण्डोऽपश्यन्नराधिपः ॥ ४ ॥
स दृष्ट्वा तां तु दुर्मेधाः कन्दर्पशरपीडितः ।
अभिगम्य सुसंविग्नः कन्यां वचनमब्रवीत् ॥ ५ ॥
कुतस्त्वमसि सुश्रोणि कस्य चासि शुभानने ।
पीडितोऽहमनङ्गेन पृच्छामि त्वां सुशोभने ॥ ६ ॥
तस्यैवं प्रब्रुवाणस्य मोहाविष्टस्य कामिनः ।
भार्गवी प्रत्युवाचेदं वचः सानुनयं प्रियं ॥ ७ ॥
भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः ।
अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनीं ॥ ८ ॥
गुरुः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः ।
व्यसनं सुमहत् क्रुद्धो न ते दद्यान्महायशाः ॥ ९ ॥

यदि वा ते मया कार्यं संपदा धर्मयुक्तया ।
वरयस्व नरश्रेष्ठ पितरं मे महामतिं ॥१०॥
अन्यथा विपुलं दुःखं भवेद् घोराभिसंहितं ।
पिता मम हि स क्रोधात् त्रैलोक्यमपि निर्दहेत् ॥११॥
एवं स राजा तां कन्यां ब्रुवतीं भार्गवीं तदा ।
प्रत्युवाच मदोन्मत्तः शिरस्याधाय चाञ्जलिं ॥१२॥
प्रसादं कुरु सुश्रोणि न कालं क्षेप्तुमर्हसि ।
त्वत्कृते हि मम प्राणा विदीर्यन्ते शुभानने ॥१३॥
त्वां प्राप्य तु बधो मेऽस्तु बधाद्वा यत् परं भवेत् ।
भक्तं भजस्व मां भीरु त्वयि भक्तिर्हि मे परा ॥१४॥
एवमुक्त्वा तु तां कन्यां दोर्भ्यां गृह्य बलाद्बली ।
विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥१५॥
तमनर्थं महाघोरं दण्डः कृत्वा सुदारुणं ।
आगमत् स्वपुरं राम मधुमन्तमनुत्तमं ॥१६॥
भार्गवी रुदती दीना स्वाश्रमस्य समीपतः ।
प्रतीक्षते तु संत्रस्ता पितरं देवसंनिभं ॥१७॥

इति कर्म सुदारुणं स कृत्वा
दण्डो दण्डमवाप्तवानुग्रं ।
शृणु सर्वमशेषतस्तदद्य
कथयिष्ये तव राजसिंहवृत्त ॥१८॥

# उत्तरकाण्डं

## LXXXVIII.

ततो राम मुहूर्त्तात् स देवर्षिरमितप्रभः ।
स्वमाश्रमं शिष्यवृतः क्षुधार्त्तः संन्यवर्तत ॥ १ ॥
सोऽपश्यदरजां दीनां रजसा समभिप्लुतां ।
प्रत्युषस्यरुणग्रस्तां ज्योत्स्नामिव हृतप्रभां ॥ २ ॥
तस्य रोषः समभवत् क्षुधार्त्तस्य विशेषतः ।
दिव्येन चक्षुषा वीक्ष्य ततः शिष्यानुवाच ह ॥ ३ ॥
पश्यध्वं विपरीतस्य दण्डस्याविदितात्मनः ।
विपत्तिं घोरसंकाशां कालेनोपहृतात्मनः ॥ ४ ॥
क्षयोऽस्य दुर्मतेः प्राप्तः सानुगस्य दुरात्मनः ।
यः प्रदीप्तामिवाग्नेयीं शिखां संस्पृष्टवानिमां ॥ ५ ॥
यस्मात् स कृतवान् पापमीदृशं घोरदर्शनं ।
तस्मात् प्राप्स्यति दुर्मेधाः पांशुवर्षमनुत्तमं ॥ ६ ॥
सप्तरात्रेण राजासौ सभृत्यबलवाहनः ।
पापकर्मसमाचारो बधं प्राप्स्यति दुर्मतिः ॥ ७ ॥
समन्ताद्योजनशतं विषयं चास्य दुर्मतेः ।
धक्ष्यते पांशुवर्षेण महता पाकशासनः ॥ ८ ॥
सर्वसत्वानि यानीह स्थावराणि चराणि च ।
सर्वेषां पांशुवर्षेण क्षयः क्षिप्रं भविष्यति ॥ ९ ॥

दण्डस्य विषयो यावत् तावत् सर्वं समुच्छ्रयं ।
पांशुवर्षमिवाकल्प्यं सप्तरात्रं भविष्यति ॥ १० ॥
इत्युक्त्वा क्रोधसंतप्तस्तदाश्रमनिवासिनं ।
जनं जनपदस्यान्ते स्थीयतामिति चाब्रवीत् ॥ ११ ॥
उक्तमात्रे तूशनसा स तत्रावसथो जनः ।
निष्क्रान्तो विषयात् तस्मात् स्थानं चक्रे च वाह्यतः ॥ १२ ॥
तं तथोक्त्वा मुनिजनं सोऽरजामिदमब्रवीत् ।
आश्रमे त्वं स्वधर्मेण वत्सेह सुसमाहिता ॥ १३ ॥
इदं योजनपर्यन्तं सरः सुरुचिरप्रभं ।
अरजे विरजा भुंक्ष्व कालश्चात्र प्रतीक्ष्यतां ॥ १४ ॥
सत्वानि योजनं यावदिह यानि वसन्ति वै ।
अबध्यानि भविष्यन्ति पांशुवर्षस्य तानि वै ॥ १५ ॥
श्रुत्वा नियोगं तमृषेः सा कन्या भार्गवी शुभा ।
तथेति पितरं प्राह भार्गवं भृशदुःखिता ॥ १६ ॥
इत्युक्त्वा भार्गवो वासात् तस्मादन्यमपाक्रमत् ।
सप्ताहाद्भस्मसाद्भूतं तच्च सर्वं नराधिप ॥ १७ ॥
तस्य दण्डस्य विषयो मध्ये शैवलविन्ध्ययोः ।
शप्तो ह्युशनसा राजन्नपराधाद्दुरात्मनः ॥ १८ ॥
तदाप्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ।
स तपस्विजनो यत्र तज्जनस्थानमुच्यते ॥ १९ ॥

एतत् ते सर्वमाख्यातं यन्मां पृच्छसि राघव ।
संध्यामुपासितुं राम समयोऽयमुपस्थितः ॥ २० ॥
एते महर्षयः सर्वे पूर्णकुम्भाः समन्ततः ।
कृतोदका नरव्याघ्र पूजयन्ति तमोनुदं ॥ २१ ॥

अभिष्टुतः सुरवरः सिद्धसंघैर्
गतो रविः सुरुचिरमस्तशैलं ।
त्वमप्यतो रघुवर गच्छ संध्याम्
उपासितुं प्रयतमना नरेन्द्र ॥ २२ ॥

इत्युत्तरकाण्डे अरजाभिगमो नाम सप्ताशीतितमः
सर्गः = दण्डोपाख्यानं नाम
अष्टाशीतितमः सर्गः ॥

# उत्तरकाण्डं

## LXXXIX.

ऋषेर्वचनमाज्ञाय रामः संध्यामुपासितुं ।
उपाक्रामत् सरः पुण्यमप्सरोगणसेवितं ॥ १ ॥
तत्रोदकमुपस्पृश्य संध्यामन्वास्य पश्चिमां ।
आश्रमं प्राविशद्रम्यं कुम्भयोनेर्महात्मनः ॥ २ ॥
तस्यागस्त्यो बहुविधं फलमूलं रसायनं ।
शाल्यादीनि पवित्राणि भोजनार्थमुपाहरत् ॥ ३ ॥
स भुक्तवान् रघुश्रेष्ठस्तदन्नममृतोपमं ।
प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत् ॥ ४ ॥
प्रभाते काल्यमुत्थाय कृत्वा पौर्वाह्णिकां क्रियां ।
अनुज्ञापयितुं रामो महर्षिमुपचक्रमे ॥ ५ ॥
अब्रवीच्चाभिगम्याथ तमृषिं संशितव्रतं ।
आपृच्छे साधु यास्यामि मामनुज्ञातुमर्हसि ॥ ६ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि दर्शनेन महात्मनः ।
द्रष्टुं च पुनरेष्यामि पावनार्थमिहात्मनः ॥ ७ ॥
तथा ब्रुवति काकुत्स्थे वाक्यमद्भुतदर्शनं ।
उवाच परमप्रीतो बाष्पकण्ठो महामुनिः ॥ ८ ॥
अत्यद्भुतमिदं वाक्यं तव राम शुभाक्षरं ।
पावनः सर्वभूतानां त्वमेव रघुनन्दन ॥ ९ ॥

मुहूर्त्तं येऽपि राम त्वां मैत्रं पश्यन्ति मानवाः ।
पाविताः सर्वभूतैस्ते कथ्यन्ते त्रिदिवेश्वरैः ॥ १० ॥
ये च त्वां चक्षुर्भिर्घोरैर्निरीक्षन्तीह मानवाः ।
हतास्ते यमदण्डेन सद्यो निरयगामिनः ॥ ११ ॥
ईशस्त्वं सर्वभूतानां पावनाय नरर्षभ ।
कथयन्तोऽपि लोके त्वां सिद्धिमेष्यन्ति मानवाः ॥ १२ ॥
गच्छ चाविघ्नमव्यग्रः पन्थानमकुतोभयं ।
प्रशाधि राज्यं धर्मेण गतिर्हि जगतो भवान् ॥ १३ ॥
एवमुक्तस्तु मुनिना प्राञ्जलिप्रग्रहो नृपः ।
अभिवादयितुं रामः सोऽगस्त्यमुपचक्रमे ॥ १४ ॥
अभिवाद्य मुनिश्रेष्ठं तांश्च सर्वांस्तपोधनान् ।
अध्यारोहन्महाबाहुः पुष्पकं हेमभूषितं ॥ १५ ॥
तं प्रयान्तं मुनिगणा आशीर्वादैः समन्ततः ।
अपूजयन् महाबाहुं सहस्राक्षमिवामराः ॥ १६ ॥
खस्थः प्रदृश्यते रामः पुष्पके हेमभूषिते ।
चन्द्रो मेघसमूहस्थो यथा जलधरागमे ॥ १७ ॥
ततोऽर्धदिवसे प्राप्ते हृष्टपुष्टजनैर्वृतां ।
अयोध्यां प्राप्य काकुत्स्थो मध्यकक्षां समाविशत् ॥ १८ ॥

ततस्तु तद्ब्रह्मविनिर्मितं शुभं
विमानवरं बहुरत्नमण्डितं ।

उत्तरकाण्डं

विसृज्य वीरो रघुवंशवर्धनो
विचिन्तयन्यज्ञविधिं महामनाः ॥ २१ ॥

इत्युत्तरकाण्डे रामप्रत्यागमनं नाम
नवाशीतितमः सर्गः ॥

# उत्तरकाण्डं

## XC.

ततो विसृज्य रुचिरं पुष्पकं कामगमि तत् ।
कक्षान्तरस्थितं क्षिप्रं द्वास्थं रामोऽब्रवीद्वचः ॥ १ ॥
लक्ष्मणं भरतं चैव गच्छ त्वं लघुविक्रम ।
ममागमनमाख्याय शीघ्रमानय माचिरं ॥ २ ॥
श्रुत्वा तु भाषितं तस्य रामस्याक्लिष्टकर्मणः ।
द्वास्थः कुमारावाहूय राघवाय न्यवेदयत् ॥ ३ ॥
दृष्ट्वा तु राघवौ प्राप्तौ प्रियौ भरतलक्ष्मणौ ।
परिष्वज्य ततो रामो वाक्यमेतदुवाच ह ॥ ४ ॥
कृतं मया यथोद्दिष्टं द्विजकार्यमनुत्तमं ।
धर्मसेतुमहं भूयः कर्तुमिच्छे यशस्करं ॥ ५ ॥
युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमं ।
सहितो यष्टुमिच्छामि यत्र धर्मो हि शाश्वतः ॥ ६ ॥
इष्ट्वा हि राजसूयेन मित्रः शत्रुनिवर्हणः ।
सुसमृद्धेन विधिवद्वरुणत्वमवाप्तवान् ॥ ७ ॥
सोमश्च राजसूयेन यज्ञेनेष्ट्वा हि धर्मवित् ।
प्राप्तवान् सर्वलोकेषु कीर्त्तिं स्थानं च शाश्वतं ॥ ८ ॥
तस्माद्भवन्तौ यच्छ्रेयः संचिन्त्य तन्मया सह ।
हितं चायतियुक्तं च प्रयतौ वक्तुमर्हथ ॥ ९ ॥

श्रुत्वा तु वचनं तस्य भ्रातुर्ज्येष्ठस्य धीमतः ।
भरतः प्राञ्जलिर्भूत्वा वचनं प्रत्युवाच ह ॥ १० ॥
त्वं धर्मः परमः साधो त्वयि सर्वा वसुन्धरा ।
प्रतिष्ठिता महाबाहो यशश्चामित्रकर्षण ॥ ११ ॥
महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः ।
निरीक्षन्ते महात्मानं लोकनाथं यथा वयं ॥ १२ ॥
प्रजाश्च पितृवद्राजन् पश्यन्ति त्वां महामते ।
त्वं पृथिव्यां नरश्रेष्ठ प्राणिनां परमा गतिः ॥ १३ ॥
स त्वमेवंविधं यज्ञमाहर्ता तु कथं नृप ।
पृथिव्यां सर्ववंशानां विनाशो यत्र दृश्यते ॥ १४ ॥
ये केचित् पुरुषा राजन् पौरुषं समुपाश्रिताः ।
सर्वेषां भविता चात्र क्षयः कालान्तकोपमः ॥ १५ ॥
श्रूयते हि महाराज सोमस्यापि महौजसः ।
ज्योतिषा सुमहद्युद्धं संग्रामे तारकामये ॥ १६ ॥
वरुणस्य महाघोरः संग्रामो मत्स्यकच्छपैः ।
निर्वृत्तो राजशार्दूल यत्र क्षीणा जले चराः ॥ १७ ॥
श्रूयते राजसूयान्ते शक्रस्य मनुजेश्वर ।
देवासुरं महायुद्धं सर्वोत्सेधमवर्तत ॥ १८ ॥
हरिश्चन्द्रस्य यज्ञान्ते राजसूयस्य राघव ।
आडीवकं महायुद्धं सर्वसत्त्वविनाशनं ॥ १९ ॥

पृथिव्यां यानि सत्त्वानि तिर्यग्योनिगतान्यपि ।
पार्थिवानां प्रजानां च राजसूये ध्रुवं क्षयः ॥ २० ॥
स त्वं पुरुषशार्दूल गुणैरमितविक्रमः ।
पृथिवीं नार्हसे हन्तुं वशे हि तव वर्तते ॥ २१ ॥
भरतस्य तु तद्वाक्यं श्रुत्वामृतमयं यथा ।
प्रहर्षमतुलं लेभे रामः प्राणभृतां वरः ॥ २२ ॥
उवाच च परिष्वज्य कैकय्यानन्दिवर्धनं ।
प्रीतोऽस्मि परितुष्टश्च वाक्येनानेन सुव्रत ॥ २३ ॥
इदं वचनमक्लीबं त्वया धर्मसमाहित ।
व्याहृतं पुरुषव्याघ्र प्रजानां परिपालनं ॥ २४ ॥
एष तस्मादभिप्रायो राजसूयात् क्रतूत्तमात् ।
निवर्तये महाबाहो तव सुव्याहृतेन वै ॥ २५ ॥
बालादपि शुभं वाक्यं ग्राह्यं भरत पूर्वजैः ।
तस्माद्गृह्णामि ते वाक्यं प्रजानां हितकाम्यया ॥ २६ ॥

इत्युत्तरकाण्डे भरतवाक्यं नाम
नवतितमः सर्गः ॥

## XCI.

तथोक्तवति रामे तु भरते च महात्मनि ।
लक्ष्मणोऽपि शुभं वाक्यमुवाच रघुनन्दनं ॥ १ ॥
अश्वमेधो महायज्ञः पावनः सर्वपाप्मनां ।
अपापस्य स ते राजन् रोचतां क्रतुरुत्तमः ॥ २ ॥
श्रूयते च यथा पूर्वं वासवः स महायशाः ।
ब्रह्महत्यावृतः श्रीमानश्वमेधेन पावितः ॥ ३ ॥
पुरा किल महाबाहो देवासुरसमागमे ।
वृत्रो नाम महानासीद्दैतेयो लोकविश्रुतः ॥ ४ ॥
विस्तीर्णो योजनशतमुच्छ्रितस्त्रिगुणं तथा ।
अनुरागेण लोकस्तं सर्वस्नेहेन पश्यति ॥ ५ ॥
धर्मज्ञश्च वदान्यश्च बुद्ध्या च परिनिष्ठितः ।
शास्ति स्म पृथिवीं सर्वां धर्मेण सुसमाहितः ॥ ६ ॥
तस्मिन् प्रशासति महीं सर्वकामफला द्रुमाः ।
रसवन्ति प्रभूतानि मूलानि च फलानि च ॥ ७ ॥
अकृष्टपच्या पृथिवी सुसंपन्ना महात्मनः ।
स महीमीदृशीं भुङ्क्ते स्फीतामद्भुतदर्शनां ॥ ८ ॥
तस्य बुद्धिरथोत्पन्ना तपः कुर्यामनुत्तमं ।
तपो हि परमं श्रेयः संमोहश्चेतरत् सुखं ॥ ९ ॥

स निक्षिप्य सुतं ज्येष्ठं सर्वलोकमहेश्वरं ।
उग्रं तपः समातिष्ठत् तापयन् सर्वदेवताः ॥१०॥
तपस्तप्यति वृत्रे तु वासवः परमार्त्तवत् ।
विष्णुं परमतेजस्वी वाक्यमेतदुवाच ह ॥११॥
तप्यमानेन तपसा लोका वृत्रेण निर्जिताः ।
बलवानेष धर्मेण नैनं शक्नोमि शासितुं ॥१२॥
यद्यसौ तप्यते भूयस्तप एव सुरोत्तम ।
यावल्लोका धरिष्यन्ति तावत् स्थास्यन्ति तद्वशे ॥१३॥
त्वं चैनं परमोदारमुपेक्षसि च नित्यशः ।
क्षणं हि न भवेद्वृत्रः क्रुद्धे त्वयि सुरेश्वर ॥१४॥
यदाप्रभृति संयोगं त्वया विष्णो समागताः ।
तदाप्रभृति देवा वै नाथवन्तस्त्वया विभो ॥१५॥
स त्वं प्रसादं देवानां कुरुष्व सुमहाबल ।
त्वत्कृतेन हि सर्वं स्यात् प्रशान्तमखिलं जगत् ॥१६॥
इमे हि सर्वे विष्णो त्वां निरीक्षन्ते दिवौकसः ।
वृत्रघातेन महता तेषां साह्यं कुरुष्व ह ॥१७॥
त्वया हि नित्यशः साह्यं कृतमेषां महात्मनां ।
अशक्यमिदमन्येषामगतीनां गतिर्भव ॥१८॥
लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा शत्रुनिवर्हणः ।
वृत्रघातं परं मत्वा कथयेति तमब्रवीत् ॥१९॥

राघवेणैवमुक्तस्तु सुमित्रानन्दिवर्धनः ।
भूय एव कथां दिव्यां कथयामास लक्ष्मणः ॥ २० ॥

इत्युत्तरकाण्डे वृत्रबधव्यवसायो नाम
एकनवतितमः सर्गः ॥

## XCII.

वासवस्य वचः श्रुत्वा सर्वेषां च दिवौकसां ।
विष्णुर्देवानुवाचेदं सर्वानिन्द्रपुरोगमान् ॥ १ ॥
पूर्वसौहृदबद्धोऽस्मि वृत्रस्य सुमहात्मनः ।
सहे सर्वमिदं तेन न च हन्मि महासुरं ॥ २ ॥
अवश्यं करणीयं च भवतां कार्यमुत्तमं ।
तस्मादुपायमाख्यास्ये येनासौ न भविष्यति ॥ ३ ॥
त्रिधाभूतं करिष्यामि आत्मानं सुरसत्तमाः ।
तेन वृत्रं सहस्राक्षो बधिष्यति न संशयः ॥ ४ ॥
एकांशो वासवं यातु द्वितीयो वज्रमेव तु ।
त्रितीयो भूतलं यातु तदा वृत्रं बधिष्यति ॥ ५ ॥
तथा ब्रुवाणं देवेशमब्रुवन् सर्वदेवताः ।
एवमेतन्न संदेहो यथा वदसि शत्रुहन् ॥ ६ ॥
भद्रं तेऽस्तु गमिष्यामो वृत्रासुरबधैषिणः ।
भजस्व परमोदार वासवं स्वेन तेजसा ॥ ७ ॥
ततो देवा महात्मानः सहस्राक्षपुरोगमाः ।
तमरण्यमुपाक्रामन् यत्र वृत्रो महासुरः ॥ ८ ॥
तेऽपश्यंस्तेजसा युक्तं तप्यन्तमसुरोत्तमं ।
पिबन्तमिव लोकांस्त्रीन् निर्दहन्तमिवाम्बरं ॥ ९ ॥

दृष्ट्वैव चासुरश्रेष्ठं देवास्त्रासमुपागमन् ।
कथमेनं बधिष्यामः कथं न स्यात् पराजयः ॥ १० ॥
तेषां चिन्तयतामेवं सहस्राक्षः पुरन्दरः ।
वज्रं प्रगृह्य बाहुभ्यामाक्षिपद्वृत्रमूर्धनि ॥ ११ ॥
ततः कालोपमास्त्रेण प्रदीप्तेन महार्चिषा ।
पतता वृत्रशिरसि जगत् त्रासमुपागमत् ॥ १२ ॥
असंभाव्यं बधं चैव वृत्रस्य विबुधाधिपः ।
चिन्तयानो जगामाशु लोकस्यान्तं महायशाः ॥ १३ ॥
ततस्तेनैव वज्रेण क्षिप्रं वृत्रो व्यहन्यत ।
तेन चाधर्मयोगेन संसृष्टः स शतक्रतुः ॥ १४ ॥
तं च शक्रं ब्रह्महत्या गच्छन्तमनुगच्छति ।
अपतच्चास्य गात्रेषु तेनेन्द्रं दुःखमाविशत् ॥ १५ ॥
हते वृत्रे प्रणष्टेन्द्रा देवाः साग्निपुरोगमाः ।
विष्णुं त्रिभुवनश्रेष्ठं मुहुर्मुहुरपूजयन् ॥ १६ ॥
ऊचुश्च ते सुराः सर्वे पूजयित्वा यथार्हतः ।
त्वं गतिः परमा देव त्वं पूर्वो जगतः प्रभुः ॥ १७ ॥
रक्षार्थं सर्वभूतानां विष्णुत्वं गतवानसि ।
हतो वृत्रस्त्वया देव ब्रह्महत्या च वासवं ॥ १८ ॥
बाधते सुरशार्दूल तस्य मोक्षं विनिर्दिश ।
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ॥ १९ ॥

मामेव यजतां शक्रः पावयिष्ये शतक्रतुं ।
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ २० ॥
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः ।
एवं व्यादिश्य देवानां वाणींताममृतोपमां ।
जगाम विष्णुराकाशं देवा जग्मुस्तथैव च ॥ २१ ॥

इत्युत्तरकाण्डे वृत्रबधोपाख्यानं नाम
द्विनवतितमः सर्गः ॥

# उत्तरकाण्डं

## XCIII.

अथ वृत्रबधं सर्वमखिलेन स लक्ष्मणः ।
कथयित्वा रघुश्रेष्ठः कथाशेषमथाब्रवीत् ॥ १ ॥
ततो हते महावीर्ये वृत्रे देवभयंकरे ।
ब्रह्महत्या वृतः शक्रः संज्ञां लेभे तदा न सः ॥ २ ॥
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ।
कालं तत्रावसत् कंचिच्चेष्टमानो यथोरगः ॥ ३ ॥
अथ नष्टे सहस्राक्षे उद्विग्नमभवज्जगत् ।
भूमिश्च ध्वस्तसंकाशा निस्नेहा शुष्ककानना ॥ ४ ॥
निःश्रोतसः श्रवन्त्यश्च विपन्नानि सरांसि च ।
संक्षोभश्चैव सत्वानामनावृष्टिकृतोऽभवत् ॥ ५ ॥
क्षीयमाणे तु लोकेऽस्मिन् संभ्रान्ताः सर्वदेवताः ।
यथोक्तं विष्णुना पूर्वं हयमेधमुपानयन् ॥ ६ ॥
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः ।
तं देशं सहिता जग्मुर्यत्रेन्द्रो भयमोहितः ॥ ७ ॥
ते तु दृष्ट्वा सहस्राक्षं मोहितं ब्रह्महत्यया ।
दीक्षयित्वा ततो देवा मुहूर्त्ते याज्ञिये तदा ॥ ८ ॥
याजयामासुरमरा हयमेधेन वासवं ।
ततोऽश्वमेधः सुमहान् महेन्द्रस्य महात्मनः ॥ ९ ॥

ववृधे ब्रह्महत्यायाः पावनार्थं शचीपतेः ।
ततो यज्ञसमाप्तौ तु ब्रह्महत्या महात्मनः ॥ १० ॥
अभिगम्याब्रवीद्वाक्यं क्व मे स्थानं विधास्यथ ।
ऊचुश्च तां ततो देवा हृष्टाः प्रीतिसमन्विताः ॥ ११ ॥
चतुर्धा विभजात्मानमात्मनैव दुरासदे ।
देवानां वचनं श्रुत्वा ब्रह्महत्या महात्मनां ॥ १२ ॥
संनिधौ स्थानमत्यन्तं वरयामास दुर्वसा ।
भागेनैकेन सलिले वसेयं सुरसत्तमाः ॥ १३ ॥
चतुरो वार्षिकान् मासान् दर्पघ्नी कामचारिणी ।
भूमौ सर्वमहं कालं द्वितीयांशेन सर्वदा ॥ १४ ॥
वृक्षेषु च निवत्स्यामि सत्यमेतद्ब्रवीमि वः ।
तृतीयो यस्तु मे भागः स स्त्रीषु रजसान्वितः ॥ १५ ॥
चत्वार्यहानि भविता ताभिर्यः सङ्गमिच्छति ।
हन्तारो ब्रह्मणान् ये तु प्रेक्षापूर्वमदूषकान् ॥ १६ ॥
तांश्चतुर्थेन भागेन संश्रयिष्ये सुरर्षभाः ।
तामब्रुवंस्ततो देवा यथावदनुपूर्वशः ॥ १७ ॥
तथा भवतु दुष्टाः स्म साधयस्व यथेप्सितं ।
ततः प्रमुदिता देवाः सह शक्रेण धीमता ॥ १८ ॥
विज्वरः पूतपाप्मा च वासवः समपद्यत ।
प्रशान्तं च जगत् सर्वं सहस्राक्षे प्रतिष्ठिते ॥ १९ ॥

अश्वमेधं क्रतुवरं तदा शक्रोऽभ्यपूजयत् ।
ईदृशो ह्यश्वमेधस्य प्रभावो रघुनन्दन ।
यजस्व तेन राजेन्द्र हयमेधेन राघव ॥ २० ॥

इति लक्ष्मणवाक्यमुत्तमं नृपतिर्
अतीव मनोहरं महात्मा ।
परितोषमवाप हृष्टचेताः स
निशम्येन्द्रसमानविक्रमौजाः ॥ २१ ॥

इत्युत्तरकाण्डे यज्ञोपाख्यानं नाम
त्रिनवतितमः सर्गः ॥

## XCIV.

तच्छ्रुत्वा लक्ष्मणेनोक्तं वाक्यं वाक्यविशारदः ।
प्रत्युवाच महातेजाः प्रहसन् राघवो वचः ॥ १ ॥
एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण ।
वृत्रघातमशेषेण हयमेधफलं च यत् ॥ २ ॥
श्रूयते हि पुरा सौम्य कर्दमस्य प्रजापतेः ।
सुतो वाह्लीश्वरः श्रीमानिलो नाम सुधार्मिकः ॥ ३ ॥
स राजा पृथिवीं सर्वां वशे कृत्वा सपर्वतां ।
प्रजाश्चैव नरव्याघ्र पुत्रवत् पर्यपालयत् ॥ ४ ॥
सुरैश्च परमोदारैर्बलवद्भिस्तथासुरैः ।
यक्षराक्षसगन्धर्वैः सिद्धचारणकिन्नरैः ॥ ५ ॥
स पूज्यते नित्यकालं भयार्त्तै रघुनन्दन ।
बिभ्यति तस्य रोषात् तु लोकाः सर्वे महात्मनः ॥ ६ ॥
सोऽधिराजो महानासीद्धर्मे वीर्ये च विश्रुतः ।
बुद्ध्या च परमोदारो वाह्लीराजो महायशाः ॥ ७ ॥
स कदाचिन्महाबाहुर्मृगयामगमन्नृपः ।
चैत्रे मनोरमे मासि सभृत्यबलवाहनः ॥ ८ ॥
महद्वनमुपागम्य मृगान् शतसहस्रशः ।
जघान न च वै तृप्तिरासीत् तस्य महात्मनः ॥ ९ ॥

ततो मृगाणामयुतं बध्यमानं महात्मना ।
यत्र जातो महासेनस्तं देशमुपचक्रमे ॥ १० ॥
तस्मिंश्च देशे देवेशः शैलराजसुतां हरः ।
रमयामास दुर्धर्षः सर्वैरनुचरैर्वृतः ॥ ११ ॥
कृत्वा स्त्रीरूपमात्मानं सर्वाननुचरांस्तथा ।
देव्याः प्रियचिकीर्षार्थं तत्र पर्वतनिर्झरे ॥ १२ ॥
सत्त्वानि पुरुनामानि यानि तत्र च कानने ।
वृक्षाः पुन्नामधेयाश्च सर्वे ते स्त्रीकृतास्तदा ॥ १३ ॥
एतस्मिन्नन्तरे राजा स इल कर्दमात्मजः ।
निघ्नन् मृगसहस्राणि तं देशं समुपागमत् ॥ १४ ॥
सर्वं स्त्रीमयं दृष्ट्वा तु सव्यालमृगपक्षिणं ।
आत्मानं सानुगं चैव स्त्रीभूतं कर्दमात्मजः ॥ १५ ॥
राजातप्यत दुःखेन दृष्ट्वात्मानं तथाविधं ।
उमापतेश्च तत् कर्म ज्ञात्वा त्रासमुपागमत् ॥ १६ ॥
ततो देवं महात्मानं शितिकण्ठं कपर्दिनं ।
जगाम शरणं राजा सभृत्यबलवाहनः ॥ १७ ॥
ततः प्रहस्य वरदः सह देव्या त्रिशूलधृक् ।
प्रजापतिसुतं वीरमुवाच मधुरं वचः ॥ १८ ॥
उत्तिष्ठोत्तिष्ठ राजर्षे कार्दमेय महाबल ।
पुरुषत्वमृते वीर ब्रूहि किं करवाणि ते ॥ १९ ॥

ततः स राजा शोकार्त्तः प्रत्याख्यातो महात्मना ।
स्त्रीभूतो नैव जग्राह वरमन्यं सुरोत्तमात् ॥ २० ॥
ततः शोकसमाविष्टः शैलराजसुतां नृपः ।
प्रणिपत्य महादेवीमुवाचानन्यमानसः ॥ २१ ॥
ईशा वराणां वरदे लोकानामसि भाविनि ।
अमोघदर्शना देवि भव सौम्ये शुभे मम ॥ २२ ॥
हृद्गतं तस्य राजर्षेर्विज्ञाय हरसंनिधौ ।
प्रत्युवाच शुभं वाक्यं देवी रुद्रस्य संमता ॥ २३ ॥
अर्धस्य वरदो देवो वरदार्धस्य चाप्यहं ।
तस्मादर्धं गृहाण त्वं स्त्रीपुंसोर्यावदिच्छसि ॥ २४ ॥
तदद्भुततमं वाक्यं देव्याः श्रुत्वा महीपतिः ।
संप्रहृष्टमना भूत्वा वाक्यमेतदुवाच ह ॥ २५ ॥
यदि देवि प्रसन्ना मे रूपेणाप्रतिमा भुवि ।
स्त्री भवेयं परं मासं मासं च पुरुषः पुनः ॥ २६ ॥
ईप्सितं तस्य विज्ञाय देवी सुरुचिरं वचः ।
प्रत्युवाच नरेन्द्रं तमेवमेतद्भविष्यति ॥ २७ ॥
यदा त्वं पुरुषीभूतः स्त्रीभावं न स्मरिष्यसि ।
यदा स्त्री चापरं मासं न स्मरिष्यसि पौरुषं ॥ २८ ॥
एवं स राजा पुरुषो मासं भवति कार्दमिः ।
त्रैलोक्यसुन्दरी नारी मासमेकमिलाभवत् ॥ २९ ॥

## XCV.

तां कथां दिव्यसंकाशां रामेण समुदीरितां ।
लक्ष्मणो भरतश्चैव श्रुत्वा परमविस्मितौ ॥ १ ॥
तौ रामं प्राञ्जलीभूत्वा तस्य राज्ञो महात्मनः ।
उपचक्रमतुः प्रष्टुं प्रभावं तस्य विस्तरं ॥ २ ॥
कथं स राजा स्त्रीभूतो वर्तयामास दुर्गतिं ।
पुरुषो वा पुनर्भूत्वा कां स वृत्तिमवर्तत ॥ ३ ॥
स तयोस्तद्वचः श्रुत्वा कौतूहलसमन्वितं ।
कथयामास काकुत्स्थस्तस्य राज्ञो यथाभवत् ॥ ४ ॥
तमेव प्रथमं मासं स्त्रीभूता लोकसुन्दरी ।
ताभिः परिवृता स्त्रीभिर्येऽस्य पूर्वं पदानुगाः ॥ ५ ॥
तत्काननं विगाह्याशु रेमे वै पुष्पशोभितं ।
द्रुमगुल्मलताकीर्णं शरत्पद्मदलेक्षणा ॥ ६ ॥
वाहनानि तु सर्वाणि त्यक्त्वा चैव समन्ततः ।
पर्वताभोगविवरे तस्मिन् रेमे तदा इला ॥ ७ ॥
अथ तस्मिन् वनोद्देशे पर्वतस्याविदूरतः ।
सरः सुरुचिरप्रख्यं पुण्यं पक्षिगणायुतं ॥ ८ ॥
इला ददर्श तस्मिंस्तु बुधं सोमसुतं तदा ।
ज्वलन्तं स्वेन वपुषा पूर्णचन्द्रमिवोदितं ॥ ९ ॥

तपस्तप्यन्तमुग्रं तमम्बुमध्ये दुरासदं ।
यशस्करं कामगमं तारुण्ये पर्यवस्थितं ॥१०॥
सा तं जलाशयं सर्वं क्षोभयामास विस्मिता ।
सह तैः पूर्वपुरुषैः स्त्रीभूतैरनुयायिभिः ॥११॥
बुधस्तु तां निरीक्ष्यैव मन्मथेनाभिपीडितः ।
नोपलेभे तदा शर्म चचार च ततोऽम्भसि ॥१२॥
इलां निरीक्षमाणस्तु बुधः स्निग्धेन चक्षुषा ।
चिन्तयामास कामार्त्तः का त्वियं देवताधिका ॥१३॥
न देवीषु न नारीषु नाप्सरःसु सुमध्यमा ।
दृष्टपूर्वा मया काचिदनया रूपसंपदा ॥१४॥
ममेयं सदृशी भार्या यदि नान्यपरिग्रहा ।
इति बुद्धिं समास्थाय जलात् स्थलमुपागमत् ॥१५॥
सोऽथाश्रममुपागम्य चतस्रः प्रमदास्तदा ।
आह्वयामास धर्मात्मा तं च ताः समवादयन् ॥१६॥
पप्रच्छ ताः स धर्मात्मा कस्यैषा लोकसुन्दरी ।
किमर्थमागता चेह श्रोतुमिच्छामि कथ्यतां ॥१७॥
श्रुत्वा तस्य तु तद्वाक्यमतीव मधुराक्षरं ।
ता ऊचुरभिपूज्यैनं मधुरं श्लक्ष्णया गिरा ॥१८॥
अस्माकमेषा सुश्रोणी प्रभुत्वे वर्तते सदा ।
अपतिः काननान्तेषु सहास्माभिश्चरत्यसौ ॥१९॥

तद्वाक्यमाव्यक्तपदं तासां स्त्रीणां निशम्य वै ।
विद्यामावर्तनीं पुण्यामावर्तयति धर्मवित् ॥ २० ॥
तं भावं तत्वतो ज्ञात्वा तस्य राज्ञो यथातथा ।
सर्वास्तत्रार्थिनीर्नारीरुवाच मधुरं तदा ॥ २१ ॥
यूयं किंपुरुषा भूत्वा पर्यटध्वं शिलोच्चये ।
आवासस्तु गिरावस्मिन् शीघ्रमेव विधीयतां ॥ २२ ॥
पुष्पमूलफलैः सर्वा वर्तयिष्यथ सर्वदा ।
स्त्रियः किंपुरुषा नाम भर्तॄन् समभिलप्स्यथ ॥ २३ ॥
तच्छ्रुत्वा सोमपुत्रस्य सर्वाः किंपुरुषास्तथा ।
आजग्मुः पर्वतोद्देशं सोमपुत्रस्य शासनात् ।
उपासां चक्रिरे चैव शैलं सर्वा ह्यशेषतः ॥ २४ ॥

इत्युत्तरकाण्डे इलोपाख्यानं नाम चतुर्नवतितमः
सर्गः = किंपुरुषोत्पत्तिर्नाम
पञ्चनवतितमः सर्गः ॥

## XCVI.

श्रुत्वा किंपुरुषोत्पत्तिमुभौ भरतलक्ष्मणौ ।
आश्चर्यमिति काकुत्स्थं तदा प्रतिननन्दतुः ॥ १ ॥
अथ रामः कथामेतां भूय एव महायशाः ।
कथयामास धर्मात्मा प्रजापतिसुतस्य वै ॥ २ ॥
सर्वास्ता विहृता दृष्ट्वा किन्नरी ऋषिसत्तमः ।
उवाच रूपसंपन्नां स्त्रियं स प्रहसन् वचः ॥ ३ ॥
सोमस्याहं सुदयितः सुतः सुरुचिरानने ।
भजस्व मां वरारोहे प्रीतिस्निग्धेन चक्षुषा ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा शून्ये स्वजनवर्जिते ।
इला सुरुचिरं वाक्यं प्रत्युवाच महाप्रभं ॥ ५ ॥
अहं कामचरी सौम्य तवास्मि वशवर्तिनी ।
प्रशाधि मां सोमसुत यथेच्छसि महामते ॥ ६ ॥
तत् तस्या मधुरं वाक्यं श्रुत्वा हर्षसमन्वितः ।
सोऽगात् कामविहारार्थी संप्रगृह्य शुचिस्मितां ॥ ७ ॥
तस्यासौ माधवो मास इलया सह धीमतः ।
क्षणभूत इवात्यर्थं व्यतीयाद्रमतो वने ॥ ८ ॥
अथ मासे तु संपूर्णे पूर्णेन्दुसदृशाननः ।
प्रजापतिसुतः श्रीमान् शयने प्रत्यबुध्यत ॥ ९ ॥

स ददर्श बुधं तत्र तपन्तं सलिले तपः ।
ऊर्ध्वबाहुं निरालम्बं तं राजा प्रत्यभाषत ॥१०॥
भगवन् पर्वतं दुर्गं प्रविष्टोऽस्मि सहानुगः ।
न च पश्यामि तत् सैन्यं क्व नु ते मामका गताः ॥११॥
तच्छ्रुत्वा तस्य राजर्षेर्नष्टसंज्ञस्य भाषितं ।
प्रत्युवाच बुधो वाक्यं सान्त्वयन् मधुरं तदा ॥१२॥
शृणु सर्वं यथातथ्यं राजर्षे शुभलक्षण ।
संस्तम्भयस्व चात्मानं मा च शोके मनः कृथाः ॥१३॥
अश्मवर्षेण महता भृत्यास्ते विनिपातिताः ।
त्वं चाश्रमपदे सुप्तो वातवर्षभयार्दितः ॥१४॥
समाश्वसिहि राजर्षे निर्भयो विगतज्वरः ।
फलमूलाशनो वीर वस काश्चिदिह क्षपाः ॥१५॥
स राजा तेन वाक्येन प्रत्याश्वस्तो महायशाः ।
प्रत्युवाच शुभं वाक्यं दीनो भृत्यजनक्षयात् ॥१६॥
त्यक्ष्याम्यहमिदं राज्यं न हि भृत्यैर्विनाकृतः ।
वर्तयेयं क्षणं ब्रह्मन् मामनुज्ञातुमर्हसि ॥१७॥
सुतो धर्मपरो ब्रह्मन् ज्येष्ठो मम महायशाः ।
शशबिन्दुरिति ख्यातः स च राज्यमवाप्स्यति ॥१८॥
न हि शक्ष्याम्यहं ब्रह्मन् भृत्यदारान् सुखस्थितान् ।
प्रतिवक्तुं महातेजः किञ्चिदप्यशुभं वचः ॥१९॥

तथोक्तवति राजेन्द्रे बुधः परममद्भुतं ।
प्रत्युवाच शुभं वाक्यं दुःखार्त्तं कर्दमात्मजं ॥ २० ॥
न संतापस्त्वया कार्यः कार्दमेय महाद्युते ।
फलमूलाशनो भूत्वा ममाश्रमपदे वस ॥ २१ ॥
संवत्सरोषितस्याहं कारयिष्यामि ते शुभं ।
पुनः समेष्यति भवान् सर्वभृत्यजनेन ह ॥ २२ ॥
तस्य तद्वचनं श्रुत्वा बुधस्याक्लिष्टकर्मणः ।
वासाय विदधे बुद्धिं यथोक्तं ब्रह्मवादिना ॥ २३ ॥
मासं स स्त्री तदा भूत्वा रमयामास वै बुधं ।
मासं च पुरुषो भूत्वा धर्मे बुद्धिं चकार ह ॥ २४ ॥
ततः सा नवमे मासि बुधात् सोमसुतात् सुतं ।
जनयामास सुश्रोणी पुरूरवसमूर्जितं ॥ २५ ॥
जातमात्रं तु सुश्रोणी पितुर्हस्ते न्यवेशयत् ।
बुधस्य सोमवर्णाभमिला पुत्रं महाबलं ॥ २६ ॥
बुधोऽपि पुरुषीभूतं समाश्वास्य नराधिपं ।
कथाभी रमयामास धर्मयुक्ताभिरात्मवान् ॥ २७ ॥

इत्युत्तरकाण्डे पुरूरवसो जन्म नाम
षण्णवतितमः सर्गः ॥

## XCVII.

तथोक्तवति रामे तु तस्य जन्म तदद्भुतं ।
लक्ष्मणो भरतश्चैव पुनर्वचनमूचतुः ॥ १ ॥
स राजा सोमपुत्रेण संवत्सरमथोषितः ।
अकरोत् किं नरश्रेष्ठ तत्त्वं शंसितुमर्हसि ॥ २ ॥
तयोस्तद्वचनं श्रुत्वा भ्रात्रोः स रघुनन्दनः ।
उवाच पुनरेवाथ कार्दमेः कथितां कथां ॥ ३ ॥
पुरुषत्वं गते शूरे बुधः परमवीर्यवान् ।
संवर्तं परमोदारमाजुहाव महायशाः ॥ ४ ॥
भार्गवं च्यवनं चैव मुनिं चारिष्टनेमिनं ।
प्रमोदं काश्यपसुतं मुनिं दुर्वाससं तथा ॥ ५ ॥
एतान् सर्वान् समानीय वाक्यज्ञस्तत्त्वदर्शनः ।
उवाच सर्वान् सुहृदो धैर्येण सुसमाहितः ॥ ६ ॥
अयं राजा महाबुद्धिः कर्दमस्य सुतस्त्विलः ।
जानीथैनं यथाभूतं श्रेयो ह्यस्य विधीयतां ॥ ७ ॥
बुधे तथा तान् ब्रुवति तमाश्रममुपागमत् ।
कर्दमः सुमहातेजा द्विजैः सह महात्मभिः ॥ ८ ॥
पुलहश्च क्रतुश्चैव वषट्कारस्तथैव च ।
ओङ्कारश्च महातेजास्तमाश्रममुपागमन् ॥ ९ ॥

ते सर्वे प्रीतिमनसः परस्परसमागमे ।
हितैषिणो बाह्लिपतेः पृथग्वाक्यान्यथाब्रुवन् ॥ १० ॥
कर्दमस्त्वब्रवीद्वाक्यं सुतार्थं परमं हितं ।
द्विजाः शृणुत मे सर्वे यच्छ्रेयः पार्थिवस्य हि ॥ ११ ॥
नान्यं पश्यामि शरणं तमृते वृषभध्वजं ।
तस्माद्यज्ञेन महता पूजयाम वृषध्वजं ॥ १२ ॥
अश्वमेधः परो यज्ञः प्रियश्चैव महात्मनः ।
ते वै यजामहे सर्वे द्विजेन्द्रास्तं दुरासदं ॥ १३ ॥
कर्दमस्य तु तद्वाक्यं श्रुत्वा सर्वे द्विजोत्तमाः ।
अरोचयन्ताश्वमेधं रुद्रस्याराधनं प्रति ॥ १४ ॥
संवर्तस्य तु ते विप्राः शिष्यत्वमुपपेदिरे ।
मरुत्तयज्ञप्रतिम ऐलो यज्ञस्तदा बभौ ॥ १५ ॥
स च यज्ञो महानासीद्बुधाश्रमसमीपतः ।
रुद्रश्च परमं तोषमाजगाम महायशाः ॥ १६ ॥
अथ यज्ञसमाप्तौ तु सुप्रीतः परया मुदा ।
उमापतिर्द्विजान् सर्वानुवाच इलसंनिधौ ॥ १७ ॥
प्रीतोऽस्मि हयमेधेन भक्त्या च द्विजसत्तमाः ।
अस्य बाह्लिपतेर्ब्रूत किं करोमि प्रियं शुभं ॥ १८ ॥
तथोक्तवति देवेशे द्विजास्ते सुसमाहिताः ।
तमब्रुवन् प्रसाद्यैनं पुरुषत्वं व्रजत्विला ॥ १९ ॥

ततः प्रीतिमना रुद्रः पुरुषत्वं ददौ पुनः ।
इलायाः सुमहातेजा दत्वा चान्तरधीयत ॥ २० ॥
निवृत्ते हयमेधे तु गते चादर्शनं हरे ।
यथागतं द्विजाः सर्वे जग्मुस्ते दीर्घदर्शिनः ॥ २१ ॥
स राजा बाह्लिमुत्सृज्य मध्यदेशे महायशाः ।
निवेशयामास पुरं प्रतिष्ठानं यशस्करं ॥ २२ ॥
शशविन्दुस्तु राजर्षिर्वाह्लिदेशेऽभवन्नृपः ।
प्रतिष्ठाने इलो राजा प्रजापतिसुतोऽभवत् ॥ २३ ॥
स काले प्राप्तवाँल्लोकमिलो ब्राह्ममनुत्तमं ।
ऐलः पुरूरवा आसीत् प्रतिष्ठाने महीपतिः ॥ २४ ॥
ईदृशो ह्यश्वमेधस्य प्रभावो हि नरर्षभौ ।
स्त्रीभूतः पौरुषं लेभे येन वाह्लीपतिः पुरा ॥ २५ ॥

इत्युत्तरकाण्डे इलापौरुषलभो नाम
सप्तनवतितमः सर्गः ॥

## XCVIII.

एवमाख्याय काकुत्स्थो भ्रात्रोरमिततेजसोः ।
लक्ष्मणं पुनरेवाह धर्मयुक्तमिदं वचः ॥ १ ॥
वशिष्ठं वामदेवं च जावालिमथ काश्यपं ।
अन्यांश्च विप्रप्रवरान् यज्ञकर्मविशारदान् ॥ २ ॥
एतान् सर्वान् समानीय मन्त्रयित्वा च लक्ष्मण ।
हयं लक्षणसंपन्नं विमोक्ष्यामि समाधिना ॥ ३ ॥
तानानय महाभागान् मत्सकाशं त्वरान्वितः ।
तद्वाक्यं राघवेणोक्तं श्रुत्वा त्वरितविक्रमः ॥ ४ ॥
द्विजान् सर्वान् समाहूय दर्शयामास राघवं ।
तान् दृष्ट्वा देवसंकाशान् कृत्वा पादाभिवन्दनं ॥ ५ ॥
अर्चयित्वा तु विधिवत् स महात्मा महामतिः ।
ततो विनीतवद्भूत्वा राघवो द्विजसत्तमान् ॥ ६ ॥
उवाच धर्मसंयुक्तमश्वमेधाश्रितं वचः ।
तत् तेषां द्विजमुख्यानां रुरुचे परमाद्भुतं ॥ ७ ॥
अश्वमेधमतं राज्ञः साधु साध्विति चाब्रुवन् ।
विज्ञाय रुचितं तेषां रामो लक्ष्मणमब्रवीत् ॥ ८ ॥
प्रेषयस्व महाबाहो सुग्रीवाय महात्मने ।
वक्तव्यश्च महाबाहुर्बहुभिः सह वानरैः ॥ ९ ॥

क्षिप्रमागच्छ भद्रं ते अनुभोक्तुं महोत्सवं ।
अङ्गदं च हनूमन्तं नलं नीलं सुपाटनं ॥१०॥
गयं गवाक्षं पनसं सर्वानेतान् निमन्त्रय ।
वीरं शतबलिं चैव मैन्दं द्विविदमेव च ॥११॥
वीरबाहुं सुबाहुं च सर्वानेतान् निमन्त्रय ।
सूर्याक्षं कुमुदं चैव सुषेणं गन्धमादनं ॥१२॥
ऋषभं विनतं चैव सर्वानेतान् निमन्त्रय ।
ये चान्ये कृतकर्माणो मदर्थे त्यक्तजीविताः ॥१३॥
पृथिव्यां वानराः सर्वे तानपीह निमन्त्रय ।
गोलाङ्गुलं महात्मानं गवयं हरियूथपं ॥१४॥
ऋक्षेशं जाम्बुवन्तं च सहसैन्यं निमन्त्रय ।
विभीषणं च रक्षोभिः कामगैर्बहुभिर्वृतं ॥१५॥
अश्वमेधं क्रतुं यष्टुमागच्छेति निमन्त्रय ।
पृथिव्यां पार्थिवाश्चैव ये मे हितचिकीर्षवः ॥१६॥
सानुगाः क्षिप्रमायान्तु हयमेधमनुत्तमं ।
देशान्तरगता ये च द्विजा धर्मपरायणाः ॥१७॥
निमन्त्रयस्व तान् सर्वानश्वमेधाय लक्ष्मण ।
देवर्षयश्च ये सर्वे ब्रह्मलोकर्षयस्तथा ॥१८॥
आह्वयन्तां महात्मानः सिद्धाः सप्तर्षिभिः सह ।
ऋषयः शिष्यसहिता आह्वयन्तां महामते ॥१९॥

यज्ञवाटश्च सुमहान् गोमत्यां नैमिषे वने ।
लक्ष्मण क्रियतां साधु तद्धि पुण्यं तपोवनं ॥ २० ॥
आज्ञाप्यन्तां सुनिपुणाः शिल्पिनो वेश्मकर्मसु ।
शतं शतसहस्राणां बलिनां च वपुष्मतां ॥ २१ ॥
अयुतं तिलमुद्गस्य गच्छत्वग्रे महाबल ।
दशकोट्यः सुवर्णस्य हिरण्यस्य दशोत्तराः ॥ २२ ॥
माषादीनां तथान्येषामनन्तं नीयतां तथा ।
आज्ञाप्यतां च तत् सर्वं यद्वशिष्ठाय रोचते ॥ २३ ॥
अग्रतो भरतः कृत्वा गच्छतां लघुविक्रमः ।
अन्तरापणवीथीश्च सर्वांश्च नटनर्तकान् ॥ २४ ॥
नैगमान् बालवृद्धांश्च वृद्धा ये च द्विजातयः ।
कर्मान्तिकांश्च कुशलान् शिल्पिनश्च सुपण्डितान् ॥ २५ ॥
मम मातृस्तथा सर्वाः सान्तःपुरकुमारिकाः ।
पत्नीं च काञ्चनमयीं दीक्षितां यज्ञकर्मणि ।
अग्रतो भरतः कृत्वा यातु शीघ्रमरिन्दम ॥ २६ ॥

इत्युत्तरकाण्डे अश्वमेधारम्भो नाम
अष्टनवतितमः सर्गः ॥

# उत्तरकाण्डं

## XCIX.

तत् सर्वं संविधायाशु प्रस्थाप्य भरतं नृपः ।
हयं लक्षणसंपन्नं कृष्णसारं व्यमोचयत् ॥ १ ॥
ऋत्विग्भिर्लक्षणां चैव हयस्य विनियुज्य च ।
ततो जगाम काकुत्स्थो मासमात्रेण नैमिषं ॥ २ ॥
यज्ञवाटं महाबाहुर्दृष्ट्वा च परमाद्भुतं ।
प्रहर्षमतुलं लेभे श्रीमानिति च सोऽब्रवीत् ॥ ३ ॥
वसतो नैमिषे तस्य सर्व एव नराधिपाः ।
आजग्मुस्ते स्वराष्ट्रेभ्यस्तान् राजा प्रत्यपूजयत् ॥ ४ ॥
तेषां शय्या महार्हाश्च पार्थिवानां महात्मनां ।
सानुगानां निवेशार्थमादिदेश महाबलः ॥ ५ ॥
अन्नपानानि वस्त्राणि सर्वोपकरणानि च ।
भरतः सहशत्रुघ्नो नियुक्तो राजपूजने ॥ ६ ॥
वानराश्च महात्मानः सुग्रीवसहिताः समं ।
परिवेषं च विप्राणां प्रयताः संप्रचक्रिरे ॥ ७ ॥
विभीषणश्च रक्षोभिर्बहुभिः सुसमाहितः ।
ऋषीणामुग्रतपसां किङ्करः समतिष्ठत ॥ ८ ॥
एवं स विहितो यज्ञो हयमेधः प्रवर्तितः ।
लक्ष्मणेनाभिसंप्राप्तो यथा शक्रस्य धीमतः ॥ ९ ॥

नान्यः शब्दोऽभवत् तस्मिन्नश्वमेधे महात्मनः ।
दीयतां भुज्यतां चेति पीयतां लेह्यतामिति ॥ १० ॥
एवं शतसहस्राणां भक्ष्यभोज्यमनुत्तमं ।
राक्षसैर्वानरैश्चैव दत्तमेव ह्यदृश्यत ॥ ११ ॥
नाशुक्लवासास्तत्रासीन्न दीनो न च कर्षितः ।
तस्मिन् यज्ञवरे राज्ञो हृष्टपुष्टजनावृते ॥ १२ ॥
ये च तत्र महात्मानो मुनयश्चिरजीविनः ।
विस्मितास्तेऽपि तां दृष्ट्वा राज्ञो यज्ञर्द्धिमुत्तमां ॥ १३ ॥
रजतस्य सुवर्णस्य रत्नानामथ वाससां ।
अनिशं दीयमानानां नान्तः समुपलक्ष्यते ॥ १४ ॥
न शक्रस्य न सोमस्य यमस्य वरुणस्य वा ।
अभवत् तादृशो यज्ञो राघवस्य यथाविधः ॥ १५ ॥
सर्वत्र वानराः प्रेष्याः सर्वत्रैव च राक्षसाः ।
बह्वन्नपानैर्विविधैरदृश्यन्त समन्ततः ॥ १६ ॥
ईदृशो राजसिंहस्य यज्ञः परमभास्वरः ।
अहीनः सर्वकरणैः संवत्सरमवर्तत ॥ १७ ॥

इत्युत्तरकाण्डे यज्ञसमृद्धिवर्णनं नाम
नवनवतितमः सर्गः ॥

# उत्तरकाण्डं

C.

वर्तमाने तथा तस्मिन् वाजिमेधे महाक्रतौ ।
आजगामाशु वाल्मीकिः सशिष्यो यज्ञसंनिधिं ॥ १ ॥
स दृष्ट्वा दिव्यसंकाशं क्रतुमद्भुतदर्शनं ।
ऋषिवासेषु पुण्येषु वासं समुपचक्रमे ॥ २ ॥
ततः संपूजितो राज्ञा मुनिभिश्च महात्मभिः ।
वाल्मीकिः सुमहातेजा न्यवसत् परमात्मवान् ॥ ३ ॥
स शिष्यावब्रवीद्धृष्टः कुमारौ देवरूपिणौ ।
कृत्स्नं रामायणं काव्यं गीयतां परया मुदा ॥ ४ ॥
ऋषिवासेषु पुण्येषु ब्राह्मणावसथेषु च ।
रथ्यासु राजमार्गेषु पार्थिवानां गृहेषु च ॥ ५ ॥
रामस्य भवनद्वारि यत्र कर्म प्रवर्तते ।
उदारेषु तथान्येषु संगमेषु विशेषतः ॥ ६ ॥
इमानि फलमूलानि स्वादूनि च शुभानि च ।
गिरिभ्यः समुपात्तानि भक्षं भक्षं प्रगीयतां ॥ ७ ॥
न याचेतं क्वचित् किंचिल्लक्षयित्वा त्विदं फलं ।
मूलं च परमोदारं युवां चैव न हास्यथः ॥ ८ ॥
यदिवाह्वय रामो वा शृणुयात् स महारथः ।
महर्षिषु परिष्ठेषु ततो गेयं विशेषतः ॥ ९ ॥

दिवसे विंशतिः सर्गा गेया मधुरया गिरा ।
प्रमाणैर्बहुभिस्तात्र यथोद्दिष्टं मया पुरा ॥१०॥
इदं कव्यं मया प्रोक्तं भवद्भ्यां श्रावितं महत् ।
लोका यावद्धरिष्यन्ति तावद्गेयं भविष्यति ॥११॥
उत्पत्स्यन्ते च ये लोके कवयश्चित्रबुद्धयः ।
पृष्ठतस्तेऽनुगास्यन्ति मया भुवि यदीरितं ॥१२॥
ये चैतद्बहुमंस्यन्ते ये च श्रोष्यन्ति मानवाः ।
अस्मिँल्लोके सुखं प्राप्य यास्यन्ति परमां गतिं ॥१३॥
लोभश्च वां न कर्तव्यः स्वल्पोऽपि धनकांक्षया ।
निर्धनैः फलमूलैश्च वस्तव्यमाश्रमे सदा ॥१४॥
यदि पृच्छेत् तु काकुत्स्थो राजा कस्य युवामिति ।
वल्मीकिशिष्यावावामित्यथ वाच्यः स पुत्रकौ ॥१५॥
इमास्तन्त्रीः सुमधुराः स्थानं वापूर्वदर्शनं ।
मूर्छयित्वा सुमधुरं ततो गेयं नृपाग्रतः ॥१६॥
आदिप्रभृति गेयं तु न चावज्ञाय पार्थिवं ।
पिता हि सर्वभूतानां राजा भवति धर्मतः ॥१७॥
तद्युवां हृष्टमनसौ श्वः प्रभाते समाहितौ ।
गायेतं मधुरं गेयं तन्त्रीलयसमन्वितं ॥१८॥
इति संदिश्य बहुधा मुनिः प्राचेतसः शुभं ।
वाल्मीकिः परमोदारस्तूष्णीमासीन्महायशाः ॥१९॥

## CI.

ततो रजन्यां व्युष्टायां स्नातौ हुतहुताशनौ ।
यथोक्तमृषिणा पूर्वं तत्र तत्राभ्यगायतां ॥ १ ॥
तां च शुश्राव काकुत्स्थः कथां दिव्याद्भुतोपमां ।
अपूर्वां पाठजातिं च गेयेन समभिप्लुतां ॥ २ ॥
स्वरैश्च सप्तभिर्बद्धां तल्लीलयसमन्वितां ।
बालयो राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥ ३ ॥
अथ कर्मान्तरे राजा समाहूय महामुनीन् ।
पार्थिवांश्च नरव्याघ्रः पण्डितान् नैगमांस्तथा ॥ ४ ॥
स्वराणां लक्षणज्ञांश्च उत्सुकान् द्विजपुङ्गवान् ।
पदाक्षरसमासज्ञान् शब्दे च परिनिष्ठितान् ॥ ५ ॥
कालमात्राविभागज्ञान् ज्योतिषे च परंगतान् ।
क्रियाकल्पविदश्चैव तथा वाक्यविदो द्विजान् ॥ ६ ॥
भाषाज्ञान् निगमज्ञांश्च गीतनृत्यविशारदान् ।
पौराणिकांश्च विविधान् ये च वृद्धा द्विजातयः ॥ ७ ॥
एतान् सर्वान् समाहूय गातारौ समवेशयत् ।
उपविष्टा ऋषिगणा राजानश्च महौजसः ॥ ८ ॥
पिबन्त इव चक्षुर्भ्यां पश्यन्ति स्म कुशीलवौ ।
ऊचुः परस्परं चैव सर्व एव समागताः ॥ ९ ॥

उभौ रामस्य सदृशौ विम्बाद्बिम्बमिवोद्धृतौ ।
जटिनौ यदि न स्यातां न वल्कलधरौ यदि ॥१०॥
विशेषो नाधिगम्येत अनयो राघवस्य च ।
तेषां संवदतामेवं श्रोतॄणां विस्मितात्मनां ॥११॥
गेयमारेभतुस्तत्र तावुभौ मुनिदारकौ ।
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषं ॥१२॥
श्लोकै रामायणं बद्धं विचित्रपदमर्थवत् ।
प्रवृत्तमादितः पूर्वं सर्वं नारददर्शितं ॥१३॥
ततः प्रभृति सर्गांश्च विंशतिं तावगायतां ।
ततोऽपराह्णसमये राघवः समभाषत ॥१४॥
श्रुत्वा विंशतिसर्गांस्तान् भ्रातरं भ्रातृवत्सलः ।
आभ्यां दशसहस्राणि सुवर्णस्य कृताकृतं ॥१५॥
प्रयच्छ शीघ्रं काकुत्स्थ यदन्यदभिकाङ्क्षितं ।
एवमुक्तस्तु रामेण भरतः केकयीसुतः ॥१६॥
यच्चाज्ञप्तं नरेन्द्रेण तत् ताभ्यां दातुमुद्यतः ।
दीयमानं सुवर्णं तु न तौ जगृहतुस्तदा ॥१७॥
ऊचतुश्च महात्मानौ किं धनेन विशांपते ।
वन्येन फलमूलेन निरतानां वनौकसां ॥१८॥
किमस्माकं हिरण्येन सुवर्णेनापिवा नृप ।
तथा तयोः प्रब्रुवतोः कौतूहलसमन्विताः ॥१९॥

राघवस्ते च राजानः श्रोतारस्तत्र चापरे ।
विस्मयं परमं गत्वा मुहूर्त्तं ध्यानतत्परः ॥ २० ॥
तयोरागमनं रामः काव्यस्य च समुद्भवं ।
प्रमाणं चैव पप्रच्छ तौ तदा मुनिदारकौ ॥ २१ ॥
कस्मिन्निष्ठागतं काव्यं कुतश्चैव प्रवर्तितं ।
केन चैव कृतं वत्सौ केन चैव प्रकाशितं ॥ २२ ॥
कर्ता कव्यस्य महतः क्व चासौ मुनिपुङ्गवः ।
पृच्छन्तमेवं काकुत्स्थं तावूचतुरतन्द्रितौ ॥ २३ ॥
आवां वाल्मीकिशिष्यौ तु तेन सार्धमिहागतौ ।
राजंस्तवेदं चरितं प्रोक्तं वाल्मीकिना शुभं ॥ २४ ॥
आदिप्रभृति राजेन्द्र पञ्च सर्गशतानि च ।
निबद्धानि सहस्राणि श्लोकानां पञ्चविंशतिः ॥ २५ ॥
उपाख्यानशतं चात्र भार्गवेण यशस्विना ।
तव जन्म च काकुत्स्थ मृत्युर्दशरथस्य च ॥ २६ ॥
परिक्रिया च या चैव तथा दारापकर्षणं ।
बालिनश्च बधो घोरः सागरे सेतुबन्धनं ॥ २७ ॥
सह राक्षसकोटीभी रावणस्य बधो महान् ।
एतत् सर्वं भगवता कव्येऽस्मिन् निरूपितं नृप ॥ २८ ।
यदि बुद्धिः कृता राजन् श्रवणे ते कुतूहलं ।
कर्मान्तरे क्षणीभूतः शृणु राजन् महामते ॥ २९ ॥

एवमुक्त्वा तु काकुत्स्थं तत्र तौ मुनिदारकौ ।
अभिचक्रामतुर्वासं यत्र वाल्मीकिरावसत् ॥३०॥
रामोऽपि मुनिभिः सार्धं पार्थिवैश्च महात्मभिः ।
अहो गीतमिति प्रोच्य कर्मशालामुपागमत् ॥३१॥

इत्युत्तरकाण्डे कुशलवानुशासनं नाम
शततमः सर्गः = गीतश्रवणं नाम
एकशततमः सर्गः ॥

## CII.

अह्वानि सुबहून्येवं रामो गीतमनुत्तमं ।
शुश्राव मुनिभिः सार्धं पार्थिवैश्च महात्मभिः ॥ १ ॥
कौशल्या च सुमित्रा च केकयी मातरश्च याः ।
प्रगृह्य बाहून् दुःखार्त्ता रुरुदुस्ता महास्वनं ॥ २ ॥
सुग्रीवो हनूमांश्चैव नलो नीलस्तथाङ्गदः ।
वर्तमानमिवातीतं तस्मिन् गीते समर्थयन् ॥ ३ ॥
वशिष्ठो वामदेवश्च जावालिरथ काश्यपः ।
एते ध्यानपराः सर्वे विश्वामित्रश्च कौशिकः ॥ ४ ॥
तथा प्ररुदतां तेषां सर्वेषां च मुहुर्मुहुः ।
कर्मान्तरेषु तद्गेयमनुप्राप्तं यशस्करं ॥ ५ ॥
तस्मिन् गीतेऽथ विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वाक्यमुवाच ह ॥ ६ ॥
शत्रुघ्नं वीर्यसंपन्नं हनूमन्तं च वानरं ।
विभीषणं च धर्मज्ञं सुषेणं च परंतपं ॥ ७ ॥
भगवन्तं महात्मानं वाल्मीकिमृषिसत्तमं ।
आनयध्वमिहोदारं ससीतं देवसंनिभं ॥ ८ ॥
अस्याः परिषदो मध्ये प्रत्ययं जनकात्मजा ।
ददातु शुद्धिविधिवदनुमान्य महामुनिं ॥ ९ ॥

छन्दं मुनेस्तु विज्ञाय सीतायाश्च मनोगतं ।
प्रत्ययं दातुकामायास्ततः शंसत मा चिरं ॥ १० ॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये चारित्रं प्रति सा पुनः ॥ ११ ॥
श्रुत्वा तु राघवस्येदं वचः परममद्भुतं ।
जग्मुस्ते त्वरितास्तत्र यत्र प्रचेतसो मुनिः ॥ १२ ॥
ते प्रणम्य महात्मानं ज्वलन्तमिव पावकं ।
ऊचुस्ते रामवाक्यानि मृदूनि रुचिराणि च ॥ १३ ॥
तेषां च वचनं श्रुत्वा रामस्य च मनोगतं ।
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥ १४ ॥
एवं भवतु वो भद्रं यथा वदति राघवः ।
तथा करिष्यते सीता दैवतं हि पतिः स्त्रियः ॥ १५ ॥
तथोक्ता ऋषिणा सर्वे रामदूता महौजसः ।
प्रत्येत्य सर्वं रामाय मुनेर्वाक्यमवेदयन् ॥ १६ ॥
ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महामुनेः ।
सर्वानेव महर्षींस्तान् नृपतींश्चाभ्यभाषत ॥ १७ ॥
मुनयश्च सशिष्या वै सानुगाश्च नराधिपाः ।
पश्यन्तु सीताशपथं यश्चान्योऽपीह काङ्क्षते ॥ १८ ॥
इति तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥ १९ ॥

राजानश्च नरव्याघ्रं प्रशशंसू रघूत्तमं ।
उपपन्नं रघुश्रेष्ठ त्वय्येतदिति चाब्रुवन् ॥ २० ॥
एवं विनिश्चयं कृत्वा श्वोभूत इति राघवः ।
विसर्जयामास तदा सर्वांस्तान् शत्रुसूदनः ॥ २१ ॥

इत्युत्तरकाण्डे सीताशपथनिश्चयो नाम
द्विशततमः सर्गः ॥

# उत्तरकाण्डं

## CIII.

तस्यां रजन्यां व्युष्टायां यज्ञवाटं गतो नृपः ।
सर्वानानययामास महर्षीन् रघुनन्दनः ॥ १ ॥
वशिष्ठो वामदेवश्च जावालिरथ काश्यपः ।
विश्वामित्रो दीर्घतपा दुर्वासाश्च महायशाः ॥ २ ॥
अगस्त्योऽथ महातेजा भार्गवश्चैव वामनः ।
मार्कण्डेयश्च दीर्घायुर्मौद्गल्यश्च महातपाः ॥ ३ ॥
गर्गश्च च्यवनश्चापि शतानन्दश्च धर्मवित् ।
ऋचीकश्च महातेजा अग्निपुत्रश्च सुप्रभः ॥ ४ ॥
एते चान्ये च बहवो मुनयः संशितव्रताः ।
राजानश्च नरव्याघ्राः सर्व एव समागताः ॥ ५ ॥
वानराश्च महावीर्या राक्षसाश्च महाबलाः ।
समापेतुर्महात्मानं सर्व एव कुतूहलात् ॥ ६ ॥
नागरश्च जनो मुख्यः कौतूहलसमन्वितः ।
सीतायाः शपथं प्रेप्सुः सर्व एव समागमत् ॥ ७ ॥
तथा समागतं सर्वमश्मभूतमिवाचलं ।
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥ ८ ॥
तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
कृताञ्जलिर्वाष्पवती कृत्वा रामं मनोगतं ॥ ९ ॥

दृष्ट्वा श्रियमिवायान्तीं सुव्रतां ब्रह्मचारिणीं ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥ १० ॥
ततो हलहलाशब्दः सर्वतः समुपस्थितः ।
शब्दापिहितकण्ठानां बाष्पव्याकुलचक्षुषां ॥ ११ ॥
साधु रामेति तत्रोचुः सीते साध्विति चापरे ।
साध्वित्युभयोरपरे प्रेक्षकाः संप्रचुक्रुशुः ॥ १२ ॥
ततो मध्यं जनौघस्य प्रविश्य मुनिपुङ्गवः ।
सीतासहायो वाल्मीकिरिति होवाच राघवं ॥ १३ ॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी ।
अपापा हि त्वया त्यक्ता ममाश्रमसमीपतः ॥ १४ ॥
लोकापवादभीतेन त्वया राम महामते ।
प्रत्ययं दास्यते साध्वी तदनुज्ञातुमर्हसि ॥ १५ ॥
इमौ च जानकीपुत्रावुभौ च यमजातकौ ।
सुतौ तव दुराधर्ष सत्यमेतद्ब्रवीमि ते ॥ १६ ॥
प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन ।
अनृतं न स्मराम्युक्तं यथेमौ तव पुत्रकौ ॥ १७ ॥
बहून् वर्षगणान् सौम्य तपश्चर्य्या मया कृता ।
प्राप्नुयां न फलं तस्या दुष्टेयं यदि मैथिली ॥ १८ ॥
कर्मणा मनसा वाचा न मेऽस्ति कलुषीकृतं ।
प्राप्नुयां न फलं तस्य दुष्टेयं मैथिली यदि ॥ १९ ॥

अहं पञ्चसु भूतेषु मनःषष्ठेषु राघव ।
दृष्ट्वा सीतां तदा शुद्धां नीतवानाश्रमं पुरा ॥ २० ॥
इयं शुद्धसमाचारा निर्दोषा पतिदेवता ।
लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥ २१ ॥
तस्मादियं नरवरात्मज शुद्धभावा
दिव्येन दृष्टिविषयेण मया प्रदिष्टा ।
लोकापवादकलुषीकृतचेतसा या
त्यक्ता त्वया प्रियतमा विदितापि शुद्धा ॥ २२ ॥

इत्युत्तरकाण्डे वाल्मीकिवाक्यं नाम
त्रिशततमः सर्गः ॥

## CIV.

वाल्मीकेस्तु वचः श्रुत्वा राघवो वाक्यमब्रवीत् ।
प्राञ्जलिर्जगतो मध्ये महर्षीणां च शृण्वतां ॥ १ ॥
एवमेतन्महाभाग यथा वदसि सुव्रत ।
प्रत्ययो जनितस्तुष्टस्तव वाक्यैरकिल्बिषैः ॥ २ ॥
प्रत्ययश्च पुरा दत्तो वैदेह्याः सुरसंनिधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥ ३ ॥
सेयं लोकभयाद्ब्रह्मन्नपापापि पुरा सती ।
परित्यक्ता मया सीता तद्भवान् क्षन्तुमर्हति ॥ ४ ॥
जानामि पुत्रकौ चेमौ मम जातौ कुशीलवौ ।
शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ॥ ५ ॥
अभिप्रायं तु रामस्य विज्ञाय सुरसत्तमाः ।
पितामहं पुरस्कृत्य सर्व एव समागताः ॥ ६ ॥
आदित्या वसवो रुद्रा ऋषयो मरुदश्विनौ ।
गन्धर्वाप्सरसश्चैव सर्व एव समागताः ॥ ७ ॥
नागा यक्षाः सुपर्णाश्च तथा विद्याधरोत्तमाः ।
सीताशपथसंभ्रान्ताः सर्व एव समागताः ॥ ८ ॥
ततो वायुः सुखस्पर्शो दिव्यगन्धवहः शुभः ।
तं जनौघं सुरांश्चैव प्रह्लादयति सर्वतः ॥ ९ ॥

तदद्भुतमिवाचिन्त्यं निरीक्षन्त समागताः ।
मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥ १० ॥
सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अवाङ्मुखी बास्पकलं प्राञ्जलिर्वाक्यमब्रवीत् ॥ ११ ॥
यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ १२ ॥
मनसा कर्मणा वाचा राममेव यथार्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ १३ ॥
यथैतत् सत्यमुक्तं मे न रामात् कामये परं ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ १४ ॥
तथा शपन्त्यां सीतायां प्रादुरासीन्महाद्भुतं ।
भूतलं भित्त्व सहसा सिंहासनमनुत्तमं ॥ १५ ॥
ध्रियमाणं शिरोभिश्च उदतिष्ठद्दुरासदं ।
दिव्यं दिव्येन वपुषा पन्नगैरमितप्रभैः ॥ १६ ॥
तस्मिंस्तु धरणी देवी सीतामादाय बाहुना ।
स्वागतं ते तथोक्त्वा तामासने संन्यवेशयत् ॥ १७ ॥
तामासनगतां देवीं प्रविशन्तीं रसातलं ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥ १८ ॥
साधुवादश्च सुमहान् देवानां हि तदोत्थितः ।
धन्या त्वमसि वैदेहि यस्यास्ते शीलमीदृशं ॥ १९ ॥

एवं बहुविधा वाचो ह्यन्तरिक्षगताः सुराः ।
व्याजह्रुः सुमहात्मानो दृष्ट्वा सीताप्रवेशनं ॥ २० ॥
यज्ञवाटगताश्चापि मुनयः सर्व एव ते ।
राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥ २१ ॥
अन्तरीक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ।
दानवाश्च महाकायाः पाताले पन्नगास्तथा ॥ २२ ॥
केचिद्विनेदुः संहृष्टाः केचिद्ध्यानपरायणाः ।
केचिद्रामं निरीक्षन्ते केचित् सीतामचिन्तयन् ॥ २३ ॥
मुहूर्त्तमिव तत् सर्वं तूष्णीभूतमचेतनं ।
सीताप्रवेशनं दृष्ट्वा जगदासीत् समाकुलं ॥ २४ ॥

इत्युत्तरकाण्डे सीतारसातलप्रवेशो नाम
चतुःशततमः सर्गः ॥

## उत्तरकाण्डं

### CV.

रसातलं प्रविष्टायां वैदेह्यां सर्वपार्थिवाः ।
विस्मयाच्च प्रहर्षाच्च शोकाच्चैव प्रचुक्रुशुः ॥ १ ॥
हाहाकारो महानासीद्दिवानां महदद्भुतं ।
दृष्ट्वा ऋषिगणानां च पार्थिवानां च विस्मयं ॥ २ ॥
दण्डकाष्ठमवष्टभ्य वास्पव्याकुलितेक्षणः ।
अवाक्शिरा दीनमना रामोऽप्यासीत् सुदुःखितः ॥ ३ ॥
स रुदित्वा चिरं कालमुष्णं वास्पमवासृजत् ।
क्रोधशोकसमाविष्टो रामो वाक्यमथाब्रवीत् ॥ ४ ॥
अभूतपूर्वः शोको मे मनः संस्प्रष्टुमिच्छति ।
पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ५ ॥
सा ममापश्यतो नीता लङ्कापारे महोदधेः ।
ततश्चापि मयानीता किं पुनर्वसुधातलात् ॥ ६ ॥
वसुधे त्वं भगवति सीतां निर्यातयस्व मे ।
दर्शयिष्यामि वा क्रोधं यथा मामवगच्छसि ॥ ७ ॥
कामं श्वश्रूर्ममैव त्वं त्वत्सकाशाद्धि मैथिली ।
कर्षता हलहस्तेन जनकेनोद्धृता पुरा ॥ ८ ॥
तस्मान्निर्यात्यतां सीता यद्यवेन्नास्ति ते मयि ।
दुहिता तव सीता हि नष्टावृष्टिरिवागता ॥ ९ ॥

एवं प्रसाद्यमानापि त्वं मया बहुमानतः ।
न चेद्दर्शयसे सीतां संबन्धः सोऽप्यकारणः ॥ १० ॥
साधु निर्यात्यतां सीता विवरं वा प्रयच्छ मे ।
पाताले नाकपृष्ठे वा वसेयं सह सीतया ॥ ११ ॥
आनयध्वं खनित्रं मे अद्याहं मैथिलीकृते ।
सपर्वतवनां कृत्स्नां खनिष्यामि वसुन्धरां ॥ १२ ॥
अद्य दास्यति वा सीतां तथारूपां स्वयं मही ।
नाशयिष्यामि वा भूमिं सर्वमापो भविष्यति ॥ १३ ॥
एवं ब्रुवति काकुत्स्थे क्रोधशोकसमन्विते ।
स्वयम्भुः पूर्वजो देवो ब्रह्मा वचनमब्रवीत् ॥ १४ ॥
राम राम न संतापं कर्तुमर्हसि मानद ।
स्मर त्वं पूर्वकं भावमात्मानममितौजसं ॥ १५ ॥
न खलु त्वां महाबाहो स्मारयेयमनुत्तमं ।
अस्यास्तु परिषन्मध्ये यद्ब्रवीमि निबोध तत् ॥ १६ ॥
एतदेव महाकाव्यं गेयेन समभिप्लुतं ।
सर्वं विस्तरतो राम व्याख्यास्यति न संशयः ॥ १७ ॥
जन्मप्रभृति ते वीर सुखदुःखोपसेवनं ।
भविष्यमुत्तरं चैव सर्वं वाल्मीकिना कृतं ॥ १८ ॥
आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितं ।
न ह्यन्योऽर्हति काव्यानां यशोभाग् राघवादृते ॥ १९ ॥

स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः ।
त्यज शोकं महाबाहो बुद्धिमानसि राघव ॥ २० ॥
शेषं भविष्यं काकुत्स्थ काव्यं रामायणं शृणु ।
अवधानपरश्चैव सहैभिर्मुनिपुङ्गवैः ॥ २१ ॥
उत्तमं नाम काव्यस्य शेषमत्र महायशः ।
तच्छृणुष्व महातेज ऋषिभिः सार्धमद्वयैः ॥ २२ ॥
न खल्वन्येन काकुत्स्थ श्रोतव्यमिदमुत्तमं ।
महर्षिभ्यश्च ते राम श्रावणीयं विशेषतः ॥ २३ ॥
एवमुक्त्वा तु भगवान् ब्रह्मा त्रिभुवनेश्वरः ।
जगाम त्रिदिवं देवो देवैः सह सवासवैः ॥ २४ ॥
ये च तत्र महात्मानो मुनयो ब्राह्मलौकिकाः ।
ब्रह्मणा तेऽभ्यनुज्ञाता न्यवसन्नमितौजसः ॥ २५ ॥
उत्तमं श्रोतुमनसो भविष्यं या च राघवे ।
प्राप्य लोके शुभां कीर्त्तिं भविष्यति शुभा गतिः ॥ २६ ॥
एतस्मिन्नन्तरे वाणी निःसृता धरणीतलात् ।
जहि त्वं राम संतापं कृतान्तो ह्यत्र कारणं ॥ २७ ॥
कांक्षसे यच्च वैदेहीं तद्वृथा परितप्यसे ।
दुर्लभं दर्शनं तस्यास्त्रैलोक्ये या प्रतिष्ठिता ॥ २८ ॥
इहस्था पूज्यते नागैर्मर्त्यलोके च मानुषैः ।
पितॄणां च सुधा स्वर्गे सा तृप्तिरमृताशिनां ॥ २९ ॥

श्रीवत्सवक्षसो देहे सैव लक्ष्मीः प्रतिष्ठिता ।
सिद्धानां स्वर्गसंस्थानां सा च सिद्धिः प्रतिष्ठिता ॥ ३० ॥
निवर्तय मतिं राम वैदेह्या दर्शनं प्रति ।
द्रष्टव्या यदि ते सीता पुत्रौ पश्य कुशीलवौ ॥ ३१ ॥
श्रूयतां च शुभं काव्यं सत्यं वाल्मीकिना कृतं ।
उत्तरे यद्भविष्यच्च यथा प्राह पितामहः ॥ ३२ ॥
ततो रामः शुभां वाणीं श्रुत्वा तां वसुधातलात् ।
पितामहवचः कुर्वन् वाल्मीकिमिदमब्रवीत् ॥ ३३ ॥
भगवन् श्रोतुमनसो ऋषयो ब्राह्मलौकिकाः ।
भविष्यदुत्तरं यन्मे श्वोभूते तत् प्रवर्त्यतां ॥ ३४ ॥
एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ ।
तं जनौघं विसृज्याथ कर्मशालामुपाविशत् ॥ ३५ ॥

इत्युत्तरकाण्डे पितामहदर्शनं नाम
पञ्चशततमः सर्गः ॥

## उत्तरकाण्डं

### CVI.

स रजन्यां प्रभातायां समानीय महामुनीन् ।
पुत्रावुवाच काकुत्स्थो गीयतां निर्विशङ्कया ॥ १ ॥
ततः समुपविष्टेषु महर्षिषु महात्मसु ।
भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ २ ॥
ततः श्रुत्वा रघुश्रेष्ठः काव्यमुत्तमसंज्ञकं ।
संस्तम्भयन्नपि मनो न विसस्मार मैथिलीं ॥ ३ ॥
अथावसाने यज्ञस्य तदा परमदुर्मनाः ।
अपश्यन् मैथिलीं रामो मेने शून्यमिदं जगत् ॥ ४ ॥
शोकनीहारसंछन्नो न शान्तिं समुपागमत् ।
विसृज्य पार्थिवान् सर्वान् ऋक्षवानरराक्षसान् ॥ ५ ॥
जनौघं द्विजमुख्यांश्च वित्तपूर्णान् व्यसर्जयत् ।
ततो विसृज्य तान् सर्वान् रामः राजीवलोचनः ॥ ६ ॥
हृदि कृत्वा तदा सीतामयोध्यां प्रविवेश ह ।
न चासावपरां भार्यां वव्रे राघवनन्दनः ॥ ७ ॥
यज्ञे यज्ञे च पत्नीं तां काञ्चनीं समकल्पयत् ।
दशवर्षसहस्राणि वाजिमेधानुपाहरत् ॥ ८ ॥
वाजपेयान् दशगुणान् बहून् बहुसुवर्णकान् ।
अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः ॥ ९ ॥

सौरामणिशतैश्चैव पार्थिवो रघुनन्दनः ।
ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः ॥ १० ॥
एवं स कालः सुमहान् राज्यस्थस्य महात्मनः ।
धर्मे प्रयतमानस्य राघवस्य जगाम ह ॥ ११ ॥
अन्वरज्यन्त राजानं प्रत्यहं रघुनन्दनं ।
ऋक्षवानररक्षांसि स्थितानि रामशासने ॥ १२ ॥
काले वर्षति पर्जन्य आभीक्ष्णं विपुला दिशः ।
हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा ॥ १३ ॥
नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनामभूत् ।
नाधार्मिकोऽभवत् कश्चिद्रामे राज्यं प्रशासति ॥ १४ ॥
अथ दीर्घस्य कालस्य राममाता यशस्विनी ।
पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥ १५ ॥
कैकेयी च महाभागा सुमित्रा च तपस्विनी ।
धर्मं कृत्वा बहुविधं त्रिदिवे पर्यवस्थिते ॥ १६ ॥
सर्वाः प्रतिष्ठिताः स्वर्गे राज्ञा दशरथेन हि ।
समागता महाभागाः सर्वा लोकांश्च भेजिरे ॥ १७ ॥
तासां रामो महादानं काले काले ददौ नृपः ।
मातॄणामविशेषेण ब्राह्मणेषु महात्मसु ॥ १८ ॥
पैत्रांश्च धनरत्नाढ्यान् यज्ञान् परमदुस्तरान् ।
चकार रामो धर्मात्मा पितॄन् देवांश्च तर्पयन् ॥ १९ ॥

एवं वर्षसहस्राणि सुबहून्यतिचक्रमुः ।
यज्ञैर्बहुविधैर्धर्मं वर्धयानस्य सर्वदा ॥ २० ॥

इत्युत्तरकाण्डे यज्ञावसानं नाम
षट्शततमः सर्गः ॥

# उत्तरकाण्डं

## CVII.

कस्यचिदथ कालस्य युधाजित् कैकयाधिपः ।
पुरोहितं प्रहितवान् राघवस्य महात्मनः ॥ १ ॥
गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभं ।
दश चाश्वसहस्राणि प्रीतिदानमनुत्तमं ॥ २ ॥
कम्बलादीनि रत्नानि चीरपट्टांस्तथोत्तमान् ।
बहु चाभरणं मुख्यं रामाय प्राहिणोन्नृपः ॥ ३ ॥
तं श्रुत्वा राघवो गार्ग्यं कैकेयात् समुपस्थितं ।
स मातुलस्याश्वपतेः प्रियभूतमनुत्तमं ॥ ४ ॥
प्रत्युद्गम्याथ काकुत्स्थः क्रोशमात्रं सहानुगः ।
गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिं ॥ ५ ॥
ततः संपूज्य तमृषिं धनं तत् प्रतिगृह्य च ।
महर्षिं तं पुरस्कृत्य रामः स्वपुरमाविशत् ॥ ६ ॥
प्रविष्टः प्रीतिमान् सर्वं कुशलं मातुलस्य ह ।
उपविष्टो महाराजः प्रष्टुं समुपचक्रमे ॥ ७ ॥
किमाह मातुलो वाक्यं यदर्थं भगवानिह ।
प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः ॥ ८ ॥
रामस्य भाषितं श्रुत्वा महर्षिः कार्यविस्तरं ।
वक्तुमद्भुतसंकाशं राघवायोपचक्रमे ॥ ९ ॥

मातुलस्त्वां महाबाहो वाक्यं यन्मानवर्षभ ।
युधाजित् प्रीतिसंयुक्तं श्रूयतां यदि रोचते ॥१०॥
अस्ति गन्धर्वविषयः फलमूलोपशोभितः ।
सिन्धोरुभयतः पार्श्वे देशः परमशोभनः ॥११॥
तं तु रक्षन्ति गन्धर्वा सायुधा युद्धकाङ्क्षिणः ।
शैलूषस्य सुता वीरास्तिस्रः कोट्यो महाबलाः ॥१२॥
तान् विनिर्जित्य काकुत्स्थ गन्धर्वविषयं शुभं ।
निवेशय महाबाहो द्वे पुरे सुसमाहितः ॥१३॥
नान्यस्य न गतिर्वीर देशश्चायं सुशोभनः ।
रम्यं पुष्पफलाकीर्णं निवेशय महामते ॥१४॥
अन्यो वा प्रेष्यतां जेतुं देशं तमृषिणा सह ।
रोचतां ते महाबाहो न हि त्वामहितं वदे ॥१५॥
तच्छ्रुत्वा राघवः प्रीतः संदेशं मातुलस्य च ।
उवाच बाढमित्येव भरतं चान्ववैक्षत ॥१६॥
सोऽब्रवीद्राघवः प्रीतः प्राञ्जलिप्रग्रहो द्विजं ।
इमौ कुमारौ ब्रह्मर्षे तं देशं विजयिष्यतः ॥१७॥
भरतस्यात्मजौ वीरौ तक्षः पुष्कर एव च ।
मातुलेन सुसंगुप्तौ धर्मेण सुसमाहितौ ॥१८॥
भरतश्चाग्रतः कृत्वा कुमारौ स बलानुगौ ।
निहत्य गन्धर्वसुतान् पुरे द्वे विभजिष्यति ॥१९॥

निवेश्य ते पुरे श्रेष्ठे आत्मजौ संनिवेश्य च ।
आगमिष्यति मे वीरः सकाशमिह धार्मिकः ॥ २० ॥
एवमुक्त्वा तु तमृषिं भरतं च बलानुगं ।
प्रेषयामास स तदा कुमारौ चाभ्यषेचयत् ॥ २१ ॥
नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरः सुतं ।
भरतः सह पुत्राभ्यां स्वबलेन विनिर्ययौ ॥ २२ ॥
सा सेना बलसंपन्ना सहिता निर्ययावथ ।
रामेणानुगता दूरं दुराधर्षा सुरैरपि ॥ २३ ॥
मांसाशीनि च सत्त्वानि रक्षांसि सुबहून्यपि ।
अनुगच्छन्ति भरतं रुधिरं तु पिपासवः ॥ २४ ॥
भूतग्रामाश्च बहवो मांसभक्षाः सुदारुणाः ।
गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः ॥ २५ ॥
सिंहव्याघ्रमृगाश्चैव खेचराश्चैव पक्षिणः ।
बहुसत्त्वसहस्राणि सेनाग्रे संप्रतस्थिरे ॥ २६ ॥
अर्धमासमुषित्वा सा पथि सेना निरामया ।
हृष्टपुष्टजनाकीर्णा केकेयान् समुपागमत् ॥ २७ ॥

इत्युत्तरकाण्डे भरतप्रयाणं नाम
सप्तशततमः सर्गः ॥

# उत्तरकाण्डं

## CVIII.

श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः ।
युधाजित् परमां प्रीतिमुपागमदनन्तरं ॥ १ ॥
स निर्ययौ जनौघेन महता केकयाधिपः ।
भरतेन समागम्य मन्त्रयामास चैव हि ॥ २ ॥
युधाजिद्भरतश्चैव समेतौ लघुविक्रमौ ।
गतौ गन्धर्वनगरं सबलौ सपदानुगौ ॥ ३ ॥
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः ।
योद्धुकामा महावीर्या विनदन्तः समन्ततः ॥ ४ ॥
सहसा ते ययुः सर्वे गन्धर्वाः कालचोदिताः ।
संनद्धा बद्धतूणीरा विविधायुधपाणयः ॥ ५ ॥
ततः समभवद्युद्धं तुमुलं लोमहर्षणं ।
सप्तरात्रं महाघोरं न चाभूद्विजयः क्वचित् ॥ ६ ॥
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणं ।
संवर्तं नाम भरतो गन्धर्वेषु न्ययोजयत् ॥ ७ ॥
ते बद्धाः कालकल्पेन संवर्तास्त्रेण दारिताः ।
क्षणेनैव हतास्तत्र तिस्रः कोट्यो महौजसः ॥ ८ ॥
एवं घोरं हि समरं न स्मरन्ति दिवौकसः ।
निमेषान्तरमात्रेण यः कृतो भरतेन ह ॥ ९ ॥

हत्वा चैव हि तान् वीरान् भरतः केकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ १० ॥
तक्षस्तक्षशीलां चैव पुष्करः पुष्करावतीं ।
गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ११ ॥
धनरत्नौघसंपूर्णे काननैरुपशोभिते ।
अन्योन्यं संघर्षकृते स्पर्द्धया गुणविस्तरैः ॥ १२ ॥
उभे सुरुचिरप्रख्ये व्यवहारैरकिल्विषैः ।
उद्यानयानसंपन्ने सुविभक्तान्तरापणे ॥ १३ ॥
उभे पुरोत्तमे रम्ये काननोत्तमशोभिते ।
गृहमुख्यैः सुरुचिरैर्विमानैर्बहुभिर्वृते ॥ १४ ॥
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः ।
पुनरायान्महाबाहुरयोध्यां कैकेयीसुतः ॥ १५ ॥
सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरं ।
राघवं भरतः श्रीमान् ब्राह्मणमिव वासवः ॥ १६ ॥
शशंस च यथावृत्तं गन्धर्वबधमुत्तमं ।
निवेशनं च देशस्य श्रुत्वा प्रीतश्च राघवः ॥ १७ ॥

इत्युत्तरकाण्डे गन्धर्वविषयनिवेशनं नाम
अष्टशततमः सर्गः ॥

## CIX.

तच्छ्रुत्वा हर्षमापेदे भ्रातृभिः सह राघवः ।
वाक्यं चाद्भुतसंकाशं रामो भ्रातॄनभाषत ॥ १ ॥
इमौ कुमारौ सौमित्रे तव धर्मविशारदौ ।
अङ्गदश्चन्द्रकेतुश्च राज्यार्हौ दृढधन्विनौ ॥ २ ॥
उभौ राज्येऽभिषेक्ष्यामि देशं साधु निरूपय ।
रमणीयमसंबाधं रमेतां यत्र संस्थितौ ॥ ३ ॥
न राज्ञां यत्र पीडा स्यान्न चैवाश्रमवासिनां ।
स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥ ४ ॥
तथोक्तवति रामे तु भरतः प्रत्युवाच ह ।
अयं कारपथो देशो रमणीयो निरामयः ॥ ५ ॥
निवेशय पुरीं वीर अङ्गदस्य महात्मनः ।
चन्द्रकेतोश्च रुचिरं चन्द्रवक्त्रं मनोरमं ॥ ६ ॥
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः ।
तं च कारपथं देशमङ्गदस्य न्यवेशयत् ॥ ७ ॥
अङ्गदीया पुरी रम्या ह्यङ्गदस्य निवेशिता ।
रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥ ८ ॥
चन्द्रकेतोः कुमारस्य मल्लभूमिर्निवेशिता ।
चन्द्रवक्त्रेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ९ ॥

ततोः रामः परां प्रीतिं भरतश्च सलक्ष्मणः ।
ययुर्युधि दुराधर्षौ कुमारौ चाभ्यषेचयन् ॥ १० ॥
अभिषिच्य कुमारौ तु प्रस्थाप्य च महाबलौ ।
अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमथोत्तरां ॥ ११ ॥
अङ्गदस्य च सौमित्रिर्लक्ष्मणोऽनुजगाम ह ।
चन्द्रकेतोस्तु भरतः पार्ष्णिं जग्राह वीर्यवान् ॥ १२ ॥
लक्ष्मणस्त्वङ्गदीयायां सम्वत्सरमथोषितः ।
पुत्रे स्थिते दुराधर्षे अयोध्यां पुनरागमत् ॥ १३ ॥
भरतोऽपि तथोषित्वा सम्वत्सरमुदारधीः ।
अयोध्यां पुनरागम्य रामपादावुपास्त सः ॥ १४ ॥
उभौ सौमित्रिभरतौ रामपादाभिनन्दितौ ।
कालं गतमपि स्नेहाद्धार्मिकौ नावगच्छतां ॥ १५ ॥
एवं दशसहस्राणि दशवर्षशतानि च ।
ययुस्तेषां सुमनसां यशः प्रथयतां भुवि ।
धर्मे प्रयतमानानां पौरकार्येषु चैव हि ॥ १६ ॥

विहृत्य कालं परिपूर्णमानसाः
श्रिया वृता धर्मपथेषु संस्थिताः ।
तपः समृद्धाः शुभदीप्ततेजसो
हुताग्निकल्पाः प्रबभुर्नराधिपाः ॥ १७ ॥

इत्युत्तरकाण्डे लक्ष्मणपुत्रयोरभिषेको नाम नवशततमः ॥

# उत्तरकाण्डं

## CX.

कस्यचित् त्वथ कालस्य रामे धर्मपथि स्थिते ।
कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥
सोऽब्रवील्लक्ष्मणं वाक्यं धृतिमन्तं यशस्विनं ।
मां निवेदय रामाय संप्राप्तं कार्यगौरवात् ॥ २ ॥
दूतो ह्यतिबलस्याहं महर्षेरमितौजसः ।
दिदृक्षुरागतो रामं त्वरितं मां निवेदय ॥ ३ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः ।
आचचक्षे स रामाय संप्राप्तं तु तपोधनं ॥ ४ ॥
जयस्व राजधर्मेण उभौ लोकौ महामते ।
दूतस्त्वां द्रष्टुमायातस्तपस्वी भास्करप्रभः ॥ ५ ॥
इति ब्रुवाणं सौमित्रिं राघवः प्रत्युवाच ह ।
प्रवेश्यतां मुनिस्तात सत्कृतः पूर्वमेव हि ॥ ६ ॥
सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयदृषिं ततः ।
तेजसा तपसा चैव ज्वलन्तमिव पावकं ॥ ७ ॥
सोऽभिगम्य नरश्रेष्ठं राघवं रघुनन्दनं ।
ऋषिर्मधुरया वाचा वर्धस्वेति ततोऽब्रवीत् ॥ ८ ॥
तस्मै रामो महाबाहुः पूजामर्घ्यपुरोगमां ।
निवेद्य कुशलं पश्चात् प्रष्टुं समुपचक्रमे ॥ ९ ॥

पृष्टश्च कुशलं तेन रामोऽपि वदतां वरः ।
आसने काञ्चने शुभ्रे निषसाद् महायशाः ॥ १० ॥
तमुवाच ततो रामः स्वागतं ते महामुने ।
मन्त्रयस्व च वाक्यानि यदर्थं त्वमिहागतः ॥ ११ ॥
चोदितो राजसिंहेन मुनिर्वाक्यमथाब्रवीत् ।
द्वन्द्वे ह्येतत् तु वक्तव्यं न श्रोतव्यं हि केनचित् ॥ १२ ॥
यश्चैव शृणुयादेतत् स बध्यस्तव राघव ।
महर्षेर्मुनिमुख्यस्य वचनं यद्यवेक्षसे ॥ १३ ॥
तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् ।
द्वारि तिष्ठ महाबाहो प्रतीहारं विसर्जय ॥ १४ ॥
स मे बध्यः खलु भवेत् कथां द्वन्द्वसमीरितां ।
ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः ॥ १५ ॥
तथा निक्षिप्य सौमित्रिं लक्ष्मणं द्वारसंग्रहे ।
उवाच तं महात्मानं कथयस्वेति राघवः ॥ १६ ॥
यत् ते मनीषितं वाक्यं येन चासि समागतः ।
कथयस्व विशङ्कस्त्वं ममापि हृदि वर्तते ॥ १७ ॥

इत्युत्तरकाण्डे कालाभिगमनं नाम
दशशततमः सर्गः ॥

# उत्तरकाण्डं

## CXI.

शृणु राजन् महासत्त्व यदर्थमहमागतः ।
पितामहेन देवेन प्रेषितोऽस्मि तवान्तिकं ॥ १ ॥
तवाहं पूर्वके देहे पुत्रः परपुरंजय ।
मायासंभव एषोऽस्मि कालः सर्वहरः प्रभुः ॥ २ ॥
पितामहस्त्वां भगवानाह देवर्षिपूजितः ।
समयस्ते महाबाहो त्रींल्लोकान् परिरक्षितुं ॥ ३ ॥
संक्षिप्य हि पुरा लोकान् वीर त्वं मायया सह ।
भार्यया शुभया देव्या जलं पूर्वमजीजनः ॥ ४ ॥
भोगवन्तं ततो नागमनन्तमुदके शयं ।
मायया जनयित्वा तु द्वे सत्त्वे सुमहाबले ॥ ५ ॥
मधुकैटभविख्याते ययोर्भूरस्थिसंचयैः ।
अभूत् पर्वतसंबाधा मेदिनी मेदसा तया ॥ ६ ॥
पद्मे तु दिव्यसंकाशे नाभ्यामुत्पाद्य मां ततः ।
प्रजापतीन् समुत्पाद्य मयि सर्वं न्यवेशयः ॥ ७ ॥
सोऽहं संन्यस्तभारोऽपि त्वामवोचं जगत्पते ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भव ॥ ८ ॥
ततस्त्वमपि दुर्धर्ष भावात् तस्मात् सनातनात् ।
रक्षार्थं सर्वभूतानां विष्णुत्वं समपाद्ययाः ॥ ९ ॥

अदित्यां वीर्यवान् पुत्रः काश्यपात् समजायथाः ।
समुत्पन्नेषु कार्येषु लोकसह्याय कल्पसे ॥ १० ॥
स त्वमुज्जास्यमानासु प्रजासु जयतां वर ।
रावणस्य बधाकांक्षी मर्त्यलोकमुपागतः ॥ ११ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
कृतो रामस्य नियमः स्वयमेवात्मनस्त्वया ॥ १२ ॥
स ते मनोगतः कालः संपूर्णो मानुषेष्विह ।
कालस्ते देव देवानां समीपे परिवर्तितुं ॥ १३ ॥
अतो भूयश्च ते श्रद्धा यदि राज्यमुपासितुं ।
एवं भवतु काकुत्स्थ एवमाह पितामहः ॥ १४ ॥
यदिवा गमने बुद्धिर्देवलोकं जितेन्द्रियः ।
सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ १५ ॥
अहं मनोगतः पुत्रः पूर्णायुः प्राणिनामिह ।
कालस्तापसरूपेण त्वत्सकाशमिहागतः ॥ १६ ॥
श्रुत्वा पितामहस्यैतद्वाक्यं कालसमीरितं ।
राघवः प्रहसन् वाक्यं सर्वसंहारमब्रवीत् ॥ १७ ॥
श्रुतं मे देवदेवस्य वाक्यमेतन्ममेप्सितं ।
प्रीतिश्च मे परा जाता तवागमनसंभवा ॥ १८ ॥
भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ।
हृतश्चापि संप्राप्तो न मेऽत्रास्ति विचारणा ॥ १९ ॥

मयापि पूर्वके कृत्ये देवानां वशवर्तिना ।
स्थातव्यं सर्वसंहार यथाह स पितामहः ॥ २० ॥
तथा तयोः संवदतोर्दुर्वासा मुनिपुङ्गवः ।
रामस्य दर्शनाकांक्षी राजद्वारमुपागमत् ॥ २१ ॥
सोऽभिगम्य महात्मानं सौमित्रिमिदमब्रवीत् ।
रामं दर्शय मे शीघ्रं कार्यमात्ययिकं हि मे ॥ २२ ॥
ऋषेस्तु वचनं श्रुत्वा लक्ष्मणो वाक्यमब्रवीत् ।
अभिवाद्य महात्मानं मुनिं ज्वलनसंनिभं ॥ २३ ॥
किं कार्यं ब्रूहि भगवन् केनार्थः किं करोम्यहं ।
व्यग्रोऽसौ पार्थिवो ब्रह्मन् मुहूर्त्तं संप्रतीक्ष्यतां ॥ २४ ॥
तच्छ्रुत्वा मुनिशार्दूलः क्रोधेन कलुषीकृतः ।
उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥ २५ ॥
अस्मिन् मुहूर्त्ते सौमित्रे राघवाय निवेदय ।
अन्यथा क्रियमाणे तु वाक्ये वाक्यविशारद ॥ २६ ॥
विषयं च पुरं चैव शपेयं राघवं तथा ।
भरतं त्वां च शत्रुघ्नं युष्माकं चैव संततिं ॥ २७ ॥
न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि ।
तच्छ्रुत्वा घोरसंकाशं मुनिना व्याहृतं वचः ॥ २८ ॥
चिन्तयामास सौमित्रिस्तस्य वाक्यस्य निश्चयं ।
एकस्य मरणं मेऽस्तु माभूत् सर्वविनाशनं ॥ २९ ॥

इत्यसौ निश्चयं कृत्वा रामाय प्रत्यवेदयत् ।
लक्ष्मणस्य वचः श्रुत्वा रामः कालं व्यसर्जयत् ॥ ३० ॥
विनिष्पत्य त्वरायुक्तः पुत्रमत्रेर्ददर्श ह ।
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ॥ ३१ ॥
किं कार्यमिति काकुत्स्थः कृताञ्जलिरभाषत ।
तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुः ॥ ३२ ॥
प्रत्युवाच ततो रामं दुर्वासाः श्रूयतामिति ।
अद्य वर्षसहस्रस्य समाप्तिर्मम राघव ॥ ३३ ॥
क्षुधितो भोक्तुमिच्छन् वै त्वामायातो रघूत्तम ।
सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ ॥ ३४ ॥
तच्छ्रुत्वा वचनं रामो हर्षेणाभिपरिप्लुतः ।
भोजनं विप्रमुख्याय यथासिद्धमुपानयत् ॥ ३५ ॥
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमं ।
साधु रामेति संभाष्य स्वमाश्रममुपागमत् ॥ ३६ ॥
तस्मिन् गते महाप्राज्ञे प्रीते च मनुजाधिपः ।
संस्मरन् कालवाक्यानि ततो दुःखमुपागमत् ॥ ३७ ॥
स दुःखेन समाविष्टः स्मृत्वा तं नियमं कृतं ।
अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह ॥ ३८ ॥
ततो बुद्ध्या विनिश्चित्य कालवाक्यं विचिन्त्य च ।
नैतदस्तीति चैवोक्त्वा तूष्णीमासीन्महामतिः ॥ ३९ ॥

# उत्तरकाण्डं

## CXII.

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतं ।
राघवं लक्ष्मणो वाक्यं प्रहृष्ट इदमब्रवीत् ॥ १ ॥
न संतापं महाबाहो कर्तुमर्हसि मत्कृते ।
पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ २ ॥
जहि मां निर्विशङ्कस्त्वं सत्यं पालय सुव्रत ।
हीनप्रतिज्ञः काकुत्स्थ व्रजेद्धि नरकं ध्रुवं ॥ ३ ॥
मयि ते यद्यनुक्रोशो यद्यनुग्राह्यता मयि ।
जहि मां निर्विशङ्कस्त्वं सत्यं पालय सुव्रत ॥ ४ ॥
लक्ष्मणस्य वचः श्रुत्वा रामः संक्षुभितेन्द्रियः ।
मन्त्रिणः स्वान् समानीय वशिष्ठं च पुरोधसं ॥ ५ ॥
अब्रवीत् तु यथावृत्तं तेषां मध्ये नराधिपः ।
दुर्वाससोऽभिगमनं प्रतिज्ञां चैव तापसे ॥ ६ ॥
तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः सनैगमाः ।
पुरोहितो वशिष्ठश्च राघवं वाक्यमब्रवीत् ॥ ७ ॥
दृष्टमेतन्महाबाहो क्षमं ते पुरुषर्षभ ।
लक्ष्मणस्य विना भावस्त्वया सार्धं नराधिप ॥ ८ ॥
त्यजैनं बलवान् कालः प्रतिज्ञां परिपालय ।
विपन्नायां प्रतिज्ञायां धर्मस्ते नाशमेष्यति ॥ ९ ॥

ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरं ।
सदेवर्षिगणं सर्वं विपद्येत न संशयः ॥ १० ॥
स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः ।
लक्ष्मणेन विना चाद्य त्रैलोक्यं त्रातुमर्हसि ॥ ११ ॥
जानीमस्त्वां महाबाहो भ्रातृषु स्नेहवत्सलं ।
त्वां च जानीमहे यस्त्वं स्मरयामो यतोऽनघ ॥ १२ ॥
नास्मान् दोषेण काकुत्स्थ गन्तुमर्हसि सुव्रत ।
त्वयि हीनप्रतिज्ञे हि लक्ष्मणोऽपि निरर्थकः ॥ १३ ॥
प्रत्यक्षं ते महाबाहो प्रतिज्ञां परिरक्षता ।
त्यक्तो दशरथेन त्वं वनवासाय पार्थिव ॥ १४ ॥
त्वत्कृतेन च शोकेन स्वर्गं दशरथो गतः ।
कल्याणवृत्तकल्याणः साधुवृत्तो महीपतिः ॥ १५ ॥
तथा त्वमपि दुर्धर्ष प्रतिज्ञां परिपालय ।
त्रैलोक्यस्य हितार्थाय लक्ष्मणं त्यक्तुमर्हसि ॥ १६ ॥
तेषां तत् समवेतानां वाक्यं धर्मार्थसंहितं ।
श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥ १७ ॥
परित्यक्तोऽसि सौमित्रे माभूद्धर्मविपर्ययः ।
परित्यागो बधो वापि साधूनामुभयं समं ॥ १८ ॥
रामस्य भाषितं श्रुत्वा शोकव्याकुलिताक्षरं ।
तत् क्षणं त्वरितः प्रायाल्लक्ष्मणो व्याकुलेन्द्रियः ॥ १९ ॥

स गत्वा सरयूतीरमुपस्पृश्य यथाविधि ।
निगृह्य सर्वस्रोतांसि नोच्छ्वासं प्रमुमोच ह ॥ २० ॥
यत् तदक्षरमव्यक्तं परं ब्रह्म सनातनं ।
पदं तद्वासुदेवाख्यमात्मनः सोऽभ्यचिन्तयत् ॥ २१ ॥
अन्तः श्वसनयुक्तं तु सशक्राः साप्सरोगणाः ।
देवाः सर्षिगणाः सर्वे पुष्पवर्षैरवाकिरन् ॥ २२ ॥
अदृश्यं मनुजैः कैश्चित् सशरीरं च वासवः ।
गृहीत्वा लक्ष्मणं हृष्टो नाकपृष्ठमुपागमत् ॥ २३ ॥
ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः ।
प्रहृष्टमनसः सर्वेऽपूजयन् समहर्षयः ॥ २४ ॥

इत्युत्तरकाण्डे दुर्वाससः आगमनं नाम
एकादशशततमः सर्गः — लक्ष्मणवियोगो नाम
द्वादशशततमः सर्गः ॥

# उत्तरकाण्डं

## CXIII.

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः ।
वशिष्ठं मन्त्रिणश्चैव नैगमांश्चेदमब्रवीत् ॥ १ ॥
अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलं ।
अयोध्यायां महाबाहुं ततो यास्याम्यहं वनं ॥ २ ॥
प्रवेशयत संभारान् न स्यात् कालात्ययो यथा ।
अद्यैवाहं गमिष्यामि लक्ष्मणस्य पदानुगः ॥ ३ ॥
एवं ब्रुवति काकुत्स्थे सर्वाः प्रकृतयस्तदा ।
मूर्द्धभिः प्रणता भूमौ गतसत्त्वा इवाभवन् ॥ ४ ॥
भरतश्च विषण्णोऽभूच्छ्रुत्वा रामस्य भाषितं ।
राज्यं विगर्हयामास राघवं चेदमब्रवीत् ॥ ५ ॥
सत्येनाहं शपे राजन् स्वर्गलोकेन चैव हि ।
न कामये यथा राज्यं विना त्वां रघुनन्दन ॥ ६ ॥
इमौ कुशीलवौ राजन्नभिषिञ्च परंतप ।
कोशलायां कुशं वीरमुत्तरायां लवं नृपं ॥ ७ ॥
शत्रुघ्नस्य तु गच्छन्तु दूता विस्तरवादिनः ।
इदं गमनमस्माकं स्वर्गायाख्यान्तु मा चिरं ॥ ८ ॥
भरतस्य वचः श्रुत्वा प्रकृतीस्ताः सुदुःखिताः ।
दृष्ट्वा चाधोमुखीः सर्वा वशिष्ठो वाक्यमब्रवीत् ॥ ९ ॥

वत्स राम इमाः पश्य धरणीं प्रकृतीर्गताः ।
विद्यासामीप्सितं काममासां मा विप्रियं कृथाः ॥१०॥
वशिष्ठस्य तु वाक्येन उत्थाप्य प्रकृतीजनं ।
किं करोमीति सस्नेहो राघवो वाक्यमब्रवीत् ॥११॥
ततः प्रकृतयो रामं प्रत्यूचुः साञ्जलिग्रहाः ।
गच्छन्तमनुगच्छामो येन गच्छसि राघव ॥१२॥
एषा नः परमा प्रीतिरेष धर्मः सनातनः ।
हृद्गता नः सदा बुद्धिस्तवानुगमने दृढं ॥१३॥
पौरेषु यदि ते स्नेहो यद्यनुग्रहश्चता नृप ।
सपुत्रदारा राजंस्त्वामनुगच्छाम सत्पथं ॥१४॥
तपोधनवनं वापि स्वर्गं वा जयतां वर ।
वयं ते यदि न त्याज्याः सर्वान् नयतु नो भवान् ॥१५॥
तेषां तु निश्चयं ज्ञात्वा कृतान्तस्य च तद्बलं ।
अष्टौ रथसहस्राणि सहस्रं चैव दन्तिनां ॥१६॥
षष्टिं चाश्वसहस्राणि प्रत्येकं दत्तवान् बलं ।
बहुरत्नौ बहुधनौ हृष्टपुष्टजनावृतौ ॥१७॥
अभ्यषिञ्चन्महात्मानावुभावेव कुशीलवौ ।
कोशलेषु कुशं वीरमुत्तरेषु तथा लवं ॥१८॥
अभिषिच्य सुतौ वीरौ संप्रस्थाप्य च राघवः ।
दूतान् संप्रेषयामास शत्रुघ्नाय महात्मने ॥१९॥

ते दूताः कोशलेन्द्रेण चोदिता लघुविक्रमाः ।
प्रयाता मथुरां शीघ्रं न च मार्गे तदावसन् ॥ २० ॥
अहोरात्रैस्त्रिभिस्ते तु संप्राप्ता मथुरां पुरीं ।
शत्रुघ्नाय यथावृत्तं सर्वं ते व्याचचक्षिरे ॥ २१ ॥
लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य च ।
अनुरागं च पौराणामभिषेकं च पुत्रयोः ॥ २२ ॥
कुशस्य च पुरीं रम्यां विन्ध्यपर्वतसानुषु ।
कुशवतीति या नाम्ना विख्याता सर्वतो दिशं ॥ २३ ॥
लवस्य च पुरीं रम्यां श्रावतीं लोकविश्रुतां ।
अयोध्यां विजनां कृत्वा राघवो भरतस्तथा ॥ २४ ॥
स्वर्गस्य गमनोद्योगं कृतवन्तौ महारथौ ।
एवं सर्वं निवेद्याशु शत्रुघ्नाय महात्मने ॥ २५ ॥
विरेमुस्ते ततो दूतास्त्वर राजेति चाब्रुवन् ।
तं श्रुत्वा घोरसंकाशं कुलक्षयमुपस्थितं ॥ २६ ॥
स पौराननयामास काञ्चनं च पुरोहितं ।
तेषां सर्वं यथातत्त्वमाख्याय रघुनन्दनः ॥ २७ ॥
आत्मनश्च विपर्यासं भाविनं भ्रातृभिः सह ।
ततः पुत्रद्वयं वीरः सोऽभ्यषिञ्चन्महारथः ॥ २८ ॥
सुबाहुर्मथुरां लेभे शत्रुघाती तु वै दिशं ।
द्विधा कृत्वा तु तत् सैन्यं पुत्राभ्यां प्रददौ तदा ॥ २९ ॥

धनधान्यसमायुक्तौ स्थापयित्वा स पार्थिवौ ।
जगाम त्वरितोऽयोध्यां रथेनैकेन राघवः ॥ ३० ॥
स ददर्श ततो गत्वा ज्वलन्तमिव पावकं ।
क्षौमशुक्लाम्बरधरं मुनिभिः सार्धमास्थितं ॥ ३१ ॥
अभिवाद्य ततो रामं प्राञ्जलिः स नमस्कृतः ।
उवाच वाक्यं धर्मज्ञो धर्ममेवानुचिन्तयन् ॥ ३२ ॥
कृत्वाभिषेकं सुतयोरागतोऽस्मि रघूत्तम ।
तवानुगमने राजन् विद्धि मां कृतनिश्चयं ॥ ३३ ॥
न चाहं प्रतिवक्तव्य उत्तरं तव शासनं ।
त्यक्तुं नार्हसि मां वीर भक्तिमन्तं विशेषतः ॥ ३४ ॥
तस्य तां बुद्धिमक्लीबां विज्ञाय रघुनन्दनः ।
बाढमित्येव शत्रुघ्नं राघवो वाक्यमब्रवीत् ॥ ३५ ॥
तस्य वाक्यस्य चायान्ते वानराः कामरूपिणः ।
ऋक्षराक्षससंघाश्च समापेतुरनेकशः ॥ ३६ ॥
देवपुत्रा ऋषिसुता गन्धर्वाणां सुतास्तथा ।
रामक्षयं विदित्वा ते सर्व एव समागताः ॥ ३७ ॥
ते राममभिवाद्याहुर्ऋक्षवानरराक्षसाः ।
तवानुगमनार्थं हि संप्राप्ताः स्मो महामते ॥ ३८ ॥
यदि राम विनास्माभिर्गच्छेस्त्वं पुरुषर्षभ ।
यमदण्डमिवोद्यम्य त्वया स्म विनिपातिताः ॥ ३९ ॥

श्रुत्वा तु वचनं तेषां ऋक्षवानरराक्षसां ।
विभीषणमथोवाच राघवः श्लक्ष्णया गिरा ॥ ४० ॥
यावदेव धरिष्यन्ति प्रजास्तावद्विभीषण ।
राक्षसेषु महाराज्यं लङ्कास्थः पालयिष्यसि ॥ ४१ ॥
शापितस्त्वं सखित्वेन कार्यं ते मम शासनं ।
प्रजास्त्वं रक्ष धर्मेण नोत्तरं वक्तुमर्हसि ॥ ४२ ॥
एवमुक्त्वा तु काकुत्स्थो हनूमन्तमथाब्रवीत् ।
वायुपुत्र चिरं जीव न मद्वाक्यं वृथा कुरु ॥ ४३ ॥
यावल्लोकेषु स्थास्यन्ति मत्कथा वानरर्षभ ।
तावत् त्वं धारयन् प्राणान् प्रतिज्ञां परिपालय ॥ ४४ ॥
मैन्दश्च द्विविदश्चोभावमृतप्राशिनौ हरी ।
यावल्लोका धरिष्यन्ति तावदेतौ भविष्यतः ॥ ४५ ॥
पुत्रपौत्राश्च युष्माकं धर्मं प्राप्स्यन्ति वानराः ।
अतस्ते व्याहरिष्यन्ति न चोर्ध्वं मानुषीं गिरं ॥ ४६ ॥
एवमुक्त्वा तु काकुत्स्थस्तदा तानृक्षवानरान् ।
बाढमित्येव गच्छध्वं मया सार्धमथाब्रवीत् ॥ ४७ ॥

इत्युत्तरकाण्डे शत्रुघ्नपुत्राभिषेको नाम
त्रिदशशततमः सर्गः ॥

# उत्तरकाण्डं

## CXIV.

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥ १ ॥
अग्नयो मे प्रयान्त्वग्रे दीप्यमाना द्विजैर्वृताः ।
वाजपेयातपत्राणि निर्यान्तु मम चाग्रतः ॥ २ ॥
ततो वशिष्ठस्तेजस्वी सर्वं निरवशेषतः ॥
चकार विधिवद्धर्मं महाप्रस्थानिकीं विधिं ॥ ३ ॥
ततः क्षौमाम्बरो रामो ब्रह्मचारी समाहितः ।
कुशान् गृहीत्वा पाणिभ्यां महाप्रस्थानमुद्यतः ॥ ४ ॥
अव्याहरन् क्वचित् किञ्चिन्निःशब्दो निःसुखः पथि ।
निर्जगाम गृहात् तस्माद्दीप्यमानो यथांशुमान् ॥ ५ ॥
सव्ये पार्श्वे तु रामस्य पद्मा श्रीः सुसमाहिता ।
दक्षिणे ह्रीर्विशालाक्षी व्यवसायस्तथाग्रतः ॥ ६ ॥
शरा नानाविधास्तत्र धनुश्चायतमुत्तमं ।
अनुव्रजन्ति काकुत्स्थं सर्वे मानुषविग्रहाः ॥ ७ ॥
वेदा ब्राह्मणरूपेण सावित्री ब्रह्मरूपिणी ।
ओंकारोऽथ वषट्कारः सर्वे राघवमन्वयुः ॥ ८ ॥
ऋषयश्च महात्मानः सर्व एव समाहिताः ।
अनुव्रजन्ति काकुत्स्थं स्वर्गमार्गमुपस्थितं ॥ ९ ॥

तं यान्तमनुगच्छन्ति ह्यन्तःपुरवरस्त्रियः ।
सवृद्धबालदासीकाः सवर्षवरकोविदाः ॥ १० ॥
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ।
रामगतिमुपागम्य राघवं समनुव्रतः ॥ ११ ॥
ततो विप्रा महात्मानः साग्निहोत्राः समाहिताः ।
सपुत्रदाराः काकुत्स्थमनुगच्छन्ति राघवं ॥ १२ ॥
मन्त्रिणो भृत्यवर्गाश्च पौरवर्गाः सबान्धवाः ।
सर्वे सहानुगा राममन्वगच्छन् प्रहृष्टवत् ॥ १३ ॥
ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः ।
अनुगच्छन्ति गच्छन्तं राघवं गुणरञ्जिताः ॥ १४ ॥
राघवस्यानुगा लोकाः सर्वे विगतकल्मषाः ।
स्नाताः प्रमुदिताः सर्वे सर्वे राममनुव्रजन् ॥ १५ ॥
न तत्र कश्चिद्दीनोऽभून्मलिनो वापि दुःखितः ।
हृष्टं पुष्टमिदं सर्वमन्वगच्छत् पुरं महत् ॥ १६ ॥
द्रष्टुकामोऽथ निर्याणं राज्ञो जानपदो जनः ।
संप्राप्तः सोऽपि संप्रेक्ष्य राममेवाभ्ययत् तदा ॥ १७ ॥
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः ।
जग्मुः परमया लक्ष्म्या पृष्ठतः सुसमाहिताः ॥ १८ ॥
यानि भूतानि नगरे ह्यन्तर्धानगतान्यपि ।
रामं तान्यनुयान्ति स्म स्वर्गद्वारमुपागतं ॥ १९ ॥

यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च ।
सत्त्वानि प्रस्थितं स्वर्गमनुयान्ति स्म तान्यपि ॥ २० ॥
नोच्छ्वसत् तदयोध्यायां सुसूक्ष्ममपि दृश्यते ।
राममेवानुयातेषु तिर्यग्योनिगतेष्वपि ॥ २१ ॥
उत्सवः सुमहांस्तत्र हर्षात् शोकप्रणाशनः ।
सततं राजसिंहेन पुत्रवत् पालिते जने ॥ २२ ॥

इत्युत्तरकाण्डे महाप्रस्थानं नाम
चतुर्दशशततमः सर्गः ॥

# उत्तरकाण्डं

## CXV.

अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रितां ।
सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥ १ ॥
तां नदीमेककूलेन सर्वामनुसरन् नृपः ।
आगतः सपुरामात्यस्तं देशं रघुनन्दनः ॥ २ ॥
अथ तस्मिन् मुहूर्त्ते तु ब्रह्मा लोकपितामहः ।
सर्वैः परिवृतो देवैर्ऋषिभिश्च महात्मभिः ॥ ३ ॥
आगच्छद्यत्र काकुत्स्थः स्वर्गाय समुपस्थितः ।
विमानवरकोटीभिर्दिव्याभिरभिसंवृतः ॥ ४ ॥
आदीप्य सर्वमाकाशं ज्योतिर्भूतमनुत्तमं ।
आगतैस्तैः स्वतेजोभिः स्वर्गिभिः पुण्यकर्मभिः ॥ ५ ॥
पुण्या वाता ववुस्तत्र गन्धवन्तः सुखावहाः ।
महौघश्चापि पुष्पाणां नाकपृष्ठात् पपात ह ॥ ६ ॥
तस्मिंस्तूर्यशताकीर्णे गन्धर्वाप्सरसायुते ।
सरयूपुलिने रामः पद्भ्यामेवोपचक्रमे ॥ ७ ॥
ततः पितामहो वाणीमन्तरीक्षादभाषत ।
आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि मानद ॥ ८ ॥
भ्रातृभिः सह देवाभैः प्रविशस्व स्वकां तनूं ।
वैष्णवीं सुमहातेजास्तवाकाशं सनातनं ॥ ९ ॥

त्वं हि लोकपतिर्देव न हि केचित् प्रजानते ।
ऋते मत्तो विशालाक्ष भूतपूर्वपरिग्रहं ॥१०॥
यामिच्छसि महातेजस्तां तनूं प्रविश स्वयं ।
पितामहवचः श्रुत्वा बुद्ध्या संचिन्त्य राघवः ॥११॥
विवेश वैष्णवं तेजः सशरीरः सहानुजः ।
ततो विष्णुगतं देवं पूजयन्ति सुरेश्वरं ॥१२॥
साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमाः ।
ये च दिव्या ऋषिगणा गन्धर्वाप्सरसश्च याः ॥१३॥
सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः ।
सर्वे प्रहृष्टास्त्वरिताः सुसंपूर्णमनोरथाः ॥१४॥
साधु साध्वित्यभाषन्त त्रिदिवे विगतज्वराः ।
अत विष्णुर्महातेजाः पितामहमुवाच ह ॥१५॥
एषां स्थानं तु लोकानां दातुमर्हसि सुव्रत ।
एते हि सर्वे स्नेहान्मामनुयान्ति यशस्विनः ॥१६॥
भक्ताश्च गमने शक्तास्त्यक्तात्मानश्च मत्कृते ।
तच्छ्रुत्वा विष्णुवचनं ब्रह्मा वाक्यमथाब्रवीत् ॥१७॥
लोकान् संतानकान् राम यास्यन्ति सुसमाहिताः ।
यश्च तिर्यग्गतोऽप्यत्र राममेवानुचिन्तयन् ॥१८॥
प्राणांस्त्यक्ष्यति भक्त्या वै सन्ताने स निवत्स्यति ।
एवं संतानके वासो ब्रह्मलोकादनन्तरं ॥१९॥

कीर्त्तिर्यावच्च रामस्य तावदेषां भविष्यति ।
वानराश्च वियोनित्वं ऋक्षराक्षसजातयः ॥ २० ॥
तिर्यग्योनि समुत्सृज्य यान्तु पूर्वां स्वकां तनूं ।
सर्वेभ्यो नागयक्षेभ्यः स्वस्थानं प्राप्नुवन्तु च ॥ २१ ॥
येभ्यो विनिःसृता ह्येते देवदानवविक्रमाः ।
ते श्रयिष्यन्ति तानेव स्वर्गे देवर्षिसेविते ॥ २२ ॥
तथोक्तवति देवेशे गोप्रचारमुपागमत् ।
तत् सर्वं सरयूं भेजे हर्षपूर्णेन चेतसा ॥ २३ ॥
अवगाह्याभवत् प्रीतो यो यस्तत् सलिलं ततः ।
मानुषं देहमुत्सृज्य विमानं चारुरोह सः ॥ २४ ॥
तिर्यग्योनिगतानां च सर्वेषां सरयूजले ।
दिव्यं वपुः समभवत् भास्करस्येव संपदा ॥ २५ ॥
जङ्गमानि च सत्त्वानि स्थावराणि तथैव च ।
प्राप्य तं तोयविक्लेदं स्वर्गलोकमुपागमन् ॥ २६ ॥
नानामुखैः समायाता ऋक्षवानरराक्षसाः ।
स्वानेव विविशुः सर्वे देहान् निक्षिप्य तेऽम्भसि ॥ २७ ॥
तथा स्वर्गगतिं कृत्वा रामः सर्वसुरोत्तमः ।
जगाम त्रिदशैः सार्धं संप्रहृष्टो महामतिः ॥ २८ ॥
ततः प्रतिष्ठितो विष्णुः स्वर्गलोकं यथा पुरा ।
येन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरं ॥ २९ ॥

# उत्तरकाण्डं

ततो भूताः सगन्धर्वाः सिद्धाश्चाप्सरसां गणाः ।
नित्यशः श्रावयन्तीदं काव्यं रामायणं दिवि ॥१॥
सपुत्रबान्धवास्तत्र देवाः सपरमर्षयः ।
यक्षाश्चैव महाभागा अशृण्वन् वैष्णवं स्तवं ॥२॥
विष्णोः प्रियमिदं नित्यं पुष्कराक्षस्य धीमतः ।
शृण्वन्ति नित्यमुष्मात्ते काव्यं वाल्मीकिना कृतं ॥३॥

इत्युत्तरकाण्डं समाप्तं ॥

## सर्गसंग्रहपत्रं

# उत्तरकाण्डं

# सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

## सर्गसंग्रहपत्रं

